# आर्यावर्तः




आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ मनुः । प्रागादर्शात् प्रत्यक्कालकवनात् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् ।

एतस्मिन्नार्यावर्ते आर्यनिवासे ये ब्राह्मणाः कुंभीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारंगतास्तत्रभवन्तः शिष्टाः ॥ महाभाष्यम् ।



श्रीमद्भगवत्पतञ्जलिमहर्षिप्रणीते

# व्याकरणमहाभाष्ये

## नवाह्निकम् ।

अष्टाध्यायीप्रथमाध्यायप्रथमपादव्याख्यानम् ।

श्रीमदुपाध्यायकैयटनिर्मितप्रदीपप्रकाशितम् ।
सर्वतन्त्रस्वतन्त्रश्रीमन्नागेशभट्टविरचितोद्द्योतोद्भासितम् ।

[ अस्य वैद्यनाथकृतच्छायाशीतलानि चत्वार्यावर्तनानि म. म. शिवदत्तरघुनाथपण्डिताभ्यां सम्पादितानि ]

तदेतदिदानीं काशीविश्वविद्यालयाधीतशास्त्रेण मुम्बापुरीयविल्सन्महाविद्यालया-
ध्यापकेन परशुरामक्षेत्राभिजनेन जोशीकुलभूषणश्रीभिकाजीशर्मपुत्रेण
भार्गवशास्त्रिणा शास्त्राचार्येण व्याकरणानुबन्धि-
ग्रन्थादिसाहाय्यं समवलम्ब्य टिप्पणपाठ-
भेदादिप्रदर्शनपुरस्कारेण परिष्कृतम् ।

पञ्चमं संस्करणम् ।


मुम्बय्यां
सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः
निर्णयसागरमुद्रणालयार्थं तत्रैव मुद्रयित्वा प्राकाश्यं नीतम् ।

शकाब्दाः १८७२, ख्रिस्ताब्दाः १९५१.

मूल्यं १५ रूप्यकाः ।

ॐ नमः शब्दब्रह्मात्मने शिवाय ।

# हरचरितचिन्तामणिः ।

## प्रथमं पाणिनीयव्याकरणोपज्ञात्राचार्य-पाणिनि-कात्यायन-व्याडि-प्रभृतीनाम् अध्ययनदेशकालादिबोधनाय गुणाढ्यरचितबृहत्कथानुवाद-सोमदेवरचित-कथासरित्सागर-क्षेमेन्द्ररचितबृहत्कथामञ्जरीग्रन्थानुसारि-हरचरित-चिन्तामणेः शब्दशास्त्रावतारनामा सप्तविंशः प्रकाशः प्रदर्श्यते—

तत्तन्मोहतमोपहं पशुपते यल्लक्षणं तावकम् ।
सर्वं **पाणिनि**बद्धमित्यधिगतं येनाद्वितीयोऽसि च ॥
यन्माहात्म्यवशादुदेति च परा वाग्वाच्यवैचित्र्यसू-
स्तन्मे संविदि सामरस्यमधुना पुष्णातु लोकोत्तरम् ॥ १ ॥
सन्तापसंततिकरी तावत्तिष्ठति मूर्खता ।
वाच्यवाचकरूपोऽयं न ध्यातो यावदीश्वरः ॥ २ ॥
पूर्वं कदाचिद्भगवान्कैलासशिखरोपरि ।
विविधैर्विभ्रमैरासीद्देव्या सह रहोभुवि ॥ ३ ॥
सप्रमोदेन चित्तेन देवी शंभुमतोषयत् ।
उत्सङ्गमधिरोप्यैतां शम्भुर्हृष्टोऽभ्यभाषत ॥ ४ ॥
प्रियं करोमि सुभगे किं तवेत्यभिधीयताम् ।
श्रुत्वेति साब्रवीद्देवी स्मेरीकृतविलोचना ॥ ५ ॥
सत्यं यदि प्रसन्नोऽसि किंचिदाख्याहि सत्कथाम् ।
कस्याऽपि वर्तते या न विदिता परमेश्वर ॥ ६ ॥
उक्त्वेति भूयोऽप्यवदन्नन्दिन् द्वारं निरुध्यताम् ।
न केनचित्प्रवेष्टव्यमिहेति तुहिनाद्रिजा ॥ ७ ॥
नन्दिन्यथाश्रितद्वारे सावधानतया स्थिताम् ।
अभाषत महादेवो देवीं मधुरया गिरा ॥ ८ ॥
सदा सुखममर्त्येषु दुःखमैकान्तिकं नृषु ।
वैद्याधरं तच्चरितं सुखदुःखमयं शृणु ॥ ९ ॥
एवं यावच्छिवो देवीं बभाषे तावदागमत् ।
**पुष्पदन्तो** गणः शंभुप्रसादरसभाजनम् ॥ १० ॥
प्रवेशं प्रार्थयन्द्वारे निषिद्धः सोऽथ नन्दिना ।
बुभुत्सुः कारणं योगात्प्रविवेशालिविग्रहः ॥ ११ ॥
प्रविष्टः सर्वमशृणोत्कथितं चन्द्रमौलिना ।
विद्याधराणां चरितं सप्तानामद्भुतं च सः ॥ १२ ॥
श्रुत्वा निर्गत्य भार्यायै स **जयायै** जगाद तत् ।
विमोहयति सर्वं हि दुर्लङ्घ्या भवितव्यता ॥ १३ ॥
ततः सखीनां पुरतस्तत्कथावर्णनोद्यता ।
देवी **जया**मप्यज्ञासीदुक्तिभिस्तत्कथाविदम् ॥ १४ ॥
अकुप्यत्पार्वती भर्त्रे नापूर्वं कथितं त्वया ।
जयाऽप्येतद्विजानातीत्यभ्यधाच्च तदाऽचिरात् ॥ १५ ॥
प्रणिधाय ततः शम्भुरभाषत हिमाद्रिजाम् ।
श्रुता योगप्रविष्टेन पुष्पदन्तेन सा कथा ।
बभाषे स जयायै तु न जानात्यपरः प्रिये ॥ १६ ॥
श्रुत्वेति चाद्रिजा **पुष्पदन्त**मानाययत्क्रुधा ।
शशाप चाविनीतस्त्वं भव मर्त्य इति क्रुधा ॥ १७ ॥
तथैव **माल्यवन्तं** च गणं तत्पक्षपातिनम् ।
**जयया** प्रार्थिता देवी ततः शापान्तमभ्यधात् ॥ १८ ॥
प्रभूणां करुणाहेतुर्विनयप्रार्थनैव हि ।
यक्षः कुबेरशापेन **सुप्रतीकः** पिशाचताम् ॥ १९ ॥
आसाद्य विन्ध्याटव्यां यः **काणभूति**रिति स्थितः ।
स्मृतजातिस्तमालोक्य पुष्पदन्तः कथामिमाम् ॥ २० ॥
यदा वर्णयते तस्मै तदा शापाद्विमोक्ष्यते ।
शापावसानमित्युक्त्वा विरराम हिमाद्रिजा ॥ २१ ॥
दृष्टनष्टाविव गणौ तौ च तत्र बभूवतुः ।
कालान्तरेण **कौशाम्ब्यां सोमदत्त**द्विजन्मनः ॥ २२ ॥
भार्यायां **वसुदत्तायां पुष्पदन्तो** गणोऽजनि ।
**वररुच्य**[1]भिधानेन स ततः समवर्धत ॥ २३ ॥
अतिबालस्य चैतस्य जनकः पञ्चतामगात् ।
माता च तं सुतस्नेहाद्विधवा समवर्धयत् ॥ २४ ॥
क्रमेणाथ स दिव्यां तां धिषणां समवाप्तवान् ।
अथैकदा तत्सदनं ब्राह्मणावभ्यगच्छताम् ॥ २५ ॥
दूराध्वगमनश्रान्तौ स्थातुं दिवसमेककम् ।
तयोर्निवसतोस्तत्र मुरजध्वनिरुद्ययौ ॥ २६ ॥
माता तं चाब्रवीद्भर्तुः स्मृत्वा बाष्पाकुलेक्षणा ।
मित्रं तव पितुर्नन्दो नटो नृत्यति पुत्र सः ॥ २७ ॥
श्रुत्वेति सोऽब्रवीन्मातर्गच्छाम्यहमवेक्षितुम् ।

---

१ 'नाम्ना **वररुचि**. किंच **कात्यायन** इति श्रुतः' कथासरित्सागरे १ । २ । १ ॥ 'तस्याहं वसुदत्तायां जातः **श्रुतधरा**भिधः । **कात्यायनो वररुचि**श्चेत्यन्वर्थकृताह्वयः ॥' बृहत्कथामञ्जरी-'**कात्यायनः श्रुतधरस्तथा वररुचिश्च** सः । गुणिनामग्रणीर्लोके नामभिस्त्रिभिरुच्यते' १।७०

सर्वं ते दर्शयिष्यामि नाट्यं वीक्ष्य यथाक्रमम् ॥ २८ ॥
तेनेति कथिते विप्रौ तौ विस्मयमवापतुः ।
ततोऽब्रवीत्तौ तन्माता नात्रांशेनापि संशयः ॥ २९ ॥
सकृच्छ्रुतं वा दृष्टं वा बालो जानात्यसाविति ।
प्रातिशाख्यं ततस्ताभ्यां जिज्ञासुभ्यामपठ्यत ॥ ३० ॥
तथैव तद्वररुचिः पपाठ च तयोः पुरः ।
ताभ्यां स सहितो गत्वा वीक्ष्य नाट्यं निजे गृहे ॥ ३१ ॥
स्वमातुर्दर्शयामास स समग्रं तथैव तत् ।
सकृद्ग्राहिणमालोक्य प्राज्ञं वररुचिं तदा ॥ ३२ ॥
**व्याडि**रेकस्तयोर्मध्यात्तन्मातरमभाषत ।
**देवस्वामी करम्बश्च** सोदरौ प्रागबभूवतुः ॥ ३३ ॥
परस्परमतिप्रीतौ **वीतंसी**नगरे द्विजौ ।
**इन्द्रदत्तो**ऽयमेकस्य तयोः सूनुरजायत ॥ ३४ ॥
अहं **व्याडि**र्द्वितीयस्य जनकः संस्थितश्च मे ।
**इन्द्रदत्त**पिता यातस्तच्छोकेन महापथम् ॥ ३५ ॥
अस्मन्मात्रोश्च हृदयं शोकेन त्रुटितं ततः ।
धने सत्यप्यनाथौ तौ गतौ विद्याभिलाषिणौ ॥ ३६ ॥
अभ्यर्थयन्तौ तावावां तपोभिः स्वामिनं गुहम् ।
गुहस्तत्रादिशत्स्वप्ने प्रभुरावां तपःस्थितौ ॥ ३७ ॥
**नन्दस्य** नृपतेरस्ति पुरं **पाटलिपुत्रकम्** ।
**वर्षा**ख्यस्तत्र विप्रोऽस्ति तस्माद्विद्यामवाप्स्यथः ॥ ३८ ॥
इति श्रुत्वा विभोर्वाक्यमावां तस्य पुरं गतौ ।
तत्पुरं प्राप्य पृच्छद्भ्यामावाभ्यां शुश्रुवे जनात् ॥ ३९ ॥
द्विजोऽस्ति मूर्खो **वर्षा**ख्य इति चिन्तावहं वचः ।
अन्विष्यद्भ्यामथावाभ्यां दारिद्र्यैकनिधिर्गृहे ॥ ४० ॥
दृश्यते स्म द्विजो **वर्षो** ध्यानस्तिमितलोचनः ।
तत्पत्नी विहितातिथ्या धूसरा मलिनाम्बरा ॥ ४१ ॥
आवां प्रविष्टौ प्रणतौ पप्रच्छास्मत्प्रयोजनम् ।
अस्मन्निवेदितोदन्ता ततः साध्वी जगाद सा ॥ ४२ ॥
पुत्रयोर्युवयोरग्रे कोलज्जा कथयामि तत् ।
उक्त्वेति भर्तृवृत्तान्तकथां वक्तुं प्रचक्रमे ॥ ४३ ॥
बभूव **शंकस्वामी** नगरेऽस्मिन्द्विजोत्तमः ।
मत्पतिस्तस्य पुत्रोऽयमु**पवर्ष**स्तथा पुरा ॥ ४४ ॥
मूर्खश्च दुर्गतश्चायं, बुधश्च धनवांश्च सः ।
तेन भ्रात्रा स्वभार्यास्य नियुक्ता निजपोषणे ॥ ४५ ॥
प्रावृट् कदाचिदासन्ना तस्या आस्ते स्म योषितः ।
जुगुप्सितं पिष्टमयं गुह्यरूपं गुडान्वितम् ॥ ४६ ॥
दत्त्वा विप्राय कस्मैचिद्भन्ते स्म ऋतुं स्त्रियः ।
निदाघे, शीतकाले च स्नानक्लेशासहिष्णवः ॥ ४७ ॥
एवं योषिज्जनाः प्रायः स्वमाचारं वितन्वते ।
जुगुप्सितं तद् गृह्णाति को नाम मतिमान्द्विजः ४८ ॥
तस्मादाददते मूर्खा दक्षिणां धनलम्पटाः ।
सा च मद्देवरवधूरासन्नऋतुशङ्किनी ॥ ४९ ॥
तमन्वतिष्ठदाचारमस्मै मूर्खाय गर्विता ।
अयं सदक्षिणं तच्च गृहीत्वा गृहमागतः ॥ ५० ॥
निर्भर्त्सितो मया मूर्खभावाच्चान्तरतप्यत ।
अथ स्वामिकुमारस्य सानुतापस्तपो व्यधात् ॥ ५१ ॥
प्रभुणा तेन तुष्टेन विद्याश्चास्य प्रकाशिताः ।
सकृद्ग्राहिणमासाद्य शिष्यं तास्त्वं प्रकाशयेः ॥ ५२ ॥
इत्युक्तश्च गुहेनायं प्रमोदाद्गृहमागतः ।
स्वं वृत्तान्तं समग्रं च समागत्य न्यवेदयत् ॥ ५३ ॥
ततः प्रभृत्ययं ध्यायञ्जपंश्च सततं स्थितः ।
समागतौ युवां सद्यः सर्वसिद्धिर्भविष्यति ॥ ५४ ॥
उक्त्वेति सा वर्षवधूः साध्वी तूष्णीं बभूव च ।
अदायि तस्यै चावाभ्यां हेम दारिद्र्यनाशनम् ॥ ५५ ॥
परिभ्रम्य भुवं लब्धः सकृद्ग्राही न कुत्रचित् ।
आवाभ्यामद्य तु प्राप्तस्तव **श्रुतधरः** सुतः ॥ ५६ ॥
तदमुं स्वसुतं देहि विद्यासिद्ध्यै यतावहे ।
इति **व्याडि**वचः श्रुत्वा जगदे **वसुदत्त**या ॥ ५७ ॥
सर्वं सङ्गतमेवैतत्प्रत्ययोऽत्रास्त्यसंशयः ।
तथाहि जातमात्रेऽस्मिन्वाक् दैवी ह्युदपद्यत ॥ ५८ ॥
अयं श्रुतधरो लब्ध्वा विद्या **वर्षाद्**शेषतः ।
लोके व्याकरणं दिव्यं प्रतिष्ठां प्रापयिष्यति ॥ ५९ ॥
रोचते हि वरं यस्मान्नाम्ना **वररुचिः** सुधीः ।
प्रतिपद्येति सा वाणी व्यरमच्च नभस्तलात् ॥ ६० ॥
ततः प्रभृति बालेऽस्मिन्वर्धमाने मुहुर्मुहुः ।
**वर्षो**पाध्यायलाभाय मम चेतः प्रवर्तते ॥ ६१ ॥
युवाभ्यामद्य तज्ज्ञातं सन्तोषश्च परो मम ।
तदेष युवयोर्भ्राता नीयतां च तदन्तिकम् ॥ ६२ ॥
इत्याकर्ण्य वचस्तस्य **व्याडिः** पूर्णमनोरथः ।
महोत्सवविधानाय ददाति स्म निजं धनम् ॥ ६३ ॥
उपनीय ततो **व्याडि**र्वेदार्हत्वाय तं शिशुम् ।
जग्राह मात्रा कथमप्यनुज्ञातं सबाष्पया ॥ ६४ ॥
लब्ध्वा वररुचिं गाढप्रमोदौ तरसा ततः ।
**व्याडीन्द्रदत्तौ वर्ष**स्य गुरोः प्राप्तौ निकेतनम् ॥ ६५ ॥
जानन्**वररुचिं** मूर्तं प्रसादं षण्मुखस्य सः ।
**वर्षः** सन्तोषमासाद्य तदानीमास्त निर्वृतः ॥ ६६ ॥
अन्येद्युः पुरतः कृत्वा ताञ्शुद्धे वसुधातले ।
ओङ्कारमकरोद्**वर्षो**पाध्यायो दिव्यया गिरा ॥ ६७ ॥
तदानीमस्य चत्वारः साङ्गा वेदाः समुद्ययुः ।
अध्यापयितुमेतांश्च प्रावर्तत पुरःस्थितान् ॥ ६८ ॥
सकृच्छ्रुतं **वररुचिर्व्याडि**श्च द्विःश्रुतं वचः ।
त्रिःश्रुतं **चेन्द्रदत्तः** स जग्राह गुरुणोदितम् ॥ ६९ ॥
अपूर्वं ध्वनिमाकर्ण्य दिव्यं संजातविस्मयाः ।
उपासते स्म सर्वेऽपि पौरा **वर्ष**गुरुं ततः ॥ ७० ॥

१ वेतसे पाठः । २ 'का लज्जा' इति कथा स. सा. ॥

१ इति प्रतिपद्य सा वाणीत्यन्वयः ॥

स्कन्दप्रसादं तं ज्ञात्वा तद्देशनृपतिस्ततः ।
हर्षेण **वर्षो**पाध्यायमुपास्ते स्म सविस्मयः ॥ ७१ ॥
अथ कालेन बहवः शिष्या **वर्ष**मुपाययुः ।
एकोऽपि **पाणिनि**र्नाम जडबुद्धिरुपाययौ ॥ ७२ ॥
शिष्यान्तरोपहासेन सावमानः स **पाणिनिः** ।
शुश्रूषाक्लेशतो यातः कदाचित्तुहिनाचलम् ॥ ७३ ॥
आराध्य तपसा तत्र विद्याकामः स शंकरम् ।
प्राप व्याकरणं दिव्यं स च विद्यामुखं शुभम् ॥ ७४ ॥
तत्प्राप्याह्वयते स्मायं सर्वान्वादाय **पाणिनिः** ।
स्ववर्ग्यान्**वररुच्या**दीनुपहासान्स्मरन्सुधीः ॥ ७५ ॥
ततोऽभवद्**वररुचे**र्वादः **पाणिनिना** सह ।
दिनानि सप्त च ययुस्तयोर्विवदमानयोः ॥ ७६ ॥
अथाष्टमे दिने तेन **पाणिनौ** निर्जिते सति ।
नभस्तलान्महाघोरं हुंकरोति स्म शंकरः ॥ ७७ ॥
श्रुत्वा शंकरहुंकारं ततः **पाणिनिना** जितम् ।
मूर्खत्वं वररुच्याद्याः प्रापुश्च प्रतिवादिनः ॥ ७८ ॥
**ऐन्द्रं** व्याकरणं नष्टं समग्रं चाभवद्भुवि ।
ततो **वररुचि**र्दुःखं विद्याविरहितो दधे ॥ ७९ ॥
मूर्खीभूतो **वररुचि**र्मुक्ताहारो विनिर्ययौ ।
आराधयितुमीशानं तपोभिस्तुहिनाचले ॥ ८० ॥
परितुष्टो **वररुचे**स्तपोभिः परमेश्वरः ।
शास्त्रं प्रकाशयामास **पाणिनीय**मशेषतः ॥ ८१ ॥
शंकरेच्छाप्रसादेन चूर्णीकृत्याथ तच्च सः ।
जगाम स्वगृहं तुष्यन्नज्ञाताध्वपरिश्रमः ॥ ८२ ॥
तत्प्राप **पाणिनेः** शास्त्रं **वर्षः स्वामिकुमार**तः ।
**वर्षाद्व्याडीन्द्रदत्तौ** च लब्धवन्तावसंशयम् ॥ ८३ ॥
एवं व्याकरणं दिव्यं प्रबोधायाऽभ्यधात्पुनः ।
पाणिनीयमधिष्ठाय शरीरं परमेश्वरः ॥ ८४ ॥
ततो **व्याडीन्द्रदत्ता**भ्यां प्रार्थितो गुरुदक्षिणाम् ।
अङ्गीचकार **वर्षः** स हेमकोटिं सुनिर्मलाम् ॥ ८५ ॥
इन्द्रदत्तः प्रविश्याथ संस्थितस्य कलेवरम् ।
योगेन नन्दनृपतेर्व्याडयेऽदत्त काञ्चनम् ॥ ८६ ॥
व्याडिः काञ्चनकोटिं तां **वर्षा**याऽदत्त दक्षिणाम् ।
**इन्द्रदत्त**श्च **नन्दोऽभूच्छकटाल**धिया नृपः ॥ ८७ ॥
**इन्द्रदत्त**स्ततो योगे **नन्द**भूपालतां भजन् ।
मन्त्रिभावे वररुचिं महाप्राज्ञं न्ययोजयत् ॥ ८८ ॥
किमन्यदथ **नन्द**स्य चिरमादाय मन्त्रिताम् ।
खिन्नो **वररुचिः** शान्तस्तपोवनमशिश्रियत् ॥ ८९ ॥
एकदा स ययौ द्रष्टुं देवीं विन्ध्यनिवासिनीम् ।
आराधिता च तपसा सा तं स्वप्ने समादिशत् ॥ ९० ॥
गच्छ विन्ध्याटवीमद्य **काणभूति**मवेक्षितुम् ।
इति देव्या गिरा सोऽपि विन्ध्यकान्तारमाययौ ॥ ९१ ॥
अपश्यत्**काणभूतिं** स पिशाचैस्तत्र चावृतम् ।
जगाद स सदाचारः कथमीदृग् भवानिति ॥ ९२ ॥
श्रुत्वा वररुचेरेवं **काणभूति**रभाषत ।
पादोपसंग्रहं कृत्वा सौजन्यमधुरां गिरम् ॥ ९३ ॥
विज्ञानं मे स्वतो नास्ति श्मशाने श्रुतमीश्वरात् ।
यदुज्जयिन्यां सर्वं ते कथयामि शृणुष्व तत् ॥ ९४ ॥
श्मशाने च कपाले च तव देव रतिः कुतः ।
इति सप्रणयं पृष्टः पार्वत्या शंभुरब्रवीत् ।
कल्पान्तसमये पूर्वमभूदेकार्णवं जगत् ॥ ९५ ॥
पातितः शोणितकणो विभिद्योरुं मया ततः ।
जले स एवाण्डमभूद्द्विधा गतवतस्ततः ॥ ९६ ॥
निरगात्पुरुषः सृष्टौ सृष्टा च प्रकृतिर्मया ।
ततः स निखिलं स्रष्टुं प्रजापतिपुरःसरम् ॥ ९७ ॥
पितामह इति प्रोक्तो गाढाहंकारतामगात् ।
ततः कररुहेणाहं तन्मूर्धानमपाटयम् ॥ ९८ ॥
महाव्रतं गृहीत्वा च श्मशानप्रियतां श्रये ।
एतद्देवि कपालात्म जगत्करतले स्थितम् ॥ ९९ ॥
तस्याण्डस्य कपाले द्वे रोदसी परिकीर्तिते ।
कपालप्रियता तेन सदैव मम वर्तते ॥ १०० ॥
श्रुत्वेति शंभोस्तत्रैव स्थितवानस्मि सादरम् ।
ततो मयि श्रोतुकामे पार्वती पुनरब्रवीत् ॥ १०१ ॥
कियता समयेनास्मान्पुष्पदन्त उपैष्यति ।
आकर्ण्येत्यवदद्देवीमुद्दिशन्मां त्रिलोचनः ॥ १०२ ॥
कुबेरानुचरः सोऽयं यक्षः प्राप्तः पिशाचताम् ।
अस्य **स्थूलशिरा** नाम मित्रमासीन्निशाचरः ॥ १०३ ॥
तन्मैत्र्या धनदः शापात्पिशाचममुमाददे ।
प्रार्थिते **दीर्घज**ङ्घेन भ्रात्राऽप्यस्य धनाधिपः ॥ १०४ ॥
शापावसानमवदत्किंचित्कोपं परित्यजन् ।
**पुष्पदन्ता**त्समाकर्ण्य कथां शापावरोहिणः ॥ १०५ ॥
उक्त्वा शापावतीर्णस्य तां च **माल्यवतो**ऽखिलाम् ।
गणाभ्यां सहितस्ताभ्यामेष शापाद्विमोक्ष्यते ॥ १०६ ॥
**पुष्पदन्त**स्य शापान्तस्त्वयाऽप्येवं कृतः स्मर ।
श्रुत्वेति शंभोर्वचनं हृष्यन्नहमिहागतः ॥ १०७ ॥
तस्मान्निर्वर्तते शापः **पुष्पदन्ता**गमान्मम ।
आकर्ण्येमां वररुचिः काणभूतेर्गिरं ततः ॥ १०८ ॥
जातिं सुप्तोत्थित इव स्मृत्वा तत्क्षणमब्रवीत् ।
**पुष्पदन्त**गणः सोऽहं शृणु मत्तोऽखिलं च तत् ॥ १०९ ॥
उक्त्वेति ग्रन्थलक्षाणि सप्त सप्ताब्रवीत्कथाः ।
आकर्ण्य ताः **काणभूति**रभाषत सविस्मयः ॥ ११० ॥
त्वं रुद्र एव कोऽन्यो वा कश्चिद्वेत्तीदृशीः कथाः ।
श्रुत्वा कथा इमाः शापो विरतो मे शरीरतः ॥ १११ ॥
स्ववृत्तान्तं समाख्याहि बाल्यात्प्रभृति मे प्रभो ।
ततो विनीतशिरसं वृत्तान्तं स्वमवर्णयत् ॥ ११२ ॥
**काणभूतिं वररुचि**र्जन्मनःप्रभृति स्फुटम् ।

उक्त्वा स्ववार्तां भूयोऽपि **काणभूतिं** जगाद सः ॥ ११३ ॥
स्वास्थ्यं लभे त्वामालोक्य परं खेदमहं श्रितः ।
त्वदालोकनमाहात्म्यान्मम शापो निवर्तते ॥ ११४ ॥
प्रभावाद्विन्ध्यवासिन्या मयोक्ताश्च महाकथाः ।
क्षीणशापो वपुस्त्यक्त्वा तत्प्राग्जन्म भजाम्यहम् ॥ ११५ ॥
... ... ... ... ... ... ... पुनरवस्थितिः ।
मत्पक्षपाती प्रथमं माल्यवानप्यशप्यत ।
तस्मै महेश्वरेणोक्ता कथनीया महाकथा ॥ ११६ ॥
त्वं च सम्प्रति तिष्ठेह यावदायाति तेऽन्तिकम् ।
त्यक्तभाषात्रयः सोऽपि **गुणाढ्यो** द्विजसत्तमः ॥ ११७ ॥
एवं **वररुचि**स्तत्र काणभूतेर्निवेद्य सः ।
देहमोक्षाय त्वरितमगाद्बदरिकाश्रमम् ॥ ११८ ॥
ततो **वररुचि**स्त्यक्त्वा योगधारणया वपुः ।
प्राग्जन्म तत्समासाद्य भगवद्गणतामगात् ॥ ११९ ॥
स गणो माल्यवान्नाम देवीशापादधोभवत् ।
तत्काले गुरुणा तेन प्रोक्तोऽसौ द्विजसत्तमः ॥ १२० ॥
क्रमेण विद्याः सर्वाः स समासाद्य प्रसिद्धिमान् ।
सुप्रतिष्ठितनामानं देशं प्राप प्रकृष्टधीः ॥ १२१ ॥
**सातवाहन**भूपालमास्थानस्थमवैक्षत ।
**शर्ववर्मा**दिभि सर्वैर्मन्त्रिभिः परिवारितः ।
स राजा तममात्यत्वे स्तुतिपूर्वं न्यवेशयत् ॥ १२२ ॥
अथाऽसौ राज्यकर्माणि चिन्तयन्मन्त्रिभावतः ।
ताँस्तान्नध्यापयञ्छिष्यान्**गुणाढ्यः** सुखमन्वभूत् ॥ १२३ ॥
कदाचिदथ भूपालो वसन्ते कामिनीसखः ।
दिव्योद्यानावनौ वापीजले चिक्रीड सादरः ॥ १२४ ॥
सपाणियन्त्रधाराभिः सिषेच वरकामिनीः ।
कामिन्योऽपि प्रजहुस्तं कटाक्षैः सह वारिभिः ॥ १२५ ॥
एकदा तस्य क्रीडन्ती नितम्बस्तनगौरवात् ।
खिद्यमाना क्लमं प्राप वापीमध्ये विलासिनी ॥ १२६ ॥
सिञ्चन्ती सलिलैर्भूपं सा जगादालसालसा ।
मोदकैर्नाथ मां सद्यः प्रहरेति कृतस्मिता ॥ १२७ ॥
एवं तद्वचनं श्रुत्वा जलप्रहरणात्मकम् ।
शब्देन च्छलितो राजा मोदकैस्तां तताड सः ॥ १२८ ॥
ततो विहस्य सा राज्ञी पुनरेवमभाषत ।
राजन्नवसरः कोऽत्र मोदकानां जलान्तरे ॥ १२९ ॥
उदकैः सिञ्च मा मा त्वं मामित्युक्तं मया हि तत् ।
संधिमात्रं न जानासि माशब्दोदकशब्दयोः ॥ १३० ॥
न च व्याकरणं वेत्सि मूर्खस्त्वं कथमीदृशः ।
इत्युक्तः स तया राज्ञ्या शब्दशास्त्रविदा नृपः ॥ १३१ ॥
ततश्चिन्तापरो मुह्यन्नाहारादिविवर्जितः ।
चिन्तास्थ इव पृष्टोऽपि नैव किंचिदभाषत ॥ १३२ ॥
पाण्डित्यं शरणं वा मे मृत्युर्वेति विचिन्तयन् ।
शयनीये परित्यक्तगात्रः संतापवानभूत् ॥ १३३ ॥
उपविश्याथ निकटे मन्त्रिणो ज्ञातमानसाः ।
कारणं देव कथय वर्तसे विमना इति ॥ १३४ ॥
तच्छ्रुत्वाऽपि तथैवास्त तूष्णीं स सातवाहनः ।
ततोऽवदत्सुधीः कश्चिद्वर्षैर्द्वादशभिः सह ॥ १३५ ॥
ज्ञायते सर्वविद्यानां मुख्यं व्याकरणं नृप ।
अहं तु शिक्षयाम्येतत्तुल्यः स्कन्देन चापरः ॥ १३६ ॥
तदहं मासषट्केन देव त्वां शिक्षयामि तत् ।
ततः स्वामिकुमारस्य प्रसादात्तदकल्पयत् ॥ १३७ ॥
शिक्षयामास राजानं सुधीः प्राप्तार्थसञ्चयः ।
राजा कवित्वपाण्डित्यमयीं प्राप च चातुरीम् ॥ १३८ ॥
ततो गुणाढ्यस्तद्वीक्ष्य प्रतिज्ञां प्राक्तनीं स्मरन् ।
संस्कृतं प्राकृतं देशभाषामपि समत्यजत् ॥ १३९ ॥
संत्यज्य कृतमौनत्वाद्व्यवहारानसौ ततः ।
निर्ययौ नगरात्तस्माद्दिदृक्षुर्विन्ध्यवासिनीम् ॥ १४० ॥
स्वप्ने स विन्ध्यवासिन्या प्रेषितस्तदगाद्वनम् ।
यत्र स्थितः काणभूतिः पिशाचैः परिवारितः ॥ १४१ ॥
तत्राऽश्रृणोत्पिशाचानां परस्परमसौ कथाः ।
शिशिक्षे चात्र तद्भाषां भाषात्रयविलक्षणाम् ॥ १४२ ॥
पिशाचभाषया तत्र मौनमोक्षैकहेतुना ।
स्वागतं विदधे काणभूतेर्विन्ध्याटवीस्थितेः ॥ १४३ ॥
मित्रस्य रक्षसो **भूतिवर्मणो** दिव्यचक्षुषः ।
वचसा **माल्यवन्तं** तं गुणाढ्यं सोऽभ्यगाद्वने ॥ १४४ ॥
**काणभूतिः** कथां तस्य पुष्पदन्तोदितां ततः ।
अवर्णयद्गुणाढ्यस्य शापान्तसमयोत्सुकः ॥ १४५ ॥
निबबन्ध **गुणाढ्य**स्ताश्चतुर्थ्या भाषया कथाः ।
सप्तैव सप्तभिर्वर्षैर्ग्रन्थलक्षाणि सप्त सः ॥ १४६ ॥
मसीमटव्यामप्राप्य गुणाढ्यः स्वाङ्गशोणितैः ।
लिलेख ताः कथा दिव्याश्चित्रचारित्रशालिनीः ॥ १४७ ॥
निबद्धास्ता **गुणाढ्येन** दृष्टा तत्र महाकथाः ।
त्यक्तशापो गतिं प्राप **काणभूति**र्निजां ततः ॥ १४८ ॥
**काणभूते**रनुचराः पिशाचास्तत्र ये स्थिताः ।
तेऽपि दिव्यां कथां श्रुत्वा सर्वे प्रापुर्दिवं ततः ॥ १४९ ॥
इयं बृहत्कथा पृथ्व्यां प्रसिद्धिं प्राप्य(प्स्य)ते कथम् ।
इति शापान्तसोत्कण्ठो **गुणाढ्यः** समचिन्तयत् ॥ १५० ॥
प्राहिणोत्तां कथां सोऽथ **सातवाहन**भूभुजे ।
अधिचिक्षेप राजाऽपि तां कथां मदनिष्ठुरः ॥ १५१ ॥
सानुतापो **गुणाढ्यो**ऽपि वह्निकुण्डं ततो व्यधात् ।
व्याख्याय पत्रमेकैकं निचिक्षेप च तत्र सः ॥ १५२ ॥
देहातिवाहमुत्सृज्य तृणाम्बुमयमादरात् ।
अश्रृण्वन्साश्रवस्तत्र तां कथां मृगपक्षिणः ॥ १५३ ॥
निराहारेषु शुष्यत्सु तदानीं मृगपक्षिषु ।
अस्वादुनि च तन्मांसे भुक्ते प्राप रुजं नृपः ॥ १५४ ॥
**गुणाढ्य**चरितं श्रुत्वा वनेचरजनात्ततः ।

आजगाम स्वयं राजा तमेवोद्देशमादरात् ॥ १५५ ॥
सबाष्पमृगमध्यस्थं **गुणाढ्यं** वनवासिनम् ।
प्रत्यभिज्ञाय च ततो नमश्चक्रे महीपतिः ॥ १५६ ॥
अथ पृष्टवतो राज्ञः स्ववृत्तान्तं जगाद सः ।
भूतभाषामयैर्वाक्यैर्**गुणाढ्यो** विस्मयस्पृशः ॥ १५७ ॥
आख्याहि निजवृत्तान्तं पुनरप्यब्रवीदसौ ।
दग्धानि ग्रन्थलक्षाणि षडेकमवशिष्यते ॥ १५८ ॥
ग्रन्थलक्षमिदं यैका सा कथा गृह्यतां त्वया ।
**नरवाहनद**त्तस्य चरितं त्वेतदद्भुतम् ॥ १५९ ॥
उक्त्वेत्यदत्त स कथाः सातवाहनभूभुजे ।
राजाऽपि प्रणमन्भक्त्या जग्राह निजमूर्धनि ॥ १६० ॥
अथ ज्ञात्वा स शापान्तं त्यक्त्वा योगेन विग्रहम् ।
**माल्यवा**न्गणतां लेभे शिवभक्त्येकभावितः ॥ १६१ ॥
**बृहत्कथा** सा सर्वत्र प्रसिद्धिं प्रापदद्भुता ।
यां स्वयं स महादेव्याश्चन्द्रमौलिरवर्णयत् ॥ १६२ ॥

अनया कथया किंवा प्रसङ्गोद्दिष्टया मया ।
**ऐन्द्रं** व्याकरणं हित्वा **पाणिनीयं** व्यधाच्छिवः ॥ १६३ ॥
ततःप्रभृति निःशेष**शब्दज्ञान**प्रकाशकम् ।
दिव्यं व्याकरणं भूमौ **पाणिनीयं** प्रसिद्ध्यति ॥ १६४ ॥
**पाणिनि**र्भगवानेव स्वयं चन्द्रार्धशेखरः ।
प्रतिष्ठापयते कोऽन्यो दिव्यं व्याकरणं भुवि ॥ १६५ ॥
अशेषेष्वपि शास्त्रेषु स्तूयते कैर्न **पाणिनिः** ।
ज्ञायन्ते सम्यगेवैते यत्प्रसादेन वाचकाः ॥ १६६ ॥
कालान्तरेण सर्वज्ञस्याज्ञया **भुजगेश्वरः** ।
स्वजिह्वाः सफलीचक्रे बह्वी**र्भाष्यो**पदेशतः ॥ १६७ ॥

परिमितमतयः किमाचरन्तु
प्रसृमरसंशयखिद्यमानचित्ताः ।
विभुरनवधिवाच्यवाचकात्मा
शिव इति पश्य तमेव सर्वशक्तिम् ॥ १६८ ॥

इति श्रीमहामाहेश्वर**जयद्रथ**विरचिते हरचरितचिन्तामणौ शब्दशास्त्रावतारो नाम सप्तविंशः प्रकाशः ॥

# पाणिनीयम् ।

तदेवं विदितमस्त्येव सर्वेषां सुधीवराणाम्—सर्वेष्वपि व्याकरणेषु प्रातिशाख्येषु च लोक-सर्ववेदसाधारणतया मूर्धन्यतमं **पाणिनीयं** व्याकरणमिति ॥

१ एशियन, युरोपियन, अमेरिकन.

२ **'सर्ववेदपारिषदं हीदं शास्त्रम्'** इति 'पूर्वापरप्रथम—' ( २।१।५८ ) इति सूत्रे भाष्यम् ॥

**'पाणिनीयं** महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं, त्याज्यं न किंचन ॥'

इति पराशरोपपुराणम् ॥

अस्मिंश्च पाणिनीये व्याकरणे 'छन्दसि' ( १।२।३६ ) '*आम्नाय ४।३।११३' 'निगमे' ( ७।२।६४ ) 'मन्त्रपदेषु ३।२।२३' 'ऋचि ४।१।९' 'यजुषि ६।१।११७' 'काठके ७।४।३८' 'साम १।२।३४' आथर्वणिक ६।४।१७४' 'संहितायाम् ( १।२।३९ )' 'ब्राह्मणे ( २।३।६० )' 'उपनिषदौ १।४।७९' 'अनार्षे १।१।१६' 'क्रमपदन्यायमीमांसा ४।२।६१' 'अनुब्राह्मणात् ४।२।६२' 'अनुप्रवचनादिभ्यः ५।१।१११' 'भिक्षुनटसूत्रयोः ४।३।११०' 'महान्······भारत ६।२।३८' इत्यादिग्रन्थानाम् **'साऽस्य देवता'** ( ४।२।२४ ) इत्यधिकारे 'क–शुक्र–अपोनपृ–अपांनपृ–महेन्द्र–सोम–वायु–ऋतु–उषस्–द्यावापृथिवी–शुनासीर–मरुत्वत्—अग्नीषोम–वास्तोष्पति–गृहमेध–अग्नि–काल–महाराजप्रोष्ठपदानाम्— **'देवताद्वन्द्वे** ( ६।३।२६ )' इत्यधिकारे–अग्नि–सोम–वरुण–दिव्–पृथिवी–उषसाम् **'देवताद्वन्द्वे** ( ७।३।२१ )' इत्यधिकारे–इन्द्रवरुणयोश्च देवतात्वेन, **'दृष्टं साम** ४।२।७'[1] इत्यधिकारे 'कलि–वामदेवयोः' **'तेन प्रोक्तम्** ( ४।३।१०१ )' इत्यधिकारे तित्तिरि–वरतन्तु–खण्डिक–उख–काश्यप–कौशिक–कलाप्यन्तेवासि–वैशम्पायनान्तेवासि–शौनकादि–कठ–चरक–कलापिन्–छगलिन् आदीनां च वर्णनं दृश्यते ॥ एवं 'सारव–ऐक्ष्वाक ( ६।४।१७४ ) साकेत ( ४।३।१२७ )' देशानां नदीनां कूपानां व्याकरण–प्रातिशाख्यान्यतरनिर्मातॄणाम्—

| | |
|---|---|
| "आचार्याणाम् | ७।३।४९ |
| आपिशलेः | ६।१।९२ |
| उदीचाम् | ४।१।१५३ |
| एकेषाम् | ८।३।१०४ |
| काश्यपस्य | १।२।२५ |
| गार्ग्यस्य | ८।३।२० |
| गालवस्य | ७।१।७४ |
| चाक्रवर्मणस्य | ६।१।१३० |
| प्राचाम् | ४।१।१७ |
| भारद्वाजस्य | ७।२।६७ |
| शाकटायनस्य | ३।४।१११ |
| शाकल्यस्य | १।१।१६ |
| सेनकस्य | ५।४।११२ |
| स्फोटायनस्य | ६।१।१२३" |

आचार्याणां च नामानि समुपलभ्यन्ते ॥

लिपिशब्दो 'दिवाविभा–३.२.२१ सूत्रे'

यवनशब्दश्च 'इन्द्रवरुण–( ४।१।४९ ) सूत्रे'

शका यवनाश्च वसिष्ठविश्वामित्रयुद्धसमय एवोत्पन्ना इति रामायणतो व्यक्तमेव प्रतीयते । वाल्मीके रामायणनिर्माणं

'रावणान्तकरो राजा रघूणां वंशवर्धनः ।
वाल्मीकिर्यस्य चरितं चक्रे भार्गवनन्दनः ॥'

इति मात्स्ये १२ अध्याये दर्शितं, रामचन्द्रसत्तायामेव वाल्मीकिमुनेराश्रम एव सीतात्याग–लवकुशोत्पत्तिवर्णनस्य सर्वत्रोपलम्भात् श्रीरामकृतयज्ञसमय एव लवकुशकृत्–रामचरितगानस्य वर्णितत्वात् ॥ रामावतारश्च १८५६०००० वर्षेभ्यः प्रागेव जात इति

'त्रेतायुगे चतुर्विंशे रावणस्तपसः क्षयात् ।
रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ॥'

वायुपुराणे उत्तरार्धे ९ मेऽध्याये ४८ श्लोके स्पष्टमेव ॥

'शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणानामदर्शनात् ॥ १०।४३ ॥
पौण्ड्रकाश्चोड–द्रविडाः काम्बोजा यवनाः शकाः ।
पारदाः पह्नवाश्चीनाः किराता दरदाः खशाः ॥ १०।४४ ॥'

इत्येवं वर्ण्यन्ते मनुस्मृतावपि यवनादयः ॥

यवना इव हूणा अपि म्लेच्छजातय एव

'श्वपाकश्च तुरुष्कश्च हूणो यवन इत्यपि ।
लोकबाह्यस्तु यो वाजिगवाश्याचारवर्जितः ॥'
कोमगिरेर्दक्षभागे मरुदेशात्तथोत्तरे ।
हूणदेशः समाख्यातः शूरास्तत्र रमन्ति च ॥'

इति शब्दार्थचिन्तामणौ ॥

एवं च रघुवंशे हूणवर्णनेऽपि कथमर्वाचीनतेति विचारयन्तु 'सर्वमर्वाचीनमेव' इति मननाग्रहग्रहाविष्टाः सुधियः ॥

'उतत्वः पश्यन्न ददर्श वाचम्' इति श्रुतौ चाक्षुषज्ञानविषयत्वं वाचो लिपिसत्त्व एव संगच्छते । पद्मपुराणेऽपि शकुन्तलोपाख्याने ५ अध्याये मुद्रायामक्षरमयचिह्नस्यैव वर्णनाच्च ॥

1 अनयोर्दृष्टप्रोक्तयोर्नैव विशेषः । पूर्वं दृष्टानां ( ज्ञातानां= स्मृतानाम् ) एव प्रवचनस्योचितत्वात् । नह्यदृष्टं प्रोच्यते । अत एव *'य एवैषां वेदार्थानां द्रष्टारः प्रवक्तारश्च'* इति ( २।१।६७ ) सूत्रे न्यायभाष्यकृतोक्तम् ॥ अत एव **'ऋषिर्दर्शनात्'** इति निरुक्ते **'आख्या प्रवचनात्'** ( १।१ ) इति पूर्वमीमांसायां चोभयोपादानम् ॥

तत्रमूलभूतसूत्रोपज्ञाता[1] **नन्दमहाराज**[2]राजधानी**पाटलिपुत्र**[3]-वास्तव्य—**शंकरस्वामि**तनय-पूर्वोत्तरमीमांसावृत्तिकार-भगवदु**पवर्ष**[4]सहोदर**वर्षो**[5]पाध्यायाधीतशास्त्रः ।

"अनेनैव व्याकरणोपज्ञात्रा भगवता **पाणिनि**नाचार्येण **पाताल-विजया**परनामकं **जाम्बवतीविजय**नामकं महाकाव्यं व्यरचि । अत एव हारावल्यां सूक्तिमुक्तावल्यां च लिखितं राजशेखरीयं—

'स्वस्ति **पाणिनये** तस्मै यस्य रुद्रप्रसादतः ।
आदौ व्याकरणं, काव्यमनु **जाम्बवतीजयम्** ॥'

इति पद्यम्–

"पञ्चविंशतिसंयुक्तैरेकादशसमाशतैः ।
विक्रमात्समतिक्रान्तैः प्रावृषीदं समर्थितम् ॥'

इति समाप्तिपद्यसूचितनिर्माणकाले–११२५ वि. सं. (इ. स. १०४८)–न **रुद्रटालंकार**व्याख्यात्रा **नमिसाधुना**–'महाकवीनामप्यपशब्दपातदर्शनात् तन्निरासादरसूचनाय पुनरभियोगः— **तथाहि–पाणिनेः पातालविजये** महाकाव्ये 'संध्यावधूं **गृह्य** करेण भानुः' इत्यत्र '**गृह्य**' क्त्वो ल्यबादेशः । तथा तस्यैव कवेः—

'गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत् प्रावृषि कालमेघाः ।
**अपश्यती** वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुंकरोति ॥'

इत्यत्र '**पश्यती**' इदं लुप्तनकारं पदम्" इत्युक्तम् ॥

**रायमुकुटेन—**

'पयःपृषन्तिभिः पृक्ता वान्ति वाताः शनैः शनैः ।'

इत्यपि पाणिनीयत्वेनोपन्यस्तम् ॥

**शार्ङ्गधरपद्धता**वपि—

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम् ॥

क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व संप्रत्युष्णांशुर्गत इति समालोकनपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीह जलदाः ॥'

इति श्लोकद्वयं पाणिनीयत्वेन विन्यस्तम् ॥

**सदुक्तिकर्णामृते**ऽपि—

असौ गिरेः शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः ।
धर्मालसाङ्गीं मधुराणि कूजन् संवीजते पक्षपुटेन कान्ताम् ॥५।२१॥

उद्बुद्धेभ्यः सुदूरं घनजनिततमःपूरितेषु द्रुमेषु
प्रोद्ग्रीवं पश्य पादद्वयनमितभुवः श्रेणयः फेरवाणाम् ।
उल्कालोकैः स्फुरद्भिर्निजवदनदरीसर्पिभिर्वीक्षितेभ्य-
श्च्योतत्सान्द्रं वसाम्भः कुथितशववपुर्मेण्डलेभ्यः पिबन्ति ॥५।३६३॥

इत्यादिश्लोकाष्टकं पाणिनीयत्वेनोपन्यस्तम् ॥

शर्मण्यदेशनिवासिना आफ्रेचमहाशयेनापि सदुक्तिकर्णामृतस्थम्—

'**सुबन्धौ** भक्तिर्नः क इह **रघुकारे न** रमते
धृतिर्दाक्षीपुत्रे हरति **हरिचन्द्रो**ऽपि हृदयम् ।
विशुद्धोक्तिः **शूरः** प्रकृतिमधुरा **भारविगिर-**
स्तथाप्यन्तर्मोदं कमपि **भवभूतिर्वितनुते** ॥'

इति श्लोकमुपन्यस्य 'तत्र पठितो दाक्षीपुत्रो व्याकरणाचार्य एव' इति निश्चितम् । अन्यस्य कस्यापि पाणिनेर्ग्रन्थस्यासरणाच्च तद्दृढीकृतम् ॥ एवमन्येनापि शर्मण्यदेशीयेन पण्डित-पिश्चल महोदयेन *Z. D. M. G. XXXIX 319* एष एवार्थः समर्थितः ॥

डॉ. भाण्डारकरमहोदयस्य तु नैवैषोऽर्थः संमतो येन तादृशो (ओजोगुणगौडीरीतिविशिष्टः) लेखो न कदापि पाणिनेः स्यादिति हि तस्य सिद्धान्तः ॥" सर्वोऽप्येषोऽनुवादः डॉ. पीटर पीटर्सन्-महाशयैः सुभाषितावलिभूमिकायां पाणिनिपदव्याख्याने लिखितस्योद्धृतोऽस्माभिः ॥

१ 'अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम् ।
अस्तोभमनवद्यं च **सूत्रं** सूत्रविदो विदुः ॥
इति विष्णुधर्मोत्तरे पराशरोपपुराणे च ॥

२ एत**न्नन्दमहाराज**समानकालकत्वमेव **पाणिनेः** भारतीयप्राचीनवृत्तप्रदर्शक (इंडियन एंटिक्वेरी. VII.-IV) चतुर्थखण्डेऽपि १०२ तमे पृष्ठे वर्णितमस्ति ॥

'**नन्दमहाराजशासनप्रारम्भसमयस्तु**—

शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः ॥ (१।५१) ॥

1 अनयोर्नैवापशब्दत्वमिति महाभाष्यपस्पशाह्निकटिप्पण्यामस्माभिः प्रकाशितमेवेति गवेषणीयम् ॥

2 यदि दीर्घसमासदर्शनेनैवास्मिन् काव्ये नवीनत्वं मन्यते चेत् तर्हि 'विभक्तिसमीप–' 'जानपदकुण्ड–' 'वुञ्छण्–' इत्यादि सूत्रेष्वपि दीर्घसमासस्य दर्शनेन तत्रापि नवीनत्वमेव स्यात् ॥ **रामायण-भारतादि**ष्वपि शृङ्गारादिवर्णनेन तेषामपि प्राचीनत्वं नैव स्यात् नवीनत्वमेव स्यात् ॥ किंच '**सुसूक्ष्मजटकेशेन सुनुताजिनवाससा**' इत्यादिभाष्योदाहृतेष्वपि नवीनत्वमेव स्यात् ॥ सौमित्रि–वाल्मीकिशब्दयोः गहादि (४।२।१३८) गणे सीतान्वेषणशब्दस्य 'अधिकृत्य कृते ग्रन्थे ४।३।८७' इत्यधिकारे इन्द्रजननादि (४।३।८८) गणे पाठस्योपलम्भात् कौसल्याकैकेयीसुमित्रापदसाधनोपायस्य सूत्रे गणे च विद्यमानत्वात् । '**एति जीवन्तमानन्दः**' इतिरामायणीययुद्धकाण्डे १२९।२ भरतवाक्यस्य '**अनुदात्तङितः**' '**सार्वधातुके यक्**' इति सूत्रभाष्य उपन्यस्तत्वाच्च वाल्मीकीयरामायणस्य न नव्यत्वम् । '**पश्य वानरसैन्येऽस्मिन्**' '**एतदप्यस्य कापेयम्**' इति भाष्योदाहरणाच्च कपिपर्यायवानराणामपि लङ्कायां युद्धकर्तृत्वं सत्यमेव ॥

3 सर्वेषां कुरुपाण्डवानामेकस्मिन्नेव वर्षे जन्मासंभवात् '**अभवन् कुरुपाण्डवाः**' इत्यत्र 'योद्धारः' इत्यध्याहृत्य योद्धृत्वेन युद्धकाल एव सूच्यते । अध्याहारमन्तरेणैव सुबोधतायै तु तस्य स्थाने '**अभवत् कौरुपाण्डवः**' इति शोधितव्यं सुधीभिः ॥ कुरवः पाण्डवाश्च योद्धारो यस्मिन् संग्रामे स कौरुपाण्डवः संग्राम इत्येवं व्याख्येयम् ॥ दाधिमथाः ॥

आसन् मघासु मुनयः शासति पृथ्वीं **युधिष्ठिरे** नृपतौ ।
षट्द्विकपञ्चद्वि २५२६ युतः शककालस्तस्य राज्यस्य ॥'

इति बृहत्संहिताराजतरङ्गिणीतः—

"शतं शतं तु वर्षाणामेकैकस्मिन् महर्षयः ।
नक्षत्रे निवसन्त्येतेससाध्वीका महातपाः ॥"

इति वाराहीसंहिताव्याख्याभट्टोत्पलीधृतकश्यपवाक्यतः—

"इत्येते **बार्हद्रथा** भूपतयो वर्षसहस्रमेकं १००० भविष्यन्ति ॥ ४।२३।१३ ॥

इत्येतेऽष्टत्रिंशदुत्तरमब्दशतं १३८ पञ्च **प्रद्योताः** पृथिवीं भोक्ष्यन्ति ॥ ४।२४।८ ॥

इत्येते **शैशुनाभा** भूपालास्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि ३६२ भविष्यन्ति ॥ ४।२४।१९ ॥

**महानन्दिन**स्ततः शूद्रागर्भोद्भवोऽतिलुब्धोऽतिबलो महापद्मनामा **नन्दः** परशुराम इवापरोऽखिलक्षत्रान्तकारी भविष्यति ॥४।२४।२०॥

यावत्**परीक्षितो** जन्म यावन्नन्दाभिषेचनम् ।
एतद् वर्षसहस्रं तु ज्ञेयं पञ्चशतोत्तरम् ॥ ४।२४।१०४ ॥
ते तु पारीक्षिते काले मघास्वासन् द्विजोत्तम ॥
तदा प्रवृत्तश्च कलिर्द्वादशाब्दशतात्मकः ॥ ४।२४।१०७ ॥
यदैव भगवान् विष्णोरंशो यातो दिवं द्विज ।
**वसुदेवकुलोद्भूत**स्तदैवात्रागतः कलिः ॥ ४।२४।१०८ ॥
यावत्स पादपद्माभ्यां पस्पर्शेमां वसुंधराम् ।
तावत्पृथ्वीपरिष्वङ्गे समर्थो नाभवत्कलिः ॥ ४।२४।१०९ ॥
गते सनातनस्यांशे विष्णोस्तत्र भुवो दिवम् ।
तत्याज सानुजो राज्यं धर्मपुत्रो **युधिष्ठिरः** ॥ ४।२४।११० ॥
निमित्तानि च दृष्ट्वा स विपरीतानि पाण्डवः ।
याते कृष्णे चकाराथ सोऽभिषेकं **परीक्षितः** ॥ ४।२४।१११ ॥
प्रयास्यन्ति यदा चैते पूर्वाषाढां महर्षयः ।
तदा **नन्दा**त्प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ४।२४।११२ ॥"

इत्येवं विष्णुपुराणतश्च ६५३+१०००+१३८+३६२=२१५३ **कलिगताब्दा** भवन्ति ॥

३ 'पुष्पपुरं **पाटलिपुत्रकम्**' इति त्रिकाण्डशेष–केशवशब्दकल्पद्रुमाः ॥ '**पाटलिपुत्रं कुसुमपुरम्**' इति हैमनाममाला ॥

अस्य पाटना ( विहार ) मध्यरेखातोंऽशाः पूर्वे ९°. २२′ घटी १. पलानि ३३. विपलानि ४० ॥ अक्षांशा उत्तरे–२५°. ३७′

नवम इ. स. शतकोत्पन्नराजशेखरविरचितकाव्यमीमांसायाम्–'श्रूयते च पाटलिपुत्रे शास्त्रकारपरीक्षा, अत्रोपवर्षवर्षाविह पाणिनिपिङ्गलाविह व्याडिः । वररुचिपतञ्जली इह परीक्षिताः ख्यातिमुपजग्मुः ।' इति समुपलभ्यते ।

४ '**उपवर्षो** हलभूतिः कृतकोटिरयाचितः' इति त्रिकाण्डशेष–केशवौ ॥ अयं चो**पवर्षोपाध्याय** उत्तरमीमांसाभाष्य**कारशंकरभगवत्पादैः "एक आत्मनः शरीरे भावात्"** ( उ. मी. सू० ३।३।५३ ) इति सूत्रभाष्ये—'इत एवाकृष्याचार्येण **शबरस्वामिना** प्रमाणलक्षणे वर्णितम्' इत्येवं स्मृतनाम्ना पूर्वमीमांसाभाष्यकारेण **शबरस्वामिना** । तत्र तत्र '**वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयांचकार**' '**इति भगवानुपवर्षः**' इत्येवं भगवत्पदपूर्वकं स्मर्यते ॥ स्मर्यते चोत्तरमीमांसाभाष्यकृद्भिर्भगव**च्छंकरपादै**रपि ( "एक आत्मनः शरीरे भावाद्" ) ( उ. मी. सू. ३।३।५३ ) इति सूत्रभाष्ये—"**अत एव च भगवतोपवर्षेण प्रथमे तन्त्रे आत्माभिधानप्रसक्तौ 'शारीरिके वक्ष्यामः' इत्युद्धारः कृतः**" इति ग्रन्थेन ॥ त्रिकाण्डमण्डनेऽपि '**उपवर्षादिवाक्यतः**' इति पुण्यपत्तनमुद्रितसंस्काररत्नमाला ४३८ पृष्ठे ॥

---

1 यद्यपि वेंकटेश्वरयन्त्रालयमुद्रिते पुस्तके '**अष्टशतम्**' इत्युपलभ्यते । तथापि टीकयोः सार्धसहस्रवर्षोक्तिसामञ्जस्यायैवं पाठः स्थापितः ॥ तथा पाठस्य सत्यत्वे तु कलिगताब्दाः २८५३ भवन्ति ॥

2 अनेन नैव नन्दसमये पूर्वाषाढायां सप्तर्षिस्थितिः प्रतिपाद्यते किंतु नन्दात् परमागमिष्यति सप्तर्षिपूर्वाषाढाश्रयणे कलिवृद्धिर्भविष्यतीत्येव प्रतिपाद्यते। अधुना स्वातौ सप्तर्षिसंस्थितितः परं पूर्वाषाढायां सप्तर्षिस्थितौ भविष्यन्त्यां पञ्चमशताब्द्यां कलिवृद्धिसूचकमेवैतद्वाक्यम् इति सर्वं समंजसम् ॥ इति 'पञ्चाशतोत्तरम्' इति पाठशोधकयोर्विष्णुपुराणटीकाकर्त्रोरभिप्रायः ॥ 'पञ्चाशदुत्तरम्, इत्युपलभ्यमानपाठपर्यालोचनेन तु नन्दसमय एव सप्तर्षीणां पूर्वाषाढाश्रयणं निराबाधमेव । यतो मघायां सप्तर्षिस्थितिसमये युधिष्ठिरराज्यं–परीक्षिद्राज्यं चासीत् । तत एकादश्यां शताब्द्यां पूर्वाषाढानक्षत्रे सप्तर्षिस्थितौ नन्दाभिषेचनमिति क्लेशमर्थपरिवर्तनञ्च विनैव सुबोधतेति ६५३+१०५०+१७०३ कलिगताब्देषु नन्दराज्यमासीत् इति केचित् ॥ तन्न मनोरमम् । प्रतिपदोक्तानां बार्हद्रथराज्याब्दानाम् १०००+ प्रद्योतराज्याब्दानाम् १३८+ शैशुनाभराज्याब्दानाम् ३६२ योगेन तु १५०० भवन्ति तत्र कौरुपाण्डवयुद्धकलिगताब्दानां ६५३ राजतरङ्गिण्युक्तानां योगेन २१५३ कलिगताब्दा नन्दराज्ये भवन्ति । इति निर्विवादः पन्थाः ॥ राजतरङ्गिणीस्थसार्धपदघटकस्यार्धपदस्य षट्संख्यासंबन्धित्वनिर्णये तु ६००+३००+३=९०३ कलिगताब्दे युद्धमभूदिति मते तु २४०३ कलिगताब्दे नन्दराज्यमासीदिति नव्यत्वाभिनिवेशिनां मतम् ॥ प्रतिपदोक्तानां बार्हद्रथराज्याब्दानां १०००+ प्रद्योतराजाब्दानां १३८+ शैशुनाभराज्याब्दानां ३६२ योगेन १५०० कलिगताब्दा भवन्ति । अत्रैव नन्दराज्ये पूर्वाषाढायां सप्तर्षिस्थितिर्निराबाधेति जानीमः । 'आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ' । ते तु पारिक्षिते काले मघास्वासन् द्विजोत्तम । तदा प्रवृत्तश्च कलिर्द्वादशाब्दशतात्मकः । प्रयास्यन्ति यदा चैते पूर्वाषाढां महर्षयः । तदा नन्दात्प्रभृत्येव कलिर्वृद्धिं गमिष्यति । इत्येतेषां संवादेन सप्तर्षीणां मघाप्रवेशासन्नकाल एव कलियुद्धयोरारम्भः । पूर्वाषाढासमाप्त्यासन्नकाल एव नन्दराज्यम् इत्येवं निश्चये प्रतिनक्षत्रं १६०० मासस्थितिकल्पनायां नैव विरोधः । शतं सत्र्यंशवर्षाणामेकैकस्मिन्महर्षयः । नक्षत्रे निवसन्त्येते ससाध्वीका महातपाः इत्येवं पाठेन अर्धतो न्यूनप्राप्तौ त्यज्यतेऽधिकप्राप्तौ त्वेकमेव गण्यते इति गणितविदां नियमेन शतं शतं च इति पाठेनापि १६०० मासान् सप्तर्षीणामेकनक्षत्रयोग इति कल्पनायां सर्वं समञ्जसम् इति दाधिमथाः ॥

**सलातुर**ग्रामाभिजनः शालङ्कुतनयो **दाक्षी**पुत्रो भगवान् **पाणिनि**गोत्र **आहिक**नामा मुनिर्गोत्राश्रयनाम्नैव प्रसिद्धो विदित एव सर्वेषाम् ॥

ततश्च तस्यैव **वर्षोपाध्यायस्य** प्रधानान्तेवासी **कौशाम्बी**वास्तव्य—**सोमदत्त**द्विजन्मात्मजन्मा **वसुदत्ता**गर्भज-**पुष्पदन्तगणा**वतारो भगवान् **कात्यः—कात्यायन**गोत्रनामा **श्रुतधरा**पराभिधेयो**वररुचि**नामा मुनिः **पाणिन्यु**पज्ञातसूत्र-न्यूनतापूरणमिव **वार्तिकरूपेण** कृतवान् ॥

१ "अयं च स(श)लातुरनामा ग्रामोऽधुना लाहुर नाम्ना प्रसिद्धः पञ्चापदेशे पेशावरमण्डले सिन्धुनदीतः पश्चिमोत्तरे देशे अटकस्टेशनतः पश्चिमायां योजनत्रयान्तरे ( १५ मैल ) वर्तमानात् उखण्ड ( ओहिंद ) ग्रामतः पश्चिमोत्तरायां ३$\frac{3}{4}$ मीलान्तरे वर्तते । शलातुरशब्दस्य कालान्तरेण वातपित्तकफविकृत्योच्चारण-विकारैः सलातुर=हलाथुर=हलाहुर=लाहुर इत्येवं व्यत्ययोऽजनि" इति ह्यूनसाङ्गकथितं कनिङ्गहैममहोदयेन तत्र सलातुरे खिस्ताब्द-प्रवृत्तेः ३५० वर्षपूर्वं पाणिनिजीवनं च वर्णितम् ।

एकेनास्मन्मित्रवर्येण तद्देशीययवनेन तु—'दशमशताब्द्यां तद्देशे **लाहोरनर**पति**जयपाल**कटकस्थित्या लाहोरनाम्ना प्रसिद्धिं गतः' इति वर्णयांचक्रे तत्र अट्टकनाम्ना प्रसिद्धस्य स्थानस्य मध्यरेखातो रेखांशाः पश्चिमायाम् ३° ३३′ अक्षांशाः ३३° ५३′ । वर्तन्ते ॥

२ **'पाणिनिस्त्वाहिको दाक्षीपुत्रः शालङ्किपाणिनौ । शालातुरीयः'** इति त्रिकाण्डशेषः ॥ **मातुरीय(?)स्तु पाणिनिः । सालातुरीयो दाक्षेयः शालङ्किः पाणिनाहिकौ । शिवपर्याय-भक्तः'** इति केशवः ॥

**पैलादि** ( २।४।५९ ) गणे **'शालङ्किः'** इत्युपलभ्यते । तेन **नडादि** ( ४।१।९९ ) गणे **'शलङ्कु शलङ्कं च'** इति गणसूत्रमिव **बाह्वादि** ( ४।१।९६ ) गणेऽपि तादृशं गणसूत्रमनुमीयते । तेन शालङ्कि–शालङ्कायनौ सिद्धौ ॥

३ **'दाक्षीपुत्रस्य पाणिनेः'** घुसंज्ञा ( १।१।८ ) सूत्रे भाष्य-कारः ॥

४ **'कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्'** इति प्रथमवार्तिकावतरणे भाष्यकृत् ॥

५ 'पाणिनिगोत्राणाम्—'भार्गव—च्यावन—आप्नवान—और्व—जाम-दग्न्य' इति पञ्च प्रवरा भवन्ति ॥ इति बौधायनादिसूत्रमूलकभट्ट-गोपीनाथदीक्षितविरचितसंस्काररत्नमालापुण्यपत्तनीयानन्दाश्रममुद्रित-पुस्तके समुपलभ्यते ॥

६ इयं च **कौशाम्बी**नगरी रामायणे बालकाण्डे दाशरथिराम-चन्द्रेण विश्वामित्रयज्ञविघ्नकर्तृषु रात्रिञ्चरेषु नाशितेषु पश्चाज्जनकपुरं निनीषुणा विश्वामित्रेण वर्णितैव भवेदन्या वेति न निश्चयः । यतो **नद्यादि** ४–२–९७–गणे **कौशाम्बी वनकौशाम्बी**त्युभयपाठात् । **"कौशाम्बी वत्सपत्तनम्"** इति त्रिकाण्डशेषहैमनाममालादिकोश-प्रामाण्येन वत्सराजधानी सर्वेषु कथासरित्सागर–बृहत्कथामञ्जरी–रत्नावली–प्रियदर्शिका–प्रतिज्ञायौगन्धरायण–स्वप्नवासवदत्ताप्रभृतिषु ग्रन्थेषु वर्णिता ॥ अधुना च कनिंगहमप्रभृतीनां पाश्चात्यानां विदुषां निश्चयोऽस्ति यत् सेयं **कौशाम्बी प्रयाग**क्षेत्रत उपरिभागे **यमुना**तीरे एव षड्योजनान्तरे वर्तते । तस्याश्च रेखांशा **मध्यरेखातः पूर्वस्यां** दिशि ६° २७′ अक्षांशाः २५° २०′ मिता वर्तन्ते । **प्रसिद्धं** नाम च "कोसम" इति ख्यातमस्ति ।' इति ।

७ **"प्रोवाच भगवान् कात्यः"** इति "आतोऽनुपसर्गे कः" इति ३, २, ३, सूत्रे भाष्यम् ॥

८ **'स्मादिविधिः पुरान्तो यद्यविशेषेण किं कृतं भवति । न स्म पुराद्यतन इति ब्रुवता कात्यायनेनेह ॥'** इति श्लोक-व्याख्यायां **'किं वार्तिककारः प्रतिषेधेन करोति'** इति "लट्स्मे" इति ३।२।११५ सूत्रे भाष्यम् ॥

९ कात्यायनगोत्रस्य कपिगणे पाठः । तेषामाङ्गिरसबार्हस्पत्यका-पेयेति त्रिप्रवरत्वम् ।

१० **"मेधाजित् कात्यः कात्यायनश्च सः । पुनर्वसुर्वर-रुचिः"** इति त्रिकाण्डशेषः ॥

११ 'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रन्थं वार्तिकं[3] प्राहुर्वार्तिकज्ञा मनीषिणः ॥
पराशरोपपुराणम् ॥

अयं **कात्यायन** एव वार्तिककार इति तु लोकप्रसिद्धि-मात्रम् ॥ बहवो **वार्तिककाराः** केचन वाक्यरूपवार्तिककाराः यथा–क्रोष्ट्रीयाः १।१।३ सूत्रे, भारद्वाजीयाः स्थानिवत्सूत्रे, सौनागाः २।२।१८ सूत्रे इत्यादयो नामनिर्दिष्टाः । केचन नैव नामभेदनिर्दिष्टाः, अत एव तेषां न पौनरुक्त्यवैयर्थ्यम् ॥ यथा 'चङ्परनिर्ह्रासे स्थानिवद्भावप्रतिषेधवार्तिकमुक्त्वाऽपि **'णौ-**

1 अस्मिन् पाणिनिविषये पाश्चात्यविद्याविशारदानां विद्वद्वराणां वादप्रतिवादस्तु **'इंडियन एंटिक्वेरी'** I21;102.281 310. ३६२ V–49. 245, 345. VI–107-306. 317, IX–80. 81. 251. 305. 307. 318, X–77, 78, XI–123, XII–205–6, XV–241 XVI–178, XXII 223 पुस्तकभागेषु पृष्ठेषु द्रष्टव्यः ॥

2 'सप्तनवत्यधिकेष्वेकादशसु शतेष्वतीतेषु ।
वर्षाणां विक्रमतो **गणरत्नमहोदधि**र्विहितः ॥'
इति बोधितसमयगणरत्नमहोदधौ—**'शालातुरीय–शकटाङ्गज-'** इति पाणिनिं स्मरति **वर्धमानः** ॥

3 वार्तिकेष्वपि सूत्रत्वव्यवहारः वार्तिककारेष्वपि आचार्यत्व-व्यवहारः **"आचार्याः सूत्राणि कृत्वा न निवर्तयन्ति"** इति पस्पशायां भाष्यकृता कृतो न विस्मरणीयः ॥

ततश्च तस्यैव **वर्षोपाध्यायस्य** सर्वच्छात्रोत्तम**वररुचि**तो निकृष्ट **इन्द्रदत्त**त उत्कृष्टो **वीतसी ( वेतसी )** तीर्थवास्त-व्यकरस्ववाडवनन्दनो **नन्दिनी**तनयो **व्याडिगोत्र** आचार्यः खपितृष्वसेय**पाणिन्यु**पज्ञातशास्त्रे व्याख्यानभूतमिव लक्षश्लो-कात्मकं **संग्रह**नामानं ग्रन्थं निर्मितवान् ॥ एष च ग्रन्थो नागे-शादिभिरपि नोपलब्धः ॥

---

**चङ्युपधायाः–'** इत्यत्र **'णेर्णिच्युपसंख्यानम्'** इति वार्तिक-रचनम् ॥ **'पूर्वत्रासिद्धे न स्थानिवत्, तस्य दोषः संयोगा-दिलोपलत्वणत्वेषु'** इत्यनेन **'काक्यर्थम्'** इत्यत्र कलोपप्राप्ति-वारणे सिद्धेऽपि **'संयोगादिलोपे च यणः प्रतिषेधो वाच्यः'** इत्येतत्करणम् ॥

अन्य एवासन् केचन श्लोकवार्तिककाराः ॥

अत एवास्माभिरपि वार्तिकगणनायां नैवापारि इति तदङ्कदाने प्रतिमुद्रणं व्यत्ययेपि नास्माकं दोषः ॥

**अनेन** कात्यायनेन **भ्राजाख्याः** श्लोका अपि रचिताः यदन्तर्गत एव **'यस्तु प्रयुङ्क्ते कुशलो विशेषे–'** इत्ययं श्लोको व्याकरण-प्रयोजनवर्णनावसरे भाष्यकृतोपन्यस्तः ॥

अन्येऽपि बहवो ग्रन्थाः कात्यायन=वररुच्योरमेदं प्रकाशयन्ति पुस्तक–तन्निर्मातृनामसंग्रहसूचीपत्रे कॅटलॉगस् कॅटलॉगरम्

| कात्यायनीयत्वेन प्रकाशिताः | वररुचीयत्वेन प्रकाशिताः | |
|---|---|---|
| इष्टिपद्धति | अष्टाध्यायीवृत्ति | |
| कर्मप्रदीप | एकाक्षरकोषः | |
| कारिका | कारकचक्र | |
| गृह्यकारिका | कारिका | |
| गृह्यपरिशिष्ट | चैत्रकुटी | व्या. |
| चण्डीविधान | दशगणकारिका | व्या. |
| ज्योतिष्टोम | पत्रकौमुदी | |
| त्रिकण्डिकासूत्र | प्रयोगविवेक | व्या. |
| नवकण्डिकाश्राद्धसूत्र | विधिसंग्रह | व्या. |
| परिशिष्ट | प्राकृतप्रकाश | व्या. |
| ,, पद्धति | फुल्लसूत्र | |
| पशुबन्धसूत्र | योगशत | |
| प्राकृतमञ्जरी | राक्षसकाव्य | |
| प्रायश्चित्त | राजनीति | |
| भाषिकसूत्र | लिङ्गविशेषविधि | |
| भ्राजश्लोक | वररुचिकाव्य | |
| मू(मौ)ल्याध्याय | वादतरङ्गिणी | |
| रुद्रविधान | वार्तिकपाठ | |
| वार्तिकपाठ | विवेकसंग्रह | |
| शान्ति | शब्दलक्षण | |
| ,, विधान | श्रुतबोध | |
| शिक्षा | समासपटल | |
| शुल्वसूत्र | | |
| स्नानविधिसूत्र | | |
| शुक्लयजुःप्रातिशाख्यम् | | |
| श्रौत्रसूत्रम् | | |

अस्यैव वररुचेः समानसमयः कश्चन गोपालसदृशो जडबुद्धि-रपि **श्रीकाशीनरेश–भीमशुक्क**महाराजपुत्री–महाविदुषी–**वास-न्ती**पतिः संभूय **श्रीकाली**प्रसादतः सकलकलाविद्यापारंगमो **भूत्वा कालिदास**नाम्ना प्रसिद्धिं प्राप्य **रघुवंश–शकुन्तला**दिग्रन्थान्नि-र्माय समग्रमहीमण्डलमण्डनपण्डितवरमाननीयो भूत्वा गुणिगण-गणनायां प्रथमगणनीयो बभूव" इति इण्डियन अण्टिकेरी **पुस्तक-**चतुर्थभागे १०३ पृष्ठेऽपि वर्णनं समुपलभ्यते ।

१ 'अथ **वेतसिकां** गत्वा पितामहनिषेविताम् ।
अश्वमेधमवाप्नोति गच्छेदौशनसीं गतिम् ॥ ३ (वनपर्व) ।८२।५६
अथ **सुन्दरिकातीर्थं** प्राप्य सिद्धनिषेवितम् ।
रूपस्य भागी भवति दृष्टमेतत्पुरातनैः ॥ ३।८२।५७
ततो वै( **ब्राह्मणं** ) गत्वा ब्रह्मचारी जितेन्द्रियः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ ३।८३।५८
ततस्तु **नैमिषं** गच्छेत्पुण्यं सिद्धनिषेवितम् ।
तत्र नित्यं निवसति ब्रह्मा देवगणैः सह ॥ ३।८२।५९

इति महाभारतसमवलोकनेन ज्ञायते–**नैमिषारण्य (२७°.२०'. ५५'. उत्तराक्षांशे, ४°.४१'.४०" मध्यरेखातः पूर्वदिगंशे) क्षेत्रतः** पश्चिमोत्तरे देश एव भवेदियं **वेतसी** इति विभावनीयम् ॥

२ 'व्याडिर्विन्ध्यस्थो नन्दिनीसुतः । मेधावी च' इति त्रिकाण्डशेषः ॥

३ 'व्याडिगोत्रस्यात्रिगणे पाठात् तद्गोत्राणाम् 'आत्रेयार्चनानस-श्यावाश्व' इति त्रिप्रवरत्वं ज्ञेयम् ॥

४




५ अयं लक्षश्लोकात्मको **ग्रन्थ** इत्यैतिह्यम् ॥ व्याडिकृता **ग्रन्थाः**–त्रिकाण्डमण्डने–'व्याडि–वासिष्ठवाक्यतः' इत्युक्तेश्च ।

---

1 रघुकारः कालिदासः इति त्रिकाण्डशेषः ।

2 मेघदूत–विक्रमोर्वशी–मालविकाग्निमित्रज्योतिर्विदाभरणादिग्र-न्थानां निर्मातारः कालिदासास्त्वितो भिन्ना एवेति सर्वमनवद्यम् ॥ कुमारसंभवनिर्माता कालिदासस्तु रघुवंशप्रणेतुर्भिन्नोऽनन्यो वेति न निश्चितम्' ॥ शकुन्तलायां 'रसभावदीक्षागुरोर्विक्रमादित्यस्य सभायाम्' इति पाठस्तु कलिकातामुद्रितपुस्तक एवोपलभ्यते । न युरोपमुम्बय्यादिमुद्रितपुस्तकेषु इति नैव प्रामाण्यसाधकः । प्रामा-णिकत्वेऽपि न तेन विशेषणेन संवत्प्रवर्तकस्योज्जयिनीनरपतेरेव ग्रहणं सिद्ध्यति ।

3 'व्यडो नाम ऋषिः, तस्यापत्यं व्याडिः' इति **स्वागतादिगण-**रत्नमहोदधिः ॥ क्रौड्यादिगणे 'व्याडिः' ।

4 तथा चोक्तं भाष्यकृता 'उभयप्राप्तौ–' इति सूत्रभाष्ये–'शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः' इति ॥

ततश्च **कुण्यां**[1]दिभिराचार्यैं रचितासु वृत्तिषु[2] क्वचिन्न्यूनतामवलोक्य **गोनर्द**[3]**देशे** भगवान् **पतञ्जलि**[4]गोत्रजन्मा श्री**शेषावतार**त्वेन विख्यातः कश्चिन् महाप्रतिभाप्रभावो मुनिप्रवरो **महाभाष्यं**[5] निरमात् ॥

---

१ 'कुणिना प्राग्ग्रहणम्' 'अन्येन प्राग्ग्रहणम्' ''भाष्यकारस्तु कुणिमतमेवाशिश्रियत्' इति ''एङ् प्राचां देशे'' इति प्रदीपे कैयटः ॥

२ 'मूर्धाभिषिक्तमिति । सर्ववृत्तिषूदाहृतत्वादिति अचः परस्मिन्निति सूत्रे कैयटः । 'वृत्तिकारोक्तं सूत्रार्थमाह–न खल्वपीति' 'वृत्तिकारोक्तं दूषयति–अकच्स्वरौ त्विति=न बहुव्रीहौ इति सूत्रे नागेशः ॥

३ अयं च **गोनर्द**देशः **कश्मीरेषु** इति प्राञ्चः ॥ **अयोध्याप्रान्ते** ( मध्यरेखातः ६°.१०′ पूर्वस्याम् अक्षांशाः २७°.७′ उत्तरस्याम् ) इति पौरस्त्याः ॥

४ 'अथ कपीनां त्र्यार्षेयः=आङ्गिरस–माहाय्यवोरुक्षय्येति–उरुक्षय्यवद्–महय्युवद्–अङ्गिरोवदिति । तरस्वान् तिलो विदुः शालुः पातञ्जलिः, भूयसीः, द्वन्द्वकीः, जलन्द्वः कपेरष्टविधाः प्रजाः' इति **संस्काररत्नमालायां सत्याषाढहिरण्यकेशिसूत्रम्** ॥

५ 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

पराशरोपपुराणम् । अत्र च महाभाष्ये **'चन्द्रगुप्तसभा' 'पुष्पमित्रसभा' 'पुष्पमित्रो यजते,' 'याजका याजयन्ति'** इति लक्ष्यप्रदानेन पुष्पमित्रराज्ये तदनन्तरं वाऽस्य निर्माणं प्रतीयते ॥ तद्राज्यप्रारम्भकालश्च—

**''महापद्मः ( नाम्ना नन्दः ) पुत्राश्चैकं वर्षशतमवनीपतयो भविष्यन्ति** ४।२४।२५ ॥

**तेषामभावे मौर्याः पृथिवीं भोक्ष्यन्ति** ॥ ४।२४।२७ ॥

**एवमेते मौर्या दश भूपतयो भविष्यन्ति–अब्दशतं सप्तत्रिंशदुत्तरम्** ॥ ४।२४।३२ ॥

**तेषामन्ते पृथिवीं दश शुङ्गा भोक्ष्यन्ति** ॥ ४।२४।३३ ॥

**पुष्पमित्रः सेनापतिः स्वामिनं ( बृहद्रथनामानं ) हत्वा राज्यं करिष्यति तस्यात्मजोऽग्निमित्रः** ॥ ४।२४।३३ ॥'

इति विष्णुपुराणसमवलोकनेन ६५३+१५००+१००+१३७=२३९० कलिचतुर्विंशशताब्द्यां प्रतीयते ॥ **पुष्पमित्र**समय एव, **अग्निमित्र**समय एव वा भाष्यनिर्माणम् ॥

**भाष्यकार**सुगृहीतनामधेय**पुष्पमित्र**राजपर्यन्तं कलिगताब्दाः **वायुपुराणोत्तरखण्ड**-सप्तत्रिंशा ३७ ध्यायप्रकाशिताः—

| प्राचां मते कलिगताब्दाः | B. C. | | अर्वाचीनत्वाभिनिवेशिनन्यमते कलिगताब्दाः | B. C. |
|---|---|---|---|---|
| | | शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले । कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः ॥ } राजतरङ्गिणी १।५१॥ | | |
| ६५३ | २४४८ | संग्रामे भारते तस्मिन् **सहदेवो** निपातितः । | ९०३ | २१९८ |
| | | **सोमाधि(पि)**स्तस्य तनयो राजर्षिः स गिरिव्रजे ॥ २९१ ॥ | | |
| ७११ | २३९० | पञ्चाशतं तथाऽष्टौ च समा राज्यमकारयत् । | ९६१ | २१४० |
| ७७५ | २३२६ | **श्रुतश्रवा**श्चतुःषष्टिसमास्तस्य सुतोऽभजत् ॥ २९२ ॥ | १०२५ | २०७६ |
| ८११ | २२९० | **अयुतायु**स्तु षट्त्रिंशद् राज्यं वर्षाण्यकारयत् । | १०६१ | २०४० |
| ९११ | २१९० | समाशतं **निरमित्रो** महीं भुक्त्वा दिवं गतः ॥ २९३ ॥ | ११६१ | १९४० |
| ९६७ | २१६४ | पञ्चाशतं समाः षट् च **सुकृत्त(नेत्र)**ः प्राप्तवान् महीम् । | १२१७ | १८९४ |
| ९९० | २१११ | त्रयोविंशं **बृहत्कर्मा** राज्यं वर्षाण्यकारयत् ॥ २९४ ॥ | १२४० | १८६१ |

---

१ अन्तरे चैव संप्राप्ते कलिद्वापरयोरभूत् । स्यमन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः । ( महाभारते आदिपर्वणि २ अध्याये श्लोकः १३ ) पर्यालोचनेन कलिप्रारम्भकाल एव भारतयुद्धप्रारम्भस्य निर्णयेन ''शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले । कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः । इति राजतरङ्गिणीश्लोके वर्षपदस्य दिनरात्रिपरत्वस्य ( पू० मी० ६।७।१३ ) ॥ दीर्घसत्राधिकरणानुसारेण 'सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः इति च ब्राह्मणं विभागेन विभागेन, ( ४।२७।४ ) इति निरुक्तधृतब्राह्मणनिरुक्तयोश्चानुसरणेन दिनरात्र्योर्विभागस्य चाश्रयणेन दिनरात्र्योः समासे ३२६ जाते युद्धमभूदित्यर्थकल्पनया विरोधपरिहारस्यावश्यकरणीयत्वेन कलिप्रथमसंवत्सर एव भारतयुद्धकल्पनायां सत्याम् ६५३ संख्यायाः कलिगताब्दसंख्याया व्यवकलनेन B. C. वर्षसंख्यायां संकलनेन संख्याङ्कनिर्देश सत्यो मन्तव्यः । इति दाधिमथाः ।

| | | | | |
|---|---|---|---|---|
| | | सेनाजित् सांप्रतं चापि एतां वै भुज्यते समाः । | | |
| १०४८ | २०५३ | भोक्ष्यते नृपतिश्चैष अष्टपञ्चाशतं समाः ॥ २९५ ॥ | १२९८ | १८०३ |
| १०८८ | २०१३ | श्रुतंजयस्तु वर्षाणि चत्वारिंशद् भविष्यति ॥ २९६ ॥ | १३३८ | १७६३ |
| | | महाबाहुर्महाबुद्धिर्महाभीमपराक्रमः । | | |
| ११२३ | १९७८ | पञ्चत्रिंशत्तु वर्षाणि महीं पालयिता नृपः (विप्रः) ॥ २९७ ॥ | १३७३ | १७२८ |
| ११७१ | १९२० | अष्टपञ्चाशतं चाब्दान् राज्ये स्थास्यति वै **शुचिः** । | १४३१ | १६७० |
| १२१९ | १८८२ | अष्टात्रिंशत् समाः पूर्णाः **क्षेमो (म्यो)** राजा भविष्यति ॥ २९८ ॥ | १८४९ | १६३२ |
| १२८३ | १८१८ | **सुव्रतस्तु** चतुःषष्टी राज्यं प्राप्स्यति वीर्यवान् । | १५३३ | १५६८ |
| १२८८ | १८१३ | पञ्च वर्षाणि पूर्णानि **धर्मनेत्रो** भविष्यति ॥ २९९ ॥ | १५३८ | १५६३ |
| १३२६ | १७७५ | अष्टात्रिंशत्समा राज्यं **सुव्रत(श्रव)**स्य भविष्यति । | १५७६ | १५२५ |
| १३८४ | १७१७ | चत्वारिंशदशाष्टौ च **दृढसेनो** भविष्यति ॥ ३०० ॥ | १६३४ | १४६७ |
| १४१७ | १६८४ | त्रयस्त्रिंशत्तु वर्षाणि राज्यं **सुमतिः** प्राप्स्यते ततः । | १६६७ | १४३४ |
| १४३९ | १६६२ | द्वाविंशतिसमा राज्यं **सुच(ब)लो** भोक्ष्यते ततः ॥ ३०१ ॥ | १६८९ | १४१२ |
| १४७९ | १६२२ | चत्वारिंशत्समा राजा **सुनेत्रो** भोक्ष्यते ततः । | १७२९ | १३७२ |
| १५६२ | १५३९ | **सत्यजित्** पृथिवीराज्यं त्र्यशीतिं भोक्ष्यते समाः ॥ ३०२ ॥ | १८१२ | १२८९ |
| १५६२ | १५९४ | प्राप्येमां **वीर(विश्व)**जिच्चापि पञ्चत्रिंशद् भविष्यति । | १८४७ | १२५४ |
| १६४७ | १४५४ | **अरिं (रिपुं)जय**स्तु वर्षाणि पञ्चाशत् प्राप्स्यते महीम् ॥ ३०३ ॥ | १८९७ | १२०४ |
| | | द्वाविंशच्च नृपा ह्येते भवितारो बृहद्रथाः । | | |
| * **१६५३** | **१४४८** | पूर्णं **वर्षसहस्रं** वै तेषां राज्यं भविष्यति ॥ ३०४ ॥ | **१९०३** | **११९८** |
| | | बृहद्रथेष्वतीतेषु वीतहोत्रेषु वर्तिषु । | | |
| | | मुनिकः स्वामिनं हत्वा पुत्रं समभिषेक्ष्यति ॥ ३०५ ॥ | | |
| | | मिषतां क्षत्रियाणां हि **प्रद्योतो** मुनिको बलात् । | | |
| | | स वै प्रणतसामन्तो भविष्ये नयवर्जितः ॥ ३०६ ॥ | | |
| १६७६ | १४२५ | त्रयोविंशत्समा **राजा** भविता स नरोत्तमः । | १९२६ | ११७५ |
| १७०० | १४०१ | चतुर्विंशत्समा राजा **पालको(बलाको)** भविता ततः ॥ ३०७ ॥ | १९५० | ११५१ |
| १७५० | १३५१ | **विशाखयूपो** भविता नृपः पञ्चाशतं समाः । | २००० | ११०१ |
| १७७१ | १३३० | एकविंशत्समा राज्य**मजनक(राज्यं जनकस्य)** भविष्यति ॥ ३०८ ॥ | २०२१ | १०८१ |
| १७९१ | १३१० | भविष्यति समा विंशत्तत्सुतो **वर्ति (नन्दि) वर्धनः** । | **२०४१** | **१०६०** |
| * **१७९१** | **१३१०** | **अष्टात्रिंशच्छतं** भाव्याः प्राद्योताः पञ्च ते सुताः ॥ ३०९ ॥ | | |
| | | हत्वा तेषां यशः कृत्स्नं **शिशुनाको(भो)** भविष्यति । | | |
| | | वाराणस्यां सुतस्तस्य संप्राप्स्यति गिरिव्रजम् ॥ ३१० ॥ | | |
| १८३१ | १२७० | **शिशुनाकस्य** वर्षाणि चत्वारिंशद् भविष्यति । | २०८१ | १०२० |
| १८६७ | १२३४ | **शक(काक)वर्णः** सुतस्तस्य षट्त्रिंशच्च भविष्यति ॥ ३११ ॥ | २११७ | ९८४ |
| १८८७ | १२१४ | ततस्तु विंशतिं राजा **क्षेमव(ध)र्मा** भविष्यति । | २१३७ | ९६४ |
| १९२२ | ११७९ | **अजातशत्रु**र्भविता पञ्चत्रिंशत्समा नृप ॥ ३१२ ॥ | २१७२ | ९२४ |
| १९६२ | ११३९ | चत्वारिंशत्समा राज्यं **क्षत्रौजाः** प्राप्स्यते ततः । | २२१२ | ८८९ |
| १९९० | ११११ | अष्टाविंशत्समा राजा **वि(धि)सारो** भविष्यति ॥ ३१३ ॥ | २२४० | ८६१ |
| २०१५ | १०८६ | पञ्चविंशत्समा राजा **दर्श(अर्भ)कस्तु** भविष्यति । | २२६५ | ८३६ |
| २०४८ | १०५३ | **उदायी** भविता तस्मात् त्रयस्त्रिंशत् समा नृपः ॥ ३१४ ॥ | २२९८ | ८३३ |
| | | स वै पुरवरं राजा पृथिव्यां **कुसुमाह्वयम्** । | | |
| २०५२ | १०४९ | गङ्गाया दक्षिणे कूले चतुर्थेऽब्दे करिष्यति ॥ ३१५ ॥ | २३०२ | ७९९ |
| २०९४ | १००७ | द्वाचत्वारिंशत्समा भाव्यो राजा वै **नन्दिवर्धनः** । | २३४४ | ७५७ |
| २१३७ | ९६४ | चत्वारिंशत् त्रयश्चैव **महानन्दी** भविष्यति ॥ ३१६ ॥ | २३८७ | ७१४ |

| | | | | |
|---|---|---|---|---|
| | | इत्येते भवितारो वै शैशुनाका(भा) नृपा दश । | | |
| * २१५३ | ९४८ | शतानि त्रीणि द्विषष्ट्यभ्यधिकानि तु ॥ ३१७ ॥ | २४०३ | ६९८ |
| | | शैशुनाका(भा) भविष्यन्ति तावत्कालं नृपाः परे । | | |
| | | राजानः क्षत्रबान्धवा एतैः सार्धं भविष्यति ॥ ३१८ ॥ | | |
| | | ऐक्ष्वाकवाश्चतुर्विंशत्पाञ्चालाः पञ्चविंशतिः । | | |
| | | कालकास्तु चतुर्विंशच्चतुर्विंशत्तु हैहयाः ॥ ३१९ ॥ | | |
| | | द्वात्रिंशद्वै कलिङ्गास्तु पञ्चत्रिंशत् तथा शकाः । | | |
| | | कुरवश्चापि षट्त्रिंशदष्टाविंशतिमैथिलाः ॥ ३२० ॥ | | |
| | | शूरसेनास्त्रयोविंशत् वीतिहोत्राश्च विंशतिः । | | |
| | | तुल्यकालं भविष्यन्ति सर्व एव महीक्षितः ॥ ३२१ ॥ | | |
| | | **महानन्दिसुत**श्चापि शूद्रायाः कालसंवृतः । | | |
| | | उत्पत्स्यते **महापद्मः** सर्वक्षत्रान्तको नृपः ॥ ३२२ ॥ | | |
| | | ततः प्रभृति राजानो भविष्याः शूद्रयोनयः । | | |
| | | एकराट् स **महापद्म** एकच्छत्रो भविष्यति ॥ ३२३ ॥ | | |
| २२४१ | ८६० | अष्टाविंशति (शीर्ति स) वर्षाणि पृथिवीं पालयिष्यति । | २४९१ | ६१० |
| | | सर्वक्षत्रान् समुद्धृत्य भाविनोऽर्थस्य वै बलात् ॥ ३२४ ॥ | | |
| | | सहसा तत्सुताश्चाष्टौ समा द्वादश ते नृपाः । | | |
| | | महापद्मस्य पर्याये भविष्यन्ति नृपाः क्रमात् ॥ ३२५ ॥ | | |
| | | उद्धरिष्यति तान् सर्वान् **कौटिल्यो** वै द्विरष्टभिः । | | |
| * २२५३ | ८४८ | भुक्त्वा महीं **वर्षशतं नन्देन्दुः** स भविष्यति ॥ ३२६ ॥ | २५०३ | ५९८ |
| | | चन्द्रगुप्तं नृपं राज्ये कौटिल्यः स्थापयिष्यति । | | |
| २२७७ | ८२४ | चतुर्विंशत्समा राजा **चन्द्रगुप्तो** भविष्यति ॥ ३२७ ॥ | २५२७ | ५४९ |
| २३०२ | ७९९ | भविता **भद्र(बिन्दु)सार**स्तु पञ्चविंशत्समा नृपः । | २५५२ | ५४९ |
| २३३८ | ७६३ | षट्त्रिंशत्तु समा राजा **अशोको** भविता नृषु ॥ ३२८ ॥ | २५८८ | ५१३ |
| २३४६ | ७५५ | तस्य पुत्रः **कुनाल**स्तु वर्षाण्यष्टौ भविष्यति । | २५९६ | ५०५ |
| २३५४ | ७४७ | कुनालसूनुरष्टौ च भोक्ता वै **बन्धुपालितः** ॥ ३२९ ॥ | २६०४ | ४९७ |
| २३६४ | ७३७ | बन्धुपालितदायादो दशाब्दानी**न्द्रपालितः** । | २६१४ | ४८७ |
| २३७१ | ७३० | भविता सप्तवर्षाणि **देववर्मा** नराधिपः ॥ ३३० ॥ | २६२१ | ४८० |
| २३७९ | ७२२ | राजा **शतधर**श्चाष्टौ तस्य पुत्रो भविष्यति । | २६२९ | ४७२ |
| २३८६ | ७१५ | **बृहद्रथ**श्च वर्षाणि सप्त वै भविता नृपः ॥ ३३१ ॥ | २६३६ | ४६५ |
| | | इत्येते नव भूपाला ये भोक्ष्यन्ति वसुन्धराम् । | | |
| * २३९० | ७११ | **सप्तत्रिंशच्छतं** पूर्णं तेभ्यस्तु गौर्भविष्यति ॥ ३३२ ॥ | २६४० | ४६१ |
| | | **पुष्पमित्र**स्तु सेनानीरुद्धृत्य वै बृहद्रथम् । | | |
| २४५० | ६५१ | कारयिष्यति वै राज्यं समाः षष्टिं सदैव तु ॥ ३३३ ॥ | २७०० | ४०१ |

This is also accepted by Mr. M. M. Kunte B. A. in the Vicissitudes of Aryan Civilizatiou in India, page 316 ;—

"The chronology of Buddha being accepted as 500 years before Christ it follows that Patanjal wrote his commentary about 600 B. C.; and that Pānini taught his pupils about 803 B. C."

Pandit N. Bhāshyāchārya in his The Age of Patanjali, page 33 also comes to the following conclusion: "(a) Patanjali was the author of the Mahābhāshya, a commentary on Pānini's Ashtādhyāyi (and also of the Yoga Sutras) and (b) that he lived without any donbt between the 9th and 10th centuries B. C., that is, about the 10th century B. C."

अत एव—

"तदा भगवतः **शाक्यसिंहस्य** परनिर्वृतेः । अस्मिन् महीलोकधातौ सार्धं वर्षशतं ह्यगात् ॥ १ । १७२ ॥
**बोधिसत्त्वश्च** देशेऽस्मिन्नेको भूमीश्वरोऽभवत् । स च **नागार्जुनः** श्रीमान् षडर्हद्धनसंश्रयी ॥ १ । १७३ ॥
अथ निष्कण्टको राजा कण्टकोत्साद्यहारदः । अभीर्बभूवाभिमन्युः शतमन्युरिवापरः ॥ १ । १७४ ॥
**स्वनामाङ्कं** शशाङ्काङ्कशेखरं विरचय्य सः । परार्ध्यविभवं श्रीमानभिमन्युपुरं व्यधात् ॥ १ । १७५ ॥
**चन्द्राचार्या**दिभिर्लब्ध्वा देशात्तस्मात्तदागमम् । प्रवर्तितं **महाभाष्यं** स्वं च व्याकरणं कृतम् ॥ १ । १७६ ॥"

इत्येवं राजतरङ्गिणीसमवलोकनेन **शाक्यसिंहनिर्वाणकालः** पञ्चदशोत्तरषड्विंशतिशत २६१५ कलिगताब्दोत्तरं १५० वर्षे (२६१५+१५०=२७६५ कलिगताब्दकाल=३३६ B. C.)राज्येन अभिमन्युना महाभाष्यस्य काश्मीरेषु प्रचारकथनं संगच्छते ॥

पूर्वव्याकरणानुसार्येवोत्तरव्याकरणनिर्माणम्" इति नियमानुसारेणैव पूर्वव्याकरणस्यावश्यकत्वेनैव—

"**असौ पुनर्व्याकरणं ग्रहीष्यन्सूर्योन्मुखः प्रष्टुमनाः कपीन्द्रः ।
उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद् धारयन्नप्रमेयः** ॥ ७ । ३६ । ४४ ॥
**ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं सिध्यति वै कपीन्द्रः** ॥"

इति वाल्मीकीयरामायणे वर्णितस्य श्रीहनुमता पठितस्य संग्रहग्रन्थस्य सत्त्वेऽपि नैव विरोधिनां शङ्का ॥ यद्वा ग्रन्थानां संग्रहं **समूह**मित्येवार्थो भवेत् ॥

यत्तु "**अकथितं च**" इतिसूत्रभाष्ये '**उभयथा गोणिकापुत्रः**" इति भाष्यव्याख्यानावसरे "**गोणिकापुत्रो भाष्यकार इत्याहुः**" इति नागेशीयोद्द्योतमनुसृत्य **पतञ्जलिचरितकाव्ये रामभद्रदीक्षितेन**—चिदम्बरतीर्थे पुत्रार्थं तपस्यन्त्या **गोणिकाया** गर्भे प्रादुरभूत् पतञ्जलिर्भाष्यकारः—इति वर्णितम् ।

यच्च कैश्चित् पण्डितवरैः—

"**योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन ।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि** ॥"

इत्यनुपलब्धप्रमाणोद्धृतश्लोकानुसारेण योगसूत्रकर्तृत्वमप्यस्यैव पतञ्जलेर्वर्णितम् ।

तदुभयमपि नैव विचारसहम् । तथाहि "**तत्प्रसङ्गाच्चारायणः साधारणमधिकरणं पृथक् प्रोवाच, सुवर्णनाभः साम्प्रयोगिकम्, घोटकमुखः कन्यासंप्रयुक्तम्, गोनर्दीयो भार्याधिकारम्, गोणिकापुत्रः पारदारिकम्, कुचुमार औपनिषदिकम्-इत्येवं बहुभिराचार्यैस्तच्छास्त्रं खण्डशः प्रणीतमुपसन्नकल्पमभूत्**" इति कामसूत्रे प्रथमाध्याये शास्त्रसंग्रहे वात्स्यायनेन **गोनर्दीयगोणिकापुत्रयोः** पार्थक्येनोपादानात् '**गोनर्दीयः पतञ्जलौ**' इति कोशप्रामाण्येन गोनर्दीयस्य भाष्यकारपतञ्जलिनामत्वाङ्गीकारेऽपि गोणिकापुत्रस्य भाष्यकारनामत्वे प्रमाणानुपलम्भ एव-इति ॥

एवं च योगसूत्रकर्तृत्वं **कपिपुत्रस्य** आद्यपतञ्जलेः पतञ्जलिगोत्रप्रवर्तकस्यैव । अत एव तत्कृतयोगसूत्रस्य '**एतेन योगः प्रत्युक्तः**' (२।१।३) इति पाराशर्येण स्वसूत्रेषूद्देशः कृतः । पाराशर्यसूत्राणि '**पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः**' इति पाणिनिना स्वतः प्राग्भवत्वेन सूचितानि ॥

भाष्ये-**जानकीहरणस्थस्य** '**वरतनु संप्रवदन्ति कुक्कुटाः**' इति पद्यचतुर्थांशस्य '**व्यक्तवाचां समुच्चारणे**' इति सूत्रे उदाहरणात् जानकीहरणकर्तुः **कुमारदासाद**र्वाचीनत्वं प्रसिध्यति । 'कुमारदासश्च' '**जानकीहरणं कर्तुं रघुवंशे स्थिते सति । कविः कुमारदासश्च रावणश्च यदि क्षमः ॥**' इत्युक्ते रघुवंशप्रणेतुः कालिदासादर्वाचीनः । एवं '**उदगात् कठकालापं प्रत्यष्ठात् कठकौथुमम् ।**' इति **रावण**।र्जुनीयकाव्यस्थपद्यार्धस्य '**अनुवादे चरणानाम्**' इति सूत्रभाष्ये उदाहरणाद् भौमककवेरप्यर्वाचीनत्वं भाष्यकर्तुरवगम्यते ।

---

१ 'अयं च श्लोको धारेश्वरभोजराजनिर्मितशब्दानुशासनस्थो भवेत्, एतदर्थस्यैव तदीययोगसूत्रवृत्तिमङ्गलश्लोकेनोपमया सूचितत्वात् ॥

२ "सौवीराः सैन्धवा हूणाः शाल्वाः शाकलवासिनः । मद्रारामास्तथाम्बष्ठाः पारसीकादयस्तथा ॥ १७ ॥"

इति विष्णुपुराणे द्वितीयेंऽशे तृतीयेऽध्याये,

"असृजत् पह्लवान् पुच्छात् प्रस्रावाद् द्राविडाञ्छकान् । योनिदेशाच्च यवनान् शकृतः शबरान् बहून् ॥ ३५ ॥
मूत्रतश्चासृजत् काञ्चीञ्शरभांश्चैव पार्श्वतः । पौण्ड्रान् किरातान् यवनान् सिंहलान् बर्बरान् खशान् ॥ ३६ ॥
चिबुकांश्च पुलिन्दांश्च चीनान् हूणान् सकेरलान् । ससर्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि ॥ ३७ ॥"

इति श्रीमन्महाभारते आदिपर्वणि १७७ अध्याये,

"उत्तराश्चापरे म्लेच्छाः क्रूरा भरतसत्तम । यवनाश्चीनकाम्भोजा दारुणा म्लेच्छजातयः ॥ ६५ ॥
सकृद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह । तथैव रमणाश्चीनास्तथैव दशमालिकाः ॥ ६६ ॥

इति श्रीमन्महाभारते भीष्मपर्वणि नवमे भारतवर्षनिरूपणाध्याये च वर्णनात्प्राचीनत्वमेव हूणानामिति नैव हूणपदप्रयोगाद्ध्रुवंशस्यार्वाचीनत्वमिति ॥

"भाष्यकृता पद्यगन्धिगद्यस्यैवोदाहृतत्वेन पद्यगन्धितयैव तस्य समस्यात्वमङ्गीकृत्य समस्यापूर्तिरेव कविभिः कृता भवेद् इति नार्वाचीनस्व-संभावनेति" शिष्टशिरोमणयः ॥

भविष्यपुराणे तु प्रतिसर्गपर्वणि कलियुगीयेतिहाससमुच्चये—

"आसीत्पुरा कलियुगे **पितृशर्मा** द्विजोत्तमः । वेदवेदाङ्गतत्त्वज्ञो यमलोकभयान्वितः ॥ ३०।४ ॥
सुता या **विष्णुयश**सो ब्राह्मणस्य तदा स्वयम् । तामुद्वाह्य द्विजो देवीं नाम्ना वै ब्रह्मचारिणीम् ॥ ३०।१६ ॥
प्रियायै स रजोवत्यै ऋतुदानं करोति हि । चत्वारश्चात्मजाश्चासंश्चतुर्वेदै(क)क्यधारिणः ॥ ३०।१८ ॥
ऋचस्तु तनयो **व्याडि**र्न्यायशास्त्रविशारदः । यजुषस्तु सुतो जातो **मीमांसो** लोकविश्रुतः ॥ ३०।१९ ॥
**पाणिनिः** सामनस्यैव सुतोऽभूच्छन्दपारगः । पुत्रो **वररुचिः** श्रेष्ठोऽथर्वणस्य नृपप्रियः ॥ ३०।२० ॥
ते गता मागधेशस्य **चन्द्रगुप्तस्य** वै सभाम् । नृपस्तान् पूजयामास बहुमानपुरःसरैः ॥ ३०।२१ ॥
**सामनस्य** सुतः श्रेष्ठः **पाणिनि**र्नाम विश्रुतः । **काणभूति**प्रशिष्यैश्च **शास्त्र**ज्ञैः स पराजितः ॥ ३१।२ ॥
लज्जितः **पाणिनिस्तत्र** गतस्तीर्थान्तरं प्रति । स्नात्वा सर्वाणि तीर्थानि संतर्प्य पितृदेवताः ॥ ३१।३ ॥
केदारमुदकं पीत्वा शिवध्यानपरोऽभवत् । पर्णाशी सप्त दिवसाञ्जलभक्षस्ततोऽभवत् ॥ ३१।४ ॥
ततो दशदिनान्ते स वायुभक्षो दशाहनि । अष्टाविंशे दिने रुद्रो वरं ब्रूहि वचोऽब्रवीत् ॥ ३१।५ ॥
इति श्रुत्वा महादेवः सूत्राणि प्रददौ मुदा । सर्ववर्णमयान्येव **अइउणादि**शुभानि वै ॥ ३१।१० ॥
इत्युक्त्वाऽन्तर्दधे रुद्रः **पाणिनिः** स्वगृहं ययौ । सूत्रपाठं धातुपाठं गणपाठं तथैव च ॥ ३१।१३ ॥
लिङ्गसूत्रं तथा कृत्वा परं निर्वाणमाप्तवान् ॥ ३१ शेऽध्याये १४ ॥
चित्रकूटे गिरौ रम्ये नानाधातुविचित्रिते । तत्रावसन्महाप्राज्ञ उपाध्यायः **पतञ्जलिः** ॥ ३५।३ ॥
काश्यां **कात्यायनेनैव** तस्य वादो महानभूत् । वर्षान्ते च तदा विप्रो महाशक्तेन निर्जितः ॥ ३६।३ ॥
लज्जितः स तु धर्मात्मा स तुष्टाव सरस्वतीम् ॥ ३६।४
**कात्यायनं** पराजित्य परां मुदमवाप्तवान् ।...... **महाभाष्यमु**दैरयत् ॥ ३६।१२ ॥"

इत्येवं समुपलभ्यते मुनीनां दीर्घायुष्ट्वेन नन्द-चन्द्रगुप्त-पुष्पमित्रराज्यद्रष्टत्वे का बाधा ॥ व्याडि-पाणिनि-**वररुचीनां भ्रातृत्वं** कल्पान्तराभिप्रायेण भवेत् ॥

# महाभाष्यप्रदीपनिर्माता कैयटः ।

तस्यैतस्य **महाभाष्यस्य** व्याख्यासु मूर्धन्यतमा हरिनिर्मित व्याख्यानुसारिणी **जैयटात्मजकैयट**विरचिता **प्रदीपा**ख्या व्याख्या सर्वसंमताऽस्ति ॥

तस्यैतस्य **जैयटा**त्मजेन **महेश्वरा**न्तेवासिना **कैयटेन** विरचितस्य महाभाष्यप्रदीपस्य व्याख्यासु मध्ये **शिवभट्ट**सुतेन **सतीदेवी**गर्भजेन **हरिदीक्षिता**न्तेवासिना शृङ्गवेरपुराधीशरामतो लब्धजीविकेन **पायगुण्डो**पाख्य**वैद्यनाथस्य**

१ तासां व्याख्यानां व्याख्याकर्तॄणां च नामान्येतावत्कालपर्यन्तमेतावन्त्येव कॅटलॉगस् कॅटलोगोरम् नामके ग्रन्थे थिऑडोर ऑफ्रेच महाशयेन प्रकाशितानि

| व्याख्यानाम | रचयितृनाम |
|---|---|
| शब्दबृहती | |
| **महाभाष्यप्रदीपः** | कैयटरचितः |
| प्रकाशः | नारायणशेषः |
| सूक्तिरत्नाकरः | नारायणशेषः कृष्णात्मजः |
| ,, | नृसिंहः जीवदेवात्मजः |
| महाभाष्यादर्शः | लक्ष्मणः मुरारिसूनुः |
| महाभाष्यसिद्धान्तरत्नप्रकाशः | शिवरामेन्द्रसरस्वती |
| महाभाष्यगूढार्थदीपिनी | सदाशिवः |
| महाभाष्यत्रिपदीव्याख्यानम् | भर्तृहरिः |
| महाभाष्यदीपिका | भर्तृहरिः |

२ अस्य हरेः=भर्तृहरेः समयः **श्रीपाद कृष्ण बेल्वलकर, एम्. ए. पीएच्. डी.** महाशयेनाष्टमी वैक्रमी शताब्दी ( ६५० इसवी ) निर्दिष्टः ॥

३ अस्य कैयटस्य विषये बेल्वलकरमहाशयेन बम्बईमुद्रिताया वामनाचार्यकृतकाव्यप्रकाशव्याख्याया भूमिकायां भीमसेनीय-**सुधासागर**नामक ( वैक्रमसंवत् १७७९=१७२२ इसवी निर्मित ) काव्यप्रकाशव्याख्याश्लोकेषु—

श्रीमान् **कैयट औव्वटो** ह्यवरजो यच्छात्रतामागतो
भाष्याब्धिं निगमं यथाक्रममनुव्याख्याय सिद्धिं गतः ॥

इत्यस्य श्लोकस्यानुसारेण **मम्मटा**नुजत्वं प्रकाशयता वैक्रमी द्वादशी शताब्दी कैयटसत्ताकाल इति प्रकाशितम् ॥ तत्र शुक्लयजुर्वेदसंहिता–शौनकीय–ऋक्प्रातिशाख्य–कात्यायनीयशुक्लयजुर्वेदप्रातिशाख्यभाष्येषु मम्मट–जैयट–कैयटानाम् एकस्यापि नामानुपलम्भात् । **'आनन्दपुरवास्तव्यभट्टवज्रटसूनुना'** इत्येवमेव उव्वटेन वर्णितत्वाच्च औव्वटस्य जैयटपुत्रत्वे मानाभाव एव । दत्तकपुत्रत्वकल्पनाया अपि विना मूलं प्रामाणिकत्वाभावात् । कैयट–मम्मटाभ्यामपि अन्यतमस्य नाम्नोऽप्यनुल्लेखात्परस्परपरिचयस्याप्यनुगमाभावस्यैव वक्तुं योग्यत्वाच्च ॥ त्रयाणामपि पण्डितप्रकाण्डानां परस्परं नामालेखने कारणं खल्पान्तरसमयोत्पन्नत्वं भिन्नभिन्नदेशप्रभवत्वमेव कल्पनीयम् ॥ वेदव्याख्यातुरुव्वटस्य **'भोजे राज्यं प्रशासति'** इति लेखेन भोजसमानकालिकत्वे ज्ञातेऽपि मम्मटकैयटयोः समयो नैव निश्चितः ॥

काव्यमालानवमगुच्छकमुद्रित–श्रीमदानन्दवर्धनाचार्यविरचितदेवीशतकव्याख्याता **कैय्यटस्तु चन्द्रादित्यपुत्रः भीमगुप्त**नरपतिराज्ये ४०७८ मितेषु कलिगताब्देषु ( ९७८ खिष्टाब्दे ) संबभूवेति काव्यमालापुस्तकतोऽवसेयम् ॥

४ तासां व्याख्यानाम् तत्कर्तॄणां च नामानि कॅटलॉगस् कॅटलोगोरम् ग्रन्थे थिऑडोर ऑफ्रेच्महोदयेन प्रकाशितानि दर्शयामि—

अनन्तभट्टनिर्मितम्=महाभाष्यप्रदीपविवरणम्,
ईश्वरानन्दविरचितं प्रदीपविवरणम्,
नारायणनिर्मितं प्रदीपविवरणम्,
नागेशविरचितः **प्रदीपोद्द्योतः**,
हरिरामरचिता महाभाष्यप्रदीपटीका ॥

५ अयं च **हरिदीक्षितो भट्टोजिदीक्षित**पौत्रो **वीरेश्वरपुत्रो रामाश्रम**शिष्यो **नागेश**गुरुरस्ति । एतन्निर्मिता ग्रन्थास्तु—

परिभाषाटीका,
परिभाषोपस्कारः,
भावार्थप्रकाशिका,
शब्दरत्नम्,
शब्दसिद्धिः
सिद्धान्तकौमुदीटीका ॥

६ अयं च **वैद्यनाथः पायगुण्डो**पाख्य**महादेव**सुतो **वेणी**गर्भजो **नागेश**शिष्यो **मन्नुदेव**गुरुरस्ति ॥ एतन्निर्मिता ग्रन्थास्तु—

अर्थसंग्रहः,
कलामञ्जूषाव्याख्या
काशिका परिभाषेन्दुव्याख्या
गदा ,,
चिदस्थिमाला लघुशब्देन्दुव्याख्या
छाया ( भाष्यप्रदीपोद्द्योतव्याख्या )
परिभाषेन्दुशेखरसंग्रहः,

मणिरामप्रपितामहगङ्गारामस्य च गुरुणा नागेशभट्टेन विरचितो महाभाष्यप्रदीपोद्योत एव शिखामणीयते ॥

भक्तितरङ्गिणी,
प्रभा शब्दकौस्तुभटीका
भावप्रकाशः श. र. टी.
भूषण,
रप्रत्याहारखण्डन,
विवरण ( बृ. मं. टी. )
वृद्धशब्दरत्नशेखरः,
सर्वमङ्गला,
हरिलोचनचन्द्रिका चन्द्रालोकव्याख्या ।

१ एतद्रचिता ग्रन्थास्त्वेते—

अलंकारसुधा कुवलयानन्दव्याख्या,
अष्टाध्यायीपाठः
आचारेन्दुशेखरः
आशौचनिर्णयः.
इष्टिकालनिर्णयः,
कात्यायनीतन्त्रम्—
काव्यप्रदीपोद्योतः.
गुरुमर्मप्रकाशः रसगङ्गाधरव्याख्या.
चण्डीपाठटीका.
चण्डीस्तोत्रप्रयोगविधिः.
तर्कभाषाटीका=युक्तिमुक्तावली,
तात्पर्यदीपिका.
तिङन्तसंग्रहः.
तिथीन्दुशेखरः.
तीर्थेन्दुशेखरः.
त्रिस्थलीसेतुः
धातुपाठवृत्तिः
णेरणिवादार्थः
पदार्थदीपिका.
परमलघुमञ्जषा
परिभाषेन्दुशेखरः[1]
पातञ्जलसूत्रवृत्तिः.
पातञ्जलसूत्रवृत्तिभाष्यच्छायाव्याख्या.
प्रभाकरचन्द्र–तत्त्वदीपिका.
प्रयोगसरणिः
प्रायश्चित्तेन्दुशेखरसारसंग्रह.
महाभाष्यप्रदीपोद्योतः
रसतरङ्गिणीटीका
रसमञ्जरीप्रकाशः
रामायणटीका
लक्षणरत्नमाला ध.
विषमपदी=शब्दकौस्तुभटीका.
वेदसूक्तभाष्यम्
वैयाकरणकारिका.
वैयाकरणभूषणं ( ? )
वैयाकरणसिद्धान्तमञ्जषा[2] बृहती लघ्वी च
व्याससूत्रेन्दुशेखरः
शब्दरत्नम्
शब्दानन्तसागरसमुच्चयसुप्तिङन्तसागरसमुच्चयः
शब्देन्दुशेखरौ
लघुसांख्यसूत्रवृत्तिः
सापिण्डीमञ्जरी
स्फोटवादः ॥

1 अस्य परिभाषेन्दुशेखरस्य व्याख्याः कॅटलॉगस् कॅटलोगोरम् ग्रन्थे प्रकाशिताः—

| | |
|---|---|
| विषमी | चिद्रूपशर्मा |
| | दुर्बलाचार्यः |
| चित्प्रभा | ब्रह्मानन्दसरस्वती |
| परिभाषार्थमञ्जरी | भीमभट्टो माधवात्मजः |
| | भैरवमिश्रः |
| त्रिपथगा | राघवेन्द्राचार्यः |
| दोषोद्धारः | मन्यु(न्न)देवः |
| काशिका | वैद्यनाथपायगुण्डः |
| गदा | ,, |
| | लालविहारिशर्मा |
| | शंकरभट्टः |
| सर्वमङ्गला | शेषशर्मा |
| | हरिरामः |
| अम्बाकर्त्री | |
| वाक्यार्थचन्द्रिका | हरिशास्त्री |
| भूतिः | तात्या(रामकृष्ण)शास्त्री |
| विभूतिः | शिवदत्तदाधिमथः |
| जया | जयदेवमिश्रः ॥ |

2 वैयाकरणसिद्धान्तमञ्जूषाया व्याख्याः कॅटलॉगस् कॅटलोगोरम् ग्रन्थे निर्दिष्टाः—

| | |
|---|---|
| कला | वैद्यनाथपायगुण्डः |
| कुञ्चिका | कृष्णमित्रः |
| ,, | दुर्बलाचार्यः |
| | राजारामदीक्षितः |
| | हरिरामः |
| टिप्पणी | रामनाथः |
| बृ. म. विवरण | वैद्यनाथपायगुण्डः ॥ |

तदेवं **वामन-जयादित्याभ्यां** वृत्ति-महाभाष्य-**नाम-पारायण-जुसरनन्दि**-**उज्ज्वलदत्त**[2]-**सायणमाधवराय-मुकुट**सुगृहीतनामधेय**पूर्णचन्द्र**निर्मित**धातुपारायणा**दिविप्रकीर्णार्थसंग्रहरूपा **काशिका** नाम नूतना वृत्तिर्विरचिता ॥ ततश्च **धारा**नगराधीश्वर-**भोजदेवेन** भूयसो ग्रन्थान्निर्मात्रा **शब्दानुशासनं** विरचितम् ॥

१ एतयोः=वामन-जयादित्ययोः समयः वैक्रमे ७०७=(६५० इ. स.) संवत्सरो वेल्वलकरमहाशयेन निर्णीतः ॥

२ उज्ज्वलदत्तस्य समयो वैक्रमसंवत्सरः १३०७=१२५० इ. स. वेल्वलकरेण निर्णीतः ॥

३ तस्याश्चैतस्याः वृत्तेर्व्याख्याः कॅटलॉगस कॅटलॉगोरम् ग्रन्थे—

चिकित्सा

तत्त्वविमर्शिनी **उपमन्युनिर्मिता** ॥

पञ्जिका न्यासापरनामधेया[1] **जिनेन्द्रबुद्ध**विरचिता

पदमञ्जरी **हरदत्त**[2]निर्मिता ॥

**न्यासस्य** व्याख्या—

तन्त्रप्रदीप **मैत्रेयरक्षित**रचितः

न्यासोद्योतः **मल्लिनाथ**निर्मितः ॥

**पदमञ्जर्या** व्याख्या—

कुङ्कुमविकासः **शिवभट्ट**विनिर्मितः

मकरन्दः **रघुनाथ**रचितः ॥

४ अयं च **श्रीभोजदेवो वैक्रम्याम् एकादशशताब्द्यां** समभूदिति काव्यमालान्तर्गतप्राचीनलेखमालायां द्वितीयलेखतः संप्रतीयते । अतः स लेखः प्रदर्श्यते—

जयति व्योमकेशोऽसौ यः सर्गाय बिभर्ति ताम् ।
ऐन्दवीं शिरसा लेखां जगद्बीजांकुराकृतिम् ।
तन्वन्तु वः स्मरारातेः कल्याणमनिशं जटाः ।
कल्पान्तसमयोद्दामतडिद्वलयपिङ्गलाः ॥

परमभट्टारकमहाराजाधिराजपरमेश्वर **श्रीकृष्णराजदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वर **श्रीवैरिसिंहदेव**पादानुध्यात-] परमभट्टारकमहाराजाधिराजपरमेश्वर **श्रीसीयकदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वर **श्रीवाक्पतिराजदेव**पादानुध्यात-परमभट्टारकमहाराजाधिराजपरमेश्वर **श्रीसिन्धुराजदेव**पादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वर-**श्रीभोजदेवः** कुशली नागह्रदपश्चिमपथकान्तःपाति-**वीराणके** समुपगतान् समस्तराजपुरुषान् ब्राह्मणोत्तरान् प्रतिनिवासिपट्टकिलजनपदादींश्च समादिशति । अस्तु वः संविदितम्-यथाऽतीताष्टसप्तत्यधिकसाहस्रिक १०७८ संवत्सरे माघासिततृतीयायां रवावुदगयनपर्वणि कल्पितहलानां लेख्ये **श्रीमद्धारायाम्** अवस्थितैरस्माभिः स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिं समभ्यर्च्य संसारस्यासारतां दृष्ट्वा—

वाताभ्रविभ्रममिदं वसुधाधिपत्य-
मापातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥
भ्रमत्संसारचक्राग्रधाराधारामिमां श्रियम् ।
प्राप्य ये न ददुस्तेषां पश्चात्तापः परं फलम् ॥

इति जगतो विनश्वरस्य स्वरूपमाकलय्योपरिलिखितग्रामः स्वसीमातृणागोचरपूति(त)पर्यन्तः सहिरण्यभागभोगः सपरिकरः सर्वादायसमेतः ब्राह्मण**धनपतिभट्टाय** भट्ट**गोविन्द**सुताय बह्वृचाश्वलायनशाखाय त्रिप्रवराय वैछवल्लप्रतिबद्धश्रीवादाविनिर्गतसधसुरसङ्ककर्णोदाय मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये अदृष्टफलमङ्गीकृत्य आचन्द्रार्कार्णवक्षितिसमकालं यावत् परया भक्त्या शासनेनोदकपूर्वं प्रतिपादित इति मत्वा यथादीयमानभागभोगकरहिरण्यादिकमाज्ञाश्रवणविधेयैर्भूत्वा सर्वमस्मै समुपनेतव्यम् ।

सामान्यं चैतत् पुण्यफलं बुद्ध्वाऽस्मद्वंशजैः, अन्यैरपि भाविभोक्तृभिरस्मत्प्रदत्तधर्मादायोऽयमनुमन्तव्यः पालनीयश्च ॥ उक्तं च—

बहुभिर्वसुधा दत्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
अस्मत्कुलक्रममुदारमुदाहरद्भि-
रन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिलबुद्बुदचञ्चलाया
दानं फलं परयशःपरिपालनं च ॥

सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते **रामभद्रः** ।
सामान्योऽयं धर्मसेतुर्नराणां काले काले पालनीयो भवद्भिः ॥
इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
सकलमिदमुदाहृतं च बुद्ध्वा नहि पुरुषैः परकीर्तयो विलोप्याः ॥
इति ॥ संवत् १०७८ चैत्र सुदि १४ स्वयमाज्ञामङ्गलं महाश्रीः ॥
स्वहस्तोऽयं **श्रीभोजदेवस्य** ॥

५ ते च ग्रन्थाः—

आदित्यप्रतापसिद्धान्तः=(ज्यौ.)
आयुर्वेदसर्वस्व (वैद्य.)
चम्पूरामायण
चाणक्यनीति (?)
चारुचर्या (धर्म)

1 अस्य समयो वेल्वलकरेणाष्टमी खैष्टशताब्दी निर्णीता ॥

2 अस्य हरदत्तस्य समयो वेल्वलकरेण द्वादशी खैष्टशताब्दी निर्णीता ॥

ततश्च श्रीविष्णुसर्वज्ञ-शङ्करानन्दशिष्यो **रामकृष्णस्य** गुरुः सायणगोत्रः, **मायण**पुत्रो माधवः विद्यानगरीय (विजयनगरीय) बुक्कस्य तदुत्तराधिकारि**हरिहरस्य** चामात्यतायां चकार कारयामास च पण्डितप्रकाण्डैर्ग्रन्थान् ॥

तत्त्वप्रकाश (शैव)
नाममालिका
युक्तिकल्पतरु
राजमार्तण्डः (यो. सू. वृ.)
(वेदान्त)
(ज्यौति.)
राजमृगाङ्कः (ज्यौति.)
(वैद्य.)
विद्याविनोद (काव्य.)
विद्वज्जनविनोद (प्र. ज्यौ.)
विश्रान्तविद्याविनोद (वैद्य.)
व्यवहारसमुच्चय (धर्म.)
**शब्दानुशासनम्**
शालिहोत्र (अश्ववै.)
शिवसत्त्वरत्नकालिका
समराङ्गणसूत्रधार
सरस्वतीकण्ठाभरण (अलं.)
सिद्धान्तसंग्रह (शैव.)
सुभाषितप्रबन्ध

इत्येवं कॅटलोगस् कॅटलोगोरम् प्रकाशिताः समुपलभ्यन्ते ॥

१ इत्थं हि **बुक्क-माधवयोः** समयः प्राचीनलेखमालातः प्रत्येयः—

बुक्कमहीपतिः
भार्या **मङ्गाम्बा**
|
**संगम**महीपति
जाया **मालाम्बा**
|
**हरिहरः** (इ. स. १३३६–१३५०) | कम्प. | **वीरबुक्करायः** गौराम्बिका कामाक्षी च भार्ये (इ. स. १३५०–१३७९) | **मारपः** | **मुद्गपः**

कम्प. — **संगमः**
**माधवार्य** सहोदरः
**सायणार्योऽस्य विजयनगरे** मन्त्री गुरुश्च । **माधवाचार्योऽस्य** मन्त्री गुरुश्च ।
**हर(रि)हरः**=कामाक्षीपुत्र इत्यन्ये ।
(इ. स. १३९६).
|
**प्रतापदेवरायः ।**
**हेमाम्बिकास्य** पत्नी
|
**विजयभूपतिः ।**
(इ. स. १४१६)

२ बहुभिः पण्डितप्रकाण्डैर्जीविकालोभेन ग्रन्थान् निर्माय माधवीयत्वेन ख्यातिं नीताः । यथा हि—

'तेन **मायणपुत्रेण सायणेन** मनीषिणा ।
आख्यया **माधवीयेयं** धातुवृत्तिर्विरच्यते ॥'
'तत्कटाक्षेण तद्रूपं दधद् **बुक्क**महीपतिः ।
आदिशन्**माधवाचार्यं** वेदार्थस्य **प्रकाशने** ॥
स प्राह नृपतिं राजन् **सायणार्यो** ममानुजः ।
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम् ॥
इत्युक्तो **माधवार्येण** वीर**बुक्क**महीपतिः ॥
अन्वशात् **सायणाचार्यं** वेदार्थस्य **प्रकाशने** ॥'

**अद्भुतदर्पण**
अधिकरणमाला (पू. मी.)
अनुभूतिप्रकाश
अपरोक्षानुभूति
अभिनवमाधवीय (धर्म)
अष्टकटीका
आचारमाधवीय
आत्मानात्मविवेक
आधानयज्ञतन्त्र
आर्षेय ब्राह्मणभाष्य
आशीर्वादपद्धतिः
आश्वलायनदर्शपूर्णमाससूत्रभाष्य
उपग्रन्थसूत्रवृत्ति
ऋग्वेदभाष्य
ऐतरेयारण्यकभाष्य
ऐतरेयोपनिषद्भाष्य
कर्मकालनिर्णय
कर्मविवेक
कल्पभाष्य
काठकभाष्य
कालनिर्णय
कुरुक्षेत्रमाहात्म्य (?)
कृष्णचरणपरिचयवृत्ति

कैवल्योपनिषद्भाष्य
कौषीतकीयोपनिषद्भाष्य
गोत्रप्रवरनिर्णय
गोभिलगृह्यसूत्रभाष्य (?)
चरणव्यूहभाष्य (?)
छान्दोग्योपनिषद्दीपिका
जातिविवेकशतप्रश्न
जीवन्मुक्तिविवेक
जैमिनीयन्यायमालाविस्तार
ज्ञानखण्डभाष्य
णत्वभेद
ताण्ड्यब्राह्मणभाष्य
तिथिनिर्णय
तैत्तिरीय(विद्या)प्रकाशवार्तिक
तैत्तिरीयब्राह्मणभाष्य
–संध्याभाष्य
–संहिताभाष्य
तैत्तिरीयारण्यकभाष्य
तैत्तिरीयोपनिषद्भाष्य
त्र्यम्बकभाष्य
दक्षिणामूर्त्यष्टकटीका
दत्तकमीमांसा
दर्शपूर्णमासप्रयोग
भाष्य
यज्ञतत्र
दशोपनिषद्भाष्य
देवताध्यायभाष्य
देवीभागवतस्थिति
धातुवृत्तिः
पञ्चदशी
पञ्चरुद्रीयटीका
पञ्चशर्वव्याख्या
पञ्चीकरण
पराशरस्मृतिव्याख्या
पाणिनीयशिक्षाभाष्य
पुराणसार
पुरुषसूक्तटीका
पुरुषार्थसुधानिधि
प्रमेयसारसंग्रह
बृहदारण्यकभाष्य
बौधायनश्रौतसूत्रव्याख्या.
ब्रह्मगीताटीका
भगवद्गीताभाष्य.

मण्डलब्राह्मणभाष्य.
मन्त्रप्रश्नभाष्य.
महावाक्यनिर्णय.
माधवीय. ( धर्म. )
माधवीयभाष्यं ( वेदान्त )
मुक्तिखण्डटीका.
मुहूर्तमाधवीय.
यजुर्वेदब्राह्मणभाष्य.
यज्ञतन्त्रसुधानिधि.
यज्ञवैभवखण्डटीका
याज्ञिक्युपनिषद्भाष्य.
योगवासिष्ठसारसंग्रह.
रात्रिसूक्तभाष्य.
रामतत्त्वप्रकाश.
रुद्रभाष्य.
लघुजातकटीका.
व्यवहारमाधव.
व्याख्या ( वेदान्त )
व्यासदर्शनप्रकार.
शंकरविलास.
शतपथब्राह्मणभाष्य.
शतरुद्रीयभाष्य.
शिवखण्डभाष्य.
शिवमाहात्म्यभाष्य.
श्रीसूक्तभाष्य.
श्वेताश्वतरोपनिषत्प्रकाशिका.
षड्विंशब्राह्मणभाष्य.
संध्याभाष्य.
सरस्वतीसूक्तभाष्य.
सर्वदर्शनसंग्रह.
सहस्रनामवार्तिक.
सामब्राह्मणभाष्य.
सामविधानब्राह्मणभाष्य.
सामवेदभाष्य.
सिंहानुवाकभाष्य.
सिद्धान्तबिन्दु (?)
सूतसंहितातात्पर्यदीपिका.
सूर्यसिद्धान्तटीका.
स्तोमभाष्य.
स्मृतिसंग्रह.
स्वरविग्रहशिक्षाभाष्य.
स्वाध्यायब्राह्मणभाष्य.
हरिस्तुतिटीका.

ततः काशिकावृत्तेरतिविस्तृतत्वेन च्छात्राणां दुरवधेयत्वमवलोक्य च्छात्राणामुपकाराय **अनन्ताचार्य**त्मज-**नरहरि**-सूनु-**कृष्ण**सूनुना **नृसिंह**जनकेन **विठ्ठल**पितामहेन **लक्ष्मीधर**प्रपितामहेन **अनन्त**प्रपितामहेन **गोपाल**शिष्येण **रामचन्द्राचार्येण प्रक्रियाकौमुदी** विरचिता ॥

१ अस्याः प्रक्रियाकौमुद्याः समयो बेल्वलकरेण पञ्चदशी खैष्टशताब्दी निर्णीता ॥

तस्याश्चैतस्या व्याख्याः—

अमृतसृतिः **वारणवनेश**शास्त्रिरचिता

तत्त्वचन्द्रो **मधुसूदननन्दनजयन्त**निर्मितः

प्रकाशः नरसिंहात्मज-**शेषकृष्ण**रचितः

प्रक्रियाञ्जनम्, **विद्यानाथ**दीक्षितविनिर्मितम्।

प्रसादः ग्रन्थकर्तृपौत्र**विठ्ठल**रचितः

सत्प्रक्रियाव्याकृतिः **विश्वकर्म**शास्त्रिरचिता ॥

२ अनेन सप्तदशखैष्टशताब्दीजनुषा **रङ्गोजिभट्टेन.—**

अद्वैतचिन्तामणि.

,, शास्त्रसारोद्धार.

पदार्थदीपिका.

ग्रन्था निर्मिताः ॥

३ अनेन **भानुजीदीक्षितेन.—**

व्याख्यासुधा ( अमरकोशव्याख्या ) रचिता ॥

४ अनेन **भट्टोजिदीक्षितात्मजवीरेश्वरात्मजेन रामाश्रम**-शिष्येण **नागेशभट्टगुरुणा हरिदीक्षितेन.—**

परिभाषाटीका.

परिभाषोपस्कार.

फिट्सूत्रव्याख्या.

भावार्थप्रकाशिका.

शब्दरत्न(मनोरमाव्याख्या)

1 अस्याः प्रकाशव्याख्यायाः समयो बेल्वलकरेण सप्तदशी खैष्टशताब्दी निर्दिष्टा ॥

2 अस्याः प्रसादव्याख्यायाः समयो बेल्वलकरेण षोडशी खैष्टशताब्दी निर्दिष्टा ॥

3 अस्य भूषणस्य व्याख्याः—कॅटलोगस् कॅटलोगोरम् प्रकाशिताः—

| | |
|---|---|
| | कृष्णमित्रकृता, |
| | गोपालदेवकृता, |
| | रामनाथकृता, |
| | रुद्रदेवकृता, |

ततश्च काशिकावृत्तौ धातुपाठस्य उणादिपाठस्य फिट्स्वरपाठस्य लिङ्गानुशासनस्य च विरहेण व्याकरणसाहित्यस्यैकेनैव ग्रन्थेन छात्राणां ज्ञानसंपत्तये **लक्ष्मीधर**सूनुना **रङ्गोजिभट्ट**सहोदरेण **भानुजी**दीक्षितस्य **वीरेश्वरस्य** च जनकेन **हरिदीक्षित**स्य पितामहेन **कौण्डभट्टस्य** पितृव्येन **भट्टोजिभट्टे**(दीक्षिते)न सकलाष्टाध्याय्या अष्टाध्यायीक्रमेण व्याख्या-

शब्दसिद्धि

सिद्धान्तकौमुदीटीका.

ग्रन्था निर्मिताः ॥

५ अनेन सप्तदशखैष्टशताब्दीजनुषा **कौण्डभट्टेन.—**

तर्कप्रदीपः

,, रत्नम्.

वैयाकरणभूषणम्.

,, सारः

लघुवैयाकरणभूषणसारः

सिद्धान्तदीपिका.

स्फोटवादः

ग्रन्था निर्मिताः

६ अनेन सप्तदशखैष्टशताब्दीजनुषा **भट्टोजिभट्टेन.—**

अद्वैतकौस्तुभः

आचारप्रदीपः

आशौचनिर्णयः

आह्निकम्.

कारिका.

कालनिर्णयसंग्रहः

गोत्रप्रवरनिर्णयः

चतुर्विंशतिमुनिवरव्याख्या.

चन्दनधारणविधिः

तत्त्वकौस्तुभः

तत्त्वविवेकदीपनव्याख्या.

| | |
|---|---|
| मतोन्मज्जनी, | वनमालिमिश्रकृता, |
| काशिका, | हरिरामकृता, |
| दर्पणः | हरिवल्लभकृतः ॥ |

4 वैयाकरणसिद्धान्तभूषणसारस्य व्याख्याः—कॅटलोगस कॅटलोगोरम् ग्रन्थे निर्दिष्टाः—

| | |
|---|---|
| कान्तिः | गोपालदेवकृता |
| परीक्षा | भैरवमिश्रकृता |
| | रुद्रनाथकृता |
| काशिका | हरिरामदीक्षितकृता |
| दर्पणः | हरिवल्लभविरचितः |
| दर्पणमार्जनटिप्पणी | शिवदत्तदाधिमथकृता ॥ |

**शब्दकौस्तुभ**[1]**नामा** तत्सारभूता **वैयाकरणसिद्धान्तकौमुदी**[2] तद्व्याख्यानभूता **प्रौढमनोरमा** च निरमायिषत ॥

तत्रसिद्धान्तदीपिका.
तन्त्राधिकारनिर्णयः
तर्कामृतम्
तिथिनिर्णयः
तिथिनिर्णयसंक्षेपः
तिथिप्रदीपः
तीर्थयात्राविधिः
त्रिस्थलीसेतुसारसंग्रहः
दशश्लोकीव्याख्या.
धातुपाठनिर्णयः
प्रायश्चित्तविनिर्णय.
प्रौढमनोरमा.
बालमनोरमा.
भट्टोजिभट्टीय(ध.)
मासनिर्णय.
लिङ्गानुशासनसूत्रवृत्ति.
शब्दकौस्तुभ.
श्राद्धकाण्ड.
संध्याभाष्य.
सिद्धान्तकौमुदी.
एते ग्रन्था निर्मिताः ॥

७ अत एव—

**'इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शितम्।**
**विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥'**

इति सिद्धान्तकौमुदीकृदन्तसमाप्तौ,

**'फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।**
**तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥'**

इति भूषणकारिकायाम्।

**'अतो लोपः'** इति सूत्रप्रौढमनोरमायाम् **'विस्तरः शब्दकौस्तुभे** बोध्यः' इत्यस्य व्याख्याने **'कौस्तुभे षाष्ठे'** इति शब्दरत्ने उक्तं संगच्छते ॥

---

१ अस्य समग्राष्टाध्यायीव्याख्यानभूतस्यापि शब्दकौस्तुभस्य प्रथमाध्यायप्रथम[1]पाद एव मिलति नाग्रिमः ॥

२ अस्याः सिद्धान्तकौमुद्या व्याख्याः—

| | |
|---|---|
| तत्त्वबोधिनी | ज्ञानेन्द्रसरस्वतीकृता |
| दाधिमथी | शिवदत्तो दाधिमथः |
| प्रौढ[2]मनोरमा | ग्रन्थकर्तृकृता |
| फक्किकाप्रकाशः | इन्द्रदत्तोपाध्यायकृतः |
| बालबोधः | सारस्वतव्यूढमिश्रकृतः |
| बालमनोरमा | वासुदेवदीक्षितकृता |
| मानसरञ्जिनी | वल्लभकृता |
| रत्नाकरः[3] | रामकृष्णकृतः |
| ,, | शिवरामेन्द्रसरस्वतीकृतः |
| रत्नार्णवः | कृष्णमित्रकृतः |

---

1 उपलब्धप्रथमपादस्य टीकास्तु— C. C.

| | |
|---|---|
| उद्द्योतः | विद्यानाथशुक्लरचितः |
| प्रभा | राघवेन्द्राचार्यनिर्मिता |
| प्रभा | वैद्यनाथपायगुण्डनिर्मिता |
| भावप्रदीपः | कृष्णमिश्रकृतः |
| विषमपदी | नागेशकृता |
| | कृष्णाचार्यकृता |
| शब्दकौस्तुभदूषणम् | भास्करदीक्षितकृतम् ॥ |

2 अस्याः प्रौढमनोरमाया व्याख्याः— C. C.

| | |
|---|---|
| कल्पलता | कृष्णमित्रकृता |
| कुचमर्दनम् | |
| खण्डनम् | मौनिकृष्णभट्टीय |
| ,, | चक्रपाणिकृतम् |
| ,, | जगन्नाथकृतम् |
| बृहच्छब्दरत्नम्[1] | हरिदीक्षितकृतम् |
| लघुशब्दरत्नम्[2] ॥ | ,, |

3 एतस्य रत्नाकरस्य व्याख्या **प्रदीपः** ॥

---

1 एतस्य बृहच्छब्दरत्नस्य व्याख्या— C. C.

भवदेवमिश्रकृता
व्यासदेवमिश्रकृता ॥

2 एतस्य लघुशब्दरत्नस्य व्याख्या— C. C.

| | |
|---|---|
| भावप्रकाशः | वैद्यनाथपायगुण्डः |
| रत्नप्रकाशिका | भैरवमिश्रकृता |

लघोः शेखरस्य व्याख्यास्तु C. C.

| | |
|---|---|
| वरचन्द्रिका | |
| | उदयंकरः |
| | गोपालदेवः |
| चन्द्रकला | भैरवमिश्रः |
| | मल्लिनाथः |
| चिदस्थिमाला | वैद्यनाथपायगुण्डः ॥ |

ततश्च वैयाकरणसिद्धान्तकौमुद्या दुरवधेयतामवगत्य भट्टोजिभट्टान्तेवासिना दुर्गातनयतनयेन वरदराजेन सारकौमुदी—मध्य¹कौमुदी—लघु²कौमुदी–गीर्वाणपदमञ्जरी–नामानो ग्रन्था निर्मिताः ॥

| | |
|---|---|
| विलासः | भास्कररायकृतः |
| ¹शब्देन्दुशेखरौ | नागेशभट्टकृतौ |
| शब्दसागरः | |
| सरला | |
| | सुधाकरः |
| सुबोधिनी | जयकृष्णकृता |
| सुमनोरमा | तिरुमलकृता |
| | विश्वेश्वरतीर्थकृता ॥ |

1 तत्र बृहतः शेखरस्य व्याख्याः—कॅटलोगस् कॅटलोगोरम् ग्रन्थकृता प्रकाशिताः—

| | |
|---|---|
| चिद्रथी | |
| वृत्तिप्रदीपः | |
| उपन्यासः | |
| ज्योत्स्ना | उदयकरकृता |
| इन्दुप्रकाशः | जगद्धरकृतः |
| दोषोद्धारः | गोपालदेवकृतः |

१ मध्यकौमुदीव्याख्यास्तु—

मध्यमनोरमा

मध्यकौमुदीविलासः

२ लघुकौमुदीव्याख्यास्तु—

| | |
|---|---|
| | जयकृष्णकृता |
| लघुकौमुदीप्रकाशः<br>वैयाकरणसिद्धान्तचन्द्रोदयः | } शिवदत्तदाधिमथकृतः |
| विषमी* | राघवेन्द्राचार्यः |
| | राजारामदीक्षितः |
| | वल्लभः |
| | शंकरः |
| | शेषशास्त्री |
| | सदाशिवभट्टः |
| | हरिरामः ॥ |

* विषमीप्रभृतयो व्याख्या लघोरेव वर्तन्ते उपलभ्यन्ते च, बृहतस्त्वस्माभिरनुपलब्धा अप्यनेन नामसंग्रह C. C. कर्त्रोपलब्धा भवेयुः ॥

एवमनन्तशाखतां गतं पाणिनीयमेतद् व्याकरणं गुरूपासनयैवाविकृतबुद्धित्वसंपादकम् ¹आर्षानार्षभाषाप्रयुक्तशब्दानां शास्त्रान्वितत्वसंपादनेन "एकः शब्दः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति" इति श्रुतिबोधितस्वर्गलोके कामधुक्त्वसंपादकं भवतीति सर्वं कल्याणम् ॥

१ तत्र आर्षपदेन मन्त्रब्राह्मणात्मको वेदो महतो भूतस्य निश्वसितरूपो गृह्यते । अनार्षपदेन वेदभिन्नो वेदतुल्यो महावाक्यरूपवेदघटकपदविभागदर्शकः पदक्रमादिनाम्ना विख्यातो ग्रन्थः समधिगमनीयः ॥ **"न लक्षणेन पदकारा अनुवर्त्याः । पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम्"** इति भाष्यग्रन्थस्य यथाश्रुतार्थाङ्गीकारे तु पदमात्रसंस्कारकसूत्रनिर्माणमेव व्यर्थं स्यात् । **'महो वा छन्दस्यानङोऽवग्रहदर्शनात्'** इत्यादिवार्तिकानां च वैयर्थ्यं स्यात् ॥ तस्माद् 'अनुवर्त्यं' णिजङ्गीकरणीयः । **'यथालक्षणम्'** इत्यस्य च 'ष्णान्ता षट्' इति सूत्रे प्रदीपोक्ता 'नैव वा लक्षणम्—' इति सिद्धान्तभूतैव व्याख्या सर्तव्या, **'प्रयुक्तानां हीदमन्वाख्यानम्'** इति भाष्यस्य संकोचे कारणाभावात् । तथा च पदानुसार्येव लक्षणमुपज्ञातव्यम् । पदपाठश्च गुरुसंप्रदायसिद्ध एव करणीयः इत्येव भाष्यकृतामपि सिद्धान्तः ॥ अत एव 'पृषोदरादीनि–' इति सूत्रस्थभाष्येण न विरोधः ॥ कैयटस्तु भाष्यस्यास्य प्रौढिग्रन्थत्वं मत्वा यथाश्रुतार्थप्रकाश्यानिष्टवारणायाग्रे संप्रदायानुसरणमवश्यमङ्गीकरणीयमिति सिद्धान्तितवान् ॥ भाषापदेन 'स्मृति–पुराण–काव्यादयो ग्राह्याः । तत्र स्मृतिपुराणेषु तु **"छन्दोवत् कवयः कुर्वन्ति"** इति वैदिका अपि शब्दाः प्रयुज्यन्ते इति सर्वमनवद्यम् ॥

इति संध्यापयति—

**शिवदत्तो दाधिमथः ॥**

[ इत्येवं व्याकरणसंसारस्य संक्षेपेण परिचयः श्री म. म. शिवदत्तकृतो विद्यार्थिनामुपयोगायान्यूनाक्षरैरुपन्यस्तः ॥ ]

# पञ्चमावृत्तिप्रस्तावः ।

चराचरगुरोर्भक्तवत्सलस्य **विश्वनाथस्य** भगवतः परमानुग्रहेण व्याकरणमहाभाष्यस्य प्रथमो भागो नवाह्निकाभिधो महता सम्भारेण पुनः सम्पाद्य वाचककरकमलेषु वितीर्यते । इदानीं वितीर्यमाणं नवाह्निकमवलोक्य प्रश्नोऽयं समुदेति यत् भाष्यप्रणयनतः प्राक् का व्याकरणस्य गतिरासीत्, किं मुनित्रयेणैव व्याकरणं प्रवर्तितं, उत ततः प्रागप्यासीत्, उत पूर्वतनव्याकरणानि चन्द्रादिप्रणीतानि प्रामादिकान्यासन्, अतो मुनित्रयेण प्रमादरहितं लोकवेदोभयोपकारकं सुगमोपायेन सम्पादितमित्यादिशङ्काकुलितं चेतः कल्लोलास्फालिते संशयसागरे विघूर्णमानमितः समाश्वासं लभते—'बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालः'। लघुतरं व्याकरणप्रणयनप्रकारं प्रकटयता भाष्यकारेण प्रतिपदपाठोऽपि व्याकरणप्रकार एक उक्तः । ज्ञायतेऽनेन—पूर्वतनैर्ऋषिप्रवरैर्नानाविधानि व्याकरणानि प्रणीतानीति । भगवतः प्रत्यक्षदर्शिनो **वाल्मीकेः**—

'असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुखः प्रष्टुमनाः कपीन्द्रः ।
उद्यद्गिरेरस्तगिरिञ्जगाम ग्रन्थं महद्धारयनप्रमेयः ॥
ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं सिध्यति वै कपीन्द्रः ॥'

इत्यादिवचनैः प्राचीनव्याकरणग्रन्थानामपि सूत्रवृत्तिसंग्रह इत्यादीन्येव नामान्यासन्—इति । 'धाता यथापूर्वमकल्पयत्' इति श्रुतिमनुसरन्तो वैयाकरणाः पाणिन्यादयः सूत्राणि संग्रहादीनि च पूर्वव्याकरणानुबन्धीन्येव प्रकाशितवन्तः । अतः पूर्वं व्याकरणमेव नासीदित्यपि न, स्वकपोलकल्पितं वा किञ्चित्पाणिन्यादिभिः कथ्यत इयमप्याशङ्का नावतरति ॥

पूर्वतनानि व्याकरणानि विहाय किमर्थमेतन्नूतनं विधीयत इत्याशङ्कायां द्विधाऽत्र समाधातुं शक्यते । पस्पशाह्निके भगवता **बृहस्पतिश्च प्रवक्ते**त्यादिना व्याकरणनिर्माणप्रकारमेकमुपपाद्य पूर्वतनेभ्यो व्याकरणेभ्यो व्यावृत्तं पाणिनीयव्याकरणविशेषगुणं प्रख्यापयितुं भाष्ये—'कथं तर्हीमे शब्दाः प्रतिपत्तव्याः' इत्याशङ्क्य 'किञ्चित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम् । येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्' इत्युक्तम् । अस्य विशेषविमर्शने वक्तुं शक्यमेतत् यत्—पाणिनेः पूर्वतनानि व्याकरणानि नैवंभूतानि, किन्तु श्रद्धावद्भिरनसूयद्भिः कर्तव्यमिति बुद्ध्या पठिष्यमाणानि बहुकालव्ययसाध्यानि आसन्निति । तादृशानि च सुकुमारबुद्धीनां दुरवगाहानि—इति व्याकरणागमभ्रंशमाशङ्कता भगवता पाणिनिना सुकुमारबुद्ध्यनुग्रहाय उत्सर्गापवादरूपं लघुभूतमेतद्व्याकरणमाविष्कृतमिति ॥ **अथवा**—वाक्यपदीये भाष्यप्रणयनप्रसङ्गो यादृश उपवर्णितस्तादृश एव व्याकरणप्रणयनप्रसङ्ग इति । तथाहि वाक्यपदीये द्वितीये काण्डे—

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् । सम्प्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना । सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥ ४८५ ॥ इति ।

अत्र चेत्थमाह पुण्यराजः—"इह पुरा पाणिनीयेऽस्मिन् व्याकरणे व्याड्युपरचितं ग्रन्थलक्षपरिमाणं संग्रहाभिधानं निबन्धनमासीत् । तच्च कालवशात् सुकुमारबुद्धीन् वैयाकरणान् प्राप्यास्तमुपागतम् । तस्मात्क्लेशभीरुत्वात्संक्षेपरुचयस्ते जनाः । तैः संग्रहाध्ययन उपेक्षिते सति अस्तं यातः संग्रहः" इति ॥

द्वितीयकाण्डविषयप्रदर्शनवेलायाञ्चेत्थमाह पुण्यराजः—

"अवतारोऽपि भाष्यस्य संग्रहेऽस्तमुपागते ।
निबन्धहेतौ शास्त्रस्य टीकाकारेण कीर्तितः ॥
संग्रहार्थाद्यनुगुणरूपत्वं चोपपादितम् ॥" इति ।

एवञ्च सुकुमारबुद्धीनध्येतॄन् सम्प्राप्य ते ते व्याकरणागमास्तस्मिंस्तस्मिन्नवसरे शनैः शनैरस्तमुपयातास्तैस्तैराचार्यैः पुनः पुनः प्रकृतिमवस्थापितास्तत्तद्रूपाणि भजन्ते । अत एव—इन्द्रचन्द्रादयो व्याकरणकारा बहवः श्रूयन्ते । समयप्राबल्यात् पूर्वव्याकरणेष्वस्तमुपयातेषु साध्वसाधुशब्दविषये विप्लवे समुपजाते पाणिनीयमेतत्प्रवृत्तमिति समुचितमेव समुपपद्यते ॥

## मुनित्रयस्य समानासमानकालिकत्वम्—

**अथ** पाणिनीयव्याकरणे सूत्रवार्तिकभाष्यकारास्त्रय एव ऋषयः प्रमाणमित्ययं सार्वजनीनः सिद्धान्तः । परं त्वेते ऋषयः कदा भूमिमिमामलंकुर्वन्ति स्मेत्येतद्विषये कालगणनापटुभिरन्यैर्भूरि पराक्रान्तं, प्रथमसंस्करणसम्पादकैः शिवदत्तपण्डितैश्च स्वीयोपोद्घाते यथाशक्त्युपवर्णितञ्च । अतस्तद्दिगुपलब्धये शिवदत्तोपोद्घातः साकल्येनात्र संगृहीतः । बहुशो बहुभिर्वर्णितेऽस्मिन्विषये विद्वज्जनानां स्वातन्त्र्यमनिर्बाधं संकल्प्य सूत्रकारवार्तिककारयोः प्रायः समानकालिकत्वं सूत्रभाष्यकारयोश्चासमानकालिकत्वं युक्त्या लोकाचारेण वा यादृशमवभासते तत्प्रदर्श्यते ॥ तच्च यथा—पाणिनीयस्य व्याकरणस्य वेदाङ्गत्वेन स्वीकारः, अष्टाध्याय्या वैदिकपाठे संग्रहश्च यदैवाभूत् तदैव वार्तिककारोपनिबद्धा योगविभागाः प्रमाणत्वेन तत्पाठे स्वीक्रियन्ते । भाष्यकारकृतयोगविभागाः सूत्रविपर्यासादयो वा न तथा स्वीक्रियन्ते । पाणिनिना सूत्राणि दण्डकरूपेणैव प्रणीतानि, न तत्र योगविभागाः । वैदिकपाठे च विभक्तान्येव सूत्राणि

पठ्यन्ते । तत्र वैदिकपाठविमर्शे स्फुटतरमेतत्प्रतिभासते—वार्तिकोक्ता योगविभागाः सर्वेऽपि वैदिकैर्विभक्तत्वेन पठ्यन्ते—इत्येव न, किन्तु वार्तिके ये सिद्धान्तभूता योगविभागास्त एव वैदिकैर्गृहीताः । ये च पूर्वपक्षाभिप्रायिणस्ते वैदिकपाठे न सन्निबद्धाः । भाष्यकृत्कृताश्च विभागाः सिद्धान्तभूता अपि वैदिकपाठे नैवोपनिबद्धा दृश्यन्ते । तादृशानि सर्वप्रकाराणि कतिपयान्युदाहरणानि प्रदर्श्यन्ते ॥

यथा—**उञः । ऊँ** १।१।१७। इति सूत्रे वार्तिककारेण '*उञ इति योगविभागः' इति वार्तिकेन स्फुटतरं विभागः प्रतिपादितः स तथैव वैदिकपाठेऽप्यनुगृह्यते । श्रीमता सूत्रकृता संहितयैव पठिताऽष्टाध्यायी । तत्र वृत्तिकारादिभिस्तट्टीकाकृद्भिः सूत्राणामिदानीमुपलभ्यमानो विभागः कृतः । यत्र टीकाकृद्भिः संशयादिनाऽनवधानेन वा विभागो न प्रदर्शितस्तत्र भगवता वार्तिककारेण विभागः प्रदर्श्यते । ते च सिद्धान्तभूताः सर्वेऽपि वार्तिककृद्योगविभागा वैदिकैरनुगृह्यन्ते । तेन वार्तिकप्रणयनान्तरमेव वेदाङ्गत्वेन प्रवेशोऽष्टाध्याय्याः समजनीति विज्ञायते । 'उञः । ऊँ' इति सूत्रविषये संशयादिनैव वृत्तिकारादिभिर्योगविभागो न कृतः । अत एव भाष्ये 'किमर्थो योगविभागः' इत्याशङ्क्य '*ऊँ वा शाकल्यस्य' इति वार्तिकमवतारितम् । कैयटेनापि 'ततश्च विति ऊँ इति—' एते द्वे एव रूपे स्याताम् । तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति 'त्रीणि रूपाणि सिध्यन्ति' इत्युक्तम् । उद्योतकृता च 'तथैव भाष्यस्वरसादिति ऊँ इति उ इति च रूपे स्यातां न तु वितीति तदर्थं विकल्पानुवृत्तिः' इति योगविभागः समर्थितः । योगविभागफलविषये कैयटोद्योतयोः सुस्पष्टमुपलभ्यमानेन फलभेदेन वृत्तिकाराणां व्यामोहोऽपि एतद्विषये समर्थितप्राय एव । वैदिकपाठेऽस्य योगविभागस्य स्फुटमुपलभ्यमानत्वात् विज्ञातुं शक्यमेतत्—सूत्रप्रणयनानन्तरं न चिरादेव वार्तिकानामवतार इति ॥

**ह्वः सम्प्रसारणम्** ६।१।३२। इति सूत्रे '*ह्वः सम्प्रसारणे योगविभागः । ह्वः सम्प्रसारणे योगविभागः कर्तव्यः—ह्वः सम्प्रसारणम्, अभ्यस्तस्य चेति' इत्येवं वार्तिककृता प्रदर्शितो योगविभागो लोकेऽप्याश्रीयते ॥

**अचो ञ्णिति** ७।२।११५। इति सूत्रे '*योगविभागः सख्यिव्यञ्जनाद्यर्थः । योगविभागः क्रियते सख्यर्थो व्यञ्जनाद्यर्थश्च' इति वार्तिककृतोक्तम् । पूर्वं 'अचो ञ्णित्यत उपधायाः' इति सूत्रमासीत्, वार्तिकेन प्रदर्शिते योगविभागे लोके विभक्ते एव ते सूत्रे पठ्येते ॥

**औदच्च घेः** ७।३।११८-११९। इत्यत्र '*औत्वे योगविभागः । औत्वे योगविभागः कर्तव्यः । औद्भवति-इडुद्भ्याम् । ततोऽच्च घेः ।' इत्युक्तं वार्तिककृता । सोऽपि योगविभागो लोके तथैव स्वीकृतः ॥

वार्तिकप्रदर्शिताः सर्वेऽपि योगविभागा वैदिके पाठे समाश्रीयन्त इत्येव न, किन्तु यत्र वार्तिककृता विशिष्टस्य कस्यचन शब्दस्य प्रत्ययस्य वोपसङ्ख्यानं क्रियते तदपि सूत्राङ्गत्वेनैव वैदिकपाठे पापठ्यते । यथा—**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ४।१।१५। इति सूत्रे "*ख्युन उपसङ्ख्यानम् । ख्युन उपसङ्ख्यानं कर्तव्यं । आढ्यङ्करणी सुभगङ्करणी" इत्युक्तं वार्तिककृता । अत्र हि ख्युनः सूत्रे उपसङ्ख्यानस्योक्तत्वात् वार्तिककारेऽपि पाणिनिवत्प्रामाण्यं विजानद्भिर्वैदिकैः 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप्ख्युनाम्' इत्येव सूत्रं पठ्यते । ज्ञायते चैतेन व्यवहारेण—'सूत्राणां वैदिकपाठे पदप्राप्तिसमये वार्तिकानां प्रचुरः प्रचार आसीत्' यतो वार्तिककृतमप्युपसङ्ख्यानं सूत्रेषु योजितम् ॥ अन्यान्यप्येवं प्रकाराणि बहूनि स्थलानि वैदिकपाठे दृश्यन्ते येन वैदिकपाठे वार्तिकप्रचारस्य पर्याप्त आवेशः ॥

ननु वार्तिकोक्ता अपि योगविभागाः साकल्येन वैदिकैर्नाश्रीयन्ते । यथा—**नाव्ययीभावादतोऽम् त्वपञ्चम्याः** २।४।८३। इति सूत्रे 'नाव्ययीभावादत इति योगव्यवसानम् । नाव्ययीभावादत इति योगो व्यवसेयः । नाव्ययीभावादकारान्तात्सुपो लुग्भवति । ततः—अम् त्वपञ्चम्या इति' इत्युक्तं वार्तिककृता । लोके च नाश्रीयतेऽयं विभाग इति वार्तिकोक्ताः समाश्रीयन्त इत्यपि न, इति चेन्न । ये वार्तिककारेण सिद्धान्तभूता विभागाः प्रदर्शितास्त एव लोके समाश्रीयन्ते, न तु पूर्वपक्षीभूता अपि विभागाः । अत्र च 'स तर्हि योगविभागः कर्तव्यः । न कर्तव्यः । तुर्नियामकः' इत्यादिना योगविभागस्य विफलतां प्रदर्शयति ॥

अत एव **व्यत्ययो बहुलम्** ३।१।८५। इति सूत्रे '*योगविभागः । योगविभागः कर्तव्यः-व्यत्ययः, ततः-बहुलम्' इति वार्तिककृता प्रदर्शितमपि योगविभागं न सभाजयन्ति वैदिकाः ॥

एवमेव **लटः सद्वा** ३।३।१४। **सार्वधातुके यक्** ३।१।६७। **युष्मदस्मदोरन्यतरस्यां खञ्च** ४।३।१। **प्रथमयोः पूर्वसवर्णः** ६।१।१०२। इत्यादिसूत्रव्याख्यानावसरे वार्तिकप्रदर्शिता अपि योगविभागाः सिद्धान्तभूता नेति नाद्रियन्ते ॥

एवञ्च वार्तिकोक्ताः सिद्धान्तभूता योगविभागा यत आश्रीयन्ते, अतो निश्चयेनैतद्वक्तुं शक्यं—**प्रायः सूत्रसमय एव वार्तिकावतार इति न सूत्रवार्तिकयोः कालव्यवधानमिति** ॥

भाष्यकृत्प्रदर्शिताश्च न्यासान्तराः सूत्रभेदा योगविभागा वा लोके नाश्रीयन्ते । यथा—**उपसर्गादनोत्परः** ८।४।२८। इति सूत्रं भङ्क्त्वा भाष्यकारः 'उपसर्गाद्बहुलम्' इत्याह । सिद्धान्ताभिप्रायश्चायं, तथापि भाष्यप्रणयनात्पूर्वमेव वैदिकपाठस्य निश्चयात् न भाष्यसिद्धान्तः पाठे समाश्रीयते, किन्तु 'उपसर्गादनोत्परः' इत्येव तेषां पाठः ॥

**इको गुणवृद्धी** १।१।३। इति सूत्रे भाष्ये 'मृज्यर्थमिति चेद्योगविभागात्सिद्धम् । मृजेर्वृद्धिरचः । ततो ञ्णिति ।' इत्येवं विभागः प्रदर्शितोऽपि लोके तस्यानाश्रयणम् ॥

**न धातुलोप आर्धधातुके १।१।४।** इति सूत्रभाष्ये 'अथापि कथंचिदनवकाशो लुक् स्यादेवमपि न दोषः। अल्लोपे योगविभागः करिष्यते।' अतो लोपः, ततो यस्य, ततो हलः, इति प्रदर्शितो योगविभागो नैव लोके समाश्रितः। अत्र 'अल्लोपे योगविभागः' इति भाष्ये अल्लोपसमीपे यस्य हल इत्यत्रेत्यर्थः। अल्लोपे 'अतो लोपः' इत्येवं विभागस्तु सार्वजनीन इति स नात्र प्रदर्शनविषयः, तदुपन्यासस्तु लोपपदानुवर्तनप्रदर्शनायैव। अत एव छायायां **'अल्लोप इति।** तत्समीपे यस्य हल इत्यत्रेत्यर्थः। वटे गाव इतिवत्सप्तमी' इत्युक्तम्॥

**अदसो मात् १।१।१२।** इति सूत्रभाष्ये 'अथवा योगविभागः करिष्यते-अदसः। अदस ईदादयः प्रगृह्यसंज्ञा भवन्ति। ततो 'मात्' माच्च परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति' इत्युक्तम्। तादृशश्च योगविभागो लोके नाश्रितः॥

**ष्णान्ता षट् १।१।२४।** इति सूत्रभाष्ये 'एवं तर्हि सप्तमे योगविभागः करिष्यते-अष्टाभ्य औश्, ततः-षड्भ्यः, ततो लुक्' इत्येवं प्रदर्शितोऽपि योगविभागो लोके नावतरति। तदग्रे च 'अथवा-उपरिष्टाद्योगविभागः करिष्यते-अष्टन आ विभक्तौ, ततो रायः, हलि' इति द्विधा समाधाने समुपन्यस्तोऽप्ययं विभागो वैदिकपाठसम्बन्धं नाधिगच्छति॥

एवमादीनि बहून्युदाहरणानि प्रदर्शितान्यपि चिकित्सकैर्न सिद्धान्तीभूतानीमानीति नाद्रियन्ते चेत्, यत्र सिद्धान्तेऽपि विभाग एव समाश्रीयते तादृशोऽपि पाठविषयतां न लभते॥

यथा—**श्लिष आलिङ्गने ३।१।४६।** इति सूत्रे भाष्ये ननु चोक्तं श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावादिति। नैष दोषः। योगविभागात्सिद्धम्। श्लिषः, ततः-'आलिङ्गने' इत्येवं प्रदर्शितो विभागः सर्वैः समाश्रयणीयोऽपि पाठे पदं न धत्ते॥

ननु **गोत्रे कुञ्जादिभ्यश्च्फञ् ४।१।९८।** इति सूत्रे भाष्ये "एवं तर्हि स्वरे योगविभागः करिष्यते-**'चितः' ६।१।१६३।** चितोऽन्त उदात्तो भवतीति, ततः-तद्धितस्य, ततः-कितः।" इति प्रदर्शितो योगविभागो लोकेऽप्याश्रीयत इत्यपि न मन्तव्यम्। नायं भाष्यकृत्कृतो योगविभागः, वृत्तिकारादिभिर्वार्तिककारापेक्षयाऽपि पूर्वं प्रदर्शितस्य योगविभागस्य भाष्ये प्रदर्शनमात्रमत्र कृतम्॥

**किमिदंभ्यां वो घः ५।२।४०।** इत्यत्र किमिदंभ्यां वतुपोऽप्राप्तिमाशङ्क्य "अथवा योगविभागः करिष्यते। किमिदंभ्यां। वतुप् भवति। ततः-**वो घः।** वश्चास्य घो भवतीति" इत्युक्तं भाष्यकृता। वतुप्प्रत्ययविधानाय सामर्थ्यं वा कल्पनीयम्, योगविभागो वा विधेयः। तत्र सामर्थ्यकल्पनापेक्षया योगविभागस्य लघुत्वाद्युक्तोऽपि योगविभागो नाश्रीयते वैदिकैः॥

**कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ६।२।४२** इति सूत्रे भाष्ये "कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभारादीनामिति वक्तव्यम्। इहापि यथा स्यात्-देवहूतिः, देवनीतिः, वसुनीतिः। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। योगविभागः करिष्यते-कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलः। ततः-दासीभाराणाञ्चेति। तत्र बहुवचननिर्देशात् दासीभारादीनामिति विज्ञास्यते" इत्येवं योगविभाग उक्तो देवहूत्यादिलक्ष्यसिध्यर्थमुपयुज्यमानोऽपि वैदिकपाठे नानुसन्धीयते॥

एवमेव-'आर्धधातुकस्येड्वलादेः, नपुंसकस्य झलचः, शीङो रुट्' इत्यादिषु बहुषु स्थलेषु भाष्यप्रदर्शिता योगविभागाः सफला अपि यतो वैदिकपाठे नाश्रीयन्ते अतो भाष्यप्रणयनात्सुदीर्घं पूर्वो वैदिकपाठो बद्धमूलतामापन्न इति। एवञ्च सूत्रवार्तिककारयोर्न कालविप्रकर्षः, सूत्रवार्तिककारापेक्षया कियताऽपि कालेन भाष्यकारो भाष्यं प्रणिनायेति वैदिकव्यवहारतो निश्चयेनावगन्तुं शक्यते-इति॥

### विषयोपन्यासः—

अथ महाभाष्यस्य भाषासौष्ठवं, कठिनतरस्यापि विषयस्य सुलभतया विवेचनं, सर्वत्र शब्दस्य शब्दार्थस्यापि वा सफलत्वमित्यादिगुणसमूहमवलोक्य कस्य चेतो न चित्रीयेत। मीमांसान्यायशास्त्रादिटीकाग्रन्थानां केवल भाष्यशब्देनैव व्यवहारः, अस्य श्रीमद्भगवत्पतञ्जलिप्रणीतस्य च महाभाष्यशब्देन व्यवहारोऽपि महत्त्वबोधनायादरेण लोके क्रियते। तथा चोक्तं पुण्यराजेन-'कृतेऽथ पतञ्जलिना' ४८५ इति वाक्यपदीयकारिकाव्याख्याऽवसरे—'तच्च भाष्यं न केवलं व्याकरणस्य निबन्धनं यावत्सर्वेषां न्यायबीजानां बोद्धव्यमित्यत एव सर्वन्यायबीजहेतुत्वादेव महच्छब्देन विशेष्य महाभाष्यमित्युच्यते लोके' इति। अस्याध्ययनाध्यापनप्रणालिरिदानीमुच्छिन्नेव प्रतिभाति। परकीयसत्तासमये परकीयभाषापराभूतप्रायेव भारतीया विद्या। यत्र क्वचन काश्यादिविशेषस्थलेषु संज्ञामात्रेणावशिष्टा तत्रापि टीकाग्रन्थैरेव सर्वमप्यायुः परिपूर्णमिति क्वावशिष्टोऽवकाशो भाष्याध्ययनाय। इदानीं स्वाधीने भारते प्रभविष्यति भारतीया विद्या, सुखी करिष्यति च संसारमिति न नः सन्देहः। भारतीयानामभ्युदये समुचिते काले सुसम्पन्नस्यास्य महाभाष्यस्यावलोकनेन हृदये सम्परिवर्तते यत् महाभाष्यकारसमये का वा भारतस्य दशाऽऽसीत्, कथञ्चैतद्देशीयाः कालं यापयन्ति स्म, कृष्यादिकं तदा कीदृशमासीत्, जातिविभागास्तदाऽऽसन्न वा, कथं वा तदानींतनानां मनुष्याणां स्वभाव आसीत्, देशे तदानीं प्रमाणादिव्यवहार आसीन्न वा, लोकव्यवहाराश्च कथमेतेषामासन्-इति। अस्य ज्ञानस्य प्रत्यक्षं तादृशसामग्र्यभावादशक्यमपि भाष्यप्रदत्तोदाहरणादिनाऽनुमातुं शक्यं स्यात्। यतः स्वाभाविकोऽयं समयस्तत्कालव्यवहारप्रतिबिम्बं सामाजिकानां लौकिकेष्वाचारेष्वप्यवतरति किमुत विशिष्टग्रन्थप्रणयितृव्यवहारेषु। यथा—इदानींतनानां सामाजिकानां व्यवहाराः सत्याहिंसादिकाल्पनिकाचारानपि नातिक्रमन्ते, जात्यादिव्यु-

च्छेदाय सततं यतन्ते, लोककल्याणे ननु सर्वः समाज एव प्रवृत्त इति प्रतिभासयन्ति, किन्तु अधिकं! ये ये सभ्यानामिदानींतनानां व्यवहारास्तैः सर्वोऽपि भारतीयानामितिहासो हस्तामलकवदिव प्रतिभाति। तथैव भाष्यसदृशश्रेष्ठतमग्रन्थप्रणयितृव्यवहारा अपि तत्कालव्यपदेशायालमिति **भाष्योदाहरणानि कानिचन विविच्य तात्कालिकीमवस्थामनुमातुं प्रत्ययते ॥**

## वस्त्रनिर्माणप्रकारः—

तथाहि-**तद्धितार्थोत्तरपदसमाहारे च २।१।५०।** इतिसूत्रभाष्ये "कश्चित्तन्तुवायमाह—अस्य सूत्रस्य शाटकं वयेति। स पश्यति–यदि शाटको न वातव्यः, वातव्यो न शाटकः, स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवति" इति। एतदुदाहरण-दर्शनेन वायकोऽपि यस्मिन् देशे एतादृशो विचक्षणः 'यदि शाटको न वातव्य' इत्यादि विचारयति, यत्र च सूत्रोत्पत्तिः सर्वैरपि क्रियते स्म येनायं प्रस्तुतो विचारो व्यवहारश्च श्रुतः श्रोत्रे सुखयति। तदानीन्तनैस्तैः सूत्रमपि निष्पाद्यते वस्त्रमपि च। सूत्रनिष्पादने विशे-षसामग्र्या अभावात् यत्र तत्राऽऽपामरैः सर्वैरपि कर्तुं शक्यं स्यात्। न तथा वस्त्रवायनं, तच्च वायनसामग्र्यधीनमिति यत्र तत्र न कर्तुं पार्यत इति वायकसमीपे एवागमनमुल्लिख्यते भाष्ये। अन्यथा कश्चित्कञ्चिदाहेत्याद्येवोल्लिख्येत।

तस्मिन् समये न केवलं सामान्यवस्त्राणामेवोत्पत्तिरासीत्, किन्तु सूक्ष्मसूक्ष्मतरवस्त्राणामप्युत्पत्तौ कृतप्रयत्नास्तदीया जना दृश्यन्ते।

यथा–**वर्णो वर्णेन २।१।६८।** इति सूत्रे पूर्वपदातिशय इति वार्तिके 'किं प्रयोजनं, सूक्ष्मवस्त्रतराद्यर्थः। यावता वस्त्राणि तद्वा न्तमपेक्षन्ते, तद्वन्तं चापेक्ष्यवस्त्राणां वस्त्रैर्युगपत्स्पर्धा भवति। यथैवायं द्रव्येषु यतते–वस्त्राणि मे स्युरिति, एवं गुणेष्वपि यतते–सूक्ष्म-तराणि मे स्युरिति'। एतद्दर्शनेनेदं सुस्पष्टं प्रतीयते यत् न केवलं वस्त्राणामेवोत्पत्तौ कृतकृत्यास्ते किन्तु गुणवन्ति सूक्ष्मतराणि च वायकैर्निर्मीयन्ते स्म, वस्त्रव्यवहारिणश्च गुणवद्वस्त्रव्यवहरणे दत्तचित्ताश्चासन्। युज्यते चैतत्। ये निरापदा वस्त्राणि गृह्णीयुस्ते यावन्ति गुणवन्ति सुशक्यानि तत्रैव कृतप्रयत्ना भविष्यन्ति न तु तेषां वस्त्रमात्रलाभेन समाश्वासः॥ अन्यच्च यत्र सूक्ष्मतरवस्त्रनिष्पादनशक्तिस्तत्र सुधौतवस्त्रादिनिष्पादनमप्यावश्यकम्। तादृशं चेदानीमेव, न तदाऽऽसीदित्यपि न मन्तव्यम्। तदा यथा सूक्ष्मतरवस्त्रनिष्पादने सामर्थ्यमासीत् तथैव सुधौतवस्त्रनिर्माणेऽपि शक्तिरासीदिति प्रतीयते। तच्च–**अतिशायने तमबिष्ठनौ ५।३।२५।** इत्यत्रोदाहरता भाष्यकृता स्पष्टीकृतमेतत्। तत्र हि "एवं हि दृश्यते लोके–समाने आयामे विस्तारे पटस्यार्घोऽन्यो भवति काशिकस्य, अन्यो-माथुरस्य। गुणान्तरं च खल्वपि शिल्पिन उत्पादयमाना द्रव्यान्तरेण प्रक्षालयन्ति। अन्येन शुद्धं धौतकं कुर्वन्ति, अन्येन शैफालि-कम्, अन्येन माध्यमिकम्" इत्युक्तम्। एकस्यैव वस्त्रस्य गुणोत्पादनवैशिष्ट्येन भिन्नानि मूल्यानि भवन्ति, ताश्च क्रिया भिन्नभिन्न-देशेषु भिन्ना भिन्ना आसन्–इत्यनेन व्यवहारेण गम्यते–काशिकस्य मूल्यमन्यत्, माथुरस्य चान्यदिति। तत्र धौतशैफालिकमाध्य-मिकाः क्रियाः प्रक्षालनवैजात्यकृता वस्त्रस्य गुणविशेषकराः। तदेतच्च समानगुणे एव तादृशी स्पर्धा आसीत्, न गुणभेदकृता। शुक्ल-गुणस्य यन्मूल्यं तदेव कृष्णगुणस्येति नासीत्। तदग्रे 'क्रियमाणे चापि गुणग्रहणे समानगुणग्रहणं कर्तव्यम्, शुक्लात् कृष्णे माभूत्। न कर्तव्यम्। समानगुणे एव स्पर्धा भवति, न ह्याढ्याभिरूपौ स्पर्धेते।' इत्यनेन स्पष्टीकृतम्। एवञ्च तदानीं सूक्ष्मतराणि सुधौतानि बहुमूल्यवन्ति वस्त्राणि सुलभान्यासन्॥

यथेदानीमपि यन्त्रनिर्माणयुगे कस्मिंश्चिद्यन्त्रे लघुमूल्यानि वस्त्राणि भवन्ति, कस्मिंश्चिच्च बहुमूल्यानि। धावनविशेषप्रकारैरपि मूल्ये तरतमभावोऽनुभूयते जनैः। यादृश एवेदानीन्तरतमभावः स्पर्धा वा तादृश्येव तदानीमपि। एतावता वस्त्रव्यवहारश्च तद-सुलभतर आसीदित्यवगम्यते॥

साम्प्रतिके काले वस्त्रव्यवहारो यथा व्युच्छिन्न इव दृश्यते तत्रापि महताकारणेन भवितव्यम्। इदानीं वस्त्रोत्पत्तिर्महद्यन्त्रा धीना, तानि च यन्त्राणि प्रदेशविशेषेष्वेवावतिष्ठन्ते, न तु सर्वत्र। ये च तदुत्पादनसमर्थास्तत्र तेषां काचन स्पर्धैव नास्तीति निरु त्साहास्ते यद्भविष्यति तद्भविष्यतीति वादिनः स्वोदरपूर्तौ कदाचिद्वस्त्राणि निष्पादयेयुः, कदाचिदन्यद्वा किञ्चिदुत्पादयेयुः।

अन्यच्च यन्त्रेष्वपि द्विविधमाधिपत्यमिदानीं दृश्यते। एकत्र च धनिकायत्तम्, अन्यत्र च कर्मकरायत्तम्। तेन गुणवान-प्येको भृत्य उभाभ्यां स्वामिभ्यामेकस्मिन्नेव समये विरुद्धदिक्स्थे कर्मणी आज्ञाप्येयातां तदोभयोरपि न करोति, तथा यन्त्रयुगे समा-पन्नमिव दृश्यते। प्राक्तने च काले एतन्नासीत्, यतस्तत्र जातिनिर्बन्धादिना नियतान्येव कर्माण्यासन्। वायकास्तावद्वस्त्राण्येव वयन्ति, न ते कदाचिदपि अन्यदीयकर्मणा व्यवहरन्ति। यदि चेत्ते न वस्त्राणि कुर्युस्तदाऽकृत्रिमनिर्बन्धादिनाऽन्यकर्मकरणेऽशक्ताः स्वोदर-पूरणेऽसमर्था भवेयुः। यत्र जातिनिर्बन्धो दृढो भवेत् तत्र स्वीयकर्मकरणे उत्साहवन्तः स्वकर्तव्यमिति बुध्या तत्र प्रवर्तमानाः स्वे स्वे कर्मणि निरता जना भवन्ति। तत्रापि भिन्नदेशस्थानां सजातीयानां कर्मणि विशेषकौशलादिकमवलोक्य परस्परं पास्पर्धमाना उत्कृष्टगुणवन्तो भवन्ति। यत्र स्पर्धैव नास्ति तत्रेदानीं शर्कराविषये यादृशीमवस्थामात्मा नीतः स्वकीयैः स न कदापि विस्मर्तव्यः। यतन्ते च स्वार्थप्रवणा राजकीयकार्यकरा नीतिमन्तोऽपि पुरुषा अन्यत्रापि स्पर्धां विलोपयितुम्। निदर्शनञ्चात्र राष्ट्रीयकरणमिषेण व्युच्छिन्नव्यवहाराणां कतिपयानानामेवालं स्यात्। न च राजाज्ञया कस्मिंश्चित्कर्मणि सहजत्वं निर्मातुं शक्यम्, न वा नेदं ते सहजं कर्मेति वा विधातुं शक्यम्॥

नन्वेवं चेत्, राजाज्ञया न किञ्चिदनिष्टं निष्पाद्यत इति चेन्न । विभ्रमबुद्धयो हि मनुष्याः । ते राजाज्ञया किंकर्तव्यविमूढाः संशयितचित्तवृत्तयो न सहजं कुर्वन्ति, न वाऽऽज्ञप्ते कर्मणि सावधाना भवन्ति । एवञ्चेदृशराजाज्ञया देशविप्लव एव सर्वथाऽभिसमीक्ष्यः स्यात् । अत एवेदृशं विधानं युक्तं यत् तत्रत्यसमाजस्य तत्स्वाभाविकं स्यात्—इति ॥

## लौकिको व्यवहारः—

लोकव्यवहारनिदर्शके **समर्थः पदविधिः २।१।१** इति सूत्रे भाष्यकृता समीचीनमुदाहरणं दत्तम् । तद्यथा-'एवं हि दृश्यते लोके भिक्षुकोऽयं द्वितीयां भिक्षां समासाद्य पूर्वां न जहाति, सञ्चयायैव प्रवर्तते' इति । भिक्षुको हि धनसंग्रहे लुब्धः कथं वा पूर्वां भिक्षां जह्यात् । अनेनोदाहरणप्रदर्शनेन समाजस्य स्वाभाविकं रूपं सन्दृश्यते ॥ **प्राग्रीश्वरान्निपाताः १।४।५६।** इत्यत्र "किमर्थं रेफाधिक ईश्वरशब्दो गृह्यते लोकत एतत्सिद्धम्, तद्यथा—आ वनान्तात् आ उदकान्तात् प्रियं पान्थमनुव्रजेदिति य एव प्रथमो वनान्त उदकान्तश्च ततोऽनुव्रजन्ति । **लौकिकं चातिवर्तते ।** द्वितीयं तृतीयञ्च वनान्तमुदकान्तमनुव्रजन्ति तस्माद्रेफाधिक ईश्वर-शब्दो ग्रहीतव्यः" इति । अत्र हि रीश्वरादिति किमुक्तं, ईश्वरादित्येव कथं नोच्येतेत्याशङ्क्य, आ वनान्तादा उदकान्तात्प्रियं पान्थमनु-व्रजेदिति विधाने नियमाभावाद्द्वितीयं तृतीयं च वनान्तमनुगच्छन्ति, तथाऽत्रापि प्रथमेश्वरशब्दं विहाय द्वितीयपर्यन्तमपि अनुव्रजिष्य-न्तीति तदर्थं विकृतमिति तद्भाष्यार्थः । ग्रामाद्ग्रामान्तरं गच्छतः पान्थस्यानुव्रजनं उदकान्तं वनान्तं वा कर्तव्यमित्याचार आसीत्तदा-नीम् । ग्रामाद्बहिरपि मध्येमार्गं विपुला उदकान्ता विपुलानि वा वनानि यत्र सम्भवन्ति तत्रैवेदमुचितं स्यात् । तत्रापि द्वितीयं तृतीयं वा वनान्तं गच्छन्तीति दर्शनेन च नियतं तस्मिन् काले बहूनि वनानि संरक्षितानि निर्मितानि वा भवेयुः । पान्थानामुपभोगाय धार्मि-कैर्निर्मिता बहवो जलाशया वा भवेयुरिति **सुजलां सुफला**मिति भारतभूस्वरूपं दृष्टिपथमायाति ॥

तदानींतनाश्च धार्मिका राजदण्डे समादरयुक्ताश्च लोका इत्यग्रिमोदाहरणदर्शनेन प्रतीयते । यथा—**वारणार्थानामीप्सितः १।४।२७** इत्यत्र 'किमुदाहरणं ? माषेभ्यो गा वारयति । भवेद्यस्य माषा न गावस्तस्य माषा ईप्सिताः स्युः, यस्य तु खलु गावो न माषाः कथं तस्य माषा ईप्सिताः स्युः । तस्यापि माषा एवेप्सिताः । आतश्चेप्सिताः, यदेभ्यो गा वारयति । पश्यत्ययं यदीमा गावस्तत्र गच्छन्ति ध्रुवः सस्यविनाशः, सस्यविनाशेऽधर्मश्चैव राजभयञ्च । स बुध्या सम्प्राप्य निवर्तयति' इति । क्षेत्रे गवां सम्मर्देन सस्यविनाशः स्यात्, विनष्टे च सस्ये क्षेत्रस्वामिनः क्लेशेनाधर्मः स्यादिति येषां बुद्धिस्तेषां खलु भारतीयानां कथममङ्गलाशंसनमपि सम्भवति । गो सञ्चारयितुः पांशुलपादस्य यत्रेदृशं धर्मबन्धनं तत्र सुनिविष्टानां नागरिकाणां किमु वक्तव्यम् । वस्तुत अरण्ये संस्थि-तस्य क्षेत्रस्य रक्षणमपि धर्म एव करोतीति 'धर्मो रक्षति रक्षितः' इति वचनं कथमन्यथा मन्तव्यम् । 'अधर्मश्चैव राजभयञ्च' इत्यु-भयमप्युक्तं परंतु तत्र राजभयस्य न तादृशः समादरो यादृशो धर्मस्य, अत एव तस्य पूर्वमुक्तिः । एतदपि तत्रावधेयं—तदा सस्य-विनाशेऽपि राजकीयः प्रतीकारः समर्थतर आसीत् न निर्विण्णः, येनारण्यकेनापि राजभयात्क्षेत्ररक्षणं क्रियते । अत्रापि न राजा रक्षति किन्तु धर्म एव रक्षतीत्येव सत्यम् । यद्यसत्याश्रयणं कर्तुं शक्यते तदा गाश्चारयित्वा क्षेत्रविनाशेऽपि न मदीयगोभिस्तत्क्षेत्रं नाशितम्, अहं तु तस्मिन्दिने तत्क्षेत्रं नैव दृष्टवानित्याद्युक्तिभिः स्वसंरक्षणं कर्तुं शक्यम् । **राजभयं चे**ति प्रतिपादयता भाष्यकारेण जनानां धर्मानुसन्धानात् सत्यप्रियत्वमाविष्क्रियते, तदैव च राजभयं च सम्भाव्यते । अन्यथाऽधार्मिके राज्ये यावन्तः शासनीया जनास्तावन्तो रक्षापुरुषान् विधायापि चौरैराततायिभिश्च प्रत्यहं राजधान्यां कतिपयमनुष्या हन्यन्ते, कानिचिच्च गृहाणि दह्यन्ते, केचिच्च मुष्यन्ते—इत्यादि त्वनुभूयत एव व्यवहारकुशलैः ।

धर्मबन्धनादेव—**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५।** इत्यत्र 'तद्यथा लोके—आढ्यमिदं नगरं गोमदिदं नगर-मित्युच्यते । न च सर्वे तत्राढ्या भवन्ति सर्वे वा गोमन्तः । यस्य हि यद्द्रव्यं भवति स तेन कार्यं करोति । यस्य च या गावो भवन्ति स तासां क्षीरं घृतमुपभुङ्क्ते, अन्यैरेतद्द्रष्टुमप्यशक्यम् ।' इत्युक्तं सङ्गच्छते । धर्मबन्धनाभावेऽन्यस्यापि द्रव्यमन्येनोपभुज्यमानं प्रत्यह-मुपलभ्यते, यस्य च गावो भवन्ति तद्दुग्धमन्यैरुपभुज्यमानमेव प्रत्यहं प्रतिपाल्यते । एतदुदाहरणदर्शनेन नगरेऽपि गोपालनं बहूना-मपि तदा सुकरमासीदिति गम्यते । इदानीमपि नगरे गाः पालयन्ति ता दुग्धेनोपजीवनार्थं न स्वोपभोगार्थमिति विशेषः । अत एव **अनुदात्त ङित आत्मनेपदम् १।३।१२।** इत्यत्र सुष्ठु खल्वभिहितं 'न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति, नहि गोधा सर्पन्ती सर्पणादहिर्भवति' इति । स्वातन्त्र्यमात्रप्राप्तिलाभेन चौरा दुष्टाः शठा वा न नागरिकपदवीमर्हन्ति, न वा ते शुद्धाचाराः सम्भवन्तीति ॥

बह्वायाससाध्ये लघुनि फले न तदानीन्तनानां प्रवृत्तिरासीदिति नवाह्निकस्य द्वितीयाह्निके 'सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते' इति वदता प्रदर्श्यते । अयञ्च **हयवरट्** ( शिवसूत्रम् ) सूत्रस्थो युक्तिवादस्तदानींतनानां व्यवहारे याथार्थ्यं गमयति । तद्यथा— 'एकश्चक्षुष्मान् दर्शने समर्थस्तत्समुदायश्च शतमपि समर्थम्, एकश्च तिलस्तैलदाने समर्थस्तत्समुदायश्च खार्यपि तैलदाने समर्था । येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषामनर्थकाः । एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्, एका च सिकता तैलदानेऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम्' इति । पर्याप्तमेतन्निदर्शनं तदानींतनानाम् । राजनीतिविचारे राजनीतिशून्यानां सहस्राधिकानां, धर्मसभायां संशयितचित्तानां लक्षादप्यधिकानां, लोकोपकारविचारसमये बहुसंख्ययाऽप्युपस्थितानां स्वार्थप्रवणानां तदानींतने काले शून्यमेव मूल्यमासीत्, न ततोऽधिकम् । तत्र च राजनीतिज्ञा धर्मशास्त्रविदो निःस्वार्था एवाधिकृताः सम्मन्यन्ते

स्म-इत्याविष्कृतं भगवता ॥ अत एव शास्त्रमात्रैकनिष्ठानां मंदिरप्रवेशविवाहादिविषयाणां चर्चाप्रसङ्गे शास्त्रगन्धमपि दुर्गन्धि मन्यमानानामन्धप्रायाणामभिप्रायेण शास्त्रविरुद्धाचरणमिदानींतनानां नातीव शोभते। बहूनामन्धानां समवाये न चक्षुष्मताऽप्यन्धेन भवितव्यं न वा बधिराणां समवाये कर्णवताऽपि पिको हातव्यः ॥

सुगृहीतनाम्नो भाष्यकारस्य समये स्वे स्वे कर्मण्यभिरता जना आसन्निति **कुर्म्मेजन्तः** १।१।३९। इत्यत्र "न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्तीति यवा नोप्यन्ते" इत्यादितो ज्ञायते । न हि विघ्नाः सन्तीति कार्याणि नारभ्यन्ते इत्येव तेषां दृढा मतिः, न तु विघ्नाः सन्तीति स्वाभिमतं कार्यमपि सन्त्यज्यावस्थीयत इति ॥

व्यवहारकौशल्यमपि तदानीन्तनानां **नमुने** ८।२।३। इति सूत्रे "अथवा द्विगता अपि हेतवो भवन्ति । तद्यथा-आम्राश्च सिक्ताः पितरश्च प्रीणिता भवन्ति । तथा वाक्यान्यपि द्विगतानि दृश्यन्ते-श्वेतो धावति-अलम्बुसानां यातेति । अथवा वृद्धकुमारीवाक्यवदिदं द्रष्टव्यम् । वृद्धकुमारी इन्द्रेणोक्ता वरं वृणीष्वेति सा वरमवृणीत पौत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति । न च तावदस्याः पतिर्भवति कुतः पुत्राः कुतो वा पौत्राः कुतो गावः कुतो धान्यम् । तत्रानया एकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं संगृहीतं भवति ।" इत्युपन्यस्यता प्रकटितम् । कस्मिंश्चित्समवाये किंजातीयो धावति, किंवर्णो धावति, को धावतीति बहुभिः पृष्टे चतुर उत्तरयति-श्वेतो धावत्यलम्बुसानां यातेति एकेनैवोत्तरेण सर्वेषामपि समाधिर्विधीयते । अनुमीयते चैतेन भाष्यप्रणयनकाले **व्युत्पन्नाः सुचतुरा धीरा धार्मिकाश्च जना भारते निवसन्ति स्मेति** ॥

### कृषिः—

तदानींतनानां कृषिविषये कीदृशं ज्ञानमासीत्, कथं वा तेषां कर्षणम्, के वा कर्षका इत्यादिविषये भाष्यप्रदत्तोदाहरणमात्रादेव यदुपलभ्यते तदेतत्-**वर्णो वर्णेन** २।१।६८। इत्यत्र "इह हि सर्वे मनुष्या अल्पेनाल्पेन महतो महतोऽर्थानाकाङ्क्षन्ति । एकेन माषेण शतसहस्रम् । एकेन कुद्दालपदेन खारीसहस्रम्" इत्युक्तम् । सर्वेषामयं स्वाभाविको धर्मो यदल्पेन प्रयत्नेनाल्पेन मूल्येन वा महती कार्यसिद्धिरपेक्ष्यते-इति । एकमाषसुवर्णेन वस्त्रादीनां शतं सहस्रमपीच्छन्ति, अथवा एकेन माषेणोप्तेन सहस्रसङ्ख्याकान् माषानपीच्छन्ति । तथा कुद्दालपदेन-खनित्राग्रस्थितपरिमितधान्येन-तादृशधान्यवापेन, अथवा खननार्थं भूम्यां पातितः कुद्दालो यत्परिमितं क्षेत्रं व्याप्नोति तत्परिमितेन क्षेत्रेण खारीणां सहस्रमिच्छन्ति । वस्तुतः कर्षकाणामयं व्यवहारः-एकेन हलेनैकस्मिन्दिवसे यावत्क्षेत्रं क्रष्टुं शक्यं तावदेव तदुच्यते-एकहलं क्षेत्रमिति, तथैकेन कुद्दालेनैकस्मिन्दिवसे यावत्क्षेत्रं कृष्टं स्यात्तत्कुद्दालपदमिति । एकेन कुद्दालपदेन-एककुद्दालपरिमितक्षेत्रेण खारीसहस्रमपीच्छन्तीति तदर्थः । एकेन कुद्दालपरिमितक्षेत्रेण 'खारीसहस्रमिच्छन्ति' एवमुक्तौ सम्भावनीयायामपि एतावता क्षेत्रेण इयद्धान्यं भवति, इयद्धान्यं चापेक्षते-इत्येतादृशं यत्क्षेत्रविषयकं संशोधनं तत्तदानीमासीदिति निश्चयेन प्रतीयते । तत्र खारीपरिमाणञ्च—

**पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम् ।**<br>
**चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम् ॥**<br>
**अष्टाढको भवेद्द्रोणो द्विद्रोणः सूर्प उच्यते ।**<br>
**सार्द्धसूर्पो भवेत्खारी द्विद्रोणा गोण्युदाहृतम् ।**<br>
**तामेव भारं जानीयाद्वाहो भारचतुष्टयम् ॥**

इत्यभियुक्तोक्तवचनात्-सेटकस्य पादः-पलम्, चत्वारि पलानि-कुडवः स एव सेटकः ( भाषायां शेर इत्युच्यते ), चत्वारश्च कुडवाः-प्रस्थं ( पायली ), चत्वारः प्रस्थाः-आढकं, ( चतुर्णामाढकानां भाषायां 'मण' इत्युच्यते ) अष्टाढकः-द्रोणः ( दोन मण ), द्विद्रोणः-सूर्पः, सार्धसूर्पः-खारी ( सहा मण ), द्वाभ्यां द्रोणाभ्यामधिका खारी-द्विद्रोणा-गोणी, गोणी-भारः, चत्वारो भाराः-वाहः-इति प्रायः परिमाणानि भवन्ति । अनेन खारी-सहा मण ( भाषायां ), खारीसहस्रं-भाषायां मणसंज्ञकानां षट्सहस्राणामेकेन कुद्दालपरिमितक्षेत्रेणोत्पादनमिच्छन्ति । कुद्दालपरिमितं क्षेत्रमपि यथा—एकहलं क्षेत्रं भाषायां 'एकर' इत्याख्यात् किंचिदेव न्यूनं प्रायो व्यवह्रियते । एकहलमूल्यं कार्षिकैरेवं व्यवह्रियते । द्वौ वृषभौ एकश्च हलवाह इति त्रयो भवन्ति, एकस्य हलवाहस्य या एकदिनस्य भृतिस्तत्त्रिगुणा भृतिर्हलस्य । तथैव एकेन हलेन यावत्क्रष्टुं शक्यं तस्य तृतीयो भाग एकेन हलवाहेनापि कुद्दालेन क्रष्टुं शक्यः । एवञ्च भाषायां 'एकर' इत्याख्यस्य तृतीयो भागः कुद्दालपरिमितं क्षेत्रं स्यात् । इदानीं 'एकर'परिमिते क्षेत्रे शालीनां निष्पत्तिः खारीचतुष्टयपरिमिता भवतीति द्वादशद्रोणा उत्पद्यन्त इति राजकीयकर्मचराणामभिमतम् । कुद्दालपरिमिते क्षेत्रे चतुर्णां द्रोणानां निष्पत्तिः स्वीकृतप्राया । चत्वारो द्रोणाश्च भाषायामष्ट 'मण'संज्ञका भवन्ति । तत्र तदानींतनैः खारीसहस्रस्योत्पत्तिरभिहिता ॥ मनुष्यस्वभावनिरीक्षणे यदेव प्रत्यक्षं तत्समीपे एव कल्पनाव्यवहारः । यथा-दरिद्रः शतमिच्छति, शती च सहस्रमिच्छति, न तु दरिद्रः कदापि कोटिमीहते । साहित्ये रसाभिव्यक्तिः सहृदयस्यैव भवतीति संकेतस्तथा कल्पनाया व्याप्तिरपि सहृदयैरेवाकलनीया । सहृदयैर्विचार्यमाणे सामान्यो मनुष्यस्तावद्राजानं दृष्ट्वा 'अहं राजा स्यां' इत्येवाकलयति, प्रधानामात्यश्च 'अहं सार्वभौमः स्याम्' इति कल्पयेत्, तेनैव च स सुखी भवति । तथाऽत्राप्यत्युक्तिकल्पनायां यत्र शतस्योत्पत्तिस्तत्र सहस्रं परिकल्प्येत, न तु यत्रैकमेव भवति तत्र सह-

स्य कल्पनाऽभिमता। एवञ्च खारीसहस्रमित्यनेन खारीशतं तु मन्तव्यमेव। एकस्मिन् कुद्दालपरिमिते क्षेत्रे यत्रेदानीं चत्वारो द्रोणा भवन्ति तत्र खारीशतं (त्रिशतसंख्याका द्रोणाः) भवन्ति स्मेति अनुमीयते। अथवा खारीशतविषये तेषां प्रयत्नस्तु अवश्यं वक्तव्यः। ईदृशी धान्योत्पत्तिस्तदाऽऽसीदित्यभिप्रायग्रहणे तदानींतना जनाः सुखिन आसन्नित्यत्र न कोऽपि विवादः स्यात्॥

## अदेवमातृका कृषिः—

तथा-शालीनामुत्पादने यादृशस्तेषां व्यवहारस्तेनैतज्ज्ञायते-न वर्षास्वेव शालीनुत्पादयन्ति, किंतु अवर्षायां हेमन्तादावपि शालीनुत्पादयन्ति स्मेति। **मीनाति मिनोतिदीङांल्यपि च ६।१।५०।** इति सूत्रे 'अन्यार्थमपि प्रकृतमन्यार्थं भवति। तद्यथा-शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयत उपस्पृश्यते च शालयश्च भाव्यन्ते' इति व्यवहारदर्शनात् शाल्यर्थं कुल्यानां बहुप्रचार आसीदिति निश्चयेनावगन्तुं शक्यम्। अत एव **बहुगणवतुडति संख्या १।१।२४।** सूत्रादौ बहुत्र 'शाल्यर्थं कुल्याः प्रणीयन्ते' इत्युक्तिर्भाष्यिकृतां सामञ्जस्येन सङ्गच्छते। कुल्याशब्दश्च कृत्रिमनदीवाचकः, 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरात् कुल्या-कृत्रिमा वारिप्रवाहिकाऽल्पा नदी भवति। तथाविधानां कुल्यानां शाल्यर्थं निर्माणेन समृद्धशालिमान् देशो भविष्यतीति प्राचीनव्यवहारदर्शनात् अनुमीयते॥

## शालिप्रकाराः—

शालीनां प्रकारा अपि भिन्नास्तत्तद्देशविशेषणविशिष्टा भिन्नरुचयश्च यथेदानीं दृश्यन्ते तथा तदानीमप्यासन्। यथेदानीं केचिच्च शालयोऽल्पेन कालेन भवन्ति केचिच्च महता तद्वत् तदानीमपि। तच्च यथा—**वर्णो वर्णेने**ति सूत्रे एव 'लोहितशालिमान् ग्रामः' इत्युदाहृतम्। केचिच्च शालयो लोहितवर्णा भवन्ति, अपरे न। कस्मिंश्चिद्ग्रामे विशिष्टवर्णाः शालयः सम्भवन्ति। क्वचिच्च ग्रामः सर्वबीजी भवति, कश्चिच्च न तथेत्येतदपि तस्मिन्नेव सूत्रे 'सर्वबीजी ग्रामः' इत्युदाहरणादवसीयते॥

## कर्षकाणां ऋणं—

धनित्वञ्च तदानीं धान्येनापि व्यवहरन्ति स्मेति **तृतीया तत्कृतार्थेन गुणवचनेन २।१।२९।** इति सूत्रे 'धान्येन धनवान्' इत्युदाहरणेन प्रदर्शितम्। न केवलं धनेनैव धनी भवति किन्तु धान्येन। तस्मिन् समये कर्षकाश्च ऋणेन व्याप्ता इत्येवमुदाहरणं न दृष्टिगोचरं सम्पूर्णेऽपि भाष्ये। इदानींतनीयेन व्यवहारेण ये ये नगराद्बहिर्ग्रामे घोषे वा वर्तन्ते ते सर्वेऽपि ऋणिनोऽवश्यं भवेयुः। ये ग्रामे वसन्ति ते नानाविधानि वस्तूनि निष्पादयन्ति नागरिकान् द्रव्यव्ययेन विक्रीणन्ति च-इत्थमासीत्पुरातनो व्यवहारः। इदानीं तत्सर्वं विपरीतमिव सञ्जातम्। सामान्यजनानां ग्रामीणानां प्रत्यहं येषामुपयोगस्ते हि दीपशलाका, वनस्पतिः (चहा), वस्त्रं, और्णेयं, दीपतैलं, गुडः शर्करा वा एते पदार्था झटिति बुद्धिगोचरा भवन्ति। तत्र गुडः शर्कराभावेऽपि ग्रामे एव सम्भवतीति तद्विषये न काऽपि चिन्ता। परन्तु दीपशलाकादीन्पदार्थान् क्रेतुं न धान्यस्योपयोगः, द्रव्यमेव तत्रापेक्ष्यते। दीपशलाकानिर्माणेन बहूपकृतं खलु वैदेशिकैर्नागरिकाणाम्, ग्रामीणानां कृते तद्विरुद्धमिव सञ्जातम्। यतो दीपशलाकाभावे करीषाणां वैपुल्यात् अग्नीन् गृहे संरक्ष्य दीपशलाकाकार्यमनायासेनैव सम्पत्स्येत। इदानीं दीपशलाकापराक्रमश्चैवं वर्णनीयः—एकेन पणेन दीपशलाकाशतं लभते, तेनैकसप्ताहपर्यन्तं कार्यं निर्वहति। एकसप्ताहपर्यन्तमग्निसंरक्षणे बहूनां करीषाणां व्ययः कालहानिश्चेत्यालोच्य तादृशपदार्थनिर्माणेन विस्मितबुद्धयस्तत्पदार्थव्यवहारे कटिबद्धा वैदिशिकानां गुणगौरवे दत्तचित्ताश्च विस्मृतस्ववृत्तयो दास्यभावेन सहात्मसमर्पणमपि चक्रुः॥ **(चहा)** वनस्पतिसेवनमपि वैदेशिककृपालब्धमेव, तत्र तु द्रव्यव्यय आवश्यकः, यतः सा वनस्पतिर्न यत्रकुत्रापि क्षेत्रे सम्भवतीति॥ ततश्च **वस्त्रं,** तत्तु इदानीं यन्त्राधीनं कथं द्रव्याभाव उपलभ्येत॥ दीपतैलं तु (राकाइल) इतरतैलापेक्षया लघुमूल्यं दीपशलाकावत् ग्रामादिषु एकेन पणेन सप्ताहपर्यन्तं प्रकाशकमिति कृत्वैवान्यान् तैलानभिभावयति। धान्येन धनिनां हस्ते समये समये द्रव्यसंग्रहः सम्भवति, परंतु एवमपि केचन दिवसाः सम्भवन्ति-यदय पणोऽपि नास्तीति। त एव तेषां ऋणकारका दिवसाः। तेषु संचीयमानं ऋणं धान्यानां समये समागते लघुबुद्धित्वान्मोहवशाद्वा न प्रतिक्रियत इति ते **ऋणिनः॥**

भाष्यकारसमये तु दीपशलाकादीनामापणक्रेतव्यानां नामापि नासीदिति ग्रामवासिनां ऋणग्रहणसमय एव नाभूदिति सुखिनस्ते तदा सम्प्रवृत्ताः। अत एव ऋणोदाहरणसमयेऽपि ग्रामीणऋणस्य न क्वापि तैश्चर्चा कृता। इदानीं स्वातन्त्र्यावसरे समागते यदि केचन सुसंस्कृतभारतीयबुद्धिवैभवशालिनो नेतारोऽस्मद्भाग्यवशात् संयुज्येरन् तदा कोऽवकाशो ग्रामीणानां क्लेशनिर्हरणे। पाश्चात्यवादविप्लुष्टमतयो नैतत्कार्यं कर्तुं प्रभविष्यन्तीति सुनिश्चितमेव। अत एव कर्षकऋणापाकरणचिकित्सानिर्णये 'तदृणमेव न देयम्' इत्येव निश्चयो गृहीतस्तैः। एतच्च नावलोकितं-कर्षकाणामुत्तमर्णा अपि प्रायः कर्षका एवेति तेषां द्रव्यनाशे कर्षकाणामेव द्रव्यनाश इति। अनायासेन लब्धं राज्यमपि यथा पालयितुं न शक्यते तथाऽनायासेन प्राप्तमनृणित्वमपि तथैव। अथ च यावदृणकारणसामग्री तदवस्थैव तावदृणापाकरणं मूलं विहाय शाखासिञ्चनमिव दरीदृश्यते॥

## कर्षकाः के?

अवसरेऽस्मिन् प्राक् के कृषकपदवाच्याः शिष्टसम्मता इत्यवलोकनमपि सुसम्बद्धं स्यात्। तथाहि-**हेतुमति च ३।१।२६।** इत्यत्र णिच्प्रत्ययोत्पत्त्यनुत्पत्तिविचारवेलायां "कृष्यादिषु चानुत्पत्तिर्वक्तव्या। एकान्ते तूष्णीमासीन उच्यते पञ्चभिर्हलैः कृषतीति। तत्र भवितव्यं पञ्चभिर्हलैः कर्षयतीति। **कृष्यादिषु चानुत्पत्तिर्नाना क्रियाणां कृष्यर्थत्वात्।** कृष्यादिषु चानुत्पत्तिः

सिद्धा । कुतः । नानाक्रियाणां कृष्यर्थत्वात् । नाना क्रियाः कृषेरर्थाः । नावश्यं कृषतिर्विलेखने एव वर्तते । किं तर्हि ? प्रतिविधानेऽपि वर्तते । यदसौ भक्तबीजबलीवर्दैः प्रतिविधानं करोति स कृष्यर्थः । आतश्च प्रतिविधानेऽपि वर्तते, यदहरेवासौ न प्रतिविधत्ते तदहरेव तत्कर्म न प्रवर्तते ।" इत्युक्तम् ॥

कृष्यादिधातोर्णिजनुत्पत्तिर्वक्तव्या, यतस्तूष्णीमासीनेऽपि—अकिञ्चित्कुर्वाणेऽपि देवदत्ते 'पञ्चभिर्हलैः कृषति देवदत्तः' इति लोका वदन्ति, वस्तुतस्तत्र भृत्यादिद्वारा कर्षणात् 'पञ्चभिर्हलैः कर्षयति देवदत्तः' इति वक्तुं युक्तम् । एवञ्च यत्र णिच् प्राप्तस्तत्राकरणात् कृष्यादिषु चानुत्पत्तिर्वक्तव्येति । ततश्च वार्तिककार आह—पञ्चभिर्हलैः कृषति देवदत्त इत्यत्र णिचः प्राप्तिरेव नेति न ततोऽनुत्पत्तिर्वक्तव्या । तत्र हेतुमाह—नानाक्रियाणां कृष्यर्थत्वादिति । कृषधातोर्न विलेखनमेवार्थः, किन्तु **विलेखनप्रेरणं विलेखनोपकारकरणं विलेखनविषये यावत्प्रतिविधानकरणञ्च** । तथा च यत्र स्वयं कृषति तत्र देवदत्तः कृषति, यत्र देवदत्तस्य भृत्याः कृषन्ति तत्रापि देवदत्त एव कृषति, यत्र च देवदत्तस्यांशभागिनः कृषन्ति तत्रापि देवदत्तस्य प्रतिविधानकर्तृत्वाद्देवदत्तः कृषतीति भवत्येव । क्वचिद्देवदत्तो भक्तेन प्रतिविधानं करोति, क्वचिच्च बीजदानेन प्रतिविधानं करोति, क्वचित् हलबलीवर्दादिभिः प्रतिविधत्ते इति **तदर्थः** । एवञ्च तदानीन्तने समये कर्षकपदवाच्याः—यः स्वयं कृषति, यो भृत्यद्वारा, यो भागदानेन, यश्च बीजबलीवर्दादिसम्पादनेन, ते सर्वेऽपि कर्षका एवेति निर्णयः । कृषिश्चैवं पदार्थोऽस्ति य एकेन न निर्वर्तयितुं शक्यः, बहूनां साहाय्यसमवधाने एव तस्य सम्पन्नत्वात् । कर्षकार्थविचारवेलायां यद्येतदनवलोक्य यः कृषति स कर्षक इत्येवोपादाने न तेनैकेन समीचीना कृषिः स्यात्, न च धान्यसमृद्धिश्च स्यादिति । अत एव भाष्ये 'भक्तबीजबलीवर्दैः प्रतिविधानं करोति' इत्यत्र नात्मनेपदप्रयोगः । अन्यथा प्रतिविधानफलस्य कर्तृगामित्वात् तत्र 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यात्मनेपदमेव युक्तं स्यात् । इह तु भागादिना प्रतिविधानफलं यथा कर्तृगामी तथाऽन्यत्रापि गच्छतीति नात्मनेपदप्रयोगः ॥

## कृषिकर्मणि—

कर्षकाणां क्रियाप्रवृत्त्याद्यपि क्वचिदुपवर्णितम्, तद्यथा—**कर्मवत्कर्मणातुल्यक्रियः ३।१।८७।** इत्यत्र "कथं ज्ञायते भिद्यते कुसूलेनेति । न चान्यः कर्ता दृश्यते क्रिया चोपलभ्यते । किञ्च भो विग्रहवतैव क्रियायाः कर्त्रा भवितव्यम्, न पुनर्वातातपकाला अपि कर्तारः स्युः । भवेत्सिद्धं यदि वातातपकालानामन्यतमः कर्ता स्यात् । यस्तु खलु निवाते निरभिवर्षे अचिरकालकृतः कुसूलः स्वयमेव भिद्यते तस्य नान्यः कर्ता भवति अन्यदतः कुसूलात् । यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रान्यः कर्ता नास्ति । इह तु कथं—लूयते केदारः स्वयमेवेति । यत्रासौ देवदत्तो दात्रहस्तः समन्ततो विपरिपतन्दृश्यते । अत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ता भवति अन्यदतः केदारात् ।" इति । **अयमर्थः**—भिद्यते कुसूलः स्वयमेवेत्यत्र कुसूलस्य कथं कर्तृत्वमित्याक्षिप्य न चान्यः कर्ता दृश्यते क्रिया चोपलभ्यतेऽतः कोऽपि कर्ताऽवश्यमाश्रयणीयः स चान्याभावात्कुसूल एव । विग्रहवतैव—शरीरिणैव केनचन कर्त्रा भवितव्यमिति न, किन्तु वातातपादयोऽपि कर्तारः । एवमपि यत्र वातवर्षादिकं नास्ति नूतनश्च कुसूलः स्वयमेव भिद्यते तत्र कुसूल एव कर्ता । कुसूलविषये भवतु तथा, तत्रान्यः कश्चित् कर्ता नास्तीति । यत्र चान्यः कर्ता दृश्यते तत्रापि लूयते केदारः स्वयमेवेति कथं ? तत्र दात्रहस्तो देवदत्त इतस्ततो धावन् दृश्यते तत्र देवदत्त एव कर्तेति वक्तुं युक्तम् । तत्रायं समाधिः—अत्र या सुकरता तस्याः कर्ता नान्य इति केदार एव तस्याः कर्तेति निर्णयः । एवं च लूयते केदारः, भिद्यते कुसूल इत्यादौ केदारादीनां कर्तृत्वमुपपद्यते **इति** ॥ कुसूलः—अर्धभित्तिसदृशो मृत्तिकाभिः पाषाणैर्वा क्षेत्रादीनां संरक्षणार्थं निर्मीयते । यदा दात्रखनित्रहस्तो देवदत्तः केदारं लुनाति तदा सौकर्यातिशयात् देवदत्तस्य परिक्लेशो न, केदारश्च लूनो भवति तदा कर्मणः कर्तृत्वविवक्षायां लूयते केदार इति भवति । यदा क्षेत्रेऽधिकजलसंचयो जायते तच्च शालीनां नावश्यकं तदा नालिकयैकया क्षेत्राज्जलं निष्कास्यते । यदाऽधिकजलसंचयात् दात्रसंसर्गमात्रेण नालिका जायते तत्र देवदत्तस्य न कर्तृत्वं किन्तु केदारस्यैवेति तदर्थः । एवञ्च यथेदानीं जलसंचयापाकरणे कर्षका दक्षा भवन्ति तथा प्रागपि स व्यवहारस्तथैवासीदिति ज्ञायते ॥

## गवादीनामुपचारः—

**छदिरुपधिबलेर्ढञ् ५।१।१३।** इत्यत्र "इहार्थं तावद्बालेयास्तण्डुलाः । आर्षभ्यो वत्सः । ऋषभार्थो घासः । गुणान्तरयुक्ता हि तण्डुला बालेयाः । गुणान्तरयुक्तवत्स आर्षभ्यः ।" इति वदता बहुगुणविशिष्टास्तण्डुला आसन्, केचिद्बल्यर्थमुपयुज्यन्ते, केचिच्च राजभोजनाः, केचिद्गुणान्तरविशिष्टा इति सूचितम् । आर्षभ्यो वत्स इत्यनेन—अयं वत्सो वृषभत्वे योग्य इति परीक्ष्य तादृश एव वृषभकरणे नियुज्यते । एवं पश्वादीनां चिकित्सा परीक्षा चासीत्, न केवलं गोर्जातो वृषभ इति स्वीकारः । तथा ऋषभार्थो घास इत्यनेन च गवामुपयुक्तो घासोऽन्यः, वत्सोपयुक्तोऽन्यः, वृषभार्थोऽप्यन्य इति घासादीनां पशूनाञ्च गुणावगुणदर्शनेन निश्चयस्य प्रथाऽऽसीत्, घासमात्रलाभेन ते न सन्तुष्टा इति व्यज्यते ॥

**पूर्ववत्सनः १।३।६२।** इति सूत्रे "गोः सक्थनि कर्णे वा कृतं लिङ्गं गोरेव विशेषकं भवति न गोमण्डलस्य" इत्युदाहरणेन गवां प्रत्यभिज्ञानादिकं नियतमासीदिति गम्यते ॥ तथा-**अञ्चोऽनपादाने ८।२।४९।** इति सूत्रे "एवं तर्हि अञ्चे रङ्कः । अङ्कश्च प्रकाशनम् । अङ्किता गाव इत्युच्यते, अन्याभ्यो गोभ्यः प्रकाश्यन्ते" इत्युदाहरता गवां परिसङ्ख्यानादिकं सुचारुरूपेणासीदिति प्रकाश्यते ॥

**षष्टिकाः षष्टिरात्रेण पच्यन्ते ५।१।९०।** इति सूत्रे ये षष्टिरात्रिसमूहेन पच्यन्ते ते व्रीहयः षष्टिका इत्युच्यन्ते (इदानीं भाषायां 'साठी' शब्देन तेषां व्यवहारः) । तत्र वार्तिककार आह—षष्टिके संज्ञाग्रहणम् * षष्टिके संज्ञाग्रहणं कर्तव्यम् । मुद्गा अपि हि

षष्टिरात्रेण पच्यन्ते तत्र माभूदिति ॥ अत्र वार्तिककारस्यायमाशयः—मुद्गा यद्यपि षष्टिरात्रेण पच्यन्ते तेषामपि 'षष्टिकाः' इत्येवमभिधानं स्यात्, लोके तच नेष्यत इति तत्र संज्ञाग्रहणं कर्तव्यम्। संज्ञाग्रहणे कृते षष्टिरात्रेण ये पच्यन्ते व्रीहयस्तत्रैव 'षष्टिकाः' इति शब्दव्यवहारः। तेन मुद्गाः षष्टिरात्रेण पच्यमाना अपि नैतां संज्ञां लभन्ते। एवञ्च षष्टिका इति व्रीहीणामेव संज्ञेति तदभिप्रायः॥

## क्षेत्रपरीक्षा—

यथा धान्येष्वनेके प्रकारा गुणभेदादिना प्रवर्तन्ते तथा क्षेत्रादीनामपि विचिकित्साऽऽसीत्। तथा चोच्यते–**कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ५।४।५०।** इति सूत्रे "सम्पद्यन्ते यवाः, सम्पद्यन्ते शालय इति। सम्पद्यन्तेऽस्मिन् क्षेत्रे शालय इति।" अस्मिन् क्षेत्रे शालयो भविष्यन्ति, अस्मिंश्च यवा भविष्यन्तीत्यनेनास्मिन् क्षेत्रे यवापेक्षया समीचीनाः शालयः सम्भविष्यन्तीत्यर्थो गम्यते। एतच्च तदैव युज्येत यदा क्षेत्राणां धान्यादीनां विशिष्टोऽभ्यासः सम्पत्स्येत। स तथाऽऽसीदित्यनुभावयत्येतद्वाक्यम्॥

## क्षेत्रमितिः—

ईदृशे यत्र कृषिकर्म प्रवर्तते तत्र क्षेत्राणां मर्यादा स्वामिसम्बन्धोऽप्यावश्यकः, तदभावे न्यूनतैवास्यार्थस्य स्यात्। तदर्थमत्रावधेयम्–**मपर्यन्तस्य ७।२।९१।** इति सूत्रे "अयमन्तशब्दोऽस्त्येव सह तेन वर्तते। तद्यथा–मर्यादान्तं देवदत्तस्य क्षेत्रम्, सहमर्यादयेति गम्यते॥ अस्ति प्राक् तस्माद्वर्तते। तद्यथा–नद्यन्तं देवदत्तस्य क्षेत्रमिति, प्राक् नद्या इति गम्यते। तद्यः सह तेन वर्तते तस्येदं ग्रहणं यथा विज्ञायेत। नैतदस्ति प्रयोजनम्। सर्वत्रैवान्तशब्दः सह तेन वर्तते। अथ कथं नद्यन्तं देवदत्तस्य क्षेत्रमिति? नद्याः क्षेत्रत्वे सम्भवो नास्तीति कृत्वा प्राक् नद्या इति गम्यते" इत्युक्तम्। अत्र क्षेत्राणां मर्यादाऽप्युक्ता। **'मपर्यन्तस्य'** सूत्रे पर्यन्तस्येति किमर्थमुच्यते, मान्तस्येत्येव वक्तव्यमित्याक्षिप्य अन्तशब्दस्य व्यभिचारदर्शनात् **परि**ग्रहणं कृतमित्युक्तम्। अन्तशब्दस्य व्यभिचारश्च मर्यादान्तं देवदत्तस्य क्षेत्रमित्युच्यमाने मर्यादाऽपि क्षेत्रावयव इत्येव प्रतीयते नतु मर्यादां विहाय क्षेत्रमित्यर्थः प्रतीयते, नद्यन्तं क्षेत्रमित्युच्यमाने च नदीं विहाय क्षेत्रमित्येव ज्ञायते। ततश्च क्वचिदन्तशब्द**स्तेन सहे**त्यर्थस्य बोधकः क्वचि**त्तं विहाये**त्यर्थस्येति दृष्टापचारोऽन्तशब्द इति परिग्रहणमित्युक्तेऽपि पूर्वपक्षिणा तत उच्यते–अन्तशब्दः सर्वत्राहृष्टापचार एव, नद्यन्तं देवदत्तस्य क्षेत्रमित्यादौ नद्याः क्षेत्रत्वासम्भवाच्च नद्यन्तपदेन नद्याः क्षेत्रे समावेश इति तद्भावः। अत्र देवदत्तस्य क्षेत्रमिति क्षेत्रादीनां स्वामिसम्बन्धो बोधितः। इदं च क्षेत्रं देवदत्तस्य, न यज्ञदत्तस्येत्यर्थे प्रमाणमपि राज्याधिकारिभिः स्थापितमेव भवेत्। अन्यथा देवदत्तस्येत्यर्थे यदि न राजा प्रमाणं तदितरः कः शक्नुयादेवं वक्तुम्, अतो देवदत्तस्येत्यर्थे राजाऽपि प्रमाणमासीत्तदेत्यभ्युपगन्तव्यमेव। तथा मर्यादान्तमित्यनेनेदानीं यथा क्षेत्रसीम्नि पाषाणाद्युपन्यस्यते तथा तदानीमपि मर्यादाकरणविधिः प्रतीयते। एवञ्च **मर्यादापरिपालितं स्वामिसम्बद्धं पर्याप्तान्नोत्पादकं** तदानीं क्षेत्रमासीदित्यायातमनेन॥

## धान्यमूल्यम्—

तथा धान्यादीनां स्थितिप्रलयाववेक्षणीयावेवास्ताम्, येन नाशो विलोक्यते तेव तदर्थं कश्चित्प्रयत्नः क्रियत एव। धान्यस्य नाशः स्थितिश्च–**ल्वादिभ्यः ८।२।४४।** सूत्रे "पूञो विनाशे इति वक्तव्यम्। पूना यवाः। विनाश इति किमर्थम्। पूतं धान्यम्।" इत्यनेन प्रदर्शिता। धान्यं यदि नष्टं चेत् पूनमित्युच्यते, अनष्टञ्चेत्पूतमित्युच्यते–इति शब्दद्वैविध्यमेव निर्दिष्टम्। येन संशयलेशोऽपि न भवेत्। यथेदानीं वस्तुतो विचार्यमाणे, व्यवहारे धान्यस्य मूल्यं नास्ति। मूल्यं च तदेवोच्यते यस्मिन् कस्मिंश्चिदपि क्षणे आपणे नीतं वस्तु विनिमयेन व्यवह्रियेत न तथा धान्यमिति वस्तुतो धान्यस्य मूल्यमिदानीं न संरक्षितम्। तदानीं तु 'अध्यर्धशूर्पम्, अर्धपञ्चमशूर्पम्' इत्यादिभाष्योदाहरणदर्शनात् धान्येनैव ग्रामीणानां प्रत्यहं सर्वोऽपि व्यवहारः सेत्स्यतीति न तदर्थं तेषां परमुखप्रेक्षणमिति व्यवस्थितिः। अत एव धान्यस्यापि व्यवहारे मूल्यमासीदिति वक्तुं युज्यते॥

एवमेव **चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः २।१।३६।** इति सूत्रे 'महाराजार्थो बलिः स महाराजार्थो भवति, अश्वघासः, हस्तिविधा, ब्राह्मणार्थं पयः, ब्राह्मणार्थः सूपः, ब्राह्मणार्था यवागूः' इत्याद्युदाहरणैरिदं समर्थ्यते–यो राजग्राह्यो भागः सोऽपि धान्यरूपेणैव, न तु द्रव्येणेति महाराजार्थो बलिरित्येतत्सूचयति। धान्यरूपेण बलेर्निर्धारणाच्च धनिकमुखापेक्षा कर्षकाणामिति व्यवहारसौलभ्यं भवति। अश्वघासो हस्तिविधेत्यनेन समुचितोपायवन्तः कर्षका यद्यस्य रुचितं तत्तेभ्यो दत्वा निर्वृतास्तिष्ठन्ति, न हस्तिभोज्यं गोभ्यो ददते, नवाऽश्वभोज्यं हस्तिभ्यो दत्वा कृतार्थमात्मानं मन्यन्ते। कृषिसंरक्षणोपाये पशुसंरक्षणं मूलभूतमिति गवादीनां भक्ष्यविशेषनिर्देशेनोचितप्रबन्धाः पशवः संरक्ष्यन्ते स्मेति कृषेरुपकारः समर्थितो भवति। अत एव 'गोभिर्वपावान्' इति **तृतीया तत्कृतार्थेन गुणवचनेन २।१।२९।** इत्यत्रोक्तमुदाहरणं सङ्गच्छते। गोसम्बन्धिदध्याद्युपयोगाद्वपावत्वं तदैव स्याद्यदा गोदुग्धस्य प्रचुर उद्गमः स्यात्, तदर्थञ्च गवादीनां दुग्धवाहाद्युपयोगिनां सर्वतः संरक्षणं विधीयते स्मेत्यवगम्यते॥

**कर्तरि कर्मव्यतिहारे १।३।१४।** सूत्रे "कर्मव्यतिहार इत्युच्यमाने इहापि प्रसज्येत–देवदत्तस्य धान्यं व्यतिलुनन्तीति। इह च न स्यात्–व्यतिलुनते व्यतिपुनते इति" इत्युदाहरता मूलेन क्रियाव्यतिहारेण वा कर्षकाणां कार्यं समर्थयता न सामुदायिकी कृषिः, न वा एकमात्रकर्तृका कृषिरिति समर्थितम्। देवदत्तस्य धान्यमित्यादिभाष्यस्यायमर्थः–सूत्रे 'कर्मव्यतिहारे' इत्येवोच्यमाने यत्र धान्यस्य कर्मणो व्यतिहारस्तत्रैव स्यात्, यत्र क्रियाव्यतिहारस्तत्र न स्यात्। तथाच देवदत्तस्य धान्यं लवनात्प्राक् क्षेत्र एव व्यवस्थितं

कश्चित्क्रीणाति तत्र कर्मणो धान्यस्य व्यतिहारात् देवदत्तस्य धान्यं व्यतिलुनन्तीत्यत्रात्मनेपदं स्यात् । यत्र च देवदत्तेन कर्तुमुचिता लवनक्रिया वेतनेन पणनादिना वाऽन्येन क्रियते तत्र न स्यादिति । देवदत्तस्य धान्यं व्यतिलुनत इत्यत्रान्यस्तस्य क्रियां करोति न त्वत्रकर्मणो व्यतिहार इत्यत्रात्मनेपदं भवति, एतादृशक्रियाव्यतिहारेण द्रव्याभावेऽपि कृषेः सर्वं कार्यं सेत्स्यति सर्वेऽपि सुखिनो भवन्ति। अत्रार्थे यदि मूल्यस्यैव निर्भरः स्यात् तदा समये समये सर्वं कार्यं न निष्पद्येत, समयमूल्यं तु कृषिव्यवहारे परमोन्नतमिति परमुखप्रेक्षिणां कर्षकाणामसमये क्रियमाणं कार्यमक्रियमाणमेवेति महती हानिः स्यात् ॥

देवदत्तस्य धान्यं व्यतिलुनन्तीति व्यवहारस्तु कृषेः परमोन्नतिं प्रदर्शयति । धान्यं लूत्वा पूत्वाऽऽपणे च नीत्वा विक्रेयमित्येतत्तु परिमितधान्यवतां व्यवहारविषयम् । अन्ततो गत्वा यदि विक्रेयमेव यद्धान्यं तद्यदि लवनादिव्यवहारतः प्रागेव विक्रीतं भवेत् तदा तावता समयेनान्यत्कार्यं सम्पत्स्येतेत्यादिव्यवहारः सम्पन्नानामेव शोभते, न तु दरिद्राणां । परिमितधान्यवन्तस्तु तदपि कुर्वंत इति **गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ** १।४।५२ इति सूत्रे 'नयति देवदत्तः, नाययति देवदत्तेन। वहन्ति बलीवर्दा यवान्, वाहयति बलीवर्दान् यवान्। भक्षयन्ति यवान् बलीवर्दाः, भक्षयति बलीवर्दान् यवान्। मासं शेते देवदत्तः' इत्युदाहरणैः प्रदर्शितम् । परिमितधान्यवांस्तु स्वयमेव नयनानयनं करोति, ततोऽप्यधिको बलीवर्दैर्नयति । यत्र तु अधिकं धान्यं पुष्टिकामाश्च बलीवर्दानां तत्र-**भक्षयति बलीवर्दान् यवान्**इत्यपि सम्भाव्यते ॥

**क्षेत्रादीनां विशेषः—**

खलादिवर्णनमपि 'खलेयवं, खलेबुसं, लूनयवं, पूनयवं, पूयमानयवम्' इत्यादिना **तिष्ठद्गुप्रभृतीनि च** २।१।१७। इति सूत्रे समुचितं दृश्यते। अत्र हि खलेयवमित्यादिना कृषिकर्मणः परिज्ञानं यथावद्भवति। यवाः क्षेत्रतः खल आयाता इति **खलेयव**मित्यनेन बोध्यते। **खलेबुस**मित्यनेन क्षेत्रतः खल आनीय पूता यवा गृहं गताः खले बुसमात्रमवशिष्टमिति ज्ञायते। **लूनयव**मित्यनेन क्षेत्रे एव यवा लूनाः सन्तिष्ठन्ति खले नायाता इति बोध्यते ॥

**कुद्दालपदेन खारीसहस्र**मित्यनेनापि विशेषोऽयं बोध्यते-यत्र हलेन कर्षणं न सम्भवति पर्वतादौ, तत्र कुद्दालेनापि धान्यमुत्पादयन्तीति । इदानीमपि पार्वतीपरिचरणपवित्रितभूभागस्य ऋष्याश्रमसन्निधानस्य भारतवैभवस्य हिमाचलस्योपत्यकायामधिवसन्तो जनाः कुद्दालेनैव कर्षन्तीति श्रूयते । एवञ्च तदा सुसम्पन्ना कृषिः सुखयति स्म लोकानिति विज्ञाने न कोऽपि प्रत्यवायः ॥

**धान्यसञ्चयः—**

धान्यादीनां सञ्चयस्तेषां वितुषीकरणादिकमपि तात्कालिकमेवं प्रतीयते - **क्षिप्रवचने लृट्** ३।३।१३३। सूत्रे 'अवश्यं खल्वपि कोष्ठगतेष्वपि शालिषु अवहननादीनि प्रतीक्ष्याणि' इत्यादिना ॥ पूर्वं 'शाल्यर्थं कुल्याः प्रणीयन्ते' इत्यादिनाऽदेवमातृका कृषिः प्रतिपन्ना, विशालेऽस्मिन् भारते यत्र कुल्यादिकरणासम्भवस्तत्र देवमातृकत्वमपि प्रतीयते तत्रैव सूत्रे-"देवश्चेद्वृष्टो निष्पन्नाः शालयः । कश्चिदाह देवश्चेद्वृष्टः सम्पत्स्यन्ते शालय इति । स उच्यते-मैवं वोचः, सम्पन्नाः शालय इत्येवं ब्रूहि" इत्याद्युदाहरणैः । अन्यच्च वृष्ट्यनन्तरं शालीनामुत्पत्तिर्निश्चिता, न तत्र रोगादिना चौरादिव्यतिक्रमाद्वा नाशः स्यादिति रोगादिप्रतीकारोपाया राजादिसंरक्षणञ्च तत्र सन्नद्धमिति द्योतयति ॥

**ग्रामनगरादिविभागः—**

ननु सम्पन्ना कृषिरिति स्वीकारेऽपि तदा देशनगरग्रामघोषादीनां निर्माणमासीत्, उत यत्र तत्र वा यथा कथञ्चिन्निवासः। न देशविभागाः, न देशग्रामयोस्तारतम्यम्, न मार्गादीनां निर्माणमित्याद्याशङ्कादीनामवसरः स्यात्, यदि भाष्यकृता देशग्रामविषयकाणि उदाहरणानि नोपन्यस्तानि भवेयुः। तद्विषयकाणि च बहून्युदाहरणानि यत्र तत्र प्रदर्शितानि, तत्र कतिपयान्यत्र प्रस्तूयन्ते। **पृषोदरादीनि यथोपदिष्टम्** ६।३।१०९। इत्यत्र "उच्चार्य हि वर्णानाह-उपदिष्टा इमे वर्णा इति। कैः पुनरुपदिष्टाः? शिष्टैः। के पुनः शिष्टाः? निवासतश्चाचारतश्च। स चाचार आर्यावर्त एव। कः पुनरार्यावर्तः? प्रागदर्शात् प्रत्यक्कालकवनात् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारङ्गतास्तत्रभवन्तः शिष्टाः।" इत्येवं शिष्टलक्षणं विहितं, तदवसरे आर्यावर्तलक्षणं **दक्षिणेन हिमवन्तमुत्तरेण पारियात्रं**-हिमवद्विन्ध्ययोर्मध्ये कालकवनादर्शयोर्मध्ये च यो देशः स आर्यावर्त इत्युच्यते। कालकवनं-प्रयागः, आदर्शः पर्वतः, पूर्वस्यां दिशि आदर्शः पर्वतः पश्चिमस्यां च कालकवनं-प्रयागो दक्षिणस्यां हिमवान् उत्तरस्याञ्च विन्ध्य इति चतुर्णामादर्शादीनां मध्ये यो देशः स आर्यावर्त इत्युच्यते, तस्मिन्नार्यावर्ते निवसन्तः कुम्भ्यामेव येषां धान्यं ते अलुब्धाः स्वाध्यायोऽध्येतव्य इति बुध्यैव विद्यापारंगतास्ते ब्राह्मणाः शिष्टाः। तादृशशिष्टैरुपदिष्टो मार्ग एव कल्याणकरो न त्वन्यैरुपदिष्टः। अनेकनगरग्रामक्षेत्रारामनदीपर्वतविशिष्टस्य भूभागस्य देश इति संज्ञामाचक्षते पुरातत्त्वविदः॥ तस्यैतस्यार्यावर्तस्य जगतीतलभूषणभूतस्य मानचित्रम्प्रागुपनिबद्धमवलोकनीयम् ॥

अन्यत्रापि आर्यावर्तलक्षणं पुनः पुनरुपरिष्टं दृश्यते। **शूद्राणामनिरवसितानाम्** २।४।१०। इति सूत्रे केऽनिरवसिताः केच निरवसिताः शूद्रा इति विचारप्रस्तावे 'कः पुनरार्यावर्तः ? प्रागादर्शात्प्रत्यक्कालकवनात् दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्' इति पूर्ववदेव लक्षणमार्यावर्तस्योक्तम्। एतादृशदेशविशिष्टा रचनास्तदानीमासन्निति ज्ञायते॥ **विशिष्टलिङ्गो नदीदेशो ग्रामाः**

२।४।७। इति सूत्रे 'अग्रामाः' इति यदुच्यते तत्र 'ग्रामप्रतिषेधे नगरप्रतिषेधो वक्तव्यः' इति वार्तिककृतोक्तम्। नावश्यको ग्रामप्रतिषेधः, आवश्यकश्च नगरप्रतिषेध इति तदाशयः। अतश्च वार्तिककारसमये ग्रामनगरयोर्महान् भेदः संप्रत्येति। तदुदाहरणेषु "शौर्यं च केतवता च शौर्यकेतवते। जाम्बवं च शालूकिनी च जाम्बवशालूकिन्यौ" इत्यत्र शौर्य-नगरं, केतवता-ग्रामः, जाम्बवं-नगरं, शालूकिनी-ग्रामः। तत्र "एवं तर्हि आर्यनिवासादनिरवसितानाम्। कः पुनरार्यनिवासः? ग्रामो घोषो नगरं संवाह इति। एवमपि ये महान्तः संस्त्यायास्तेष्वभ्यन्तराश्चण्डाला मृतपाश्च वसन्ति तत्र चण्डालमृतपा इति न सिध्यति।" इत्युक्त्या ग्रामो घोषो नगरः संवाहा निवासविशेषाः प्रतीयन्ते।

तत्र **ग्रामश्च** प्रसिद्ध एव, **घोषः**-प्राधान्येन गोमहिष्यादीनां शालास्तदङ्गत्वेन चेतरशाला यत्र सन्ति, **संवाहः**-वणिजामापणप्रधानः (बाजारपेठ भाषा)। ग्रामलक्षणं च **आद्यन्तवदेकस्मिन्** १।१।२१। सूत्रे "लोके शालासमुदायो ग्राम इत्युच्यते। भवति चैतदेकस्मिन् एकशालो ग्राम इति। विषम उपन्यासः। ग्रामशब्दोऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते, तद्यथा-ग्रामो दग्ध इति। अस्ति वाटपरिक्षेपे वर्तते-ग्रामं प्रविष्ट इति। अस्ति च मनुष्येषु वर्तते-ग्रामो गतो ग्राम आगत इति। अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते, तद्यथा-ग्रामो लब्ध इति। तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते-एकशालो ग्राम इति।" एतादृशमुक्तम्। ग्रामं प्रविष्ट इत्युच्यमाने शालां प्रविष्ट इति न भवति किन्तु ससीमकः सारण्यकः सस्थण्डिलकः सर्वोऽपि ग्राम एवेति सीमाप्रविष्टे ग्रामं प्रविष्ट इति व्यवहारः। ग्रामश्च लघुरेकशालोऽपि भवति महांश्चानेकशालोऽपि। सारण्यके ससीमके सस्थण्डिलक इत्याद्युपवर्णनात् नैसर्गिकसीमासन्निवेशे विशेष निर्भरः प्रतीयते॥

ग्रामनगरयोर्भेदोऽपि लोकव्यवहारतः सुस्पष्टः **प्राचां ग्रामनगराणाम्** ७।३।१४। इत्यत्र "नगरग्रहणं किमर्थं, न प्राचां ग्रामाणामित्येव सिद्धम्। न सिध्यति। अन्यो हि ग्रामः, अन्यन्नगरम्। कथं ज्ञायते? एवं हि कश्चित्कंचित्पृच्छति-कुतो भवानागच्छति ग्रामात्। स आह-न ग्रामात् नगरादिति। ननु च भोः य एव ग्रामस्तन्नगरम्। कथं ज्ञायते? लोकतः। ये हि ग्रामे विधयो नेष्यन्ते साधीयस्ते नगरे क्रियन्ते। तद्यथा-अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकर इत्युक्ते सुतरां नागरोऽपि न भक्ष्यते। तथा ग्रामे नाध्येयमिति साधीयो नगरेऽपि नाधीयते। तस्माद्य एव ग्रामस्तन्नगरम्। कथं यदुक्तम्-एवं हि कश्चित्पृच्छति कुतो भवानागच्छति ग्रामात्, स आह-न ग्रामान्नगरादिति। संस्त्यायविशेषमसौ आचष्टे। संस्त्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह इति" इत्युक्तवता भाष्यकृता प्रकाशितः। ग्रामशब्दो हि जननिकायनिवासमात्रे प्रसिद्धः, निवासविशेषेऽपि च, समुदायेऽपि प्रसिद्धो भूतग्रामः-इन्द्रियग्राम इत्यादौ। अनेकार्थप्रत्यायकं ग्रामशब्दमाश्रित्यैतद्व्याख्यानं भाष्ये। अभक्ष्यो ग्राम्यकुक्कुटोऽभक्ष्यो ग्राम्यसूकरो ग्रामे नाध्येयमित्यत्र जननिकायनिवासमात्रे प्रसिद्धस्य ग्रहणम्। अत एव ग्राम्यकुक्कुटो न भक्षणीय इत्यनेन नागरोऽपि न भक्ष्यते इत्याद्युपपद्यते। ग्रामे नाध्येयमित्यत्रापि जननिकायनिवासमात्रे प्रसिद्धस्यैव ग्रहणम्। कुतो भवान् ग्रामादागत इत्यादौ संस्त्यायविशेषमसौ पृच्छतीत्यालोच्य न ग्रामान्नगरादित्युत्तरं संगच्छते। **संस्त्यायः**-जनसंनिवेशः। भूतग्रामादौ केवलसमुदायवाचकस्यैव ग्रामशब्दस्य प्रसिद्धिः। संस्त्यायविशेषविवक्षायां ग्रामो नगराद्भिन्न इत्यस्मादुपन्यासात्प्रतीयते॥

ग्रामाश्च नगराणां देशानामपि वाऽवयवाः सम्बन्धिनो वा भवन्ति। **तस्येदम्** ४।३।१२०। इति सूत्रे **खे ग्रामजनपदमनुष्येभ्य** इति वार्तिकोदाहरणे स्रौघ्नो ग्रामः, माथुरो ग्राम इति स्रुघ्ननगरस्य यो ग्रामः स स्रौघ्नो ग्राम इच्युते, मथुरानगर्या यो ग्रामः स माथुरो ग्राम इति। ये नगरसमीपे ग्रामा भवन्ति नगर एव वा येषामुपजीवनं ते तत्तन्नगरशब्दसम्बन्धित्वेन व्यवह्रियन्ते। तथा देशवाचकशब्दसम्बन्धित्वेनापि ग्रामाणां व्यवहारः 'आङ्गकः, वाङ्गकः' इत्यादिशब्दैर्भवति। अङ्गदेशस्य यो ग्रामः स आङ्गकः। वङ्गदेशसम्बन्धी यो ग्रामः स वाङ्गकशब्देन व्यवह्रियते॥

निवासाभिजनशब्दयोरपि भिन्नो व्यवहारः **सोऽस्य निवासः** ४।३।८९। इति सूत्रे "निवासाभिजनयोः को विशेषः? **निवासो** नाम यत्र सम्प्रत्युष्यते। **अभिजनो** नाम यत्र पूर्वैरुषितम्" इत्यादिना प्रतिपादितः॥

देशनगरादीनां व्याख्यानान्यपि कृतानि दृश्यन्ते। **तस्य व्याख्यान इति च व्याख्यातव्य नाम्नः** ४।३।६६। इत्यत्र 'पाटलिपुत्रस्य व्याख्यानी सुकोसला' यादृशं पाटलिपुत्रं व्याख्यानग्रन्थे प्रसिद्धमुपवर्ण्यते तादृशी सुकोसला नगरीत्युपवर्णनेन नगराणां **परिचयपुस्तिका**प्रकारास्तेषां **मानचित्राणि** वा निर्मीयन्ते स्मेति सम्भवति। शब्दश्चैतावान् रूढो यः शब्दग्रन्थेषु **व्याख्यान**मिति भवति, नगरेषु नगरव्याख्यानमिति न भवतीत्युपवर्णयता 'अथ क्रियमाणेऽपि व्याख्यातव्यनाम्नो ग्रहणे कस्मादेवात्र न भवति। अवयवशो ह्याख्यानं-व्याख्यानं, पाटलिपुत्रमपि अवयवश आचष्टे-ईदृशा अस्य प्राकाराः, ईदृशा अस्य प्रासादा इति। सत्यमेवमेतत्। क्वचित्तु काचित्प्रसृततरा गतिर्भवति। शब्दग्रन्थेषु चैषा प्रसृततरा गतिर्भवति-निरुक्तं व्याख्यायते व्याकरणं व्याख्यायत इत्युच्यते, न कश्चिदाह-पाटलिपुत्रं व्याख्यायत इति' इत्युपन्यस्तम्। नगरस्यावयवशो ह्याख्यानेऽपि नगरव्याख्यानमिति तत्र व्याख्यानशब्दो न प्रभवति। अनेन नगराणां वर्णनमवयवशः सविस्तरमितरनगरसाम्यञ्च प्रदर्श्य निःसन्दिग्धं कृतमासीदित्युपलभ्यते॥

देशान्तरगमनागमनप्रकारा मनुष्याणां नित्यमेव भवन्ति, ये व्यवसायार्थं देशदेशान्तरं गच्छन्ति क्वचिच्च चिरमधिवसन्ति

ते तत्र प्रायभवाः, ये च तत्र नित्यम्भवन्ति ते तत्रभवा इति । यथा ये मुम्बापुर्यां व्यवसायार्थमागत्य तत्र चिरं निवसन्ति ते तत्र प्रायभवा मरुदेशस्था गुर्जरा उत्तरदेशीयाश्च ॥ ये च नित्यं निवसन्ति मुम्बापुर्यां ते तत्रभवा इति व्यवहारस्तथा तदानीमपि व्यवहार आसीदिति प्रतीतिः **प्रायभवः ४।३।३९।** इति सूत्रे "यो हि राष्ट्रे प्रायेण भवति तत्र भवोऽसौ भवति, तत्र **तत्र भव** इत्येव सिद्धम् । न सिध्यति । अनित्यभवः–प्रायभवः, नित्यभवः–तत्रभवः । स्रौघ्नो देवदत्तः, स्रौघ्नाः प्रासादाः, स्रौघ्नाः प्राकारा इति" इत्यनेन वर्णनेन ज्ञायते । अत्र राष्ट्रशब्दो देशसमानार्थो व्यवहृतः ॥

तस्मिन् समये प्रसिद्धानि ग्रामनगरनामानि **अव्ययात्त्यप् ४।२।१०४।** सूत्रादौ भाष्यकृता बहुश उक्तानि–आरात्-करवतीर-कास्तीर-चणाररूप्य-दासरूप्य-शिवपुर-शाकल-निलीनक-सौयुक-निषाहकर्षू-दाक्षिकर्षु-त्रिगर्त-गर्ग-वत्स-मालव-सांकाश्य-काम्पिल्य-पातालप्रस्थ-काञ्चीपुर-नान्दीपुर-वातवह-कौकुटीवह-ब्राह्मणक-आष्टक-ऋषिक-जिह्वव-मौञ्ज इत्यादीनि नानाविधानि विचित्राणि च मनसो मोदकराणि संदृश्यन्ते । पस्पशाह्निके **'सर्वे देशान्तरे'** इति व्याख्यानावसरे "सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते, न चैवोपलभ्यन्ते । उपलब्धौ यत्नः क्रियताम् । महान् शब्दस्य प्रयोगविषयः–सप्तद्वीपा वसुमती त्रयो लोकाः" इत्याद्युक्तवतो भाष्यकारस्य अनेकदेशग्रामाद्यभिधानप्रस्तावो न चित्रकरः, किन्तु स्वाभाविक एव । **अइउण्सूत्रव्याख्यानावसरे** 'तानेव शाटकानाच्छादयामः, ये मथुरायाम् । तानेव शालीन् भुञ्ज्महे, ये मगधेषु । तदेवेदं भवतः कार्षापणं, यन्मथुरायां गृहीतम् । अन्यस्मिंश्चान्यस्मिन् रूपसामान्यात्तदेवेदमिति भवति' इत्यादिवचनैर्द्वौ यात्रिणौ स्वानुभवं परस्परमुपपादयतः । एतेन च यात्रायामभिरुचिः स्वानुभवसम्पादनस्वभावश्च प्रतिपादितो भवति । यात्राभिरुचिवैशिष्ट्यादेव च **चार्थे द्वन्द्वः २।२।२९।** सूत्रे–

**'उपास्नातं स्थूलसिक्तं तूष्णींगङ्गं महाह्रदम् ।**
**द्रोणश्चेद्दशको गन्तुं मा त्वा तासां कृताकृते ॥'**

इत्युक्तिः सङ्गच्छते ॥

## मार्गप्रबन्धः—

**कालाध्वनोरत्यन्तसंयोगे २।३।५।** इति सूत्रे 'शय्यते क्रोशम्' इत्युदाहरणात् रथादिवाहनैर्गच्छन् पुरुषः क्रोशं शेते इत्यभिव्यक्तिबलात् अनेके पन्थानः शिल्पिभिः कृता व्यवतिष्ठन्त इति प्रतीतिः । तथा तत्रैव 'क्रोशं कुटिला नदी क्रोशं रमणीया वनराजिः' इत्युदाहरणात् वनराज्या सुशीतलाः सुगमाश्च पन्थान आसन्नायासेन पान्था गमागमं कुर्वत इति । अत एव "कुतो भवानागच्छति ? पाटलिपुत्रादागच्छामि । गवीधुमतो निःसृत्य सांकाश्यं चत्वारि योजनानि । दक्षिणतो ग्रामस्य उत्तरतो ग्रामस्य उपरिष्टाद्ग्रामस्य" इत्यादिनिर्देशास्तत्रतत्रोपलभ्यमानाः संगच्छन्ते ॥

नगराणां निर्देशः क्वचिन्नदीसहचरितोऽपि दृश्यते । **यस्य चायामः २।१।१५।** इति सूत्रे "अनुगङ्गं वाराणसी, अनुगङ्गं हास्तिनपुरम्, अनुशोणं पाटलिपुत्रम् । यस्य चायाम इत्युच्यते । गङ्गा चाप्यायता, वाराणस्यप्यायता, तत्र कुत एतत् गङ्गया सह समासो भविष्यति, न पुनर्वाराणस्येति । एवं तर्हि 'लक्षणेन' इति वर्तते । गङ्गा चैव लक्षणं न वाराणसी । अथवा 'यस्य चायामः' इत्युच्यते । गङ्गा चाप्यायता वाराणस्यप्यायता । तत्र प्रकर्षगतिर्विज्ञास्यते–साधीयो यस्यायाम इति । साधीयश्च गङ्गायाः, न वाराणस्याः ।" इत्ययामवन्ति महान्ति नगराणि प्रदर्श्यन्ते । अस्य भाष्यस्य चायमाशयः–यत्सम्बन्धि आयामबोधकोऽनुः स तेन सुबन्तेनोपस्थितत्वात् षष्ठ्यन्तेन समस्यत इत्यर्थे गङ्गाऽपि दीर्घा वाराणस्यपि, यथाऽनुगङ्गं वाराणसीति भवति तथा–अनुवाराणसि गङ्गेति कथं नेत्याशङ्क्य पूर्वसूत्रादत्र लक्षणेनेति पदमनुवर्तते, तेन लक्षणवाचकेन समस्यत इत्यर्थात् अनुगङ्गमित्येव भवति, यतो हि गङ्गा लक्षणम् । अथवा वाराणसी आयता गङ्गाऽप्यायता, तत्र वाराणस्यपेक्षया गङ्गाऽऽयतेति अनुगङ्गमित्येव भवतीति । एतानि नगराणि सम्पन्नानि सुदीर्घाणि महान्ति गङ्गादिभिः प्लावितानि च शोभन्ते स्म । इदानीमपि तानि नगराणि प्रधानान्येव वर्तन्ते । यद्यपि पाटलिपुत्रहास्तिनपुरयोः नामविपरिवर्तनेऽपि महत्वं तयोस्तदवस्थमेव । अनुमीयते च पुरातने काले इमान्यतिविस्तृतान्येव नगराण्यासन्निति । यत इमानि महान्ति नगराण्यासन्नतस्तत्र नगरप्रबन्धकैः प्रयत्नैरपि भवितव्यमेव, तद्विषये किञ्चिद्वक्तव्यमिति नोदाहरणतः सुस्पष्टं प्रतीतमस्माभिः ॥

एतावत्तु प्रतीयते–तत्समयेऽपि नूतननगरग्रामादिनिर्माणमपि सञ्जातमिति । अत एव **न वेतिविभाषा १।१।४३।** सूत्रे 'ग्रामो भवता गन्तव्यो नवः, प्रत्यग्र इति गम्यते' इत्युक्तं सङ्गच्छते । नगरयोः परस्परं विप्रकर्षोऽपि प्रतिपादित एतद्बोधयति–तत्रत्या नागरिका विशिष्टगुणाधाने बद्धपरिकरा नगराणामैश्वर्यं बहुतरमवीवृधन्निति । अत एव **ध्रुवमपायेऽपादानम् १।४।२४।** इत्यत्र "इह च सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा इति यस्तैः साम्यं गतवान् भवति स एतत्प्रयुङ्क्ते" इत्युक्तमुपपद्यते । सांकाश्यकपाटलिपुत्रयोः समगुणत्वात् साम्यमवगत्य पाटलिपुत्रे कश्चित् विशेषं पश्यति स एतत्प्रयुङ्क्ते इति तदर्थः । तथा 'ग्रामादागच्छति शकटेन' 'ग्रामादागच्छन् कंसपात्र्यां पाणिनौदनं भुङ्क्ते' इत्युक्तिर्ग्रामीणानां व्यवहारं बोधयति ॥

## वैद्यकप्रबन्धः—

नगरेषु ग्रामेषु वा वैद्यकप्रबन्धः कीदृश इत्यवलोकने मुक्तकण्ठेनैवं वक्तव्यम्–इदानीं परिदृश्यमानो वैद्यकव्यवहारस्तद्व्यवहार-

विमर्शने न दृष्टिगोचरो भवति। भवन्ति च 'नड्वलोदकं पादरोगः, पादरोगनिमित्तमितिगम्यते। दधित्रपुसं प्रत्यक्षोज्वरः।' इत्येवंविधा व्यवहारा दृष्टिगोचराः। रोगोत्पत्त्यनन्तरं तदुपशमोपायाश्चेदानीन्तनानाम्, रोगोत्पत्तिरेव प्रतिबध्यते प्राचीनैः। एतादृशवैलक्षण्य इदमेव वक्तुं पार्यते—

'अहरहर्नयमानो गामश्वं पुरुषं पशुम्।
वैवस्वतो न तृप्यति सुराया इव दुर्मदी॥'

इति **चार्थे द्वन्द्वः** ।२।२।२९। इति सूत्रोक्तवचनानुसरणमेव। रोगे रोगे चिकित्सायां नवीनाविष्कारमाविष्कुर्वद्भिः—मस्तकशूले इदमौषधं, उदरव्याधाविदं, कर्णोपशमनार्थमिदमित्यादिव्याध्युत्पत्त्यनन्तरमेव चिकित्साविद्भिः पाश्चात्यानुसरणशालिभिर्वैद्यैः "यथा दुर्मदी (अल्पेन पानेन यस्य मदो न भवति बहुतरं पानमपेक्ष्यते सः) सुरया न तृप्यति यमराजोऽपि अहरहर्नयमानो न तृप्यति तथा वैद्यराजोऽपि रोगैर्न तृप्यति—नवीनरोगाविष्करणे दत्तचित्तो भवति" प्रयत्यते, न तेन तादृशो लोकोपकारो न तथा व्याधिनिवृत्तिः॥

## रोगप्रतिबन्धार्थं दृष्टादृष्टोपायाः—

ननु यमराजेनैते पास्पर्धमाना नवीनाविष्करणैस्तत्साहाय्यमेव कुर्वते। बहुवित्तव्ययसाध्यश्चायं मार्गो नवीनानाम्। वस्तुतस्तु प्राचीनप्रणाल्यां चिकित्सा दृष्टाऽदृष्टविषयिका द्विविधाऽप्यासीदिति **आमः** २।४।८१। इति सूत्रे 'चक्षुष्कामं याजयांचकार' इत्याद्युदाहरणैर्दृश्यते। कश्चिद्देवदत्तोऽन्धत्वं प्राप्तो दृष्टोपायैर्निस्तरणमनभिपश्यन् अदृष्टोपायार्थं यतत इत्यादि प्रकथनमपीदानीं दोषायतनं स्यात्। वस्तुतस्तु व्याधयो द्विविधा दृष्टकारणका अदृष्टकारणकाश्च। तत्र दृष्टकारणा दृष्टैरेवोपायैः शाम्यन्तीति न विवादः। अदृष्टकारणाश्च कुष्ठादिसदृशा न दृष्टोपायैः कदापि शाम्यन्तीति अदृष्टोपायकरणं न दोषाय। अत एव दृष्टकारणकान् रोगान्निवर्तयितुं रोगे रोगे औषधमित्युपायो न शिष्टसम्मतः किन्तु रोगकारणान्निवर्तयितुं तादृश आचार एवानवद्यः पन्था इति तदभिप्रायः। अत एव तादृशापत्तिपरिहारार्थमाचारविशेषं श्रुत्यादिभिः प्रतिपादितं तदानीन्तनानां सुपरिचितमेव, उदाहरणमुखेन जनसांमुख्यमुपनयति भगवान् भाष्यकारः। तद्यथा—**चतुर्थ्यर्थे बहुलं छन्दसि** २।३।६२। इति सूत्रे 'या खर्वेण पिबति तस्यै खर्वो जायते, यां मलवद्वाससं सम्भवन्ति यस्ततो जायते सोऽभिशस्तः, यामरण्ये तस्यै स्तेनः, यां पराचीं तस्यै ह्रीतमुख्यपगल्भः, या स्नाति तस्या अप्सुमारुकः, याऽभ्यङ्क्ते तस्यै दुश्चर्मा, या प्रलिखते तस्यै खलतिरपस्मारी, याऽङ्क्ते तस्यै काणः, या दतो धावते तस्यै श्यावदन्, या नखानि निकृन्तते तस्यै कुनखी, या कृणत्ति तस्यै क्लीबः, या रज्जुं सृजति तस्या उद्बन्धुकः, या पर्णेन पिबति तस्या उन्मादुको जायते' इति। अनेन मातृदोषविशेषेण बालकस्य रोगोत्पत्तिं विभावयन्नीरोगप्रसवार्थं व्यतिरेकेणाचारविशेषमुपशिक्षयति॥ रजस्वलाऽऽचारप्रस्तावेऽयमुपन्यासस्तैत्तिरीयश्रुतौ प्रसिद्धः। अनेनोपन्यासेनेदानीन्तना जना बहुशिक्षितव्या भवेयुः, आचाराश्चैते धार्मिका इति कृत्वा निर्धर्मकैरुपेक्ष्यन्ते, आचारविद्वेषिणश्चाल्पबुद्धयो निर्मर्यादाः पैशाचादीन्धर्मानुपस्तुवन्ति, साम्यवादमभिकामयमानाश्च नैसर्गिके रजःप्रवर्तने कीदृशोऽयं रजस्वालनामाचारो देहाद्युपदण्डनञ्चेत्यभिमन्यमाना आचारविच्छेदेन स्वीयं नवनीतादपि सुकोमलं हृदयं ख्यापयन्ति। एवमनेकप्रकारैरुपहन्यमानोऽपि भारतीयाचारः पूर्ववत् यावन्नाश्रियेत, परमुखप्रेक्षिभिः शिशुबुद्धिभिर्यावदुपेक्ष्येत, स्वार्थवञ्चनाप्रवणैर्यावज्जनानां बुद्धिभेदः परिकल्प्येत तावद्विनिपात एव सांमुखीनः, का कथाऽभ्युन्नतेरिति खलु न विस्मर्तव्यन्तत्रभवद्भिर्जननेतृभिः॥

इदानीं दृश्यमानानि रुग्णसेवासदनानि तदाऽऽसन्नवेति विचार्यमाणे सुस्पष्टन्तादृशार्थप्रतिपादकानि वाक्यानि नोपलभ्यन्त इत्येव वक्तव्यं स्यात्। व्याधितानां वर्णनञ्च क्वचिदुपलभ्यत एव। तद्यथा—**भूवादयो धातवः** १।३।१। इति सूत्रे "एवं हि कश्चित्पृच्छति—किमवस्थो देवदत्तस्य व्याधिरिति, स आह—वर्द्धते, अपर आह—अपक्षीयते, अपर आह—स्थितः" इति। अनेकक्रियाभिरुत्तराणि ह्येवं बोधयन्ति—कस्यचन व्याधिः स्थितः, कस्यचन वर्धते, कस्य चनापक्षीयत इति बहुषु व्याधितेषु मिलितेषु चिकित्सकेन पृष्टोऽन्यश्चिकित्सको वक्तीति रुग्णालयवर्णनेन भाव्यमिति॥

तथा—**अनुदात्तङित आत्मनेपदम्** १।३।१२। सूत्रे 'एतिजीवन्तमानन्दः, नास्य किञ्चिद्रुजति' इत्युदाहरणे स्वस्थोऽयं देवदत्तो नास्य किञ्चिद्रुजति, जीवन्तं पुरुषमानन्दः प्राप्नोतीति तदर्थं यतनीयं नोपेक्षा करणीयेति चिकित्सकानां व्यवहारं बोधयतः॥ **अस्मदो द्वयोश्च** १।२।५९। इत्यत्र 'इदं मे अक्षि सुष्ठु पश्यति, अयं मे कर्णः सुष्ठु शृणोति, अनेनाक्ष्णा सुष्ठु पश्यामि, अनेन कर्णेन सुष्ठु शृणोमि' इत्युदाहरणानि नेत्रकर्णादिचिकित्सकसविधे तद्व्याधितानामुत्तराण्यपि सम्भवन्ति। एतेन तदानीन्तने काले चिकित्साप्रकाराः शुश्रूषाविशेषाश्च समवर्तन्तेत्यनुमाने न हेत्वाभासाः प्रभवेयुः॥

चिकित्साप्रकारा भिन्ना भिन्ना आसन्नित्यप्यवगन्तुं शक्यते **नानोर्ज्ञः** १।३।५८। इति सूत्रे 'औषधस्यानुजिज्ञासते' इत्युदाहरणावलोकनेन। औषधस्यानुजिज्ञासत इत्यस्य हि औषधेन प्रवर्तितुमिच्छतीत्यर्थः। एवञ्चान्यचिकित्साकरणानन्तरमिदानीमोषधीभिश्चिकित्सितुमिच्छतीत्यनेन विविधाश्चिकित्साप्रकारा ज्ञायन्त इति सिद्धम्। अस्मिन् विषये प्राचीनानामभिमतोऽर्थः—सदाचरणेन रोगोत्पत्तिरेव प्रतिबन्धनीया, एवम्प्रयतमानस्यापि यदि दैववशात्कश्चिद्व्याधिरुत्पद्येत तत्कारणान्येव चिकित्सितव्यानि न तु परकीयां चिकित्सापद्धतिमवलम्ब्य स्वात्मनाशवत् द्रव्यनाशोऽपि विधेय इत्येव॥

## नगरादीनां निर्माणम्—

इदानीं नवराष्ट्रनिर्माणप्रसङ्गो राजकीयपुरुषाणां सांमुख्यमादधाति । एतादृशे समये प्रस्तुतो विषयोऽपि जनकल्याणमतिभिर्नोपेक्षणीय एव । यादृशेनोपायेन सर्वेषां जनानामत्यन्तं हितं स्यात्तादृश एवोपाय आश्रयणीय इत्येतत्र विवादास्पदम् । अत एवेतिहासविद्भिः परमहितैषिभिः परिवर्तिनि संसारेऽस्मिन् येनोपायेन कुशलिनो जनाः सम्पत्स्यन्ते स उपायः समादरणीयश्चेत्, एतद्देशप्राचीनपरम्परादर्शनादेव कुशलम्, न परकीयदेशाचारमुखप्रेक्षणेन । नवराष्ट्रनिर्माणप्रसङ्गोऽपि भाष्यकृता **कस्यच दः** ५।३।७२। इत्यत्र 'नवग्रामकं, नवराष्ट्रकं, नवनगरकं' इत्युदाहरता प्रतिपादितः । ग्रामो नवो विधीयते स्म, नवनगरनिर्माणदक्षा अपि तदानीन्तनाः पुरुषाः, नवराष्ट्रनिर्माणेऽपि बद्धपरिकराः सफलाश्चेति सर्वमनेन प्रतीयते ॥

नगरादीनां निर्माणे यत्र विशेषतोऽवधेयं तत् **स्थानेऽन्तरतमः** १।१।५०। सूत्रे भगवता महता कौशल्येन प्रतिपादितम् । तदित्थम्—"समाजेषु समाशेषु समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः । येषामेव किञ्चिदर्थकृतमान्तर्यं तैरेव सहासते । यथा गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति तेन सह शेरते । तथा यान्येतानि गोयुक्तानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति ॥ एवं तावच्चेतनावत्सु ॥ अचेतनेष्वपि यथा-लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः ॥ तथा-या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः । स धूम आकाशे निवाते नैव तिर्यग्गच्छति नार्वागवरोहति । आब्विकारोऽप एव गच्छत्यान्तर्यतः ॥ तथा—ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग्गच्छति नार्वागवरोहति । ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः" इति । 'नैव कृशाः' इत्यस्य व्याख्यानवेलायां "गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः" इति व्याख्यातं कैयटेन । प्रदीपव्याख्यानावसरे **'विद्यादीति'** इति प्रतीकमुपादाय "आदिनोत्सवाशनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसङ्ग्रहः" इत्युक्तं **नागेशभट्टेन** । अनेन प्रघट्टकेन चेतनाचेतनसाधारणधर्मप्रतिपादकेन येषां किञ्चिदर्थकृतमान्तर्यं तेषामेवैकत्र निवासः सम्भवति । अर्थकृतमान्तर्यञ्च समानोत्सवत्वेन समानाशित्वेन समानेच्छावत्वेन समानजातित्वादिना वा भवति न विरुद्धधर्मवत्वेनेति तदनुगुणानामेवैकन्नगरं राष्ट्रं ग्रामो वा भवति । तथा च विरुद्धसंस्कारवतां विद्वेषस्वभावानां क्रूराणां जडाभिमानिनामनिच्छयाऽवकाशे प्रदत्तेऽपि अनुनयसम्पादनं विफलमेवेत्यवधेयम् ॥

यथेदानीं विशिष्टवर्गीयाः पुरुषा उपपत्त्यनुपपत्तिमवलोक्य यत्र तत्र वसन्ति यतस्ततो वाऽन्यत्र गच्छन्ति तद्वत्तदानीमपि विशिष्टवर्ग्या इतस्ततो गच्छन्तीति **गतिश्च** १।४।५९। इत्यत्र "विगताः सेचका अस्माद्ग्रामात्-विसेचको ग्रामः, प्रगता नायका अस्माद्ग्रामात्-प्रनायको ग्रामः" इत्यादिनोपवर्ण्यते । तत्र सेचनकार्याभावात्, अन्यत्र सेचनमूल्यधिकं मन्यमानानां वाऽन्यत्रगमनं सम्भवति तेषाम् । कार्यवशाद्ग्रामे नेतारः समापन्नाः कार्यावसानेऽन्यत्र गच्छन्ति, समुचितनेतृत्वकरणदक्षा अभ्युन्नत्यपेक्षयाऽन्यत्र गच्छन्ति, अथवा सर्वेऽपि यत्र नेतारस्तत्रापीदं वक्तुं योग्यम् ॥

## नगरादीनां संज्ञाः—

ग्रामनगराणां नामान्यपि तत्रत्यविशिष्टवस्त्वपेक्षया समाजापेक्षयैव वा निर्वर्त्यन्ते स्मेति **मतोश्च बह्वजङ्गात्** ४।२।७२। इत्यत्र "मालावतामयं निवासो मालावतम्, श्ववान्, उदुम्बरावती, मशकावती" इत्युदाहरणैः प्रतीयते । यत्र मालावन्त एव प्राधान्येन निवसन्ति तन्नगरं मालावतम्, यत्र शोभनाः श्वान उत्पद्यन्ते, श्वानश्च यत्र तत्र भवन्ति, ग्रामेऽस्मिन् विशिष्टा व्याघ्र इव शूरा मृगयानिपुणा रक्षकाश्च श्वानो दृश्यन्ते इति श्ववान् ग्राम इत्युच्यते । यस्याः परिसरे वृक्षा उदुम्बरा बहवः सन्ति, यत्र वा देहल्यो बहवः सन्ति सोदुम्बरावतीत्यन्वर्थं नाम ( उदुम्बरस्तु देहल्यां वृक्षभेदे च पण्डके इति मेदिनी ) । एवञ्च गुणविशेषात् अभिजनविशेषाद्वा ग्रामादीनामभिधानानि प्रवर्तन्ते स्म । ग्रामश्च प्रायः सर्वजातिविशिष्ट एव परिपूर्णो भवतीति व्यवहारस्य—**एच इक् ह्रस्वादेशे** १।१।४८। इत्यत्र "भूयस एव ग्रहणानि भविष्यन्ति । तद्यथा-ब्राह्मणग्राम आनीयतामित्युच्यते । तत्र चावरतः पञ्चकारुकी भवति" इत्युदाहरणेनोपपत्तिः । यत्र ब्राह्मणग्रामोऽयमित्युच्यते तत्राप्यन्ये निवसन्त्येव न तु केवलं ब्राह्मणा निवसन्तीति ब्राह्मणग्राम इति भवति । एवमेव क्षत्रियग्रामो वैश्यग्रामः शूद्रग्राम इत्यादीनामुपपत्तिरनुसन्धेया, न तु क्षत्रियग्राम इत्युक्ते क्षत्रिया एव निवसन्ति, नान्ये केचन तत्रासन्; ये वा समावसन्ति ते निर्लुठिता निष्कासिता वेति न प्रतिपत्तिः । **पञ्चकारुकी**शब्देन कुलालकर्मारवर्धकिनापितरजका गृह्यन्ते, ब्राह्मणप्रधानग्रामेऽपि ते सुखेन निवसन्त्येव । अत एव **आकडारसूत्रे** 'अब्राह्मणको देशः, अवृषलको देशः, वीरपुरुषको ग्रामः' इत्यादीन्युदाहरणानि सामञ्जस्येन सङ्गच्छन्ते ॥

## मार्गाः—

**योजनं गच्छति** ५।१।७४। इति सूत्रे "क्रोशशतादभिगमनमर्हति क्रौशशतिको भिक्षुः, योजनशतादभिगमनमर्हति यौजनशतिको गुरुः" इत्यादिना देशे निवसन्तः पुरुषा योजनशतादागच्छन्तं गुरुमधिगच्छन्तीति सुगमाः सानुबन्धाः सूपन्यस्ताश्च पन्थानो बोध्यन्ते । अत एव मार्गाणां प्रकारविशेषा **उत्तरपथेनाहृतञ्च** ५।१।७७। इत्यत्रानेकान्युदाहरणानि प्रदर्शयता बोध्यन्ते । तानि यथा-"वारिपथेन गच्छति-वारिपथिकः, वारिपथेनाहृतम्-वारिपथिकम्, जङ्गलपथेन गच्छति-जाङ्गलपथिकः,

जङ्गलपथेनाहृतं–जाङ्गलपथिकम्, स्थलपथेन गच्छति–स्थालपथिकः, स्थलपथेनाहृतं–स्थालपथिकम्, कान्तारपथेन गच्छति कान्तारपथिकः, कान्तारपथेनाहृतं–कान्तारपथिकम्, अजपथेन गच्छति–आजपथिकः, आजपथिकम्, शङ्कुपथेन गच्छति–शाङ्कुपथिकः, शांकुपथिकम्' इत्यादीनि। अनेनोदाहरणजालेन तदा मार्गाणामनेके प्रकारास्तेषु भिन्नाः संव्यवहाराश्चासन्निति सुभगाः सुसम्पन्नाः सुभिक्षाः सम्पन्नपानीया देशा भारतभूमिमलङ्कुर्वन्ति स्मेति **विशेषणानां चाजातेः १।२।५२।** इत्यत्र 'सुभिक्षः सम्पन्नपानीयो बहुमाल्यफलो देशः' इत्युदाहरणदानेन समर्थयति भगवान् भाष्यकारः॥

## जन्मना जातिः—

ईदृशे सुभिक्षे सम्पन्नपानीये बहुमाल्यफले देशे मनुष्याः किं समानधर्मिणः समानरूपाः समानगुणविशिष्टा वा वसन्ति स्म, उत विभिन्नजातीया विभिन्नरूपा विभिन्नगुणविशिष्टा वेति विचार्यमाणे **सर्वेऽप्यत्र सुखेन निर्वहन्ति स्मेति** वक्तुं पार्यते। जातयश्चापि यथा सम्भवं यत्र तत्रोदाहरणेषु प्रतिपन्ना उल्लेखनीया एवेति जातिलक्षणं प्रथमतः प्रदर्श्यते। **अतिशायने तमबिष्ठनौ ५।३।५५।** इति सूत्रे "यदप्युच्यते जातेर्नेति वक्तव्यमिति। न वक्तव्यम्। **जननेन या प्राप्यते सा जातिः।** न चैतस्यार्थस्य प्रकर्षाप्रकर्षौ स्तः।" इत्यनेन जन्मना या प्राप्यते सा जातिरिति गुणोपष्टम्भादिना न जातिरिति प्रतिपादयति। यथा काकाज्जातमात्रे प्राणिनि काकत्वं, शुकाज्जातमात्रे च शुकत्वं, मनुष्याज्जातमात्रे च मनुष्यत्वं, तथा शूद्राज्जातमात्रे शूद्रत्वं, क्षत्रियाज्जाते च क्षत्रियत्वमिति जातमात्रे वस्तुनि तत्तज्जातिमत्वमस्त्येवेति। भाष्यार्थश्च–तमबिष्ठनौ प्रत्ययौ जातेर्न भवन्तीति वक्तव्यमित्याक्षिप्य या जननेनैव प्राप्नोति तत्र कः प्रसङ्गः प्रकर्षाप्रकर्षयोरिति **जातेर्नेति** न वक्तव्यमिति। जातेर्नेति वक्तव्यमित्यस्योदाहरणप्रसङ्गे 'वृक्षोऽयम्, वृक्षोऽयम्' इत्युदाहृतम्। यत्र तृणानि लता गुल्मानि वा वर्तन्ते न वृक्षास्तत्र महान्तं सुच्छायं महत्फलं वृक्षमेकमुपलभ्य वृक्षोऽयमित्युच्यते। तत्र लतावीरुधादिभ्यो वृक्षेऽतिशयः सम्प्रतीयते, स एव व्यक्तावुपलभ्यमानोऽतिशयो वृक्षत्वजातावप्युपलभ्यत इति जातिवाचकाद्वृक्षशब्दात्तमबिष्ठनौ प्राप्नुतस्तदर्थं **जातेर्नेति** वक्तव्यमिति सम्प्रतिपन्नं, जन्मना प्राप्यमाणे वस्तुनि न कश्चिदतिशय इति समाधत्ते। कश्चिद्राजगृह उत्पद्यते, कश्चिद्भिक्षुगृहे, तयोर्बालकयोः को गुणातिशयः? एवञ्च जन्मना जातो ब्राह्मणो जन्मना जातः क्षत्रियो जन्मना जातश्च शूद्र इत्यनयोर्न कोऽपि द्वयो विशेषः, केवलज्जातिभेददर्शनात्तेषां भिन्नाः संस्कारा भवन्तीत्येव। यथा काकाज्जाते शिशौ न स्तनपानसंस्कारः काकेन क्रियते न वा गोवत्से काकवत् मुखेनान्नरससंस्कारं गौर्विधत्ते तथा क्षत्रियबालके भिन्नाः संस्काराः, शूद्रबालके चान्ये, ब्राह्मणबालके चान्ये- इति जातिभेदनिमित्तं संस्कारभेद इत्येव, न कश्चित्तेषां बालकानां द्वयः प्रकर्षश्चाप्रकर्षश्च भाष्यकारसमये केषाञ्चनेष्टः॥

अत एव **पुंयोगादाख्यायाम् ४।१।४८।** इति सूत्रे–त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च। एतच्छिवं विजानीहि ब्राह्मणाग्र्यस्य लक्षणम्॥ इत्यादीनि ब्राह्मणादीनां लक्षणान्युपसंगृहीतानि भाष्ये॥

अथ संस्कारभेदोऽपीदानीमस्माभिर्नाभिप्रेयते, ये संस्कारा ब्राह्मणबालकेषु क्रियन्ते त एव क्षत्रियबालकेषु अन्येषु वेल्याग्रहश्चेत्, क्षत्रियबालका ब्राह्मणसंस्कारैः संस्क्रियमाणा अजसमूहे पाल्यमानो व्याघ्रशिशुर्वृकं दृष्ट्वाऽजशब्दमिव शत्रुं दृष्ट्वा यज्ञोपवीतं प्रदर्शयेयुः। एवञ्च जन्मना जातिमभिमन्यमानास्तदानींतनीयाः सुखेनैव कालं व्यतिचक्रमुः॥

## संस्कारादिभिर्न जात्युत्पत्तिः—

केवलं क्षत्रियसंस्कारैः संस्क्रियमाणाः सर्वेऽपि क्षत्रिया भवेयुरित्यपि नेत्यग्रिमोपन्यासेन समवधेयम्। **अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४।१।१०४।** इत्यत्र "अनृष्यानन्तर्य इत्युच्यते तत्रेदं न सिध्यति–कौशिको विश्वामित्र इति। किं कारणम्। विश्वामित्रस्तपस्तेपे नानृषिः स्यामिति, तत्र भवान् ऋषिः सम्पन्नः। स पुनस्तपस्तेपे नानृषेः पुत्रः स्यामिति, तत्रभवान् गाधिरपि ऋषिः सम्पन्नः। स पुनस्तपस्तेपे नानृषेः पौत्रः स्यामिति, तत्रभवान् कुशिकोऽपि ऋषिः सम्पन्नः। तदेतदृष्यानन्तर्यम्भवति।" इत्युक्तम्। क्षत्रियो विश्वामित्रो ऋषित्वसम्पत्तये तपश्चचार तपसा स ऋषिः समभूत्। एवमेव तपसा गाधिकुशिकावपि ऋषी समभूताम्। विरुद्धसंस्कारमात्रेण जातिविपरिवर्तनं नैव भवतीति तेषां मतिः। अन्यथा चाण्डालेष्वपि ब्राह्मण्यमाधातुं कृतप्रयत्नं कञ्चन धर्मपरिवर्तनक्षमं महामहोपाध्यायमाहूय ब्राह्मण्यमनुभूयमानो विश्वामित्रस्तपश्चरणक्लेशसंवरणादिकं नाकरिष्यत्। एवञ्च तपःसामर्थ्यमपि तदा नितरां सम्मन्यते स्मेत्यपि निर्विवादम्। तदानीं जातिभेदसत्वादेव **आदेच उपदेशेऽशिति ६।१।४५।** इति सूत्रे 'तथा ह्यर्थो गम्यते लोके–अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशमानयति, नासौ लोष्टमानीय कृती भवति' इति व्यवहारः सामञ्जस्येनोपपद्यते॥

## जातिभेदाः—

जातिभेदसमाश्रयणादेव च **प्रत्यभिवादेऽशूद्रे ८।२।८३।** इति सूत्रे 'भो राजन्यविशां वेति वक्तव्यम्। राजन्य–इन्द्रवर्माऽहं भोः। आयुष्मानेधीन्द्रवर्मा ३ न्। विश्–इन्द्रपालितोऽहं भोः। आयुष्मानेधीन्द्रपालिता ३' इत्यादिना राजन्यवैश्ययोर्विकल्पेन, शूद्रब्राह्मणयोश्च नित्यं प्लुतं विधाय शर्मवर्मपालितदासास्तत्तज्जातिविशेषा अपि प्रदर्श्यन्ते। ब्राह्मणादीनां लक्षणञ्चाकारि भाष्यकृता

**तेन तुल्यं क्रिया चेद्वतिः** ५।१।११५। इत्यत्र "सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते–ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति । आतश्च गुणसमुदाये, एवं ह्याह—

तपः श्रुतञ्च योनिश्चेत्येतद्ब्राह्मणकारकम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥

तथा गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति । समुदायेषु च शब्दा वृत्ता अवयवेष्वपि वर्तन्ते । एवमयं ब्राह्मणशब्दः समुदाये वृत्तोऽवयवेष्वपि वर्तते" इत्यादिलक्षणानि ब्राह्मणादीनां तत्तज्जातिविशिष्टानामुक्तानि विराजन्ते प्राचीनानाम् । अत्रहि **तेन तुल्यं क्रिया चेदि**त्युक्तौ तृतीयान्तेन ब्राह्मणादिशब्देन क्रियायाः सामानाधिकरण्ये वतिप्रत्ययो विधीयते । ब्राह्मणेन तुल्यमधीते क्षत्रिय इत्यादौ ब्राह्मणक्षत्रिययोरध्ययनक्रिया तुल्या प्रतीयते, तत्र क्रियया सामानाधिकरण्यमनुपपन्नमिति प्रत्ययो न स्यादित्याक्षिप्य समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति अवयवबोधकशब्देनापि तेषां सामानाधिकरण्यम्, तैलं भुक्तमित्यादौ यथा समुदायेऽपि वर्तमानस्तैलशब्दो भुक्ता या मात्रा तत्रापि व्यवह्रियते तथा क्रियादावपि अवयवे ब्राह्मणशब्दस्य सत्वेन न सामानाधिकरण्यस्यानुपपत्तिः । अत एव शौचाचारादिविहीने केवलजन्मना जातमात्रेऽपि तत्तच्छब्दव्यवहार उपपद्यते । गौरः शुच्याचार इत्यत्र गौरपदेन गौरवर्णविशिष्टो न, किन्तु—

अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते ।
सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः ॥

इति धर्मशास्त्राभिप्रायेण गौरीपुत्र एव गौरपदवाच्यः । तथा च स्त्रीणामभ्युन्नतिकामैरपि विवाहवयोमर्यादाकरणं शास्त्रविरुद्धं विशुद्धवर्णोत्पत्तिप्रतिबन्धकमिति दूरतः परिवर्जनीयमेवेति ॥

एतादृशमेव लक्षणं ब्राह्मणादीनां **नञ्** २।२।६। इति सूत्रे विस्तरेणोक्तमिति तत एवावगन्तव्यम् ॥

## उच्चनीचभावविषये—

पूर्वनिपातप्रकरणे-**अल्पाच्तरम्** २।२।३४। इति सूत्रे ब्राह्मणक्षत्रियवैश्यशूद्राः सहोच्चारिताः क निपतन्तीति विचारावसरे 'वर्णानामानुपूर्व्येण पूर्वनिपाता भवन्ति-इति वक्तव्यम् । ब्राह्मणक्षत्रियविट्शूद्राः' इत्यादिना वेदादौ येन क्रमेण तेषामुत्पत्तिः कथिता तेनैव क्रमेण पूर्वनिपातोऽपि कर्तव्य इत्यादि प्रतिपादयन् भगवान् न तेषां श्रेष्ठत्वमुच्चत्वं वाऽऽह, किन्तु वेदे ब्राह्मणोत्पत्तिः पूर्वमभिहितेति ब्राह्मणस्य पूर्वनिपात इत्येव । यदि तेषां पूज्यत्वापूज्यत्वे प्रसिद्धे समभूतां तदा तस्मिन्नेव सूत्रे **"अभ्यर्हितञ्च** । अभ्यर्हितञ्च पूर्वं निपतीति वक्तव्यम् । मातापितरौ । श्रद्धामेधे" इत्यनेन मातापित्रोर्मातुरेवाभ्यर्हितत्वात्-पित्रपेक्षया पूज्यत्वात् पूर्वनिपातो विधीयते तेनैव ब्राह्मणादीनामपि पूर्वनिपाते सिद्धे **'वर्णानामानुपूर्व्येण'** इति वार्तिकप्रणयनम् स्वव्याख्यानेन तद्बृंहणञ्चोभयमपि विफलमेवाभविष्यत् । निरर्थकमेवेदमुच्यत इति चेत्, अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणा इत्याद्यापामरप्रसिद्धो वैयाकरणाचारो ननु अत्र प्रमाणीकर्तव्यः । 'दर्भपवित्रपाणिः प्राङ्मुख उपविश्य महता यत्नेन सूत्रं प्रणिनाय, तत्र वर्णेनाप्यनर्थकेन न भवितव्यम्' इत्याद्युपदिशन् भाष्यकारो वर्णानामानुपूर्व्येणेति समग्रं वचनमेव निरर्थकं व्याक्रियमाणः संभवेदित्याशङ्कनमपि साहसमात्रमेव स्यात् ॥ एवञ्च जातिभेदप्रबन्धे महति वर्तमानेऽपि न कश्चित्तेषामुच्चनीचादिव्यवहार आसीत्, न वा कश्चिद्विरोधोऽप्यासीदिति सुनिश्चितं प्रतीयते । पस्पशाह्निके 'ब्राह्मणेनावश्यं शब्दा ज्ञेयाः' इत्याद्युपन्यासेऽपि ब्राह्मणशब्दः संस्कारमात्रे प्रवृत्तस्त्रैवर्णिकान् ग्राहयति । तत्र त्रैवर्णिकैरवश्यं शब्दा ज्ञेया इतरेषां शब्दाज्ञाने न कश्चित्प्रत्यवायः । यदि शब्दज्ञानजिज्ञासा, न कश्चित्प्रतिबध्नाति । जिज्ञासाभावे न कश्चिदुपरुणद्धि च । एवञ्च जात्यादिसंव्यवहारेण बहूपकृतं समाजस्य नानिष्टं किञ्चिदित्येवावसीयते जात्यादिविचारविमर्शनेन ॥

## सामाजिकव्यवहारः—

तदानींतनानां सामाजिकव्यवहारेणैतत्सुस्पष्टं प्रतिपद्येतेति सोऽप्यवश्यं विमर्शनीयः । **जीवति तु वंश्ये युवा** ४।१।१६३। इति सूत्रे 'वृद्धस्य च पूजायाम् । वृद्धस्य च पूजायां युवसंज्ञा वक्तव्या । तत्रभवन्तो गार्ग्यायणाः, तत्रभवन्तो वात्स्यायनाः । का पुनरिह पूजा ? युवत्वं लोके ईप्सितं पूजेत्युपचर्यते । तत्र भवन्तश्च युवत्वेनोपचर्यमाणाः पूजिता भवंति ।' इत्युदाहरणं तदानीन्तने व्यवहारे प्रकाशमापादयति । वृद्धसंज्ञकाद्युवसंज्ञकाच्च भिन्नाः प्रत्यया विद्यन्ते, यथा च भवति-गार्ग्यो गार्ग्यायण इति । तत्र वार्तिकेनानेन पूजायां कर्तव्यायां वृद्धसंज्ञकस्यापि युवसंज्ञा भवति, भवति च तस्मात्तादृशः प्रत्ययः । यतो युवत्वं लोके सर्वैः काम्यते अतो युवत्वेन व्यवहारः पूजेत्युपचर्यते । अतो यत्र गार्ग्यशब्दव्यवहारः समापन्नस्तत्र माननीये पूज्ये गार्ग्ये गार्ग्यायणशब्दव्यवहारः कर्तव्य इत्यादिशतो **वररुचिपतञ्जली** ॥

यस्य च वस्तुतो यूनो गार्ग्यायणस्य दुर्वृत्तं पश्यति जनस्तत्र वास्तविके गार्ग्यायणेऽपि गार्ग्यशब्दव्यवहारमनुमनुतः-**अपत्यं पौत्रप्रभृतिगोत्रम्** ४।१।१६२। सूत्रे 'जीवद्वंश्यञ्च कुत्सितम् । जीवद्वंश्यञ्च कुत्सितं गोत्रसंज्ञं भवतीति वक्तव्यम् । गार्ग्यस्त्वमसि जाल्म, वात्स्यस्त्वमसि जाल्म' इत्यादिना । वस्तुतो युवसंज्ञकस्यापि दुर्वृत्तादिविशेषान्न युवसंज्ञकेन व्यवहारः किन्तु गार्ग्यस्त्वमसि

जाल्मेति गार्ग्यशब्देन व्यवहारं बोधयति । षष्ठ्यब्दिपूर्तिकरणतत्परैरप्येतदवधेयं–तादृशपूर्तिकरणेन न पूजा संप्रतिपद्यते, किन्तु वृद्धस्त्वमसि, प्रत्यवसेया व्यवहारा इत्येव बोध्यते । यथा निमन्त्रितसमाजे पण्डितापण्डितसमवाये आगच्छन्तमपण्डितमपि स्वागताध्यक्षो महतोत्साहेनाचारविशेषं 'आगन्तव्यं महाभागैः, भवदागमनेन पूजिता वयम्' इत्यादि प्रतिपादयति, अपण्डितश्च पूजार्हमात्मानं मन्यते तथैवायं व्यवहारः सम्प्रतिपद्यत इति पाश्चात्याचारचतुराः षष्ठ्यब्दिपूजकाः पूज्याश्च इतो नावदधत इत्येव कुशलम् ॥ कुत्साव्यवहारः क्वचिदुपदर्शितोऽपि दृष्टिपातमर्हत्येव । तथाहि–'का पुनरिह कुत्सा ? पितृतो लोके व्यपदेशवताऽस्वतन्त्रेण भवितव्यम् । य इदानीं पितृमान् स्वतन्त्रो भवति स उच्यते–गार्ग्यस्त्वमसि जाल्म । न त्वं पितृतो व्यपदेशमर्हसीति' इत्यादिना यत्र यः पितुराज्ञां तिरस्करोति स कुत्सितो भवति किमुत **पितृपितामहादीनां ऋषीणामाज्ञाव्यतिक्रमे**–इति विचारणीयं सुधीभिः ॥

**विद्यार्थिनः—**

समाजस्य प्राणभूता विद्यार्थिनः, तद्विषये 'कमण्डलुपाणिं छात्रमद्राक्षीत्' इत्याद्युक्तयो बहुश उपलभ्यमाना विद्यार्थिनः सुचरित्राः स्वाध्यायशालिनो ब्रह्मचर्यरताः समाजेन समादृता देशभूषणा भवन्ति स्मेति बोधयन्ति । ये च दुश्चरिता अनध्ययनवन्तस्ते कठोरतरं निर्भर्त्सिता भवन्तीति **ध्वाङ्क्षेण क्षेपे** २।१।४२। इति सूत्रे "यथा तीर्थकाका न चिरं स्थातारो भवन्ति । एवं यो गुरुकुलानि गत्वा न चिरं तिष्ठति स उच्यते तीर्थकाक इति ।" इत्यनेन ज्ञायते । शालां गत्वोपस्थितिं परिज्ञाप्य ये शालायामापणे वा बाभ्रम्यमाणास्तिष्ठन्ति त उच्यन्ते तीर्थकाका इति हि सामयिकोऽर्थः ॥ यथा छात्राणां स्तुतिनिन्दे प्रवर्तेते न तथाऽध्यापकानाम् । अत्रेदमपि बीजं स्यात्–ये प्रयोजनमनपेक्ष्य कर्तव्यमिति बुध्या शिष्यान् पाठयन्ति ते कथं निन्दनीया भवेयुः । यथेदानीं गुरुकुलानां व्यवस्था सम्प्रवर्तते न तदानीं तादृशी आसीत् । तदा च ग्रामे ग्रामे विद्याव्यसनिनः कर्तव्यबुध्याऽध्यापनवृत्तिं सम्पादयन्तः सर्वानपि शिशूनध्यापयन्ति स्मेति ज्ञायते । यथेदानीं पाठशालाकरणमपि व्यवसायः, यथा वा महता व्ययेनापि न तत्त्वाध्यापनं, न तदानीमेतत्किमप्यासीदिति प्रतीयते । तदा गुरुशिष्यसम्बन्धश्च **छत्रादिभ्यो णः** ४।१।६२। इति सूत्रे "किं यस्य छत्रधारणं शीलं स छात्रः ? किञ्चातः ? राजपुरुषे प्राप्नोति । एवं तर्हि उत्तरपदलोपोऽत्र द्रष्टव्यः–छत्रमिव छत्रम् । गुरुश्छत्रम् । गुरुणा शिष्यश्छत्रवत् छाद्यः, शिष्येण गुरुश्छत्रमिव परिपाल्यः ।" इत्येवमुपवर्णित आस्ते । न तदा केचन नेतारः शिष्याणां बुद्धिभेदमकुर्वन् । न वा गुरूनुपहसन्तस्ते आत्मनः प्रतिष्ठां शिष्यसमुदायाग्रेऽवदन्, येनात्मप्रतिष्ठाबोधनेन स्वार्थो न सिध्यति परार्थश्च हीयते । तदा चैवमुपवर्णितः सम्बन्धो गुरुशिष्ययोः समवस्थित आसीदिति प्रतिपादयति ॥ एतादृशी चिन्ता तु दृश्यते—**अनद्यतने लुट्** ३।३।१५। इति सूत्रे 'अयं तु कदाऽध्येता य एवमनभियुक्त इति । अध्येतैवायमध्येता नायमध्येष्यते' इति । य एवमभ्यासहीनः तस्याध्ययनं कथं स्यादिति तदर्थः । तथा विद्यार्थिनां शीतादिनिवारणदक्षा अपि तदानीन्तनाः—**हेतुमति च** ३।१।२६। सूत्रे 'भिक्षा वासयति, कारीषोऽग्निरध्यापयति । भिक्षाश्चापि प्रचुरा व्यञ्जनवत्यो लभ्यमाना वा सम्प्रयोजयन्ति, तथा कारीषोऽग्निर्निर्वाते एकान्ते सुप्रज्वलितोऽध्ययनं प्रयोजयति' इत्यनेन ज्ञायते ॥ **चतुर्थी०** २।१।३६। इत्यत्रापि 'छात्राय रुचितम्, छात्राय स्वदितम्' इत्यादिना छात्रोपकारपरान् तदानींतनान्बोधयति ॥ **खट्वाक्षेपे** २।१।२५। इति सूत्रे 'क्षेप इत्युच्यते कः क्षेपो नाम ? अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या । य इदानीमतोऽन्यथा करोति स उच्यते खट्वारूढोऽयं जाल्मो नातिव्रतवान्' इत्यनेन गुर्वनुज्ञां विनैव योऽग्नीनुपसंगृह्णाति स एवं निन्द्यते–खट्वारूढोऽयं जाल्म इति । तदानीं गुर्वनुज्ञां विना धर्म्यो विवाहोऽपि निन्द्यते किमुत कन्यासंसर्गश्छात्रस्य क्षमेत वा ॥ छात्राणां बुध्याद्युपलब्धिरपि परीक्ष्येतेति **तद्धितश्चासर्वविभक्तिरिति सूत्रे** 'समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्त, अपरे न । तत्र किमस्माभिः कर्तुं शक्यम् । स्वाभाविकमेतत्' इति प्रतीयते । अनेन चोपष्टम्भेन तदा गुरुकुलानि महान्ति सर्वाध्ययनप्रकारविशेषाण्यासन्नित्यवगन्तुं युक्तम् ॥

**वृद्धिरादैच्** १।१।१। सूत्रे 'एवं हि दृश्यते लोके य उदात्ते कर्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति' इति दर्शनात्, एकस्मिन् गुरुकुलेऽनेकेऽध्यापकाः समये समये पाठयन्ति । कश्चित् खण्डिकोपाध्यायः, कश्चिद्वर्गाध्यापकः, कश्चिदृगध्यापक इति तत्तद्विषयाध्यापकाः खण्डिकोपाध्यायपदोपादानेन बोध्यन्ते । अथर्ववेदे पादस्य खण्डिकापदेन व्यवहारः, तदध्यापकश्च खण्डिकोपाध्यायः ॥

ननु 'खण्डिकोपाध्यायः शिष्याय चपेटां ददाति' इत्युदाहरणदर्शनात् सुसंस्कृतेनाधुनिकेन समाजेन विनिन्दिता बालानां ताडनादिप्रकारास्तदा प्रचलिता आसन्निति ग्राम्यत्वं तेषां प्रदर्शितं भवतीति चेन्न । शिष्योपकारार्थं क्वचित्तादृशं ताडनमपि गुणायैव भवतीति—**वाक्यादेरामन्त्रितस्यासूया०** ८।१।८। इति सूत्रोक्तेन व्यवहारेण प्रतीयते । तत्र हि "असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात् पृथक्त्वनिर्देशानर्थक्यम् । **असूया–कुत्सन**मित्येकोऽर्थः । **कोपो भर्त्सन**मित्येकोर्थः । एकार्थत्वात्पृथक्त्वनिर्देशोऽनर्थकः । न ह्यनसूयन् कुत्सयति, न चाप्यकुपितो भर्त्सयते । ननु च भोः अकुपिता अपि दृश्यन्ते दारकान् भर्त्सयमानाः । अन्ततस्ते तां शरीराकृतिं कुर्वन्ति या कुपितस्य भवति । एवं तर्ह्याह—

साम्रतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः ।
लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥"

इत्युक्तम् । एवञ्चाल्पबुद्धीनां बालानामुत्पथप्रतिपन्नानां चपेटादिप्रकारेण स्वल्पेन दण्डेन दण्डयन्तः परमार्थत उपकारमेव कुर्वन्तीति सुसंस्कृतैराधुनिकैरवधेयम् ॥

तादृशादध्यापकात् अन्तर्धानमपि कृतापकारिणां शिष्याणां—**अन्तर्द्धौ येनादर्शनमिच्छति** १।४।२८। सूत्रे "उपाध्यायादन्तर्धत्त इति । पश्यत्वयं यदि मामुपाध्यायः पश्यति ध्रुवं मे प्रेषणमुपालम्भो वेति स बुध्या सम्प्राप्य निवर्तते" इत्यनेन ज्ञायते । अविनीतस्य पाठशालातो निष्क्रमणं दण्डादिनोपालम्भो वा प्रदीयते स्मेति पाठशालासम्बन्धं सुनियतं सुचारुरूपञ्च निर्वर्तयितुं स्वाधीनप्रयत्नास्तत्पराः कुलपतय इत्यध्ययनाध्यापनपद्धतिः सुचारुरूपेत्यविवादम् ॥

विद्याश्च नानाविधाः–काश्चन विद्यान्तपदेन बोध्यन्ते, काश्चिच्च लक्षणान्तपदेन सूत्रान्तपदेन वेति वेदव्याकरणमीमांसादिशास्त्रेष्वेवैते परिनिष्ठितास्तेषु शास्त्रेष्वेव विवदमानाः समवर्तेरन्नित्यपि न मन्तव्यम् । **ऋतूक्थादिसूत्रान्ताट्ठक्** ४।२।६०। इति सूत्रे **तदधीते तद्वेदे**त्यधिकारे विधाध्ययनशीलानां निर्देशेन वेदव्याकरणमीमांसादिविद्यावत् यन्त्रतन्त्रनीतिक्रीडादिलौकिकविद्याकलादिस्वरूपमप्युपदर्शयति भाष्यकारः । तत्र हि–'वायसविद्यिकः, सार्पविद्यिकः, गौलक्षणिकः, आश्वलक्षणिकः, पाराशरकल्पिकः, पारकल्पिकः, वार्तिकसूत्रिकः, सांग्रहसूत्रिकः, आङ्गविद्यः, क्षात्रविद्यः, धार्मविद्यः, त्रैविद्यः, उक्थान्यधीते–औक्थिकः, यज्ञमधीते–याज्ञिकः, ऐतिहासिकः, सर्ववेदः, सर्वतन्त्रः, पञ्चकल्पः, द्वितन्त्रः, आनुसुकः, लक्ष्यिकः, लाक्षणिकः, चान्दनगन्धिकः, शतपथिकः, षष्टिपथिकः' इत्यादौ वायसविद्यादिविद्यास्तत्रोपलक्षणत्वेन गृहीता दृश्यन्ते । येन राज्यव्यवस्थायामुपयुक्ताः लौकिकनिर्वाहाय च प्रतीताः पदार्थविज्ञानादिषु निष्णाता विद्यार्थिन एकस्यामेकस्यां विद्यायां कृतप्रयत्नाः संशोधनदक्षा अप्यासन्निति प्रतीयते । तासु च बह्व्यः प्रायो लुप्तप्राया इदानीमवगम्यन्ते ॥

## विहाराः—

विद्यार्थिनां विहारादिवर्णनमपि **न वेति विभाषा** सूत्रे 'अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः, यत्कश्मीरेष्ववसाम, यत्तत्रौदनं भोक्ष्यामहे यत्तत्रौदनमभुञ्ज्महि । अभिजानासि देवदत्त कश्मीरान् गमिष्यामः कश्मीरानगच्छाम, तत्रौदनं भोक्ष्यामहे तत्रौदनमभुञ्ज्महि' इत्यादिनोपपादितं सन्दृश्यते । तथा—**लुङ्** ३।२।११०। इति सूत्रे "गमिष्यामो घोषान् पास्यामः पयः । शयिष्यामहे पूतीकतृणेषु" इत्यादिना विहारादिवर्णनं बहुशो व्याख्यातं सामञ्जस्येन संगच्छते ॥

भारतभूललामभूतः कश्मीरस्तदाऽपि तादृश एव ललामभूत आसीत्, तत्रत्यमन्नमपि स्वादु मृदु रुचिरं विशदं चासीद्यत्तदभिलाषेण कश्मीरगमनं, तद्गुणावकृष्टैः पश्चात्तत्स्मरणं वोभयमप्यत्र प्रदर्शितम् । कश्मीरसम्भवा जलवायवः, विचित्रा भूभागाः, हिमाच्छन्नानि शिखराणि, अन्यत्रानुपलभ्यमाना विचित्राः फलादिजातयः, सुसम्पन्ना वैशिष्ट्याधायकाश्च तण्डुलाः सर्वमपीदमिदानीमास्ते । केवलं तत्र विद्यायाः पारंगताः साहित्यादिशास्त्रप्रणेतारः सुकुशला जना इदानीं नोपलभ्यन्त इति हा हन्त ! कालाय तस्मै नमः ॥

## समाजसेवाविषये—

सामाजिकसुखसम्पत्तये तदानीमपि प्रयत्नशीला जना आसन्निति **छदिरुपधिबलेर्ढञ्** ५।१।१३। इति सूत्रप्रदर्शितेनैकेनोदाहरणेन सम्यक् सम्प्रतीयते । तत्र हि 'उपानदर्थस्तिलकल्कः' इत्युदाहृतम् । तेनोपानद्व्यवहारिणः तिलकल्कसंज्ञकं ( बूटपालिश ) व्यवहरन्ति स्म । उपानहश्चोपलेपनसमर्थाः सुरूपा उपलेपनेन संस्क्रियमाणा व्यवहारसाधना आसन्निति नागरिकव्यवहारातिशयं व्यञ्जयन्ति ॥

जनाः संव्यवहारे लोलुपा अलोलुपाः स्वार्थैकप्रवणा निःस्वार्थाश्च सर्वदैवोपलभ्यन्ते । तत्र निःस्वार्थजनबाहुल्ये निःस्वार्थनेतृषु वा सत्सु स्वार्थप्रवणा अपि जना न व्यतिक्रामन्तीति समाजः सुचारुरूपेणावतिष्ठते । तदा च कश्चित्स्वार्थप्रवणो वाच्यतामुपयाति । अत एव **समर्थः पदविधिः** २।१।१। इति सूत्रे 'राजविशिष्टाया गोः क्षीरेण सह समासो भवति, न केवलायाः । किं वक्तव्यमेतत् ? नहि । कथमनुच्यमानं गंस्यते । यथैवायं गवि यतते न च क्षीरमात्रेण सन्तोषं करोति, एवं राजन्यपि यतते–राज्ञो या गौस्तस्या यत्क्षीरमिति' इत्युदाहृतमुपपद्यते । यथेदानीं अभिनन्दनपत्रपेटिकाक्रयणादिषु अहमहमिकया जनः सम्प्रवर्तते, यथा वा हस्ताक्षरोपलब्धये यतते, यथा च राजपुरुषादीनामागमने स्वागतसम्भारसम्भृतावुपलभते तथैव तदानीमपि गोक्रयणवेलायां राज्ञो गां बहुवित्तव्ययेनापि राज्ञ इयमित्यभिनिवेशात्क्रीणाति, राजसामीप्योपलब्धये यतते चेति प्रतीयते । **राजसम्बन्धाभिलाषुक इदानीं सम्पूज्यते तदानीञ्च वाच्यतामुपयाति स्मे**ति महान् भेदः । अत एवेदानीममात्यादीनां राजकीयपुरुषाणामागमनोत्सवे अहमहमिकया स्वागतसमारम्भो विधीयते, तत्रोदासीन एवेदानीं वाच्यतामुपयाति, स एव दण्ड्यो भवति चेति सर्वजनानुभवसिद्धं वस्तु नाधिकं प्रकाशमपेक्षते ॥

भाष्यकारसमये **विचक्षणः स्वाधीनक्रियश्च समाज आसी**दित्यत्र न कश्चित्सन्देहलेशोऽपि । ये च समाजसेवकान् दम्भरहितान् परोपकारार्थमेव यतमानान् स्वार्थरहितान् देशहितार्थमेव दम्यपदव्यधिष्ठितान् मन्यन्ते तेषां समाजो ननु गर्तायामापन्न इवावगन्तव्यः । अत्रार्थे समाजसेवकाभिधानां कियन्मूल्यं प्राचीनैर्निर्द्धारितमासीदित्यवश्यमेवावगन्तव्यम् । तच्च यथा—**हेतुमति चेति** सूत्रे "प्रवृत्तिर्ह्युभयत्रानपेक्ष्यैव किञ्चिद्भवति देवदत्ते चादित्ये च । नेह कश्चित्परोऽनुगृहीतव्य इति प्रवर्तते । **सर्वे इमे स्वभूत्यर्थं प्रवर्तन्ते** । ये तावदेते गुरुशुश्रूषवो नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते–पारलौकिकञ्च नो भविष्यति, इह च नः प्रीतो गुरुरध्या-

पयिष्यतीति । यथा य एते दासाः कर्मकरा नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते–भक्तञ्चैलञ्च लप्स्यामहे परिभाषाश्च न नो भविष्यन्ति । तथा य एते शिल्पिनो नाम एतेऽपि स्वभूत्यर्थं प्रवर्तन्ते–वेतनञ्च लप्स्यामहे मित्राणि च नो भविष्यन्तीति" इति । अत्र हि आदित्यादिदेवदत्तान्ताः सर्वेऽपि परानुग्रहकारिणो गुरोरादेश इति न निःस्वार्थाः प्रवर्तन्ते, न परोपकारः स्वकीयोऽयं धर्म इति वा प्रवर्तन्ते । केवलं स्वार्थमात्रप्रवृत्ता ह्येते स्वार्थसाधनायैव प्रवर्तन्ते । **प्रवृत्तिर्हि**–आदित्यादीनां प्रवृत्तिः **उभयत्र**–आदित्ये देवदत्ते च **अनपेक्ष्य किंचित्**–गुर्वाद्यादेशमन्याभिप्रायं वाऽनपेक्ष्य स्वाभिप्रायमात्रोद्देश्यिकैव भवति । तमभिप्रायमेव स्पष्टमुपपादयति—**नेह कश्चित्परोनुग्रहीतव्य इत्यादिना ।** यश्चादित्यः केवलं लोककाम एव लोकान् प्रकाशयतीति निर्विवादं सर्वैः समर्थ्यते तमेव पूर्वमुपलक्षीकृत्य भगवान् भाष्यकारो लोकरहस्यं समाजस्थितिस्थापकं निःशङ्कमुपशिक्षयति । यदेतत्तत्त्वं न प्राचीनैर्नवीनैर्भविष्यत्कालिकैश्च कदापि विस्मर्तव्यमिति । भगवान् भास्करोऽपि यत्र न लोककामायैव प्रवर्तते, तत्र किमु मानवाः सेन्द्रियाः शालिफलाद्युपभुञ्जानाः सत्तत्वविमुखाः स्वाभिप्रायेणैव व्यवह्रियमाणा ऐहिकाभिप्राया लोककामायैव स्वार्थं विहाय प्रवर्तन्त इत्याग्रहः समाजाधःपातायैवेत्यवधेयम् ॥

**निमित्तेभ्यः प्रवर्तन्ते सर्वे एव स्वभूतये ।**
**अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये ॥**

इति हरिकारिकाऽपि तमेवार्थं सुस्पष्टतयाऽभिव्यनक्ति । यः कश्चित्पराभिप्रायानुरोधेन प्रवर्तमान उपलभ्येत सोऽपि स्वार्थप्रसिद्धिकाम एव तदर्थं यतते न परानुग्रहकाम्ययेति निर्विवादम् ॥ अत एव **प्रामाणिका न लोकवचनेष्ववतिष्ठन्ते, किन्तु स्वतःप्रमाणेन वेदशास्त्रवचनानुरोधेनैव प्रवर्तन्ते ॥** 'न हि फलमनुद्दिश्य मन्दोऽपि प्रवर्तते' इति न्यायमनुरुध्य वस्तुता विचार्यमाणे राजाज्ञापालनं निर्धर्मकानां नानिवार्यम्, किन्तु राजाज्ञावञ्चनमेव तेषां धर्मः स्यात् । यतो राजाज्ञापालनं हि धर्मो 'नाविष्णुः पृथिवीपतिः' इति वादिनामेवास्ते, अत एव ते भारतीया राजाज्ञापालनतत्परा न परस्परं व्यत्यघ्नन्, न वा तदा राजाज्ञाभङ्गमकुर्वन् । तदभावे हि 'सर्वैः सह भ्रातृभावेनावस्थेयं' इत्याज्ञप्तमपि किमर्थं तथाऽवस्थेयमिति प्रश्नो व्याकुलीकरोति चेतः । यत्रापि 'हिंसा न कर्तव्या, तदुपलब्धौ हि राजदण्डः स्यात्' इत्यनुशासने हिंसां कृत्वाऽन्येन कृता सा हिंसा न मयेत्युद्घोष्यमाणे राजदण्डपरामर्शभीरपेयात्, स्याच्च हिंसयेष्टसिद्धिरिति अहिंसामयेऽस्मिन् समये हिंसाविहारिण एव सर्वत्र विहरन्ते । अन्यच्च 'अस्मद्गुरूपदिष्टया अहिंसयैव सर्वस्य समाजस्याभ्युन्नतिः स्यादिति स एव मार्गः सर्वत्र सञ्चालनीयः, ये तत्र प्रतीपा भविष्यन्ति या वा संस्था अहिंसाविरोधिन्यो भविष्यन्ति तांस्ताश्च वा वयं निर्दयमुपहिंसामः' इत्युक्तिमहिंसाऽऽचार्याणां भैरवभेरीरवसदृशामाकर्ण्य सर्वपक्षेभ्यः सुदूरमवस्थितानां धर्मैकशरणानां भारतीयानां कम्पन्ते चेतांसि, यतोऽद्यापि **क्रूराणामविवेकिनाञ्च न परस्परं शान्तः कलह** इति ॥

एवञ्च तदानीं धार्मिका जना आसन्, येन हिंसाचौर्यादीनां संशयोऽपि न भवेत् । 'उपकार्याभावे उपकाराभावः' इति न्यायेन सम्पन्नतरेऽस्मिन् देशे को वा विपन्नः स्यात् यमासाद्योपकारिणः प्रभवेयुः । अन्यच्च–उपकार्यो भूत्वा जीवनं ननु मरणमेवेत्यापामरप्रसिद्धमेतद्देशसंस्कृतिसम्बद्धं चास्ते, समाजसेवकानां स्वरूपं च पूर्वं निर्दिष्टं सर्वजनप्रसिद्धमिति उपकारिण एव स्वचारितार्थ्याय उपकार्यनिर्माणे न प्रयत्नशीलास्तदानीमिति सर्वमप्यवदातम् ॥

## ऋणादानादयो व्यवहाराः—

एतादृशे सुपरिष्कृते समाजे ऋणादानादिव्यवहारो नासीदिति वक्तुमप्यशक्यम् । तत्र ऋणदानादाने न कश्चिद्विरोधः, वृद्धिग्रहणं तु सर्वथा विनिन्दन् सूत्रकार आह–**प्रयच्छति गर्ह्यं** ४।४।३। इति । तत्र हि भाष्यकारः–"अयुक्तोऽयं निर्देशः, यदसावल्पं दत्वा बहु गृह्णाति तद्गर्ह्यम् । कथं तर्हि निर्देशः कर्तव्यः ? प्रयच्छति गर्ह्यायेति । स तर्हि तथा निर्देशः कर्तव्यः । न कर्तव्यः । तादर्थ्यात्ताच्छब्द्यं भविष्यति–गर्ह्यार्थं गर्ह्यम् । द्विगुणं मे स्यादिति प्रयच्छति–द्वैगुणिकः, त्रैगुणिकः अत्र वृद्धेर्वृधुषि भावः–वार्धुषिकः" इत्याह । अत्र प्रयच्छति गर्ह्यमिति निर्देशोऽयुक्तः, एवं हि अधमर्णे प्राप्नोति, उत्तमर्णे चेष्यते, तर्हि प्रयच्छति गर्ह्यायेत्याक्षिप्य **न वक्तव्य**मित्याह । तादर्थ्यात्–यत् ऋणं दीयते तद्वृध्यर्थं, सा वृद्धिरेव गर्ह्या तदर्थं दीयमानं ऋणं गर्ह्यमिति यो गर्ह्यं प्रयच्छति–यो वृध्यर्थं ऋणं प्रयच्छति तस्मात्प्रत्यय इत्युपपन्नमिति तदर्थः । अनेन प्रघट्टकेन वृद्धिग्रहणमेव निषिध्यते, ऋणदानं न निषिध्यते । वृद्धिग्रहणनिषेधात् न कर्षकाणां काचिद्विप्रतिपत्तिर्न वा तत्र किञ्चिद्विधानमप्यपेक्षते ॥

ननु वृद्धिग्रहणाभावे कः किमर्थं ऋणं दद्यादिति चेत्, यो द्विगुणार्थं प्रयच्छति स द्वैगुणिक इत्यादिना परिमितवृध्यतिरिक्ता वृद्धिरेव निषिद्धेति तदभिप्रायः । अत एव योऽल्पवृद्धिदानमङ्गीकृत्य परकीयं धनं गृहीत्वा वृध्यर्थमन्यस्मै प्रयच्छति स **वार्धुषिक** इत्युच्यते । तेन हि स्वलाभार्थं बह्वी वृद्धिरेव ग्राह्या, अन्यथा तस्य लाभो न स्यादिति तस्य निन्दा प्रतीयते । एवञ्च अनुचितवृध्यादानं निषिद्धमासीद्व्यवहारे–इति प्रतीयते ॥

देशविशेषेण आचारविशेषा न्यायविशेषा विहारादिविशेषा अपि प्रतिभासन्ते । यथा–**अरण्यान्मनुष्ये** ४।२।१२९। इति सूत्रे "अत्यल्पमिदमुच्यते मनुष्य इति । पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् । आरण्यकः पन्थाः, आरण्यकोध्यायः, आरण्यको न्यायः, आरण्यको विहारः, काच्छको मनुष्यः, काच्छकं हसितं, काच्छकं जल्पितम्, काच्छकं स्मितम्" इत्यादिना कच्छदेशोद्भवो मनुष्यो भिन्नः, तस्य हसितं जल्पितं वाऽन्यत्, आरण्यको न्यायो भिन्न इत्यादि व्यवहारविशेषः प्रकथ्यते ॥

भक्ष्यप्रकारा अपि सुसंस्कृता विशिष्टा वा आसन्निति **तत्र जातः ४।३।२५।** इति सूत्रे "जातादिष्वेव घादयो यथा स्युः, इह मा भूवन्–तत्रास्ते तत्र शेते इति। यदि नियमः क्रियते, दार्षदाः सक्तवः–औलूखलो यावक इति न सिध्यति। **संस्कृत**मित्येवं भविष्यति। भवेत्सिद्धं–दार्षदाः सक्तव इति। इदं तु न सिध्यति–औलूखलो यावक इति। संस्कृतं नाम तद्भवति यत्तत एवापकृष्याभ्यवह्रियते। न च यावक उलूखलादेवापकृष्याभ्यवह्रियते। अवश्यं रन्धनादीनि प्रतीक्ष्याणि" इत्यनेन प्रसिध्यति। जातादिष्वेव घादयो भवन्तीति नियमे दार्षदादीनि न सिध्यन्ति। ननु तत्र 'संस्कृतम्' इत्यनेनैव प्रत्ययसिद्धिः, तेन हि 'दार्षदाः' इत्येव सिध्येत्। यतः संस्कृतं तद्भवति तत एव भक्ष्यते, यथा दृषदि पिष्टाः सक्तवो भक्षणार्हा भवन्ति औलूखलो यावकश्च न तादृश इति उलूखलेन संस्कृत इति न भवतीति तदर्थः। प्रघट्टकेनानेन भक्ष्याणां विविधाः प्रकाराः प्रचलिता इति सुस्पष्टमेव॥

**नदीतरादीनां** प्रसिद्धिस्तदाऽऽसीदिति घसंज्ञासूत्रे 'घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः। नद्यास्तरो नदीतरः' इत्युदाहरणेन ज्ञायते॥

भृत्यादिना कर्मकरा अपि तदानीमासन्, तद्भृत्यवलोकनेन च वस्तूनां मूल्यमपि निर्धारयितुं शक्यम्। **स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२।** इति सूत्रे 'याजका यजन्ति गा लप्स्यामह इति, कर्मकराः कुर्वन्ति पादिकमहर्लप्स्यामह इति' इत्यादिना गवादिलाभार्थं याजका यजन्ति, भृतिलाभार्थं कर्मकराः कुर्वन्तीति ज्ञायते। भृत्यस्य पादिकं वेतनमासीत्, पादिकञ्च पणस्य ताम्रमुद्रायाश्चतुर्थोंऽशः–इति तावती भृतिरासीत्। तदा पणपादेन निर्वाहः सुसम्बद्ध इत्यप्याक्षिप्यते। अन्यथा तादृशेनाल्पमूल्येन कर्मकरो न प्रवर्तेतेति॥

## राजकीयम्—

राजकीयप्रबन्धेऽपि–**कारनाम्नि च प्राचां हलादौ ६।३।१०।** इत्यत्र 'अविकटे उरणो दातव्यः–अविकटोरणः' इत्यनेन अवीनां समुदायो निर्वाहार्थं यैः पाल्यते तत्र नियतसंख्याके समुदाये राजकीयदेयमुरणो दातव्य इति नियमो दृश्यते। चारुरूपश्चायं नियमो येन अविसमुदायपालानां अविदाने न तादृशी हानिर्यादृशी द्रव्यदाने स्यात्। ऊर्णार्थमविव्यवसायश्च सुचारुरूपेण परिवर्तित आसीदित्यवगम्यते॥ राज्ञां युद्धादिवर्णनं बहुत्रायातमपि **पङ्क्तिविंशति० ५।१।५९।** इति सूत्रे 'इह कदाचिद्गुणः प्राधान्येन विवक्षितो भवति। तद्यथा–पञ्चोऽडुपशतानि तीर्णानि, पञ्चवध्रीशतानि तीर्णानि, अश्वैर्युद्धम्, असिभिर्युद्धम्। न चासयो युध्यन्ते, असिगुणाः पुरुषा युध्यन्ते, गुणस्तु खलु प्राधान्येन विवक्षितो भवति' इत्यादिवर्णनं विशेषतामाधत्ते॥ **मद्रात्परिवापणे ५।४।६७।** इत्यत्र 'क्षेमे सुभिक्षे कृतसञ्चयानि पुराणि राज्ञां विनयन्ति कोपम्' इत्युदाहरणेनापि बलवतां राज्ञां पारस्परिके प्रहरणेऽपि तत्र प्रजानां कश्चिदुपद्रवो नासीत्, रणाङ्गणे युद्धम्, कुशलिनश्च प्रजा नगरे इति राज्ञां युद्धप्रसङ्गे सर्वेऽपि संव्यवहरन्ते स्मेति॥ "गर्गाः शतन्दण्ड्यन्ताम्। अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति" इत्युदाहरणं बहुषु स्थलेषूपलभ्यमानं राज्ञामलोलुपत्वं धर्मानुबन्धित्वञ्च द्योतयति। हिरण्येनार्थिनोऽपि राजानो न पदवाक्यप्रमाणानतिक्रामन्ते, न स्वार्थानुसारेण प्रत्येकं दण्डयन्तीति भावः॥ 'अमात्यानां राज्ञा सह समवाये पारतन्त्र्यं व्यवाये स्वातन्त्र्यम्' इति **कारके १।४।२३।** इति सूत्रोपात्तमुदाहरणं राज्ञाममात्यानाञ्चैकमत्यमेव प्रतिपादयति॥

"ये त्वेते राजकर्मिणो मनुष्यास्तेषां कश्चित्कंचिदाह–कटं कुर्विति। स आह–नाहं कटं करिष्यामि घटो मयाऽऽहृत इति। तस्य क्रियामात्रमीप्सितम्।" इति **कर्तुरीप्सिततमं कर्म १।४।४९।** सूत्रे समुदाहृतं राजकीयकर्मचारिणां संव्यवहारं बोधयति। राजकीयकर्मकराश्च क्रियामात्राभिनिविष्टा न फलसिद्धौ बद्धादरा 'यद्भविष्यति तद्भवतु' इत्येतद्भावभाविता भवन्ति, घटो मयाऽऽहृत इति मया काचित्क्रिया कृता कार्यसिद्धिर्भवतु वा मा वा, नाहं कटङ्करिष्यामीति वदन्ति। **लोकराज्ये** तु स्वाधीनशासना अमात्यादयोऽपि स्वेच्छया व्यवहरन्तः क्रियामात्रं प्रतिपादयन्ति। दैववशात्सम्पन्ने कार्ये मयैतत्सम्पादितम्, कार्यविप्रतिपत्तौ तु भ्रष्टाचाराः सर्वेऽपीत्यधिकारन्यासेन समर्थयन्ति चात्मानम्॥ राजकीयकर्मकरैः कथं वर्तनीयमित्येतद्विषयेऽपि 'जहदप्यसौ स्वार्थं नात्यन्ताय जहाति, यः परार्थविरोधी स्वार्थस्तं जहाति। तद्यथा–तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहाति, न तु हिक्कितश्वसितकण्डूयितानि' इति समर्थसूत्रे प्रतिपाद्यते। राजकर्मणि प्रवर्तमानाः पुरुषाः स्वीयेन कर्मणा राजकर्मण उपरोधं वारयेयुरित्येव राज्ञोऽभिप्रायः। यानि च स्वोन्नतिसाधकानि कर्माणि राजकर्मणः प्रतिरोधं न कुर्वीरन् तत्सम्पादने न काचिद्धानिर्न्न्यायश्चेति॥ राजकीयोद्भासविषयप्रकाशकानि भाष्ये बहून्युदाहरणानि प्रदर्शनीयान्यपि स्थानाभावाद्दिङ्मात्रप्रदर्शनेनैव सन्तोष्टव्यम्॥

## स्त्रीसम्मानः—

स्त्रीसमुदाचारः कथमासीत्तदानीं सोऽप्यवलोकनीयः। **एको गोत्रे ४।१।९३।** इत्यत्र "काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणी" इति; **अनुपसर्जनात् ४।१।१४।** सूत्रे "काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणी अत्र प्राप्नोति। नैष दोषः। अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम्" इत्याद्युदाहरणैः स्त्रीणां शिक्षैव नासीत्, ताश्च केवलं भोगसाधनीभूता अस्वतन्त्रा इत्याद्याक्षेपा निर्मूलाः। तदा गृहिण्यो मीमांसादिशास्त्रेष्वपि ग्रन्थकर्त्र्य आसन्, न तु गृहं गृहमटमाना भृत्यकर्मण्येव नियुक्ताः। अत एव–**अणिञोरनार्षयोः० ४।१।७८।** इति सूत्रे "औदमेध्यायाश्छात्राः" इत्युदाहरणं संगच्छते॥ **विप्रतिषेधसूत्रे** 'अस्ति प्राधान्ये वर्तते, तद्यथा–परमियं ब्राह्मण्यस्मिन् कुटुम्बे, प्रधानमिति गम्यते' इत्युदाहरणेन कुटुम्बप्राधान्यमपि तासा-

मासीदिति निर्विवादं वक्तुं शक्यते ॥ **करणसंज्ञा**सूत्रे "अभिरूपायोदकमानेयमभिरूपाय कन्या देया इति । न चानभिरूपे प्रवृत्तिरस्ति तत्र **अभिरूपतमाय** इति गम्यते" इति; **नमः स्वस्ति०** २।३।१६। इति सूत्रे 'अलमिति पर्याप्त्यर्थग्रहणं कर्तव्यम् । इह माभूत्–अलं कुरुते कन्याम्' इति चोदाहरणाभ्यां स्त्रीदाक्षिण्यं सुरूपमिव प्रतीयते ॥

**प्रमाणव्यवहारः—**

**मानविषये—**

**'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ।**
**आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः ॥**
**भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन ॥'**

इति **आर्हादगोपुच्छ०** ५।१।१९। इति सूत्रेऽन्यत्र च विस्तरश उक्तमिति प्रमाणप्रमेयादिकल्पना सूक्ष्मतरदर्शिनां भूषणभूतैवासीदिति गम्यते । तेन प्रामाणिक एव व्यवहारः संप्रवृत्त इति सिद्धम् ॥

व्यवहारेऽपि कथं दक्षा आसन्निति "लोकतो व्यवहारं दृष्ट्वा गुणस्य निर्ज्ञानम् । तद्यथा–पटुरयं ब्राह्मण इत्युच्यते यो लघुनोपायेनार्थान् साधयति । पटुकल्पोऽयमित्युच्यते यो न तथा साधयति" इति–**ईषदसमाप्तौ०** ५।३।६७। सूत्रे; "वृषलरूपोऽयं, अप्ययं पलाण्डुना सुरां पिबेत् । चोररूपोऽयं, अप्ययमक्ष्णोरञ्जनं हरेत् । दस्युरूपोऽयं, अप्ययं धावतो लोहितं पिबेत्" इति **प्रशंसायां रूपप्** ५।३।६६। सूत्रे च सम्प्रदर्शितव्यवहारेण ज्ञातुं शक्यम् ॥ गुणिनां दुष्टानाञ्च स्वभावपरिज्ञाने सुकुशलास्तदानींतना अनेन प्रघट्टकेन ज्ञायन्ते ॥ व्यवहारपरिज्ञानेऽन्यान्यप्युदाहरणानि यथा–"तत्सामीप्यात्तु व्यञ्जनमपि तद्गुणमुपलभ्यते । यथा–द्वयो रक्तयोर्वस्त्रयोर्मध्ये शुक्लं वस्त्रं तद्गुणमुपलभ्यते । बदरपिटके रिक्तको लोहकंसस्तद्गुण उपलभ्यते" इति **नीचैरनुदात्तः** १।२।३०। इति सूत्रे; "कटं करोति भीष्ममुदारं शोभनं दर्शनीयम्" इति **अनभिहितसूत्रे** प्रतिपादितानि समाजस्य याथार्थ्यं गमयन्ति । **बदरपिटके**–बदरपेटिकायां–प्रेषणार्थं कृतायां **रिक्तकः**–घर्षणेनोज्ज्वलीकृतः **लोहकंसः**–आदर्शस्तद्गुण उपलभ्यत इति तदर्थः ॥ पेटिकाश्चारुरूपाः कृत्वाऽऽदर्शसंयुताश्च विधाय तासु विक्रयार्थं प्रेषणीयानि बदरादीनि फलानि निधाय ताः पेटिका बहिः प्रस्थाप्यन्ते इत्यनेन व्यवहारकरणे कौशल्यमेषामुपजनयन्ति ॥

**वाहनानि—**

वाहनादिप्रकारा अपि **निपातैर्यद्यदिहन्त०** ८।१।३०। इति सूत्रे 'यत्कूजति शकटं, यती कूजति शकटी, यन् रथः कूजति' इति; **यद्धितु परं०** ८।१।५६। इति सूत्रे 'आरोहन्ति हस्तिनं मनुष्या आरोहयति हस्ती स्थलं मनुष्यान्'; **न वेतिविभाषा**सूत्रे 'अभ्यवहारयति सैन्धवान्, विकारयति सैन्धवैः' इत्यादिभिः हस्त्यश्वगवादीनां वाहनेषु नियतमुपयोग आसीदिति प्रत्यभिज्ञानम् । **ग्रहणकशास्त्रे** 'तमेवाध्वानं कश्चिदाशु गच्छति कश्चिच्चिरेण कश्चिच्चिरतरेण । रथिक आशुगच्छति आश्विकश्चिरेण पदातिश्चिरतरेण' इत्युदाहरणं वाहनक्रियायामुपयुज्यमानो रथ एव तत्र प्रधानमासीदिति गम्यते ॥

मार्गेषु गमनागमनप्रकारोऽपि **हेतुहेतुमतोर्लिङ्** ३।३।१५६। इति सूत्रे सुस्पष्टं प्रतिपादितः । तत्र हि "दक्षिणेन चेद्यायात् न शकटं पर्याभवेत् । दक्षिणेन चेद्यास्यति न शकटं पर्याभविष्यति" इत्युदाहरणं 'यदि देवदत्तो मार्गे दक्षिणभागेन यास्यति तदा शकटाद्रक्षितः स्यात्' इत्यर्थकमुक्तम् । अनेन वाहनानां पादचारिणामपि केचन नियमा आसन्निति ज्ञायते ॥

**योजनं गच्छति** ५।१।७४। इति सूत्रे "क्रोशशतं गच्छति क्रौशशतिकः, योजनशतं गच्छति यौजनशतिकः, वारिपथेन गच्छति वारिपथिकः" इत्यनेन क्रोशशतगमनसमर्थानि योजनशतगमनसाराणि वाहनानि प्रयुज्यन्ते स्म ॥ विचित्राणि अनेकप्रकाराणि वाहनान्यपि **तस्येदम्** ४।३।१२०। इति सूत्रे "आश्वरथम्, औष्ट्ररथम्, गार्दभरथम्" इत्युदाहरणैः प्रदर्श्यन्ते । जलवाहनान्यपि नापरिचितानीति वारिपथिकेन ज्ञायते ॥ **क्रीडोऽनुसं०** १।३।२१। इत्यत्र 'संक्रीडन्ति शकटानि' इत्यनेन वाहनानां स्पर्धा प्रतीयते । तथा तत्रैव 'पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्ते' इत्येतत् वाह्यानां स्वभावान् द्योतयति ॥ **ग्राम्यपशुसं०** १।२।७३। सूत्रे 'गाव उत्कालितपुंस्का वाहाय च विक्रयाय च । कः पुनरर्हति अग्राम्याणां पुंस उत्कालयितुं ये ग्रहीतुमशक्याः, कुत एव वाहाय च विक्रयाय च । कः पुनरर्हति अपशूनां पुंस उत्कालयितुं येऽशक्या वाहाय च विक्रयाय च' इति वाहविषये विशिष्टं व्यवहारं प्रतिपादयति । प्रत्यभिज्ञायते चानेन येऽपशवः, ये वाऽऽरण्यका वाहायानुपयुज्यमानाः, तेषु एतादृशं व्यवहारमनाचरन्तः सम्यक् दर्शिन आसन्निति ॥

**शब्दव्यवहारः—**

शब्दव्यवहारेऽपि कथं दक्षाश्चैत इत्यवलोकनेन प्रीणन्ति सहृदया इति दिङ्मात्रमुदाह्रियते । **ह्रस्वे** ५।३।८६। इत्यत्र "अल्पं घृतं-अल्पं तैलमित्युच्यते, न कश्चिदाह–ह्रस्वं घृतं ह्रस्वं तैलमिति । ह्रस्वः पटः ह्रस्वः शाटक इत्युच्यते, न कश्चिदाह–अल्पः पटः अल्पः शाटक इति" इति; "समाने रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति । समाने च काले वर्णे गौः कृष्ण इति भवति अश्वो हेम इति, समाने च शुक्ले वर्णे गौः श्वेत इति भवति अश्वः कर्क इति" इति **पितामात्रा** १।२।७०। इत्यत्र; **"बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तत्वन्नीतिः । शब्देनार्थान्वाच्यान्दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ॥** इति बुद्धिविषयमेव शब्दानां

पौर्वापर्यम्। य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थेऽयं शब्दः प्रयोक्तव्यः, अस्मिंस्तावच्छब्देऽयं तावद्वर्णस्ततोऽयं व्यवहारः" इति **संहितासंज्ञा**सूत्रे प्रयुज्यमाना व्यवहाराश्च शब्दप्रावीण्यं गमयन्ति। अत एवैते शब्दप्रमाणका इत्यभ्युपगम्यते। भाषाशब्दानां संव्यवहाराश्च देशभेदेन भिन्नाः संस्कृतेन साम्यमुपगच्छन्तः 'गावी गोणी गोता गोपोतलिका' इत्येवमादयस्तदानीं राष्ट्रभाषात्वेन गीर्वाणवाण्याः सुप्रचार आसीदित्यवगमयन्ति ॥

परिमितमत्रस्थानम्, महांश्चायं विषयः। एतावता प्रबन्धेन दिङ्मात्रदर्शनमेव यथा कश्चिद्भवेन्न वेति संशयितचित्ताः साहसेनैव प्रवृत्ताः स्वबुद्धिबलानुरूपं यत्किञ्चित्स्वरूपं विद्वज्जनमनोविनोदार्थमेतदुपस्थापयामः। भाष्यप्रदत्तोदाहरणेभ्य**स्तत्कालचित्रं** यथावदुपपादयितुं शक्यं युक्तञ्चेत्येतावान् समाश्वासो यदि तत्र भवतां पारदृश्वनां मनांसि प्रमोदयेत् तदा सफलपरिश्रमा वयमिति सम्भावयामः ॥

## स्वभावपरिचयः—

मनुष्यस्वभावपरिचायकान्युदाहरणान्यप्यवश्यमवलोकनीयानि, तानि च सुबहून्यप्यत्र कतिपयान्येवोदाह्रियन्ते। **शीतोष्णाभ्यां० ५।२।७२।** इति सूत्रे 'किं यः शीतं करोति स शीतकः, यो वा उष्णं करोति स उष्णकः? किञ्चातः? तुषारे आदित्ये च प्राप्नोति। एवन्तर्हि शीतमिव शीतम्, उष्णमिवोष्णम्। य आशु कर्तव्यानर्थाञ्चिरेण करोति स उच्यते शीतक इति। यः पुनराशु कर्तव्यानर्थानाश्वेव करोति स उच्यते-उष्णक इति।' इति; **अयः शूल० ५।२।७६।** सूत्रे 'किं योऽयःशूलेनान्विच्छति स आयःशूलिकः, किञ्चातः? शिवभागवते प्राप्नोति। एवं तर्हि अयःशूलमिव-अयःशूलम्। यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यते-आयःशूलिकः' इति चोदाहरणे उष्णकं शीतकं आयःशूलिकञ्च जनमुपस्थापयतः। तत्र प्रसङ्गात् शिवस्य भगवतो भक्ता आयसेन त्रिशूलेन भिक्षामन्विच्छन्तीत्यपि प्रदर्शितम्। केचिच्चोष्णका वर्तन्ते केचिच्च मन्दा अपर आततायिन इति दर्शनादेते सर्वेऽपि प्रकारा निन्दिता लोके, तद्गुणविशिष्टाश्च ये विहरन्ति तेऽपि वाच्या भवन्तीत्याशयः ॥

**उपमानं शब्दार्थ० ६।२।८०।** इत्यत्र "पुष्पहारी फलहारी वृकवञ्ची वृकप्रेक्षी कोकिलाभिव्याहारी गर्दभोच्चारी साध्वध्यायी विलम्बिताध्यायी" इत्याद्युदाहरणानि नानाविधान् मनुष्यस्वभावान् परिचाययन्ति ॥

**दूराद्धूते च ८।२।८४।** इत्यत्र "दूरशब्दश्चायमनवस्थितपदार्थकः। तदेव हि किञ्चित्प्रति दूरं किञ्चित्प्रति अन्तिकं भवति। एवं हि कश्चित्कञ्चिदाह-एष पार्श्वतः करकस्तमानयेति। स आह-उत्थाय गृहाण दूरं न शक्ष्यामीति। अपर आह-दूरं मथुरायाः पाटलिपुत्रमिति। स आह-न दूरमन्तिकमिति। एवमेष दूरशब्दोऽनवस्थितपदार्थकः" इति; **कृत्यचः ८।४।२९।** इति सूत्रे 'निर्विण्णोऽहमनेन वासेन' इति; **अट्कुप्वाङ्० ८।४।२।** इति सूत्रे 'गर्गैः सह न भोक्तव्यमिति प्रत्येकञ्च न भुज्यते समुदितैश्च' इत्येतैश्च 'गर्गैः सह न भोक्तव्यम्' इति सामुदायिक आदेश इत्यायाः स्वभावविशेषाः प्रतीयन्ते। **भिन्नरुचिर्हि लोक** इतिन्यायेन यदेवैकस्य समीपं तदेवान्यस्य दूरमिति स्वभाववैचित्र्यं प्रदर्शयति ॥ "यदुदुम्बरवर्णानां घटीनां मण्डलं महत्, वेदान्नो वैदिकाः शब्दाः, खेदात्स्त्रीषु प्रवृत्तिर्भवति समानश्च खेदविगमो गम्यायाञ्चागम्यायाञ्च" इत्यादीनि प्रसिद्धतराणि स्वभाववैचित्र्यदर्शीन्युदाहरणानि लौकिकानां स्वभावपरिचये वैदुष्यातिशयं द्योतयन्ति ॥ **समर्थ**सूत्रे "त्वं तिष्ठ शष्कुलया खण्डो धावति मुसलेन, किं त्वं करिष्यसि शष्कुलया खण्डो विष्णुमित्र उपलेन' एते वाक्ये-'त्वं तिष्ठ शष्कुलया न प्रयोजनं मुसलेन कृतः खण्डो धावति। हे विष्णुमित्र त्वं शष्कुलया किं करिष्यसि, उपलेनैव कृतः खण्डः' इत्यर्थके वक्तुः स्वभाववैचित्र्यं प्रदर्शयतः, स्वल्पे वस्तुनि दुर्बोधोक्तिम्प्रदर्श्य स्वभाववक्रतामुपपादयतश्च ॥

**अनेकमन्यपदार्थे २।२।२४।** इति सूत्रे "इदं तावदयं प्रष्टव्यः-अथेह देवदत्तस्य भ्राता इति कः षष्ठ्यर्थ इति। तत्रैतस्यात्-एकस्मात्प्रादुर्भाव इति। एतच्च वार्तम्। तद्यथा—सार्थिकानामेकप्रतिश्रये उषितानां प्रातरुत्थाय प्रतिष्ठमानानां न कश्चित्परस्परमभिसम्बन्धो भवति। 'एवंजातीयकं भ्रातृत्वं नाम। अत्र चेद्युक्तः षष्ठ्यर्थो दृश्यते, इहापि युक्तो दृश्यताम्" इत्यनेन प्रघट्टकेन भगवान् भाष्यकारः सार्थिकेष्वपि भ्रातृव्यवहारमुपदिशन् तदानीन्तनानां स्वभाववैशिष्ट्यमुपपादयति ॥

अत्र भाष्योदाहरणान्येव प्रायोऽर्थसम्पत्तये समाहृतानि। भाष्योदाहरणेषु च विद्याः, कलाः, सामाजिकव्यवहाराः, राजकीयव्यवहाराः, धर्मव्यवहाराः, स्त्रीणामधिकाराः, प्रमाणप्रमेयादिव्यवहाराः, वाहनप्रकाराः, आरण्यकन्यायाः, शब्दव्यवहारा इत्यादयोऽनेके विषयाः संगृहीता दृश्यन्ते। तत्र कतिपयान्युदाहरणान्यासाद्य प्रतीतमर्थं विद्यार्थिनामुपयोगायात्रोपनिबद्धं सुचिरमालोक्य सफलयन्तु तत्रभवन्तो विद्याव्यसनिनः ॥ **एतावांश्चार्थ उपलभ्यते**—तदानींतना जनाः सर्वासु विद्यासु कलासु चाभिविनीताः सामाजिकव्यवहारेषु निष्णाता अन्यायप्रतीकारबुद्धयः प्रमाणादीन्निर्णीय तदनुसारेण संविधानमाचरन्तः शब्दव्यवहारकुशला अधर्मभीरवः शूराः प्राणपणेनापि सत्यसंरक्षणदक्षाः परोपकारिणश्चातुर्वर्ण्यव्यवस्थामर्यादामपरित्यजन्तोऽपि परस्परं वैरभावमुत्सृज्य भ्रातृभावेन व्यवहरणशीलाः स्त्रीसम्मानसंरक्षणदक्षा धनधान्यपश्वादिभिरुपेताः सुखिनो धार्मिकाश्चासन्निति। तथाऽचिरोद्गतस्वातन्त्र्यरसाप्लाविता इदानीन्तना भारतीया बुद्धिवैभवशालिनः प्राज्यफलमूलोदकाः सम्पन्नतरगोरसाः सुविद्याश्चातुर्वर्ण्यव्यवस्थापालनदक्षा धर्मनिष्ठा आचन्द्रार्कं सुखिनो भूयासुरिति सम्प्रणम्य श्रीविश्वेश्वरचरणौ सम्प्रार्थयामः ॥

## एतत्संस्करणविषये—

एतावत्सर्वं यथावद्बोधयितुं परिमितपत्रोऽयं निबन्धो न समर्थ इति भाष्यावलोकनमेव वरमिति सम्प्रार्थ्य एतत्संस्करणविषये

द्वित्राः शब्दा विनिवेद्यन्ते – म. म. पं. शिवदत्तदाधिमथा भाष्यस्य विभज्य प्रकाशनमारभन् । शिष्यशिक्षायै परमोपयोगोऽनेनैवंविधेन व्याख्यानेनेति भृशं समर्थयामः । अत एव स्वीयसंस्करणप्रसङ्गे राजलक्ष्मीकारा गुरुप्रसादशास्त्रिणोऽपीमां व्यवस्थामङ्गीकृत्यैव स्वाभिप्रायमाविश्चक्रुः । प्रयत्नश्चायं शिवदत्तपण्डितानां तृतीयाध्यायान्त एवावसितः । एतादृशविभागश्च शिवदत्तैश्छायाकृत्कृत **एवोपलब्ध** इति द्वितीयाह्निके **हयवरट्** सूत्रे १४० तमे पृष्ठे 'अनुवर्तते विभाषा शरोचि' इति श्लोकवार्तिकावतरणे ११ एकादश संख्याकछायाटिप्पनीतो बोध्यते । तत्र हि '**समाधानसाधकसिद्धान्तिवार्तिकम्**' इत्यवतरणम् । तत्रत्यं 'सिद्धान्तीति' इति प्रतीकमुपादाय छायाप्रवृत्तिः । 'सिद्धान्तीत्यस्य–सिद्धान्तिभाष्यसहायवार्तिकमित्यर्थः' इत्युक्त्या छायाकारेण कृतोऽयं विभागः सावतरणः शिवदत्तैरुपलब्धः शिष्योपकाराय यथावदुपन्यस्त इति ते धन्यवादार्हाः । छायाकृत्कृतत्वाद्विभागश्चायं सानुबन्धः प्रामाणिकश्चेति न संशयलेशोऽपि । तृतीयाध्यायान्ते परमास्पदमुपगताः शिवदत्तचरणा इति अवसितोऽयमुपक्रमो निर्णयसागराधिपतिप्रोत्साहनेन गुरुचरणमनुसन्धाय काशीभूषणानां सुहृदां विद्वच्चरणानां साहाय्यमास्थाय चास्माभिरुपक्रान्तश्चतुर्थपञ्चमषष्ठाध्यायान् विद्वज्जनकरकमलगतान् व्यधत्तेति नाविदितम् ॥ जगन्मण्डूकं ग्रसितुं व्यात्तानने समरव्याले अवसितप्राये च सर्वव्यवहारे मुद्रणव्यवहारोऽपि शिथिल इव सञ्जातः परमसौभाग्येन **स्वतन्त्रेऽस्मिन् भारते** कथञ्चिदिदानीं समाश्वासमाधत्ते । अत्रावसरे च दुर्लभानि नवाह्निकपुस्तकानि समालोक्य छात्रैः पुनः पुनः सम्प्रेर्यमाणा निर्णयसागरमन्त्रिणो नवाह्निकप्रकाशने दत्तचित्ता मां व्यजिज्ञपन् । भाष्याध्ययनसमये प्रदीपोद्द्योतच्छायानां टीकाग्रन्थानां गुरूपदिष्टमभिप्रायमाकलयन्तं शिवदत्तरघुनाथपण्डितकृतास्तत्र तत्र समुपलभ्यमानाश्चिन्त्यत्वोक्तय एवास्य संस्कारकरणे मां समयुञ्जीरन् । शिवदत्तपण्डितैः स्वाभिप्रायाविष्करणदक्षैरनुमितानि वार्तिकानि-प्रत्याख्याता उपसंगृहीताश्च भाष्यभागा-यथा मनांसि अतुदन् न तथा रघुनाथपण्डितानां चिन्त्यत्वोक्तयः । ता हि उद्द्योतच्छाये एव सम्बध्नन्ति । वार्तिकभाष्याभागानामनुमानन्तु भाष्यमेव संकीर्णं विदधीतेति प्रामाणिकपुस्तकानुगृहीतं शुद्धं समुचितपाठप्रभेदपूरितं चिन्त्यत्वोक्तिनिराकरणसमुल्लासितं नवाह्निकं शिष्याणामुपकारार्थं विद्याभिवृद्धये निर्णयसागरसञ्चालकाः सोपस्कारं प्रकाशयन्ति ॥ अत्रादर्शपुस्तकानां साहाय्यं षष्ठाध्यायप्रस्तावोपनिबद्धमेवास्ते इति तद्विवरणं द्विरुक्तं स्यात् । सुगृहीतनामधेयानां नागपुरवासिनां म. म. **कृष्णशास्त्रिघुले** महोदयानां श्रीमत्**सदाशिवभट्ट**परिशीलितं प्रदीपोद्द्योतसहितं पुस्तकरत्नमेवात्रावतारितमिति नात्युक्तिः । पुण्यपुरनिवासिनां विद्याव्यसनिनां बेलवलकरोपाह्वानां **श्रीपादशर्मणां** साहाय्येन प्राचीनतरं अत्र प. संज्ञया व्यवहृतं भाण्डारकरसंस्थात उपलब्धम्पुस्तकमधिकं ततः समुपयोजितम् । पुस्तकञ्चैतत्सम्पूर्णं भाष्यस्यैव । नात्र प्रदीपोद्द्योतौ । पाठभेदाश्च सुपुष्कलाः । अस्य द्वितीयाह्निकान्ते 'एतद्भाष्यपुस्तकं यतिश्रीः ७ अनन्तसरस्वती एतेषाम् स्वस्ति । संवत् १५४५ वर्षे श्रावणशुदि १५ बुधे श्रीवृद्धनगरे'। तृतीयाह्निकादौ बहुत्र 'ओं नमो गणपतये' इत्याद्युल्लेखो दरीदृश्यते ॥

काशीस्थराजकीयसंस्कृतपाठशालाध्यापकाः श्रीरघुनाथपण्डिता द्वितीयावृत्तिमुद्रणावसरे श्रीशिवदत्तसाहाय्यमारचन् । साहाय्यविधानेन महदुपकृतमिति नात्र संशयलेशः । छायामुद्द्योतञ्च यत्र तत्र चिन्त्यत्वेन समुपबृंहणशीलांस्तान् 'नवाह्निके प्रायः प्रामादिका आशयानवबोधमूलिकास्ता**श्चिन्त्यत्वोक्तयः**' इति भृशं विज्ञापयामः ।

यथा–**अणुदित्सवर्णस्येति** सूत्रे **ह्रस्वसम्प्रत्ययादिति चेदि**ति वार्तिकविवरणे 'उच्चार्यमाणः शब्दः सम्प्रत्यायको भवति, न सम्प्रतीयमानः' इति भाष्यव्याख्याने रहसि पुस्तकमीक्षमाणस्यातिसूक्ष्मोच्चारणमस्तीत्यनन्तरं पक्षान्तरमाहोद्योते—५५५तमे पृष्ठे २१ पंक्तौ—'**यद्वा** लिपेरेव चेष्टादिवत्सङ्केतेन बोधकत्वम् । अत एव लिपौ शब्दत्वभ्रमो बालानाम् । **यद्वा** लिपावनादेः शब्दतादात्म्याध्यासा**द्बोधकत्वम्**' इत्युक्तम् । तत्र 'बोधकत्वं' इति पदं विव्रियमाणे रघुनाथपण्डितैः '**इदं चिन्त्यम् । लिपौ शब्दाध्यासेऽप्युच्चार्यत्वासम्भवात्**' इत्युक्तम् । वस्तुतस्तु तत्रोच्चारणाभावेऽपि बोध उपपादितः 'लिपौ शब्दत्वबाधज्ञानवतां पण्डितानामपि अन्तःकरणादावात्मत्वप्रत्यये भ्रमत्वज्ञानतामनादिसिद्धारोपेणैव व्यवहारवद्बोधोऽपि' इत्यनेनोद्द्योतकृता । अत्रापि रघुनाथाश्चिन्त्यत्वं वदन्ति । तादृशानि स्थलानि क्वचिद्विवेचितानि, कानिचिच्च निराकृतानीत्युदारान्तःकरणैः क्षन्तव्यमिति विज्ञापयामः ॥

राजलक्ष्मीकारा **गुरुप्रसादा**स्तु ततोऽप्यधिकतराः कैयटनागेशौ स्वशिष्यसम्मितावनुमिन्वते । ते हि 'अथ शब्दानुशासनम्' इत्यत्रैव प्रथमग्रासे मक्षिकापातमिव 'परे तु शास्त्रारम्भप्रयोजनसूचकं भगवतः कात्यायनस्य वार्तिकमेतत् । भाष्यकारस्यैतद्व्याकरणप्रयोजनप्रदर्शनवाक्यं इति वदन्तौ कैयटनागेशौ तु भ्रान्तावेवेतीत्याहुः' इति वदन्तो भाष्यकारमपि अधिक्षिपन्ति । भाष्यकृता 'सिद्धे शब्दार्थसम्बन्धे–' इति व्याख्याने 'माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते' इत्यादिवदता **सिद्धे शब्दार्थसम्बन्ध** इत्येव वार्तिकारम्भः प्रतिपादितः । न चैते भाष्यकारं गणयन्ति, का कथा प्रदीपोद्द्योतयोः ? वस्तुतः शिवदत्तप्रसादलभ्यां छायां राजलक्ष्मीरूपेण विपरिणमयन्तो विपरिणमनबुद्धिमपि शिथिलां तत्र तत्र प्रदर्शयन्त एते उपेक्षणीया एव ॥

पं॰ रघुनाथगुरुप्रसादवत् अपरोऽपि कश्चित् भाष्ये कृतभूरिपरिश्रमं सर्वतन्त्रस्वतन्त्रं श्रीमन्नागेशभट्टमात्मौपम्येनोदरम्भरिपण्डितम्मन्यते । तेन पण्डितम्मन्येन ईशवीये १९३९ तमे वर्षे रसगङ्गाधर आमूलचूलं संस्कृतो निर्णयसागरेण मुद्रितश्च । तस्य पुस्तकस्य ७२ तमे पृष्ठे समाध्युदाहरणं–

'स्वर्गनिर्गतनिरर्गलगङ्गातुङ्गभङ्गुरतरङ्गसखानाम् ।
केवलामृतमुचां वचनानां यस्य लास्यगृहमास्यसरोजम् ॥'

इत्युक्तम् । तद्विवरणञ्च 'अत्रारोहः प्रथमेऽर्धे । तृतीयचरणे त्ववरोहः' इति ग्रन्थकृतैवोक्तम् । 'तृतीयचरणे' इत्यस्य व्याख्यानं 'तृतीयचरण इति बहुव्रीहिः, द्वितीयेऽर्धे इत्यर्थः' इति नागोजीभट्टेनोक्तम् । तत्र जयपुरसंस्कृतकॉलेजाध्यापकेन मञ्जुनाथोपाह्वेन भट्टश्री मथुरानाथशास्त्रिणा "५ तृतीयश्चरणो यस्मिन्, उत्तरार्धे इत्यर्थः । विचार्योऽत्र नागेशमहोदयः, यस्य लास्येत्यादौ बन्धशैथिल्यस्याप्रतीतेः।" इति टिप्पण्या सम्भावितम् । अत्र 'बन्धगाढत्वशिथिलत्वयोः क्रमेणावस्थानं समाधिः' इति समाधिलक्षणं विधाय प्रथमेऽर्धे बन्धगाढत्वमुक्त्वा तृतीयचरणे बन्धशैथिल्यमाह जगन्नाथः । गाढत्वमोजोविवरणे लक्षितप्रायमित्थम्–'संयोगपरह्रस्वप्राचुर्यरूपं गाढत्वमोजः । उदाहरणं–अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो इत्यादि' इति । संयोगपरह्रस्वप्राचुर्यरूपं गाढत्वं वदता संयोगपरह्रस्वप्राचुर्याभाववत्त्वं शिथिलत्वमित्युक्तप्रायमेव । तथा च **स्वर्गनिर्गते**ति पद्ये पूर्वार्धे संयोगपरह्रस्वप्राचुर्यात् बन्धगाढत्वं निराकुलं, मथुरानाथस्यापि सम्मतं च । तृतीये चरणे 'केवलामृतमुचां वचनानां' इत्यत्र संयोगपरह्रस्वस्यैवाभावात् प्राचुर्याभावोऽपि नेति शिथिलत्वं नास्ति–इति 'तृतीयचरणे त्ववरोहः' इति मूलग्रन्थस्यासांगत्यवारणाय 'तृतीयचरणे इति बहुव्रीहिः' इति व्याख्यातं नागेशेन, चतुर्थचरणे 'यस्य लास्यगृहमास्यसरोजम्' इत्यत्र संयोगपरह्रस्वस्यैकस्य 'यस्य' इत्यत्र सत्वेनापरस्य संयोगपरह्रस्वस्यासत्वेन प्राचुर्याभाव उपपन्न इति बन्धशैथिल्योपपत्तिः । स्वटिप्पण्यां 'यस्य लास्येत्यादौ बन्धशैथिल्यस्याप्रतीतेः' इति वदन् मथुरानाथः सुकविरपि महाविद्यालयाध्यापकोऽपि प्रथितयशस्कोऽपि श्रीमन्नागेशोक्तौ यत्र तत्र चिन्त्यत्वं विप्रब्रुवन् "यस्मिन् कुले त्वमुत्पन्नः" इत्युक्तिं स्मारयति । वस्तुतस्तु ब्रह्मसूत्र–**हानौ तूपायनशब्दशेषत्वात्० ३।३।२६।** इत्यस्य व्याख्यानावसरे भामतीव्याख्यानप्रसङ्गे कल्पतरुकारेण यदुक्तं–'पदवाक्यप्रमाणाब्धेः परं पारमुपेयुषः । वाचस्पतेरियत्यर्थेऽप्यबोध इति साहसम् ॥' इति, तदेव **'इयत्यर्थेऽपि नागेशस्याबोध इति साहसम्'** इति सम्परिवर्त्य पण्डितत्रयाणामप्युत्तरयितुं युक्तमित्यलं परदोषाविष्करणेन ॥ नागेशग्रन्थप्रकाशनसमये तदीयाक्षेपनिराकरणं **धर्म इति बुद्ध्यैव परदोषाविष्करणं,** नान्यथेति यदत्रातिक्रान्तं तन्नौद्धत्येनेति भृशमभ्यर्थयामः ॥

अस्मदीयटिप्पणे क्वचित् 'विस्तरेण प्रपञ्चितमेतत्प्रस्तावनायाम्' इत्युक्तिः प्रस्तावनाविषयविपर्यासात्स्थानाभावाच्च न पारितेति उदाराशयैस्तत्रभवद्भिः क्षन्तव्यमिति विज्ञापयामः ॥

अत्र माननीयानामुक्तिविवेचनाय तदन्ते (छाया) (दा. म.) (र. ना.) इत्याद्युल्लेखो विनिवेशितः । यत्र नास्ति तादृशः समयस्तदस्मदीयं विद्यार्थिनामुपयोगायैव, न पाण्डित्यप्रदर्शनायेत्यवगन्तव्यम् ॥

अपि चात्र त्रुटीनाम्बाहुल्येऽपि गुणैकपक्षपातिनो धीरा न तत्र दत्तचित्ता इत्यवधार्यापि पूर्वपुस्तकानुसरणशीलनस्वभावादनवधानाच्च वार्तिकक्रमाङ्कानाम्परिभ्रंश उद्वेजयत्येवेति तदर्थं नाप्राप्ता 'क्षन्तव्यम्' इत्युक्तिस्तदितरविज्ञाताविज्ञातत्रुटिविषयेऽप्यवधेयेति विज्ञाप्यते ॥

आदर्शपुस्तकप्रदानेनोपकर्तॄणामधमर्णा वयम् । विल्सनमहाविद्यालये संस्कृतप्रधानाध्यापकानां श्रीमतां वेलणकरोपाह्व**हरि**पण्डितानां सर्वविधसाहाय्येनोपकृता वयम् । यद्यपि निर्णयसागरास्थानपण्डितैरधिकारिभिश्च प्रकाशने बहूपकृता वयं तथापि टङ्कसंयोजक**हिराजी**प्रभृतीनां संयोजनकौशलेन सञ्जाताश्वासा निश्चिन्ताश्चेति सत्यम् । ग्रन्थान्ते ससूत्रवार्तिकपाठ उपन्यस्तः । ततश्च विद्यार्थिनामुपयोगाय संशयितशब्दानां कोशोऽपि दत्तः । ते च शब्दाः कस्मिन् पृष्ठे वर्तन्त इति ज्ञानाय पृष्ठाङ्कोऽपि प्रदर्शितः । अनल्पमतिभिरुपक्रमणीयेऽस्मिन् कर्मणि विद्वज्जनानुग्रहायदस्माभिरूपक्रान्तत्सफलयन्तु तत्रभवन्तः ॥

**'यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे नहि ।**
**यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्नहि ॥'**

इति मधुसूदनसरस्वतीनिष्यन्दैरत्रत्यसत्यतत्वप्रकथनेन पण्डितमण्डलीसमनुरागं सम्प्रार्थयति—

काशीविश्वविद्यालयविनेयः–
म. म. जयदेवमिश्रचरणान्तेवासी–
**भार्गवशास्त्री ।**

मकरसङ्क्रमणम्,
शाके १८७२



## श्रीगणेशाय नमः ।

## छायाग्रन्थस्य मङ्गलमुखेन प्रारम्भः—

पतञ्जलिमुमाकान्तकमनीयविभूषणम् । सहस्रवदनाम्भोजं सुवासितजगद्गुणम् ॥

योगिहृत्पद्मवसनं मूलमात्रविदारणम् । स्फोटाभिधं स्फोटमूलं रूपकारणकारणम् ॥

**वैद्यनाथः पायगुण्डो** ध्यात्वा ध्यात्वा परं गुरुम् । भाष्यप्रदीपसूद्द्योतान् व्याचष्टे गूढसंविदे ॥

शास्त्रं निर्णायकं न्याय्यकत्वालापं (?) मुनिसत्तमाः । सूत्ररूपेण कुर्वन्ति शिवस्यैवाज्ञयैव तु ॥

अल्पाक्षरमसंदिग्धं सारवद् विश्वतोमुखम् । अस्तोभमनवद्यं च **सूत्रं** सूत्रविदो विदुः ॥

मुनयश्च मनुष्याश्च प्रसादादेव शूलिनः । सूत्रव्याख्यां प्रकुर्वन्ति वार्तिकानां स्वरूपतः ॥

'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं **वार्तिकं** प्राहुर्वार्तिकज्ञा मनीषिणः ॥'

सूत्रार्थं भाष्यरूपेण यथावद्दर्शयन्ति च ॥

'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुका(सा)रिभिः । स्वपदानि च वर्ण्यन्ते **भाष्यं** भाष्यविदो विदुः ॥'

प्रसादादेव रुद्रस्य भवानीसहितस्य तु । कुर्वन्ति केचिद् व्याख्यानं भाष्यस्यैव तपोबलात् ॥

पदच्छेदः पदार्थश्च विग्रहो वाक्ययोजना । आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम् ॥

स्वबुध्यधीतभाष्यार्थसंग्रहेणैव वा[1]ऽथवा । विस्तरेण प्रकुर्वन्ति केचित् प्रकरणात्मना ॥

शास्त्रैकदेशसंसिद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः **प्रकरणं** नाम शास्त्रभेदविचक्षणाः ॥

सूत्रभाष्यादिभिः शास्त्रं साक्षाद्वेदनसाधनम् । श्रोतव्यं स्वगुरोः स्वात्मस्वरूपप्रतिपत्तये ॥

आत्मलाभात् परं नास्ति किंचिन्मात्रमपि द्विजाः । **पराशरपुराणे** वै स्पष्टमेतन्निबोधत ॥

जीर्णैरनुक्तमत्रोक्तं सूत्राद्यर्थप्रतीतये ॥

**विष्णुधर्मोत्तरे** प्रोक्तं मार्कण्डेयेन धीमता । वज्रं प्रति यथा सर्वं प्रोच्यतेऽथ स[2]मा शृणु ॥

तत्राज्ञायुक्तमद्वैधं दीप्तं गम्भीरशब्दवत् । क्वचिन्निरुक्तसंयुक्तं वाक्यमेतत्**स्वयंभुवः** ॥ १ ॥

यत्किंचिन्मिश्रसंयुक्तं युक्तं नामविभक्तिभिः । प्रत्यक्षाभिहितं यच्च **तदृषीणां** वचः स्मृतम् ॥ २ ॥

नैगमैर्विविधैः शब्दैर्निपातबहुलं च यत् । न चापि सुमहद्वाक्यं [3]**ऋषिकाणां** वचः स्मृतम् ॥ ३ ॥

अविमृष्टपदं ज्ञेय**मृषिपुत्रवचो** नृप । भूतभव्यभवज्ञानं जन्मदुःखविकुत्सनम् ॥ ४ ॥

मित्राणां तद् भवेद्वाक्यं गर्भे[4]**ष्वार्ष**प्रवर्तनम् । आज्ञायुक्तं तु वचनं तथा हेतुविवर्जितम् ॥ ५ ॥

**राजर्षीणां** तु विज्ञेयं बह्वर्थं बहुविस्तरम् । बह्वभिधानं बह्वर्थं **देवतानां** प्रकीर्तितम् ॥ ६ ॥

बह्वभिधानमल्पार्थं **दानवानां** प्रकीर्तितम् । अल्पाभिधानमल्पार्थं **गन्धर्वाणां** तथा भवेत् ॥ ७ ॥

दुर्बोधं विषमं चैव **राक्षसानां** प्रकीर्तितम् । गूढाक्षरं तु **यक्षाणां** **किन्नरै**रुक्तं[5]वत्तथा ॥ ८ ॥

**नागाना**मतिविस्पष्टं पुनरुक्तसमन्वितम् । रागद्वेषसमायुक्तं हेतुमत्**पौरुषं** भवेत् ॥ ९ ॥

इति चतुर्थोऽध्यायः ॥

अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च **सूत्रं** सूत्रविदो विदुः ॥ १ ॥

उत्सर्गेणापवादेन द्विविधं तत्प्रकीर्तितम् । सूत्रेष्वेव हि तत् सर्वं यद्वृत्तौ समुदाहृतम् ॥ २ ॥

[6]सूत्रं व्युदासश्च तथा तथोदाहरणं नृप । प्रत्युदाहरणं चैव चतुरङ्गं प्रकीर्तितम् ॥ ३ ॥

वाक्यं चैवाथ वाक्यार्थः पदार्थः पदमेव च । चतुरङ्गमिदं वेदं[7] तथैवान्यत्प्रकीर्तितम् ॥ ४ ॥

प्रतिज्ञा हेतुदृष्टान्तावुपसंहार एव च । तथा निगमनं चैव पञ्चावयवमिष्यते ॥ ५ ॥

आरम्भोऽथापि संबन्धः सूत्रार्थस्तद्विशेषणम् । चोर्दकं[8] परिहारश्च व्याख्या सूत्रस्य षड्विधा ॥ ६ ॥

विस्तरोक्तं मतिं हन्ति समासोक्तं न गृह्यते । समासविस्तरौ हित्वा वक्तव्यं यद्विवक्षितम् ॥ ७ ॥

अपार्थं व्याहतं चैव पुनरुक्तं तथैव च । तथा विभिन्नसंस्थानं युक्तिहीनं विवर्जयेत् ॥ ८ ॥

क्रमभेदो विभक्तश्च गुरुसूत्रं तथैव च । अभिधानस्य चान्यत्वं नैतानि स्युरकारणात् ॥ ९ ॥

---

**गुरुप्रसादलब्धार्थः शिवदत्तः सतां मतः । छायादिग्रन्थानालोच्य सारं संगृह्य यत्नतः ॥**

१ संग्रहेण संक्षेपेणैव वा प्रकुर्वन्ति । अथवा विस्तरेण प्रकुर्वन्तीति योजना । (र. ना.) २ 'समासतः' इति पाठः । ३ 'मृचीकानाम्' इति पाठः । (दाधिमथाः) ४ 'गर्भेषु च प्रवर्तनम्' इति पाठो दृश्यते । ( र. ना. ) ५ वच उच्यते इति शेषः । ( र. ना. ) ६ विधिसूत्रं, व्युदासो निषेधसूत्रमित्यर्थः । ( र. ना. ) ७ वेद इत्यस्य स्थाने चेतीति पाठ उपलभ्यते । ( र. ना. ) ८ 'चोदना' इति पाठान्तरम् ।

पूर्वं कृत्वा पदच्छेदं समासं तदनन्तरम् । समासे तु कृते पश्चादर्थं ब्रूयाद्विचक्षणः ॥ १० ॥
सूत्रार्थश्च पदार्थश्च हेतुश्च क्रमशस्तथा । निरुक्तमथ विन्यासो व्याख्या योगस्य षड्विधा ॥ ११ ॥
उपोद्घातः प्रथमतः पदार्थः पदविग्रहः ( हौ ) । अविमर्शः प्रत्यवस्था व्याख्या तन्त्रस्य षड्विधा ॥ १२ ॥
प्रत्यक्षमनुमानं च तथाप्तवचनं भवेत् । त्रिभिः प्रमाणैः संयुक्तं तन्त्रं प्रामाण्यमर्हति ॥ १३ ॥
**प्रत्यक्षाभास**मप्युक्तं तथा वै मृगतृष्णिका ॥ १४ ॥
**आभासमनुमानं** च बाष्परेणुचयौ यथा । धूमशङ्कां जनयतो नचैतदुपलब्धये ॥ १५ ॥
आप्तत्वं दर्शयित्वा तु यदनाप्तेन भाषितम् । तदा**प्तवचनाभासं** वदन्ति नृपसत्तम ॥ १६ ॥
रागद्वेषविनिर्मुक्त **आप्त** इत्यभिधीयते । नैरुक्तं द्विविधं विद्धि सिद्धमौत्पत्तिकं तथा ॥ १७ ॥
निर्वक्तव्यं तु तत्सिद्धमर्थसिद्धिस्तु सर्वदा । तत्र त्वौत्पत्तिकं सर्वं गौरश्वः पुरुषो यथा ॥ १८ ॥
दशधा तु गौणो ह्येष तं वक्ष्यामि यथामतम् ॥ १९ ॥
गौणो नैमित्तिको भाक्तः सांवादः कार्तकस्तथा । औपचारश्च सांबन्धः कैयिको यौगिकैच्छिकौ ॥ २० ॥
गुणात्तु **गौणं** पश्यामो महदित्येवमादयः । निमित्ततस्तु **नैमित्तं** खण्डमुण्डादिकं यथा ॥ २१ ॥
भक्त्या **भाक्तो** नृसिंहः स्यादमातरि च मातृवत् । समं वदन्ति यस्मिन् स **सांवादो** जित्वरी यथा ॥ २२ ॥
**कार्तकः** स्यात्तु कृतको देवदत्तादिको यथा । **औपचार**श्चोपचारात्तैलं पाशं तुला यथा ॥ २३ ॥
संबन्धतस्तु **सांबन्ध**श्छत्री मीमांसको यथा । संयोगादपि **सांयोगः** क्रियायाः **कैयिकः** स्मृतः ॥ २४ ॥
षट्कुलगुडैश्चैयो जेयः शाकटिकस्तथा । एवं परेषां च परं स्यान्नैगमनिघण्टुकम् ॥ २५ ॥
साध्योऽर्थो न प्रसिध्येत साधनानां विधिं शृणु । यद्विपन्नं तु दृश्येत तत्साध्यं साधनैः परैः ॥ २६ ॥
आत्मेन्द्रियमनोर्थानां संयोग उपदिश्यते । ज्ञानदेशादिसंदि(वि)ष्टं **प्रत्यक्ष**मिति तद्भवेत् ॥ २७ ॥
बुद्ध्या शरीरयुक्ता(भूता)त्मा यश्च युक्तोऽनुमीयते । सोऽग्निर्धूमाद्यथा विद्याद**नुमानं** तदिष्यते ॥ २८ ॥
वेदविद्याऽविरुद्धं यस्या स्मृतिः शिष्टसंमता । अप्रत्यक्षफलं विद्यात्साधनं **शास्त्र**संज्ञितम् ॥ २९ ॥
द्वयोः सदृशयोरेकं निर्दिष्टं साधयेत्परम् । गवयादिव गोः सिद्धि**रुपमानं** तदिष्यते ॥ ३० ॥
साध्योऽर्थश्चेदनुक्तोऽर्थाद्वाक्ये यस्मिन्प्रकल्प्यते । सा**र्थापत्ति**र्दिवा भुङ्क्ते देवदत्त इतीति यत् ॥ ३१ ॥
निपातनाद्योगविभागदर्शनाद्बहुरूपदेशादनुवार्तिकादपि । स्वातन्त्र्यसिद्धेः परतन्त्रदर्शनात्प्रसाधयेल्लक्षणतोऽथ षड्विधः ॥ ३२ ॥

इति विष्णुधर्मोत्तरे तृतीयखण्डे पञ्चमोऽध्यायः ॥

अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो निर्देश उपदेशोऽपदेशः प्रदेशोऽतिदेशोऽपवर्गो वाक्यशेषोऽर्थापत्तिः प्रसङ्ग एकान्तोऽनेकान्तः पूर्वपक्षो निर्णयो विधानं विपर्ययोऽतिक्रान्तवीक्षणमनागतवीक्षणं संशयो व्याख्यानमनुमतं स्वसंज्ञा निर्वचनं दृष्टान्तो नियोगो विकल्पः समुच्चय ऊह्यमिति ॥ तत्र यमर्थमधिकृत्योच्यते **तदधिकरणम्** ॥ येन वाक्यार्थो युज्यते स **योगः** ॥ योऽर्थोऽविकृतसूत्रपदे स **पदार्थः** ॥ यदन्यतो युक्तिमदर्थस्य साधनं स **हेत्वर्थः** ॥ समासवचन**मुद्देशः** ॥ विस्तरवचनं **निर्देशः** ॥ एवमेवेत्यु**पदेशः** ॥ अनेन कारणेनेत्य**पदेशः** ॥ प्रकृतस्यानागतेन साधनं **प्रदेशः** ॥ अतिक्रान्तेना**तिदेशः** ॥ अभिप्रायानुकर्षण**मपवर्गः** ॥ येनार्थः परिसमाप्यते पदेनाहार्येण स **वाक्यशेषः** ॥ यदकीर्तितमर्थादापाद्यते **सार्थापत्तिः** ॥ प्रकरणाभिहितोऽर्थः केनचिदुपोद्घातेन पुनरुच्यमानः **प्रसङ्गः** ॥ सर्वत्र यस्तथा स **एकान्तः** ॥ क्वचिदन्यथा क्वचित्तथा सो**ऽनेकान्तः** ॥ प्रतिषेधवचनं **पूर्वपक्षः** ॥ तस्योत्तरवचनं **निर्णयः** ॥ प्रकरणानुपूर्व्यं **विधानम्** ॥ तस्य प्रातिलोम्यं **विपर्ययः** ॥ इत्युक्तमित्यति**क्रान्तवीक्षणम्** ॥ परत्र वक्ष्यामीत्य**नागतवीक्षणम्** ॥ उभयतो हेतुदर्शनं **संशयः** ॥ तत्रातिशयवर्णना **व्याख्यानम्** ॥ परमतमप्रतिषिद्ध**मनुमतम्** ॥ परैरसंमतः शब्दः **स्वसंज्ञा** ॥ लोके प्रतीतमुदाहरणं **निर्वचनम्** ॥ तद्युक्तिनिदर्शनं **दृष्टान्तः** ॥ इदमेवेति **नियोगः** ॥ इदं वेदं वेति **विकल्पः** ॥ इदं चेदं चेति **समुच्चयः** ॥ यदनिर्दिष्टं युक्तिगम्यं त**दूह्यम्** ॥ इति ।

प्रयोजनं संशयनिर्णयौ च व्याख्याविशेषो गुरुलाघवं च । कृतव्युदासोऽकृतशासनं च स वार्तिको धर्मगुणोऽष्टकश्च ॥

इति विष्णुधर्मोत्तरे तृतीयखण्डे षष्ठोऽध्यायः ॥

यद्यपि नोचितमिदं दुर्बुद्धेर्मम मन्दतः । तथापि श्रीशदयया प्रवृत्तोऽहं समीरितः ॥

---

१ 'सर्वं' इति पाठः । २ क्रमयुक्तं व्याख्यानमित्यर्थः । ( र. ना. ) ३ 'संयुक्तैस्तत्री प्रा–' इति पाठभेदः । ४ 'गणोद्दीतं तद्वक्ष्यामि यथा गतम्' इति पाठः । ५ 'लगुडच्छेद' इति पाठान्तरम् । ( र. ना. ) ६ पूर्वार्धेन कैयिकोदाहरणम् । ( र. ना. ) ७ 'सुखार्थो न प्रसिद्ध्येत्' इति पाठः । ८ 'साधनैरिमैः' इति पाठः । ९ 'साध्योऽर्थश्चेदतत्कार्यो वाक्ये' इति पाठः । १० 'स्वतन्त्रसिद्धे'रिति पाठः, स्वशास्त्रसिद्धेरित्यर्थः । ( र. ना. ) ११ वृत्तौ अत्र इत्यर्थः । ( दाधिमथाः )



# श्रीमद्भगवत्पतञ्जलिमुनिविरचितं
# महाभाष्यम् ।

## कैयटप्रणीतप्रदीपप्रकाशितम् ।

### नागोजीभट्टविरचितोद्द्योतसहितम् ॥

### प्रथमाध्याये प्रथमपादे प्रथमम्—

#### पस्पशाह्निकम् ।

**( प्रदीपः )**

सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् । सदसद्रूपतातीतमदृश्यं माययावृतैः ॥ १ ॥
ज्ञानलोचनसंलक्ष्यं नारायणमजं विभुम् । प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ॥ २ ॥
पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् । सरस्वतीं च तां नत्वा सर्वविद्याऽधिदेवताम् ॥ ३ ॥
पदवाक्यप्रमाणानां पारं यातस्य धीमतः । गुरोर्**महेश्वर**स्यापि कृत्वा चरणवन्दनम् ॥ ४ ॥
महाभाष्यार्णवावारपारीणं विवृतिप्लवम् । यथागमं विधास्येऽहं **कैयटो जैयटा**त्मजः ॥ ५ ॥
भाष्याब्धिः क्वातिगम्भीरः क्वाहं मन्दमतिस्ततः । छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ॥ ६ ॥
तथापि **हरि**बद्धेन सारेण ग्रन्थसेतुना । क्रममाणः शनैः पारं तस्य प्राप्तोऽस्मि पङ्गुवत् ॥ ७ ॥

**( उद्द्योतः )**

नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् । पाणिन्यादिमुनीन् वन्द्यान् पितरौ च **सतीशिवौ** ॥ १ ॥
**नागेश**भट्टो नागेशभाषितार्थविचक्षणः । **हरिदीक्षित**पादाब्जसेवनावाप्तसन्मतिः ॥ २ ॥
याचकानां कल्पतरोररिकक्षहुताशनात् । शृङ्गवेरपुराधीशाद्**रामतो** लब्धजीविकः ॥ ३ ॥
नातिविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् । भाष्यप्रदीपव्याख्यानं कुर्वेऽहं तु यथामति ॥ ४ ॥

भाष्यं व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निबध्नाति—**सर्वेति** । क्त्वान्तानां पञ्चमश्लोकोत्तरार्धेनान्वयः । **सर्वाकारत्वं**-सर्वोपादानकारणत्वान्मृदादिवत् ॥ कार्यातिरिक्तदृश्यस्वरूपाभावात्–**निराकारत्वम्** ॥ कर्तृत्वात्–**विश्वाध्यक्षत्वम्, 'स ऐक्षत' इति** श्रुतेः ॥ **अतीन्द्रियत्वं**–विगतेन्द्रियत्वेन, **'पश्यत्यचक्षुः'** इत्यादिश्रुतेः । सर्वप्रत्यक्षीकरणं तु स्वरूपचैतन्येनैव ॥ इन्द्रियाविषयत्वेन वाऽतीन्द्रियत्वम् ॥ **सदसद्रूपत्वं**[2]=अनिर्वचनीयता, तामतीतं, तद्रहितमित्यर्थः । एवं च सदेवेति भावः ॥ नन्वीदृशमस्माभिः कुतो न गृह्यत इत्यत आह–**अदृश्य-मित्यादि ॥ १ ॥ माययावृतै**रित्यस्य कृत्यमाह—**ज्ञानेति । तत्त्वमस्या**[3]दिमहावाक्यजनिताखण्डाद्वितीयसच्चिदानन्दब्रह्माकारा वृत्तिः=ज्ञानं तदेव

---

**(छाया) उद्द्योते**—प्रारिप्सितप्रतिबन्धकशमनाय कृतं समुचितस्वेष्टदेवतानत्यात्मकं मङ्गलं शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च क्रमशो निबध्नाति—**नत्वेति** । पद्योक्तसर्वद्वितीयान्तानामत्रान्वयः । अस्य च **'कुर्वे'** इत्यत्रान्वयः ॥ **वागेति** । सरस्वतीमित्यर्थः । इष्टदेवतानत्युत्तरं समुचितसरस्वतीनत्युत्तरं समुचितमुनिनतिमाह—**गुरूनित्यादि** । **गुरून्**-जगद्गुरून् ॥ गुरुनत्युत्तरं मुनिनत्युक्तेर्भेदेन व्याख्यानमयुक्तमिति बोध्यम् ॥ पित्रादिस्वर्गायाह—**पितराविति** ॥ **चः**-सर्वेषां पूज्यानां समुच्चायकः ॥ स्वकीर्तय आह—**नागेशेति । भट्टः**–सकलशास्त्रज्ञः । स्पष्टं चेदं **वेणीसंहरण**व्याख्यायाम् ॥ **नागेशेति** । फणिभाषितभाष्याब्धिसारज्ञ इत्यर्थः ॥ एतच्छास्त्रोप-

---

**गौरीविश्वेश्वरौ नत्वा प्रथमाध्यायवर्तिनाम् । भाष्यप्रदीपोद्योतानाम्प्रभाम्पुष्णाति भार्गवः ॥**

१ 'जैय्यटा' इति अ. पाठः ।

२ 'सदसद्रूपता–' प्रपञ्चधर्मः । एतच्च 'स्त्रियाम्' इति सूत्रे वक्ष्यते' इति च. पुस्तकपाठः ।

३ अ. पुस्तके 'तत्वमस्यादिवाक्य–' इति महाशब्दरहितः पाठः ।

लोचनं, तेन संप्रेक्ष्यमित्यर्थः ॥ **नारायणमित्यादि** । सर्वनरसमूहान्तर्यामिणमित्यर्थः ॥ **सर्वविद्या**-वेदरूपा, तद्विधायिनम् ॥२॥ वचनसंदर्भविशेषरूपग्रन्थे समुचितत्वाद्वागधिदेवतां नमति—**पुरुषा इति** । **देवत्वं**=पाण्डित्यम् ॥ ३ ॥ संप्रदायशुद्धिं द्योतयन् गुरुं नमति—**पदेति** व्याकरणमीमांसातर्काणामित्यर्थः ॥ **धीमतः**–ऊहापोहकुशलस्य ॥४॥ **महाभाष्येति** । व्याख्यातृत्वेऽप्यस्येष्ट्यादिकथनेनान्वाख्यातृत्वादितरभाष्यवैलक्षण्येन **महत्त्वम्** ॥ अवारपारयोर्भवम् । प्लूयतेऽनेनेति **प्लवं**–सेतुम् ॥ **यथागमम्** । संप्रदायमनतिलङ्घ्येत्यर्थः ॥५॥ औद्धत्यं परिहरति—**भाष्येति** । **मयूरव्यंसकादि**समासो रूपकं चेति बोध्यम् ॥ **पिशुनत्वं**–दुष्टत्वम् ॥६॥ नन्वेवं कथं प्रवृत्तिरत आह–**तथापीति** । तन्त्रत्यसारांश एवात्र निबद्ध इति भावः ॥ **शनैरित्य**नेनात्यन्तग्रन्थासंकोचः । **पङ्गुवदित्य**नेन व्याख्येयांशापरित्यागो व्याख्यानस्याविस्तृतत्वं च बोध्यते ॥७॥

---

योगितया प्राधान्येन वाऽऽह—**हरिदीक्षितेति** ॥ सदा बुद्धिस्थैर्याय तदुपयोगिनस्तस्य स्वर्गावाप्तये चाह—**याचकेति** ॥ **कक्षं**–तृणम् ॥ **रामतः**-रामसिंहवर्मतः । दानशूरत्वं रणशूरत्वं उभयसाधकं लक्ष्मीवत्त्वं च क्रमेणात्र प्रतिपादितम् ॥ तत्राभिधेयं प्रतिज्ञातुं प्राचीनव्याख्यानामनादेयत्वायाह—**नावीति** ॥ **अपि**ना कनिष्ठपरिग्रहः ॥ **भाष्येति** । द्वन्द्वोत्तरं षष्ठीतत्पुरुषः ॥ प्राचीनव्याख्याकर्तृवैलक्षण्यसूचकः **'तु'**–शब्दः ॥ [१]तत्त्वं चोक्तरीत्या बोध्यम् ॥ **यथामति**–इत्यनेनाज्ञाननिरासः ॥

**क्त्वान्तेति** । तदर्थानामित्यर्थः । नमःपदेनैव तत्प्रतीतौ तस्य कार्याव्यवहितपूर्वक्षणवृत्तित्वरूपकारणत्वबोधनायोपादानम् । अनेन ग्रन्थारम्भे मङ्गलस्यावश्यकर्तव्यत्वं सूचितमिति बोध्यम् ॥ **उत्तरार्धेनेति** । तदुत्तरार्धप्रतिपाद्यप्रधानवाक्यार्थक्रिययेत्यर्थः ॥ विरोधपरिहाराय मतभेदं कल्पितमुपेक्ष्य वास्तवं प्रकारमाह—**सर्वोपेति** । **'यतो वा-'** इत्यादिश्रुतेः । तथा च बहुव्रीहिः, तत्पुरुषो वा ॥ **मृदेति** । [२]मध्यमणिन्यायेनान्वेति ॥ तत्राद्ये साधर्म्ये दृष्टान्तः, अग्रे वैधर्म्ये ॥ तदन्यस्वरूपसत्त्वादाह—**दृश्येति** । बहिरिन्द्रियवेद्येत्यर्थः । तथा चात्रापि प्राग्वत्समासद्वयं बोध्यम् ॥ प्राग्वदाह—**कर्तृत्वादिति** ॥ **श्रुतेरिति** । अनेन बहुव्रीहिः सूचितः ॥ अतीन्द्रियत्वं नेन्द्रियाविषयत्वेन, अदृश्यमित्यस्य वैयर्थ्यापत्तेरत आह—**विगतेन्द्रीति** ॥ **अचक्षुः**–चक्षुरिन्द्रियशून्यः । **आदिना—'स शृणोत्यकर्णः'** इत्यादिपरिग्रहः ॥ नन्वेवं प्रागुक्तश्रुतिविरोधोऽत आह—**सर्वेति** ॥ विश्वं साक्षात्कुर्वन्नपि नासदादिवदिन्द्रियद्वारा किं तु तथेति भावः ॥ **'यतो वाचः'** इति श्रुत्यनुरोधेन विनिगमनाविरहादाह—**इन्द्रियेति** । तस्य वैयर्थ्यं परिहरिष्यते ॥

**प्रदीपे**—अस्य कारणत्वेऽपि न मायातुल्यत्वमित्याह—**सदिति** ॥ अत्र दण्डी—"अनेन तद्वदनिर्वचनीयत्वं निरस्तम् । तथा हि—सदसच्छब्दौ मिथोविलक्षणवाचकौ । तथा च तज्ज्ञाऽनिर्वचनीयता । यद्वा—**सत्**-पृथ्व्यादित्रयम्, **असत्**-वाय्वाकाशद्वयम्" इति । तन्न, **"नानिर्वचनीयस्य ख्यातिस्तदभावात्"** इति सांख्यसूत्रेण तन्निरासात् । अत एव **"असत्तु मृगतृष्णावत्"** इत्येवोक्तम् । न त्वनिर्वचनीयत्वमितीति **'स्त्रियाम्'** इति सूत्रे भाष्ये । तत्र सत्त्वमधिष्ठानब्रह्मगतमारोपितम्, असत्त्वं वास्तवम् । विस्तरस्तत्रैव बोध्यः ॥

**उद्द्योते**—तदेतद्ध्वनयन्नाह—**सदित्यादि** ॥ **नन्विति** । अनेन वैयर्थ्यमपि परिहृतम्, दृशधातोर्ग्रहणपरत्वात् ॥ १ ॥ सर्वेषां न परोक्षमिति सूचनायोक्तं विशेषणमित्याह—**माययेति** ॥ बहुव्रीहावनन्वयादेराह—**तदेवेति** ॥ **सर्वेति** । तथाच 'नारायणो विष्णुरजो ब्रह्मा विभुर्महेश्वरः' इति तेषां पालनकर्तृत्वमपि तदधिष्ठितत्वेनेति बोध्यम् ॥ तत्फलमाह—**सर्वेति** ॥ तद्व्याचष्टे—**वेदेति** । तत्रादेः श्रुतिविरुद्धस्याप्रमाणत्वात् विरुद्धस्य तेनैवासंग्रहात्त्यागः ॥ २ ॥ **'पुरुषा देवत्वम्'** इति कठिनकोमलशब्दोल्लेखेन वज्रस्यापि द्रवीभावो यतः किमस्येति सूचितम् ॥ वस्तुतो देवत्वस्याभावादाह—**पाण्डित्यमिति** ॥ ३ ॥ **गुरुमिति** । अनेन सर्वविद्यालाभ एकस्मादेवेति सूचितम् ॥ वैयर्थ्यं परिहरति—**ऊहेति** ॥

कैयटे-**अपिः**–चार्थे ॥ ४ ॥ अभिधेयं प्रतिजानीते—**महेति**-कैयटे ॥

**ख्यातृत्वादिति** । अविरोधादिति भावः ॥ **महत्त्वमिति** ॥ एतेन ग्रन्थतोऽर्थतश्च महत्त्वमिति विवरणोक्तमपास्तम् ॥ तद्विना तेन समासः, गुरुकुलवद्वृत्तिरिति सूचयन्नाह—**अवारेति** ॥ प्लवनकर्तृत्वेन [३]तत्त्वस्य नौकादौ सत्त्वेऽपि तस्यावारपारीणत्वासंभवादाह—**प्लूयेति** ॥ **इति**-इतिहेतोः । रूपकमुभयत्र ॥ श्रुत्याद्यनतिक्रमस्यानुपयुक्तत्वादाह—**संप्रेति** ॥ ५ ॥

**रूपकमिति** । एतेनातिगम्भीरत्वस्य साधारणधर्मस्योपादानात्कथमुपमितसमास इत्याशङ्क्य तेन तत्त्वं न विवक्षितं किंत्वन्यथेति दीक्षिताद्युक्तमपास्तम् ॥ सूचकत्वस्याफलत्वादाह—**दुष्टत्वमिति** ॥ ६ ॥ सारपदस्वारस्यमाह—**तन्त्रत्येति** ॥ ७ ॥

---

१ **तत्त्वं**–प्राचीनव्याख्यावैलक्षण्यम् । **उक्तरीत्या**-नाविस्तीर्णमित्यादिरीत्या । २ **मध्येति** । दृश्यस्वरूपाभावादित्यत्राप्यन्वयः । ३ **तत्त्वस्य**–प्लवत्वस्य । ४ घप्रत्ययं विनैवावारपाराभ्यां सह महाभाष्यार्णवस्य समासः । घप्रत्ययरूपवृत्तिस्तु अवारपारशब्दादेव । (र. ना.) अत्र घप्रत्ययोपादानं प्रमादः, खप्रत्ययं विनैवेत्यादि वक्तुमुचितम् । 'अवारपारशब्दाभ्यां खप्रत्ययः' इति राजलक्ष्मीकारोक्तिः प्रामादिकी 'अवारपारशब्दात् खप्रत्ययः' इति वक्तव्यम् । विशिष्टात्प्रत्यये शैषिकोऽणू स्यादिति भेदेन 'अवारपारयोर्भवम्' इत्युद्योत उच्यते ।

## ( शास्त्रप्रयोजनाधिकरणम् )

### ( भाष्यम् )

### अथ शब्दानुशासनम् ।

**अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् ॥**

**( प्रदीपः )** भाष्यकारो विवरणकारत्वात् व्याकरणस्य साक्षात्प्रयोजनमाह—**अथ शब्दानुशासनमिति** । प्रयोजनप्रयोजनानि तु रक्षोहादीनि पश्चाद्वक्ष्यन्ते ॥

स्ववाक्यं व्याख्यातुं तदवयवमथशब्दं तावत् व्याचष्टे—**अथेत्ययमिति** । इतिशब्दोऽथशब्दस्य स्वरूपेऽवस्थापनाय प्रयुक्तः । एवं हि पदान्तरैः सामानाधिकरण्येन संबन्धे सति 'अथ'शब्दो व्याख्यातुं शक्यते । स्वरूपेऽवस्थितश्च सर्वनाम्ना परामृश्यते—**'अयं'** इति ॥ **शब्द इति** । स्वरूपकथनं विस्पष्टप्रतिपत्त्यर्थम् ॥ **अधिकारार्थ इति** । अधिकारः=प्रस्तावः, द्योत्यत्वेनास्य प्रयोजनमित्यर्थः । निपातानां च द्योतकत्वं वाक्यपदीये निर्णीतम् ॥ अथशब्दस्याधिकारार्थत्वे यो वाक्यार्थः संपद्यते तं दर्शयति—**शब्दानुशासनमिति** । अनेकक्रियाविषयस्यापि शब्दानुशासनस्य आरभ्यमाणता 'अथ'शब्दसन्निधाने प्रतीयते । व्याकरणस्य चेदमन्वर्थं नाम—'शब्दानुशासनं' इति । अत्र चाचार्यस्य कर्तुः प्रयोजनाभावादनुपादानादुभयप्राप्त्यभावात् न **'उभयप्राप्तौ कर्मणि'** इत्यनेन षष्ठी, अपि तु **'कर्तृकर्मणोः कृति'** इत्यनेनेति **'कर्मणि च'** इति समासप्रतिषेधाप्रसङ्गात् इध्मप्रव्रश्चनादिवत्समासः ॥

**( उद्द्योतः )** यद्यपि पाणिनिना **''ब्राह्मणेन निष्कारणः''** इत्यादिश्रुतेः संध्योपासनादाविव प्रत्यवायपरिहारार्थितयैवोत्तमाधिकारिप्रवृत्तिसंभवात् प्रयोजनं नोक्तम् । वार्तिककृताऽपि **'शास्त्रपूर्वके प्रयोगे धर्मः'** इत्यनेन मध्यमाधिकारिणः परमप्रयोजनं दर्शितम् । भगवांस्तु विवरणकारत्वान्मन्दाधिकारिणां प्रवृत्तेः प्ररोचकप्रयोजनप्रतिपत्तिप्रवणत्वात् व्यवहितेषु स्वर्गापूर्वादिष्वनाश्वासात् साक्षात्प्रयो-

---

ननु **'वृद्धिरादैच्'** इत्यत आदावेवोच्यतामत आह—कैयटे—[ प्र० १ मपङ्क्तौ ] **व्याकरणस्येति** ॥ तथा चोपोद्घाततया समस्तशास्त्रारम्भे कथनस्य योग्यतयाऽत्राभिधानं युक्तमिति भावः ॥

कैयटे [ २ यप० ] **प्रयोजनमाहेति** । प्रयोजनं ब्रुवन् शास्त्रारम्भप्रतिज्ञामाहेत्यर्थः ॥ अनेन मूलानुक्तमपि व्याख्यात्राऽवश्यं दर्शनीयमिति सूचितम् ॥

इतिशब्दस्यादिहेतुप्रकारसमाप्त्याद्यर्थकत्वात्पदार्थविपर्यासकृत्त्वाचाह—[ प्र० ४ र्थप० ] **इतीति** ॥

अथाधिकारार्थ इत्युक्तेऽनन्तरं कश्चिच्छब्दस्तदर्थ इति गम्येतात आह—[प्र० ६ ष्ठप०] **अथशब्द इति** ॥

अधिकारो न प्रतिपादनम्, तथाऽकृतत्वादत आह—कैयटे—[ प्र० ९ प० ] **प्रस्ताव इति** ॥

ननु वाचकत्वमेव किं नात आह—[ प्र० १० प० ] **निपातानां चेति** ॥

कैयटे [प्र० ११ प०] **संपद्यते**=वाच्यो भवति ॥ एतेन 'प्रस्तूयते इति शब्दः, अर्थेमार्थः' इत्यपास्तम् ॥ **तमिति** । तत्रैव शब्दानुशासनपदार्थं प्रतिपादयन्निति शेषः ॥

कैयटे—[प्र० १३ प०] **भ्यमाणतेति** । **'वर्तमानसामीप्ये'** इति भूते लट् ॥ स्वरीत्याऽऽह—**सन्नीति** । तत्रैव ।

कैयटे [प्र० १५ प०] **प्रयोजनेति** । प्रयुज्यते येन तत्तथा, प्रयोगसाधकफलभावादित्यर्थः ॥ नन्विन्द्रादिव्यावृत्तिः फलमत आह—तत्रैव—**अनुपेति** ॥ अनुक्तेश्चेत्यर्थः । सत्यपि फले 'शब्दानामिदमनुशासनं नार्थानाम्' इत्यर्थनिवृत्तौ तात्पर्यात्सतोऽपि कर्तुरविवक्षितत्वेन तत्संभवादिति यावत् ॥

[ उ० २ यपङ्क्तौ ] **श्रुतेरिति** । वेदाध्ययनवद्व्याकरणाध्ययने नित्यतया प्राप्ते इति शेषः ॥ **एवेन** प्रयोजनप्रतिपत्तिनिरासः । तदुक्तं भट्टैः—

**तस्माद्विज्ञायमानत्वान्नोक्तं शास्त्रकृता स्वयम् ।**
**शास्त्रेण सर्वशब्दानामन्वाख्यानप्रयोजनम् ॥** इति ॥

[उ० ३ यप०] **अपिरस्त्वर्थे** ॥ **परमेति** । पार्यन्तिकेत्यर्थः ॥ परम्परया प्रयोजनमिति यावत् ॥

[उ०५मप०] समाधत्ते—**तथापीति** ॥ **भगवान्**-भाष्यकारः ॥ ननु ताभ्यामनुक्तं किमित्युच्यतेऽत आह—**विवरणेति** ॥ **प्रवृत्तेरिति** । ननु न फलकथनं प्रवृत्तावङ्गम्, किं तु तद्वत्ताज्ञानम् ।

---

१ **स्ववाक्यमिति** । 'अथ शब्दानुशासनम्'इति स्वग्रन्थस्य 'अथेत्ययं–' इत्यादिना स्वयमेव व्याख्यानं कुर्वन्ति भाष्यकाराः । एतच्च नागोजीभट्टैरप्यनुमन्यते । शब्दकौस्तुभे च 'व्याकरणस्य विषयं भगवान् भाष्यकारः प्रादर्शयत्–अथ शब्दानुशासनमिति' इत्युक्तम् । अन्येषामपि वैय्याकरणवृद्धानामत्रार्थे एव सम्मतिः । यदि च 'अथ शब्दानुशासनं' इति वचनं भाष्यकारीयं नेत्यभिमन्येत तदा 'अथेत्ययं' इत्यतो भाष्यारम्भः स्यात् । तत्रत्यस्याथशब्दस्येतिशब्दपरत्वेन स्वरूपमात्रार्थकत्वान्न मङ्गलार्थत्वमिति न्यूनता स्यात् । अतोऽपि भाष्यवचनमेवैतदिति निश्चीयते । एवञ्च केनचित् राजलक्ष्मीसंज्ञकं टिप्पणमारचयता 'परे तु शास्त्रारम्भप्रयोजनसूचकं भगवतः कात्यायनस्य वार्तिकमेतत् । भाष्यकारस्यैतद्व्याकरणप्रयोजनप्रदर्शनवाक्यं–इति वदन्तौ कैयटनागेशौ तु भ्रान्तावेवेतीत्याहुः' इति वदता अत्रार्थे प्रमाणोपन्यासमकुर्वता च 'घटं भिन्द्यात्–' इति न्याय एवावलम्बितः । अन्यथाऽखण्डगुरुपरम्पराप्राप्तभाष्यतत्त्वानां वैय्याकरणवृद्धानां निरालम्बमधिक्षेपं कः प्रामाणिकः कुर्यात्–इति ॥

२ 'द्योतकत्वेनाथशब्दस्य प्रयो–' इति अ. पुस्तके पाठान्तरम् ।

३ 'तथापि भगवान् विवरण' इति च. पाठः ।

४ **अर्थ**–भाष्योक्तः 'शब्दानुशासनं नाम' इत्यादिः, **आर्थः**–तात्पर्यार्थः । न तु वाच्य इत्याशयः ।

५ उभयप्राप्त्यभावसंभवादित्यर्थः । ( र. ना. )

जनं शब्दव्युत्पत्तिलक्षणं वदतीत्याह—**भाष्यकार इति** । तत्र शब्दज्ञानरूपे प्रयोजन उक्ते **विषयो**ऽप्युक्त एव, शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वात्–इति बोध्यम् । तज्जिज्ञासु**रधिकारी**, प्रतिपाद्यप्रतिपादकभावः **संबन्ध** इति–अर्थादेव लब्धम् ॥ ननु **'कानि पुनर्'** इत्यादिना प्रयोजनानि वक्ष्यति, तेन पौनरुक्त्यमत आह—**साक्षादिति** ॥ तदेवाह—**प्रयोजनप्रयोजनानीति** । **व्याख्यातु**मित्यस्य शब्दानुशासनमित्यादिना–इति शेषः ॥ **तावत्**=प्रथमम् ॥ **व्याचष्टे इति** । पदार्थज्ञानायानन्तर्याद्यर्थकत्वनिरासाय चेति शेषः ।

---

तद्याचार्यप्रवर्तनेनानुमित्यात्मकं सुलभमिति वेदाध्ययनादौ माणवकस्येवात्र प्रवृत्तिः सूपपादा । तदुक्तम्—

**हित[1]कारिभिरेवासौ ज्ञायमानः प्रयोजकः ।**
**कर्त्राऽविज्ञायमानोऽपि नैव स्यादप्रयोजकः ॥** इति ॥

किंचाचार्यो यद्याप्तस्तर्हि तत्प्रवर्तनयैव त[2]द्व्यभिचारेण सा । अन्यथा नाप्तस्तर्हि शतशः कथ्यमानेऽपि तस्मिन्विप्रलम्भकत्वाशङ्कया न सा । तस्माद्यत्र त[3]त् व्यक्तम्, तत्र सा लोकानाम् ॥ नन्विदमेवावश्यं वाच्यं ग्रन्थादाविति चेत् । भाष्य आप्तत्वफलवत्त्वयोः सामान्यतो ज्ञानेऽपि प्रवृत्तिविशेषे तद्विशेषज्ञानमेवाङ्गम्, **'सामान्ये सामान्यं विशेषे विशेषः प्रयोजकः'** इति न्यायात् । नहि **किंचिदस्ती**ति अन्यजिज्ञासुरन्यत्र प्रवर्तते । अत एव सर्वत्र तद्वदित्येव नोच्यते किंतु तद्विशेष एव कथ्यते—**'अथातो धर्मजिज्ञासा'** इत्यादिना ॥ एवं चात्र नियमेन प्रवृत्त्यर्थमस्यासाधारणं तद्वाच्यमेव ॥ एतेन **'विषयं प्रादर्शयत्'** इति कौस्तुभाद्युक्तमपास्तमिति दिक् ॥ तदेतद् ध्वनयन्नाह—**प्ररोचकेति** ॥ **प्रवणत्वात्**–तदधीनत्वात् ॥ ननु विश्वजिन्न्यायेन स्वर्ग एव फलमास्तामत आह—**व्यवहितेष्विति** । व्यवहितफलेष्वित्यर्थः ॥ क्वचित्तथैव पाठः ॥ वस्तुत आद्य एव पाठः । स्वर्गे तत्त्वस्य सत्त्वात् । अपूर्वे तत्साधनत्वात्तत्त्वं बोध्यम् ॥

न्यूनतां परिहरति—[उ० ७ मप०] **तत्रेति** । प्रयोजनादीनां मध्ये भाष्यवाक्ये वेत्यर्थः । तथा च त्रिमुनिसंग्रहात्मकव्याकरणस्योच्यमानमिदं प्रयोजनं स्वकृतिमपि गोचरयति **'स्वाध्यायोऽध्येतव्यः'** इतिवत् ॥ एतेन अस्वातन्त्र्यात् तस्य तदुक्तया स्वस्यापि तद्वत्तासिद्धिरिति नारायणोक्तमपास्तम् । इष्ट्यादिकथनेन स्वातन्त्र्यात् ॥

**विषयत्वादिति** । घटकत्वाच्चेत्यपि बोध्यम् ॥ **इति**–इति तु ॥ **साक्षादितीति** । अव्यवधानेन ज्ञायमानत्वादिति भावः ॥

[उ० १२ प०] **तदेवाहेति** । तद्विशेषणकृत्यमेवाहेत्यर्थः । **प्रयोजनेति** । तस्यापि किं प्रयोजनमिति जिज्ञासायामित्यादिः ॥ **पदार्थेति** । पदार्थधियो वाक्यार्थधीहेतुत्वात् ॥ नन्वानन्तर्यमर्थः प्रसिद्ध एवात आह—**आनन्तर्याद्येति** । आदिना **'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ'** इति कोशोक्तपरिग्रहः ॥ **र्थकत्वेति** । त[4]दुभेत्यर्थः । तेषामसंभवात् । तथा हि—कोट्यन्तरानुक्तेः **प्रश्नार्थो न** । अर्थानुशासनस्यापि सत्त्वेन बाधात् **सर्वार्थो न** । 'सर्वेषां शब्दानाम्' इति व्याख्याने 'केषां शब्दानाम्' इत्यवतरणग्रन्थासंगतिः । प्राक्कस्यचिदप्रकृतत्वेनासंभवाद**नन्तरार्थ**त्वमपि न, प्रागुक्तानन्तर्यपरत्वस्य तत्र तत्र संभवेऽपि अनुक्तानन्तर्यपरत्वेऽव्यवस्थापत्तेः । विषयादिकथनेनैव तद्विषयजिज्ञासानन्तर्यं शास्त्राध्ययनादेर्न्यायसिद्धं सूचितमेवेति तदुक्त्यानर्थक्याच्चेति ॥ ननु धर्मजिज्ञासायां वेदाध्ययनानन्तर्यवदत्र कुतो नेति चेन्न । वैषम्यात् । तत्र तथात्वे एकाधिकारिकल्पनालाघवं चातुर्वर्ण्याधिकारनिवृत्तिश्च प्रयोजनम् । नैवमत्र, व्याकरणस्य वेदाङ्गत्वश्रुतेः प्रधानाधिकारिण एवाङ्गेऽप्यधिकारात् । नापि प्र[5]माणम् । तथा हि–विना वेदाध्ययनं तदर्थविचारो न संभवतीति तदानन्तर्यमाक्षिप्यते, अतादृशस्यार्थानवधारणे तत्र जिज्ञासानुदयात्; नैवमत्र, अनधीतवेदस्यापि लौकिकवैदिकप्रयोगाङ्गभूतसाधुत्वज्ञानायैतदध्ययनसंभवात् । तथाच वक्ष्यति—**पुरा कल्प** इत्यादि ॥ अत एव चात्रानन्तर्यकल्पना विरुद्धा ॥ किं च वेदाध्ययनसमकालताऽपि स्मर्यते—**"अनध्यायेष्वङ्गान्यधीयीत"** इति ।

---

१ असौ प्रयोजनपदार्थो हितकारिभिः शास्त्रकारैर्ज्ञायमान एवास्मदादिप्रवृत्तेः प्रयोजको भवति । अध्ययनकर्त्राऽविज्ञायमानोऽपि तस्या अप्रयोजको न भवतीत्यर्थः । ( र. ना. )

२ **तदेति** । फलवत्ताया अव्यभिचारेण **सा**–प्रवृत्तिरित्यर्थः ।

३ आप्तत्वं तत्पदार्थः । ( र. ना. )

४ तदाद्युभयेति पाठो भाति । आनन्तर्यतदादिमङ्गलेत्येतदुभयार्थकत्वनिरासायेत्यर्थः । मङ्गले आनन्तर्यादित्वं च मङ्गलानन्तरारम्भेत्यादिकोशप्रसिद्धपाठापेक्षया । तेषामसंभवादित्यस्य आरम्भातिरिक्तानामसंभवादित्यर्थः । इति यथाकथंचिद्योजना । वस्तुतस्तु प्रमाद एवायम् । (र.ना.) । **वस्तुतस्तु** 'प्रमाद एवायं' इति लेखनं र. ना. पण्डितानां छायाग्रन्थानवबोधमूलकमेव । तथा हि–'आनन्तर्याद्यर्थकत्वनिरासाय'इत्युद्द्योतव्याख्यावसरे छायाकारेण **आदिपदग्राह्याः** 'मङ्गलानन्तरा–' इति कोशोक्ता इति निश्चित्य 'र्थकत्वेति'इति प्रतीकमुपादाय तस्य 'तदुभेत्यर्थः' इति व्याख्यानं कृतम् । अथ शब्दव्याख्यानेन निरासश्च प्रश्नानन्तरकार्त्स्न्यानामेव कर्तव्यः, न मङ्गलारम्भयोः । तत्रोद्द्योते आदिपदग्राह्याः के इति जिज्ञासायां 'तदुभेत्यर्थः' इति व्याख्यानेन तान् परिगणयति ग्रन्थकारः । निरासश्च अनन्तरार्थस्य आदिपदग्राह्य–उभयोः–प्रश्नकार्त्स्न्ययोश्च कर्तव्य इति तत्तात्पर्यम् । निरासे हेतुश्च 'तेषामसम्भवात्' इति । **तेषां**–प्रश्नानन्तरकार्त्स्न्यानामसम्भवादिति हि तदर्थः । तेषामसम्भवे कारणमप्युक्तं **'तथा हि'** इत्यादिना । एतेनोद्द्योताभिप्रायप्रकाशकस्यास्य ग्रन्थस्य **'प्रमादोऽयं'** इति वदन्तः परास्ताः । टिप्पण्यां 'तदाद्युभय' इति पाठविपर्यासमाश्रित्य मङ्गलार्थग्रहणक्लेशश्च विफलो विरुद्धश्च, स्वरूपतो मङ्गलार्थत्वमथशब्दस्य सर्वेषामभिमतमेव । अत एवाग्रे 'दध्यादिवन्मङ्गलत्वमपीत्युभयार्थमथशब्दः प्रयुज्यते' इत्युक्तमुद्द्योते । 'तेषामसम्भवात्' इत्यस्य व्याख्यानं–आरम्भातिरिक्तानामसम्भवात्–इति तु तुच्छमेव, छायायां येषामसम्भवस्तेषां तथाहीत्यादिना सुस्पष्टं प्रतिपादनात् । मङ्गलरूपार्थस्यानिरासाच्च । एवञ्चानधिकारचर्चैवेयं र.ना.महाशयानामिति प्रतिभाति ॥

५ **प्रमाणं**–अर्थापत्तिरूपम्, तस्या अभावमुपपादयति–**तथा हीत्यादिना** ।

भाष्यत्वादेव च स्ववाक्यव्याख्यानमिति भावः ॥ नन्वितिं विनाऽप्यथशब्दोऽधिकारार्थ इत्येवोच्यतामत आह—**एवं हीति । पदान्तरैः**=शब्दपद—**अधिकारार्थ**दप—**प्रयुज्यत** इतिपदैः ॥ **व्याख्यातुमिति ।** अधिकारार्थत्वेनेति शेषः ॥ 'अथेतिशब्दोऽधिकारार्थः' इत्युक्ते आनन्तर्याद्यर्थकत्वमप्रमाणमिति भ्राम्येदतः '**अयं**' इति भाष्ये । योऽयमस्मिन् वाक्ये स इत्यर्थः ॥ **विस्पष्टेति । 'नवेति-'** इत्यादावर्थपरताया दर्शनेन तथा भ्रमं निवर्तयितुमित्यर्थः ॥ ननु निपातानां द्योतकत्वादभिधेयवाच्यर्थशब्दोऽनुपपन्नोऽत आह—**अधिकार इति ॥ प्रस्ताव इति ।** प्रारम्भ इत्यर्थः ॥ स चार्थाद्व्याख्यायमानस्य । **अर्थ**शब्दः प्रयोजनवाचीति भावः ॥ **निपातानां च द्योतकत्वमिति ।** निपातानां द्योतकत्वं चेत्यर्थः । उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्य **'अव्ययं विभक्ति-'** इतिसूत्रे भाष्ये स्पष्टत्वात् । उपसर्गाणां तु द्योतकत्वमेवेति स्पष्टं **'गतिर्गतौ'** इति सूत्रे भाष्ये—इति तत्रैव निरूपयिष्यामः । अत एव 'साक्षात्क्रियते गुरुः' इत्यादि संगच्छते ॥ प्रारम्भक्रियाविषयत्वद्योतकस्यापि **अथ**शब्दस्यान्यार्थं नीयमानदध्यादिवत् मङ्गलत्वमपीत्युभयार्थ**मथ**शब्दः प्रयुज्यत इति फलितम् ॥

---

**अत ऊर्ध्व**मित्यादिमनुश्च ॥ अन्यत्रापि **प्रधानमध्येऽङ्गानामनुष्ठानं दृश्यते**-इति ॥

[उ० १६ प०] **एवेन 'अयम्'** इत्यस्य निरासः ॥ **एवं हीतीति ।** यत एवं सतीत्यर्थः । किंचा[1]नन्तरं कश्चिच्छब्द इत्येव प्रतीयेत । किं च सर्वत्र स तदर्थ एवेत्येव प्रतीयेत, तत्तु न, उक्तहेतोः ॥ **तत्तु** 'अथशब्द इत्युक्तावन्योऽयमेव वा'—इति संदेहापत्तिः । तन्न, इतेरभावेऽर्थपरत्वेन स्वरूपपरत्वे चान्योपस्थापकाभावेन च संदेहानुदयात् । इतिं विना समासोऽपि दुर्लभः, तदेतद् ध्वनयन् 'स्वरूपेऽवस्थानस्य प्रयोजनान्तरमाह—**स्वरूपे[2] इति**' इति विवरणोक्तयसांगत्यं प्रतिपादयंश्चाह—**अथेतीति ॥** अथेत्यधिकारार्थ इत्युक्तेऽप्येवं बाधो व्याख्यानासंगतिश्च, अन्यत्रोक्तार्थप्रतीतेरिति भावः । अत एव **'तदवयवम्'** इति प्रागुक्तं कैयटे ॥

[उ० १९ प०] **योऽयमिति ॥** शास्त्रारम्भप्रतिज्ञापरवाक्ये उपात्त इतिना स्वरूपेऽवस्थापितः, स इतीत्यर्थः । शब्दपदादिसामानाधिकरण्यात्तस्य पुंस्त्वम् ॥ एतेन स्वरूपपरत्वान्नपुंसकत्वमुचितमित्यपास्तम् ॥ एतेन कैयटे [७प०] चस्त्वर्थे उक्तफलार्थो न तदर्थ इति सूचितम् ॥ [ २० प० ] **परताया इति ।** इतिसमभिव्याहृतस्येति शेषः ॥ लोकेऽर्थपरत्वस्यौत्सर्गिकत्वेन दृष्टान्तवैषम्यादाह—**भ्रममिति ॥**

[उ०२३प०] स्तुतिभ्रमनिरासाय तदर्थमाह—**प्रारम्भ इति ॥ मानस्येति । अथशब्दानुशासन**मित्युक्तेः ॥

सिद्धान्ताविरोधाय प्रकृतानुरोधेन **चो** व्युत्क्रमे—इत्याह—[ उ० २४ प० ] **निपातानामिति ॥** उपसर्गभिन्नानामित्यर्थः ॥ **चेन** वाचकत्वसमुच्चयः । तदाह—**उपेत्यादिना ॥** एतेन—क्रियान्वयिनामेव तेषां तत्त्व[3]स्य भ्वादिसूत्रे भगवता व्यवस्थापितत्वेन सर्वेषां त[4]त्त्वे मानाभावेनात्र त[5]त्त्वे दोषाभावेन वाचकपदासमभिव्याहारे तत्त्व[6]स्य दुर्वचत्वेनार्थस्य द्योत्यत्वादिभेदेन त्रैविध्येन तदसमभिव्याहारे तथा व्याख्यानानौचित्येन च चिन्त्योऽयं कैयट इति रत्नप्रकाशोक्तमपास्तम् । उक्तहेतोः । **अनन्यलभ्य इति न्यायेन** तत्त्वस्यायुक्तत्वात् । वाचकस्याध्याह्रियमाणादेः सत्त्वात् । सिद्धान्तस्य वक्ष्यमाणत्वाच्चेति दिक् ॥ तद्भेदनिवेशफलमाह—[उ० २६ प०] **उपेति ॥** [उ० २८ प०] **अत एव**—तेषु तादृशेषूभयसत्त्वेन वाचकत्वाङ्गीकारादेव ॥ अत्रत्यं तत्त्वं कौस्तुभे मत्कृततद्व्याख्याने च स्पष्टम् ॥

ननु मङ्गलार्थत्वस्यापि संभवादधिकारार्थ त्ययुक्तमत आह—**प्रयुज्यत इति** भाष्ये ॥ अनेन तत्सिद्धिः ॥

तत्फलितमाह—[ उ० २९ प० ] **प्रारम्भेति ।** भूतेत्यादिः ॥ अनेनाधिकारादिपदानां तादृशकर्मप्रत्ययान्तत्वं सूचितम् ॥ अत एव [ भाष्ये ] **'अधिकृतम्'**इत्युक्तिसंगतिः ॥ [ उ० ३० प० ] **मङ्गलत्वमिति ॥** स्वरूपेणैवेति भावः ॥ अर्थतस्त्वधिकारार्थता, तदाह—**पीत्युभयेति ॥ अथशब्द इति ।** अन्यथा 'अधिकृतं शब्दानुशासनम्' इत्येव वदेत् । अर्थतो मङ्गलत्वे तत्त्वं न स्यात्, सकृत्प्रयुक्तत्वात् । तथा च श्रुत्या मङ्गलार्थप्रयुक्तस्य तस्य व्याख्यानमुचितमेवेत्येवमुक्तमिति भावः ॥ ननूक्तभाष्यादुभयसिद्धौ वाचकत्वमेवात्र कुतो न, तत्र बाधकसत्त्वे एव द्योतकत्वाङ्गीकारेण प्रकृते तदभावात् । साक्षात्क्रियते—इत्यादौ तु बाधकमिति न तत्त्वम् ॥ न च प्रमाणानां सामान्ये पक्षपातेन निपातत्वेनैव द्योतकता, प्रमाणस्य सामान्यावच्छेदेन प्रवृत्तौ बाधकाभावसहकृतस्यैव लाघवस्य बीजत्वेन प्रकृते वाचकपदसमभिव्याहाराभावरूपबाधकस्य सत्त्वेनाथशब्दभिन्ननिपातत्वेन तस्या विशेष्यीकरणेनादोषात् । परेषां **नामार्थयो**रितिव्युत्पत्तौ तन्निवेशवत् ॥ एवमन्यत्रापि बोध्यम् ॥ अन्यादृशद्योतकत्वस्य चागतावङ्गीकारात् ॥ यत्तु—

> **चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः ।**
> **क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥**
> **तयोरर्थाभिधाने हि व्यापारो नैव विद्यते ।**
> **यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥**

इति भट्टैरुक्तम् । तन्निपातांशे बाहुल्याभिप्रायम्, न तु सार्वत्रिकम् ॥ वाक्यपदीयादौ निपातानां द्योतकत्वकथनमप्येवमेव ॥ न चार्धजरतीयता, द्योतकत्वस्यापि तु स्वादावसत्त्वेन द्योतकत्वमद्योतकत्वमित्येवं तत्त्वस्य स्वमतेऽपि सत्त्वात् । अथेत्यस्यैवानन्तर्यादिवाचित्वं क्वचित्प्रारम्भद्योतकत्वमिति तत्त्वाच्च ॥ न च तस्य वाच्यत्वे गौरवेणान्यलभ्यत्वेन लाघवाद्द्योतकत्वमेव **युक्तम्**, अन्यस्य वाचकस्योपस्थापकाभावेन तदभावात् । प्रत्युत वाचकत्वद्योतकत्वोभयकल्पनजगौरवाच्च ॥ **न चान्यायश्चानेकार्थत्वम्**, उक्तकोशात्त-

---

१ भाष्ये 'इति-अयम्' इत्यनयोः शब्दयोरभावेऽथशब्दस्यानन्तर्यार्थकत्वेन योऽर्थः स्यात्तमाह—**किञ्चेति ॥**

२ प्रदीपेऽस्य प्रतीकस्य सत्ताऽवगम्या । ( दाधिमथाः )

३ द्योतकत्वस्य । ( र. ना. ) ४ द्योतकत्वे । ( र. ना. )

५ वाचकत्वे । ( र. ना. ) ६ द्योतकत्वस्य । ( र. ना. )

**परे** त्वत्र वाचकत्वमेवेच्छन्ति । 'अधिकृतं' इति च तदर्थं वदन्ति । भाष्ये **'प्रयुज्यते'** इत्यनेन वर्तमाननिर्देशेन सर्वलोकसिद्धमस्याधिकारार्थत्वं, न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितम् ॥ ननु विवरणे[1] 'अधिकृतं' इत्यधिकं, वाचकपदाभावात् द्योतकतानुपपत्तिश्च–इत्यत आह—**अनेकेति ।** उच्यते[2]–श्रूयते–क्रियते–इति ॥ **प्रतीयत इति ।** एतावतैव द्योतकत्वमिति भावः ॥ ननु भावसाधनस्यानुशासनपदस्य शास्त्रपदेन सामानाधिकरण्यमनुपपन्नमत आह—**व्याकरणस्य चेति ।** अन्वर्थत्वात्प्रयोजनाभिधानोपपत्तिः । अनुशिष्यन्ते=असाधुशब्देभ्यो विविच्य ज्ञाप्यन्तेऽनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भावः । इदमेव ध्वनयितुं भाष्ये **नाम**पदोपादानम् । नामनामिनोरभेदात् 'नाम–शास्त्रम्' इति सामानाधिकरण्यम् ॥ अनेनैवापभ्रंशानामविषयत्वं सूचितं ध्वनीनां च ॥ **'केषाम्–'** इति प्रश्नस्तु-लौकिकमात्रविषयं **शाकटायना**दिशास्त्रमधिकृतम्, उत वैदिकमात्रविषयं प्रातिशाख्यम्-इति-इति **परे ॥** ननु **'कर्मणि च'** इति निषेधात्कथं कर्मषष्ठ्यन्तेन समासोऽत आह—**अत्र[3] चाचार्यस्येति ।** उभयोरुपादान एवोभयप्राप्तिरिति **'आत्ममाने–'** इति सूत्रे भाष्ये स्पष्टम् ॥ **'कर्तृकर्मणोः–'** इति षष्ठ्यामपि समासनिषेधः कुतो नेत्यत आह—**इध्मेति । चस्य-इति**-अर्थकतया कर्मणीत्युच्चार्य विहितषष्ठ्यैव समासनिषेधे[4] इति भावः ॥ भाष्ये **शास्त्र**-

---

स्यैव न्याय्यत्वात् ॥ न च द्योतकत्वेनैव कोशोपपत्तिः, भवेदेवमौपसंदानिकशक्तिर्[5]द्योतकत्वमिति पक्षे, नह्यत्रोपसंदानम् । प्रादेस्तात्पर्यग्राहकत्वमप्युपसंदानेनैव । न च प्रकरणादिवत्तात्पर्यग्राहकत्वमेव द्योतकत्वम्, तस्यागतिकगतित्वस्योक्तत्वात् । किंचैवं सति–तद्वदत्रापि कोशो न स्यात्, स्याद्वाऽत्रेव तत्रापि–इति कोशानुपपत्तिस्तदवस्थैव ॥ अथान्यलभ्यत्वसहकारेण कोशोऽन्यथा नेय इति चेत्, तर्ह्यक्षादिपदानामप्यनेकार्थे शक्तिर्न स्यात्, तत्रापि लाघवादेकत्र शक्तिरन्यत्र लक्षणेति सुवचत्वात् । अन्यलभ्यत्वाभावस्योक्तत्वाच्च ॥ तस्मादथशब्दस्य प्रारम्भद्योतकत्वं कैयटोक्तं **चिन्त्यम् ।** किंचाथशब्दो द्योत्यत्वेन बोध्यपर एवास्तु, बाधकाभावात् । अत एव **प्रारम्भं द्योतयन्नथशब्द** इति हरदत्तेनोक्तम् ॥ एवं च प्रयोजनपरत्वमपि तस्य चिन्त्यम्–इति चेत्; अत एव सिद्धान्तमाह—[उ० ३१ प०] **परे त्वत्रेति ।** अथशब्दे–इत्यर्थः ॥ **एवेन** द्योतकत्वनिरासः ॥ नन्वेवं तस्य प्रस्तूयत इति साध्यार्थपरत्वेन नामपदानां सिद्धार्थपरत्वहानिरत आह—**अधीति ॥** यथैवं सति न पूर्वविरोधस्तथोक्तम् । हिरुगादावेवमेवाङ्गीकाराच्च । तेषां क्रियासामानाधिकरण्येन क्रियाविशेषकत्वेऽपि तदवाचकत्वाच्च । अव्ययेषु नामत्वस्यासत्त्वाच्चेति दिक् ॥ **पारीति ।** मयेदानीं परिभाष्यत इत्यर्थः ॥

यत्तु—नन्वधिकारार्थोऽप्यथशब्दः किमिति प्रयुज्यतेऽत आह–**अनेकेति**–इति विवरणकृत्[6] । तन्न, तत्फलस्य प्रागुक्तत्वात् । स्वपूर्वविरोधाच्च । तद्ध्वनयन्नाह—[ उ० ३३ प० ] **नन्विति ॥** कैयटरीत्याऽऽह—**वाचकेति ।** अस्य मध्यमणिन्यायेन पूर्वत्राप्यन्वयः ॥ **इति**–इत्यादि ॥

तद्रीत्यैवाह–[उ०३६प०] **एतेति ॥** वाचकपदासमभिव्याहारेऽपि प्रकरणादिवत्तात्पर्यग्राहकत्वेनैव क्रियाविशेषाक्षेपकत्वरूपं द्योतकत्वं 'प्रादेशं विलिखति' इत्यादिवदित्यर्थः ॥ प्रादेरिवोपसंदानेन द्योतकत्वस्यैव **एवेन** व्यवच्छेदः ॥ यद्यपि लक्षणया तस्यापि संभवः, तथापि व्याख्यानभाष्यविरोधान्न तद्युक्तम् । सिद्धान्ते तु तस्य सोऽर्थ एवेति प्रागुक्तम् ॥ **भावसाधनेति ।** अस्य व्याकरणप्रयोजनाभिधायकत्वादिति भावः ॥ **अनुशेति ।** किं च शास्त्रपदेन कस्य ग्रहणम्? किंच रूढिर्योगो योगरूढिर्वेत्यपि बोध्यम् ॥ ननु नामपदेन रूढेरेव प्रतीतौ **'प्रयोजनमाह'** इति कथमवतरणम्? अत आह—**अन्वर्थेति ।** तद्घटकयोगार्थादित्यर्थः ॥ अनुपूर्वकशासेर्विविच्य[7]ज्ञापने दृष्टत्वस्यान्यत्र प्रसिद्धत्वादाह—**असाध्विति ॥** नन्वेवं नामपदासंगतिरत आह—**इदमेवेति ।** अन्वर्थत्वाद्येवेत्यर्थः ॥ एतेन 'नामशास्त्रम्' इति समस्तमित्यपास्तम् । आख्यातशास्त्रत्वस्यापि सत्त्वाच्च । एतेन "नामेति प्रसिद्धौ, शब्दान्वाख्यानार्थकत्वेन प्रसिद्धं" इति नारायणोक्तमपास्तम् ॥ शास्त्रत्वं चास्यानुपदं स्फुटीभविष्यति ॥ [ उ० ४२ प० ] **अनेनैवेति ।** तदन्वर्थत्वादिबोधकनामशब्दोल्लेखेनैवेत्यर्थः । तत्त्वस्यात्राभावादिति भावः ॥ नन्वेवं प्रश्नासंगतिरत आह—**केषामितीति ॥ इतीति ।** इति पूर्वग्रन्थार्थसंशयाशयक इत्यर्थः । तथा च 'लौकिकानामेव, उत वैदिकानामेव' इत्याशयकः प्रश्न इति भावः ॥ कैयटाद्युक्त्यसांगत्यध्वननायाह—[उ०४४शप०] **परे इति ।** भाष्यानुयायिन इत्यर्थः ॥

[उ०४५शप०] **कथमिति ॥** शब्दानुशासनमित्यत्रेति भावः ।

एतदेव ध्वनयन्नाह—[उ०४६शप०] **उभयोरिति ।** प्राप्तिग्रहणात्, आश्चर्यो गवां दोहोऽगोपेन इत्यादौ यथेति भावः ॥ **इध्मेतीति ।** एवं च 'तत्रापि प्रसङ्गापत्तेः' इति हेतुस्तत्रार्थे बोध्यः ॥ अपां स्रष्टेत्यादेरपि तेनैव सिद्ध्या **'कर्तरि च'** इति वैयर्थ्यापत्तेश्च ॥ न च प्रेष्यस्य कारयितेत्यादौ **'हृक्रोः–'** इति कर्मत्वाभावपक्षे कर्तृषष्ठ्यास्तन्निषेधार्थमेव तदिति वाच्यम्, **'तृजकाभ्यां'** इत्येव सिद्धेः । तृज्ग्रहणमुत्तरार्थमिति तु **'कर्तरि च'** इत्यस्य सत्त्व इत्यपि बोध्यम् ॥ ननु कथमुक्तार्थलाभोऽत आह—**चस्येत्येति ।** **'कर्मणि च'** इति सूत्र इति शेषः । निपातानामनेकार्थत्वादिति भावः ॥ **कर्मणीति ।**

---

१ **विवरणे**–स्वग्रन्थविवरणे–भाष्ये ।

२ अनेकक्रियाविषयत्वं प्रतिपादयति–**उच्यते**–इत्यादिना ।

३ ज. पुस्तके 'तत्र चाचार्यस्येति' इति प्रतीकमुपात्तम् ।

४ अस्तु वा यथाकथंचिदुभयप्राप्तिस्तथापि न क्षतिः, **उभयप्राप्ताविति** सूत्रेऽविशेषेण **विभाषेति** पक्षस्यापि वक्ष्यमाणतया नियमाप्रवृत्तिपक्षे आचार्यस्य शब्दानुशासनमिति प्रयोगसंभवात् । शेषलक्षणा षष्ठी वास्त्विति शब्दकौस्तुभे स्पष्टम् ॥ ( दाधिमथाः )

५ सांक्रामिकी शक्तिरित्यर्थः ( र. ना. )

६ **विवरणकृत्**–प्रदीपकृत् ।

७ अनुपूर्वो हि शासिर्विविच्य ज्ञापने दृष्टस्तद्यथा **'संपूषन् विदुषायन् योऽञ्जसानुशासति'** ( ऋ. सं० मं० ६।५४।१ ) पदमञ्जर्यां कौस्तुभे च स्पष्टम् । ( दाधिमथाः )

मित्यस्य 'कर्तव्यत्वेन' इति शेषः । 'विवरणकारत्वात् व्याख्यातव्यत्वेन' इति शेष उचित इत्यन्ये ॥ शास्त्रत्वं चास्य साधुत्वरूपैकप्रयोजनसंबद्धत्वाद्बोध्यम् ॥

( आक्षेपभाष्यम् )

**केषां शब्दानाम् ?**

( प्रदीपः ) **शब्द**शब्दस्य सामान्यशब्दत्वात् विना प्रकरणादिना विशेषेऽवस्थानाभावात् तन्त्रीशब्दकाकवाशितादीनामनुशासनप्रसङ्ग इति मत्वा पृच्छति—**केषामिति** । उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात् प्रत्यवमर्शः । यथा राजपुरुष इत्युक्ते 'कस्य राज्ञः ?' इति ॥

( उद्द्योतः ) **सामान्यशब्दत्वादिति** । लोकव्यवहारे ध्वनावपभ्रंशे च शब्दशब्दप्रयोगादिति भावः ॥ एतेन ध्वनिव्यङ्ग्य एव **तपर**सूत्रादौ शब्दशब्दप्रयोगादिदं चिन्त्यमित्यपास्तम् ॥ ननु 'व्रीहीन् प्रोक्षति' इत्यादौ सामान्यशब्दस्याप्यपूर्वीयेषु विशेषेषु प्रवृत्तिवत् वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह—**विनेति** । व्रीहिशब्दस्य तु प्रकरणाद्विशेषे प्रवृत्तिरिति भावः । **वाशितादीनाम्**-इति **आदि**-नाऽपभ्रंशसंग्रहः ॥ ननूत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शोऽत आह—**उत्तरपदार्थान्तर्गतस्येति** । ततः पृथगुपस्थितविषयस्येत्यर्थः ॥ **बुद्ध्या**—मानस्या । यद्वा वाक्यजन्य**बुद्ध्या** ॥

सप्तम्येकवचनान्तमित्यर्थः ॥ नियमशास्त्राणां विधिरूपेण प्रवृत्तेराह—**विहितेति** ॥ **कर्तव्येति** ॥ स्वकृतिनिष्ठसाध्यत्वस्य तत्राप्यारोप इति भावः ॥ आरोपाभावकृतलाघवादाह—**विवरणेति** । इदं च सूत्रादिवत्स्वकृतेरप्यस्तीति भावः ॥ यद्यपि व्युत्पाद्यतया शब्दा एव प्रस्तुताः, न शास्त्रम्; तथापि तत्प्रतिपादकत्वाच्छास्त्रमेव प्रस्तुतमुच्यते । शास्त्रत्वं चास्य योगरूढ्या । **पदद्वयादिव्याख्यानेन** प्रागुक्तभाष्यलक्षणसत्ता सूचिता ॥ न च सिद्धसाधुशब्दबोधकस्यास्य कथं शास्त्रत्वम्,

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥**

इत्युक्तेरिति वाच्यम् । तस्यासार्वत्रिकत्वात् । एकफलसंबद्धार्थस्य कात्स्न्र्येन प्रतिपादकस्यैव हि सर्वत्र शास्त्रपदार्थत्वात् ॥ अन्यथा न्यायादीनां सिद्धार्थपराणामतत्त्वापत्तेः । तदभिप्रेत्याह—**शास्त्रत्वमिति** ॥ प्रवृत्त्याद्युपदेशकत्वमपि सुवचम् ॥ 'एतद्बोधिताः साधवः, तैरेव भाषितव्यम्, नासाधुभिः' इत्युपदेशादिति बोध्यम् ॥

भाष्ये—**वेदितव्यमिति** । शिष्यैरिति शेषः ॥ यद्यपि 'भवति' इत्येवाध्याहार्यम्, तस्य सिद्धार्थपरत्वात्, तथापि यागादौ संकल्पवत् शास्त्रारम्भप्रतिज्ञारूपसंकल्पविशेषबोधनायास्याध्याहारः ॥ अनेन—आरब्धं मध्ये दुस्त्यजम्, त्यागे च विगानप्रायश्चित्ते—इति सूचितम् ॥

[उ० १मप०] ननु **तपर**सूत्रे शब्दानां ध्वनिरिति व्यङ्ग्यव्यञ्जकयोः शब्दशब्दस्य प्रयोगादन्वर्थत्वाच्चानतिप्रसङ्गोऽत आह—**लोकेति** । त्रैविध्यवृद्धेत्यर्थः ॥ **ध्वनाविति** । अनेनापरिस्फुटाकारादिवर्णसकलशब्दपरिग्रहात्काकवाशितादीनां पृथगनुक्तिः ॥ उक्तरीत्या तत्रानतिप्रसङ्ग एवेति सूचनमेवमुक्तेः फलम् । तथा च शुद्धरूढः शब्दशब्दः । **तपर**सूत्रप्रयोगस्तु प्रकृताशयक इति भावः ॥

[उ० ४थंप०] **विशेषेषु**—व्रीहिविशेषेषु ॥ वाचकत्वस्य सिद्धान्तेऽपभ्रंशसाधारण्यादाह—**साधाविति** ॥ **प्रकरणात्**-यागप्रकरणात् ॥

[उ० ६ष्ठप०] ननु तन्त्र्यादिशब्दानां न तत्त्वप्रसङ्गः, प्रकृत्यादिविभागस्य तत्रासंभवात् । शकुनागमगान्धर्ववेदादिभिरेव तन्निर्णयाच्च ॥ अत एव कैयटे **'मत्वा'** इत्युक्तिरत आह—**वाशितेति** ॥ बहुवचनं तु शब्दभेदाभिप्रायम् ॥

[उ० ७मप०] ननु मिलितैकदेशस्य विशेष्यस्य "सर्वनाम्नां प्रधानपरामर्शित्वं" इति नियमाङ्गीकारेण परामर्शसंभवेऽपि गुणीभूतस्य वृत्त्याद्यन्तर्गतस्य परामर्शो नेत्याशयेन शङ्कते—**ननूत्तरपदेति** ॥ प्रकृताभिप्रायमेतत् । अप्रधानस्य **न स** इति तत्त्वम् ॥ **संसृष्टेति** । तदेकार्थीभावापन्नेत्यर्थः ॥ यद्यप्युत्तरः[३] पदार्थो यत्रेति बहुव्रीहिणा यथाश्रुतं सुयोजम्; तथापि पूर्वपदार्थेत्यस्य वैयर्थ्यापत्तिः, नियमेन वृत्त्यलाभेन प्रकृतार्थासिद्धिः, वाक्ये तथा सत्त्वेऽपि तदङ्गीकारश्चेति तस्य दुर्वचत्वेन तथा वाच्ये तदन्तर्गतत्वं दुर्वचमत आह—[उ० ८प०] **तत इति** । उत्तरपदार्थादित्यर्थः ॥ समुदितादुभयोरेकैवोपस्थितिरिति भावः ॥ तदीयशाब्दबुद्ध्याऽतत्त्वादाह—**मानस्येति** ॥ ननु नियमेन तत्सत्त्वे न मानमत आह—**यद्वेति** ॥ **वाक्येति** । लौकिकं त्वार्थमित्युक्तम् । न त्वश्वकर्णादिवच्छुद्धरूढम् । येनाविग्रहत्वं स्यात् ॥ अस्याश्च नियमेन तत्र सत्त्वम् । भाष्ये 'शब्दानाम्' इति तु तत्परामृष्टार्थस्य प्रदर्शनं स्पष्टत्वाय, न स्वतन्त्रम् । अत एवोत्तरे[३] तदनुक्तिः । अत एव **'दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः'** इत्यादौ न दोषः ॥ यद्वा—अयं दोषस्तदा स्यात् यदि 'केषाम्' इत्येवोक्तं स्यात् । तदा हि शब्दानामित्यस्यानुषङ्गः । स चोक्तरीत्याऽनुपपन्नः । अत्र तु विशेष्यं शब्दानामिति कण्ठत उच्यते तच्च तत्परमित्यन्यत् ॥ संनिहितत्वं न बुद्धिस्थत्वात् । एवं च तथानिर्दिष्टानामेव तेन परामर्शो न तु तत्र गुणीभूतानाम् । अत एव पुनस्तदुक्तिसाफल्यम् । दण्डिमिश्रावप्येवम् ॥ एतेन—'तस्मिन्नद्री' इत्यत्राद्रिपदोक्तिर्व्याख्याता । अन्यथोक्तरीत्या न स्यात् । पूर्वमते-

---

१ ज. पुस्तके 'ननु'शब्दो नास्ति ।

२ उत्तरपदार्थः संसृष्टो यत्रेति पाठो भाति । ( र. ना. ) वस्तुतस्तु एतदप्यज्ञानविलसितमेव । तथा हि–उद्द्योते 'ननूत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं' इत्यादिग्रन्थेन 'उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य' इति प्रदीपग्रन्थोऽवतार्यते । अवतरणे संसृष्टपदप्रवेशः प्रदीपे 'उत्तरपदार्थ' इत्यत्र कर्मधारयं सूचयति । छायाकारस्तत्रेत्थमाशङ्कते—उत्तरः पदार्थो यत्रेति बहुव्रीह्याश्रयणेनापि प्रदीपः सुयोजस्तर्हि संसृष्टपदप्रवेशेनोद्द्योतकृतां कर्मधारयसूचनं किमर्थमिति । यदि प्रदीपे बहुव्रीहिराश्रियेत तदा तत्रोपात्तस्य 'पूर्वपदार्थस्य' इत्यस्य वैयर्थ्यं स्यादित्युत्तराशयः । अत्र 'उत्तरपदार्थः संसृष्टो यत्र' इत्येतत्पर्यन्तस्य पाठकल्पनक्लेशानुसरणस्य क उपयोगः ? कथञ्च तादृशपाठान्तरकल्पनेन शङ्कासमाधाने–इति त एव र. ना. महाशयाः प्रष्टव्याः ।

३ **उत्तरे**–लौकिकानां वैदिकानाञ्चेत्यत्र ।

**( समाधानभाष्यम् )**

**लौकिकानां वैदिकानां च। तत्र लौकिकास्तावत्—गौः-अश्वः-पुरुषः-हस्ती-शकुनिः-मृगः- ब्राह्मण इति॥**

**वैदिकाः खल्वपि—शंन्नो देवीरभिष्टये, इषे त्वोर्जे त्वा, अग्निमीले पुरोहितम्, अग्न आयाहि वीतये- इति॥**

**( प्रदीपः )** सिद्धान्तवादी तु व्याकरणस्य वेदाङ्गत्वात्सामर्थ्याद्विशेषावगतिरिति मत्वाऽऽह—**लौकिकानामिति।** लोके विदिता इति 'लोकसर्वलोकाभ्यां' इति ठञ्। **अथवा** भवार्थे- **अध्यात्मादित्वाट्ठञ्।** वेदे भवाः-वैदिकाः। वैदिकानामपि लौकिकत्वे प्राधान्यख्यापनाय पृथगुपादानम्। यथा—**ब्राह्मणा आयाता वसिष्ठोऽप्यायात** इति वसिष्ठस्य। तेषां तु प्राधान्यं यत्नेनापभ्रंशपरिहारात्। **अथवा** भाषाशब्दानामेव लौकिकत्वमिति भेदेन निर्देशः॥ तत्र लोके पदानुपूर्वीनियमाभावात्पदान्येव दर्शयति—**गौरश्व इति॥** वेदे त्वानुपूर्वीनियमाद्वाक्यान्युदाहरति—**शन्न इति॥**

ऽप्यत्र न दोषस्तुल्यत्वात्। निर्दयत्वकर्कशत्वादिबोधनेनानाश्रयणीयत्वादिव्यञ्जकतया महाशयत्वाद्यर्थान्तरसंक्रमिततया वा तस्य साफल्याच्च॥ एवं सर्वत्र बोध्यम्॥ द्वितीयपक्षे 'दशैते' इत्यादौ सामर्थ्यात्तस्य परामर्शः **"आनर्थक्यात्तदङ्गेषु"** इति न्यायेन **"सविशेषेण हि"** इति न्यायेन च॥ नचैवमपि 'शब्दानां' इत्यस्य पदत्वेन वाक्येत्ययुक्तमिति वाच्यम्, "वाक्ये वाक्यैकदेशः" इति न्यायेनास्यापि तत्त्वव्यवहारात्। **साकाङ्क्षपदस्थलविशेषे** एकपदेऽपि तत्त्वस्य जयदेवोक्तत्वाच्च॥ अत एव प्रश्नोत्तरयोः सिद्धान्तरीत्याशयप्रदर्शकोक्तिसंगतिः। तदेतदभिप्रेत्योभयसाधारणमुदाहरति—

[९ पृष्ठे ४ प० प्रदीपे] कैयटे—**यथेति॥**

[भा०] **लौकिकानामिति। न च** वेदाङ्गत्वात् 'वैदिकानाम्' इति प्राग् वक्तव्यम्। तज्ज्ञानमेव हि मुख्यं फलम्, लौकिकज्ञानं त्वानुषङ्गिकम्। न च वैदिकसंप्रदायतस्तत्सिद्धिः, दोषेण तस्याप्यन्यथात्वसंभवात्। शाखाऽऽनन्त्येन तद्वत् प्रातिशाख्यस्य क्वचिदुत्सादात्—इति **वाच्यम्।** तद्वदादरसूचनाय तथोक्तेः, लौकिकत्वस्य लोकवेदसाधारण-लोकमात्रवृत्त्युभयवृत्तित्वेन व्यापकत्वाच्च। विपरीतं तु न, अग्रिमग्रन्थविरोधापत्तेः। अत एव ब्राह्मणवसिष्ठन्यायप्रवृत्तिसूचनार्थत्वाच्च॥ संकोचे मानाभावेन लोकशब्दस्य सर्वलोकवृत्तित्वेन तत्रयसिद्धत्वेन साधूनामेव ग्रहणं नापभ्रंशानां, प्रतिदेशं तेषां भिन्नत्वात्-इति सूचनार्थत्वाच्चेति भावः॥

[प्र० १मप०] प्रकरणाभावेऽपि संयोगाद्यन्तर्गतसामर्थ्यसत्त्वाद्विशेषनिश्चय इत्याशयेनाह—कैयटे—**सिद्धान्तेति॥**

[प्र० २ यप०] कैयटे—अत एवाह—**लोके विदिता इति॥** प्रसिद्धा इत्यर्थः॥ वैदिका इत्यनुरोधेन संभवादाह—**अथवेति॥** अत एवाह तत्र—**वेदे इति।** एतत्कथने तात्पर्यम्। अत एव पुनः प्रत्ययानुक्तिः॥

[ प्र०६मप० ] प्राधान्यमुपपादयति कैयटे—**तेषां त्विति।** वैदिकानां प्राधान्यं त्वित्यर्थः॥ बोध्यमित्यग्रे शेषः॥ वसिष्ठप्राधान्यवैलक्षण्याय-**'तु'॥ यत्नेन**-सर्वथा। अन्यथा प्रत्यवायापत्तेः॥

[प्र०७मप०] युक्त्यन्तरसंभवेन विनिगमनाविरहादाह—**अथवेति** कैयटे॥

१ **शन्नोदेवीरिति।** अत्र वेदारम्भप्रतीकान्येव भाष्ये उक्तानि—इति व्याकरणसिद्धान्तसुधानिधिकार आह। तत्रैतदुक्तम्—सर्ववैदिकशब्दानां व्युत्पाद्यत्वलाभाय प्रथमप्रतीकोपादानम्, वैदिकैकदेशमात्रव्युत्पादकप्रातिशाख्यापेक्षयाऽस्य व्याकरणस्य वैलक्षण्यसूचनाय च प्रथमप्रतीकोपादानम्—इति॥ अथ क्रमेण ऋग्यजुःसामाथर्वणां प्रदर्शनमकृत्वा अथर्वयजुर्ऋक्साम्नां 'शन्नो' इत्यादिक्रमेण प्रदर्शयतो भगवतः क आशयः? उच्यते—त्रेतासाध्यानुश्राविके कर्मणि अथर्ववेदस्य अभिचारादिनिरासस्साधनीभूतानां मन्त्रविशेषाणां कर्मविशेषाणाञ्च तत्र सद्भावेनादौ तस्योपयोगात् प्रथममुपस्थितिः, तत उपक्रमप्रभृतिप्रधानाध्वर्युकर्मतन्त्रप्रदर्शकस्य भित्तिस्थानीयस्य यजुर्वेदस्य, ततश्चित्रस्थानीययोर्ऋक्सामयोर्मध्ये प्रकृतिभूतदर्शपूर्णमासहोत्रोपयोगिनो ऋग्वेदस्य, ततः सोमाद्युपयोगिनः सामवेदस्येति उपस्थितिक्रमानुसारेण तथा प्रदर्शनमिति अस्मत्परमगुरुचरणाः श्रीबालशास्त्रिण इति गुरूपदेशादवगम्यते। व्या. सि. काराश्च वैदिकोदाहरणप्रतीकचतुष्टये वैदिकमात्रशब्दघटितत्वं 'शन्नोदेवी:' इत्यस्यैवेति तस्यैव प्राथम्यम्। अन्यत्र तु लौकिका एव शब्दा इति। उचितमप्येतत्। ननु 'अग्निमीले' इत्यत्र 'ईले' इति लकारो वैदिक एव नायं लोके प्रयुज्यते, सत्यम्; 'ईले' इत्यत्र वर्णमात्रव्यत्ययः, शन्नेत्यत्र तु प्रकृतिप्रत्यययोः कार्यं तथेति तस्योपादानम्। अथ च 'अभिष्टये' इति द्वितीयस्यापि शब्दस्य वैदिकमात्रत्वमिति तदेव पूर्वं प्रयुज्यते-इति॥

२ 'वैदिकानां लौकिकत्वेऽपि' इति च. छ. क. पाठः।

३ अथ सर्वत्र प्रामाणिकग्रन्थेषु प्रायः ऋग्, यजुः, साम, आथर्वणमित्येव क्रम उपलभ्यते। तथा च 'अग्निमीळे, इषे त्वोर्जे त्वा, अग्न आयाहि, शं नो देवीरभिष्टये, इत्येवं क्रमेणैवोदाहरणानां वक्तव्यत्वे किमिह क्रमत्यागो भाष्यकृता सर्वप्रमाणभूतेन कृतः—इति चेत्। शृणु—ऋग्यजुःसामवेदानां पद्यगद्यगीतिबाहुल्येन महाग्रामवत्प्राप्तसमाख्यानां नगरवदविशिष्टसमाख्यस्याथर्ववेदस्य प्रागभिधाने स्वतन्त्रेच्छानामाचार्याणामिच्छैव विनिगमनाभावात्प्रमाणम्॥ विशेषजिज्ञासा चेत्, शृणु—सर्वेषां वेदानां केवलं यज्ञार्थतया यज्ञापेक्षितक्रमेणैवाध्ययनादिकमुचितम्। यत्ते वरणक्रमश्चेत्थमुचितमनुष्ठीयते **"ब्रह्मा त्वो वदति जातविद्याम्"** ८।२।२४।५ इति ऋक्संहितामन्त्रव्याख्यावसरे **"ब्रह्मैको जाते जाते विद्यां वदति। ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति" "ब्रह्मा परिवृढः श्रुततो ब्रह्मा परिवृढः सर्वतः"** इति निरुक्ते यास्कवचनेन **"ब्रह्मैव विद्वान् भृग्वङ्गिरोवित् सम्यगधीयानश्चरितब्रह्मचर्योऽन्यूनातिरिक्ताङ्गोऽप्रमत्तो यज्ञं रक्षति। तस्य प्रमादाद्यदि वाऽप्यसांनिध्याद्यथा भिन्ना नौरगाधे मह-**

**( उद्द्योतः )** वेदाङ्गत्वादिति । तत्त्वं चागमसिद्धम् । अनेन तत्रीशब्दादीनामविषयता सूचिता ॥ न च वेदाङ्गत्वाद्वैदिका एव विषयाः स्युः । तत्र तत्र **'भाषायां' 'छन्दसि'** इत्याद्युक्त्योभयोरपि विषयत्वात् ॥ ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य **लोक**-पदार्थत्वात् वेदस्यापि लोकान्तर्गतत्वात् भेदेनाभिधानं न युज्यत इत्यत आह—**वैदिकानामिति** । 'वैदिकानां लौकिकत्वेऽपि' इति पाठः ॥ **तेषां त्विति** । लौकिकानां याज्ञे कर्मण्येव तत्परिहारः, तेषां तु सर्वत्रेति भावः ॥ **भाषाशब्दानामिति** । **भाषा**=प्रयोज्यप्रयोजकवृद्धव्यवहारः, तत्र प्रयुज्यमानानामित्यर्थः । एवञ्च वेदमात्रान्तर्गत-कर्णेभिर्देवासो गृभ्णामीत्याद्यतिरिक्तपरता लौकिकशब्दस्य, तैस्तद्व्यवहारादर्शनात् । अत एव 'गौरश्वः' इत्यादीनां लौकिकोदाहरणत्वसंगतिः । लोके स्वरानादरात् वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य शन्न इत्यादीनां वैदिकोदाहरणत्वसङ्गतिरिति भावः ॥ [भाष्ये—**लौकिकास्तावदिति** । तावच्छब्दोऽनुक्रमे । पूर्वं लौकिका उदाह्रियन्ते, पश्चाद्वैदिका इत्यर्थः । वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्वदादरसूचनार्थः ॥ ] लोके पदानामुदाहरणत्वोक्तौ वेदे वाक्यानामेव तत्त्वोक्तावाशयमाह—**तत्रेति** । पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहर-

[ उ० १ मप० ] **चागमेति** । **'ब्राह्मणेन'** इत्यादीत्यर्थः ॥ ननु नास्येष्टसाधकत्वं लौकिकासंग्राहकत्वादत आह—**अनेनेति** ॥ **आदिना**ऽपभ्रंशसंग्रहः । तथा चातिप्रसङ्गनिवारणपूर्वकाभिमतैकदेशसाधकत्वात् सद्धेतुरेवायम् । अत एव **'मत्वा'** इत्युक्तमिति भावः ॥ अत एवाशङ्कते—**न चेति** ॥

[उ०४र्थप०] यत्तु कृष्णः–**"प्रयोगचोदनाभावार्थैकत्वमविभागात्"** इत्यनेन य एव लौकिकास्त एव वैदिका इति जैमिन्युक्तत्वाद्भेदोक्तिरयुक्तेति । तन्न, सखी कर्णेभिरित्यादीनां मिथो व्यावृत्तत्वात् । तदेतद् ध्वनयन्नाह—**ननु चिदेति** ॥ **पाठ इति** । अनेन **'कत्वेन'** इति पाठो निरस्तः । **'कानामपि'** इति पाठे अपेस्तत्रान्वयः । यथाश्रुते नैष्फल्यं ग्रन्थयोरसामञ्जस्यं चेत्यपि बोध्यम् ॥

[उ०७मप०] तदाह—**लौकीति** । अर्थबोधायोच्चारणप्रसङ्गे इति शेषः ॥ यद्वा नित्यसाकाङ्क्षत्वात् 'तत्' इत्यत्रैकदेशेऽन्वयः ॥ तस्यानुषङ्गोऽग्रे ॥

[उ० ९मप] ननु तत्र सर्वेषां तत्त्वादेव व्यवच्छेद्यासंभवोऽत आह—**एवञ्चेति** ॥ तस्योक्तार्थकत्वे चेत्यर्थः ॥ मात्रपदेन गौरश्व इत्यादीनामपि तत्त्वं ध्वनितम् । तेन नाग्रिमग्रन्थविरोधः । तदाह—**अत एवेति** ॥ नन्वेवं 'शं नः' इत्यादीनामपि तत्त्वमुचितमिति तदुक्तिरयुक्ता । न च **'देवीः, ईले'** इत्यादिकं छान्दसं

तत्रास्तीति वाच्यम्, तादृशानामेव वाच्यत्वेन तथोक्तेरयुक्तत्वादत आह—**लोके इति** ॥ **मात्र**पदेन लोकव्यवच्छेदः ॥

[भा० १० पृ० १ मप० ] **तत्रेति** । तयोर्मध्य इत्यर्थः ॥

[उ०१६ शप०] **प्रधानेति** । व्याकरणस्य वेदाङ्गत्वात् । एवंचाभ्यर्हितत्वं तेषाम् ॥ **तद्वत्**-वैदिकवत् ॥ **आदरेति** । अत एव तत्पदघटितोक्तिसाफल्यम् । अत एव च तद्वत्तेषाम् **'एकः शब्दः'** इत्यादिश्रुत्युक्तफलवत्तयाऽभ्यर्हितत्वम् । अन्यथाऽतत्त्वापत्त्या तत्त्वापत्तिरिति भावः ॥ **पैदानां**–पदानामेव ॥ **तत्रेतीति** । तयोर्मध्य इतीत्यर्थः ॥ लोकेऽपि क्वचित्पदानुपूर्वीनियमसत्त्वादाह—**पदान्तरेति** ॥ **च**–आनुपूर्वीनियमसमुच्चायकः । तेन तत्र तस्य सार्वत्रिकत्वं सूचितम्, न तु लौकिके तदभाववत् असार्वत्रिकत्वम् । अपिस्तु बोधसमुच्चये इति भावः ॥ अस्यापि भेदोक्तिहेतुत्वं बोध्यम् ।

**अत्रेदं बोध्यम्**—गौरित्यादीनां वैदिकत्वेऽपि लोके प्रयुज्यमानतया प्रागुक्तरीत्या वा लौकिकत्वात्तत्त्वोक्तिः ॥ स्तरषादीनां(?) तत्त्वेऽपि नोक्तिर्वेदानुपकारकत्वात् । तद्व्युत्पादनं तु प्रासङ्गिकम् ॥ अत एव गौरित्यादय एवोदाहृताः ॥ नचैवमपि घटपटादय एव कुतो नोक्ता इति वाच्यम्, अशोकवनिकान्यायात् । गवाद्यर्थानां मङ्गलत्वेन प्रातर्द्रष्टव्यत्वस्य धर्मशास्त्रे उक्तत्वेन तत्प्रतिपादकत्वाच्छब्दस्यापि मङ्गलत्वमिति आद्युल्लेखाच्च । **पुरुष**शब्दश्चानादिपुरुषपरः । **शकुनि**शब्दोऽपि चाषादिपर इति दिक्प्रदर्शनम् । तत्रापि दृष्टादृष्टभुक्ति-

स्युदके संप्लवेत् । तस्माद्यजमानो भृग्वङ्गिरोविदमेव ब्रह्माणं वृणुयात् । स हि यज्ञं तारयति" इति (उत्त० २।२।५) **"अथर्वाङ्गिरोभिर्ब्रह्मत्वम्"** (पू० १।३।१।२) इति च गोपथब्राह्मणवचनेन ब्रह्मवरणस्यैवादावावश्यकत्वेन अथर्ववेदाध्ययनस्यैव ब्रह्मत्वसाधकतया पूर्वमथर्ववेदोपादानम् । ततश्चाध्वर्युसमाख्याबलाद्यजुर्वेदस्य प्राधान्याद्यजुरुपात्तम् । साम्नामृगाश्रितत्वात्प्राधान्येन सामतः पूर्वमृग्वेदोपादानम्–इति दिक् ॥ यद्वा–**भृगव**परनामकस्याथर्वमुनेः **"ब्रह्मा देवानां प्रथमं संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह"** इति मुण्डकोपनिषदि ज्येष्ठपुत्रत्वोक्त्या **"यज्ञैरथर्वा प्रथमः पथस्तते"** (१।६।४।५) इति ऋक्संहितायां यज्ञप्रक्रियाप्रथमप्रकाशकत्वोक्त्या चाथर्वप्रोक्तवेदस्याभ्यर्हितत्वात्प्रथमोपादानम् । तदन्तर्गतभागेषु विशिष्टलक्षणेषु पद्यगद्यगीत्यात्मकेषु गद्यस्य सुबोध्यत्वात्पूर्वं यजुरुपादानम् । ततः पादरचनात्मकपद्यलक्षणान्वितत्वादृगुपादानम् इत्याहुर्दाधिमथाः ॥

१ **तत्परिहारः**–अपभ्रंशपरिहारः, **तेषां**–वैदिकशब्दानाम् ।

२ यद्यपि गव्यादयोऽपि लोके विदितास्तथापि न ते सर्वलोकविदिताः, प्रतिदेशं भिन्नत्वादपशब्दानां । लोकशब्दश्चायं सर्वासिंल्लोके वर्तते सङ्कोचकाभावात् । अतः सर्वलोकप्रसिद्धानां गवादीनामिति पदमञ्जर्यां स्पष्टम् ॥

३ लौकिकानां पूर्वनिर्देशस्य तद्वदादरसूचनार्थत्वाभावे । उभयत्रापि तत्त्वं वैदिकत्वम् । (र. ना.) वस्तुतस्तु एवंव्याख्यानमुचितम्—**अन्यथा**–अभ्यर्हितत्वाभावे आदराभावे वा **अतत्त्वापत्या**–अभ्यर्हितत्वानापत्या **तत्त्वापत्तिः**–परनिर्देशापत्तिरिति । व्याकरणस्य वेदाङ्गत्वाद्वैदिकानामभ्यर्हितत्वमिति वैदिकशब्दानामेव पूर्वनिर्देशप्रसङ्ग इत्याशयः ।

४ एवं चैतच्छायाग्रन्थपर्यालोचनेन **'भाष्ये** लौकिकास्तावदिति' इत्यादिग्रन्थो 'लोके पदानाम्' इत्यतः प्राक् समुचितो लेखकप्रमादाद् 'इत्युक्तराशयं परे' इत्युत्तरं पतित आसीत् तस्मादस्माभिर्योग्यस्थाने स्थापित इति बोध्यम् ॥ (दा. म.)

णत्वोक्तिरित्यपि बोध्यम् ॥ लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवात्राधिकृतत्वम्, न तु शाकटायनादिव्याकरणस्येत्युत्तराशयं **परे** ॥

## ( जिज्ञासाभाष्यम् )

## अथ गौरित्यत्र कः शब्दः ?

**( प्रदीपः )** 'अयं गौः-अयं शुक्लः' इति शब्दार्थयोरभेदेन लोके व्यवहारदर्शनाच्छब्दस्वरूपनिर्द्धारणाय पृच्छति—**अथेति** । 'गौः'इति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्द इत्यर्थः ॥

**( उद्योतः ) अभेदेन लोके इति** । अभेदेनैवेत्यर्थः । शब्दपरत्वाभिप्रायेण 'अस्य गौः' इति प्रयोगाभावादिति भावः । पुरोवर्तिव्यक्तिं पश्यतो वाचकजिज्ञासया कोऽयमिति प्रश्ने 'अयं गौः' 'अयं वर्णः शुक्लः' इत्युत्तरस्थले संनिहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीते-

मुक्तिफलकार्थकत्वेनादौ **गौरित्युक्तिः** । अत एव **'गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः'** इति तैत्तिरीयब्राह्मण उक्तम् ॥ नचैवमपि गौरित्यादिवत् श्वम् इत्यादीनामपि लौकिकत्वेनैव तत्त्वोक्तिरुचिता, बहूनां तत्त्वादिति वाच्यम् । उक्तोत्तरत्वात् ॥ नचैवमपि कर्णेभिरित्यादय एवोदाहार्या इति वाच्यम्, प्रायेण लोके प्रयुज्यमाना एव वेदे प्रयुज्यमाना इति सूचनार्थत्वात् ॥ अत एव **'देवीरभिष्टये ईले'** इत्यपि तत्रोक्तम् ॥ **देवीरि**ति प्रथमाबहुवचनम् । **अभिष्टये** इत्यत्रेकारलोपः । **ईले** इत्यत्र ल्त्वम् ॥ नचैवमपि प्रसिद्धक्रमादिक्रमेण तत्त्वोक्तिरुचितेति वाच्यम्, तथैव तदुपादेयमित्यत्र मानाभावात् । भाष्यकारस्याथर्वणत्वाच्च । शुद्धच्छान्दसयोस्तत्र सत्त्वाच्च ॥ नचान्यपक्षद्वयेऽग्रेषु क्रमोक्तौ किं बीजमिति वाच्यम् । आध्वर्यवादेर्ऋत्विजश्च क्रमेण तथोक्तेः ॥ यद्वा मङ्गलार्थकसर्वपदघटितत्वेनादौ तदुक्तेः । अग्रे तूक्तैव रीतिः ॥

[उ० १९शप०] उक्तरीत्या कैयटस्य चिन्त्यत्वात्स्वसिद्धान्तरीत्याह—**लोकवेदेति** ॥ लौकिकवैदिकशब्देत्यर्थः ॥ **'अत्र'**इत्यस्यात्रान्वयः ॥ यद्वा—**अत्र**-भाष्यवाक्ये । अग्रे **'प्रतिपाद्यते'** इति शेषः । करणस्याधिकरणत्वविवक्षायां सप्तमी ॥

भाष्ये—**'गौरित्यत्र'** इत्याद्युपलक्षणं सर्वेषां तस्य च ॥

[प्र० १मप०] कैयटे—**इतीति** । इत्यादीत्यर्थः । तेन क्रियादेरपि संग्रहः ॥

[प्र०२यप० ] कैयटे—**दर्शनादिति** । तथाच संदेह इति भावः ॥ अत एवाह तत्र—**निर्धारेति** ॥

[प्र०३यप०] प्रागुक्ते **'गौः'** इति स्वरूपे कः शब्दः इति नार्थः, तत्स्वरूपस्य श्रोत्रग्राह्यत्वेन तत्र तत्त्वनिर्णयेन संदेहाभावेन शङ्काऽनुदयात् । किं तु ज्ञानाकारोऽयम् । तथाच तस्यार्थादाधारता बोध्या । नचैवमत्रपदानर्थक्यमिति वाच्यम्, तस्य प्रतिभासमानेष्विलर्थकत्वात् । तस्य च विषयभूतेष्वित्यर्थः । तदेतदभिप्रेत्याह—**गौरितीति** कैयटे । शब्दे प्रत्यक्षादौ चेत्यर्थः ॥

[प्र० ३ यप०] कैयटे—**वस्तुषु** । तेषां मध्ये । तद्विविक्तशब्दतत्त्वज्ञानात् ॥

[उ० १मप०] गुणगुण्यादेरिवाभेदेनापि-इत्यर्थवारणाय एवान्तर्भावेण व्याख्याने बीजमाह—**शब्देति ॥ णास्य गौरितीति** । 'घटः शुक्ल इति वह्नो गौरिति' इत्यन्यादृशस्त्वस्येवेत्यनुपदं स्फुटीभविष्यति ॥ ननु शाब्दज्ञानजनकतया प्रयोगाभावेन कथं प्रत्यक्षभूततथाव्यवहारसाधनम् ? किंच 'अयं गौः' इति ज्ञानं ज्ञातशब्दकीयम्, उताज्ञातशब्दकीयम् ? आद्ये-'तत्पदवाच्यः सः' इत्यर्थेनैषां सिद्धिः । अन्त्ये-अज्ञानेन तस्यैवासंभवादिति चेत्, न; तथा शाब्दज्ञानाभावेन तत्परत्वाभावेन भेदनिरासेनार्थात्तयोरभेदे सिद्धे ज्ञातशब्दकीयत्वेनैव तत्र तथैवोपपत्तौ तथार्थाङ्गीकारे मानाभाव इत्याशयात् । अत एवात्र द्रढयितुं पृथग् हेत्वन्तरमाह—**पुर इति** ॥ तदाकारस्तु—अयमित्येव-इत्यादिः ॥ **संनिहितमिति** । पिण्डमित्यर्थः । **सांनिध्यं** च देशतः ॥ **प्रतीतेरिति** । अन्यथा लोके जायमानायास्तस्या असंगतिः स्पष्टैवेति भावः ॥ किंचैवमभावे भेदेन तयोरुक्तिरुचितेति बोध्यम् ॥ नन्विदमयुक्तम्, शब्दस्यार्थे शक्त्यङ्गीकारेण तस्या अन्यरूपाया अन्यत्रोक्तत्वेन कथमुक्तार्थ-

१ **अथ गौरिति** । भाष्यस्यायमर्थः—शब्दानुशासनमिति प्रतिज्ञासमनन्तरं 'गौः' इति विज्ञाने प्रतिभासमाना ये पदार्थास्तेषु घटकत्वेन विद्यमानः कः शब्दशब्दाभिधेयः पृच्छ्यत इति । शास्त्रप्रतिज्ञाव्यवहितोत्तरो भाष्यकृन्निष्ठव्यापारस्तद्बोध्या गौरितिविज्ञानविषयपदार्थाधिकरणिका शब्दशब्दाभिधेयविषयिका जिज्ञासेति शाब्दबोधः । पृच्छधातोर्जिज्ञासाविषयव्यापारवाचित्वम् । शब्द इति प्रथमान्तानुसारेण 'पृच्छ्यते' इति कर्मप्रत्ययान्तस्यासञ्जनम् । एवञ्च शब्द इति पदोत्तरमितिशब्दाभावेऽपि जिज्ञासायां कर्मत्वेन तस्यान्वयः सुलभः ॥

२ शंपदेति पाठो भाति । ( र. ना. ) इदमयुक्तम्, 'शन्नोदेवीरभिष्टये' इति प्रतीके सर्वेषां शब्दानां मङ्गलवाचित्वात् 'सर्व'पदघटितपाठस्यैव युक्ततरत्वात् ॥

३ शब्दविषयकेत्यर्थः । ( र. ना. ) ४ अयं गौरितीति शेषः । ( र. ना. ) ५ प्रत्यक्षभूतो योऽयं गौरिति व्यवहारस्तेन शब्दाभेदस्य साधनमित्यर्थः ( र. ना. ) ६ अयं गौरितिप्रयोगादर्थभिन्नतया शब्दविषयकज्ञानाभावेनेत्यर्थः । ( र. ना. ) ७ शब्दार्थयोर्भेदरूपार्थाङ्गी-

कारे इत्यर्थः । ( र. ना. ) वस्तुतस्तु 'ननु शाब्दज्ञानजनकतया' इत्यारभ्य 'मानाभाव इत्याशयात्' इत्यन्तस्य छायाग्रन्थस्यायमभिप्रायः—गोशब्दस्य शाब्दबोधजनकतया पिण्डवाचित्वेन 'अस्य गौः' इति प्रयोगोऽनन्वितार्थत्वान्न भवति । अभावेन प्रत्यक्षस्य वस्तुनः साधनं तु अन्यत्राद्दृष्टचरमिति 'अस्य गौरिति प्रयोगाभावादिति भावः' इत्युद्द्योतग्रन्थोऽनुपपन्नश्च । अन्यच्च 'अयं गौः' इति प्रयोगो यदि शब्दप्रतीतिमता क्रियते तदा गोशब्दवाच्योऽयमित्यर्थेनापि स उपपद्यते । शब्दानभिज्ञेन च तादृशप्रयोगासम्भव एवेत्याशङ्क्य **तथा शाब्दज्ञानाभावेन**-भेदेन शाब्दबोधाभावेन 'अयं गौः' इत्यस्य 'तत्पदवाच्यः सः' इत्येतत्परत्वाभावेन शब्दार्थयोरभेदे सिद्धे ज्ञातशब्दकीयत्वेनैव 'अयं गौः' इत्यत्राभेदबोधोपपत्तौ **तथार्थाङ्गीकारे**-भेदार्थाङ्गीकारे ( तत्पदवाच्यः स इत्यर्थाङ्गीकारे ) मानाभाव इति । एवञ्च प्रयोगाभावेन शाब्दबोधाभावस्तेन च भेदाभावः साध्यते, न तु प्रयोगाभावेन व्यवहारः साध्यते । निरस्ते च भेदेऽभेदः सिध्यत्येवेति अभेदव्यवहारोपपत्तिरिति उद्द्योतः सुसङ्गतः ।

रिति तात्पर्यम् ॥ शब्दार्थयोस्तादात्म्यमेव शक्तिः । स्पष्टं चेदं पातञ्जलभाष्ये इति मञ्जूषायामस्माभिर्हर्यादिसंमततया व्युत्पादितम् । अत एव जात्यादिव्यक्त्योरिव **"रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः"** इत्यादौ शब्दार्थयोरपि अभेदेन व्यवहारः ॥ **अथ गौरिति**-भाष्ये। 'अथ' इत्यस्य 'पृच्छ्यते' इति शेषः ॥ किं पृच्छ्यते, तदाह— **गौरित्यत्रेत्यादि ॥ कः शब्द इति ।** कः शब्दशब्दाभिधेय इति **प्रश्नः ॥ प्रतिभाससमानेषु**—शब्दजातिव्यक्त्यादिषु ॥ नन्वेवं गुणक्रिययोः शब्दत्वाशङ्काऽनुपपन्ना । न हि ते अपि 'गौः'इति शब्दजन्यबोधे भासेते इति चेत्, न । गुणगुणिनोः क्रियाक्रियावतोश्चाभेदात् । शब्दार्थयोश्च तत्त्वात् **'तदभिन्नाभिन्नस्य'** इति न्यायेन तच्छङ्कोपपत्तेः । यथा–परमकारणाभिन्नकार्यकारणकस्य परमकारणेनाप्यभेदः । यद्वा **'गुणसमूहो द्रव्यम्'** इति पक्षे **'तस्य भावः'** इति सूत्रस्थभाष्यसंमते समूहस्य गोशब्दवाच्यत्वेऽवयवभूतगुणादीनामपि तद्वाच्यत्वमिति शङ्का बोध्या । अत्र **'गौरिति विज्ञाने'** इति सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञानेऽपि गुणादीनां सामान्यरूपेण भानम् । अत एव प्रत्यक्षदृष्टेऽपि आम्रफलादौ रसविशेषादिजिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात्–**इत्यन्ये ।** निरूपितं चैतन्मञ्जूषायाम् ॥

---

लाभस्ततोऽत आह—**शब्दार्थेति ॥** यद्यपि वाच्यवाचकभावापरपर्यायं संबन्धान्तरमेव तयोः शक्तिः । तद्ग्राहकं चेतरेतराध्यासमूलकं तादात्म्यं सङ्केतापरपर्यायम्, तथापि तस्यापि पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहारः । तदभिप्रेत्याह—**तादात्म्यमिति ।** तच्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् । अभेदस्याध्यस्तत्वान्न तयोर्विरोधः । तत्र भेदस्योद्भूतत्वविवक्षया 'अस्यार्थस्यायं वाचकः' **'तस्य वाचकः प्रणवः'** इत्यादौ षष्ठी । अभेदस्योद्भूतत्वविवक्षया तु प्रथमा ॥ अत एवार्थे शब्दधर्मत्वव्यवहारः– 'पद्यं श्रुतम्–अथार्थं शृणु' 'पद्यमुक्त्वा अर्थं वदति' इत्यादिः । अत्यन्तभेदेऽश्वपुरुषयोरिव तद्व्यवहाराभावात् । नाप्यत्यन्ताभेदे सः । घटे स्वधर्मत्वव्यवहाराभावात् । कः शब्दः कोऽर्थ इति प्रश्ने घट इत्ययं शब्दो घट इत्ययमर्थः–इत्येकाकारोत्तरदर्शनात्तयोरध्याससिद्धिः । अयमध्यास आदिव्यवहारकृदीश्वरकृत एव । अत एव **'स्थितोऽस्य वाचकस्य वाच्येन सह संबन्धः । संकेतस्तूक्तरूप ईश्वरस्य स्थितमेवाभिसंबन्धमभिनयति यथाऽवस्थितः पितापुत्रयोः संबन्धः संकेतेनावद्योत्यते—अयमस्य पिता, अयमस्य पुत्रः'** इत्यादि पातञ्जलभाष्ये उक्तम् ॥ अत एव च हरिः—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
**अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा ॥**
**संबन्धिशब्दे संबन्धो योग्यतां प्रति योग्यता ।**
**समयाद्योग्यतासंविन्मातापुत्रादियोगवत् ॥**
**सति प्रत्ययहेतुत्वं संबन्धे उपपद्यते ।**
**शब्दस्यार्थे यतस्तस्मात्संबन्धोऽस्तीति गम्यते ॥**

इति ॥ तदाह—**स्पष्टमिति ॥ व्युत्पादितमिति ।** शक्तिवाद इति भावः ॥ उक्तार्थं द्रढयति—**अत एवेति ॥** तादात्म्यस्यैव शक्तित्वाङ्गीकारादेवेत्यर्थः ॥ **आदिना** गुणक्रियापरिग्रहः ॥ अग्निमादिना **'गर्वभङ्गो भार्गवस्य शौर्यभङ्गश्च वालिनः ॥'** 'हिरण्यपूर्वं कशिपुं प्रचक्षते ॥' **"वृद्धिरादैच्" "ओमित्येकाक्षरं ब्रह्म"** इत्यस्य च परिग्रहः ॥

[उ० ९ मप०] पृच्छतीतिकैयटोक्तिसूचितमाह—**अथेत्यस्येति ।** आनन्तर्यार्थकस्येत्यर्थः ॥ **किं पृच्छयत इति ।** इति शङ्कायामिति शेषः ॥ **तदिति ।** सामान्यप्रश्नविषयभूतं विशिष्य तथैवाहेत्यर्थः ॥ भाष्ये–ईतिरस्तु नोक्तः, तस्यार्थपरत्वेन शब्दपरत्वाभावेन तस्यानुपयोगात् । अभेदस्तु तद्विनापि सूपपादः ॥ गौरित्यत्रेत्युक्त्याऽन्यत्रान्यैवेयमाशङ्केति निरासाय प्रकृतसंगतये चाह—**कः शब्द इति ।** तद्घटकशब्द इत्यर्थः । स्फुटत्वाय तैस्यार्थपरत्वमिति सूचनाय च **प्रश्न** इत्यस्य पुनरुक्तिः ॥ **'इत्यर्थः'** इति क्वचित्पाठः ॥

[उ० ११ शप०] अत एव व्याचष्टे-**शब्देति ।** अत्रोपस्थापकत्वात्, विशेषणत्वात्, गुणाद्याधारत्वाच्च क्रमोक्तिर्बोध्या ॥

[उ० ११ शप० ] **एवम्**–उक्तभाष्यस्योक्तार्थकत्वे ॥ [उ० १३ शप०] **भासेते इति ।** तेन शब्देन तेषां तादात्म्याभावादिति भावः ॥

[उ० १३ शप०] **गुणेति ।** घटः शुक्लः [गौश्चलः] इत्यादिप्रतीतेस्तयोस्तत्त्वसिद्धिः ॥—**श्च तत्त्वात्**–अभेदाच्च । अत्र बीजमुक्तम् ॥ न्यायसत्त्वे मानमाह—**यथेति ॥** मूलकारणप्रकृत्याद्युपादानकतन्मात्रादिकार्योपादानककार्ये प्रकृत्याद्युपादानकत्वस्यापि व्यवहारे तत्सिद्ध्या यथा तेन, तस्य तेनाभेदप्रतीतिरित्यर्थः ॥ ननु वक्ष्यमाणरीत्या तयोर्विषयतावत्त्वमत आह— [ १६ शप० ] **यद्वा गुणेति ॥** निरन्तरत्वरूपायुतसिद्धत्ववदवयवविशेषानुगतसामान्यविशेषरूपगुणसमूह इत्यर्थः ॥ [१६ शप०] **पक्ष इति ।** अयुतसिद्धावयवविशेषानुगतः समूहो द्रव्यमिति पतञ्जलिरिति पातञ्जलभाष्योक्तसिद्धान्तपक्ष इत्यर्थः ॥ **तस्य भाव इतीति ।** माह—**अत्र गौरितीति ।**

---

१ ननु गौरिति विज्ञाने प्रतिभाससमानेषु पदार्थेषु कः शब्द इत्याशङ्क्य 'यत्तर्हि तदिङ्गितं–' 'यत्तर्हि शुक्लो नीलः' इति गुणक्रिययोः शब्दत्वमाशङ्क्यते भाष्ये तदनुपपन्नम्, तयोस्तत्राप्रतिभासात् । अतस्तदनुपपन्नं प्रसाधयति—**नन्वेवमित्यादिना ।** गुणस्य गुणिनाऽर्थेनाभेदात् अर्थाभिन्नस्य शब्दस्यापि तदभिन्नाभिन्नस्येति न्यायेन गुणेनाभेद इति तस्याप्युपस्थितिरित्याशयः ।

२ ननु 'तदभिन्ना–' इति न्यायेन गुणस्य शब्देनाभेदे प्रसाधितेऽपि गोशब्दे उच्चारिते गुणक्रिययोरप्रतीतिरनुभवसिद्धेति सिद्धान्तमत-

३ अथ पदोत्तरमिति शेषः । ( र. ना. ) ४ अथ पदार्थानन्तरस्य प्रच्छधात्वर्थेन सहेति शेषः । तद्विनाऽपि । इतिपदंविनाऽपीत्यर्थः । (र. ना.) 'अथ पदोत्तरं' इति लेखस्तु प्रामादिकः, तत्रानुपयोगात् । एवञ्च 'कः शब्दः' इत्युत्तरमितिशब्दो नोक्त इत्येव छायातात्पर्यम् ।

५ अथशब्दस्येत्यर्थः । ( र. ना. ) एतदप्यनुचितमेव । 'तस्यार्थपरत्वं' इत्यस्य शब्दशब्दस्यार्थपरत्वमिति छायाऽभिप्रायः ।

६ प्रकृत्याद्युपादानकत्वेनेत्यर्थः । ( र. ना. )

**( प्रश्नभाष्यम् )**

**किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपम्, स शब्दः ?**

**( प्रदीपः )** तान्येव वस्तूनि क्रमेण निर्दिशति—**किं यत्तदिति ।** उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति कामचारतः **'स शब्दः'** इति पुंलिङ्गेन निर्देशः ॥

**( उद्योतः ) 'यत्तत्'** इति समुदायो यद्वृत्तार्थे वर्तते, तस्यैव पुनस्तद्वृत्तेन **'सः'**इत्यनेन परामर्शः । यद्वा प्रसिद्धौ । ननु 'यत्'इत्यस्य नपुंसकत्वेन तच्छब्देऽपि नपुंसकलिङ्गमेवोचितमत आह—**उद्दिश्यमानेति ।** सिद्धवत्कीर्तनमुद्देशः । प्रतिपाद्यतया विधेयतया वा कीर्तनं **प्रतिनिर्देशः ।** यथा–"शैत्यं हि यत्सा प्रकृतिर्जलस्य" इत्यादौ स्त्रीलिङ्गनिर्देशः ॥ **तल्लिङ्गमिति ॥** तयोर्लिङ्गमित्यर्थः ॥

**( उत्तरभाष्यम् )**

**नेत्याह, द्रव्यं नाम तत् ॥**

**( प्रदीपः ) नेत्याहेति ।** भिन्नेन्द्रियग्राह्यत्वान्न **द्रव्यं** शब्द इति प्रतीतम्, अपि तु **द्रव्यं**–इति । यदि च द्रव्यानुशासनं विवक्षितमभविष्यत् 'अथ द्रव्यानुशासनम्' इत्येवावक्ष्यत् ॥

---

तत्र हि * **यस्य गुणस्य भावात्**—* इति वार्तिकव्याख्यावसरे—**किं पुनर्द्रव्यम्, के पुनर्गुणा** इति प्रश्ने **शब्दस्पर्शरूपरसगन्धा गुणाः, ततोऽन्यद् द्रव्यम्** इत्युक्तम् ॥ अत एव 'उक्ते' इति विहायाह—**संमते इति ॥** इदमुपलक्षणम्—**"स्त्रियाम्" "संख्याया अवयवे"** इति सूत्रभाष्ययोरपि ॥ तत्र ह्युक्तम्—**"द्रव्ये च भवतः कः संप्रत्ययः ? । गुणसमुदायो द्रव्यम्" "कं च प्रत्यवयवो गुणः ॥ ? ॥ समुदायं प्रति"** इत्युक्तम् ॥ अत्र गुणशब्देनावयवा धर्माश्च ॥ अत एव व्रीहिषु प्रोक्षणजन्यसंस्कारस्यांशत्वावयवत्वादिना व्यवहारः **समन्वय**सूत्रे भामत्याम् ॥ समूहसमूहिनोर्मिथो भेदाभेदाभ्युपगमः । अत एव 'मृद् घटः' 'मृदि घटः' इत्यादिसंगतिर्गुणगुण्यादयोरिव । अत एव घटः शुक्लो घटे रूपमित्यादिसंगतिस्तदभिप्रेत्याह—[पृ०१३ उ०१७शप०] **गुणादीनामिति ॥** आदिना क्रियाजातिपरिग्रहः ॥ सिद्धान्तमतमाह—[उ० १८ शप०] **अत्रेति ॥** भाष्यकैयटयोरित्यर्थः ॥ **आदिना**ऽनुमित्यादिसंग्रहः ॥ [ १९ शप० ] **सामान्येति ।** रूपत्वादिनेत्यर्थः, विशेषस्तु तत्तदिन्द्रियग्राह्य एवेति भावः ॥ [२० शप०] **भानमिति ।** इति सूचितमिति शेषः ॥ उक्तं द्रढयति—**अत एवेति ।** तेषां तत्र तथा भानादेवेत्यर्थः ॥ [उ० २० शप०] **आदिना** गन्धविशेषादिपरिग्रहः ॥ [ पृ०१३उ०२१ शप० ] **निरूपीति ।** तत्रैवेति भावः ॥

भाष्ये—**सास्नेत्यादि**विषाणान्तसमाहारद्वन्द्वप्रकृतिकेनिनाऽवयवी उच्यते ॥ यत्तु—सास्नेत्यादि द्रव्यान्तरावयवस्याप्युपलक्षणम्, क्रियागुणव्यक्तीनां बह्वीनामग्रे उक्तेः–अत्र द्रव्यान्तरोदाहरणस्यौचित्यात्—इति कृष्णः । तन्न, गौरित्यत्र भासमानविषये शङ्कास्त्वेन तत्र शुक्लादीनां सर्वेषां तत्त्वसंभवे द्रव्यान्तरस्य चातथात्वेन वैलक्षण्यात् ॥ अत एव सामान्यविषये सामान्योक्तावपि तत्र वर्तमानस्यापि द्रव्यत्वादेर्न तत्त्वाशङ्का ॥ भाष्ये—**स शब्द इति ।** स शब्दशब्दाभिधेयः किमित्यर्थः ॥

[ प्रदीपे १ मप० ] कैयटे—**क्रमेणेति ।** वक्ष्यमाणबीजक्रमेणेत्यर्थः ॥ **निर्दिशतीति ।** तत्र प्रश्नवाद्येव तात्त्विकं तन्मुखादुत्तरमवगन्तुं फलान्तराशयं तन्मुखान्निरसितुं च प्रश्नविषयतया तान्येव तथा विशिष्य निर्दिशतीत्यर्थः ॥

[प्र० ३ यम० ] यौगपद्यासंभवादाह—**पर्यायेणेति ॥** कैयटे **इति**र्हेतौ । स च कामचारे ॥

[उ० १मप०] **'यत्तत्'** इति न प्रतीकम्, किंतु व्याख्यानान्तर्गतम् । **समुदायः**–सर्वनामसमुदायः । द्वयोरपि समुदायादिशब्दप्रयोगः ॥ **यद्वृत्तेति ॥** यदा वृत्तं निष्पन्नं विभक्त्यन्तमात्रं यदिति तस्यैवार्थे इत्यर्थः ॥ अत एवाह—**तस्यैवेति ॥** यत्तदोर्नित्यसंबन्धात् ॥ 'सोऽहमाह' 'ते वयं ब्रूमः' इत्याद्यनुरोधेनाह—[उ० २ यप०] **यद्वेति ॥ 'प्रसिद्धौ तत्'** इति पाठः । तथा च पृथगन्वयः ॥ यद्वा यदित्यनूद्यमानस्य बुद्ध्यारूढत्वाय प्रकृतार्थकतच्छब्दप्रयोगः ॥ अग्रे प्राग्वत् ॥ अत एवाह—**यदित्येति ।** नपुंसकलिङ्गार्थाभिधायित्वादिति भावः ॥ [ ३ यप० ] **वोचितमिति ।** तयोरेकविषयत्वादिति भावः । वस्तुतोऽसिद्धत्वेऽपि तत्त्वेन तस्य तत्त्वायाह—[ ४ थंप० ] **सिद्धवदिति ॥** प्रतिपाद्यत्वस्याव्यापकत्वादाह—**विधेयेति ॥**

[ उ० ] एवं क्व दृष्टमित्यत्राह—[ ५ मप० ] **यथेति ॥ स्त्रीलिङ्गेति ।** सेति स्त्रीलिङ्गेत्यर्थः । ननु 'तस्य लिङ्गं' इत्यर्थे परामर्शासंभवः **'पर्यायेण'** इत्यस्य वैयर्थ्यमिष्टासिद्धिश्चात आह—[उ०६ष्ठप०] **तयोरिति ।** प्रक्रान्तयोरित्यर्थः ॥

सिद्धान्ती उत्तरयति—[भाष्ये—] **नेति ॥** तत्र हेतुमाह—**इत्याहेत्यादि ॥** यत इत्यादिः । आहेति वर्तमानसामीप्ये लट् । यतः—**'शब्दानुशासनम्'** इत्यवोचत् । न तु 'द्रव्यम्' इत्यर्थः । **नाम** निश्चये प्रसिद्धौ वा ॥ यद्वा—तटस्थः सिद्धान्त्युत्तरमनुवदति—**नेत्याहेति ।** इतिर्नञर्थस्य कर्मत्वद्योतकः ॥ तत्र हेतुमाह स एव—**द्रव्यमिति ॥ यत** इत्यादिः ॥ एवमग्रे सर्वत्र ॥

[ दक्षिणभागे प्र० ]—**यत** इत्यस्यार्थमाह—कैयटे—**भिन्नेन्द्रियेति ॥** शब्दग्राहकश्रोत्रान्यचक्षुर्ग्राह्यत्वादित्यर्थः ॥ तत्र **द्रव्यं** तत्त्वेनाभिमतम् ॥ नामपदार्थमाह—[ २ यप० ] **प्रतीतमिति ॥** तर्हि केन धर्मेण तत्प्रसिद्धमित्यत्राह—**अपि त्विति ।** गुणाश्रयत्वात् तत्समूहत्वाद्वेत्यर्थः ॥

---

१ भाष्ये–'नेत्याह' इत्युत्तरम्, तत्र हेतुः–द्रव्यं नाम तत्–इति । अथवा 'न, इत्याह । द्रव्यं नाम तत्' इति भाष्याक्षरविन्यासः । एवं विन्यस्ते 'न' इत्युत्तरं, तत्र हेतुः–इत्याह–इति । पूर्वं शब्दानुशासनमित्याह न द्रव्यानुशासनमित्याहेति तदर्थः । द्रव्यस्य चक्षुर्ग्राह्यत्वात् शब्दस्य श्रोत्रग्राह्यत्वान्न शब्दशब्देन तत्प्रतीयत इत्यर्थः ।

२ **अवक्ष्यदिति ।** यदि शब्दशब्देन द्रव्यं प्रतीयते, अतश्च द्रव्यानुशासनमित्येव तदर्थः; तदा स्पष्टप्रतिपत्तये 'अथ द्रव्यानुशासनम्' इत्येव भाष्यकृतोक्तं स्यादित्यर्थः ।

३ समूहसमूहिनोर्भेदमादायेदमिति बोध्यम् । ( र. ना. )

( उद्द्योतः ) भाष्योक्तहेतुमुपपादयति—**भिन्नेन्द्रियेति** । सामान्यव्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं हि शब्दलक्षणमिति भावः ॥ **यदि च द्रव्येति** । यदि द्रव्यं शब्दशब्दाभिधेयं स्यादित्यर्थः । तथाहि सति द्रव्यादीनां तन्त्रान्तरे निरूपितत्वात्तस्य वैयर्थ्यापत्तिरित्यपि बोध्यम् ॥ तत्र द्रव्यस्य क्रियाद्याश्रयत्वात्पूर्वमुक्तिः । क्रियागुणौ च जात्याश्रयाविति तयोस्ततः पूर्वमुक्तिः । वैशेषिकसिद्धगुणानामपि सङ्ख्यासंयोगविभागादीनां क्रियात्वं ध्वनयितुं गुणात्प्राक् क्रियोक्तिरिति ध्येयम् । **यत्तर्हि शुक्ल** इत्यादिगुणस्य शब्दत्वशङ्कापरे वाक्ये **'इति'**शब्देन प्रकारार्थेन सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसंख्यादिरूपगुणसङ्ग्रह इति न न्यूनता ॥ ननु शब्दस्यापि गुणत्वात् **'गुणो नाम सः'** इत्युत्तरमसङ्गतम् । तस्य द्रव्यत्वे **'द्रव्यं नाम तत्'** इत्युत्तरासंगतिरिति चेत्, न । 'उक्तद्रव्याश्रितो गुणो नाम सः' इत्यर्थात् ॥

ननु शब्दशब्दस्य कर्मघञन्तत्वेनार्थपरत्वमेवास्तु, अत आह [ १४ पृ. प्र. २ यप० ] तत्र—**यदि चेति** ॥

[उ० १मप०] तदभिप्रेत्याह—**भाष्योक्तेति** ॥

[ उ० १मप० ] हेत्वसिद्धिं परिहरन्हेतौ हेतुमाह—[ १ मप० ] **सामान्येति** ॥ अनेन शब्दनिष्ठसामान्येऽतिप्रसङ्गो वारितः ॥ विशेष्यदलेन द्रव्यादिनिरासः ॥ **हि**—यतः ॥ **शब्देति** । शब्दसामान्येत्यर्थः ॥ एतेन—अर्थबोधायानुच्चार्यमाणत्वान्न तत्त्वम्—इति रत्नोक्तमपास्तम् । अर्थबोधायानुच्चार्यमाणेऽनुकरणे चाव्याप्तेः ॥

[ उ० ] अत एव यथाश्रुतमनुपपन्नं व्याचष्टे—[ ३ यप० ] **यदि द्रव्यमिति** । **स्यादित्यनेन** 'अभविष्यत्' इत्यत्र कालाविवक्षा सूचिता । एवं च 'अवक्ष्यत्' इत्यस्यापि 'वदेत्' इत्यर्थो बोध्यः ॥ हेतुहेतुमद्भावरूपलिङ्निमित्तसत्त्वात् **'भूते च'** इति लङ् इति केचित् ॥ **इत्यर्थ इति** । इति मूलभूतार्थ इत्यर्थः ॥ ननु विनिगमनाविरहात्तथोक्तिः । न च स्फुटप्रतीतिभवनं तथा, कर्मघञन्तानुशासनसत्त्वेन तस्यावश्यकत्वेऽपि तत्त्वात् । न च लोकप्रसिद्धिस्तथा, लोकप्रसिद्धितः शास्त्रप्रसिद्धेः प्राबल्येन तस्या अविशिष्टत्वात्, अत आह—**तथाहीति** ॥ अन्यार्थत्वस्यावश्यकत्वेन वैपरीत्यं नेति सूचनायाह—[४ थप० ] **दीनामिति** ॥ यद्विन्नेष्विलत्र वक्तव्यमतमाह—**तत्रेति** ॥ तत्र भासमानानां मध्ये इत्यर्थः ॥ नन्वेवमपि शुक्लादिगुणस्य चिरतरसमयस्थायितया सर्वसंमतप्रत्यक्षतया च पूर्वमुक्तिर्युक्ता न क्रियायाः, तद्विलक्षणत्वादत आह—[ ६ष्ठप० ] **वैशेषिकेति** । तन्मतेत्यर्थः ॥ प्रसङ्गादत्रैवाह—[ ८ मप० ] **यत्तर्हीति** ॥ [ ९ मप० ] **प्रकारेति** । सादृश्येत्यर्थः ॥

१ **तस्य**—द्रव्यानुशासनस्य ।

२ भाष्ये द्रव्यक्रियागुणजातीनां निरसनीयानां मध्ये द्रव्यस्य प्रागुक्तौ बीजमाह—**तत्रेति** ।

३ 'निमिषितमिति' इति मुद्रिते 'इति'शब्दसहितः पाठो दृश्यते, स च टीकाकारैरितिशब्दस्याव्याख्यानादनुपयोगाल्लिखितेष्वनुपलम्भाच्चात्र न गृहीतः ।

( प्रश्नभाष्यम् )

**यत्तर्हि तदिङ्गितं चेष्टितं निमिषितम्, स शब्दः ?**

( प्रदीपः ) अनेनैव न्यायेन गुणक्रियासामान्यानां निराकृतेऽपि शब्दत्वे प्रपञ्चार्थं तत् चोद्यपूर्वकं निराकरोति—**यत्तर्हीति** । गोशब्दार्थे चैषां संभवात् शब्दत्वमाशङ्क्यते । परिहारस्तु पूर्ववत् ॥ तत्रेङ्गितम्=अभिप्रायस्य सूचकः शरीरव्यापारः । **चेष्टितं**=कायपरिस्पन्दः । **निमिषितम्**=अक्षिव्यापारः ॥

( उद्द्योतः ) श्रोत्राग्राह्यत्वादेव क्रियादीनां शब्दत्वे निरस्ते किमुत्तरग्रन्थेनेत्यत आह—**अनेनैवेति** ॥ **गोशब्दार्थे चैषां संभवादिति** । अभेदसंभवात्, तेन **'तदभिन्नाभिन्नस्य तदभिन्नत्वं'** इति न्यायेन शब्दत्वाशङ्का तेषामिति भावः ॥ **यद्वा** गोशब्दार्थे गुणसमूहे समूहितया एषां संभवादित्यर्थः ॥ **शरीरव्यापारः**= रोमाञ्चादिः ॥

अन्यथा तदानर्थक्यं स्पष्टमेवेति भावः ॥ 'यत्तत्' इति नपुंसकनिर्देशेन चेत्यपि बोध्यम् ॥ **आदिना** स्पर्शादिपरिग्रहः ॥ अग्र **आदिना** शक्तिरूपकारकपरिग्रहः ॥ तत एवात्रैवाह—[ १० मप० ] **नन्विति** ॥ [ १२ शप० ] **इति तदर्थादिति** । इत्युत्तरार्थादित्यर्थः ॥ **'इत्यर्थात्'** इति पाठेऽप्येवम् ॥ अनेन **'द्रव्यं नाम तत्'** इत्यस्य 'वक्ष्यमाणगुणाश्रयो द्रव्यं नाम तत्' इत्यर्थः सूचितः । लिङ्गसंख्याद्यन्वयि द्रव्यमित्यादि तु स्वशास्त्रव्यवहारोपयोगीति बोध्यम् ॥

[ २ यप्र० १ मप० ] तन्त्रान्तरस्थक्रमेणाह—कैयटे—**गुणक्रियेति** ॥ **निराकृतेऽपि**—तत्प्रायेऽपि ॥ **प्रपञ्चार्थम्**—प्रसिद्ध्यन्तरावगमाय ॥ अत एव सर्वत्र नामपदोक्तिः ॥ **तत्**—तेषां शब्दत्वम् ॥ **यत्तर्हीतीति** । यदि द्रव्यं न शब्दः, तर्हीङ्गितादेस्तदन्यत्वात्तत्त्वमस्तीत्यर्थः । **तर्हि यत्तत्**—इङ्गितादि **स किं शब्द** इति योजना बोध्या ॥ एवमग्रेऽपि सर्वत्र ॥

[ २ यप्र० ] कैयटे—[ ४ थप० ] **तत्रेङ्गीति** । त्रयाणां मध्य इत्यर्थः ॥

[ २ यउ० १ मप० ] **निरस्ते**—निरस्तप्राये ॥

[ द० भागे उ० ३ यप० ] कैयटेन शङ्काबीजं व्याख्यायामुक्तमेव प्रदर्श्यत इति ध्वनयन्नाह—**अभेदेति** ॥ नन्वेवमपि शब्देनाह—**यद्वेति** ॥ **एषां**—क्रियादीनाम् ॥ **संभवादिति** । तथा च गोशब्दे तत्समूह्यभेदोऽपि सिद्ध एव तदन्यावयविनोऽत्रानुपलम्भादिति बोध्यम् ॥

[ उ० ६ ष्ठप० ] कायपरिस्पन्दस्य वक्ष्यमाणत्वादाह—**रोमाञ्चादिरिति** ॥ अनेन येनेङ्ग्यते भावः प्राणिनां तत्—इङ्गितम् इति व्युत्पत्तिः सूचिता ॥

४ **उत्तरग्रन्थेन**—यत्तर्हि तदिङ्गितमित्यारभ्य 'आकृतिर्नाम सः' इत्यन्तग्रन्थेन ।

५ द्रव्ये शब्दत्वं नेत्यर्थः । ( र. ना. )

६ कर्मघञन्तस्य शब्दशब्दस्यानुशासनसत्त्वेनेत्यर्थः । ( र. ना. )

७ तदभिन्नाभिन्नस्येति न्यायेन कथञ्चिद्गुणादीनां गोशब्दवाच्यत्वसिद्धावपि साक्षाद्गोशब्देन ते नोच्यन्तेऽत आह—**नन्वेवमपीति** ॥

( उत्तरभाष्यम् )

**नेत्याह, क्रिया नाम सा ॥**

( प्रश्नभाष्यम् )

**यत्तर्हि तत् शुक्लो नीलः कपिलः कपोत इति, स शब्दः ?**

( प्रदीपः ) **शुक्लो नील इति ।** द्रव्यस्य प्रागुपन्यासाद्गुणमात्राभिधायिनोऽत्र शुक्लादयो द्रष्टव्याः ॥

( उत्तरभाष्यम् )

**नेत्याह, गुणो नाम सः ॥**

( प्रश्नभाष्यम् )

**यत्तर्हि तत् भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं, स शब्दः ?**

( प्रदीपः ) **भिन्नेष्वभिन्नमिति ।** अनेन सामान्यस्य 'एकत्वं' कथ्यते । 'छिन्नेष्वच्छिन्नं' इत्यनेन तु 'नित्यत्वम्' ॥ **सामान्यभूतमिति ।** सत्ताख्यं महासामान्यं गोत्वादेः सामान्यविशेषस्योपमानं निर्दिष्टम् । सामान्यमिव—**सामान्यभूतम् ।** भूतशब्द उपमार्थे, यथा—पितृभूत इति ॥

( उद्योतः ) **एकत्वमिति ।** अनेकसमवेतत्वस्याप्युपलक्षणम् । नित्यत्वेन संयोगनिरासः । एकत्वेन प्रत्यभिज्ञाप्रत्यक्षरूपं प्रमाणं दर्शितम् ॥ भूतशब्दप्रयोगानुपपत्तिं परिहरति—**सत्ताख्यमिति ।** एवं हि 'वृक्षवदाम्रः' इत्याद्यापत्तेः, सामान्यश्रुतेः सर्वसामान्यविषयत्वेन प्रवृत्तायाः संकोचे कारणाभावाच्च, उपमाकथनस्य प्रकृतेऽनुपयोगाच्च, अध्याहारे गौरवाच्च—नेदं **युक्तम् ।** किं तु स्वरूपवाची सः । वृद्धिसंज्ञासूत्रस्थभाष्यप्रयोगस्य **'प्रमाणभूतः'** इत्यस्य स्वयं करिष्यमाणव्याख्यानरीत्याऽस्यापि व्याख्यानसंभवात् ॥ 'पितृभूतः' इत्यत्रापि **'अन्यत्रान्यशब्दप्रयोगः सादृश्यपरः'** इति सादृश्यप्रतीतिः, न त्वस्य सादृश्यवाचकत्वे मानमस्तीति दिक् ॥

( उत्तरभाष्यम् )

**नेत्याह, आकृतिर्नाम सा ॥**

(उद्योतः) भाष्ये—**आकृतिः**—जातिः संस्थानं च, आक्रियते—व्यवच्छिद्यते स्वाश्रयोऽनयेति व्युत्पत्तेरिति भावः ॥ शङ्कापरभाष्ये **'सामान्यभूतम्'** इत्यस्य तद्व्यञ्जकं चेत्यप्यर्थो बोध्यः ॥ जातिमात्रपरत्वे **'जात्याकृतिव्यक्तयः[1] पदार्थः'** इति गौतमसूत्रेण तस्यापि पदार्थत्वबोधनात् प्रत्यक्षादौ तद्भानाच्च तस्य शब्दत्वाशङ्कातत्समाधानाभावेन न्यूनता स्यात् ॥ **'सिद्धे शब्दार्थे–'** इति वार्तिकव्याख्याने

---

[ १ मभा० १ मप० ] भाष्ये—**क्रियेति ।** प्राधान्येन कृदन्तधातुवाच्यत्वादिति भावः ॥

[ २ यभा० १ मप० ] **कपोतः**=चित्रः । **'इति'**शब्दस्य प्रयोजनं तूक्तम् ॥

[ ३यभा० १ मप० ] **गुणो नामेति ।** द्रव्यकर्मेतरसामान्यवत्त्वाच्छब्दस्य गुणत्वेऽपि रूपादीनां गुणत्वयोगेनैव शब्दसाधर्म्यम्, न तु शब्दत्वयोगेनेति न दोषः ॥

[ २ यप्र० २ यप० ] कैयटे—**तुरुक्तवैलक्षण्ये ॥**

[ द० भागे उ०१ मप० ] न्यूनतां परिहरति—**अनेकेति ।** तथा च 'नित्यमेकमनेकानुगतं सामान्यम्' इति तल्लक्षणं सूचितम् ॥ तत्राद्यकृत्यमाह—[ २ यप० ] **नित्येति ॥** एकमिति स्वरूपकथनपरं न विशेषनिवृत्त्यर्थम् । तेषां प्रतिस्वं भिन्नत्वात् । तद्ध्वनयन्नाह—**एकत्वेनेति ॥ प्रमाणमिति ।** सामान्यसद्भावे इति शेषः ॥

[ उ० ४ थेप० ] **एवंहीत्यस्य नेदं युक्त**मित्यत्रान्वयः ॥ सामान्यविशेषयोरुपमानोपमेयभावाङ्गीकारे हीति तदर्थः ॥ **सर्वेति ।** सामान्यविशेषरूपेत्यर्थः ॥ [ ६ ष्ठप० ] **अध्याहारे इति ॥** गोत्वादिरूपसामान्यविशेषवाचिशब्दाध्याहार इत्यर्थः ॥ नन्वेवं झटिति श्रुत्यनुपपत्तिरत आह—**किंत्विति ।** अर्थान्तरपरतया तस्योपपत्तिरिति भावः ॥ ननु स्वरूपवाचित्वे न मानमत आह—

[ ७ मप० ] **वृद्धीति ।** अ[2]त एव चोक्तिः, स चान्ते योज्यः ॥ सामान्यशब्दस्तद्वृत्तिधर्मपरः । **'भूतं' इति भू**प्राप्तावित्यस्य 'आधृषाद्वा' इति णिजभावे रूपम् । प्राप्तमिति तदर्थ इति भावः ॥ ननु पितृभूत इत्यस्यानुरोधेन तथैव कुतो नात आह—[ ८ मप० ] **पितृभूत इति ॥ इति**–इति न्यायेन ॥ [ १०म० ] **दिगिति ।** तदर्थस्तु तत्रापि स्वरूपपरत्वेनैव निर्वाहः । **किंच** 'प्रमाणभूतः' इत्यादाविव निर्वाहस्तत्र । **किंच** सामान्यं च तद्भूतं चेति कर्मधारयः । भूतशब्दः परमार्थवाची सामान्यस्यापोहरूपतां प्रतिक्षेप्तुमुपात्तः, तस्याघटादिव्यावृत्त्यात्मनो घटोऽयं घटोऽयमित्याद्यनुगताकारप्रत्ययविधिमुखप्रवृत्तशब्दविषयत्वायोगेनाप्रामाणिकत्वादिति बोध्यमिति ॥

यत्तु—आकृतिर्जातिरत्र, वक्ष्यमाणव्युत्पत्तेः । अवयवसंयोगरूपाकृतेर्गुणत्वात् 'गुणो नाम' इत्यनेन गतार्थत्वादिति **कृष्णः,** तदसदिति ध्वनयन् तथैव वाच्य आकृति पदस्वारस्यादित्याह—[ २ य- उ० १ मप० ] **संस्थानं चेति ।** रूपक्रियादिविशिष्टमवयवसंस्थानं चेत्यर्थः । तादृशतदाकार इति यावत् । अत एव गां लिखेत्यादौ लेखनकर्मत्वोपपत्तिः । **'पिष्टकमय्यो गावः'** इत्यत्राकृतेः पदार्थत्वमावश्यकम् ॥ एवं व्याख्याने बीजान्तरमाह—[ ४ थेप० ]—**जातीति ॥ यस्तु पेति ।** अत्र **"तुशब्दो विशेषणार्थः ॥ किं**

---

१ 'व्यक्तयस्तु पदा–' इति मुद्रितपाठः ।

२ अनेन छायाग्रन्थेन वृद्धिसूत्रस्थप्रदीपे 'वृत्तिविषये च' इत्यत्र श्चकारः स चान्ते योज्य इति बोध्यते । एवं हि वृद्धिसंज्ञासूत्रे कैयटः—**'प्रमाणभूत इति'**–प्रामाण्यं प्राप्त इत्यर्थः । भू प्राप्तावित्यस्याधृषाद्वेति णिजभावे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते' इति, एतदनुरोधेन 'सामान्यभूतं'इति भाष्यस्य व्याख्यानमाह–सामान्येत्यादिना । एवञ्च सामान्यभूतमित्यस्य 'सामान्यत्वं प्राप्तं' इत्यर्थः ।

भाष्ये तस्या अपि पदार्थत्वं नित्यत्वञ्च कैयटो वक्ष्यति । **'तदभिन्नाभिन्नस्य तदभिन्नत्वम्'** इति न्यायस्तु यत्र स्वाभिन्नद्वारकः स्वस्वरूपानुगमस्तद्विषयः । यथा—**परमकारणकार्योपादानके** परमकारणाभेदः । अत एव सुखदुःखयोर्नैक्यम् । नापि कुण्डलकटकयोस्तत्, कुण्डलारम्भकस्वर्णावयवानुगमस्य कटकेऽभावात् एवं गुणसमूहस्यानुद्भूतावयवभेदस्य वाच्यत्वेऽपि समूहिनां तत्तद्रूपेणावाच्यत्वान्न तेषां शब्दत्वाशङ्केति भावः ॥

**( प्रश्नोपसंहारभाष्यम् )**

**कस्तर्हि शब्दः ?**

**( प्रदीपः )** द्रव्यादिषु निरस्तेषु पृच्छति—**कस्तर्हीति** ॥

**( उद्द्योतः ) पृच्छतीति ।** प्रश्नविषयविशेषान्तराभावात् सामान्यरूपेण पृच्छतीत्यर्थः ॥

**( समाधानभाष्यम् )**

**येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति, स शब्दः ॥**

**( प्रदीपः )** उत्तरमाह—**येनोच्चारितेनेति ।** वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति । वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात् । आनर्थक्ये तु प्रत्येक**मुत्पत्तिपक्षे** यौगपद्येनोत्पत्त्यभावात्, **अभिव्यक्तिपक्षे** तु क्रमेणैवाभिव्यक्त्या समुदायाभावात् । एकस्मृत्युपारूढानां वाचकत्वे 'सरः' 'रसः' इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात्तद्व्यतिरिक्तः **स्फोटो** नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितः । **उच्चारितेन**—प्रकाशितेनेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**उच्चारितेनेति ।** शारीरमारुताभिहतकण्ठादिस्थानैरवयवद्वाराऽभिव्यक्तेन येनेत्यर्थः ।

---

विशिष्यते ? **अप्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम् । यदा भेदविवक्षा विशेषगतिश्च तदा व्यक्तिः पदार्थोऽङ्गं जात्याकृती ।** यथा गौस्तिष्ठति गौर्गच्छतीति । तयोः स्थानादीनामसंभवात् सा पदार्थः । **यदा पुनरभेदो विवक्षितः सामान्यगतिश्च तदा जातिः पदार्थः, इतरे विशेषणे ।** यथा "गौर्न पदा स्प्रष्टव्यः" इति तद्वार्तिक(तद्भाष्य)कारः ॥ **तस्यापि**—संस्थानस्यापि ॥ नन्वेवमपि तस्य पदार्थत्वं न भाष्यादिसंमतमिति न साऽत आह—**सिद्धे इति ॥ पदार्थत्वमिति ।** उक्तमिति शेषः ॥ नन्वेवमपि व्यक्तिवत्तस्यानित्यत्वेन 'भिन्नेषु—' इति लक्षणानाक्रान्तत्वाच्छङ्काया एवाभावेन कथमुत्तरे तथाऽत आह—**नित्येति ।** तत्रैवेति भावः ॥ ननु तदभिन्नेति न्यायेन शङ्कापक्षे एवं निराकरणे न्यायस्य निर्विषयतापत्तिरत आह—**तदभिन्नेति ॥** पक्षेण शङ्कायामेवं निराकरणाशयमाह—**एवमिति ॥** तद्वदित्यर्थः ॥ **समूहिनाम्**—अवयवानाम् ॥ ननु 'यः शब्द्यते स शब्दो नेत्याह अर्थरूपं तत्' इत्येकेन वाक्येनेष्टसिद्धेरनेकवाक्यवैयर्थ्यमिति चेत् । न, मन्दबुद्धीनां स्पष्टप्रतिपत्त्यर्थं तथोक्तेः ॥

[ १ मउ० १ मप० ] पूर्वप्रश्नतोऽत्र विशेषमाह—**प्रश्नेति ॥**

नच कर्मव्युत्पत्त्या शब्दत्वनिरासेऽपि भावव्युत्पत्तिरूपप्रकारान्तरं संभवतीति वाच्यम्, तत्र क्रियारूपमेवोत्तरमित्याशयात् । अन्यस्य प्रकारस्य निर्वक्तुमशक्यत्वात् । तत्र भासमानशब्दस्य तत्त्वस्येष्टत्वाच्चेति भावः ॥

[ २ यभाष्ये १ मप० ] **उच्चारितेने**तिविशेषणेन गृहीतसंकेतस्य स्वरूपसतो बोधकत्वं निरस्तम् ॥ प्रकाशितस्यैव तत्त्वात् ॥

[ वामे २ यप्र० १ मप० ] कैयटे—**उत्तरमिति ।** सिद्धान्तीत्यादिः । शब्दपदं करणघञन्तमिति भावः ॥

[ २ यप्र० २ यप० ] पदस्यापि कल्पितत्वादाह—**कैयटे—वाक्यस्य वेति ॥**

[ २ यप्र० ५ मप० ] कैयटे—**तुरप्यर्थे ॥**

[ २ यप्र० ६ ष्ठप० ] कैयटे—**आदिना**—'जरा, राज' 'नदी, दीन' इत्यादिपरिग्रहः । तत्र—**प्रसङ्गादिति ।** वर्णानामुभयत्राविशेषादिति भावः ॥

[ २ यउ० २ यप० ]—**स्थानैः । 'साक्षादवयवद्वारा वाऽभि—'** इति पाठः ॥ तत्राखण्डस्थले साक्षात् । सखण्डस्थले—अवयवद्वारेति बोध्यम् ॥

---

१ 'पदार्थत्वं कैयटो नित्यत्वञ्च' इति अ. पाठः ।

२ **स्वाभिन्नद्वारक इति ।** गुणेन गुणिनोऽभेदः, तेन च शब्दस्याभेद इति शब्दस्य गुणेनाभेदः स्वीक्रियते 'तदभिन्न—' इति न्यायेन । परन्तु यत्र स्वाभिन्नेन स्वस्वरूपानुगमो भवति तत्रैवायं न्यायः प्रवर्तते, अत्र तु गुणाभिन्नेन क्रियाऽभिन्नेन वाऽर्थेन गुणस्य क्रियाया वा स्वरूपाननुगमान्नायं न्यायः प्रवर्तत इति, एवं निराकरणेऽपि न न्यायस्य निर्विषयतापत्तिरिति भावः ।

३ वस्तुतस्तु सुखदुःखयोः कटककुण्डलयोरपि कारणात्मनाऽभेद एव । कार्यरूपेण तु भेदः । तदाहुः—"कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाभेदः कुण्डलाद्यात्मना भिदा ॥" इति । तदभिन्नाभिन्नस्येति न्यायोदाहरणमप्येतदेवेति बोध्यम् । (र.ना.) अविचारितरमणीयमेतत् ।

४ **कस्तर्हीति ।** यदि द्रव्यगुणादि न शब्दस्तर्हि गौरित्यत्र कः शब्दः पृच्छ्यत इत्यर्थः । अत्रापि शब्दशब्दस्यार्थपरत्वेन शब्दपरत्वाभावेनानुपयोगात् 'इति'शब्दो न प्रयुक्तः । अर्थपरस्य च तस्य

पृच्छधात्वर्थफलेन सहाभेदेनान्वयः ।

५ **येनोच्चारितेनेति ।** येनेति करणे तृतीया, येन प्रकाशितेन—स्फोटेन सास्नादिमतां ज्ञानं भवति सः—स्फोटः शब्द इत्यर्थः । ननु स्फोटस्यास्मिन्भाष्येऽनुल्लेखादेवमर्थस्वीकारे किं बीजमिति चेत्, उत्तरभाष्यमेवात्र मानम् । तेन हि ध्वनेः शब्दत्वमुच्यते । ईदृशार्थाभावेऽस्यापि स एवार्थः स्यादित्येतदस्य भाष्यस्य स्फोटपरत्वव्याख्याने बीजम् । अन्यथाऽनन्वयापत्तिरिति ।

६ अनियमेन विशेष्यविशेषणभावानापन्नस्य पदार्थत्वं विशेष्यते इति योजना । ( र. ना. )

७ जातिव्यक्त्याकृतीनां परस्परमिति शेषः । विशेषगतिरित्यत्रापि व्यक्तीत्यादिः । एवमग्रेऽपि 'पुनरभेद' इत्यत्र 'सामान्यगति'रित्यत्रापि चेमावेव शेषौ ज्ञेयौ । ( र. ना. )

८ **तयोः**—जात्याकृत्योस्तिष्ठत्यर्थासम्भवाद्व्यक्तिः पदार्थ इत्यर्थः ।

९ तदभिन्नेतीत्यादिः । ( र. ना. )

अत्र विषाणान्तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते ॥ **संप्रत्ययः**-ज्ञानम् ॥

ननु प्रत्यायकशब्दस्य वर्णसमूहरूपतया 'येन'इत्येकवचनमयुक्तम् । न च 'वनम्'इतिवत् समूहाभिप्रायं तत्, समूहस्य स्थिरस्य निरूपयितुमशक्यत्वादत आह—**वैयाकरणा इति** ॥ वर्णव्यतिरिक्तपदानभ्युपगमे एकैकस्य वर्णस्य वाचकत्वं, समुदायस्य वा, नाद्य इत्याह—**वर्णानां प्रत्येकमिति** ॥ द्वितीयमनूद्य दूषयति—**आनर्थक्ये तु प्रत्येकमिति** । प्रत्येकमानर्थक्ये तु समुदायस्य वाचकत्वमुपेयम्, तत्तु न युक्तम्-इति शेषः । यतस्तत्र **नयद्वयम्**—उत्पद्यमानसमुदायस्य-अभिव्यज्यमानसमुदायस्य वा वाचकत्वमिति । तत्राद्यं दूषयति—**उत्पत्तिपक्षे इति** । 'उत्पत्त्यभावात्'इत्यस्य 'समुदायाभावात्' इत्यनेनान्वयः ॥ द्वितीयं दूषयति—**अभिव्यक्तौति** । उत्पन्नाभिव्यक्तेर्ध्वस्तत्वादित्यर्थः ॥ ननु पक्षद्वयेऽपि पूर्वपूर्ववर्णानुभवजसंस्कारसहकृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढानां वाचकत्वमस्त्वत आह—**एकस्मृतीति** ॥ ननु तस्य नित्यत्वे सर्वदाऽर्थप्रतीतिप्रसङ्गोऽत आह—**नादेति** । नादः-वर्णः ॥ ननु येन क्रमेणानुभूता वर्णास्तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गः, अन्यथा त्वयाऽपि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्तदोषान्निस्तारस्तवापीत्यत आह—**विस्तरेणेति** । इदं-'एकं पदम्' 'एकं वाक्यम्' इति प्रत्ययः स्फोटसत्त्वे तदैक्ये च प्रमाणम् । अनुभवक्रमेणैव स्मरणमित्यर्थे दृढप्रमाणाभावाच्च । क्रमेणानुभूतानां व्युत्क्रमेणापि स्मरणदर्शनात् । **मम** तु यथा पटे नानारञ्जकद्रव्याहितनानावर्णोप**रागः क्रमेण**, तथा एकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेव तत्तद्वर्णस्वरूपानुरागः, स च स्थिरः, तस्य च मनसा ग्रहणमिति न दोषः ॥ तत्र 'येन' इत्येकवचनेन 'विषाणिनाम्' इति बहुवचनेन चानेकोच्चारणविषयगौरित्यस्यैकत्वं सूचितम् । एवं च तेनैव दृष्टान्तेन घटपटादिबोधकसाधारण्येन वाचकस्यैकत्वं सूचितम् । भेदप्रत्ययस्त्वौपाधिक इत्याद्यसत्कृतमञ्जूषायां शक्तिवादे द्रष्टव्यम् ॥ नन्वेवं तस्य ताल्वोष्ठपुटव्यापारविषयत्वाभावात् 'उच्चारितेन' इत्ययुक्तमत आह—**प्रकाशितेनेति** । अभिव्यञ्जकैरिति शेषः ॥

---

[ २ यउ० ३ यप० ] न्यूनतां परिहरति—**अत्रेति** । अनेन प्रागुक्तरीतिः सूचिता । बहुवचनं तु व्यक्त्यभिप्रायमिति भावः । यत्तु—संप्रत्ययः स्मरणम् 'एकसंबन्धि–' न्यायेन—इति रत्नकृत् । तन्न, पदार्थोपस्थितेः स्मृतित्वस्य मञ्जूषायां निराकृतत्वात् । अत आह—**ज्ञानमिति** ॥

[ २ यउ० ५ मप० ] **समूहाभीति** । अनुद्भूतावयवभेदकसमूहेत्यर्थः ॥ **समूहेति** । 'तद्वदत्र' इत्यादिः ॥ **स्थिरस्य**-चिरकालस्थायिनः ॥

[ २ यउ० ] पदाधिक्यपरिहारायाह—[ ८ मप० ] **द्वितीयमनूद्येति** । आद्यदोषमित्यर्थः ॥ तत्राद्यमाह—**प्रत्येकमानर्थक्ये त्विति** । वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णानामानर्थक्ये त्वित्यर्थः ॥ शेषपूरणमाह—[ ९ मप० ] **समुदेति** । **तत्तु**-तदपि ॥ [१०मप०] **तत्र**-समुदायस्य वाचकत्वे ॥ **नयेति** । मतेत्यर्थः ॥ **उत्पद्येति** । षष्ठीसमासः ॥ एवमग्रेऽपि ॥

[२ य उ०] क्रमेणैवेत्यत्र हेतुमाह—[१३ शप०] **उत्पन्नेति** ॥ [१५ शप०] **मस्येति** । एवं च पक्षद्वयमप्यदुष्टमिति भावः ॥

[ २ य उ० ] ध्वनिवारणायाह—[ १७ शप० ] **वर्ण इति** ॥ वर्णसत्त्वपक्षे साक्षाद् ध्वनिव्यङ्ग्यत्वस्य तत्रासंभवादिति भावः ॥ ननु येन क्रमेणानुभवास्तेनैव क्रमेण स्मरणानीति दोषनिवारणमत्र दुर्वचम्, स्मृतेरत्रैकत्वादत आह—**ननु येनेति** । **नन्विति** स्फोटाभावशङ्कायाम् ॥ [१९ शप०] **पूर्वोक्तेति** । अर्थप्रतीत्यविशेषप्रसङ्गरूपादित्यर्थः । तदुक्तम्—

**'यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।**
**सोऽपि पर्यनुयोगेन न केनापि विमुच्यते ॥'** इति ॥

[२१ शप०] **प्रत्यय इति** । न चायं वर्णगोचरः, तेषामनेकमिति प्रतीत्या नानात्ववत्त्वात् । न चायं भ्रान्तः, बाधाभावादित्याद्यन्यत्र बोध्यम् ॥ युक्त्यन्तरेण तं संसाध्य कैयटोक्तदोषमपि प्रतिपादयन् तां खण्डयितुं हेतुमाह—**अनुभवेति** । तदुक्तम्—

**'नानुभूतिक्रमाद्वर्णाः क्रमिकाः स्मृतिगोचराः ।**
**गोचरोऽनुभवो न स्यात्तत्क्रमस्ते कुतः पुनः ॥'** इति ॥

अत्र हेतौ हेतुमाह—[२२ शप०] **क्रमेणेति** । प्रपूर्वदिनानुभूतं विहाय पूर्वदिनानुभूतस्मृतिस्थल इति भावः ॥ नन्वेवं वर्णानां स्फोटव्यञ्जकत्ववादिनस्तव कथं निर्वाहोऽत आह—[२३ शप०] **मम त्विति** ॥ **तस्मिन्**-स्फोटे ॥ **उच्चारणक्रमेणेति** । न तु भवदुक्तरीत्येति भावः ॥ ननु तस्यापि क्षणिकत्वे प्रागुक्तदोष एवात आह—[२५ शप०] **स चेति** । स्फोटश्चेत्यर्थः ॥ पारमार्थिकत्वादाह—**स्थिर इति** ॥ तस्य श्रोत्राग्राह्यत्वादाह—**तस्य चेति** । इदमन्यत्र स्पष्टम् ॥ न चैवं प्रतिज्ञाविरोधः, लिप्यादिवत्तदुपायत्वात् । व्यञ्जकानुशासनद्वारा व्यङ्ग्यस्यैवानुशासनाच्च ॥ **ननु 'येन'** इत्येकवचनस्य स्फोटाभिप्रायकत्वेऽपि प्रश्नवाक्यवदेकवचनमेव **विषाणिना**मित्यत्र युक्तमत आह—[२५ शप०] **अत्रेति** । भाष्य इत्यर्थः ॥ **तत्र** इति पाठेऽप्येवम् ॥ **नेकोच्चारणेति** । व्यक्तिभेदात्कर्तृभेदाच्चेत्यर्थः ॥ अधिकमाह—**एवं चेति** । तस्य तत्त्वसूचने चेत्यर्थः ॥

[ १८ पृ० उ० २८ प० ] **वाचकेति** । स्फोटस्येत्यर्थः ॥ **सूचितमिति** । सुष्ठूचितमित्यर्थः । **समुचित**मिति पाठस्तु सुगम एव ॥ कथं तर्हि घटपटादिशब्दानां भेदप्रतीतिरत आह—**भेदेति** । उपाधिर्वर्णरूपः ॥

[ उ० २९ प० ] **एवं**—तदतिरिक्तत्वे ॥ तेषां बहुत्वात्तैरेव व्यञ्जितादर्थप्रतीतेरिष्टत्वाचाह—[ ३० शप० ] **अभीति** ॥ एकेनैवाभिव्यक्त्येष्टसिद्धेरन्यानर्थक्यम्, निरवयवस्य सर्वात्मनाऽभिव्यक्तत्वेऽप्येकेनान्येषां स्फुटतराभिव्यक्त्यर्थत्वात्तरतमेन्द्रियसंबन्धेन स्फुट-

---

१ **अत्र विषाणेति**-भाष्ये 'ककुदखुरविषाणिनां' इत्येतत् शुक्लादिगुणानां क्रियादीनाञ्चोपलक्षकमिति भावः ॥

२ **स्फोटे-इत्यर्थः** । ( र. ना. ) ३ मते इति शेषः । पर्यनुयोगेनेत्यस्य प्रश्नेनेत्यर्थः । ( र. ना. ) ४ युक्तिमित्यर्थः । ( र. ना. ) ५ अनुभवान्तरेत्यादिः । ( र. ना. ) ६ अनुभवक्रमेत्यर्थः । ( र. ना. )

( समाधानान्तरभाष्यम् )

**अथवा-प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते । तद्यथा-शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्ययं माणवकः, इति ध्वनिं कुर्वन्नेवमुच्यते । तस्मात् ध्वनिः शब्दः ॥**

( प्रदीपः ) **अथवेति ।** अन्यत्र ध्वनिस्फोटयोर्भेदस्य व्यवस्थापितत्वादिहाभेदेन व्यवहारेऽपि न दोषः, द्रव्यादयो न शब्दवाच्या इत्यत्र तात्पर्यात् ॥ **ध्वनिं कुर्वन्निति ।** विधि[1]प्रतिषेधयोरप्रवृत्तविषयत्वात्कथमस्य त्रिभिः संबन्धः ? उच्यते— शब्दं कुर्वन्नपि 'शब्दं कुरु' इत्युच्यते विरामाशङ्कायां तन्निवृत्तये । तथाऽनभिमतशब्दश्रवणोद्वेजितेनोच्यते—मा शब्दं कार्षीरिति ॥

( उद्द्योतः ) भाष्ये-**अथवा प्रतीतपदार्थक इति ।** लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः । तस्यार्थबोधकताऽप्यविचारितरमणीयस्यैव लोके सिद्धा, तादृशस्यैव शास्त्रेणान्वाख्यानमिति तात्पर्यम् । तदाह-**अन्यत्रेति** । संग्रहादौ, तपरसूत्रे भाष्ये चेत्यर्थः । **ध्वनि**पदेनात्र वैखरी, **स्फोट**पदेनाभिव्यक्तकत्वादिको मध्यमावस्थ आन्तरः शब्द उच्यते ॥ **कथमस्येति** । 'कुर्वन्'इत्यस्य वर्तमानार्थत्वादित्यर्थः ॥

( शास्त्रप्रयोजनाधिकरणम् )

( प्रयोजनजिज्ञासाभाष्यम् )

**कानि[2] पुनः शब्दानुशासनस्य प्रयोजनानि ?**

स्फुटतरक्रमेणान्त्यसंबन्धे स्फुटतमा व्यक्तिर्न प्राक् संबन्धे यथा तथा गकारादिध्वनिभिस्तरतमादिभावेन स्फोटाभिव्यक्तिस्वीकार इति तदनन्तरमेवार्थधीर्न ततः प्राक् । एवमर्थाभिव्यक्तिस्तु न, स्फुटत्वस्य संनिकर्षभेदेन प्रत्यक्षज्ञाननियतत्वात्स्फोटज्ञानस्य च प्रत्यक्षत्वात् । अर्थो यद्यभिहितो नाभिव्यक्तः, संदिग्धश्चेन्नाभिहित इत्याद्यन्यत्र द्रष्टव्यम् ॥

[द० १ मभा०] ननूक्तलक्षणलक्षितस्य लौकिकबहिर्भूतत्वात्कथमनुशासनम्, तदनुशासने च **'लौकिकानां'** इत्याद्युपक्रमविरोधापत्तिः । यद्यपीदं कौस्तुभाद्युक्तरीत्या सुसमाधानम्, तथापि **'लौकिकानां'** इत्यादिभेदेनोक्तेर्बहुवचनान्तेनोक्तेस्तथोदाहृतत्वाच्च तथाऽनभिमतत्वस्य व्यवहारदशायां भगवदिष्टत्वेन तदस्वारस्यादुपक्रमविरोधश्च । **किं च** यस्मादर्थाप्रतीतिः कारणवशात्तस्य शब्दत्वानापत्तिः । **किंच** वर्णेभ्योऽर्थाप्रतीतिरेवेति वर्णानां शब्दत्वव्यवहारः सार्वजनीनो विरुध्येत । **किंच** प्रागुक्तशब्दसामान्यलक्षणानाक्रान्तत्वं तस्य, मनसा तस्य ग्रहणात्—अत आह—[१ मप०] **भाष्ये-अथवेति ॥** प्रतीतः पदार्थ इति कर्मधारय एव । स्वार्थे कन् । तस्य च तद्बोधके **लक्षणा[3] ।** ध्वनय एव वर्णाः । अन्यत्रोक्तरीत्या अनुभवेन च वर्णस्थले ध्वनीनामावश्यकत्वेन तैरेव स्फोटत्वेनाभिमताभिव्यक्तिसंभवे तयोरन्तरा वर्णाङ्गीकारे गौरवात् । दूरगतकोलाहलश्रवणे घत्वादीनां श्रूयमाणध्वनिगतानामेव दूरत्वदोषेणानभिव्यक्तिसंभवाच्च ॥ एवं चैकैकवर्णोऽपि सहकारिवर्णान्तरसंबन्धादनेकपदरूप इति सोऽपि तच्छक्तिरिति गकारौकारविसर्जनीया गोर्वाचका इति लोकस्याविचारितरमणीये तत्समूहे वाचकत्वग्रहः । अखण्डोऽपि स्फोटो गकाराद्यवस्थाभ्यो भिन्नोऽभिन्नश्च चरमावस्थया विसर्जनीयादिरूपया पदादिरूपेण व्यज्यत इति वर्णेषु तत्त्वव्यवहारोपपत्तिर्लोकस्येति बोध्यम् ॥

[१ मभा० २ यप०] भाष्ये **'इत्युच्यते'** इत्यनेन सिद्धान्त्यनभिमतत्वमस्य सूचितम् ॥

[१ मभा०] प्रतीतत्वमेव विशदयति—भाष्ये [२ यप०] **तद्यथेति ॥** ध्वनिं कुर्वन्नित्येवमुच्यत इति संबन्धः ॥ यद्वा— ध्वनिं कुर्वन्नेवमुच्यते । एवंपदार्थ एव—**इतीत्यन्तः ॥**

[१ मभा० ४ थंप०] तथा चायं हानोपादानोपेक्षात्मा त्रिविधो व्यवहार इत्यन्वयव्यतिरेकाभ्यां तस्य श्रावणत्ववाचकत्वयोरवसायः । तद्ध्वनयन् तदनुसारेणोपसंहरति—भाष्ये—**तस्मादिति ।** लोकव्यवहारादित्यर्थः ॥ **ध्वनिः**—उक्तरूपः ॥

[१ मप्र० ४ थंप०] **रप्रवृत्तेति**-कैयटे । प्रवृत्तस्य प्रेरणानिषेधयोरसंभवादिति भावः ॥ एकेन संबन्धसंभवेऽपि समुदायेन तदसंभवादाह—**त्रिभिरिति ॥** [६ ष्ठप०] तत्र **तथाऽनभीति ।** एवमुदासीनेन वस्तुस्थितिः कथ्यते—**शब्दकारीति-इति** बोध्यम् ॥

[१ म उ० १ म प०] तदभिप्रेत्याह—**लोक इति ॥** तदर्थमाह—[२ यप०] **व्यवेति ।** अस्य बोधे **प्रती**तौ वाऽन्वय इत्याह—**पदार्थेति ।** अत एव वक्ष्यति—**तस्येति ॥** प्रतीतपदार्थमाह—**प्रेति ॥** वर्णरूपत्वं ध्वनौ तत्समूहे च बोध्यम् ॥ **ननू**क्तरीत्या तस्य नार्थबोधकत्वमत आह—[३ यप०] **तस्येति ॥** नन्वेवं कथं तस्य तत्त्वोक्तिरत आह—**तादृशेति ॥** अविचारितरमणीयस्यैवेत्यर्थः ॥ परं त्विदं तद्बद्धैवेति बोध्यम् ॥ एतदर्थमेवेयमुक्तिरिति भावः ॥ [५ मप०] **आदिना** हर्यादिपरिग्रहः ॥

[१ म उ० ५ मप०] **नात्र**-कैयटे ॥ इदं चाग्रे सर्वं स्फुटीभविष्यति ॥

1 **विधिप्रतिषेधयोः**—'शब्दं कुरु-मा शब्दं कार्षीः' इत्यनयोः **अप्रवृत्तविषयत्वात्**—भूतभविष्यत्कालिकविषयत्वात् ध्वनिं कुर्वन्नित्यनेन कथं सम्बन्ध इत्यर्थः । तृतीयेन सम्बन्धस्य सिद्धत्वाद्वाभ्यां कथमित्येवाशङ्क्यते । अत एव द्वयोरुत्तरितम् ।

२ **कानि पुनरिति ।** अत्र शब्दानुशासनपदस्य शब्दज्ञानफलकव्याकरणाध्ययनेऽर्थे वृत्तिरित्युद्द्योतः । तेन शब्दज्ञानफलकव्याकरणाध्ययनस्य कानि प्रयोजनानि—इति भाष्यार्थः । पुनःशब्दः शब्दानुशासनपदस्य विशिष्टार्थे वृत्तिं बोधयति । अथवा 'अथशब्दानुशासनम्' इत्यनेन व्याकरणस्य शब्दानुशासनरूपं प्रयोजनमुक्तम्, इदानीं तच्छब्दानुशासनस्य प्रयोजनं पृच्छ्यते । अत एव 'प्रयोजनप्रयोजनानि तु रक्षोहादीनि' इत्युक्तं कैयटेन ॥

३ इदं च्चिन्त्यम् । प्रतीतः पदार्थो यस्मादिति बहुव्रीहिणा लक्षणां विनैवाभीष्टार्थलाभात् । ( र. ना. ) । अत्र छायायां 'कर्मधारय एव' इत्युक्तावपि 'इदं च्चिन्त्यं' इत्युक्त्वा बहुव्रीहिप्रदर्शनं साहसमात्रमेव । तद्बोधके लक्षणां वदतश्छायाकर्तुर्बहुव्रीहिरज्ञात इति वा साहसिकस्यास्याभिप्रायः । वस्तुतस्तु-'प्रतीतपदार्थकः' इति भाष्ये प्रतीतशब्दः प्रसिद्धार्थक इत्युद्द्योतदर्शनादवगम्यते, न ज्ञातार्थकः । येन 'यस्मात्' इति बहुव्रीहिलब्धस्य पञ्चम्यर्थस्य जन्यत्वस्य ज्ञानांशेऽन्वयः समाशङ्क्येत । एवञ्च प्रसिद्धपदार्थबोधक इत्यर्थो लक्षणां विना दुर्लभ एव । तत्र बहुव्रीह्याश्रयणे 'प्रसिद्धपदार्थहेतुः' इत्येवार्थः स्यात् । स च शब्दस्य पदार्थाहेतुत्वान्नैव सम्भवति-इति ।

**( प्रदीपः ) कानि पुनरिति** । किं संध्योपासनादिवद्व्याकरणाध्ययनं नित्यं कर्म-अथ काम्यमिति **प्रश्नः** ॥

**( उद्द्योतः )** भाष्ये-**कानि पुनः शब्दानुशासनस्येति** । शब्दज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । तदाह-**किं सन्ध्येति** । शब्दज्ञानद्वारा-अध्ययनस्य तदज्ञानप्राप्तप्रत्यवायपरिहारः फलम्, उत तदतिरिक्तमपि किंचिदिति **प्रश्नाशय** इत्यर्थः ॥ **प्रयोजनशब्दः** करणव्युत्पत्त्या प्रयोजकपरोऽपि । तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति, न वा-इत्यपि प्रश्नाशयो बोध्यः । अत एवोत्तरे आगमपदोपादानम् । **'नपुंसकमनपुंसकेन-'** इत्येकशेषः । तत्रैकवद्भावस्य वैकल्पिकत्वात्प्रश्ने बहुवचनम्, उत्तरे एकवचनं बोध्यम् ॥

[ २ य उद्द्यो० ] ननु शब्दानुशासनपदेनात्र व्याकरणं तद्वाच्यं दुर्ग्रहम्, तस्यानधीतस्य रक्षादिप्रयोजनासंभवात् । तस्याक्रियात्मकत्वेन नित्यत्वकाम्यत्वासंभवेन कैयटासांगत्याच्च । अत एव **आदि**-असंगत्यापत्तेश्च । अतो लाक्षणिकमर्थमाह—[ १ मप० ] **शब्देति** ॥ [ २ यप० ] **तदाहेति** । लाक्षणिकमर्थं हृदि कृत्वाऽऽहेत्यर्थः ॥ शब्दज्ञानफलकत्वादेव नेदं साक्षात्प्रयोजनप्रश्नपरमित्याह—**शब्देति** ॥ [ ३ यप० ]—**ध्ययनेति** । व्याकरणेत्यादिः ॥ **परिहारः**-स एव ॥ **अपिना** तस्य समुच्चयः ॥ आद्ये नित्यत्वम् । द्वितीये काम्यत्वम् ॥ [ ४ थप० ] **किंचिदिति** । अनेन 'भाष्यस्थपुनःशब्दो विशेषे' इति सूचितम् ॥ प्रयोजनप्रश्नार्थस्तु न, फलस्य प्रागुक्तत्वात् । तँद्द्वितीये तदवगतेश्च ॥ उत्तरानुरोधेनाह—[ ४ थप० ] **प्रयोजेति** । 'बाहुलकात्कर्तृल्युडन्तः प्रयोजनशब्दः प्रयोजकपरः' इति कृष्णकौस्तुभाद्युक्त्यसांगत्यध्वननायाह—**करणेति** । प्रयुज्यते प्रवर्त्यतेऽनेनेतीत्यर्थः ॥

[ उ० ५ मप० ] **अपिना** फलपरसमुच्चयः । तत्राद्यः पुंलिङ्गोऽन्यो नपुंसकलिङ्ग इति बोध्यम् । अत एव वक्ष्यति—[ ७ मप० ] **नपुंसकेति** ॥ **तेन**-आद्यपरत्वेन ॥ [ ६ ष्ठप० ] **किंचिदिति** । प्रत्यवायपरिहारातिरिक्तमपि किंचित्प्रवर्तकमस्ति उत तद्रूपमेवास्तीत्यर्थः ॥ नन्वेवं प्रश्नोत्तरयोः कथं वचनभेदोऽत आह—[ ७ मप० ] **तत्रैकेति** । एकशेषे इत्यर्थः ॥ अत्रेदं बोध्यम्—पुनःशब्दः पश्चादर्थकोऽपि सुयोजः, तादृशैतदध्ययनस्य पुनः पश्चात् शब्दज्ञानानन्तरम् अन्यानि वा प्रयोजनानि किं दृष्टानि किं वाऽदृष्टानि पुरुषार्थसाधनभूतानीति । पुरुषार्थसाधनभूतानीति तु तत्पक्षेऽप्यावश्यकमितीति ॥ यद्यपि प्रतिज्ञावाक्येनैवानुबन्धचतुष्टयं सूचितम्, तथापि साधुशब्दज्ञानस्य सुखदुःखाभावान्यतरारूपत्वेन साक्षादपुरुषार्थत्वमिति तत्साधनत्वमेवास्य दृष्टद्वारकं वाच्यम् । तत्रादृष्टं द्वारं प्रत्यवायपरिहाररूपं स्वयमुपेक्ष्य दृष्टद्वारा तद्बोधकर्तानयोः स्फुटैव ॥

**( प्रयोजनभाष्यम् )**

## रक्षोहागमलघ्वसंदेहाः प्रयोजनम् ॥

**( रक्षापदार्थनिरूपणभाष्यम् )**

## रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति ॥

**( प्रदीपः )** पारम्पर्येण पुरुषार्थसाधनतामस्याह—**रक्षेति**। लोके लोपायदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः, वैयाकरणस्तु

[ २ यभा० १ मप० ] ननु साधुरक्षा नाध्ययनस्य प्रयोजनमत आह—भाष्ये—**रक्षार्थमिति** । **अर्थशब्दः** प्रयोजनवाची ॥ स्वरूपसताऽनेन वेदरक्षा दुष्कराऽत आह—**अध्येयं व्येति** ॥ अनेनैतच्छास्त्रस्येयं संज्ञेति दर्शितम् ॥ एवमग्रेऽपि ॥ अत एव प्रश्ने **'शब्दानुशासनस्य' इति** तथा व्याख्यातम् । अतथाव्याख्यातॄणां त्वेतदर्थविरोधोऽपि स्पष्ट एवेति बोध्यम् ॥ **ननु** पाठमात्रेणाधीतेनाप्यनेन कथं वेदरक्षाऽत आह—**लोपेति** ॥ प्रकृतिप्रत्ययविभागादेरप्युपलक्षणमिदम् ॥ **हि**-हेतौ ॥ तथा च **न** केवलं तथाध्ययनं किंतु वाक्यार्थावगतिपर्यन्तमपीत्यनुपदमेव स्फुटीभविष्यति॥

[ १ मप्रदी० ] कैयटे—**मस्येति** । एतदध्ययनस्येत्यर्थः ॥ इदमुपलक्षणम्—अस्यानुष्ठापकं मानमागमरूपमस्तीत्याहेत्यपि बोध्यम् ॥ यद्वा—अस्याध्ययनस्य पारम्पर्येणाविशिष्टाध्ययनविधानेनाङ्गाध्ययनविधेर्लाभात्तद्वारा धर्मादिसाधनतामित्यर्थः कैयटस्य तत्पक्षे बोध्यः ॥

[ प्र० २ यप० ] कैयटे—**वेदे इति** ॥ 'त्मना देवेभिः' इत्यादावित्यर्थः ॥

१-'रक्षोहलाघवासंदेहाख्यानि चत्वारि फलानि, आगमस्तु प्रवर्तकः', इत्येवं शब्दकौस्तुभेऽपि स्पष्टीकृतम् ॥ (दाधि.)

२ **एकशेष इति** । प्रयोजकपरस्य पुंल्लिङ्गस्य प्रयोजनशब्दस्य नपुंसकप्रयोजनशब्दस्य च ।

३ **प्रयोजनमिति** । ननु 'नीलो घटाः' इति प्रयोगवारणायासति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमाश्रयणात् 'प्रयोजनम्' इति वक्तुमुचितम् । न च वेदाः प्रमाणमितिवदत्र प्रयोजनत्वेऽन्वयबोधः, रक्षादिप्रत्येकपदार्थे प्रयोजनत्वपर्याप्तेरिति चेत्, न; 'प्रयोजनानि' इत्यत्र पुन्नपुंसकप्रयोजकप्रयोजनार्थबोधकानां प्रयोजनशब्दानामेकशेषमतिदेशप्राप्तैकवद्भावं च बोधयितुं तथा प्रयोगः। एकवद्भावातिदेशे वैकवचनमप्युपपद्यते,बहुत्वरूपोऽर्थश्च न निषिध्यते। अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव एवातिदेशस्वभाव इति तात्पर्यम्।

४ तद्द्वैते **इति** पाठो भाति । फलसंदेहे इति तदर्थः । फलप्रश्ने इति यावत्। ( र. ना. ) वस्तुतस्तु 'तद्द्वितीये तदवगतेश्च' इति सुसङ्गतस्यापि छायाग्रन्थस्य वैपरीत्याशङ्कनमनुचितमेव । तथाहि—पुनःशब्दः प्रयोजनप्रश्नार्थो न, फलस्य-शब्दानुशासनरूपस्य प्रागुक्तत्वात् । तद्द्वितीये-( प्रयोजनप्रयोजनरूपे ) विशेषे तदतिरिक्तमपि किञ्चिदित्युक्ते पुनःशब्दस्यावगतेश्चेति तदर्थः । विपरीतपाठानुसारेण पुनःशब्दस्य फलप्रश्नपरत्वे स्वीकृते 'प्रयोजनप्रश्नार्थस्तु न' इति तत्पूर्वग्रन्थस्य का गतिरिति त एव प्रष्टव्याः ।

५ अथ शब्दानुशासनमित्येतद्रूपेणेत्यर्थः । ( र. ना. )

६ अथ शब्दानुशासनमिति रक्षोहेत्यादिप्रतिज्ञावाक्ययोरित्यर्थः । ( र. ना. ) ७ वेदेन सहेति शेषः । ( र. ना. )

न भ्रमति, वेदार्थं चाध्यवस्यति । तत्र **लोपागम**योरुदाहरणं—**देवा अदुह्रेति** । दुहेर्लङो झस्यादादेशे कृते **'लोपस्त आत्मनेपदेषु' इति** तलोपः, **'बहुलं छन्दसि'** इति रुटि सति रूपमेतत् । **वर्णविकारो** यथा—**उद्ग्राभं च निग्राभं** चेति । **'हृग्रहोर्भश्छन्दसि' 'हस्येति वक्तव्यम्'** इति भकारः । **'उदि ग्रहः'** इत्यत्र **'उद्ग्राभनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयोः'** इति वचनादुन्निपूर्वाद्ग्रहेर्घञ् ॥

**(उद्द्योतः) पुरुषार्थः**=धर्मो मोक्षश्च ॥ ननु शिष्याचार्यसंबन्ध एव महान् वेदरक्षाहेतुः, किं व्याकरणेनेत्यत आह—**लोके इति** ॥ **भ्राम्येदिति** । भ्रमेण पाठान्तरं कल्पयेदित्यर्थः । न चाचार्यवचनात् भ्रमनिवृत्तिः, भ्रंशशङ्कया तेष्वविश्वासात् ॥ वेदार्थावगमद्वाराऽपि व्याकरणं पुरुषार्थसाधनमित्याह—**वेदार्थं चेति** । एवञ्च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन स्वर्गसुखम्, उपनिषदर्थज्ञानेन वक्ष्यमाणरीत्या वा मोक्षश्च पुरुषार्थौ व्याकरणाध्ययनस्य फलमिति भावः ॥ **विकार इति** ॥ लोपस्तु न विकार इति पृथग्गणितः । भावरूप एव चादेशोऽत्र विकारः ॥ **हृग्रहोर्भ इति** । इदं च 'गृभ्णामि' इत्याद्यर्थमावश्यकम् । एतेन **'उद्ग्राभनिग्राभौ चेत्य**नेनैव भस्यापि सिद्धत्वादेतदुपन्यासश्चिन्त्यः' इति परास्तम् । अन्यार्थमावश्यकेन तेनैव भस्य सिद्धौ तदंशे निपातनाश्रयणवैयर्थ्यात् ॥ निपूर्वाद्ग्रहेर्घञ्विधायकाभावादाह—**उद्ग्राभनिग्राभौ चेति** ॥

[प्रदीपे] **सम्यगि**त्यादेरर्थमाह कैयटे—[२ यप०]—**वैवेति** । **न भ्राम्येति** । सिद्धं पाठं त्यक्त्वा पाठान्तरं न कल्पयेत् । तत्तल्लक्षणदर्शित्वादनायासेन यथावस्थितपाठस्थापनं कर्तुं प्रभवेदिति यावत् ॥ एवं च भवति वेदरक्षा फलमप्रधानम्, प्रधानं तु धर्मादिरूपपुरुषार्थ एव ॥

[ प्र० ३ यप० ] कैयटे—**तत्र**-लोपादीनां मध्ये ॥ यद्यपि **'त्मना व्योमन्'** इति लोपमात्रोदाहरणम्, **'ब्राह्मणासः'** इत्यागममात्रस्य तथापि लाघवादाह—**लोपागमेति** ॥

[ प्रदीपे ] यद्यपि वर्णविकारमात्रस्य जभार गृभ्णामि इत्युदाहरणम्, तथापि विशेषं प्रतिपादयितुं छान्दसप्रत्ययसंवलितस्य उदाहरणमाह—कैयटे [ ६ छप० ] **उद्ग्राभं चेति** ॥

[ प्रदी० ९ मप० ] **निपातनयो**रिति वार्तिके पाठः ॥ एवं च निग्राभमिति छन्दस्येव, उद्ग्राभमित्यत्रार्थांश एव निपातनम्, अन्यांशेऽनुवादः ॥ यद्यपि संनिवेशविशेषयुक्ताः पात्रविशेषाः स्रुचः, तथापि जुहूपभृतोरेव ग्रहणम् । **'उद्ग्राभं चेति जुहूमुद्यच्छति निग्राभं चेति उपभृतं नियच्छति'** इति वचनात् ॥

[ उद्द्यो० ] शुद्धकाम्यत्वनिरासाय कामो न पुरुषार्थ इत्याह—[१ मप०] **धर्म इति** । विनिगमनाविरहाद्धर्मस्य तत्साधनत्वात्तत्त्वेऽपि स्वतोऽतत्त्वाद्वक्ष्यमाणरीत्या चाह—**मोक्षश्चेति** ॥ एतेन 'अर्थकामसाधकत्वमपि संभवतीति तत्त्यागोऽनुचितः' इत्यपास्तम् । तयोः स्वतोऽतत्त्वात्, परमपुरुषार्थसाधकत्वसंभवे तत्कथनानौचित्याच्च । विशिष्टाध्ययनविधेश्च तथैव सत्त्वाच्च ॥

[ उ० २ यप० ] **किं न्वेति** । तदध्ययनेन किमित्यर्थः ॥ **लोक इतीति** । आत्मनेत्यादावित्यर्थः ॥

[ उद्द्यो० ] ननु तस्य भ्रमे इष्टापत्तिरत आह—[ उ० ३ यप० ] **भ्रमेणेति** । एवं च तस्य न व्याकरणसाम्यमिति भावः ॥ [ ४ थप० ] **भ्रंशेति** । अपभ्रंशेत्यर्थः ॥ न च पदादिलक्षणं स्वव्यापकम्, तस्य व्याकरणलक्ष्यत्वात्स्वलक्ष्याव्यत्यये निर्विवादत्वात् । न च प्रातिशाख्यादितस्तन्निवृत्तिः, तेषामनन्तासु शाखासु कचित्कचिदुत्सादर्शनात् । न च तद्विरोधादस्यात्यन्तबाधः, शाखान्तरपरतयाऽत्यन्तबाधकत्वस्याकल्पनात् ॥ एतेन—

> "वेदरक्षाऽपि नैतस्माद्वतेऽध्येतृपरम्पराम् ।
> संप्रदायोऽनुवृत्तश्चेद्वेदस्तेनैव रक्ष्यते ॥
> प्रातिशाख्यविरोधे च बाध्यते व्याक्रिया वरम्"

इति भट्टोक्तमपास्तम् ॥ न च मीमांसयाऽर्थावगमः, जर्भरीत्यादावत्यन्ताप्रसिद्धे तस्या अव्यापारादिति दिक् ॥

[ उद्द्यो० ] तदेतद्ध्वनयन्नाह—[ उ० ४ थप० ] **वेदार्थेति** । वेदार्थावगमपूर्वकवेदरक्षणद्वारेत्यर्थः ॥ **अपि**रुक्तरीत्या शुद्धरक्षाद्वारसमुच्चायकः ॥ [ ५ मप० ] **व्याकेति** । तदध्ययनमित्यर्थः ॥ **'पारम्पर्येण'**इति कैयटतात्पर्यमाह—**एवं चेति** । अस्य वेदार्थनिश्चयकत्वे चेत्यर्थः ॥ [ ६ छप० ] **शुद्धेति** । अनेन वेदार्थावगमस्य रक्षाऽप्यवान्तरं प्रयोजनं सूचितम् ॥ अत एवाध्ययनमस्य न पाठमात्रं किंतु वाक्यार्थावगतिपर्यन्तम् । अन्यथा तदज्ञानाद्वेदरक्षाऽपि न स्यात् । सति तु तस्मिन्नज्ञानार्थान्तरज्ञानसंशयानां निवृत्त्या सा । अत एव **'ज्ञेयश्च'** इति तत्रोक्तम् ॥ उपनिषदर्थज्ञानस्यान्यथाऽपि संभवात् **'यतोवाच'** इति श्रुत्या ब्रह्मणस्तथा शब्दाबोध्यत्वस्योक्तत्वाच्चाह— [ ७ मप० ] **वक्ष्येति** ॥ गौणप्रयोजनकथनावसरे इति भावः ॥

---

१ अङ्गविशिष्टवेदकर्मकाध्ययनविधेरित्यर्थः । (र.ना.) २ पाठभ्रंशेत्यर्थो भाति (र.ना.) छायायां 'भ्रंशः' इत्यस्यापभ्रंश इत्यर्थ उच्यते, स एवोचितः । व्याकरणाभावे आचार्याणामपि तदाचार्यपूर्वकमेव ज्ञानमिति तेषां क्वचिदपभ्रंशस्यापि सम्भवेन तेष्वविश्वास इत्यर्थः स्यादिति पाठभ्रंशेत्यादिकल्पनमनुचितम् । ३ अत्राद्यशब्दः प्रभृत्यर्थकः । (र.ना.) वस्तुतस्तु ननु व्याकरणाभावेऽपि वेदे पदक्रमजटादीनां लक्षणभिन्नानां स्वव्यापकानां सत्त्वेन न भ्रंशसंभव इति चेत्, न; पदादिविषयेऽपि भ्रमशङ्कायां व्याकरणमेव निर्णायकमिति पदादयस्तल्लक्ष्या एव । तथा च पदादिषु व्याकरणेन भ्रंशाभावः, तैश्च वेदे भ्रंशाभाव इति अवैयाकरणः पदादिषु भ्रान्तो वेदे भ्राम्येदिति **स्वलक्ष्यस्य**-व्याकरणलक्ष्यस्य पदादेः **अव्यत्यये**-भ्रंशाभावे व्याकरणप्रयोजनस्य निर्विवादत्वात्-इति हि तदाशयः । अत्र 'आद्य' इति पदच्छेदः प्रकृतार्थासाधकः । ४ असाधुत्वभ्रमनिवृत्तिः । ( र. ना. ) भ्रंशशङ्काया निवृत्तिरित्युचितम् । ५ इदमवान्तरपदान्वयि । ( र. ना. ) अत्र व्याकरणाध्ययनस्य वेदरक्षणं मुख्यं प्रयोजनम्, तथा वेदार्थज्ञानरक्षणमपि तस्यावान्तरप्रयोजनमिति छायातात्पर्यम् ।

( ऊहपदार्थनिरूपणभाष्यम् )

**ऊहः[1] खल्वपि । न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन[2] यथाऽर्थं विपरिणमयितव्याः । तान्नावैयाकरणः शक्नोति यथाऽर्थं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ॥**

( प्रदीपः ) **ऊहः खल्वपीति ।** इह यस्मिन्यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा **प्रकृतिः ।** येन चोपजीव्यते सा **विकृतिः । 'प्रकृतिवद्विकृतिः कर्तव्या'** इति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति । तत्राग्नेर्मन्त्रोऽस्ति—**अग्नये त्वा जुष्टं निर्वपामि**—इति, तत्र **'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः'** इति[3] सौर्यचरौ मन्त्र ऊह्यते—**सूर्याय त्वा जुष्टं निर्वपामि**—इति । विस्तरेण भर्तृहरिणा प्रदर्शित ऊहः ॥

**( उद्योतः )** भाष्ये[4]—**'खल्वपि'** इति निपातसमुदायो निश्चयार्थः । 'ऊहः खल्वपि' इत्यस्य प्रयोजनमिति शेषः । ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुं प्रकृतिशब्दार्थमाह—**इहेति । यस्मिन्**—आग्नेयादौ । **यागान्तरेण**—सौर्यादिना । प्रकृतिविकृत्यवगमश्च द्विदेवत्य[5]त्वैकदेवत्यत्वादिसाम्येन बोध्यः ॥ अन्यत्र पठितमन्त्राणां कथमन्यत्र गमनमत आह—**प्रकृतिवदिति ।** यथा—सोपकारा प्रकृतिरनुष्ठीयते, तथा विकृतिरपीति तदर्थः । तदनेनोपकारातिदेशे तत्पृष्ठभावेन पदार्था[6] अप्यतिदिश्यन्ते, इतिकर्तव्यतायां भावनायाः साकाङ्क्षत्वात् । एतन्मूलकमेव **'प्रकृतिवत्'**

---

[उद्द्योते] ननु लोपस्यापि वर्णविकारत्वात्पृथगुक्तिरयुक्ता अत आह—[ उ० ८ मप० ] **लोपस्त्विति ।** अत्र तत्त्वेनाभिमत इत्यर्थः ॥ तदेवाह—[ ९ मप० ] **भावेति । चो** हेतौ ॥ एवं चान्यत्र तथा सत्त्वेऽपि न क्षतिरिति बोध्यम् ॥

[ उ० १० मप० ] **आदिना** 'जभार' इत्यस्य परिग्रहः ॥ [ ११ शप० ] **अपिना** घञ्समुच्चयः ॥ [ १२ शप० ] **नैव भस्य सिद्धा**विति पाठः ॥ **वैयर्थ्यादिति ।** अन्यथा **'सख्यशिश्वी'** इत्यनेन ङीप इवेकारलोपस्यापि निपातनादेव सिद्धौ **'यस्येति च'** इत्यत्रस्थस्य **'इकारस्येति परे लोपः'** इत्यंशस्य **'अतिसखेरागच्छति अतिसखेः स्वम् इत्युदाहरणम्'** इति भाष्यस्यासंगतिः स्यादिति भावः ॥ तत्र **'उदि ग्रहः'** इत्यनेनोत्पूर्वाद् ग्रहेर्लोकेऽपि घञः सिद्धत्वादाह—**निपूर्वादिति ॥** एवं च निग्राभमित्यस्यासिद्धिरिति भावः ॥

[भाष्ये] **लिङ्गैः**—सर्वलिङ्गबोधकपदैः ॥ **विभक्तिभिः**—सर्वविभक्त्यन्तपदैः । 'युक्ताः' इति शेषः । **नञो** निगदिता इत्यत्रान्वयः ॥ व्रीह्यादिद्रव्यसंबन्धिनोऽवघातादेर्नीवारादिसंबन्धलक्षणसंस्कारोहे यद्यपि व्याकरणाध्ययनस्य नोपयोगः, तथापि मन्त्रोहे उपयोग इति सूचयन्नाह—**मन्त्रा इति ॥** प्राकृतकरणस्वरूपप्रयुक्तत्वे मन्त्राणां विकृतौ तत्स्वरूपाभावात्तदप्राप्त्या नोहः फलम्, किंतु अपूर्वप्रयुक्तत्वे मन्त्राणामिति सिद्धान्ताद्विकृतावपि तस्य सत्त्वेन मन्त्रप्राप्त्या तदूहः फलमिति सूचनायाह—**ते चावश्यमिति । यथायथ**मिति पाठे प्रकृतिमुख्यार्थामुख्यार्थादिभेदेनोहः । न तु यथाकथंचिदित्यर्थः ॥ **विपरिणेति ॥** तत्तल्लिङ्गादिबोधनक्षमपदयुक्ततया पाठ्या इत्यर्थः ॥ तेषां तथा पठनमेवोहपदार्थः ॥ ननूह्यमानपदानां वेदादेवोद्धृत्य प्रयोगो भविष्यति किं व्याकरणेनात आह—**तान्नावैयेति ।** यथा प्रत्यक्षश्रुतिमूलमपि स्मृतिप्रणयनं धर्मावगमे प्रमाणम्, एवं व्याकरणमप्यूहे इति भावः ॥ उपसंहरति—**तस्मादिति ॥** यस्मात्तेन[7] तद्दुष्करं तस्मात्तदर्थमेतदध्येयमित्यर्थः ॥

[ प्रदीपे ] भाष्ये लिङ्गविभक्तिग्रहणं प्रकृत्यादेरुपलक्षणमित्यभिप्रेत्याह—कैयटे [ ४ थंप० ] **प्रकृतीति ॥ आदिना** लिङ्गपरिग्रहः ॥ **सम्यक्**—यथोचितम् ॥

[प्र० ५ मप०] कैयटे—**तत्र** विकृतौ ॥ तत्र—[ ६ ष्ठप० ] **इति सौर्ये इति ।** इति विहितसूर्यदेवताकचरुद्रव्यकयाग इत्यर्थः ॥

[ उ० १ मप० ] क्रमप्राप्तमूहं कथयतीत्याह—उद्द्योते-भाष्ये **ऊहः खल्वपीत्यस्येति ॥** ननु रक्षार्थमित्याद्यसंबद्धपदव्यवायेन विच्छिन्नत्वादनुषङ्गो न । तदुक्तम्—**'अनन्तरेण संबन्धः स्यात् परस्याप्यनन्तरे'** इति, अत आह—**शेष इति ॥** यद्यपि **खलु**शब्द एव निश्चयार्थः, **अपि**रन्यसमुच्चायक इति सुवचम्, तथापि परिगणनादेव समुच्चयः सिद्ध इत्याशयेनाह—**खल्वपीति निपातेति ॥** [ ३ यप० ] **ये मन्त्रा इति ।** यादृशा इतियावत् ॥

[ उ० ४ थंप० ] **प्रकृतीति ।** इदं च लक्षणं संभवाभिप्रायं बोध्यम् । वस्तुतस्तु यत्राङ्गजातं पूर्णमुपदिष्टं सा **प्रकृतिः,** यत्र नोपदिष्टं सा **विकृति**रिति सार्वत्रिकं लक्षणं बोध्यम् ॥ नन्वेवमपि कथं प्रकृतिविकृतिभावावगमोऽत आह—[ ६ ष्ठप० ] **प्रकृतीति ।** तद्भावावगमश्चेत्यर्थः ॥ **आदिना** ओषधिद्रव्यकत्वादिपरिग्रहः ॥ प्रकृतितुल्या या विकृतिः सा कर्तव्येत्यर्थे—विकृतौ प्रकृतितुल्यत्वस्य बाधितत्वात्तत्कथनानुपयोगादतिदेशवैयर्थ्यापाताच्च, तद्वदियं कार्येत्यर्थे—तत्तल्यत्वस्यान्यथा दुर्वचत्वान्न्यायार्थमाह—[ ८ मप० ] **यथेति ॥** प्रकृतावङ्गानि येनोपकारेण तामुपकुर्वन्ति यथा, विकृतावपि तेन तेनोपकारेणैव तानि तामुपकुर्वन्तीत्यर्थः ॥ वैदिकस्य

---

१ **ऊह इति ।** अत्र पूर्ववत्प्रयोजनमित्यस्यानुषङ्गः । २ 'तेन पुरुषेण यथायथं वि—' इति मुद्रितपाठः । ३ 'इति सौर्ये चरौ' इति मुद्रितपाठः । ४ 'भाष्ये ऊहः खल्वपीत्यस्य प्रयोजनमिति शेषः । खल्वपीति निपातसमुदायो निश्चयार्थः ।' इति मुद्रितपाठः । ५ **द्विदेवत्येति ।** आग्नेयसौर्ययागयोः प्रकृतिविकृतिभावावगमश्च एकदेवत्यत्व-ओषधद्रव्यत्वसाम्येन च बोध्यः । दर्शपूर्णमासयोः प्रयाजादीनाञ्च द्विदेवत्यत्व-पशुद्रव्यत्वसाम्येन च बोध्यः । ६ ननु 'प्रकृतिवद्विकृतिः—' इत्यतिदेशेनोपकारातिदेशेऽपि पदार्थानामनतिदेशान्न विकृतौ पदार्थान्वयः स्यादित्याशङ्कायामाह—**पदार्था अपीति ।** उपकारान्वयमात्रेण विकृतेः कथंभावाकांक्षाया अनिवर्तनात्तत्पृष्ठभावेन तेऽप्यतिदिश्यन्त इत्यर्थः । ७ अवैयाकरणेनेत्यर्थः ।

इति–इति मीमांसकसरणिः ॥ पदार्थान्तर्गताश्च मन्त्राः । तत्र अग्निसंबन्धिनिर्वापप्रकाशमन्त्रस्याग्निपदस्य सूर्यसंवन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने 'सूर्याय'इत्यूह्यमित्याह—**तत्राग्नेरिति ॥ मन्त्र ऊह्यत इति** । यद्यप्यूहे न मन्त्रत्वम्, तथाप्येकदेशस्थोहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्धटिते समुदाये मन्त्रत्वव्यवहारः, कर्मणः साङ्गत्वं चेति बोध्यम् । सोऽयं प्रकृत्यूहः । अन्येऽप्यूह्याः । ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमिति बोध्यम् । भाष्ये—**लिङ्गपदं** च प्रकृत्यादेरुपलक्षणम् ॥ **[1]यथायथमिति** । अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः ॥

विधेरुपकारापेक्षायां करणस्य वैदिकत्वात्तथाविधानामेवाङ्गानामपेक्षितत्वात्तेषामेव प्रकृतौ क्लृप्तसामर्थ्यत्वात्तान्येवौपदेशिकसंबन्धाभावेप्यतिदेशेन प्राप्यन्ते । तदाह—[ ९ मप० ] **तदनेनोपेति ॥** अत एवोपकारस्यासंभवे सामान्येनातिदेशेऽपि केषांचिन्निवृत्तिः साकल्येनैकदेशेन वा ॥ [ ९ मप० ] **इति केति ॥** निरितिकर्तव्यताकस्य कर्मणोऽभावात् सर्वत्राख्याते भावनाया विधेयत्वात्तस्याश्चांशत्रययोगित्वात् 'किं-केन-कथम्' इति साध्यसाधनेतिकर्तव्यताकाङ्क्षानियतत्वादितिकर्तव्यतां विना साध्यसाधनयोरन्वयायोगात्तदावश्यकत्वमिति भावः ॥ नन्वरतूक्तरीत्या पदार्थातिदेशः, मन्त्रातिदेशस्तु दुर्घटोऽत आह—[ ११ शप० ] **पदार्थान्तर्गतेति ॥**

[ उद्द्योते ] एकदेशस्यानुपकारान्नानुवृत्तिरित्यत्र कैयटेन सम्यक् तत्त्वोपपादनाय दत्तमुदाहरणमुपपादयंस्तमवतारयति—[ ११ शप० ] **तत्रेति ॥** प्रकृताविल्यर्थः ॥ तेन मन्त्रेण प्रकृतिसमवेताग्निसंबन्धिनिर्वापप्रकाशनरूपः प्रकृत्युपकारः कृत इति विकृतेरपि तत्समवेतदेवतासंबन्धिनिर्वापप्रकाशनरूपः स कार्यः । स चाग्निशब्दयुतेन तेन कर्तुमशक्यः । तदाह—[ १२ शप० ] **मन्त्रस्याग्नीति ॥** नन्वेवमपि संप्रदानत्वस्याबाधादेकारानिवृत्तौ 'सूर्ये' इति स्यादिति चेत्, न, अकारान्तेतरप्रकृतिसंनिधानेनैवैकारेण संप्रदानत्वस्य वाच्यत्वेनाकारान्तप्रकृतिसंनिधौ यशब्देन वाच्यत्वेनाग्निशब्दनिवृत्तौ तस्यापि निवृत्तेः । तथा च तद्घटितदृश्यमानं रूपमेव समुदितं समुदितस्थाने ऊह्यते । तदाह—[ १३ शप० ] **तदपेति ॥** 'अग्नये' इति पदमपहायेत्यर्थः ॥ **तत्राग्नेरितीति** । प्रकृतावग्निसंबन्धिनिर्वापप्रकाशकमन्त्र इत्यर्थः ॥

[ उ० १४ शप ] **न मन्त्रत्वमिति । 'अनाम्नाता अमन्त्राः'** इत्याद्यापस्तम्बाद्युक्तेरिति भावः ॥ एकदेशविकृतन्यायेन लौकिकेन मल्लग्रामादिवद् भूयसा व्यपदेश इति न्यायेन च क्रमेणाह—[ १५ शप० ] **अनेकपदेति** । अवशिष्टेत्यादिः ॥ **तदूघटिते** ऊहितपदघटिते ॥ [ १६ शप० ] **प्रकृत्यूह इति** । एकाररूपप्रत्ययोहस्तु नान्तरीयकः, तदर्थस्याबाधात् ॥ एतेन **'सोऽयमुभयोहः'** इति कृष्णोक्तमपास्तम् ॥ प्रकृतिलिङ्गोहस्तु—**देवीरापः शुद्धाः** स्थ इत्यप्सु विनियुक्तमन्त्रस्याज्ये **'देवाज्य शुद्धमसि'** इति ॥ वचनोहोऽप्ययम्—आप इत्येवंपरसंख्यारोपकृतबहुवचनसत्त्वात् ॥ वचनमात्रोहस्तु—**'मा भैर्मा संविक्था'** इति पुरोडाशेऽवदानमन्त्रस्य धानास्ववदाने **'मा भैष्ट मा संविजिध्वम्'** इत्यादि इति मिश्रादयः ॥ याज्ञिकास्तु 'संविग्ध्वम्' इत्यूहमाहुः ॥ तत्र वेदभाष्ये **हे पुरोडाश मा भैः–भयं मा कार्षीः, मा च संविक्थाः-कम्पिष्ठा इत्यर्थ** इति ओविजीत्यस्य रूपम्, इडभावश्छान्दसत्वादागमशास्त्रानित्यत्वाद्वा । विजिरस्तु न, तस्य कम्पनार्थत्वाय धातूनामनेकार्थत्वाश्रयणापत्तिरित्याशयेनोक्तमिति तद्विरोधापत्त्या याज्ञिकोक्तं न युक्तमिति तदेव युक्तमिति हरदत्ताशयः ॥ याज्ञिकाशयस्तु—तदपेक्षया छान्दसत्वादिकल्पना गरीयसीति प्रकृतावनिट्कतया विजिर एवायं प्रयोगो न तु तस्येति ॥ वस्तुतस्तु **ओविजी** इत्यस्य रूपे **मा भैः** इत्यस्य वैयर्थ्यम्, तस्यैव तन्त्रादिना विशेषतात्पर्यग्राहकाभावेन च त्वदिष्टार्थद्वयसंभवात् । तस्माद्विजिर एव रूपम् । पृथग्भावं मा मन्यस्व इति त्वर्थ इति बोध्यम् ॥ तदेतदभिप्रेत्याह—[ १६ शप० ] **अन्येऽप्यूह्या इति ॥** संभवादाह—**ऊहज्ञेति ॥ हिश्चार्थे** सिद्धिपदोत्तरं योज्यः ॥ तेन प्रागुक्तरीत्या स्वर्गसुखादिसमुच्चयः । अनेनैवरीत्या पूर्वत्राप्यैहिकसुखसिद्धेः फलत्वं सूचितमिति बोध्यम् ॥ तावताप्युक्तरीत्या तत्र साक्षात्त्वस्य बाधितत्वात्कैयटोक्तं पारम्पर्यमविरुद्धम् ॥ न्यूनतां परिहरति—**भाष्ये लिङ्गेति ॥ चेन** विभक्तिसमुच्चयः ॥

[ भाष्ये ] क्रमप्राप्तमागममाह—**आगमः खल्वपीति** । शेषपूरणादि प्राग्वत् ॥ तमेवागमं दर्शयति—**ब्राह्मणेनेति ॥**

[ भाष्ये ] अवश्याध्ययनायैवान्याङ्गतोऽस्य वैलक्षण्यमाह—भाष्ये—**प्रधानं चेति ।**

[ भाष्ये ] एतदेवाह—भाष्ये—**प्रधाने चेति ॥** क्वचिन्निश्चः पाठः ॥ अत एवोद्द्योते तथा पाठो धृतः ॥

[ प्रदीपे ] यत्तु यद्यप्यागम्यते-प्रमीयते हिताहितप्राप्तिपरिहारावनेनेत्यागमः–अनादिरुपदेशः प्रत्यक्षानुमानिकश्रुतिरूपः, तथाप्यत्रागमशब्देन तत्फलं लक्ष्यते । तच्च नियोज्यस्य हिताहितप्राप्तिपरिहा-

## ( आगमपदार्थनिरूपणभाष्यम् )

**[2]आगमः खल्वपि । "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयः" इति ॥ प्रधानं च षट्स्वङ्गेषु व्याकरणम् । [3]प्रधाने कृतो यत्नः फलवान्भवति ॥**

**( प्रदीपः ) आगम इति** । आगमः [4]प्रयोजनः प्रवर्तको नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति । '[5]प्रयोजन'शब्देन च फलं-प्रयोजकश्चोच्यते ॥ **निष्कारण इति** । दृष्टं कारणमन-

१ 'यथार्थमिति' घ. पाठः ।

२ **आगम इति** । अत्रापि पूर्ववत् 'खल्वपि' इति निपानसमुदायो निश्चयार्थे । आगमः खल्वपि प्रयोजनम्–इति तदर्थः । अत्र प्रयोजनशब्दः प्रयोजकपरः । प्रयोजकत्वमुपपादयति–**ब्राह्मणेनेत्यादिना** ।

३ 'प्रधाने च' इति मुद्रितपाठः ।

४ 'प्रयोजकः' इति अ. पाठः ।

५ **प्रयोजनशब्देन**–रक्षोहागमलघ्वित्यत्रत्यप्रयोजनशब्देन ।

पेक्ष्येत्यर्थः ॥ **प्रधानं चेति**। पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद्वाक्यवाक्यार्थावसायस्येति भावः ॥

**( उद्योतः )** ननु वक्ष्यमाणागमस्य न व्याकरणफलत्वमत आह—**प्रवर्तक इति** ॥ **नित्यकर्मतामिति** । एतेन नित्यकाम्यता व्याकरणाध्ययनस्येत्युक्तम् । **नित्यत्वं** चा[1]ध्येयज्ञेयपदार्थविशेषणीभूताध्ययनज्ञानयोर्बोध्यम् । अत्र **ब्राह्मणेने**त्युक्तेरन्यस्यैवमध्ययनं काम्य[2]मेवेति सूचयतीति कश्चित् ॥ **निष्कारण इति** । कारणशब्दः फलपरः ॥ ननु नित्यत्वेऽपि प्रत्यवायपरिहाररूपं फलमस्त्येवेत्यत आह—**दृष्टमिति** । अध्ययनादिनिष्ठं कारणानपेक्षत्वं विषये आरोप्य 'निष्कारणो वेदः' इति प्रयोगः । आगमपदेन **श्रुतिः** । श्रु[3]ता-

रूपम्, उपदेशस्य नियोज्यप्रयोजनैकसाध्यत्वात्-इति केनचिदुक्तम् । तन्न, आगमशब्दस्य लाक्षणिकत्वे निर्मूलमुख्यार्थत्यागापत्तेः । उत्तरग्रन्थासंबद्धत्वापत्तेः । अ[4]स्य प्रत्यक्षवेदेष्वनुपलम्भेन प्रत्यक्षश्रुत्यरूपत्वात् । अनुमापकाभावादनुमितत्वस्याप्यभावाच्च । न च व्याकरणाध्ययनेनैवास्यानुमानम्, अन्योन्याश्रयापत्तेः, एतदध्ययनेन तदनुमानम् । तदनुमितेन चैतदध्ययनमितीति दिक् । तदेतद् ध्वनयन्नाह कैयटे—**आगमः प्रयोजन इति** ॥

[ प्रदीपे ] ननु रक्षादिरूपफलसत्त्वेन कथं तदभावोऽत आह—कैयटे [ ३ यप० ] **मनपेक्ष्येत्यर्थ इति** ॥ तथा च न तदभावः प्रतिपाद्यते, किंतु प्रवृत्तौ तदनपेक्षा, नित्यत्वादेव प्रवृत्तिसिद्धेः । अत एव द्वैरूप्यं प्रागुक्तम् ॥

[ प्रदी० ५ मप० ] **निमित्तत्वात्**-निमित्तकत्वात् ॥ **तन्मूलत्वात्**-पदपदार्थधीनिमित्तकत्वात् ॥ **वाक्यार्थेति** । वेदार्थावगमस्येत्यर्थः ॥

[ उ० १ मप ] **व्याकरणफलत्वमिति**-षष्ठीतत्पुरुषः । कैयटस्थप्रयोजनशब्दोऽपि फलपर इति भावः ॥ ननु नित्यकर्मतामित्यस्य नित्यतामित्यर्थे कर्मपदानर्थक्यम्, **किंच** रक्षादिप्रयोजनसत्त्वे कथं निष्प्रयोजनत्वेन नित्यत्वम्, नित्यत्वे वा कथं रक्षादिप्रयोजनोक्तिः । न चैकस्य द्वैरूप्यम्, विरोधादत आह—[ २ यप० ] **एतेनेति** । कर्मपदयुक्तकथनेनेत्यर्थः । फलाभिसन्धिना यत् क्रियते तत्-कर्मेति व्युत्पत्त्या च कर्मपदं काम्यपरम् ॥ **"एकस्य तूभयत्वे संयोगपृथक्त्वम्"** इति ( पू. मी. ४।३।४ ) न्यायेन 'प्रमाणद्वयसंबन्धादेकस्यापि द्वैरूप्यम् इत्यर्थकेन' **'खादिरो यूपो भवति खादिरं वीर्यकामस्य'** इति विहितखादिरोदाहरणकेनात्र द्वैरूप्ये न विरोधः ॥ अत एव फलचतुष्टयबहिर्भावेनैवादावन्ते वाऽऽगमे

वाच्ये मध्ये तदुक्त्या फलसंदंशपातेन नित्यस्यापि फलमस्तीति सूचितमिति भावः ॥ ननु निष्कारणशब्देन नित्यत्वं साङ्गवेदस्य प्रतिपाद्यम् । तदयुक्तम्, आनुपूर्व्या अनित्यत्वात्, तस्य काम्यत्वासंभवाच्च ॥ अङ्गानां तत्त्वस्य दूरापास्तत्वाच्च, तावतापि प्रकृतेष्टासिद्धेश्च । अत आह—[ उ० ३ यप० ] **नित्यत्वं चेति** ॥ **नयोरिति** । धर्मत्वेनाभिमतयोरिति भावः ॥ [ ४ थंप० ] **अत्रेति** । आगम इत्यर्थः ॥ **रन्यस्यैवमध्ययनमिति** ॥ क्षत्रियस्य वैश्यस्य च साङ्गं वेदाध्ययनं तथा ज्ञानं चेत्यर्थः ॥ [ ५ मप० ] **कश्चिदिति** । रत्नकृदित्यर्थः ॥ अत्रारुचिबीजं तयोर्नित्याध्ययनविधायकस्मृत्यन्तरादिविरोधापत्तिरिति ॥ तस्माद्ब्राह्मणपदं त्रैवर्णिकोपलक्षणमिति बोध्यम् ॥ वस्तुतस्तु कलौ क्षत्रियवैश्ययोरभावं सूचयितुं तथोक्तमिति यथाश्रुतमेव तत् साधु । तथा च—

**'कलौ न क्षत्रियाः सन्ति कलौ नो वैश्यजातयः ।**
**ब्राह्मणाश्चैव शूद्राश्च कलौ वर्णद्वयं स्मृतम् ॥'**

इति स्मृतिरिति तत्त्वम् ॥ **निष्कारण इति**-इति प्रतीकान्तर्गतप्रतीकम् ॥ यद्वा—**'निष्कारण इति'**-इत्यत्र भाष्ये ॥ ननु निष्कारणशब्दस्य निर्हेतुपरतया लब्धस्यानादित्वरूपनित्यत्वस्य वेदे कथंचित्संभवेऽप्यङ्गानां पौरुषेयत्वेन तत्त्वाभावः ॥ किंचाध्ययनज्ञानयोस्तत्त्वाभावापत्तिरत आह—[ ५ मप० ] **कारणेति** । कार्यतेऽनुष्ठाप्यतेऽनेनेति व्युत्पत्तेः । तथा च ततो निर्गतो निष्कारणो नित्य इति यावदिति तदर्थो बोध्यः ॥

[ उद्योते ] तद्ध्वनयन्नुक्तरीत्या यथाश्रुते तस्य तदनिष्टत्वादसंगतिपरिहारायाह—[ उ० ७ मप० ] **अध्ययनेति** । आदिना ज्ञानपरिग्रहः । **ब्राह्मणेने**त्यस्य तादृशो वेदोऽध्येयो ज्ञेयश्चेत्यनेनान्वयः ॥ तथा च संध्योपासनादिवत्साङ्गवेदाध्ययनतदर्थज्ञानरू-

१ **अध्येयज्ञेयेति** । ब्राह्मणेन निष्कारणेनेत्यागमगतेत्यादिः ।

२ 'काम्यमेव नेति सूचयति' इति 'कश्चित्'शब्दरहितो ज. पुस्तकपाठः ।

३ **"शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्"** इति ब्रह्मसूत्र ( १।३।२८ ) भाष्ये—

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥
नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥
सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥"

इत्यादिस्मृतीनां श्रुतिमूलिकानां, तथा—

**"समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च"** इति ब्रह्मसूत्र ( १।३।३० ) भाष्ये—

**"धाता यथापूर्वमकल्पयत्"** इति श्रुतेस्तदर्थभूतानां

"तेषां ये यानि कर्माणि प्राक् सृष्ट्यां प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥
ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥
यथाभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह ।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥"

इत्यादिस्मृतीनां च शंकरभगवत्पादैरुपन्यस्तत्वाद्वेदे कुशिकजमदग्न्यादिनामसत्त्वेऽपि नार्वाचीनत्वशङ्केति दिक् ॥ इति दाधिमथाः ॥

४ ब्राह्मणेन निष्कारणो धर्म इत्यागमस्येत्यर्थः । ( र. ना. )

वपि जनमेजयाद्युपाख्यानवत्पौरुषेयव्याकरणस्यापि नित्यताबोधनमुपपद्यते । यद्वा **'तेन प्रोक्तम्'** इति सूत्रोक्तभाष्यरीत्या वेदार्थवद्व्याकरणार्थोऽपि 'अनादित्वरूपनित्यतावान्' इति श्रुत्या तस्य नित्यत्वबोधनमिति बोध्यम् । **धर्मत्वं** च वेदस्य पुरुषयत्नसाध्यतया धर्मत्वेनाभिमताध्ययनज्ञानकर्मत्वेनौपचारिकमित्याहुः ॥ **षडङ्गः**—शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्योतिषाङ्गसहितः, **वेदः**—स्वशाखारूपः, **अध्येयः**—प्रेरणाविषयाध्ययनकर्म वेद इति बोधः ॥ यद्यपि **'तेन प्रोक्तम्'** इति सूत्रे भाष्ये वक्ष्यमाणया रीत्या वेदत्वं शब्दतदर्थोभयवृत्ति, तथापि **'ज्ञेयः'** इत्यस्य 'सम्यगर्थबोधपर्यवसाय्यध्ययनं कार्यम्' इत्यर्थे तात्पर्यम् । अत एव **'समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्ते केचिन्न'** इति वक्ष्यति भाष्यकृत् । अध्ययनतथाज्ञानयोश्च समुच्चयः । अनेनाताद्दृशस्याधर्मत्वं सूचयति । श्रुत्या मिलितस्यैव धर्मत्वबोधनात् । तथा च **व्यासः**—

**"वेदार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः ।**
**कुर्वन् स्वर्गमवाप्नोति नरकं तु विपर्यये"** इति ॥

जपपदं मन्त्रसाध्यकर्ममात्रोपलक्षणम् ॥ ज्ञाधातोश्च ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रियसंयोगसंपादनादिरूपो व्यापारोऽर्थः, तस्यैवात्र विधेयत्वम् । एतेन—ज्ञानस्याविधेयत्वादिदं **चिन्त्यमित्यपास्तम्** ॥

---

पोऽयं धर्मो नित्य इति फलितम् ॥ यथा नित्यस्याकरणे प्रत्यवायस्तत्करणे च तदभावः, तथा व्याकरणाध्ययनस्याननुष्ठानेऽनुष्ठाने च बोध्यम् ॥ यत्तु—**"ब्राह्मणेन—"** इत्यादिः श्रुतिर्न, पठ्यमानवेदेषु अनुपलम्भात् । तस्मात् स्मृतिरेवेयम्—इति भट्टैरुक्तम् । तन्न, भाष्योक्तागमपदास्वारस्यापत्तेः, तस्य वेदपरत्वेनोपपत्तौ उपचरितस्मृतिपरत्वानौचित्याच्च, पठ्यमानस्मृतिष्वनुपलम्भस्य तुल्यत्वाच्च । भगवतः सिद्धानुवादकत्वेन भाष्यीयत्वाद्यभावाच्च । तदेतद् ध्वनयन्नाह—[ ८ मप० ] **आगमेति** ॥ नन्वेवं पौरुषेयव्याकरणस्य कथमागमबोध्यत्वम् । न चैवं स्मृतिरेवेयमास्ताम्, पौरुषेयतयाऽस्या आगमत्वोक्त्यसांगत्यापत्तेः ॥ न च वेदमूलकत्वे तस्याः स्मृतेरप्यागमत्वम्, नित्यानित्यसंयोगविरोधात् । स्मृतेर्वेदमूलकतया स्मृतिविधेयस्य वेदविधेयत्वं स्वीकार्यम्, न चैतत् संभवति—व्याकरणस्यानित्यस्याध्ययनं नित्येन वेदेन विधीयते इति, अत आह—**श्रुतावपीति** । तथा च तद्वत्प्रवाहनित्यतया नित्यविधिविषयत्वोपपत्तिः । न च प्रत्यक्षश्रुत्यमूलकत्वान्न ते प्रवाहनित्यत्वकल्पनं युक्तम्, **"तस्मादियं व्याकृता वागुच्यते"** इति प्रत्यक्षश्रुतिमूलकत्वसत्त्वात् । पूर्वकाले **"अग्निमीळे"** इत्यादिका वागेकात्मिका विभागशून्याऽऽसीत् । ततो विभागार्थं देवैः प्रार्थित इन्द्रो देवान्प्रति इन्द्रेण याचित एकपात्रे वायोः स्वस्य च सोमरसग्रहणरूपे वरे देवैस्तथा करणेन संतुष्टो विभागं कुर्यादित्यर्थकमिदं श्रुतावुक्तम् ॥ न च संप्रदायव्याकृतनित्यवेदाभिप्रायेयम्, **वागुच्यत** इत्येव सिद्धे **व्याकृता** इत्यस्यानर्थक्यापत्तेः । तस्मादियं वागिदानीमपि पाणिन्यादिभिर्व्याकृतोच्यत इत्यर्थकमिदं श्रुतावुक्तम् ॥

[उ० १० मप०] सिद्धान्तमतेनाह—**यद्वेति** ॥ ननु **'चोदनालक्षणोऽर्थो धर्मः'** इति धर्मलक्षणानाक्रान्तत्वात् कथं वेदस्य धर्मत्वमत आह—[१२ शप०] **धर्मत्वं चेति** ॥ यत्तु—वेदोपकारित्वाच्छ्रुतिलिङ्गादिषट्कमेवाङ्गम्, शब्दात्मकत्वेन तेषां श्रुत्यवयवत्वसंभवात्—इति, तन्न; तथा सत्यध्येयो ज्ञेयश्चेत्येव सिद्धे षडङ्ग इत्यस्य वैयर्थ्यापत्तेः । तद् ध्वनयन्नाह—[ १४ शप० ] **शिक्षेति** ॥ [१४ शप०] **सहित इति** । अनेन बहुव्रीहिः सूचितः ॥ यत्तु—न तेषामङ्गत्वम्, तद्धि तादर्थ्यात्तदवयवत्वाद्वा वाच्यम् । तत्र नाद्यः, तादर्थ्यबोधकश्रुत्याद्यभावात् । नान्त्यः, अनित्यस्य नित्यावयवत्वायोगात्—इति । तन्न, **'मुखं व्याकरणं प्रोक्तम्'** इत्यनेनाङ्गत्वेन संस्तवादुपकारकत्वाद्वाऽङ्गत्वसंभवात् ॥ यत्तु—वेदत्वावच्छिन्नस्य सकलशाखस्येदानीमध्ययनाद्यसंभवात्कलिकालप्रधानपाणिनिव्याकरणेन सह तस्य तत्प्रतिपादनमयुक्तम्—इति, तन्निरासायाह—**स्वेति** ॥ अयं चार्थो बोध्यः ॥ अध्येये यत् कर्मणि जायमानः **'प्रैषा-'** इति सूत्रेण विधिरूपत्वे । तदाह—[१५ शप०] **अध्येय इत्यत** इति । व्युत्पत्तिवैचित्र्यात्तथाऽन्वय इति भावः ॥ [१७ शप०] **निष्ठमिति** । व्यासज्यवृत्तीत्यर्थः । एवं च शब्दस्य साक्षादध्ययनवदर्थस्य ज्ञानद्वाराऽध्ययनसंभवादर्थबोधपर्यवसाय्यध्ययनं कार्यमित्यर्थोऽध्येय इत्येव सिद्धे ज्ञेय इति व्यर्थमिति भावः । अत एव सामर्थ्यादाह—[ १७ शप० ] **सम्यगिति** ॥ नन्वध्ययनमात्रेण सम्यगर्थबोधस्यैव जायमानत्वेनेदमयुक्तम्, अत आह—[१८ शप०] **अत एवेति** । तस्योक्तार्थतात्पर्यकत्वादेवेत्यर्थः ॥ [२० शप०] **तथेति** । सम्यगर्थविषयकज्ञानेत्यर्थः ॥ **समुच्चय इति** । **'अहरहर्नयमानो गामश्वं पुरुषं पशुम्'** इतिवत् विना चं समुच्चय इत्यर्थः ॥ क्वचित् **'ज्ञेयश्च'** इत्येव पाठः ॥ [२०शप०] **नाताद्दृशस्येति** । प्रत्येकस्येत्यर्थः ॥ अनेनेत्यस्यार्थमाह—**श्रुत्येति** ॥ अत्र संमतिमाह—[२१ शप०] **तथा चेति** ॥ **जप्त्वा**—जपं कृत्वा । **तथा**शब्दः समुच्चये ॥ **एवः** क्रियावधारणे ॥ **विपर्यये** प्रत्येककरणे ॥ न्यूनतां परिहरति—[ २४ शप० ] **जपेति** ॥ मन्त्रस्यैव जपसत्त्वादाह—**मन्त्रेति** ॥ विनिगमनाविरहादाह—**मात्रोपेति** ॥ कस्यचिदुक्तिं खण्डयितुं सर्वात्मनाऽध्येय इत्येतत्तुल्यतां **ज्ञेय** इत्यत्र कथयति—[ २४ शप० ] **ज्ञाधातोरिति** ॥ **आदिना** स्थित्यादिपरिग्रहः ॥ **तस्यैवेति** । तावतैव ज्ञानविधित्वसिद्धेः । फूत्कारादिविधिना पाकविधिवदिति भावः ॥ [२४ शप० ] **ज्ञानस्येति** । तस्य कर्तुमकर्तुमन्यथाकर्तुं चाशक्यत्वाद्वाक्यादिरूपप्रमाणपरतन्त्रस्य तस्य विधेयताया असंभवाच्चेति भावः ॥ [२६ शप०] **पास्तमिति** । उक्तयुक्तेः । प्रतिमादावीश्वरबुद्धिवत्तस्यापि तथा कर्तुं शक्यत्वाच्चेति भावः ॥

---

१ ननु पाणिनीयव्याकरणस्यागमबोधितत्वं कथमुपपद्येत ? यत आगमो नित्यः, एतच्च व्याकरणं मुनित्रयप्रणीतत्वादनित्यमिति नित्यानित्यसंयोगविरोधात् श्रुतिबोधितत्वमस्य न स्यादत आह—**जनमेजयादीति** । स्वमतेनाप्युपपादयति—**यद्वा तेनेति** । तत्सूत्रे भाष्ये—'यद्यप्यर्थो नित्यः, या त्वसौ वर्णानुपूर्वी साऽनित्या' इत्युक्तम् ।

२ वेदस्य धर्मत्वमौपचारिकमिति संबन्धः । ( र. ना. ) ३ 'अध्येय इत्यतः प्रे-' इति घ. पाठः । ४ 'भयनिष्ठं' इति घ. पाठः । ५ प्रणिधानस्य संयोगस्य च संपादनेऽन्वयः । ( र. ना. ) ६ अध्येयशब्दे प्रैषेति सूत्रेण कर्मणि जायमानो यत् विधिरूपत्वे पर्यवस्यतीति संबन्धः । ( र. ना. ) ७ कुर्वन्नित्यनेन संबद्ध्यते इति शेषः । ( र. ना. )

ननु गुणानां परस्परसंबन्धाभावात् 'षडङ्गेषु प्रधानम्' इत्यनुपपन्नमत आह-**पदेति**। एवं च वेदार्थज्ञाने व्याकरणं प्रधानं कारणमिति भावः॥ भाष्ये—**प्रधाने कृतो यत्न इति**। प्रधानविषये निर्वृत्त इत्यर्थः। अन्यथा येत्नविषयकृतेरसंभवादसंगतिः स्पष्टैव॥ भाष्ये—'**फलवान्**' इत्यत्र फलपदेन वाक्यार्थावगमो विवक्षितः। एतच्छास्त्रं च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगीति बोध्यम्॥ एवञ्च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकतयाऽस्य नित्यत्वमिति बोध्यम्॥

**( लघुपदार्थनिरूपणभाष्यम् )**

**लघ्वर्थं चाध्येयं व्याकरणम्। "ब्राह्मणेनावश्यं शब्दा ज्ञेयाः" इति, न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुम्॥**

( प्रदीपः ) **लघ्वर्थमिति**। लाघवेन शब्दज्ञानमस्य प्रयोजनम्॥ **ब्राह्मणेनेति**। अध्यापनं ब्राह्मणस्य वृत्तिः। न चाशब्दज्ञं तमुपश्लिष्यन्ति शिष्या इति॥

(उद्योतः) '**अवश्यम्**'इत्यनेन विवक्षितं दर्शयति—**अध्यापनमिति**। लाघवं च प्रतिपदपाठापेक्षया प्रकृत्यादिविभागेनान्वाख्यानस्य विवक्षितम्॥

---

[उद्योते] तत्र वर्तमानं स्वाङ्गापेक्षया प्रधानमिति न भाष्यार्थः। तदपेक्षया तत्त्वस्य शिक्षादावप्यविशिष्टत्वात्। अतः तेषां मध्ये यत् प्रधानम् अर्थात् तन्निरूपितप्राधान्यवद् इति तदर्थो वाच्यः सोऽपि न, अङ्गानां मिथोऽसंबन्धेन गुणप्रधानभावाभावात्। तदाह—[ उ० २६ शप० ] **ननु गुणेति**॥

[उद्योते] फलितमाह—[उ० २८ शप०] **एवं चेति**। अस्य तन्मूलतन्निमित्तत्वे चेत्यर्थः॥ **ज्ञाने**-ज्ञानं प्रति। एवं च षट्स्वङ्गेषु वर्तमानं व्याकरणं वेदार्थज्ञानं प्रति प्रधानं-मुख्यं कारणमिति तदर्थो बोध्यः॥ स्वरूपार्थप्रतिपत्तिभ्यामस्य तदुपकारकत्वमिति सर्वोपजीव्यत्वादस्य प्राधान्यम्, अन्येषां त्वेकदेशे व्यापारः। यथा चैतत्तथाऽन्यत्र स्पष्टम्॥ अत एवाङ्गत्वेन संस्तवेऽप्यस्य मुखत्वेनोक्तिः। यथा सर्वशरीरावयवानां मध्येऽन्नपानादिप्रवेशनद्वारा शरीरनिर्वाहकं मुखम्, एवमिदमपि वेदस्वरूपनिर्वाहकमिति भावः॥

[ उ० २९ शप० ] **प्रधानेति**। व्याकरणाध्ययनविषय इत्यर्थः॥ 'कृतः' इत्यस्यार्थमाह—**निर्वृत्त इति**॥ **अन्यथा**-उक्तार्थाभावे॥ ननु फलवानित्यत्र फलशब्दस्य व्याकरणज्ञानार्थकत्वे उक्तार्थाप्रतिपादकत्वापत्तिरत आह—[ ३१ शप० ] **फलेति**॥ **वाक्यार्थेति**। वेदार्थेत्यर्थः॥ एवमग्रेऽपि॥ फलितमाह—**एतदिति**॥ [ ३२ शप० ] **वाक्यार्थेति**। वाक्येत्यादिः॥ परमपर्यवसितमुपसंहरति—**एवं चेति**॥ अस्य तथा तदुपयोगित्वे चेत्यर्थः॥

[१ मभाष्ये] क्रमप्राप्तं लघुरूपप्रयोजनमाह—भाष्ये—**लघ्वर्थं चेति**॥ सकलसाधुशब्दज्ञानहेतुभूतप्रक्रियारूपलघुभूतोपायज्ञानार्थमित्यर्थः॥

[भाष्ये] ननु किमर्थं साधुशब्दज्ञानं यदर्थं तादृशोपायज्ञानापेक्षा, अतस्तत्र हेतुमाह—भाष्ये—**ब्राह्मणेनेति**। अत्रापि क्षत्रियविशोरध्यापनाभावादुक्तहेतोश्च '**ब्राह्मणेन**' इत्युक्तम्॥ **इति**-हेतौ॥

[भाष्ये] एतदेवाह—भाष्ये—**न चान्तेति**॥ व्याकरणाध्ययनं विना न हीत्यर्थः॥ प्रतिपदपाठरूपगुरूपायस्य सत्त्वादाह—**लघुनोपायेनेति**। लघुभूतेनोक्तान्योपायेनेत्यर्थः॥ क्वचित् '**उपायान्तरेण**' इत्येव पाठः॥

[ प्रदीपे ] तत्फलितमाह कैयटे—**लाघवेनेति**॥

[प्रदीपे] ननु तस्य वृत्तित्वेऽपि प्रकृते किम्, अतो व्यतिरेकमुखेन तद् द्रढयन्नाह—कैयटे—**न चाशब्दज्ञमिति**। 'अपशब्दज्ञं' इत्यपपाठः। एवं च वृत्त्यनिर्वाह इति तदावश्यकत्वम्। '**न च-**' इत्यस्य न हीत्यर्थः॥ **इति**-समाप्तौ॥

[ उद्योते ] वृत्तिविधिं विनैव सिद्धस्यार्थस्यानुवादेन विधिकल्पने मानाभावं ध्वनयन्नाह—उद्योते—**अवश्यमिति**। विधिकल्पकत्वे तु तदानर्थक्यं स्पष्टमेव॥

[उद्योते] कैयटोक्तलाघवं न शब्दज्ञाननिष्ठमित्याह—**उद्योते—लाघवं चेति**॥ **प्रतिपदेति**। आनन्त्येन तस्य कर्तुमशक्यत्वात्॥ **प्रकृत्येति**। सामान्यविशेषलक्षणवच्छास्त्रबोध्येनेति भावः॥

---

१ 'उपासनीयं यत्नेन शास्त्रं व्याकरणं महत्।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम्॥ १॥
इदमाद्यं पदस्थानं मुक्तिसोपानपर्वणाम्।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः॥ २॥
रूपान्तरेण ते देवा विचरन्ति महीतले।
ये व्याकरणसंस्कारपवित्रितमुखा नराः॥ ३॥'

एवं पदमञ्जर्यां प्राधान्यमस्य स्पष्टीकृतम्। ( दा. म. )

२ कृधातोर्यत्नार्थकत्वाद्यत्नविषयो यत्नो न संभवतीत्यसङ्गतिरित्यर्थः।

३ फलचतुष्टयस्य प्राक्पश्चाद्वा प्रवर्तके वक्तव्ये मध्ये तु तदुक्त्या फलसंदर्शने नित्यानामपि फलपर्यवसानमस्तीत्यादि शब्दकौस्तुभे स्पष्टम् ( दाधि. )॥

४ 'ज्ञातुम्' इति प. पुस्तकपाठः।

५ **अन्येषामिति**। व्याकरणातिरिक्तानामित्यर्थः॥ तथा चोक्तं शिक्षायाम्—

**मुखं व्याकरणं तस्य ज्यौतिषं नेत्रमुच्यते।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे।
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते॥**

**ज्यौतिषं**-स्वाध्यायोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति।

**निरुक्तं** तु-व्याकरणस्यैव परिशिष्टप्रायम्। बाहुलकादिसाध्यानां लोपागमविकारादीनां प्रायशस्तत्र संग्रहात्॥

**छन्दोविचितिरपि**-'**गायत्र्या यजति त्रिष्टुभा शंसति।**' इत्यादौ श्रुतानां गायत्र्यादिशब्दानां लक्षणतोऽर्थमाचष्टे॥

**शिक्षाऽपि**-अध्ययनकाले कर्मणि च मन्त्राणामुच्चारणप्रकारं प्रतिपादयति॥

**कल्पसूत्राण्यपि**—प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गेनोपेतस्य कर्मणः प्रयोगं कल्पयन्ति॥ ( दाधि. )

६ ब्राह्मणपदं त्रैवर्णिकोपलक्षणं-कलौ तयोरभाव इति वा-उक्तहेतोः।

( असंदेहपदार्थनिरूपणभाष्यम् )

**असंदेहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति । तस्यां संदेहः–स्थूला चासौ पृषती च, स्थूलानि वा पृषन्ति यस्याः सा–स्थूलपृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति । यदि पूर्वपद-प्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ–अन्तोदात्तत्वं ततस्तत्पुरुष इति ॥**

( प्रदीपः ) **असंदेहार्थमिति** । संदेहस्य प्रागभावोऽत्र द्रष्टव्यः, न तु प्रध्वंसाभावः । न हि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात् ॥ **स्वरत इति** । पूर्वपद-प्रकृतिस्वराद्बहुव्रीह्यर्थावसाय इत्यर्थः ॥

( **उद्द्योतः** ) नन्वसंदेहः=संदेहाभावः । स च नात्यन्ताभावः, तस्य नित्यत्वात् । न च ध्वंसः, तत्तद्विषयकव्याकरणज्ञानवतः संदेहस्यैवाभावेन तदसंभवात् । यस्य त्वधीतव्याकरणस्यापि क्वचित्संदेहः, स तद्विषयकवैयाकरणत्वाभाववानेव, वेदनार्थे हि तत्र प्रत्ययोऽत आह—**प्रागभाव इति** । तत्परिपालनं[1] च शास्त्राध्ययनफलम् । न तु स्वरूपं, तस्याजन्यत्वात् । तत्पालनं च प्रतियोगिजनककारणविध्वंसनं, प्रागभावस्य प्रतियोगिजन्मनाश्यत्वात्–इति बोध्यम् ॥ भाष्ये–**याज्ञिकाः पठन्तीति** । यज्ञकाण्डभवा वैदिकाः शब्दाः–याज्ञिकाः, ते पठन्तीत्यर्थः । **'ऋषिः पठति' 'शृणोत ग्रावाणः'** इतिवत्प्रयोगः । तत्र ऋषिः=वेदः । **सन्सूत्रे** भाष्ये एष प्रयोगः । **ताम्**–अनड्वाहीम् । कस्तर्हि निश्चयस्तत्राह—**पूर्वपदेति** ॥

---

[ भाष्ये ] असंदेहस्य फलत्वं क्रमप्राप्तमाह—**असंदेहेति** ॥ संदेहप्रागभावपरिपालनार्थं चेत्यर्थः ॥

[ भाष्ये ] ननु कुत्रावैयाकरणस्य संदेहोऽत आह—भाष्ये—**याज्ञिका इति** ॥

[ भा० ३ यप० ] **तस्यामिति**— भाष्ये । श्रुतावित्यर्थः । स्थूलपृषत्यामित्यर्थोऽनड्वाह्यामित्यर्थो वा ॥ यत्तु—पृषतो मृगविशेषस्तज्जातीया, पृषतजातित्वात् ङीष् । सैवानोवहनयोग्या चानड्वाही—इति कृष्णः । तन्न । तस्या गवि रूढत्वात् । तस्मान्मत्वर्थलक्षणया पृषतीशब्देन पृषद्वती=बिन्दुमती गौरुच्यते, स्थूलाऽपि सैव, बिन्दुषु न । तत्र कर्मधारये गौरेवोच्यते, स्थूलाऽपि सैव । बिन्दुषु न स्थौल्यान्वयः ॥ बहुव्रीहौ तु स्थौल्यान्वयः पृषत्सु, न गवि ॥ न च कर्मधारयस्य स्वपदार्थप्राधान्येन बहुव्रीहेः प्राबल्यादसंदेह एवेति वाच्यम् । अन्यपदार्थप्रधानाग्निवारुणीशब्दसमभिव्याहारेण तस्यापि संभवात् ॥ न च **'व्याख्यानतः'** इति परिभाषया निर्णयः; पौरुषेयेषु लक्ष्यानुरोधेन तया निर्णयेऽप्यपौरुषेयेऽदृष्टार्थविषये वेदे तया तदसंभवात् । तस्मात् स्वरतो निर्णयो वैयाकरणैकसाध्यः । तदेव व्यतिरेकमुखेनाह—भाष्ये—**तामिति** ॥

[भाष्ये] स्वरतोऽध्यवसायप्रकारमाह—[भा०५मप०] **यदीति** ॥

[ प्रदीपे ] कैयटे—**अत्र द्रष्टव्य इति** । न तु सर्वत्रेति भावः ॥ **एतेन**—'संदेहाभाव एवार्थः । कैयटोक्तं तु चिन्त्यम्, ईदृशाग्रहे मानफलयोरभावात् । अनुभवविरोधात् । शङ्कासमाधिपरसमस्तभाष्यासंगतेश्च'—इति रत्नोक्तम्,—'प्रध्वंस एव सः, उत्पन्नस्य तस्य हि वैयाकरणेन शास्त्राहितसंस्कारवता निरासः सुकरः—' इति कृष्णोक्तं चापास्तम् । उक्तहेतोः । अवैयाकरणवैयाकरणभेदेन भगवता शङ्कासमाध्योरुक्तेश्चेति दिक् । तदाह—कैयटे—**न हीति** ॥ न च व्याख्यातृपरम्परया तदभावात् किमनेन·········? । प्रतिपदं प्रतिपुरुषं प्रतिक्षणं जायमानसंशयानां तैर्निरसितुमशक्यत्वात् । तेषां सर्वदा सांनिध्याभावाच्च ॥ नचास्यार्थनिश्चायकत्वे गवादीनां पुरुषाद्यर्थकताऽपि स्यात्, अर्थमनूद्य शब्दानामिदमनुशासनं नार्थानामिति व्युत्पत्त्यर्थं तदाश्रयणेऽपि यत्र प्रमाणान्तराविरोधः, तत्र तत्सत्त्वमन्यत्र नेत्येवं देवताधिकरणन्यायेनाङ्गीकारात् । स च पदार्थविषयो न वाक्यार्थविषयः । पदानामेवानुशासनादिति बोध्यम् । तदेतद् ध्वनयन् वक्ष्यति—**तां नेति** ( भाष्ये ) ॥

[ प्र० ४ धंप० ] कैयटे-**स्वरात्**–पठ्यमानात् ॥ स्थूलशब्दः फिट्स्वरेणान्तोदात्तः । अर्थविशेषाश्रयबहुव्रीहिनिबन्धनपूर्वपदप्रकृतिस्वरस्य तेन विनाऽसंभवात्तस्य निर्णायकत्वं युक्तमिति भावः ॥ अवैयाकरणस्य त्वनिर्णय एव, वृत्तिपदार्थज्ञानादेरप्यभावेन विपरीतनिर्णयस्याप्यभावात् । अन्यस्य कस्यचिल्लौकिकस्य निर्णायकस्यासंभवाच्च ॥ एतेन—तस्य विपरीतनिर्णयः स्याद्—इति कृष्णोक्तमपास्तम् ॥

[ उद्द्योते ] एतदनभिज्ञः शङ्कते—[ उ० १मप० ] **नन्वसंदेहेति** ॥ [२ यप०] **नित्यत्वादिति** ॥ एवं च फलत्वासंभवस्तस्य ॥ [ ३ यप० ] **तदेति** । ध्वंसेत्यर्थः ॥ ननु तदध्ययनसत्त्वेन कथं तत्त्वम्, तत्रापि प्रत्ययसत्त्वादत आह—[ ४ र्थप० ] **वेदनेति** ॥ यतो वैयाकरणशब्दे इत्यर्थः ॥ उक्तहेतोरिति यावत् ॥ तथा च वैयाकरणत्वमव्याप्यवृत्तीति भावः ॥ तस्याजन्यत्वेनाफलत्वादाह—[५ मप०] **तत्परीति** ॥ **शास्त्रेति** । व्याकरणेत्यर्थः ॥ ननु तस्य निरवयवत्वेन पोषणाद्यसंभवात्कथं परिपालनमत आह—[६ ष्ठप०] **तत्पालनमिति** ॥ **कारणेति** । संदेह[2]जनकप्रतिबन्धकाभावरूपेत्यर्थः ॥ ननु तस्य कथं तत्त्वमत आह—[७ मप०] **प्रागेति** । तथाच कोटिद्वयोपस्थितिः सुतरां नेति भावः ॥

[उद्द्योते] यत्तु—'यज्ञं विदन्ति ते याज्ञिकाः, उक्थादित्वाट्ठक् । पाठसमयेऽध्यापकादीनां निर्णिनीषाया अनावश्यकत्वाद् याज्ञिका इत्युक्तम्, न त्वध्येत्रादयः' इति कृष्णः । तन्न, अस्याः श्रुतित्वेन **'इति श्रूयते तत्र संदेहं कुर्वन्ति'** इति वाच्ये तथोक्त्यसांगत्यापत्तेः । तदेतद् ध्वनयन्नाह—[ उ० ८ मप० ] **यज्ञेति** ॥ लक्षणयाऽर्थमाह—**काण्डेति** ॥ ननु न तेषां पठनसंभवोऽत आह—[ ९ मप० ]—**ऋषिरिति** ॥ एवं च बोधने लाक्षणिकः प्रयोग इति भावः ॥ तत्र पूर्ववाक्ये तत्प्रयोगस्य निर्मूलत्वं निराचष्टे—[ १० मप० ] **सन्निति** ॥

[उद्द्योते] पूर्वव्याख्यानासांगत्यं ध्वनयन् स्थूलपृषतीमिति विहाय व्याचष्टे—[उ० १० मप०] **अनड्वाहीमिति** । यद्यपि स्थूलपृषतीशब्देऽर्थसंदेहः, तथापि पर्यन्ततो गव्येव संदेह इति भावः ॥

[उद्द्योते] नन्वेवं भगवता निश्चयो नोक्त इति संशय एवेत्याशयेनाह—[उ० ११ शप०] **कस्तर्हीति** ॥

---

१ **तत्परिपालनं**–असन्देहपरिपालनं, तदर्थमध्येयं व्याकरणम् ।

२ सन्देहजनकं यत्प्रतिबन्धकाभावरूपं कारणं तद्विध्वंसनमित्यर्थः।(र.ना.)

( व्याकरणाध्ययनसाधकागमप्रतीकभाष्यम् )

**इमानि च भूयः शब्दानुशासनप्रयोजनानि—तेऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । विभक्तिं कुर्वन्ति । यो वा इमाम् । चत्वारि । उत त्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवो असि वरुण-इति ॥**

( प्रदीपः ) मुख्यानि प्रयोजनानि प्रदर्श्यानुषङ्गिकाणि प्रदर्शयति—**इमानि चेति** ॥ **भूय इति** । पुनरित्यर्थः । आनुषङ्गिकत्वाच्चैषां वर्गद्वयोपादानम् ॥

( उद्योतः ) ननु अम्लेच्छत्वादीनां बहुत्वात् '**बहूनामनुग्रहो न्याय्यः**' इति प्रथमतोऽभिधानं युक्तमत आह—**मुख्यानीति** । प्रधानत्वादेव तेषां प्रथमतोऽभिधानमिति भावः ॥ तेषां प्रधानत्वं च पदपदार्थज्ञानाधीनत्वेनान्तरङ्गत्वात् । वक्ष्यमाणानां च बहिरङ्गशब्दापशब्दप्रयोगविधिनिषेधविषयत्वादानुषङ्गिकत्वं बोध्यम् ॥ ननु '**भूयः**' इत्येकवचनमनुपपन्नं '**प्रयोजनानि**' इत्यनेन सामानाधिकरण्यादत आह—**पुनरिति** ॥ **इमानि चेति** । **चः**-समुच्चये ॥ भाष्ये-**प्रयोजनानीति** । प्रवर्तकानि फलानि चेत्यर्थः । तत्र वक्ष्यमाणवाक्यानि प्रवर्तकानि, तद्बोध्यानि फलानीति विवेकः ॥ ननु रक्षादिभिः सहैवैतानि कुतो न पठितानि ? इत्यत आह—**आनुषङ्गिकत्वादिति** । एषामानुषङ्गिकत्वं तेषां प्रधानत्वं बोधयितुं तथोक्तिरिति भावः ॥

( भाष्यम् )

**तेऽसुराः—**

**"तेऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुः । तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः" ॥**

**म्लेच्छा मा भूमेत्यध्येयं व्याकरणम् । तेऽसुराः ॥**

( प्रदीपः ) **तेऽसुरा हेऽलय इति** । निन्दाऽर्थवादेन '**न म्लेच्छितवै**' इति म्लेच्छनं निषिध्यते । तत्र **केचिदाहुः**—'**हैहेप्रयोगे हैहयोः**' इति प्लुते प्रकृतिभावे च कर्तव्ये तदकरणं म्लेच्छनमिति । पदद्विर्वचने कार्ये वाक्यद्विर्वचनं लत्वं च म्लेच्छनमित्य**परे** । **न म्लेच्छितवा** इत्यस्य पर्यायः—**नापभाषितवा** इति । '**कृत्यार्थे**'-इति तवैप्रत्ययः ॥ **म्लेच्छ इति** । कर्मणि घञ् ॥

( उद्योतः ) ननु '**पराबभूवुस्तस्माद्ब्राह्मणेन**—' इति श्रुतौ पराभवस्यापशब्दभाषणफलत्वावगतेः 'पराभूता मा भूमेत्यध्येयम्' इति वक्तुमुचितमत आह—**निन्दाऽर्थवादेनेति** । '**द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्**' (पू० मी० ४।३।१) इति न्यायेन '**यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति**'

[भाष्ये] **इमानीति**-भाष्ये वक्ष्यमाणानीत्यर्थः ॥

[भाष्ये] प्रयोजनेयत्तायाः स्पष्टत्वाय तान्यादौ प्रतीकं धृत्वा गणयति—भाष्ये—**तेऽसुरा इत्यादि** ॥ '**विभक्तिं कुर्वन्ति**' इति वाक्यार्थकथनम् । '**सारस्वतीं**' इति तद्वाक्यस्यपदोक्तिः ॥

[ उ० २यप० ] उद्योते—**इतीति** । इति न्यायेनेत्यर्थः । [४थंप०] **पदार्थज्ञानेति** । तन्मात्रेत्यर्थः ॥

[उ० ७मप०] **पुनरितीति** । पश्चादिति तदर्थः ॥ अव्ययमिति भावः ॥ यद्यपि तस्याधिक्यमप्यर्थः, तथापि योग्यतया तस्यैव ग्रहणम् ॥ [उ० ८मप०] **चेति** । पश्चादिति तस्यार्थः । **इति**-बोध्यानीति शेषः ॥ प्रागुक्तरीत्याऽर्थद्वयं बोध्यम् ॥ **तत्र**-तयोर्मध्ये ॥

[उ० ९मप०] **ननु रक्षादिभिरिति** । यद्यप्युक्तरीत्याऽन्तरङ्गबहिरङ्गभावः, तथापि प्रधानत्वाप्रधानत्वयोर्नानाभावः । किं चास्तु तयोरपि सत्त्वम्, तथापि क्रमेण तैः सह पाठ एवैषामुचित इति भावः ॥ [ ११ शप० ] **बोधयितुमिति** । तथा च तथा पाठे स्वस्य ज्ञानसत्त्वेऽपि परस्य ज्ञानं न स्यादिति परबोधायैव परमुक्तिः ॥ एवं च कैयटे चः-हेतौ । यतो हेतोरानुषङ्गिकत्वमेषाम्, अत इत्याद्यर्थो बोध्य इति भावः ॥

[भाष्ये] तत्रादावुद्देशक्रमेणाम्लेच्छत्वं फलं वदन् तद्वाक्यं ब्राह्मणस्थमुक्तप्रतीकसंघटितमाह—भाष्ये—**तेऽसुरास्तेऽसुरा इति** ॥ इयं रीतिरग्रे सर्वत्र बोध्या ॥

[भाष्ये] तत्र निषेधस्य सविषयनिन्दापेक्षायां विषयस्य निन्दितत्वं फलमाह—भाष्ये—**म्लेच्छो ह वा इति** ॥ यत्=यस्मात् एषोऽपशब्दो म्लेच्छः-म्लेच्छतयाऽतिप्रसिद्ध इत्यर्थः ॥

[ भा० ५ मप० ] अनपभाषणस्याम्लेच्छत्वफलकत्वाद्व्याकरणाध्ययनस्याम्लेच्छत्वं फलम्-इत्युपसंहृतदार्ढ्याय पुनः '**तेऽसुराः**' इत्युक्तम् ॥ एवमग्रे सर्वत्र ज्ञेयम् ॥

[प्रदीपे] ननु किमनृतं यत्कृतस्तेषां पराभवः, अत आह—कैयटे [२ यप०] **तत्रेति** । श्रुतावित्यर्थः ॥ [३ यप०] **प्रकृतीति** । तत्प्रयुक्तेत्यादिः ॥ '**प्लुतप्रगृह्याः**' इत्यनेनेति भावः ॥

[प्र० ६ष्ठप०] अत एवाह—कैयटे—**कृत्यार्थ** इति ॥ उभयत्रेत्यादिः ॥

[प्रदीपे] यत्तु—कर्मणि करणे वा घञ्—इति कृष्णः । तन्न, करणे तस्य दौर्लभ्यात् । तद्ध्वनयन्नाह कैयटे [ ६ ष्ठप० ] **कर्मणीति** ॥

[उद्योते] '**तेऽसुराः**' इत्यादेः श्रुतित्वेऽप्यनर्थयुक्तत्वादाह—उद्योते—**परेति** ॥ [३ यप०] **निन्दाऽर्थवादेनेतीति** । तृतीयया पूर्वत्वं सूच्यते । तथाच निन्दाऽर्थवादपूर्वकं 'न म्लेच्छितवै' इत्यनेन म्लेच्छनं निषिध्यते-न विधीयत इति कैयटार्थो बोध्यः ॥ न च '**तेऽसुराः**' इति आर्थवादिकफलनिर्देश एव, '**म्लेच्छो ह**' इत्यस्य वाक्यस्यानर्थक्यापत्तेः । न च म्लेच्छस्वरूपप्रदर्शनाय तत्, '**नापभाषि—**' इत्यनेनैव गतार्थत्वात् ॥ तस्मात् कर्माङ्गेऽपशब्दनिषेधे फलश्रुतेरर्थवादत्वमेव न्याय्यम् । तदाह—**द्रव्येति** । जैमिनीयमिदम् । अस्यार्थः कौस्तुभव्याख्यातोऽवगन्तव्यः ॥ तत्र द्रव्यस्योदाहरणमाह—[५ मप०] **यस्येति** ॥ [५ मप०] **स पा-**

१ 'ते सुराः' इति प्रथमप्रतीकस्य अ.पुस्तके न पाठः ।

इत्यादावपापश्लोकश्रवणस्य प्राशस्त्यमात्रपरत्ववदस्य निन्दामात्रपरत्वा-दिति भावः । प्रकरणाच्च क्रत्वङ्गोऽयं निषेधः ॥ **केचिदाहुरिति** । अत्रा-रुचिबीजं तु **'सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्यः'** इति ॥ **पदेति** । **'सर्वस्य द्वे'** इत्यत्र पदग्रहणस्य वार्तिककृतोक्तत्वा-

**पेति** । पापश्लोकश्रवणाभावस्येत्यर्थः ॥ **प्राशस्त्येति** । **'पर्णमयी जुहूः'** इत्यादिः ॥ मात्रपदेन स्वार्थपरत्वनिरासः ॥ एवमग्रेऽपि ॥ **अस्य**–तेऽसुरा इत्यर्थवादस्य ॥ ननु निषेधे द्रव्यत्वाभावेनानङ्गत्वेन तदन्यान्यतरत्वस्याप्यभावेन दृष्टान्तवैलक्षण्यात्कथं **'द्रव्य—'** इति न्यायसंचारोऽत आह—[ ७ मप० ] **प्रकेति ॥ चरत्वर्थः** । **'क्रत्वङ्गमयम्'** इति पाठः । अङ्गशब्दस्य नित्यक्लीबत्वात् ॥ यत्तु **'यर्वाणो नाम'** इत्याद्युक्तरत्र भगवदुक्तेरयं निषेधः क्रत्वङ्गम्—इति कृष्णः । तन्न, प्रकरणलब्धस्यैवार्थस्याग्रे भगवता कथनात् ॥

[ उद्योते ] यत्तु रत्नकृत्—**'इदमयुक्तम् 'ई' चाक्रवर्मणस्य'** इत्यप्लुतवद्भावस्य 'ई'ग्रहणाभावेनान्यत्रापीष्टत्वेनात्र प्लुते सत्यपि पूर्वरूपसंभवात्, पूर्वरूपं जायमानं प्लुतात्मकमेव भवतीति तदनुच्चारणं दोषः—इति तु युक्तम्'—इति । तन्न, हैहे[3]············ ··· । तदेतद् ध्वनयन्नाह—[ ७ मप० ] **अत्रेति ॥** अत एवाह—[ ९ मप० ] **पदेतीति ॥** यत्तु—**'पदस्य'** इत्यधिकारात्—इति कृष्णः । तन्न, तस्याग्रे सत्त्वेऽपि पूर्वमभावात्; अत आह—[ ९ मप० ] **तोक्तत्वादिति** । यदि तु **'सर्वस्य'** इति-वत्तत्रैत्य**'पदस्य'** इत्यस्याप्यधिकारः—इत्युच्यते, तर्ह्यस्तु सोऽपि साधुः ॥ यत्तु रत्नकृत्—असुरोक्त्यनुकरणतया पदस्थानापन्नस्यैव वेदे द्विरुक्तत्वेन वाक्यद्वित्वस्य तैरकृतत्वादिदमयुक्तम्, बहुकृत्वो वाक्यप्रयोगस्तु वीप्साद्योतनार्थम्–इति, तन्न, मिथोविरुद्धत्वात् ।

१ **क्रत्वङ्ग इति** । सप्तम्यन्तम् । तथाच क्रत्वङ्गे क्रतूपकारके क्रतुशेषे भाषणेऽयं निषेध इत्यर्थः ॥ **'क्रत्वङ्गेऽयं'** इत्येवं संहितालेखे पूर्वरूपसूचकेऽर्धाकारचिह्ने ईषद्वक्ररेखात्मके भ्रान्त्या सरललेखाज्ञानेन **'क्रत्वङ्गोयं'** इति पाठो लेखकेन प्रमादाल्लिखितो भवेत् ॥ यदि च छायाकर्तुर्नैव भ्रमसंभवः, तस्य नागेशान्तेवासित्वान्नागेशहस्तलिखित-पुस्तकस्यापि सुलभत्वम्–इति विभाव्यते तदा—अङ्गं अस्य अस्ति इति अङ्गः "अर्शआदिभ्योऽच्"–अङ्गी, "येनाङ्गविकारः" इति सूत्रे तथाऽङ्गीकारात् ॥ एवंच 'क्रतुः अङ्गः–अङ्गी यस्य' इति बहुव्रीहौ **'क्रत्वङ्गः** क्रतूपकारकः क्रतुशेषः–अयं निषेधः' इत्यर्थेन पुंलिङ्गनिर्देशो नैव विरुद्धः–इत्येवं सर्वं समञ्जसम् ॥ एतज्ज्ञात्वैव छाया कृता—**'क्रत्वङ्गमयम्' इति पाठः 'अङ्गशब्दस्य नित्यक्लीबत्वात्'** इत्युक्तम् ॥ एवंच मूलच्छायाविरोधात् **'क्रत्वङ्गः'** इत्यस्य स्थाने **'क्रत्वर्थः'** इति पाठकल्पनं Bengal Asiatic Society पुस्तके चिन्त्यमेव–इति दाधिमथाः । 'अङ्गत्वपरादङ्गशब्दादर्शआद्यचि साधुरयमिति वयम् । ( रघुनाथाः ) । एतत्सर्वं पण्डितद्वयोक्तमपि प्रामादिकमेव । म. म. शिवदत्तैः 'क्रत्वङ्गेऽयं' इति पाठं प्रकल्प्य प्रदर्शितं पाण्डित्यं मीमांसाऽनभिज्ञत्वन्तेषां प्रदर्शयति । तथाहि—विधिवाक्यानां कथंभावाकाङ्क्षासत्वेन–अस्य तेऽसुरा इत्यादिवाक्यस्य च भाव्याकाङ्क्षा-सत्वेनोभयाकाङ्क्षारूपप्रकरणप्रमाणबलादयं निषेधः क्रत्वङ्गमित्येवोद्द्यो-

दिति भावः ॥ ननु नेदं द्वित्वं, किं त्वैच्छिकः पुनः प्रयोगोऽत आह—**लत्वं चेति** । **'न म्लेच्छितवै'** इत्येतत् म्लेच्छभाषाविषयमिति भ्रमनिवृत्त्यर्थं तद्विवरणं–**'नापभाषितवै'** इति । **'ह वै'** इति–प्रसिद्धौ । अपशब्दत्वं व्याकरणानुगतशब्दस्यैकदेशेन एव प्रसिद्धमिति भावः ॥

अन्यथानुकरणत्वासंभवाच्च । तदेतद् ध्वनयन्नाह—[ १० मप० ] **ननु नेदमिति ॥ पुनरिति** । तात्पर्यद्योतनार्थमिति शेषः ॥ **'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्'** इति व्याससूत्रवदिति भावः ॥ आम्रेडितस्वररहितपाठस्यैव सत्त्वेन तदनुपपत्तिरूपदोषाभावादाह—**लत्वं चेतीति ॥** शाखान्तरे **'हेलवो हेलवः'** इति पाठे वत्वमपि तदिति ज्ञेयम् ॥ भाष्यकैयटसाधारण्येनाह—[ ११ शप० ] **न म्लेच्छीति । इत्येतत्**–विधिवाक्यम् । **म्लेच्छभाषेति** । यवनभाषानिषेधेत्यर्थः ॥ सा निषेध्यत्वेन विषयो यस्येत्यर्थे तु यथाश्रुतमेव साधु ॥ **'न म्लेच्छभाषां शिक्षेत्'** इति तद्विषयनिषेधस्यातिरिक्तस्य सत्त्वादाह—[ ११ शप० ] **भ्रमेति ॥** न चैवं तस्याः स्मृतेर्मूलान्तरं कल्प्यं स्यात्, प्रमाणतया समागतस्यार्थस्य तत्कल्पनायां बाधकाभावादिति भावः ॥

[ उ० १२ शप० ] उद्द्योते–**ह वै इतीति** । निपातसमुदायो द्वौ वेत्यर्थः ॥ न चानेन वैदिकशब्दमात्रापभाषणं निषिध्यते, अर्थवादे सामान्यापभाषणानुवादेन पराभवस्योक्तत्वात् । न म्लेच्छितवा इत्यस्य म्लेच्छभाषाविषयत्वाभावे युक्त्यन्तरं ध्वनयन्नत्र हेत्वन्तरमाह—[ १३ शप० ] **अपेति ॥**

[ उ० १३ शप० ] **एवो** व्युत्क्रमे, ईषद्भ्रंशतो व्याकरणानुगतशब्दस्यैवेत्यर्थः । तथाच तेन तन्न ग्राह्यम्, तथा न वाच्यं वेति भावः ॥

ताभिप्रायः । भाषणस्य वाक्येनाविधानात्तस्य भाव्याकाङ्क्षा न सम्भवतीत्युभयाकाङ्क्षारूपप्रकरणस्यासम्भव एवेति 'क्रतूपकारके क्रतुशेषे भाषणेऽयं निषेधः' इत्यर्थं प्रदर्शयन्तः 'प्रकरणाच्च क्रत्वङ्गोऽयं निषेधः' इत्युद्द्योतं कथं योजयन्तीति त एवात्र प्रष्टव्याः । यदि च 'क्रत्वर्थोऽयं' इति पाठं क्वचिदुपलभ्य वङ्गदेशमुद्रितपुस्तके निर्दिष्टस्ततः स साधुरेवेति नाविदितं मीमांसकसरणिज्ञानवताम् । 'अङ्गत्वपरादङ्गशब्दादर्शआद्यचि–' इत्याद्युक्तिस्तु रघुनाथानामुपहसनीयैवेत्यलं परदोषाविष्करणेन । इदानीमुपलब्धपुस्तकेषु 'क्रत्वङ्गोऽयं' इति पाठदर्शनात्स एवात्र स्थापितः ।

२ "इदं च भाष्यादिषु प्रसिद्धं श्रुतिपाठमनुसृत्य व्याख्यातम् । अयं च पाठः क्वचिच्छाखायामन्वेषणीयः । माध्यंदिनानां शतपथब्राह्मणे तु 'हेलवोऽहेलव इति वदन्तः' इति पठित्वा 'तस्माद्ब्राह्मणो न म्लेच्छेत्' इति पठ्यते । तत्र यकारस्थाने वकारोऽपशब्द इति स्पष्टम्" इति श० कौ० ॥

३ इत्यनेन तस्य बाधादित्यर्थकः पाठो भाति । ( र. ना. )

४ पश्चात्पठितस्यापि पदस्येत्यस्य पूर्वत्रानुकर्षणमित्यर्थः । ( र.ना. ) नायं छायाऽभिप्रायः, किन्तु वार्तिककृताऽत्र सूत्रे उक्तस्य पदग्रहणस्यापि सर्वस्येतिवदधिकार इत्युच्यते–इत्येवाभिप्रायः ।

ननु म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा, स कथमपशब्दोऽत आह—**घजिति** । निन्दावचनान्म्लेच्छतेरिति भावः । निन्दा च शास्त्रबोधितविपरीतोच्चारणेन पापसाधनत्वात् । एवं च **म्लेच्छा** इत्यस्य निन्द्या इत्यर्थ इति दिक् ॥

**( भाष्यम् )**

**दुष्टः शब्दः—**

**"दुष्टः शब्दः स्वरतो वर्णतो वा**
**मिथ्याप्रयुक्तो न तमर्थमाह ।**
**स वाग्वज्रो यजमानं हिनस्ति**
**यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इति ॥**
**दुष्टाञ्छब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ॥**

**दुष्टः शब्दः ॥**

( प्रदीपः ) **दुष्टः शब्द इति** । स्वरेण-**स्वरतः**, आद्यादित्वात्तसिः ॥ **मिथ्याप्रयुक्त इति** । यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः । वागेव **वज्रो** हिंसकत्वात् । यथेन्द्रशत्रुशब्दः[2] स्वरदोषाद्यजमानं

---

[ उद्द्योते ] पुरुषे देशस्थत्वादेव वृत्तेराह—[ १४ शप० ] **देशेति** ॥ **यत्तु** म्लेच्छधातोरव्यक्तवाचित्वाद् अपशब्दस्य च मन्दोच्चारणबोधकत्वादव्यक्तत्वसंभवात्सामानाधिकरण्यम् । न चैवं कथं निन्द्यत्वम्, व्यक्तापेक्षयाऽव्यक्तस्य लोके निन्दितत्वात् 'अयं न स्पष्टं वदति किंत्वव्यक्तम्' इति **कृष्णः** । तन्न, एवं सत्यपभाषणस्योक्तरीत्याऽव्यक्तत्वेऽपि दृष्टादृष्टक्रतुवैगुण्यानापादकत्वेन निषेधस्य क्रत्वङ्गत्वासंभवापत्तेः । तदेतद् ध्वनयन्नाह—[ १५-शप० ] **निन्देति** । धातूनामनेकार्थत्वादिति भावः ॥ **तोच्चारणेन**-तद्विषयत्वेन ॥ शास्त्र[3]बोधितत्वं तद्विपरीतत्वं चोच्चारणक्रियाया यथाकथंचिद्विशेषणं बोध्यम् ॥ **एवं च**-तस्य तथा पापसाधनत्वे च ॥ तथा तस्य तद्विषयत्वेन तत्त्वात्तत्त्वम्, तथा तत्प्रयोक्तुः पापस्य जायमानत्वेन तथोच्चारणेन तत्साधनत्वात्तेषामपि निन्दाविषयत्वम् । तदाह—**म्लेच्छा इति** ॥ तत्फलप्रदर्शनमुखेनैव **तेऽसुरा** इत्यर्थवादः ॥ एतेन—अपशब्दस्य म्लेच्छत्वं जातिम्लेच्छकृतमन्दोच्चारणविषयतया गौणम् । तेन म्लेच्छ इति गौण्युक्तिः । तथा च यस्मादेषोऽपशब्दोऽतिप्रसिद्धो म्लेच्छस्तस्मात् तेऽसुराः देवान्प्रति तथा वक्तव्ये तथाऽपशब्दं कुर्वन्तः पराभवमापुः । तस्माद् ब्राह्मणेनापशब्दभाषणं सर्वथा वर्ज्यमित्यर्थो वाच्यः-इति कृष्णोक्तमपास्तम् । उक्तरीत्या मुख्यतयैव निर्वाहे गौणपरतया योजनाऽनौचित्यात् । तेषां तथोच्चारणनियमाभावाच्चेति दिक् ॥ **ब्राह्मणेने**त्युक्तिस्तूक्ताभिप्रायैवेति बोध्यम् । तदाह—**दिगिति** ॥

[ भाष्ये ]—एवं वर्णापराधेऽनर्थमुक्त्वा वाक्यापराधेऽप्याह—भाष्ये—**दुष्ट इति** ॥ अपशब्दप्रयोगे प्रत्यवायप्रतिपादकमिदं शिक्षावाक्यम् ॥ यद्यपि तत्र **'मन्त्रो हीनः'** इति पठितम्, तथाप्यत्रैतत्पाठस्य फलमग्रे स्फुटीभविष्यति ॥

[ भाष्ये ] **स इति** । स्वरादिदुष्ट इत्यर्थः ॥

[ भाष्ये ] तथाचैतादृशऋत्विक्कृतापराधाद्यजमाननाशज्ञानेन को नामावैयाकरणमृत्विजं वृणुयादिति ऋत्विक्त्वेन द्रव्यार्जनादिकं कर्तुं व्याकरणमध्येयमिति फलितम् ॥ तदाह—**दुष्टानिति** भाष्ये ॥ इदं भाष्यं-शिक्षाश्रुत्यादिकं च डित्थादीनां व्युत्पन्नत्वमिति स्वीकर्तृशाकटायनादिमत इति भावः ॥

[ प्रदीपे ] 'स्वरेण वर्णेन वाऽन्यथाभूतो दुष्टः शब्दः प्रयुक्तो मिथ्या[4] मृषा । कुत इत्यत आह—न तमर्थमाहेति । यदर्थ-इत्यादिकैयटोक्त एवार्थः'—इति कृष्णोक्तव्याख्याने प्रयुक्त इत्यस्य वैयर्थ्यापत्तिरध्याहारबाहुल्यापत्तिः, तस्य स्वरसतः प्रतीयमानविधेयत्वभङ्गापत्तिश्च । अत आह—[ कैयटे २ यप० ] **मिथ्याप्रयुक्त इतीति** ॥

[ प्र० ३ यप० ] भाष्यस्थे 'न तं' इत्यादेरर्थमाह—कैयटे—**नाभिमतमिति** ॥ एवं च मिथ्याप्रयुक्तत्वमत्र हेतुः । तत्तत्स्वरवर्णानुपूर्वीकमेव हि पदादि तत्तदर्थमिति तत्र तत्र प्रयुक्तं सत् तं तमर्थं बोधयति नान्यथेति भावः ॥

[ प्रदीपे ] **'वाग्वज्रः'** इत्यत्र द्वन्द्वे निर्देशानुपपत्तिः, बहुव्रीहौ प्रकृतपरामर्शि'सः'इत्यादिना समानाधिकरण्यमनुपपन्नमत आह—[ कैयटे ४ थंप० ] **वागेवेति** ॥ स वागेव सन् वज्रो भूत्वा यजमानं मारयेच्चेत्यर्थः ॥ रूपके साधारणधर्म उपस्थितत्वात् हिंसैवेति सूचयन्नाह—**हिंसेति** ॥ एतेन हिनस्तीति लेट्, न तु लट्, वर्तमानत्वानुपयोगादिति सूचितम् ॥

[ प्रदीपे ] तत्रेन्द्रशत्रुशब्दस्यार्थपरत्वे दृष्टान्तत्वानुपपत्तिरर्थासंगतिश्चात आह—[ कैयटे ४ थंप० ] **शब्द इति** ॥ पुरा किल विश्वरूपाख्ये त्व : पुत्रे इन्द्रेण हते कुपितस्त्वष्टा इन्द्रस्य हन्तारं

---

१ 'दुष्टः शब्दः' इति अ. पुस्तके न ।

२ "नन्विन्द्रशत्रुशब्दस्य लौकिकत्वे कथं स्वरप्रयुक्तयोर्गुणदोषयोः प्रसक्तिः, स्वरस्य वेदमात्रविषयकत्वादिति चेन्न । स्वरविधौ छन्दोऽधिकाराभावात् । एतावानेव हि भेदः-यच्छन्दसि त्रैस्वर्यमेकश्रुतिश्च व्यवस्थयाऽऽश्रीयते । लोके त्वैच्छिको विकल्पः" इति श. कौ. ॥

३ शास्त्रबोधिताद्विपरीतस्योच्चारणमिति समासः । इयं छाया तु हेया । ( र. ना. ) वस्तुतः 'छाया हेया' इति कथनमुन्मत्तप्रलपितमेव । तथा हि-'निन्दा च शास्त्रबोधितविपरीतोच्चारणेन पापसाधनत्वात्' इत्युद्द्योतेनापशब्दस्य निन्द्यत्वं प्रसाध्यते । तत्र शास्त्रबोधितं यदुच्चारणं तद्विपरीतं यदुच्चारणं तद्विषयत्वादपशब्दः पापसाधकः, पापसाधनत्वाच्च निन्दा भवतीति तदर्थः । शास्त्रेण शब्दो बोध्यते न तूच्चारणक्रियेति तस्याः शास्त्रबोधितत्वं तद्विपरीतत्वञ्च यथा कथञ्चिद्बोध्यमिति छायाभिप्रायः । यदि च शास्त्रबोधिताद्विपरीतस्य शब्दस्योच्चारणमित्यर्थोऽवकल्पेत तदा पापसाधनत्वे हेतुत्वं शब्दोच्चारणस्य स्यात्, तच्च नेष्टम्; किन्तु विपरीतोच्चारणस्यैव हेतुत्वमिष्टमिति छायादर्शितदिशैवावसेयमिति सुधियो विदाङ्कुर्वन्तु ।

४ इदं च्चिन्त्यम्-मिथ्याप्रयुक्तत्वमत्र हेतुरिति वक्ष्यमाणस्ववचनविरोधात् । भवदुक्तव्याख्याने वाक्यभेदाच्च । ( र.ना. ) अत्र र. ना. पण्डितानां 'इदं च्चिन्त्यम्' इत्युक्तिर्ग्रन्थानवबोधमूलिकैव । नेयं छायोक्तिः, किन्तु स्वरेण वर्णेनेत्यारभ्य…कैयटोक्त एवार्थ इत्येतत्पर्यन्तं कृष्णग्रन्थस्यैवायमनुवादः । अतो 'वक्ष्यमाणस्ववचनविरोधात्' इत्युक्तिः साहसमात्रमेवेति ।

हिंसितवानित्यर्थः। इन्द्रस्याभिचारो वृत्रेणारब्धस्तत्र **'इन्द्रशत्रुर्वर्धस्व'** इति मन्त्र ऊहितः। तत्रेन्द्रस्य शमयिता शातयिता वा भव-इति क्रियाशब्दोऽत्र **शत्रु**शब्द आश्रितो न तु रूढिशब्दः, तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाभेदः। तत्रेन्द्रामित्रत्वे सिद्धे सति 'इन्द्रस्य शत्रुर्भव' इत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्य आद्युदात्त ऋत्विजा प्रयुक्त इति-अर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता संपन्नः। इन्द्रशत्रुत्वस्य च विधेयत्वात् संबोधनविभक्तेरनुवाद्यविषयत्वादिहाभावः। यथा—राजा भव युध्यस्वेति ॥ ऊह्यमानस्य चामन्त्रत्वात् **'यज्ञकर्मणि–'** इति जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयमाना नेह भवति ॥

(उद्द्योतः) असर्वनामत्वात्तसोऽप्राप्तेराह—**स्वरेणेति। आद्यादि**त्वादिति च। 'तं'इत्यस्य यच्छब्दापेक्षित्वादाह—**यदर्थेति** ॥ 'मिथ्याप्रयुक्तः' इत्यस्य विवरणं—**ततोऽर्थान्तरमिति** ॥ न केवलं तदर्थं नाह–इत्येतावत्, किंतु प्रत्यवायोत्पादनद्वारा हिंसकोऽपीत्याह–**वागेवेति**। यथा–अध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिः, एवं तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवाय इत्याशयः ॥ तत्र दृष्टान्तमाह—**यथेति** ॥ **वृत्रेणेति**–हेतौ तृतीया, फलमपीह हेतुः ॥ **मन्त्र इति**। **न चो**हितस्य कथं मन्त्रत्वमिति **वाच्यम्**। मन्त्रशब्दस्य बोधकपरत्वात्। अत एव **'मन्त्रो हीनः स्वरतः'** इति प्रसिद्धमपि शिक्षापाठं विहाय भाष्ये—**'दुष्टः शब्दः'** इति पठितं तत्रत्यमन्त्र-

---

पुत्रान्तरमुत्पिपादयिषुराभिचारिकं यागं कृतवानित्यादि श्रुत्यादौ प्रसिद्धम्। तदाह—**इन्द्रस्येति** ॥

[ प्र० कैयटे ५ मप० ] **तत्रेन्द्रेति**। याग इत्यर्थः ॥

[प्रदीपे] विनिगमनाविरहादाह—[ कै० ६ ष्ठप० ] **शातयिता भवेतीति**। तस्यासिद्धत्वात् ॥ **'वर्धस्व'** च इत्यपि बोध्यम् ॥ **शब्दोऽत्र**-ऊहिते वाक्ये ॥ **हि**–यतः ॥ **रर्थाभेद इति**। अर्थभेदो न स्यादित्यर्थः ॥

[ प्रदीपे ] क्रियाशब्दाश्रयणे त्वर्थभेद इत्याह—**तत्रेन्द्रेति** [कै० ८ मप० ] **तत्र**–ऊहितवाक्ये। प्रयोक्तव्यादावस्यान्वयः ॥ नन्विन्द्रसपत्नत्वविशिष्ट एव कुतो न विधेयोऽत आह—**सिद्धे इति** ॥ सतिसप्तम्या हेतुत्वं-अस्यातदर्थप्रतिपादनसूचने[2] ॥ **शत्रुः**–शातयिता ॥ **आद्युदात्त इति**। व्युत्पत्तिपक्षे **'ऋज्रेन्द्राग्र—'** इत्यादिना तस्य रन्नन्तत्वस्योक्तत्वान्नित्वादाद्युदात्तत्वम्। सिद्धान्तमते तु **'ग्रामादीनां च'** इति। तदेव च बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणावतिष्ठत इति भावः ॥ [१० मप०] **अर्थान्तरेति**। बहुव्रीहिगम्येत्यादिः ॥ [ १२ शप० ] **राजेति**। तस्य सिद्धत्वे तु राजन् युध्यस्वेति भवत्येवेति भावः ॥

[उद्द्योते] **तस इति**। तसिल इत्यर्थः ॥ **स्वरेणेतीति**। **'इतराभ्योऽपि दृश्यन्ते'** इत्युक्तेस्तृतीयार्थे इति भावः। एवं 'वर्णतः' इत्यत्रापि बोध्यम् ॥ हीनशब्दस्यापाठाद् **'हीयमान—'** इत्यस्याप्राप्तेराह—**आद्यादीति** ॥

[ उ० २ यप० ] **तमित्यस्येति**। यत्तदोर्नित्यसंबन्धादिति भावः ॥ अध्याहाराभावजलाघवमाह—**मिथ्येति**। 'प्रतिपादयन्' इत्यन्तमिति भावः ॥

[ उ० ४ र्थप० ] उद्द्योते—**तदर्थमिति**–कर्मधारयः ॥ **प्रत्येति**। यजमानस्येत्यादिः ॥

[उद्द्योते] नन्वन्यकृतापराधेन कथमन्यनाशः। किं चात्र नाशो न यजमानस्य किंतु तत्पुत्रस्येति वैषम्यम्, अत आह—[ उ० ५ मप० ] **यथेति**। अत्र चेदमेव[3] वचनं मानम्। तथा च न तत्प्रतिपादने तात्पर्यम्, किंतु प्रत्यवायोत्पत्तौ। सा च स्वस्य नाशिका स्वीयस्य वा। सोऽपि स्वस्यैव नाश इति भावः ॥ [ ६ ष्ठप० ] **तत्र**–हिंसायाम् ॥

[ उद्द्योते ] तत्र त्वष्टुः कर्तृत्वेन वृत्रेणेत्यनुपपत्तेराह—[ उ० ७ मप० ] **वृत्रेणेतीति** ॥ हेतुत्वस्यापि वस्तुतो बाधादाह—**फलमिति** ॥ तदप्युक्तप्रयोगहेतुत्वेन विवक्षितमित्यर्थः ॥ तथा च वृत्रोत्पत्त्यर्थं त्वष्ट्रा स आरब्ध इत्यर्थो बोध्यः ॥

[ उद्द्योते ] 'मन्त्रे स ऊहितः' इति दण्ड्युक्तव्याख्याऽयुक्ता, तत्र तस्य तत्त्वाभावात्–यागे ऊहितत्वात्। तदेतद् ध्वनयन्नाह—[ उ० ८ मप० ] **न चोहीति**। सर्वस्येत्यर्थः। **'अनाम्नाता अमन्त्राः'** इत्याद्यापस्तम्बाद्युक्तेरिति भावः ॥ यद्यपि लोके एकावयवाधिक्यविनाशयोरवयविप्रत्यभिज्ञानवदत्राप्येकावयवाभावे पदान्तरप्रक्षेपे चाध्ययनकालावगतमन्त्ररूपत्वप्रत्यभिज्ञानात्प्रक्षिप्तपदमात्रस्यैवामन्त्रत्वं न तु सर्वस्येति प्रागुक्तम्, तथाप्येकदेशोहस्थले तथा संभवेऽपि सर्वोहस्थले न संभवतीत्याशयेनाह—[ ८ मप० ] **मन्त्रेति** ॥

---

१ अत्र वृत्रस्य न कर्तृत्वं किन्तु त्वष्टुरेवेति शतपथे ( १।५।२ ) स्पष्टम्। २ अस्य इन्द्रामित्रत्वस्य सिद्धस्य तदर्थप्रतिपादनसूचने हेतुत्वं–सतिसप्तम्या बोध्यते इति संबन्धः। ( र. ना. ) वस्तुतोऽत्र '–अस्यातदर्थप्रतिपादनसूचने' इत्येव पाठः समुपलभ्यते। प्रथममुद्रणावसरे म. म. शिवदत्तेनापि 'अस्यातदर्थप्रतिपादनसूचने (?)' इत्येव पाठः प्रदर्शितः, तस्य दुरूहत्वाच्च शङ्काचिह्नमपि तत्र मुद्रितम्। पुनर्मुद्रणावसरे र. ना.पण्डितेन शङ्काचिह्नदर्शनभ्रान्तेन 'अस्य तदर्थ–' इति नञ्रहितपाठमुल्लिख्य ग्रन्थसम्बन्धप्रदर्शनाय प्रयतितम्। तदेतद्ग्रामादिकम्। तादृशपाठस्यासत्त्वेन कुड्याभावे चित्राभावात्। ग्रन्थस्य चायमभिप्रायः—**अस्य**–इन्द्रशत्रुर्वर्धस्वेत्यस्य इन्द्रस्य शत्रुर्भवेत्यतो भिन्नार्थप्रतिपादनसूचने सतिसप्तम्या हेतुत्वमिति।

३ एवकारोऽप्यर्थः। स्पष्टं चेदं पूर्वोत्तरमीमांसयोः। ( र. ना.) वस्तुतः—**अत्र च**–'तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवायः' इत्यत्र च **इदमेव**–'स वाग्वज्रो यजमानं हिनस्ति' इति वचनमेव प्रमाणमिति छायाऽभिप्रायः। अत्र पूर्वोत्तरमीमांसाविदामभिप्रायं सुधियो विभावयन्तु।

शब्दस्य शब्दमात्रपरता- इति सूचयितुम् ॥ शत्रुशब्दस्यामित्रपर्यायत्वे बहुव्रीहितत्पुरुषयोरविशेषोऽत आह—**तत्रेन्द्रस्येति** । शदेर्यन्ताद्‌ौणादिकः क्रुन्। प्रज्ञादिगणे निपातनाद्ध्रस्वत्वम्। शमेस्तु तत्वम् ॥ संबोधनविभक्त्यभावायाह—**इन्द्रशत्रुत्वस्येति** ॥ नन्वत्र '**यज्ञकर्मणि-**' इत्येकश्रुतौ प्राप्तायां पूर्वपदप्रकृतिस्वरकरणं स्वरापराध इति वक्तुं युक्तम्। न च तथैवास्तु, शतपथब्राह्मणतद्भाष्यविरोधात्। तत्र हि आद्युदात्तत्वकरणमेव स्वरापराध उक्त इत्यादि स्पष्टमसत्कृतैकश्रुत्यवादेऽत आह—**ऊह्यमानस्य चेति** । तदुक्तम्—'**अनाम्नातेष्वमन्त्रत्वम्**' ( पू० मी० २।१।३४ ) इति । **न चास्यामन्त्रत्वे** लौकिकशब्देन क्रियमाणस्य कर्मणः कथं फलजनकत्वमिति **वाच्यम्**। '**सूर्याय त्वा**' इत्यादेर्लौकिकघटितस्य ऊहविधायकशास्त्रबलेन फलजनकत्ववदुपपत्तेरित्याहुः ॥

( भाष्यम् )

**यदधीतम्—**

**"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।**
**अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥"**

[उ० ९मप०] **अत एव**-अमन्त्रत्वादेव ॥ [१०मप०] **पठितमिति** । व्यक्तमपीति शेषः । अन्यथा दृष्टान्तासंगतिरेव स्यादिति भावः ॥ [ १० मप० ] **तत्रत्येति** । शिक्षापाठस्थेत्यर्थः ॥ **शब्देति** । बोधकेत्यर्थः ॥ **मात्रशब्दः** कार्त्स्न्ये। यद्वाऽवधारणे। [ ११ शप० ] **स्वामित्रेति** । सपत्नेत्यर्थः ॥ [ १२ शप० ] **रविशेष इति** । तयोरर्थभेदो न स्यादित्यर्थः ॥ **तत्रेन्द्रेति** । आभिचारिकयाग इत्यर्थः ॥

[ उद्योते ] ऐच्छिकत्वादाह—[ उ० १३ शप० ] **शमेरिति** ॥ **तत्वमिति** । प्रज्ञादिगणे निपातनादित्यस्यानुषङ्गः। प्रत्ययविधानाय प्रकृतीनां तत्रानुवादादिति भावः ॥

[ उ० १४ शप० ] **नन्वत्रेति** । ऊहिते प्रागुक्तवाक्ये-इत्यर्थः ॥ [ १८ शप० ] **तदुक्तमिति** । जैमिनिना भेदलक्षणे इति शेषः ॥ 'ऊह्यमानस्य मन्त्रत्वम्-उत न' इति संशय्य मन्त्रैकवाक्यत्वेन मध्यनिवेशान्मन्त्रत्वमिति पूर्वपक्षोक्तौ-उक्तम्—'**अना—**' इति । उक्त[३]हेतोर्न तत्त्वकारणत्वं किंत्वभियुक्तप्रसिद्धेः ॥

[ उ० २१ शप० ] **कत्ववदिति** । शिक्षावचनं श्रुत्यादिकं चात्रापि प्रमाणमिति भावः ॥

[ भाष्ये ] **शब्द्यते**-पुनःपुनरुच्चार्यते। भेयैव तेन पुरुषेण ध्वनिमात्रमेवाभिव्यज्यत इति यावत् ॥ **अनग्नाविवेति** । बहुव्रीहिपक्षे भस्मप्रदेश इवेत्यर्थः। नञा विरोधार्थकेन तत्पुरुषे जलप्रदेश इवेत्यर्थः। प्रक्षिप्तमिति शेषः ॥

**तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ॥ यदधीतम् ॥**

**(प्रदीपः) अविज्ञातमिति** । अविदितसुबादिसंस्कारत्वात्, अर्थापरिज्ञानाद्वा ॥ **निगदेनेति** । पाठमात्रेण ॥ **न तज्ज्वलतीति** । निष्फलं भवति ॥ **अनर्थकमिति** । निष्प्रयोजनम् ॥

**( उद्योतः )** ननु-**अधीतमविज्ञातं**-इति विरुद्धमत आह—**अविदितेति** ॥ **शुष्कैध इति** । सान्तक्लीबैधःशब्देनादन्तपुंलिङ्गेन वा निर्वाह्यम् ॥ निरुक्ते तु '**यद्गृहीतमविज्ञातं**' इति पठ्यते। तत्र **गृहीतं** शब्दतः, **अविज्ञात**मर्थत इति बोध्यम् ॥ भाष्ये—**तस्मादनर्थकमिति** । अनेन निन्दार्थवादेन निष्प्रयोजनाध्ययनानौचित्येन निष्प्रयोजनं नाध्येयमिति निषेधकल्पनादिति भावः। अतो निषिद्धमध्ययनं मा भूदिति व्याकरणमध्येयमिति तात्पर्यम् ॥

( भाष्यम् )

**यस्तु प्रयुङ्क्ते—**

**"यस्तु प्रयुङ्क्ते कुशलो विशेषे**
**शब्दान्यथावद्व्यवहारकाले ।**

[ भाष्ये ] **न तज्ज्वलतीति** । न दीप्यते न प्रकाशते-इत्यर्थः ॥

[ भाष्ये ] अधीतस्य स्वरूपेणाविज्ञातत्वं न संभवतीति तदनर्थकपरमिति बोधयन्नुपसंहरति—भाष्ये—**तस्मादिति** ।

[ प्रदीपे ] कैयटे—**अविदिते**ति बहुव्रीहिः ॥

**"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।"**

**"योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥"**

इति श्रुतिमन्त्राद्यनुरोधेनाह—**अर्थापरीति** ॥

[ प्रदीपे ] तत्फलितमाह—कैयटे—**निष्फलमिति** ॥

[ प्रदीपे ] अनर्थकमित्यस्याभिधेयशून्यमित्यर्थनिरासायाह—कैयटे—**निष्प्रयोजेति** ॥ दृष्टान्तबलेनैवमेव लाभादिति भावः ॥

[ उद्योते ] विनिगमनाविरहादाह—[ उ० २ यप० ] **अदन्तेति** ॥ इदं श्रुतिस्थमिवेति ध्वनयन्नाह—[ ३ यप० ] **निरुक्ते त्विति** ॥ पाठभेदेऽप्यर्थस्य साम्यमित्याह—**तत्रेति** । तत्रापीत्यर्थः ॥

[ उद्योते ] '**तस्मात्**' इत्यस्याधिकस्य पूर्वत्रानुक्तस्यार्थमाह-[उ० ५ मप० ] **अनेनेति** । '**यदधीतं**' इत्यनेनेत्यर्थः । अनेन '**दुष्टः शब्दः**' इत्यत्राप्येवं रीतिः सूचिता ॥

[ उद्योते ] अत एव यथाश्रुतानुपपत्तेराह—[ ७ मप० ] **अत इति** । प्रकृत्यादिज्ञानेन पदादिभागार्थज्ञानेनानुष्ठाने तथा प्रागुक्तफलमिति परमतात्पर्यम् ॥

---

१ "**अथ यदब्रवीत्—इन्द्रशत्रुर्वर्धस्वेति तस्मादु हैनमिन्द्र एव जघान। अथ यद्ध शश्वदवक्ष्यत्—इन्द्रस्य शत्रुर्वर्धस्वेति शश्वदुह स इन्द्रमेवाहनिष्यत्**" ॥ इति शतपथे १ का० ५ प्र० २ ब्राह्मणम् ॥

"स त्वष्टा ग्रहप्रवारसमये इन्द्रशत्रुरिति पूर्वपदाद्युदात्ततया इन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं कृत्वा मन्त्रं प्रयुक्तवानतस्तमिन्द्रो जघान। यद्यसौ अन्तोदात्ततया तत्पुरुषसमासेन वा इन्द्रस्य शत्रुरिति व्यस्तनिर्देशेन वा ब्रूयात्तदा निश्चितमेव स इन्द्रं हन्यात्" इति सायणभाष्यम् ॥

२ अ. पुस्तके प्रतीकपाठो न दृश्यते ।

३ मन्त्रैकवाक्यत्वहेतोर्न मन्त्रत्वज्ञापकत्वं किन्तु अभियुक्तप्रसिद्धेरित्यर्थः । ( र. ना. )

४ इदव्ययमेवकारार्थम्। स एवेत्यर्थः। ( र. ना. )

**सोऽनन्तमाप्नोति जयं परत्र**
**वाग्योगवित् दुष्यति चापशब्दैः ॥"**

**कः ?**

**वाग्योगविदेव ॥**

**कुत एतत् ?**

**यो हि शब्दान् जानाति, अपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः ।**

**अथवा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः, अल्पीयांसः शब्दा [1]इति । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा—गौरित्य[2]स्य गावी गोणी गोता गोपोत[3]लिकेत्येवमादयोऽपभ्रंशाः ।**

**अथ योऽवाग्योगवित्, अज्ञानं तस्य शरणम् ॥**

( प्रदीपः ) **यस्तु प्रयुङ्क्ते इति** । अनेनाभ्युदयहेतुत्वं व्याकरणाध्ययनस्य दर्शयति ॥ **विशेष इति** । स एव शब्दः क्वचिदर्थे केनचिन्निमित्तेन प्रयुक्तः साधुः, अन्यथा त्वसाधुः । यथा—[4]अश्वे—अस्वशब्दो धनाभावनिमित्तकः साधुः, जातिनिमित्तकोऽसाधुः । गवि च गोणीशब्दः साधर्म्यात्प्रयुक्तः साधुः, जातिप्रयुक्तस्त्वसाधुः ॥ **क इति** । वाग्योगविदः श्रुतत्वाद्दोषदर्शनाच्च **प्रश्नः** ॥ प्रष्टैव परमतमाशङ्क्याह—**वाग्योगविदेवेति** ॥ **एवमपशब्दज्ञानेऽपीति** । यथा श्लैष्मिकद्रव्यसेवया श्लैष्मिकव्याधिसम्भवः, तद्विपरीतसेवया त्वारोग्यं; तथाऽत्रापि यथोक्तं न्याय्यमिति भावः ॥ **भूयांसोऽल्पीयांस इति** । परमतापेक्षया [5]प्रकर्षप्रत्ययः । यदि मन्यसे-बहवः शब्दाः, अल्पेऽपशब्दाः, अज्ञभूयस्त्वाच्च फलभूयस्त्वमिति । तन्न । यस्माद्भूयांसोऽपशब्दाः, अल्पीयांसः शब्दाः ॥ **अज्ञानमिति** । [6]तथा च तिरश्चां ब्रह्महत्यादिफलाभावः ॥

( उ० ) **'एकः पूर्वपरयोः'** इत्यत्र भाष्यपठित **'एकः शब्दः—'** इत्यादिश्रुतिमूलकमाह—(भाष्ये)—**यस्त्विति** । **अभ्युदयहेतुत्वम्**—अदृष्टद्वारा पुरुषार्थसाधनत्वम् । **कुशलः**—अधीतव्याकरणः । लक्षणस्मरणपूर्वकं यः प्रयुङ्क्ते—इति फलति ॥ **विशेष इति** । अर्थविशेष इत्यर्थः । तदाह—**स एवेति** ॥ **साधर्म्यात्**—साधर्म्यमूलकादभेदारोपात् ॥ भाष्ये—**यथावत्**—अम्बूकृतादिदोषरहितम् । वाचो योगः—प्रकृतिप्रत्ययविभागेनार्थविशेषपरत्वं, तद्वेत्तीति—**वाग्योगवित्** ॥ **श्रुतत्वादिति** । एवञ्च जयाप्तिदोषयोश्चकारेण समुच्चयप्रतिपादनाच्चेत्यपि

[ भाष्ये ] **सोऽनन्तमिति** ॥ ऐहिकापेक्षयाऽतिशयितत्वमनेनोच्यते । अन्तवत्त्वं त्वस्त्येव, कर्मजन्यस्य सर्वस्यानित्यत्वात् ॥ **जयमिति** । उत्कर्षमित्यर्थः । लक्षणया सुविशेषमिति यावत् ॥ **परत्र**—परलोके ॥

[ भाष्ये ]—[ ९ मप० ] **ज्ञानेऽप्येति** । ज्ञानेऽधर्मोऽपीत्यर्थः ॥

[ भाष्ये ] तादृशाधर्मप्राप्तौ हेतुमाह—भाष्ये—[ ११ शप० ] **भूयांस इति** । **इति**र्हेतौ । **भूयांसो ह्यपे**ति पाठे **हि**—हेतौ ॥

[ भाष्ये ] नन्विदानींतनव्यवहाराय संकेतितापशब्दानां कथं नित्यसुशब्देभ्यो भूयस्त्वम्, अतस्तदुपपादयति—[भा० १२ शप०] **एकैकस्येति** । देशकालपुरुषतदीयशक्तिवैकल्यानां भूयस्त्वादिति भावः ॥

[ भा० १५ शप० ] **अथ**शब्द आनन्तर्ये । एवमग्रेऽपि ॥ विदुष एव सर्वत्राधिकारदर्शनादाह—**अज्ञानमिति** । निषेधशास्त्राज्ञानमित्यर्थः ॥

[प्रदीपे] तदेवाह—कैयटे—**अनेनेति** । पद्येनेत्यर्थः ॥

[प्रदीपे] अत्र रत्नकृत्—अत्र स्वार्थे ईयसुन् **'अल्पाच्तरम्'** इत्यत्र तरबिव ॥ एतेन कैयटोक्तं चिन्त्यम्—इति । यद्यपि आतिशायनिकप्रकरणे एव **'तादी घः'** इत्यादौ वाच्ये गुरुसूत्रकरणस्य **'गरीयांसं यत्नम्'** इत्यादिभाष्यानुरोधाद्योगापेक्षज्ञापकत्वाङ्गीकारेणेदं समूलम्, तथापि तस्यागतिकगतित्वेन प्रकृते पूर्वपक्षिणा साधुशब्दानां बहुत्वस्यासाधुशब्दानामल्पत्वस्य प्रक्रान्तत्वेन तत्खण्डकेऽत्र परमतापेक्षया प्रकर्षस्य तात्पर्यविषयतया तथैवोपपत्तौ तदङ्गीकारोऽत्र युक्तः । अत एवानिष्टप्रयोगो नापाद्यः, इति तदुक्तमयुक्तमेवेति दिक् । तदभिप्रेत्याह—[कैयटे १० मप०] **परमतेति** ॥

[ प्र० १२ शप० ] कैयटे ( भाष्यस्थ–) **'इत्येवमादि'**पदार्थमाह—**यस्मादिति** ॥ तथा च बह्वनर्थप्रतिविधानेन तदङ्गीकारेण वाऽल्पफलसाधनं प्रेक्षावतां न युक्तमन्यत्रादृष्टत्वादिति तात्पर्यम् ॥

[ प्रदीपे ] तस्य तदभावे दृष्टान्तमाह—[ कै० १३ शप० ] **यथा चेति** ॥ तस्मान्नित्याध्ययनमेवास्य युक्तम्, न तु शब्दव्युत्पादनार्थत्वं, तस्य प्रत्युतानर्थहेतुत्वादिति भावः ॥

[उद्द्योते] **एक इति** । **'एवं निषेधविधिविषयफलान्युक्त्वा काम्यविधिविषयं फलं कथयन्'** इत्यादिः ॥ **मूलकमिति** । **कात्यायनोक्तभ्राजाख्यश्लोकान्तर्गतं पद्य**मिति शेषः ॥

[उद्द्योते] प्रागुक्तैकवाक्यत्वायाह—[उ० ३ यप०] **अदृष्टेति** ॥ [४ र्थप०] **अर्थविशेष इति** । शक्यलक्ष्यद्योत्यान्यतमे इत्यर्थः ॥ एवंचैकत्रार्थे निमित्तविशेषैस्तत्साध्वसाधुत्वज्ञानं व्याकरणैकशरणम् ॥ अत एवाह हरिः—

**'अर्थप्रवृत्तितत्त्वा[7]नां शब्दा एव निबन्धनम् ।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥'** इति ॥

तावताऽप्यनिर्वाहादाह—[ ५ मप० ] **साधर्म्यमूलकेति** ॥

[उद्द्योते] **वाग्योगविदि**त्यस्यार्थमाह—[उ० ६ ष्ठप०] **वाचो योग इति** ॥ एतेन—वाचः शब्दस्य योगं घटनां वेत्तीति तथा—इति कृष्णोक्तमपास्तम् । अर्थविशेषपुरस्कारेणैव शब्दसाधुत्वस्यानेन प्रतिपाद्यत्वेन तज्ज्ञातुरेव तत्त्वात् ॥ हेत्वन्तरमाह—[ ८ मप० ] **एकत्रेति** । अत एवान्ययोगव्यवच्छेदक एवशब्दः प्रयुक्तो भाष्ये । तथाच तस्यैव कर्तृत्वमिति भावः ।

१ प. पुस्तके इतिशब्दो न । 'एकैकस्य हि शब्दस्य' इति च. छ. क. पाठः । २ 'त्यस्य शब्दस्य गावी' इति क. च. छ. पाठः । ३ 'पोतलिकेत्यादयो बहवोऽपभ्रंशाः' इति च. छ. । ४ **अश्वे इति** । अश्वशब्दे प्रयोक्तव्येऽस्वशब्दः प्रयुज्यमानो यदि जातिनिमित्तः प्रयुज्येत ततोऽसाधुः, धनाभावनिमित्तकः साधुरित्यर्थः । ५ 'प्रकर्षे प्रत्ययः' इति च. क. पाठः । ६ 'यथा च' इति मुद्रितपाठः । ७ अर्थे शब्दस्य या प्रवृत्तिस्तद्धेतुभूतजात्यादितत्त्वानां शब्दा एव वाचकत्वेनालम्बनानीत्यर्थः । (र.ना.)

बोध्यम् ॥ **दोषदर्शनादिति** । शास्त्रस्याधर्महेतुत्वं दोष इत्यर्थः ॥ वादिप्रतिवादिपूर्वपक्षोत्तरपरतया व्याख्यानेऽसामञ्जस्यं मत्वाऽऽह— **प्रष्टैवेति** ॥ भाष्ये—**कुत एतदिति** । वाग्योगविदो दोषः कुत इत्यर्थः ॥ ननु साधुज्ञानस्य यथा धर्मजनकता शास्त्रोक्ता न तथाऽसाधुज्ञानस्याधर्मजनकता शास्त्रोक्तेत्यत आह—**यथेति** । एवञ्च-अपशब्दज्ञानं-अधर्मसाधनं, धर्महेतुशब्दज्ञानविरोधित्वात्; यद्यद्विरोधि तत्तद्विरोधिफलकं, यथा-श्लैष्मिकद्रव्यसेवा-इत्यनुमानं प्रमाणमिति भावः । एवं च शास्त्रस्याधर्महेतुतया तत्र प्रवृत्तिर्न स्यादिति नेदं वचो व्याकरणाध्ययनानुष्ठापकं स्यादिति तात्पर्यम् ॥ नन्वस्त्वधर्मोऽपि, तथापि धर्माधिक्यायाध्येयं व्याकरणमत आह—भाष्ये— **अथवेति** ॥ **अङ्गभूयस्त्वादिति** । अङ्गानां धर्मजनकानां भूयस्त्वादित्यर्थः । एवं च यज्ञादेः पापजनकत्वेऽप्यधिकधर्मजनकत्वाद्यथा तत्र प्रवृत्तिस्तथा प्रकृतेऽपीति भावः ॥ **अल्पीयांसः शब्दा इति** । एवं च श्वदृतिप्रक्षिप्तक्षीरवदनुपादेयं तद्विज्ञानमिति भावः ॥ नन्वेवं सामर्थ्यादवाग्योगविदेव 'दुष्यति' इत्यत्र कर्ताऽस्त्वत आह—भाष्ये— **अथ योऽवाग्योगविदिति** ॥

( बाधकभाष्यम् )

**विषम उपन्यासः । नात्यन्तायाज्ञानं शरणं भवितुमर्हति । यो ह्यजानन् वै ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात् ॥**

( प्रदीपः ) **नात्यन्तायेति** । पुरुषाणां विधिनिषेधयोरधिकारात्तत्परिज्ञाने प्रयत्नस्य न्याय्यत्वात् ॥

( उ० ) अत्यन्तमित्यर्थे **'अत्यन्ताय'** इति अव्ययम् । **पुरुषाणामिति** । मनुष्याणामित्यर्थः । तिरश्चामत्यन्तायोग्यत्वादरत्वज्ञानं

---

**'दोषदर्शनात्'** इति कैयटस्य[1] वाग्योगविदोऽपशब्दज्ञानप्रयुक्तदोषदर्शनादित्यर्थो न, 'प्रयोगकृतो दोषो न ज्ञानकृतः' इत्यस्य वक्ष्यमाणत्वात्, तथा सति कोट्यन्तरानुत्थापकतया संशयस्याभावेन प्रश्नाभावापत्तेः, [2]त्रिभिर्मिलित्वा वाग्योगविद एव कर्तृत्वापत्तेश्च । अत एव मध्ये शेषपूर्ण[3]म् । तेनोक्तहेतु[4]द्वयेनैककोट्युपस्थितिरन्ये[5]नान्यकोट्युपस्थितिः । तदाह—[९ मप०] **शास्त्रस्येति** ॥ **हेतुत्वं दोष इति** । वाग्योगविद इति बोध्यम् ॥ [१० मप०] **सामञ्जस्यमिति** । उत्तरस्य दुष्टत्वेनासिद्धान्तत्वादिति भावः ॥ [ ११ शप० ] **दोष इति** । कर्तृत्वाङ्गीकारे तस्याधर्महेतुत्वापत्तिरूपदोष इत्यर्थः ॥ तथा च तददर्शनान्न तस्य कर्तृत्वम्, किं त्ववाग्योगविद इति भावः ॥ **एवञ्च कैयटस्थत्वेन** प्रश्ने सर्वेषां समुच्चयः ॥

[उ० १२ शप०] **ननु साध्विति** । एवं च 'यो हि' इत्यादिग्रन्थासंगतिरिति भावः ॥ दृष्टान्तसूचितमर्थमाह—[ १३ शप० ] **एवं चेति** । दृष्टान्तसत्त्वे चेत्यर्थः ॥ विशेषव्याप्त्यसंभवादाह— [ १४ शप० ] **यद्यदिति** ॥ यद्यपि तद्बलान्नापशब्दोद्देशेन शास्त्रप्रवृत्तिस्तथापि साधुज्ञानव्यापारेणासाधुज्ञानस्यापि नान्तरीयकतया जननादामिक्षायां वाजिनस्येवैकत्रोभयोरविरोधादिति भावः ॥ तत्फलितमाह—[ १६ शप० ] **एवं चेति** ॥ तस्यानुमानप्रमाणकत्वे चेत्यर्थः ॥ [ १७ शप० ] **नन्वस्त्वधर्मोऽपीति** । तस्यैवेति भावः ॥ **धर्मेति** । धर्मांशेत्यर्थः ॥ तथाच नान्तरीयाल्पदोषस्तेन सुनिरस इति भावः ॥

[ उद्योते ] अङ्गत्वमुपकारकत्वमित्याशयेनाह—[ १९ शप० ] **धर्मेति** ॥ साधुशब्दानामित्यर्थः ॥ अयं न्यायः कुत्र दृष्टोऽत आह— **एवंचेति** । उक्तन्यायाङ्गीकारे चेत्यर्थः ॥ [२० शप०] **पापेति** । हिंसाकृतेत्यादिः ॥ तेनैव तत्क्षालनं फलबाहुल्यमेव वेति भावः ॥

[ उद्योते ] तत्फलितमाह—[ उ० २२ शप० ] **एवंचेति** । तथा व्यत्यये चेत्यर्थः ॥ अत्रोक्तदृष्टान्तविरुद्धदृष्टान्तमाह—**श्वदृतीति** ॥ श्वसंबन्धिचर्मपात्रेत्यर्थः ॥ यथा तदन्तर्गतत्वं क्षीरस्य तथा बह्वपशब्दव्याप्तत्वमेकस्य सुशब्दस्येति भावः ॥ [ २२ शप० ] **तदिति** । साधुशब्देत्यर्थः ॥

[ उ० २२ शप० ] **नन्वेवम्**—वाग्योगविदोऽधर्मबाहुल्येन तद्विज्ञानस्यानुपादेयत्वेनास्य वचनस्यैतदननुष्ठापकत्वापत्तौ ॥ [२३ शप०] **कर्तेति** । तस्य तत्सत्त्वेऽस्य सुतरां तत्सत्त्वादिति भावः ॥

[ भाष्ये ] तस्य नाज्ञानमात्रेण निस्तारः, किं तु निषेधाधिकारिताऽप्यस्तीत्याह—[ भा० १ मप० ] **नात्यन्तायेति** ॥

[भाष्ये] अत्र हेतुमाह—[भा० २ यप०] **यो ह्यजानन्निति** ॥

[ प्रदीपे ] नन्वजानतां प्रतिषिद्धानुष्ठानतश्चेद्दोषस्तर्हि तिरश्चामपि स्यादत आह [ कै० १ मप० ] **पुरुषाणामिति** ॥

[उ० १ मप०] **अव्ययमिति** । विभक्तिप्रतिरूपकमिति भावः ॥

[ उद्योते ] अधिकारिलक्षणे ( पू० मी० ६ । १ । २ अ. ) मनुष्याधिकारित्वस्य शास्त्रे व्यवस्थापितत्वात् **'पुरुषाणाम्'** इत्ययुक्तमत आह [ उ० २ यप० ] **मनु[6]ष्येति** । तथा च तदेतदुपलक्षणमिति भावः ॥ मनुष्यस्य तिर्यक्साम्याभावमाह—**तिरश्चामिति** ॥

---

१ दोषस्यापशब्दज्ञानप्रयुक्तत्वस्वीकारे सतीत्यर्थः । ( र. ना. ) २ प्रयुङ्क्ते आप्नोति दुष्यति इत्येतैरिति भावः । ( र. ना. ) ३ प्रयुङ्क्ते दुष्यतीत्यनयोर्भिन्नकर्तृकत्वादेव मध्ये वाग्योगविदिति शेषपूरणमित्यर्थः । ( र. ना. ) ४ श्रुतत्व-दोषदर्शनरूपहेतुद्वयेन जयाप्तिर्वाग्योगविदो दोषश्चावाग्योगविदः, एकत्रजयाप्तिदोषयोश्चकारेण समुच्चयप्रतिपादनहेतुना दोषोऽपिवाग्योविद एवेति कोटिद्वयम् । ५ **अन्येन**-उद्द्योतोक्तसमुच्चयहेतुना । ६ स्त्रीणामपि पुरुषाणामिवाधिकारेऽपि पतिवत्नीनां पतिसंनिधाने गुरुसंनिधौ शिष्याणामिव राजसंनिधौ सचिवानामिव च नाधिकार इत्यपि तत्र निर्णीतमिति **दाधिमथाः**, पतिवत्यादीनां पत्यादिसंनिधाने कर्मण्यधिकाराभावेऽपि अपशब्दपरिवर्जनादावधिकारोऽस्त्येव । ततश्च पुरुषपदमुपलक्षणमित्येव वरमिति ( र. ना. ) वस्तुतो मीमांसकंमन्ययोरुभयोरप्ययुक्तमेवैतत् । यतः 'स्ववतोऽस्तु वचनादैककर्म्यं स्यात्' ( पू. ६।१।१७ ) इत्यधिकरणे दम्पत्योः सहाधिकारनिर्णयेन पतिवत्नीनां पतिसन्निधानेऽपि अधिकारोऽस्त्येव । अन्यथा पत्न्यवेक्षणादिकर्मसु तासामधिकारः कथं सिद्ध्येत् ? स्त्रिया अनधिकारनिराकरणे-'लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः' (६।१।६) इत्यनेन स्त्रिया अधिकारमाक्षिप्य 'जातिं तु बादरायणोऽविशेषात् तस्मात्स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात्' ( ६।१।७ ) इति सूत्रेण तस्या अधिकारः प्रतिपाद्यते । अतः 'नायज्ञियां वाचं वदेत्' इति निषेधः स्त्रीणामपीति 'पतिसन्निधाने पत्नीनां कर्मण्यधिकाराभावेऽपि' इत्याद्युक्तिर्मीमांसाऽनवबोधमूलैवेति ।

शरणं, मनुष्याणां तु योग्यत्वात्तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रं विज्ञेयम् । अतोऽवाग्योगविदो महाननर्थ इति भावः ॥ तत्र **'नात्यन्ताय'** इत्यनेन शास्त्राज्ञानं नैव शरणं, दोषद्वयप्रसङ्गात् । किं तु वध्यादेर्ब्राह्मणत्वाद्यज्ञानमेव पापाल्पत्वे प्रयोजकमिति ध्वनितम् ॥ भाष्ये—**यो ह्यजानन्निति** । निषेधशास्त्रमजानन् ब्राह्मणत्वादिज्ञानपूर्वकं तद्वधादि कुर्यात्सोऽपि पतित एवेत्यर्थः ॥

**( सिद्धान्तव्याख्याभाष्यम् )**

**एवं तर्हि—**

**सोऽनन्तमाप्नोति जयं परत्र**
**वाग्योगवित् दुष्यति चापशब्दैः ॥**

**कः ?**

**अवाग्योगविदेव ।**

**अथ यो वाग्योगवित्, विज्ञानं तस्य शरणम् ॥**

---

[ उ० ४ थप० ] **महाननर्थ इति** । स एवेत्यर्थः । एवेन स्वल्पस्याप्यर्थस्य निरासः ॥ ननु अत्यन्तायेत्यधिकम्, तदभावेनापीष्टसिद्धेरत आह—**तत्रेति** । भाष्ये इत्यर्थः ॥ [ उ० ५ मप० ] **दोषद्वयेति । 'यो ह्यजानन्'** इति वक्ष्यमाणेत्यर्थः ॥ किंचिदज्ञानं शरणमेवेति ततो लब्धस्य फलितमाह—**किंत्विति** । वध्यादेरित्यस्य ब्राह्मणत्वादावन्वयः ॥

[ उद्द्योते ] अत्र ब्राह्मणादेर्न कर्मत्वम् । तथा सति ब्रह्महत्यादिपातित्याभावेन तदापादनासंगतेः, शास्त्राज्ञानस्यैव प्रक्रान्तत्वाच, अत आह—[ ७ मप० ] **निषेधेति** । **'मन्ये'** इति निश्चयार्थकं, पूर्वत्र **'वै'** इतिवत् । तद्बललभ्यमर्थमाह—[ ८ मप० ] **पतित एवेत्यर्थ इति ॥**

[ भाष्ये ] अथ सिद्धान्ती यथार्थोत्तरं दातुं पुनरनुवदति—[ भा० १ मप० ] **एवं तर्हीति** । तस्यान्यथा निर्वाहाभावेन दोषवत्त्वस्य सुवचत्व इत्यर्थः ॥

[ भाष्ये ] तदेतदाह—[ भा० ६ छप० ] **विज्ञानमिति** । शास्त्रादिज्ञानपूर्वकप्रयोगरूपमित्यर्थः ॥ अत एव **'विज्ञानम्'** इत्युक्तम् । तत्र च बहुव्रीहिः । प्रयोगरूपोऽन्यपदार्थः ॥ जनकत्वं षष्ठ्यर्थः ॥ तदेतदुक्तं [ कै० ३ यप० ] **ज्ञानपूर्वकेति** । भाष्ये **ज्ञान**मिति पाठे तु तस्य लक्षणा बोध्या ॥

---

१ वाग्योगविदो ज्ञानरूपात्प्रकरणादित्यर्थः । ज्ञानस्यापि प्रकरणशब्दवाच्यत्वं संख्यासंज्ञासूत्रे भाष्ये । संनिधेरित्युद्द्योतस्य बुद्धिसंनिधेरित्यर्थः । अत्रत्या छाया चिन्त्या । ( र. ना. ) वस्तुतस्तु स्वरूपदर्शनेनापि पराहतमेतत् । यतः 'प्रकरणात्सामर्थ्यं बलीयः' इति प्रदीपे प्रकरणशब्दस्य भवदभिमतेऽर्थे स्वीकृतेऽपि तदपेक्षया सामर्थ्यस्य बलीयस्त्वं केनोपदिष्टमिति कथं प्रदीपस्योपपत्तिरिति त एव प्रष्टव्याः । अत्रान्यतराकाङ्क्षासत्त्वेन–दुष्यतीत्यत्र कर्तृरूपार्थस्याकाङ्क्षितत्वेनोभयाकाङ्क्षाया असंभवेन 'प्रकरणात्' इति प्रदीपोक्तिर्न सङ्गच्छेत, अतः प्रदीपाशयमुपवर्णयितुं 'सन्निधेरित्यर्थः' इत्युद्द्योते उच्यते । सन्निधिश्च स्थानरूपप्रमाणविशेषः । स्थानञ्च देशसामान्यम्, तद्द्विविधम्–पाठसादेश्यमनुष्ठानसादेश्यञ्च । पाठसादेश्यमपि द्विविधम्–यथासङ्ख्यपाठः सन्निधिपाठश्च, अयमेवोद्द्योते प्रदर्शितः । यथासङ्ख्यपाठेन–

( प्रदीपः ) प्रकरणात्सामर्थ्यं बलीय इत्याह—**अवाग्योगविदिति** । वाग्योगवित्तुभयज्ञोऽपि शब्दान्प्रयुङ्क्ते, नापशब्दान्–इति ज्ञानपूर्वकप्रयोगादभ्युदयभाग्भवति ॥

**( उद्द्योतः ) प्रकरणादिति** । संनिधेरित्यर्थः ॥ नन्वेवं वाग्योगविदोऽपशब्दज्ञानादधर्मः स्यादत आह—**वाग्योगेति** । एवञ्चापशब्दप्रयोग एवाधर्महेतुः, न ज्ञानमात्रमिति न दोष इति भावः ॥

**( स्थानजिज्ञासाभाष्यम् )**

**क्व पुनरिदं पठितम् ?**

( प्रदीपः ) श्लोकस्यापरिज्ञानात्पृच्छति—**क्व पुनरिति** । प्रातिपदिकार्थप्रश्ने चात्र तात्पर्यम्, किं तदस्ति यत्रेदं पठितमित्यर्थः । अत एव 'श्लोकाः' इति प्रथमान्तेनोत्तरम् । अन्यथा 'श्लोकेषु' इति वाच्यं स्यात् ॥

---

[ प्र० कै० १ मप० ] **इत्याहेति** । सिद्धान्तीति शेषः । इत्याशयेन स आहेत्यर्थः ॥

[उद्द्योते] उभयाकाङ्क्षारूपप्रकरणस्याभावादाह—[उ० १ मप०] **संनिधेरिति** । स्थानाख्यप्रमाणादन्यतराकाङ्क्षारूपादित्यर्थः ॥ **दुष्यति च**–इति चरस्त्वर्थे इति भावः ॥

[उद्द्योते] **अथेत्यादि** भाष्यं कैयटेन छायया व्याख्यातम् । तदाशयमाह—[ उ० १ मप० ] **नन्वेवमिति** । तस्य दोषकर्तृत्वाङ्गीकार इत्यर्थः ॥ **वाग्योगेति** । तस्याप्यपशब्दज्ञानादधर्मोऽपि स्यादित्यर्थः ॥ एवं च प्रागुक्तदोष एवेति भावः ॥ [ २ यप० ] **एवं चेति** । तस्य तदप्रयोगादौ चेत्यर्थः ॥ **'यस्तु प्रयुङ्क्ते'** इत्यनेन **एकः शब्द** इति श्रुत्या च तत्प्रयोगेण धर्म उक्तो **न ज्ञानमात्रेण** । तथा चापशब्दज्ञानमात्रेण नाधर्मः, अपशब्दप्रयोगस्तु न वैयाकरणेन क्रियत एवेति तस्य सर्वदा धर्म एव, साधुप्रयोगादभ्युदयोऽपि । अन्यस्य तु तत्प्रयोगादधर्मवृद्धिरेव । तदाह—**अपशब्देति ॥**

[२ यप्रदीपे १ मप०] **श्लोकस्यापरीति** । तत्स्वरूपस्यापरीत्यर्थः । प्रागिति भावः । यद्वा तदाधारस्येत्यर्थः ॥ अत **एवाह**—[२ यप०] **प्रातीति** । विभक्त्यर्थप्रकारकेत्यादिः ॥ अस्याशाब्दत्वादाह—**तात्पर्यमिति** । तदाह—**किं तदिति ॥ इत्यर्थ इति** । इति फलितार्थ इत्यर्थः । **अत एव**–तत्र तात्पर्यादेव ॥

---

ऐन्द्राग्नमेकादशकपालं निर्वपेत् वैश्वानरं द्वादशकपालं निर्वपेत्–इत्येवं क्रमविहितास्विष्टिषु 'इन्द्राग्नीरोचना–' इत्यादिमन्त्राणां यथासङ्ख्यं विनियोगः । सन्निधिपाठेन च–'शुन्धध्वं दैव्याय कर्मणे' इति **मन्त्रः** इध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठितः–इध्माबर्हिः संपादनस्य मुष्टिनिर्वापस्य चान्तरालं सान्नाय्यपात्राणां देश इति प्रत्यक्षसन्निधिना सान्नाय्यपात्रशोधनशेषोऽयमिति निर्णीयते । तथा दुष्यति चापशब्दैरित्यत्र सन्निधिपाठात् वाग्योगविद एवान्वयः कर्तृत्वेन प्राप्तोऽपि सामर्थ्यस्य–शब्दसामर्थ्यरूपलिङ्गस्य बलीयस्त्वात्तेन अवाग्योगविद एव कर्तृत्वेनान्वय इति सिद्धान्तः । अत एव 'अज्ञानं तस्य शरणं' इतिभाष्यावतरणे–नन्वेवं सामर्थ्यादवाग्योगविदेव दुष्यतीत्यत्र कर्तास्तु–इत्युक्तमुद्द्योते । अमुमेवार्थं सुस्पष्टं प्रतिपादयन्तीं छायां चिन्त्यत्वेनाभिव्याहरन् ननु देवानांप्रिय इति निष्कर्षः ॥ २ अवाग्योगविद इत्यर्थः । (र.ना.)

(समाधानभाष्यम्)

**आजा नाम श्लोकाः ॥**

**(उद्द्योतः)** 'आजाः'नाम कात्यायनप्रणीताः श्लोका इत्याहुः ॥

(प्रामाण्याक्षेपभाष्यम्)

**किंच भोः श्लोका अपि प्रमाणम्?**

**किं चातः?**

**यदि प्रमाणम्, अयमपि प्रमाणं भवितुमर्हति— "यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ॥ पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत् ॥" इति॥**

**(प्रदीपः)** आप्तोक्तत्वापरिज्ञानादाह—**किं च भो इति ॥ यदुदुम्बरेति ।** अयं श्लोकः सौत्रामणियागे सुरापाणस्य दुष्टत्वमुद्भावयति ॥

**(उद्द्योतः)** भाष्ये—**किं चात इति ।** अतः प्रश्नात्किं विवक्षितमित्यर्थः ॥ **उदम्बरं=**ताम्रम् ॥ **दुष्टत्वमिति ।** इदमुपलक्षणं–अन्यत्राप्यदुष्टत्वस्य ॥

(समाधानभाष्यम्)

**प्रमत्तगीत एष तत्रभवतः । यस्त्वप्रमत्तगीतस्तत्प्रमाणम् ॥ यस्तु प्रयुङ्क्ते ॥**

**(प्रदीपः) प्रमत्तगीत इति ।** प्रमादेन–विप्रतिपन्नत्वेन गीत इत्यर्थः । कात्यायनोपनिबद्धभ्राजाख्यश्लोकमध्यपठितस्य त्वस्य श्लोकस्य श्रुतिरनुग्राहिकाऽस्ति—**"एकः शब्दः सुज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति"** इति ॥

**(उद्द्योतः)** ननु कर्तरिक्तान्तप्रमत्तशब्दस्य गीतशब्देन समासोऽनुपपन्नः, **'तत्रभवतः'** इत्यनेन साकाङ्क्षत्वादत आह—**प्रमादेनेति ।** भावे क्तान्त इति भावः ॥ **विप्रतिपन्नत्वेन=**वेदविषयविप्रतिपत्त्याश्रयत्वेन । तत्त्वं स्वस्मिन्नारोप्य दैत्यनाशाय पूज्यस्यापि भगवत ईश्वरस्य तथोक्तिरिति स न प्रमाणमिति भावः ॥ [भाष्ये—

[उद्द्योते] ननूत्तरे उक्तो वस्तुत आधारपदार्थ एव कोऽत आह—[द० उ० १ मप०] **भ्राजेति ॥**

[वामे २यभा०१मप०] **चः**–प्रश्नसमुच्चये ॥ वेदस्मृतिशास्त्रविषयाः श्लोका अपि किं धर्माधर्मयोः प्रमाणमिति भाष्यार्थः ॥

[भाष्ये] परस्तद्वाचा "यदि प्रमाणं तर्हि अयमपीति" तदीयमभिप्रायमभिधापयितुं पृच्छति—[२ यप०] **किं चात इति ॥**

[भाष्ये] स स्वाशयमाह—[३ यप०] **यदीति**–भाष्ये ॥ **अयमपीति ।** धर्ममनधिकृत्य येन केनापि पठितस्यापि प्रामाण्ये वक्ष्यमाणश्लोकस्यापीश्वरप्रणीतस्य प्रामाण्यापत्तिरिति भावः ॥

[वामे प्रदी०१ मप०] **आप्तोक्तत्वेति ।** भ्राजाख्यानामित्यादिः ॥

[उद्द्योते] **यत्तु**–निपातसमुदायोऽयं किमित्यर्थे, श्लोकप्रामाण्ये किमनिष्टमित्यर्थः—इति कृष्णः । तन्न, तेषां प्रयोगासांगत्यापत्तेः, तत्प्रामाण्येऽनिष्टाभावाच्च । तदेतद् ध्वनयन्नाह—[उ० १ मप०] **अत इति ॥**

[द्वितीये उ० २ यप०] **ताम्रमिति ।** तथा च लोहिनीनां कलशीनां विशालं मण्डलं लक्षणया तत्स्थं सुराद्रव्यं, स्वरूपतस्तस्य पानकर्मत्वायोग्यत्वात् । तत् पीतं सद् यदि पातारं स्वर्गं न गमयेत् तत् तर्हि सौत्रामणीग्रहपात्रस्थं स्वल्पं तत्–सुराद्रव्यं पीतं किं नयेत् । नेष्यत्येव । तथा च तैत्तिरीयब्राह्मणम् "ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं ब्राह्मणो ह्याहुत्या उच्छेषणस्य पाता यदि ब्राह्मणं न विन्देत् वल्मीकवपायामवनयेत् सैव ततः प्रायश्चित्तिः" इति ॥ एवञ्च स्वर्गसाधनत्वेन श्रुता सुराऽल्पत्वात् सम्यक् स्वर्गं नेतुमशक्ता । तस्मात्सौत्रामणीं हित्वा पानागारे एव मद्यं पातव्यमित्यर्थः ॥ तदेतदभिप्रेत्याह—[उ० २यप०] **इदमुपेति ।** [उ० ३यप०] **अन्यत्रेति च ॥ अन्यत्र**–यागातिरिक्ते पानागारे तत्पानादुष्टत्वस्यापीत्यर्थः ॥ **अपिना** तस्यापि समुच्चयः ॥

[भाष्ये] एतन्निराचष्टे—[द० भा० १ मप०] **प्रमत्तेति ॥**

[द० भा० १मप०] **'तत्रभवतः'** इति पूर्वान्वयी, नोत्तरान्वयी, **'यस्तु'** इत्यनेन विच्छेदात् । तथा च तत्रभवत एष श्लोकः प्रमादेन पठित इति तदर्थो बोध्यः ॥

[भाष्ये] नन्वेवं कथमस्यापि न प्रामाण्यम्, अत आह—[वामे भा० १ मप०] **यस्त्वप्रेति ॥**

[द० प्र० १मप०] यद्यपि प्रमादश्चेतसोऽसमाधानम्, 'प्रमादोऽनवधानता' इत्युक्तेः, तथापि प्रकृते विशेषमाह—कैयटे **विप्रतीति ॥**

[द० उ० १ मप०] **कर्तरीति ।** प्रमाद्यतीति प्रमत्त इति भावः ॥ [उ० २यप०] **साकाङ्क्षेति ।** तथा च 'सापेक्षम्–' इति न्यायादसामर्थ्यमिति भावः ॥ **भावे क्तान्त इति ।** भावे यः क्तस्तदन्त इत्यर्थः । प्रमत्तशब्द इति शेषः ॥

[उद्द्योते] अत एव तदर्थमाह—[उ० ३ यप०] **वेदेति ॥**

[उद्द्योते] ननु कोऽसौ तत्रभवान्? यदीश्वरः, कथं तत्र विप्रतिपत्तिः? अथान्यः, कथं तत्र पूज्यत्वं, भ्रमादिसंभवात् । अत आह—[उ० ४ र्थप०] **तत्त्वमिति ।** विप्रतिपत्त्याश्रयत्वमित्यर्थः ॥ आरोपे बीजमाह—**दैत्येति ॥** तत्रभवत इत्यस्यार्थमाह—**पूज्येत्यादि ॥ भगवतः**–षड्विधैश्वर्यपूर्णस्य ॥ **ईश्वरस्य**–नियन्तुः ॥

१ 'अहम्' 'शुभम्' 'ते' 'मे' 'अस्ति' 'असि' 'वरम्' इत्यादिवत् 'प्रमाणम्' इत्येतदपि 'विभक्तिप्रतिरूपकमव्ययमपि' इत्येवमेव मेदिनीकाराशयः । अत एव **'श्लोकाः प्रमाणम्' 'वेदाः प्रमाणम्'** इत्यादिषु न सामानाधिकरण्यानुपपत्तिः । एतदजानानामिव विद्वद्वराणामत्र सामानाधिकरण्योपपत्तये कोलाहलः स्वकीयत्वावदूकताख्यापनायैवेति **दाधिमथाः** ॥ प्रमाणत्वे एकत्वान्वयेन उपपत्तौ अक्लृप्तागतिकगत्यव्ययत्वकल्पनमयुक्तमिति वयम् । (र. ना.) २ यस्य कस्यापि यः श्लोकोऽप्रमादेन पठितस्तत्प्रमाणमित्यर्थः । ३ **अस्य**–यस्तु प्रयुङ्क्ते कुशल इत्यस्य । ४ **तत्त्वं**–वेदविषयविप्रतिपत्त्याश्रयत्वम् । ५ अ. पुस्तके [ ] चिह्नगतो न पाठः ।

यस्त्वप्रमादेन गीतो यस्य[1] कस्यापि तत्प्रमाणमिति प्रतिनिर्देशलिङ्गम्[2] ॥ ] ननु कथं ज्ञातं 'अयमप्रमत्तगीतः' इति–अत आह—**श्रुतिरनुग्राहिकेति**[3] ॥

## ( प्रयोजनभाष्यम् )

**अविद्वांसः—**

**"अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।**
**कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत्[4] ॥"**
**स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम्[5] ॥**
**अविद्वांसः ॥**

( प्रदीपः ) **स्त्रीष्विवेति** । प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः । यस्तु प्लुतं कर्तुं न जानाति स स्त्रीवद्वक्तव्यः–अयं–अहं–इति, न तु 'अभिवादये देवदत्तोऽहम्' इत्यादिना संस्कृतेन वाक्येनेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**अविद्वांस इति** । अत्र योग्यताख्याकरणं कर्म बोध्यम् ॥ **प्रत्यभिवादे**=अभिवादानन्तरप्रयोज्ये वचने **नाम्नः**–अभिवादकनाम्नष्टेः प्लुतिं कर्तुं **ये** न जानन्ति **तेषु कामं**=निःशङ्कं **विप्रोष्य**=प्रवासादेत्य । **यद्वा–कामं**=विध्यनुसारमन्तरै-

[ उद्द्योते ] अस्यापि पूर्ववदेवार्थ इत्याह—[ उ० ६ ष्प० ] **भाष्येयस्त्वेति** ॥ तस्यात्रासंबन्धं सूचयन्नाह—**यस्येति** ॥ **प्रतीति** । तदित्यत्रेति भावः ॥ एतेन—"अत्रापि यस्त्वप्रमादेन पठितः स तत्रभवतः प्रमाणमेव—इति कृष्णोक्तव्याख्यानम्'—**'मद्यपानादिनोन्मत्तस्य** वेदविरुद्धमार्गानुयायिना केनचिद्द्वाह्येन पठित इति न तस्य प्रामाण्यम्, तत्रभवतः–पूज्यस्य महर्षेः, कर्तुः शेषत्वविवक्षायां षष्ठी, न तु कृद्योगलक्षणा, **'न लोक–' इति** निषेधात् अप्रमत्तगीतः–अप्रमादेन सावधानतया साधनेन गीतस्तत्प्रमाणं वेदवत्"—इति रत्नोक्तं चापास्तम् । दोषगणसत्त्वस्योक्तप्रायत्वात् । **तु**शब्दासांगत्यापत्तेश्च । वस्तुस्थितेस्तथाऽसत्त्वाच्चेति दिक् ॥

[ भाष्ये ]—उक्तवैलक्षण्यसूचनाय भाष्ये—श्रुतौ **तु**शब्दः ॥ नन्वेतावता किमत आह—**स्त्रीवदिति** ॥ एतदध्ययनेन प्लुतज्ञाने तत्र तत्करणात्स्त्रीसाम्यं नेति तत्फलकमिदमध्येयम् । अन्यथा तत्साम्यं स्यादिति शाब्दोऽर्थः ॥

[ प्रदीपे ] **अयमित्यादि** । 'अयमहं नमामि' इति वदेत् । एतदभिनयेन कृताञ्जलिपुटस्य हृदयदेशप्रापणादभिवादनभ्रान्तिजननेन तान्प्रीणयेत्, न तु **'अभिवादये भारद्वाजगोत्रकृष्णशर्माहं भोः'** इत्यादिना नामगोत्रोच्चारणपूर्वकपादग्रहणं कुर्यादित्यर्थः ॥ यद्वा—उक्ताशयेन 'अयमहमस्मि' इत्येव वदेत्, न तु 'नमामि' इत्याद्यपि–इत्यर्थः ॥ तदेतद् ध्वनयन्नुभयसाधारण्येनाह—कैयटे—**प्रत्येत्यादिना** ॥ प्रत्यभिवादेन ह्यसौ संस्कृतोऽभिवाद्यो धर्मार्हो भवति स्वयं चाभ्युदयेन युज्यते । तेन तदनभिज्ञा नाभिवाद्या इति भावः ॥

[ उद्द्योते २ यप० ] **वचने**–आशीर्वचनवाक्ये । उपात्तस्येति शेषः ॥ यथाश्रुतानुपपत्तेः शेषपूरणेन व्याचष्टे—**टेरित्यादि** ॥ **कामं** यथेष्टम् । तत्फलितमाह—**निरिति** ॥ **विप्रोष्येत्यस्य** गत्वेतिरत्नोक्तव्याख्यानमयुक्तमुदक्षरत्वाद्, अत आह—[ ४ धंप० ] **प्रवासादिति** ॥

१ **यस्य कस्यापीत्यनेन**–वेदविरुद्धवाद ईश्वरस्यापि अप्रमाणम् । अप्रमत्तगीतश्च तदितरस्यापि प्रमाणमिति ॥

२ ननु 'तत्प्रमाणं' इति भाष्ये तच्छब्दस्य नपुंसकलिङ्गव्यवहारोऽनुचितः, उपक्रमे 'यस्तु' इति पुंल्लिङ्गव्यवहारादत आह—**प्रतिनिर्देशेति** । विधेयलिङ्गतया तत्त्वमित्यर्थः । ३ तथा साधुष्वपि सामान्यलक्षणाद्विशेषलक्षणान्वितस्य प्रयोगविशेषे फलविशेषः स्मर्यते । तथा च—

**'नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः ।**
**अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥'**

इति पदमञ्जर्यां निर्णीतम् । ( दा. म. )

४ **"अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।**
**असौनामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥"**

इति मनुनापि नामोच्चारणस्य विहितत्वेन,

**"आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।**
**श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥"**

इति स्मृतौ नामोच्चारणस्य निषिद्धत्वेन षोडशिग्रहणाग्रहणवद्विकल्पापत्तिरिति तु न सम्यक्, यतो वेदाङ्गज्यौतिषे—

**"नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि ।**
**यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम् ॥"**

इत्युक्तत्वेन, बौधायनेनापि **"पुत्रस्य नाम गृह्णाति रौहिणाय तिष्यायेति"** इत्युक्तत्वेनापस्तम्बेनापि **"नाक्षत्रं नाम च निर्दिशति । तद्रहस्यं भवति"** इत्युक्तत्वेनाश्वलायनश्रौतकारिकायां—

**"निर्दिशेद्यजमानः स्वं नाम सांव्यवहारिकम् ।**
**नाक्षत्रं च यथा कृष्णशर्मा रौहिण इत्यपि ॥"**

इत्युक्तत्वेन, गोभिलगृह्यसूत्रे—**"अभिवादनीयं नामधेयं कल्पयित्वा । देवताश्रयं वा नक्षत्राश्रयं वा । गोत्राश्रयमप्येके"** इत्युक्तत्वेनाश्वलायनगृह्यसूत्रेऽपि–**'अभिवादनीयं च समीक्षेत तन्मातापितरावेव विद्यातामोपनयनात्'** इत्युक्तत्वेन, गोभिलगृह्ये—सोष्यन्तीहोमप्रकरणे **'पुमानयं जनिष्यते—असौनामेति नामधेयं गृह्णाति । यत्तद्गुह्यमेव भवति'** इत्युक्तत्वेन **'अमुष्यासाविति पतिनाम गृह्णीयादात्मनश्च'** इत्यादिगृह्यवाक्यपर्यालोचनेन **'जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि । स सत्यकाम एव जाबालो ब्रुवीथाः'** इति श्रुतावपि नामोच्चारणस्य विहितत्वेन दशरथसीतादिकृतरामनामोच्चारणस्य श्रीमर्यादापुरुषोत्तमावतारवान्छामानुषविग्रहश्रीरामकृतदशरथसीतादिनामोच्चारणस्योपलम्भेन सांव्यवहारिकाभिवादनीयेतिसमाख्यया नामोच्चारणस्यावश्यकर्तव्यतया तत्तत्कर्मनियततत्तन्नामनिर्देशस्य कर्मान्तरे ग्रहणनिषेधपरा निषेधस्मृतिरिति सामान्यविशेषरीत्या व्यवस्था कल्पनीयेति दिक् इति **दाधिमथाः** ॥

५ **स्त्रीवदिति** । यथा स्त्रीषु नामगोत्रोच्चारणपूर्वकमभिवादनं न क्रियते किन्तु 'अयमहं नमामि' इत्युक्त्वाऽभिनयमात्रं क्रियते, तथाऽविद्वत्सु व्यवहर्तव्यमित्यर्थः । यत्तु 'भाषाशब्दैरेव तेषां नमस्कारं कुर्यात्' इति, तदप्रामाणिकं । संस्कृतशब्दैर्व्यवहारे न किञ्चिद्बाधकम् ॥

६ **तस्य**–तत्रभवत इत्यस्य, **अत्र**–यस्त्वत्रेत्यादौ ॥

वेत्यर्थः । 'अयमहम्' इत्यनुकरणस्यानितिपरत्वेऽपि कृन्योगाभावाद्गतित्वाभावेन 'वदेत्' इत्यस्य तिङन्तत्वेन च समासाभाव इत्याहुः ॥ अत्र क्वचित् 'अयमहमिति वदेत् । अनुकरणं चानितिपरमिति गतित्वात्समासः' इति पाठो दृश्यते सोऽपपाठः ॥ भाष्ये—**स्त्रीवदिति** । तद्वत्करणेन सूचितशास्त्रज्ञानित्वकृतापमानप्रयुक्तदुःखभाजो मा भूमेति भावः ॥

**( प्रयोजनभाष्यम् )**

**विभक्तिं कुर्वन्ति—**

**याज्ञिकाः पठन्ति—"प्रयाजाः सविभक्तिकाः कार्याः" इति । न चान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् ॥ विभक्तिं कुर्वन्ति ॥**

**( प्रदीपः ) प्रयाजा इति ।** प्रयाजमन्त्रा ऊह्यमानाऽग्निशब्दप्रकृतिकविभक्तियुक्ता इत्यर्थः । यथा **"समिधः समिधोऽग्ने अग्न आज्यस्य व्यन्तु"** अग्निरग्निरिति ।

**(उद्योतः)** ननु प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते, तत्किमनेन वचनेन? इत्यत आह—**प्रयाजेति** । ऊह्यमाना याऽग्निशब्दप्रकृतिकविभक्तिस्तद्युक्ता इत्यर्थः ॥ ननु 'अग्निशब्दप्रकृतिक' इत्यसङ्गतम् । अपूर्वविभक्तिमात्रविधाने **'न केवलः प्रत्ययः'** इति निषेधात् यत्किंचित्प्रातिपदिकप्रकृतिकाः सर्वा विभक्तयः प्रयोक्तव्या इति प्राप्नोति—इति चेत्, न । **'त्वमग्ने प्रयाजानुयाजानां पुरस्तात्त्वं**

[ उ० ७ मप० ] यत्तु **'अनुकरणं** चेति गतिसंज्ञायां गतिसमासेऽपि अनुकरणत्वादेवास्त्ववामीयमित्यादिवद् विभक्तेर्न लुक्'—इति कृष्णः । तदसद् इति ध्वनयन्नाह—उद्योते [ ७ मप० ] **अयमिति** ॥ **आहुः**—सिद्धान्तविदः ॥ कैयटीयपाठं दूषयति [ ७ मप० ] **अत्रेति** । **'वाक्येनेत्यर्थः'** इत्यग्र इत्यर्थः । उक्तहेतोः, मिथोविरुद्धत्वाच्चेति भावः ॥

[ उ० ९ मप० ] तत्फलितमाह—[ ९ मप० ] **तद्वत्करणेनेति** । स्त्रीवदित्युक्त्येत्यर्थः ॥ **'शास्त्राज्ञानकृताप'** इति पाठः ॥ **'भूमेतीति भावः'** इति पाठः ॥

**न च**

**आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।**
**अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥**

इति मनुस्मृतेरेव ज्ञाने नेदं फलमिति **वाच्यम्** । **'ऊकालोच्–'** इति लक्षितस्य तस्यैतदधीनज्ञानत्वात् ॥ न च लोकप्रसिद्ध्यैव **त्रिमात्रः प्लुत** इति सुज्ञानम्, लोकप्रसिद्धेरपि शास्त्रमूलकत्वात्, **'प्लुङ् गतौ'** इति धातुसिद्धस्य तस्य त्रिमात्रेऽप्रसिद्धेरिति बोध्यम् ॥

[भाष्ये]—**विभक्तिं कुर्वन्तीति**—लेट् । विभक्त्यन्तं कुर्युरित्यर्थः । अत एव वचनैकवाक्यता ॥ कुत्रेत्याकाङ्क्षायामाह—**याज्ञिका इत्यादि** । पूर्ववत् ॥

[भाष्ये]—ननु किमेतावताऽत आह—**न चान्तेति**—भाष्ये ॥ **च**—यतः ॥ अतोऽध्येयं **व्याकरण**मिति शेषः ॥ विभक्त्यादिज्ञानं चैतदधीनम् ॥ याज्ञिकवृद्धव्यवहारात्तज्ज्ञानम्—इति तु न, तस्याप्येतन्मूलकत्वात् । तस्यैव प्रमाणत्वे मीमांसोच्छेदापत्तेश्चेति दिक् ॥

[प्रदीपे]—आधानोत्तरमाधातुर्महासंकटादौ विहितपुनराधेयेष्टाविदं—**प्रयाजा इति** समाम्नातम् । प्रयाजेषु यागेषु श्रूयमाणं सविभक्तिकत्वम् **"आनर्थक्यात्तदङ्गेषु"** ( पू. मी. ३ । १ । १७ ) इति न्यायेन तदुपकारकेषु मन्त्रेष्ववतरतीति प्रयाजपदं मन्त्रपरमित्याह—कैयटे—**प्रयाजमन्त्रा इति** । **'समिधोऽग्न आज्यस्य व्यन्तु'** इत्यादय इत्यर्थः ॥

[ प्रदीपे ]—**'न केवला–'** इति निषेधात्केवलविभक्तिविधानस्य दुर्वचत्वादाह—कैयटे—**ऊह्येति** ॥

[प्रदीपे]—तदभिप्रेत्यैव प्रयोगस्वरूपमाश्वलायनाद्युक्तं दिक्प्रदर्शनाय कैयटे आह—**यथा समिधः समिधोऽग्नेऽग्न इति** ॥

[ उद्योते ]—तदभिप्रेत्यैवाह—उद्योते—[ १ मप० ] **ननु प्रकृताविति** । एवं चातिदेशेन तथैव तत्र तेषां प्राप्तिरिति विधानमनर्थकमिति भावः ॥ तदाह—**तत्किमिति** ॥

इदं च नाग्निशब्दे विशेषणम्, किंतु विशिष्टविशेषणमित्याह—उद्योते [ २ यप० ] **ऊह्यमानेति** ॥ तत्र शङ्कते—[ ३ यप० ] **नन्वग्नीति** ॥ [४ थप०] **अपूर्वेति** । यत इत्यादिः ॥ अनेनानर्थक्यशङ्का परिहृता ॥ दोषान्तरं सूचयन्नाह—**सर्वा इति** । तत्रोद्यां समाधत्ते—**त्वमग्न इति** । यथासंख्यमन्वयः ॥ एतेन श्रुतानामेव **'समिधः'** इत्यादिषट्कविभक्तीनां स्थाने सर्वासां पर्यायेण प्रयोगः प्राप्नोतीत्याशङ्काऽपि समाहिता ॥ अत्रेदं बोध्यम्—यद्यपि **'विभक्तयो भवन्ति वाचो विधृत्यै'** इति तैत्तिरीयसंहिताविधिः । तत्रेष्टौ प्रयाजानामाग्नेयत्वसंपादनाय सर्वविभक्तयस्ततः प्राप्ताः । तत्राग्नेर्देवताया एकत्वात् द्विवचनबहुवचनयोरसंभव एव, तथा सति सर्वैकवचनानि प्राप्तानि । तथोत्तमेऽपि आदौ मध्ये चान्ते च, अस्य विधेरपि विशेषात् । तावता साहित्यस्यापि संभवात् **प्रयाजानुयाजेष्वेव विभक्तीः कुर्यादिति** तत्प्रकरणस्थब्राह्मणवाक्यमपि साधारणम् । तच्च सर्वं पुनराधेयमाग्नेयं न कार्यम्, किंतु प्रयाजानुत्तरमिति भावः ॥

१ 'ऊह्यमाना अग्नि शब्द' इति अ. पाठः ॥

२ उद्योते शङ्कात्रयमत्रोपस्थापितम्, तच्चेत्थम्–'तत्किमनेन वचनेन' इत्यनेन 'प्रयाजाः सविभक्तिकाः कार्याः'इत्यस्यानर्थक्यशङ्का, 'यत्किञ्चित्प्रातिपदिक–' इत्यनेन प्रयाजमन्त्रगताशेषपदेभ्योऽपि विभक्तिशङ्का, 'सर्वा विभक्तयः' इत्यनेन प्रथमादिसप्तम्यन्तानामाशङ्केति शङ्कात्रयस्यापि छायायां **'अपूर्वेति** । यत इत्यादिः । अनेनानार्थक्यशङ्कापरिहृता' इत्यादिग्रन्थेन क्रमेणोत्तराणि विहितानीति तत एव ज्ञेयानि । ३ कैयटीयापपाठस्थलं दर्शयति—**वाक्येनेत्यर्थ इत्यग्रे** ।

४ **तत्राद्यामिति** । आनर्थक्येतरशङ्काद्वयस्याद्यां । अशेषपदेभ्योऽपि विभक्तिशङ्कामित्यर्थः ॥

५ अग्निशब्दप्रकृतिका एव ता इति व्यवस्थापनेनेत्यर्थः ॥

६ पञ्चमे प्रयाजे इत्यर्थः । ( र. ना. )

७ आदिमध्यावसानेषु प्रयाजेषु सविभक्तिकत्वविधेस्तुल्यत्वादित्यर्थः । ( र. ना. )

८ विभक्तीत्यादिः । ( र. ना. )

**पश्चात्'** इति मन्त्रवर्णेनाग्निशब्दप्रकृतिका एव ता इत्याशयात्। तत्राग्नेर्देवताया एकत्वादेकवचनमेव । विभक्तयश्च प्रथमाद्वितीयातृतीया-

---

जानुयाजेष्वेवाग्निविषया विभक्तिः कार्या इत्यर्थकम् । तत्रानुयाजविभक्तिरूपमाश्वलायनेनोक्तम्—**देवंबर्हिरग्ने वसुवने वसुधेयस्य वेतु देवो नराशंसाग्नौ वसुवने वसुधेयस्य वेत्वे**(त्वि)ति। तथा चाज्यभागौ पत्नीसंयाज्याभ्यः प्रकृतिवदेव ॥ आपस्तम्बेन त्वन्यथोक्तम्—**देवेऽग्नौ देवोऽग्निरिति** द्वयोरनुयाजयोर्विभक्तिमुक्त्वा **प्रयाजेन वषट्करोतीति** संहितास्थवाक्येन विभक्त्यन्तं तदुच्चार्यम् । प्रयाजेन याज्यया वषट्कारपूर्वं यजेदित्यर्थकेन तृतीयदोषनिरासः। तथा च दोषद्वयमस्त्येव, तथापि **अग्नेऽग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्ददाति नोत्तमे''** इति पक्षान्तरप्रतिपादकापस्तम्बेन सर्वनिरासः । तथा चोत्तमवर्जमग्निप्रकृतिकसंबुद्धिसप्तम्येकवचनतृतीयैकवचनद्वितीयैकवचनानि याज्यातः पूर्वमग्निशब्दात्पूर्वं वा प्रयोज्यानीति सिद्धम् ॥ द्वितीयैशङ्काऽप्यनेन समाहिता । तदेतदभिप्रेत्याह—[ ७ मप० ] **तत्रेत्यादि** । तत्र-तत्रापीत्यर्थः ॥ सकलविभक्तीनामपि मध्ये इति यावत् ॥ तत्रापि संबुद्धिटाङेङ्स्तानां न प्रयोगः । **'त्र्यक्षराः सन्तो द्विरुक्त्वेनावृत्त्या चतुरक्षरा भवन्ति'** इति वचनात्। संबुद्ध्यन्तस्य त्र्यक्षरत्वेऽपि द्वित्वोत्तरं पूर्वरूपे **'अग्नेऽग्ने'** इति त्र्यक्षरत्वात्। टाङेन्तयोरादित एव तत्त्वाभावाच्च ॥ तथा ङस्यन्तमपि न प्रयोज्यम्, **'न शब्दजामि पठेत्। शब्दजामि हि तद् भवति यत्पञ्चम्यन्तम्'** इति वचनात्॥ तथा 'मात उत्तमे' इति वचनेन निषेधादुत्तमप्रयाजमन्त्रे न तत्प्रयोग इत्याहुः ॥ तथा चादितश्चतुर्षु प्रयाजमन्त्रेषु अवशिष्टेषु यथाक्रममाद्ये पक्षे चतस्रो विभक्तयः संबुद्धिसप्तम्येकवचनतृतीयैकवचनद्वितीयैकवचनरूपा अग्निशब्दप्रकृतिविशिष्टास्ततः पूर्वं प्रयोज्याः इति सिद्धम् । स च प्रयोगो **ये यजामहे भूर्भुवः सुवः समिधोऽग्नेऽग्न आज्यस्य व्येतु वौषट्** इति ॥ द्वितीयपक्षे तु—**ये यजामहे भूर्भुवः सुवः**

---

१—'यद्यपि प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते । तथापि यद्याधानादनन्तरं यजमान उदरव्यथावान् स्यात्, यदि वा संवत्सरमध्ये तस्य महती विपत् स्यात्, तदा नैमित्तिकी पुनराधेयेष्टिर्विधीयते । तत्रेदमाम्नातम्—**''प्रयाजाः सविभक्तिकाः—''** इति। तत्र केवलविभक्तेः प्रयोगानर्हत्वात् प्रकृतिराक्षिप्यते । सा चाग्निशब्दरूपा, न तु या काचित्, निरुक्ते देवताकाण्डे—**'अथ किंदेवताः प्रयाजानुयाजाः'** इति प्रश्नमवतार्य मन्त्रवर्णादीनुदाहृत्य **'आग्नेया इति तु स्थितिः'** (८।२२।८) इत्युपसंहारात्। तस्मादादितश्चतुर्षु प्रयाजेषु चतस्रो विभक्तयोऽग्निशब्दप्रकृतिकाः पठ्यन्ते—इत्यादि श्रौतग्रन्थेषु द्रष्टव्यम्' इति शब्दकौस्तुभस्य ।

''ताश्च विभक्तयः'' सूत्रे स्पष्टमुदाहृताः—**'अग्नेऽग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्ने** इति **चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्ददाति'** इति, समिधो अग्ने आज्यस्य वियन्तु, तनूनपादग्न आज्यस्य व्येत्वित्याद्यासु प्रयाजयाज्यासु संबुद्ध्यन्ता अग्निशब्दा आम्नाताः । तेभ्यः पुरस्तात्क्रमेण संबुद्धिसप्तमीतृतीयाद्वितीयाविभक्त्यन्ता अग्निशब्दाः

षष्ठीसप्तम्य एवेति श्रौतसंप्रदायः ॥

---

**समिधोऽग्नेऽग्ने आज्यस्य व्येतु वौषट्, ये यजामहे भूर्भुवः सुवः तनूनपादग्नावग्न आज्यस्य व्येतु वौषट्, ये यजामहे भूर्भुवः सुवरिडोऽग्निनाऽग्ने आज्यस्य व्येतु ( वौषट् ), ये यजामहे भूर्भुवः सुवर्बर्हिरग्निमग्ने आज्यस्य व्येतु वौषट्** इति । प्रकृतौ तु—'समिधोऽग्ने आज्यस्य **व्येतु तनूनपादग्न आज्यस्य व्येतु इडोऽग्न आज्यस्य व्येतु बर्हिरग्न आज्यस्य व्येतु'** इति श्रुतौ संबुद्ध्यन्ताग्निशब्दघटितमात्रपाठः ॥ छान्दोग्यब्राह्मणे तु अन्यथा विभक्तय आम्नाताः । ताश्च हरिटीकायां प्रदर्शिताः । तथा हि—**ये यजामहे समिधः समिधोऽग्नेऽग्न आज्यस्य व्येतु वौषट्, ये यजामहे नराशंसोऽग्निमग्ने आज्यस्य व्येतु वौषट्, ये यजामहे इडोऽग्निनाऽग्ने आज्यस्य व्येतु वौषट्, ये यजामहे बर्हिरग्निरग्न आज्यस्य व्येतु वौषट्** इति ॥ तत्र तनूनपात्स्थाने नराशंसः प्रवरभेदेन स्थितः ॥ तथा च कातीयसूत्रम्—**वशिष्ठशुनकवध्यश्वसंकृतिराजन्यवैश्यकण्वात्रिकश्यपप्रजापशुकामानां नराशंसो द्वितीयः, तनूपादन्येषाम्'** इति ॥ आश्वलायनोऽपि पुनराधेयप्रकरणे इत्थम्·······**प्रयाजानुयाजान्विभक्तिभिर्यजेत—समिधः समिधोऽग्नेऽग्न आज्यस्य व्येतु, तनूनपादग्निमग्न आज्यस्य व्येतु, इळोऽग्निनाऽग्न आज्यस्य व्येतु, बर्हिरग्निरग्न आज्यस्य व्येतु'** इति ॥ कातीयब्राह्मणे तु पुनराधेयप्रकरणे—**ये यजामहेऽग्न आज्यस्य व्येतु वौषट् ये यजामहेऽग्निनाज्यस्य व्येतु ये यजामहेऽग्निराज्यस्य व्येतु'** इत्युक्तम् ॥ तत्सूत्रे तत्प्रकरणेऽप्येवम् ॥ तत्सूत्रे प्रकृते तु **समिधः समिधो व्येतु तनूनपादग्न आज्यस्य व्येतु नराशंसोऽग्न आज्यस्य व्येतु** इति। ··· ··· ··· ··· ··· ··· ··· ··· ··· ··· ॥ भारद्वाजसूत्रेऽप्येवम्—इति बोध्यम् ॥ इदं सर्वं यथासंप्रदायं······ग्रन्थादुपगन्तव्यम् ॥ तदेतन्मतद्वयं हृदि निधायाह—[८ मप०] **विभक्तयश्चेत्यादिना ॥**

---

प्रयुक्ताः'' इति प्रथमकाण्डे तृतीयप्रपाठके प्रथमानुवाके तैत्तिरीयब्राह्मणसायणभाष्यस्य चानुरोधादवसीयते—'नागेशविरचितभाष्यप्रदीपोद्द्योते केनचिद्विद्वत्तरेण षष्ठीविभक्तेर्नाम प्रक्षिप्तम्' इति; तत्तु न सम्यक् इति **दाधिमथाः ॥**

येषु प्रवरेषु यासु विभक्तिषु कृतद्विर्वचनानां चतुरक्षरत्वं भवति तद्विभक्त्यन्तानामेव प्रयोगश्च विहितत्वेन. संबुद्धितृतीयाचतुर्थीषु द्विर्वचने चतुरक्षरत्वाभावात् पञ्चम्या विशेषतो निषेधतश्च प्रथमाद्वितीयाषष्ठीसप्तम्येकवचनान्तानामेव प्रयोगः करणीयः, तत्प्रवरविहितविभक्तिसंग्रहार्थं षष्ठीविभक्तिनाम्नोऽपि सर्वशाखासाधारणेऽत्रावश्यकत्वम्—इति केचित् ॥ इदमेवोचितम्, तदुदाहरणं तु 'आदीक्षिष्टायं ब्राह्मणः—' इत्यस्य मन्त्रस्य प्रयोगकाले शेषत्वेन ब्राह्मणनामधेयविशेषं तदीयप्रवरं पठन्ति—असौ देवदत्तोऽमुष्यपुत्रोऽमुष्यपौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्ता इति । एतेषु प्रवरनामधेयेषु षष्ठ्या अप्यूहेन तस्या अप्यावश्यकत्वमिति ॥

२ **द्वितीयशङ्का**-सर्वविभक्तिविषया । ( र. ना. )

( प्रयोजनभाष्यम् )

[1]यो वा इमाम्—

"यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनो भवति" । आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणम् ॥ यो वा इमाम् ॥

( प्रदीपः ) **पदश इति** । पदं पदमिति **'संख्यैकवचनाच्च वीप्सायाम्'** इति शस् ॥ **स्वरश इति** । स्वरः–उदात्तादिः ॥ **अक्षरश इति** । अक्षरं-व्यञ्जनसहितोऽच् ॥ **आर्त्विजीन इति** । ऋत्विजमर्हतीति–आर्त्विजीनः=यजमानः । ऋत्विक्कर्मार्हतीति–याजकोऽप्यार्त्विजीनः । **'यज्ञर्त्विग्भ्यां घखञौ'** इति सूत्रेण **'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानम्'** इति वार्तिकेन च खञ् । **'विद्वान्यजेत विद्वान्याजयेत्'** इति द्वयोरपि विदुषोरधिकारात् ॥

( उद्योतः ) **व्यञ्जनसहित इति** । यथा **"ये यजामहे–इति पञ्चाक्षरम्"** इति । **'वर्णं वाऽऽहुः पूर्वसूत्रे'** इति भाष्यात् वर्णमात्रमित्यन्ये ॥ सकृत्प्रयुक्तार्त्विजीनशब्दस्योभयपरत्वे युक्तिमाह—**विद्वानिति** । वेदार्थज्ञ इत्यर्थः ॥

( प्रयोजनभाष्यम् )

चत्वारि—

"चत्वारि शृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति
महो देवो मर्त्याँ आविवेश ॥" इति ।

च[3]त्वारि श्रृङ्गाणि–पदजातानि, नामाख्यातोपसर्गनिपाताश्च ॥ त्रयो अस्य पादाः–त्रयः कालाः=भूतभविष्यद्वर्तमानाः ॥ द्वे शीर्षे–द्वौ शब्दात्मानौ–नित्यः कार्यश्च ॥ सप्तहस्तासो अस्य–सप्त विभक्तयः । त्रिधा बद्धः–त्रिषु स्थानेषु बद्धः–उरसि कण्ठे शिरसीति ॥ वृषभो वर्षणात् ॥ रोरवीति=शब्दं करोति ॥

---

[ भाष्ये ]—भाष्ये—**यो वा इमामिति** । यः वै-निश्चयेन **इमां**–संनिहितामपरोक्षां वाचं–वेदरूपां वाणीं पदं–पदं स्वरं–स्वरम् अक्षरं–अक्षरं विदधाति–संस्करोति स आर्त्विजीनो भवतीत्यर्थः ॥

[ भाष्ये ]—ननु किमेतावताऽत आह—[ भाष्ये ]–**आर्त्विजीना इति** । यजमाना ऋत्विजश्चेत्यर्थः । आर्त्विजीयायां[4] विदुषोर्विहितत्वेनाविदुषोरविहितत्वेन तत्सिद्धेर्व्याकरणायत्तत्वेन व्याकरणेन वैदुष्यसिद्धौ तत्त्वसिद्धिरिति भावः॥ तथा चैहिकामुष्मिकफललाभायाध्येयं व्याकरणमिति तत्त्वम् ॥ न चाध्यापकप्रातिशाख्यादितस्तज्ज्ञानमिति नेदं फलमिति वाच्यम् । दत्तोत्तरत्वात् ॥

[ प्रदीपे ]—कैयटे—**शसिति** । एवमुत्तरयोरपि ज्ञेयम् ॥ अक्षरशब्दस्य पृथगुक्तेरचः–स्वरान–इत्याह—**उदात्तेति** ॥ ब्रह्मादिव्यावृत्तये आह—**व्यञ्जनेति** ॥ हलामप्राधान्याद्वैपरीत्यशङ्का तु न कार्या ॥

[ प्रदीपे ]—कैयटे [ ७ मप० ] **वार्तिकेन**–तेनैव ॥ **इतीति** । इति श्रुतेरित्यर्थः ॥

[उद्द्योते १ मप०]—अत एवात्र मानमाह—उद्द्योते–**यथेति** ॥ **भाष्यात्**–उत्तराह्निकस्थात् ॥ **मात्र**शब्दः कार्त्स्न्येऽवधारणे वा ॥

[२ यभा०]—अथास्यापवर्गसाधनत्वमाह–भाष्ये–**चत्वारीति** ॥

[ २ यभा० ]—भाष्ये–**श्रृङ्गेति** । शेर्डादेशः[5] ॥ **त्रयो अस्येति** । **'प्रकृत्यान्तःपादं'** इति प्रकृतिभावः ॥ **शीर्षे** । शीर्षशब्दोऽकारान्तः क्लीबः ॥ **हस्तास** इत्यत्र **'आज्जसेः'** इत्यसुक् ॥ महशब्दोऽकारान्तो **'घञर्थे कविधानं'** इति कर्मणि कान्तः, महानित्यर्थः ॥ चतुःश्रृङ्गाद्यवच्छिन्नवृषभरूपता शब्दस्य प्रमीयमाणाऽपि प्रमाणबाधितेति गौण्या वृत्त्याऽबाधितार्थविषयतया व्याचष्टे—[ ६ छप० ] **चत्वारि श्रृङ्गाणीत्यादिना** । अत एव **शब्दस्य वृषभत्वेन निरूपण**मिति कैयटेनोक्तम् ॥

[ २ यभा० ]—तत्फलितमाद्यमर्थमाह—भाष्ये—[ ६ छप० ] **चत्वारिपदजातानीति** ॥

[२यभा०]—[6]श्रृङ्गान्तराण्याह—भाष्ये [६छप०]—**नामेति** ॥

[ २ यभा० ]—त्रिभिः प्रकारैर्बद्ध इति वाच्ये तात्पर्यवृत्त्याऽऽह भाष्ये [ १० मप० ] **त्रिष्विति** ॥ **बद्ध इति** । व्यञ्जकध्वन्यनुत्पत्तावनभिव्यक्त इत्यर्थः ॥

[२ यभा०]—भाष्ये [ ११ शप० ] **वृषभः** । वृषेरौणादिकोऽभच् किच्च । तदाह—**वर्षणादिति** ॥ इदं प्राग्वद् बोध्यम् ॥

---

१ अस्य प्रतीकस्य अ. पुस्तके न पाठः । २ 'क्षरच्चश्च' इति च. छ. पाठः । ३ 'चत्वारि पदजातानि' इति च. छ. पाठः । ४ क्रियायामिति शेषः । ऋत्विक्क्रियायां यजमानक्रियायां चेत्यर्थः । ( र. ना. ) ५ **'श्रृङ्गेति** शेर्डादेशः' इति छायाकारोक्तिस्तु 'शेश्छन्दसि बहुलम्' इति शिलोपे नलोपे च रूपसिद्धौ चिन्त्यैवेति **दाधिमथाः** । लोपद्वयकल्पनापेक्षया जसो डादेशकल्पनमेव वरं प्रक्रियालाघवादिति वयम् । ( र. ना. ) वस्तुतः पण्डितद्वयोक्तमप्येतत्प्रामादिकम् । शिलोपवादिनः–जसः शिआदेशे नुमागमात्पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वात् 'शेश्छन्दसि बहुलम्' इति लोपे प्रत्ययलक्षणेन नुमि प्रत्ययलक्षणेनैव दीर्घे तेनैव च नलोप इति पुनः पुनः प्रत्ययलक्षणरूपं गौरवमेवदुरूहम् । न त्वस्मिन् पक्षे किञ्चिदपि लाघवमिति स पक्षः पराहतः । जसो डादेशवादिनस्तु–जसो डादेशे कर्तव्ये प्राप्तस्य शिआदेशस्य बाधः, 'डा' आदेशः, टिलोपश्चेति कल्पनात्रयमिति तदपेक्षया शेर्डादेशकल्पनं न गरीयः । अतः शेर्लोपपक्षे पुनः पुनः प्रत्ययलक्षणरूपमेव गौरवं प्रदर्शनीयमिति छायोक्तिः सम्यगेव ॥ ६ परापश्यन्तीमध्यमावैखरीरूपश्रृङ्गापेक्षयाऽन्यानीत्यर्थः । ( र. ना. )

**कुत एतत् ?**

**रौतिः शब्दकर्मा ॥**

**महोदेवो मर्त्यां आविवेशेति । महान्देवः=शब्दः, मर्त्याः-मरणधर्माणो मनुष्याः, तानाविवेश । महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् ॥**

( प्रदीपः ) **चत्वारीति** । शब्दस्य वृषभत्वेन निरूपणम् ॥ **त्रयः काला इति** । लडादिविषयाः ॥ **नित्यः कार्यश्चेति** । व्यङ्ग्यव्यञ्जकभेदेन ॥ **सप्त विभक्तय इति** । सुप इत्यर्थः ॥ केचित्तु तिङामपरिग्रहप्रसङ्गात्सह शेषेण सप्त कारकाणि विभक्तिशब्दाभिधेयानि-इति व्याचक्षते ॥ **वर्षणादिति** । कामानां ज्ञानपूर्वकानुष्ठानफलत्वात् ॥ **महतेति** । परेण ब्रह्मणेत्यर्थः ॥

**(उद्द्योतः) चत्वारीति**-ऋङ्मन्त्रः ॥ **शब्दस्येति** । शब्दशास्त्रप्रतिपाद्यस्येत्यर्थः । वृषभाकारः शब्दशास्त्रप्रतिपाद्यः शब्दो रोरवीति । महान् देवः-अन्तर्यामिरूपः शब्दो मर्त्यानाविवेश-स्वाभेदमाविष्कृतवानिति मन्त्रतात्पर्यम् । महतो देवस्य-शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तदाविष्ट इव भवतीति यावत् ॥ भाष्ये-**पदजातानि**=परापश्यन्तीमध्यमावैखरीरूपाणि । अत एवाग्रे 'निपाताश्च' इति चकारः संगच्छते ॥ **नामाख्यातेति** । नामशब्देन सुबन्तं, नमति=आख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्तेः । **आख्यातं**-तिङन्तम् । उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन ॥ **व्यङ्ग्यः**-आन्तरः । **व्यञ्जकः**-वैखरीरूपः ॥ तिङ्विभक्तीनां षट्त्वादाह-**सुप इति** ॥ **सह शेषेणेति** । **शेषः**-षष्ठ्यर्थः, तत्सहितकारकाभिधायकत्वेन सुप्तिङोरुभयोरपि संग्रह इति भावः ॥ भाष्ये-**उरसीत्यादि** ।

**'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।**
**उरस्यं तं विजानीयात् ।'**

**'मूर्धन्या ऋटुरषाः'**

[१ मभाष्ये]—भाष्ये [१मप०] **कुत एतदिति** । उक्तोऽर्थः । तस्य-कस्मादित्यर्थः । रोरूयमाणमर्थमाह—भाष्ये [ ३ यप० ] **महानिति** ॥

[ प्रदीपे ]—ननु कालस्यामूर्तत्वेन कथमवयवत्वमत आह—कैयटे—**लडादीति** ॥ तथा च लडादीनां दशत्वेन त्रित्वासंभवात्तथा दुर्वचत्वेऽपि तद्द्योत्यकालस्य प्रसिद्धतरस्य त्रित्वात्तत्र विहितत्वेन लडादीन् त्रेधा विभज्य तद्द्योतकास्त्रेधा लडादयः पादा इत्यर्थः ॥ तेषामप्रयोगेऽपि तदादेशानां तत्संज्ञकानां प्रयोगसमवायात् ॥ एतेन 'कालस्यैकत्वादवान्तरभेदेनाधिक्याच्चेदं चिन्त्यम्' इत्यपास्तम् । उक्तहेतोः, तावतैव प्रसिद्धतरेण सर्वेषां ग्रहणे सिद्धेऽवान्तरभेदग्रहणे मानाभावाच्च ॥ यत्तु—''शब्दस्यात्मानौ 'ममायमात्मा' इत्यादाविवाभ्यर्हितत्वेन प्राधान्यमात्मशब्देनोच्यते स्वरूपत्वेन च प्राधान्यम् । तेन द्वौ शब्दौ व्यञ्जकौ स्फोटनादौ शीर्षे । केचित्तु—शब्दस्यात्मानौ वाच्यतया प्रधानभूतावर्थौ जातिव्यक्ती—इत्याहुः''—इति कृष्णः ॥ तन्न—इति ध्वनयन्नाह—कैयटे—[ ३ यप० ] **व्यङ्ग्येति** ॥

[४ थप० ]—कैयटे **केचिच्विति** । अत्रारुचिबीजं तु त्रयः काला इत्यनेनैव तेषां संग्रहः, अन्यथा······ ॥

[ उद्द्योते ]—प्रसिद्धशब्दस्य तादृशशृङ्गाद्यवयवकत्वासंभवादाह—उद्द्योते—**शब्दशास्त्रेति** । शब्दब्रह्मण इत्यर्थः ॥ 'स मर्त्यानाविवेशेत्याश्चर्यमत्र प्रतिपाद्यम्' इति रत्नकृदुक्त्यसांगत्यं ध्वनयन्नादौ मन्त्रतात्पर्यार्थमाह—[ २ यप० ] **वृषेति ॥ शब्द इति** । शब्दब्रह्मरूप इत्यर्थः ॥ रोरवीति-शब्दं करोति, किमित्यत आह—[ ३ यप० ] **महानिति** ॥ वक्ष्यमाणभाष्यानुरोधेनाह—**स्वाभेदमिति** । तेष्विति भावः ॥ नन्वेतावताऽपि प्रकृते किमत आह—[ ४ थप० ] **महत इति** ॥ अभेदस्य प्रतिपाद्यत्वादाह [ ५ मप० ] **इवेति** ॥ यद्वा यथाकथंचिद्व्याकरणज्ञस्य तदाविष्टत्वाभावादाह—**इवेति** ॥

[ उद्द्योते ]—'पदजातान्येव दर्शयति—**नामेत्यादि'** इति दण्डिकृष्णाद्युक्त्यसांगत्यायाह—उद्द्योते [ ६ ष्ठप० ] **परेति** ॥ तद्बीजमाह—**अत एवेति** ॥

[ उद्द्योते ]—विविक्तं तदर्थमाह—उद्द्योते [ ७ मप० ] **नामेति ॥ व्युत्पत्तेरिति** । सा च स्वार्थद्वारा सुबन्तस्यैवेति भावः ॥ **आख्यातं**-तच्छब्दप्रतिपाद्यम् ॥ निपातेनोपसर्गग्रहणस्य सिद्धत्वादाह—[ ९ मप० ] **उपसेति ॥ गोबलीति** । इदं च कैयटादिरीत्या । सिद्धान्ते तु ब्राह्मणवसिष्ठेति बोध्यम् ॥ तथा चायेन धात्वर्थद्योतकसर्वा··· ···अन्येन वाचकं त इति भेदः ॥ एतेन—'आख्यातशब्देनोपसर्गग्रहणात् तेन कर्मप्रवचनीयग्रहणम्'—इति कृष्णोक्तमपास्तम् । तेषामपि तद्विशेषद्योतकत्वेन तेनैवान्यवद्ग्रहणसंभवात् । पृथक्प्रयोगाभावेऽप्याख्यातान्तर्भावासंभवाच्च ॥

[ उद्द्योते ]—केचिन्मतरीत्या कैयटयोजनानिरासाय तद्व्याचष्टे—उद्द्योते—[ १० मप० ] **आन्तर इति** । मध्यमावस्थ इत्यर्थः ॥ [ ११ शप० ] **षट्त्वादिति** । त्रिकाणामित्यादिः । **'त्रयः कालाः'**इत्यनेन तेषां संग्रहाच्चेत्यपि बोध्यम् ॥ **सुप इतीति** । **'स्वौजस्-'** इत्यादिप्रथमादित्रिकरूपा इत्यर्थः ॥

[ उद्द्योते ] एवं च न वैरूप्यं नापि काचनानुपपत्तिरिति कैयटादयश्चिन्त्या एवेति बोध्यम् । तदेतद्ध्वनयन्नाह—उद्द्योते [ १२ शप० ] **इति भाव इति** । अत एव **'षट्त्वात्'** इत्येव हेतुः पूर्वमुक्तः ॥ आदाने यथा हस्तस्य व्यापारः, तथा प्रातिपदिकार्थाभिधाने विभक्तिव्यापार इति तासां हस्तत्वमिति भावः ॥

[ उद्द्योते ]—ननूरसो न स्थानत्वं कण्ठादिवद्बहिर्भावादत आह—उद्द्योते [ १४ शप० ] **हकारमिति** ॥ यत्तु रत्नकृत्—अनुस्वारयमानां नासिकारूपं शिरः स्थानम्—इति । तन्न, तयोर्भेदस्य स्पष्टत्वात् । तद्ध्वनयन्नाह—**स्युर्मूर्धन्या इति** ॥ अयं चाग्रे हेतुः ॥

१ **तिङामिति** । चत्वारीत्यादिभाष्यव्याख्याने तिङामपरिग्रहात्न्यूनतावारणाय 'सप्तविभक्तयः' इत्यनेन तिङामपि ग्रहणम् । शेषः षष्ठ्यर्थ एकः, कर्त्रादिकारकाणि षट्-इति सप्त भवन्ति । कारकपदेन च तिङां शेषातिरिक्तसुपाञ्च ग्रहणम् । एवञ्च सप्तविभक्तय इत्यनेन सुपां तिङाञ्च ग्रहणमिति भावः ॥ २ 'स्युर्मूर्धन्या' इति च. पाठः । ३ अत्र मूल-पुस्तकपाठः सन्दिग्धः 'साचस्यार्थद्वा–' इत्युपलभ्यते । ४ 'गोशब्दः स्त्रीगवीणामेव वाचकः प्रायेण' इत्येकशेषप्रकरणे वक्ष्यमाणत्वादत्र कथं 'गोबलीवर्दन्यायेन' इत्युक्तमत आह—**कैयटादीति** ॥ दाधि० ॥ ५ अत्र पाठः खण्डितः । 'द्योतकसर्वेषां ग्रहणम्, अन्येन वाचकानामिति भेदः' इत्याशयकस्तर्कगोचरः ॥

इत्युक्तेर्मूर्धैव शिरः ॥ **'कण्ठे'** इत्यनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते ॥ ननु वर्षति=मूत्रेण भूमिं सिञ्चतीति–वृषभ इत्युच्यते, तत्कथं शब्द एवम्? इत्यत आह—**कामानामिति** । मेघ उदकमिवोक्तचतुश्शृङ्गत्वादिगुणवैशिष्ट्येन ज्ञानपूर्वकं प्रयोगेण कामानां दानादित्यर्थः । द्विश्शृङ्गद्विपाद्विकरकण्ठमात्रबद्धलौकिकवृषभादस्य व्यतिरेकः ॥ किं रोरवीति, तत्राह—भाष्ये–**महान् देव** इत्यादि । महान्-परब्रह्मस्वरूपो देवः=अन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः । तदावेशफलमाह—**महता देवेनेति** । **साम्यं**=सायुज्यम् । तदुक्तं हरिणा—

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥**

"आह च—**चत्वारि शृङ्गा त्रयो अस्य पादा** इत्यादि ऋग्मन्त्रः । इह द्वौ शब्दात्मानौ–कार्यो नित्यश्च । तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभः, तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहंकारग्रन्थीन् अत्यन्तं संसृज्यते" इति तदर्थं तद्व्याख्यातारः ॥

( भाष्यम् )

**अपर आह—**

**"चत्वारि वाक्परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति**
**तुरीयं वाचो मनुष्या वदन्ति ॥"**

**'चत्वारि वाक्परिमिता पदानि' चत्वारि पदजातानि–नामाख्यातोपसर्गनिपाताश्च**[1] **॥ 'तानि विदुर्ब्राह्मणा ये मनीषिणः ।' मनस ईषिणः–मनीषिणः ॥ 'गुहा त्रीणि निहिता नेङ्गयन्ति' गुहायां त्रीणि निहितानि नेङ्गयन्ति=न चेष्टन्ते, न निमिषन्तीत्यर्थः ॥ 'तुरीयं वाचो मनुष्या वदन्ति ॥' तुरीयं वा एतद्वाचो**[2] **यन्मनुष्येषु वर्तते । चतुर्थमित्यर्थः ॥ चत्वारि ॥**

(प्रदीपः) **'चत्वारि'** इत्यनेनैकदेशेन सदृशेन वाक्यान्तरमपि सूच्यत इत्याह—**अपर आहेति** । परिमितानि–इति प्राप्ते **'शेश्छन्दसि बहुलम्'** इति शेर्लोपे परिमिता–इति भवति । परि-…तदाह—**सर्वेश्वर इत्यादि** ॥

[ उद्योते ]—**एवेनान्यनासिकादिव्यावृत्तिः** ॥ न्यूनतां परिहरति—**कण्ठ इति** ॥ उद्योते [ १७ शप० ] **इत्युच्यत इति** । लोके इति शेषः ॥ **एवं**–वृषभः । तत्त्वस्याभावात् । तथाच ज्ञानपूर्वकप्रयोगेण फलस्य कामस्य सकलस्य वर्षणादिति भाष्यार्थो बोध्यः । तदाह—उद्योते [ १८ शप० ] **मेघ इति** ॥ **इव**-शब्दोत्तरम् **"अयं शब्दरूपो वृषभः सर्वान् कामान् वर्षति"** इति शेषः ॥ अत्र हेतुं प्रतिपादयन् कैयटार्थमाह—**वोक्तेति** ॥ एवं च वृषभस्यातिशयः ॥ **कामानां**–स्वर्गमोक्षादीनाम् । एतावतैवास्य कामवर्षकत्वम् ॥ अतिशयवैशिष्ट्यादेव ततोऽस्य वैलक्षण्यमाह—**द्विश्शृङ्गेति** ॥ अग्निमयोः करत्वेन ग्रहणात् **'द्विपात्'** इत्युक्तम् ॥

[ उद्योते ]—तदर्थमाह उद्योते [ २१ शप० ] **महानिति** । एतेनाविष्टः सन् शब्दान् करोतीति मन्त्रार्थः ॥ **न च** शब्दस्य शब्दे कथं कर्तृत्वम् । न वाय्वादिशब्दाभिप्रायेण तत्, अनित्यतापत्तेरिति **वाच्यम्** । तेन[3] क्रियाविशेषस्य लक्ष्यत्वेन शब्दो ध्वनिः स्वव्यञ्जकमपेक्षत इत्यर्थसंभवादिति तथाङ्गीकारात् ॥ यद्वा–परादिषु पूर्वस्याः परत्र कर्तृत्वम् ॥ [ २३ शप० ] **फलमाहेति** । तत्फलं सूचयन् एतावता प्रकृते किमायातम्–तदाहेत्यर्थः ॥ **महता देवेनेतीति** । शब्दब्रह्मणेत्यर्थः ॥ यत्तु—साम्यम्–अवैकल्यं पूर्णतेति यावत्—इति रत्नकृत् । तन्न–इति ध्वनयन्नाह—**सायुज्यमिति** । ऐक्यमित्यर्थः ॥ इदमेव ध्वनयन्नत्र संमतिमाह—**तदुक्तमिति** । [ २६ शप० ] **'मिष्यते** इति ॥' इति पाठः ॥ तद्व्याख्यातृग्रन्थमाह—[ २७ शप० ] **आह चेति** ॥ उक्तमर्थमाह—[ २८ शप० ] **इहेति** । मन्त्र इत्यर्थः । प्रतिपाद्याविति शेषः ॥ **कार्यः**–व्यञ्जको वैखरीरूपः ॥ **नित्यः**–व्यङ्ग्य आन्तरो मध्यमावस्थः ॥ अयं चाविद्यावृतत्वेन घटस्थितदीप इव नानाविषयान् भासयन्[4] … … … … … … … … …

… तदाह—**सर्वेश्वर इत्यादि** ॥ [ २९ शप० ] तस्मिन्नित्यस्य संसृज्यत इत्यत्रान्वयः ॥ **वाग्योगविद्**–उक्तलक्षणो वैयाकरणः ॥

[ भाष्ये ]—ईषन्ति ते–ईषिणः, औणादिक इनिः कर्तरि । शकन्ध्वादित्वात्पररूपम् । मनस इति कर्मणि षष्ठी ॥ **'सुप्यजातौ–'** इत्यस्य तु न प्राप्तिः, मनःशब्दस्य जातिवाचकत्वात् । तदेतदभिप्रेत्याह—भाष्ये [ ८ मप० ]—**मनस ईषिण इति** ॥ अन्यथा मन ईषन्ति ते–मनीषिण इत्युक्तं स्यात् ॥

[ भाष्ये ]—भाष्ये [ ९ मप० ]—**निहितेति** । परिमितेतिवत् । **नेङ्गयन्तीत्यत्र** हेतुरयम् । यतो गुहायां त्रीणि परादीनि त्रिभिरंशैरवच्छिन्नानि च नामादीनि पदानि निहितानि अतो **नेङ्गयन्ति**, अस्यैव व्याख्यानं **'न चेष्टन्ते'** इति, अस्य न प्रकाशन्त इत्यर्थः ॥ [ १० मप० ] **न निमिषन्तीत्यर्थ इति** । स्फुटप्रतिपत्त्यर्थमनेकपर्यायोपादानम् ॥

[ भाष्ये ]—नन्वेवं कथं मनुष्याणामवैयाकरणानां शब्देन व्यवहारोऽत आह—भाष्ये [ ११ शप० ]—**तुरीयमिति** । वाचः परादेर्नामादेश्च प्रत्येकं तुरीयं चतुर्थं भागं वैयाकरणतोऽन्ये मनुष्या वदन्तीत्यर्थः ॥

[ भाष्ये ]—नन्वनादिलौकिकवैदिकव्यवहारे कथं भागत्रयोत्सादोऽत आह—भाष्ये [ ११ शप० ] **तुरीयमिति** ॥ तदर्थमाह—[ १२ शप० ] **चतुर्थमिति** ॥ **ह वै** इति प्रसिद्धौ ॥ **वै** इत्येव पाठे वैशब्दो निश्चये ॥

[ प्रदीपे ]—कैयटे [ १ मप० ] **नैकदेशेनेति** । प्रतीकग्रहणकाल उक्तेनेत्यर्थः ॥ तत्सूचने बीजमाह—**सदृशेनेति** ॥ **वाक्यान्तरमिति** । एवंच प्रतिपाद्यभेदाद्वक्तृभेदेन व्यपदेश इत्याशयेन **'अपर आह'** इत्युक्तमिति भावः ॥ वस्तुतस्तु प्रोक्तमन्त्रस्य यज्ञादावग्निविषयत्वेनान्यत्र वर्णितत्वात् केनचिच्छिष्येणोक्ते

१ **निपाताश्चेति** । चशब्दोऽयं परापश्यन्तीमध्यमावैखरीणामपि संग्रहं बोधयति; अन्यथा तस्यानर्थक्यापत्तेः । पदजातानीत्यस्य नामेत्याद्येव व्याख्यानसत्त्वे चशब्दानुपयोगः । नामाख्यातादीनामपि परेत्यादिरूपचतुष्टयं वर्तते एव । एवमेव पूर्वस्मिन्नपि भाष्यव्याख्याने बोध्यम् ॥ २ 'तुरीयं ह्वा एत–' इति पाठश्छायाकारदृष्टः ॥ ३ **तेन**–कर्तृत्वेन । अत्रापि सन्दिग्ध एव पाठ उपलभ्यते–'तेन क्रियाविशेषस्य लक्ष्यत्वेन शब्दो ध्वनिः स्वव्यञ्जकमपेक्षत इत्यसम्भवादिति कथाङ्गीकारात्' इति ॥ ४ अपि न गृह्यते व्यञ्जकं विनेत्यर्थकः पाठो भाति । ( र. ना. )

मितानि=परिच्छिन्नानि, एतावन्त्येवेत्यर्थः ॥ मनीषिशब्दः **पृषोदरादि**त्वात्साधुः ॥ कथं मनीषिण एव विदन्तीत्याह—**गुहेति** । अज्ञानमेव गुहा, तस्यामित्यर्थः । '**सुपां सुलुक्-**' इति सप्तम्या लुक्, व्याकरणप्रदीपेन तु तानि प्रकाशन्ते । तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थं भागं मनुष्याः=अवैयाकरणा वदन्ति । **नेङ्गयन्ती**त्यस्यैव व्याख्यानं न चेष्टन्ते, न निमिषन्तीति ॥

**(उद्द्योतः) एतावन्त्येवेति । वाक्परिमितानी**ति षष्ठीतत्पुरुषः । **पदजातानि**–परापश्यन्तीमध्यमावैखर्यः, नामादीनि च । नामादिमध्ये च एकैकं चतुष्पादम् ॥ भाष्ये—**मनस ईषिणः**–चित्तशुद्धिक्रमेण वशीकर्तारः, विषयान्तरेभ्यो व्यावृत्त्या हिंसका वा । ते च वैयाकरणाः ॥ अन्येषां तदज्ञाने हेतुमाह—**गुहेति** । **एकैकस्य**–नामादिरूपस्य चतुर्थं भागम्, एकैकस्य चतुरंशत्वात् । परादीनां[1] वा त्रयोंऽशा मध्यमान्ताः । **गुहा**–अज्ञानं[2], हृदयादिरूपा च । वैयाकरणस्तु शास्त्रबलेन–तद्बललब्धयोगेन च गुहाऽन्धकारं विदार्य सर्वं जानातीति भावः ॥ **न निमिषन्तीति**–ज्ञानसामान्यविषयत्वाभाव उच्यते ॥ भाष्ये—**यन्मनुष्येषु वर्तते**–ज्ञानविषयतया तत् वाचश्चतुर्थमित्यन्वयः । तस्मात्सकलपदज्ञानाय मनीषित्वाय वाऽध्येयं व्याकरणमिति शेषः । हरिरप्याह[3]—

मन्त्रे भगवता व्याख्याते छात्रान्तर्गतेनान्येनासंदिग्धवाग्विषयमन्त्रे उक्ते तं व्याख्यातुमाह—'**अपर आह**' इतीति बोध्यम् ॥ भगवतैवास्यान्यमतत्वेनोक्तिरि**त्यपरे** ॥

[ प्रदीपे ]—कैयटे [ ५ मप० ] **इत्याहेति** । इत्यतस्तत्र हेतुमाहेत्यर्थः ॥

[ प्रदीपे ]—गुहापदार्थमाह कैयटे [ ६ छप० ] **अज्ञानमेवेति** । शास्त्राद्यज्ञानमपीत्यर्थः । एवोऽप्यर्थः । अत एव 'गुहा अज्ञानं हृदयादिरूपा च' इत्युद्द्योत उक्तम् ॥ गुहायामिति प्राप्ते आह—**सुपामिति** ॥ तेषां वेदने हेतुमाह—**व्याकेति** ॥

[ प्रदीपे ]—तदाह—कैयटे [ ७ मप० ] **तत्रेति** । तेषामित्यर्थः ॥

[ उद्द्योते ]—**वागिति** '**सुपां सुलुक्-**' इति षष्ठ्यन्तमित्याशयेनाह—कैयटे—**परिमितेत्यादि** ॥ कृष्णोऽप्येवम् ॥ तदसत्, न्यायेनैव निर्वाहे तत्कल्पनानौचित्यात् इति ध्वनयन्नाह उद्द्योते—**वाक्परीति** ॥ तथाच **वाचः**–शब्दस्य परिमितानि–परिच्छिन्नानि एतावन्त्येव पदानि सन्ति तान्येव विदन्तीत्यर्थो बोध्यः ॥

[ उद्द्योते ]—प्राग्वत् कृष्णाद्युक्तेरसांगत्याय **चत्वारि वाक्परिमिता पदानी**त्यस्याद्यार्थस्य भाष्योक्तमर्थमाह उद्द्योते—[ २ यप० ] **परेति** ॥ **चत्वारि वाक्परिमिता पदानी**त्यस्य द्वितीयार्थं भाष्योक्तं विशेषं वक्तुमनुवदति—**नामादीनि चेति** ॥ चरमपादानुरोधेनाह—**नामादीनां मध्ये चेति** ॥ **चतुष्पादमिति** । परादिभिरेवेति भावः ॥ ये ब्राह्मणा मनीषिणश्च ते तानि सर्वाणि पदजातानि विदन्ति. प्रवचनावृत्त्या पारगमनस्य वर्णान्तरेष्वभावात् ब्राह्मणा इत्युक्तम् ॥ यद्वा—वेदाख्यं ब्रह्म साङ्गोपाङ्गं विदन्तीति ब्राह्मणाः । '**ब्राह्मोऽजातौ**' इति टिलोपाभावश्छान्दसः ॥

[ उद्द्योते ]—अत एव तथैव व्याचष्टे उद्द्योते—[ ४ थप० ] **चित्तेति** ॥ '**ईर्ष**[4] ऐश्वर्ये' इत्यस्य रूपमित्याशयेनाह—**वशीति** ॥ **ईष** गतिहिंसादर्शनेष्वित्यस्य रूपमित्याशयेनाह—**विषेति** । मुख्यहिंसाया असंभवादिति भावः ॥ ते चान्ये न–इत्याह—**ते चेति** । वैयाकरणा एवेत्यर्थः । वक्ष्यमाणहेतोरिति भावः ॥ अत एवाह—**अन्येषामिति** ॥ अयं च कैयटीयैवकारसूचितोऽर्थः ॥ **मनीषिशब्दः पृषोदरादित्वात्साधु**रिति कैयटस्तु 'शकन्ध्वादित्वं नैव कल्प्यम्, कल्पनायां वाऽविशेषः' इत्याशयकः ॥

[ उद्द्योते ]—एवं द्वितीयव्याख्यानाशयेनोक्तं कैयटे न्यूनतां परिहरन् **पदानी**त्यस्याद्यव्याख्यानाशयेनाह—उद्द्योते [ ७ मप० ] **परेति** ॥ एवंच तासां मध्ये चतुर्थभागं वैखर्याख्यं मनुष्या वदन्तीत्यर्थः ॥ [ ७ मप० ] **आदिना** नाभ्याधारयोर्ग्रहणम्[5] ॥ तेषां वेदने कैयटोक्तहेतुं विशदयति—**वैयेति** ॥ नामादिपक्षे आह—**शास्त्रेति** ॥ परादिपक्षे आह—**तद्बलेति** ॥ **गुहाऽन्धेति** ॥ अज्ञानान्धकारं हृदयाद्यन्धकारं चेत्यर्थः ॥ ननु '**न निमिषन्ति**' इत्यस्य कथं तद्व्याख्यात्वमर्थभेदादत आह—[ ९ मप० ] **ज्ञानेति** । धातूनामनेकार्थत्वादिति भावः ॥

[ उद्द्योते ]—तस्याकाशवृत्तित्वेन मनुष्यावृत्तित्वादाह—उद्द्योते [ १० मप० ] **ज्ञानेति** । प्रतिपुरुषं व्यवहारसाधनत्वेन त्वेषु यद्वर्तते तत्तुरीयम् । नानादेशेषु नानाशाखासु च कथं कथमपि विप्रकीर्णाञ्छब्दानन्विष्यापि तुर्यभाग एव ज्ञायते नान्य इति प्रतिपुरुषसमवेताज्ञानविषयत्वोक्तौ नानादिव्यवहारविरोधः ॥ भाष्ये न्यूनतां परिहरति उद्द्योते [ ११ शप० ] **तस्मादिति** ॥ नामादिपक्षे आह—**सकलेति** ॥ परादिपक्षे आह—**मनीति** ॥ '**य च**' इति पाठः ॥ '**वा**' इत्ति पाठे स समुच्चये ॥ अत्रैव संमतिमाह—[ १२ शप० ] **हरिरि**ति ॥ **एतद्**–व्याकरणम् । अन्यतो विशेषा-

१ **नामाख्यातोपसर्गनिपातश्चे**तिच शब्देन परापश्यन्तीत्यादीनामपि संग्रहात् **परादीनामि**त्युपादानम् । तत्र त्रयोंशा मध्यमान्ता हृदयादिरूपायां गुहायां वर्तन्ते इति चतुर्थं भागं वैखरीरूपं मनुष्या वदन्तीत्यन्वयः । अवैयाकरणोऽज्ञानात् वैखरीरूपमेव जानाति व्यवहरति च । वैयाकरणस्तु परादिमध्यमान्ता जानाति, व्यवहरति च वैखरीरूपेणैवेति तात्पर्यम् ॥ २ **अज्ञानमिति** । अवैयाकरणपक्षे गुहा–अज्ञानम्, वैयाकरणपक्षे हृदयादिरूपेत्यर्थः । वैयाकरणानामज्ञानासम्भवात् ॥ ३ ननु भाष्यकृतः स्वत एव प्रमाणत्वेन तत्र हर्यादीनामुपन्यासो वृथेति शङ्कावारणायाह—**हरिरपीति** । **अपि**शब्देन हरिसंमतिप्रदर्शन एव तात्पर्यम् । सा च भाष्यकृदुक्तग्रन्थस्य व्याख्यानं मदीयमुचितमित्यत्रार्थे । वैखरीमध्यमापश्यन्तीरूपायास्त्रय्या वाचः शब्दाद्यनेकभेदभिन्नाया **अद्भुतं**–अपूर्वं सामान्यविशेषवत् प्रकृतिप्रत्ययादिविलक्षणं व्याकरणमेव **परं**–उत्तमं स्थानमित्यर्थः, योगिनामपि परायां भेदज्ञानं प्रकृतिप्रत्ययादिरूपं न भवतीति त्रय्या वाचो भेद उक्तः ॥ ४ 'ईष उञ्छे' इत्यस्यैव वशीकरणस्य यथाकथंचिदादानरूपत्वेन संभवादेतद्रूपमिति बोध्यम् । ऐश्वर्यार्थकस्य तालव्यान्तत्वात् । इति **दाधिमथाः** ॥ ५ आधारो मूलाधारचक्रं परास्थानं, नाभिः पश्यन्त्याः, हृदयं मध्यमायाः ॥

**वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम्॥**

तत्र श्रोत्रविषया **वैखरी। मध्यमा** हृदयदेशस्था पदादिप्रत्यक्षानुपपत्त्या व्यवहारकारणम्। **पश्यन्ती** तु लोकव्यवहारातीता। योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति। **परायां** तु नेति **त्रय्या** इत्युक्तम्,

**"[१]स्वरूपज्योतिरेवान्तः परा वागनपायिनी।**
**तस्यां दृष्टस्वरूपायामधिकारो निवर्तते॥"** इत्युक्तेः।

**अनेकतीर्थभेदायाः**—नामाख्यातादि-वीणावेणुमृदङ्गशब्दादिरूपानेकभेदायाः। आह खल्वपि—**चत्वारि वाक्परिमिता पदानि**—इति क्षज्ञान्त इति तद्व्याख्यातारः॥

( भाष्यम् )

उ[३]तत्वः—

**"उत त्वः पश्यन्न ददर्श वाच-**
**मुत त्वः शृण्वन्न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे**
**जायेव पत्य उशती सुवासाः॥"**

**अपि खल्वेकः पश्य[३]न्न पश्यति, अपि खल्वेकः शृण्वन्न शृणोत्येनामिति-अविद्वांसमाहार्धम्॥**

दाह—**अद्भुतमिति**। तस्या वाच एतद्-व्याकरणमद्भुतं **परम्**-उत्कृष्टं **पदं**-स्थानमित्यन्वयः। **'पदम्॥ इति'** इति पाठः॥ तद्व्याख्यातृग्रन्थमाह—[ १५ शप० ] **तत्रेति**। तासां मध्य इत्यर्थः॥ **श्रोत्रेति**। स्व-परान्यतदीयेत्यादिः। मध्यमैव चास्यपर्यन्तं गच्छता तेन वायुना कण्ठदेशं गत्वा मूर्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदैवत्या **वैखरी** वागित्यर्थः॥ प्रणव एव व्यानोदानाभ्यां सह वैखरीरूपं प्रतिपद्यते इति यावत्॥ इयं च वाय्वादिपरिणामरूपा कण्ठताल्वाद्यभिघातजन्यैव॥ अत एव—

**'[४]वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।**
**कैश्चिद्दर्शनभेदोऽत्र प्रवादेष्वनवस्थितः॥'**

इति हरिः॥ **वायोः**-प्राणादिरूपस्य। **अणूनां**-शब्दतन्मात्रपरमाणूनाम्,

**'[५]अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः।'** इति तदुक्तेः॥

**ज्ञानस्य** वक्तृज्ञानस्य, पराशक्तिसाहित्येन च तत्तत्परिणाम इति बोध्यम्॥ **कैश्चि**दित्यनेन पराशक्तेरेव मध्यमावत् परिणामविशेषोऽन्येषां मते वैखरीति सूचितम्। तदाह—**प्रवादेषु**-शास्त्रेषु॥ **अत्र** विषये **दर्शनभेदः**-सिद्धान्तभेदोऽनवस्थित इत्यर्थः॥ [ उ० १५ शप० ] **मध्यमेति**। पश्यन्त्येव हृदयपर्यन्तमागच्छता तेन वायुना हृदयदेशेऽभिव्यक्ता तत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदैवत्या परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा **मध्यमा** वागित्यर्थः। स्वयं कर्णपिधाने सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगे च श्रूयमाणेयम्॥ अस्या व्यवहारोपयोगित्वमाह—**पदेति॥** [ उ० १६ शप० ] **पश्यन्तीति**। पराख्यमेव नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्तं मनोविषयः **पश्यन्ती** वागित्यर्थः॥ इयं सूक्ष्मतरा ईश्वराधिदैवत्या योगिनां समाधौ सविकल्पकज्ञानविषय इति भावः॥ तत्र तदभावे हेतुमाह—**स्वरूपेति॥**

**'वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा।**
**आन्तरार्था च पश्यन्ती सूक्ष्मा वागनपायिनी॥'**

इत्यप्युक्तम्। **आन्तरं** स्वरूपज्योतिरेव। **सूक्ष्मा** सूक्ष्मतरेति तदर्थः॥ [ उ० २० शप० ] **मधीति**। लौकिक इति भावः॥ अयं भावः—बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानं रवादिशब्दव्यवहार्यम्। एतत्सर्वगतमपि प्राणिनां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते॥ ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपवनस्य संस्कारः। तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निस्पन्दं **परा** वाक्। इयं सूक्ष्मतया योगिनां समाधौ निर्विकल्पकज्ञानविषयः॥ तदुक्तम्—

**'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥'**

श्रुतिश्च—**"वागेवार्थं पश्यन्ती वागजीवीति वागर्थं निहितं संतनोति वाचैव विश्वं बहुरूपं निबद्धं तदेकस्मादेकं प्रविभज्योपभुङ्क्ते"** इति॥ एतदवस्थात्रयमपि सूक्ष्मतमसूक्ष्मतरसूक्ष्मप्रणवरूपम्॥ [ २१ शप० ] **अनेकेति**। अनेके तीर्थतः शास्त्रतो भेदा यस्या इत्यर्थः॥ **[६]आदिभ्याम्**—उपसर्गनिपातापभ्रष्टभेरीशब्दादिरूपसंग्रहः॥ भागवतेऽप्युक्तम्—

**'स एव जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।**
**मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरा वर्ण इति स्थविष्ठः॥'**

इति॥ **विवरेषु**-आधारादिषु प्रसूतिरभिव्यक्तिर्यस्येत्यर्थः॥ बिन्दुतः प्राक्प्रक्रिया तु मञ्जूषादौ स्पष्टा॥ विस्तरोऽपि तत एव ज्ञेयः॥

[ भाष्ये ] देवताप्रसादजनकं चैतदित्याह—भाष्ये—**उतत्व इति**। अत्रोतशब्दोऽप्यर्थे खल्वर्थे वा। एवं च अन्यतरस्यार्थिको लाभः, अध्याहारो वा॥ त्वशब्दोऽन्यार्थ एकत्वावच्छिन्नार्थो वा॥ एकोऽवैयाकरणो निश्चयेन एनां वाचं स्वरूपेण पश्यन्नपि स्वभ्यस्यन्नपि न पश्यति न जानाति, अर्थापरिज्ञानात्॥ एवमन्य एनां स्वरूपेण शृण्वन्नपि उक्तहेतोरेव न शृणोति फलाभावात् इति भाष्यार्थः॥ **इतिरर्धार्थसमाप्तौ**॥ अत एवात्र योग्यं कर्तारं सूचयन्नुपसंहरति—**अविद्वांसमिति॥**

१ परायां योगिनामपि प्रकृतिप्रत्ययविभागावगतिर्नास्तीत्यत्र मानमाह—**स्वरूपज्योतिरित्यादि**। इयं परावागन्तःस्वरूपज्योतिरेव **अनपायिनी**-प्रकृतिप्रत्ययविभादिशून्याऽविचाला वर्तते। स्वरूपमात्रोपलब्धायां तस्यां व्याकरणादीनामधिकारो निवर्तते इति तदर्थः। **'स्वरूपज्योतिरेवान्तः सैषा वा—'** इति कारिकापाठः॥ २ अ. पुस्तके न प्रतीकपाठः। ३ 'पश्यन्नपि न पश्यति वाचम्' इति च. पाठः॥

४ **वायोरिति**। कैश्चित् वायोर्वा अणूनां वा ज्ञानस्य वा शब्दत्वापत्तिरिष्यते। एवं दर्शनभेद एषु भिन्नेषु भिन्नेषु प्रवादेष्वनवस्थित इति तदर्थः॥ ५ अणूनामित्यस्य शब्दतन्मात्रपरमाणूनामिति व्याख्याने प्रमाणमाह—**अभ्राणीवेति**। यथाऽभ्राणि वायुना एकत्रीभूय प्रवर्धन्ते तथा शब्दरूपाः परमाणवः प्रवर्धन्त इत्यर्थः॥ ६ **आदिभ्यां**—नामाख्यातादि—मृदङ्गशब्दादि—इति आदिशब्दाभ्यां।

**उतो त्वस्मै तन्वं विसस्रे=तनुं विवृणुते । जायेव पत्य उशती सुवासाः । तद्यथा—जायेव पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाक् वाग्विदे स्वात्मानं विवृणुते ॥ वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् ॥ उत त्वः ॥**

**( प्रदीपः ) उत त्व इति ।** त्वशब्दोऽन्यवाची । **उत**-शब्दः-अपिशब्दस्यार्थे । स च भिन्नक्रमः, प्रत्यक्षेण शब्दस्वरूपमुपलभमानोऽप्यर्थापरिज्ञानान्न पश्यतीत्यर्थः ॥ **उतो इति ।** 'उत-उ' इति निपातसमाहारः ॥ **अविद्वांसमाहार्धमिति ।** अविद्वल्लक्षणमर्थमर्द्धर्चे आहेत्यर्थः ॥

**( उद्द्योतः ) उतत्व इति ।** 'उत'शब्दोऽप्यर्थे ॥ बहूनामपि समानपृष्ठोदरपाणिपादानामध्ययनमधीयानानामेकः कश्चित्पश्यन्नपि स्वभ्यस्ताध्ययनोऽपि तीक्ष्णबुद्धिरपि सन्न पश्यति, अर्थानभिज्ञत्वात् । अर्थपरिज्ञानफला हि वाक्-इत्यभिप्रायः । **एवं**-एकः शृण्वन्नपि न शृणोत्येनां वाचम्, य एव ह्यर्थं सम्यगवबुध्यते तेनैव सा सम्यक् श्रुता भवति ॥ एवमर्धेनाविद्वांसं निन्दित्वाऽर्धान्तरेण विद्वांसं स्तौति-

**उतो त्वस्मै ।** अप्येकस्मै=कस्मैचिद्वैयाकरणाय तन्वं=शरीरं विसस्रे=विवृणोति-प्रकाशयति । सम्यक् ज्ञानं हि प्रकाशनमर्थस्य । अर्थो हि वाचः शरीरम् ॥ अथोपमायुक्तयोत्तमया वाचाऽन्त्यपादेनार्थज्ञं प्रशंसति-यथा जाया विवृतसर्वाङ्गावयवा भूत्वोशती=कामयमाना भर्त्रे प्रेम्णा दर्शयत्यात्मानम् । कस्मिन् काले ? यदा सुवासाः=निर्णिक्तवासा नीरजस्का ऋतुकालेषु, तदा ह्यतितमां स्त्री पुरुषं प्रार्थयते । यथा स पुरुषस्तां यथावत्पश्यति, शृणोति तद्वचनार्थं; नान्यदा घनपटप्रावृतशरीराम् । **एवं**-स एवैनां वाचं पदशः प्रकृतिप्रत्ययविभागेन विगृह्यार्थमस्याः पश्यति शृणोति चेति । अयमर्थो निरुक्तताद्भाष्ययोः ( १ अ० १९ ख० ) स्पष्टः । भाष्ये—**वाग्विदे=**वैयाकरणाय ॥

( भाष्यम् )

**सक्तुमिव—**

**"सक्तुमिव तितउना पुनन्तो**
**यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते**
**भद्रैषां लक्ष्मीर्निहिताऽधिवाचि ॥"**

**सक्तुः—सचतेर्दुर्धावो भवति, कसतेर्वा विपरी-**

---

[ भाष्ये ] तदेवाह—भाष्ये—[ ८ मप० ] **उतो त्वस्मै इति । उत**शब्दोऽप्यर्थे । उशब्दो निश्चये ॥ एकस्मै स्वतनूमपि निश्चयेन विसस्रे-प्रकाशयति । सृधातोः **'छन्दसि लुङ्लङ्लिटः'** इति वर्तमाने लिट् । धातूनामनेकार्थत्वात्प्रकाशने वृत्तिः ॥ एवं ददर्शेत्यत्रापि बोध्यम् ॥ अत एव भगवता तथैव व्याख्यातम् ॥ **'अमि पूर्वः'** इत्यत्र **'वा छन्दसि'** इत्यनुवृत्त्या तन्वमित्यत्र यणादेशः । तदेतद् ध्वनयन्नाह—**तनुं विवृणुत इति ।** अर्थरूपमित्यर्थः ॥ एतेन कृत्स्नां शब्दार्थरूपामिति कृष्णोक्तमपास्तम्, निरुक्तादिविरोधात् ॥ उक्तं दृष्टान्तं विशदयति—**तद्यथेति ॥** पत्ये **उशती** कामयमाना । वशेः कान्त्यर्थात् शतरि संप्रसारणादौ रूपम् ॥ **जाया**-गर्भग्रहणधारणादियोग्या यतः **सुवासाः**-निर्णिक्तसूक्ष्मतमवस्त्रा तनूं सर्वावयवां विवृणुते इत्यर्थः ॥ अत एव भाष्ये **तनु**मित्यस्य व्याख्यानं **स्वमात्मान**मिति । स्वीयं सकलस्वरूपमिति तदर्थः । एवमग्रेऽपि वागेव शास्त्राभ्यासादिप्रसन्ना दुर्ज्ञानतया पूर्वोक्तदार्ष्टान्तिके कर्त्रीत्याह—**एवमिति । वाग्विदे**-वैयाकरणाय ॥ **स्वात्मानम्,** अर्थ उक्तः ॥ नन्वेतावता किमत आह—[ ११ शप० ] **वागिति ॥ नः**-अस्मान् प्रति, अस्मभ्यमिति वा ॥

[ प्रदीपे ] तदर्थमाह कैयटे—**अविद्वदिति ॥** विशेष्यभूतवाक्यार्थाश्रयत्वेन स तमाहेत्यर्थः ॥ **'अर्धर्चः'** इत्यत्र **'अर्धर्चाः पुंसि च'** इति पुंस्त्वम् ॥ अनेन—'उत्तरार्धं विद्वांसं वैयाकरणमाह' इत्यर्थादुक्तप्रायम् ॥

[ उद्द्योते ] तत्सर्वं हृदि निधायाह—उद्द्योते—**उतशब्द इति ॥** त्वशब्दस्य द्वितीयार्थाशयेनाह—**बहूनामपीति ॥**

**पश्यन्नपी**त्यस्यार्थमाह—**स्वभ्येति ॥** अर्थानभिज्ञत्वे इष्टापत्तिं निराचष्टे—[ ४ धप० ] **अर्थेति ॥ हि**-यतः ॥ **एवं**-तेषां मध्य इति शेषः ॥ **एना**मित्यस्य व्याख्या **वाच**मिति ॥ अत्र हेतुमुक्तरूपमेवाह—[ ५ मप० ] **य एवेति ॥ हि**-यतः ॥ **सम्यगिति ।** अनेन **न शृणोती**त्यस्य सम्यगश्रवणम्-अर्थः सूचितः ॥ एवमुक्तप्रकारेण उतोशब्दोऽप्यर्थे इत्याशयेनाह—[ ७ मप० ] **अप्येकस्मा इति ॥** सम्यग् ज्ञानमेव प्रकाशनमित्याह—**सम्यगिति ॥ हि** यतः ॥ नन्वेवमपि कथं शरीरप्रकाशोऽत आह—[ ८ मप० ] **अर्थो हीति ।** यत इत्यर्थः ॥ [ ९ मप० ] **पमेति ।** जायासादृश्यरूपेत्यर्थः ॥ **उत्तमयेति !** मध्यमादिरूपयेत्यर्थः ॥ **वाचामिति ।** तत्कर्तृकप्रसादेनेत्यर्थः ॥ **तमेव**-वैयाकरणमेव ॥ [ १० मप० ] **अङ्गं**-शरीरम् ॥ [ १३ शप० ]—**नार्थमिति ।** तद्रूपमर्थमित्यर्थः ॥ तस्यार्थं शब्दद्वारा वेत्यर्थः ॥ **एवं**-अग्रेऽपि ॥ **घनेति ।** निबिडेत्यर्थः ॥ [ १४ शप० ] **स इति ।** वैयाकरण एवेत्यर्थः ॥ अत्र संमतिमाह—[ १५ शप० ] **अयमिति ॥**

[ भाष्ये ] क्रमप्राप्तं साधकमन्यदप्याह—भाष्ये—**सक्तुमिवेति ॥**

[ भाष्ये ] तत्र सक्तुशब्दार्थमाह—भाष्ये प्रतीकं धृत्वा **सक्तुः सचतेरिति ॥**

[ भाष्ये ] विनिगमनाविरहादाह भाष्ये—**कसतेरिति ॥** यद्वा यतः 'कस गतौ' इत्यस्माद्विकासार्थकात् पृषोदरादित्वाद्विपरीतात्प्राग्वत् कर्मणि तुनि रूपम्, अतो विकसितार्थप्रतिपादको

---

१ 'जाया पत्ये' इति मुद्रित पाठः ॥ २ 'वाचां प्रसादेन तमेव स्तौति' इति घ. पाठः । अयमेव पाठो व्याख्यातश्छायया ॥ ३ प्रतीकस्यास्य अ. पुस्तके न पाठः ॥ ४ **सक्तुरिति** । षच धातोः कर्मणि तुन्प्रत्यये सक्तुशब्दो **दुर्धावः**-दुश्शोध्य इत्यर्थको भवति । कसतेर्वा वर्णव्यत्ययेन विकसित इत्यर्थको भवतीत्यर्थः ॥ ५ निरुक्ते तु 'वाचा' इति तृतीयान्तमेवोपलभ्यते, तेन 'वाचाऽन्त्यपादेन' इति पाठ एवोचितः॥

ताद्धिकसितो भवति । तितउ-परिपवनं भवति, ततवद्वा, तुन्नवद्वा । धीराः=ध्यानवन्तः, मनसा=प्रज्ञानेन, वाचमक्रत=अकृषत ।

'अत्रा सखायः सख्यानि जानते' अत्र सखायः सन्तः सख्यानि जानते=सायुज्यानि जानते ।

क्व ?

य एष दुर्गो मार्गः, एकगम्यो वाग्विषयः ॥

के पुनस्ते ?

वैयाकरणाः ॥

कुत एतत् ?

'भद्रैषां लक्ष्मीर्निहिताऽधिवाचि ।'

एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्लक्षणाद्भासनात्परिवृढा भवति ॥ सक्तुमिव ॥

( प्रदीपः ) सचतेरिति । 'षच-सेचने' इत्यस्य । दुर्धाव इति । दुःशोधः । यथा-तितउना सक्तोस्तुषाद्यपनीयते तथा व्याकरणेन वाचोऽपशब्दा इत्यर्थः ॥ कसतेरिति । पृषोदरादित्वाद्वर्णव्यत्ययः ॥ ततवदिति । विस्तारयुक्तमित्यर्थः ॥ तुन्नवदिति । बहुच्छिद्रम् ॥ धीरा इति । वैयाकरणाः ॥ वाचमक्रतेति । अपशब्देभ्यो विविक्तां कृतवन्तः । 'मन्त्रे घस-' इति लेर्लुकि सति 'अक्रत' इति रूपम् ॥ अत्रा सखाय इति । 'ऋचि तुनुघ-' इति दीर्घः । सखायः=समानख्यातयो भेदग्रहस्य निवृत्तत्वात्सर्वमेकमिति मन्यन्ते ॥ सख्यानीति । सायुज्यानीत्यर्थः ॥ एकगम्य इति । ज्ञानेनैव प्राप्यः ॥ वाचीति । वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सैषां निहितेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—सक्तुमिवेति । यत्र-व्याकरणे धीराः=ध्यानवन्तः सन्तस्तितउना सक्तुमिव ध्यानयुक्तमनसा तत्करणज्ञानेन वाचमक्रत=अकृषत-असाधुभ्यो विविक्तां कृतवन्तस्ते तत्करणेन शुद्धचित्ता अत्र=ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या सखायः=समानख्यातयः-समानज्ञानाः, तच्छब्दे ब्रह्मैकत्वज्ञान-

भवतीत्यर्थः ॥ तितेति । 'तनोतेर्डउः सन्वच्च' इति डउः । विश्लेषोच्चारणसामर्थ्यात्संध्यभावः । अव्युत्पन्नं वा ॥

[ भाष्ये ] परिपवनं-परिशोधनम् । करणे ल्युट् ॥ परिशोधनकरणत्वस्यातिप्रसक्तत्वात्तितउशब्दव्युत्पत्तिमाह—ततेति । एतेन तनोतेरेवेदं रूपमिति सूचितम् ॥

[ भाष्ये ] अस्याप्यतिप्रसक्तत्वादाह—भाष्ये—तुन्नेति । तुन्नानि छिद्राणि यस्य सन्तीति भूम्नि मतुप् ॥

[ भाष्ये ] [ ९ मप० ]—वाचमिति । शुद्धामिति शेषः ॥ अकृषत-कृतवन्तः ॥

[ भाष्ये ] अत्रासखाय इत्यत्र नञादि नेति ध्वनयन्नाह—भाष्ये [ १० मप० ]—अत्र सखाय इति ॥ तदर्थमाह—समानेति । तस्यार्थः प्रागुक्तो बोध्यः ॥ एवमग्रेऽपि ॥ कैयटेन तथार्थकरणाद् भाष्ये 'समानख्यातयः सायुज्यानि जानते' इति पाठो नास्तीति प्रतीयते । सांप्रतं तु भाष्ये तथोपलभ्यते ॥

[भाष्ये] पूर्वं विशिष्य कर्तुरनुल्लेखादाह—[ भा० १४ शप० ] के पुनरिति । सायुज्यप्राप्तिकर्तारः पुनः के इत्यर्थः ॥ उत्तरमाह—वैयेति ॥ कुत इति । तेषामेव तत्प्राप्तिकर्तृत्वमिति कुत इत्यर्थः ॥ उत्तरमाह—भद्रैषामिति । यत इत्यादिः ॥ तदर्थमाह [ १८ शप० ]—एषामिति । अधीत्यस्य निरर्थकत्वादनुपन्यासः । शेषपूरणं वा ॥

[ भाष्ये ] लक्ष्मीशब्दार्थमाह—भाष्ये [ १८ शप० ] लक्ष्मीरिति । तथाच भासनार्थाद् 'लक्ष दर्शनाङ्कनयोः' इत्यस्मादौणादिको 'लक्षेर्मुट् च' इतीकार इति भावः ॥

[ प्रदीपे ] तदाह कैयटे [ २ यप० ] दुःशोध इति ॥ अत्रापि प्राग्वत् खलु ॥ [ ३ यप० ] वाच इति । पञ्चम्यन्तम् । अपनीयन्त इति शेषः ॥

[ प्रदीपे ] तदाह—कैयटे [ ४ थप० ] विस्तारेति ॥

[ प्रदीपे ] तदाह—कैयटे [ ५ मप० ] बह्विति । बहुव्रीहिः ।

[ प्रदीपे ] धाधातोरौणादिके क्रनि 'घुमास्था-' इतीत्वे धीरा इति रूपम्, धातूनामनेकार्थत्वाद् ध्याने वृत्तिरिति कृष्णादयः । ध्यैधातोरेव तथा रूपमिति वयम् ॥ ध्यानं व्याकरणविषयकम् । अत एव विशिष्टार्थमाह—कैयटे [ ५ मप० ] वैयेति ॥

[ प्रदीपे ] तदाह—कैयटे [ ६ छप० ] अपेति ॥

[ प्रदीपे ] अत एवाह—कैयटे [ ८ मप० ] ऋचि त्विति । भेदेति च ॥

[ प्रदीपे ] एकगम्य इत्यस्यैकेनैव गम्य इत्यर्थः । तमाह—कैयटे [ १० मप० ] ज्ञानेनैवेति ॥

[ प्रदीपे ] कैयटे [ ११ शप० ] वेदाख्ये इति । वाचीत्यस्यावृत्त्योभयत्रान्वय इति भावः ॥

[ उद्द्योते ] सक्तुमिति स्पष्टार्थं, तदर्थमाह—[ उ० १ मप० ] ये यत्रेत्यादि । विषयत्वं सप्तम्यर्थः । [ २ यप० ] सक्तुमिवेति । सक्तुं पुनन्त इवेत्यर्थः ॥ शुद्धमनसो हेतुत्वादाह—ध्यानेति ॥ तदपि सव्यापारमित्याह—तत्करणेति ॥ वाचमक्रतेति । 'मन्त्रे घस-' इति लेर्लुक् । शुद्धामित्यर्थः ॥ तदाह—[ ३ यप० ] असाध्विति ॥ विविक्तामिति । विवृक्तामिति क्वचित्पाठः ॥ अत्रासखाय इत्यत्र 'ऋचि तुनुघ-' इति दीर्घ इति ध्वनयन्नाह—[ ४ थप० ] अत्रेति ॥ एतेन तत्र व्याकरणविषय इति रत्नोक्तमपास्तम् । तद्ध्वनयन्नाह—ब्रह्मेति । व्याकरणप्रतिपाद्ये इत्यर्थः ॥ सखाय इत्यस्य व्याख्या समानेति ॥ तस्य व्याख्या समानेति ॥ तस्यार्थमाह—[ ५ मप० ] तच्छब्दे इति । ब्रह्मप्रतिपादकशब्दे इत्यर्थः ॥

१ तितउ इति । तनोतेरेतद्रूपं परिपवनार्थकं-परिशोधनकरणार्थकं भवति, अथवा ततवत्-विस्तारयुक्तवस्त्वर्थं भवति, अथ वा तुन्नवत्-बहुच्छिद्रवद्वस्त्वर्थकं भवतीति तात्पर्यम् ॥ २ 'जानते समानख्यातयः सायुज्यानि जानते' इति छायाकृद्दृष्टः पाठः ॥ ३ 'ये यत्र' इति घ. पाठः ॥ ४ तथोपलभ्यते क्वचिदेव पुस्तके । न पुनः सर्वेषु पुस्तकेषु । अस्माभिरपि द्वयोरेवोपलब्धस्तथा पाठः, त्रिषु नोपलब्धः ॥ (दाधि.)

वन्तस्तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मनिरूपिताभेदज्ञानवन्तः सख्यानि=सायुज्यानि जानते, प्राप्नुवन्तीत्यर्थः । यत एषां वाचि भद्रा लक्ष्मीः स्वप्रकाशब्रह्मरूपा अधि=अधिकं निहिता=स्थिता भवतीति ऋगर्थः ॥ **सचतेर्दुर्धाव**[1] **इति** । यतः सचतेः, अतो दुःशोधार्थप्रतिपादको भवतीत्यर्थः ॥ तितउशब्द इत एव भाष्यान्नपुंसकः । **'चालनी तितउः पुमान्'** इति कोशात्[2]पुंलिङ्गोऽपि ॥ **विस्तारेति । 'तनोतेर्डउः सन्वच्च'** इति व्युत्पत्तेरिति भावः ॥ **तुन्नेति** । तुदधातोः **कर्मणि डउः सन्वच्चे**ति भावः ॥ **ध्यानं**–ज्ञातार्थ[2]भानम् ॥ **'मनसा'** इति व्यापारपरं, तदाह—**प्रज्ञानेनेति** ॥ भाष्ये—**क्वेति** । 'किं तत् यत्र सायुज्यानि प्राप्नुवन्ति' इति **प्रश्नः** ॥ उत्तरयति—**थ एष इति** । दुर्गमार्गप्राप्यत्वात् दुर्गमार्गत्वोपचारः ॥ दुर्गत्वमेवाह—**एकेति** ॥ **ज्ञानेनैवेति** । निर्विकल्पकज्ञानेनैवेत्यर्थः । अत एव दुर्गत्वं, **'नान्यः पन्थाः'** इति श्रुतेरिति भावः ॥ भाष्ये—**वाग्विषय**[3] **इति** । अत एव श्रवणोपपत्तिः ॥ **वाक्** वेदरूपाऽत्र ॥ **वेदान्तेष्विति । सत्यं ज्ञान**मित्यादिषु । **परमार्थसंविल्लक्षणा**–परमार्थ[4]ब्रह्ममात्रविषयाऽखण्डार्थरूपा सैषां वाचि निहितेत्यर्थः । सर्वोऽपि वेदस्तेषां ब्रह्मपरः, **वेदैश्च सर्वैरहमेव वेद्य** इत्युक्तेरिति भावः ॥ **अयं भावः**—ये शास्त्रतः प्रकृतिप्रत्ययविभागेन साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन वाचमसाधुभ्यः पृथक् कृतवन्तस्ते तज्ज्ञानपूर्वकैः साधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयः, **अत्र** य एष दुर्गो मार्गो ब्रह्मरूपस्तत्रात्मना सह **समानख्यातयः**–त्यक्तभेदभावनाः **सख्यानि**–सायुज्यानि प्राप्नुवते । यत **एषां वाचि**–वेदाख्ये ब्रह्मणि सर्वभासकब्रह्मरूपा सा **अधि**=अधिकं **निहिता** भवति । एतच्छास्त्रसाध्यप्रयोगव्यङ्ग्यस्य ध्वनिरूपवैखरीरूपरूपितस्यैव तैर्वाचकत्वस्वीकारेण तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित एव बोधकतया तैर्ग्रहात् । एवं सर्वबोधकेषु ब्रह्मबुद्धौ जातायां तेनैव दृष्टान्तेन सर्वपदार्थेषु **ब्रह्मबुद्धिर्वैयाकरणानामिति** ॥ **यत्तु** पदपदार्थवाक्यार्थमर्यादया **'सत्यं–'** इत्यादितस्तेषां तद्बोधात्सा तेषां वाचि निहितेति, तन्न; **'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'** इति श्रुत्या ब्रह्मणस्तन्मर्यादया शब्दाबोध्यत्वोक्तेः । तत्र हि 'अप्राप्य' इत्यस्य संबन्धज्ञानेऽविषयीभूय-असंबध्य चेत्यर्थः । आद्यं शब्दे, अन्त्यं मनसि ॥ शुद्धचित्तस्य तूभयमपि बोधकमखण्डविषयस्य, **दृश्यते त्वग्र्यया बुद्ध्येति** श्रुत्यन्तरात्; न तु पदपदार्थमर्यादयेति बोध्यम् । [ एवञ्च सर्वबोधकेषु ब्रह्मबुद्धौ जातायां तेनैव दृष्टान्तेन सर्वपदार्थेष्वपि ब्रह्मबुद्धिर्वैयाकरणानामिति तात्पर्यम् ॥ ]

---

तुल्ययुक्त्या आह—**तेनैवेति** ॥ [ ७ मप० ] **प्राप्नुवन्ति ॥ 'यतः'** इति पाठः ॥ अत्र हेतुमाह—**यत** इति ॥ **एषां**–अत्र धीराणाम् ॥ [ ९ मप० ] **भवतीति** । अत इति शेषः ॥

[ उद्द्योते ] असंबद्धत्वात्तदर्थमाह—[ उ० ९ मप० ] **यत इति** ॥ **षच** समवाये **षच** सेचने–इत्यन्यतरस्माद् दुःशोधार्थादौणादिके कर्मणि तुनि कत्वे च रूपमिति भावः ॥ अत एवाह—**अत इति** ॥ भाष्ये **दुर्धाव** इत्यत्रेषद्दुःस्विति दुःपूर्वाद्धावेः कर्मणि खलित्याशयेनाह—**दुःशोध्यार्थेति** ॥

[ उद्द्योते ]—[११ शप०] **नपुंसकः**–नपुंसकलिङ्गः ॥ कोशासंगतिं परिहरति—**चालनीति** । अत एव **'स्याद्वास्तु हिङ्गु तितउ'** इति त्रिकाण्डशेषः संगच्छते ॥

[ उद्द्योते ] तदाह—[ उ० १२ शप० ] **तनोतेरिति** । इदं सर्वं शाकटायनादिरीत्या बोध्यम् ॥

[ उद्द्योते ] तदाशयमाह—[ उ० १३ शप० ] **तुदेति** । व्यथनार्थकादिति भावः ॥ एवं च नातिप्रसक्तिरिति बोध्यम् ॥

[ उद्द्योते ] तत्र ध्यानपदार्थमाह—[उ० १४ शप०] **ज्ञातार्थभावनमिति** । सततपरिशीलनमित्यर्थः । धारणेति यावत् ॥

[ उद्द्योते ] प्रश्नोत्तरयोः सामानाधिकरण्याय प्रातिपदिकार्थप्रश्ने तात्पर्यमित्याशयेनाह—[ उ० १५ शप० ] **किं तदिति** ॥ [ १६ शप० ] **दुर्गमार्गेति** । तस्य दुष्प्रापत्वादिति भावः ॥ [१७ शप०] **दुर्गत्वमिति** । अतिविषमत्वमित्यर्थः । मार्गे इति भावः ॥

[ उद्द्योते ] सविकल्पकनिवृत्तये आह—[ उ० १७ शप० ] **निर्विकेति । अत एव**–तस्यान्यथा दुःसाध्यत्वादेव ॥ एवव्यवच्छेद्यमाह [ १८ शप० ] **नान्य इति** ॥ अवागितिच्छेदनिरासायाह— [ १९ शप० ] **भाष्ये वाग्विषय इति च्छेद इति** ॥ **अत एव**–विषयत्वादेव ॥ एवं च साधनसंपत्तिसत्ता सूचिता ॥ ननु कीदृशवाग्विषयत्वं तस्य, तत्राह—[ १९ शप० ] **वाग्वेदरूपाऽत्रेति** ॥

[ उद्द्योते २१ शप० ] **परमार्थेत्यादि रूपान्तं** समस्तमेकं पदम् ॥ नन्वेवं कथं सर्ववेदनिष्ठा सा लक्ष्मीरित्यत आह [२१ शप०] **सर्वोऽपीति ॥ ब्रह्मपर इति** । तत्तात्पर्यक इत्यर्थः ॥ अन्येषामज्ञाननिरासायाह—[ २३ शप० ] **अयं भाव इति ॥ शास्त्रतः**–व्याकरणतः ॥

[ उद्द्योते ३१ शप० ] **तैः**–वैयाकरणैः । एवमग्रेऽपि [ ३१ शप० ] ॥ परमतात्पर्यमाह—[ ३१ शप० ] **एवमिति** ॥ प्राचामुक्तिं खण्डयति [ ३३ शप० ] **यत्त्विति** ॥ **अप्राप्येत्य**स्योभयत्र संबन्धायाह—[ ३६ शप० ] **तन्नेति** ॥ [ ३७ शप० ] **तूभयमिति** । वाङ्मनसरूपमित्यर्थः ॥ स्पष्टार्थमुपसंहरति [ ३८ शप० ]–**न त्विति** ॥

---

१ 'वस्तुतस्तूक्तभाष्यानुरोधादमरग्रन्थे पुंस्त्वाऽयोगमात्रं व्यवच्छेद्यं न त्वन्ययोगोऽपि । तथाच पुंनपुंसकवर्गे—'स्याद्वास्तु हिङ्गु तितउ' इति त्रिकाण्डशेषः । अत एव तितउमाचष्टे इति तितावयतीत्यभियुक्तग्रन्था अपि सङ्गच्छन्ते' इति श० कौ० ॥ २ 'ज्ञातार्थभावनं' इति मुद्रितपाठः ॥ ३ 'वाग्विषय इति च्छेदः' इति घ. झ. पाठः ॥ ४ ब्रह्ममात्रविषयज्ञानविषया' इति पाठः ॥ ५ मुद्रितपुस्तकेषु अयं पाठो न दृश्यते ॥

लक्षणादित्यस्य व्याख्या—भासनादिति ॥ परिवृढा–अज्ञाननिवर्तने प्रभ्वी ॥ एते च मन्त्राः सर्वानुक्रमेऽन्यत्र विनियुक्ता अपि भाष्यप्रामाण्यादेतत्तात्पर्यका अपीति बोध्यम् ॥ 'चत्वारि–' इत्यादि ऋक्चतुष्टयं व्याकरणस्य मोक्षजनकत्वं प्रतिपादयति ॥

( भाष्यम् )

**सारस्वतीम्—**

**याज्ञिकाः पठन्ति—"आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्" इति ॥ प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् ॥ सारस्वतीम् ॥**

(प्रदीपः) **प्रायश्चित्तीयामिति** । भवार्थे 'वृद्धाच्छः' ॥ **प्रायश्चित्तीया इति** । प्रायश्चित्ताय=पापशोधनाय श्रुतिस्मृतिविहिताय कर्मणे हिताः=तन्निमित्तोत्पादका मा भूमेत्यर्थः ॥

(उद्योतः) **भवार्थे इति** । प्रायश्चित्तसाधनत्वेन तद्भवत्वम् ॥

( भाष्यम् )

**दशम्यां पुत्रस्य—**

**याज्ञिकाः पठन्ति—"दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात् घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् । तद्धि प्रतिष्ठिततमं भवति । द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्" इति ॥**

**न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ॥ दशम्यां पुत्रस्य ॥**

(प्रदीपः) **दशम्युत्तरकालमिति** । दशम्या उत्तर इति **'पञ्चमी–'** इति योगविभागात्समासः । ततः कालशब्देन बहुव्रीहिः । क्रियाविशेषणं चैतत् । दश दिनान्यशौचं भवति–इति दशम्युत्तरकालमित्युक्तम् । येऽपि गृह्यकाराः पठन्ति–**दशम्यां पुत्रस्य'** इति, तैर्[2]दशम्यामिति सामीपिकमधिकरणं व्याख्येयम् ॥ **घोषवदादीति** । घोषवन्तो ये वर्णाः शिक्षायां प्रदर्शिताः, तदादि ॥ **अन्तरन्तस्थमिति** । मध्ये यरलवा यस्य तदित्यर्थः ॥ **त्रिपुरुषानूकमिति** । नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुकायति=अभिधत्त इति त्रिपुरुषानूकम्, **'अन्येषामपि दृश्यते'** इति दीर्घः ॥

(उद्योतः) **पञ्चमीति योगविभागादिति** । 'सुप्सुपा' इति तु युक्तम् ॥ ननु 'दशम्यां पुत्रस्य' इति प्रयोजनस्वरूपगणने भाष्ये उक्तम् । गृह्येऽपि तथैव पठ्यते, अतः 'दशम्युत्तरकालं' इत्ययुक्तमत

---

[ उद्योते ] परिगृहीतेति श्लोक्तार्थनिरासायाह—[ उ० ४१ शप० ]—**अज्ञानेति** ॥ विरोधं परिहरति—**एते चेति** ॥ सर्वानुक्रमे छन्दर्षिदेवतानामेव प्रतिज्ञापुरःसरमनुक्रान्तत्वादाह—**भाष्ये इति** ॥ [ ४२ शप० ] **अन्यत्र**–अग्निध्यानादौ ॥ परमतात्पर्यार्थमाह—[४३ शप०] **चत्वारीति । चत्वारि श्रृङ्गा** इत्यादीत्यर्थः ॥

[ भाष्ये ] अग्निमादधानेन दानपरिग्रहादिवद्व्याकरणमवश्यमध्येयमित्याह—भाष्ये-**सारस्वतीमिति** ॥ **याज्ञिकाः पठन्तीति** प्राग्वत् ॥ यद्यपि अनारभ्याधीतेन **'नानृतं वदेत्'** इति निषेधेनार्थानृतवच्छब्दानृतस्यापि सत्त्वेन सर्वत्रापशब्दप्रयोगे पुरुषदोषा बहवः, तथापि दर्शपूर्णमासप्रकरणपठितेन तादृशेन वाक्येन क्रतोरपि वैगुण्यमित्याशयेनाह—**आहिताग्निरिति** ॥ क्रतुमध्य इति शेषः ॥ वस्तुतस्तु अन्यत्र दोषाभावसूचकमेवात्राहिताग्निपदमित्यन्यत्र स्फुटम् ॥ एवं च नारायणोक्तं युक्तमेवेति बोध्यम् ।

[ भाष्ये ] भाष्ये **सारस्वतीं** सरस्वतीदेवताकाम् ॥

[ प्रदीपे ] कैयटे—**हिता इति । 'तस्मै हितम्'** इत्यर्थे वृद्धाच्छः ॥ अत्र प्रायश्चित्तपदमुक्तकर्मपरमेवेति भावः ॥ प्राग्वत् यज्ञकर्मण्यपशब्दप्रयोक्तारो मा भूमेत्यध्येयं व्याकरणमिति फलितोऽर्थः ॥

[ उद्योते ] ननु श्रुतिस्मृतिविहितं पापशोधककर्म **प्रायश्चित्त**मिति कथमिष्टेस्तद्भवत्वमत आह—उद्योते—**प्रायश्चित्तेति** ॥ तथा चात्र प्रायश्चित्तपदमन्तःकरणशुद्धिपरमिति भावः ॥

१ 'सर्वानुक्रमभाष्येऽन्यत्र' इति मुद्रितपाठः, छायादृष्टोऽप्ययम् ॥

[ भाष्ये ] नामकरणे उपयोगमाह—भाष्ये **दशम्यामिति** ॥ **याज्ञिकाः पठन्तीति** पूर्ववत् ॥ 'वटे गावः सुशेरते' 'मासिकं' इत्यादिवत् **'दशम्याम्'** इत्यौपश्लेषिकेऽधिकरणे सप्तमीत्याशयेनाह—**दशम्युत्तरेति** ॥

[ भाष्ये ] **अवृद्धं**–वृद्धसंज्ञाक्षररहितम् ॥

[ भाष्ये ] अत एव स्तौति—**तद्धीति** ॥ **कृतमिति** । तदन्तमेवेत्यर्थः ॥ एवमग्रेऽपि ॥

नियमापूर्वफलिततदनिष्टाभावात् तद्धितान्तस्यापि प्राप्तिरिति तन्निषेधति—**न तद्धितमिति** ॥ तत्करणेन न केवलं नियमापूर्वहानिः, अपि तु दुरितमपीत्यर्थः ॥

नन्वेतावता किमत आह—भाष्ये—**नचान्तेति** ॥ नहीत्यर्थः ॥ **विज्ञातुमिति** । **'अतोऽध्येयं व्याकरणम्'** इति शेषः ।

[ प्रदीपे ] कैयटे [ ५ मप० ] **सामीपिकमिति** ॥ उप समीपे श्लेषः संबन्धस्तत्कृतमित्यर्थः ॥ [ ६ छप० ] **घोषवन्त इति** । घोषशब्दो धर्मपरः ।

[ प्रदीपे ] कैयटे [ ९ मप० ] **त्रयः पुरुषा इति** । पितृपितामहप्रपितामहा इत्यर्थः ॥ **तानिति** । तेषामन्यतममित्यर्थः ॥ इदं च फलितार्थकथनम् ॥

[ उद्योते ] योगविभागस्य भाष्यादृष्टत्वादाह—उद्योते—**सुप्सुपेतीति** ॥ इदमेव प्रतिपादयन्नाह—[ २ यप० ] **नन्विति** ॥

२ 'तैरपि दश–' इति पाठः, उद्योते 'तैरपीति' इति प्रतीकग्रहणात् ॥

आह—**तैरपीति** ॥ **शिक्षायामिति** । ते च-हशः । अन्तरन्तःस्था यस्त्रेत्यर्थः ॥ **त्रिपुरुषानूकम्** । त्रि[1]पुरुषशब्दो द्विगुः । मूलविभुजादित्वात्कः ॥ भाष्ये—**अनरीति** । अमनुष्ये-अरिभिन्ने-इति वाऽर्थः ॥

( भाष्यम् )

सु[2]देवो असि वरुण—

"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥"

'सुदेवो असि वरुण'-सत्यदेवोऽसि, 'यस्य ते सप्त सिन्धवः ।'-सप्त विभक्तयः, 'अनुक्षरन्ति काकुदम्' काकुदं-तालु । का[3]कुः=जिह्वा, साऽस्मिन्नुद्यत इति-का[4]कुदम् । 'सू[5]र्म्यं सुषिरामिव ।' तद्यथा—शोभनामूर्मिं सुषिरामग्निरन्तः प्रविश्य दहति, ए[6]वं ते सप्त सिन्धवः=सप्त विभक्तयस्ताल्वनुक्षरन्ति । तेनासि स[7]त्यदेवः ॥ सत्यदेवाः स्यामेत्यध्येयं व्याकरणम् ॥

सुदेवो असि ॥

( प्रदीपः ) **सुदेवो असीति** । वरुणस्येयं स्तुतिः । यतो हेतोर्व्याकरणज्ञानाद्वरुणः सत्यदेवः, ततो हेतोरन्येऽपि सत्यदेवा भवन्तीत्यर्थः ॥ **सिन्धव इति** । नद्य इव विभक्तय इत्यर्थः ॥ **अनुक्षरन्तीति** । ताल्वनुप्राप्य प्रकाशन्त इत्यर्थः ॥ **साऽस्मिन्नुद्यत इति** । अनेकार्थत्वाद्धातूनां 'उत्क्षिप्यते' इत्यर्थः॥ **सूर्म्यमिति** । 'सूर्मिं' इति प्राप्ते **'अमि पूर्वः'** इत्यत्र **'वा छन्दसि'** इत्यनुवृत्त्या यणादेशः ॥

( **उद्द्योतः** ) **सत्यदेवा इति** । वरुणे यथा-सत्येन दीव्यति द्योतत इति यौगिकोऽयं शब्दस्तथाऽन्येष्वपीत्यर्थः ॥ **यस्येति** । पञ्चमीस्थाने षष्ठी । यस्मात्ते काकुदं=तालु प्राप्य सिन्धवः सप्तसमुद्ररूपाः सप्तविभक्तयोऽनुक्षरन्ति, प्रकाशन्ते-इत्यर्थः ॥ **अनेकार्थत्वादिति** । वदेरधिकरणे **'घञर्थे-'** इति कः । शकन्धुवत्पररूपं, **पृषोदरादित्वा**द्वैकस्योकारस्य लोपः । **नुदेर्वा**ऽधिकरणे कः, पृषोदरादित्वान्नुलोपः ॥

---

[ उद्द्योते ] कैयटेन वृत्त्यर्थस्योक्तत्वाद्विग्रहमाह—[उ० ४ थंप०] **अन्तरिति** ॥ अन्तःस्थाशब्द आकारान्तः ॥

[ उद्द्योते ] शब्दार्थमाह—[ उ० ५ मप० ] **त्रिपुरुषशब्दो द्विगुरिति** ॥ समाहारद्विगुरित्यर्थः ॥ पात्रादित्वात् स्त्रीत्वाभाव इति भावः ॥ **अमनुष्य इति** । देवतादौ पर्यवसितमित्यर्थः ॥ यद्वा—अरौ प्रतिष्ठितं न भवतीत्यर्थः ॥ तत्फलितमाह—**अरिभिन्ने इति** ॥ तद्भिन्ने मित्रादावित्यर्थः ॥

[ भाष्ये ] तथाऽन्यमपि क्रमप्राप्तमृङ्मन्त्रमाह—भाष्ये—**सुदेवो असीति** । **'प्रकृत्यान्तः-'** इति प्रकृतिभावः ॥

[ भाष्ये ] भाष्ये—**सुदेव इति** । हे वरुण त्वं सुदेवो असि ॥ अस्य व्याख्या—सत्यदेवोऽसीति ॥

[ भाष्ये ] तदेवाह—भाष्ये—**यस्य ते सप्तेत्यादि** ॥

[ भाष्ये ] भाष्ये—**ताल्विति** । तस्य तत्र यौगिकत्वम् ॥ रूढिव्यावृत्तये आह—**काकुरिति** ॥ साऽस्मिन्नुद्यत इति फलितार्थकथनम् ॥

[ भाष्ये ] अत्र दृष्टान्तमाह—भाष्ये—**सूर्म्यमिति** ॥ तदुपपादयति—**शोभनामूर्मिमिति** । अनेनोर्मिरयःप्रतिमा न तु सूर्मिः इति सूचितम् ॥

[ भाष्ये ] उपसंहर्तुं दार्ष्टान्तिके पुनर्योजयति भाष्ये—**एवं त इति** ॥ **एव**मित्येव पाठे **'ते'** इति शेषः ॥

[ भाष्ये ] निगमयति भाष्ये—**तेनासीति** ॥ ननु किमेतावताऽत आह—**सत्येति** । व्याकरणाध्ययनस्य सत्यदेवत्वं फलमित्यर्थः ॥

[ प्रदीपे ] कैयटे—**वरुणेति** । बार्हस्पत्ये प्रगाथे इत्यादिः ॥

[प्रदीपे] सर्वमन्त्रतात्पर्यार्थमाह—कैयटे—**यत इति** । व्याकरणज्ञानाद्यतो हेतोः साध्वसाधुशब्दज्ञानपूर्वकं सुशब्दप्रयोगादित्यर्थः ॥

[ प्रदीपे ] कैयटे—**नद्य इवेति** । समुद्रा इवेत्यर्थः । लक्षणैवेति भावः ॥ **विभक्तयः** । उक्तोऽर्थः ॥ अनुक्षरन्तीत्यस्यार्थमाह—**ताल्विति** ॥ अध्याहारेणाह—**अनुप्राप्येति** ॥ क्वचित् 'प्राप्य'इत्येव पाठः ॥

[ उद्द्योते ] तत्तात्पर्यमाह—उद्द्योते—**वरुणे इति** ॥ **सत्येनेति** । साधुशब्दप्रयोगाख्येनेत्यर्थः ॥ 'देवितासि व्यवहरसि' इति कृष्णोक्तार्थनिरासायाह—**दीव्यति द्योतत इति** । अयं भावः—द्विविधमनृतम्—अर्थानृतं शब्दानृतं च । तत्र यथा भ्रान्तविप्रलम्भकै रजतत्वेनोपदिष्टस्य रङ्गस्य रजतस्थाने दानमनर्थहेतुः, तद्वत् साधुशब्दस्थानेऽसाधुशब्दप्रयोगः । तदभावाद्वरुणः सत्यदेव इति यौगिकः, न त्वश्वकर्णादिवद्रूढ इति भावः ॥

[उद्द्योते] तदर्थमाह उद्द्योते—**यस्येतीति** । व्यत्ययेनेति भावः ॥ **प्राप्येत्य**ध्याहारलभ्यः, अन्यथाऽनुपपत्तेः ॥ **सप्तवीति** । सप्तत्वसंख्यासामान्यात्प्रथमादिसप्तत्रिकाणीत्यर्थः ॥ तथा च श्रुतौ लुप्तोपमा सूचिता ॥ व्याख्यानेऽपि तथा । अनेन क्रियाऽप्याक्षिप्ता भवतीति **न** न्यूनता ॥ **प्रकाशन्त इति** । मूर्तिमत्य इत्यादिः, अत इत्यन्तश्च ॥

[ उद्द्योते ] तद्ध्वनयन्—**'अनेकार्थत्वात्'** इति कैयटोक्तिवशादाह—[ उ० ५ मप० ] **वदेरिति** । उत्क्षेपार्थादिति भावः ॥ **घञर्थे इतीति** । वार्तिकेनेति भावः ॥ **शकन्ध्वति** । संप्रसारणे पूर्वरूपे काकोरुदमिति षष्ठीतत्पुरुषे इत्यादिः ॥ विनिगमनाविरहादाह—**पृषोदेति** ॥ **'साऽस्मिन्नुद्यते'** इति भाष्यस्य संदिग्धत्वेनान्यथापि व्याख्यातुं शक्यत्वेन संप्रसारणाद्यभावादेकार्थत्वकल्पनालाघवादाह—**नुदेर्वेति** ॥

---

१ **त्रिपुरुषेति** । यद्यपि बहुषु प्रामाणिकपुस्तकेषु 'त्रिपुरुषशब्देन द्विगुः' इति पाठ उपलभ्यते तथापि समर्पकः पाठश्छायाकारेण गृहीतः क्वचिद्दृष्टश्च, स एवात्र संगृहीतः । 'त्रिपुरुषशब्दे द्विगुः' इति क्वचित् मुद्रितपुस्तके पाठो दृश्यते स चाप्रामाणिकः ॥ २ प्रतीकमेतत् अ. फ. पुस्तकयोर्न पठ्यते ॥ ३ 'काकुद्=जिह्वा' इति अ. पाठः ॥ ४ **काकुदमिति**-शैषिकोऽण्-इति 'काकुद्=जिह्वा' इति पाठे योज्यम् ॥ ५ **सूर्म्यमिति** । सूर्मिः=अयःप्रतिमेत्यपि दृश्यते । 'सूर्मिं ज्वलन्तीमाश्लिष्य' इति स्मृतेः । केचित्-विकृतबिला मूषा-इत्याहुः ॥ ६ 'एवं तव सप्त' इति फ. पाठः ॥ ७ **सत्यदेव इति** । सत्येन=साधुशब्दस्वरूपेण प्रयोगाख्येन देविताऽसि, व्यवहरसीत्यर्थः ॥

८ 'वरुण सत्यदेवोऽसि' इति क. पाठः ॥

९ **'अन्तस्थाभिश्च संयुतम्'** इति शिक्षोक्तेः ।

सूर्मिं=शोभनामयःप्रतिमाम्, सुषिरां–'ऊषसुषि– इति रप्रत्ययेन' सच्छिद्रां प्रविश्याग्निर्यथा तत्रत्यं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति, एवं तालुदेशे प्रकाशं प्राप्य विभक्तयः=विभक्त्यन्ताः शब्दाः शारीरं पापमपाकुर्वन्तीत्यर्थः ॥ अनेन स्वर्गप्राप्तिः फलमित्युक्तम् ॥

( उक्तप्रयोजनग्रन्थोपपत्तिप्रकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरिदं[१] व्याकरणमेवाधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुनरन्यदपि किंचित्–'ॐ' इत्युक्त्वा वृत्तान्तशः 'शम्'[२] इत्येवमादीन् शब्दान्पठन्ति ?**

**(प्रदीपः) किं पुनरिति।** ननु '**कानि पुनरस्य**' इति येन पृष्टं स एव कथं पृच्छति—'**किं पुनर्**'इति । एवं तर्हि भाष्यकारः प्रयोजनान्वाख्यानस्य विषयविभागं दर्शयति । पुरा वेदाध्ययनात्पूर्वं व्याकरणमधीयते ते बाल्यात्प्रष्टुमसमर्था इति न प्रयोजनमन्वाख्येयम् । अद्यत्वे तु स्वल्पायुष्ट्वात्पूर्वमेव वेदं प्रधानमधीयते, अतः प्रष्टुं समर्थत्वाद्व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्तीत्यवश्यान्वाख्येयं प्रयोजनम् ॥ **न पुनरन्यदिति।** वेदमप्यधिजिगांसमानेभ्य इत्यर्थः ॥ **ॐ इत्युक्त्वेति।** अभ्युपगम्येत्यर्थः ॥ **वृत्तान्तश इति ।** वृत्तान्तः प्रपाठक उच्यते । वृत्तान्तं वृत्तान्तं प्रति–इत्यर्थः ॥

**( उद्योतः ) एवं तर्हीति ।** 'वेदातिरिक्तविषय एव प्रयोजनान्वाख्यानं, न तु वेदविषये' इत्येवंरूपं–**विषयविभागम्** ॥ तृतीयस्य प्रश्न इत्यन्ये ॥ किंचित्पदार्थमाह—**वेदमपीति ।** शेषपूरणमन्यत् । किं तत् किञ्चिदित्याकाङ्क्षायां—भाष्ये—**ओमित्युक्त्वेति** ॥ '**पठन्ति**' इत्यस्यानन्तरं '**तेभ्योऽपि**' इति शेषः ॥ एवञ्च वेदमधिजिगांसमानेभ्यो वेदाध्ययनप्रयोजनं किमिति नान्वाख्यायत इति **प्रश्नः ॥** वेदाध्ययनवत् व्याकरणाध्ययनमपि प्रयोजनमन्तरैव करि-

· [ उद्योते ] तदाह—[ उ० ७ मप० ] **सूर्मिमिति ॥** कोशादिप्रामाण्याद्दीर्घान्तोऽप्ययमित्यन्यदेतत् ॥ सामर्थ्यलभ्यमर्थं भाष्योक्तमाह—[ ८ मप० ] **प्रविश्येत्यादि ॥**

[ उद्योते ] तत्तात्पर्यार्थमाह—[ उ० ९ मप० ]—**एवं तात्विति ॥** वरुणस्येति शेषः ॥

[ उद्योते ] तात्पर्यार्थमाह—उद्योते—**अनेनेति ॥** वरुणतुल्यत्वप्रतिपादनेनेत्यर्थः ॥ स यथा स्वर्गवासी एवमन्योऽपि तादृश इति भावः ॥

[ भाष्ये ]—भाष्ये **किं पुनरिति ।** पुनःशब्दो हेत्वर्थे वाक्यालंकारे वा ॥ एवमग्रेऽपि ॥ **इदं प्रयोजन**मित्यन्वयः ॥

[ प्रदीपे ] प्रयोजनान्वाख्यातारं प्रत्ययं प्रश्नः । अत एव तस्यायं प्रश्नो न, तत्प्रष्टुरपि नेत्याह—कैयटे—**ननु कानीति ॥** तदावश्यकत्वज्ञानादानर्थक्यशङ्कायास्तस्यासंभवादिति भावः ॥ प्रश्नाकारमाह—**किमिति ॥** पूर्वतनं तु प्रतीकम् ॥ यत्तु—फलान्युक्त्वा तदन्वाख्यानस्यावश्यकतां वक्तुं तस्यैवायमाक्षेपः—इति केचित् । तन्न, अग्रे तथाऽनुक्तेः । अत एव तद्विरोधापत्तेश्च ॥ तदेतद् ध्वनयन्नाह—कैयटे—**एवं तर्हीति ॥ भाष्यकार** एव ॥

[ प्रदीपे ] कैयटे—**दर्शयतीति ।** स्वयमेव प्रश्नपूर्वकं दर्शयतीत्यर्थः ॥

[प्रदीपे] उत्तरग्रन्थे भाष्यकृतोक्तं विषयविभागमत्रैवाह–कैयटे—**पुरेति ॥** युगान्तर इत्यर्थः ॥ **व्याकरणमिति ।** तदाद्यङ्गानीत्यर्थः ॥ तदध्ययने हेतुगर्भं विशेषणमाह—[ ६ ष्ठप० ] **प्रधानमिति ॥**

[ प्रदीपे ] वीप्सायां शसित्याशयेनाह—कैयटे—**वृत्तान्तमिति ॥ प्रतीत्येति ।** अधिकृत्येत्यर्थः । वीप्साद्योतको वा प्रतिः ॥ '**पठन्तीत्यर्थः**' इति पाठस्तु सुगम एव ॥ '**वृत्तान्ततः**' इति पाठे तु तृतीयान्ताद् द्वितीयान्ताद्वाऽऽद्यादित्वात्तसिः ॥ वीप्सान्तर्भावो बोध्यः ॥

[उद्योते] **विषयविभाग**मित्यस्य 'भिन्नं भिन्नं विषयम्' इत्यर्थनिरासायाह—उद्योते—**वेदातीति ॥**

[ उद्योते ] उक्तरीत्या प्रष्टावक्त्रोः प्रश्नासंभवेऽपि प्रकारान्तरेण भाष्यस्य समञ्जसत्वादगतिकगतिरूपकैयटोक्तिरयुक्तेत्याशयेनाह—उद्योते—**तृतीयस्येति ॥** उक्तद्वयभिन्नस्येत्यर्थः ॥

[ उद्योते ] कैयटात् **सर्वैस्तदर्थं** इति प्रतीयते, तन्निरासायाह—उद्योते—**किंचिदित्यादि ॥ शेषेति ।** अनुषङ्गेणेति भावः ॥ कैयटोक्तकिंचित्पदार्थस्य भाष्यारूढत्वायाह—[ उ० ३ यप० ] **किं तदिति ॥** [ ४ र्थप० ] **माहेति ।** विशिष्याहेत्यर्थः ॥ अत एवानन्वयवारणायाह—**पठन्तीत्येति ॥ शेष इति ।** अध्याहार इत्यर्थः ॥ प्रयोजनमन्वाख्यायत इत्यस्यानुषङ्गः ॥ **शमित्य**स्यादावुक्तिस्तु प्राग्वज्ज्ञेया ॥ एतावद्ग्रन्थस्य तात्पर्यमाह— [ ५ मप० ] **एवं चेति ॥** अत्र तदन्वाख्याने चेत्यर्थः ॥ प्रश्नस्यापि परमतात्पर्यमाह—[ ७ मप० ] **वेदेति । एवं चेत्यादिः ॥** तदनन्वाख्याने चेति तदर्थः ॥ अधीष्वेत्याचार्यवचनादेवेति भावः ॥ [ ७ मप० ] **प्रयोजनं**–तज्ज्ञानम् ॥ क्वचित्तथैव पाठः ॥ न चादौ विप्रलम्भशङ्कवान् प्रति तदुक्तिरिति वाच्यम्, तर्हि शतशस्तदुक्तावपि तच्छङ्कया प्रवृत्त्यनुपपत्तेः ॥ नचार्थात्प्रवृत्तान् प्रति प्रोत्साहनार्था तदुक्तिः, तर्ह्यन्यत्रापि तदर्थं तदुक्तेरावश्यकत्वात् ॥ अथ तत्र तद्विनैव निर्वाहः, तर्ह्यत्रापि तथेति भावः ॥ यत्तु वेदाध्ययनप्रकारं तृतीय एवाह—भाष्ये—**ओमिति ।** आचार्येण '**अधीष्व**' इत्युक्ते "**ओमभ्यादाने**" इति विहितोदात्तप्लुतविशिष्टप्रणवमादावुच्चार्येत्यर्थः इत्याहू रत्नकृदादयः । तन्न,

१ **पुनरिति** । व्याकरणमधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, वेदमधीजिगांसमानेभ्यः प्रयोजनं किं नान्वाख्यायत इति भाष्याशयः । तदनुरोधेनैवाग्रे उत्तरं 'पुरा कल्पे' इत्यादि । किंचित्पदार्थमाह—**ॐ इत्युक्त्वेति** । येऽन्यदपि किञ्चित् ओमित्युच्चार्यपाठमभ्युपगम्य विनैव प्रयोजनज्ञानं शमित्येवमादीन् पठन्ति तेभ्यः प्रयोजनं किमु नान्वाख्यायत इत्यन्वयः ॥ २ 'रणमधि' इति एवशब्दरहितः फ. पाठः ॥ ३ 'शमित्येव शमादीन्' इति क. पाठः ॥ ४ 'वृत्तान्तं पठन्तीत्यर्थः' इति क. पाठः ॥ ५ 'काङ्क्षायामाह भाष्ये' इति च. पाठः ।

ष्यन्तीति प्रयोजनविचारो व्यर्थ इति तात्पर्यम् ॥ नन्वोमित्यधिकमत आह—**अभ्युपगम्येति** । विनैव प्रयोजनज्ञानमिति शेषः ॥

( समाधानभाष्यम् )

**पुराकल्प एतदासीत्—संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते, तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते । अद्यत्वे[1] न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्ति ।**

**'वेदान्नो वैदिकाः शब्दाः[2] सिद्धाः,**
**लोकाच्च लौकिकाः,**

**'अनर्थकं व्याकरणम्' इति । तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्य[3] आचार्य इदं शास्त्रमन्वाचष्टे—इमानि प्रयोजनान्यध्येयं व्याकरणम्—इति ॥**

**( प्रदीपः )** अद्यत्वे[4]शब्दो निपातः—अस्मिन् काल इत्य[5]त्रार्थे वर्तते ॥ **त्वरिता इति** । विवाहादौ ॥

एवं सति 'ओ३म्' इत्येव वाच्ये इत्युक्त्वेस्यत्य वैयर्थ्यस्य दुष्परिहरत्वात् । तत्र तथा प्रकारसत्त्वेऽपि प्रकृते तत्कथनानुपयोगाच्च । तदेतद् ध्वनयन्नाह—[ उ० ८ मप० ] **नन्वोमित्यधिकमिति ॥** ओमित्युक्त्वेत्यधिकमित्यर्थः ॥ क्वचित्तथैव पाठः ॥ **अभ्युपगम्येतीति** । विशिष्टस्यायमर्थ इति भावः ॥ अत एव कैयटेन तथैवोक्तम् ॥ **विनैवेति** । अधीष्वेत्युक्ते तदाज्ञामित्यादिः ॥

[ भाष्ये ] एतत्पदार्थमाह—भाष्ये—**संस्कारोत्तरेत्यादि दिश्यन्त** इत्यन्तेन ॥ क्रियाविशेषणमेतम् ॥

[भाष्ये]—भाष्ये—**ब्राह्मणा इति** । प्राग्वत् ॥ **व्याकरण**मित्यङ्गानामुपलक्षणम् । प्राधान्यादस्योल्लेखः ॥ ततः किमित्याशङ्कायामत एवाह—[ २ यप० ] **तेभ्य इत्यादि** । अङ्गाध्येतृभ्य इत्यर्थः । **स्थानं**—प्रसिद्धं कण्ठादि ॥

[भाष्ये] नन्वेवं विशिष्टवेदपाठसिद्धिरेवेत्येतावता किमत आह—भाष्ये—**वेदमिति ॥**

[ भाष्ये ] प्रवक्तार इत्यत्र कर्माह—भाष्ये—**वेदान्न इत्यादिमितीत्यन्तेन ॥ नः**—अस्माकम् । कर्तरि शेषत्वविवक्षया षष्ठी ॥ **सिद्धा लोकाच्च**—तद्व्यवहाराच्च ॥ अध्यापकशिक्षयैव स्थानादिज्ञानमक्षरग्रहणवदिति एतदनर्थकमित्याह—**अनर्थेति ॥ विप्रतीति** । विरुद्धमर्थं प्रतिपन्ना—विप्रतिपन्ना, सा बुद्धिर्येषां तेभ्य इत्यर्थः ॥

[ भाष्ये ] तदेवाह—भाष्ये—**इमानीति** ॥ यद्यपि मन्वादिस्मृत्या वेदवेदाङ्गाध्ययनयोः सकारणता लभ्यते तथाप्यार्षत्वाविशेषाद् व्रीहियववद् विकल्प इति बोध्यम् ॥ **व्याकरणं**—प्रागुक्तम् ॥

[प्रदीपे] त्वेशब्दानर्थक्यं परिहरति—कैयटे—**अद्यत्वे इति ॥**

[ प्रदीपे ] शेषं पूरयति—कैयटे—**विवाहादाविति** ॥ तत्रोद्युक्ताः सन्त इत्यर्थः ॥

[ उद्द्योते ] यत्तु—किंचिदित्यन्त एव पूर्वपक्षः । ओमित्यादि परिहारः—इति । तन्न समञ्जसमित्याशयेनाह—उद्द्योते—**भाष्ये उत्तरमिति ॥**

१ 'तदद्यत्वे' इति क. च. फ. पाठः ॥ २ 'शब्दाः' इत्यस्य फ. पुस्तकेन पाठः ॥ ३ 'ध्येतृभ्यः सुहृद्भूत्वाऽऽचार्य' इति च. पाठः ॥

**(उद्द्योतः)** भाष्ये—उत्तरमाह—**पुराकल्पे इति** । युगान्तरे इत्यर्थः ॥ **संस्कारः**—उपनयनम् ॥ **करणं**—आभ्यन्तरप्रयत्नः ॥ **अनुप्रदानं**—नादादिवाह्यप्रयत्नः । तेनाधीतव्याकरणशिक्षेभ्य इत्यर्थः । ते तदानीमपि कर्मानुष्ठानफलकत्वं वेदस्य जानन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनं पृच्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्यम् ॥ ( भाष्ये )—**न तथेति** । किं तु विपरीतमित्यर्थः । भाष्ये—**आचार्यपदेन** शास्त्राध्यापको भाष्यकृदेव विवक्षितः ॥ **इदं शास्त्रमिति** । प्रयोजनान्वाख्यानमित्यर्थः ॥

( अनुबन्धचतुष्टयोपसंहारभाष्यम् )

**उक्तः शब्दः । स्वरूपमप्युक्तम् । प्रयोजनान्य[6]प्युक्तानि ॥**

**( उद्द्योतः )** भाष्ये—**उक्तः शब्द इति** । **'लौकिकानां वैदिकानां च'** इत्यनेन विषयभूतः शब्द उक्त इत्यर्थः ॥ **स्वरूप-**

[ उद्द्योते ] तत्र चौलान्तसंस्कारोत्तरं तदभावादाह—[ उ० २ यप० ] **उपेति ॥**

[उद्द्योते]—उद्द्योते—**नादादीति** । भाष्यस्थनादपदमुपलक्षणं विवारादीनामिति भावः ॥ यद्यपि सर्वाङ्गाध्ययनं पूर्वम्, तथापि वैदिकशब्दोपदेशे व्याकरणशिक्षाऽन्योपयोगाभावेन फलितार्थमाह—[ ३ यप० ] **तेनाधीति ॥** वर्णोच्चारणप्रकारस्य स्थानादेः प्रकृत्यादिविभागेन तदर्थरूपकथनस्य च तयोः सत्त्वादिति भावः ॥ नन्वङ्गाध्ययनकाले बाल्यात् प्रयोजनप्रश्नासामर्थ्याद् वेदाध्ययनकाले प्रौढत्वात् तत्सामर्थ्येऽपि कुतो न तदुपदेश इत्यत आह—**ते तदानीमपीति ॥** वेदाध्ययनकाले प्रौढतायामपीत्यर्थः ॥ अपिनेदानीं बाल्यकालसमुच्चयः ॥ अत एवाग्रे **न कदाचिद**पीत्युक्तिः ॥ [ ४ थप० ] **फलकत्वम्**—अर्थज्ञानद्वारा ॥

[ उद्द्योते ] **'तदद्यत्वे'** इति रत्नकृद्धृतभाष्यपाठासांगत्यं ध्वनयन्नाह—उद्द्योते—**किंत्विति** । अल्पायुष्ट्वात्प्रधानीभूतवेदाध्ययनोत्तरमङ्गाध्ययनमित्यर्थः ॥

[ उद्द्योते ] अन्यस्यासंभवादाह—[ उ० ७ मप० ]—**भाष्ये आचार्येति** ॥ तत्त्वे बीजमाह—**शास्त्रेति** ॥ **इदं शास्त्र**मित्यनेन प्रागुक्तव्याकरणपरामर्शे तदन्वाख्यानस्यानुत्तरत्वादुत्तरग्रन्थानुरोधाच्च तस्यार्थमाह—[ उ० ८ मप० ] **प्रयोजनान्वाख्यानमिति** । शास्त्रं व्याकरणमिदं सप्रयोजनत्वादध्येयमिति कथयतीति भाष्यार्थ इत्यर्थः ॥

[ भाष्ये ] अथ पाणिनीयशास्त्रस्यावश्यकत्वप्रतिपादनाय परमतं निरसितुमाक्षेपपूर्वकतात्पर्यं वक्तुमुक्तं संगृह्णाति—भाष्ये—**उक्तः शब्द इत्यादि ॥**

[भाष्ये] भाष्ये—**प्रयोजनेति** । **'कानि'** इत्यादिना **'उक्तः—'** इत्यतः प्राक्तनग्रन्थेनेति भावः ॥

[उद्द्योते]—उद्द्योते—**विषयेति** । लौकिको वैदिकश्च सर्वः

४ **'अद्यत्व इति ।** अद्यत्वशब्दो' इति क. च. पाठः ॥ ५ 'इत्यस्मिन्नर्थे' इति क. पाठः ॥ ६ 'जनान्युक्ता—'इति फ. अपिशब्दरहितः ॥

मपीति । 'अथ गौः' इत्यादिना ॥ अयमुपसंहारो ग्रन्थस्य, विषय-प्रयोजननिरूपणमेतावता कृतमिति बोधयितुम् । तेनैव संबन्धाधिकारिणावुक्ताविति तौ पृथङ्नोक्तौ ॥

( इत्यनुबन्धचतुष्टयनिरूपणम् )

---

( अथ शास्त्रनिर्माणरीतिनिरूपणाधिकरणम् )

( प्रकारप्रदर्शकभाष्यम् )

**शब्दानुशासनमिदानीं कर्तव्यम् । किं शब्दोपदेशः कर्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश इति ?**

( प्रदीपः ) **उभयोपदेश इति** । हेयोपादेयोपदेशे स्पष्टा प्रतिपत्तिर्भवति–इत्युभयोपदेश उद्भावितः ॥

( प्रकारनिर्द्धारकभाष्यम् )

**अन्यतरोपदेशेन कृतं स्यात् । तद्यथा-भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते । 'पञ्च पञ्चनखा भक्ष्याः' इत्युक्ते गम्यत एतत्—अतोऽन्येऽभक्ष्या इति ॥**

**अभक्ष्यप्रतिषेधेन च भक्ष्यनियमः । तद्यथा–'अभक्ष्यो ग्राम्यकुक्कुटः-अभक्ष्यो ग्राम्यसूकरः' इत्युक्ते गम्यत एतत्—आरण्यो भक्ष्य इति ॥**

**एवमिहापि ।**

**यदि तावच्छब्दोपदेशः क्रियते, गौरित्येतस्मिन्नुपदिष्टे गम्यत एतत्—गाव्यादयोऽपशब्दा इति ।**

**अथाप्यपशब्दोपदेशः क्रियेत, गाव्यादिषूपदिष्टेषु गम्यत एतत्—गौरित्येष शब्द इति ॥**

( प्रदीपः ) यद्यपि प्रतिपत्तिः स्पष्टा, गौरवं तु भवतीत्याह–**अन्यतरेति** । शब्दापशब्दयोरित्यर्थः । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावात् द्विबहुविषये निर्धारणे वर्तेते ॥ **पञ्चेति ।** अर्थित्वाद्भक्षणं प्राप्तं पञ्चसु पञ्चनखेषु नियम्यमानं सामर्थ्यादन्येभ्यो निवर्तते । न त्वयं विधिः, अप्राप्तेरभावात् ॥

( उद्द्योतः ) कियत्तत्र्योऽन्यत्र डतराभावादाह—**अन्यतरान्येति** । तत्र सुशब्दोपदेशः प्रयोगविध्यर्थोऽनुवादः । अपशब्दोपदेशस्तु प्रयोगप्रतिषेधार्थः ॥ **पञ्चनखा** इत्यस्य नियमत्वं दर्शयति—**अर्थित्वादिति । नियम्यमानं**–बोध्यमानमित्यर्थः ॥ ननु अस्य परिसङ्ख्यात्वात्कथं नियमत्वेन व्यवहारः? अस्ति च नियमपरि-

---

शब्दः शास्त्रविषय इत्युक्तमिति भावः ॥ **त्यादिनेति । ध्वनिः शब्द** इत्यन्तेनेति भावः ॥

[ उद्द्योते ] ननु **शब्दानुशासन**मित्येव सिद्धे निष्प्रयोजनोऽयं संग्रहोऽत आह—उद्द्योते—**अयमुपेति ॥ ग्रन्थस्य**-पूर्वोक्तस्य । पूर्वान्वयीदम् ॥ **विषयेति । 'अथ शब्दानुशासनम्'** इति शास्त्रारम्भप्रतिज्ञापरवाक्यसूचितमित्यर्थः । शिष्यसौकर्यार्थमिति भावः ॥ **तेनैव**-तयोरभिधानेनैव ॥ **युक्तावीति ।** उक्तप्रायावित्यर्थः ॥ **पृथगिति** । साक्षादित्यर्थः ॥ वक्ष्यमाणप्रविवेकाय **'उक्तः'** इत्यादिनोक्तसंकीर्तनमिति बोध्यम् ॥

[ भाष्ये ] तदेतद्ध्वनयन्ननुबन्धचतुष्टयसत्त्वादारब्धव्ये शास्त्रे तत्प्रकारनिरूपणायाह—भाष्ये—**शब्देति ॥ इदानीं**–तच्चतुष्टयनिश्चयकाले ॥ **कर्तव्यमिति** । अस्य **'इति सिद्धम्'** इति शेषः ॥ तत्र सामान्येन प्रश्नं प्रागुक्तं करोति—**कथमिति** ॥ एकैकोपदेशे न कृतकृत्यधीः, उभयोपदेशे गौरवमित्यशक्यमनुशासनमिति भावः ॥ स एव विशिष्याह—**किं शब्दोपेति ॥ आहोस्वित्**–अथवा ॥

[ प्रदीपे ] ननु गौरवात्तृतीयपक्षो दुर्वचोऽत आह—कैयटे—**हेयोपेति ॥**

[ भाष्ये ]—भाष्ये—**कृतं स्यादिति** । विनिगमनाविरहात् तेन सर्वेष्टं सिद्धं स्यादित्यर्थः ॥

[ भाष्ये ]—दृष्टान्तेनैतदुपपादयति—भाष्ये—**तद्यथेति ॥** यथेत्यर्थः ॥ यद्वा तेन स गम्यते यथा तथा तदित्यर्थः ॥ यद्वा तत् तादृशं यथेत्यर्थः ॥ **नियमेनेति** । रागतः प्राप्तस्य भक्ष्यस्य पुनर्विधिनेत्यर्थः ॥ तस्यार्थिकत्वादाह—**गम्यत इति ॥ एवम**ग्रेऽपि ॥ एतदेव स्फुटयति—**पञ्चेति ॥**

[ भाष्ये ]—एवमुपादेयनियमेनार्थात्तदन्यनिषेधप्रतीतौ दृष्टान्तमुक्त्वा निषेध्यनियमेनार्थात्तदन्योपादेयप्रतीतौ दृष्टान्तमाह—भाष्ये—**अभक्ष्येति** । तदुपदेशेनेत्यर्थः ॥

[ भाष्ये ]—दार्ष्टान्तिके आह—भाष्ये—**एवमिति ॥** गोशब्दादेः साधुत्वोक्तयन्यथानुपपत्त्या तद्विरुद्धमसाधुत्वमन्येषामर्थादुक्तं भवतीति भावः ॥ एवमग्रेऽपि ॥

[ प्रदीपे ] कैयटे—**तीत्याहेति** । इत्यतः सिद्धान्त्येकदेश्याहेत्यर्थः ॥

[ प्रदीपे ] यत्तु—'अत्र **'शक्येन'** इति विशेषणं देयम् । अपशब्दोपदेशस्त्वसंभावित एव अशक्यत्वादिति स्वयमेवाग्रे उक्तत्वात्'—इति कृष्णः । तन्न, तद्वत्तत्रैव तस्याप्यशक्यत्वस्योक्तत्वात् । तस्याग्रे प्रतिपाद्यत्वेनात्राविवक्षितत्वाच्च ॥ द्वितीयादिद्वयान्यतरत्वनिरासायाह—कैयटे—**शब्देति ॥**

[ प्रदीपे ]—कैयटे—**द्विबह्विति** । यथासंख्यमन्वयः ॥

[प्रदीपे]—कैयटे—**भक्षणमिति । युगपत् सर्वेषा**मित्यादिः॥

[प्रदीपे]—अत एवाह—कैयटे **सामर्थ्यादिति ॥**

[ उद्द्योते ]—उद्द्योते-**डतराभावादिति** । सूत्रेण तेभ्य एव विधानादिति भावः ॥

[ उद्द्योते ]—नियमनस्याप्राप्तांशपरिपूरणफलकत्वेन विधिरूपेण प्रवृत्तेः कैयटे पुनरुक्त्यापत्तेश्चाह–उद्द्योते–**पुनरिति ॥** तत्र शङ्कते—[५मप०] **नन्वस्येति ॥ अस्ति चेति** । अस्ति हीत्यर्थः ॥

---

१ 'कर्तव्यम् । तत्कथं कर्तव्यम् । किं श' इति फ. पाठः । 'कर्तव्यं । कथं कर्तव्यं । किं' इति ख. क. पाठः ॥ २ 'प्रतिषेधेन वा भक्ष्य' इति क. ख. च. फ. पाठः ॥ ३ 'क्रियते' इति क. ख. फ. पाठः ॥ ४ ननु शब्दाशब्दप्रतिपत्तिरुभयोपदेशेनासन्दिग्धा स्यात्तदाह-**यद्यपीति ॥** ५ **सुशब्दः**–साधुशब्दः ॥ ६ 'पञ्च पञ्चनखा' इति घ. पाठः ॥ ७ 'नियम्यमानं पुनः शब्देन बोध्य' इति घ. च.॥

संख्ययोर्भेदः । पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो **नियमः** । अन्यनिवृत्तिफला च **परिसंख्या**—इति चेत्, न । नियमेऽप्यप्राप्तांशपरिपूरणरूपफलबोधनद्वाराऽर्थान्यनिवृत्तेः सत्त्वेन अभेदमाश्रित्योक्तेः ॥ **विधिरिति** । अपूर्वविधिरित्यर्थः ॥ ये तु **पञ्च**पदस्य तदतिरिक्ते लक्षणा, **भक्ष्य**पदस्य चाभक्ष्ये सा—इति वदन्ति तेषां पदद्वये लक्षणागौरवम् । अस्यैव नियमत्वेन '**भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते**' इति भाष्यविरोधश्च । नियमपदस्य तद्बोधके लक्षणायां सैव दोषः, अक्षरास्वारस्यं च । 'नियम्यमानं भक्षणं सामर्थ्यादन्येभ्यो निवर्तते' इति कैयटासंगतिश्च । दृष्टान्तदार्ष्टान्तिकयोरत्यन्तवैषम्यापत्तिश्च । 'अन्यनिवृत्तिफला परिसंख्या' इति अभियुक्तोक्तिविरोधश्च । सिद्धस्य पुनर्विधानात्प्रापकप्रमाणस्य तदितराविषयत्वरूपसङ्कोचकल्पनम् । तेनान्येषां भक्षणाभावस्तद्भक्षणे प्रायश्चित्तं च सिध्यति । **एव**समभिव्याहारे सोऽपि स्फुटमस्यार्थस्यैव द्योतकः । अन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसंकोचफलितमर्थमादाय नेयम् ॥ **भक्ष्यनियम इति** । भक्ष्यानुमतिरूप उपदेश इत्यर्थः ॥

**( प्रकारविशेषजिज्ञासाभाष्यम् )**

**किं पुनरत्र ज्यायः ?**

**( प्रदीपः )** **किं पुनरिति** । उभयोपदेशाद्वरोर्द्वावपि प्रशस्यौ, तयोः को ज्यायानित्यर्थः ॥

**( निश्चितपक्षदर्शकभाष्यम् )**

**लघुत्वाच्छब्दोपदेशः । लघीयाञ्छब्दोपदेशः । गरीयानपशब्दोपदेशः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा-गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिका-इत्येवमादयोऽपभ्रंशाः । इष्टान्वाख्यानं खल्वपि भवति ॥**

**( प्रदीपः )** **इष्टेति** । साधुप्रयोगाद्धर्मावाप्तेरित्यर्थः । **अथवा**—उपादेयोपदेशात्साक्षात्प्रतिपत्तिर्भवतीति भावः ॥

**( आक्षेपभाष्यम् )**

**अथैतस्मिञ्शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः—गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयः शब्दाः पठितव्याः ?**

**( उद्योतः )** भाष्ये '**प्रतिपत्तौ**'इत्यस्योपायभूत इति शेषः ॥

**( समाधानभाष्यम् )**

**नेत्याह । अनभ्युपाय एष शब्दानां प्रतिपत्तौ**

---

[ ६ छप० ] **पाक्षिकेति** । बहुव्रीहिः । अप्राप्तांशविशेषणम् ॥ **फलाच**—फला तु ॥ **अपिः**—परिसंख्यासमुच्चायकः ॥ **अभेदमिति** । नियमपरिसंख्ययोरिति भावः ॥

[ उद्योते ]—नियमविधेः सत्त्वाद् उत्तरानुरोधाच्चाह—उद्योते—[ ९ मप० ]—**अपूर्वेति** ॥ ननु परिसंख्यायां शाब्दान्यनिवृत्तेः सत्त्वेन कथं तत्रार्थान्यनिवृत्तिरुक्ताऽत आह—**ये त्विति** । तत्रेतरनिवृत्तेः शाब्दत्वात्पञ्चपञ्चनखातिरिक्ता भक्ष्यत्वाभाववन्त इति बोधादिति भावः ॥ **अस्यैव**—उक्तस्यार्थस्यैव ॥ **पत्तिश्चेति** । नियमेनेत्यस्योपदेशेनेत्येवार्थः संदर्भबलाल्लभ्यते ॥ शब्दान्तरेणानुपदेशादर्थतो लाभाच्च नायं मुख्य उपदेश इति नियमपदप्रयोगः ॥ ईदृश इतरनिवृत्तिफल उपदेश एव च नियमपदेनोच्यत इति भावः ॥ [ १५ शप० ] **युक्तोक्तिविरोधश्चेति** । तस्यास्तद्रीत्या शाब्दत्वेन फलत्वोक्तेरयुक्तत्वादिति भावः ॥ नन्वेवमन्येषां भक्षणे दोषो न स्यात् तद्भक्षणे प्रायश्चित्ताम्नानानर्थक्यं च स्यादतः स्वमते सर्वेष्टसिद्धिमाह—**सिद्धस्येति** ॥ **प्रमाणेति** । रागरूपेत्यर्थः ॥ अयं भावः—पञ्चेत्यादावधारणविषयबुद्धिस्थवृत्तिपञ्चत्वसंख्यावति पञ्चपदस्य लक्षणा ॥ अवधारणं चात्र स्वान्यसंख्याधिकरणासंबन्धिसमभिव्याहृतप्रकारकज्ञानरूपम् । तेन —अन्येऽभक्ष्याः—इति फलतीति ॥ एवं चैवकारसमभिव्याहारेऽप्यार्थ्येव परिसंख्या । सा चोक्तान्यत्र समभिव्याहृतपदार्थाभावरूपा ॥ शाब्दी त्वन्यत्र स्पष्टा ॥ तदाह—**एवेति** ॥ **सोऽपि** एवकारोऽपि ॥ विरोधं परिहरति—[१८ शप०] **अन्ययोगेति** ॥

[ उद्योते ] तत्र नियमत्वाभावादाह—उद्योते [ २ यप० ] **भक्ष्यानुमतिरूप उपदेश इत्यर्थ इति** ।

[ भाष्ये ] अपशब्दोपदेशस्य गुरुत्वं व्यक्तीकर्तुं पृच्छति—भाष्ये—**किं पुनरिति** ॥ **ज्याय इति** । उपदिष्टमित्यर्थः ॥ एवं च कैयटोक्तार्थः फलित इति भावः ॥

[ प्रदीपे ]—प्रकर्षमुपपादयन्नाह कैयटे—**उभयोपेति** ॥ **द्वावपीति** । प्रत्येकमिति भावः ॥

[ भाष्ये ] **पदेश इति** । ज्यायानिति शेषः । तेषामल्पत्वानियतत्वेन प्रयुक्तत्वाच्चेति भावः ॥ एतदेवोपपादयति—**लघीयानित्यादिना** । अत्रोभयत्रेयसुन् प्राग्वत् ॥ न केवलं लाघवमेव शब्दोपदेशे, किंत्वावश्यकताऽपीत्याशयेनाह—**इष्टान्वेति** ॥ इष्टजनकान्वाख्यानमपि निश्चयेन भवतीत्यर्थः ॥

[प्रदीपे]—तदाह—कैयटे—**साधुशब्देति** । सर्वत्रेत्यादिः ॥ **धर्मेति** । अध्येत्रध्यापकयोर्भूयसा धर्मेण योग इत्यर्थः ॥ तथाच तेऽवश्यं ज्ञेया इति तदुपदेशे इष्टसिद्धिरिति भावः ॥ **इष्टानां** सुशब्दानां साक्षाज्ज्ञानं निश्चयेन भवतीति भाष्यार्थाशयेनाह—[ २ यप० ] **अथवोपेति** ।

[ भाष्ये ]—एवं तेन शब्दोपदेशे कर्तव्यत्वेन व्यवस्थापिते तदुपदेशेऽप्यशक्यत्वं प्रतिपादयितुं प्रकारविशेषजिज्ञासया पृच्छति—भाष्ये—**अथैतस्मिन्निति** । लघुभूते आवश्यके चेत्यर्थः ॥ **शब्दोपदेशे सतीति** । कर्तव्यत्वेन व्यवस्थापिते इत्यादिः ॥

[ भाष्ये ]—**प्रतिपदेति** । पदस्य पदस्य पाठ इत्यर्थः । अत एव प्रष्टैव तत्स्वरूपमाह—**गौरश्व इति** ॥

[ उद्योते ]—अनन्वयवारणायाह—उद्योते—**प्रतीति** ॥

[ भाष्ये ]—**नेत्याहेति** । प्राग्वत् ॥ ( 'नेत्याह । द्रव्यं नाम तत्' इति भाष्यव्याख्यायामुक्तवत् )

---

१ 'लिकादयोऽपि' इति फ. पाठः ।

२ 'साधुशब्दप्रयोगात्' इति क. घ. च. पाठः ।

**प्रतिपदपाठः ॥ एवं हि श्रूयते—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम" ॥ बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, न चान्तं जगाम ।**

**किं पुनरद्यत्वे ? यः सर्वथा चिरं जीवति-वर्षशतं जीवति ।**

**चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति । तत्र चास्यागमकालेनैवायुः पर्युपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः ॥**

( प्रदीपः ) **बृहस्पतिरिन्द्रायेति** । प्रतिपदपाठस्याशक्यत्वं प्रतिपादयितुमयमर्थवादः ॥ **शब्दानामिति** । 'शब्दपारायण'शब्दो योगरूढः शास्त्रविशेषस्य, तत्र 'प्रतिपदोक्तानां' इति विशेषणाभिधानाय गम्यमानार्थस्यापि 'शब्दानां' इत्यस्य प्रयोगः ॥ एकदेशोपयोगादपि लोके 'उपयुक्तं' इत्युच्यते । यथा–औषधसंस्कृतघृतमात्रैकदेशोपयोगे 'उपयुक्तं घृतं' इति व्यवहारः, तथेह न–इति प्रतिपादयति–**चतुर्भिरिति** । **आगमकालः**–ग्रहणकालः । **स्वाध्यायकालः**–अभ्यासकालः । **प्रवचनकालः**–अध्यापनकालः । **व्यवहारो** याज्ञे कर्मणि ॥

**(उद्द्योतः)** (भाष्ये)–**अनभ्युपाय इति** । तत्त्वं चाशक्यत्वेन, कृत्स्नाभिमतानभ्युपायत्वात् । तत्रार्थवादमाह–भाष्ये—**बृहस्पतिरिति** ॥ ननु 'शब्दानां' इति पुनरुक्तमत आह—**योगरूढ इति** ॥ अर्थपौनरुक्त्यमाशङ्क्य निराकरोति—**तत्रेति** ॥ ननु यावदेवाध्येष्यते

[ भाष्ये ]—इदमेव विशदयितुं श्रुतिमुदाहरति भाष्ये—[ ५ मप० ] **एवंहीति** ॥

[ भाष्ये ]—भाष्ये **दिव्यमिति** । मानुषं वर्षं दिव्यमहोरात्रम्, तेन मानेन दिव्यं वर्षसहस्रं बोध्यम् । **'कालाध्वनोः–'** इति द्वितीया ॥

[ भाष्ये ] भाष्ये—**'जगामेति'** इति पाठः ॥ विशिष्टवक्तृश्रोतृकालानां समवधानेऽपि पुरा समाप्तिर्नाभूत् किं पुनर्वाच्यम् 'संप्रति तेषां हीनत्वेऽपि सा' इत्यभिप्रेत्य व्याचष्टे—**बृहस्पतिश्चेति** । **चकारौ**–साधनसाहित्यवाचिनावाधुनिकप्रवक्ताध्येतारौ व्यतिरेचयतः ॥ **किं पुनरद्यत्वे इति** । अस्मिन्कालेऽन्तं गमिष्यतीति किंपुनर्वक्तव्यमित्यर्थः, पूर्वान्वयीदम् ॥ ननु रसायनादिनेदानीमपि मनुष्याणां बहुकालजीवित्वात्सा सुलभेत्यत आह—**यः सेति** ॥ **अद्यत्व** इत्यस्य मध्यमणिन्यायेनात्राप्यन्वयः ॥ **सर्वथा**–अत्यन्तम् ॥ **सर्वंचिर**मिति पाठे सर्वेभ्यश्चिरमिति 'सुप्सुपा' इति समासः । **वर्षशतमिति** । षष्ठीतत्पुरुषः ॥ द्वितीया प्राग्वत् ॥ इदानीं रसायनादिसिद्धेरभावादिति भावः ॥

[ भाष्ये ]—[७मप०] **प्रकारैः**–प्रक्रियते व्यवच्छिद्यतेऽनेनेति–प्रकारः–सामान्यस्य भेदको विशेषः ॥ विद्यतेऽनयेति–**विद्या, उपयुक्ता**–फलवती ॥ क्वचिद् **'उपयुज्यते'** इति पाठः ॥ अत एवोद्द्योतेऽग्रे तथोक्तम् ॥

[भाष्ये]—तानेवाह—भाष्ये—[८ मप०] **आगमेत्यादि** ॥

[भाष्ये] **व्यवहारे**त्यस्य यज्ञाद्यनुष्ठानाध्यापनकालेनेत्यर्थः ॥

[भाष्ये]—ततः किमत आह—भाष्ये [ ९ मप० ] **तत्र चेति** । तेषां कालानां मध्ये ॥ **अस्य**–वक्तुः श्रोतुश्च ॥ **आगमकालेनैव**–कृत्स्नेत्याद्यर्थः ॥

[भाष्ये]—उपसंहरति भाष्ये—[ ११ शप० ] **तस्मादिति** । यतः कतिपयशब्दज्ञाने न सर्वज्ञानादिसिद्धिस्तत इत्यर्थः ॥

[प्रदीपे]—ननु कथमर्थवादेनानभ्युपायत्वमत आह कैयटे

**प्रतिपदेति** । अशक्यत्वद्वारेति भावः ॥ **प्रतिपादयितुं**–प्रतिपादयतः ॥

[प्रदीपे]—शब्दानां पारमन्तमयते गच्छति येनेति व्युत्पत्तिर्बोध्या । रूढिस्तु प्रतिपदोक्तशब्दप्रतिपादकस्य ॥ तदाह—कैयटे **शास्त्रेति** ॥

[प्रदीपे]—कैयटे [ ५ मप० ] **अपिना** समुदायपरिग्रहः ॥ [६ छप०] **घृतमात्रैकेति** । औषधिसंबन्धिसारांशादिना संस्कृता घृतस्य या मात्रा परिमितिस्तदेकेत्याद्यर्थः ॥ [ ७ मप० ] **तथेहेति** । शास्त्र इत्यर्थः ॥

[प्रदीपे]—कैयटे—[ ८ मप० ] **ग्रहणेति** । अध्ययनेत्यर्थः ॥ स्वाधीनाक्षरावाप्तीतियावत् ॥ **अभ्यासेति** । गुणनेत्यर्थः ॥ मननेनेति यावत् ॥

[प्रदीपे]—तथाच **व्यवहार**शब्दस्य क्रत्वर्थपुरुषार्थकर्मादौ यथार्हमुपकार इत्यर्थः ॥ तदेतदभिप्रेत्याह—कैयटे [ ९ मप० ] **व्यवहारो याज्ञे कर्मणीति** ॥

[उद्द्योते] अत एवाग्रे–**अनभ्युपाय** इत्युक्तं भगवता ॥

[उद्द्योते]—ननु लक्षणेन प्रकृत्यादिविभागेन तद्धेतुसंज्ञादिधीपूर्वकमेकस्य ज्ञानाद्गौरवम्, प्रतिपदपाठे तु तत एव तत्तच्छब्दोच्चारणेनैवायासेन तत्प्रतिपत्तेर्लाघवमिति कथं तस्यानभ्युपायत्वं भगवतोक्तमत आह—[ उ० २ यप० ] **तत्त्वं चेति** ॥ **अशक्येति** । आनन्त्यादिति भावः ॥

[उद्द्योते] **तत्रेति** । अनभ्युपायत्वे इत्यर्थः ॥

[उद्द्योते]—[ ३ यप० ] **पुनरुक्तमिति** ॥ शब्दानामित्यनेन शब्दपारायणमित्यत्रत्यशब्दपदं पुनरुक्तमित्यर्थः ॥ शब्दपारायणमित्यत्रत्यशब्दशब्दस्याफलत्वमिति यावत् ॥

[ उद्द्योते ]—**अर्थपौनरुक्त्यमिति** । योगरूढ्यैव शब्दानां विषयत्वावगमादिति भावः ॥ अत एव **गम्यमाने**ति कैयटेनोक्तम् ॥ [४ थप०] **आशङ्क्येति** । तदाशङ्कां हृदि निधायेत्यर्थः ॥ **तत्रेतीति** । श्रुतावित्यर्थः ॥

[उद्द्योते]—[ ४ थप० ] **यावदेवेति** । यावता कालेनेति

१ 'न चान्तं' इति क. पाठः ॥ २ 'जगामेति' इति इतिशब्दसहितश्छायागृहीतः पाठ इदानीं नोपलभ्यते ॥

३ 'चागमकालेनैव कृत्स्नमायुः' इति क. पाठः ।

४ 'आयुः कृत्स्नं पर्युप' इति मुद्रितपाठः ।

तावदेवाभ्युपयुक्तं स्यादत आह—भाष्ये—**चतुर्भिरिति** ॥ उक्तमेव तदाशयमाह—**एकदेशेत्यादि** । विद्योपयोगाधारभूतानां कालानां विद्यां प्रत्यप्याधारत्वात् तस्य च करणत्वविवक्षा बोध्या । चतुर्षु कालेषु विद्योपयुज्यते–इति फलितोऽर्थः । तत्राद्ययोः 'विद्यार्थ्ययं बुद्धिमान्' इत्यादरपूर्वकमन्नवस्त्रादिलाभरूप उपयोगः । तृतीये–प्रतिष्ठा, सच्छिष्यलाभद्वाराऽर्थप्राप्तिः, सत्कारविशेषश्च । चतुर्थे–यज्ञाद्यनुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभावः, कर्मसाङ्गता, दक्षिणालाभः, प्रतिष्ठा चेत्युपयोगः । तादृशश्चोपयोगः सर्वाध्ययन एव ॥ भाष्ये—**पर्युपयुक्तमिति** । समाप्तमित्यर्थः । 'पर्यवसन्नं'इति पाठान्तरम् । न चेष्टापत्तिः, विद्योच्छेदापत्तेः । कर्मसु प्रायश्चित्तविधिवैयर्थ्यापत्तेश्च ॥

**( आक्षेपभाष्यम् )**

**कथं तर्हीमे शब्दाः प्रतिपत्तव्याः ?**

**( समाधानभाष्यम् )**

**किंचित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम् । येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन् ॥**

**किं पुनस्तत् ?**

**उत्सर्गापवादौ । कश्चिदुत्सर्गः कर्तव्यः, कश्चिदपवादः ॥**

( प्रदीपः ) **किंचिदिति** । सामान्यविशेषौ यस्मिंस्तत्–सामान्यविशेषवत् । **'कर्मण्यण्'**,**'आतोऽनुपसर्गे कः'**इत्यादि॥

( उद्द्योतः ) ननु तदात्मकत्वाल्लक्षणस्य मतोरनुपपत्तिरत आह—**सामान्यविशेषाविति** । लक्षणं–शास्त्रमित्यर्थः ॥

**( आक्षेपभाष्यम् )**

**कथंजातीयकः पुनरुत्सर्गः कर्तव्यः, कथंजातीयकोऽपवादः ?**

( उद्द्योतः ) भाष्ये–**कथंजातीयक इति** । केन प्रकारेणेत्यर्थः । एतेनैवंजातीयकेन शास्त्रेण सुशब्दोपदेशप्रवृत्तिः पाणिनेरुचितेति सूचितम् ॥

---

भावः ॥—**युक्तं स्यादिति** । तावानेवाभ्युपयोगो भविष्यतीत्यर्थः ॥ तथाच किं समाप्येति भावः ॥ स्वेन विरोधं परिहरति [ ६ छप० ] **उक्तमेवेति ॥ तदाशयं**–तथा भाष्योक्तिहेतुभूतं सदृष्टान्तमाशयम् ॥

[उद्द्योते]—नन्वेवमपि कथं विद्यां प्रति कालस्य प्रकारत्वम्, तस्योपयोगाधारत्वेऽपि विद्याऽनाधारत्वादत आह—उद्द्योते [ ६ छप० ] **विद्योपेति । प्याधारत्वादिति** । तां प्रति प्रकारताश्रयणम्–इति शेषः ॥ क्वचित्तथा पाठ एव ॥ नन्वेवं तृतीयानुपपत्तिरत आह—[ ७ मप० ] **तस्य चेति** । आधारस्य चेत्यर्थः ॥ तत्फलितमाह—[ ८ मप० ] **चतुर्ष्विति ॥**

[उद्द्योते]—प्रवचनस्य व्यवहारत्वेऽपि अर्थानुष्ठानवन्नोभयार्थत्वम्, किंतु पुरुषार्थत्वमेवेति पृथगुक्तिः ॥ अत्राद्ययो········ नत्वम्, अन्त्ययोः फलार्थत्वेनेति विवेकः ॥ कालग्रहणं कालस्यान्यत्वोक्तिप्रस्तावात् ॥ तदेतदभिप्रेत्याह—[ उ० ८ मप० ] **तत्राद्ययोरिति** । चतुर्णां मध्ये, आगमस्वाध्यायकालयोरित्यर्थः ॥ **पूर्वकमिति** । परैर्दानात्तथेति इति शेषः ॥ यद्वा तत्पूर्वकत्वं दानद्वारेति यथाश्रुतमेवास्तु उपयोग इति भावः ॥ एवमग्रेऽपि ॥ [ १० मप० ] **विशेषश्चेति** । सुकृतविशेषोऽपि बोध्यः ॥ 'विद्याया उपयोगः' इत्यस्यानुषङ्गः ॥

[उद्द्योते]—**'आगमकाले** इति सप्तम्यन्तम् । तेषां मध्ये आगमकालादारभ्यासमाप्तिपर्यन्तं **अस्य नैव आयुः पर्युपयुक्तं** पर्याप्तं स्यादित्यर्थः' इति कश्चित् । पाठान्तरानुरोधेन समाप्तमित्येवार्थं इति ध्वनयन्नाह—[उ० १४ शप०] **पर्यवेति ॥ विद्योच्छेदेति** । फलाभावादिति भावः ॥ अनुष्ठानाभावादाह—**कर्मस्विति ॥**

[भाष्ये]—पुनः स एव पृच्छति—भाष्ये—**कथं तर्हीति ॥** गौरश्व इत्यादयः स्वरूपेणापि ये ये दुर्ज्ञानास्ते कथं लक्षणेनानुगन्तुं शक्या इत्यर्थः ॥

[ भाष्ये ]—उत्तरमाह सिद्धान्ती—**किंचिदिति** । लघुभूतमित्यर्थः ॥

[भाष्ये]—ननु तत्प्रवर्तनेऽपि किं स्यादत आह भाष्ये–**येनेति । अल्पेन**–लघुभूतेन ॥ **यत्नेन**–उपायेन । यत्नसाध्यत्वाल्लक्षणं–शास्त्रं यत्नशब्देनोच्यते **येन** शास्त्रेण ॥ **महतो महत इति** । वीप्सार्थो द्विरुक्तिः, द्वितीयाबहुवचनान्तावेतौ शब्दसमूहविशेषणे ॥ यद्वा—आद्यः पञ्चम्यन्तः, विशालादपि विशालाञ्शब्दसमूहानित्यर्थः ॥

नन्वेवमस्यतौ सिजङोः सामान्यविशेषलक्षणाभ्यामनिष्टरूपद्वयापत्तिः, 'इरितो वा' इति वापदानर्थक्यं चेत्याशयेन पृच्छति—**किं पुनस्तदिति** । शास्त्रीयसामान्यविशेषयोः स्वरूपं किं पुनरित्यर्थः ॥ तौ कीदृशाविति यावत् ॥ यथा विशेषेण परामर्शस्तथा प्रतिपादयितव्यम् ॥

उत्तरमाह—**उत्सर्गेति** । तथाचापवादविषयपरिहारेण कौण्डिन्ये दधितक्रयोरिव नास्यतौ रूपद्वयम्, नापि तद्वैयर्थ्यमिति भावः ॥ तत्फलितमाह—**कश्चिदिति । योग** इत्यर्थः ॥ शास्त्रे इति भावः ॥ **कर्तव्य** इत्यस्याग्रेऽनुषङ्गः ॥

[ प्रदीपे ]—सामान्यविशेषशब्दौ सूत्रपराविति तयोः क्रमेण स्वरूपे भाष्योक्ते एवाह कैयटे—**कर्मेति । आदिना 'कर्तरि शप्' 'रुधादिभ्यः श्नम्'** इत्यादिपरिग्रहः ॥

[उद्द्योते]—**तदात्मकत्वादिति** । सामान्यविशेषस्वरूपत्वादित्यर्थः ॥ नन्वेवं **लक्षणमि**त्यनुपपन्नमत आह—**शास्त्रमिति ।** अष्टाध्यायीरूपमित्यर्थः ॥

[भाष्ये] तयोरुदाहरणे प्रतिपादयितुं विशेषेण पृच्छति—**कथमिति ॥** प्रकारमात्रे थमुः, तद्वति जातीयर्–इति–अत्र जातीयरैव निर्वाहेऽपि सामान्योपक्रमाच्छिंशपा वृक्ष इतिवत्प्रयोगः ॥

[उद्द्योते]—**उक्तार्थानामि**त्यस्यानित्यत्वं सूचयितुमेवं प्रयोग इति कश्चित् । तदेतदभिप्रेत्याह—उद्द्योते—**केनेति ॥ शास्त्रेण**–अनेन ॥

---

१ 'कर्मविधिवैयर्थ्यापत्तेश्च' इति ज. पाठः ।

२ 'येन येनाल्पेन' इति फ. पाठः ।

( समाधानभाष्यम् )

सामान्येनोत्सर्गः कर्तव्यः । तद्यथा—"कर्मण्यण्" ।

तस्य विशेषेणापवादः । तद्यथा—"आतोऽनुपसर्गे कः" ॥

( जातिव्यक्तिपदार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

किं पुनराकृतिः पदार्थः, आहोस्विद् द्रव्यम् ?

( समाधानभाष्यम् )

उभयमित्याह ॥

कथं ज्ञायते ?

उभयथा ह्याचार्येण सूत्राणि पठितानि । आकृतिं पदार्थं मत्वा—"जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" इत्युच्यते । द्रव्यं पदार्थं मत्वा—"सरूपाणाम्—" इत्येकशेष आरभ्यते ॥

( प्रदीपः ) सकलशास्त्रव्यवस्था-एकतरपक्षाश्रयणे न सिध्यतीति पक्षद्वयाश्रयणं प्रश्नपूर्वकं करोति-**किं पुनरिति** । आकृतिपक्षे केवल आश्रीयमाणे **'सकृद्गतौ विप्रतिषेधे-'** इत्यादि नोपपद्यते, केवलेऽपि व्यक्तिपक्षे **'पुनःप्रसङ्गविज्ञानात्'** इत्यादि न घटेत । तस्माल्लक्ष्यसिद्धये क्वचित्प्रदेशे कश्चित्पक्षः परिगृह्यते । तत्र **जातिवादिन आहुः**—जातिरेव शब्देन प्रतिपाद्यते, व्यक्तीनामानन्त्यात्संबन्धग्रहणासंभवात् । सा च जातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते । तत्र गवादयः शब्दा भिन्नद्रव्यसमवेतां जातिमभिदधति । तस्यां प्रतीतायां तदावेशात्तदवच्छिन्नं द्रव्यं प्रतीयते । शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते । गुणे तु तत्संबन्धात्प्रत्ययः, द्रव्ये संबन्धिसंबन्धात् । संज्ञाशब्दानामप्युत्पत्तिप्रभृत्याविनाशात् पिण्डस्य कौमारयौवनाद्यवस्थाभेदेऽपि स एवायमित्यभिन्नप्रत्य-

---

[भाष्ये]—उत्तरमाह—भाष्ये—**सामेति** ॥ क्वचित् **'सामान्ये'** इति पाठः ॥ तत्र विषयसप्तमीति कृष्णः । तृतीयार्थे सप्तमीत्युचितम् । करणस्याधिकरणत्वविवक्षया सेति यावत् ॥

[भाष्ये]—**आकृतिः पदार्थ इति** । उत्सर्गापवादलक्षणगतानां पदानामिति भावः ॥

[भाष्ये]—तदाह सिद्धान्ती भाष्ये—**उभयमिति । इत्याहेति** पूर्ववत् ॥ तथाच क्वचिदुत्सर्गापवादलक्षणयोस्तत्तत्पदानां जातिरर्थः क्वचित्तु व्यक्तिरिति लक्ष्यानुरोधेनोभयाश्रयेण शास्त्रं प्रवृत्तिमिति भावः ॥

उक्ताशयानभिज्ञो लक्षणैकचक्षुष्कः शङ्कते—**कथमिति** ॥ सूत्रकृता तथा शास्त्रं प्रणीतमिति केन प्रकारेण निश्चीयत इत्यर्थः ॥ तत्र प्रमाणं किमिति यावत् ॥

एकदेशी तदनुरोधेनैवोत्तरमाह—**उभयथेति** ॥ **हि**-यतः ॥ अन्यथानुपपत्त्या लब्धजातिपक्षसाधकव्यक्तिपक्षसाधकस्वरूपप्रकारद्वयेनेत्यर्थः ॥ **सूत्राणीति** । सूत्रे पठिते इत्यर्थः ॥ आर्षं बहुवचनम् ॥

[भाष्ये]—तदेवाह—भाष्ये-**आकृतिमिति** । यदि व्यक्तिरेवेत्येतत्सार्वत्रिकमिष्टं स्यात् तदा संपन्ना व्रीहय इत्यत्र व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति **'जात्याख्यायाम्'** इति नारभेत, तदारम्भात्तु जातेस्तत्त्वमिति निश्चय इति भावः ॥

[भाष्ये]—**इत्येकशेष इति** । एकस्य शेषो येनेति बहुव्रीहिः । **सरूपाणामिति** रूप एकशेषविधायको योग इत्यर्थः ॥ यदि जातिरेवेति सार्वत्रिकमिष्टं तर्हि **सरूपसूत्रं** नारभेत, यत आकृतेरेकत्वादेवैकशब्दप्रयोगः, तेनैव च जात्यवच्छिन्नसकलव्यक्त्युपस्थितिसंभव इति नानेकव्यक्त्यभिधानायानेकशब्दप्रसङ्गः । तदारम्भात्तु व्यक्तेरपि तत्त्वमिति निश्चय इति भावः ॥

[प्रदीपे]—कैयटे—[१मप०] **श्रयण इति** । सप्तम्यन्तम् ॥ **पक्षद्वयेति** । लक्ष्यानुरोधेन व्यवस्थितेत्यादिः ॥ **प्रश्नेति** । अन्यदोषेत्यादिः ॥ प्रसङ्गादिति भावः ॥ **करोतीति** । सिद्धान्तीत्यादिः ॥ अर्थविशेषान्तर्भावेनैव साधुत्वस्य वक्ष्यमाणत्वात्तदर्थमिति भावः ॥

[प्रदीपे]—सकलशास्त्रव्यवस्थामाह कैयटे [३ यप०] **केवलेति** । अनेन व्यक्तिपक्षव्यावृत्तिः ॥ एवमग्रेऽपि ॥ **आदिना 'यद्बाधितं तद्बाधितमेव'** इत्यस्य परिग्रहः ॥ [४ थप०] **केवलेऽपीति** । केवले व्यक्तिपक्षेऽपीत्यर्थः ॥ **आदिना 'सिद्धम्'** इत्यस्य परिग्रहः ॥

[प्रदीपे]—उत्तरार्थं वदन्नुपसंहरति—कैयटे—[५मप०] **तस्मादिति** । बुद्धिस्थाद्धेतोरित्यर्थः । सकलशास्त्रव्यवस्थाया अन्यतरपक्षाश्रयणेनासिद्धत्वादिति यावत् ॥ ज्ञापकपरवक्ष्यमाणभाष्यस्यायुक्तत्वं ध्वनयन्नाह—**लक्ष्येति** ॥ लक्ष्यानुरोध एव तदाश्रयणे शरणमिति भावः ॥

[प्रदीपे] प्रसङ्गादनयोः पक्षयोरुपपत्ती क्रमेणाह—कैयटे—[५ मप०] **तत्रेत्यादिना** ॥ **तत्र**-तयोः पक्षयोर्मध्ये ॥ **पाद्यते इति** । लाघवादिति भावः ॥ हेत्वन्तरमाह—**व्यक्तीनामिति** । व्यभिचाराच्चेत्यपि बोध्यम् ॥ तत्सत्त्वे मानमाह—**साचेति । प्रत्ययो** ज्ञानम् ॥ सामान्येनोक्तं स्पष्टार्थं विशिष्य चतुर्विधशब्देषु क्रमेणोपपादयति—[८मप०] **तत्रेति** । चतुर्णां शब्दानां मध्य इत्यर्थः ॥

[प्रदीपे] कैयटे [१२शप०] **संबन्धादिति** । प्रत्यय इत्यस्यानुषङ्गः । परम्परयेति भावः ॥ संज्ञास्थले पिण्डस्यैकत्वेन जात्यसंभवात्तत्र कथं निर्वाह इति मध्ये एव विमताशङ्कायां व्युत्क्रमेणादौ तत्रैवाह—[१२ शप०] **संज्ञेति** ॥ अत एवाह— ... ... ... ... ... ... ... ॥ यद्वा—क्रमप्रतिपादने तात्पर्यादेवमुक्तिः । यद्वा-त्रयीपक्षे संज्ञाशब्दानां जातिशब्देऽन्तर्भावेन तत्र जातेः प्रसिद्धत्वात्क्रियासु तस्याः प्रतिपादनीयत्वादेवमुक्तिः ॥

यनिमित्ता डित्थत्वादिका जातिर्वाच्या । क्रियास्वपि जातिर्विद्यते, सैव धातुवाच्या । पठति–पठतः–पठन्ति–इत्यादेरभिन्नस्य प्रत्ययस्य सद्भावात्तन्निमित्तजात्यभ्युपगमः ॥ **व्यक्तिवादिनस्त्वाहुः**–शब्दस्य व्यक्तिरेवाभिधेया[1], जातेस्तूपलक्षणभावेनाश्रयणादानन्त्यादिदोषानवकाशः ॥

**( उद्योतः ) आकृतिपक्षे इति ।** तत्र उद्देश्यतावच्छेदकजात्याक्रान्ते क्वचिचरितार्थयोर्द्वयोः सत्प्रतिपक्षन्यायेन विरोधस्थले उभयोरप्यप्राप्तौ '**विप्रतिषेधे परम्**' इति विध्यर्थम्, न तु नियमार्थमिति '**सकृद्गतौ**' इति न सिध्यति । व्यक्तौ तु तत्तद्व्यक्तिविषययोरपि शास्त्रयोरचारितार्थ्यात्पर्यायेणोभयप्राप्तौ नियमार्थं तदिति '**पुनः प्रसङ्गेन**'[2] इत्यादि न सिध्यतीत्यर्थः । इदं च **विप्रतिषेधसूत्रे** दूषयिष्यते ॥

**तस्यां प्रतीतायामिति ।** शब्दशक्यत्वेन गृहीतायामित्यर्थः । एवं '**अभिदधति**' इत्यस्याभिधाविषयत्वेन गृह्णन्तीत्यर्थः ॥ **तदावेशात्**–तत्समवायात्[3] ॥ **प्रतीयत इति ।** अविनाभावाच्छब्दजन्यबोधविषयो

भवतीत्यर्थः ॥ **प्रत्ययः**–ज्ञानम् ॥ **उपलक्षणभावेनेति ।** शक्यतावच्छेदकत्वेनेत्यर्थः । तत्र तु न शक्तिरिति मञ्जूषायां प्रतिपादितम् ॥

[ भाष्ये–**जात्याख्यायामिति ।** व्यक्तौ पदार्थे 'संपन्ना व्रीहयः' इति व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति व्यर्थं तत्स्यात्–इति भावः ॥ **सरूपाणामिति ।** आकृतेरेकत्वादेवैकशब्दप्रयोगोपपत्तौ तदुक्तिसंभवो व्यक्तिपक्ष एवेति भावः । न चाकृतिपक्षेऽपि 'अक्षाः' 'पादाः' इत्याद्यर्थं स आवश्यक इति वाच्यम् । तावतीषु कांचिदेकां जातिं स्वीकृत्य तस्या एव शब्दवाच्यत्वम्, परम्परयाऽत्र व्यक्तिप्रत्यय इति **सरूप**सूत्रे कैयटेनैव वक्ष्यमाणत्वात् । **जातौ न जातिरिति** परेषां दर्शनं, नास्माकमिति च तत्रोक्तम् ॥]

## ( शब्दनित्यत्वानित्यत्वविचारः )

### ( सन्देहदर्शकभाष्यम् )

**किं पुनर्नित्यः शब्दः, आहोस्वित्कार्यः ?**

**( प्रदीपः ) किं पुनरिति ।** विप्रतिपत्त्या संशयः । **केचित्**

अस्य **जातिर्वाच्येत्य**त्रान्वयः । **अपिः** पिण्डस्येत्यत्र योज्यः । एकस्यापि पिण्डस्य तस्माद्भेदे सतीत्यर्थः । **प्रत्ययेति** बहुव्रीहिः ॥ तत्र तत्सत्त्वे मानमाह—**पठतीति ।** यत इत्यादिः ॥ [ १७-शप० ] **व्यक्तिरेवेति ।** आनुभविकत्वादनुपपत्तिप्रतिसंधानं विना प्रतीयमानत्वाद्बाहाद्यन्वयस्य तत्रैव संभवाद्भ्रमकं विना तस्याः प्राधान्येनाप्रतीयमानत्वाच्च नानन्त्यादिदोषोऽत आह—**जातेस्त्विति ।** अनुगताया इति भावः ॥

[ प्रदीपे ] [ कै० १८ शप० ] **आनन्त्यादीति । आदिना** गौरवव्यभिचारपरिग्रहः ॥

[ उद्द्योते ]—अनुपपत्तिप्रकारं क्रमेणाह—उद्द्योते—**तत्रेत्यादिना ॥ तत्र**–जातिपक्षे ॥ तत्र कार्यस्याबाधादाह—**उद्देश्येति । अपि**र्मिथः समुच्चायकः ॥ यद्वा विप्रतिषेधे इति नियमसमुच्चयः ॥ अप्राप्तिर्विध्यर्थत्वे निमित्तम् ॥ स्पष्टार्थमाह—[ ३ यप० ] **नन्विति ।** तुरुक्तवैलक्षण्ये ॥ [ ४ थप० ] **विषययोरपीति ।** सप्तम्यन्तम् । तयोरपि सतोरित्यर्थः ॥ [ ५ मप० ] **शास्त्रयोः**–विरोधाधारलक्ष्यविषययोः । यद्वा हेतुगर्भविशेषणम् । सकलव्यक्तिविषययोरपि शास्त्रयोरित्यर्थः ॥ निरपिपाठस्तु सुगम एव ॥ [ ५ मप० ] **तदिति ।** 'विप्रतिषेधे–' इति सूत्रमित्यर्थः ॥ **प्रसङ्गेत्यादीति । आदिना 'विज्ञानात्सिद्धम्'** इत्यस्य परिग्रहः ॥ '**आकृतीत्यादि—घटेत**' इत्यन्तकैयटासंगतिमाह—**इदं चेति ॥**

[ उद्द्योते ] विशिष्टज्ञानजनकोपस्थितिरूपनिर्विकल्पसरणायाह—[ उ० ७ मप० ] **शब्दशक्येति ॥** सिंहावलोकनन्यायेनैतदेकवाक्यतायै आह—**एवमिति ।** एवमग्रेऽपि ॥ तद्वैशिष्ट्यादित्यर्थेन पौनरुक्त्यवारणायाह—[ ८ मप० ] **तत्समेति ॥** अत एव '**तत्सं-**

**बन्धात्**' इत्यग्रे वक्ष्यति कैयटः ॥ लक्षणादिवारणायाह—[ ९ मप० ] **अविनेति ।** व्याप्तेरित्यर्थः ॥

[ उद्द्योते ] शब्दोपात्तस्याप्युपलक्षणत्वस्य काकवदित्यादौ सत्त्वात्तन्मतप्रवेशसत्त्वादाह [ उ० १० मप० ] **शक्येति ॥** नन्वेतावतैव तस्या वाच्यत्वापत्तिरिति स दोष एवात आह—**तत्र त्विति ।** शक्यतावच्छेदके त्वित्यर्थः ॥ अकार्यत्वेऽपि कार्यतावच्छेदकत्ववदशक्यत्वेऽपि शक्यतावच्छेदकत्वसंभवादिति भावः ॥

[ उद्द्योते ]—तदाह—उद्द्योते [ १२ शप० ] **व्यक्ताविति ॥ इतीति ।** इत्यत्रेत्यर्थः ॥

[ उद्द्योते ] तदाह—[ उ० १४ शप० ] **आकृतेरिति ॥** नारायणकौस्तुभाद्यनुरोधेन शङ्कते [ १५ शप० ] **नचेति ॥ स इति । सरूपे**तियोग इत्यर्थः ॥ **तावतीषु**–जातिषु ॥ **वाच्यत्वमिति ।** स्वीक्रियतामिति शेषः ॥ नन्वेवं तदाश्रयजातिबोधेऽपि व्यक्तिबोधो न स्यादत आह—[ १७ शप० ] **परम्परेति ॥** ननु जातौ न जातिरनवस्थापत्तेरत आह—[ १८ शप० ] **जाताविति ॥ परेषां** नैयायिकानाम् ॥ **तत्रोक्तम्**–कैयटेनैव ॥ अग्रे अग्रे तदनङ्गीकारेण नानवस्थेति भावः ॥ अत्र '**कैयटेनैव**' इत्यनेन सूचितारुचिबीजं तु तत्रैणैव तत्र निर्वाह इति । वस्तुतस्तु लक्ष्यानुरोध एवात्र शरणम् । अत एवानयोः प्रत्याख्यानसंगतिः । अन्यथा भाष्ययोर्विरोधः स्पष्ट एव । एवं च सूत्ररीत्येदं भाष्यम् ॥ सिद्धान्तरीत्या न भाष्यं । किंच यत्र वने वृक्षान्तरसत्त्वेऽपि पनसव्यक्तिरेकैव तत्र लक्षणया जातिपरत्वे पनसाः सन्तीति प्रयोगसिद्ध्यर्थं '**जात्याख्यायां–**' इति सूत्रमावश्यकम् । अत एव वक्ष्यति **सरूप**सूत्रे वार्तिककृत्—***व्यर्थेषु च मुक्तसंशयम्*** इति, इति बोध्यम् ॥

[1] 'व्यक्तिरेव वाच्या' इति मुद्रितपाठः ।

[2] 'पुनः प्रसङ्गेत्यादि' इति मुद्रितपाठः ।

[3] जातिपक्षे व्यक्तिप्रतीतिमुपपादयति–**तत्समेति ॥**

[4] कोष्ठकान्तर्गतोऽयं ग्रन्थो दाधिमथैः 'इदञ्च विप्रतिषेधसूत्रे निरूपयिष्यते' इत्युत्तरं निवेशित आसीत् । आदर्शपुस्तकेषु तादृशपाठानुपलम्भात् समुपक्रान्तप्रदीपव्याख्यानपरिसमाप्तावेव भाष्यव्याख्यानस्य श्रीमन्नागोजीभट्टशैलीसिद्धत्वात् टिप्पणस्वरूपच्छायानुरोधेनाखण्डप्रवाहस्वरूपग्रन्थविपरिवर्तनस्याक्षमत्वाच्च तन्नाद्रियते ॥

ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः । अन्ये–वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे संगिरन्ते । अन्ये तु–ध्वनिरेव शब्दः स च कार्यः, तद्व्यतिरेकेणान्यस्यानुपलम्भात्–इत्याचक्षते ॥

**( उद्योतः ) विप्रतिपत्त्येति** । शब्दानां नित्यत्वे व्यर्थं व्याकरणशास्त्रमिति प्रश्नाशयः ॥ **केचित्**–मीमांसकाः ॥ **वर्णात्मकमिति** । पदवाक्ये च वर्णसमूहरूपे एवेति तदाशयः । अत्र मते 'एकं पदंपदं'इत्याद्यनुपपत्तेराह—**अन्ये**–वैयाकरणाः ॥ **अपरे**–त एव मुख्याः । पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात् तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तद्भावः ॥ **अन्ये त्विति** । वैशेषिकादयः ॥ **ध्वनिरिति** । स च वर्णावर्णात्मकत्वेन द्विविधः । एवं च कण्ठादिवच्छास्त्रमपि तस्य कारणमित्याशयः ॥

**( पक्षनिर्द्धारकभाष्यम् )**

**संग्रह एतत्प्राधान्येन परीक्षितम्—नित्यो वा स्यात्कार्यो वेति । तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि । तत्र त्वेष निर्णयः—यद्येव नित्यः, अथापि कार्यः, उभयथाऽपि लक्षणं प्रवर्त्यमिति ॥**

**( प्रदीपः ) संग्रह इति** । ग्रन्थविशेषे ॥

**( उद्योतः ) संग्रहः**–व्याडिकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः ॥ भाष्ये—**उभयथाऽपीति** । एवं च निष्फलोऽयं विचार इति भावः ॥ साधुत्वज्ञानायोभयथाऽपि शास्त्रमावश्यकमिति तात्पर्यम् ॥

**( नित्यशब्दवादेऽपि शास्त्रस्य धर्मजनकताधिकरणम् )**

**( वार्तिकावतरणभाष्यम् )**

**कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम् ?**

**( प्रदीपः ) कथं पुनरिति** । किमाचार्य एव स्रष्टा शब्दार्थसंबन्धानाम्, अथ स्मर्ता–इति **प्रश्नः** ॥

**( उद्योतः )** अथ पाणिनिसूत्रव्याख्यानभूतं वार्तिकमवतारयति—**कथं पुनरिति** । अत एवात्रैव पाणिनिनामग्रहणम् । इतः पूर्वं तु सवार्तिकशास्त्रान्वाख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इति बोध्यम् ॥ **शब्दार्थसंबन्धानामिति** ।

---

[ प्रदीपे ] संशयबीजमाह—कैयटे **विप्रेति** । विरुद्धकोटिद्वयोपस्थितेरित्यर्थः ॥

[प्रदीपे] विप्रतिपत्तिमेवाह—कैयटे **केचिदित्यादिना** ॥ **वर्णात्मकमिति** । पदवाक्ययोस्तदतिरिक्तत्वं नेत्यर्थः ॥

[ प्रदीपे ] कैयटे **पदस्फोटमिति** । नित्यं शब्दमित्यस्यानुषङ्गः ॥ एवमग्रेऽपि ॥

[उद्योते] प्रश्नबीजयोस्तात्पर्यमाह उद्योते—**शब्देति** ॥ **शय इति** । इति भाव इति शेषः ॥

[उद्योते] तदाह—उद्योते—**पदेति** ॥ **अन्ये इति** । अस्य **'इति'** इति शेषः ॥ **रणा** इत्यस्य **'इत्यर्थः'** इति शेषः ॥ एवमग्रेऽपि ॥

[ उद्योते ] **त एव**–वैयाकरणा एव ॥ **तेषां**–पदानाम् ॥ **वाक्यस्यैवेति** । असत्यपदपदार्थविभागकस्येत्यादिः ॥ न्यूनतां परिहरति—**सचेति** ॥ **एवञ्च**–जन्यस्य तस्योक्तरीत्या द्वैविध्ये च ॥ **कारणमिति** । तथाचात्र पक्षे तदावश्यकत्वमिति भावः ॥

[ भाष्ये ] निष्फलोऽयं विचार इत्याशयेन सिद्धान्ती उत्तरमाह–भाष्ये—**संग्रह इति** । कैयटोक्तस्तदर्थः ॥

[ भाष्ये ] तत्र बहुधा परीक्षा कृता, अत्र तु शब्दानुशासनप्रस्तावात्तदुपजीवनमित्याशयेनाह भाष्ये–**प्राधान्येनेति** ॥ एतत्पदार्थमाह—**नित्यो वेति** ॥ प्राधान्येनेत्यस्यार्थमाह—**तत्रोक्ता इति** । उभयत्रेत्यर्थः ॥ वर्णानित्यत्वे व्यापकस्य विकाराभावात् इकः स्थाने यण् न स्यात् । कार्यत्वे तच्छब्दानन्तर्यरूपसंहिताया अभावात् स न स्यादित्यादयो दोषा बोध्याः ॥ **प्रयोजनेति** । अनवयवस्य स्फोटस्य व्यञ्जकध्वनिधर्मेणान्वाख्यानम् । **'इको यणचि'** इत्यादिना साधुत्वमात्रं क्रियत इत्यादिप्रयोजनानीत्यर्थः ॥ ननूभयत्र कारणोक्तौ तयोरन्यतरानिश्चये शास्त्रं कर्तव्यमेवेति कथं निश्चयः ? किंचैवं सति कथमस्य विचारस्य निष्फलत्वमत आह—**तत्र त्विति** ॥ तत्रैवेत्यर्थः ॥ तत्रापीति पाठेऽप्येवमेव ॥ **यद्येव**–यद्यपि ॥ **उभयथेति** । पक्षद्वयेऽपि दोषाणां सुनिरसत्वादिति भावः ॥

[उद्योते] तस्यार्थमाह उद्योते—**व्याडीति** ॥ **संख्य इति** । लक्षश्लोकपरिमित इत्यर्थः ॥

[उद्योते] **एवं च**–तत्रोभयथा शास्त्रारम्भस्यावश्यकत्वोक्तौ च ॥ ननु तदावश्यकत्वरूपनिश्चयोक्तिरेवादौ कथमत आह—**साधुत्वेति** ॥ **तात्पर्यमिति** । व्याडेरिति भावः ॥

अत्र **'भगवतः'** इत्युक्त्वा पूज्यत्वप्रतिपादनद्वारा वार्तिककृदपेक्षया सूत्रकारे श्रद्धातिशयः सूचितः । अत **एव सूत्रसमर्थनपूर्वकं** वार्तिकखण्डनं भगवान् करिष्यति ॥

[उद्योते] **अथेति** । सूत्रकृदाद्यनुक्तविषयाद्यौपोद्घातिकनिरूपणानन्तरमित्यर्थः ॥ पाणिनिसूत्रसमूहव्याकरणशास्त्रस्य नियमार्थताप्रतिपादकमाद्यवार्तिकमित्यर्थः ॥

---

१ **शब्द इति** । स एव वर्ण इति तार्किकाः ।

२ इत आरभ्य छायायाः सारो मुद्रणीयः, अतः परं समग्रायाश्चानुपलम्भात् ॥

३ अयं प्रमादः । आशयपदस्य भावार्थकत्वात् । ( र. ना. ) वस्तुतस्तु 'विप्रतिपत्त्या संशयः' इति प्रदीपव्याख्यानावसरे 'शब्दानां नित्यत्वे व्यर्थं व्याकरणशास्त्रमिति प्रश्नाशयः' इत्युक्तमुद्योते । तदेतदसङ्गतम्, यतः प्रदीपे प्रश्न एव नास्तीति कुतः प्रश्नाशयः ? तत्साङ्गत्यायाह छायायाम्–**इति भाव इति शेष इति** । एवञ्च व्याकरणशास्त्रप्रारम्भावसरे शब्दस्य नित्यत्वानित्यत्वमाविष्कुर्वताम्भाष्यकृतां शब्दानां नित्यत्वे व्यर्थं व्याकरणमिति प्रश्नस्याशयः, इतिभावस्तु 'विप्रतिपत्त्या संशयः' इति लेखकस्य प्रदीपकारस्येति नात्र कश्चित्प्रमाद इति 'अयं प्रमादः' इति लेख एव प्रामादिकः ॥

शब्दाश्चार्थाश्च संबन्धाश्चेति द्वन्द्वः । एवं च किमपूर्वशब्दनिष्पादनद्वाराऽर्थविशेषसंबन्धनिष्पादकत्वं शास्त्रस्य, किं वा सिद्धशब्दार्थसंबन्धबोधकत्वमिति प्रश्नार्थ इति तात्पर्यम् ॥

( १ आक्षेपसाधकवार्तिकप्रथमखण्डम् ॥ १ ॥ )

## ॥ * ॥ सिद्धे[1] शब्दार्थसंबन्धे ॥ * ॥

( व्याख्याभाष्यम् )

**सिद्धे शब्देऽर्थे संबन्धे चेति ॥**

**( प्रदीपः ) सिद्ध इति ।** तत्र नित्यः **शब्दो** जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा । कार्य**शब्दिक**ानामपि[2] प्रवाह[3]नित्यतया । **अर्थ**स्यापि जातिलक्षणस्य नित्यत्वम् । द्रव्यपक्षे[4]ऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति–नित्यता, प्रवाहनित्यतया वा । **संबन्ध**स्यापि व्यवहारपरम्परयाऽनादित्वान्नित्यता ॥

**( उद्योतः ) 'सिद्धे शब्दार्थसंबन्धे'** इति वार्तिके समाहारद्वन्द्वात्सप्तमी । संबन्धश्च प्रत्यासत्त्या शब्दार्थयोरेव । त्रयाणामात्यन्तिकाविश्लेषप्रदर्शनाय समाहारनिर्देश इति बोध्यम् ॥ **व्यक्तिस्फोटेति ।** सा[5] पदवाक्यरूपा नित्यैवेति तद्भावः । एतच्चोपपादितं प्राक् ॥ **कार्यशब्दिकानामिति ।** 'कार्यशाब्दिकानाम्' इति त्वपपाठः, उत्तरपदवृद्धेर्दुर्लभत्वात् ॥ **असत्योपाधीति ।** जातिरूपेत्यर्थः । जातिर्हि तन्मते[6] आविद्यको धर्मविशेषः । **यद्वा** [ लाघवेन[7] धर्माणामेवाविद्याकार्यत्वेन ] सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत् सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यम्, विशेष्यमेव च द्रव्यमिति भावः ।

[यत्तु–व्यक्तीनामाविद्यकत्वेन तदवच्छिन्नं ब्रह्मैव जातिरिति, तन्न । अनेकव्यक्तीनामाविद्यकानां कल्पने गौरवात् । 'अपागादग्नेरग्नित्वम्' इत्यादि श्रुत्या जातेरेवानित्यत्वबोधनाच्च । अत एव जातेर्व्यवहारनित्यताम्–आकृतेः प्रवाहनित्यतामेवाग्रे वक्ष्यति भाष्यकृत् । ]

शब्दार्थयोर्नित्यत्वपक्षे तत्संबन्धस्य नित्यत्वेऽप्यनित्यत्वपक्षे कथं संबन्धस्य नित्यत्वमत आह—**संबन्धस्येति ।** तयोरिव[8] तस्यापि नित्यत्वमिति भावः ॥ शब्दार्थयोः संबन्धश्च शक्तिरूपं तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम् ॥

( वार्तिकघटकसिद्धशब्दार्थनिरूपणभाष्यम् )

( आक्षेपभाष्यम् )

**अथ सिद्धशब्दस्य कः पदार्थः[9]?**

**( प्रदीपः )** सिद्धशब्दस्य नित्यानित्ययोर्दर्शनात्पृच्छति–**अथेति ॥**

---

ननु शब्दार्थसंबन्धस्रष्टृत्वं कथमाचार्यस्य ? किं च ब्रह्माण्डस्य त्रयानन्यत्वेन पाणिनेस्तदन्तर्गतस्य तत्स्रष्टृत्वं कथम् ? अतः कैयटतात्पर्यमाह—**एवं चेति ॥**

यद्यपि द्वितीयपक्षाश्रयेणोत्तरत्वेन प्रवृत्तं नवपदात्मकमेकं वार्तिकम् **'सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु'** इति । क्रियत इति त्वध्याहारः । शब्दार्थसंबन्धे नित्ये सति शब्दप्रयोगे च लोकतोऽर्थप्रयुक्ते–अर्थबोधनाय प्रसक्ते सति शास्त्रेण धर्मनियमः क्रियते, यथा लौकिकवैदिकेष्विति तदर्थः । तथापि 'लोकतः' इत्यस्य मध्यमणिन्यायेनोभयत्रान्वयेन खण्डशो वार्तिकं यथेष्टं व्याचक्षाणो द्वितीयपक्षाश्रयेणोत्तरत्वं प्रतिपादयन्नाद्यखण्डमाह—**सिद्धे इति ॥**

---

१ केचित्तु—"**अथ शब्दानुशासनम्**" "**रक्षोहागमलघ्वसंदेहाः प्रयोजनम्**" इत्यादीनि व्याख्येयवाक्यानि वार्तिककारस्यैव, व्याख्यानवाक्यानि भाष्यकारस्य सन्ति । अत एव सायणाचार्येण ऋक्संहिताभाष्योपोद्घाते—"**तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः—'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' इति । एतानि रक्षादिप्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पतञ्जलिना स्पष्टीकृतानि**" इति स्पष्टमेव वर्णितम्–इति वदन्ति ॥ तन्न सम्यक्, "**सिद्धे शब्दार्थसंबन्धे**" इति प्रकृतवार्तिकस्थसिद्धपदस्य मङ्गलार्थत्ववर्णनप्रस्तावे "**माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते**" इति भाष्यग्रन्थे '**सिद्धशब्दमादितः**' इति लेखस्य तथा सत्यसामञ्जस्यात् । किंच '**अथ शब्दानुशासनम्**' इति वाक्यस्यैव प्रथमोच्चारितत्वेन तत्स्थस्याथशब्दस्यैव मङ्गलार्थत्वं व्याख्यायेत । तस्मात्सर्वोऽपि प्राक्तनग्रन्थो भाष्यकारस्यैव । न चैकस्मिन्नेव मूलव्याख्योभयाङ्गीकारे पौनरुक्त्यापत्तिरिति वाच्यम् । यतः स्वपदव्याख्यानत्वमेव भाष्यलक्षणम् । अत एव—

**"'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।**
**स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥'**

इत्यभियुक्तोक्तं संगच्छते ॥ सायणभाष्ये तु केनचिद्दुर्वनधीतव्याकरणभाष्येण वैदिकविदुषा '**प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः**' इत्येतावान्ग्रन्थो वृथैव ग्रन्थमध्ये प्रक्षिप्त इति प्रतीयते '**—व्याकरणस्य 'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' 'इत्येतानि—**' इत्येवं पाठेऽपि ग्रन्थसमन्वयाद्—इति बोध्यम् ॥ इति **दाधिमथाः ॥**

२ 'मपि मते प्रवा–' इति क. पाठः ॥

३ **प्रवाहनित्यतयेति ।** कार्यशब्दिकानामपि मते प्रवाहनित्यतया नित्यत्वमुपपद्यत इति भावः ॥

४ व्यक्तिवादेऽपि अर्थस्य नित्यत्वमुपपादयति—**द्रव्यपक्षेऽपीति ॥**

५ **सा**–पदव्यक्तिर्वाक्यव्यक्तिश्च ॥

६ 'तन्मते' इत्यस्य ग. पुस्तके न पाठः ॥

७ [ ] अत्रत्यः पाठो ग. पुस्तके एव ॥

८ 'प्रवाहनित्यतया तयोरिव' इति घ. च. पाठः । **तयोरिव**–शब्दार्थयोरिव । **तस्यापि**–सम्बन्धस्यापि । यथा प्रवाहनित्यतया ब्रह्मतत्त्वं वाच्यमिति प्रकारेण च शब्दार्थयोर्नित्यत्वमुपपाद्यते तथा सम्बन्धस्यापीत्यर्थः ॥

९ **पदार्थ इति ।** अर्थ इत्यर्थः । नित्यः कार्यो वेति भावः ॥ छाया ॥

(उद्द्योतः) भाष्ये—सिद्धशब्दस्य कः पदार्थ इति। अत्र पदार्थशब्दो[1] रूढः। सिद्धशब्दसंबन्धी कः पदार्थः—इत्यर्थः॥

(समाधानभाष्यम्)

**नित्यपर्यायवाची सिद्धशब्दः॥**

**कथं ज्ञायते?**

**यत्कूटस्थेष्वविचालिषु भावेषु वर्तते। तद्यथा—सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशमिति॥**

(प्रदीपः) **नित्येति**। नित्यलक्षणस्यार्थस्य पर्यायेण[2] वाचकः, तमेवार्थं कदाचिन्नित्यशब्द आह—कदाचित्सिद्धशब्द इत्यर्थः॥ **कूटस्थेष्विति**। अविनाशिषु॥ **अविचालिष्विति**। देशान्तरप्राप्तिरहितेषु॥

(उद्द्योतः) **कूटस्थेष्विति**। कूटं=अयोघनस्तद्वत्तिष्ठन्ति ये तेषु, संसर्गिनाशेऽपि स्वयमनष्टेष्वित्यर्थः॥ नन्वयोघनस्यापि तर्हि नित्यत्वं स्यादत आह—**अविचालिष्विति**। भाष्ये द्यावापृथिव्याद्यपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम्। आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्याभिमतम्। एवञ्च तत्र रूढत्वान्नित्यवाचकस्यैव ग्रहणमिति भावः॥

(आक्षेपभाष्यम्)

**ननु च भोः कार्येष्वपि[3] वर्तते। तद्यथा—सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूरिति। यावता कार्येष्वपि वर्तते, तत्र कुत एतत्—नित्यपर्यायवाचिनो ग्रहणम्, न पुनः कार्ये यः सिद्धशब्द इति।**

(प्रदीपः) **ननु चेति**। सिद्धशब्दात्क्रियानिष्पन्नोऽप्यर्थोऽवगम्यत इत्यर्थः॥

(समाधानभाष्यम्)

**संग्रहे[4] तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति।**

**इहापि तदेव॥**

(प्रदीपः) **संग्रहे तावदिति**। तत्र हि 'किं **कार्यः** शब्दोऽथ **सिद्धः**' इति पक्षद्वयविचारः कृतः। तत्र कार्यप्रतिपक्षार्थाभिधायी सामर्थ्यात्सिद्धशब्द इति स्थितम्। तत्समानतन्त्रत्वादिहापि तथैव युक्तमित्यर्थः॥

(समाधानान्तरभाष्यम्)

**अथवा[5] सन्त्येकपदान्यप्यवधारणानि[6]। तद्यथा—अब्भक्षो वायुभक्ष इति, अप एव भक्षयति—वायुमेव भक्षयतीति गम्यते।**

**एवमिहापि—सिद्ध एव, न साध्य इति॥**

(प्रदीपः) **अथवेति**। एवशब्दप्रयोगे द्विपदमवधारणम्, द्योतकत्वेनैवशब्दस्यापेक्षणात्। यदा तु द्योतकमन्तरेण सामर्थ्यादवधारणं गम्यते तदा तत्—**एकपदमि**त्युच्यते॥ तत्र 'सर्वं एवापो भक्षयन्ति' इत्यब्भक्षश्रुतिः सामर्थ्यान्नियममवगमयति—**अप[7] एवेति**॥ इहापि[8] नित्यानित्यव्यतिरेकेण राश्यन्तराभावात्सिद्धशब्दोपादानान्नियमोऽवगम्यते—**सिद्ध एवेति**। कार्याणां[9] तु पदार्थानां प्राक्प्रध्वंसावस्थयोः सिद्धता नास्तीति न ते सिद्धा एव॥

(उद्द्योतः) ग्रन्थान्तरानालोचनेऽपि नियामकमाह—भाष्ये—**अथवेति**। एतेन तत्समानतन्त्रत्वाद्व्यक्त्येकपदार्थवादोऽपि तव स्यादित्यपास्तम्॥ ननु 'एकपदानि' इत्युक्त्वा 'अब्भक्षः' इत्यस्य पदद्वयात्मकस्योदाहरणत्वमसङ्गतमत आह—**एवशब्देति**॥ नियमप्रत्यायकसामर्थ्यं दर्शयति—**इहापीति**॥ कार्यवाचिन एव ग्रहणाभावे मूलमाह—**कार्याणामिति**। प्राक्[10]प्रध्वंसावस्थयोरिति

१ अत्रार्थशब्दोऽभिधेयपरो न तु प्रयोजनपर इति बोधयितुं पदपदमिति गुरवः। (र.ना.) वस्तुतस्तु पदशब्दाभावे 'सिद्धशब्दस्य कोऽर्थः' इत्युक्तावपि उत्तरग्रन्थानुरोधेन व्याख्यानात्प्राक् प्रयोजनप्रश्नस्यासंभवेन च 'अर्थ'शब्दस्य प्रयोजनवाचित्वं न संभवतीत्यत आहोद्द्योते—**अत्र पदार्थेति**। एवं च पदशब्दस्य नान्यत्प्रयोजनमिति भावः॥

२ **पर्यायेण**—अवयवार्थानपेक्षरूढ्या। सा च योगबाधिका, रथकाराधिकरणादौ (पू. मी. ६।१।१२) स्पष्टा॥ विशेष्यविशेषणभावव्यत्ययमात्रेणार्थिकोत्तरत्वस्य सत्त्वान्न काचिदनुपपत्तिरिति तत्त्वम्॥ छाया॥

३ अत्र भाष्ये 'अनित्येषु' इति वाच्ये **'कार्येषु'** इत्युक्तिः कार्यत्वप्रयुक्तानित्यत्वसूचनाय। अत एव—कैयटे **क्रियानिष्पन्न** इत्युक्तम्॥ छाया॥

४ अत्र निर्णायकमाह—**संग्रह इति**॥ छाया॥

५ ननु यदि संग्रहसमानतन्त्रत्वादत्रापि सिद्धशब्दस्य नित्य एवार्थः स्वीक्रियेत तदा संग्रहाश्रितव्यक्त्येकपदार्थवादोऽपि स्वीकर्तव्यः स्यात्, स च नेष्टोऽतः पक्षान्तरमाह—**अथवेति**॥

६ एकपदानीति बहुव्रीहिः॥ छाया॥

७ 'अप एव भक्षयन्तीति' इति मुद्रितेषु पाठः॥

८ अब्भक्षदृष्टान्तमुपपादयति—**इहापि नित्येति**। सिद्धशब्दस्य नित्यरूपोऽर्थः प्रसिद्ध एव, 'सिद्ध ओदनः' इति व्यवहारादुत्पन्नरूपोऽप्यर्थः प्रतीयते। तृतीयस्य तु प्रकारस्यासम्भवात्सिद्धशब्दोपादाने सिद्ध एवेति निर्द्धारणमब्भक्षन्यायेन भविष्यति। एवञ्च सिद्ध एवेत्यवधारणस्य 'नित्य एव—उत्पन्न एव' इति प्रकारद्वयमेव सम्भवति। तत्र नित्य एवेति प्रकारोऽनिर्वाच्य इष्ट एव। उत्पन्न एवेत्यस्यानुत्पन्ने विनष्टे वा पदार्थेऽसम्भवात्स ग्रहीतुं न शक्य इति प्रथम एव प्रकारोऽत्रानन्यगत्या ग्राह्य इतीष्टमुपपन्नम्॥

९ नन्वेवमपि सिद्धशब्दः कार्यवाची किं न स्यादित्याशङ्क्य नियमेन त्रैकाल्यसिद्धताद्योत्यत इति परिहरति—**कार्याणामिति**॥

१० **प्राक्प्रध्वंसाभावयोरिति** क्वाचित्कोऽपपाठः, अनन्वयापत्तेरत आह—**प्राक्प्रध्वंसेति**। आकाशादीनां कारणात्मना सिद्धत्वमिति भावः॥ छाया॥

पाठः । भाष्ये 'अप एवं'''इति गम्यते' इति वाक्ये इव समासेऽपि सामर्थ्यात् तदतिरिक्तभक्षणाभावो गम्यत इत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः—अत्यन्तसिद्धः-सिद्ध इति । तद्यथा-देवदत्तः-दत्तः, सत्यभामा-भामेति ॥**

**( प्रदीपः ) अथवेति ।** कथं पुनर्देवदत्तशब्दे संज्ञात्वेन विनियुक्ते एकदेशः प्रयुज्यते, न ह्यसौ संज्ञात्वेन विनियुक्तः । न चैकदेशात्स्मर्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते, प्रतीयमानस्य प्रत्यायकत्वासंभवादुच्चार्यमाणस्यैव वाचकत्वात् । एवं तर्ह्यनुनिष्पादिन्योऽवयवसरूपाः संज्ञा विनियोगकाले विनियुक्ता एव । लोपस्तु वर्णानां साधुत्वं मा भूदित्यन्वाख्यायते । इहापि नित्यानित्ययोर्निष्पन्नत्वाविशेषात्सिद्धश्रुतिरुपात्ता प्रकर्षं गमयति—**अत्यन्तसिद्ध इति ॥**

**( उद्योतः ) अथवेति ।** मनुष्यवृक्षाद्यपेक्षयाऽऽकाशादीनामप्यत्यन्तसिद्धत्वमिति भावः ॥ **प्रतीयमानस्येति ।** एतदणुदित्सूत्रे उपपादयिष्यते ॥ **एवं तर्हीति ।** एवमेव 'घटपदं कलशपर्यायः' इत्यादिप्रयोगाः । अन्यथा 'पर्यायवाचि' इति प्रयोज्यं स्यात् ॥ **विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप** इति लोपविधायकं तर्हि किमर्थमत आह—**लोपस्त्विति । वर्णानाम्**–'दे'इत्यादीनाम् । तत्रापि क्वचित्पूर्वपदस्यैव–कचिदुत्तरपदस्यैव–कचिदुभयोरिति लोकव्यवहारेण निर्णेयम् । एवं वर्णानां शक्त्यभावोऽपि तत एव निर्णेय इति तत्त्वम् ॥ **निष्पन्नत्वेति ।** विद्यमानकालसंबन्धः–**निष्पन्नत्वम् ॥**

( समाधानान्तरभाष्यम् )

**अथवा "व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः ॥**

**( प्रदीपः )** न्यायाद्वा नित्यत्वं शब्दादीनां स्थितमित्याह—**अथवेति ।** न हि संदेहमात्रादलक्षणता भवति, पुनः प्रमाणान्तरेण निश्चयोत्पादात् ॥

**( उद्योतः )** ननु निर्युक्तिकं व्याख्यानमयुक्तं, विपरीतस्यापि संभवादत आह—**न्यायाद्वेति ।** वृद्धव्यवहारादेव पदार्थसंबन्धानां नित्यत्वं संग्रहादौ स्थितमिति व्याख्यानतः सिद्धशब्देन तदेवोपात्तमित्यर्थः ॥

( आक्षेपभाष्यम् )

**किं पुनरनेन वर्ण्येन । किं न महता कण्ठेन नित्यशब्द एवोपात्तः, यस्मिन्नुपादीयमानेऽसंदेहः स्यात् ?**

**( प्रदीपः ) वर्ण्येनेति ।** प्रयत्नव्याख्यातव्येनेत्यर्थः ॥

( समाधानभाष्यम् )

**मङ्गलार्थम् ॥**

**माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति ॥**

---

१ मध्यम **इति**राद्यर्थकः । अप एवेत्यादि गम्यत इत्यन्तमितीत्यर्थः ॥ **वाक्ये**=तिङन्तघटितसजातीयापरलौकिकवाक्य इत्यर्थः ॥ छाया ॥

२ आकाशादीनामपि चिरकालावस्थायित्वेन नित्यसिद्धशब्दाभ्यां व्यवहारसंभवान्न वास्तवं सिद्धत्वमतो दृष्टान्तासिद्धिरत आह—**अथवेति ॥** छाया ॥

३ 'सिद्ध एव' इत्युक्ते परिनिष्पन्न एव, नानित्यः–इत्यवधारणसम्भवात् एकपदावधारणपक्षेऽप्यभिमतासिद्धिमाशङ्क्योक्तं—**अथवेति**–भाष्ये । तद्दृष्टान्तमाक्षिपति—**कथमिति ।** संज्ञात्वेन देवदत्तादिशब्दानां विनियोगे दत्तादिशब्दैः कथन्तदर्थस्य प्रतीतिसम्भव इत्याक्षिप्य प्रतीयमानस्य प्रत्यायकत्वाभावमुपपाद्य च यदा देवदत्त इति संज्ञा क्रियते तदा नान्तरीयकत्वादवयवेष्वपि संज्ञासम्प्रत्यय इति प्रतिपादयति—**एवन्तर्ह्यनुनिष्पादिन्य इति ॥**

४ अयं भावः—समुदायैकदेशः श्रुत **एकसंबन्धिज्ञानमिति** न्यायेन संस्कारपाटवादेव शब्दस्मारकस्तत एव बुद्ध्युपारूढात्संघातादेवार्थप्रतीतिरिति ॥ छाया ॥

५ न केवलं संज्ञास्वेवायं व्यवहारः किन्तु अन्यत्रापीति प्रदर्शयति—**एवमेवेति ॥**

६ ( ५।३।८२ ) सूत्रे **'अप्रत्यये तथैवेष्टः'** इति वार्तिकार्थभूतमिदं **"समासेऽनञ्पूर्वे क्त्वो ल्यप्"** इति सूत्रेण विहितस्य ल्यबादेशस्य समासमन्तरानुपपन्नस्य समासज्ञापकपूर्वपदाप्रयोगेऽपि स्वकीये जाम्बवतीजयापराभिधाने **पातालविजय**काव्ये **"संध्यावधूं गृह्य करेण भानुः'** इत्यत्र ल्यबादेशप्रयोगं कुर्वतो भगवतः सूत्रकारस्यापि संमतमेव ॥ एवं च **रुद्रटालङ्कार**व्याख्यायामस्य प्रयोगस्यापशब्दत्वं प्रकाशयन्नमिसाधुस्तु व्याकरणमर्मानभिज्ञ एवेति बोध्यम् ॥ इति दाधिमथाः ॥

७ अस्यार्थस्य लोकसिद्धत्वेन **कृष्णसर्पादावनतिप्रसङ्गः ।** अत एव भीमसेनादौ **सेन** इत्यादेर्न तत्त्वम् । अत एवानुभवविरुद्धत्वस्याव्यवहारस्य सत्त्वाच्चेति भावः ॥ छाया ॥

८ न च सिद्धशब्दस्य क्रियाशब्दत्वात् संज्ञाशब्दविषयलोपान्वाख्यानस्यात्राप्रवृत्तिरिति वाच्यम् । जातिपक्षे सर्वशब्दानां स्वरूपप्रवृत्तिनिमित्तकत्वेन संज्ञात्वाङ्गीकारादिति भावः । अयं च पक्षो व्यक्तिपक्षेऽसंभवीत्यतः पक्षद्वयसाधारणं पक्षद्वयमुपन्यस्तवान्–**अथवेति ।** तदनुपपन्नं, व्याख्यानेन संदेहनिवृत्तावतिप्रसङ्गात्–इत्याशङ्क्य प्रमाणेन प्रतिपादनं व्याख्यानमित्याह–**न्यायादिति ।** 'लोकतः' इति वार्तिकोक्तन्यायात् शब्दादीनां नित्यत्वं स्थितमिति, अतो नित्यवाची सिद्धशब्द इति प्रमाणेनोपपादयिष्यामीत्याहेत्यर्थः । (अ.पुस्तके सदाशिवभट्टाः)॥

९ **महता कण्ठेनेति ।** दोषयुक्तवाक्यमुपांशूच्यते निर्दुष्टं तूच्चैरिति लोकप्रसिद्धमिति निर्दुष्टताऽनेन सूचिता ॥ छाया ॥

१० क्वचित् **'मङ्गलार्थं च'** इति पाठः । तत्र चेन नित्यार्थधीसमुच्चयः ॥ अर्थशब्दः प्रयोजनवाची ॥ छाया ॥

( प्रदीपः ) **माङ्गलिक इति** । अगर्हिताभीष्टार्थसिद्धिः—मङ्गलं, तत्प्रयोजन आचार्यो माङ्गलिकः ॥ **प्रथन्त इति** । अध्ययनस्याविच्छेदात् ॥ **वीरपुरुषाणीति** । श्रोतॄणां परैरपराजयात् ॥ **आयुष्मत्पुरुषाणीति** । शास्त्रार्थानुष्ठाने धर्मोपचयादायुर्वर्धनात् ॥ **सिद्धार्था इति** । अध्ययननिर्वृत्तिरेव तेषां सिद्धिः ॥

( उद्द्योतः ) **सिद्धिर्मङ्गलमिति** । तस्या मङ्गलत्वं च कार्ये कारणरूपोपचारादिति बोध्यम् ॥ **तत्प्रयोजनमस्य**—इति प्राग्वतीयष्ठक् ॥ तत्र मङ्गलानुष्ठानप्रयोजनान्याह—भाष्ये—**मङ्गलादीनी**त्यादिना ॥ ग्रन्थे तन्निबन्धनस्य फलमाह—**अध्येतारश्चे**त्यादिना । आनुषङ्गिकमङ्गलसंपत्त्येत्यर्थः ॥ **अध्ययननिर्वृत्तिः**—तत्समाप्तिः ॥ **सिद्धिः**—सिद्धिविषयोऽर्थः ॥ **मङ्गलार्थ**मित्यनेनेत एव वार्तिकप्रवृत्तिः सूचिता ॥

( समाधानभाष्यशेषभाष्यम् )

**अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते ।**

**किं तर्हि ?**

**आभीक्ष्ण्येऽपि वर्तते । तद्यथा-नित्यप्रहसितो नित्यप्रजल्पित इति । यावता आभीक्ष्ण्येऽपि, तत्राप्यनेनैवार्थः स्यात्--"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति । पश्यति त्वाचार्यो मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति, शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितुमिति ।**

**अतः सिद्धशब्द एवोपात्तो न नित्यशब्दः ॥**

( प्रदीपः ) **नावश्यमिति** । ततश्चाभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते आगोपालाङ्गनं तेषामेवान्वाख्यानं स्यात्, न विरलप्रयोगाणाम् । विनाऽपि च क्रियापदप्रयोगेणाभीक्ष्ण्यवृत्तिर्नित्यशब्दः प्रयुज्यते । यथा–'आश्चर्यमनित्ये' 'नित्यवीप्सयोः' इति ॥

( उद्द्योतः ) असंदिग्धो **नित्य**शब्दः किं न प्रयुक्त इत्युक्तम्, तत्रापि संदेहमाह—भाष्ये-**अयं खल्विति** ॥ **आभीक्ष्ण्येन**-बाहुल्येन । 'अभीक्ष्णं' इति पाठेऽप्ययमेवार्थः ॥ **प्रयुज्यन्त इति** । साक्षात् शब्दे आभीक्ष्ण्यासंभवात्प्रयोगद्वारा तत् ग्राह्यम् । एवञ्च नित्यशब्दोपादानेऽपि सप्रयोजनकोऽव्यन्तरसंभवेन तत्रापि संदेह एवेति भावः ॥ **'नित्ये शब्दार्थसंबन्धे'** इत्यस्य शब्दार्थसंबन्धे ज्ञाते सति नित्ये-नित्यप्रयोगविषये शब्दे शास्त्रं प्रवृत्तमित्यर्थः स्यादिति तात्पर्यम् ॥ नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदसाकाङ्क्षतया कथं केवलस्य प्रयोगोऽत आह—**विनाऽपि चेति** ॥

---

( नित्यतासाधकपक्षनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ कं पुनः पदार्थं मत्वा एष विग्रहः क्रियते-सिद्धे-शब्दे-अर्थे-संबन्धे चेति ?**

( समाधानभाष्यम् )

**आकृतिमित्याह ॥**

**कुत एतत् ?**

**आकृतिर्हि नित्या, द्रव्यमनित्यम् ॥**

( आक्षेपभाष्यम् )

**अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः ?**

( समाधानभाष्यम् )

**सिद्धे-शब्दे-अर्थसंबन्धे चेति । नित्यो ह्यर्थवतामर्थैरभिसंबन्धः ॥**

( प्रदीपः ) **अर्थसंबन्धे चेति** । द्रव्यपक्षे द्रव्यस्यानित्यत्वादर्थग्रहणं संबन्धविशेषणार्थमुपात्तम् । अनित्येऽर्थे कथं संबन्धस्य नित्यता-इति चेत्, योग्यतालक्षणत्वात्संबन्धस्य । तस्याश्च शब्दाश्रयत्वात्-शब्दस्य च नित्यत्वाददोषः ॥

---

१ **कार्ये कारणेति** ॥ अन्नाशयेन तण्डुलमानयेति प्रयोगे पच्यते ओदन इत्यत्र च ओदने तण्डुलत्वोपचारवत् आयुर्वै घृतमितिवच्च समाप्तौ नत्यादित्वोपचार इत्यर्थः ॥ समाप्तावगर्हितत्वं च विघ्नाभावानुगृहीतत्वम् । तथा च यागेनापूर्वद्वारा स्वर्ग इव नत्यादिना प्रतिबन्धकदुरितनिवृत्तिद्वाराऽभीष्टसमाप्तिः साध्येत्युक्तं भवति । तथाच तत्र सिद्धशब्दप्रयोगस्य हेतुताऽस्तीति तदर्थं शास्त्रारम्भे तत्प्रयोग इति भावः ॥ छाया ॥

२ **खलुरप्यर्थे** । अयं नित्यशब्दोऽपीत्यर्थः ॥ क्वचित्-**खल्वपीति** पाठः । तत्र खलु-निश्चये ॥ छाया ॥

३ **यावतेति** । यत इत्यर्थः ॥ छाया ॥

४ 'क्ष्ण्येऽपि वर्तते' इति क. पाठः ॥

५ **तत्रेति** । अत इत्यादिः ॥ छाया ॥

६ स्वरूपेण तस्य मङ्गलार्थत्वमिति सूचयन्नाह—**मङ्गलार्थश्चैवेति** । सिद्धशब्द एवादौ प्रयुक्तो मङ्गलफलकोऽपीत्यर्थः । मङ्गलातिशये फलातिशयसंभवेन मङ्गलार्थत्वमुपेक्ष्यान्यथासिद्धत्वकथनं तस्यायुक्तमिति भावः ॥ छाया ॥

७ 'भीक्ष्णं' इति अ. पाठः ॥

८ एतन्नित्यशब्दस्य बाहुल्यसमानार्थकत्वं **"ङमो ह्रस्वादचि ङमुण्नित्यम्"** इति नित्यपदघटितसूत्रेण ङमुडागमं विधायापि **"इको यणचि"** इत्यादौ ङमुडभावं कुर्वतः **"शप्श्यनोर्नित्यम्"** इति नित्यं नुमं विधायापि

**"अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुंकरोति ।"** इति

स्वोपज्ञ**पातालविजय**काव्ये 'अपश्यती' इत्यत्र नुममकुर्वतः सूत्रकृतोऽपि संमतमेव ॥ एतेनास्य प्रयोगस्यापशब्दत्वं प्रकाशयन् **रुद्रटालंकार**व्याख्याता **नमिसाधु**रपास्तः ॥ इति दाधिमथाः ॥

९ भगवदुक्तौ शिष्यः शङ्कते—**अथेति** । पदार्थद्वयस्य प्राक् प्रक्रान्तत्वादिति भावः ॥ छाया ॥

१० **योग्यता** च-अर्थप्रतिपादनशक्तिः । सा च दाह्याभावेऽपि दहनशक्तेर्दहनाश्रयत्ववत् अर्थाभावेऽपि शब्दाश्रया ॥

(उद्योतः) नन्वेवमर्थग्रहणं व्यर्थमत आह—**द्रव्यपक्ष इति॥ योग्यता**=बोधजनकत्वयोग्यता—तादात्म्यम्। तदुक्तं भाष्ये—**नित्यो ह्यर्थवतामिति**। शब्दानामित्यर्थः[1]॥ ननु तादात्म्यस्य संबन्धत्वे कथं[2] तस्य नित्यत्वमिति चेन्न। नष्टभाविवस्तुनोऽपि शब्देन बोधाद्बौद्धार्थेन तस्य तादात्म्यं नित्यमित्याशयात्। शब्दवृत्तिधर्मस्यैवार्थवृत्तिधर्माभेदमापन्नस्य तादात्म्यत्वेनादोषाच्च॥ **शब्दस्य च नित्यत्वादिति**। आकाशवत्तन्निष्ठः शब्दोऽपि नित्यः। व्यञ्जकाभावात्तु न सर्वदोपलम्भ इति भावः॥

## (द्रव्यपदार्थाभ्युपगमभाष्यम्)

**अथवा द्रव्य एव पदार्थे एष विग्रहो न्याय्यः—सिद्धे-शब्दे-अर्थे-संबन्धे चेति। द्रव्यं हि नित्यम्[3], आकृतिरनित्या॥**

**कथं ज्ञायते?**

**एवं हि दृश्यते लोके-मृत्कयाचिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते।**

**तथा—सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते। पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः। आकृतिरन्या[4] चान्या च भवति, द्रव्यं पुनःस्तदेव। आकृत्युपमर्देन द्रव्यमेवावशिष्यते॥**

(प्रदीपः) **द्रव्यं हि नित्यमिति**। असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः॥ **आकृतिरिति**। संस्थानम्। ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्यत्वादनित्यत्वम्, **'आत्मैवेदं सर्वम्'** इति श्रुतिवचनात्॥

(उद्योतः) ननु घटादिद्रव्यस्य कथं नित्यत्वेत्यत आह—**असत्येति**। स[5] च कम्बुग्रीवादिमदाकारादिरूपः, तद्व्यङ्ग्यजातिरूपश्च[6]॥ भाष्ये यद्याकृतिशब्देन तद्व्यङ्ग्यमुच्यते तर्हि तदप्याविद्यकत्वेन व्यञ्जकानित्यत्वेन चानित्यमित्याह—**जातेरपीति**। अनेनैतत्प्रकरणस्थाकृतिपदस्य व्यङ्ग्यव्यञ्जकोभयपरतां सूचयति। गौतमेनाप्युक्तं "जात्याकृतिव्यक्तयः पदार्थः" इति॥ भाष्ये[8] **'खदिराङ्गारसवर्णे कुण्डले भवतः'** इति प्रयोगादच्यन्ते[9] विकृतेः कर्तृत्वं बोध्यम्॥

## (आकृतिपदार्थाभ्युपगमभाष्यम्)

**आकृतावपि[10] पदार्थ एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे संबन्धे चेति॥**

**ननु चोक्तम्-आकृतिरनित्या-इति॥**

**नैतदस्ति। नित्या[11]ऽऽकृतिः॥**

**कथम्?**

**न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति। द्रव्यान्तरस्था तूपलभ्यते॥**

(प्रदीपः) **न क्वचिदुपरतेति**। अनभिव्यक्तेत्यर्थः। अद्वैतेन लोके व्यवहाराभावात्-व्यवहारे चाकृतेरेकाकारपरामर्शहेतुत्वान्नित्यत्वम्॥

(उद्योतः) आकृतिपदेन जातिरित्यभिप्रायेण[12]—भाष्ये—**आकृतावपि पदार्थ इति**॥ क्वचिदुपरतेति[13] कृत्वा न सर्वत्रोपरतेत्यन्वयः॥ ननूपरमो नाशश्चेत्तत्काले एवान्यत्र सत्त्वं विरुद्धमत आह—**अनभीति**॥ ननु परमार्थदृष्ट्या सर्वमनित्यमत आह—**अद्वैतेनेति॥ नित्यत्वमिति**। सर्वदा एकाकारपरामर्शदर्शनेन[14] यावद्व्यवहारकालं तस्या अपि ध्रुवादित्वेन नित्यत्वमिति भावः॥

## (समाधानसाधकनित्यलक्षणभाष्यम्)

**अथवा नेदमेव नित्यलक्षणम्-ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत् तन्नित्यमिति।**

---

१ अर्थवतामित्यस्य जातिमतामिति एकार्थविशेषाणामन्यार्थानामिति चार्थनिरासायाह—**शब्दानामिति॥** छाया॥

२ **कथमिति**। तस्योभयरूपत्वादर्थस्य चानित्यत्वादिति भावः॥ छाया॥

३ **नित्यमिति**। 'अपागादग्नेरग्नित्वं' इत्यादिश्रुतिप्रामाण्यात् व्यक्तीनामानन्त्यात्तासामाविद्यकत्वकल्पनापेक्षया लाघवाच्च जातेरेव तत्कल्प्यते। तथाच जातिरनित्या, तदवच्छिन्नं ब्रह्मैव द्रव्यमिति हि तन्नित्यमित्यभिप्रायः। अथवा—अवयवसंस्थानमाकृतिः॥

४ 'पूर्वावयवसंयोगस्य द्रव्यारम्भकस्य विनाशेन पूर्वद्रव्यनाशे तेषामेव संयोगान्तराद्द्रव्यान्तरमुत्पद्यते' इति वैशेषिकमतनिरासायाह—**आकृतिरन्या चान्या च भवति। द्रव्यं पुनस्तदेवेति॥** छाया।

५ **स च**—उपाधिश्च।

६ 'जातिरूपो वा' इति घ. पाठः॥

७ ननु प्रदीपे आकृतिपदस्य संस्थानमित्यर्थमुक्त्वा 'ब्रह्मदर्शने च' इत्याद्युक्तिः किमर्थन्तदाह—**भाष्ये यद्याकृतिशब्देनेति**। एवञ्च भाष्यस्थाकृतिशब्देन कम्बुग्रीवादिमदाकारस्तद्व्यङ्ग्या घटत्वादिजातिश्चेत्युभयमपि वाच्यम्, तत्राकारस्यानित्यत्वं भाष्यकृतैवोक्तम्, तद्व्यङ्ग्यजातेश्चानित्यत्वं **ब्रह्मदर्शने** सतीत्यादिनोपपादयति। आकारस्य तद्व्यङ्ग्यस्योभयस्यापि पदार्थत्वे दर्शनान्तरसम्मतिमाह—**गौतमेनापीति॥**

८ ननु 'कुण्डले भवतः' इत्यत्र 'भवतः' इति द्विवचनमनुपपन्नम्, सुवर्णपिण्डस्यैवात्र कर्तृत्वादतस्तं प्रयोगमुपपादयति—**भाष्ये खदिरेति॥**

९ च्यन्ते प्रकृतेः कर्तृत्वादाह—**अच्यन्ते विकृतेरिति॥** छाया॥

१० मतान्तरमाह—**आकृतावपीति**। अपिना द्रव्यपरिग्रहः। अत एव मतान्तरत्वम्॥ अथवेत्यादिः॥ छाया॥

११ **नित्येति**। एकाकारानुगतधीहेतुत्वाज्जातेर्व्यवहारदशायां सर्वदा नित्यत्वमित्यन्ये॥ छाया॥

१२ **जातिरितीति**। न तु अवयवसंस्थानमाकृतिशब्दार्थोऽत्र॥

१३ संशयनिवृत्त्यर्थं भाष्यान्वयमुपपादयति—**क्वचिदित्यादिना॥**

१४ 'दर्शनेन तस्यास्तद्व्यञ्जकसंस्थानस्य च नित्यत्वम्' इति पाठान्तरम्॥

**तदपि नित्यं-यस्मिंस्तत्त्वं न विहन्यते ॥**
**किं पुनस्तत्त्वम् ?**
**तद्भावस्तत्त्वम्[1] ॥**
**आकृतावपि[2] तत्त्वं न विहन्यते ॥**

( प्रदीपः ) **अथवेति** । असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराश्रयेण जातेर्नित्यत्वं[3] साध्यते । त्रिविधा[4] चानित्यता, **संसर्गानित्यता** यथा—स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपप्रतिभासः । उपधानापगमे स्वरूपप्रतिभासात्तु परिणामाभावः[5] ॥ **परिणामानित्यता** यथा—वदरफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः ॥ **प्रध्वंसानित्यता**–सर्वात्मना विनाशः । एतत्त्रिविधानित्यताप्रतिक्षेपेण[6] नित्यतां प्रतिपादयितुमुक्तं-**ध्रुवमित्यादि** । तत्र **ध्रुवं कूटस्थ**मिति संसर्गानित्यता परिहृता, **अविचाली**ति परिणामानित्यता, **अनपाये**त्यादिना प्रध्वंसानित्यता ॥

( **उद्योतः** ) अथावयवसंस्थानरूपाया[7] जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालं मध्ये मध्ये उत्पत्तौ नाशेऽपि प्रकारान्तरेण नित्यत्वमाह—भाष्ये-**अथवेति** ॥ नित्यत्वलक्षणे ध्रुवपदस्यैव व्याख्यानं–**कूटस्थमिति** । रूपान्तरापत्तिः–**विचालः** । यथा पयसो दध्यादिरूपता । अनेन परिणामानित्यता परास्ता । उत्पत्तेः[8] सत्तापर्यन्तत्वाद**नुत्पत्ती**त्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ । **अवृद्धी**त्यनेन तृतीयो वृद्धिलक्षणः । **अनुपजने**ति चतुर्थः परिणामः । **अनपाये**ति[9] पञ्चमोऽपचयः । एतद्रूपविकाररहितमिति तदर्थः ॥ **अव्यये**ति षष्ठो विनाशः । इदं[10] च ब्रह्मविषयं नित्यत्वं, यावद्व्यवहारमेकरूपस्थितपदार्थविषयं च ॥ अयमेव न नित्यशब्दार्थः, प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्वव्यवहारादित्याह—भाष्ये—**तदपीति ॥ यस्मिंस्तत्त्वमिति** । यस्मिन्विहतेऽपि तद्वृत्तिधर्मो न विहन्यते तदित्यर्थः ॥ प्रवाहनित्यता चानेनोक्ता । तन्नाशेऽपि तद्धर्मो न नश्यति । आश्रयप्रवाहाविच्छेदादिति भावः ॥

( नित्यानित्यत्वविचारस्याप्रकृतत्वबोधकभाष्यम् )

**अथवा[11] किं न एतेन-इदं नित्यम्-इदमनित्यमिति । यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियते—सिद्धे शब्देऽर्थे संबन्धे चेति ॥**

( प्रदीपः ) **यन्नित्यमिति** । बुद्धिप्रतिभासः शब्दार्थः, यदा यदा शब्द उच्चारितस्तदा[12]ऽर्थाकारा बुद्धिरुपजायते–इति प्रवाहनित्यत्वादर्थस्य नित्यत्वमित्यर्थः ॥

( **उद्योतः** ) **यन्नित्यमिति** । व्यक्तिजात्याकृतीनां मध्ये यन्नित्यमित्यर्थः ॥ ननु शशशृङ्गादिपदार्थानां कथं नित्यत्वं, तेषां स्वरूपस्यैवाभावादत आह—**बुद्धिप्रतिभास इति** । बाह्यः पदार्थो न शाब्दबोधे विषयः, किंतु बौद्धः । स च प्रवाहनित्य इति भावः ॥ एतच्च मञ्जूषायां विस्तरेण निरूपितम् ॥

( वार्तिकद्वितीयखण्डावतरणभाष्यम् )

**कथं[13] पुनर्ज्ञायते-सिद्धः शब्दोऽर्थः संबन्धश्चेति ?**

( १ शब्दार्थसंबन्धानां प्रमाणबोधकवार्तिकद्वितीयखण्डम् ॥ २ ॥ )

**॥ * ॥ लोकतः ॥ * ॥**

( भाष्यम् )

**यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति । ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते । तद्यथा-घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाऽऽह—कुरु घटं कार्यमनेन करिष्यामीति । न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह—कुरु शब्दान्प्रयोक्ष्य इति ।**

**तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते ॥**

( प्रदीपः ) **लोकत इति** । अन्यथा कार्येषु वस्तुषु लोकव्यवहारः, अन्यथा नित्येषु । शाब्दश्च व्यवहारोऽनादिवृद्ध-

---

१ **तद्भाव इति** । तस्याः=आकृतेर्भावः=तन्निष्ठो धर्मः, सर्वदाप्रत्यभिज्ञायोग्यत्वादि । योग्यतावच्छेदकञ्च–त्रिकालवृत्तित्वम् ॥ 'तस्य भावस्तत्त्वम्' इति मुद्रितपाठः ॥

२ उपसंहरति—**आकृताविति** । अवयवसंस्थानरूपायामाकृतौ नष्टायामपि तत्त्वं तद्व्यञ्जयस्तद्वृत्तिधर्मो न विहन्यते, आश्रयप्रवाहाविच्छेदादिति साऽपि नित्येत्यर्थः ॥ छाया ॥

३ **जातेरिति** । तद्व्यञ्जकावयवसंस्थानरूपाकृतेरित्यर्थः ॥ छाया ॥

४ ननु लक्षणे किमर्थवहानि विशेषणानीत्यत आह—**त्रिविधा चेति** ॥ छाया ॥

५ **परिणामाभाव इति** । रूपान्तरप्रतिभासाभाव इत्यर्थः ॥ छाया ॥

६ **प्रतिक्षेपेण** । निरसनेन ॥ छाया ॥

७ यथाश्रुतकैयटोक्तार्थाङ्गीकारे पौनरुक्त्यापत्तिरतोऽन्यथाव्याख्यानमाह—**अथेति** ॥ छाया ॥

८ यद्यप्यनपायेत्यादिना कैयटोक्तं प्रतिपाद्यं स्फुटमेव तथापि तावन्मात्रप्रतिपादनेऽन्तिमविशेषणेनैव सिद्धेऽनेकविशेषणोपादानं व्यर्थमतस्तस्य तात्पर्यान्तरमप्यस्तीत्याशयेन भाष्यीयक्रममुल्लिख्य षड्भावविकारक्रमेणाह—**उत्पत्तेरिति** ॥ छाया ॥

९ स्वनिष्ठधर्माणामन्यथात्वं–परिणामानित्यता । **अन**पायेत्यादिना षड्भावविकारशून्यत्वं दर्शितम्, तच्च प्रध्वंसानित्यताशून्यत्वव्याप्यम् ॥

१० अत्र भगवता द्विविधं नित्यत्वं प्रतिपादितम् । कैयटोक्तमेकम् । जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंरूपषड्भावविकारशून्यं त्वपरम् । तदाह—**इदं चेति** । द्विविधमुक्तमित्यर्थः ॥ छाया ॥

११ नित्यत्वानित्यत्वसाधनाग्रहे नास्माकं प्रयोजनमित्याशयेनाह—**अथवेति** ॥ छाया ॥

१२ 'तदा तदार्थाकारा' इति ख. 'तदातदर्थाकारा' इति क. पाठः ॥

१३ अर्थसंबन्धयोर्व्याकरणानिष्पाद्यत्वेन नित्यत्ववच्छब्दस्तेन तथेति तु केन प्रकारेण निश्चीयते इत्यर्थः । शास्त्रस्य निष्पादकत्वाच्छब्दस्यानादिपरम्परयासिद्धत्वात् । अन्यथा इन्द्रादीनां तत्करणप्रवृत्त्यानर्थक्यापत्तेरिति भावः ॥ छाया ॥

व्यवहारपरम्पराव्युत्पत्तिपूर्वकं इति शब्दादीनां नित्यत्वम् । घटादयस्त्वर्थक्रियार्थिभिरन्यत आनीयन्ते, उत्पादविनाशयुक्ताश्चोपलभ्यन्ते । नैवं शब्दादयः ॥ **तावत्येवार्थमिति ।** बुद्ध्या वस्तु निरूप्येत्यर्थः ॥

**( उद्द्योतः ) शब्दादीनां नित्यत्वमिति ।** व्याकरणानिष्पाद्यत्वमित्यर्थः ॥ **तावत्येवेति ।** वैयाकरणकुलमगत्वैवेत्यर्थः ॥

( इति नित्यतासाधकपक्षनिर्णयाधिकरणम् )

---

**( धर्मनियमाधिकरणम् )**

**( वार्तिकतृतीयखण्डावतरणभाष्यम् )**

**यदि तर्हि लोक एषु प्रमाणम्, किं शास्त्रेण क्रियते ?**

**( १ शास्त्रोपयोगप्रकथने वार्तिकतृतीयखण्डम् ॥ १ ॥ )**

**॥ * ॥ लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ॥ * ॥**

**( भाष्यम् )**

**लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते ॥**

**किमिदं धर्मनियम इति ?**

**धर्माय नियमः–धर्मनियमः, धर्मार्थो वा नियमः–धर्मनियमः, धर्मप्रयोजनो वा नियमः–धर्मनियमः॥**

**( प्रदीपः )** अत्र भाष्यकारेण संभवन्तीमप्येकवाक्यतामनाश्रित्य वाक्यत्रयं स्थापितम्[३] । **सिद्धे शब्दार्थसंबन्धे** शास्त्रं प्रवृत्तमित्येकं वाक्यम् । कथं ज्ञायत इति प्रश्ने **लोकतो** ज्ञायते इति द्वितीयम् । लोकत इत्यस्यावृत्त्या **लोकतोऽर्थप्रयुक्त** इत्यादि तृतीयम् ॥ **शब्दप्रयोग इति ।** प्रयोगग्रहणेन प्रयोगाद्धर्मो न तु ज्ञानमात्रात्' इत्युक्तं भवति । अर्थेनात्मप्रत्यायनाय प्रयुक्तः—अर्थप्रयुक्तः ॥

**धर्माय नियम इति ।** चतुर्थ्या तादर्थ्यं प्रतिपाद्यते । संबन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः, चतुर्थीसमासस्य प्रकृतिविकारभाव एव विधानात् ॥ **धर्मार्थ इति ।** धर्मार्थत्वान्नियम एव धर्मशब्देनाभिधीयते—इति कर्मधारयः समासः ॥ **धर्मप्रयोजन इति ।** लिङादिविषयेण नियोगाख्येन धर्मेण प्रयुक्त इत्यर्थः ॥

**( उद्द्योतः )** ननु सकृदन्वितस्य **'लोकतः'** इत्यस्य पुनः **'अर्थप्रयुक्ते'** इत्यनेनान्वयः कथम् ? वार्तिके चैकवाक्यतयैवान्वयः प्रतीयतेऽत आह—**अत्रेति ॥ अनाश्रित्येति ।** न्यूनतापरिहारायेत्यर्थः । **'लोकतः'** इत्यस्य च लोकव्यवहारत इत्यर्थः ॥ भाष्ये—**अर्थप्रयुक्ते इति ।** अर्थज्ञानप्रयोजनेन कृत इत्यर्थः । परस्य विशिष्टार्थबोधो भवत्विति शब्दः प्रयुज्यते, प्रयोगेणाविर्भूतशब्दज्ञानेनार्थज्ञानादिति भावः ॥ एवम्प्राप्तशब्दप्रयोगे शास्त्रेणास्येयं प्रकृतिरयं प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनकाः, न गाव्यादय इति नियमः क्रियत इति तात्पर्यम् ॥ **विधानादिति ।** तादर्थ्यस्य षष्ठ्यर्थत्वबोधनाय त्वेवं प्रयोग इति भावः ॥ **'चतुर्थी'** इति योगविभागो न भाष्यारूढः, **'सुप्सुपा'** इति समास इत्यप्यगतिकगतिरित्येवं व्याख्यातम् ॥ द्वितीयपक्षात्तृतीये विशेषं दर्शयति—**लिङादिति ।** प्रभाकराङ्गीकृतमवेदम् । तन्मते हि लिङादीनामपूर्वरूपं कार्यं वाच्यम् । तदेव च स्वस्मिन् पुरुषं प्रयुञ्जानं **नियोग** इत्युच्यते । स एव धर्मः, तेन प्रयुज्यते—आक्षिप्यते इति कर्मल्युडन्तः प्रयोजनशब्दः । स चासाधुनिवृत्तिरूपो नियमः । **'धर्मप्रयोजनः'** इति षष्ठीसमासः । एवं च **द्वितीये** धर्मफलको नियम इत्यर्थः । **तृतीये** धर्मप्रयोज्य इत्यर्थ इति भेदः ॥ केचित्तु **'धर्माय नियमः'** इत्यनेन प्रत्यवायपरिहाररूपधर्मा-

---

१ नन्वेवं शास्त्रानर्थक्यम् 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायादित्याशयेन तृतीयं खण्डं व्याख्यातुं पृच्छति—**यदि तर्हीति** ॥ छाया ॥

२ **धर्मनियम इति ।** प्रथमपक्षे धर्मशब्दस्य प्रत्यवायपरिहारोऽर्थः । द्वितीये धर्मपदेन नियम एव वाच्यः, साधुभिर्भाषितव्यमिति नियमस्य धर्मार्थत्वान्नियमोऽपि धर्मपदेन व्यवह्रियते । तृतीये धर्मपदवाच्यमपूर्वमिति पक्षत्रयोपपत्तिः ॥

३ 'व्यवस्थापितम्' इति मुद्रितपाठः ॥

४ **तृतीयमिति ।** अत एव प्रश्नवाक्येषु क्रमेण 'प्रवृत्तम्' 'ज्ञायते' 'क्रियते' इति क्रियाभेदोक्तिरिति भावः ॥ छाया ॥

५ 'लोकत एव शब्दार्थसंबन्धे सिद्धे अर्थज्ञानप्रयोजनकृते शब्दप्रयोगेऽपि च सिद्धे शास्त्रेण गवादय एव प्रयुक्ता धर्मजनका न गाव्यादय इत्येवं धर्मनियमः क्रियते' इत्येकवाक्यतेत्यर्थः ॥ छाया ॥

६ ननु कथं प्रयोगस्यार्थज्ञानजनकत्वमिति चेत् । शृणु—शब्दप्रयोगेण हि शब्दाविर्भावः । आविर्भूतश्च शब्दः परेण श्रूयते । श्रवणेन च तदर्थस्मरणम् । ततो बोधो इत्येवं शब्दप्रयोगस्यार्थधीजन कत्वमिति तदाह—**प्रयोगेणेति** ॥ छाया ॥

७ 'एवं प्राप्ते शब्दप्र' इति मुद्रितपुस्तकपाठः । तथा पाठे हि 'एवं शब्दप्रयोगे प्राप्ते सति शास्त्रेण धर्मे नियमः क्रियते' इति सति सप्तम्यर्थः प्रतिभासेत । वार्तिकप्रतिपादितश्च 'लोकतोऽर्थज्ञानप्रयोजनेन कृते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते' इति सर्वसम्मतोऽर्थः, तत्सम्पत्तये च 'एवम्प्राप्तो यः शब्दस्तस्य प्रयोगे' इत्यर्थकः 'एवम्प्राप्तशब्दप्रयोगे' इति ग्रन्थपाठ इति प्रतिभाति ॥

८ 'अपूर्वसंज्ञकंकार्य' इति मुद्रितपाठः ॥

९ **केचित्तु इति ।** धर्मनियम इत्यत्र भाष्यकृता त्रिविधा व्युत्पत्तिः प्रदर्शिता । प्रदीपे त्रिविधायास्तस्याः प्रथमे धर्मशब्दस्यापूर्वमर्थः, द्वितीये धर्मः–यागादिः, तृतीये धर्मः–नियोग इत्येवमर्थ उक्तः । अत्र चान्तिमः पक्षः प्रभाकरमतेन प्रसाध्यते, मतान्तरे नियोगासम्भवात् । भाष्यस्यैकमतेन प्रवृत्तं, त्रिविधव्युत्पत्त्या सम्पन्नोऽर्थश्च सैद्धान्तिक इत्यभिप्रायेण केचित्त्वित्यादिनोद्द्योते प्रकारान्तरं प्रदर्शयति । तदभिप्रेताश्च–प्रत्यवायपरिहारः, यागादिः, अपूर्वमिति क्रमेणार्थाः । एकविधेस्तदितरनिषेधफलकत्वात् 'एकः शब्दः–' इत्यनेन श्रौतवचनेनासाधुशब्दप्रयोगे प्रत्यवायो बोध्यते । तथाच धर्माय–प्रत्यवायपरिहाराय यो नियम इति प्रथमोऽर्थः सम्पन्नः । द्वितीयश्च मतद्वयेऽपि समानः, 'नानृतं वदेत्' इति कर्माङ्गनिषेधो यागाङ्गत्वाद्याग एव, स च धर्मपदवाच्यः । तृतीये धर्मस्य–अपूर्वस्य प्रयोजनो यो नियमः साधुभिर्भाषितव्यमिति । उद्द्योतप्रदर्शिते मतभेदप्रसक्तिर्नास्तीति विशेषः ॥

यायं नियमः, असाधुप्रयोगेऽधर्मोत्पत्तेः ॥ 'धर्मार्थो नियमः' इत्यनेन धर्मस्य यज्ञादेरङ्गभूत इत्यर्थः, 'नानृतं वदेत्' इति क्रत्वङ्गवाक्येन क्रतुवैगुण्यस्य बोधनात् ॥ 'धर्मप्रयोजनो नियमः' इत्यनेन 'एकः शब्दः' इति श्रुतेर्नियमादृष्टं पुरुषार्थकरं सूचितमित्याहुः ॥

( १ वार्तिकचतुर्थखण्डम् ॥ २ ॥ )

**॥ * ॥ यथा लौकिकवैदिकेषु ॥ * ॥**

( भाष्यम् )

**प्रियतद्धिता[1] दाक्षिणात्याः[2] । 'यथा लोके वेदे च' इति प्रयोक्तव्ये 'यथा लौकिकवैदिकेषु' इति प्रयुञ्जते ॥**

**अथवा—युक्त एव[3] तद्धितार्थः । यथा लौकिकवैदिकेषु च कृतान्तेषु ॥**

**लौकिके[4] तावत्—'अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकरः' इत्युच्यते । भक्ष्यं च[5] नाम क्षुत्प्रतीघातार्थमुपादीयते । शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम् । तत्र नियमः क्रियते—इदं भक्ष्यम्, इदमभक्ष्यमिति ॥ तथा—खेदात्स्त्रीषु प्रवृत्तिर्भवति । समानश्च खेदविगमो गम्यायां चागम्यायां च । तत्र नियमः क्रियते–इयं गम्या–इयमगम्येति ॥**

**( प्रदीपः ) प्रियतद्धिता इति ।** नायमपशब्दः, किंतु ये लोकवेदयोर्भवा अवयवास्ते लोकवेदशब्दाभ्यामभिधातुं शक्यन्ते । आधाराधेयभावकल्पनया तु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः । यथा–कश्चिद्वनस्पतय इति प्रयुङ्क्ते, कश्चिद्वानस्पत्यमिति समूहप्रत्ययान्तम् ॥ **अथवेति ।** नात्रावयवावयविविभागः, किं तर्हि ? वेदलोकव्यतिरिक्तः सिद्धान्तः शब्दार्थो[6] भवरूप इत्यर्थः[7] ॥ **लौकिकः—** स्मृत्युपनिबद्धः । **वैदिकः**–श्रुत्युपनिबद्धः ॥ **शक्यं चानेनेति ।** शकेः[8] कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः । ततः[9] शब्दान्तरसंबन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते इति **'शक्यं···क्षुत्'** इत्युक्तम् । यदा तु पूर्वमेव विशेषविवक्षा तदा 'शक्या क्षुत्' इति भवत्येव । यदा तु प्रतिघातस्यैव क्षुत्कर्म, शकेस्तु प्रतिघातः, तदा 'क्षुधं प्रतिहन्तुं शक्यम्' इति भवति ॥ **खेदादिति ।** खेदयतीति–खेदः=रागः, इन्द्रिय[10]नियमासामर्थ्यं वा खेदः ॥

**( उद्द्योतः )** नन्वीदृशो धर्मनियमः क्व दृष्टोऽत आह भाष्ये—**यथेति ॥** ननु 'लोकवेदयोः' इत्येव सिद्धे तद्धितनिर्देशोऽयुक्तोऽत आह—**प्रियतद्धिता इति ॥** नन्वन्यार्थेऽन्यशब्दप्रयोगेऽपशब्दत्वं स्यादत आह—**नायमिति ॥ ते वेद[11]लोकेति ।** अवयवे समुदायशब्दप्रयोगदर्शनादिति भावः ॥ **आधाराधेयकल्पनयात्विति ।** लोकरूपसमुदायतदवयवयोरित्यादिः ॥ **नात्रावयवावयविविभाग इति ।** 'तत्र भवः' इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः ॥ **कृतान्तेषु ।** कृतान्तः–सिद्धान्तः, तत्प्रतिपादकवाक्येष्वित्यर्थः ॥ **'भक्ष्यं च नाम'** इत्यस्य तद्भवति यदिति शेषः ॥ 'शक्यं क्षुत्' इति सामानाधिकरण्यं कथं भिन्नलिङ्गत्वादत आह—**शकेरिति ॥ तदा क्षुधमिति ।** ननु प्र[12]धानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य **'स्वादुमि णमुल्'** इत्यत्र वक्ष्यमाणत्वेन कथमेतत् ? इति चेत्, **न ।** प्रधानतिङन्ता[13]र्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत् स्वसमानाधिकर-

---

१ **प्रियतद्धिता इति ।** लोकवेदशब्दयोः समुदायेऽवयवे च समानैव प्रवृत्तिरिति लोकवेदावयवबोधनेच्छायान्तद्धितप्रत्ययो नावश्यक इत्याशयेन तस्य नैरर्थक्यं प्रतिपादयन् भाष्यकारः 'अथवा युक्त एव' इत्यादिना तस्य सार्थक्यमुपपादयति । प्रथमपक्षे लोकवेदशब्दाभ्यां समुदायः, तदुत्तरप्रत्ययेन च लोकवेदावयवः–अभक्ष्यो ग्राम्य–पयोव्रत इत्यादिर्बोध्यः । एवञ्च प्रथमपक्षे–अवयवावयविनोराधाराधेयकल्पना, उभयबोधकत्वेन प्रसिद्धयोर्लोकवेदशब्दयोश्च समुदायमात्रबोधकत्वम् । द्वितीये च पक्षे तद्धितेन सिद्धान्तार्थ एवोच्यते–लोकवेदयोर्भवा ये सिद्धान्तास्तेषु यथेति । एवञ्चात्र पक्षे पूर्वोक्तदोषराहित्यं, प्रत्ययश्च सार्थकः । यथा लोकवेदसिद्धान्तेषु नियमो धर्मप्रयोजनस्तथा शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते—साधुभिरेव भाषितव्यं नासाधुभिरिति । अभक्ष्यो ग्राम्यकुक्कुटः पयोव्रतो ब्राह्मण इत्यादिषु लोकवेदावयवेषु शब्देन नियमो न प्रदर्शितः किन्तु लोकवेदसिद्धान्ते एव स इति तद्धितप्रत्ययः सूपपादो भवतीत्याशयः ॥

२ वार्तिककृत इति शेषः । अनेन वार्तिककारस्य दाक्षिणात्यत्वं सूचितम् । निरर्थकशब्दाडम्बरकारित्वस्वभावेनोपहसनीयता तेषां तदन्तर्गतत्वादुपहासश्च कृत इति बोध्यम् । छाया ॥

३ 'एवात्र' इति क. ख. पाठः । **वैदिकेषु च कृतान्तेष्वि**त्यत्र कृतान्तशब्दस्य दृष्टान्तमर्थं ब्रुवन् गुरुप्रसादो ननु बभ्राम, 'सिद्धान्तः शब्दार्थो भवरूपः' इति प्रदीपं 'कृतान्तः सिद्धान्तः' इत्युद्द्योतञ्च पश्यतोऽप्यस्य निराकुलञ्चक्षुरिति ॥

४ लौकिकसिद्धान्तमुपपादयति—**लोके तावदित्यादिना ॥**

५ 'भक्ष्यं च क्षुत्प्रतिघातार्थं' इति अ. पाठः ॥

६ 'लोकवेदव्यतिरिक्तसिद्धान्तशब्दार्थोभयरूप' इति **मुद्रितपाठः** क्वचिदेवोपलब्धः ॥

७ भावनाद्वैविध्येन तत्स्वरूपमाह—**शब्दार्थो भवेति ॥** तद्धितार्थ इति शेषः ॥ इति छाया ॥

८ **शकेरिति ।** क्षुत्सामानाधिकरण्यात्पूर्वमिति शेषः ॥ छाया ॥

९ 'ततः पदान्तर' इति ख. पाठः ॥

१० **इन्द्रियेति ।** तन्निग्रहाशक्तिजनितपीडेति तु **तत्त्वम्** ॥ छाया ॥

११ 'ते लोकवेदशब्दाभ्यां' इति प्रदीपग्रन्थस्य प्रतीकं 'ते वेदलोकेति' इत्येव सर्वत्रोपलभ्यते ॥

१२ 'प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥'
इति हर्युक्तेः ॥

१३ **तिङन्तेति ।** प्रकृते तु कृदन्तमिति न तस्य विषय इति भावः ॥ छाया ॥

णगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानः । वस्तुत इदमयुक्तमेवेति 'स्वादुमि-' इत्यत्र निरूपयिष्यामः ॥ खेद इति । एवञ्च ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया आरण्यकतद्भक्षणस्वदारगमनयोर्यथा दोषाभावः, यथा च ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्मः, तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते; तेषां साधुत्वबोधनात् । अर्थादपशब्दानामधर्मजनकत्वं बोध्यते, एकविधेस्तदितरनिषेधफलकत्वात् । यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमिति भावः । दृष्टान्तता स्वांशेन, वक्ष्यमाणवैदिकानां तु सर्वांशेनेति बोध्यम् ॥

## ( वैदिकसिद्धान्तोपपादकभाष्यम् )

**वेदे खल्वपि—"पयोव्रतो ब्राह्मणः-यवागूव्रतो राजन्यः-आमिक्षाव्रतो वैश्यः" इत्युच्यते । व्रतं च नामाभ्यवहारार्थमुपादीयते । शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम् । तत्र नियमः क्रियते ।**

**तथा-"बैल्वः खादिरो वा यूपः स्यात्" इत्युच्यते । यूपश्च नाम पश्वनुबन्धार्थमुपादीयते । शक्यं चानेन यत्किंचिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम् । तत्र नियमः क्रियते ।**

**तथा-"अग्नौ कपालान्यधिश्रित्याभिमन्त्रयते—भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम्" इति । अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि सन्तापयति । तत्र च नियमः क्रियते ।**

**एवं क्रियमाणमभ्युदयकारि भवतीति ॥**

**( प्रदीपः ) पयोव्रत इति ।** सत्यामर्थितायां 'पय एव व्रतयति' इति नियमोऽयं न तु विधिः, अर्थित्वाभावे कारणाभावात्॥

**( उद्द्योतः ) व्रतयतीति ।** अभ्यवहार्यत्वेनोपादत्ते-इत्यर्थः ॥ भाष्ये-**उच्छ्रित्यानुच्छ्रित्य वेति** । संतक्ष्यासंतक्ष्य वेत्यर्थः । निखन्यानिखन्य वेत्यर्थ इत्यन्ये ॥

## ( दार्ष्टान्तिक उपसंहारभाष्यम् )

**एवमिहापि समानायामर्थगतौ शब्देनापशब्देन च धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति । एवं क्रियमाणमभ्युदयकारि भवतीति ॥**

**( प्रदीपः ) समानायामिति ।** यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्यमाणसाधुशब्दव्यवधानेनार्थं प्रत्याययन्ति । केचिच्चापभ्रंशाः परम्परया निरूढिमागताः साधुशब्दानस्मारयन्त एवार्थं प्रत्याययन्ति ॥ **अन्ये तु मन्यन्ते—साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इति ॥**

**( उद्द्योतः )** ननु अपभ्रंशा न वाचकाः, वाच्यप्रतीत्यन्यथाऽनुपपत्त्या कल्प्यमानशक्तेः शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात् । तदनुसारेणैव चापभ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः **'समानायां'** इत्यनुपपन्नमिति शङ्कते—**यद्यपीति ॥ तथापीति ।** एवं च वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाविशेषेण **'समानायां'** इत्युक्तम् ॥ **निरूढिमागता इति ।** ते च शक्तिभ्रमेण बोधका इति भावः ॥ शक्तिभ्रमश्चेत्थम्—केनचित् 'गावी' इति प्रयुक्ते 'गौः' इति साधुस्मरणात् प्रयोज्यस्य बोधेऽपि तटस्थस्य गावीशब्दादेवास्य गोबोध इति भ्रमेण तन्मूलकोऽन्येषामपि भ्रम इति ॥ वस्तुतो विनिगमनाविरहात् भाषाशब्देष्वपि शक्तिरेवेत्याहुः—**अन्ये त्विति । साधुत्वं** चैतन्मते शब्दगतधर्मसाधनतावच्छेदकवैजात्यमेव । यद्यपि **'साधुनैव भाषेत'** इति न श्रूयते, तथापि फलनिर्देशवाक्ये तन्निर्देशादेवेदृशविधिः कल्प्यते । तत्र 'के साधवः' इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन निष्पादनात्तद्वारा शास्त्रेण धर्मनियमो विधीयत इति बोध्यम् ॥ भाष्ये—**शब्देनैवेति** । साधुनेत्यर्थः ॥ **एवं क्रियमाणमिति** । शास्त्रज्ञानपूर्वकमुच्चार्यमाणमित्यर्थः ॥

इति धर्मनियमाधिकरणम् ॥

---

१ अभिमानपदसूचितामरुचिमाह—**वस्तुत इति** ॥ छाया ॥

२ धर्मोत्पत्तिश्चेति बोध्यम् ॥ छाया ॥ इदं चिन्त्यम् । आरण्यकतद्भक्षणस्य रागतः प्राप्तत्वेन धर्माहेतुत्वात् । स्वदारगमनं तु ऋतौ धर्मजनकमन्यदा तु तत्रापि दोषाभावमात्रमिति (र. ना.) । सुप्रसिद्धमेव मीमांसापाण्डित्यं र.ना.पण्डितानाम् । मीमांसाऽभिज्ञस्य छायाकारस्यायमभिप्रायः–अभक्ष्यो ग्राम्यकुक्कुट इति पुरुषार्थनिषेधस्यारण्यकभक्षणेऽव्यापाराद्दोषोऽपि नास्ति धर्मोऽपि न भवति–इति तत्र दोषाभाव इत्येव । स्वस्त्रीगमने तु ऋतौ भार्यामुपेयादिति वचनस्य पुरुषार्थस्य व्यापारेण धर्मोत्पत्तिरिति ॥

३ दोषश्चेत्यपि बोध्यम् ॥ छाया ॥–इदमपि चिन्त्यम् । अधर्मस्यैव तत्र दोषत्वात् (र. ना.) । यत्र प्राप्तिश्च रागतो निषेधश्च पुरुषार्थस्तत्र प्रतिषिध्यमानस्य ग्राम्यकुक्कुटभक्षणस्यानर्थहेतुत्वादधर्म इत्युक्तम् । ऋतौ भार्यामिति वचनेन फलितार्थस्य निषेधस्य पुरुषार्थत्वाभावेन परस्त्रीगमनाच्च दोष इति सूपपादितं छायाकारेण । अभक्ष्यो ग्राम्य इत्यत्र निषेधस्य पुरुषार्थत्वात् ऋतौ भार्यामित्यत्र च परदारगमनस्य फलितार्थत्वेन पुरुषार्थत्वाभावाद्भाष्यकृत्प्रदर्शितस्तयोर्भेदेन व्यवहारोऽपि संगच्छते । अत एव 'इदमपि चिन्त्यं' इत्युक्तिः साहसमात्रमेवेति ॥

४ लौकिकदृष्टान्तवाक्ये ग्राम्यकुक्कुटाभक्षणेन धर्मः आरण्यकभक्षणे दोषाभावः, ऋतौ भार्यागमनेन धर्मः परदारगमने दोषश्च । दार्ष्टान्तिके साधुशब्दप्रयोगेण धर्मः, असाधुप्रयोगे 'तेऽसुराहेलय' इत्यनेनाधर्मश्चेत्यत आह—**स्वांशेनेति ॥**

५ **शक्यमिति** । भावेऽत्र प्रत्ययः । व्रतयितुमित्यत्रास्यान्वयः । शालिमांसादेस्तत्र । अत एव न काचिदनुपपत्तिर्न वा **'स्वादुमि णमुल्'** इत्यत्रत्यसिद्धान्तविरोध इति बोध्यम् ॥ छाया ॥

६ 'किञ्चिदेव' इत्येव प. पाठः ॥

७ दृष्टान्त उपपादितं दार्ष्टान्तिके योजयति—**एवमिति** ॥ छा. ॥

८ 'नायामर्थावगतौ शब्देन चापशब्देन' इति क. ख. च. पाठः ॥

९ 'इति भ्रमस्तन्मू-' इति घ. पाठः ॥

१० अत एव प्रकृतभाष्यसंगतिः । अनुभवोऽप्येवम् । सुशब्दाज्ञानां पामराणामपशब्दैर्जायमानस्यार्थबोधस्य सुशब्दस्मारणद्वारकत्वासंभवश्च ॥ छाया ॥

(शब्दविषयप्रदर्शनाधिकरणम्)

(नियमाक्षेपे[1] वार्तिकांशानुवादभाष्यम् ॥)

॥ अस्त्यप्रयुक्तः ॥

सन्ति[2] वै शब्दा अप्रयुक्ताः । तद्यथा—ऊष, तेर, चक्र, पेच—इति ॥

किमतो[3] यत्सन्त्यप्रयुक्ताः[4] ?

प्रयोगाद्धि भवाञ्छब्दानां साधुत्वमध्यवस्यति । य इदानीमप्रयुक्ताः, नामी साधवः[5] स्युः ॥

**(प्रदीपः)** **अस्त्यप्रयुक्त[6] इति ।** प्रयोगमूलत्वादस्याः स्मृतेरप्रयुक्तानामप्यन्वाख्यानादप्रामाण्यमाशङ्कते ॥

**(उद्योतः)** **'अस्त्यप्रयुक्तः'** इत्यादेः प्रकृतोपयोगमाह—**प्रयोगमूलत्वादिति ।** *लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः* इत्यनेन प्रयुक्तेषु साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्मः प्रयुक्तासाधुष्वधर्म इत्यर्थकेनेदं सूचितम् । एवंचाप्रयुक्तानामप्रयोगेणैवासाधुत्वानुमानादसाधूनामप्यनेनान्वाख्यानादप्रामाण्यमिति भावः ॥ वार्तिकोक्तनिय[7]मानुपपत्तिश्चेत्यपि बोध्यम् ॥

भाष्ये—**किमत इति ।** अप्रयुक्तसत्त्वं नास्माकमनिष्टं, साधुमात्रार्थत्वाद्व्याकरणस्येत्यर्थः ॥

उत्तरम्—**प्रयोगादिति ।** तथा चाप्रयोगादसाधुत्वानुमानमिति भावः ॥

(आक्षेपासंगतिबोधकभाष्यम्)

इदं[8] तावद्विप्रतिषिद्धम्[9]—यदुच्यते—'सन्ति वै शब्दाः, अप्रयुक्ताः' इति ।

यदि सन्ति, नाप्रयुक्ताः ।

अथाप्रयुक्ताः, न सन्ति । सन्ति चाप्रयुक्ताश्चेति[10] विप्रतिषिद्धम् । प्रयुञ्जान एव खलु भवानाह—सन्ति शब्दा अप्रयुक्ता इति । कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां[11] प्रयोगे साधुः[12] स्यात् ?

**(प्रदीपः)** यथा[13] घटादीनां विनाऽप्यर्थक्रियया सत्त्वं गम्यते नैवं शब्दानां, ते हि सर्वदा व्यवहाराय प्रयुज्यमानाः सन्तः सत्त्वेनावसीयन्ते-इत्याह—**इदमिति । कश्चेदानीमिति** उपहासपरम् ॥

**(उद्योतः)** विप्रतिषिद्धत्वमुपपादयति—**यथेति ।** एवं च[14] सत्त्वे प्रयोग आवश्यक एव, अप्रयोगे च सत्त्वमेव न स्यादिति भावः ॥ ननु लक्षणवशेन सत्त्वं, केनाप्यप्रयोगाच्चाप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये—**प्रयुञ्जान एवेति ॥** ननु मया प्रयुक्तश्चेत्किम् ? तत्र सोपहासमाह—**कश्चेदानीमिति ।** स्वयमेव प्रयोगं कृत्वा **'सन्ति चाप्रयुक्ताः'** इत्यादीनां शब्दानां प्रयोगे साधुर्योग्यः स्यादित्यर्थः । त्वत्प्रयोगेणैव प्रयुक्तत्वावगमेऽप्रयुक्तत्वोक्तिर्विरुद्धेति भावः ॥

---

१ 'अस्त्यप्रयुक्तः' इत्यस्य भागस्याग्रिमवार्तिकेऽपि सत्त्वेन पौनरुक्त्यापत्त्या न वार्तिकत्वम् । किंतु आक्षेपबाधकवार्तिके प्रतिषेध्यनिरूपणाय भाष्यकृदुत्प्रेक्षितत्वमिति वदन्ति ॥ यथा पूर्वमीमांसायां (१।२।२०) **'लोकवदिति चेत्'** इति शङ्कासूत्रस्य **'न पूर्वत्वात्'** इति दूषणसूत्रमुपलभ्यते, तथैवात्रापि पूर्वमाक्षेपवार्तिकमावश्यकम् । अत एव छायाकारेणाप्यस्याक्षेपवार्तिकस्योद्द्योतव्याख्यायां वार्तिकत्वमुपदर्शितम् । आक्षेपबाधकवार्तिके **'अस्त्यप्रयुक्तः'** इत्यंशस्य स्पष्टार्थं वार्तिककारस्यैव पौनरुक्त्यमस्तु । भाष्यकारस्य वा प्रतिषेध्यग्रन्थपूरणम् ॥ आक्षेपवार्तिकमन्तरा आक्षेपसाधकवार्तिकेन साधनीयमेव न स्यादिति तु **दाधिमथा** वदन्ति । वस्तुतस्तु नेदं वार्तिकम्, भाष्यकृत्कृतोऽयं वार्तिकांशानुवाद एव । अत एव तद्व्याख्यानभाष्ये बहुवचनान्तशब्दप्रयोग उपपन्नः । यत्र च वार्तिकमेव व्याख्यायते तत्र वार्तिकगतशब्दैरेव व्याख्यानं भाष्यकृत्सम्प्रदायसिद्धम् ॥

२ वार्तिके जात्यभिप्रायमेकवचनमिति सूचयन्व्याचष्टे—**सन्तीति ॥** छाया ॥

३ दोषदातुराशयं तन्मुखादेवावगन्तुं तटस्थः शङ्कते—**किमत इति ॥** छाया ॥

४ यत् शब्दा अप्रयुक्ताः सन्तीत्यतः किमित्यन्वयः । अप्रयुक्ताः शब्दाः सन्तीत्यनेन प्रस्तुते किमायातमित्याशयः ॥

५ **साधवः स्युरिति ।** पूर्ववार्तिके साधुशब्दानां प्रयोगेण धर्ममाह भगवान्, न तु ज्ञानमात्रेण धर्मः । तथाऽपशब्दानां प्रयोगादेवाधर्मः, न तु ज्ञानमात्रात् । तथा च ये इदानीमप्रयुक्तास्ते साधवो न भवेयुस्तेषां साधुत्वसम्पादनमेव शास्त्रेण प्रसाध्यत इति अप्रयुक्तशब्दसाधकशास्त्रस्य नियमार्थत्वानुपपत्तिरित्याशयः ॥

६ ननु **'अस्त्यप्रयुक्तः'** इति वार्तिकादिः—**'तनूनाम्'** इत्यन्तो ग्रन्थः प्रकृतानुपयोगादसंबद्धोऽत आह—**अस्त्येति ॥** छाया ॥

७ **वार्तिकोक्तेति ।** लोकतः प्रयोगे सिद्धे वैयर्थ्याच्छास्त्रं नियामकमिति तेनोक्तम् । यदि तु तेषामप्यन्वाख्यानं तर्हि शास्त्रस्यापूर्वविधित्वेन तस्य नोपपत्तिरिति भावः ॥ एवं सत्याक्षेपिकी संगतिः स्फुटतरेति बोध्यम् ॥ छाया ॥

८ पूर्वपक्षे तटस्थो दोषमाह—**इदमिति ॥** छाया ॥ 'इदं विप्रति' इत्येव प. पाठः ॥

९ **विप्रतिषिद्धमिति ।** शब्दानां सत्ता प्रयोगादेवावगम्यते, भवता चोच्यते—अप्रयुक्ताः शब्दाः सन्तीति । अत्र यदि सन्ति—इति भवताऽवगम्यते तत् शब्दानां प्रयोगादेवावगम्यमिति तेषां प्रयोगोऽस्त्येव । यदि अप्रयुक्तास्तर्हि ते न सन्तीति विप्रतिषिद्धमित्यर्थः ॥

१० **इतीति ।** इदं मिथ इति शेषः ॥ छाया ॥

११ **शब्दानां प्रयोगे**—'सन्ति चाप्रयुक्ताः' इति शब्दानां प्रयोगे । एतादृशं विरुद्धं भाषणं त्वदन्यः कः कुर्यादित्याशयः ॥

१२ 'साधु स्यात्' इति प. पाठः ॥

१३ **यथा घटेति ।** घटादयो हि जलाहरणादिक्रियाशून्या अपि प्रसिद्धा दृश्यन्ते, शब्दस्तु न तथा, तस्य हि सत्ता प्रयोगमात्रैकगम्येति भावः ॥

१४ शब्दानां सत्त्वस्य प्रयोगैकनिबन्धनत्वात्तदभावेऽपि तत्सत्ताङ्गीकरणं विरुद्धं प्रमाणाभावादित्याह—**एवं चेति ॥** छाया ॥

( आक्षेपसंगतिसाधकभाष्यम् )

नैतद्[1]विप्रतिषिद्धम् । सन्तीति तावद्ब्रूमः, यदेताञ्शास्त्रविदः शास्त्रेणानुविदधते[2] ॥

अप्रयुक्ता[3] इति ब्रूमः, यल्लोके[7]ऽप्रयुक्ता इति ॥

यदप्युच्यते[5]—'कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात्' इति ।

न ब्रूमो[6]ऽस्माभिरप्रयुक्ता इति ।

किं तर्हि ?

लोके[4]ऽप्रयुक्ता इति ॥

( प्रदीपः ) उत्तरं तु शास्त्रदृष्ट्या[8] प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वाः, व्यवहारे तु न दृश्यन्त इत्युक्तम् ॥

( आक्षेपभाष्यम् )

ननु च भवानप्यभ्यन्तरो लोके ॥

( समाधानभाष्यम् )

अभ्यन्तरोऽहं लोके, न त्वहं[9] लोकः ॥

( प्रदीपः ) न त्वहं लोक इति । यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते नैवं मयैतेऽर्थे प्रयुक्ताः, अपि तु स्वरूपपदार्थका इत्यर्थः ॥

( उद्योतः ) ननु लोकान्तर्भूतस्य 'न त्वहं लोकः' इति वचो विरुद्धमत आह—यथेति । अर्थबोधाय शब्दान्प्रयुञ्जानो हि मम लोकत्वेनाभिमत इत्यर्थः ॥

( २ नियमाक्षेपबाधकं वार्तिकम् ॥ १ ॥ )

॥ * ॥ अस्त्यप्रयुक्त[10] इति चेत् नार्थे शब्दप्रयोगात्[11] ॥ * ॥

( भाष्यम् ) अस्त्यप्रयुक्त इति चेत्, तन्न ।

किं कारणम् ?

'अर्थे शब्दप्रयोगात्' अर्थे शब्दाः प्रयुज्यन्ते । सन्ति[12] चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते ॥

( प्रदीपः ) अर्थे शब्दप्रयोगादिति । अर्थसद्भावः शब्दसद्भावे[13] लिङ्गम् । न हि विना शब्देनार्थप्रत्यायनमुपपद्यते ॥

( उद्योतः ) भाष्ये—अर्थे शब्दप्रयोगादिति । अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः ॥ तदाशयमाह—अर्थसद्भाव इति ॥

( ३ बाधकांशनिरासवार्तिकम् ॥ २ ॥ )

॥ * ॥ अप्रयोगः प्रयोगान्यत्वात्[14] ॥ * ॥

( भाष्यम् )

अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः ।

कुतः ?

'प्रयोगान्यत्वात्' । यदेतेषां शब्दानामर्थेऽन्याञ्छब्दान्प्रयुञ्जते । तद्यथा—'ऊष' इत्यस्य शब्दस्यार्थे—क्व यूयमुषिताः, 'तेर' इत्यस्यार्थे—क्व यूयं तीर्णाः, 'चक्र' इत्यस्यार्थे—क्व यूयं कृतवन्तः । 'पेच' इत्यस्यार्थे—क्व यूयं पक्वन्त इति ॥

( प्रदीपः ) इतरोऽन्यथासिद्धतामाह[15]—अप्रयोग इति । यतोऽन्ये तेषामर्थानां सन्ति वाचकास्ततो नैषामनुमानमुपपद्यते । यद्यपि 'ऊष' इत्यस्य 'उषिताः' इति समानार्थो न भवति, परोक्षतादेर्विशेषस्यानवगमात्, तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते ॥

( उद्योतः ) भाष्ये—प्रयोगान्यत्वादिति । प्रयुज्यत इति—प्रयोगः=शब्दः, सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः । सर्वनाम्नः[16] परनिपातः, पूर्वनिपातप्रकरणानित्यत्वात् ॥ पदान्तरसहित इति । पदान्तरं—क्व यूयमिति । तत्र 'क्व' इत्यनेन साधनपारोक्ष्यं, निष्ठया

१ इदं तावदित्याशङ्कां समाधत्ते—नैतदिति ॥ छाया ॥

२ अनुविधानं—संस्कारः ॥ छाया ॥

३ 'अप्रयुक्ता इत्यपि ब्रूमः' इति प. पाठः ॥

४ लोके इति । अर्थबोधायेति शेषः ॥ छाया ॥

५ एवं विरोधं परिहृत्योपहासं परिहर्तुमनुवदति—यदपीति ॥ छाया ॥

६ मत्प्रयोगो न लोकप्रयोग इत्याशयेन परिहरति—न ब्रूम इति ॥ छाया ॥

७ 'यल्लोकेऽप्र' इति प. पाठः ॥

८ 'शास्त्रं दृष्ट्वा प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वात्' इति अ. पाठः ।

९ 'न चाहं' इति प. पाठः ॥

१० 'अस्त्यप्रयुक्त' इत्याशङ्कां दूषयति—अस्त्यप्रेति ॥ छाया ॥

११ शब्दप्रयोगादिति । 'अस्त्यप्रयुक्तः' इति वार्तिकानुवादेनाप्रयुक्तशब्दानां साधुत्वबोधनार्थं शास्त्रमावश्यकमिति न तस्य नियामकत्वमित्युच्यते । अनेन च तन्निराक्रियते—अर्थज्ञानाय शब्दप्रयोगस्यावश्यकत्वेन भवताऽप्रयुक्तत्वेन प्रदर्शितानां शब्दानामर्थस्य सद्भावात्तद्वाचकाः शब्दा अपि सन्त्येवेति न तदर्थं शास्त्रमावश्यकमिति शास्त्रस्य नियमपरत्वोपपत्तिरिति ॥

१२ सन्तीति । सर्वथा मूलप्रयोगं विना न शास्त्रोपदेशः । यद्येषामसन्तोऽर्थास्तर्हि शब्दार्थयोरप्रसिद्ध्या शशशृङ्गादितोऽपि विप्रकृष्टतरत्वं स्यात् । तस्मादर्थाः कालादयः सन्ति । न च तेषां प्रतीतिः शब्दं विना संभवति । अत एव वक्ष्यति—शब्दपूर्वको ह्यर्थे संप्रत्ययः इति । तस्मादर्थे सति शब्दस्याप्रयोगो दुरवधारण इत्यर्थः ॥ छाया ॥

१३ 'शब्दप्रयोगे लिङ्गम्' इति मुद्रितपाठः ।

१४ प्रयोगान्यत्वादिति । ऊषतेरेत्यादिशब्दवाच्यस्यार्थस्य सद्भावादूषादीनां प्रयोगोऽनुमीयत इत्यपि न, तेषां पर्यायशब्दसद्भावेन तैरेव व्यवहारे तथानुमानासंभवात् । एवञ्चाप्रयुक्तानां सिद्ध्यर्थं शास्त्रमावश्यकमिति न नियमार्थतोपपत्तिरित्यर्थः ॥

१५ अन्यथासिद्धतामिति ॥ अर्थप्रतीतेरिति भावः ॥ एवं चोषादीनामर्थसद्भावात्प्रयोगसद्भावानुमानं न सिध्यति, तत्प्रतीतेरन्यथाप्युपपत्तेरिति भावः ॥ छाया ॥

१६ 'सर्वनाम्नां' इति मुद्रितपाठः ।

भूतत्वं कर्तृत्वं च, 'यूयं' इत्यनेन मध्यमपुरुषबोध्यमा[1]भिमुख्यं बहुत्वञ्च, चेतनत्वं वा बहुत्वं च । वसेः साक्षात् 'गत्यर्थाकर्मक-' इत्यत्र निर्देशात्, तरतेर्गत्यर्थत्वात् कर्तरि क्तः ॥ न[2]न्वाख्याते क्रियाविशेष्यको बोधः, अत्र कर्तृविशेष्यकः–इति कथं लिङन्तसमानार्थत्वम्? इति चेत्, न । विषयताविशेषा[3]नादरेण तथोक्तेः । न चाख्याते क्रियाविशेष्यकबोधे 'पक्ष्यति भवति' 'अपाक्षीद्भवति' इति भूवादिसूत्रस्थभाष्यप्रयोगविरोधः, अतीतानागतपाककर्तृकसत्ताया वर्तमानत्वासङ्गतेरिति वाच्यम् । वर्तमानसामीप्ये तत्र लटः सत्त्वात् । 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' इत्यादौ यत्कर्तृको यागस्तत्कर्तृकं तरणमिति बोधः । अत एव 'ह्रस्वो नपुंसके-' इति सूत्रे 'रमते ब्राह्मणकुलमिति क्रियाप्रधानं' इति भाष्ये उक्तम् ॥

( ४ बाधकोपपत्तिवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अप्रयुक्ते दीर्घस[4]त्रवत् ॥ * ॥

( भाष्यम् )

**यद्यप्यप्रयुक्ताः, अवश्[5]यं दीर्घसत्रवल्लक्षणेनानुविधेयाः । तद्यथा–दीर्घसत्राणि वार्षशतिकानि वार्षसहस्रिकाणि च, न चाद्यत्वे कश्चिदप्याहरति । केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते ॥**

( प्रदीपः ) संप्रत्यप्रयुज्यमानानामपि पूर्वं प्रयुक्तत्वादनुशासनं कर्तव्यमित्याह—**अप्रयुक्त इति** ॥ **ऋषिसंप्रदाय इति** । वेदाध्ययनमित्यर्थः ॥

( उद्द्योतः ) नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्याप्रामाण्यं स्यादत आह—**संप्रतीति** । पाणिनेर्व्याकरणप्रणयनकाले इत्यर्थः । पूर्वप्रयोगसत्ता च व्याकरणप्रणयनादेवानुमीयत इति भावः । इदमपि यत्र भाष्यवार्तिककाराभ्यामप्रयुक्तत्वं नोक्तं तदभिप्रायकमनुमानं बोध्यम् ॥ ( भाष्ये ) **वार्षशतिकानीति** । वर्षशब्दो दिव्[6]सपरः, यथाश्रुत एव वा ॥ **आहरति** । सामग्र्यभावादिति भावः ॥ न[7]नु सत्राणां बहुयजमानकानामृषिभिर्वसिष्ठादिभिः संप्रदीयमानत्वाभावादृषिसंप्रदाय इत्ययुक्तमत आह—**वेदेति** ॥ भाष्ये 'कृत्वा' इत्यनन्तरं 'अधीयते' इति शेषः । याज्ञिकाश्च कल्पसूत्रेणान्वाचक्षत इत्यर्थः । अत्र[8] सत्राणां कर्मत्वम् ॥

( ५ सिद्धान्तसमाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सर्वे[9] देशा[10]न्तरे ॥ * ॥

( भाष्यम् )

**सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयु[11]ज्यन्ते ॥**

( प्रदीपः ) **सर्वे इति** । इदमत्र तात्पर्यम्—यस्य कस्यचिद्वचनात्प्रयोगाप्रयोगौ न व्यवतिष्ठेते, अपि तु शिष्टानामेव वचनात् ॥

( आक्षेपभाष्यम् )

**न चैवोपलभ्यन्ते ॥**

( उद्द्योतः ) अनुपल[12]ब्ध्याऽप्रयुक्तत्वं शङ्[13]कते—भाष्ये-**न चेति** ॥

( समाधानभाष्यम् )

**उपल[14]ब्धौ यत्नः क्रियताम् ॥ महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती, त्र[15]यो लोकाः,**

१ 'माभिमुख्यं चेतनत्वं वा बहुत्वम्' इति घ. पाठः ।

२ एतद्वार्तिकभाष्यसंमतत्वादाख्यातार्थविशेष्यक एव शाब्दबोधो न धात्वर्थविशेष्यक इति तथा वदन्तो वैयाकरणमन्या अयुक्ता एवेति रत्नोक्त्यसांगत्यं ध्वनयन्नाह—**नन्वाख्यात इति** ॥ छाया ॥

३ **नादरेणेति** । तथा च तत्समानविषयकत्वात्तत्त्वम्, न तु तत्समानविशेष्यकत्वादिनेति भावः ॥ छाया ॥

४ यथा दीर्घसत्राणि कश्चिदपि नेदानीमाहरति, केवलं वेदप्रोक्तानि तान्यध्ययनविषयाणि, तथा ऊषतेरेत्यादीनामिदानीं प्रयोगाभावेऽपि पूर्वं प्रयोगविषयास्ते साधवः शास्त्रेण साधनीया इति तदर्थं शास्त्रमावश्यकमिति न शास्त्रस्य नियमार्थतोपपत्तिरित्यर्थः ॥

५ **अवश्यमिति** । तथापीत्यादिः ॥ छाया ॥

६ **'समा मासा अहोरात्रास्तुल्या ब्राह्मणचोदिताः'** इति गृह्यसंग्रहोक्तिः **"आदित्यो वा सर्वे ऋतवः स यदैवोदेत्यथ वसन्तो यदा सङ्गवोथ ग्रीष्मो यदा मध्यन्दिनोथ वर्षा यदाऽपराह्णोथ शरत्, यदाऽस्तमेत्यथ हेमन्तशिशिरौ"** इति ब्राह्मणमूलिकात्र प्रमाणम् । अत एव **"सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु"** इति पूर्वपक्षे **"अहानि वाभिसंख्यत्वात्"** ( पू. मी. ६।७।३ १-४० ) इति जैमिनिनापि सिद्धान्तितं संगच्छते ॥ इति दाधिमथाः ॥

७ भाष्यस्थ'ऋषि'पदस्य वेदपरत्वे प्रमाणमुपपादयति—**ननु सत्राणामिति** ॥

८ **अत्र**–अनुविदधनक्रियायाम् ।

९ इदानीं समयेऽपि प्राक्प्रयोगा लक्षणेनानुमेया इत्युक्तं प्राक् । संप्रति 'प्रयोगोऽपि तेषां क्वचिदस्ति' इत्याह—**सर्वे इति** ॥ छाया ॥

१० **देशान्तर इति** । अनेन वार्तिकेन ये भवताऽप्रयुक्ता इत्युच्यन्ते तेषामपि देशान्तरे प्रयोगसद्भावेन प्रयोगविषयत्वात्साधुत्वं तेषां स्यादिति शास्त्रेण धर्मनियम एव क्रियत इति सिद्धान्तः प्रतिपाद्यते । एवञ्च शास्त्रेण प्रयोगनियमेऽपि तेनैव हेतुना साधुत्वमप्येषामनुमेयमिति साधुत्वसम्पादकत्वमपि शास्त्रस्योपपद्यत इति भावः ॥

११ एवं चैकत्र देशेऽप्रयुक्तत्वमात्रेण शास्त्राविषयत्वं नेति भावः ॥ छाया ॥

१२ **अनुपलब्ध्येति** । योग्यानुपलब्ध्येत्यर्थः । यदि ते प्रयुज्यन्ते तर्ह्यवश्यं तेषामुपलब्ध्या भवितव्यं योग्यत्वात्, यतो नोपलभ्यन्तेऽस्माभिरतस्तेऽप्रयुक्ता इति भावः ॥ छाया ॥

१३ **शङ्कत इति** । आक्षेपक एवेति भावः ॥ छाया ॥

१४ समाधत्ते—**उपेति** । योगाभ्यासः कर्तव्य इति भावः ॥ यद्वा अन्यदेशस्थप्रयोगस्य तत्त्वेनायोग्यत्वादनुपलब्धेरयोग्यानुपलब्धेश्चाभावासाधकत्वान्न तत्त्वम् । किं त्वन्यदेशस्थेनापि तद्देशाऽऽगमनं तत आगतेभ्यः श्रवणं च कार्यमित्यर्थः ॥ छाया ॥

१५ सप्तद्वीपात्मकवसुमत्येव पारं गन्तुमशक्या का कथा लोकान्तरपारगमनस्येत्याह—**त्रयो लोका इति** ॥ छाया ॥

चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः—एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं, नवधाऽऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणं, वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य 'सन्त्यप्रयुक्ताः' इति वचनं केवलं साहसमात्रमेव ॥

**( प्रदीपः ) वाकोवाक्य**शब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते । यथा—"**किंस्विदावपनं महत् भूमिरावपनं महत्**" इति । पूर्वचरितसंकीर्तनं—**इतिहासः** । वंशाद्यनुकीर्तनं—**पुराणम्** ॥

**( उद्द्योतः )** इतरलोकापेक्षया वसुमत्यां शब्दबाहुल्यात्तस्याः पृथग्ग्रहणम् । अनेनान्त्यपातालपर्यन्तसंग्रहः । **त्रयो लोकाः**—स्वस्त्वेनोपरितनसकलसंग्रहः । **रहस्यम्**—उपनिषत् । मन्वादिस्मृतयो वा, वेदनिगूढार्थप्रकाशकत्वात् । एवं च देशान्तरशब्दः शास्त्रान्तरवेदान्तरोपलक्षक इति बोध्यम् ॥

( शब्दानां नियतविषयकत्वदर्शकभाष्यम् )

एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा—शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते—शव इति । हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु ॥

**( प्रदीपः ) विकार इति** । जीवतो मृतावस्था—विकारः, तत्रेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**हम्मतिरित्यत्र रंहतिरित्यत्र** च 'गतिकर्मा' इत्यनुकर्षः ॥ **दातिर्लवनार्थ इति** । क्तिन्नन्तं क्तिजन्तं वा । लवनेऽर्थे दातिशब्दं प्राच्याः प्रयुञ्जते, तत्रार्थे दात्रशब्दमुदीच्या इत्यर्थः ॥

( अप्रयुक्तशब्दोपलम्भकभाष्यम् )

ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते ॥

---

१ अत्र वेदशब्देनैव मन्त्रभागस्येव ब्राह्मणभागस्यापि ग्रहणम् **'मन्त्रब्राह्मणयोर्वेदनामधेयम्'** इति बहुभिरापस्तम्बादिभिरुक्तत्वात् । अत एव **'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्'** इति सूत्रे जैमिनिमुनेरपि ब्राह्मणभागस्याम्नायपदेनाभिधानं संगच्छते । न्यायभाष्यकर्तुर्वात्स्यायनस्यापि **'विभागश्च ब्राह्मणवाक्यानां त्रिविधः'** इत्युपक्रम्य—**'एवं वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हति'** इत्युपसंहारात्स्पष्टमेव मन्त्रब्राह्मणयोर्वेदशब्दाभिधेयत्वं संमतम् । **'उदितेऽनुदिते चैव'** इति मनुस्मृतावपि ब्राह्मणभागस्य वेदत्वोक्तिः स्पष्टा । **छन्दोब्राह्मणानि च तद्विषयाणि"** इत्यत्र तु **"नामाख्यातोपसर्गनिपाताश्च"** इति भाष्यनिरुक्तवाक्ये गोबलीवर्दन्यायेन विशेषसमवधाने सामान्यपदस्य तद्विशेषातिरिक्तपरत्वाङ्गीकारेण निपातपदस्योपसर्गातिरिक्तपरत्वस्येव छन्दःपदस्य ब्राह्मणातिरिक्तपरत्वाङ्गीकारे न कोपि दोष इति दिक् ॥ इति दाधिमथाः ॥

२ बह्वृचानामाम्नायो बाह्वृच्यम् । **छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः** इति ञ्यः प्रत्यय इति ॥ श० कौ० ॥

३ अथर्वणा ऋषिणा प्रोक्तो वेद आथर्वणः 'अन्' इति प्रकृतिभावः । तमधीयते आथर्वणिकाः । वसन्तादित्वाट्ठक् । तेषामाम्नाय आथर्वणः 'आथर्वणिकस्य—' इत्यण् इकलोपश्चेत्यर्थः ॥ छाया ॥

४ **वैद्यकमिति** । चरकादीत्यर्थः । वसन्तराजादिप्रणीताः शकुनागमा अपि ज्योतिःशास्त्रस्यैव वेदाङ्गस्य शेषभूताः । कल्पसूत्रादयो गाथाधनुर्वेदगान्धर्ववेदार्थशास्त्रादय उपवेदाश्च यथायथं चतुर्दशविद्यास्थानेष्वेवान्तर्भवन्तीति न पृथगुक्ताः । पाखण्डाद्यागमाः काव्यनाटकादयश्च नात्यन्तं वर्जितापशब्दा इति न पृथग्गणिताः ॥ वस्तुतस्तु—भाष्ये न परिगणनं किंतु दिक्प्रदर्शनम् । प्राधान्याद्वेदप्रपञ्चस्योक्तिरिति न कोऽपि दोष इति बोध्यम् ॥ छाया ॥ अत्र **वैद्यकम्** इत्युक्त्वा **"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्"** इति ( २।१।६७ ) सूत्रे **"दृष्टार्थेनाप्तोपदेशेनायुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणम्"** इति **"य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम्"**—इति न्यायभाष्यकारोक्तदिशा वेदैकगम्ये धर्मे दृष्टविरोधकुतर्कानवकाश इति ध्वनितम् ॥ इति दाधिमथाः ॥

५ 'साहसमात्रं' इत्येव प. पाठः ॥

६ तस्यार्थमाह—**भूरिति** ॥ नन्वनेनैव वसुमत्या ग्रहणं सिद्धमत आह—**इतरेति** ॥ **वस्विति** । सप्तद्वीपवत्यामित्यर्थः । तथा च तत्र तद्बाहुल्यसूचनायैव पृथग्ग्रहणमिति भावः । भाष्यीयन्यूनतां परिहरति—**भुवरित्येत्यादिना** ॥ **स्वसिति** । स्वरित्यनेनेत्यर्थः ॥ छाया ॥

७ **अनेन**—सप्तद्वीपसहितवसुमत्याः पृथग्ग्रहणेन ॥

८ **त्रयो लोकाः**—अनेन प्रसिद्धानां भूर्भुवस्स्वरित्येषां ग्रहणम् । अत्र छायावृद्धः पाठोऽन्यविध इति तत्रत्यप्रतीकदर्शनेनावसीयते । तदर्थं दाधिमथैरीदृशः पाठः कल्पितः—**"त्रयो लोका इति** । भूर्भुवःस्वरात्मका इत्यर्थः । इतरलोकापेक्षया वसुमत्यां शब्दबाहुल्यात्तस्याः पृथग्ग्रहणम् । **भुव**रित्यनेनान्त्यपातालपर्यन्तसंग्रहः । **स्व**स्त्वेनोपरितन—" इति । वस्तुतः प्रामाणिकप्राचीनपुस्तकेषूपलब्धः पाठो नासङ्गत इति त्रुटितछायाग्रन्थानुरोधेन पाठकल्पनानुसन्धानं नोचितम् । छायादृष्टपाठोपलब्धौ च यत्नः क्रियताम् ॥

९ **वेदनिगूढेति** । स्पष्टं चेदं स्मृतिप्रामाण्याधिकरणे ( पू. मी. १।३।१ ) इति भावः ॥ छाया ॥

१० 'सर्वे देशान्तरे' इति वार्तिकघटकदेशान्तरशब्दार्थमाह—**एवं चेति** ॥

११ 'विषये ते शब्दा' इत्येव प. पाठः ॥

१२ 'भाषिष्यते' इति प. पाठः ॥

क्व ?

वेदे । तद्यथा—"[1]यद्वो रेवतीरेवत्यन्तमूष, यन्मे नरः श्रुत्यं ब्रह्म चक्र, यत्रा नश्चक्रा जरसं तनूनाम्" इति ॥

इति शब्दविषयप्रदर्शनाधिकरणम् ॥

—•••—

( अथ शब्दज्ञानस्य धर्मजनकताधिकरणम् )

( आक्षेपभाष्यम् )

किं पुनः-शब्दस्य ज्ञाने धर्मः, आहोस्वित्प्रयोगे ?

(प्रदीपः) किं पुनरिति । "एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति"(६।१।८४) इति श्रुतिः । तत्र किं सम्यक् ज्ञातः कामधुग्भवति, सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमित्यर्थः; आहोस्वित्सुप्रयुक्तः कामधुक् भवति, सुप्रयुक्तत्वं सम्यग्ज्ञानादित्यर्थ इति **प्रश्नः** ॥

( उद्द्योतः ) [2]वार्तिकोक्तो धर्मनियमः श्रुतिसिद्धस्तस्यामुभयोः श्रवणात्प्रश्न इत्याह—**एकः शब्द इति** । [3]तत्र **'यदैकस्मादपूर्वं तदितरत्तदर्थम्'** इति न्यायात् द्वयोः साम्येन फलसंबन्धाभावाद्विकल्पायोगेनैकस्य प्राधान्यम्, अपरस्याङ्गत्वं कल्प्यम् ॥ तत्र **"प्रथमं वा नियम्येत-"** ( पू० मी० ११।१।४३ ) इति न्यायाश्रयेणाह—**तत्र किमिति** ॥

**[4]सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।**

**पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥** इति-न्यायेन ज्ञानस्य ज्ञेयशेषतया धर्महेतुत्वाभावात्, प्रयोगा[5]ङ्गतया दृष्टार्थत्वाच्च, [6]प्रयोगस्य फलं प्रति संनिहितत्वाच्चाह—**आहो स्विदिति** ॥

( प्रत्याक्षेपभाष्यम् )

कश्चात्र विशेषः ?

( ६ ज्ञानपक्षदूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ज्ञाने धर्म इति चेत्तथाऽधर्मः ॥ * ॥**

( भाष्यम् )

ज्ञाने धर्म इति चेत्तथाऽधर्मः प्राप्नोति । यो हि शब्दान् जानाति, अपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः ॥

( प्रदीपः ) ज्ञाने धर्म इति चेदिति । यथा श्लेष्मणः प्रकोपनं स्नेहद्रव्यं, रूक्षं वायोः, तथेहापि प्राप्तमिति भावः ॥

( उद्द्योतः ) यथा श्लेष्मण इति । तथा धर्मजनकज्ञानविपरीतत्वात् [7]तद्विपरीतजनकत्वेनापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः ॥

( अधर्माधिक्यदर्शनभाष्यम् )

[8]अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दाः, अल्पीयांसः शब्दाः । एकैकस्य शब्दस्य बहवोऽपभ्रंशाः । तद्यथा-गौरित्यस्य गावी-गोणी-गोता-गोपोतलिकेत्येवमादयोऽपभ्रंशाः ॥

( ७ ज्ञानपक्षाभावबोधकं वार्तिकम् ॥ २ ॥ )

**॥ * ॥ आचारे नियमः ॥ * ॥**

( भाष्यम् )

आचारे पुनर्ऋषिर्नियमं वेदयते—"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः" इति ॥

( प्रदीपः ) आचार इति । प्रयोगे ॥ **ऋषिः-वेदः** ॥

( उद्द्योतः ) प्रयोगे इति । एवं च प्रयोगादेवाधर्मवद्धर्मोऽपीति 'ज्ञानाद्धर्मः' इति वेदविरुद्धमिति भावः ॥

इति ज्ञानपक्षनिराकरणम् ॥

—•••—

( अथ प्रयोगपक्षाङ्गीकारभाष्यम् )

अस्तु तर्हि प्रयोगे ॥

---

१ अस्मात् पूर्वं 'सप्तास्येरेवतीरेवदूष' इति मुद्रितपाठः ।

२ ज्ञाने धर्मः प्रयोगे वेतिपक्षद्वयोपस्थितौ कारणमाह-**वार्तिकोक्त इति । तस्यामुभयोः**-एकः शब्देत्यादिश्रुतौ 'सम्यग्ज्ञातः सुप्रयुक्तः' इत्युभयोरित्यर्थः ॥

३ ननु श्रुतौ ज्ञानप्रयोगयोरुभयोः श्रवणात्तयोरुभयोरेव धर्मत्वं स्यान्न त्वेकैकस्येति पक्षद्वयानुपपत्तिरत आह-**तत्र यदैकस्मादिति** ॥

४ द्वितीयपक्षाश्रयणे बीजमाह-**सर्वत्रैव हीत्यादिना** । 'संस्कारित्वेन गम्यते' इति मुद्रितपुस्तकेषु छायायाञ्च पाठ उपलभ्यते । एतच्च तन्त्रवार्तिके प्रथमाध्यायतृतीयपादस्याष्टमाधिकरणे उक्तम् । तन्त्रवार्तिके प्रामाणिकोद्द्योतपुस्तकेषु च 'संस्कारत्वेन' इत्येव पाठ उपलभ्यते । संस्कारित्वेनेति पाठे मत्वर्थोत्तरभावप्रत्ययेन सम्बन्धाभिधानमित्यभियुक्तव्यवहारात् संस्कारसम्बन्धेन ज्ञायत इत्येवार्थः, न तु संस्कारजनकत्वेनेत्यर्थः । शब्दस्य ज्ञानमेव संस्कारो न तु तदतिरिक्तः कश्चिज्ज्ञानजन्यः संस्कार उपलभ्यते ॥

५ 'सम्भवतिदृष्टफलकत्वे' इति न्यायेनाह-**प्रयोगाङ्गेति** । ज्ञानस्य प्रयोग एव दृष्टम्फलं सम्भवति, अतोऽदृष्टम्फलं 'स्वर्गे लोके' इत्यादिकं कल्पयितुमशक्यमिति भावः । अत्र गुरुप्रसादो राजलक्ष्मीं **'प्रयोगाङ्गतयेति**-प्रयोगाङ्गतयैवादृष्टजनकतयेत्यर्थः' इति व्याख्यानेन **विभूषयन्** मीमांसाकौशलम्प्रदर्शयति ॥

६ सन्निधिपाठरूपस्थानप्रमाणेनापि प्रयोगस्यैव फलेऽन्वयो न ज्ञानस्येत्याह—**प्रयोगस्य फलमिति** ॥

७ **तद्विपेति** । धर्मविपेत्यर्थः । तथा च शास्त्रादेव शब्दज्ञाननान्तरीयकतया जायमानापशब्दज्ञानस्य तुल्यन्यायेनाधर्महेतुतापत्त्याऽनुपादेयत्वं शास्त्रस्य स्यादिति भावः ॥ छाया ॥

८ अनर्थभूयस्त्वाद्विषसंप्रयुक्तमध्वन्नवद्वर्ज्यमेव व्याकरणमित्याह—**अथवेति** ॥ अयं साधुरयमसाधुरिति ज्ञानं स्वरूपनिर्देशं विना न संभवतीति सम्यक्प्रयुक्त इत्येतदत्र मते निर्देशार्थं स्यादिति भावः ॥ छाया ॥

( ८ प्रयोगपक्षे दूषणवार्तिकम् ॥ ३ ॥ )

॥ ※ ॥ [1]प्रयोगे सर्वलोकस्य ॥ ※ ॥

( भाष्यम् )

**यदि प्रयोगे धर्मः, [2]सर्वो लोकोऽभ्युदयेन युज्येत ॥**

( आक्षेपभाष्यम् )

**[3]कश्चेदानीं भवतो मत्सरः, यदि सर्वो लोकोऽभ्युदयेन युज्येत?**

( समाधानभाष्यम् )

**[4]न खलु कश्चिन्मत्सरः। [5]प्रयत्नानर्थक्यं तु भवति। फलवता च नाम यत्नेन भवितव्यम्। न च प्रयत्नः फलाद्व्यतिरेच्यः ॥**

**( प्रदीपः ) न च प्रयत्न इति।** यदि प्रयत्नेन विना फलं स्यात् [6]प्रयत्नवैयर्थ्यमापद्येतेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**फलाद्व्यतिरेच्य इति।** फलवद्वृत्त्यभावप्रतियोगी न कार्य इत्यर्थः ॥ **प्रयत्नवैयर्थ्यमिति।** व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः ॥

( समाधानबाधकभाष्यम् )

**ननु च ये कृतप्रयत्नास्ते साधीयः शब्दान्प्रयोक्ष्यन्ते, [7]अत एव साधीयोऽभ्युदयेन [8]योक्ष्यन्ते ॥**

**( उद्द्योतः )** साधीय इति। क्रियाविशेषणम्। शास्त्रसंस्कारवतां प्रभूतशब्दप्रयोगजन्यबहुपूर्वद्वारा बहुतराभ्युदययुक्तत्वमित्यर्थः ॥

( समाधानसाधकभाष्यम् )

**[9]व्यतिरेकोऽपि वै लक्ष्यते। दृश्यन्ते हि कृतप्रयत्नाश्चाप्रवीणाः, अकृतप्रयत्नाश्च प्रवीणाः। तत्र [10]फलव्यतिरेकोऽपि स्यात् ॥**

**( प्रदीपः ) व्यतिरेक इति।** परिहासः ॥

**( उद्द्योतः )** भाष्ये—तत्र **फलव्यतिरेक इति। कौशल**व्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाध्ययनं व्यर्थमेव स्यादिति भावः ॥

( पक्षद्वयनिराकरणोपसंहारवार्तिकावतरणभाष्यम् )

**[11]एवं तर्हि—नापि ज्ञान एव धर्मः, नापि प्रयोग एव ॥**

**किं[12] तर्हि?**

( ९ ध्वनिः शब्दपक्षे सिद्धान्तवार्तिकम् ॥ ४ ॥ )

॥ ※ ॥ [13]शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ॥ ※ ॥

( भाष्यम् )

**[14]शास्त्रपूर्वकं यः शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन**

---

१ **'प्रयोगे सर्वलोकस्य'** इति वार्तिके 'धर्म इति चेत्' इत्यस्यानुषङ्गः। 'धर्मः स्यात्' इति शेषः ॥ छाया ॥

२ **सर्वो लोक इति।** अयं भावः—'सम्यग्ज्ञातः' इति नान्तरीयकज्ञानानुवादः। शास्त्रान्वित इत्यस्य च न शास्त्रज्ञानपूर्वक इत्यर्थः। किंतु शास्त्रव्युत्पादितरूपमनतिक्रान्त इति। एवं च शास्त्रकरणकृतश्रमोऽकृतश्रमोऽनधीतव्याकरणः सर्वोऽपि प्रयोगमात्राद्धर्मेण युज्येतेति ॥ छाया ॥

३ ननु प्रमाणबलप्राप्ते किमस्माभिः कर्तुं शक्यम्। नहि परीक्षकाणाम्प्रामाणिकार्थत्यागात् किंचिदनिष्टमित्याक्षिपति—**कश्चेदानीमिति** ॥ छाया ॥

४ उत्तरयति—**न खल्विति** ॥ छाया ॥

५ **प्रयत्नानेति।** वैयाकरणावैयाकरणकृतप्रयोगयोः समानफलकत्वे व्याकरणाध्ययनप्रयत्नानर्थक्यं स्यात्, अतः प्रयत्नस्यापि किञ्चित् फलमेषितव्यमित्यर्थकं 'फलवता च नाम यत्नेन' इत्युक्तम्। ननु 'एकः शब्दः सम्यक्–' इति श्रुत्या प्रयोगस्यैव फलवत्तोच्यते, न प्रयत्नस्य फलसम्बन्धसम्भावनाऽपि कल्पयितुं शक्येत्यत आह—**न च प्रयत्न इति।** व्यतिरेच्य इति 'रिच-वियोजने' कर्मणि ण्यत्, तथा च त्वया फलावधिकं प्रयत्नस्य वियोजनं न कार्यमित्यर्थः सम्पद्यते। फलप्रयत्नयोश्च सम्बन्धः श्रुत्या नोक्तो नापि लोके प्रसिद्ध इति तयोर्वियोजनं सिद्धमेवेति पुनः प्रतिपादनात्फलपदं फलवति लाक्षणिकम्। तथाच फलवदवधिकं=प्रयोगावधिकं प्रयत्नस्य वियोजनं न कार्यमित्यर्थः। तदेतत् भाष्याक्षरानुगुणमेव 'फलवद्वृत्त्यभावप्रतियोगी न कार्यः' इति व्याख्यातमुद्द्योते। प्रयोगस्य फलवत्वं श्रुत्या प्रतिपाद्यते, तत्र च व्याकरणाध्ययनप्रयत्नविशिष्टः प्रयोग एव फलवान् भवतीति भाष्याभिप्रायः। एवञ्च पूर्वोत्तरवाक्ययोः पृथगर्थत्वात्पुनरुक्तिर्नेत्यवधेयम् ॥

६ 'प्रयत्नस्य वैय–' इति ख. पाठः।

७ 'त एव' इत्येव प. पाठः ॥

८ 'भ्युदयफलत्वं' इति पाठो मुद्रितपुस्तकेषु दृश्यते।

९ तथाहि—केचिदप्रतिभयाः सत्त्वं निश्चेतुं न शक्ताः, निश्चितेऽपि सत्त्वे केचिद्व्यवहारप्रत्युत्पन्नमतित्वाभावान्न प्रयोगप्रौढाः। अनधीतव्याकरणा अप्यन्ये परप्रत्ययावगतशब्दाः प्रयोगकुशला भवन्ति। तथाच मुग्धवैयाकरणापेक्षया प्रौढोऽवैयाकरणः साधुशब्दान्प्रयुङ्क्ते इति भावः ॥ छाया ॥

१० 'फलव्यतिरेकोऽपि' इति भाष्यस्थ'अपि'शब्दबललभ्यमर्थमाह—**कौशलेति ॥**

११ एवं पक्षद्वये दोष उक्ते सिद्धान्तवार्तिकमवतारयति—**एवं तर्हीति ॥ नापीति।** नैवेत्यर्थः। तस्यैव समुच्चायको वा ॥ **सर्वं** वाक्यमितिन्यायेन प्रकृते तथेष्टमित्याह—**ज्ञान एवेति ॥** एवमग्रेऽपि ॥ छाया ॥

१२ **किं तर्हीति।** तर्हि कः सिद्धान्त इत्यर्थः **शास्त्रान्वित** इत्यस्यावलम्बेन ॥ छाया ॥

१३ तत्राह—**शास्त्रेति। एकः शब्द** इत्यादिश्रुतिप्रामाण्यादित्यर्थः ॥ तत्र **सम्यग्ज्ञातः**—सम्यक्त्वेन साधुत्वेन ज्ञातः, **शास्त्रान्वितः**—शास्त्रव्युत्पादनमार्गेणानुसंहितः, **सुप्रयुक्तः**—शिक्षोक्तरीत्या प्रयुक्त इत्यर्थो बोध्यः ॥ वेदेऽपि शास्त्रतो ज्ञानपूर्वकानुष्ठाने फलातिशयव्यवहारात् तच्छायानुकारिण्या अस्या अपि स्मृतेरेवं व्याख्यैव युक्तेत्याह—**तत्तुल्यमिति ॥ तदिति।** प्रयोगरूपमित्यर्थः ॥ छाया ॥

१४ वार्तिकं व्याचष्टे—**शास्त्रेत्यादि ॥** ननु ज्ञानपूर्वकानुष्ठितेनाग्निष्टोमादिना फलं भवतीत्यत्रैव किं मानमिति चेत्, वेद एवेत्याशयेनाह—**वेदशब्दा अप्येवमिति।** षष्ठीतत्पुरुषः कर्मधारयो वा। **अपिरेवार्थे ॥ एवमिति।** यथा मयोक्तं तथेत्यर्थः ॥ छाया ॥

युज्यते। 'तत्तुल्यं वेदशब्देन'। वेदशब्दा अप्येवमभिवदन्ति-"योऽग्निष्टोमेन यजते य उ चैनमेवं वेद", "योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद" ॥

( प्रदीपः ) **तत्तुल्यमिति**। वेदः शब्दो यस्यार्थस्य सः-वेदशब्दः, तस्य यथा ज्ञात्वाऽनुष्ठानं तथा शब्दानामपि प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः ॥

( उद्योतः ) **शास्त्रपूर्वके इति**। १व्याकरणाध्ययनपूर्वके इत्यर्थः ॥ तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति **प्रामाणिकाः ॥ वेदः शब्द इति**। बोधक इत्यर्थः। प्रमाणमित्यर्थो वा ॥ **तस्य यथेति**। तस्य यथा **'य उ चैनमेवं वेद'** इति ग्रन्थेन वेदतो ज्ञात्वाऽनुष्ठानं फलायोक्तम्, तथाऽस्यापि शास्त्रज्ञानपूर्वकप्रयोगः फलायेति **'एकः शब्दः'** इत्यादिनोक्तमित्यर्थः ॥

( व्याख्यान्तरभाष्यम् )

अपर आह—

**तत्तुल्यं वेदशब्देन–इति।**

यथा-वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्ति, एवं यः शास्त्रपूर्वकं शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति ॥

( प्रदीपः ) **अपर आहेति**। वेदश्चासौ शब्दश्च-वेदशब्द इति कर्मधारयः ॥

( सिद्धान्तभाष्यम् )

अथ वा पुनरस्तु—

**ज्ञान एव धर्म इति ॥**

---

१ शास्त्रान्तरनिरासायाह—**व्याकरणाध्ययनेति**। अयमाशयः—द्वयोरन्यतरस्योक्तरीत्या तादर्थ्ये सति संदेहज्ञानस्य ज्ञेयसंस्कारकत्वेनापि निराकाङ्क्षस्य साध्यान्तराभावेनेतिकर्तव्यताकाङ्क्षाविरहः। प्रयोगस्तु **"सुप्रयुक्तः स्वर्गे लोके"** इत्यादिवाक्येन फलार्थतयाऽवगतः प्रयोज्यकर्मीभूतशब्दसंस्कारमपेक्षमाणस्तत्र समभिव्याहृतेन **'सम्यग्ज्ञातः'** इत्यनेन तदङ्गतया ज्ञानस्य विनियोगे सति तस्य चान्यथाप्युपपत्तौ प्रागुक्तदोषापातात् **शास्त्रान्वित** इति विशेषणसामर्थ्याच्छास्त्रानुगतज्ञानस्य विनियोगे तादृशप्रयोगाद्धर्मो भवतीति न कोऽपि दोष इति ॥ **तस्येति**। अग्निष्टोमादेरित्यर्थः ॥ **फलायोक्तमिति**। फलायेत्युक्तमित्यर्थः ॥ **तथाऽस्यापि**-सुशब्दस्यापि ॥ ननु **'य उ चैनम्'** इत्यत्रैव चकारादुभयोः फलसंबन्धो युक्त इति प्रकृतेऽपि तथैवास्तु। किं च **'तरति शोकमात्मवित्'** इत्यात्मज्ञानविनियुक्ततया शब्दज्ञानस्यैव फलसाधनताया युक्तत्वमिति चेत्, न। तस्य समुच्चयार्थकत्वेऽपि गुणप्रधानभावपूर्वकसुवचतेत्याशयेन पक्षान्तरत्वात् ॥ ज्ञानेन चानुष्ठानस्य प्रत्यक्षमुपकारदर्शनात्। ज्ञानस्य च **'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति'** इति श्रुत्या सामर्थ्येन च पारार्थ्यावगमात्। ज्ञानेनैव सिद्धेऽर्थे बह्वायाससाध्यानुष्ठानवैयर्थ्यापत्तेः ॥ अत्यन्ताशेषभूते तु ज्ञाने स्वतन्त्रफलसाधनता, यथाऽऽत्मज्ञानस्य शोकतरणोपलक्षितात्मस्वरूपं प्रति। तदुक्तम्—

"सर्वत्रैव हि विज्ञानं संस्कारित्वेन गम्यते।
पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥" इति ॥ छाया ॥

२ **वेदशब्दे**नेत्यत्र वेदशब्दतुल्यत्वस्यैव प्रतीतेरर्थतुल्यत्वपरत्वे लक्षणापत्तेर्बहुव्रीह्यङ्गीकारे पुरःस्फूर्तिकार्थत्यागः प्रतिपत्तिगौरवं चेत्यस्वरसादाह—**अपर आहेति**। अस्य व्याख्या प्राग्वत् ॥ **वेदा नियमेति**। **"आहूतश्चाप्यधीयीत—"** इत्यादि धर्मशास्त्रोक्तनियमपूर्वकमधीताः सन्तः फलवन्तो ज्योतिष्टोमादिकर्मानुष्ठानाङ्गविशिष्टबोधेन फलवन्तो भवन्तीत्यर्थः॥ **एवमिति**। अर्थबोधनाय प्रयुक्ताः पचति देवदत्त इत्यादयो लौकिकशब्दा व्याकरणानुगतप्रकृत्यादिविभागधर्मवत्तया तस्मादेव विदिताः सन्तः पुरुषैरुच्चारितास्तद्गतनियमपूर्वकहेतुकाभ्युदयेन फलवन्तो भवन्तीत्यर्थः ॥ **शास्त्रेति**। क्रियाविशेषणम् ॥ एवं प्रागपि ॥ छाया ॥

३ एवं विशिष्टपक्षादरेण समाधौ विनिगमनाविरहाज्ज्ञानस्यान्याविशिष्टस्य तद्धेतुत्वमाश्रित्यापि समाधिः सुवच इत्याशयेन पक्षान्तरमाह—**अथवा पुनरिति ॥ एवेनान्यप्राधान्यव्यावृत्तिः**। अप्यर्थो वा सः ॥ **शब्देति**। शब्द एव प्रमाणं येषामित्यर्थः। फलसाधनशक्तेरप्रत्यक्षत्वात्। संगतेरग्रहादनुमानाद्यपि न ॥ यद्यपि शब्दोऽपि संबन्धग्रहसापेक्षः, तथापि **स्वर्गकामो यजेते**ति वाक्यं गृहीतसंबन्धपदार्थं बोधयन्संसर्गमलौकिकमप्याकाङ्क्षादिमहिम्ना बोधयति। मन्वादीनां धर्मसाक्षात्कारोऽपि यथाशास्त्रमेव। अस्माकं तु नित्यपरोक्ष इति यावत् ॥ तदाह—**यच्छब्द इत्यादि ॥** अविहितानिषिद्धव्यवहारे दोषगुणौ नेत्यत्र दृष्टान्तमाह—**तद्यथेति ॥ नाभ्युदयायेति।** नाप्यभ्युदयायेत्यर्थः ॥ एवं प्रागपि ॥ छाया ॥

४ 'ज्ञान एव' इत्येव 'धर्म इति'इत्यंशरहितः प. पाठः ॥ **ज्ञान एव धर्म इति**। एतच्चाभ्युपेत्यवादमात्रं पूर्वोक्तदोषपरिहारसामर्थ्यप्रदर्शनार्थं कृत्वाचिन्तान्यायेनोक्तम्। परमार्थतस्तु—आनर्थक्यप्रसङ्गविज्ञातपारार्थ्यापादितार्थवादत्वात्फलश्रुतिर्न फलप्रतिपत्तिक्षमा विज्ञायते। यथा योऽश्वमेधेन यजते य उ चैनमेवं वेदेति ज्ञानमात्रादेव ब्रह्महत्यातरणं यदि सिद्ध्येत्को जातुचिद्बहुद्रव्यव्ययायाससाध्यमश्वमेधं कुर्यात्! तद्विधानञ्चानर्थकं स्यात्। एवं शब्दज्ञानाच्चेद्धर्मः सिद्ध्येत्कोनामानेकतात्वादिव्यापारायासखेदमनुभवेत्। तस्मात्क्रतुवदेव ज्ञानपूर्वप्रयोगस्यैव फलम्। कारणे कार्यवदुपचारात् 'देवो वर्षति तण्डुलान्' इत्यत्र तण्डुले देववर्षणवत् ज्ञाने धर्मवचनमापादितार्थपरिहाराभिधानशक्तिमात्रप्रदर्शनार्थमेवोपन्यस्तम्, न फलवत्त्वप्रतिपादनाय। द्रव्यसंस्कारकर्मसु परार्थत्वात्—इति न्यायेन ज्ञानस्य पुरुषशब्दसंस्कारत्वेन निराकाङ्क्षस्य फलसम्बन्धासम्भवादिति प्रथमस्य तृतीये पादे मीमांसावासनावासितान्तःकरणानान्तत्रवार्तिककाराणां मतं व्याकरणसिद्धान्ताननुगतमिति भाष्याभिप्रायावगतये नालम्। वस्तुतस्तु ज्ञाने धर्म इत्येव सिद्धान्तः। तथा हि भाष्ये शब्दस्वरूपविवरणावसरे 'येनोच्चारितेन सास्ना' इति 'अथवा प्रतीतपदार्थको लोके ध्वनिः' इति द्विधाशब्दस्वरूपमुक्तम्। तदनुसारेण ध्वनिरूपशब्दमाश्रित्य शास्त्रपूर्वके प्रयोगेऽभ्युदय इति समाहितम्। स्फोटः शब्द इति सिद्धान्ते च ज्ञाने एव धर्म इति। स च स्फोटो नित्यः श्रुतिप्रतिपाद्यो ब्रह्मशब्दापरपर्यायः। स्फोटज्ञानञ्च ब्रह्मज्ञानवन्मुख्यत्वात्पराङ्गं न भवतीति 'सर्वत्रैवहि विज्ञानं' इति न्यायविरोधो न। संस्काररूपत्वाभावाच्च 'द्रव्यसंस्कारकर्मसु परार्थत्वात्' इति सूत्रविरोधोऽपि न। शब्दविवरणावसरेऽभ्यर्हितत्वात्स्फोटसिद्धान्तं पूर्वमुपपाद्य स्फोटाभिव्यक्त्युपायभूतं ध्वनिपक्षं सकललोकसाधारण्येन पश्चादुपन्यस्यति। अत्र तु प्रयोगपूर्वके ज्ञाने धर्म इति सिद्धान्तपक्षे विशेषणांशं प्रयोगपक्षं पूर्वोपस्थितमुपपाद्य सिद्धान्तः समर्थित इति न काऽप्यनुपपत्तिः। एवञ्च शब्दज्ञान एव धर्म इत्येव व्याकरणसिद्धान्तः ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्[१]-*ज्ञाने धर्म इति चेत्तथाऽधर्मः* इति॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः, शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम्॥ यच्च पुनरशिष्टाप्रतिषिद्धम्, नैव तद्दोषाय भवति, नाभ्युदयाय। तद्यथा—हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति, नाभ्युदयाय॥**

( उद्द्योतः ) भाष्ये—**प्रमाणमिति**। प्रामाणिकमित्यर्थः॥ **शब्दश्च शब्दज्ञाने इति**। 'एकः शब्दः सम्यक् ज्ञातः' इत्यादिः॥ **'हेलयो हेलयः'** इत्यादि तु अपशब्दप्रयोगेऽधर्ममाह, न तु ज्ञाने इति भावः॥ यद्यपि तत्र **'प्रयुक्तः'** इत्यप्युक्तं, तथाप्यवैयाकरणस्य सम्यक्प्रयोगादपि धर्माभावेन ज्ञानमेव तद्धेतुः। प्रयोगस्तु तस्य द्वारमिति भावः॥

( समाधानान्तरभाष्यम् )

**अथवा[२]ऽभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने। यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति। तदेवं 'ज्ञाने धर्मः' इति ब्रुवतोऽर्थादापन्नं भवति—'अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्मः' इति॥**

( प्रदीपः ) **अथवेति**। अपशब्दज्ञाननान्तरीयकत्वाच्छब्दज्ञानस्य पृथक्फलमपशब्दज्ञानस्य नास्तीत्यर्थः॥

( उद्द्योतः ) भाष्ये—**अभ्युपाय एवेति**। [३]अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति शब्दज्ञानेन फले जननीये सहकारितैवापशब्दज्ञानस्य, न पृथक्फलतेति भावः॥ **अपशब्दज्ञानम्**—अपशब्दत्वेन तज्ज्ञानम्॥ एवं 'शब्दज्ञाने' इत्यपि॥ अपशब्दत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानं भवति॥ **'यो हि'** इति भाष्यस्य य एव अपशब्दान् जानाति असावेव शब्दान् जानातीति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म इति न ततो विपरीतफलकल्पना युक्तेति भावः॥ तदाह—**अपशब्दज्ञाननान्तरीयकत्वादिति**। बहुव्रीहिः। न हि वह्न्यानयननान्तरीयकं पात्रानयनं ततः पृथक्फलं भवति॥

( समाधानान्तरे न्यायदर्शकभाष्यम् )

**अथवा[४] कूपखानकवदेतद्[५]भविष्यति। तद्यथा—कूपखानकः कूपं खनन्यद्यपि मृदा पांशुभि[६]श्चावकीर्णो भवति सोऽप्सु संजातासु तत एव तं गुणमासादयति, येन स च दोषो निर्हण्यते भूयसा चाभ्युदयेन योगो भवति॥ एवमिहापि यद्य[७]पशब्दज्ञानेऽधर्मः, तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन स च दोषो निर्घानिष्यते[८], भूयसा चाभ्युदयेन योगो भविष्यति॥**

( प्रदीपः ) **दोष इति**। उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः॥

---

१ ननु **'तेऽसुरा हेलयः'** इत्यादिना तदप्युक्तमत आह—**हेऽलय इति॥ इत्यप्युक्तमिति**। एवं चोभयोः स्वर्गसाधनत्वं वचनेनैव बोध्यते इति **'शब्दश्च ज्ञाने धर्ममाह'** इत्युक्तमिति भावः॥ **धर्मेति**। स्वर्गसंपादकेत्यादिः॥ छाया॥

२ ननु शास्त्रविहितामिक्षाव्यापारनान्तरीयकतयोत्पन्नवाजिनस्य कार्यविशेषे **'वाजिभ्यो वाजिनम्'** इति शास्त्रेण विनियोगदर्शनादत्रापि शब्दज्ञाननान्तरीयकतयोत्पन्नस्यापशब्दज्ञानस्य साक्षाद्विनियोजकप्रमाणाभावेऽपि तस्य कल्पना स्यादत आह—**अथवेति**। उपसंहरति—**तदेवमिति। आपन्नं**—प्राप्तम्॥ छाया॥

३ यद्यपि द्वयोरेकशास्त्रविहितव्यापारजत्वम्, तथाप्येकस्य श्रुत्या साक्षात्फले विनियोगकल्पनापेक्षया फलवदङ्गत्वविनियोगकत्वमेव कल्पयितुं युक्तं **'फलवत्संनिधौ—'** इति न्यायात्। तत्र तु तथा शास्त्रमस्तीति वैषम्यमिति भावमभिप्रेत्याह—**अपशब्देति**। बहुव्रीहिः॥ गाव्याद्यपशब्दस्य यथाकथंचिद्ज्ञानस्य त्वनभ्युपायत्वादाह—**अपशब्दत्वेनेति॥ तज्ज्ञानमिति**। अपशब्दज्ञानमित्यर्थः॥ उक्तहेतोरेवाह—**एवमिति॥** तदुपपादयति—**अपेति॥** नन्वेवं भाष्यविरोधोऽत आह—**यो हीतीति**। इत्यादिभाष्यस्येत्यर्थः। भाव इत्यत्रान्वयः॥ हिरपिश्चार्थे इत्याह—**य एवेत्यादि॥ तज्ज्ञानेति**। अपशब्देत्यर्थः॥ **ततः**—अपशब्दज्ञानात्॥ तत्पुरुषव्यावृत्तय आह—**बह्वीति॥ वह्न्यानयनेति**। तत्पुरुषः। **ततः**—अश्यानयनात्॥ छाया॥

४ **अथवेति**। नैतत्समाध्यन्तरं, पूर्वोक्तसमाधावेव न्यायप्रदर्शनमेतत्। अत एव 'समाध्यन्तरं' इत्युद्द्योतः **'समाधिविशेषमित्यर्थः'** इति व्याख्यातश्छायायाम्॥

५ **एतत्**—अपशब्दज्ञानरूपं वस्तु कूपखानकेन तुल्यं भविष्यतीत्यर्थः॥ **अवकीर्णो** मिलितः॥ **तत एव**—अद्भ्य एव। **तं गुणं**—स्नानपानादिरूपेष्टसाधनातिशयमित्यर्थः॥ **येनेति**। कर्तरि तृतीया॥ कर्मणि लः॥ चशब्दौ मिथः समुच्चायकौ॥ **इहापि**—शब्दज्ञानस्थलेऽपि॥ **यदि**—यद्यपि॥ छाया॥

६ 'पांशुभिः' इति च. क. पाठः॥

७ 'यद्यप्यपशब्द' इति क. ख. पाठः।

८ **'निर्घेति णिजन्तरूपम्'** इति छाया॥ प. पुस्तके 'निर्घातिष्यते' इति पाठः॥ अत्र 'येन स च दोषो निर्हण्यते' इत्यादिकर्मप्रत्ययान्तघटितपूर्ववाक्यानुरोधेन 'निर्घानिष्यते' इति कर्मणि लृडन्तपाठ एवानुकूलः प्रतिभाति। निर्घातिष्यत इति पाठे स्वार्थणिच्कल्पनं, प्रक्रमभङ्गः, 'दोषः' इति कर्मणि प्रथमाया अनुपपत्तिश्च॥

**( उद्द्योतः )** **'तुष्यतु दुर्जनः'** इति न्यायेनापशब्दज्ञानस्य विपरीततत्वमात्रेणाधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाध्यन्तरमाह— **अथवा कूपेति** । **मृत**–आर्द्रा । **पांसुः**–शुष्का । यत्कर्मनान्तरीयककर्मजन्यो यो विपरीततत्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्मजन्यफलनाश्यः, यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य इति सामान्यतो दृष्टानुमानात्तन्नाशानुमानमिति बोध्यम् ॥ **उत्कृष्टधर्मेति** । धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम् । अधर्मस्य तु वचनाबोध्यत्वेन विपरीततत्वमात्रेण कल्प्यस्याल्पत्वेन तत्फलधर्मनाश्यत्वम् ॥ यागीयहिंसायाः **'न हिंस्यात्'** इतिवचनेन दुष्टताबोधनाद्दुष्टत्वमेवेत्यन्यत्र विस्तरः ॥

( द्वितीयदूषणनिरासभाष्यम् )

**यदप्युच्यते—*आचारे नियमः* इति ।**

**याज्ञे कर्मणि स नियमः, अन्यत्रानियमः । एवं हि श्रूयते—'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परापरज्ञा विदितवेदितव्या अधिगतयाथातथ्याः ।' ते तत्रभवन्तः 'यद्वा नः' 'तद्वा नः' इति प्रयोक्तव्ये 'यर्वाणः-तर्वाणः' इति प्रयुञ्जते, याज्ञे पुनः कर्मणि नापभाषन्ते ॥ तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितम्, ततस्ते पराभूताः ॥**

**( प्रदीपः ) प्रत्यक्षधर्माण इति ।** योगिप्रत्यक्षेण सर्वं विदितवन्तः ॥ **परापरज्ञाः**–विद्याऽविद्याप्रविभागज्ञाः ॥

**( उद्द्योतः )** भाष्ये–**अन्यत्रानियम इति ।** यज्ञे सुशब्दप्रयोगाद्धर्मः–अपशब्दप्रयोगादधर्म इति तत्रैव तयोः प्रयोगनियमः । तदतिरिक्तस्थले तु सुशब्दापशब्दयोः प्रयोगेऽनियमः । योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसंकल्पोहादिविषये एव । श्रुतौ **'हेलयो हेलयो नश्यध्वं'** इत्यूह एव ॥ **विदितवेदितव्याः**–इत्यनेन श्रवणमनननिदिध्यासनसंपदुक्ता ॥ **अधिगतयाथातथ्याः**–इत्यनेन साक्षात्कार उक्तः । याथातथ्यं **प्रयुञ्जते**–इति वर्तमानसमीपे भूते लट् । एवं **'नापभाषन्ते'** इत्यपि । अत एव तन्नामानो बभूवुरित्यर्थः । स्वार्थे ष्यञ् । वेदितव्यस्य यद्यथा तथा स्वरूपं शुद्धचिदानन्दरूपं तदधिगतं–प्रत्यक्षेण प्राप्तं यैरित्यर्थः ॥ **याज्ञे पुनरिति ।** अनेन तत्त्वज्ञानामपि कर्माधिकारं सूचयति ॥

इति शब्दज्ञानस्य धर्मजनकताधिकरणम् ।

( अथ व्याकरणाधिकरणम् )

( व्याकरणपदार्थोपन्यासभाष्यम् )

**अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः ? सूत्रम् ॥**

**( प्रदीपः ) अथेति ।** उक्तमिदं–**न चान्तरेण व्याकरणं**–इत्यादि । तत्र पक्षद्वयेऽपि दोषदर्शनात् पदार्थप्रश्नः ॥

**( उद्द्योतः )** व्याकरणपदार्थविचारस्य सङ्गतिं दर्शयितुमाह— **उक्तमिदमिति** । आदिना **'तस्मादध्येयं व्याकरणं'** इत्यादि पुनः पुनरुक्तिर्गृह्यते ॥

---

१ **नापशब्दज्ञानस्येति ।** तन्नान्तरीयकेत्यादिः ॥ **समाध्यन्तरमिति ।** समाधिविशेषमित्यर्थः । यथाश्रुतेऽनुपपत्तिः स्पष्टैव ॥ **कूपेतीति ।** कूपस्य खानक इत्यनित्यसमासत्वात्स्वपदविग्रहः ॥ खननकर्तृत्वमात्रमिह विवक्षितं, नतु शिल्पित्वम् । तेन स्वरूपेणापि शिल्पिनि **'शिल्पिनि ष्वुन्'** इति ष्वुना ण्वुलो न बाधः । अत्र कर्मण्यण् तु न, **'वासरूपः'** इत्युक्तेः ॥ तृतीयासमर्थाद्वतिः ॥ **शुष्केति ।** ब्राह्मणवसिष्ठन्यायेन निर्देश इति भावः ॥ छाया ॥

२ यत्तु—'इदमयुक्तम्, शब्दज्ञानस्य धर्मसाधनत्ववदधर्मघातने मानाभावात् । विषमश्च दृष्टान्तः, खननजातेन जलेन रजोनिर्हणनद्वारा पूर्वस्थितनैर्मल्यलक्षणगुणप्राप्तेरन्वयव्यतिरेकसिद्धत्वात् । प्रयुक्तशब्दज्ञानजनितपूर्वहेतुकाभ्युदयमात्रस्य शास्त्रसिद्धत्वात्' इति कृष्णः । तदयुक्तमिति ध्वनयन्नाह—**यत्कर्मेति** ॥ छाया ॥

३ अधर्मभूयस्त्वस्यैव प्रागुक्तत्वेन तदल्पत्वोक्तिरयुक्तेत्यत आह— **धर्मस्येति** ॥ छाया ॥

४ **तत्फलेति ।** शब्दज्ञानफलो यो धर्मस्तेन नाश्यत्वम् ॥

५ 'यदप्युच्यते' इत्यतः पूर्वं स्वकपोलकल्पनाकलितानि वार्तिकानि राजलक्ष्मीटिप्पणकारैः कल्प्यन्ते, व्याख्याभाष्यबलादनुमीयन्त इति चोच्यते । तदेतत्साहसमात्रम्, स्वकल्पनातिरिक्तप्रमाणानुपलम्भात्, असद्धेतुकानुमानस्याप्रमाणत्वाच्च ॥

६ 'अन्यत्रानियमः' इत्यस्य प. पुस्तके न पाठः ॥

७ यद्यपि **'ब्राह्मणेन न म्लेच्छितवै'** इति निषेधवाक्ये ब्राह्मणमात्रसंयोगः श्रुतः, तथापि यज्ञसंबद्धब्राह्मणसंस्कारत्वे मानमाह– **एवं हीति** ॥ छाया ॥

८ यद्वा–यद्वस्तु तद्वा–तद्वस्तु वर्ततां नोऽस्माकं किम्–इत्यर्थप्रतिपिपादयिषया 'यद्वा नस्तद्वा न' इति वाच्ये 'यर्वाणस्तर्वाण' इति प्रयुक्तवन्तस्ततस्तन्नामका एव च ऋषयः संपन्ना इत्यर्थः ॥ छाया ॥

९ 'योगजप्रत्य' इति मुद्रितपाठः, 'योगिप्रत्यक्षे सर्वं' इति क-पाठः ॥

१० **यज्ञ इति** । **'एकः शब्दः'** इति शब्दमात्रसंयोगात्पुरुषार्थोऽयं विधिः । **'न म्लेच्छितवै'** **'आहिताग्निः–'** इति निषेधप्रायश्चित्तयोस्तु ज्योतिष्टोमप्रकरणात्क्रत्वर्थश्रुत्योः पुरुषार्थमूलता संभवति यद्विरोधो ज्ञानधर्मपक्षस्य स्यात् इति भावः ॥ इति छाया ॥

११ 'याथातथ्ये स्वार्थे ष्यञ् । वेदितव्यस्य यद्यथातथास्वरूपं शुद्धचिदानन्दरूपं तदधिगतं–प्रत्यक्षेण प्राप्तं यैरित्यर्थः । **याज्ञे पुनरिति ।** अनेन तत्वज्ञानामपि कर्माधिकारं सूचयति । प्रयुञ्जते–इति वर्तमानसमीपे भूते लट् । एवं नापभाषन्त इत्यपि । अत एव तन्नामानो बभूवुरित्यर्थः' इति व्यत्यस्तो मुद्रितपाठः ।

१२ 'यद्यथा तथा स्वरूपं-समं स्वरूपं' इति घ. पाठः । 'यथा तथा स्वरूपं सत्यं स्वरूपं' इति मुद्रितपाठः ॥

१३ वर्णोपदेशस्य शास्त्रोपोद्घातत्वसिद्धये व्याकरणपदार्थ एव वार्तिकक्ता निरूपितः । तत्र निरूपणपूर्वपक्षः सूत्रशब्दयोर्व्याकरणपदस्य शिष्टप्रयोगप्रसिद्धिमन्तरेण न संगच्छत इत्यत आह—**उक्तमिति** ॥

( १० आक्षेपवार्तिकम् ॥ १ ॥ )

॥*॥ सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः ॥*॥

( भाष्यम् )

**सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते—'व्याकरणस्य सूत्रम्' इति ॥ किं हि तदन्यत्सूत्रात् व्याकरणं यस्यादः सूत्रं स्यात् ?**

( प्रदीपः ) **षष्ठ्यर्थ इति** । द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद्व्यतिरेकाभावः । सामान्यविशेषशब्दतया तु द्वयोः प्रयोगो न विरुध्यते । यदा त्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते, तदा षष्ठ्यर्थोऽप्युपपद्यते ॥

( उद्योतः ) ननु सूत्रसमुदायस्य व्याकरणस्येदं सूत्रमित्युपपद्यतेऽत आह—**द्वाभ्यामिति** । सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यतेऽयं प्रयोगः, स न सिध्येदित्यर्थः ॥ ननु किमुच्यते—'षष्ठ्यर्थोऽनुपपन्नः'इति, पर्यायतया सहप्रयोगोऽपि न स्यादत आह—**सामान्यविशेषेति** । सूत्रं सामान्यं, व्याकरणं विशेषः । सूत्रशब्देनाष्टाध्याय्येव, तदेकदेशे तु योगव्यवहार एव **'योगे योगे उपतिष्ठते'** इत्यादौ ॥ **यदा त्विति** । **'सूत्राणि चाप्यधीयाने'** इति भाष्ये वक्ष्यमाणत्वादिति भावः । वस्तुत एकदेशस्य सूत्रत्वेऽपि तस्यापि साक्षात्परम्परया वा व्याकरणत्वात्षष्ठ्यर्थानुपपत्तिरेवेति तत्त्वम् ॥

( ११ आक्षेपान्तरवार्तिकम् ॥ २ ॥ )

॥ * ॥ शब्दाप्रतिपत्तिः ॥ * ॥

( भाष्यम् )

**शब्दानां चाप्रतिपत्तिः प्राप्नोति—'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति । न हि सूत्रत एव शब्दान्प्रतिपद्यन्ते ।**

**किं तर्हि ?**

**व्याख्यानतश्च ॥**

( प्रदीपः ) **शब्दाप्रतिपत्तिरिति** । न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते ॥

( उद्योतः ) समुदायस्यातिरिक्तत्वेऽपि दोषमाह—भाष्ये—**शब्दाप्रतिपत्तिरिति** । व्याकरणाच्छब्दान्प्रतिपद्यामह इति शब्दविषयव्यवहारासिद्धिः प्राप्नोतीत्यर्थः । यतः केवलसूत्रेभ्यः शब्दप्रतिपत्तिर्न दृश्यते । व्याकरणस्य शब्दप्रतिपत्तिहेतुत्वं च लोकसिद्धम्, व्याकरणाच्छब्दान्प्रतिपद्यामह इति व्यवहारात् । सेयं प्रतिपत्तिसाधनता सूत्राद्व्यावर्तमाना तद्व्याप्यां व्याकरणशब्दवाच्यतां व्यावर्तयतीति भावः । तदाह—**न हीति** ॥

( आक्षेपबाधकभाष्यम् )

**ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति ॥**

( आक्षेपसाधकभाष्यम् )

**न केवलं चर्चापदानि व्याख्यानम्-'वृद्धिः, आत्, ऐच्' इति ।**

**किं तर्हि ?**

**उदाहरणं-प्रत्युदाहरणं-वाक्याध्याहारः-इत्येतत्समुदितं व्याख्यानं भवति ॥**

( प्रदीपः ) **समुदितमिति** । समुदायादेवार्थावसायोत्पादादित्यर्थः ॥

( उद्योतः ) भाष्ये—**चर्चापदानि**—चर्च्यमानानि—विभज्यमानानीत्यर्थः ॥ **वाक्याध्याहार इति** । **वाक्य**घटकपदानां सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाऽ**ध्याहारः**—कल्पनमित्यर्थः । यद्वा **वाक्याध्याहार** इत्यनेन वार्तिकक्कृद्वाक्यानां सूत्रतात्पर्यविषयता वाक्यैकदेशन्यायेन सूचिता ॥

( पक्षान्तरोपस्थापकं भाष्यम् )

**एवं तर्हि शब्दः ।**

( उद्योतः ) **शब्द इति** । लक्ष्यमित्यर्थः । अत्र पक्षे षष्ठ्यर्थ उपपद्यते । शब्दाप्रतिपत्तिहेतुता तु तदवस्था ॥

---

१ **षष्ठ्यर्थ इति** । सूत्रव्याकरणयोर्भेदाभावेन भेदसम्बन्धबोधिका षष्ठी न स्यादितिभावः ॥

२ **सामान्येति** । सूत्रशब्दस्य व्याकरणसूत्रेषु प्रयोगवत् मीमांसादिसूत्रेष्वपि प्रयोगात्स सामान्यार्थस्य वाचकः, व्याकरणशब्दस्तु विशेषार्थस्येति सामान्यविशेषशब्दतेति भावः ॥

३ 'सहप्रयोगो' इति मुद्रितपाठः ॥

४ ननु सूत्रशब्दो न समुदायवाची किन्त्ववयवपर्याप्त एवेति पक्षस्तदाऽऽह—**यदा त्विति** ॥

५ 'व्याकरणस्य सूत्रं' इति प्रयोगासंभवं प्रदर्श्य लोकव्यवहारानुपपत्तिं प्रदर्शयति—**शब्दाप्रतीति** ॥

६ आदर्शपुस्तकेषु 'एवं तर्हि शब्दः' इति भाष्यव्याख्यानोद्द्योते 'शब्दाप्रतिपत्तिहेतुतातदवस्था' इत्यनन्तरमयं ग्रन्थो दृश्यते । खण्डशो विन्यासे पूर्वमुपन्यस्तः ॥

७ **वाक्यैकदेशेति** । यथा **"अनाम्नवतिनगरीणामुपसंख्यानम्"** इति वार्तिकस्य **'न पदान्ताट्टोरनाम्'** इति सूत्रस्थनिर्विभक्तिकेनानाम्पदेन शेषपूर्तित्वसूचनमिति भावः ॥ इति **दाधिमथाः** ॥

८ **यक्षानुरूपो बलिरिति** न्यायेनैकदेशी व्याक्रियत इति कर्मव्युत्पत्त्या शब्दो व्याकरणमित्याह—**एवं तर्हीति** ॥ छाया ॥

९ **लक्ष्यमिति** । अष्टाध्याय्या इति शेषः । तथा चानया प्रतिपाद्यः शब्दो व्याकरणपदवाच्य इत्यर्थो बोध्यः । एवं च नातिप्रसङ्ग इति भावः ॥ सूत्रं त्वत्र पक्षे तत्संबन्धादुपचारादुच्यते ॥ छाया ॥

१० अत्र पक्षे प्रागुक्तदोषद्वयोद्धार इति भ्रमनिरासायाह—**अत्रेति** ॥ **शब्दाप्रेति** । 'व्याकरणाच्छब्दान् प्रतिपद्यामहे' इति शब्दविषयकव्यवहारासिद्धिहेतुतेत्यर्थः । शब्देन शब्दप्रतीतेरसंभवादिति भावः ॥ छाया ॥

११ **शब्दाप्रतिपत्तिहेतुतेति** । व्याकरणपदार्थः शब्दः स च सूत्रस्य लक्ष्यम् । एवञ्च लक्ष्यलक्षणभावरूपसम्बन्धे षष्ठ्यपि साधुरिति 'व्याकरणस्य सूत्रं' इति प्रयोग उपपद्यते । सर्वस्यापि साधुशब्दमात्रस्य व्याकरणपदार्थत्वेन 'व्याकरणाच्छब्दान् प्रतिपद्यामहे' इति व्यवहारासंभवः, व्याकरणातिरिक्तस्य प्रतिपत्तिविषयशब्दस्याभावात् । एतेन 'सुध्युपास्य इत्यादिलक्ष्यैर्मध्युपास्य इत्यादीनां प्रतिपत्तिः संभवतीति शब्दाप्रतिपत्तिहेतुता तदवस्थेत्युद्योतश्चिन्त्यः' इति गुरुप्रसादोक्तिः प्रामादिकी । सुध्युपास्य इतिवन्मध्युपास्य इत्यस्यापि व्याकरणत्वेन तदन्यस्य व्याकरणपदावाच्यस्य शब्दस्य प्रतिपत्त्यसंभवात् ॥

( १२ शब्दो व्याकरणमिति पक्षे आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ शब्दे ल्युडर्थः ॥ * ॥

( भाष्यम् )

यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम् । न हि शब्देन किंचित् व्याक्रियते ।

केन तर्हि ?

सूत्रेण ॥

( प्रदीपः ) शब्द इति । करणे ल्युड्विधीयते । शब्दश्च व्याक्रियमाणत्वात्कर्म[1], न तु करणमिति भावः ॥

( उद्द्योतः ) ननु राजभोजना इतिवत् कर्मल्युटि[2] न दोषोऽत आह—करणे इति । कर्मणि स तु काचित्क इति भावः ॥

( १३ आक्षेपान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ भवे[3] च तद्धितः ॥ * ॥

( भाष्यम् )

भवे च तद्धितो नोपपद्यते—व्याकरणे भवो योगो वैयाकरणः-इति । नहि शब्दे भवो योगः ।

क तर्हि ?

सूत्रे ॥

( प्रदीपः ) भवे चेति । शब्देऽप्यन्वाख्यायकत्वेन[4] भवो योग इति चेत्, मीमांसकादियोग[5]स्यापि शब्दं प्रति विचारकत्वात् वैयाकरणत्वप्रसङ्गः ॥

( १४ आक्षेपान्तरवार्तिकम् ॥ ५ ॥ )

॥ * ॥ प्रोक्तादयश्च तद्धिताः ॥ * ॥

( भाष्यम् )

प्रोक्तादयश्च तद्धिता नोपपद्यन्ते । पाणिनिना प्रोक्तं पाणिनीयम्, आपिशलं, काशकृत्स्नमिति । न हि पाणिनिना शब्दाः प्रोक्ताः ।

किं तर्हि ?

सूत्रम् ॥

( वार्तिकप्रणयनाक्षेपभाष्यम् )

किमर्थमिदमुभयमुच्यते—* भवे-प्रोक्तादयश्च तद्धिताः* इति । न *प्रोक्तादयश्च तद्धिताः* इत्येव भवेऽपि तद्धितश्चोदितः स्यात् ?

( समाधानभाष्यम् )

पुरस्तादिदमाचार्येण दृष्टम्—*भवे च तद्धितः* इति, तत्पठितम् । तत उत्तरकालमिदं दृष्टम्-*प्रोक्तादयश्च तद्धिताः* इति, तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ॥

( प्रदीपः ) न चेदानीमिति । लक्षणप्रपञ्चाभ्यां मूलसूत्रवत् वार्तिकानामुपपत्त्या दोषाभावः ॥

( उद्द्योतः ) लक्षणप्रपञ्चाभ्यामिति । यथा[10]–कर्मधारयप्रकरणे, अलुक्प्रकरणे च । विजिगीषुकथायां हि अभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय । इह तु व्युत्पादनार्थत्वान्न दोषकृदिति भावः ॥ [11]पूर्वं सामान्ये उक्ते पश्चाद्विशेषकथनं प्रपञ्चार्थमिति युज्यते, अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये ॥

( प्रथमाक्षेपबाधकभाष्यम् )

अयं तावददोषः—यदुच्यते *शब्दे ल्युडर्थः* इति । नावश्यं करणाधिकरणयोरेव ल्युड्विधीयते ।

किं तर्हि ?

अन्येष्वपि कारकेषु—"कृत्यल्युटो बहुलम्" इति । तद्यथा-प्रस्कन्दनं प्रपतनमिति ॥

( प्रदीपः ) प्रस्कन्दनमिति । यद्यप्ययं भीमादिः, तथापि 'कृत्यल्युटो बहुलम्' इत्यस्यैव 'भीमादयोऽपादाने' इत्ययं प्रपञ्च इति भावः ॥

( करणल्युट्समर्थनभाष्यम् )

अथवा[12] शब्दैरपि शब्दा व्याक्रियन्ते । तद्यथा-

---

१ कर्मेति । कर्मत्वकरणत्वयोर्गुणप्रधानरूपत्वेन तत्कर्मणां तेषां तत्करणत्वासंभवादिति भावः ॥ छाया ॥

२ 'कर्मणि ल्युटि' इति क्वचित्पाठः । तस्मिन् पाठे 'कर्मण्युपपदे ल्युटि' इत्याशङ्का सम्भाव्येत । अतः 'कर्मल्युटि' इत्येव पाठ उचितः प्रतिभाति ॥

३ दोषान्तरमाह—भवे च तद्धित इति । एवमेव वार्तिकपाठः । उत्तरभाष्यस्वारस्यात् । अत एव च परिहारग्रन्थे 'भवे च तद्धितः' इत्येव पठितम् ॥ छाया ॥

४ अन्वाख्यापकत्वेन—संस्कारकत्वेन ॥ छाया ॥ 'अन्वाख्यापकत्वेन' इति ख. पाठः ॥

५ 'मीमांसादियोग' इति क. पाठः । शब्दं प्रति—वेदशब्दं प्रति ॥ आदिनैतत्सूचितम्—कथंचिच्छब्दसंबन्धानपायात्सर्वमपि वाक्यं तादृशं स्यादतो व्याकरणान्यग्रन्थेष्वभवत्वेन स्थित इति वाच्यम् । तच्च न संभवतीति भावः ॥ छाया ॥

६ प्रोक्तादिमध्ये भवार्थस्याप्यन्तर्भावात्पौनरुक्त्यमाशङ्कते—किमर्थमिति । 'भवे च तद्धितः' 'प्रोक्तादयश्च' इतीति पाठः । इत्येव—इत्यनेनैव । तथापि स किं न चोदितः स्यादिति काकुः ॥ छा. ॥

७ आदिपदेन 'भवे च तद्धितः' इत्यस्यापि संग्रहः ॥

८ परिहरति—पुरस्तादिति ॥ आचार्येण-वार्तिककृता ॥ इदानीं—द्वितीयप्रणयनकाले । अनेन वार्तिकादावपि सूत्रत्वव्यवहारः सूचितः ॥ छाया ॥

९ लक्षणेति । सामान्यसूत्रत्वविशेषसूत्रत्वाभ्यामित्यर्थः ॥ मूलसूत्रेति । पाणिनीयसूत्रेत्यर्थः ॥ छाया ॥

१० यथेति । विशेषणमित्यस्याग्रिमसूत्राणि प्रपञ्चभूतानि । तथा 'अलुगुत्तरपदे' इत्यस्याग्रिमाणि ॥ छाया ॥

११ आचार्या महर्षयो वेदसंमिता आत्मोक्तं न निवर्तयन्ति हि यतो व्युत्पादनाय व्याख्येयेऽर्थे तेषां तात्पर्यात् । आत्यन्तिकदोषासंभवान्नेदृशलाघवादरस्तेषामित्येवं भाष्यस्य युक्तत्वेऽपि कैयटोक्ता दृष्टान्तेनोपपत्तिरयुक्तेत्याशयेनाह—पूर्वमिति ॥ छाया ॥

१२ करणल्युटमप्यत्र पक्षे समर्थयते भाष्ये—अथवेति ॥ छाया ॥

गौरित्युक्ते सर्वे संदेहा निवर्तन्ते, नाश्वो न गर्दभ इति ॥

( प्रदीपः ) **गौरित्युक्त इति** । साक्षादिमति यदा कश्चित्प्रति 'अयं गौः' इत्युच्यते तदाऽत्र वाचकान्तराणां निवृत्तिः कृता भवति, एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते ॥

( उद्द्योतः ) **प्रतीयन्त इति** । एवं च विपरीतव्यावृत्तिः सदृशसंग्रहश्च व्याकृतिरिति भावः ॥ एतेन [१]शब्दाप्रतिपत्तिरप्यत्र पक्षे उद्धृता ॥

( अनुद्धृतदोषप्रदर्शकभाष्यम् )

अयं तर्हि दोषः—*[२]'भवे-प्रोक्तादयश्च तद्धिताः'* इति ॥

( समाधानोपक्रमभाष्यम् )

एवं [३]तर्हि—

( १५ सिद्धान्तवार्तिकम् ॥ ६ ॥ )

॥ * ॥ लक्ष्यलक्षणे व्याकरणम् ॥ * ॥

( भाष्यम् )

लक्ष्यं च लक्षणं चैतत्समुदितं व्याक[४]रणं भवति ॥ किं पुनर्लक्ष्यम्, किं लक्षणम्? शब्दो लक्ष्यः, सूत्रं लक्षणम् ॥

( उद्द्योतः ) व्यावर्त्यव्यावर्तक[५]रूपलक्ष्यलक्षणस्यातिप्रसक्तत्वात्पृच्छति—भाष्ये-किं पुनरिति ॥

( समाधानबाधकभाष्यम् )

एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते । सूत्राणि चाप्यधीयान इष्यते—वैयाकरण इति ॥

( समाधानसाधकभाष्यम् )

नैष दोषः । समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । तद्यथा-पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लो नील[६]ः कृष्ण इति ॥

एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोवऽयवेऽपि वर्तते ॥

( प्रदीप ) **पूर्वे पञ्चाला इति** । जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात्प्रयोगः ॥ **तैलमिति** । यदौषधसंस्कृता घृततैलमात्रा भवति तदैतदुदाहरणम् । आकृतिवाचित्वे तु घृततैलशब्दयोः संस्थानप्रमाणनिरपेक्षा सर्वत्र मुख्या वृत्तिः ॥ **शुक्ल इति** । अशुक्लेऽप्यवयवेऽवयवान्तरस्य शौक्ल्यात्समुदायस्य शुक्लत्वे सति आरोपात्प्रयोगः ॥

( उद्द्योतः ) **जनपदान्तरेति** । भावप्रधानो निर्देशः ॥ **यदेति** । **मात्रा**—परिच्छिन्नोंऽशः । औषधसंस्कृते तत्र समुदाये घृतादिशब्दस्य रूढिरिति भावः ॥ **अशुक्लेऽप्यवयवे इति** । **'प्रयोगः'** इत्यनेनान्वेति ॥ **आरोपादिति** । समुदायस्य शुक्लत्वे अशुक्लावयवे प्रयोगे च हेतुः । तत्र समुदाये शुक्लत्वारोपे हेतुः **'अवयवान्तरस्य शौक्ल्यात्'** इति । वनैकदे[७]शे 'पुष्पितं वनम्' इतिवदेकदेशेऽपि शुक्ले 'शुक्लः पटः' इति व्यवहार इति बोध्यम् ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

[८]अथ वा पुनरस्तु सूत्रम् ॥

( प्रथमाक्षेपस्मारणभाष्यम् )

ननु चोक्तम्-*सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः* इति ॥

( प्रथमाक्षेपनिरासभाष्यम् )

नैष दोषः । [९]व्यपदेशिवद्भावेन भविष्यति ॥

( प्रदीपः ) **व्यपदेशिवद्भावेनेति** । यथा 'राहोः शिरः' इत्येकस्मिन्नपि वस्तुनि [१०]शब्दार्थभेदाद्भेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते । सूत्रशब्देन तु समुदायरूपता-इति भेदव्यवहार उपपद्यते ॥

( उद्द्योतः ) **शब्दार्थभेदादिति** । अनेकावस्थायुक्तं शिरो

---

१ **शब्दाप्रतिपत्तिरिति** । शब्दो व्याकरणमिति पक्षे करणल्युडन्तव्याकरणशब्देन व्याक्रियन्ते—विभज्यन्तेऽपशब्दा येनेत्यर्थे 'शब्दाप्रतिपत्तिः' इति वार्तिकोक्तो दोषोऽपि निराकृत इत्यर्थः ॥

२. **'भवे च-' इति** । प्राग्वत् पाठः । दोषैक्यसूचनाय तथानुवादो वा ॥ छाया ॥ अत्र 'भवे च तद्धितः-प्रोक्ता' इति पाठश्छायादृष्टः ॥

३ सिद्धान्तभूततृतीयपक्षमाह—**एवं तर्हीति** । पक्षद्वयस्योक्तरीत्या दुष्टत्वे इत्यर्थः ॥ वार्तिके **लक्ष्यलक्षणे** इति द्विवचनेन तत्त्वस्य व्यासज्यवृत्तिता सूचिता ॥ छाया ॥

४ व्याकरणशब्दो योगरूढ्या तत्पर इति भावः । अत्र पक्षे करणत्वं समुदायस्यापि । अत एव प्रतिपत्तिरपि । समुदायावयवयोर्भेदात्षष्ठ्यर्थोपपत्तिर्वृक्षस्य शाखेतिवत् । भवे तद्धितस्यासंदेह एव, प्रोक्ततद्धितोऽपि समुदायस्यानन्यत्वान्नेतुं शक्य इति न प्रागुक्तदोष इति बोध्यम् ॥ छाया ॥

५ **'रूपलक्षणस्या'** इति मुद्रितपाठः ॥

६ **'नीलः कपिलः कृष्णः'** इति कपिलशब्दमधिकं क्वचित्पठन्ति ।

७ नन्वारोपितस्यान्यत्रारोपाभावेन कथमेतदिति चेत् । न । भाष्यप्रामाण्यादत्र तथाङ्गीकारात् । वस्तुत इत एवारुचेः प्रकारान्तरेण भाष्यं योजयन्नाह—**वनैकदेश इति** । पुष्पिते सतीति शेषः ॥ **शुक्ले** वास्तवे ॥ **पट इति** । पटत्वारोपादिति भावः ॥ छाया ॥

८ लोकव्यवहारानुरोधेनोक्तमाद्यपक्षं समर्थयते—**अथवेति** ॥ छाया ॥

९ **व्यपेति** । मुख्यव्यवहारतुल्यत्वकरणेन तदुपपत्तिर्भविष्यतीत्यर्थः ॥ छाया ॥

१० **शब्दार्थेति** । शब्देऽर्थे च राहुत्वारोपे सति राहुशब्दः समुदायशब्दः सम्पद्यते । एवं व्याकृतिकरणत्वपरे व्याकरणपदे सूत्रशब्दसमुदायो व्याकरणम् । तथा च समुदायतदवयवयोर्भेदे व्याकरणस्य सूत्रमिति व्यवहारः । पूर्वं समुदाये रूढिर्व्याकरणशब्दस्योक्ता, इदानीं तु आरोप इति पक्षयोर्भेदः ॥

राह्वुशब्दार्थः, यात्किंचिदेकावस्थायुक्तं तत् शिरःशब्दार्थः । तादृशराहुशब्दार्थस्य तादृशशिरःपदार्थोऽवयव इति षष्ठ्यर्थोपपत्तिरिति भावः ॥ **सूत्रशब्देन तु समुदायरूपतेति ।** [1]अनेकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्यायं समुदाय इत्यर्थः ॥ ईदृशे स्थले विकल्पात्मकं ज्ञानं वस्तुशून्यमेव । व्यपदेशिवद्भावविषयेऽप्येवमेव, **"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"** इति योगसूत्रे पतञ्जल्युक्तेरित्यन्ये ॥

**( द्वितीयाक्षेपस्मारणभाष्यम् )**

**यदप्युच्यते—'*शब्दाप्रतिपत्तिः'*इति ।**

**न हि सूत्रत एव शब्दान्प्रतिपद्यन्ते ।**

**किं तर्हि? व्याख्यानतश्च-इति ।**

**परिहृतमेतत्—तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति ॥**

**( परिहारबाधकस्मारणभाष्यम् )**

**ननु चोक्तम्—"न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः-आत्-ऐजिति । किं तर्हि?**

**उदाहरणं-प्रत्युदाहरणं-वाक्याध्याहारः—इत्येतत्समुदितं व्याख्यानं भवति" इति ॥**

**( परिहारसाधकभाष्यम् )**

**अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान् प्रतिपद्यन्ते ॥**

**[2]आतश्च सूत्रत एव । यो ह्युत्सूत्रं कथयेन्नादो गृह्येत ॥**

**( प्रदीपः ) सूत्रत एवेति ।** पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनात् ॥

**आत इति ।** निपातः । अतश्च हेतोरित्यर्थः ॥ **नाद इति ।** नैतदित्यर्थः ॥ अथवा नादोऽर्थरहितत्वात् घोष[3]मात्रमेव गृह्येतेत्यर्थः ॥

**( उद्योतः ) भाष्ये—अविजानत इति ।** मन्दबुद्धेरित्यर्थः ॥ **सूत्रत एवेति ।** एतन्मूलकमेव पठ्यते—

**"सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके ।"** इति ॥

( इति व्याकरणाधिकरणम् ॥ )

**( अथ वर्णोपदेशाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**अथ किमर्थो वर्णानामुपदेशः?**

**(प्रदीपः) किमर्थ इति ।** न हि वर्णोपदेशेन कस्यचित्साधुशब्दस्यानुशासनमिति भावः ॥

**( उद्योतः )** ननु लोके[4]प्रसिद्धमातृकापाठेनैव वर्णज्ञानसंभवान्माहेश्वरो वर्णसमाम्नायः किमर्थं इति पृच्छति—भाष्ये—**किमर्थ इति ।** पाणिनये[5] महादेवकृत इत्यर्थः ॥ ननु साधुत्वान्वाख्यानं फलमत आह—**न हीति ॥**

**( १६ समाधानवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ वृत्तिसमवायार्थ उपदेशः ॥ * ॥**

**( भाष्यम् )**

**वृत्तिसमवायार्थो वर्णानामुपदेशः कर्तव्यः ।**

**किमिदं वृत्तिसमवायार्थ इति?**

**वृत्तये समवायः-वृत्ति[6]समवायः । वृत्त्यर्थो वा समवायः-वृत्तिसमवायः । वृत्तिप्रयोजनो वा समवायः-वृत्तिसमवायः ॥**

**का पुनर्वृत्तिः? शास्त्रप्रवृत्तिः ॥**

**अथ कः समवायः? वर्णानामानुपूर्व्येण संनिवेशः॥**

**अथ क उपदेशः? उच्चारणम् ॥**

**कुत एतत्? दिशिरुच्चारणक्रियः । उच्चार्य हि वर्णानाह—उपदिष्टा इमे वर्णा इति ॥**

**( प्रदीपः ) वृत्तिसमवायार्थ इति ।** लाघवेन शास्त्र-

---

१ ननूभाभ्यामपि शब्दाभ्यामष्टाध्यायी प्रतिपाद्यते इति प्रागुक्तत्वात् 'सूत्रशब्देन तु समुदायरूपता' इत्यसंगतमत आह—**अनेकेति ॥** अवयवावयविभावस्य तुल्यत्वेन समानविषयतया दृष्टान्तता नतु समानविशेष्यकत्वादिनेति ध्वनयन्नुदाहरणार्थमाह—**तद्रूपेति ।** अमुख्येऽपि भेदे औपाधिकभेदकल्पनमुभयत्र तुल्यमिति यावत् ॥ छाया ॥

२ एवमन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाह—**आतश्चेति ॥** छाया॥

३ 'घोषमात्रमेवेत्यर्थः' इति मुद्रितपाठः ॥

४ ननु वर्णज्ञानमेव प्रयोजनमिति कथं शङ्कावसरोऽत आह—**लोकेति ॥**

५ ननु गुरुशिष्यव्यवहारविशेषे उपदेशशब्दप्रवृत्तेरत्र कथं तत्प्रयोगः सर्वस्या अपि अष्टाध्याय्याः पाणिनिप्रोक्तत्वादत आह—**पाणिनय इति ॥** छाया ॥

६ **वृत्तिसमवाय इति ।** अत्र 'धर्मनियमः' इत्यत्रेव षष्ठीसमासः । योगविभागस्यागतिकगतित्वाच्चतुर्थीसमासो न, तत्तुल्यत्वादेव सुप्सुपेत्यपि न । भाष्ये त्रिविधविग्रहप्रदर्शनोपयोगस्त्वित्थम्—**वृत्तये**–लाघवेन शास्त्रप्रवृत्तये **समवायः**–वर्णानामानुपूर्व्येण सन्निवेशः । यथा–वर्णसमवायादेवाजादिसंज्ञाः सिध्यन्ति, तेन च 'इको यणचि' इति शास्त्रं लघुभूतं सम्पद्यते, अन्यथा 'इउऋऌवर्णानां यवरलाः' इत्येवं गुरुतरं सूत्रं स्यादिति प्रथमविग्रहप्रदर्शनोपयोगः । वृत्त्यर्थो वा समवाय इति कर्मधारयः । अस्मिन् पक्षे लक्षणया वृत्तिशब्दार्थः साधुत्वोपयोगिशास्त्रप्रवृत्त्यनुकूलसमवायः । यथा–इउऋऌ इति यवरल इत्येतेषाञ्च वर्णसमाम्नाये क्रमेण सन्निवेशात् 'इग्यणः सम्प्र–' इति सूत्रे 'यथासंख्यमनु–' इत्यस्य प्रवृत्तिः । वर्णसन्निवेशसत्वादेव समसंख्यत्वोपपत्तौ यथासंख्यावतार इति द्वितीयविग्रहप्रदर्शनोपयोगः । वृत्तिप्रयोजनो वा समवाय इत्यस्य तु वर्णसन्निवेशादेव णादीनामित्संज्ञाप्रवृत्तिः फलम् । तेन प्रत्याहारादिसिद्धिः, ततश्च 'ढ्लोपे–' इत्यादिशास्त्रप्रवृत्तिरिति न साक्षाल्लाघवेन शास्त्रप्रवृत्तिः फलमिति प्रथमतोऽस्य भेदः । एवञ्च प्रथमपक्षे वृत्तिशब्दस्य शास्त्रप्रवृत्तिरर्थः, द्वितीये–समवायः, तृतीये च इत्संज्ञादिसंज्ञाशास्त्रप्रवृत्तिरर्थ इत्युपपादितं भवति ॥

प्रवृत्त्यर्थ इत्यर्थः । धर्मनियमवत्समासः ॥ **वृत्त्यर्थ इति ।** शास्त्रप्रवृत्तिप्रत्यासन्नत्वं समवायस्य दर्शयति–'**इग्यणः**'इत्यादौ हि **यथासंख्य**शास्त्रं वर्णसंनिवेशमात्रादेवावतिष्ठते ॥ **वृत्ति-प्रयोजन इति ।** पारम्पर्येण शास्त्रप्रवृत्तावस्याङ्गत्वम् । सति हि समवाये इत्संज्ञा, ततः '**आदिरन्त्येन**–' इति, ततः '**ह्लोपे**–'इत्यादिशास्त्रप्रवृत्तिः ।

( **उद्द्योतः** ) उत्तरम्—**वृत्तिसमवायार्थ इति । वृत्तिः**= शास्त्रप्रवृत्तिः, तदुपयोगी **समवायो** वर्णगतः क्रमविशेषः, स बोध्य-त्वेन**ार्थः** प्रयोजनं यस्य सः-तथोक्तः । सति[1] ह्यक्षरसमाम्नायेऽजा-दिसंज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिः, '**इग्यणः**' इत्यादौ **यथासङ्ख्य**-प्रवृत्तिश्चेति भावः । अनेना[2]स्य शास्त्रबहिर्भूतत्वं सूचितम् । अत एव '**मङ्गलार्थं महतः शास्त्रौघस्यादितो वृद्धिशब्दं पठति**' इति वक्ष्यति। अन्य[3]कर्तृकत्वं च सूचितम् । 'पाणिनिशास्त्रप्रवृत्त्यर्थ उपदेशः' इत्युक्ते उपदेशे गुरुकर्तृकतायाः स्वरसतः प्रतीतेः, सिद्धोच्चारणेऽपि मन्त्रोपदेश इत्यादावुपदेशव्यवहारात् । '**अनुबन्धकरणार्थः**' इत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात् । तत्करणं चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः ॥ भाष्ये—**किमिदमिति ।** कोऽयं समास इति प्रश्नः ॥ **धर्मनियमवदिति ।** षष्ठीसमासः ॥ पक्षत्रयभेदमुपपाद-यति—**शास्त्रेति ।** आद्यतात्पर्यं तूक्तं–'**लाघवेन शास्त्रप्रवृत्त्यर्थः**' इति ॥ ननु नेदमाद्योच्चारणम्, अस्यानादित्वात्; तत्कथमुपदेशत्व-व्यवहारोऽत आह—भाष्ये—**उच्चारणमिति ।** ढक्कानिनादेनाभि-व्यक्तिरित्यर्थः ॥

**( १७ वर्णोपदेशप्रयोजनान्तरवार्तिकम् ॥ २ ॥ )**

## ॥ * ॥ अनुबन्धकरणार्थश्च ॥ * ॥

**( भाष्यम् )**

**अनुबन्धकरणार्थश्च वर्णानामुपदेशः कर्तव्यः । अनुबन्धानासङ्क्ष्यामीति । न ह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् ॥**

**स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चानुबन्धकरणार्थश्च । वृत्तिसमवायश्चानुबन्धकरणं च प्रत्या[4]हारार्थम् । प्रत्याहारो वृत्त्यर्थः ॥**

( **प्रदीपः** ) **प्रत्याहारार्थमिति ।** प्रत्याहारशब्देनाणा-दिकाः संज्ञा उच्यन्ते ॥

( **उद्द्योतः** ) फलान्तरमाह—भाष्ये—**अनुबन्धकरणार्थ-श्चेति ।** अनुबन्धबोधनार्थ इत्यर्थः । चेनाकारस्य विवृतगुणत्वसंग्रहः, उपलक्षणत्वेन वा । अनुबन्धत्वं च समु[5]दायान्त्यसत्त्वे सति, नान्यथेति तात्पर्यम् ॥ ननु प्रत्याहारशब्देन सूत्रं चेत् तादर्थ्यमनुबन्धानामनुप-पन्नमत आह—**प्रत्याहारशब्देनेति ।** अधिकरणव्युत्पत्त्या[6], अर्श-आद्यचा वेति भावः ॥ भाष्ये—**वृत्त्यर्थ इति ।** लाघवेन शास्त्रप्रवृ-त्त्यर्थ इत्यर्थः ॥ एतेन [7]प्रत्याहारद्वारा समवायस्य वृत्त्यर्थता दर्शिता ॥

**( वार्तिकावतरणभाष्यम् )**

**इष्टबुद्ध्यर्थश्च[8] वर्णानामुपदेशः । 'इष्टान्वर्णान् भोत्[9]स्यामहे' इति । न ह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ॥**

( **प्रदीपः** ) **इष्टबुद्ध्यर्थश्चेति ।** सति ह्युपदेशे कलादिदो-षरहिता ये वर्णा [10]निर्दिष्टास्ते तथैव प्रयोक्तव्या इत्युक्तं भवति ॥

( **उद्द्योतः** ) **भोत्स्यामहे इति ।** अन्तर्भावितण्यर्थः, बोध-यिष्यामह इत्यर्थः ॥ एवं '**विज्ञातुं**'इत्यस्य ज्ञापयितुमित्यर्थः ॥ **सति ह्युपदेशे इति ।** [11]एवं च व्याकरणाध्येतॄणामक्षरसमाम्नाये-नैवावश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थं मातृका पाठनीयेति भावः ॥

**( १८ आक्षेपवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ इष्टबु[12]द्ध्यर्थश्चेति चेदुदात्तानुदात्त-स्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ॥ * ॥

**( भाष्यम् )**

**इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिक-दीर्घप्लुतानामप्युपदेशः कर्तव्यः । एवंगुणा अपि हि वर्णा इष्यन्ते ॥**

---

१ आद्यसमासफलमाह—**सतीति ॥** द्वितीयसमासप्रयोजनमाह—**इग्यण इति ॥** चेन तृतीयसमासप्रयोजनेत्संज्ञादिप्रवृत्तेरपि संग्रहः ॥

२ **अनेन**-उक्तार्थकोक्तवार्तिकेन । **अस्य**-वर्णसमाम्नायस्येत्यर्थः॥छा.॥

३ **अन्येति ।** वृत्तिसमवायार्थ उपदेश इति वार्तिकेन **अस्य** वर्ण-समाम्नायस्येति पूर्ववदनुषङ्गः । अत्र हेतुः पाणिनिशास्त्रेत्यादिः । ननु अइउणित्यादि सूत्राणि न महादेवकृतानीति तत्राद्योच्चारणार्थक उप-देशशब्दव्यवहारः कथमत आह—**सिद्धोच्चारणे इति ।**

४ 'प्रत्याहारार्थः' इति घ. पाठः ॥

५ 'समुदायान्त्यत्वे' इति घ. पाठः । समुदायोपपादनार्थं वर्णा-नामुपदेश आवश्यक इत्यर्थः ॥

६ **व्युत्पत्त्येति ।** सरूढ्येति भावः ॥ छाया ॥

७ प्रत्याहारशब्दस्तु अणादिसंज्ञापरः प्रत्याह्रियन्ते वर्णा एष्विति व्युत्पत्तेः ॥ नच ग्रहणकशास्त्रेण निष्पादितास्वकारादिसंज्ञास्वतिप्रसक्तिः, योगरूढ्यभ्युपगमात् । तस्माद**ादिरन्त्येने**त्येतत्सूत्रसिद्धाः संज्ञाः प्रत्याहारशब्दवाच्यास्तन्निष्पत्तये वर्णोपदेश इति श० कौ० ॥

८ 'इष्टबुद्ध्यर्थश्च' इति वार्तिकम्प्रकल्प्य तदनुरोधेन 'इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः' इति कुण्डलनारूपो भाष्यपाठोऽधिकोऽपि मुद्रित-पुस्तकेषूपलभ्यते । प्रामाणिकपुस्तकेषु तथा पाठानुपलम्भाद्भाष्य-कारवचनमेवैतदिति निश्चितम् ॥

९ अ. पुस्तके 'भोत्स्ये' इति पाठः । अ.पुस्तकवत्प्रामाणिकोद्द्योतपुस्तके 'भोत्स्यामह इति' इति प्रतीकञ्च । वस्तुतः पूर्ववार्तिक-व्याख्यायां 'आसंक्ष्यामि' इत्येकवचनान्तप्रयोगवदत्राप्येकवचनान्तमेव युक्तम्, तथापि उद्द्योतपुस्तकानुरोधाद्बहुवचनान्त एव पाठ आश्रितः ॥

१० 'निर्दिष्टास्तथैव' इति 'ते'शब्दरहितः पाठो मुद्रितेषु ॥

११ समाधित्रयतात्पर्यमाह—**एवं चेति ।** तस्य फलत्रयसत्त्वे चेत्यर्थः ॥ छाया ॥

१२ ननु तथा प्रतीतिरपि लोकत एव सिद्धा । अन्यथोदात्तादीना-मपि उपदेशापत्तिरित्याशयेन शङ्कते—**इष्टेति ॥** छाया ॥

**( प्रदीपः )** एकश्रुत्या सूत्राणां पाठात्सर्वेषामुदात्तादीनामुपदेशः कर्तव्य इत्याह—**इष्टबुद्ध्यर्थश्चेति चेदिति ।**

**( उद्योतः )** एकश्रुत्येति । त्रै[1]स्वर्यपाठे तु द्वयोरेव कर्तव्यतां वदेदित्यर्थः । ते[2]षां लोकतः सिद्धौ तु दोषरहितानामपि तत एव सिद्धेरुपदेशवैयर्थ्यापत्तिरिति भावः ॥ त्रै[3]स्वर्येण पाठेऽपि अन्यतमपाठेऽन्यस्य कर्तव्यत्वाभिप्रायेण सर्वेषां ग्रहणमित्यन्ये ॥

( १९ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ आ[4]कृत्युपदेशात्सिद्धम् ॥ * ॥

( भाष्यम् )

**आकृत्युपदेशात्सिद्ध[5]मेतत् । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिः । तथोवर्णाकृतिः ॥**

**( प्रदीपः ) आकृत्युपदेशादिति ।** उपात्तोऽपि विशेषो नान्तरीयकत्वाज्जातिप्राधान्यविवक्षायां न विवक्ष्यत इत्यर्थः ॥

**( उद्योतः )** आकृत्युपदेशे किमिति अकारादिह्रस्वव्यक्तिविशेषोपादानं, तदुपादाने व्यक्त्यन्तरग्रहणानापत्तिश्चेत्यत आह—**उपात्त इति ।** नान्तरीयकत्वं च तं विना जातेरुच्चारयितुमशक्यत्वात् ॥

( २० आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधः ॥ * ॥

( भाष्यम् )

**आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधो वक्तव्यः ॥**

**के पुनः संवृतादयः ?**

**संवृतः, कलः, ध्मातः, एणीकृतः, अम्बूकृतः, अर्धकः, ग्रस्तः, निरस्तः, प्रगीतः, उपगीतः, क्ष्विण्णः, रोमशः—इति ॥**

**अपर आह—**

**"ग्रस्तं निरस्तमवलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम् ।**

**संदष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः ॥" इति ।**

**अतोऽन्ये व्यञ्जनदोषाः ॥**

**( प्रदीपः ) संवृतादीनामिति ।** [6]आकारादीनां संवृतत्वं दोषः । न त्वकार[7]स्य संवृतगुणत्वात् । तत्र संध्यक्षरेषु विवृततमेषूच्चार्येषु संवृतत्वं दोषः । **कलः**—स्थानान्तरनिष्पन्नः काकलिकत्वेन प्रसिद्धः । **ध्मातः**—श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । **एणीकृतः**—अविशिष्टः किमयमोकारोऽथौकार इति यत्र संदेहः । **अम्बूकृतः**—यो व्यक्तोऽप्यन्तर्मुखमिव श्रूयते । **अर्धकः**—दीर्घोऽपि ह्रस्व इव । **ग्रस्तः**—जिह्वामूले निगृहीतः, अव्यक्त इत्यपरे । **निरस्तः**—निष्ठुरः । **प्रगीतः**—सामवदुच्चारितः । **उपगीतः**—समीपवर्णान्तरगीत्यानुरक्तः । **क्ष्विण्णः**—कम्पमान इव । **रोमशः**—गम्भीरः । **अवलम्बितः**—[8]वर्णान्तरसंभिन्नः । **निर्हतः**—रूक्षः । **सन्दष्टः**—वर्धित इव । **विकीर्णः**—वर्णान्तरे प्रसृतः, एकोऽप्यनेकनिर्भासी**त्यपरे । स्वरदोषभावना इति ।** स्वरदोषगोत्राणि । अनन्ता हि दोषा अशक्तिप्रमादकृताः ॥

**( उद्योतः ) संवृतादीनामिति**—भाष्ये—ता[9]दृशदोषसहितानामाकृतिग्रहणात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः ॥ तदाह—**एकारादीनां संवृतत्वमिति ॥ अविशिष्ट इति ।** संश्लिष्टः, संदिग्ध इति यावत् ॥ **ह्रस्व इवेति ।** तद्वत्कालसङ्कोचेनोच्चारित इत्यर्थः ॥ **निष्ठुर इति ।** त्वरित इत्यन्ये ॥ **गोत्राणीति ।** स्वरदोषजातय इत्यर्थः ॥

( सिद्धान्तिभाष्यम् )

**नैष दोषः ।**

---

१ **त्रैस्वर्यपाठे त्विति ।** तृतीयासमासः । एकस्योच्चारणादेव सिद्धत्वादिति भावः ॥ छाया ॥ 'त्रैस्वर्येण पाठे' इति ज. पाठः ।

२ अस्य तात्पर्यमाह—**तेषामपि ।** उदात्तादीनामित्यर्थः । ज्ञानस्येति शेषः ॥ छाया ॥

३ ननु त्रैस्वर्येणैव पाठो नैकश्रुत्या अष्टाध्याय्याः क्वापि तथा पाठोऽथापि कथं दृष्टान्तेनात्रेष्टसाधनमतः सिद्धान्तमतमाह—**त्रैस्वर्येणेति** ॥ छाया ॥

४ इमामाशङ्कां समाधत्ते—**आकृत्युपेति ।** जातिरत्राकृतिः । जातिपरे निर्देशे व्यक्तिविशेषनिर्देशस्य नान्तरीयकत्वाद्व्यक्त्यन्तरग्रहणाप्रतिबन्धकता ज्ञेया, तदाह—**अवर्णाकृतिरित्यादिना** ॥ कुलं—समूहम् ॥ छाया ॥

५ 'सिद्धमेव तत्' इति क. पाठः ॥

६ **एकारादीति ।** अत्र आकारादीनामिति वक्तुमुचितम् । तत्त्यागेन तावत्पर्यन्तधावने बीजाभावात् ॥ छाया ॥ अ. पुस्तके तादृश एव पाठ उपलभ्यते । 'एकारादीनां' इति क. च. ट. झ. पाठः ॥

७ 'कारस्य तस्य संवृ' इति क. ख. पाठः ॥

८ मुद्रितपुस्तकेषु 'वर्णान्तरासंभिन्नः' इति पाठो दृश्यते स प्रामादिकः, तथाऽनुपलम्भात् ; एणीकृतविकीर्णदोषयोः पृथगुपादानाच्च ॥

९ ननु ह्रस्वावर्णस्य संवृतगुणकस्य प्रतिषेधो नेष्ट इति वार्तिकासंगतिरत आह—**तादृशेति** ॥ तथा च स येषां दोषस्तेषां न त्वन्येषामिति भावः ॥ छाया ॥

गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति ॥

( उद्योतः ) भाष्ये—गर्गादिबिदादिपाठादिति । संवृतादिदोषरहितानामेव तत्र पाठादिति भावः ॥

( आक्षेपभाष्यम् )

अस्त्यन्यत् गर्गादिबिदादिपाठे प्रयोजनम् ॥ किम् ?

समुदायानां साधुत्वं यथा स्यादिति ॥

( प्रदीपः ) अस्त्यन्यदिति । गर्ग इत्यादिनैव संनिवेशेन गर्गादीनां साधुत्वं यथा स्यात्, गार्ग्य इत्यादीनां मा भूत् । ततश्च तद्गतानामेवाकारादीनां दोषनिवृत्तिः कृता स्यात्, न तु समुदायान्तरस्थानाम् । यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात्समुदायसाधुत्वायापि भवति ॥

( उद्योतः ) साधुत्वमिति । निवृत्तकलादिदोषवत्त्वमित्यर्थः ॥ गार्ग्य इत्यादीनामिति । तत्रत्यानां कलादिदोषनिवृत्तिर्न स्यादित्यर्थः । तदाह—ततश्चेति ॥ परे तु समुदायानां—एतत्प्रकृतिकयञन्तसमुदायानां साधुत्वं यथा स्यादित्यर्थं पाठश्चरितार्थः, न कलादिदोषान्निवर्तयेदित्येव भाष्यार्थः । 'पाठश्चैव विशेष्यते' इत्यग्रिमभाष्यस्वरसादित्याहुः ॥

( समाधानैकदेशिभाष्यम् )

एवं तर्ह्यष्टादशधा भिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि ॥

( प्रदीपः ) निवृत्तकलादिकामिति । अकारस्य संवृतत्वात् 'निवृत्तसंवृतत्वादिकाम्' इति नोक्तम् । अकारस्य निदर्शनार्थत्वात्सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः ॥

( उद्योतः ) निदर्शनार्थत्वादिति । तत्रावर्णस्य 'अ-अ' इति कृतैव, तद्वत्तदनन्तरमन्येषामपि करिष्यामीति भावः ॥ एतेन अवर्णप्रतिपत्तेः कृतत्वात् 'वक्ष्यामि–इत्यनुपपन्नम्' इति परास्तम् ॥

( आक्षेपभाष्यम् )

सा तर्हि वक्तव्या ॥

( उद्योतः ) भाष्ये—सा तर्हि वक्तव्येति । तथा च प्रत्यापत्त्याश्रयणे गौरवमिति भावः ॥

( २१ एकदेशिसमाधानवार्तिकम् ॥ ६ ॥ )

## ॥ ॥ लिङ्गार्था तु प्रत्यापत्तिः ॥ ॥

( भाष्यम् )

लिङ्गार्था सा तर्हि भवति ॥

( उद्योतः ) लिङ्गार्था त्विति । अनुबन्धस्थानीयतत्तद्धात्वादिगतकलादिलिङ्गनिवृत्त्यर्था–इत्यर्थः ॥ नाकृतिनिर्देशप्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः, किं तु सर्वानुबन्धेत्संज्ञाशास्त्राद्यकरणफलिकाऽपीति न गौरवमिति भावः ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ॥

---

१ यद्यप्याधुनिकोपलब्धपुस्तकेष्वस्य वार्तिकस्यानुपलम्भः । तथापि व्याख्याभाष्येण तथा वार्तिकपाठ आसीत् आधुनिकपुस्तकेषु चिरंतनलेखकप्रमादात् त्रुटितो भवेदित्यनुमीयते । यथा—"नैष दोषः" इत्युत्तरं "पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम्" इति वार्तिकस्यैव 'पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति' इति व्याख्याभाष्यमुपलभ्यते—इति दाधिमथाः ॥ अत्र 'गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिः' इति वार्तिकं प्राक्तने संस्करणे दाधिमथाः पठन्ति स्म, अस्मिन्नेवावसरे गुरुप्रसादाः स्वीये पुस्तके 'गर्गादिबिदादि–' 'समुदायसाधुत्वार्थं तु गर्गादिबिदादिपाठः' 'प्रत्यापत्तिवचनम्' इति त्रीणि वार्तिकानि पठन्ति, तत्समर्थनाय च 'इदं वार्तिकत्रयं न क्वचिद्दृश्यते, अनुमाय तु स्थापितमस्माभिः' एतत्सर्वं कल्पनाकलितं प्रामादिकम् । यतः प्रामाणिकैः सुधीभिः प्रमाणशून्यं वचो वाचस्पतेरपि यत्र नाभिनन्द्यते तत्रैतादृशं सङ्केतुरहितं न्याय्यनवगाहि स्वकल्पनाकलितं निरर्थकं वचः कः शृणुयात्–इति ॥

२ तद्गतानां–गर्ग इत्यादिस्थानाम् ॥ छाया ॥

३ समुदायान्तरस्थानां–गार्ग्य इत्यादिस्थानामित्यर्थः ॥ छाया ॥

४ 'साधुत्वार्थोऽपि' इति मुद्रितपाठः ॥

५ वस्तुतस्तु कैयटोक्तं चिन्त्यमेवेति ध्वनयन्नाह—परे त्विति ॥ छाया ॥ 'परेतु' इत्यस्य स्थाने 'केचित्तु' इति ज. पाठः ॥

६ 'दोषं निवर्त–' इति मुद्रितपाठः ॥

७ तस्मात्संवृतादीनां प्रतिषेधे कर्तव्यत्वेन प्राप्ते आह—एवं तर्हीति ॥ वर्णसमाम्नाये निर्दिष्टानामकारादिचतुर्णां प्रत्येकमष्टादश भेदाः सन्तीत्याशयेनेदमुक्तम् ॥ छाया ॥

८ प्रत्यापेति । 'अ-अ' इतिवत् तदनन्तरं 'इ-इ' 'उ-उ' इत्यादिकां प्रतिपत्तिं–संवृतादिदोषरहितज्ञानजनकं शब्दं वक्ष्यामीत्यर्थः ॥

९ नन्ववर्णे प्रत्यापत्तिः कृतैव । किं च तावता न सर्वत्र निर्वाहोऽत आह—अकारस्येति । अष्टादशधाभिन्नामित्युक्तेर्न तदकारादिचतुष्टयोपलक्षणं किं तु वर्णमात्रस्य, तदाह—सर्ववर्णेति ॥ छाया ॥

१० निदर्शनार्थत्वात्–उपलक्षणार्थत्वात् ॥

११ 'अवर्णप्रत्यापत्तेः' इति मुद्रितपाठः ॥

१२ तथा चेवर्णादौ तस्या अवश्यवक्तव्यत्वमाह—सा तर्हीति ॥ छाया ॥

१३ लिङ्गार्थेति । 'सा तर्हि वक्तव्या' इति भाष्यग्रन्थेन प्रत्यापत्तिवचने गौरवमुद्भाव्यते, तदर्थं वार्तिककारः–यत्र धातुप्रातिपदिकप्रत्ययागमादिषु लिङ्गार्थं संवृतादीनामुपादानं तत्र दोषरहितानां तेषां सिध्यर्थं प्रत्यापत्तिर्वक्तव्येति प्रत्यापत्तिवचने गौरवाभावं प्रतिपादयति । लिङ्गत्वेन दोषाणामुपादानं चाग्रे प्रदीपे प्रतिपाद्यते—यथा स्वरितत्वेत्यादिना ॥

१४ दोषाणां लिङ्गार्थत्वं प्रदर्शयति–अनुबन्धेति । यत्र कार्यार्थं टिटिकिन्मिदादयोऽनुबन्धा गृह्यन्ते तत्र सर्वत्रापि संवृतादयो दोषा एवोपादेयाः । तथा चेत्संज्ञादिकरणगौरवं टिदादीनामुच्चारणगौरवञ्च नेति भावः ॥

१५ नाकृतीति । सर्वानुबन्धानपहाय तत्फललाभाय कलादिदोषविशिष्टवर्णघटितान् धात्वादीन्पठित्वा तद्दोषनिवृत्त्यर्थोऽपि प्रत्यापत्तिरित्यनुबन्धादिकं न वाच्यमिति भावः ॥ छाया ॥

**( उद्योतः )** तदेव विवृणोति—**तर्त्तर्हीत्यादिना** । धात्वादिगतकलादिलिङ्गमित्यर्थः ॥

**( समाधानभाष्यम् )**

**यद्यप्येतदुच्यते, अथवैतर्हि अनेकमनुबन्धशतं नोच्चार्यम्, इत्संज्ञा च न वक्तव्या, लोपश्च न वक्तव्यः । यदनुबन्धैः क्रियते तत्कलादिभिः करिष्यते ॥**

**( प्रदीपः ) यदनुबन्धैरिति** । यथा स्वरितत्वमधिकारार्थमेवमात्मनेपदार्थं कलादिकं प्रतिज्ञाय **कलादात्मनेपद**मित्यादि करिष्यते, न तु **'अनुदात्तङितः'** इत्यादि ॥ नन्वनुबन्धाभावे कथमणादिकाः संज्ञा उपपद्यन्ते ? **'आदिः कलैः सह'** इत्युक्त्वा 'अ-उ' इत्यादिकाः संज्ञाः करिष्यन्ते, स्वरसन्धिश्चासन्देहाय न करिष्यते–इत्यदोषः ॥

**( उद्योतः ) 'अथवैतर्हि'** इत्यस्य तथापीत्यर्थः ॥ **अनेकमनुबन्धशतमिति** । एकैकस्यानुबन्धस्य शतश उच्चारणं, तादृशाश्चानेक उच्चारणीया इत्यर्थः ॥ **यथेति** । 'एध शी' इत्यादयोऽनुदात्तङितः कलदोषयुक्ताः पाठ्याः । स्वरितञितश्च ध्माताः । तत्र **'कलादात्मनेपदम्' 'ध्मातात्कर्तृगामिनि क्रियाफले'** इति सूत्रे कार्ये । एवं टकितौ कलध्मातौ पठित्वा **'आद्यन्तौ कलध्मातौ'** इति पाठ्यम् । एवं क्वितोऽर्द्धकदोषयुक्तान् पठित्वा **'अर्धकात् क्वि:'** इति । ङितश्च ग्रस्तान्पठित्वा **'ग्रस्तादथुच्'** इत्यादि बोध्यम् । एते च कलादयः प्रक्रियादशायामेव । प्रयोगे तु शुद्ध एव, शास्त्रान्ते प्रत्यापत्तिकरणात् । **'आदिः कलैः सह'** इति पाठः ॥

**( आक्षेपभाष्यम् )**

**सिद्ध्यत्येवम् । अपाणिनीयं तु भवति ॥**

**( उद्योतः )** भाष्ये—**अपाणिनीयमिति** । वर्णसमाम्नायसमर्थनाय प्रवृत्तस्य एकदोषपरिहाराय सकलशास्त्रस्य व्याख्यानसापेक्षगुरुप्रकारेणान्यथाकरणे **'वृश्चिकभिया'**इत्यादिन्याय आपततीति भावः ॥

**( सिद्धान्तिभाष्यम् )**

**यथान्यासमेवास्तु ॥**

**( आक्षेपस्मारणभाष्यम् )**

**ननु चोक्तम्-*आकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेधः* इति ॥**

**( समाधानभाष्यम् )**

**परिहृतमेतत्—गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति–इति ॥**

**( समाधानबाधकभाष्यम् )**

**ननु चान्यत् गर्गादिबिदादिपाठे प्रयोजनमुक्तम् ।**

**किम् ?**

**समुदायानां साधुत्वं यथा स्यादिति ॥**

**( समाधानसाधकभाष्यम् )**

**एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते, कलादयश्च निवर्त्यन्ते ॥**

**कथं पुनरेकेन यत्नेनोभयं लभ्यम् ?**

**लभ्यमित्याह ।**

**द्विगता अपि हेतवो भवन्ति । तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणिता इति । तथा वाक्यान्यपि द्विष्ठानि भवन्ति—श्वेतो धावति, अलम्बुसानां यातेति ॥**

**( प्रदीपः ) उभयमिति** । यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यते–इत्यर्थः ॥ **द्विगता इति । द्वौ**–अर्थौ **गताः**–प्रयोजनद्वयस्य संपादका इत्यर्थः ॥ **तथा वाक्यान्यपीति** । शब्दस्याप्यर्थवत् द्विगतत्वमित्यर्थः ॥

**( उद्योतः )** नन्वपठितेषु दोषनिवृत्तिर्न कृता स्यादत आह—**यथाभूता इति** । गर्गाद्यकारादिषु एकरूपेण पठितेषु तज्जातीया एव ते सर्वत्र साधव इत्यनुमातुं शक्यत इति भावः ॥ भाष्ये—**पाठश्चैवेति । विशेष्यते**–तत्तत्प्रत्ययवैशिष्ट्येन बोध्यत इत्यर्थः ॥ **'द्विष्ठानि'** इत्यस्य द्वयोरर्थयोस्तिष्ठन्तीत्यर्थं इत्याह—**शब्दस्यापीति** । तत्र 'कः कीदृशो धावति' इति प्रश्ने—श्वेत इति उत्तरम् । 'श्वा-इतः' इति छेदेन 'कः' इत्यस्योत्तरम्, श्वेत इति च्छेदेन 'कीदृशः' इत्यस्योत्तरमिदम् ॥ एवं 'केषां जनपदानां गन्ता को वा समर्थः' इति प्रश्ने उत्तरम्—**अलमित्यादि** । अलंबुसाः–देशविशेषाः । बुसानां-पलालवर्णानां याता–प्राप्तिमान् अलं–समर्थ इति चार्थः । **'पाता'** इति क्वचित्पाठः । 'पा–रक्षणे' इत्यस्य रूपम् ॥

**( सिद्धान्तभाष्यम् )**

**अथवा-इदं तावदयं प्रष्टव्यः—क्वेमे संवृतादयः श्रूयेरन्निति ?**

**आगमेषु ।**

**आगमाः शुद्धाः पठ्यन्ते ॥**

---

१ यद्यपीत्यस्य यदेत्यर्थः । अथवैतर्हीत्यस्य तदेत्यर्थ इत्यन्ये ॥ छा.॥

२ **रार्थे**–प्रतिज्ञायत इति शेषः ॥ छाया ॥

३ नन्वनेकमनुबन्धशतमित्यत्र पौनरुक्त्यमित्यत आह—**एकैकस्येति । तादृशाश्चेति** । चो भिन्नक्रमे । तादृशा अनेके, उच्चारणीयाश्चेत्यर्थः ॥ अत एव नेत्यस्योभयत्र संबन्धः । त्वया तु तथा करणीयमिति त्वत्पक्ष एव गौरवं नात्र पक्ष इति भावः ॥ छाया ॥

४ अत्र दोषमाह—**सिद्ध्यत्येवमिति** ॥ तथापीति शेषः ॥ छाया ॥

५ अयमिति शब्दः प. पुस्तके न दृश्यते ॥

६ एवं सति वर्णोपदेशस्य प्रयोजनद्वयमेव न तृतीयमित्याह—**एवमिति** ॥ छाया ॥

७ 'त्याह । कथम् । द्विगता' इति मुद्रितपाठः ॥

८ 'वाक्यानि द्विष्ठानि' इति अ. पाठः ॥

९ 'जनद्वयसम्पाद' इति मुद्रितपाठः ॥

१० वाक्यानां द्विष्ठत्वं प्रसाधयति—**तत्र क इत्यादिना** ॥

विकारेषु तर्हि ।
विकाराः शुद्धाः पठ्यन्ते[1] ॥
प्रत्ययेषु तर्हि ।
प्रत्ययाः शुद्धाः पठ्यन्ते[2] ॥
धातुषु तर्हि ।
धातवोऽपि शुद्धाः पठ्यन्ते ॥
प्रातिपदिकेषु तर्हि ।
प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते[3] ॥
यानि तर्ह्यग्रहणानि प्रातिपदिकानि ।

एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः । शशः षष इति मा भूत् । पलाशः पलाष इति मा भूत् । मञ्चको मञ्जक इति मा भूत् ॥

'आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः ।
उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः ॥ १ ॥'

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

**( प्रदीपः ) अथ वेति** । केवलानां वर्णानां लोके प्रयोगाभावात् धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद्दोषः ॥ **यानि तर्हीति** । डित्थादीनि ॥ **एतेषामपीति** । शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादित्वाच्च[4] साधुत्वाभ्यनुज्ञानात्सर्वेषामत्र सङ्ग्रहः सिद्धः ॥

**इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ १ ॥**

**( उद्द्योतः ) केवलानामिति** । एवं च कलादिदोषाणां न कुत्रापि प्रसक्तिरिति भावः ॥ भाष्ये—**यानि तर्ह्यग्रहणानीति** । कार्यविधावकृतानुवादानीत्यर्थः ॥ **उपदेश इति** । **'ङ्याप्प्रातिपदिकात्'**इत्यादावनुवादरूपेण ग्रहणमित्यर्थः । एतेन **'उद्देशश्च प्रातिपदिकानां नोपदेशः'** इति **'आदेच–'** इति सूत्रस्थभाष्यविरोध इत्यपास्तम् ॥ नन्वेवमतिप्रसङ्गः स्यादत आह—**शिष्टेति** । एवं **'संवृतादीनां प्रतिषेधः'**इत्यस्मिन् प्रत्याख्याते **'इष्टबुद्ध्यर्थः'** इत्यपि प्रत्याख्यातप्रायमेवेत्यलम् ॥

इति **शिवभट्टसुतसतीगर्भसंभवनागोजीभट्टेन** कृते **भाष्यप्रदीपोद्द्योते** प्रथमस्य प्रथमे **आद्यमाह्निकम्** ॥

इति वर्णोपदेशाधिकरणम् ।

**॥ इति प्रथमं पस्पशाह्निकम् ॥**

---

१ 'विकारा अपि' इति मुद्रितपाठः ॥
२ 'प्रत्यया अपि' इति मुद्रितपाठः ॥
३ 'प्रातिपदिकानि शुद्धानि' इति क. पाठः ॥
४ 'पृषोदरादीनाञ्च' इति क. ख. पाठः ॥
५ **अत्र**–अइउण्सूत्रादौ ॥
६ वार्तिकप्रयोजनमाह—**अत्राकारस्येति** ॥
७ वार्तिकोक्तविवृतोपदेश इत्यत्र सापेक्षत्वात्समासाभावमाशङ्क्य

# अथ द्वितीयं प्रत्याहाराह्निकम् ॥

## ( शिवसूत्रम् )

## अइउण् ॥ १ ॥

( व्यक्तिपक्षाधिकरणम् )

( २२ विवृतोपदेशप्रतिज्ञावार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अकारस्य विवृतोपदेश आकारग्रहणार्थः ॥ * ॥

( भाष्यम् )

अकारस्य विवृतोपदेशः कर्तव्यः ।
किं प्रयोजनम् ?
आकारग्रहणार्थः । अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात् ॥

**( प्रदीपः ) अइउण्** ॥ सर्ववर्णानविशेषेण विचार्य विशेषेणात्र[5] विचारः क्रियते—**अकारस्येति**[6] । अत्राकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याविवक्षितत्वाद्विभक्त्यनुत्पत्तिः । स्वरसन्धिस्तु न प्रवर्तते, वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात् । अत्राकारस्य संवृतत्वाद्दीर्घप्लुतयोर्विवृतत्वात्प्रयत्नभेदात्सवर्णसंज्ञाया अप्रसङ्गात् प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोतीति विवृतत्वमकारस्योपदिश्यते । विवृतस्य गुणस्योपदेशः–विवृतोपदेशः । तत्र[7] गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेऽपि समासः । यथा—देवदत्तस्य गुरुकुलमिति ॥ **आकारग्रहणार्थ इति** । 'विवृतोपदेश आकारग्रहणार्थः'[8] इति सामानाधिकरण्येन निर्देशादाकारग्रहणं विवृतोपदेशस्य प्रयोजनमिति सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम् ॥ **सवर्णग्रहणेनेति** । येन शास्त्रेण **'अणुदित्सवर्णस्य–'** इत्यनेन सवर्णा गृह्यन्ते, तेन कारणेनेत्यर्थः ॥

**( उद्द्योतः )** ननु चतुर्दशसूत्र्याः प्रयोजनमुक्तमेव तत्किं पुनरत्र तद्ग्रहणेनेत्याशङ्क्याह—**सर्वेति** ॥ **विशेषेण**–तत्तद्रूपेण ॥ प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह—**स्वरूपेणेति** । शब्दजन्यज्ञानविषयो हि शब्दस्यार्थः । एवं च स्वरूपमपि स्वजन्यबोधविषयत्वेनार्थः । अनुकार्यमर्थ इति तु स्पष्टमेव । एवं विद्यमानस्याप्यर्थवत्त्वस्याविवक्षितत्वात् **'अर्थवत्–'**सूत्रेऽग्रहणादित्यर्थः । स्वरूपस्य श्रोत्रगृहीतस्यैव शाब्दे भानोपपत्तौ न तत्र शक्तिः कल्प्या । अनुकार्यं[9] च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः । वृत्त्याऽर्थबोधकत्वं

---

समाधत्ते—**तत्र गुणस्येति** ॥
८ भाष्ये–'किं प्रयोजनम् ? आकारग्रहणार्थः' इति प्रश्नानुरूपमुत्तरन्नेत्याक्षिपन्नाह—**विवृतोपदेश इति** ॥
९ **अनुकार्यमिति** । अनुकरणमिति शेषः । तच्च कर्तृ । अनुकार्यानुकरणयोरभेदविवक्षायामिदम् ॥ नन्वेवमपीदृशार्थवत्त्वमादायैव तत्र ग्रहणं कुतो नात आह—**वृत्त्येति** ॥ **अपदं न प्रयुञ्जीतेति** निषेधस्तु अपरिनिष्ठितपरः ॥ छाया ॥

चार्थवत्त्वं '**अर्थवत्–**'सूत्रे निविष्टमिति भावः ॥ अनु[1]करणत्वभङ्गान्न विभक्तिरिति तत्त्वम्, सौत्र[2]त्वाद्वा । का[3]रप्रत्ययोऽपि बाहुलकान्न ॥ **स्वरसंधिस्त्विति** । सौत्रत्वात् संहिताया [4]अविवक्षणाद्वेति भावः ॥ '**अजादिसंज्ञानामनिष्पादात्**'इति तु चिन्त्यं, वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां 'सुध्युपास्यः' इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् । अन्यथा '**तुल्यास्यप्रयत्नं–**' इत्यादौ सवर्णदीर्घादि न स्या[5]त् ॥ **अत्र–**सू[6]त्रे ॥ [ '**तत्र**' इति पाठेऽप्ययमेवार्थः ॥ ] वाक्यापरिसमाप्तिन्यायेनेह ग्रहणकशास्त्राप्रवृत्तेः सावर्ण्येऽपि नात्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोऽत आह—**प्रदेशेष्विति** । '**अकः सवर्णे–**' इत्यादौ । तत्राप्यकारः संवृत एवेति भावः ॥ ननु विवृत[7]पदस्य गुणिपरत्वे सविशेषणत्वात्समासो न स्यादत आह—**विवृतस्य गुणस्येति** ॥ भाष्ये '**कर्तव्यः**' इत्यस्य '[9]प्रतिज्ञेयः' इत्यर्थः । [10]एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम् ॥ भाष्ये '**किं प्रयोजनम्**' इत्यत्र 'उद्दिश्य' इत्यध्याहारः, 'कर्तव्यः' इत्यनुषङ्गश्च ॥ नन्वाकारग्र[11]हणं सवर्णग्रहणमेवेति भेदाभावात्कथं तस्य करणत्वमत आह—**येन शास्त्रेणेति** ॥

## ( आक्षेपभाष्यम् )

**किं च कारणं न गृह्णीयात् ?**

**( प्रदीपः ) किं च कारणमिति** । आकृतिपक्षाश्रयेण ग्रहणकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात् सिद्धं ग्रहणमिति भावः । अत्र च ***निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्*** इति प्रथमा कृता । तेन 'कस्मात्कारणात्' इत्यर्थः संपद्यते ॥

**( उद्द्योतः )** नन्वाकृतिभेदात् कथं तत्पक्षेऽप्यकारेणाकारग्रहणमत आह—**आकारस्यापीति** । केवलकण्ठ्यत्वे सति स्वरत्वं–अत्वजातिव्यञ्जकमिति दीर्घप्लुतयोरपि सा–इति भावः ॥ प्रातिपदिकार्थमात्रे प्रथमायां यथाश्रुतेऽन्वयो न जायतेऽत आह—**अत्र चेति** ॥

## ( समाधानभाष्यम् )

**विवारभेदात् ॥**

**( प्रदीपः )** 'विवारभेदात्' इत्यत्र तु कारणश[12]ब्दस्य प्रयोगाभावात् प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावात् 'विभाषा गुणेऽस्त्रियाम्' इति पञ्चमी विहिता ॥ विवारयति–विकासयति आस्यमिति–विवारः प्रयत्नः । व्यक्तिपक्षे ग्रहणकशास्त्रारम्भाद्दोषापत्तिः ॥

**( उद्द्योतः )** उत्तरेऽपि तर्हि प्रथमा कुतो नेत्यत आह–**प्रयोगाभावादिति** । निमित्तादिशब्दप्रयोगाभावेऽपि तदर्थे गम्यमाने स्यादेव विभक्तिरत आह—**प्रायग्रहणादिति ॥ विभाषा गुणे इति** । '**निमि[13]त्त–**' इत्यादिवार्तिके 'सर्वासां' इत्येतन्न पञ्चमीतृतीयाविधायकं, किं तु '**हेतौ**' इति '**विभाषागुण–**' इति सिद्धयोस्तयोरन्याभिरबाधायानुवादकमेवेति भावः ॥ **विवारयतीति** । [14]स चाभ्यन्तरप्रयत्नः ॥ **दोषापत्तिरिति** । दण्डाढकमित्यादौ दीर्घानापत्तिदोष इत्यर्थः ॥

---

१ भेदविवक्षायामाह—**अनुकरणेति** ॥

२ अनेन सूत्र एव तथा प्रयोगो नान्यत्रेति सूचितम् । अन्यथा निपातनादिति वदेत् । एतेन–छन्दोवदित्यतिदेशाद्विभक्तेर्लुगिति, चादिषु पाठेन निपातत्वेनाव्ययत्वाद्विभक्तेर्लुगिति चापास्तम् ॥ वस्तुत इयमेवमानुपूर्वीका श्रुति**रेवेति सुपा**मिति लुगिति तत्त्वम् ॥ छाया ॥

३ यद्यमी वर्णाः, कारप्रत्ययः कस्मान्न भवति ? उच्यते–**वर्णात्कार** इत्यस्य नायमर्थो वर्णादुच्चार्यमाणात्कारः प्रत्ययो भवतीति । एवंहि विज्ञायमाने ककार इत्यादावुच्चार्यमाणस्याज्झल्समुदायस्यावर्णत्वात्कारप्रत्ययो न स्यात् । किं तर्हि, निर्देश इत्यनुवृत्तेर्यस्योच्चार्यमाणस्य प्रयोगस्थो वर्णो निर्देश्यः प्रतिपाद्यस्तस्माद्वर्णाद्वर्णस्य प्रतिपादकात् कारप्रत्यय इत्यर्थः ॥ अत्र चानुपूर्वीसम्पादन एव तात्पर्यम्, नतु कविपुत्र इत्यादिषु दृष्टानामकारादीनां प्रतिपादन इति कारप्रत्ययाभाव इति ॥ प. म. श. कौ. ॥

४ ननूक्तरीत्या सुपोऽभावेनावाक्यत्वाद्वाक्यीयाऽविवक्षा कथमत्रेति चेत् । तत्र परिनिष्ठितत्वेन सुबन्तपदतुल्यपरिनिष्ठितसमूहस्यापि वाक्यत्वेन ग्रहणेनादोषात् ॥ छाया ॥ **सुपा**मिति लुक्पक्षे तु सर्वमवदातम् ॥

५ एतेन—यदि तु वर्णोपदेशकाले इत्यस्यैवान्वयेन तदा संधिवारणपर एव कैयटः । अनन्तरं तु तद्वारणमुक्तरीत्या स्पष्टम्—अविवक्षितत्वादिति प्रागुक्तायामुदाहृतमित्युपेक्षितमित्युच्यते तदा सम्यगेव कैयटः ॥ इति छाया ॥

६ [ ] चिह्नगतोंऽशो न घ. पुस्तके ॥

७ **विवृतपदस्येति** । विवृतपदस्य विवृतगुणविशिष्टपरत्वे 'अकारस्य' इति तद्विशेषणमिति सविशेषणानां वृत्तिर्नेति दोषः । गुणमात्रपरत्वे तु 'अकारस्य' इति विशेषणं न सम्भवतीति न दोषः ॥

८ तस्येतरव्यावर्तकत्वमात्रेण तत्त्वेन तद्वैशिष्ट्यादित्यर्थः ॥ छा. ॥

९ न चात्र पक्षेऽकारस्य विवृतस्योच्चारयितुमशक्यत्वेनाननुष्ठेयतया विधिवैयर्थ्यमिति वाच्यम्, करोतिना प्रतिज्ञानस्य लक्षणात् । अत एव विधित्वेऽपि संदेहोपपत्तिरिति ध्वनयन्नाह—**प्रतिज्ञेय इति** ॥ छाया ॥

१० 'कर्तव्यः' इत्यस्य 'प्रतिज्ञेयः' इत्यर्थपरकव्याख्याने बीजमाह–**एतेनेति** । विवृतपदस्य गुणमात्रपरत्वे गुणमात्रस्योपदेशः कर्तव्य इति भाष्यार्थः, स च नोपपद्यते, गुणमात्रोच्चारणासम्भवात् । प्रतिज्ञेय इत्यर्थकरणे तु नासङ्गतिरिति ॥

११ 'आकारग्रहणं सवर्णग्रहणं सवर्णग्रहणमेवेति' इति **ग.** पाठः ॥

१२ 'शब्दप्रयोगा' इति ख. पाठः ॥

१३ ननु 'विवारभेदात्' इति भाष्ये सर्वनाम्नोऽभावात् प्रथमाद्वितीययोरभावेऽपि पञ्चमी 'निमित्तकारण–' इत्यादिनैव कथं प्रदीपे नोक्तेत्यत्र बीजमाह—**निमित्तेत्यादि वार्तिक इति** । एवञ्च 'विभाषा गुणे–' इति विहितपञ्चम्यनुवादकत्वात्तस्य तद्वार्तिकेन पञ्चम्यत्र नोक्तेति भावः ॥

१४ तावतापि तस्य बाह्ये प्रसिद्धेस्तस्य सवर्णसंज्ञायामग्रहादनुपपत्तिरेवात आह—**सचेति** । तथाच विवारपदं विवृतपरं, तेन भेदादित्यर्थः । **कर्तृकरणे** इति समासः ॥ छाया ॥

( प्रत्याक्षेपभाष्यम् )

**किमुच्यते—विवारभेदादिति, न पुनः कालभेदादपि । यथैव ह्ययं विवारभिन्नः, एवं कालभिन्नोऽपि ?**

( प्रदीपः ) व्यक्तिपक्षे भेदान्तरसद्भावादाह—**किमुच्यत इति** ॥

( उद्द्योतः ) ननु प्रयत्नभेदेऽपि जातिसद्भावात्स्यादेव ग्रहणमत उक्तम्—**व्यक्तिपक्ष इति** ॥

( समाधानभाष्यम् )

**सत्यमेवमेतत्[1] । वक्ष्यति—"तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्रास्यग्रहणस्य प्रयोजनम्—आस्ये येषां तुल्यो देशः प्रयत्नश्च, ते सवर्णसंज्ञा भवन्तीति । बाह्यश्च पुनरास्यात्कालः । तेन स्यादेव कालभिन्नस्य ग्रहणम्, न पुनर्विवारभिन्नस्य ॥**

( प्रदीपः ) **बाह्यश्चेति** । प्रयत्नाभिनिर्वृत्तत्वात्कालस्य प्रयत्नत्वमभ्युपगम्य[2] बाह्यत्वेन परिहारः । प्रसिद्धपरिमाणवस्त्वन्तरगतपरिच्छेदकक्रियान्तरापेक्षणात्कालव्यवहारस्य बाह्यत्वं कालस्य । यथा—व्रीहेः प्रस्थादिव्यवहारः परिमाणद्रव्यकृतः, एवं[3] मात्रादिव्यपदेशो निमेषादिक्रियाकृतः ॥ अथवा नाभिप्रदेश एव विशिष्टप्रयत्नारम्भाद्दीर्घादिनिष्पत्त्या नाभेश्चास्याद्बाह्यत्वात्कालस्य बाह्यत्वम् । विवृतत्वादीनां[4] त्वास्यवर्तिप्रयत्ननिष्पाद्यत्वादाभ्यन्तरत्वम् । द्रुतादिवृत्तयस्तु यथा न भेदिकास्तथा **तपर**सूत्रे वक्ष्यते ॥

( उद्द्योतः ) ननु कालस्य व्यापकत्वात् बाह्यत्वेन समाधानमयुक्तम्, किं च कालो न प्रयत्न इति तद्भेदे कथं सवर्णत्वाप्राप्तिरत आह—**प्रयत्नाभीति** ॥ बाह्यत्वं व्युत्पादयति—**प्रसिद्धेति** । प्रसिद्धपरिमाणं यद्वस्त्वन्तरगतं परिच्छेदकक्रियान्तरं परिच्छेद्यक्रियापेक्षयाऽन्यत्, तदपेक्षणादित्यर्थः । एवं च बाह्यपरिच्छेदकक्रियापेक्षया बाह्यत्वोक्तिरिति भावः । क्रियैव कालः, नातिरिक्त इति मते इदम् ॥ 'अतिरिक्तः क्षणसमूहः कालः' इति मते परिहरति—**अथ वेति** । अयं भावः—नाभिप्रदेशावच्छिन्नयत्नेन प्रेरितो वायुस्तत्तत्स्थानाभिघातोत्तरं वर्णाभिव्यञ्जक इति शिक्षादौ[5] स्पष्टम् । वायोरल्पत्वाधिक्यानि च ह्रस्वत्वदीर्घत्वादिरूपकालव्यञ्जकानीति ॥ ननु ह्रस्वदीर्घयोः कालभेदात् 'अतो भिस—' इत्यादौ दीर्घाग्रहणवद्विलम्बितवृत्त्योच्चारितस्य ह्रस्वाकारस्यापि द्रुतमध्यापेक्षया कालाधिक्यात् ऐस्भावविधायके ग्रहणानापत्तिरत आह—**द्रुतादीति** ॥

( आक्षेपभाष्यम् )

**किं पुनरिदं विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते, आहोस्वित् संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते ?**

( प्रदीपः ) **किं पुनरिति** । किं सूत्रकारेणैव विवृतोपदेशः कृतो वार्तिककारेण तु तस्य प्रयोजनमुक्तम्, अथवाऽकृत एव विवृतोपदेशो वार्तिककृता कर्तव्यत्वेनोपन्यस्त[6] इति **प्रश्नः** । दुरवधारत्वादुपदिष्टो[7] विवृतो व्याख्यानेन विना न शक्यते ज्ञातुमिति प्रत्यक्षेऽप्यकारे प्रश्नोऽयं नासमञ्जसः ।

( उद्द्योतः ) 'उपदिश्यमानस्य' इत्यत्र वार्तिककृतः कर्तृत्वे पक्षयोर्भेदो न स्यादत आह—**किं सूत्रकारेणेति** । सूत्रकारः—महेश्वरः । वेदे[8]पुरुषो वा, **'येनाक्षरसमाम्नायम्'** इत्याद्यैतिह्यादित्याहुः[9] ॥ ननु प्रत्यक्षतोऽकारे श्रुते तद्गतगुणस्यापि ज्ञातत्वात्प्रश्नोऽयमसङ्गतोऽत आह—**दुरवधारत्वादिति** । विवृतत्वादीनां श्रोत्रेन्द्रियग्राह्यत्वाभावादिति भावः ॥

( समाधानभाष्यम् )

**विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते ॥ कथं ज्ञायते ?**

**यदयम्—"अ अ"—इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति ॥**

( प्रदीपः ) तत्र प्रत्यापत्त्या पूर्वः[10] पक्ष आश्रितः । अन्यथा[11] शास्त्रान्ते प्रत्यापत्तिवचनमनर्थकं स्यात्, स्वरूपप्रच्यवाभावात् ॥

( उद्द्योतः ) **अन्यथा**—संवृतत्वे । स्वरूपप्रच्यवे हि पुनः संवृतविधानं युक्तं स्यादिति भावः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ?**

**अतिखट्वः[12]—अतिमालः—इत्यत्रान्तर्यतो विवृतस्य**

---

१ 'सत्यमेव तत्' इति क. पाठः ॥

२ 'पगम्य शङ्का, बाह्यत्वेन' इति क्वचिन्मुद्रितपाठः । प्रयत्नाभिनिर्वृत्ते प्रयत्नव्यवहारः, तेन कालः प्रयत्नः । द्विमात्राकालो वर्णः प्रयत्नविशेषेणैवाभिव्यज्यत इति कालस्यापि तत्त्वमिति ॥

३ 'एवमत्रापि' इति मुद्रितपाठः ॥

४ 'दीनां चास्य' इति ख. पाठः । तत्रापि चस्त्वर्थः ॥

५ 'आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णाञ्जनयते' इत्यादि ॥

६ 'चोद्यत्वेन' इति ख. पाठः ॥

७ 'दिष्टोऽपि' इति क. ख. पाठः ॥

८ सिद्धान्तमतेनाह—**वेदेति** ॥ छाया ॥

९ कर्तृस्मरणादाह—**त्याद्यैतिह्यादिति** ॥ छाया ॥

१० **पूर्व इति** । प्रथम इत्यर्थः ॥ छाया ॥

११ भाष्ये **'यदयम्'** इत्यनेन लिङ्गत्वेनोक्तप्रत्यापत्तेस्तत्त्वमुपपादयति—**अन्यथेति** ॥ छाया ॥

१२ **अतिखट्व इति** । स्त्रीप्रत्ययाकारस्य विवृतस्य स्थाने जायमानो यो ह्रस्वोऽकारः स विवृत एव सावर्ण्याद्भवति, तस्य च संवृतताप्रतिपत्त्यर्थं 'अ-अ' इति सूत्रं सार्थकमिति न ज्ञापकं भवतीत्याशयः ॥

विवृतः प्राप्नोति, संवृतः स्यादित्येवमर्था प्रत्यापत्तिः ॥

**( प्रदीपः ) अस्ति ह्यन्यदिति ।** प्रयोग एव प्राप्ते विवृतत्वे संवृतत्वप्रत्यापत्तिः स्यादिति—अज्ञापकमेतदित्यर्थः ॥ नन्विहासति विवृतोपदेशे सावर्ण्याभावादकारेणाकारस्याग्रहणादच्त्वाभावात्कथमतिखट्व इति ह्रस्वः? नैष दोषः, 'उदीचामातः स्थाने–' इति ज्ञापकाद्ध्रस्वत्वाकारस्य ह्रस्वः ॥

**( उद्द्योतः ) प्रयोग एवेति ।** 'अतिखट्वः' इत्यादिप्रयोगे ह्रस्वेनान्तरतम्याद्विवृतोऽकारः प्राप्तः संवृत एव भवत्वित्यर्थं प्रत्यापत्तिवच इति भावः ॥ **नन्विति ।** **'अचश्च'** इत्युक्तेरच एव ह्रस्वत्वेन भाव्यमिति भावः । **'गोस्त्रियोः'** इत्यत्रैतद्वारणार्थमेवोपस्थितिः स्यादिति तात्पर्यम्[१] ॥ **उदीचामात इति ।** न च **'आपोऽन्यतरस्याम्'** इति ह्रस्वे चरितार्थमिदम् । न चात्राच्परिभाषोपतिष्ठते, फलाभावादिति वाच्यम् । शास्त्रस्याल्पविषयतापत्तेः, गोशब्दसाहचर्येण स्वांशेऽपि **'अचश्च'** इत्यस्याप्रवृत्तेश्च । तदंशे[२] हि फलाभावान्न प्रवर्तते—इति दिक्[३] ॥

**( समाधानसाधकभाष्यम् )**

**नैतदस्ति[४] । नैव लोके न च वेदेऽकारो विवृतोऽस्ति ।**

**कस्तर्हि ?**

**संवृतः, योऽस्ति स भविष्यति ।**

**तदेतत्प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति–'विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते' इति[५] ॥**

**( प्रदीपः ) नैतदिति[६] ।** प्रयुक्तानामनुशासनात् प्रयोगे च विवृतस्याकारस्याभावात्[७] संवृत एव भविष्यतीति प्रत्यापत्तिर्ज्ञापिकैव ॥

**( आक्षेपभाष्यम् )**

**कः पुनरत्र विशेषः--विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायेत, संवृतस्योपदिश्यमानस्य वा विवृतोपदेशश्चोद्येतेति ?**

**( प्रदीपः ) कः पुनरिति ।** 'विवृतोपदेशः[८]' इत्यत्र 'कृतः' इति वा 'कर्तव्यः' इति वा वाक्यशेषाध्याहारे न कश्चिद्विशेष इत्यर्थः ॥

**( उद्द्योतः )** नन्वाद्यपक्षे प्रयोजनान्वाख्यानमात्रपरत्वं, द्वितीये विवृतोपदेशपरत्वमपि–इति विशेषस्य स्पष्टत्वात्–अत आह—**विवृतोपदेश इत्यत्रेति ॥**

**( समाधानभाष्यम् )**

**न खलु कश्चिद्विशेषः । आहोपुरुषिकामात्रं तु भवानाह—'संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते' इति । वयं तु ब्रूमः—'विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते' इति ॥**

**( प्रदीपः ) आहोपुरुषिकेति ।** अहो अहं पुरुष इत्यहङ्कारवान्–अहोपुरुषः, तस्य भाव इति मनोज्ञादित्वाद्वुञ् । अहंकारवत्त्वमित्यर्थः ॥

**( उद्द्योतः ) 'आहोपुरुषिका'** इत्यत्र वुञः प्राक् **मयूरव्यंसकादित्वात्समासः ।** **अहो** इति–अहमित्यर्थे । तत्र[९] प्रयोजनान्वाख्यानमित्येव ज्यायः, प्रत्यापत्तेः । अकर्तृके[१०] आज्ञापादनाभावाच्चेत्याहुः ॥

**( २३ धात्वादिषु विवृतत्वप्रतिज्ञावार्तिकम् ॥ २ ॥ )**

**॥ * ॥ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ॥ * ॥**

**( भाष्यम् )**

**तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि[११] विवृतोपदेशः कर्तव्यः ॥**

**क्वान्यत्र[१२] ?**

**धातुप्रातिपदिकप्रत्ययनिपातस्थस्य ॥**

**किं प्रयोजनम् ?**

**सवर्णग्रहणार्थः । आक्षरसमाम्नायिकेनास्य ग्रहणं यथा स्यात् ॥**

**किं च कारणं न स्यात् ?**

**विवारभेदादेव ॥**

---

१ ननु गोस्त्रियोरिति सूत्रे 'अचश्च' इति परिभाषा नोपतिष्ठते, गोशब्दे स्त्रीप्रत्ययान्तेषु च 'अलोऽन्त्यस्य' इत्यनेनान्त्यस्य ह्रस्वेनेष्टसिद्धेरित्याशङ्कायामाह—**गोस्त्रियोरित्येति** । आकारस्याच्त्वाभावाद्ध्रस्वाभाव एव तत्परिभाषोपस्थितिः फलमिति भावः ॥

२ **तदंशे**–गोशब्दांशे फलाभावात् 'अचश्च' इति परिभाषा न प्रवर्तते ॥

३ दिगर्थस्तु **'आपोऽन्यतरस्याम्'** इत्यस्यैवोदाहरणत्वमस्तु भाष्यस्यातिखट्वादेरुपलक्षणत्वात् । पूर्वपक्ष्युक्तित्वेन तथोक्तौ न बाधकम् । तावतापि सिद्धान्ताहानिश्चेति ॥ छाया ॥

४ ज्ञापकस्यान्यथासिद्धिं निरस्यति—भाष्ये—**नैतदिति** । 'युक्तम् । यतः' इति शेषः ॥ छाया ॥

५ इत्यत्रेत्यर्थः ॥ छाया ॥

६ बहुषु पुस्तकेषु प्रायः 'नैव लोके इति' इति प्रतीकं दृश्यते । असत्संगृहीतप्रामाणिकपुस्तकद्वये **'नैतदिति'** इति प्रतीकम् । उचितञ्चैतत्, ज्ञापकस्यान्यथासिद्धिनिरसनपरस्यास्य ग्रन्थस्य सत्वात् ।

७ आन्तर्यस्यासंभवप्रसक्त्वादिति भावः ॥ छाया ॥ 'कारस्यासंभवात्सं–' इति मुद्रितपाठः ॥

८ वार्तिके–अकारस्य विवृतोपदेश इत्यत्र ॥

९ **तत्र**–तयोः पक्षयोर्मध्ये । 'अ अ' इतिसूत्रप्रत्यापत्तेः प्रयोजनान्वाख्यानपक्ष एव ज्यायान् ॥

१० **अकर्तृक इति ।** अइउणादिसूत्राणां वेदत्वेन तस्य कर्तुरभावात्कर्तव्योपदेशो न घटत इति भावः ॥

११ अन्यत्र विद्यमानस्यापीत्यर्थः ॥ छाया ॥

१२ कुत्रान्यत्र विद्यमानस्येत्यर्थः । एतेन प्रश्नोत्तरयोरनानुरूप्यमित्यपास्तम् ॥ छाया ॥

( प्रदीपः ) **तस्येति** । यदा प्रत्याहारे विवृतोऽकार उपदिष्टस्तदा प्रयत्नभेदात्तेन संवृतस्याकारस्य ग्रहणाभावादच्कार्यं न स्यादिति तत्सिद्धये सर्वस्याकारस्य विवृतत्वं कर्तव्यमित्यर्थः । तेन 'शाम्यति'इत्यादौ दीर्घादि सिध्यति ॥ **ननु** च सर्वेषामकाराणां यत्सामान्यं तदनुकरणमत्राकारः । तस्य च विवृतत्वे प्रतिज्ञायमाने सर्वेषां तत्प्रतिज्ञातं भवतीति किमुच्यते—'तस्य विवृतोपदेशात्' इति ? एवं तर्हि यदा कस्यचिदेवाकारस्येदमनुकरणं-स्वरूपपदार्थको वाऽकारस्तदेदमुच्यत इत्यदोषः ॥

( उद्द्योतः ) प्रत्यापत्त्या 'अइउण्' इत्यत्रैव प्रक्रियादशायां सर्वत्राकारो विवृतः प्रतिज्ञात इत्यजानन् शङ्कते—भाष्ये—**तस्य विवृतोपदेशादिति** । तस्येत्यस्य वर्णसमाम्नायस्थस्येत्यर्थः ॥ **संवृतस्येति** । धात्वादिस्थस्येत्यर्थः ॥ ननु 'अइउण्' इत्यादौ कस्यानुकरणमित्यत्र विनिगमकाभावादाह—**स्वरूपपदेति**[1] । स्वरूपपदार्थकत्वं यथा तथोक्तम् ॥ भाष्ये—**विवारभेदादिति** । प्रयत्नभेदादित्यर्थः ॥ ग्राहकस्य विवृतत्वात् ग्राह्यस्य संवृतत्वादिति भावः ॥

( धात्वादिषु ज्ञापकेन विवृतत्वसाधकभाष्यम् )

**आचार्य[2]प्रवृत्तिर्ज्ञापयति-भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति । यदयम् "अकः सवर्णे दीर्घः" इति प्रत्याहारे[3]ऽको ग्रहणं करोति ।**

**कथं कृत्वा ज्ञापकम् ?**

**न हि द्वयोराक्षरसमाम्नायिकयोर्युगपत्समवस्थानमस्ति ॥**

( प्रदीपः ) **यदयमिति** । अत्र हि ककारेण चिह्नेन प्रत्याहारस्थो विवृतो निर्दिष्टः, तेन च संवृतस्याग्रहणे '**इकः सवर्णे**–' इति वक्तव्यम् ॥ **न हि द्वयोरिति** । यद्यप्येकोऽपि विवृतो नास्ति, तथापि ह्यधिष्ठानत्वादेकादेशस्य 'द्वयोः' इत्युक्तम् ॥

(उद्द्योतः) (भाष्ये) **प्रत्याहारे इति** । संग्राहके[4] शास्त्र इत्यर्थः ॥ **वक्तव्यमिति** । एवंच प्रयत्नभेदेनासवर्णस्यापि अत्वजात्याक्रान्तस्य विवृतेनाकारेण ग्रहणं ज्ञाप्यत इत्यर्थः ॥ **यद्यप्येकोऽपीति** । प्रत्यु[5]चारणं वर्णान्यत्ववादाक्षरसमाम्नायिकस्य प्रयोगेऽभावादिति भावः ॥ '**आदिरन्त्येन**'[6] इत्यस्य चान्त्यसदृशेन सहोच्चार्यमाण आदिसदृश इत्यर्थः[7] । तत्र ककारादिचिह्नेनागादिशब्दस्थस्तत्सदृशत्वाद्विवृत एव । सादृश्यं च व्यक्तिभेदे सति सर्वधर्मसाम्यप्रयुक्तं ग्राह्यम् । तस्य च प्रयोगस्थेऽभावेऽप्यनेन तद्ग्रहणं ज्ञाप्यत इति तात्पर्यम् ॥ **केचित्तु**[8] 'देवदत्त अजस्ति' इत्यादौ प्रत्याहारलिङ्गेनैक आक्षरसमाम्नायिकोऽस्ति, तदर्थं भाष्ये '**द्वयोः**' इत्युक्तमित्याहुः ॥ भाष्ये–**युगपत्समवस्थानमित्यस्य** '**प्रयोगे**'[9] इत्यादिः ॥

( विवृतत्वसाधकज्ञापकविघटनभाष्यम् )

**नैतदस्ति[10] ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ।**

**किम् ?**

**यस्या[11]क्षरसमाम्नायिकेन ग्रहणमस्ति, तदर्थमेतत्स्यात्-खट्वाढकं, मालाढकमिति । सति प्रयोजने न ज्ञापकं भवति । तस्माद्विवृतोपदेशः कर्तव्यः ॥**

( प्रदीपः ) **नैतदिति** । 'अक्' इत्यकारेण विवृतेन दीर्घस्य विवृतस्य ग्रहणादज्ञापकमेतदित्यर्थः ॥

( आक्षेपभाष्यम् )

**क[12] एष यत्नश्चोद्यते-विवृतोपदेशो नाम । विवृतो वोपदिश्येत, संवृतो वा । को[13]ऽत्र विशेषः ?**

---

१ **स्वरूपपदार्थकत्वमिति** । अइउण्सूत्रघटकाकारस्य तज्जन्यबोधविषयं अकारस्य स्वरूपमिति सोऽपि तस्यार्थ इति 'अकारस्य विवृतो–' इति वार्तिकविवरणप्रसङ्गे उक्तम् ॥

२ यक्षानुरूप इति न्यायेन तस्यातत्त्वेपि तेन ग्रहणं ज्ञापकात्सिध्यतीत्याशयेनैकदेशी समाधत्ते—**आचार्येति** ॥ छाया ॥

३ **प्रत्याहारे** आर्षमेकत्वम् । तेषां **मध्ये** ॥ अकः करूपचिह्नबललब्धविवृताकारस्येत्यर्थः ॥ छाया ॥ अत्र **प्रत्याहारे**–वर्णानां प्रतिपादनाय प्रत्याहारग्रहणे प्रसक्ते सतीत्यर्थ इति केचिदाहुः ॥

४ ननु भेदाभावात् 'प्रत्याहारेऽकः' इत्यनुपपन्नमत आह—**संग्राहकेति** ॥ लक्षण इति भावः ॥ छाया ॥

५ 'यद्यप्येकोऽपि विवृतो नास्ति' इति प्रदीपाशयं वर्णयति—**प्रत्युच्चारणमिति** । ककारादिलिङ्गाभावात्प्रयोगस्थो न समाम्नायस्थ इति भावः ॥

६ प्रत्युच्चारणं वर्णान्यत्वपक्षे सूत्रार्थमुपपादयति—**आदिरिति** ॥

७ **आदिना**ऽनुबन्धान्यमध्यगानां स्वस्य च संज्ञा स्यादित्यस्य परिग्रहः ॥ छाया ॥

८ कैयटदण्डिकृष्णरत्नकृदाद्युक्तावसांगत्यं ध्वनयितुं 'द्वयोः'इति भाष्यस्यान्याभिप्रायमाह—**केचिदिति** । भाष्यतत्त्वविद इत्यर्थः । बहुभिरनुक्तत्वात्केचिदित्युक्तम्, न त्वरुचिसूचकं तदिति भावः ॥ छाया ॥ कैयटोक्तप्रयोजनापेक्षया भिन्नं 'द्वयोः' इति पदप्रयोजनमाह—**केचिदिति** । 'देवदत्त अच् अस्ति' इति प्रयोगे 'अच्'पदघटकोऽकारश्चकारेण लिङ्गेन वर्णसमाम्नायस्थाकारसदृश इत्यर्थः । अत्र राजलक्ष्मीटिप्पणे–'परे तु कादिचिह्नैस्तत्सदृशत्वेऽपि तत्वाभावादिदं न युक्तियुक्तमित्याहुः' इति वदन्ति । तत्प्रौढिवादमात्रमपि प्रामादिकमेव । प्रत्युच्चारणं शब्दो भिद्यत इति स्वीकारे ककारादिचिह्नेनागादिशब्दस्थस्तत्सदृशत्वादेव विवृत इति ज्ञायते, तथा 'देवदत्त अजस्ति' इति प्रयोगस्थस्य चकारादिचिह्नैस्तत्सदृशत्वे सिद्धे तत्त्वाभाववचनन्त्वकिञ्चित्करमबोधकञ्चेति विदाङ्कुर्वन्तु ॥

९ **प्रयोग इति** । एकत्रेत्यादिः ॥ छाया ॥

१० पूर्वपक्षी ज्ञापकं विघटयति—**नैतदिति** ॥ छाया ॥

११ **यस्येति** । धात्वादिषु विवृताकारप्रतिज्ञाऽभावेऽपि वर्णसमाम्नायस्थविवृताकारेण दीर्घस्य विवृतस्य ग्रहणं स्यादिति 'अकः सवर्णे–' इति सूत्रेऽग्ग्रहणं 'खट्वाढकं' इत्यादौ चरितार्थमिति न ज्ञापकमिति विवृतोपदेश आवश्यक इत्याशयः ॥

१२ एकदेशी शङ्कते—**क एष इति** । उभयथोच्चारणेऽपि गौरवाभाव इत्याशयः ॥

१३ धात्वादौ विवृतसंवृतयोरन्यतरोच्चारणे न कोऽपि विशेष इत्यर्थः ॥ छाया ॥ **विशेष इति** । धात्वादिस्थाकारपठनवेलायां स संवृतो विवृतो वा पठनीय इति फलविशेषाभावेन कर्तव्यांशः कोऽत्रेति प्रश्नाशयः ॥

**( प्रदीपः ) क एष यत्न इति ।** धात्वादयः पठिताः, तत्राकारो विवृतः पठ्यताम्, न किंचिद्गौरवं भवति, तत्किमुच्यते—'अन्यत्रापि विवृतोपदेशः कर्तव्यः' इति **प्रश्नः ॥**

**( समाधानभाष्यम् )**

**स एष सर्व एवमर्थो यत्नः—यान्येतानि प्रातिपदिकान्यग्रहणानि तेषामेतेनाभ्युपायेनोपदेशश्चोद्यते, तद्गुरु भवति । तस्माद्वक्तव्यम्—'धात्वादिस्थश्च विवृतः' इति ॥**

**( प्रदीपः ) यानीति ।** प्रतिपदपाठस्याशक्यत्वात् **'तस्य विवृतोपदेशात्–'** इत्यनेन सर्वस्याकारस्य विवृतोपदेशः कार्यतया चोद्यत इत्यर्थः ॥ **धात्वादिस्थ इति ।** अग्रहणप्रातिपदिकार्थे विवृतत्वेऽवश्यचोदनीये धात्वादिस्थस्यापि संवृतस्यैव पठितस्य कार्यार्थं विवृतत्वं प्रतिज्ञेयम् । अन्यथा दोषरूपविवृतोच्चारणे प्रयत्नगौरवं स्यात् ॥

**( उद्द्योतः )** (भाष्ये) **एवमर्थ इति ।** वृत्तावेवंशब्दः प्रकारवति वर्तते–इति बहुव्रीहिः ॥ **प्रातिपदिकानीति ।** धातुप्रत्यययोरप्युपलक्षणं बोध्यम् । सर्वाण्यग्रहणानि प्रातिपदिकादीनि विवृताकारयुक्तानि पठनीयानीत्यर्थः ॥ **तद्गुरु भवति तस्मादिति ।** यतः सर्वोच्चारणं गुरु, अतो धात्वादिस्थ इति वाच्यमित्यर्थः ॥ ननु धातूनां बहुधा पाठात् 'धात्वादि–' इति अयुक्तमत आह—**अग्रहणेति ।** प्रातिपदिकेत्युपलक्षणम् ॥ **धात्वादिस्थस्यापीति ।** पठितधात्वादिस्थस्यापीत्यर्थः । एतेन 'अग्रहणधात्वादि' इत्येव वक्तुमुचितमित्यपास्तम् ॥ **संवृतस्यैवेति ।** एवंच धात्वादिस्थश्च विवृतवत् कार्यं लभत इत्यतिदेशोऽयमिति भावः ॥ **अन्यथेति ।** गुणोच्चारणाद्दोषोच्चारणे यत्नाधिक्यमिति भावः ॥

**( २४ एकदेशिनः प्रयोजनान्तरवार्तिकम् ॥ ३ ॥ )**

**॥*॥दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः॥*॥**

**( भाष्यम् )**

**दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थो विवृतोपदेशः कर्तव्यः, दीर्घप्लुतौ संवृतौ मा भूतामिति । वृक्षाभ्याम्, देवदत्ता ३ इति ॥**

**( प्रदीपः )** विवृतत्वप्रतिज्ञाने प्रयोजनान्तरमाह–**दीर्घेति ।** असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य स्थाने सावर्ण्यात्संवृतयोरेव दीर्घप्लुतयोः प्रसङ्ग इत्यर्थः ॥

**( सिद्धान्तिनो निराकरणभाष्यम् )**

**नैवं लोके न च वेदे दीर्घप्लुतौ संवृतौ स्तः । कौ तर्हि ?**

**विवृतौ । यौ स्तस्तौ भविष्यतः ॥**

**( प्रदीपः ) नैव लोक इति ।** असत्यपि सावर्ण्ये लिङ्गादकारस्य संवृतस्य विवृतौ दीर्घप्लुतौ भविष्यतः, यदिदं **'अतो दीर्घो यञि' 'अतो रोरप्लुतादप्लुते'** इत्याहेति भावः ॥

**( उद्द्योतः )** ननु संवृतयोस्तयोरभावेऽपि संवृतस्य विवृतौ न स्यातामेव, आन्तरतम्याभावात् । न च–इको यण् इव–एच इक् इवानन्तरतमावपि भविष्यतः । सामर्थ्येन तत्र तथाऽङ्गीकारेऽपि खट्वाढकमित्यादौ चरितार्थस्य **'अकः सवर्णे'** इत्यादेर्विषये तथा कल्पने मानाभावादत आह—**असत्यपीति ॥ सावर्ण्ये इति ।** आन्तरतम्ये इत्यर्थः । एवं च **'अतो दीर्घ–'** इति, **'अतो रोः–'** इत्यत्राप्लुतादिति अतो विशेषणं च सामान्यापेक्षं ज्ञापकमिति भावः ॥

**( एकदेशिप्रयोजनसाधकं श्लोकवार्तिकम् )**

*** स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् । ***

**( भाष्यम् )**

**संवृतः स्थानी संवृतौ दीर्घप्लुतौ प्रकल्पयेत् । अनुस्वारो यथा यणम् । तद्यथा–सँय्यन्ता, सँव्वत्सरः, यँल्लोकं, तँल्लोकमिति—अनुस्वारः स्थानी यणमनुनासिकं प्रकल्पयति ॥**

**( उद्द्योतः )** संवृतदीर्घादिवदनुनासिकयवलानामपि वेदलोकयोरसत्त्वं मन्यमान आह—भाष्ये–**स्थानी प्रकल्पयेदित्यादि ॥**

१ सिद्धान्ती तदुत्तरमाह—**स एष इति ॥** छाया ॥

२ 'यत्नः क्रियते यान्ये' इति क. पाठः ॥

३ प्रतिपत्त्याश्रयणप्रयुक्तगौरवं चेत्यपि बोध्यम् ॥ छाया ॥

४ ननु एवंशब्दस्य प्रकारवाचितया सामानाधिकरण्याभावेन कथं समासोऽत आह—**वृत्ताविति ॥** एवं-एतत्प्रकारकः **अर्थः**–प्रयोजनं यस्येत्यर्थः ॥ छाया ॥

५ धातुप्रत्यययोरपीति भावः ॥ छाया ॥

६ विवृतत्वप्रतिज्ञाप्रकारमाह—**एवञ्चेति ॥**

७ **विवृतत्वेति ।** धात्वादाविति भावः ॥ छाया ॥

८ ह्रस्वस्य दीर्घप्लुतविधावित्यर्थः ॥ दीर्घप्लुतौ स्थानिनोऽकारस्य संवृततया संवृतावेव स्यातामिति तौ मा भूतामिति धात्वादिस्थाकारस्य विवृतोपदेशः कार्य इत्यर्थः ॥ छाया ॥

९ सिद्धान्तीदं खण्डयति—**नैवेति ॥** संवृतयोस्तयोर्लोकवेदयोरसंभवादेवाप्राप्तौ **'नान्तरिक्षे न दिवि'** इतिवत्तन्निषेधाय स न युक्त इत्यर्थः ॥ छाया ॥

१० लिङ्गमेवाह—**यदयमित्यादिना ।** अकारस्य दीर्घविधानसामर्थ्याद्विवृत एव भविष्यति ॥

११ वस्तुतस्तु–'एवं सिद्धान्त्युक्तं श्रुत्वाऽऽहोपुरुषिकया **एकदेशी** धात्वादौ तत्प्रतिज्ञाने सवर्णग्रहणातिरिक्तं फलमाह—भाष्ये **दीर्घेति ।** ह्रस्वस्य स्थाने **सुपि च दूराद्धूते चेति** दीर्घप्लुतौ उच्येते यस्मिँल्लक्ष्ये तत्रेत्यर्थः । स्थानिनोऽकारस्य संवृततयाऽऽन्तरतम्यात्संवृतावेव तौ स्यातामिति भावः ॥ सिद्धान्ती खण्डयति—**नैवेति ।'** इति व्याख्यानं बोध्यम् । तदेतदभिप्रेत्याह–**नन्विति ॥** छाया ॥

१२ **मन्यमान इति ।** एकदेशीत्यर्थः ॥ छाया ॥

( निराकरणभाष्यम् )

**विषम[1] उपन्यासः । युक्तं यत्सतस्तत्र प्रकृतिर्भवति । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च । दीर्घप्लुतौ पुनर्नैव लोके न च वेदे संवृतौ स्तः ।**

**कौ तर्हि ?**

**विवृतौ, यौ स्तस्तौ भविष्यतः ॥**

( प्रदीपः ) **सतस्तत्रेति** । अशक्यत्वाद्दीर्घप्लुतयोः संवृतयोरुच्चारणस्येत्यर्थः ।

( उद्द्योतः ) तद्वत् संवृतौ[2] दीर्घप्लुतावपि कुतो न सन्ताविल्यत आह—**अशक्यत्वादिति** ॥ केचित्तु—शिष्टसंमतत्वात्ते सन्तः, इमौ तु न तथा इति भाव इत्याहुः ॥ **सन्ति हि यण इति** । भाष्ये 'यणः' इति बाहुल्याभिप्रायेण, रेफस्यानुनासिकत्वाभावादिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**एवमपि[3] कुत एतत्—तुल्यस्थानौ प्रयत्नभिन्नौ भविष्यतः, न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्याताम्-ईकार ऊकारो वेति ?**

( प्रदीपः ) **एवमपीति** । असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य संवृतावेवेकारोकारौ प्राप्नुतः, **'य्वृतः संवृता अन्यत्राभवसाम्नः'** इति कैश्चिदीकारोकारयोः संवृतत्वस्याभ्युपगमात् ॥

( उद्द्योतः ) नन्वीकारोकारयोः कथं संवृतत्वमत आह—**य्वृतः संवृता इति** । ई-ऊ-ऋत इत्यर्थः ॥ क्वचित्तु **'य्वतः'** इति पाठः । ईकार-ऊकार-अकारा इत्यर्थः ॥

( समाधानभाष्यम् )

**वक्ष्यति[4]—"स्थानेऽन्तरतमः" इत्यत्र 'स्थाने' इति वर्तमाने पुनः स्थानग्रहणस्य[5] प्रयोजनम्—'यत्रानेक[6]मान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो भवति' इति ॥[7]**

( इति व्यक्तिपक्षाधिकरणम् )

( वर्णसमाम्नाये जातिपक्षाधिकरणम् )

( २५ पूर्वपक्ष्याक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तत्रानुवृत्तिनिर्देशे[8] सवर्णाग्रहणमनणत्वात् ॥ * ॥

( भाष्यम् )

**तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति—"अस्य च्वौ" "यस्येति च" ॥**

**किं कारणम् ?**

**अनण्त्वात् । न ह्येतेऽणो येऽनुवृत्तौ ॥**

**के तर्हि ?**

**येऽक्षरसमाम्नाय[9] उपदिश्यन्ते ॥**

( प्रदीपः ) **तत्रानुवृत्तिनिर्देश इति** । **'अकः सवर्णे दीर्घः'** इत्यादावयमेवाकारोऽनुकृत इति ककारादिना चिह्नेन ज्ञायते । ततश्चाण्त्वात्तस्य ग्राहकत्वमस्तु । **'अस्य च्वौ'** इत्यादौ त्वकारस्यानण्त्वाद् ग्राहकत्वं न प्राप्नोतीत्यर्थः ॥ वृत्तिः[10]=शास्त्रस्य लक्ष्ये प्रवृत्तिः, तदनुगतो निर्देशः-अनुवृत्तिनिर्देशः ॥

( उद्द्योतः ) एवं चाद्यप्रयोजनार्थमेव सर्वत्राकारस्य विवृतत्वं प्रतिज्ञेयमिति स्थिते शङ्कते[11]—भाष्ये—**तत्रानुवृत्तीति** ॥ एतद्विशेषणोपादानस्य फलमाह—**अकः सवर्ण इति** ॥ **अनण्त्वादिति** । अक्षरसमाम्नायेऽपठितत्वादाकारस्यैवानण्त्वमित्यर्थः ॥ प्रत्युच्चारणं वर्णभेदेऽपि 'अकः' इत्यादौ ककारेण चिह्नेनैतदनुकरणत्वानुमानमिति भावः ॥ **तदनुगत इति** । साक्षा[12]ल्लक्ष्यसंस्कारकबोधजनक इत्यर्थः ॥

( एकदेशिनो व्यक्त्येकत्वेन समाधाने भाष्यवार्तिकम् )

## *एकत्वा[13]दकारस्य सिद्धम् ।*

**एकोऽयमकारो यश्चाक्षरसमाम्नाये, यश्चानुवृत्तौ, यश्च धात्वादिस्थः ॥**

---

१ सिद्धान्ती दृष्टान्तं विघटयति—**विषम इति** ॥ छाया ॥

२ **तद्वत्संवृताविति** । यण्वत्संवृतावित्यर्थः । विवृतावित्यपपाठः ॥ छाया ॥

३ एकदेशी शङ्कते—**एवमपीति** ॥ छाया ॥

४ यद्यपि शाखाविशेषनियतं तदिति नायं दोषो युक्त इति समाधानं युक्तं सुवचं तथापि तमभ्युपेत्यापि सिद्धान्ती वास्तवं समाधिमाह—**वक्ष्यतीति** ॥ छाया ॥

५ 'स्थानेग्रहणस्य' इति क. ख. छ. पाठः ॥

६ 'नेकविधमा' इति मुद्रित पाठः ॥

७ तथा च **'गुणार्था च पुनः श्रुतिः'** इति न्यायेनोभयतः प्राप्तौ तत एव स भवतीति ततः प्राप्तस्य च निवृत्तिस्तस्य च विधानमिति द्वितीयप्रयोजनं निराकृतं सिद्धान्तिना । एवं च प्रक्रियायां सावर्ण्याय प्रयोगे तदभावाय पुनः प्रत्यापत्तिः । सा चासिद्धैवेति तत्र क्वापि न सावर्ण्याप्रतिबन्धः । अत्र तदुपदेशे नैव ज्ञापिकेत्युक्तमेव ॥ छाया ॥

८ **तत्र**—व्यक्तिपक्षे ॥ **अनुवृत्तिनिर्देशे**—प्रयोगस्थस्यानुकरणे ॥

९ **अयमेव**—आक्षरसमाम्नायिक एव ॥

१० अनुवृत्तिनिर्देशपदार्थमाह—**वृत्तिरिति** ॥

११ **शङ्कते इति** । व्यक्तिपक्ष इदम्, न जातिपक्ष इति स एव दुष्ट इति प्रतिपादयितुमित्यादिः ॥ छाया ॥

१२ तदनुगतत्वस्य **'अकः'** इत्यादावपि सत्त्वादाह—**साक्षादिति** ॥ तत्र तु प्रत्याहारद्वारेति भावः ॥ छाया ॥

१३ दूषयितुमेकदेशिमतेनोत्तरमाह—**एकत्वादिति** ॥ छाया ॥ **सिद्धमिति** । अनेन व्यक्तेरेकत्वपक्षः समर्थ्यते, मीमांसकैः स्वीकृतोऽयं पक्षः । तथाहि—अकारव्यक्तिर्नित्या, स एवायमकार इति प्रत्यभिज्ञानात् । न च स एवायमिति प्रत्यभिज्ञानं जातिमेवावगाहत इति वक्तुं शक्यम् । बाधकबलादेव ज्वालादिप्रत्यभिज्ञानस्य तज्जातीयविषयकत्वोक्तेः । प्रकृते च तदभावाज्जात्याश्रयणमयुक्तम् । न च गकार उत्पन्नो विनष्ट इत्याद्युत्पत्तिविनाशप्रत्यय एव जातिमवगाहेतेति वक्तुं युक्तम् । व्यञ्जकध्वनिगतस्योत्पत्त्यादेर्वर्णे आरोपेणोत्पन्नो गकार इत्यादिप्रतीतेर्निराबाधात्—इति । तदुक्तं श्लोकवार्तिके—**तेन यत् प्रार्थ्यते जातेस्तद्वर्णादेव लक्ष्यते । व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा** ॥ इति । मुद्रितपुस्तकेषु वार्तिकत्वेनास्योल्लेखः, कुण्डलनाभाष्याभावान्नेदं वार्तिकमिति ज्ञायते ॥

( प्रदीपः ) एकत्वादकारस्येति । एकैवाकारव्यक्तिः । उदात्तादिप्रतिभासस्तु व्यञ्जकध्वनिकृतः, खड्गतैलादर्शादिभेदे प्रतिबिम्बप्रतिभासभेदवत् । अकारस्य निदर्शनार्थत्वादिकारादीनामप्यैक्यं बोध्यनीयम् ॥

( उद्द्योतः ) ननूदात्तादिविरुद्धधर्माध्यासाद्भेदः स्यादत आह—उदात्तादीति ॥ प्रतिबिम्बप्रतिभासभेदवदिति । भिन्नभिन्नाकारप्रतिबिम्बप्रतिभासवदित्यर्थः ॥ इकारादीनामपीति । सर्वध्वनिभिरेकस्य स्फोटस्यैव तत्तद्रूपेणाभिव्यञ्जनात् । तत्तद्रूपाभिव्यक्तिकृतश्च परस्परं भेदव्यवहारोऽपीति भावः ॥

( २६ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अनुबन्धसङ्करस्तु ॥ * ॥

( भाष्यम् )

**अनुबन्धसङ्करस्तु प्राप्नोति । "कर्मण्यण्" "आतोऽनुपसर्गे कः" इति केऽपि णित्कृतं प्राप्नोति ॥**

( प्रदीपः ) अनुबन्धसङ्कर इति । एकत्वे क-अण्-टकादीनां भेदाभावाद्गोदादौ ङीबादिः प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—अनुबन्धसंकर इत्यस्य अनुबन्धकार्यसंकर इत्यर्थः ॥ ङीबादीति । 'टिड्ढा—' इत्यादिना । आदिना णित्त्वप्रयुक्तयुक् । पर्यायेण कित्त्वणित्त्वप्रयुक्तकार्ययोरप्यविरोध इति भावः ॥

( २७ द्वितीयाक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥*॥एकाजनेकाज्ग्रहणेषु चानुपपत्तिः॥*॥

( भाष्यम् )

**एकाजनेकाज्ग्रहणेषु चानुपपत्तिर्भवति ॥**

**तत्र को दोषः ?**

**किरिणा-गिरिणा-इत्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोति ।**

**इह च घटेन तरति-घटिक इति, द्व्यज्लक्षणष्ठन् न प्राप्नोति ॥**

( प्रदीपः ) किरिणेति । न गोश्वन्त्साववर्ण-इति प्रतिषेधादकारो नोदाहृतः ॥ घटेनेति । एक एवाकारो द्विरुच्चार्यत इति द्व्यच्त्वाभावः । ठंस्तु बाहुकादिषु कृतार्थः ॥

( उद्द्योतः ) भाष्ये—अनुपपत्तिरिति । इष्टव्यवस्थाया इति भावः । अव्याप्त्यतिव्याप्त्योः[11] प्रसङ्गादिति तात्पर्यम् ॥ प्रतिषेधादिति । 'सावेकाचः' इति प्राप्तस्येत्यर्थः ॥ ठंस्त्विति । 'नौद्व्यचष्ठन्' इति विहितः ॥

( २८ तृतीयाक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ द्रव्यवच्चोपचाराः[12] ॥ * ॥

( भाष्यम् )

**द्रव्यवच्चोपचाराः प्राप्नुवन्ति । तद्यथा—द्रव्येषु नैकेन घटेनानेको युगपत्कार्यं करोति, एवमिममकारं नानेको युगपदुच्चारयेत् ॥**

( प्रदीपः ) द्रव्यवदिति । उपचारः—व्यवहारः । यथैकेन घटेनोदकाहरणादिक्रियां युगपदनेको न करोति, तथैकमकारं[13] युगपदनेको नोच्चारयेदित्यर्थः ॥

( प्रथमाक्षेपनिराकरणे भाष्यवार्तिकम् ॥ )

## *विषयेण[14] तु नानालिङ्गकरणात्सिद्धम् ।*

**यदयं विषये विषये नानालिङ्गमकारं करोति—"कर्मण्यण्" "आतोऽनुपसर्गे कः" इति, तेन ज्ञायते—नानुबन्धसङ्करोऽस्तीति । यदि हि स्यात्, नानालिङ्गकरणमनर्थकं स्यात्; एकमेवायं सर्वगुणमुच्चारयेत् ॥**

( प्रदीपः ) विषयेणेति । वार्तिककारेण करणत्वेन सामान्यरूपतया चाभेदेन विषयो निर्दिष्टः । भाष्यकारस्त्वधिकरणत्वं व्यक्तिभेदाद्वीप्सां च प्रतिपादयति—विषये विषय इति । सर्वगुणमिति । गुणाः=अनुबन्धाः, कार्याश्रितत्वादुपकारकत्वात् । तत्र 'कर्मणि कण्ट्' इति ब्रूयादित्यर्थः ॥

---

१ एतेन जातिस्फोटमाश्रित्य परिहरति—एकत्वादितीति कृष्णोक्तमपास्तम्, व्यक्तिपक्षस्यैव प्रक्रान्तत्वात् ॥ छाया ॥

२ 'उदात्तादिभेदप्रति' इति क. ख. पाठः ।

३ निदर्शनार्थत्वात्—उपलक्षणार्थत्वात् ।

४ 'बोद्धव्यम्' इति ख. पाठः ।

५ यद्यपि कैयटादीनामकारादीनामेकत्वमात्रमभिप्रेतं प्रत्येकं भाष्यस्य तथैव सुयोजत्वात्, तथापि सर्ववर्णानामेकत्वमिति सिद्धान्तरीत्या योजयति—सर्वेति ॥ छाया ॥

६ एवं च प्रत्येकं तेषामिव सर्वेषामैक्यमिति नानुपपत्तिरिति भावः । तथाच धात्वादिस्थो न तथा प्रतिज्ञेय एतदभिन्नत्वादनुवृत्तिस्थवदिति बोध्यम् ॥ छाया ॥

७ एवमेकत्वाश्रयणे शास्त्रीयकार्यविरोधरूपं दोषमाह—अनुबन्धेति ॥ छाया ॥ कित्वणित्वप्रयुक्तकार्ययोर्विरोधः ॥

८ एकत्व इति । अनुबन्धभेदेऽपि प्रत्ययस्वरूपाभेदः, अकारस्यैकत्वादिति भावः ॥ छाया ॥

९ 'टादीनां' इति क. पाठः ।

१० दोषान्तरमाह—एकाजिति ॥ छाया ॥

११ अव्याप्त्यतिव्याप्त्योरिति । व्युत्क्रमेण भाष्येऽग्रे दीयमानयोरित्यर्थः ॥ छाया ॥

१२ मीमांसकस्य व्यवहारविरोधोऽपीत्याह—द्रव्यवदिति ॥ छाया ॥

१३ 'तथैवैक' इति ख. पाठः ।

१४ एकदेशिपाक्षिकोऽनुबन्धसंकरं परिहरति—विषयेणेति ॥ छाया ॥ अन्यूनकुण्डलनाभावान्नैतत्कात्यायनवार्तिकम्, किन्तु अन्यस्याचार्यस्य वार्तिकमिति प्रतीयते ॥

१५ उपकारकत्वादिति । तथा च भेदकत्वात्तस्य तत्त्वम् । तदुक्तम्—

'संसर्गि भेदकं यद्यत्सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे व्यवस्थितम्' इति ॥

यद्वा-अनुबन्धा अतिगुणभूताः स्पष्टा एव ॥ छाया ॥

**( उद्द्योतः ) करणत्वेनेति ।** अधिकरणस्य करणत्वविवक्षयेत्यर्थः ॥ **सामान्यरूपतयेति ।** विषयत्वरूपेणेत्यर्थः ॥ **भाष्यकारस्त्विति ।** एकविषये नानालिङ्गकरणादर्शनाद्विषयभेदेन तदित्यत्र तात्पर्यम् ॥ 'गुणा उदात्तादयः' इति भ्रमं व्यावर्तयति—**गुणा अनुबन्धा इति ॥** तेषां गुणत्वमुपपादयति—**कार्यायेति ॥**

**( ज्ञापकनिराकरणभाष्यम् )**

**नैतदस्ति[1] ज्ञापकम् । इत्संज्ञाप्रक्लृप्त्यर्थमेतत्स्यात् । न ह्ययमनुबन्धैः शल्यकवच्छक्य उपचेतुम् । इत्संज्ञायां हि दोषः स्यात् । आयम्य[2] हि द्वयोरित्संज्ञा स्यात् ।**

**कयोः ?**

**आद्यन्तयोः ॥**

**( प्रदीपः ) शल्यकवदिति ।** शल्यकः=प्राणिविशेषः । स यथा कण्टकतुल्यैः पक्षैर्व्याप्यते । नैवं सर्वानुबन्धयुक्तोऽकारः शक्यो निर्देष्टुम्, आद्यन्तयोरेवेत्संज्ञाविधानान्मध्यपातिनां श्रवणप्रसङ्गात् । इत्संज्ञैवायच्छते=व्याप्रियत इत्येककर्तृकत्वात् 'आयम्य' इत्युक्तम् ॥

**( उद्द्योतः ) व्याप्रियेति ।** विषयत्वेन गृह्णातीत्यर्थः ॥ **एककर्तृकत्वादिति ।** 'स्यात्' इत्यनेनेत्संज्ञारूपैककर्तृकत्वादित्यर्थः[3] ॥

**( न्यासान्तरेण व्याख्याभाष्यम् )**

**एवं तर्हि—**

*** विषयेण तु पुनर्लिङ्गकरणात्सिद्धम् * ।**

**यदयं विषये विषये पुनर्लिङ्गमकारं करोति— "प्राग्दीव्यतोऽण्" "शिवादिभ्योऽण्" इति, तेन ज्ञायते-नानुबन्धसङ्करोऽस्तीति । यदि हि स्यात्पुनर्लिङ्गकरणमनर्थकं स्यात् ॥**

**( प्रदीपः ) एवं तर्हीति । 'विषयेण–'** इत्येतदन्यथ व्याचष्टे–'नाना'शब्दमपनीय 'पुनः'शब्दं पठित्वा । यद्यनुबन्धा संकरः स्यादकारमेव शिवादिभ्यो विदध्यात् ॥ अथोच्येत—णित्कृतमेव यथा स्यात् ञित्कृतं मा भूदिति नियमार्थमेतत् स्यात् । तन्न, नियमाद्विधेर्बलीयस्त्वात्[4] ॥

**( उद्द्योतः )** 'नाना' इति स्थिते कथमन्यथा व्याख्यानमत आह—**नानाशब्दमिति ॥ नियमादिति ।** ज्ञापकत्वे हि विध्यर्थत्वमिति भावः ॥ [[5]अत्र वाक्यत्रयेऽपि 'तु'शब्दः पूर्वपक्षव्यावृत्तौ ॥]

**( प्रथमव्याख्याभ्युपगमभाष्यम् )**

**अथवा पुनरस्तु—**

***विषयेण तु नानालिङ्गकरणात्सिद्धम् * इत्येव ॥**

**( ज्ञापकनिराकरणस्मारणभाष्यम् )**

**ननु चोक्तम्—इत्संज्ञाप्रक्लृप्त्यर्थमेतत् स्यात्– इति ॥**

**( ज्ञापकसाधकभाष्यम् )**

**नैष दोषः, लोकत एतत्सिद्धम् । तद्यथा–लोके कश्चिदेवं देवदत्तमाह–इह मुण्डो भव, इह जटिलो भव, इह शिखी भव–इति यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपतिष्ठते ।**

**एवमयमकारो यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपस्थास्यते ॥**

**( प्रदीपः ) अथवेति ।** न ब्रूमः–सर्वगुणमुच्चारयेदिति, किं तु यथा लोके–इह मुण्डो भव[6]–इह नग्नो भव–इति यद्गुणको

१ नानालिङ्गकरणस्य ज्ञापकत्वं विघटयति–**नैतदिति** ॥ छाया ॥

२ इत्संज्ञायां दोषमाह—**आयम्य हीति । आयम्य**–व्यापृत्य। इत्संज्ञा हि द्वयोर्विषयत्वेन गृह्णीयादित्यर्थः ॥

३ **इत्यर्थ इति ।** आयम्य स्यादित्यनयोरेक एव कर्ता-इत्संज्ञारूप इति भावः ॥

४ **नियमाद्विधेरिति ।** विधिनियमसम्भवे विधिरेव ज्यायानिति परिभाषणात् । एवञ्च 'प्राग्दीव्यतोऽण्' इत्यादौ णिदादीनां विधित्वमाश्रित्य ज्ञापकत्वोपवर्णनमेव युक्तमिति भावः ॥

५ अयं कोष्ठकान्तर्गतः पाठो यद्यपि **"यथा लोक इति"** इति प्रतीकतः प्रागेवोपलभ्यते तथापि योग्यस्थानेऽस्माभिः स्थापितः । तत्रापि पुस्तकत्रयेऽप्युपलभ्यमानो **'वाक्यत्रये'** इति पाठोऽसमञ्जसः, व्याख्यायां भाष्यकृत्कृतपदावापोद्वापाभ्यां वाक्यद्वयत्वस्यैव समुचितत्वात् इति दाधिमथाः ॥ इदं चिन्त्यम् । यथा लोके इतीत्यतः प्रागपि तत्पाठस्य संगतत्वात् । अर्थभेदेन वाक्यत्रयत्वसंभवाच्च । (र. ना.) । अत्र राजलक्ष्मीकारोऽपि–'अयं पाठो **यथालोके** इत्यतः प्रागुपलभ्यते, औचित्यात्त्वत्र स्थापितोऽस्माभिः । यथाश्रुतवार्तिकस्यार्थान्तरं कृत्वा दोषं निरस्यति नैष दोष इति' इत्याह ॥ वस्तुतः पण्डितत्रयाणामपि एतद्विषये सम्पादकीयमर्यादातिक्रमादसमर्थनीयः प्रमादः । तथाहि– 'वाक्यत्रयेऽपि तुशब्दः पूर्वपक्षव्यावृत्तौ' इति वदतां कृतभूरिपरिश्रमाणां भट्टाचार्याणामयमाशयः–'अनुबन्धसङ्करस्तु' इत्याक्षेपवाक्ये, 'विषयेण तु नानालिङ्ग–' इति तदाक्षेपनिरासवाक्ये, 'विषयेण तु पुनर्लिङ्ग–' इति न्यासान्तरवाक्ये–इति वाक्यत्रयेऽपि तुशब्दः पूर्वपक्षव्यावृत्तिपरः । 'अनुबन्धसङ्करस्तु' इति तुशब्देन 'एकत्वादकारस्य–' इति व्यक्त्येकवादो निराक्रियते । 'विषयेण तु नाना–' इति वाक्यघटक-तुशब्देनानुबन्धसङ्करो व्यावर्त्यते । न्यासान्तरवाक्यस्थतुशब्देनापि अनुबन्धसङ्करस्यैव व्यावृत्तिः । एवञ्च 'वाक्यत्रये' इत्युद्द्योतपाठो नासमञ्जस इति स्पष्टं तद्विदाम् । यच्च 'अथवा पुनस्तु विषयेण तु नाना० इत्येव' इति भाष्यग्रन्थमुपलक्ष्य 'अर्थभेदेन वाक्यत्रयसम्भवाच्च' इति र. ना. पण्डितेनोच्यते । तत्तु वाक्यार्थानवगममूलकमेव, यतः 'अथवा–' इत्यादिपक्षे वाक्यस्य नार्थभेदः, किन्तु ज्ञापकविघटनवेलायामुक्तस्य 'इत्संज्ञाप्रक्लृप्त्यर्थमेतत्स्यात्' इत्यस्यैव परिहारः क्रियते । अत एव 'ननु चोक्तमित्संज्ञा–' इत्याद्यनुवादग्रन्थो भाष्ये सङ्गच्छते । एतेन 'यथाश्रुतवार्तिकस्यार्थान्तरं कृत्वा–' इत्यादि वदन् गुरुप्रसादः परास्तः । अन्यच्च शिवदत्तसम्पादितां छायान्तत्कृतिमपि च राजलक्ष्मीरूपेण प्रायोऽनूदितवतो गुरुप्रसादस्य 'औचित्यात्त्वत्र स्थापितोस्माभिः' इत्युक्तिर्धाष्ट्यमूलिकैवेति सुधियो विदाङ्कुर्वन्तु । पण्डितत्रयेण कोष्ठकान्तर्गतोऽयं ग्रन्थः 'तल्लिङ्गस्तत्रेति सावधारणं व्याख्येयमिति भावः' इत्यस्यानन्तरं संस्थाप्य पराक्रान्तमासीत् । इदानीं प्राचीनप्रामाणिकपुस्तकानुरोधेन स्थाने सन्निवेशितः ॥

६ 'भव इह जटिलो भव इह' इति क॰ पाठः ॥

यत्रोच्यते तद्गुण एव तत्र भवति, एवमिहापि याभ्यः प्रकृतिभ्यो यदनुबन्धविशिष्टो विधीयते तदनुबन्धनिमित्तमेव कार्यं संपादयति ॥

**( उद्द्योतः ) यथा लोके इति ।** प्रभ्वाज्ञया गूढचारादिरिति शेषः ॥ एवंच लोकव्यवहारदृष्टान्तेनैवासंकरः सिद्ध इत्यर्थः ॥ **यत्र**–देशे, काले वा ॥ **तद्गुण एवेति ।** भाष्येऽपि–**'तल्लिङ्गस्तत्र'** इति सावधारणं व्याख्येयमिति भावः ॥

( द्वितीयाक्षेपानुवादभाष्यम् )

**यदप्युच्यते–*एकाजनेकाज्ग्रहणेषु चानुपपत्तिः *इति ॥**

**( २९ द्वितीयाक्षेपनिराकरणवार्तिकम् ॥ ५ ॥ )**

**॥ * ॥ एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात् ॥ * ॥**

( भाष्यम् )

**एकाजनेकाज्ग्रहणेषु चावृत्तेः संख्यानादनेकाच्त्वं भविष्यति । तद्यथा–"सप्तदश सामिधेन्यो भवन्ति" इति "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यावृत्तितः सप्तदशत्वं भवति ।**

**एवमिहाप्यावृत्तितोऽनेकाच्त्वं भविष्यति ॥**

**( प्रदीपः ) आवृत्तिसंख्यानादिति ।** यथा विकृतियागे त्रयोदश सामिधेन्यः प्रथमोत्तमयोस्त्रिरावृत्त्या सप्तदश संपद्यन्ते, तथा घटेन तरतीति व्यज्लक्षणष्ठन् भवति ॥ ननु मुख्ये विषये कृतार्थत्वाद्वचनस्य गौणं व्यच्त्वं कथं कार्यस्य निमित्तम् ? उच्यते–**'गोद्व्यच–'** इत्यत्राश्वशब्दप्रतिषेधाल्लिङ्गादावृत्तिभेदेनापि भेदाश्रयकार्यप्रवृत्तिः ॥

**( उद्द्योतः ) यथा विकृतियागे इति ।** तत्र हि प्राप्तसामिधेन्यनुवादेन सप्तदशत्वं विहितम् । तच्च **'त्रिः प्रथमां–'** इत्यादिवाक्यबोधितया प्रथमोत्तमयोस्त्रिरावृत्त्यैवेति भावः ॥ **त्रिरावृत्त्येति ।** आवृत्तिः–पुनरुच्चारणम् । तज्जन्यसङ्ख्यया सप्तदशत्ववदत्रानेकाच्त्वमिति भावः ॥ भाष्ये–**आवृत्तेः संख्यानात्**–गणनादित्यर्थः । [ [4]**लिङ्गादिति** । अनेन लिङ्गेन श्रुतिस्मृतिसिद्धत्वादस्य व्यवहारस्य गौणत्वमेव नेति ज्ञाप्यत इति भावः ॥ ]

( आक्षेपभाष्यम् )

**[5]भवेदावृत्तितः कार्यं परिहृतम् । इह तु खलु–'किरिणा' 'गिरिणा' इत्येकाज्लक्षणमन्तोदात्तत्वं प्राप्नोत्येव ॥**

**( प्रदीपः ) भवेदिति ।** 'गिरिणा' इत्यादावावृत्तिभेदेऽपि मुख्यमेकाच्त्वं न निवर्तत इति भावः ॥

**( उद्द्योतः )** (भाष्ये) **भवेदावृत्तितः कार्यं परिहृतमिति ।** आवृत्त्या कार्यं सिद्धमिति कृत्वा दूषणं परिहृतं भवेदित्यन्वयः ॥ **मुख्यमिति** । आवृत्तिकृतद्व्यच्त्वेन स्वगतैकाच्त्वस्य बाधायोग इति भावः ॥

( समाधानभाष्यम् )

**[6]एतदपि सिद्धम् ।**

**कथम् ?**

**लोकतः । तद्यथा–[7]ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया सर्वे ते सहस्रदक्षिणाः संपन्नाः ।**

**एवमिहाप्यनेकाच्त्वं भविष्यति ॥**

**( प्रदीपः ) एतदपीति ।** लोके पूर्वा संख्या संख्यान्तरेण मुख्येन गौणेन च बाध्यत इत्यर्थः ॥ **ऋषिसहस्रमिति ।** वित्तेन क्रीत्वा क्रीत्वा प्रत्येकं दत्त्वा दत्त्वा सहस्रदक्षिणा ऋषयः संपन्ना इत्यर्थः । सहस्रमृषयः–ऋषिसहस्रमिति कर्मधारये 'संपन्नाः' इत्यस्य साक्षादृषिभिः संबन्धः । षष्ठीसमासे तु सामर्थ्यलक्षणः संबन्धः, यथा–ब्राह्मणशतं भोज्यतामिति भुजेर्ब्राह्मणैः सह ॥

१ 'विधीयते तासु तदनु' इति क. पाठः ॥

२ दर्शपूर्णमासरूपप्रकृतिस्थैकादशसमिदाधानकरणीभूत **"प्रवो वाजा"** इत्यादर्चानुवादे विकृतिविशेषे **"पृथुपाजा"** इत्यादिकर्चद्वयाव्यवहितानां **"प्रकृतिवत्"** इत्यतिदेशेन प्राप्तानामनेन **'सप्त'** इति वाक्येन विहिते सामिधेनीसप्तदशकविकृतियागे विहितं सप्तदशत्वं यथा त्रिरिति प्रकृतिविकृतिसाधारणवाक्यबोधितप्रथमोत्तमत्रिरावृत्तितो भवति एवमिहापीत्यादर्थः ॥ तदाह–**यथेति । प्रकृतौ 'पञ्चदश सामिधेन्य'** इति विहितपाञ्चदश्यसिद्धये ( एकादशानामेव त्रिरित्यनेन विधानम् ) ॥ छाया ॥

३ **तत्रेति ।** विकृतियागे इत्यर्थः ॥ **प्राप्तेति । प्रकृतिवदित्य**तिदेशेनेति भावः ॥ छाया ॥

४ Bengal Asiatic Society मुद्रितपुस्तकेऽपि कोष्ठकान्तर्गतोऽयं पाठः स्थानान्तरे मुद्रितः शोधकस्य पाण्डित्यमन्तरा किं बोधयतीति ज्ञेयम् ॥ दाधिमथाः ॥ वस्तुतस्तु कोष्ठकान्तर्गतोऽयं ग्रन्थः सर्वेष्वपि प्राचीनपुस्तकेषु 'भवेदावृत्तितः कार्यं–' इति भाष्यव्याख्यानानन्तरमेव दृश्यते, उद्द्योतपरिपाट्यनुकूलमप्येतत् । परिपाटिश्च–भाष्यव्याख्यानभूतप्रदीपांशं भाष्यञ्च व्याख्याय प्रदीपकारस्य स्वतन्त्रशङ्काग्रन्थोऽनन्तरं व्याख्येय इति । अत्रापि 'ननु मुख्ये विषये–' इत्यादिः प्रदीपो न साक्षाद्भाष्यांशव्याख्याभूतः किन्तु स्वतन्त्रशङ्कासमाधानरूप इति तद्व्याख्यानं भाष्यव्याख्यानानन्तरमेव शोभते । इदानीं खण्डशो मुद्रणवेलायां प्रतीकानुनयानुरोधादत्रास्माभिरयं ग्रन्थ आकृष्ट इति वक्तव्यं दाधिमथैः, न तु बङ्गमुद्रणस्योपहासो योग्य इति ॥

५ अव्यापकत्वं परिहारस्य शङ्कते–**भवेदिति ॥** छाया ॥

६ गिरिणेत्यादौ पूर्वं वैदिकदृष्टान्तेनानेकाच्त्वं प्रसाध्य लौकिकदृष्टान्ते नेतरदोषान्समाधत्ते–**एतदपीति ॥**

७ सहस्रं ऋषय एकां कपिलामेकैकं सहस्रकृत्वो दत्वा ते ऋषयः सहस्रदक्षिणाः सम्पन्ना इत्यन्वयः । गोसहस्रसत्रे यत्र एकैव कपिला तत्र द्रव्यदानेन पुनः पुनः स्वीकृत्य पुनः पुनर्दानम्, तच्चैकस्मै ऋषये सहस्रवारं दानमथवा सर्वेभ्य इति प्रकारद्वयमत्र संभवति । यथैकैव कपिला सहस्रशो दीयमाना सहस्रदक्षिणाकं संपादयति तथैक एव गिरिणेत्यत्रेकारोऽनेकाच्त्वं तस्य संपादयतीत्याशयः ॥

( उद्योतः ) ननु स्वस्य प्रतिगृहीतृत्वाभावादेकन्यूनता; न च पुनर्दानं, दत्तस्यान्यस्वत्वाक्रान्ततया पुनर्दानासंभवोऽत आह—**वित्तेनेति** ॥ ननु षष्ठीसमासे सहस्रसंख्याया विशेष्यत्वात्कथं दानेन संबन्धः, कथं वा '**संपन्नाः**' इति बहुवचनान्तेन सामानाधिकरण्यमत आह—**सहस्रमृषय इति** । अत एव '**सर्वे ते**' इत्यनेन सामानाधिकरण्यम् । परनिपातो भाष्यप्रामाण्यात् ॥ [भाष्ये-] '**एकैकशः**' इत्यत्र उभयोरपि द्योतकत्वेन द्योतकसमुच्चयस्य च बहुशो दृष्टत्वेन द्विर्वचनशसोर्यौगपद्यम् । यथा-यथाजातीयको गार्ग्यायणीत्यादौ । तत्र च यथा ष्फसत्त्वे समुच्चित्यद्योतकता, अभावे गार्गीति ङीपैव, तथा प्रकृतेऽपि शसो वैकल्पिकत्वात्पक्षे-एकैकमित्यपि । ब्यादिशब्दे विषये तु न समुच्चित्य द्योतकता, अनभिधानात् । एकशब्दे तु समुच्चित्य प्रत्येकं च द्योतकता, अभिधानस्वभावात् । यत्र तद्धितेनानुक्ता वीप्सा तत्र द्विर्वचनं भवत्येव, यथा-एकैकशो देहीति । भाष्यस्याप्ययमाशयः—यत्र तद्धितमात्रेण लोके वीप्साऽनभिधानं तत्र द्विर्वचनमपि । माषेश इत्यादौ तावतैव सर्वत्र वीप्साऽभिधानं तत्र न कदापि तयोः समुच्चय इति दिक्[3] ॥ **सामर्थ्यलक्षण इति** । सामर्थ्यकृतो गुणभूतैर्ऋषिभिः संबन्ध इत्यर्थः । '**सर्वे ते**' इत्यत्र तच्छब्देन गुणभूतस्यापि परामर्शोऽत्र पक्षे बोध्यः । अत एव 'दत्त्वा' इति **समानकर्तृके** क्त्वा ॥ **सहस्रं दक्षिणा** गोरूपा येषां दातॄणां ते इत्यर्थः ॥ तेन गोसहस्रदानफला एव ते, न त्वेकगोदानमात्रफला इति व्यवहारो यथा स्मृतौ तथा प्रकृतेऽपीति भावः ॥ **भुजेर्ब्राह्मणैरिति** । सङ्ख्यायां भोक्तृत्वानुपपत्तेर्गुणभूतर्ब्राह्मणैरेव भुजेः संबन्ध इति भावः ॥ भाष्ये—**अनेकात्त्वमिति** । तन्मात्रमित्यर्थः ॥

## ( तृतीयाक्षेपनिराकरणभाष्यम् )

**यदप्युच्यते-द्रव्यवच्चोपचाराः प्राप्नुवन्ति । भवेद् यदसंभवि कार्यं तन्नानेको युगपत्कुर्यात् । यत्तु खलु संभवि कार्यमनेकोऽपि तद्युगपत्करोति । तद्यथा—घटस्य दर्शनं स्पर्शनं च ।**

**संभवि चेदं कार्यमकारस्योच्चारणं नाम, अनेकोऽपि तद्युगपत्करिष्यति ॥**

( प्रदीपः ) **संभवि चेति** । एकस्यैवाकारस्य युगपत् स्थानकरणनिष्पन्नध्वनिव्यङ्ग्यत्वात्सर्वैरित्यर्थः ॥

( उद्योतः ) **एकस्यैवेति** । व्यापकस्येत्यपि बोध्यम् । अकारस्येत्यप्युपलक्षणमित्युक्तम् । भाष्ये—'**उच्चारणं नाम**' इत्युत्तरं '**अतः**' इति शेषः ॥

## ( ३० पूर्वपक्षिसंमतनानात्वसाधकवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ आन्यभाव्यं तु कालशब्दव्यवायात् ॥ * ॥

### ( भाष्यम् )

**आन्यभाव्यं त्वकारस्य ॥**

**कुतः ?**

**कालशब्दव्यवायात् । कालव्यवायाच्छब्दव्यवायाच्च ।**

**कालव्यवायात्-दण्ड अग्रम् ।**

**शब्दव्यवायात्—दण्डः ।**

**न चैकस्यात्मनो व्यवायेन भवितव्यम् । भवति चेत् भवत्यान्यभाव्यमकारस्य ॥**

( प्रदीपः ) एवं परिहृतेष्वपि तत्र दोषेषु न्यायेनाकारस्य भेदं साधयति—**आन्यभाव्यमिति** । अन्यस्य भावः-अन्यभावः, ततो ब्राह्मणादिषु स्वार्थे विधानार्थं पाठात् स्वार्थे ष्यञ् ।

---

१ यत्तु—येन प्रतिगृहीता कपिला तेनान्यस्मै दत्ता तेन चान्यस्मै इत्यादिरूपेण पुनःपुनर्दानसंभवो बोध्य इति रत्नकृत् । तन्न, सत्रप्रवृत्तानामृषीणामृत्विक्त्वयजमानत्वयोः सत्त्वेपि '**नहि कर्मणि कर्मारम्भः**' इति न्यायेन यदैकस्य यजमानत्वेन दातृत्वं तदेतरेषामृत्विक्त्वेन प्रतिग्रहीतृत्वमित्येवं स्वस्वमात्रकर्मानुष्ठाने दक्षिणातः पूर्वतने सातत्यस्य सत्त्वेन दक्षिणायामपि तथौचित्येन तथोक्तेरसंभवग्रस्तत्वात्॥ तदेतद्ध्वनयन्नाह—**स्वस्येति** ॥ स्वकर्तृकसर्वोद्देश्यकदाने सकृत् प्रवृत्ताविति भावः ॥ छाया ॥

२ 'यत्र माषशः इत्यादौ तावतैव वीप्सा—' इति घ. पाठः ।

३ एकेति प्रधानार्थकसंबोधनम् । किंचायं न भाष्यप्रयोगः किंतु तया तद्वाधे श्रौतः स्मार्तो वा व्यवहारो भगवता दृष्टान्तत्वेनोक्तः । तत्र छान्दसत्वादिना न दोषः, '**एकैकशः पितृसंयुक्तानी**' त्यादिवदिति दिगर्थो बोध्यः ॥ छाया ॥

४ सामर्थ्यस्वरूप इत्यर्थवारणायाह—**कृत इति** ॥ तथा च निमित्तपरलक्षणपदेन बहुव्रीहिरिति भावः ॥ छाया ॥

५ अन्यथा संख्यायाः कर्तृत्वासंभवेन तदसङ्गतिः स्पष्टैवेति ॥ छा. ॥

६ षष्ठीसमासपक्षे गुणभूतैर्ऋषिभिः सम्बन्धं, तच्छब्देन गुणभूतस्यापि परामर्शञ्च प्रदर्शयति—**सहस्रं दक्षिणेति** । अत्र 'भाष्ये सहस्रदक्षिणेति' इति प्रतीकपाठः क्वचिद्दृश्यते सोऽपपाठ इति प्रतीयते, प्रामाणिकेष्वनुपलम्भात्; 'षष्ठीसमासे तु' इत्यादिस्वतन्त्रप्रदीपग्रन्थव्याख्यानमध्ये भाष्यप्रतीकग्रहणस्य परिपाटीविरुद्धत्वाच्च ॥

७ यथा गोसहस्रसत्रे दीक्षितस्यैकस्य यजमानस्य गोसहस्रदानसमाश्रितः प्राक् प्रतिग्रहीतृत्वस्यासंभवे गवान्तराभावेन क्रीत्वैव स्वस्वत्वमुत्पाद्य दानावृत्त्या सहस्रदक्षिणसत्रफलभाजो जाता इति भावः ॥ अदक्षिणत्वं तु कास्मिंश्चिदेव द्वादशाहादिसत्रे इत्यप्यनेन भाष्येण ध्वन्यत इति बोध्यम् ॥ छाया ॥ **प्रकृतेऽपीतीति** । यथा-एकगोसत्वेऽपि गोसहस्रदानफला ऋषयः सम्पन्नास्तथा किरिणेत्यादाविकारव्यक्तेरेकस्या एव सत्वेऽप्यनेकात्त्वव्यवहारः सम्पद्यत इत्यर्थः ॥

८ **ब्राह्मणैरेवेति** । संख्याश्रये भोजिते संख्यैव भोजिता भवति । गुणगुणिनोरभेदादिति भावः ॥ छाया ॥

९ तृतीयदोषमुद्धरति—**यदप्युच्यत** इति ॥ छाया ॥

१० 'सर्वैरुच्चारणं शक्यमित्यर्थः' इति क. पाठः ।

११ 'विधनार्थात्पाठात्' इति ख. पाठः ।

१२ ननु अन्यभावशब्दस्यान्यत्वमर्थः, तस्माद्भावे ष्यञि कृते 'अन्यत्वत्वं' अर्थः स्यात्, स मा भूदित्यत आह—**स्वार्थे इति** । एवञ्च-अन्यत्वं-अर्थः ॥

अथवा–अन्यो भावः–अन्यद्वस्तु, तस्य भाव इति भावे ष्यञ् । इह कालशब्दाभ्यां व्यवधानं भिन्नानां दृष्टम् । यथाऽसंहितायाम्–अ इ उ इत्यादीनां कालव्यवायः । ऌतिरित्यादौ शब्दव्यवायः, तत्र तकारेण ऋकारेकारयोर्व्यवधानात् । एकत्वे तु व्यवायो न दृष्टः, यथा–अ इति केवलोऽकार उच्चार्यते । तस्मादुदात्तादिगुणभेदात्कालशब्दव्यवायाच्च नानात्वमकारस्य । प्रत्यभिज्ञानं त्वत्वादिसामान्यनिबन्धनम् । यद्यपि शब्दव्यवायेऽपि कालव्यवायोऽस्ति, तथापि कालव्यवाय एव द्विधा दर्शितः–शब्दशून्यः शब्दवांश्च ॥

**( उद्योतः )** **'आन्यभाव्यं'** इत्यस्यान्यत्वमित्यर्थो नेत्याह–**अन्यस्येति ॥ अथवेति ।** भावशब्दः कर्तृसाधन[3] इति भावः ॥ एवंच प्रतिप्रयोगमकारस्यान्यत्वमित्यर्थः ॥ **यथेति ।** एवञ्च–अग्रे इत्याद्यकारो दण्डेत्यकाराद्भिन्नः, 'दण्ड अग्रं' इत्यादौ कालव्यवधानात्, 'दण्ड इह' इति प्रयोगे इकारवत् । तथा 'दण्ड' इत्यत्राद्यकारोऽन्त्याकाराद्भिन्नः, शब्दव्यवायात्, कृतिरित्यादौ तकारव्यवहितेकारवत्–इत्यनुमानैर्भेदे सिद्धे उदात्तादिविरुद्धधर्मप्रत्ययोऽपि पारमार्थिक एवेत्याशयेन तद्भेदादपि भेदसिद्धिरित्यभिप्रेत्याह—**उदात्तादीति ॥ नानात्वमकारस्येति ।** 'युक्तं' इति शेषः ॥ ननु य एवोदात्तोकारः स एव देवदत्तेनानुदात्तः कृत इति प्रत्यभिज्ञाविरोधोऽत आह—**प्रत्यभिज्ञानं त्वेति ॥**

## ( ३१ नानात्वहेतुवार्तिकम् ॥ ७ ॥ )

## ॥*॥ युगपच्च देशपृथक्त्वदर्शनात् ॥*॥

### ( भाष्यम् )

**युगपच्च देशपृथक्त्वदर्शनान्मन्यामहे—आन्यभाव्यमकारस्येति । यदयं युगपच्च देशपृथक्त्वेषूपलभ्यते—अश्वः, अर्कः, अर्थ इति । न ह्येको देवदत्तो युगपत्स्रुघ्ने च भवति मधुरायां[6] च ॥**

**( उद्योतः )** विभुत्वं निराचष्टे भाष्ये–**युगपच्च देशेति ।** अर्कादिशब्दा एव देशपदेनोच्यन्ते ॥ **देशपृथक्त्वेष्विति ।** देशानां पृथक्त्वेषु भेदेषु सत्स्वित्यर्थः ॥

### ( एकत्वसाधकभाष्यम् )

**यदि पुनरिमे वर्णाः—**

## *शकुनिवत्स्युः ।*

**तद्यथा—शकुनय आशुगामित्वात्पुरस्तादुत्पतिताः पश्चाद्दृश्यन्ते, एवमकारो 'द' इत्यत्र दृष्टः 'ण्ड' इत्यत्र दृश्यते ॥**

**( प्रदीपः )** **यदि पुनरिति ।** कालशब्दाभ्यां व्यञ्जकानामेव ध्वनीनां व्यवायः, न व्यङ्ग्यस्येति व्यक्तिस्फोटवादिनो भावः ॥ यथा शकुनिः पञ्जरादौ स्थित आशुसंचारात्तदन्ते भवति, एवं व्यञ्जकध्वनिसंनिधानासन्निधानाभ्यामकारस्योपलम्भानुपलम्भावित्यर्थः ॥

**( उद्योतः )** एवं वर्णानामनेकत्वे परेण साधिते वर्णैकत्ववादी एकत्वं स्थापयितुं तद्दूषणोद्धारमाह-भाष्ये–**यदि पुनरिति ॥** तत्रं 'शकुनिवत्' इति दृष्टान्तस्य तद्वत्परिच्छिन्नत्वे न तात्पर्यम्, तन्मते तस्य विभुत्वादिति ध्वनयन्नाह—**कालशब्दाभ्यामिति ॥ व्यक्तिस्फोटवादिन इति ।** व्यक्तेर्नित्यत्वैकत्ववादिनः, एकैव शब्दव्यक्तिरिति वादिन इत्यर्थः । अनेनाद्यं दूषणं परिहृतम् ॥ द्वितीयं परिहरति—**यथेति ॥ एवमिति ।** अस्यानेकदेशेषु युगपदुपलम्भो व्यञ्जकवशादिति शेषः । पूर्वदृष्टस्य पश्चाद्दर्शनेऽपि–अव्यवहितस्य व्यवधानेऽपि न भेद इत्येतन्मात्रेण दृष्टान्त इति भावः ॥ नन्वेवं विभुत्वे च सर्वत्र देशे सर्वदोपलम्भापत्तिरत आह—**व्यञ्जकेत्यादि ॥**

### ( नानात्ववादिभाष्यम् )

**नैवं[13] शक्यम् । अनित्यत्वमेवं स्यात् । नित्याश्च**

---

१ 'व्यवधानं न दृष्टम्' इति ख. पाठः ।

२ 'ज्ञानं चात्वा' इति मुद्रितपाठः ।

३ **कर्तृसाधन इति ।** आन्यभाव्यमित्यत्र भावशब्दस्य कर्तृसाधनस्य न धर्मोऽर्थः किन्तु वस्तुरूप एव, तस्माद्भावे ष्यञि समीहितार्थसिद्धिः ॥

४ कालशब्दव्यवायादिति हेतुमुपन्यस्यता भाष्यकारेणानुमानप्रसरोऽत्र प्रदर्शितस्तदनुरोधेनानुमानमुपन्यस्यति **अग्रे इत्यादिना ॥**

५ न चैकस्य कालशब्दव्यवाय उपपद्यते । नानात्वे तूपपद्यते यथा अइउणित्यत्रकारेकारयोर्यथा वाहिरिति । ननु यथा एकस्यापि घटादेः स्वव्यञ्जकप्रदीपसन्निधानासंनिधानाभ्यामुपलब्ध्यनुपलब्धी तथैकस्याप्यकारस्य व्यञ्जकध्वनिसन्निधानात्प्रथममुपलब्धस्य मध्ये च तदसन्निधानादनुपलब्धस्य पश्चात्तत्सन्निधानादुपलब्धिरिति उपलब्ध्योरेव कालव्यवायो नाकारस्य ॥ नैतत्प्रतीतिसाक्षिकमुच्यते । लौकिका ह्यकारयोरेव व्यवायं मन्यन्ते येऽस्मिन् दुस्तर्के शिक्षिता न भवन्ति । किञ्चानुनासिकत्वादीनां विरुद्धानां धर्माणामेक एवाश्रयोऽकार उपलभ्यतेऽतो विरुद्धधर्माध्यासाद्गवाश्वादिवद्भेदोऽनुमातव्यः । प्रत्यभिज्ञा च जातिनिबन्धना । व्यक्तिप्रत्यभिज्ञा त्वसिद्धा भेदस्यैव प्रतिपुरुषं प्रसिद्धेरित्यादिकं पदमञ्जर्यां स्पष्टम् ॥ दाधिमथाः ॥

६ 'मथुरायां' इति क. पाठः ।

७ एवमेकत्वं निरस्य विभुत्वमपीत्यर्थः ॥ अत एव आन्यभाव्यमित्यस्यैवानुषङ्गः कृतो भाष्ये ॥ छाया ॥

८ 'शकुनिवत्स्युः' 'आदित्यवत्स्युः' इत्युभयत्रापि मुद्रितपुस्तकेषु वार्तिकचिह्नं दृश्यते । अन्यत्र सर्ववार्तिकेषु कुण्डलनाभाष्यदर्शनात्, अत्र तादृशकुण्डलनाभाष्यानुपलम्भात् नैतद्वार्तिकमिति प्रतीयते । 'तत्रेति-वार्तिक इत्यर्थः' इति छायादर्शनात् मुद्रितपुस्तकेषु तादृशो भ्रमः सम्भवति । अत्रत्यं तत्त्वं सुधीभिरूहनीयम् ॥

९ **तत्रेति ।** वार्तिक इत्यर्थः ॥ छाया ॥

१० अत्र व्यक्तेर्वाचकत्वमिति न व्यक्तिस्फोटपदार्थ इत्याह–**व्यक्तेरिति ॥** सिद्धान्तरीत्या तस्यापि तात्पर्यमाह–**एकैवेति ॥** छाया ॥

११ **आद्यं**–कालशब्दव्यवायादन्यत्वम् ॥ **द्वितीयं**–विभुत्वनिराकरणम् ॥

१२ 'विभुत्वे नित्यत्वे च' इति घ. पाठः ।

१३ पूर्वपक्षिमतावलम्बी दूषणद्वयोद्धारं निरस्यति–**नैवमित्यादिना ॥**

**शब्दाः । नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । यदि चायं 'द' इत्यत्र दृष्टः 'ण्ड' इत्यत्र दृश्येत, नायं कूटस्थः स्यात् ॥**

( प्रदीपः ) जातिस्फोटवादी व्यक्तिस्फोटवादिनं पर्यनुयुङ्क्ते—**अनित्यत्वमिति** । भवता जातिस्तावन्नाभ्युपगम्यते, व्यक्तेरेवैकत्वनित्यत्वप्रतिज्ञानात् । तच्चैकत्वं नित्यत्वं च नोपपद्यते, 'दण्ड' इत्युदात्तानुदात्तस्वरभेदेन भिन्नत्वात् । न ह्येकस्यैवोदात्तत्वपरित्यागेनानुदात्तत्वं युक्तम्, रूपान्तरपरिग्रहादनित्यत्वप्रसङ्गः[१] । तस्माद्भिन्ना एवानित्या एवाकाराः, प्रत्यभिज्ञा त्वाकृतिनिबन्धनेति जातिस्फोटपक्षोऽत्र स्थितः ॥

( उद्योतः ) **जातिस्फोटेति** । जातिरेव एका, शब्दव्यक्तयस्त्वनन्ता इति वादीत्यर्थः ॥ भाष्ये—**अनित्यत्वमेवं स्यादिति** । व्यक्तेरेकत्ववादी तस्या नित्यत्वं मन्यते—इति भावः ॥ ननु विभोरेकस्यापि व्यञ्जकवशादनेकत्रोपलब्धौ कथमनित्यतेत्यत आह—**भवतेति** ॥ भाष्येऽपि **'नित्याश्च शब्दाः'** इत्यस्य **'तव'** इत्यादिः ॥ भाष्योक्तकूटस्थत्वाभावमुपपादयति—**रूपान्तरेति** ॥ **'तस्माद्भिन्ना एवानित्या एवाकाराः'** इति पाठः । 'नित्या एव' इति पाठस्त्वयुक्तः, अनन्तवर्णवादे तदनित्यत्वस्यैवेष्टत्वादिति बोध्यम् ॥ यद्यप्यनुदात्तत्वादीनां ध्वनिनिष्ठत्वाङ्गीकारान्न दोषस्तथापि स्फटिकस्येवास्यापि इतरसंनिधानेन तद्रूपपरिग्रहे संसर्गानित्यताविरोधिकूटस्थत्वाभाव इति भावः ॥

( एकत्वसाधकभाष्यम् )

**यदि पुनरिमे वर्णाः—**

***आदित्यवत्स्युः[२]***

**तद्यथा-एक आदित्योऽनेकाधिकरणस्थो युगपद्देशपृथक्त्वेषूपलभ्यते ॥**

( उद्योतः ) पुनरप्येकत्वनित्यत्वे साधयति—भाष्ये—**यदि पुनरित्यादिना** । एकस्यैवाकारस्यानेकदेशेषूपलब्धिरादित्यस्येव[३] संभवतीति न तावद्व्यक्तिभेदः सिध्यति । अन्यथा—आदित्यस्याप्यनेकत्वापत्तिरनित्यत्वापत्तिश्च । तत्तद्देशसंसर्गेणाल्पप्रकाशत्वाधिकप्रकाशत्वादिगुणसंसर्गादिति भावः ॥

( नानात्ववादिभाष्यम् )

**विषम[४] उपन्यासः । नैको द्रष्टा आदित्यमनेकाधिकरणस्थं युगपद्देशपृथक्त्वेषूपलभते । अकारं पुनरुपलभते ॥**

( उद्योतः ) **विषम इति** । आदित्यदृष्टान्तेनानेकदेशोपलभ्यमानाकारादिपक्षैक्यसाधकः प्रत्यभिज्ञायमानत्वहेतुरनेकद्रष्टृकानेकदेशोपलब्धिविषयत्वरूपोपाधियुक्त[५] इति न तेन भेदसाधकशब्दव्यवायहेतोः सत्प्रतिपक्षता युक्तेति भावः ॥ **'अकारं पुनरुपलभते'** इत्यस्यैको द्रष्टाऽनेकाधिकरणस्थमिति शेषः ॥

( एकत्ववादिभाष्यम् )

**अकारमपि[६] नोपलभते ।**

**किं कारणम् ?**

**श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणाभिज्वलित आकाशदेशः शब्दः । एकं च पुनराकाशम् ॥**

( प्रदीपः ) व्यक्तिस्फोटवाद्याह—**अकारमपीति** ॥ **श्रोत्रोपलब्धिरिति** । श्रोत्रोपलभ्याऽऽकाशदेशत्वं शब्दस्य प्रतिपादयति । आकाशप्रदेशविशेषस्य[७] श्रोत्रत्वात् इन्द्रियाणामसंबद्धविषयाग्रहणात् श्रोत्रस्य च निःक्रियत्वाद्गमनाभावादाकाशदेशत्वमस्याभ्युपेयम्[८] ॥ **बुद्धिनिर्ग्राह्य इति** । पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धिनिर्ग्राह्य इत्यर्थः ॥ **प्रयोगेणेति** । प्रयुज्यत इति—प्रयोगः=ध्वनिः, तेनाभिव्यक्तः ॥ देशभेदेन तु प्रतिभासो भिन्नदेशावस्थितपुरुषोदीरिताभिव्यञ्जकध्वनिकृतः ॥

( उद्योतः ) शब्दस्याकाशरूपैकाधिकरणत्वेनानेकाधिकरणत्वमयुक्तमित्याशयेनाह—भाष्ये—**अकारमपि नोपलभत इति** । अकारमप्यनेकाधिकरणस्थं नोपलभत इत्यर्थः ॥ **श्रोत्रोपलब्धिरिति** ।

---

१ 'प्रसङ्गात्' इति क. घ. पाठः ।

२ **साधयतीति** । **"आदित्यवद्यौगपद्यम्"** ( पू० मी० १।१।१५ ) इति जैमिनीयवचनमनुसृत्य मीमांसक इति शेषः ॥ छाया ॥

३ 'स तावदेव इति सर्वसंमतम् । तस्य चानेकत्रोपलम्भ इति निर्विवादम् । तद्वदत्रापि' इत्याशयेन भाष्याशयमाह—**एकस्यैवेति** ॥ छाया ॥

४ आदित्यदृष्टान्तं निरस्यति—**विषम इति** ॥ छाया ॥

५ **उपाधियुक्त इति** । अत्रेत्थमनुमानम्—अनेकदेशोपलभ्यमानोऽकारादिः—एकः, प्रत्यभिज्ञायमानहेतुत्वात्, आदित्यवत् । आदित्यो हि अनेकदेशोपलभ्यमानः प्रत्यभिज्ञायते च, अत एव स एकः, तथाऽकारोऽपि । अस्य हेतोः—अनेकद्रष्टृकानेकदेशोपलब्धिविषयत्वमुपाधिः । तत्त्वञ्च साध्यव्यापकत्वे सति साधनाव्यापकत्वम् । यत्रैकत्वं तत्रानेकद्रष्टृकानेकदेशोपलब्धिविषयत्वमादित्येऽकारे वाऽस्तीति साध्यव्यापकत्वम् । प्रत्यभिज्ञायमानत्वञ्च—एकद्रष्टृकानेकदेशोपलब्धिविषयेऽकारे वर्तत इति साधनाव्यापकत्वमपि । एवञ्च प्रत्यभिज्ञायमानत्वहेतोः सोपाधिकत्वेन 'अकारः अनेकः, शब्दव्यवायात्' इत्यनुमानप्रतिबन्धकत्वं न सम्भवति । उपाधिश्च भगवता—**अकारं पुनरुपलभते**—इत्यनेन प्रदर्शितः ॥

६ एकत्ववादी दृष्टान्तवैषम्यं परिहरति—**अकारमपीति** ॥ छाया ॥ **नोपलभत इति** । एको द्रष्टाऽनेकाधिकरणस्थमकारं युगपद्देशपृथक्त्वेषु नोपलभते । यतः शब्दः श्रोत्रोपलब्धिरत आकाशदेशः, आकाशञ्चैकमिति एकस्मिन्नाकाश उपलभमानो देशपृथक्त्वेषु नोपलभते । ननु श्रोत्रोपलब्धित्वेऽपि शब्दस्याशुविनाशिवर्णसमुदायरूपस्य कथमेकदैव प्रतीतिरत आह—**बुद्धिनिर्ग्राह्य इति** ॥

७ श्रोत्राकाशयोरैक्यमुपपादयति—**आकाशेति** ॥

८ 'देशत्वं शब्दस्यावश्याभ्युपे' इति क. ख. पाठः ॥

श्रोत्र एव उपलब्धिर्यस्येत्यर्थः, करणक्तिन्नन्तेन समानाधिकरणबहुव्रीहिर्वा ॥ एतद्विशेषणफलं दर्शयति—**श्रोत्रेति**। ननु दिश एव श्रोत्रत्वात् कथं तत्रोपलब्ध्याऽऽकाशदेशत्वसिद्धिरत आह—**आकाशेति**। कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्रम्। चक्षुरादिवच्छ्रोत्रस्यापि भूतत्वमावश्यकमिति भावः ॥ दिशोऽनतिरिक्तमेव चाकाशमिति तत्त्वम् ॥ ननु तथाप्येतेऽोंऽशगतघटादिरूपस्य तैजसचक्षुर्ग्राह्यत्ववदनाकाशदेशगतस्यापि शब्दस्याकाशात्मकश्रोत्रग्राह्यत्वं किं न स्यादित्याशङ्क्य किमसंबद्धं तद्ग्राहकं–संबद्धं वा, नाद्य इत्याह—**असंबद्धेति**। अन्यथा रामेश्वरादिप्रदेशावच्छिन्नशब्दस्यापि श्रवणप्रसङ्गः ॥ द्वितीयेऽपि किं श्रोत्रस्य विषयदेशगमनात्संबन्धः–उत शब्दस्य श्रोत्रदेशगमनात्, नोभयमपीत्याह—**गमनाभावादिति** ॥ **श्रोत्रस्य चेति**–चेन शब्दपरिग्रहः। उभयोरपि गमनाभावे हेतुः–निष्क्रियत्वं, दूरदेशस्थशब्दाग्रहणं तु दूरत्वादेर्दोषस्य प्रतिबन्धकत्वाच्छ्रोत्रदेशेऽनभिव्यक्तेः। आकाशदेशत्वे च तद्वदेव तस्यापि व्यापकत्वेन श्रोत्रदेशेऽभिव्यक्तस्य तेन ग्रह इति भावः ॥ 'आहंकारिकाणीन्द्रियाणि' इति सांख्यमतेऽपि इन्द्रियाणां स्वाधिष्ठानभूतवृत्तिगुणग्राहकत्वनियमादाकाशदेशत्वं श्रोत्रोपलब्ध्या शब्दस्य सिध्यतीति बोध्यम् ॥ श्रोत्रोपलब्धिरित्येव बुद्धिनिर्ग्राह्यत्वस्योक्तत्वात्पौनरुक्त्यमाशङ्क्याह—**पूर्वपूर्वेति**। एवं चाशुतिरोधीयमानानेकवर्णवद्घटकलशादिशब्दग्रहणसंभवदर्शनाय तदुक्तमिति न पौनरुक्त्यम् ॥ **ग्राह्यपरिपाकेति**। तत्सहकृतेत्यर्थः। **अन्त्यबुद्धिः**–अन्त्यवर्णबुद्धिः। एवं च तादृशसंस्कारविशिष्टान्तःकरणसंयुक्तेन तादृशसंस्कारविशिष्टेन श्रोत्रेणान्त्यवर्णसंबद्धेन वर्णसमुदायप्रतिबिम्बवदखण्डस्फोटरूपपदादिप्रत्यक्षमिति भावः ॥ नन्वेवं सर्वदा शब्दोपलम्भः स्यादतः–भाष्ये—**प्रयोगेणाभिज्वलित इति**। तद्व्याचष्टे—**प्रयुज्यत इति** ॥ **ध्वनिरिति**। वर्ण इत्यर्थः ॥ भाष्ये—**एकं च**

**पुनराकाशमिति**। एवं चैकस्मिन्नात्रफले एक एव यथा रूपरसगन्धादिस्तथा तदाश्रयस्यैकत्वात्तद्गतः शब्दोऽप्येक एव। तत्रैव च तस्योपलम्भ इति भिन्नदेशोपलम्भ एवासिद्ध इति भावः ॥ नन्वेकत्वे 'अयं पूर्वः–अयं परः' 'अयं देवगृहे–अयं राजगृहे' इति भेदप्रतिभासः कथमत आह—**देशभेदेन त्विति**। औपाधिको भेदस्तु आकाशस्येव न शब्दस्याप्येकत्वे बाधकः। एवं संसर्गानित्यताऽपि तस्येव नास्यापि बाधिका, तस्यापि नीलं नभ इत्यादि संसर्गानित्यताप्रतीतेरित्याशयः ॥ अत्र **'शब्दः'** इत्येकवचनेन स्फोटस्यैकत्वमखण्डत्वं च ध्वनितम् ॥

( नानात्ववादिभाष्यम् )

**आकाशदेशा अपि बहवः[६]। यावता बहवः, तस्मादन्याय्यमकारस्य ॥**

**( प्रदीपः )** भेदवाद्याह—**आकाशदेशा इति**। यथा पृथिव्या एकत्वेऽपि स्रुघ्नमथुरादिदेशभेदव्यवहारः, एवमाकाशस्यापि संयोगिघटादिपदार्थावच्छेदेन भेदव्यवहार इत्यर्थः ॥

**( उद्द्योतः )** ननु निरवयवस्य कथं प्रदेशबाहुल्यमत आह—**यथेति**। एवं चौपाधिकभेदेन भेदो दुर्वारः। सर्वत्र[७] भेद औपाधिक एव, स एव च व्यवहारोपयोगीत्याशयः। श्रोत्रसंबन्धस्तु प्रदेशान्तरोत्पन्नशब्दस्यापि वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा तन्त्रान्तरे व्युत्पादित एव ॥

( सिद्धान्तसमाधानभाष्यम् )

**[८]*आकृतिग्रहणात्सिद्धम् ***

**अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथेवर्णाकृतिः, तथोवर्णाकृतिः ॥**

---

१ **'पद्भ्यां भूमिर्दिशः श्रोत्रात्'** इति पुरुषसूक्तश्रुतेः ॥ इति दाधिमथाः ॥

२ **आवश्यकमिति**। चक्षुरिन्द्रियं तैजसम्, तेजश्च पृथिव्याद्यन्यतममिति चक्षुषो भूतत्वम्, तथा श्रोत्रेन्द्रियमाकाशानतिरिक्तमिति तस्यापि भूतत्वम्। अत एवाकाशगुणस्य शब्दस्य श्रोत्रे उपलब्धिः। 'दिशः श्रोत्रं' इत्यस्याप्युपपत्तिमाह—**दिशोऽनतीति** ॥

३ **'दिक्कालौ नेश्वरादतिरिच्येते' मानाभावात्। तत्तत्कालोपाधिदिगुपाधिविशिष्टादीश्वरादेव क्षणदिनप्राचीप्रतीचीत्यादिव्यवहारोपपत्तेः'** इति ग्रन्थेन दिश ईश्वरानतिरिक्तत्वं बोधयित्वा **'शब्दकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वम्–'** इत्यादिग्रन्थेनाकाशस्यापीश्वरानतिरिक्तत्वस्य दीधितिकृता स्पष्टीकृतत्वेन **'तदभिन्नाभिन्नस्य तदभिन्नत्वम्'** इति नियमाङ्गीकारे दिगाकाशयोरनतिरिक्तत्वमिति सारम् ॥ दाधि० ॥

४ ननु श्रोत्रस्य निःक्रियत्वादेशान्तरगमनासम्भवेऽपि शब्दस्य देशान्तरगमनेन श्रोत्रसम्बद्धत्वं स्यादित्यत आह—**चेन शब्देति**। एवञ्चोभयोर्निःक्रियत्वे शब्दश्रोत्रयोः सम्बन्धाभावादसम्बद्धस्य च ग्रहणासम्भवान्नभ एव श्रोत्रमित्यवश्यमभ्युपेयम्। ननु तथाऽभ्युपगमे शब्दाकाशयोरुभयोरपि व्यापकत्वान्नित्यसम्बन्धस्तयोरिति दूरदेशावच्छिन्नशब्दस्यापि श्रवणापत्तिः स्यादत आह—**दूरदेशस्थेति** ॥

५ व्यापकस्य शब्दस्यैकत्वं नित्यत्वञ्च प्रसाधयति—**औपाधिक** इति ॥

६ अत्र बहव इत्यनेनाकाशत्वं जातिरप्यस्तीत्युक्तम्। तदुक्तम्—

संयोगिधर्मभेदेन देशोऽत्र परिकल्पिते।
तेषु देशेषु सामान्यमाकाशस्यापि विद्यते ॥

इति। तस्मादेवाकारस्यापि भेद इत्याह—भाष्ये **यावतेति**। यस्मादित्यर्थः ॥ छाया ॥

७ ननु औपाधिके भेदे सत्यपि पारमार्थिकोऽभेद एवेति को दोषोऽत आह—**सर्वत्रेति**। अकारव्यक्तिभेदवादिमते तस्यानित्यत्वेन श्रोत्रसंबन्धमुपपादयति—**श्रोत्रसम्बन्धस्त्विति** ॥

८ मुद्रितपुस्तकेषु 'आकृतिग्रहणात्सिद्धम्' 'तद्वच्च तपरकरणम्' 'हल्ग्रहणेषु च' एतानि वार्तिकत्वेन परिगण्यन्ते। वस्तुतस्तु यत्रान्यूनाक्षरैः सम्पुटीकरणं दृश्यते तदेव वार्तिकं भवति। एषु च न तथा सम्पुटीकरणमुपलभ्यत इति नैतानि वार्तिकानि। अत एवोद्द्योते तत्तद्व्याख्यानावसरे 'दोषो नेत्याह–भाष्ये—**आकृतिग्रहणादिति**' 'ज्ञापकमाह भाष्ये तद्वच्चेति' इत्यादौ **'भाष्ये'** इत्युक्तिः सङ्गच्छते। वार्तिकनिश्चयश्च—'अणिञो–' (४।१।७८) इति सूत्रव्याख्याने **'एते श्लोका भाष्यकृत एव न वार्तिककृतः, सम्पुटीकरणाभावात्'** इत्यादिना प्रदर्शितो नागोजीभट्टैः। एतच्च षष्ठाध्यायप्रस्तावनायां बहुशो वर्णितमिति तत एवावधार्यम् ॥

( प्रदीपः ) एवं व्यक्तिस्फोटपक्षे निराकृते जातिस्फोटपक्षमेवाश्रयते—**आकृतिग्रहणादिति** । आकारजातिः सर्वप्रदेशेषु निर्दिश्यते । नान्तरीयकस्तु व्यक्तिनिर्देशः । तत्र प्रत्याहारेऽकारजातेर्निर्देशात्तस्याश्च विवृतत्वप्रतिज्ञानाच्छास्त्रान्ते च तस्या एव प्रत्यापत्तिविधानम् । तदेवं जातिनिर्देशादनुवृत्तिनिर्देशस्थेनाकारेण ग्रहणमाकारस्य सिद्धम् । **'अष्टन आ विभक्तौ'** इत्यत्र तु सत्यपि जातिनिर्देशे दीर्घोच्चारणसामर्थ्याद्ध्रस्वस्य ग्रहणं न भवति । अन्यथा ह्रस्वमेवोच्चारयेत् । **'प्लुतश्च विषये स्मृतः'** इति न्यायात् प्लुतस्याग्रहणम् ॥

( उद्द्योतः ) तत्रापि पक्षे **'अस्य च्वौ'** इत्यादौ दोषो नेत्याह—भाष्ये—**आकृतिग्रहणादिति** ॥ तदाह—**अकारजातिरिति** ॥ **सर्वप्रदेशेष्विति** । प्रत्याहारे **'अस्य च्वौ'** इत्यादौ च । अकारव्यक्तीनामानन्त्यमाश्रित्य वार्तिककृता वर्णसमाम्नायस्थस्य विवृतत्वेऽपि धात्वादिस्थस्यापि विवृतोपदेशो नोदितः । भाष्यकृता तु प्रयोगस्थानां प्रत्याहारस्थैर्ग्रहणाय तत्र जातिनिर्देशे आवश्यके जातेर्विवृतत्वप्रतिज्ञानेनैव सर्वसिद्धेः स दोषो वारितः । **'अस्य च्वौ'** इत्यादौ तु सत्यपि विवृतत्वेऽनण्त्वात्सर्वावर्णग्रहणं न स्यादित्यपि जातिनिर्देशेनैव परिहृतम् । एवं च **'अणुदित्–'** सूत्रेऽण्ग्रहणं न कार्यमित्याशयः ॥ **तस्याश्चेति** । स्वाश्रयव्यक्तिद्वारेत्यर्थः ॥ तत्र प्रत्यापत्तिवाक्ये **तपरनिर्देशात्** षण्णामेकशेषनिर्देशाद्वा ह्रस्वस्यैव संवृतत्वं बोध्यम् ॥ ननु जातिनिर्देशेऽतिप्रसङ्ग इत्याह—**अष्टन इति ॥ अन्यथा ह्रस्वमेवेति । न च** तन्निर्देशेऽन्तरतमपरिभाषया दीर्घो न स्यादिति दीर्घविधानम्, दीर्घनिर्देशे तु तत्सामर्थ्यात्तस्यापि विधानम्, जातिग्रहणादन्यस्यापीति **वाच्यम्** । दीर्घनिर्देशसामर्थ्येनान्तरतमपरिभाषाबाधकल्पनापेक्षया ह्रस्वानुपस्थितेरेव कल्पने लाघवमित्याशयात् ॥ ननु दीर्घोच्चारणसामर्थ्यान्मा भूद्ध्रस्वः, प्लुतस्तु स्यादत आह—**प्लुतश्चेति । विषये**=दूराद्धूतादौ । अनेनापि प्लुतविधानेंऽशेऽनुवाददोषः स्यादिति भावः ॥

( सिद्धान्तसाधकभाष्यम् )

***तद्वच्च तपरकरणम् ***

**एवं च कृत्वा तपराः क्रियन्ते-आकृतिग्रहणेनातिप्रसक्तमिति ॥**

( प्रदीपः ) **तद्वच्चेति । स** आकृतिपक्षो यत्रास्ति–तद्वत् । अथवा वत्यन्तमेतत्, तत्र न्यायेनाकृतिपक्षस्य स्थापितत्वात्तपरेष्वपि स एव पक्षः स्थित इत्यर्थः ॥

( उद्द्योतः ) 'सर्वत्राकृतिर्निर्दिष्टा' इत्यत्र ज्ञापकमाह–भाष्ये—**तद्वच्चेति** ॥ सादृश्ये वतिभ्रमं व्यावर्तयति—**स इति ॥ अथवा वत्यन्तमेतदिति** । तदा **'तद्वत्'** इत्यस्य **'अस्य च्वौ'** इत्यादिवदित्यर्थः ॥ तदाह—**तत्र न्यायेनेति** । तत्र—**'अस्य च्वौ'** इत्यादौ । आकृतिग्रहणप्रयुक्तातिप्रसङ्गनिवारणार्थमेव हि तत्र तत्र तपरकरणम् ॥ जातिपक्षेऽपि विवृतत्वप्रतिज्ञा **'अकः सवर्णे–'** इत्यादेः 'दण्डानतिः' इत्यादौ दीर्घार्थमावश्यिकैव । एवं प्रत्यापत्तिवचोऽप्यावश्यकमेव । तुल्यन्यायाज्जातिग्रहणप्रयुक्तातिप्रसङ्गनिवारणाय तपरत्ववत् विधेये **'त्यदादीनामः'** इत्यादौ तद्वारणाय **'अप्रत्ययः'** इत्येतदिति बोधितम् । अत्र पक्षेऽण्ग्रहणप्रत्याख्यानेऽपि **ऋलृवर्णयोः सावर्ण्येन** समानजातित्वातिदेशान्न दोष इति भावः ॥

( सिद्धान्तदूषकभाष्यम् )

**ननु च सवर्णग्रहणेनातिप्रसक्तमिति कृत्वा तपराः क्रियेरन् ॥**

( सिद्धान्तभूषकभाष्यम् )

**प्रत्याख्यायते तत् *सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वाच्च* इति ॥**

( सिद्धान्ते आकृतिग्रहणावश्यकत्वबोधकं भाष्यम् )

***हल्ग्रहणेषु च***

**किम् ?**

---

१ **एवं व्यक्तिस्फोटेति** । उक्तप्रकारेण प्रसङ्गाद्व्यक्त्यैक्यपक्षे दूषिते परिशेषात् 'जातिरेवैका नित्या विभ्वी, व्यक्तयो भिन्नाः' इति पक्षमेवाश्रयितुं तत्र पक्षे धात्वादौ विवृतत्वाद्यनेकयत्नाद् **'अस्य च्वौ'** इत्यादिस्थसवर्णाग्रहणादिरूपप्रागुक्तदोषोद्धाराय जातिपक्षमेवाश्रयते इत्यर्थः । अन्यथा तदाश्रयणे व्यक्तिभेदेन प्रागुक्तदोषापत्तिरिति भावः ॥ छाया ॥

२ **तत्रापि**–व्यक्तिभेदेऽपि ॥ छाया ॥ **दोषो नेति** । आकाशदेशानामवच्छेदकभेदेन बहुत्वमनिवार्यमित्यकारादीनां भेद एव, ततश्च 'अस्य च्वौ' इत्यादौ सवर्णाग्रहणरूपो दोषस्तदवस्थः, स च वक्ष्यमाणजातिपक्षाश्रयणे न सम्भवतीत्याहेत्यर्थः । **तत्रापि**–आकाशदेशानां बहुत्वाद्व्यक्तिभेदेऽपि । **पक्षे**–जातिपक्षे । अत्र राजलक्ष्मीकारेण 'तवापि' इति उल्लिख्य तदर्थो दर्शितः । तच्च भाष्यप्रदीपोद्द्योतेषु न दृश्यते ॥

३ **भाष्यकृतेति** । वार्तिककृतोभयत्रापि विवृतोपदेशश्चोदितः । तदाश्रयणेऽपि अनुवृत्तिनिर्देशे दोषमाक्षिप्य व्यक्त्येकपक्षाश्रयणेन समाहितम् । स च पक्षः कालशब्दव्यवायदेशपृथक्त्वदर्शनादिहेतुभिः सन्दूषितः । वार्तिककारेणैव सन्दूषितेऽस्मिन् पक्षे भाष्यकृता दोषवारणाय जातिपक्ष आश्रितः । एवञ्च 'आकृतिग्रहणात्सिद्धम्' इत्यादीनि त्रीणि भाष्यवार्तिकानीत्येव सिद्धान्तः ॥

४ नन्वेकत्र तदाश्रये साफल्ये व्यक्त्यन्तरे न स्यात् । सामान्यशास्त्रीयविवृतत्वहानिः स्यादत आह—**तत्रेति** । तस्मिन्सतीत्यर्थः ॥ छाया ॥ **प्रत्यापत्तिवाक्ये**–'अ अ' इति सूत्रे ॥

५ **तस्यापीति** । अन्तरतमपरिभाषाबाधद्वारेति भावः । पर्यायेणेति बोध्यम् ॥ छाया ॥

६ **तद्वदिति** । तत्र तत्र तपरकरणेनाकृतिपक्षो ज्ञाप्यते–अकारादिषु आकृतिपक्षः, तपरकरणादिति भाष्यवार्तिकाभिप्रायः ॥

७ ज्ञापकत्वं विघटयति—**ननु चेति ॥ क्रियेरन्निति** । संभावनायां लिङ् । एतदपि संभवत्येवेत्यर्थः । तथा च तस्य तत्कृतातिप्रसङ्गवारकत्वादज्ञापकत्वमिति भावः ॥ छाया ॥

८ इदं दूषयति—**प्रत्याख्यायत इति । तत्**–सर्वग्राहकेऽण्ग्रहणमित्यर्थः ॥ एवं च तपरकरणं लिङ्गमेव ॥ छाया ॥

९ नन्वाकृतिपक्षो न सूत्रवार्तिकसंमत इत्याशङ्कां निवर्तयति—**हल्ग्रहणेष्विति** । एवञ्च हल्ग्रहणेषु व्यक्तिपक्षाश्रयणेन नेष्टसिद्धिरिति अर्धजरतीयस्यायुक्तत्वाज्जातिपक्षाश्रयणमेव युक्तमित्याशयः ॥

"आकृतिग्रहणात्सिद्धम्" इत्येव । 'झलो झलि'– अवात्ताम्, अवात्त । यत्रैतन्नास्ति—अण् सवर्णान्गृह्णाति–इति ॥

( प्रदीपः ) हल्ग्रहणेषु चेति । अवश्याश्रयणीयत्वमाकृतिपक्षस्य दर्शयति । व्यक्तिपक्षे ह्येकस्यैव तकारस्यानुकरणं खफछठथेत्यत्र तकार इति द्वयोस्तकारयोर्झल्त्वं न स्यात्, अपि त्वेकस्यैवेति 'अवात्ताम्' इत्यत्र सिज्लोपो न स्यात्, 'अभित्थाः' इत्यादावेव स्यात् ॥

( उद्योतः ) अवात्तामिति । वसेर्लुङ्, तसस्ताम्, सिच्, 'सः सि–' इति तत्त्वम्, 'वदव्रज–' इति वृद्धिः, 'झलो झलि' इति सलोपः ॥ ननु वचनसामर्थ्याज्झल्सदृशेऽपि भविष्यतीत्यत आह—अभित्था इति । भिदेर्लुङि सिचि रूपम् ॥

( ३२ सिद्धान्तसमाधानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ रूपसामान्याद्वा ॥ * ॥

( भाष्यम् )

**रूपसामान्याद्वा सिद्धमेतत् । तद्यथा–'तानेव शाटकानाच्छादयामः, ये मथुरायाम्' 'तानेव शालीन् भुञ्ज्महे, ये मगधेषु' 'तदेवेदं भवतः कार्षापणं, यन्मथुरायां गृहीतम्', अन्यस्मिंश्चान्यस्मिंश्च रूपसामान्यात् 'तदेवेदम्' इति भवति । एवमिहापि रूपसामान्यात्सिद्धम् ॥ १ ॥**

( प्रदीपः ) रूपसामान्यादिति । व्यक्तिनिर्देशेऽपि भेदापरामर्शेन लोकवदभेदव्यवहारोऽस्तीति सिद्धमिष्टम् । व्यक्तिव्यतिरिक्तं तु सामान्यं भवतु मा वा भूत्, सर्वथा लोक इव शास्त्रे व्यवहार इत्यर्थः ॥ १ ॥

( उद्योतः ) आकृत्यनाश्रयणेऽप्याह—भाष्ये रूपसामान्यादिति ॥ तद् व्याचष्टे—व्यक्तीति ॥ अभेदव्यवहार इति । रूपसादृश्यनिबन्धनप्रत्यभिज्ञाकृताभेदव्यवहार इत्यर्थः । अल्पमहत्स्थूलकृशह्रस्वदीर्घगोघटादिषु 'गौः' 'घटः' इत्यादिव्यवहारवदिति भावः ॥ एवं च व्यक्तिव्यतिरिक्तजातिस्वीकारोऽपि व्यर्थ एवेत्याशयेनाह—व्यक्तिव्यतिरिक्तं त्विति ॥ मा वेति । अनुगतप्रतीतिव्यवहारयोः सादृश्येनैवोपपत्तेरिति भावः । सादृश्यं चात्र समानध्वनिकृतम् ॥ १ ॥

( इति जातिपक्षः ॥ )

---

( शिवसूत्रम् )

## ॥ ऋऌक् ॥ २ ॥

( ऌकारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ ऌकारोपदेशः किमर्थः ?**

( उद्योतः ) ऋऌक् । भाष्ये–अथ ऌकारेति । यद्यप्येतच्चतुर्दशसूत्रीविवृतौ नन्दीश्वरकृतकाशिकायामनेकेषामृषीणां नानाविधार्थजिज्ञासायां शिवेन सर्वजिज्ञासानिवृत्तये एषा ढक्कानिनादेन प्रकाशितेत्युक्तम्–इति–इदमनुपपन्नम्, तथापि पाणिन्युद्देश्यकं फलमस्ति न वा–इति–एतत्तात्पर्यम् । अन्त्यवर्णचतुर्दशं तु पाणिन्युद्देशेनैवोपदिष्टमित्यपि तत्रैव स्पष्टम् ॥

( आक्षेपबाधकभाष्यम् )

**किं विशेषेण ऌकारोपदेशश्चोद्यते, न पुनरन्येषामपि वर्णानामुपदेशश्चोद्येत ।**

**यदि किंचिदन्येषामपि वर्णानामुपदेशे प्रयोजनमस्ति, ऌकारोपदेशस्यापि तत् भवितुमर्हति, को वा विशेषः ?**

---

१ 'णीयतामाकृति' इति क. पाठः ॥

२ 'पक्षे त्वेकस्यैव' इति क. ख. पाठः ॥

३ 'त्यत्र त इति' इति क. ख. पाठः ॥

४ रूपसामान्यादिति । एतच्च वार्तिकम्, भाष्यकृता सिद्धमेतदित्यन्तेन सम्पुटीकरणात् । वार्तिके वाशब्दश्च 'अकारस्य विवृतोपदेश आकारग्रहणार्थः' इति वार्तिकोक्तपक्षेण विकल्पार्थः । उद्योते 'भाष्ये रूपसामान्यात्' इत्युक्तिरपि सम्पुटीकरणाश्रयेति न विरुद्धा ॥

५ उभयं पदार्थ इत्युक्तेस्तत्रापि गतिर्वक्तव्या, नहीयमेव व्यक्तिरनुकार्येत्यत्र प्रमाणमस्ति । न चाविशेषः, व्यक्तिपक्षहानात् । न चोपात्तव्यक्तेर्लक्ष्यसमवायोऽस्तीति महदनौचित्यमिति भावः ॥ छाया ॥

६ ननु जात्यभावे कथं सादृश्यम् । न चावयवकृतम्, तेषां निरवयवत्वादत आह—सादृश्यमिति ॥ छाया ॥

७ 'ऌकारस्योपदेशः किमर्थः' इति प. पाठः ।

८ अनेकस्यर्षीति पाठः । अनेकेषामित्यपपाठः, संख्याप्रधानानेकशब्दे बहुवचनस्यानिष्टताया नञ्सूत्रभाष्ये स्पष्टत्वात् । मञ्जूषायां विवृतत्वाच्च । दा. म. ॥ वस्तुतः 'अनेकेषां ऋषीणां' इत्येव पाठः साधुः । प्राचीनपुस्तकेषु 'अनेकस्यर्षी' इति पाठो न क्वापि दृष्टचरः । समस्तनञ्स्थले 'आरोपविषयत्वं नञ्द्योत्यम्, यद्वा स्वसमभिव्याहृतघटादिपदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहको नञ्' इत्युक्तं । 'अनेको जना आगताः–इत्यस्य साधुतापत्तेश्च' इत्यनेन 'अनेकस्यर्षीणां–'इत्यस्यासाधुत्वमपि सुस्पष्टमुक्तं मञ्जूषायाम् ॥

९ 'नृत्तावसाने नटराजराजो
ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तुकामः सनकादिसिद्धा-
नेतद्विमर्शे शिवसूत्रजालम् ॥' इत्यत्र ॥

१० 'अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥'

इति नन्दीश्वरकाशिकायामेव ॥ तत्र धात्वर्थमित्यनेन धातुमूलकशब्दसाधकशास्त्रप्रवृत्त्यर्थमित्यर्थकेनान्त्यवर्णकरणस्यान्यप्रयोजनकत्वाभावबोधनात् ॥

११ चोद्यत इति । किं विशेषेण ऌकारोपदेशप्रयोजनमेव पृच्छ्यते, अन्येषामपि वर्णानामुपदेशप्रयोजनं किं न पृच्छ्येतेत्यर्थः । यद्यपि अस्मिन् सूत्रे वर्णद्वयमेवावशिष्टमिति 'अन्येषां' इत्यनुपपन्नं तथापि अइउण्सूत्रेऽपि तादृशप्रयोजनप्रश्नादर्शनात्तेषामप्यत्र संग्रहः ॥

( आक्षेपसाधकभाष्यम् )

**अयमस्ति विशेषः—अस्य हि ऌकारस्याल्पीयांश्चैव प्रयोगविषयः । यश्चापि प्रयोगविषयः सोऽपि क्लृपिस्थस्य । क्लृपेश्च लत्वमसिद्धम्, तस्यासिद्धत्वादृकारस्यैवाच्कार्याणि भविष्यन्ति । नार्थ ऌकारोपदेशेन ॥**

( प्रदीपः ) **ऋऌक् । अल्पीयानिति ।** ऋकारापेक्षः प्रकर्षः । ऋकारस्याल्पः प्रयोगस्ततोऽप्यस्याल्पतर इत्यर्थः ॥ अल्पप्रयोगस्यापि कार्यार्थ उपदेशः कर्तव्य इत्याशङ्क्याह—**यश्चापीति ।** तत्र ऋकारावस्थायामेवोदात्तादिषु कृतेषु **'स्थानेऽन्तरतमः'** इति स्थानिसदृश ऌकारो भविष्यति ॥

( उद्योतः ) भाष्ये **'प्रयोगविषयः'** इति कर्मधारयः । प्रयोगादन्यत्रानभिव्यज्यमानतया प्रयोगो विषय इत्युक्तः ॥ **अल्पेति ।** यथा **'मुद्गादण्'** इत्यादेः ॥ ननु ऋकारे कार्यप्रवृत्तावपि ऌकारे कथं तत्कार्योदात्तत्वादीनां दर्शनमत आह—**तत्रेति ॥ स्थानेऽन्तरतम इतीति ।** यद्यपि **'कृपो रो लः'** इत्यत्र रेफलकारयोः स्थान्यादेशभावस्तथापि तद्द्वारा ऋकारऌकारयोरपि स इति भावः ॥

( भाष्यम् )

**अत उत्तरं पठति—**

( ३३ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ ऌकारोपदेशो यदृच्छाऽशक्तिजानुकरणप्लुत्याद्यर्थः ॥ * ॥

( भाष्यम् )

**ऌकारोपदेशः क्रियते—यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च ?** [३] [४]

**यदृच्छाशब्दार्थस्तावत्—यदृच्छया कश्चिद् ऌतको नाम । तस्मिन्नच्कार्याणि यथा स्युः—दध्ऌतकाय देहि, मध्ऌतकाय देहि, उदङ्ङ्ऌतकोऽगमत्, प्रत्यङ्ङ्ऌतकोऽगमत् ।**

**चतुष्टयी शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाश्चतुर्थाः ॥**

( प्रदीपः ) **यदृच्छेति ।** अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्तते स **यदृच्छाशब्दो** डित्थादिः ॥ **ऋकारऌकारयोः सवर्णविधिरित्यस्य** वार्तिककारवाक्यत्वात्सूत्रकारेणानाश्रितत्वादत्र ऌकारोपदेशः कृतः ॥ **अर्थवत्सूत्रारम्भाचाव्युत्पन्ना** यदृच्छाशब्दाः सन्तीत्यवगम्यते । गाव्यादीनां तु गवादिभिर्निवर्तितत्वादसाधुत्वम् । **ऋतकशब्दस्त्वर्थाश्रयेणैव** विनियुक्त इति **ऌतकशब्दस्यानिवर्तकः** ॥

( उद्योतः ) **अर्थगतमिति ।** शब्दातिरिक्तमर्थरूपमित्यर्थः । यद्वा व्यक्तेरेव वाच्यता । तस्यां च प्रकारताविशेष्यताख्यविषयताद्वयाङ्गीकाराच्छक्तिग्रहोपपत्तिः, सविकल्पकोपपत्तिश्च तत इति भावः ॥ **प्रयोक्त्रभिप्रायेणैवेति ।** शक्तिबोधनं प्रयोक्त्रधीनमिति भावः । अन्यथा शब्दार्थसंबन्धस्यानित्यतापत्तिः । एवं च **'स्वेच्छयैकस्यां व्यक्तौ सङ्केत्यमानः शब्दः-यदृच्छाशब्दः'** इति बोध्यम् ॥ ननु ऋकारस्याच्त्वे ऋऌवर्णयोः सावर्ण्यात् ऋकारेण ऌकारस्यापि ग्रहणादच्कार्यसिद्धौ किं ऌकारोपदेशेनेत्यत आह—**ऋकारेति ॥ उपदेशः कृत इति ।** पाणिनये शिवेन इति शेषः । वस्तुतोऽत्र तस्यानुपदेशेऽप्रामाणिकत्वशङ्कया सवर्णविधिरपि तयोर्वक्तुमशक्य इति तदुपदेशः ॥ सवर्णविधिद्वारकफलमपि स्थलत्रय एवेति तत्रैव प्रयोजनोपन्यास इति बोध्यम् ॥ ननु सन्तमसन्तं वा क्रियायोगमर्थगतमङ्गीकृत्य डित्थादीनामपि व्युत्पत्तेरर्थगतार्थरूपप्रवृत्तिनिमित्तानपेक्षशब्दसत्त्वे किं मानमत आह—**अर्थवदिति । चिन्त्यमिदम्,** बहुच्पूर्वे तस्य चारितार्थ्यात् ॥ एतदर्थं **तद्धितपदं** तद्भिन्नविशिष्टपरम् । **'अप्रत्ययः'** इत्युक्तेश्च पचतकीत्यादौ न दोषः । प्रत्ययश्च तद्धितभिन्न एव । बहुपटवस्तिछन्तीत्यादौ **'यं समुदायं'** इति न्यायेन न दोषः-इति कैयटाशय**मन्ये ॥** ननु ऌतकस्यासाधुत्वात्कथं शास्त्रविषयता-इत्यत आह—**गाव्यादीनामिति ॥** ऋतकेन ऌतकानिवृत्तौ हेतुः-**अर्थाश्रयेणेति ।** स्वगतक्रियारूपार्थाश्रयेणेत्यर्थः । अर्थतः सजातीयस्यैव निवृत्तिः । एकप्रवृत्तिनिमित्तकत्वे सति अन्वाख्यातमनन्वाख्यातस्य निवर्तकमिति भावः । तत् ध्वनयन्नाह—भाष्ये-**चतुष्टयीति ।** शब्दानामर्थे या प्रवृत्तिः सा प्रवृत्तिनिमित्तभेदात्प्रकारचतुष्टयवतीत्यर्थः । तत्र **यदृच्छाशब्दो** नाम वक्त्रा स्वेच्छया संनिवेशितः । स चानेकविधः—एकव्यक्तिसंनिवेशितो डित्थादिरेकः । तत्र न किंचिदतिरिक्तं प्रवृत्तिनिमित्तम्, आनन्त्यव्यभिचारयोरभावात् । किंतु शक्यस्यैवार्थस्य विषयताद्वयेन भानम् । तदुत्तरत्वादेः प्रकारत्वावच्छिन्नः स एवार्थः । **यद्वा** शब्दपराद्वाच्येऽर्थे एव त्वादिः । एवं कादिपदानां कादीनामेकत्वमते तेषु शक्तिः । ततो डित्थादिपदादिव शक्यार्थे एव त्वादिः । कुत्वमिति—कुरिति च पर्यायौ । अनेकत्वमते तत्तज्जात्युपलक्षिते सा । टिघुभादीनां तु तच्छक्यानामानन्त्यात्तत्पदमेव प्रवृत्तिनिमित्तम् । तदेव च तदुत्तर-त्वाद्यर्थः । भत्वादिपदैर्भादिसंज्ञैवोच्यते । अत एव **वृद्धि-** सूत्रे वक्ष्यति—**''कुत्वं कस्मान्न भवति चोः कुः पदस्येति । भत्वात् । कथं भसंज्ञा''** इति । अनेन च भाष्येण कुकुत्वपदयोः भत्वभसंज्ञापदयोः पर्यायत्वं स्पष्टमेव । संज्ञा च पदमेव ॥

( वार्तिकविवरणभाष्यम् )

**अशक्तिजानुकरणार्थः । अशक्त्या कयाचिद् ब्राह्मण्या ऋतक इति प्रयोक्तव्ये ऌतक इति प्रयु-**

---

१ 'योऽपि प्र' इति प. पाठः ॥

२ 'स्यस्यैव । क्लृपेश्च' इति मुद्रितपाठः ॥

३ साधुशब्दोच्चारणशक्तेरन्या शक्तिरेवात्राशक्तिः । न ह्यशक्तेर्जन्मेति । प० मं०

४ **इको यणचीत्यत्रा**ऽसत्यपि ऌकारोपदेशे वैषम्यात् संख्यातानुदेशाभावेऽपि आन्तरतम्यात्सिद्धमिष्टम्, गमिप्रभृतीनां ऌकारस्येत्संज्ञाऽपि **पुषादिद्युताद्य्ऌदित** इति ज्ञापकात् सिद्धा । अतो निर्दिष्टान्येव प्रयोजनानि । प० मं० ॥

क्तम् । तस्यानुकरणं-ब्राह्मण्लृतक इत्याह, कुमार्य्लृतक इत्याह[1] ॥

( प्रदीपः ) **अशक्तिजेति** । अशक्तिजानुकरणस्य जातिशब्दत्वमिच्छन्ति । यस्मादनुक्रियमाणे शब्दे या जातिः समवेता तत्संबद्धमनुकार्यमनुकरणं प्रत्याययति ॥

( उद्द्योतः ) ननु चतुर्विधेष्वनुकरणशब्दः कान्तर्भवतीत्यत आह—**अशक्तिजेति** ॥ **यस्मादिति** । अनुक्रियमाणशब्दव्यक्तयो बह्व्यः । प्रत्यभिज्ञा तु जातिनिबन्धना रूपसादृश्यनिबन्धना चेति[2] भावः ॥ एतेऽपि यदृच्छाशब्दाः, स्वेच्छैव[3] वक्ता शब्दपरतया प्रयोगात्-इत्यन्ये ॥

( वार्तिकविवरणभाष्यम् )

**प्लुत्याद्यर्थञ्च[4] लृकारोपदेशः कर्तव्यः ॥**

**के पुनः प्लुत्यादयः ?**

**प्लुतिद्विर्वचनस्वरिताः । क्लृ३प्तशिख । क्लृप्तः । प्रक्लृप्तः[5] । प्लुत्यादिषु कार्येषु क्लृपेर्लत्वं सिद्धम्, तस्य सिद्धत्वादच्कार्याणि न सिद्ध्यन्ति । तस्मात् लृकारोपदेशः क्रियते ॥**

( उद्द्योतः ) प्लुत्यादिकं च **'गुरोरनृतः'** इति प्लुतः[7], **'अनचि च'** इति द्वित्वम्[8], प्रपूर्वात्क्लृपेरन्तर्भावितण्यर्थात्कर्मणि क्ते **'गतिरनन्तरः'** इति पूर्वपदप्रकृतिस्वरे वर्ज्यमानस्वरेण[9] शिष्टस्यानुदात्तत्वे **'उदात्तादनुदात्तस्य–'** इति स्वरितत्वम्[10] ॥ **'अनृतः'** इति निषेधस्तु न, ऋदिल्लृदिदिति पृथगनुबन्धकरणेन क्वचित्परस्पराग्रहणज्ञापनात् ॥

( प्रयोजननिराकरणभाष्यम् )

**नैतानि सन्ति प्रयोजनानि ॥**

( ३४ प्रयोजनप्रत्याख्यानवार्तिकम् ॥ २ ॥ )

**॥*॥ न्याय्यभावात्कल्पनं संज्ञादिषु ॥*॥**

( भाष्यम् )

**न्याय्यस्य ऋतकशब्दस्य भावात् कल्पनं संज्ञादिषु साधु मन्यन्ते[11]—ऋतक एवासौ, न लृतक इति ॥**

( प्रदीपः ) **न्याय्यभावादिति** । ऋतकशब्दो न्याय्यः, **'कृदन्तं नाम कुर्यात्'** इति स्मृतावुक्तत्वात् । 'ऋतिः' सौत्रो धातुः, तत औणादिकः **'कुन्शिल्पिसंज्ञयोरपूर्वस्यापि'** इति कुन्प्रत्ययः ॥ **संज्ञादिष्विति** । आदिशब्देनैतद्दर्शयति—जातिगुणक्रियानिमित्ता अपि शास्त्रान्विता[12] एव प्रयोक्तव्या इति ॥ सर्वशब्दव्युत्पत्तिपक्षे किं **'अर्थवत्–'**सूत्रेणेति चेत्, शिष्टप्रयुक्तानामेवाव्युत्पत्तिपक्षोऽप्यस्तीति ज्ञापनाय **'अर्थवत्–'** सूत्रोपादानम् । अनुकरणशब्दानामव्युत्पन्नत्वात्तदर्थं च ॥

( उद्द्योतः ) **न्याय्य इति** । संज्ञात्वेन कल्पयितुमिति शेषः ॥ तत्र हेतुमाह—**कृदन्तमिति** ॥ प्रकृतिप्रत्ययादिविभागेनान्वाख्यातत्वमेव न्याय्यत्वमित्याशयेन शङ्कते—**सर्वशब्देति** । शिष्टप्रयुक्तत्वमपि न्याय्यत्वमिति परिहारः ॥ न च तस्यैव प्रयोगे लृतकशब्दो बोधकोऽपि न स्यादिति **वाच्यम्** । बोधकत्वेऽप्यसाधुत्वान्न शास्त्रीयकार्यनिमित्तत्वमित्याशयात् । तद्ध्वनितं भाष्ये–**"साधु मन्यन्ते"** इति ग्रन्थेन ॥ ऋतक **एवासाविति** । ऋतकशब्दप्रतिपाद्य[13] एवासौ, न लृतकशब्दप्रतिपाद्य इत्यर्थः ॥

( व्याख्यान्तरभाष्यम् )

**अपर आह—न्याय्य ऋतकशब्दः शास्त्रान्वितो[14]ऽस्ति, स कल्पयितव्यः साधुः संज्ञादिषु । ऋतक एवासौ, न लृतकः ॥**

( प्रदीपः ) **अपर आहेति** । पूर्वमुक्तम्–ऋतक शब्द एव न्याय्यत्वान्नियोक्तव्यः, न तु लृतकशब्द इति । इदानीं तु ऋतकशब्दस्यैवायमपभ्रंशोऽशक्तिजत्वात् लृतक शब्द इत्युच्यते ॥

( उद्द्योतः ) **इदानीं त्विति** । भाष्ये **'कल्पयितव्यः'** इत्यस्य विनियुक्तत्वेन ज्ञेय इत्यर्थः । साधुर्ऋतक एव नामत्वेन कृतो न लृतकः । अशक्त्या तु तथोच्चारणमित्यपभ्रंशत्वान्न शास्त्रविषय इति भावः ॥ **अशक्तिजत्वादिति** । जिह्वाऽपाटवजत्वादित्यर्थः । एवं चासाधुरेवेति भावः ॥

---

१ **इत्याहेति** । तत्राच्कार्याणि यथा स्युरिति शेषः ॥ छाया ॥ च. छ. ज. पुस्तकेषु 'इत्याहेति' इति पाठः, तत्र 'इति' शब्दो लेखकप्रमादात् ॥

२ 'निबन्धना वेति' इति च. छ. पाठः ॥

३ 'स्वेच्छयेव' इति ग. पाठः ॥

४ चः पूर्वसमुच्चये । एतदग्रे **'लृकारोपदेशः कर्तव्यः'** इति **'कर्तव्यः'** इति वाऽपपाठः ॥ छाया ॥ इदानींतनोपलब्धपुस्तकेषु प्रामाणिकेषु तादृश एव पाठ उपलभ्यते ॥

५ ननु च **कृपो रो लः** इत्येतत्सूत्रं स्वरितविधानात्परं **अ अ** इत्येतत्सूत्रात्पूर्वमस्तु । एवं हि लत्वस्यासिद्धत्वात् प्लुतस्वरितद्विर्वचनान्यपि ऋकारस्यैव सिध्यन्ति । नैतदस्ति । **कृपो रो लः** इत्येतस्मिन्नुत्कृष्यमाणे **ग्रो यङि** इत्येतदप्युत्क्रष्टव्यम् । ततश्च निजेगिल्यत इति **हलि च** इति दीर्घत्वं स्यात् तस्मिन् कर्तव्ये लत्वस्यासिद्धत्वादिति यथान्यासमेव साधीयः ॥ इति प० मं० ॥

६ अतोऽग्रे 'प्रक्लृप्तवान्' इति प. पाठः ॥

७ **प्लुत इति** । स चोदात्तः । स च **'अचश्च'** इति वचनादच्त्वमपेक्षते । गुरुसंज्ञार्थञ्चेति भावः ॥ छाया ॥

८ **द्वित्वमिति** । पकारस्याच उत्तरस्येति भावः ॥ छाया ॥

९ **वर्ज्यमानस्वरेण**–अनुदात्तं पदमेकवर्जमित्यनेन ॥

१० ननु च नात्र स्वरितो विधीयते । सत्यम्, अनुदात्तसंज्ञावचो विधीयते स्वरितसंज्ञाऽप्येवम्, ततश्च स्थान्यादेशयोरुभयोरपि लृकारयोरनच्त्वात्स्वरितो न स्यादेवेति प० मं० स्पष्टम् ॥

११ 'मन्यते' इति अ. पाठः ॥

१२ **शास्त्रान्विता एवेति** । तथा च जातिशब्दादौ यथा गवादयो गाव्यादिनिवर्तकास्तथा ऋतकादय लृतकादिनिवर्तका इति दृष्टान्तलाभः ॥ छाया ॥

१३ ननु येन नाम कृतम्—लृतक इति, तेनैव लृतक इति व्यवह्रियमाणत्वेन 'ऋतक एवासौ न लृतकः' इति कल्पनमयुक्तमत आह—**ऋतकेति** । तच्छब्दप्रतिपादनीय एवासावित्यर्थः ॥ छाया ॥

१४ **न्याय्य** इत्यस्य व्याख्या—**शास्त्रेति** ॥ छाया ॥

( प्रत्याख्यानबाधकभाष्यम् )

**अयं तर्हि यदृच्छाशब्दोऽपरिहार्यः—ऌफिडः, ऌफिड्डः ॥**

**( प्रदीपः ) अयं तर्हीति** । ऋतकशब्दोऽन्वाख्यातत्वाद्भवतु ऌतकशब्दस्य निवर्तकः । ऋफिड-ऋफिड्ड-इत्येतौ त्वनन्वाख्याताविति कथं ऌफिड-ऌफिड्ड-इत्येतयोर्निवर्तकौ स्यातामिति भावः ॥

**( उद्योतः )** ऌतकात् ऌफिड्डे वैषम्यं दर्शयति—**ऋतकशब्द इति** ॥ **ऌतकशब्दस्येति** । अनन्वाख्यातस्येत्यादिः ॥

( प्रत्याख्यानसाधकभाष्यम् )

**एषोऽपि ऋफिडः, ऋफिड्डश्च ।**

**कथम् ?**

**अर्त्तिप्रवृत्तिश्चैवं हि लोके लक्ष्यते । फिडफिड्डावौणादिकौ प्रत्ययौ ॥**

**त्रयी च शब्दानां प्रवृत्तिः—जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा इति । न सन्ति यदृच्छाशब्दाः ॥**

**( प्रदीपः )एषोऽपीति** । **'उणादयो बहुलम्'** इत्येतावन्वाख्याताविति भावः ॥

**अर्त्तिप्रवृत्तिरिति** । अर्त्तेः फिडफिड्डप्रकृतित्वेन प्रवृत्तिरित्यर्थः ॥

**न सन्तीति** । अयत्वेऽपि यदा नाम क्रियते, तदा प्रशस्यरूपा क्रिया गुणो वाऽध्यारोप्यत इति भावः ॥

**( उद्योतः )** फिडफिड्डयोरुणादिष्वदर्शनादाह—**उणादय इति** । बाहुलकसिद्धावेतावित्यर्थः ॥ **अर्तिप्रवृत्तिश्चैवेति** । तथा च फिडफिड्डयोः स एव प्रकृतिर्न तु 'ऌ' इति धात्वन्तरं कल्प्यम् । **'संज्ञासु धातुरूपाणि'** इति तु अनादिशिष्टप्रयोगसाधने उपायमात्रं न त्वाधुनिकक्रियमाणसंज्ञाऽनुग्राहकमिति भावः ॥ एवं च देशभाषानुसारेण क्रियमाणं 'कूची-मञ्ची' इत्याद्यसाधु, शास्त्राविषयश्चेत्युक्तम् ॥ **अर्तेरिति** । यतस्तस्य लोके प्रवृत्तिर्लक्ष्यते अतः फिडादिप्रकृतित्वेनापि तस्यैव प्रवृत्तिरित्यर्थः ॥ एवं यदृच्छाशब्दानङ्गीकृत्य शास्त्रान्वितानां कचिच्छिष्टप्रयुक्तानामेव यत्रकुत्रचित्संज्ञात्वेन विनियोगः, नान्येषाम्—इत्येवं ऌतकऌफिडादीनां शास्त्रविषयत्वाभावान्न तदर्थो ऌकारोपदेश इत्युक्तम् ॥ इदानीं **'न सन्त्येव यदृच्छाशब्दाः'** इति पक्षावष्टम्भेन तदर्थत्वं प्रत्याचष्टे—भाष्ये—**त्रयी चेति** । चेनेदं ध्वनितम् ॥

नन्वेवं डित्थादीनां क्वान्तर्भावोऽत आह—**अयत्वेऽपीति** । एवं च सर्वेऽपि व्युत्पन्नाः क्रियादिशब्दा एवेति भावः ॥ **प्रशस्यरूपेति** । अत्यन्तप्रशंसायोग्येत्यर्थः । एवं च येषां क्रियागुणादिप्रवृत्तिनिमित्तकत्वं तेषां क्रियाद्यारोपेणार्थबोधकत्वमिति तात्पर्यम् । यद्वा पूर्वपूर्वडित्थादिगतप्रशस्तगुणक्रियारोपेण तत्प्रवृत्तिनिमित्तक एव डित्थादिभ्यो बोधः । आद्ये डित्थे तु तद्व्यक्तेरेव विषयताद्वयेन भानमिति सैव प्रवृत्तिनिमित्तमपीति **'तस्य भावः'** इति सूत्रे भाष्ये उपपादयिष्यते ॥

( प्रयोजनवादिभाष्यम् )

**अन्यथा कृत्वा प्रयोजनमुक्तम्, अन्यथा कृत्वा परिहारः । सन्ति यदृच्छाशब्दा इति कृत्वा प्रयोजनमुक्तम्, न सन्तीति परिहारः ।**

**समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति । तद्यथा-देवदत्तशब्दो देवदिण्णशब्दं निवर्तयति, न गाव्यादीन् ॥**

**( प्रदीपः ) अन्यथा कृत्वेति** । अव्युत्पत्तिपक्षाश्रयणेनाचार्येणोपदिष्टो ऌकारः । वार्तिककारस्तु व्युत्पत्तिपक्षाश्रयणेन प्रत्याचष्टे ॥

**समाने चेति** । इह च भिन्नार्थत्वम् । ऌतकशब्दो हि यदा संज्ञात्वेन विनियुज्यते क्वचित् पिण्डे तदा तच्छब्दस्वरूपाध्यासः, ऋतके तु विपर्ययः । भिन्नस्वरूपौ चैतौ शब्दाविति भावः ॥

**( उद्योतः ) अव्युत्पत्तीति** । संज्ञाशब्दा अव्युत्पन्ना इति पक्षाश्रयणेनेत्यर्थः ॥ **आचार्येणेति** । शिवो वेदपुरुषो वाऽन्याचार्यः । एवञ्च यदृच्छाशब्दसद्भावाश्रयेण प्रयोजने उक्ते तदनाश्रयणेन तत्प्रयोजननिराकरणमयुक्तमिति भावः ॥ ऋतकशब्दो ऌतकशब्दस्य साधुत्वाभावकल्पक इत्याद्यं दूषणमप्ययुक्तमित्याह—भाष्ये—**समाने चेति** ॥ **तत्रार्थशब्दः** प्रवृत्तिनिमित्ताभिप्राय इत्याह—**इह चेति** । तच्छब्दस्वरूपस्य व्यक्तिस्वरूपस्य वाऽर्थे प्रवृत्तिनिमित्तत्वेनाध्यास इत्यर्थः ॥ **विपर्यय इति** । क्रिया प्रवृत्तिनिमित्तमित्यर्थः ॥ **भिन्नस्वरूपौ**—भिन्नप्रवृत्तिनिमित्तौ । यदि तु ऋतकोऽपि शब्दप्रवृत्तिनिमित्तकस्तदा भिन्नस्वरूपत्वादेव प्रवृत्तिनिमित्तविपर्ययः । व्यक्तेरेव प्रवृत्तिनिमित्तत्वमिति पक्षे—ऋतकसङ्केतविषयव्यक्तेर्ऌतकसङ्केतविषयव्यक्तिभिन्नैवेति तद्विपर्ययोऽस्त्येवेति बोध्यम् ॥

( प्रत्याख्यानभाष्यम् )

**नैष दोषः । पक्षान्तरैरपि परिहारा भवन्ति ॥**

१ प्रयोजनवादी आह—भाष्ये—**अयं तर्हीति** ॥ छाया ॥

२ 'ऌफिड्डश्चेति' इति च. छ. प. पाठः ।

३ 'वतु वा ऌत' इति च. छ. पाठः ।

४ खण्डयिता परिहरति—**एषोऽपीति** ॥ तौ विनियोक्तुकामैर्भ्रान्त्या ऌफिड्डादिप्रयुक्तमित्यारोप्यस्याधिष्ठानानन्यत्वादेवमुक्तिः ॥ छाया ॥

५ **एवो** भिन्नक्रमः, लक्ष्यत एवेत्यर्थः । चोऽपि भिन्नक्रमोऽप्यर्थः । लोकेऽपीत्यर्थः ॥ तेन वेदपरिग्रहः ॥ छाया ॥

६ 'क्रियाशब्दाः । न सन्ति यदृच्छाशब्दा इति' इति प. पाठः ।

७ ऋतकशब्दस्य ऌतकशब्दनिवर्तकत्वासम्भवं प्रदर्शयति—**समान इति** ।

८ **इह च**-ऋतकऌतकशब्दविषये च । भिन्नार्थत्वमुपपादयति—**ऌतकशब्द इति** ।

९ **'प्रत्याचष्टे'** इति कैयटीयं पूर्वान्वयीति ध्वनयंस्तदाशयमाह—**एवं चेति** ॥ छाया ॥

**( प्रदीपः ) पक्षान्तरैरपीति ।** यथा द्रव्यपक्षे '**सरूपाणां**–' इत्यस्यारम्भः, जातिपक्षे तु प्रत्याख्यानम् ; एवमस्यापीत्यर्थः । अव्युत्पन्नसंज्ञाशब्दपक्षेऽपि पारम्पर्यायाताः शिष्टप्रयुक्ता एव संज्ञाः कर्तव्याः ॥

**( उद्योतः )** भाष्ये [1]समाधत्ते—**पक्षान्तरैरपीति** ॥ **जातिपक्षे त्विति । यत्तु**—अक्षादिनानार्थानामेकशेषाय तत्पक्षेऽप्यावश्यकम्—इति, तत्तु [2]जातिगतजातिस्वीकारेण परि[3]हृतम् । **पक्षान्तरैरपि परिहारा भवन्तीति** वार्ति[4]ककृतैवमुक्तम् ॥ वस्तुतश्चतुष्टयीपक्षेऽपि दोष[5]परिहारः सुकरः ॥ यदुक्तम्—ऋतको न लृतकनिर्[6]वर्तक इति । मा भूत्तस्य निवर्तकत्वम्, शिष्टप्रयोगाभावात्तु तन्निवृत्तिः ॥ न्याय्यत्वमपि वार्तिके शिष्टप्रयुक्तत्वमेवेत्यभिसन्धाय भगवताऽनुक्तमपि स्वयं मन्दबुद्ध्यनुग्रहाय स्फुटमाह—**अव्युत्पन्नेति** ॥ **पारम्पर्यायाताः**—अनादयः । एवं च शिष्टाप्रयुक्ता यदृच्छाशब्दा असाधुत्वेन शास्त्राविषया इति भाष्यतात्पर्यम् ॥ यत्तु—चतुष्टयीति पक्षे लृतकादीनां टिघुभादिवच्छास्त्रविषयत्वमेवेत्यस्माद्भाष्याल्लभ्यते–इति । तन्न, पक्षभेदेनैकस्य शास्त्रविषयत्वतदविषयत्वाङ्गीकारे '**न वेति**'सूत्रस्थभाष्यविरोधात् । टिघुभादीनां पाणिन्यादिशिष्टप्रयुक्तत्वेन साधुत्वाच्छास्त्रविषयत्वेऽपि अन्येषां तद्विषयत्वे मानाभावाच्च । **किञ्च** साध्वसाधुवहिर्भूतानामपि शास्त्रविषयत्वे '**साध्वनुशासनेऽस्मिञ्शास्त्रे**' इति तत्र तत्र भाष्योक्त्यसङ्गतिः । **किञ्च** शास्त्रविषयत्वमथ[7] तद्व्यङ्ग्यसाधुत्वाभाव इत्यशक्यमिति दिक् ॥

( ३५ द्वितीयप्रयोजनप्रत्याख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु ॥ * ॥

( भाष्यम् )

**अनुकरणं हि [8]शिष्टस्य साधु भवति, अशिष्टाप्रतिषिद्धस्य वा नैव तद्दोषाय भवति नाभ्युदयाय । यथा लौकिकवैदिकेषु । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ।**

**लोके तावत्—य एवमसौ ददाति, य एवमसौ यजते, य एवमसावधीते—इति तस्यानुकुर्वन् दद्याच्च यजेत [9]वाऽधीयीत च सोऽप्यभ्युदयेन युज्यते ॥**

**वेदेऽपि[10]—"य एवं विश्वसृजः सत्राण्यध्यासते" इति तेषामनुकुर्वन् तद्वत्सत्राण्यध्यासीत सोऽप्यभ्युदयेन युज्यते ॥**

**अशिष्टाप्रतिषिद्धं—य[11] एवमसौ हिक्कति, य एवमसौ हसति, य एवमसौ कण्डूयति–इति तस्यानुकुर्वन् हिक्केच्च हसेच्च कण्डूयेच्च, नैव तद्दोषाय स्यान्नाभ्युदयाय ॥**

**य[12]स्तु खल्वेवमसौ ब्राह्मणं हन्ति, एवमसौ सुरां पिबति–इति तस्यानुकुर्वन् ब्राह्मणं हन्यात्सुरां वा पिबेत्, सोऽपि मन्ये पति[13]तः स्यात् ॥**

---

१ **समाधत्ते इति ।** उभयशङ्कामित्यादिः । अनेन–भाष्ये–'**नैष दोषः**' इत्यपपाठः—इति सूचितम् ॥ तत्पाठे तु—खण्डको दोषद्वयं खण्डयति—**नैष दोष इति ।** जातावेकवचनम् । तत्र हेतुमाह—**पक्षान्तरैरिति ।** यत इत्यादिः–इति भाष्यार्थो बोध्यः ॥ छाया ॥

२ सकलसाधारणप्रवृत्तिनिमित्तकल्पनेनानेकार्थतोन्मूलनहेतुना तत्प्रत्याख्यानानौचित्यमिति दोषान्तरनिरासायाह—**जातिगतजातीति** ॥ छाया ॥

३ तथा हि—'***व्यर्थेषु च मुक्तसंशयम्***' इति वार्तिकेन '**आकृतावपि पदार्थे एकशेषो वक्तव्यः—अक्षाः पादा माषाः**' इत्यर्थकेन जातिपक्षेऽप्येकशेषारम्भावश्यकत्वमुक्त्वा '***व्यर्थेषु च' 'सामान्यात्सिद्धम्***' इति सिद्धान्तवार्तिकेन '**विभिन्नार्थेषु च सामान्यात्सिद्धम्—सर्वं अश्नोतेरक्षः, पद्यतेः पादः, मिमीतेर्माषः । तत्र क्रियासामान्यात्सिद्धम्**' इत्यर्थकेन समाहितं भाष्ये । तत्र **कैयटेन** प्रदीपे '**क्रियासामान्यादिति** । भिन्नासु क्रियासु अभिन्नप्रत्ययाभिधाननिमित्तं यत्सामान्यं तदेव द्रव्येष्वपि तन्निमित्तं भवति । यथा पाचक इत्याश्रयान्तरगतमपि हि सामान्यं समवेतसमवायाद्द्रव्ये उपकरोति । **यथा**—गैरिकादिगतं लौहित्यं संयुक्तसमवायात् पटे लोहितप्रत्ययमादधाति' इति स्पष्टीकृतमाशयं **नागेशभट्ट** उद्द्योते "**आश्रयान्तरगतं** पाकक्रियागतं सामान्यं पाकत्वादि । परम्परयोपकर्तृत्वे दृष्टान्तमाह—**यथेति** । एवं च व्याद्यादिगतसामान्यस्य परम्परया द्रव्ये सत्त्वेन तत्तज्जातिविशिष्टस्य द्रव्यस्य वाच्यत्वमिति भावः । न चैवं नानार्थोच्छेदः, नानाजातीनां संबन्धघटकत्वेन नानार्थत्वोपपत्तेः । तत्तत्क्रियारूपसामान्यसमनियतस्याक्षत्वादेर्जातिरूपस्याक्षपदार्थत्रयसाधारणस्यापि शक्यत्वावच्छेदकत्वशक्यत्वान्यतराङ्गीकारात् सिद्धमिति भाष्यार्थं मन्ये" इति ग्रन्थेन स्पष्टतरीकृतवान् ॥ इति दाधिमथाः ॥

४ **वार्तिककृतैवमिति ।** वार्तिककृता कात्यायनेन चतुष्टयीशब्दानां प्रवृत्तिरित्यवलम्ब्य लृकारप्रयोजनं 'लृकारोपदेशो यदृच्छाऽशक्तिजानुकरणप्लुत्याद्यर्थः' इत्याशङ्क्य 'न्याय्यभावात्कल्पनं संज्ञादिषु' इत्यनेन त्रयी शब्दानां प्रवृत्तिरित्यस्यावलम्बनेन समाहितम् । तदेतत् 'पक्षान्तरैरपि परिहारा भवन्ति' इत्यभिप्रायेणोक्तमित्यर्थः । **एवं**—चतुष्टयीशब्दानां प्रवृत्तिरित्युपक्रम्य त्रयीशब्दानां प्रवृत्तिरित्यनेन समाधानम् ॥

५ **दोषेति ।** समाने चेत्याद्युक्तेत्यादिः ॥ छाया ॥

६ एवं च तत्सत्त्वेन तदर्थम् लृकारोपदेश आवश्यक इति भावः ॥ छाया ॥

७ 'वियषत्वमप्येतद्व्यङ्ग्यसाधु' इति राजलक्ष्मीपाठः स लेखकप्रमादात् ॥

८ 'शिष्टस्य वा साधु' इति च. ज. पाठः ॥

९ 'चाधीयी' इति च. छ. ज. पाठः । उद्द्योते 'यजेत वेति' स्पष्टमुपलम्भात् अ. पुस्तके तथोपलम्भाच्च 'वाधी' इत्याश्रितः पाठः ॥

१० 'वेदे च' इति प. पाठः ॥

११ वैदिकस्यात्राभावादनुक्तिः। अतो लौकिकमात्रोदाहरणम्॥छा.॥

१२ प्रकृतोपयोग्यर्थमार्थिकमाह—**यस्त्वित्यादिना** ॥ छाया ॥

१३ **पतित इति ।** तथा च तदनुकरणवत्तदनुकरणं निषिद्धमिति न तदर्थताऽस्येति भावः ॥ छाया ॥

( प्रदीपः ) प्रयोजनान्तरमपि वार्तिककारः प्रत्याचष्टे—**अनुकरणमिति ।** अनुकार्यस्य दुष्टत्वादनुकरणेऽपि दुष्टत्वं मन्यते, सुरापाणानुकरणवत् ॥

( उद्द्योतः ) अनुकरणं शिष्टस्य वा अशिष्टाप्रतिषिद्धस्य वा भवति । तत्राद्यं साधु, अन्त्यं न दोषाय नाप्यभ्युदयाय–इति भाष्येऽन्वयः । अर्थात्प्रतिषिद्धानुकरणस्य दुष्टत्वं बोध्यम् ॥ ननु शिष्टानुकरणं नासाधु–अशिष्टाप्रतिषिद्धस्य वा नासाधु । आद्यस्याभ्युदयजनकत्वात्, अन्त्यस्याभ्युदयाजनकत्वेऽपि दोषाजनकत्वात् । एवञ्च प्रकृते किमायातमत आह—**अनुकार्यस्य दुष्टत्वादिति ।** अर्थलब्धं तदादाय प्रकृतोपयोग इत्यर्थः ॥ अत एव भाष्ये तद्दृष्टान्तेनोपपादयिष्यति—**यस्तु खल्विति ।** एवं चासाध्वनुकरणस्यासाधुत्वाच्छास्त्राविषयत्वात्तदर्थता लृकारोपदेशस्य न युज्यत इति भावः ॥ भाष्ये—**यजेत वेति ।** यागोऽत्र स्मार्तो ग्राह्यः ॥

**( प्रयोजनसमर्थनभाष्यम् )**

**विषम उपन्यासः । यश्चैवं हन्ति, यश्चानुहन्ति, उभौ तौ हतः । यश्चापि पिबति, यश्चानुपिबति, उभौ तौ पिबतः ॥**

**यस्तु खल्वेवमसौ ब्राह्मणं हन्ति-एवमसौ सुरां पिबति-इति तस्यानुकुर्वन्स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात्-पयो वा पिबेत्, न स मन्ये पतितः स्यात् ॥**

( प्रदीपः ) भाष्यकारस्त्वनुकरणार्थत्वं समर्थयते—**विषम इति ।** न ह्यनुकार्यस्य दोषेणानुकरणस्य दुष्टत्वम् । विहितकरणाद्धि धर्मोत्पत्तिः प्रतिषिद्धाचरणाचाधर्मो भवति, न त्वनुमानेन धर्माधर्मयोर्व्यवस्थेति मन्यते । सुरापाणादौ तु तस्या एव क्रियाया अनुष्ठानात्साद्दश्याभावान्नास्त्यनुकरणत्वम् ॥ दानादीनां स्मार्तत्वाल्लौकिकत्वमुच्यते ॥

**स्नातानुलिप्त इति**—स्वस्थचित्तत्वं दर्शयति । अस्वस्थेन हि चित्तेनाकार्यं क्रियते ॥ **माल्यगुणकण्ठ इति ।** लोकमध्ये प्रकाशते–इत्यर्थः । अकार्यं ह्यप्रकाशं क्रियते ॥ लृतकशब्दोऽपि यदा लृतकार्थे प्रयुज्यते तदाऽपशब्दः । यदाऽनुकार्यं प्रत्याययति तदा साधुरेव, अर्थभेदात्; अश्वगोण्यादिवत् ॥

( उद्द्योतः ) **साद्दश्याभावादिति ।** न चैकजातीयेष्वपि व्यक्तिभेदेन सादृश्यसंभवः । सुरापानत्वादेरेव ताद्दशस्थले साद्दश्येन तदतिरिक्तसाद्दश्याभावादित्याशयात् । तदाह—**नास्त्येति ॥** दानादीनां कथं लौकिकत्वेनोपन्यासोऽत आह—**स्मार्तत्वादिति ॥** **अस्वस्थेनेति ।** आस्तिकत्वे सत्यपीति भावः ॥ **माल्यगुणकण्ठ इति ।** मालायां साधूनि–माल्यानि=पुष्पाणि, तैर्युक्तो गुणः=सूत्रं कण्ठे यस्येत्यर्थः । गङ्वादित्वात्परनिपातः ॥ **अकार्यं हीति ।**

१ **प्रयोजनान्तरमिति ।** एवमाद्यं प्रयोजनं निरस्येत्यादिः ॥ छा. ॥

२ यद्यप्यस्य ( वार्तिकस्य ) प्रकृतानुपयोग्यर्थकत्वेनानुपयुक्तत्वं तथाप्येतत्सूचितभगवद्वक्ष्यमाण **'यस्तु खलु'** इति प्रकृतोपयोग्युपबृंहकतयाऽस्य प्रकृतोपयोगः । तद्ध्वनयन् वार्तिकार्थभूतभाष्ये सशेषपूरणे हेर्निश्चयार्थकत्वेऽपि वाकारद्वयोल्लेखात्साध्वित्यादेरग्रे संबन्धेन वाक्यसमाप्तिः, नैवेत्यादिवाक्यान्तरम् । तत्र तत्पदेनोभयपरामर्शेन 'तत्र तदुभयं प्रतिपाद्यते' इत्यर्थः प्रतीयते । स चोभयत्र विरुद्धः, दृष्टान्तोपपादनविरुद्धश्च । अतोऽनुकरणमित्यस्य तदित्यस्य चोभयत्र संबन्धेन भवतीत्यस्य चोभयत्र सत्त्वेन वाक्यभेद इत्याशयेन तदर्थमाह—**अनुकरणमिति ॥** वार्तिके बहुवचनं प्रयोगभेदाभिप्रायम् । संबन्धिनोऽधिकरणत्वविवक्षया सप्तमी ॥ भगवता वक्ष्यमाणमुक्तहेतोरत्रैवार्थिकमाह—**अर्थादिति ॥** छाया ॥

३ नन्विदं न वार्तिकप्रतिपाद्यमत आह—**अर्थेति ।** तत्प्रतिषिद्धानुकार्यस्य दुष्टत्वात्तस्यापि तत्त्वम् ॥ छाया ॥

४ वैदिके कर्मण्यधिकारिण एवाशौचादिसत्त्वेऽप्यधिकारादन्येन दुष्करत्वादनुकरणासंभवादाह—**यागोऽत्रेति ॥** यद्वा—यागस्य श्रौतस्य कथं लौकिकत्वेनोक्तिरत आह—**यागोऽत्रेति ॥** छाया ॥

५ 'अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु' इत्यस्य शिष्टाशिष्टाप्रतिषेधविषयमनुकरणं साधु इत्यर्थः । तदितरदसाध्विति फलितोऽर्थः । असाधुत्वञ्चानुकरणस्य दृष्टान्तेनोपपादयति भाष्ये—**यस्तु खल्वेवमसाविल्यादिना ।** वस्तुतस्तत्रानुकार्यस्य दुष्टत्वान्नानुकरणस्य दुष्टत्वं किन्तु दुष्टानुष्ठानादेव तत्त्वम् । अनुकार्यस्य दुष्टत्वेऽपि अनुकरणेऽदुष्टत्वमुपपादयितुं शक्यमित्याशयेनाह—**विषम इति ॥**

६ 'यश्च पिबति–' इति प. पाठः ॥

७ अनुकार्यविजातीयानुकरणस्य तत्त्वे सत्यपि अनुकार्यसमानफलकत्वाभावमाह—**यस्त्विति** भाष्ये ॥ छाया ॥

८ 'मालागुणकण्ठः' इति अ. पुस्तके निर्दिष्टः पाठः ॥

९ 'दुष्टत्वमिति दर्शयति—**यश्चेति ।** विहि–' इति मुद्रितपाठः ॥

१० 'मन्यते' इति रहितपाठस्तु युक्त एव ॥ छाया ॥

११ 'लोके तावद्य एवमसौ ददाति' इति भाष्ये दानयागाध्ययनानां लौकिकत्वमुक्तं समर्थयति—**दानादीनामिति ॥**

१२ अ. पुस्तके 'मालागुणकण्ठ इति' इति प्रतीकं दृश्यते ॥

१३ 'ह्यप्रकाशे' इति क. पाठः ॥

१४ 'यदा ऋतकार्थे' इति ख.ज.पाठः । अ.क.पुस्तकयोः 'यदा लृतकार्थे' इत्येव पाठः । अर्थशब्दः प्रवृत्तिनिमित्तपरः । यदा लृतकप्रवृत्तिनिमित्ते लृतकशब्दः प्रयुज्यते तदाऽपशब्दः, लृतकशब्दस्यैवाभावेन लृतकप्रवृत्तिनिमित्तासंभवात् । यदा चासाधुलृतकशब्दोऽनुकार्यं तदनुकरणं तच्छब्दः प्रत्याययति तदा साधुः, एवञ्चासाधुशब्दस्याप्यनुकरणं शास्त्रविषयं भवतीति तदर्थं लृकारोपदेश आवश्यक इति भाष्याशयः ॥

१५ 'अश्वगो' इति अ. पाठः । यदाऽभेदानुकरणन्तदा लृतकार्थे प्रयुज्यत इत्यपशब्दः, भेदानुकरणे च शब्दरूपार्थोपस्थापकत्वात्तस्य साधुत्वमिति भावः ॥

१६ **साद्दश्येन**–तद्रूपतया । तथा च तत्रानुकरणमप्यनुकार्यसजातीयं ब्राह्मणहननादिकमेव पातित्यजनकमिति साजात्यसत्त्वेऽपि ब्राह्मणहननत्वादिकमेव तत्र पातित्यहेतुतावच्छेदकं न त्वनुकरणत्वमिति अवच्छेदकत्वाभावप्रतिपादनतात्पर्यम् । न तु तदभावे इति भावः ॥ छाया ॥

१७ अनास्तिकत्वे स्वस्थेनापि क्रियत इत्यत आह—**आस्तीति ॥** छाया ॥

इह[1] लोके भीरुणेत्यर्थः ॥ [ अर्थभेदेन[2] साधुत्वे दृष्टान्तमाह— अस्त्वेति ॥]

( वार्तिकार्थनिगमनभाष्यम् )

**एवमिहापि य एवमसावपशब्दं प्रयुङ्क्ते-इति तस्यानुकुर्वन्नपशब्दं प्रयुञ्जीत सोऽप्यपशब्दभाक् स्यात् ॥**

**( उद्योतः )** भाष्ये प्रयोजनप्रत्याख्यानवादी शङ्कते—**एवमिहापीति** ॥

( उपदेशप्रयोजनभाष्यम् )

**अयं त्वन्योऽप[3]शब्दपदार्थकः शब्दः, यदर्थ उपदेशः कर्तव्यः ॥**

**न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते—अपशब्दपदार्थकः शब्दोऽपशब्दो भवतीति, अपशब्द इत्येव तस्यापशब्दः स्यात् । न चैषोऽपशब्दः ॥**

**( प्रदीपः ) अपशब्द इत्येवेति ।** अस्य हि गाव्यादयोऽपभ्रंशा वाच्याः ॥

**( उद्योतः )** प्रयोजनवादी समाधत्ते—**अयं त्वन्य इति ॥ अस्य हीति** । एवं च तत्तदर्थे व्याकरणाननुगतत्वमपशब्दत्वमिति भावः ॥

( प्रयोजनान्तरभाष्यम् )

**अयं[4] खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यः, य[5]दर्थ उपदेशः कर्तव्यः—साध्वॢकारमधीते-मध्वॢकारमधीते—इति ॥**

**( प्रदीपः ) अयमिति ।** 'असाधोरनुकरणं' इत्येतदप्य[6]त्र नास्ति ॥

**( उद्योतः )** भाष्ये तुष्यतु दुर्जनन्यायेन साध्वनुकरणार्थत्वं ऌकारोपदेशस्याह—**अयं खल्वपीति** । यद्यप्यर्थशून्यवर्णानां न साधुत्वम्, तथापि वर्णात्कारविधानेन तेषां साधुत्वमिति भावः ॥

( अन्यथासिद्धिबोधकभाष्यम् )

**क[8]स्थस्य पुनरेतदनुकरणम् ?**

**क्लृपि[9]स्थस्य ॥**

**य[10]दि क्लृपिस्थस्य, क्लृपेश्च लत्वमसिद्धम् । तस्या[11]सिद्धत्वादृकार एवाच्कार्याणि भविष्यन्ति ॥**

( प्रयोजनभाष्यम् )

**भ[12]वेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः क्लृपिस्थपदार्थकः शब्दः, यदर्थ उपदेशः कर्तव्यः ॥**

**( प्रदीपः ) भवेदिति ।** प्रयोगस्थस्येदमनुकरणम् । [13]प्रयोगे च **'पूर्वत्रासिद्धम्'** इति नास्ति—इति भावः ॥

**( उद्योतः )** भाष्ये—**भवेत्तदर्थेनेति** । तदर्थेन—क्लृपिस्थऌकारार्थेन ऌकारस्योपदेशेन प्रयोजनं न भवति—एवं यद्यपि भवेत्, तथापि तदनुकरणार्थेनार्थ इत्यर्थः ॥ ननु क्लृपिस्थस्यासिद्धत्वात्कथं तदनुकरणमत आह—**प्रयोगस्थस्येति ॥ प्रयोगे**=[14]अनुकरणप्रयोगे । शास्त्रे तदीयकार्ये वाऽसिद्धत्वं, पौर्वापर्यस्य तत्रैव संभवात्; न चैवं प्रकृते—इति भावः ॥

( खण्डनभाष्यम् )

**न[15] कर्तव्यः । इदमव[16]श्यं कर्तव्यम्—"प्रकृतिवदनुकरणं भवति" इति ।**

**किं प्रयोजनम् ?**

**'द्विः पचन्त्वित्याह' "तिङ्ङतिङः" ( ८।१।२८ ) इति निघातो यथा स्यात् । 'अग्नी इत्याह' ईदूदेद्द्विवचनं प्र[17]गृह्यसंज्ञं भवति-इति प्रगृह्यसंज्ञा यथा स्यात् ॥**

---

१ **इहेति ।** भयं च लोकत एवेति बोध्यम् । तथा च स्वस्थेन जनमध्ये प्रकाशं तथा करणेऽप्यकार्यशङ्का न कस्यापीति भावः । एवञ्चानुकरणस्यादुष्टत्वेन तदर्थं ऌकारोपदेशः कार्य इति भगवदभिमतम् ॥ छाया ॥

२ अयं कोष्टकान्तर्गतः पाठोऽग्रे **'अयं त्वन्य इति ।'** इति प्रतीकोत्तरमेव समुपलभ्यते तथापि खण्डशो मुद्रणवेलायामत्र स्थापित इति बोध्यम् ॥

३ हननानुहननवत्पानानुपानवदित्यर्थः । तथा च तस्यापशब्दत्वेन शास्त्राविषयत्वान्न तादर्थ्यं तस्येत्याशयः ॥ छाया ॥ यो हि अपशब्दं लृतकं प्रयुङ्क्ते तदनुकुर्वन् तदर्थे एव लृतकमनुकरोति ततः सोऽपशब्द इति तदर्थं न ऌकारग्रहणमावश्यकमिति भाष्याशयः ॥

४ **अपशब्दपदार्थक इति ।** यदाऽपशब्दस्य लृतकशब्दस्यानुकरणमनुकार्यशब्दमात्रोपस्थापकं तदा तत्साधु । अपशब्दलृतकशब्दपदार्थकत्वेऽपि तस्य साधुत्वात्तदर्थ उपदेश आवश्यक इत्याशयः । ननु अपशब्दपदार्थकः शब्दोऽपशब्दः कथं नेत्याशङ्कां वारयितुमाह—**न चापशब्देति ॥**

५ 'यदर्थ उप' इति क. पाठः ॥

६ 'प्यत्र नास्तीति भावः' इति ख. ज. पाठः ॥

७ तथा चासंदिग्धत्वमत्रेति तदर्थमेतदुक्तिरिति भावः ॥ छाया ॥

८ तदर्थत्वमपि न युक्तमित्याशयेन पृच्छति—**केति** ॥ छाया ॥

९ सिद्धान्ती आह—**क्लृपिस्थेति** ॥ छाया ॥

१० खण्डक आह—**यदीति** ॥ छाया ॥ 'यदि क्लृपिस्थस्य' इत्यस्य प. पुस्तके न पाठः ॥

११ **तस्यासिद्धत्वादिति ।** यदा हि क्लृपिस्थऌकारार्थः 'साध्वॢकारमधीते' इति ऌकारोऽनुक्रियते तदा क्लृपिस्थस्य लत्वस्यासिद्धत्वादत्राप्यसिद्धमेव लत्वमिति ऋकाराश्रयेणैव कार्यं भविष्यतीत्यायः ॥

१२ सिद्धान्ती आह—**भवेदिति** ॥ छाया ॥

१३ 'प्रयोगे च नास्ति पूर्वत्रासिद्धमिति भावः' इति क. छ. पाठः ॥

१४ नन्वनुकार्यप्रयोगे कार्यप्रवृत्तिवेलायां तत्प्रवृत्तिसत्त्वेन कथं तत्र तदभावोक्तिरत आह—**अनुकरणेति** ॥ छाया ॥

१५ प्रष्टा आह—**न कर्तव्य इति** ॥ कुत इत्यत आह—**इदमिति** ॥ छाया ॥

१६ 'मवश्यं वक्तव्यं' इति च. पाठः ॥

१७ 'प्रगृह्यमिति' इति च. छ. ज. पाठः ॥

(प्रदीपः) प्रकृतिवदिति । तत्र यथा क्लृपेर्लत्वस्यासिद्धत्वादकारद्वारेण ऌकारस्याच्कार्यं, तथाऽनुकरणस्यापीत्यर्थः । द्विरिति । 'पचन्तु–पचन्तु' इति केनचिदुक्ते 'द्विः पचन्तु' इत्यनुकरणम् । एतच्च क्रियासाधनाद्यनभिधानात्तिङन्तं न भवति । एवं 'अग्नी' इत्यनुकरणं ह्यर्थानभिधानान्न द्विवचनान्तम् ॥ ननु गम्ऌ-सृप्ऌ-इत्यादिस्थस्य यदाऽनुकरणं तदा कथं प्रकृतिवद्भावः ? 'द्युताद्यॢदित'इति ऌकारे परतो यणादेशकरणादित्संज्ञाऽनुवादाच्च धात्वनुबन्धस्य ऌकारस्याच्कार्याण्यनुमीयन्ते, ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः ॥

( उद्योतः ) ऋकारद्वारेणेति । ऋकारवृत्त्येत्यर्थः ॥ भाष्ये—द्विः पचन्त्विति । पचन्त्विति द्विराह–इत्यन्वयः ॥ असत्यतिदेशे तिङन्तत्वाभावे हेतुमाह—एतच्चेति ॥ ह्यर्थेति । एतदर्थमेव 'द्विवचनं' इत्यन्वर्थसंज्ञाकरणम् ॥ नन्विति । एवञ्च पाठाभावे मूलस्यैवाच्त्वाभावात्कथं तदनुकरणेऽच्कार्यमिति तदर्थं उपदेश आवश्यक इति भावः ॥ अनुमीयन्त इति । इदं चिन्त्यम्, आनुमानिकवचनेन कृतस्य वर्णस्य प्रत्याख्यानायोगात् । तस्मात् 'गम्ऌ' इत्यादिस्थ ऌकारो धर्माजनकत्वान्न साधुरिति वक्तुं युक्तम् । एवं च 'अशक्तिजानुकरण–' इति वार्तिकेऽशक्तिजपदं व्यर्थमिति तात्पर्यम् ॥

( खण्डनोपसंहारभाष्यम् )

**यदि प्रकृतिवदनुकरणं भवतीत्युच्यते, अपशब्द एवासौ भवति–कुमार्यॢतक इत्याह, ब्राह्मण्यॢतक इत्याह । अपशब्दो ह्यस्य प्रकृतिः ॥**

( उद्योतः ) एवं साध्वनुकरणार्थत्वे ऌकारोपदेशस्य 'प्रकृतिवत्–' इत्याश्रयणेन खण्डिते तेनैवाशक्तिजानुकरणार्थत्वमपि खण्डयति पूर्वपक्षी–भाष्ये—यदि प्रकृतिवदिति ॥

( प्रयोजनभाष्यम् )

**नँ चापशब्दः प्रकृतिः । न ह्यपशब्दा उपदिश्यन्ते । न चानुपदिष्टा प्रकृतिरस्ति ॥**

(प्रदीपः) न चापशब्द इति । सिद्धान्तवादी । प्रकरणाद्धि शास्त्रीया प्रकृतिराश्रीयते, शास्त्रनिबन्धनं च कार्यमतिदिश्यते । अपशब्दश्च न शास्त्रीया प्रकृतिः, अनुपदिष्टत्वात् । न चापशब्दत्वं शास्त्रीयं कार्यं, नापि तदतिदेष्टुं शक्यम् । न हि साधोरसाधुत्वातिदेशो युक्तिमान् । तदेवं भाष्यकारेणाशक्तिजानुकरणार्थत्वमॢकारोपदेशस्य स्थापितम् ॥

( उद्योतः ) ननु मा भूदपशब्दोपदेशः, प्रकृतित्वं तु कथं नेत्यत आह—प्रकरणादिति । अतिदेशस्य शास्त्रीयत्वमनेन दर्श्यते, तत्र च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमिति भावः ॥ उपलक्षणं भाष्यमित्याह—शास्त्रनिबन्धनं चेति ॥ 'नापि तदतिदेष्टुं' इत्यादि चिन्त्यम्, अब्राह्मणे ब्राह्मणत्वाद्यतिदेशवत् संभवात्—इति कश्चित् ॥ तदेवमिति । अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावात्तदनुकरणेऽतिदेशप्रवृत्तिरित्यपशब्दत्वाभावादच्कार्यसिद्ध्यर्थं ऌकारोपदेश इत्यर्थः ॥

( ३६ तृतीयप्रयोजनप्रत्याख्यानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ॥ * ॥

( भाष्यम् )

**"एकदेशविकृतमनन्यवद्भवति" इति प्लुत्यादयोऽपि भविष्यन्ति ॥**

( प्रदीपः ) एकदेशविकृतस्येति । ऋकारे रेफभागस्य लत्वे कृते स एव ऋकार इति प्रत्यभिज्ञानादिति भावः ॥

( उद्योतः ) इदानीं प्लुत्याद्यर्थत्वं तस्य परिहरति भाष्ये—एकादेशेति ॥ रेफभागस्येति । वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति

१ अच्कार्यमिति । 'प्रक्लृप्तः' इत्यत्र स्वरितत्वम् ॥

२ एवं साध्वनुकरणार्थेऽतिदेशाश्रयेण भगवता खण्डिते तदसांगत्यं ध्वनयन् कश्चिदेकदेशाविषयतया तदर्थत्वं प्रतिपादयन्नाह—नन्विति ॥ छाया ॥ गम्ऌइत्याद्येकदेशऌकारानुकरणे तत्र ऌत्वाभावात्प्रकृतिवदनुकरणमित्यनेन न कार्यं सेत्स्यतीति प्रश्नकर्तुराशयः ॥

३ आनुमानिकेति । अतिप्रसङ्गापत्तेर्गौरवाच्च । इष्टापत्तिस्तु न । 'स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः' इति न्यायापातादिति भावः ॥ छाया ॥

४ एवं च तदनुकरणे सुतरां तत्त्वमुक्तरीत्येति न तदर्थत्वं तस्येति भावः ॥ छाया ॥

५ कुमार्यॢतक इति । यदा ह्यशक्त्या ऋतक इति प्रयोक्तव्ये ब्राह्मण्या ऌतक इति प्रयुक्तं तस्यानुकरणमेतम् । अत्र ब्राह्मण्याऽशक्त्या प्रयुक्ते ऌतकशब्दे यथाऽपशब्दत्वं तथा कुमार्यॢतकेऽप्यपशब्दत्वमतिदेशेनातिदिश्येतेतिअपशब्दत्वान्न तदर्थं ऌकारोपदेश इत्याशयः ॥

६ तेनैव–प्रकृतिवदित्यनेनैव । एतदर्थत्वमपि भगवता स्थापितम् ॥ छाया ॥

७ सिद्धान्ती परिहरति—न चापशब्द इति ॥ छाया ॥ कुमार्यॢतक इत्यादौ प्रकृतिवदित्यतिदेशेनापशब्दत्वमापाद्य दोषो वारितस्तथापि प्रकृतिवदित्यत्र प्रकृतिपदेनोपदिष्टा शास्त्रीयैव प्रकृतिर्गृह्यते नान्येति प्रकृतिवदित्यतिदेशस्यात्र प्रवृत्तिरेव नेति अशक्तिजस्यानुकरणार्थं ऌकारोपदेश इति तात्पर्यम् ॥

८ 'दिष्टा शास्त्रे प्र' इति प. पाठः ॥

९ अ. पुस्तके 'एवं भाष्य–' इति पाठः ॥

१० ननु प्रकृत्यादिलक्षणस्य शास्त्रेऽकृतत्वात्प्रकरणाभावात्कथं तेन तदाश्रयणमत आह—अतीति ॥ छाया ॥

११ विकृतमिति । कर्मणि क्तः बहुव्रीहिः । '*साधनं कृता*' इति तत्पुरुषो वा । सामान्ये नपुंसकम् ॥ छाया ॥

१२ ननु अल्विधित्वात्स्थानिवत्सूत्रस्य न विषयोऽत आह—स एवेति ॥ छाया ॥

१३ परिहरतीति । एकदेशविकृतन्यायेन ऌकारस्य प्लुत्याद्यर्थत्वं परिहरतीत्यर्थः ॥

१४ वर्णैकेति । अन्यथा तस्याखण्डत्वेन तस्यानेकदेशत्वेन न्यायाप्राप्त्या भाष्यासंगतिरेव स्यादिति भावः ॥ छाया ॥

पक्षे इत्यर्थः ॥ **प्रत्यभिज्ञानादिति ।** एवं च छिन्नपुच्छश्वदृष्टान्तेन लोके[1]न्यायसिद्धमस्य ऋत्वमित्यर्थः । व्याख्या[2]नभाष्ये **'अनन्यवत्'** इत्यस्यान्यवन्नेत्यर्थः । अ[3]न्यसादृश्यस्यापि निषेधे तत्त्वं दृढीकृतम् ॥

**( प्रयोजनवाद्याक्षेपभाष्यम् )**

**य[4]दि 'एकदेशविकृतमनन्यवद्भवति' इत्युच्यते, "राज्ञः क च" राजकीयम्, "अल्लोपोऽनः" इ[5]ति प्राप्नोति ॥**

**( प्रत्याख्यातृसमाधानभाष्यम् )**

**एकदेशविकृतमनन्यवत् षष्ठीनिर्दिष्ट[6]स्य ॥**

**( प्रदीपः ) षष्ठीनिर्दिष्टस्येति ।** 'राज्ञः क च' इत्यत्र राजन्शब्दः षष्ठीनिर्दिष्टः, न तु 'अन्'-इति लोपाभावः ॥

**( उद्योतः )** सिद्धा[7]न्त्येकदेशी वर्ति दृष्ट्वा स्थानिवत्सूत्रमनेनोपन्यस्तमित्याशयेनाह—**षष्ठीनिर्दिष्टस्येति ॥** तत्संबन्ध्येकदेशविकृतमादेशरूपमित्यर्थः ॥ ननु **'अल्लोपोऽनः'** इत्यत्र 'अन्' अपि षष्ठीनिर्दिष्ट एवेत्यत आह—**राज्ञ इति ।** येन[8] विकारेण यस्य विकृतस्य यद्रूपमेकदेशविकृतन्यायेन प्रार्थ्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दि[9]ष्टस्य—इति तदर्थ इति भावः ॥

**( प्रयोजनवादिभाष्यम् )**

**यदि—षष्ठीनिर्दिष्टस्येत्युच्यते, 'कृतशि[10]खं' इति प्लुतो न प्राप्नोति । न[11] ह्यत्र ऋकारः षष्ठीनिर्दिष्टः ॥**

**कस्तर्हि ?**

**रेफः ॥**

**( प्रदीपः )** यद्येवं **'कृपो रो लः'** इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट[12] इत्यनन्यत्वं न प्राप्नोती[13]त्याह—**यदीति ॥**

**( उद्योतः )** भाष्ये—**प्लुतो न प्राप्नोतीति ।** द्विर्वच[14]नादेरप्युपलक्षणम् ॥ **कस्तर्हि रेफ इति ।** 'कृ[15]पेः' इति त्ववयवषष्ठीति भावः ॥

**( प्रत्याख्यातृभाष्यम् )**

**ऋ[16]कारोऽप्यत्र षष्ठीनिर्दिष्टः ॥**

**कथम् ?**

**अविभक्तिको निर्देशः—कृप-उः-रः-लः-"कृपो रो लः" इति ॥**

**( उद्योतः ) कृप उरिति ॥** कृपे रेफस्य लः, तदवयवऋकारस्य च लकारघटित आदेश इत्यर्थः । स्था[17]निनिर्देश एव तादृशादेशकल्पक इति भावः ॥ [18]एतेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाभावादिदं चिन्त्यमित्यपास्तम् ॥

**( प्रत्याख्यातुरेव भाष्यम् )**

**अथवा पुनरस्तु अविशेषेण ॥**

**( प्रदीपः ) अथवेति ।** 'षष्ठीनिर्दिष्टस्य' इति नापेक्ष्यते ॥

**( उद्योतः )** ननु **स्थानिवत्सूत्रे** हि तथा । प्रकृते च न तेनातिदेश उच्यते, किं तु छिन्नपुच्छश्वदृष्टान्तेन प्रत्यभिज्ञयाऽनन्यत्व-

---

१ **लोकेति ॥** अर्धविकारेऽप्ययं प्रवर्तत इत्यभिमानः ॥ छाया ॥

२ ननु अनन्यवदित्यस्यान्यभिन्नवदित्यर्थसंभवो वैयर्थ्यं वा स्यादत आह—**व्याख्यानेति ॥** छाया ॥

३ नन्वेवमन्यसादृश्यनिषेधेऽप्यनन्यत्वसत्त्वादन्त्यदोषस्तदवस्थ एवात आह—**अन्येति ।** अपिनार्थिकावश्यकान्यत्वसमुच्चयः । तन्निषेधे तदभावस्य सुतरां सत्त्वादिति भावः ॥ छाया ॥

४ सिद्धान्त्येकदेशी शङ्कते—**यद्येकेति ॥** छाया ॥

५ 'इति लोपः' इति च. प. पाठः ॥

६ 'ष्टस्येति वक्ष्यामि' इति च. प. पाठः ॥ स्थानषष्ठ्यन्तेनोच्चारितस्यैकदेशविकृतमनन्यवदिति तदर्थः । एवञ्च राज्ञः क चेत्यत्र राज्ञः षष्ठीनिर्देशाद्राजकीयमित्यत्र ककारान्ते राजत्वं स्यात्, न तु नान्त्वमेकदेशविकृतन्यायेन लब्धुं शक्यमिति भावः ॥

७ **सिद्धान्त्येकेति ।** न्यायाङ्गीकारात्तत्त्वमित्यभिमानः । सिद्धान्तिनामेकदेशीत्यर्थो वा । खण्डकानां सिद्धान्तिनामिति वा । षष्ठीति करणादेकदेशित्वमिति भावः ॥ छाया ॥

८ **येन**-ककाररूपादेशेन । **यस्य**-अकः । **यद्रूपम्**-अन्त्वम् । **तदवच्छिन्नस्य** तस्येति शेषः । नन्वन्त्वावच्छिन्नस्यानो राजन्त्वेन षष्ठीनिर्दिष्टत्वस्य सत्त्वमेवात आह—**तेन रूपेणेति ।** तन्मात्रनिष्ठसामान्यविशेषान्यतररूपेणेत्यर्थः ॥ छाया ॥

९ **निर्दिष्टस्येति ।** एकदेशो विकृतमनन्यवद्भवतीति शेषः । **तदर्थः** वार्तिकार्थः ॥ छाया ॥

१० **इति**-इत्यत्र । ऋकारः षष्ठीनिर्दिष्टो नेति एकदेशविकृतन्यायाप्रवृत्तेर्लकारस्य ऋत्वं नास्ति, लृकारस्याक्षरसमाम्नाये पाठाभावेनाच्त्वाभावात्तस्यापि न प्लुतप्राप्तिरित्याशयः । अत्र प्लुतस्यापाद्यमानत्वात्प्लुतरहितः पाठः प्रामाणिकः ॥ 'कृ३तशिख' इति च. छ. झ. पाठः ॥

११ नन्वत एवानृत इति प्रतिषेधाभावात् प्लुतस्य सिद्धिरेवात आह—**न ह्यत्रेति ॥** लत्वविधावित्यर्थः ॥ छाया ॥

१२ किं तु धातुरेव तथा निर्दिष्ट इति तत्प्रयुक्तकार्यस्य तद्धटसिद्धावपि ऋप्रयुक्तकार्यासिद्धिरिति तदाश्रयणे तदप्राप्त्या प्लुत्यादिकमेव न स्यादित्युद्देश्यविस्मृतिरेवेत्यर्थः ॥ छाया ॥

१३ **इत्याहेति ।** सिद्धान्त्येकदेशीति भावः ॥

१४ **द्विर्वचनादेरि**त्यनेन पूर्वोक्तप्लुतद्विर्वचनस्वरान्सारयति ॥

१५ **कृप इतीति ।** **'कृपो रो लः'** इति पाठपक्ष इति भावः । **कृपे रो ल** इति पाठान्तरे तु **कृपेरिती**ति बोध्यम् । तथा च **'कथम्'** इति भाष्ये शङ्काऽपि **'कृपेः'** इति पाठाशयेन ॥ **'कृपो रः'** इति पाठाशयेनोत्तरम्—**अवीति ॥** छाया ॥

१६ खण्डक एव परिहरति—**ऋकारोऽप्यत्रेति ॥** छाया ॥

१७ **ननु** ल इत्युक्त्या कथं तद्घटितादेशोऽत आह—**स्थानीति ॥** [ **'एरुः'** इत्यादाविवेति भावः ] ॥ छाया ॥

१८ ननु कृपेरवयवरेफस्येतिवत् **'कृपेरवयवऋकारावयवरेफस्य'** इत्येव कुतो न व्याख्यातम् । अत **एवैओङि**तिसूत्रभाष्यकैयटादिसंगतिरिति चेत्, **न ।** तथा सति तस्य निर्देशेऽपि स्थानषष्ठीनिर्दिष्टत्वाभावेन तदप्राप्त्या तदसिद्ध्यापत्तेः **'ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः'** इति भाष्यविरोधापत्तेश्च । एवं च तत्रत्यमग्रहणपक्षप्रवृत्तं सिद्धान्तरूपम्, अत्रत्यं तु ग्रहणपक्षाभिप्रायकमेकदेश्युक्तिरूपं चेति मिथो न विरोध इत्याह—**एतेनेति ॥** छाया ॥

मुच्यते । तत्र 'षष्ठीनिर्दिष्टस्य' इति वक्तुमेवाशक्यमित्याशयेनाह भाष्ये—अथवेति ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तं—"राज्ञः क च" राजकीयम् "अल्लोपोऽनः" इति प्राप्नोतीति ॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । वक्ष्यत्येतत्—"*श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् *" इति । तत्प्रकृतमुत्तरत्रानुवर्तिष्यते—"अल्लोपोऽनः" नकारान्तस्येति ।**

( प्रदीपः ) **नकारान्तस्येति** । न च राजन्शब्दः कादेशे कृते नकारान्तो भवति, श्वेव पुच्छे छिन्ने न पुच्छवानिति भावः ॥

( उद्योतः ) ननु कादेशेऽनूत्वमिवैकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह—**न च राजन्निति** । एकदेशपदेन ससम्बन्धिकतयोपस्थितावयवविधर्मे एव विकारविशिष्टे आरोप्यते, न त्ववयव एव, लोकव्यवहारादिति भावः ॥

( प्रयोजनवाद्याक्षेपभाष्यम् )

**इह तर्हि क्लृप्तशिख "अनृतः" इति प्रतिषेधः प्राप्नोति ॥**

( उद्योतः ) भाष्ये—**इह तर्हीति** । एकदेशविकृतन्यायेन ऋत्वादिति भावः ॥

( ३७ प्रत्याख्यातृसमाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ रवत्प्रतिषेधाच्च ॥ * ॥**

( भाष्यम् )

**रवत्प्रतिषेधाच्चैतत्सिध्यति । "गुरोररवतः" इति वक्ष्यामि ॥**

( प्रदीपः ) **अरवत इति** । रोऽस्यास्ति नित्यमिति नित्ययोगे मतुप् । तेन ऋकार एव रवान्, न तु वर्तक इत्यादावकारः । न रवान्—अरवानिति समासः । नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतः—'गुरोररस्य' इति ॥

( उद्योतः ) **रोऽस्यास्तीति** । इदं चिन्त्यम्—अवयवादावेव मत्वर्थो नानन्तरादाविति वर्तक इत्यादौ रवत्वस्योपपादयितुमशक्यत्वान्नित्ययोगपर्यन्तधावनमफलमिति[5] ॥

( आक्षेपभाष्यम् )

**यदि 'अरवतः' इत्युच्यते, होतृ-ऋँकारः-'होतृकारः' अत्र न प्राप्नोति ॥**

( आक्षेपबाधकभाष्यम् )

**"गुरोररवतो ह्रस्वस्य" इति वक्ष्यामि ॥**

( प्रदीपः ) **ह्रस्वस्येति** । तेन ह्रस्वस्यैव रवतः प्लुतनिषेधः, न दीर्घस्य ॥

( सिद्धान्तिभाष्यम् )

**स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते । सैषा महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते ॥ २ ॥**

( प्रदीपः ) वार्तिककारस्य लृकारप्रत्याख्यानं निःप्रयोजनमित्याह—**सैषेति** ॥ २ ॥

( उद्योतः ) भाष्ये—**स एष इति** । प्लुत्याद्यर्थं विद्यमान लृकारोपदेशः **'अरवतो ह्रस्वस्य' इति** गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः ॥ कुत इत्यत आह—**सैषेति** । यतः सैषा प्रत्याख्यानात्मिका उक्तिर्महतो वंशस्तम्बाल्लट्वानुकर्षणभिन्ना—इत्युक्ते यथा महतो वंशस्तम्बाल्लट्वानुकर्षणमयुक्तम्, एवं—लृकारप्रत्याख्यानमिति गम्यते । तदाह—**निष्प्रयोजनमिति** । सूत्रभेदपरिकल्पनं विना क्लृप्तशिखे प्लुतसाधनस्याशक्यत्वान्निष्प्रयोजनमित्यर्थः ॥ **वंशस्तम्बादिति**—ल्यब्लोपे पञ्चमी । तमवलम्ब्येत्यर्थः । **लट्वा**—पक्षिविशेषः फलविशेषो वा[12] । तद्यथा—बह्वायाससाध्यमल्पफलं न युक्तं, तथा लृकारोपदेशप्रत्याख्यानमपीत्यर्थः[13] इति दिक् ॥ २ ॥

१ **नाहेति** । स [ खण्डक ] एवेति भावः ॥

२ लौकिकन्यायेन प्लुत्यादिसिद्धिरिति एकदेशिना ( खण्डकेन ) वार्तिककृतोक्तम् । तत्र सिद्धान्त्येकदेश्येतावता द्वित्वस्वरितयोः सिद्धावपि तेनैवाच्त्वेऽपि प्लुतो नैव स्यादित्यशक्तिजानुकरणार्थत्ववत्प्लुत्यर्थतापि तस्य युक्तेत्याशयेन शङ्कते—**इहेति** ॥ छाया ॥

३ एकदेशी ( खण्डकः ) समाधत्ते—**रवदिति** ॥ छाया ॥ नह्येकदेशविकृतन्यायेन रेफवत्ताप्यायाति । लोकेऽपि हि छिन्नपुच्छस्य पुच्छवत्त्वप्रयुक्तं कार्यं नायात्येव ॥ श. कौ.

४ प्रकृतेऽवयवे मतुप्यपीति शेषः ॥ छाया ॥

५ तथा च वर्तक इत्यादाविवोक्तलक्ष्येऽपि लृकारस्य रेफावयवकत्वाभावात्प्लुतसिद्धिः ॥ छाया ॥

६ अत्रापि सिद्धान्त्येकदेशी (प्रयोजनवादी) दोषमाह—**यदीति** ॥ छाया ॥

७ 'ऌकारः' इति प. पाठः, 'होतॢ३कारः' इति च ।

८ एकदेशी ( खण्डकः ) आह—**गुरोरिति** ॥ छाया ॥

९ 'अमानोनाः प्रतिषेधे' इत्युक्तेरस्य व्यस्तस्य तदर्थकस्य ग्रहणम् । तेन 'ह्रस्वस्य रवतो न' इत्यर्थेन दीर्घे रवत्वसत्त्वेऽपि ह्रस्वत्वाभावान्निषेधाप्रवृत्त्या तत्सिद्धिरिति भावस्तद्ध्वनयन्नाह—**तेनेति** ॥ छाया ॥

१० एवं प्लुत्यर्थनिरासो न युक्तो गौरवात् । अन्यथा सकलशास्त्रस्यान्यथात्वापत्तेरित्याशयेन भगवान्भाष्यकारस्तदुपसंहरति—**स एषेति** ॥ छाया ॥

११ 'लट्वा निःकृष्यते' इति प. पाठः ॥

१२ 'लट लौल्ये' इति धातोरशूप्रुषिलटिकणिखटिविशिभ्यः क्वनित्यौणादिकः कन्, **नेड्वशि कृतीतीडभावः** । **'लट्वा करञ्जभेदे स्यात् फले मये खगान्तरे ।'** इति विश्वः ॥ श० कौ० ॥

१३ अत्रेदं तत्त्वम्—अशक्तिजानुकरणार्थवत्प्लुतादित्र्यर्थमप्यावश्य-

( शिवसूत्रे )

# ऐओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥

( अतपरत्वव्यवस्थाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**इदं विचार्यते—'इमानि संध्यक्षराणि तपराणि वोपदिश्येरन् 'एत्-ओत्-ङ्' 'ऐत्-औत्-च्' इति, अतपराणि वा यथान्यासम्' इति ॥**

**( प्रदीपः ) एओङ् ॥ ऐऔच् ॥ इदं विचार्यत इति ।** तपरातपरसन्ध्यक्षरोपदेशो विचार्यत इत्यर्थः ॥ तत्र 'उपदिश्येरन्' इत्यत्रासत्त्वभूता यद्यपि क्रियाऽभिधीयते, तथापि बुद्ध्या परामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्मभावमनुभवति । यथा पश्य मृगो धावतीति सरणं दर्शने ॥

**( उद्योतः ) एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ विचार्यत इति ।** क्त्वाचिन्तान्यायेनायं विचार इति बोध्यम् ॥ 'इदं'पदार्थमाह—**तपरेति । असत्त्वभूतेति ।** एवं चेदमा परामर्शोऽनुपपन्न इति भावः ॥ **बुद्ध्या परामृष्टेति ।** उपदेशपदार्थभूतेत्यर्थः ॥ **कर्मभावमिति ।** इदंपदवाच्यत्वेनेति भावः ॥ **यथेति ।** इदं चिन्त्यम् । कर्तृकर्मेतरकारकाभाववत्त्वस्यैवासत्त्वपदार्थत्वात् ॥

( भाष्यम् )

**कश्चात्र विशेषः ?**

**( प्रदीपः ) कश्चात्रेति ।** कार्ये को विशेष इति **प्रश्नः** ॥

**( उद्योतः )** पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नोऽनुचितोऽत आह—**कार्ये इति** ॥

( ३८ तपरपक्षदूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ॥ * ॥

( भाष्यम् )

**संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं कर्तव्यम् ॥**

**( प्रदीपः ) तपरोपदेशश्चेदिति ।** यद्यप्युपदेशः=उच्चारणं, तथापि तपरोपदेशे फलं चेदस्ति ततस्तकारोच्चारणं कर्तव्यमित्यर्थः । **'संध्यक्षराणि'**इत्यन्वर्था पूर्वाचार्यसंज्ञा, संधीयमानावयवत्वात् ॥

**( उद्योतः )** भेदाभावादुद्देश्यविधेयभावोऽनुपपन्न इत्याशङ्क्य परिहरति—**यद्यपीत्यादि ॥ फलं चेदिति ।** संप्रदाने घञिति भावः ॥ फलस्यैव करणत्वविवक्षया करणे घञित्य**न्ये ॥ सन्धीयमानावयवत्वादिति ।** 'अँइउण्' इति शिष्यमाणवर्णसदृशावयवसन्धानेनास्य निष्पन्नत्वादित्यर्थः ॥

( ३९ तपरत्वपक्षदूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ प्लुत्यादिष्वज्विधिः ॥ * ॥

( भाष्यम् )

**प्लुत्यादिष्वज्झाश्रयो विधिर्न सिध्यति ॥ 'गो३त्रात'**

---

कत्वम् ॥ शास्त्रीयैकेतिन्यायस्योक्तरीत्या संचाराभावात्, अर्धविकारेण लौकिकन्यायस्याप्रवृत्तेश्च, तत्र प्रत्यभिज्ञाया अभावात् । लकारघटितादेशकल्पने एकदेशविकाराभावाच्च । अत एव राजकीयमित्यादावपि न दोषः । **अलोन्त्यपरिभाषयान्त्यादेशत्वेनालक्ष्मत्वादनुपयोगात् । 'सर्वे'** इति न्यायेन समुदायादेशत्वे राजन्त्वसत्त्वेऽप्यन्त्वस्य सर्वथा शास्त्रीयेण दुर्वचत्वात् । लौकिकस्योक्तरीत्याप्राप्तेश्च । अत एव षष्ठीनिर्दिष्टस्येति न वाच्यम्, कर्तारावित्यादावनिर्वाहाच्च । अत एव **श्वयुवेत्यादौ** नकारान्तग्रहणमपि न कार्यम् । अग्रे नाकर्षणीयं **च ।** किं त्वन इत्यस्यापकर्षमात्रं कर्तव्यम् । मघवत इत्यादावुक्तरीत्या द्वयोरप्रवृत्त्याऽन्नन्तत्वाभावेनैव वारणेन फलाभावात् । न्यासभेदप्रयुक्तगौरवं तु भाष्य एवोक्तम् । तेनापाणिनीयत्वमपि सूचितमेव । सिद्धान्ते यथा प्लुतस्तथोक्तमेव । एवं **चैकदेशे**त्यादि सर्वमेकदेश्युक्तमेव–इति ॥ छाया ॥

१ तुल्यन्यायत्वात्सूत्रद्वये सहविचारः ॥ छाया ॥

२ ननु वाक्यकृतः **'संध्यक्षरेषु'** इति दोषोक्तिरसंबद्धप्रलपिता प्रत्यक्षशुद्धोपदेशानुभवेन विपरीतशङ्कानुदयादतः संगत्यर्थमाह—**इदमिति । इदं**–उपदेशरूपं वस्तु तपरातपरसंबन्धित्वभेदेन विविधं नानाप्रकारं चरति गच्छतीति हेतोः **विचार्यते**–तादृक्संशयविषयतो नियम्यत इत्यर्थः ॥ छाया ॥

३ स्वारसिकशङ्काया अभावादाह—**कस्चेति ॥** संशयस्य केनचिदप्रतिबन्धादिति भावः ॥ छाया ॥

४ **पदार्थमिति ।** कोटिद्वयविशिष्टमित्यर्थः । अत एव तस्य विचारविषयत्वम् । तथा चोक्तं पदमञ्जर्याम्—

'कोटिद्वयस्य विज्ञानं **विचार** इति कथ्यते ।
**विचार्यमाण**स्तज्ज्ञानविषयीभूत उच्यते' इति ॥ (दा. म.)

५ वार्तिके उपदेशोच्चारणपदयोः पर्यायत्वादर्थभ्रमं व्युदस्यति—**यद्यप्युपेति ॥**

६ क्रियाया यमभिप्रैति सोऽपि संप्रदानमिति 'तपरोदेशः फलाय चेदस्ति' इति वक्तव्ये 'तपरोपदेशे फलं चेदस्ति' इत्युक्तेः सङ्गतिमाह–**संप्रदान इति ।** तथा चाभिहितत्वान्न चतुर्थीति भावः । संप्रदाने घञोऽप्रसिद्धत्वादाह—**करणे घञीति ॥**

७ **अइउणित्यादौ** अनुशिष्यमाणा ये वर्णास्तत्सदृशा येऽवयवा रमेशो गङ्गोदकम् देवैश्वर्यम् कृष्णौत्कण्ठ्यमित्यादिप्रयोगवाक्यस्थास्तत्संधानेन तत्रास्यैचो निष्पन्नत्वादित्यर्थः ॥ एवं च तत्सदृशावयवभासादेतेषां सर्वेषां सर्वत्र तत्त्वमिति भावः ॥ छाया ॥

८ उभयसंग्रहायाह—**अजाश्रय इति ।** अत एव प्लुत्यादिष्विति न परसप्तमी किंतु विषयसप्तमीत्याशयेनोदाहरति—**गो३त्रात इति ॥** संबोधनमिदं तृजन्तस्य । क्वचित्क्तान्तसंबोधनपाठः । क्वचित्तत्रैव प्रथमान्तपाठः । **'गुरोः'** इति प्लुतस्तु सर्वपक्षे निर्बाधः ॥ **नौ४त्रात इति । 'गुरोः'** इति प्लुतः **'प्लुतावैच इदुतौ'** इत्यौकारोत्तरभागे व्यवस्थापित इति चतुर्मात्रोऽयम् । एवमग्रिमयोरपि ज्ञेयम् ॥ छाया ॥ 'अजाश्रितो' इति प. पाठः ॥

'नौ४त्रात' इत्यत्र "अनचि च" (८।४।४७) अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति। इह च 'प्रत्यङ्‌ङै४तिकायन' 'उदङ्ङौ४पगव' इति 'अचि' इति ङमुण्न प्राप्नोति॥

(प्रदीपः) प्लुत्यादिष्विति। प्लुतसंज्ञामभ्युपगम्याच्कार्याणि न सिध्यन्तीत्युच्यते॥

(उद्योतः) भाष्ये—प्लुतिग्रहणं त्रिमात्रपरम्। आदिना चतुर्मात्रग्रहणम्॥

(४० तपरत्वपक्षदूषणवार्तिकम् ॥ ३ ॥)

॥ * ॥ प्लुतसंज्ञा च ॥ * ॥

(भाष्यम्)

प्लुतसंज्ञा च न सिध्यति॥ 'ऐ३तिकायन' 'औ३पगव' ऊकालोऽच् ह्रस्वदीर्घप्लुतसंज्ञो भवतीति प्लुतसंज्ञा न प्राप्नोति॥

(प्रदीपः) प्लुत एव न प्राप्नोतीति दर्शयितुमाह—प्लुतसंज्ञा चेति। त्रिमात्रस्याचः प्लुतसंज्ञा विधीयते, तपरत्वे च त्रिमात्रस्याग्रहणादच्त्वाभावः। तत्रैचां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत ईकार ऊकारश्च स्यात्।

(उद्योतः) ननु 'ओमभ्यादाने' इत्यादिनाऽन्तरतमपरिभाषासंस्कृतेनैजरूपप्लुतविधानादनच्त्वेऽपि तेषां प्लुतसंज्ञा भविष्यतीत्यत आह—तत्रैचामिति। ताभ्यामपि तेषां यथाकथंचिदान्तरतम्यसत्त्वादिति भावः॥

(अतपरपक्षाभ्युपगमभाष्यम्)

सन्तु तर्ह्यतपराणि॥

(४१ अतपरपक्षदूषणवार्तिकम् ॥ ४ ॥)

॥ * ॥ अतपर एच इग्घ्रस्वादेशे ॥ * ॥

(भाष्यम्)

यद्यतपराणि "एच इग्घ्रस्वादेशे" इति वक्तव्यम्॥ किं प्रयोजनम्?॥

एचो ह्रस्वादेशशासनेषु अर्ध एकारः-अर्ध ओकारो वा मा भूदिति॥

(प्रदीपः) अतपर इति। असति हि तपरत्वे एकारौकाराभ्यां मात्रिकयोरर्धैकाराधौंकारयोर्ग्रहणादच्त्वाद्ध्रस्वत्वाद्विधानं स्यादिति सूत्रं कर्तव्यम्। तपरत्वे तु तयोरग्रहणात्प्राप्त्यभावः॥

(उद्योतः) भाष्ये—अर्ध एकार इति। मात्रिकत्वेनार्धत्वम्। समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात्॥

(अतपरवादिनः शङ्काभाष्यम्)

ननु च यस्यापि तपराणि, तेनाप्येतद्वक्तव्यम्। इमावैचौ समाहारवर्णौ—मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः। तयोर्ह्रस्वादेशशासनेषु कदाचिदवर्णः स्यात्, कदाचिदिवर्णोवर्णौ; मा कदाचिदवर्णं भूदिति॥

(प्रदीपः) ननु चेति। सूत्रारम्भं प्रति न कश्चिद्विशेष इत्यर्थः। अतपरत्वे 'एचः' इति वक्तव्यं, तपरत्वे तु 'ऐचः' इति। ऐचोर्विश्लिष्टावर्णत्वात्संश्लिष्टावर्णावर्धैकाराधौंकारौ न भवतः॥

(उद्योतः) भाष्ये—तेनाप्येतद्वक्तव्यम्—इत्यत्र एतच्छब्देन नियामकं सूत्रं परामृश्यते॥ सूत्रन्यासभेदेऽपि गुरुलाघवतो विशेषो नास्तीत्याह—सूत्रारम्भं प्रतीति॥ विश्लिष्टेति। उपलभ्यमानेत्यर्थः॥ संश्लिष्टेति। स्पष्टमनुपलभ्यमानेत्यर्थः। ऐवञ्च-एङ्विषये नावर्णप्राप्तिः। अर्धङोस्तु तपरनिर्देशेऽनच्त्वात् ह्रस्वत्वमेव नेति भावः॥ एङोः शुद्धतालव्यत्वमेवेति न तयोः स्थानेऽवर्णप्राप्तिरिति तत्त्वम्॥ 'संश्लिष्टावर्णौ' इति कैयटस्याप्यत्रैव तात्पर्यम्॥

---

१ तपरोच्चारणे त्रिमात्रादीनामनच्त्वेन लक्ष्येषु नित्यत्वाद् [द्वित्वादीनामसिद्धत्वाच] प्लुते कृते तदाश्रितं द्वित्वं ङमुट् च न स्यात्। प्लुतप्रगृह्याः इति तु प्लुतान्तरे सावकाशत्वान्नात्र ज्ञापकमिति भावः॥ तदेतत्सर्वमभिप्रेत्याह—प्लुतसंज्ञामिति। प्लुतसहितसंज्ञामित्यर्थः। तत्संज्ञां प्लुतं चाभ्युपगम्येत्यर्थः। तस्य संज्ञापूर्वकत्वात्॥ छाया॥

२ ऐ३तिकायन इत्यादि। 'प्लुतावैच इदुतौ' इति सूत्रमनालोचयत एवमुक्तिः। तदालोचने तु दे३वदत्त गो३त्रातेत्युक्तिरुचितेति रत्नकृत्॥ वस्तुतस्तु—प्लुतवत्तयोरपि वैकल्पिकत्वेन तदभावे प्लुतमात्रं समुदायस्येष्टमित्येतद्भाष्यतात्पर्यमित्यनन्तरत्वात्तयोरुक्तावप्याद्ययोरन्येषां चोपलक्षणमिति यथाश्रुतमेव साध्विति बोध्यम्॥ छाया॥

३ 'प्लुतः इति प्लुतसंज्ञा' इति च पाठः॥

४ सिद्धान्ती द्वितीयपक्षमालम्बते—सन्त्विति॥ संध्यक्षराणीति शेषः॥ छाया॥

५ एकदेशी आह—अतपर इति॥ धर्मपरो निर्देशः। जातावेकवचनं वा तद्ध्वनयन्नाह—यद्यतपराणीति॥ छाया॥

६ 'असतीह' इति ख. पाठः॥

७ ननु स्वरूपतोऽर्धत्वे एकार इत्याद्यसंगतिरत आह—मात्रिकत्वेनेति। वर्णसमाम्नायस्थस्यैचो द्विमात्रत्वेन तदपेक्षया तस्य तत्त्वाङ्गीकारेण फलितेन तेनेत्यर्थः॥ छाया॥

८ पक्षद्वये न्यासभेदं दर्शयति—एच इतीति। अतपरपक्षे एचां मात्रिकत्वसंम्भवात्तद्वारणार्थं 'एच इक्' इति सूत्रमावश्यकम्। तपरत्वपक्षे तु मात्रिकैकारादीनामसंभवात् एङोः संश्लिष्टावर्णत्वाच्छुद्धतालव्यत्वाच्च तत्र दोषाभावेऽपि ऐचोर्विश्लिष्टावर्णत्वात्तत्र दोषात् 'ऐच इक्' इति सूत्रं वक्तव्यमित्यर्थः॥

९ ननु सूत्रयोर्भिन्नस्वरूपत्वात् 'तेनाप्येतद्वक्तव्यम्' इति भाष्यासंगतिरत आह—सूत्रमिति॥ छाया॥

१० 'गुरुलाघवकृतः' इति झ. ग. पाठः।

११ भाष्ये 'इमावैचौ' इत्युक्तितात्पर्यमाह—'एवं चेति' स्पष्टमनुपलभ्यमानावर्णत्वे चेत्यर्थः॥ छाया॥

१२ संश्लिष्टावर्णावित्यनेन स्थानद्वयनिवृत्तिपूर्वकशुद्धतालव्यादित्वस्यैव प्रकटनेन तथैव भाष्यस्य सुयोजत्वेनान्यथोक्तेरयुक्तत्वादिति भावः॥

( तपरवादिन उत्तरभाष्यम् )

प्रत्याख्यायत एतत्, "*ऐचोश्चोत्तरभूयस्त्वात्*" (१।१।४८) इति ॥

( प्रदीपः ) ऐचोश्चेति । अर्धमात्राऽवर्णस्य-अध्यर्धमात्रा इवर्णोवर्णयोः, भूयसा च व्यपदेशो मल्लग्रामवदितीकारोकारावेव भविष्यतः ॥

( उद्योतः ) भाष्ये-प्रत्याख्यायत एतदिति । एतत्– ऐज्विषयं 'एच इक्' इति सूत्रम् । वर्तमानसामीप्ये लट् ॥ भूयसा चेति । तद्वारकभूयःस्थानसाम्यादित्यर्थः ॥

( अतपरवादिन उत्तरभाष्यम् )

यदि प्रत्याख्यानपक्षः, इदमपि प्रत्याख्यायते । "*सिद्धमेङः सस्थानत्वात्*" (१।१।४८) इति ॥

( प्रदीपः ) सिद्धमेङ इति । अर्धैकाराधौकारौ न स्तः, तत्र तालव्य एकारः–ओष्ठ्य ओकारः–इति तयोः स्थान इकारोकारावेव भविष्यतः ॥

( उद्योतः ) भाष्ये-इदमपीति । एङ्विषयमपीत्यर्थः ॥ सस्थानत्वादिति । इकारोकाराभ्यां समानस्थानत्वादित्यर्थः । तदाह—तालव्य इति । तालव्य एवेत्यर्थः ॥ [ इदं च मतमष्टमेऽपि भाष्ये स्पष्टम् ॥ शब्दपरविप्रतिषेधेनोत्तरभागसदृश इति विवरणोक्तं तु चिन्त्यम् । अन्तरङ्गत्वेन पूर्वसदृशस्यैवापत्तेः । स्पष्टं चेदं 'नित्यः परयणादेशः' इत्यादिना 'अचः परस्मिन्—' इत्यत्र भाष्ये ॥]

( आक्षेपभाष्यम् )

ननु चैङः सस्थानतरावर्ध एकारोऽर्ध ओकारः ॥

( समाधानभाष्यम् )

न तौ स्तः । यदि हि तौ स्यातां तावेवायमुपदिशेत् ॥

( प्रदीपः ) तावेवेति । ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि ग्रहणं सिध्यतीति भावः । गुणसंज्ञायां तु दीर्घावेकारौकारौ निर्देश्यौ ॥

( उद्योतः ) भाष्ये—तावेवेति । लाघवादिति भावः ॥ ग्रहणमिति । प्रदेशेषु इति शेषः ॥ नन्वेवं मात्रिकयोरेव गुणसंज्ञास्यादत आह—गुणेति । एवमपि अत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवति ॥

( आक्षेपभाष्यम् )

ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—सुजाते ऐश्वसूनृते, अध्वर्यो ओद्रिभिः सुतम्, शुक्रं ते एन्यद्यजतं ते एन्यत्—इति ॥

( प्रदीपः ) सुजात इति । अन्तःपादस्थस्याव्यपरस्याकारस्यार्धमेकारमर्धमोकारं च विदधति ॥

( उद्योतः ) अकारस्यार्धमिति । सुजाते ए अश्व इति अकारलेखस्तु प्रामादिकः ॥

( समाधानभाष्यम् )

पार्षदकृतिरेषा तत्रभवताम् । नैवं हि लोके नान्यस्मिन्वेदेऽर्ध एकारोऽर्ध ओकारोऽस्ति ॥

---

१ सिद्धान्ती [तपरवादिमत] उत्तरमाह—प्रत्याख्यायत इति ॥ छाया ॥ एतत्—एच इक् इत्येतत् ॥ अत्र 'इति' शब्दो हेत्वर्थः ॥

२ अतपरवादी [सिद्धान्ती] आह—यदीति ॥ छाया ॥ इदमपि–एङ्विषयं 'एच इक्' इति सूत्रमपि । इतिशब्दो हेत्वर्थः ॥

३ एवं चातपरत्वेऽपि तत्सूत्रं प्रत्याख्यास्यत इति नास्ति विशेषः इति भावः ॥

४ इदं च मतमिति । 'अर्धमात्राऽवर्णस्य, अध्यर्धमात्रेवर्णोवर्णयोः' इति मतमित्यर्थः ॥ अष्टमे इति ॥ 'प्लुतावैच इदुतौ' इति सूत्रभाष्ये इत्यर्थः ॥ अयं ग्रन्थः सर्वपुस्तकेषु अत्रैवोपलभ्यमानोऽपि राजलक्ष्मीकारेण 'भूयसा चेति । तद्वारकभूयःस्थानसाम्यादित्यर्थः' इत्युत्तरमपकृष्टः । प्रकरणैक्यादस्थानेऽयं यत्नः ॥

५ 'उत्तरभागे सदृशः' इति ग. पाठः । 'भूयसा च व्यपदेशो मल्लग्रामवत्' इति कैयटाशयं निराकर्तुमाह—शब्दपरेति ॥

६ ननु सस्थानतरयोः सत्त्वात्सूत्रमारब्धव्यमेवेति शङ्कते—ननु चेति ॥ सस्थानतर इति पाठः । सस्थानतराविति पाठे तु— 'ओकारः' इत्यग्रे 'च' इति शेषः ॥ छाया ॥

७ 'ओकारश्च' इति च. पाठः । 'एङः' इति षष्ठ्यन्तम् । एङोः सस्थानतरौ-अर्ध एकारोऽर्ध ओकारश्चेत्यर्थः । इकारोकारयोः समानस्थानत्वेऽपि एकारौकारौ ततोऽप्यन्तरतमाविति भावः ॥

८ परिहरति—न तौ स्त इति । एवं चाभावादेव तयोरप्राप्त्या तयोरेव सिद्ध्या तदनारम्भ्यमेवेति भावः ॥ छाया ॥

९ दीर्घाविति । स्वरूपेण तात्पराविलर्थः । प्रत्याहारेणानयोर्निर्देशासंभवात् । अनण्त्वेन तदप्राप्त्याऽन्यग्रहणमपि नेति भावः ॥ छाया ॥

१० अणुरपीति न्यायात् सिद्धान्तेऽत्र दीर्घपाठे मात्राचतुष्टयम् । एङित्यस्य सार्धमात्राद्वयमिति मिलित्वा सार्धषण्मात्राः । इदानीं तु अत्र ह्रस्वपाठे मात्राद्वयम् । गुणसंज्ञायां तथा पाठे मात्राचतुष्टयमिति षडेव मात्रा इति भावः ॥ छाया ॥

११ तयोरत्रानुपदेशस्तदसत्त्वे न मानं, लक्ष्यविरोधादिति शङ्कते—ननु चेति ॥ छाया ॥

१२ 'ए अश्व' 'ओ अद्रिभिः' 'ए अन्य' इति क. ख. च. पाठः । 'सुजातेअश्व, अध्वर्योद्रिभिः—शुक्रंते अन्यत्–यजतंते अन्यत्' इति प. पाठः ।

१३ न चायं प्रमादः, वैदिकैरनादिपारम्पर्येणाप्रमादेनैवाङ्गीकारात् । तदीयप्रातिशाख्ये विशेषविधानाच्च 'प्रकृत्यान्तःपाद' इत्यत्र प्रकृत्येति स्थाने तत्पाठ इति भावः ॥ छाया ॥

१४ परिहरति—पार्षदेति ॥ छाया ॥ 'पारिषद' इति प. पाठः ।

१५ तथा च सर्वशाखासाधारणेऽत्र तदुपदेशोऽयुक्तः । किं चैवमन्यत्रापि प्रयोगापत्तिरिति तथैव युक्तम् । सवर्णग्रहणात्तयोरत्वादावपि सुजाते इत्यादौ प्रकृत्यान्तरिति प्रकृतिभावः, तयोर्ग्रहणे दोषस्तु ह्रस्वविधावन्तरतमत्वात्तयोरेव प्रसङ्ग इति । तदर्थमेच्च इति सूत्रारम्भे तु गौरवमेवाधिकम् ॥ छाया ॥

( प्रदीपः ) **पार्षदकृतिरिति** । गीतिवशात्तथोच्चारणमित्यर्थः ॥

( उद्द्योतः ) शास्त्रविशेषाध्यायिनां समवायः—**परिषत्, पर्षद्वा** । तत्र भवा कृतिरित्यर्थः ॥

( ४२ अतपरपक्षदूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ एकादेशे दीर्घग्रहणम् ॥ * ॥

( भाष्यम् )

**एकादेशे दीर्घग्रहणं कर्तव्यम्—"आद्गुणः" दीर्घः, "वृद्धिरेचि" दीर्घः-इति ॥**

**किं प्रयोजनम् ?**

**आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा मा भूवन्निति । खट्वा-इन्द्रः-खट्वेन्द्रः, खट्वा-उदकं-खट्वोदकं, खट्वा-ईषा-खट्वेषा, खट्वा-ऊढा-खट्वोढा, खट्वा-एलका-खट्वैलका, खट्वा-ओदनः-खट्वौदनः, खट्वा-ऐतिकायनः-खट्वैतिकायनः, खट्वा-औपगवः-खट्वौपगव इति ॥**

( प्रदीपः ) **आन्तर्यत इति** । अन्यस्यासम्भवादिदमत्र नास्ति—**प्लुतश्च विषये स्मृतः**—इति ॥

( उद्द्योतः ) तदेवं मतपर-तपरवादिमतसाधारण्येन 'एच इक्' इति सूत्रस्य कर्तव्यताकर्तव्यते उपपाद्यातपरवादिमतेऽसाधारणं दूषणमाह—भाष्ये-**एकादेशे इति** । '**एकः पूर्वपरयोर्दीर्घः**' इति सूत्रं कार्यमित्यर्थः ॥

**अन्यस्यासंभवादिति** । अयं भावः—यथा '**स्थाघ्वोः**' इत्यत्रातपरत्वे स्थाघ्वोर्दीर्घस्य स्थाने '**घुमास्था-**' इत्येव दीर्घेकारे सिद्धे पुनर्वचनमदीर्घार्थमित्यविशेषात् ह्रस्वप्लुतयोः प्रसङ्गे तदुक्तं-**प्लुतश्च विषये**-इति । एवं च **दूराद्धूता**दिविषयेऽप्यनेनैव प्लुते पक्षेऽनुवाददोषस्तत्र, इह तु प्लुत एव प्राप्नोतीति '**खट्वा-इन्द्रः**' इत्यादिविषयकशास्त्रवैयर्थ्यमेवेत्यनुवाददोषः सोढव्य एवेति वैषम्यमिति ॥ वस्तुतोऽस्य टित्वाभावादेतद्विषये प्लुताप्रवृत्तेश्चिन्त्यमेवेदमिति '**स्थाघ्वोः**' इति सूत्रे निरूपयिष्यामः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि दीर्घग्रहणं कर्तव्यम् ॥**

( समाधानभाष्यम् )

**न कर्तव्यम् । उपरिष्टाद्योगविभागः करिष्यते—"अकः सवर्णे" एको भवति ॥ ततः—"दीर्घः" दीर्घश्च स भवति, यः स 'एकः पूर्वपरयोः' इत्येवं निर्दिष्ट इति ॥**

( उद्द्योतः ) भाष्ये—**यः स इति** । प्रसिद्ध्यर्थकम् ॥

( दीर्घग्रहणाक्षेपभाष्यम् )

**इहापि तर्हि प्राप्नोति—पशुं, विद्धं, पचन्ति-इति ॥**

( समाधानभाष्यम् )

**नैष दोषः । इह तावत्-पशुमिति "अमि" एक इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं तस्यैतत्प्रयोजनम्—यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्यात्-इति ॥**

**विद्धमिति 'पूर्वः' इत्येवानुवर्तते ॥ अथवा-आचार्यप्रवृत्तिर्ज्ञापयति—नानेन संप्रसारणदीर्घो भवतीति, यदयं हल उत्तरस्य संप्रसारणस्य दीर्घत्वं शास्ति ॥**

**पचन्तीति "अतो गुणे" पर इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्रूपग्रहणं करोति, तस्यैतत्प्रयोजनम्—यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्यात्-इति ॥**

(प्रदीपः) **अस्येक इति** । '**प्रथमयोः**-' इति सिद्ध एतदपि किमर्थमुच्यते—इति चेत्, '**वा छन्दसि**' इति अत्रानुवृत्त्यर्थम् । तस्मात् पूर्वश्रुतिः पूर्वरूपार्था, सैव चोत्तरत्रानुवर्तत इति '**विद्धं**' इति पूर्वरूपं भविष्यति ॥

**अथवेति । 'विधिनियमसंभवे विधिरेव बलीयान्'**

१ ननु तथापि चतुर्मात्रः कथमापाद्यते तस्य लोकवेदयोरप्रसिद्धेरिति चेत्, न । छान्दोग्ये प्रसिद्धेरित्याहुः । वस्तुतस्तु—लोकेऽप्यस्ति प्रसिद्धिः । तथाच **प्लुतावैच इदुता**विति सूत्रे **भाष्यकारो** वक्ष्यति—'**इष्यत एव चतुर्मात्रः प्लुत**' इति ॥ शब्दकौ० ॥ छाया ॥ 'मात्रा आदेशा माभू' इति प. पाठः ॥

२ ऊढः खट्वोढः' इति प. पाठः ॥

३ यद्यप्युभाभ्यामपि न कर्तव्यमिति सिद्धान्तादोष एव न, तथापि यदीत्युक्तिस्वारस्यात्पक्षान्तरे तु यदीत्यनेन सूचिते न्यास एव क्रियत इति विशेषाभावेनासाधारणदोषमाहेत्याह—**तदेवमिति** ॥ छाया ॥

४ **अविशेषादिति** । अनान्तर्याविशेषादित्यर्थः ॥ छाया ॥

५ **पक्षे**-दूराद्धूतादिविषये । **तत्र**-स्थाघ्वोरिच्चेत्यत्र ॥ छाया ॥

६ **वैयर्थ्यमिति** । **गुरोरनृत** इत्यनेनानन्त्यटेरविशिष्टेकारस्य एकाररूपप्लुतसिद्धिर्यतोऽत्र स्थानिनोस्त्रिमात्रत्वेन त्रिमात्र एव स स्यादिति भावः ॥ छाया ॥

७ मध्यस्थः पृच्छति—**तत्तर्हीति** ॥ छाया ॥

८ एकदेशी आह—**नेति** ॥ तत्र हेतुमाह—**उपरीति** ॥ यत इत्यादिः ॥ एवं च तेन नियमेन सर्वत्रेष्टसिद्धिः ॥ छाया ॥

९ 'योऽन्तरतमो दीर्घश्च' इति प. पाठः ॥

१० तथा न्यासे योगविभागे चोभयत्रातिप्रसङ्गमाशङ्कते—**इहापि तर्हीति** ॥ छाया ॥

११ 'ग्रहणं करोति' इति च. प. पाठः ॥

१२ सम्प्रसारणाच्च (६।१।१०८) इत्यत्र । अस्या युक्तेः पूर्वमुक्तत्वाद्बुद्धिवैशद्यार्थं प्रकारान्तरं भगवानाह—**अथवेति** ॥

१३ 'सारणस्य दी' इति ख. च. प. पाठः ॥

इति विधेर्बलीयस्त्वान्नियमो न भवति–हल एव दीर्घत्वं यथा स्यात्, उतमित्यादौ मा भूदिति ॥

( उद्द्योतः ) वा छन्दसीत्यत्रेति । 'वा छन्दसि' इत्यस्यात्रानुवृत्त्यर्थमित्यर्थः ॥ पूर्वरूपार्थेति । पूर्वव्यक्त्यात्मकपूर्वरूपार्थेत्यर्थः ॥ भाष्ये—पर इतीयतेति । ह्रस्वत्वादिरूपमिति भावः ॥ सिद्धान्ते तु रूपग्रहणं स्पष्टार्थमेव, अस्य भाष्यस्य पूर्वपक्ष्युक्तित्वात् ॥

( दीर्घग्रहणाक्षेपभाष्यम् )

**इह तर्हि-खट्वर्श्यो मालर्श्य इति । दीर्घवचनादकारो न, अनान्तर्यादैकारौकारौ न ॥**

**तत्र को दोषः ?**

**विगृहीतस्य श्रवणं प्रसज्येत ॥**

( उद्द्योतः ) अकारो नेति । रपरत्वेऽपि द्विमात्रत्वरूपदीर्घत्वासंभव एव ॥ विगृहीतस्येति । दीर्घश्रुति-परिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुपप्लवादिति भावः ॥

( वार्तिकैकदेशिनः समाधानभाष्यम् )

**न ब्रूमः—यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति ॥**

**किं तर्हि ?**

**यत्र क्रियमाणे न दोषस्तत्र कर्तव्यम्—इति ।**

( आक्षेपभाष्यम् )

**क्व च क्रियमाणे न दोषः ?**

( समाधानभाष्यम् )

**संज्ञाविधौ । वृद्धिरादैज् दीर्घः, अदेङ् गुणो दीर्घ इति ॥**

( आक्षेपभाष्यम् )

**तर्त्तर्हि दीर्घग्रहणं कर्तव्यम् ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**न कर्तव्यम् ॥**

**कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ?**

**तपरे गुणवृद्धी ॥**

( प्रदीपः ) तपरे इति । तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः ।

( उद्द्योतः ) ननु गुणवृद्धिसंज्ञयोस्तपरत्वाभावात्पूर्वोक्तदोषापरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह—तपरसंज्ञीति । तपरशब्दनिर्दिष्टे संज्ञिनि गुणवृद्धिसंज्ञे प्रवर्तेते इत्यर्थः । एवञ्च त्रिमात्रादीनां तत्र संज्ञितयाऽनिर्देशान्नोक्तदोष इति भावः ॥

( आक्षेपभाष्यम् )

**ननु च तः परो यस्मात्सोऽयं-तपरः ॥**

( उद्द्योतः ) भाष्ये—ननु चेति । एवञ्च–एङैचौ न तपराविति भावः ॥

( समाधानभाष्यम् )

**नेत्याह । तादपि परः—तपर इति ॥**

( प्रदीपः ) तादपीति । तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भावः ॥

( उद्द्योतः ) नेत्याहेति । स एव तपर इति न–इत्याहेत्यर्थः ॥ अर्थभेदेन शब्दभेदे—तन्त्रन्यायेति ॥ तद्भेदेऽपि शब्दैक्यपक्षे आह—एकस्यैव द्विशक्तित्वादिति ॥ एकशेषेति । समाहारद्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदं चिन्त्यम् ॥

---

१ तदाकारमाह—हल एवेति । ततः परस्यैवेत्यर्थः । एवं सति तु विद्धमित्यादौ दीर्घवारणेन दोषस्तदवस्थ एवेति भावः ॥ वस्तुतो निरुतमित्यादौ वारणाय 'अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य' इत्यर्थावश्यकत्वे नियमे न फलमिति बोध्यम् ॥ छाया ॥

२ 'वा छन्दस्यमि' इत्येकयोगे तु जसि न स्यादिति योगविभागोऽप्यर्थवानिति भावः ॥ छाया ॥

३ पूर्वोक्तातिप्रसङ्गस्योद्धारेप्यतिप्रसङ्गान्तरमाह—इहेति ॥ छाया ॥

४ परीति । स्थानेऽन्तरतम इतीत्यर्थः ॥ छाया ॥

५ एवं वार्तिके तत्खण्डने च दूषिते वार्तिकक्रद्दोषवादी आह—न ब्रूम इति ॥ छाया ॥

६ ननु तत्राकरणे कथम् 'एकादेशे' इत्युक्तिरित्याशयेन पृच्छति—क्वेति ॥ छाया ॥

७ उत्तरयति—संज्ञेति । 'एकादेशे' इत्यस्य तन्मूलभूतसंज्ञाविधावित्यर्थः । कार्यत्वाच्छेषत्वाच्च संज्ञाधिकारे 'एकादेशे' इत्यभिधानोपपत्तिः ॥ छाया ॥ संज्ञाविधौ दीर्घग्रहणे दीर्घा आदैचो वृद्धिसंज्ञका इति वृद्धिरादैजित्यस्यार्थः । अदेङ्गुण इत्यत्र च एङा सहैव दीर्घग्रहणं संबध्यते नाता–इति पूर्वोक्तेषु खट्वोढादिलक्ष्येषु न दोष इत्याशयः ॥

८ पुनरपि मध्यस्थस्तत्त्वं श्रोतुं पृच्छति—तर्त्तर्हीति ॥ संज्ञाविधावित्यनुपज्यते ॥ छाया ॥ 'तत्तर्हि तत्र दी' इति प. पाठः ॥

९ भगवानाह—नेति ॥ मध्यस्थस्य प्रश्नः—कस्मादिति । भगवत उत्तरम्—तपरे इति ॥ छाया ॥

१० ननु बहुफलवलाद्बहुव्रीहिरेवेत्यदातोस्तत्वेऽप्यैङैचोस्तदभावादुक्तदोषस्तदवस्थ एवेति दोषवादी शङ्कते—ननु चेति ॥ छाया ॥

११ स्यादेतत्—संज्ञासूत्रे अदातोस्तपरकरणेऽप्यैङैचोः कथं तत्कालग्राहकता । सहिवहोरोदिति सूत्रे वर्णग्रहणेन तात्पर इति पञ्चमीसमासस्यापि ज्ञापितत्वादिति चेत्, एवमपि तात्पराभ्यामेङैच्छब्दाभ्यामस्तु दीर्घाणामेवोपस्थितिः । उपस्थितैस्तु दीर्घैः स्वसवर्णानां ग्रहणं दुर्वारमेव नहि तेऽपि तात्पराः, अनुच्चारितत्वात् । ग्राहकत्वं परमनुच्चारितानामपि प्रत्याहारैरुपस्थितानामस्त्येव, दीर्घाज्जसि चेति ज्ञापकात् । ष्वादिभ्य इति निर्देशाच्च । तेन चमूष्वित्यादिषु षत्वादिकं सिध्यतीति वक्ष्यते । तात्परस्तत्कालस्येति तूच्चारितेष्वेव स्यादिति चेत्सत्यम् । ङमो ह्रस्वादिति सूत्रे ङमुडिति प्रत्याहारे कृतं टित्त्वं संज्ञायां व्यर्थं सत् सामर्थ्यात् संज्ञिषु ङादिषूपकरोतीति यथा स्वीकृतम्, तथेहापि तात्परत्वं संज्ञायामनुपयुज्यमानं तदुपस्थाप्येषु संज्ञिषु तत्कालावधारणं सामर्थ्यात्करोतीति न कश्चिद्दोषः ॥ इति श० कौ० ॥

१२ अपिसूचितप्रागुक्तसमासस्यापि परिग्रहे बीजमाह—तन्त्रेति ॥ छाया ॥

( आक्षेपभाष्यम् )

[1]यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात् यवः स्तवः । लवः पव इत्यत्र न स्यात् ॥

( समाधानभाष्यम् )

[2]नैष तकारः ॥

कस्तर्हि ?

दकारः ॥

( आक्षेपभाष्यम् )

किं दकारे प्रयोजनम् ?

( प्रदीपः ) बहुव्रीहिवादी चोदयति—किं दकार इति ॥

( प्रतिबन्दिसमाधानभाष्यम् )

अथ किं तकारे ?

यद्यसंदेहार्थस्तकारः, दकारोऽपि । [3]अथ मुखसुखार्थस्तकारः, तर्हि दकारोऽपि ॥

( प्रदीपः ) समासद्वयवादी तं प्रत्याह—अथ किं तकार इति । तव केवलबहुव्रीहिवादिनो निःप्रयोजनं तपरत्वम्, ऋकारस्यानण्त्वात् भिन्नकालानां ग्रहणाप्रसङ्गात्, गुणानां चाभेदकत्वा[4]त् प्राप्त्यर्थाभावात् । अथ तवासन्देहार्थो वा मुखसुखार्थो वा तकारः, एवं मम दकार इत्यर्थः ॥ 'तित्स्वरितम्' इत्य[5]त्र भाष्येणास्य विरोधः । तत्र हि-तिदिति प्रत्ययग्रहणं चोदितम्, इह मा भूत्—'दिव उत्' द्युभ्यामिति, ततो दित्त्वाश्रयेण प्रत्याख्यातम्, तपरसू[6]त्रे च दकारश्चर्त्वभूतो निर्दिश्यते। तेन तत्कालस्य ग्राहको दकारः—इत्युक्तम् । इह च दकाराभ्युपगमेन लँवा[7]दिदोषः परिहृतः ॥ अत्राहुः—थकारस्थानिको धकारस्थानिको वा दकारोऽत्र विवक्षितः—'कस्तर्हि, दकारः' [8]इति ॥

( उद्योतः ) (भाष्ये) 'सुखमुखार्थः' इति पाठे मयूरव्यंसकादित्वात्समासः ॥ ननु एङैजिति संज्ञायास्तात्परत्वेऽपि संज्ञिनामेकारादीनां किमागतमिति चेत्, न । तपरशब्दबोध्योऽपि वर्णस्तत्कालस्यैव संज्ञा-इत्यर्थान्न दोषः ॥ गुणानां चेति । अणुत्वं गुणानां तत्त्वाभावेऽपि अनण्त्वादेव दीर्घादिविषये तत्त्वमिति भावः ॥ ननु दित्त्वे 'दिव उत्' इत्यत्र तत्कालग्रहणं न स्यादत आह—तपरसूत्रे चेति ॥ इहेति । तपरसूत्रे दकारानाश्रयणेन चेत्यपि बोध्यम् ॥ थकारस्थानिक इति । तस्य चैतद्दृष्ट्याऽसिद्धत्वान्न तत्र तपरसूत्रप्रवृत्तिरिति भावः ॥

( इति अतपरत्वव्यवस्थानिर्णयः ॥ )

( अथ वर्णैकदेशग्रहणाग्रहणनिर्णयाधिकरणम् )

( पक्षद्वयोपस्थापकभाष्यम् )

इदं विचार्यते—य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतयः, एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वा-इति ॥

[10]कुतः पुनरियं विचारणा ?

इह समुदाया अप्युपदिश्यन्ते, अवयवा अपि ॥

अभ्यन्तरश्च समुदायेऽवयवः, तद्यथा-वृक्षः प्रचलन् सहावयवैः प्रचलति ।

तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वा-इति जायते विचारणा ॥

कश्चात्र विशेषः ?

( प्रदीपः ) वर्णान्तरसमानाकृतय इति । [11]ओंकारादिष्वकारादिसदृशा अवयवाः, ऋकारॡकारयो रेफलकारसदृशाववयवौ, संध्यक्षरेष्वकारेकारोकारसदृशाः; तत्र केवलवर्णकार्यमवयवेषु-भवति न वेति विचारः ॥ इह समुदाया अपीति । ऋ-ऌ-ए-ओ-ऐ-औ-इति ॥ अवयवा अपीति । अइउण्-रट्-लण्-इति ॥ तत्र समुदायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादेङादिसंज्ञां न लभन्ते, अवयवपरे च निर्देशे समुदायो न संज्ञाभाक् । यथा—हयवरेत्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोऽप्यकारोऽन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञां न प्रतिपद्यते-इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते। तत्रासत्यामप्येजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति । एवं स्थिते 'अग्ने-इन्द्र' इत्यादौ यत्रावयवकार्यं च प्राप्नोति समुदायकार्यं च, तत्रान्तरङ्गत्वात्तत्र च साक्षाच्चोदितत्वात्प्र[12]त्यक्षत्वाच्चावयवकार्यप्रसङ्गः । अवयवावगतिपूर्वकत्वाद्धि समुदायावगमस्य समुदायकार्यं बहिरङ्गम् । अयादीनां त्ववकाशः—अग्न आयाहीति ॥ नन्वत्रापि यणादेशोऽवयवस्य प्राप्नोति । येन नाप्राप्त इति वा मध्येऽपवादा इति वा यण

१ दोषवादी शङ्कते—यदीति ॥ छाया ॥

२ सिद्धान्ती परिहरति—नैष इति ॥ छाया ॥

३ 'अथ सुखमुखार्थस्त–' इति अ. पाठः ॥

४ 'त्वात्तत्प्राप्त्यर्थत्वाभावात्' इति क. ख. पाठः ॥

५ 'इत्यत्रत्यभाष्ये' इति च. पुस्तकपाठः, तादृशपाठस्तु प्राचीनपुस्तकेषु न दृश्यते ॥

६ 'सूत्रे दका' इति च-रहितः पाठः अ. पुस्तके ॥

७ 'लवादिषु दोषः' इति ख. पाठः ॥

८ इतीति । इत्यत्रेत्यर्थः ॥ छाया ॥

९ अणुत्विति । तत्र सूत्रेऽण्ग्रहणसामर्थ्यादिति भावः । तत्त्वं-अभेदकत्वम् ॥ छाया ॥

१० कोटिद्वयानुपस्थितौ कथं विचार इति पृच्छति—कुत इति ॥ छाया ॥

११ अत एव "तस्यादितः—" "पूर्वस्यार्धस्य—" "ऐचोश्चोत्तर—" इति संगच्छते । तत्राकारादयो वनादिवत्संघाताः । अनादिरूपप्रत्यभिज्ञानात्क्रमेणोपलम्भाच्चैचः प्लुते प्रागकारः पश्चादिदुताविति विभागः 'ए ऐ तु कण्ठ–' इत्यादिना स्थानक्रमोक्तेश्च । नह्येकस्य स्थानक्रमेणोत्पत्तिरतः संघातमात्रास्ते इति सिद्धम् ॥ छाया ॥

१२ 'त्यक्षत्वात्परत्वाच्च' इति क. ख. पाठः ॥

एवायादयो बाधकाः स्युः । तत्र यथा दधीन्द्र इत्यत्र दधिशब्दस्य इकारः सवर्णदीर्घत्वं प्रतिपद्यते, एवमेकारस्थोऽपि प्रतिपद्येत । प्रत्याहारे **'एओङ्' 'ऐऔच्'** इत्यत्रावयवानां प्राधान्येनानिर्देशात्–इत्येवं **ग्रहणपक्षाशङ्काबीजमुपन्यस्तम्** ॥

इदानीमग्रहणपक्षाशङ्काबीजमुपन्यस्यते—**अभ्यन्तरश्चेति** । तिरोहितत्वादवयवानां समुदायकार्ये च पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारूप्यमात्रेण तत्कार्याप्रवर्तनादित्यर्थः ॥

(उद्योतः) **अवयवग्रहणेन**–अवयवसदृशवर्णग्रहणेन ग्रहणं स्यान्न वा–इति भाष्यार्थः । तत्फलितमाह—**तत्र केवलेति** ॥ नन्वकारेण एङ्वयवग्रहणसन्देहवत् अकारादीनामेङादिसंज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह—**तत्र समुदायेति** । अत एव प्राटीत्यादौ न पररूपम् ॥ तत्र दृष्टान्तमाह—**अवयवपरे चेति** । यथाऽवयवपरे निर्देशे समुदायो न संज्ञाभाक्, एवं समुदायपरे निर्देशेऽवयवा न तद्भाज इत्यर्थः । तदुपपादयति—**यथेति** ॥ **अन्यत्रेति** । सर्वस्यावयवस्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर एव, सर्वस्यावयवस्यान्यत्रानिर्देशे तु समुदायनिर्देशोऽनिर्दिष्टावयवपर इति विवेकः ॥ नन्वेजादिसंज्ञानामवयवावृत्तित्वे कथमेचो निवर्तकेनायादिना तदवयवस्य निवृत्तिरत आह—**तत्रासत्यामपीति** । तन्निवृत्तिं विना समुदायनिवृत्तेः कर्तुमशक्यत्वादिति भावः ॥ **अवयवकार्यं**–दीर्घः ॥ **समुदायकार्यं**–अय् ॥ **तत्र च साक्षादिति** । दीर्घे । अयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितः, न साक्षादिति भावः ॥ साक्षाचोदितत्वं प्रत्यक्षत्वे हेतुः ॥ नन्वयादिरनवकाशोऽत आह—**अयादीनामिति** ॥ **नन्विति** । ततश्च विध्यन्तरपूर्वकोऽयादिः सर्वस्य बाधकः स्यादिति भावः ॥ परिहरति—**येनेति** ॥ **प्राधान्येनानिर्देशादिति** । अस्यैजादिसंज्ञाभावेऽपि स्वतन्त्राकारेण ग्रहणं स्यादिति शेषः ॥

भाष्ये—**अभ्यन्तरश्चेति** । तदुच्चारणं विना समुदायोच्चारणस्याशक्यत्वादित्यर्थः ॥ तदाह—**तद्यथा वृक्ष इति** ॥ तदुपपादयति—**तिरोहितत्वादित्यादिना** ॥ **समुदायकार्ये पारतन्त्र्यादिति** । समुदायसंपादनरूपे कार्ये पारतन्त्र्यादित्यर्थः ॥ **स्वकार्यस्याप्रयोजकत्वादिति** । स्वकार्यनिरूपितप्रयोजकत्वाभावादित्यर्थः ॥ तत्प्रयोजकत्वाभावे हेतुः—**नरसिंहवदिति** । तदवयवे नरत्वाद्यभाववत् एतदवयवेऽप्यत्वाद्यभाव इति भावः ॥

(४२ ग्रहणपक्ष आक्षेपवार्तिकम् ॥ १ ॥)

## ॥ * ॥ वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षरविधिप्रतिषेधः ॥ * ॥

(भाष्यम्)

**वर्णैकदेशा वर्णग्रहणेन चेत्[1]संध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति, स प्रतिषेध्यः । अग्ने[2]-इन्द्रम्, वायो-उदकम्, "अकः सवर्णे दीर्घः" इति दीर्घत्वं[3] प्राप्नोति ॥**

(प्रदीपः) **समानाक्षरेति** । समानशब्देन पूर्वाचार्यनिर्देशादकोऽभिधीयन्ते, **दश समाना** इति वचनात् । तेन समानकार्यं प्राप्नोतीत्यर्थः ॥

(उद्योतः) **वचनादिति** । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ दश समाना इति पूर्वव्याकरणवचनादित्यर्थः ॥ **समानकार्यम्**–अग्रूपसमानाक्षरकार्यमित्यर्थः । **'सवर्णकार्यं'** इति पाठे सवर्णदीर्घरूपं कार्यमित्यर्थः ॥

(४३ आक्षेपान्तरवार्तिकम् ॥ २ ॥)

## ॥ * ॥ दीर्घे ह्रस्वविधिप्रतिषेधः ॥ * ॥

(भाष्यम्)

**दीर्घे[4] ह्रस्वाक्षराश्रयो विधिः प्राप्नोति, स प्रतिषेध्यः[5] । आलूय प्रलूय-ह्रस्वस्य पिति कृति तुग्भवति-इति तुक् प्राप्नोति ॥**

(आक्षेपबाधकभाष्यम्)

**नैष[6] दोषः, आचार्यप्रवृत्तिर्ज्ञापयति-'न दीर्घे ह्रस्वाश्रयो विधिर्भवति' इति । यदयं दीर्घाच्छे तुकं शास्ति ॥**

(उद्योतः) भाष्ये—**दीर्घाच्छे इति** । दीर्घस्य छे तुगिति हि तदर्थः ॥ ननु 'ह्रस्वस्य' इत्यत्राच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुग्नेति चेत्, न । पदलाघवाभावादित्याशयात् ॥

(आक्षेपसाधकभाष्यम्)

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ?**

**"पदान्ताद्वा" इति विभाषां वक्ष्यामीति ॥**

(उद्योतः) **अस्ति हीति** । तत्र 'दीर्घात्'इत्यस्याभावे कुड्यच्छायेत्यादावपि विकल्पः स्यादिति भावः ॥

(आक्षेपबाधकभाष्यम्)

**यत्तर्हि योगविभागं करोति । इतरथा हि "दीर्घात्पदान्ताद्वा" इत्येव ब्रूयात् ॥**

(आक्षेपभाष्यम्)

**इह तर्हि[7]—खट्वाभिः, मालाभिः, अतो भिस ऐस्" इत्यैस्भावः प्राप्नोति[8] ॥**

(आक्षेपबाधकभाष्यम्)

**तपरकरणसामर्थ्यान्न भविष्यति ॥**

---

१ **चेदिति** । गृह्यन्ते, तदेति शेषः ॥ छाया ॥

२ 'अग्ने इन्द्रम्' इति प. पाठः ॥

३ **दीर्घत्वमिति** । अयादितः परत्वादिति भावः ॥ छाया ॥

४ **दीर्घे इति** । दीर्घे घटकीभूतो यो ह्रस्वस्तत्सदृशस्तत्प्रयुक्तो यो विधिः स्वस्य तदुत्तरस्य वा प्राप्तस्तस्य प्रतिषेध इत्यर्थः ॥ छाया ॥

५ 'ध्यः ग्रामणीः आलूय' इति प. पाठः ॥

६ दोषमुद्धरति—**नैष इति** ॥ छाया ॥

७ एवं सति द्वितीयवार्तिकस्य ज्ञापकस्य सजातीयापेक्षत्वात्तेनावारितलक्ष्यान्तरमाह—**इह तर्हीति** ॥ छाया ॥

८ 'भवति' इति प. पाठः ॥

( आक्षेपभाष्यम् )

इह तर्हि—याता, वाता, "अतो लोपः" आर्धधातुके—इत्यकारलोपः प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

ननु चात्रापि तपरकरणसामर्थ्यादेव न भविष्यति ॥

( आक्षेपसाधकभाष्यम् )

अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् ॥

किम् ?

सर्वस्य[1] लोपो मा भूदिति ॥

( प्रयोजनबाधकभाष्यम् )

अथ[2] क्रियमाणे तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति ?

( प्रयोजनसाधकभाष्यम् )

परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च ॥

( प्रदीपः ) असिद्धत्वाच्चेति । 'असिद्धवदत्राभात्' इत्यनेन ॥

( उद्द्योतः ) असिद्धवदिति । चिणो लुङ्[3]न्यायेनेति भावः ॥

( समाधानसाधकभाष्यम् )

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'न आकारस्थस्य अकारस्य लोपो भवति' इति । यदयं "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति ॥

कथं कृत्वा ज्ञापकम् ?

कित्करण एतत्प्रयोजनम्—कितीत्याकारलोपो यथा स्यादिति[4] । यद्याकारस्थस्य केऽकारस्य लोपः स्यात्, कित्करणमनर्थकं स्यात् । परस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्यात्—गोदः, कम्बलद इति । पश्यति त्वाचार्यः—नाकारस्थस्य-अकारस्य लोपः स्यादिति, अतः ककारमनुबन्धं करोति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात्—"तुन्दशोकयोः परिमृजापनुदोः" इति ॥

( उद्द्योतः ) भाष्ये—उत्तरार्थमेतदिति । 'इह किंचित्त्रपो इति' इति न्याय[5]स्तु नाश्रितः । अत्र केवलाकारोच्चारणे—उत्तरत्र ककाराकारयोरुच्चारणे गौरवा[6]दिति भावः ॥

( समाधानसाधकभाष्यम् )

यत्तर्हि[7] "गापोष्टक्" इत्यनन्यार्थं ककारमनुबन्धं करोति ॥

( प्रदीपः ) यत्तर्हीति । नन्वसति[8] कित्त्वे आकारस्थस्याकारस्य[9] लोपे कृते द्वयोरकारयोः पररूपस्य धातुं प्रत्यन्तवद्भा[10]वात् 'छन्दोगाय' इत्यत्र 'आतो धातोः' इत्याकारलोपप्रसङ्गः । नैष दोषः, सन्निपातपरिभाषया[11] लोपो न भविष्यति । अकारं ह्याश्रित्य यशब्दः कृतो लोपस्यानिमित्तम् । दीर्घत्वं तु 'कष्टाय' इति निपातनाद्भवति ॥

( उद्द्योतः ) सन्निपातेति । न च दीर्घेणैव स निवर्तितः, दीर्घेऽप्यत्वजातिसंबन्धसत्त्वेन न तथा सन्निपातक्षतिः । लोपे तु तस्यापि निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः ॥ परे तु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति यत्वनिमित्तसन्निपातस्य[12] दीर्घेण निवृत्तिर्जातैव न कस्याप्यनुवृत्तिः, तस्माद्व्याप्यात्वजातियञा[13]दिसंनिपात-

---

१ सर्वस्येति । अतपरत्वेऽपदेन सर्वग्रहणादाकारस्य संपूर्णस्य लोपो मा भूदित्यर्थः ॥

२ नेदं तपरव्यावर्त्यम्, तत्र तत्कालस्यापि विद्यमानत्वादित्याशङ्कते—अथेति ॥ छाया ॥ 'क्रियमाणेऽपि' इति प. पाठः ॥

३ अपाचितरामित्यत्र चिणः परस्य तरामित्यस्य 'चिणो लुक्' इत्यनेन लुक् प्राप्तो यथा चिणो लुगित्यनेनैव जातस्य तप्रत्ययलुकोऽसिद्धत्वमाश्रित्य तेन व्यवधानमाश्रित्य वार्यते तथात्रापि स्वजातलोपस्यैव पुनः स्वस्मिन्कर्तव्येऽसिद्धत्वाङ्गीकार इति भावः ॥ "'आर्धधातुकोपदेशकाले यदकारान्तम्' इत्यर्थमनाश्रित्येदम् । 'तदाश्रयणे तु लोपस्य प्राप्तिरेव नेति तत्त्वम्' इति । छाया । तन्न सम्यक्, दीर्घे ह्रस्वद्वयाङ्गीकृतौ गोपायितेत्यत्रेवात्रापि तत्सत्त्वात् ॥ इति दाधिमथाः ॥ तत्तुच्छम् । दीर्घे ह्रस्वद्वयाङ्गीकारे तयोः पूर्वापरीभावोऽप्यवश्यं वक्तव्यः । तदाश्रयणे हि परस्याकारस्य आर्धधातुकोपदेशकालेऽन्तत्वं न तु पूर्वस्याकारस्येति परस्य लोपे पूर्वस्य उपदेशकालेऽन्तत्वाभावेन लोपाप्राप्तिरिति छायाशय एव सम्यक् ॥

४ 'स्यात् । यदि चाकारस्थस्याकार' इति प. पाठः ॥

५ 'इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् ।
स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति ॥
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि ।
नुड्वाच्य उत्तरार्थं तु इह किंचित् त्रपो इति ॥'

इति—इकोचि विभक्ता इत्यत्र भाष्ये स्पष्टोऽयं न्यायः । तस्यायमर्थः प्रकृतोपयोगी—इकोऽचि विभक्ता इति सूत्रस्थमचीति अस्थिदधिसक्थ्यक्ष्णामित्युत्तरसूत्रार्थमावश्यकमित्युपपाद्य यदि तत्र प्रयोजनं तर्हि तत्रैवायं ब्रूयात् । इह करणेनापि किंचिज्ज्ञाप्यते । तेन न लुमतेति निषेधस्यानित्यत्वज्ञापनात् त्रपो इति संबुद्धौ गुणः साधितः । एवं प्रकृतसूत्रे करणेन किंचिज्ज्ञापनीयमेवेत्यत आह—नाश्रित इति ॥ दाधिमथाः ॥

६ सवर्णदीर्घेण पूर्वरूपेण वाकारप्रश्लेषाश्रयेणोक्तगौरवपरिहारस्तु व्याख्यानसापेक्षत्वाज्ज्ञानगौरवग्रस्तत्वादकिंचित्कर इति भावः छाया ॥

७ अनन्यथासिद्धज्ञापकमाह—यत्तर्हीति ॥ छाया ॥

८ नन्वसत्यनन्यार्थत्वे ज्ञापकता, तदेव नेति भाष्यमयुक्तमित्याशङ्कते—नन्वसतीति ॥ छाया ॥

९ कारस्य—उत्तरभागस्य ॥ छाया ॥

१० वद्भावादिति । धात्ववयवत्वे तस्य सुपि चेति दीर्घे कृते तस्यैकदेशविकृतन्यायेन तत्त्वादिति शेषः ॥ कित्त्वे त्वातो लोप इटीत्यालोपेन प्रत्ययाकारस्य तेन दीर्घेऽपि तदप्रसङ्ग इति भावः ॥ छाया ॥

११ 'परिभाषाया लोपः' इति छ. पाठः, स लेखकप्रमादात् ।

१२ संनिपातस्य—ह्रस्वाकार-ङेसंनिपातस्य ॥

१३ यञादीति । प्रत्ययेति शेषः ॥ छाया ॥

निमित्तो दीर्घो न स्वसंनिपातविघातकलोपनिमित्तम्। **सन्निपात**परिभाषायाश्च स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यादृशः संनिपातः स्वातिरिक्ततद्विघातकस्य स्वयमनिमित्तमित्यर्थः। मात्राकालिकत्वसमानाधिकरणव्यापकजातिनिर्देशपक्षेऽप्यङ्गसंज्ञा तर्ह्यनिमित्तं स्यादिति कृन्मेजन्तसूत्रवक्ष्यमाणभाष्यरीत्या यादेशनिमित्तसंनिपातस्य न लेशतोऽपि सत्तेति वदन्ति ॥ 'प्रातरॄतं-तत् ऌकारः' इत्यादौ 'रो रि' 'तोर्लि' इति तु नापादितं, तस्याभितोऽज्भागसत्त्वेन तेन व्यवधानात्तदप्राप्तेः ॥

( ४४ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ एकवर्णवच्च ॥ * ॥**

( भाष्यम् )

**एकवर्णवच्च दीर्घो भवतीति वक्तव्यम् ॥**

**किं प्रयोजनम्?**

**वाचा तरतीति ह्यज्लक्षणष्ठन्मा भूदिति ।**

**इह वाचो निमित्तम्, "तस्य निमित्तं संयोगोत्पातौ" इति ह्यज्लक्षणो यन्मा भूदिति ॥**

( प्रदीपः ) **एकवर्णवदिति** । अवयवसंख्याश्रयणेन वाक्शब्दस्य द्व्यच्त्वात्तन्निमित्तं कार्यं प्राप्नोतीति 'एकवर्णवत्' इत्यतिदेशः क्रियते ॥

( आक्षेपबाधकभाष्यम् )

**अत्रापि गोनौग्रहणं ज्ञापकम्—'दीर्घे ह्यज्लक्षणो विधिर्न भवति' इति ॥**

( प्रदीपः ) **गोनौग्रहणं ज्ञापकमिति** । सामान्येन ज्ञापकं वर्णावयवाश्रयकार्याभावस्येति 'अग्न-एहि' इत्यादौ 'एङः पदान्तादति' इत्यादि न भवति ॥

( उद्द्योतः ) 'अग्ने-इन्द्र' इत्यादौ सवर्णदीर्घव्यावृत्तये आह—**सामान्येनेति** । 'गोश्चोऽसङ्ख्या-' इति **गो**ग्रहणं, 'नौद्व्यचष्ठन्' इति नौग्रहणम् ॥ **वर्णावयवाश्रयकार्याभावस्येति** । वर्णावयवेषु-भेदेनाप्रतिभासमानेषु वर्णाश्रयकार्याभावस्येत्यर्थः । तेन मातॄणामित्यादौ णत्वादिसिद्धिः, भेदेन प्रतिभासात् ॥

( सर्वाक्षेपपरिहारभाष्यम् )

**अयं तु सर्वेषामेव परिहारः—**

( ४५ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ नाव्यपवृक्तस्यावयवस्य तद्विधिर्यथा द्रव्येषु ॥ * ॥**

( भाष्यम् )

**नाव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति यथा द्रव्येषु । तद्यथा द्रव्येषु-"सप्तदश सामिधेन्यो भवन्ति" इति न सप्तदशारत्निमात्रे काष्ठमग्नावभ्याधीयते ॥**

( प्रदीपः ) **नाव्यपवृक्तस्येति** । व्यपवर्गः—व्यपवृक्तिः=भेदः। तेनाव्यपवृक्तस्य—अभिन्नबुद्धिविषयस्य—एकत्वालम्बनज्ञानग्राह्यस्य समुदायस्य योऽवयवस्तस्मिंस्तद्विधिः—पृथग्भूतवर्णविधिर्न भवतीत्यर्थः। 'अव्यपवृक्तस्य-अवयवस्य' इति व्यधिकरणे षष्ठ्यौ, अव्यपवृक्तस्य समुदायस्य योऽवयवस्तस्येत्यर्थः। न हि संभवमात्रेण कार्याणि क्रियन्ते, अपि तु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः। **'माषा न भोक्तव्याः'** इति निषेधस्तु मिश्रेष्वपि वर्तते, तत्र तद्बुद्धितद्रसास्वादनसंभवात् ॥ **सप्तदशेति** । सामिधेनीशब्द ऋचां वाचकः साहचर्यात्काष्ठेषु वर्तते । तत्र सप्तदशहस्ते काष्ठे 'सप्तदश काष्ठानि' इति बुद्धेरभावान्न तस्याभ्याधानम् ॥

( उद्द्योतः ) सामान्यापेक्षज्ञापकं विनाऽपि न्यायेन निर्वाहमाह—भाष्ये—**अयन्त्विति** । अभिन्नबुद्धिविषयस्येत्यस्य व्याख्या—**एकत्वालम्बनज्ञानग्राह्यस्येति ॥ समुदायस्य योऽवयव इति** । वर्णसमुदायस्येत्यर्थः ॥ **व्यधिकरणे इति** । सामानाधिकरण्येनान्वयेऽव्यपवृक्तस्येति व्यर्थं, सर्वस्याप्यवयवस्यावयविनाऽव्यपवृक्तत्वादिति भावः ॥ भाष्ये—**अवयवाश्रयः**=अवयवसदृशस्वतन्त्रवर्णाश्रयः ॥ उक्तेऽर्थे युक्तिमाह—**न हीति** ॥ ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वेन **'काष्ठमग्नावाधीयते'** इति भाष्यमयुक्तमत आह—**साहचर्यादिति** । तदाधेयत्वेनेति भावः ॥ **तत्र सप्तदशेति** । यद्यपि एकैका समिदरत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशारत्निमात्रत्वं भवति, एकस्यापि तावत्त्वमस्ति, तथाप्यव्यपवृक्तसमुदायावयवत्वात् न व्यपवृक्ताश्रयकार्यप्रसङ्ग इति भावः ॥

---

१ अयं भावः—यत्संनिपातं निमित्तीकृत्याग्रिमकार्योपजीव्यं कार्यं प्राप्तं तस्य लेशतस्तद्विघातकत्वेऽपि लेशतोऽनुवृत्तसंनिपातसर्वांशविघातकशास्त्रान्तरा निमित्तत्वमिति तदर्थः। यत्तदोर्नित्यसंबन्धात् प्रत्यासत्तेश्चेति ॥ छाया ॥

२ ननु न तपरसूत्रं व्याप्यजातिनिर्देशबोधकं, किंतु गौरवसत्त्वेऽप्यक्षरमर्यादया विशिष्टजातिबोधकमित्येकदेशिमते कैयटरीत्या सा सुयोजैवेत्यत आह—**मात्रेति** ॥ **रीत्येति** । **'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्** । **दाक्षिः'** इति दोषे वार्तिककृता दत्ते 'संनिपातशब्देन पूर्वापरसंनिपात एव गृह्यते' इत्याशयेन **'न प्रत्ययः संनिपातलक्षणः'** इति खण्डिते तदभ्युपेत्यैवैकदेशिनोक्तम्—**'अङ्गसंज्ञा-'** इति । एवं च पूर्वपरसंनिपातस्य तन्निमित्तस्योभयनाशेन नाश एवेति भावः ॥ छाया ॥

३ ननु ऋकारऌकारयोरपि दोषोद्भावनं कुतो न कृतं भगवताऽत आह—**प्रातरिति** ॥ तथा च साम्प्रतमन्यथा लेखः सर्वेषां प्रामादिक एवेति भावः ॥ छाया ॥

४ दोषान्तरमाह—**एकेति** ॥ छाया ॥

५ 'त्पातावित्यनुवर्तमाने गोद्व्यच इति' इति क. छ. पाठः ।

६ ननु दीर्घे एकवर्णत्वस्य सिद्धत्वादुभयमप्ययुक्तमिति चेत् । न । ह्यज्लक्षणकार्यस्य प्रतिषेधो वाच्य इति तात्पर्यात् ॥ अत एव खण्डनग्रन्थे तथा वक्ष्यति भगवान् ॥ छाया ॥

७ 'दीर्घाद् ह्यज्ल' इति प. पाठः ॥

८ 'वयवे तद्वि' इति प. पाठः ॥

९ 'तद्बुद्धिस्तद्रसा' इति छ. पाठः ॥

( दृष्टान्तवैषम्यभाष्यम् )

**विषम उपन्यासः । प्रत्यृचं चैव हि तत्कर्म चोद्यते । असंभवश्चाग्नौ वेद्यां च ॥**

( प्रदीपः ) **असंभव इति** । अर्धचतुर्थहस्ता हि वेदिः ॥

( उद्योतः ) न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं, किंतु असंभवनिबन्धनमित्याह—भाष्ये—**विषम इति** । आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न संभवतीति भावः ॥ युक्त्यन्तरमाह—**असंभवश्चेति** ॥ तमुपपादयति—**अर्धचतुर्थहस्तेति** । अर्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोऽग्निवेदिवहिर्भावनिषेधाच्चासंभव इति भावः ॥

( दृष्टान्तान्तरभाष्यम् )

**यथा तर्हि—"सप्तदश प्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीत" इति न सप्तदशप्रादेशमात्रं काष्ठमभ्याधीयते ॥**

( प्रदीपः ) **यथा तर्हीति** । अल्पप्रमाणत्वात्स्यात्संभव इत्यर्थः ॥

( दृष्टान्तवैषम्यभाष्यम् )

**अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते । तुल्यश्चासंभवोऽग्नौ वेद्यां च ॥**

( सिद्धान्तिदृष्टान्तभाष्यम् )

**यथा तर्हि—"तैलं न विक्रेतव्यम्" "घृतं न विक्रेतव्यम्" इति व्यपवृक्तं च न विक्रीयते । अव्यपवृक्तं—गावः सर्षपाश्च विक्रीयन्ते ।**

**तथा "लोमनखं स्पृष्ट्वा शौचं कर्तव्यम्" व्यपवृक्तं स्पृष्ट्वा नियोगतः शौचं कर्तव्यम्, अव्यपवृक्ते कामचारः ॥**

( प्रदीपः ) **अव्यपवृक्तमिति** । व्यपवर्गस्याभावेनेत्यर्थः ॥

( उद्योतः ) **अव्यपवृक्तमिति** । अर्थाभावेऽव्ययीभावः ॥ तदाह—**व्यपवर्गस्येति** । वस्तुतस्तत्पुरुष एवायं, व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः । नञाऽव्ययीभावस्याभावादित्यग्रे वक्ष्यते ॥ भाष्ये—**कामचार इति** । स्पर्शे कामचारः, तेन शौचाभाव इत्यर्थः ॥

( आक्षेपभाष्यम् )

**यत्र तर्हि व्यपवर्गोऽस्ति ॥**

**क च व्यपवर्गोऽस्ति ?**

**सन्ध्यक्षरेषु ॥**

( प्रदीपः ) **यत्र तर्हीति** । 'ऐ-औ' इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति ॥

( उद्योतः ) एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पष्टत्वात्सन्ध्यक्षरग्रहणमैजभिप्रायमित्याह—**ऐ औ इति** ॥

( समाधानभाष्यम् )

***सन्ध्यक्षरेषु विवृतत्वात्***

**यदत्रावर्णं विवृततरं तदन्यस्मादवर्णात् । ये अपीवर्णोवर्णे विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम् ॥**

( प्रदीपः ) **विवृतत्वादिति** । अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितः, तदाह—'**विवृततरं**' इति । तत्र प्रयत्नभेदादसावर्ण्यादकारेण संध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः । तदेवमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणम् । संध्यक्षरस्थस्य त्वसावर्ण्यात् । ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद्गृह्यत इति नुडादिसिद्धिः ॥

( उद्योतः ) **अकारस्येति** । यद्यप्यैचो विवृततमास्तथापि विवृततरत्वमस्त्येवेति भावः ॥ प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याभावः । एङो विवृततरत्वात् ऐचां विवृततमत्वादिति बोध्यम् ॥ **नुडादीति** । 'आनृजे' इत्यत्र नुट् । आदिना 'चक्लृपे' इत्यत्र लत्वम्, 'मातॄणां' इत्यादौ णत्वं चेति बोध्यम् ॥

( अग्रहणपक्षाभ्युपगमभाष्यम् )

**अथवा पुनर्न गृह्यन्ते ।**

( प्रदीपः ) **अथवेति** । नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्तत्त्वासिद्ध्या पृथगुपलब्धानां वर्णानां समुदाये नास्ति सत्त्वम् । समुदायवाचोयुक्तिरपि तत्र वर्णान्तरे न तात्त्विकी, भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता ॥

---

१ 'अर्धचतुर्थहस्तावेदिरिति भावः' इति क. पाठः । 'चतुर्हस्ता हि वेदिः' इति ख. पाठः ॥

२ ननु '**असंभवश्चाग्नौ**' इत्येव वाच्ये '**वेद्याम्**' इत्यधिकं भाष्ये, अथ तत्रापि प्रक्षेपे न बाधकमित्याशयेन तदुक्तिरिति ब्रूषे, तर्हि तद्बहिर्भूतदेशे प्रक्षेपेऽपि न बाधकमित्यसंभव एवायुक्तोऽतो हेत्वन्तरमाह—**समिध इति** ॥ छाया ॥

३ एकदेशी प्राग्वदसंभवाभावेन संभवसंभावनया दृष्टान्तान्तरं तज्जातीयमाह—**यथा तर्हीति** ॥ छाया ॥

४ सिद्धान्ती आह—**यथा तर्हीति** ॥ छाया ॥

५ 'मांसं न वि' इति क्वचित्पाठः ।

६ 'कर्तव्यमिति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम्' इति क. ख. प. पाठः ॥

७ एतद्वार्तिकमिति केचिद्वदन्ति । सम्पुटीकरणाभावान्नैतद्वार्तिकमिति प्रतीयते । प. पुस्तके 'विकृतत्वात्सन्ध्यक्षरेषु' इति पाठः ॥

८ अग्रहणपक्षेऽपि नुडादिवचनं विनैव सुसाधमित्याशयेनाह—**अथवेति** ॥ छाया ॥

९ अग्रहणपक्षोपपत्तिं भ्रान्तिवशादुपपादयति—**नरसिंहेति** । वस्तुतः सन्ध्यक्षराणि नरसिंहवद्भिन्नान्येव । सादृश्यात्सन्ध्यक्षरावयवेषु अकारादिप्रत्यभिज्ञानेऽपि **पृथगुपलब्धाः**—अकारादयः सन्ध्यक्षरे न सन्त्येव । सन्ध्यक्षराणां समुदायरूपत्वप्रसिद्धिरपि भ्रान्तिवशादेवेति ॥

**( उद्द्योतः ) सादृश्याच्चेति** । चस्त्वर्थे । **समुदाये**—सन्ध्यक्षरादौ ॥ सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षरावयवेषु अत्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेति भावः । ऐकारादीनामेकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव, अकारादिवत् । अत एवैषां पदवन्न वर्णसमूहत्वेन प्रतिभास इति, तदेवाह—**समुदायवाच इति** ॥ **भ्रान्तिवशादिति** । भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः । एवं च भ्रान्तिरेव ग्रहणपक्षबीजमिति भावः ॥ अत एव गोनौग्रहणं चरितार्थम् ॥

( ४६ अग्रहणपक्षदूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् ॥ * ॥

( भाष्यम् )

**अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारस्य ग्रहणं कर्तव्यम् । "तस्मान्नुड् द्विहलः" ऋकारे चेति वक्तव्यम्, इहापि यथा स्यात्—आनृधतुः, आनृधुरिति ।**

**यस्य पुनर्गृह्यन्ते 'द्विहलः' इत्येव तस्य सिद्धम् ॥**

**( उद्द्योतः )** [ वार्तिके ] **विनामः**=णत्वम् ॥

( अग्रहणपक्षदूषणोद्धारभाष्यम् )

**यस्यापि न गृह्यन्ते, तस्याप्येष न दोषः । द्विहल्ग्रहणं न करिष्यते । तस्मान्नुड् भवति—इत्येव ॥**

**यदि न क्रियते, आटतुः-आटुरित्यत्रापि प्राप्नोति ॥**

**अश्नोतिग्रहणं नियमार्थं भविष्यति—अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्य—इति ॥**

**( प्रदीपः ) अश्नोतेरेवेति** । सामान्येनावर्णोपधो निवर्त्यते, न त्वश्नातिरेव; सामान्यापेक्षत्वान्नियमज्ञापकस्य ॥

**( उद्द्योतः )** ननु विकरणविशेषनिर्देशेन श्नाविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह—**न त्वश्नातिरेवेति** । तथा हि सति 'नाश्नः' इत्येव वदेदिति भावः ॥ **नियमज्ञापकस्य**=नियमबोधकस्य ॥

( वार्तिकोक्तद्वितीयदूषणभाष्यम् )

**लादेशे च ऋकारग्रहणं कर्तव्यम् । "कृपो रो लः", ऋकारस्य चेति वक्तव्यम् । इहापि यथा स्यात्—क्लृप्तः-क्लृप्तवानिति । यस्य पुनर्गृह्यन्ते, 'रः' इत्येव तस्य सिद्धम् ॥**

( द्वितीयदूषणोद्धारभाष्यम् )

**यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऋकारोऽप्यत्र निर्दिश्यते ॥**

**कथम्?**

**अविभक्तिको निर्देशः—कृप-उः-रः लः="कृपो रो लः" इति ॥**

**अथवा उभयतः स्फोटमात्रं निर्दिश्यते-रश्रुतेर्लश्रुतिर्भवतीति ॥**

**( प्रदीपः ) अविभक्तिक इति** । तत्र ऋकारनिर्देशस्य सामर्थ्याद्विभागं परिकल्प्यादेशो विधीयते ॥

**स्फोटमात्रमिति** । जातिस्फोट इत्यर्थः ॥ ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यक्तिव्यङ्ग्यं सामान्यं स्थान्यादेशभावेनाश्रीयते ॥

**( उद्द्योतः )** नन्वखण्डवर्णपक्ष ऋकारप्रश्लेषेऽपि कथं सिध्यतीत्यत आह—**तत्र ऋकारेति** । एवं च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम् ॥ **मात्रशब्दः** सामान्याभिप्राय इत्याह—**जातीति** ॥ जातिश्चावयवानवयवसाधारणीत्याशयेनाह—**ततश्चेति** । एवंविधा च रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न । स्थान्यादेशभावश्च जातेर्व्यक्तिद्वारको बोध्यः । **वस्तुतः** स्फोट एव श्रोत्रग्राह्यः । वायुनिष्ठरत्वादिना च तस्याभिव्यक्तिः । एवं च साक्षाद्रत्ववतोऽभावेन 'कल्पते'इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः ॥ एवं च रेफावभासिनः स्फोटस्य प्रसङ्गे लकारावभासः स्फोट इत्यर्थः ॥ एवं च कृपावपि तत्प्रवृत्तिः संभवत्येव, तत्रापि रेफावभाससत्त्वात् । आकारादौ तु नैवं ह्रस्वाद्यवभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः । तदुक्तम्—**रश्रुतेरित्यादि** । यत्तु स्वतन्त्रास्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानम् । तन्न । तादृशजातौ मानाभावात् ।

---

१ सत्त्वमित्यन्तकैयटाशयमाह—**सत्यपीति** । सभागत्वेन प्रतीतावप्यकारादिवदेकत्वमेव तेषाम् । भागधीस्तु सदृशभागनिबन्धना, एकवर्णत्वेऽपि क्रमोपलब्धिरपि भागानामेव । वकारवत्त्वेऽपि स्थानभेद उपपन्नः । पाणिन्यादेर्वचांसि "**तस्यादितः**" इत्यादीनि सदृशभागनिबन्धनान्येव । अतः प्रत्यभिज्ञानादेरन्यथापि सिद्धत्वादबाधितान्यथानुपपन्ना चैकत्वबुद्धिरेकवर्णत्वे मानमिति भावः ॥ छाया ॥

२ युक्त्यन्तरमाह—**ऐकारेति** । एवं च 'सभागत्वेन प्रतीतास्त एकवर्णाः, एकेच्छापूर्वकैकप्रयत्नजन्यत्वात् अकारादिवत्' इत्यनुमानप्रयोगो बोध्यः । न हि कश्चिदैकाराद्युच्चारयन्प्रयत्नस्य तत्कारणभूताया वा इच्छाया भिन्नत्वमुपैतीति भावः ॥ छाया ॥

३ **कृप उरिति** । कृपेर्ऋकारावयवो यो रेफस्तस्य लादेश इत्यर्थः । अस्मिन्पक्षे सामर्थ्यकल्पनादिदोषमाशङ्क्य प्रकारान्तरमाह—**अथवेति** । उभयतः—स्थान्यादेशाभ्यां । 'क्लृप्तः' इत्याद्यर्थञ्च 'उभयतः स्फोटमात्रं' इत्युच्यते ।

४ प. पुस्तके 'भवति' इत्येवेतिशब्दरहितः पाठः ॥

५ **तत्र**—कृपो रो ल इति सूत्रे । ऋकारे विभागकल्पनाभावे ऋकारनिर्देशस्य वैयर्थ्यादाह—**सामर्थ्यादिति** ॥ 'निर्देशसामर्थ्यात्' इति ख. पाठः ॥

६ 'प्रकल्प्य' इति ख. पाठः ॥

७ **अखण्डवर्णपक्षे**—वर्णैकदेशा वर्णग्रहणेन न गृह्यन्त इति पक्षे ॥

८ **आरोपितरेफत्ववान्**—ऋकारावयवत्वेनावभासितो रेफः ॥

९ **तस्य**—रेफव्यक्तेः । अकारादिव्यक्तिः श्रोत्रेण गृह्यते, व्यक्त्या च स्फोटो व्यज्यते । अत एव 'रेफलकारव्यक्तिव्यङ्ग्यं' इति कैयटेनोक्तम् । उद्द्योतमते च–श्रोत्रग्राह्यः स्फोट एव न वर्णव्यक्तिः, अत्वादिकं तु वायुसंयोगनिष्ठं तेन चाकारादिव्यक्तिर्व्यज्यते । एवञ्च रत्ववान् रेफः स्फुटं नैवास्तीति 'कृपो रो लः' इति सूत्रं रेफाभावात् न संप्रवर्ततेति व्यर्थमेव स्यात् । सूत्रसामर्थ्याल्लब्धमर्थमाह—**एवञ्च रेफेति** ॥

नरासिंहदृष्टान्तानुपपत्तेश्च । सादृश्यात्तु प्रत्यभिज्ञेत्यादिस्वोक्तिविरोधापत्तेश्च । किंचैवं सति 'रजातेः' इत्येव भगवान्वदेत् ॥ किञ्च तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्धा ग्रहणपक्षमुक्त्वा 'अथ वा न गृह्यन्ते' इति पक्षे तत्समाधानपरभाष्यासङ्गतेः । अत एवाष्टमे 'रषाभ्याम्-'इति सूत्रे-यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभावः, एवं वर्णवर्णैकदेशयोरपि-इति कैयट आह-इति वदन्ति ॥

( वार्तिकोक्ततृतीयदूषणभाष्यम् )

**विनामे ऋकारग्रहणं कर्तव्यम् । "रषाभ्यां नो णः समानपदे", ऋकाराच्चेति वक्तव्यम् । इहापि यथा स्यात्—मातृणां-पितृणामिति ॥ यस्य पुनर्गृह्यन्ते 'रषाभ्याम्' इत्येव तस्य सिद्धम् ॥**

( अग्रहणवादिभाष्यम् )

**न सिध्यति । यत्तद्रेफात्परं भक्तेः, तेन व्यवहितत्वान्न प्राप्नोति ॥**

( प्रदीपः ) **यत्तदिति** । रेफात्-भक्तेः-इति समानाधिकरणे पञ्चम्यौ ॥

( ग्रहणवादिभाष्यम् )

**माँ भूदेवम् । अड्व्यवाय इत्येव सिद्धम् ॥**

( प्रदीपः ) **अड्व्यवाय इति** । ऋकारेण यथा दीर्घो गृह्यते, एवमृकारभागोऽपीति भावः ॥

( उद्द्योतः ) **ऋकारेणेति** । ऋकारावयवस्य रेफस्येव तदज्भागस्यापि केनचिदकारादिना ग्रहणादट्त्वमिति मन्यते ॥

( अग्रहणवादिभाष्यम् )

**न सिध्यति । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते ये व्यपवृक्ता अपि वर्णा भवन्ति ।**

**यच्चापि रेफात्परं भक्तेः, न तत्कचिदपि व्यपवृक्तं दृश्यते ॥**

( प्रदीपः ) **न सिध्यतीति** । तस्य भागस्य स्फुटप्रतिभासाविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाभावाच्चेति भावः ॥

( उद्द्योतः ) **जात्यभिव्यक्तीति** । अत्वादिजातीत्यर्थः ॥ एवं च न केनाप्यचा तद्ग्रहणमिति भावः । अत्र जात्यभिव्यक्तिहेतुत्वाभावे स्फुटप्रतिभासाविषयत्वं हेतुः । चः—हेतौ । अतो न सिध्यतीत्यर्थः ॥

( ग्रहणवादिभाष्यम् )

**एवं तर्हि योगविभागः करिष्यते—"रषाभ्यां नो णः समानपदे", ततः—"व्यवाये" व्यवाये च रषाभ्यां नो णो भवतीति । ततः—"अट्कुप्वाङ्नुम्भिः" इति ।**

**इदमिदानीं किमर्थम् ?**

**नियमार्थम्—'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्यैः' इति ॥**

( प्रदीपः ) **एतैरेवेति** । आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः । भक्तिस्तु न प्रत्याय्या न च प्रत्यायिका-इति नियमेन न निवर्त्यते ॥

( उद्द्योतः ) नन्वाकारादिभिर्व्यवायेऽपि न स्यात्, आक्षरसमाम्नायिकत्वाभावादत आह—**आकारादयोऽपीति** ॥ **भक्तिस्त्विति** । असवर्णत्वादनुपदेशाच्चेति भावः ।

( अग्रहणवादिभाष्यम् )

**यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यृकारान्नो णत्वमिति । यदयं क्षुभ्नादिषु नृनमनशब्दं पठति ॥**

( उद्द्योतः ) भाष्ये—**नृनमनशब्दमिति** । संज्ञाभूतमित्यभिप्रायः । गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि णत्ववारणाय 'अखण्डपदे' इत्यर्थक'समानपदे' इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन सखण्डत्वेऽसंज्ञायां णत्वप्राप्त्यभावादिति बोध्यम् । 'छन्दस्यृत्' इत्यस्य तु नात्र प्राप्तिः । ईदृशे विषयेऽवग्रहाभावादित्याहुः ॥

( ग्रहणवादिभाष्यम् )

**नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात्—नार्नमनिः ॥**

( अग्रहणवादिभाष्यम् )

**यत्तर्हि तृप्नोतिशब्दं पठति ॥**

( एकदेशिभाष्यम् )

**यच्चापि नृनमनशब्दं पठति ॥**

( बाधकस्मारणभाष्यम् )

**ननु चोक्तम्—वृद्ध्यर्थमेतत्स्यात् ॥**

( समाधानभाष्यम् )

**बहिरङ्गा वृद्धिः, अन्तरङ्गं णत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥**

---

१ **तादृशजातिसत्त्वे**—स्वतन्त्रास्वतन्त्रसाधारणजातिसत्त्वे । स्वतन्त्रा रत्वजाती रेफे, अस्वतन्त्रा ऋकारे ।

२ **विनाम इति** । णत्वविधिसूत्रे ऋकारग्रहणं कर्तव्यम् । तत्प्रकारमाह—**रषाभ्यामिति** । यस्य वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते तन्मते ऋकारग्रहणं न कर्तव्यमिति लाघवम् ॥

३ **यत्तद्रेफादिति** । यत्तत्–प्रसिद्धं रेफभक्तेः परमित्यन्वयः । भक्तिः–भागः । ऋकारगतस्य रभागस्य रेफवत्स्पष्टमनुपलम्भात् तत्परिचयार्थं भक्तेरित्युच्यते । तेन रेफाद्भक्तेरित्यस्य रेफसदृशो यो भागो ऋकारे वर्तते तस्मात्परेणाज्भागेन व्यवहितत्वान्न प्राप्नोतीत्यर्थः ॥

४ 'माभूदेवं' इत्यस्य प. पुस्तके पाठो न ॥

५ **भक्तिस्त्विति** । रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यावित्युक्त्वा 'भक्तिस्तु न प्रत्याय्या' इति कथनमयुक्तम् । रेफभक्तेः परेण व्यवधानात् भक्तेः परं न प्रत्याय्यं नच प्रत्यायिकमिति वक्तुं युक्तम् ॥

६ **सखण्डत्वेऽसंज्ञायामिति** । गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि सखण्डत्वेन समानपदत्वाभावाण्णत्वं यथा न भवति तथा नृनमनशब्देऽपि 'अट्कुप्वाङ्–' इत्यनेनासंज्ञायां णत्वं न स्यात् । 'पूर्वपदात्संज्ञायामगः' इत्यनेन तु संज्ञायां प्राप्तिरिति भावः ॥

**अथवा-उपरिष्टाद्योगविभागः करिष्यते-"ऋतः" नो णो भवति। ततः—"छन्दस्यवग्रहात्" (८।४।२६) ऋत इत्येव ॥**

( उद्योतः ) **बहिरङ्गा वृद्धिरिति** । त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्तत इति वार्तिकमतेनैतत् । भाष्यमते तु तृम्नोतिशब्दपाठस्यैव ज्ञापकता बोध्या ॥ **ऋतो नो ण इति** । मातॄणामित्यादौ दीर्घस्य बहिरङ्गासिद्धत्वाण्णत्वम् । यद्वा 'प्रशास्तॄणां' इति निर्देशादत्र तपरत्वं मुखसुखार्थमेव । उत्तरत्राऽप्येवमेव, फलाभावात् । ध्वनितं चेदं वृत्तौ ॥

( आक्षेपभाष्यम् )

***प्लुतावैच इदुतौ* ( ८।२।१०६ )**

**[1]एतच्च वक्तव्यम् । यस्य पुनर्गृह्यन्ते गुरोष्टेः-इत्येव प्लुत्या तस्य सिद्धम् ॥**

( प्रदीपः ) **गुरोष्टेरिति** । ऐकारो गुरुः, तस्य टेरिति सिद्धम् । तत्रान्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति—दे३त्तदत्तेति ॥

( उद्योतः ) ननु गुर्ववयवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो न स्यादत आह—**तत्रेति** । स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्ववयवटिश्चैच एव संभवति, नान्यस्य–आकारादेः, तदवयवस्य व्यपवृक्तत्वाभावादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**[4]यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियत एतन्न्यास [5]एव ॥**

( प्रदीपः ) **क्रियते न्यास एवेति** । [6]अवश्यकर्तव्यतां दर्शयति । व्यपवृक्तेऽपि भागयोर्विवृततरत्वात् प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाभावात् ॥

( उद्योतः ) **अच्त्वाभावादिति** । तन्मूलटित्वाभावाच्चेत्यपि बोध्यम् ॥

( ४७ आक्षेपवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ [7]तुल्यरूपे संयोगे द्विव्यञ्जनविधिः ॥ * ॥**

( भाष्यम् )

**तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सि[8]ध्यति-कु३क्कुटः, पि३प्पलः[9], पि३त्तमिति ॥ यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ ॥**

( प्रदीपः ) **तुल्यरूप इति** । तुल्यरूपावयवत्वात्संयोगस्तुल्यरूपः । तस्यैकवर्णत्वं पूर्वपक्षे, सिद्धान्ते तु वर्णद्वयरूपता । आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः ॥

( उद्योतः ) **संयोग इति** । संयोगसंज्ञार्हे[10] इत्यर्थः ॥ **तस्यैकवर्णत्वमिति** । एवं च संयोगसंज्ञा न स्यादिति भावः ॥ **'संयोगे'** इति भाष्यं तु संयोगार्हे इत्यर्थपरमिति तात्पर्यम् ॥ **शिष्टसमाचारः**= शिष्टव्यवहारः ॥

( आक्षेपबाधकभाष्यम् )

**यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ ॥**

**कथम् ?**

**मात्राकालोऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् ॥**

( उद्योतः ) भाष्ये—**मात्राकालोऽत्रेति** । बहुव्रीहिः, संयोगोऽन्यपदार्थः ॥ मात्रिकव्यञ्जनाभावेऽनुपदिष्टत्वं हेतुः । कुक्कुट इत्याद्युच्चारणं तु न उपदेशः ॥ **अनुपदिष्टत्वं** नाम अक्षरसमाम्नायेऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वं च ॥ **अनुपदिष्टं** सत्=सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः । एवं चानुपदिष्टस्यासत्त्वात् तत्प्रतिपत्तिरशक्येत्याह—**असच्चेति** । क्वचित्तु 'असच-' इत्यादिग्रन्थो न दृश्यते ॥ [11]अनेन लकारापाठे तस्यासत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम् ॥

---

१ वस्तुतस्तु-अयं पक्षो गुरुभूतत्वादयुक्तः, निर्देशस्य सौत्रत्वेनोपपत्ताविष्टासिद्धिश्चेति प्रथमपक्ष एव युक्त इति बोध्यम् ॥ छाया ॥

२ 'ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लुतौ भवतः' इत्यर्थकमैचां चतुर्मात्रत्वसाधकमिदं सूत्रं कर्तव्यमेवेति गौरवमग्रहणपक्षे । ग्रहणपक्षे तु गुरोरैचोऽवयवभूतस्य टेरिकारस्योकारस्य वा प्लुतिः **'गुरोरनृतः'** इत्यनेनैव सिद्धेति लाघवम्–इति भावः ॥ छाया ॥

३ **तस्य टेः**–ऐकारान्त्यावयवस्येत्यर्थः । वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे ऐकारान्त्यावयवस्य 'गुरोरनृतः–' इति सूत्रेणैव गुरोष्टेरिति प्लुतः सिद्ध इत्यर्थः ॥

४ 'यस्य न गृह्य' इति प. पाठः ॥

५ भाष्य एवशब्दो व्युत्क्रमे । एतत्सूत्रपाठे क्रियत एवेत्यर्थः ॥ अस्य यत इत्यादिः ॥ ( दा. म. )

६ एवकारसूचितमाह—**अवश्येति** ॥ छाया ॥ **अवश्यकर्तव्यतां**—'प्लुतावैच इदुतौ' इत्यस्य । एओङ्सूत्रे 'संध्यक्षरेषु विवृततरत्वात्' इति वार्तिके इकारोकारभागयोर्विवृततरत्वमुक्तं भाष्ये ॥

७ दूषणान्तरमाह—**तुल्यरूप इति** ॥ छाया ॥

८ यद्यपि प्रक्रमानुरोधेन वक्तव्य इत्येव शेषपूरणं भाष्य उचितम्, तथापि वक्तव्यत्वस्यासिद्धिप्रयुक्तत्वादावश्यकशेषपूरणत्वाविशेषात् प्रागुपस्थितासिद्धिरेव तन्मूलभूता वक्तुमुचितेत्याशयेनाह—**न सिध्यतीति** ॥ छाया ॥ द्विव्यञ्जनाश्रय इत्यत्र पात्रादित्वात्स्त्रीत्वं न । कु३क्कुट इत्यादिलक्ष्येषु प्लुतप्रदर्शनं संयोगे परे गुरुसंज्ञाबोधनार्थम् ॥

९ 'पिप्पलिका' इति क. पाठः । 'पिप्पली' इति छ. पाठः । छ. पुस्तके 'कु२क्कुटः' इति द्व्यङ्कयुक्तः पाठो निर्मूलः ॥

१० **संज्ञार्ह इति** । एवं च तुल्यरूपावयवके संयोगसंज्ञार्हे वर्णे द्विव्यञ्जनविधिर्हल्द्वयाश्रितविधिः संयोगसंज्ञा वक्तव्या स्यादग्रहणपक्षे इति गौरवमिति वार्तिकार्थः ॥ छाया ॥

११ **अनेन**–अनुपदिष्टं सदित्यादिभाष्येण 'ऋलृक्' सूत्रस्थलृकारग्रहणप्रयोजनं सूचितमिति भावः ॥

( आक्षेपसाधकभाष्यम् )

**यद्यपि[1] तावदत्रैतच्छक्यते वक्तुं–यत्रैतन्नास्ति 'अण् सवर्णान् गृह्णाति' इति ॥ इह तु कथम्–सर्य्यँन्तासव्ँवत्सरः, यल्ँलोकम्, तल्ँलोकमिति यत्रैतदस्ति 'अण् सवर्णान् गृह्णाति' इति ?**

( उद्द्योतः ) **यत्रैतदस्तीति**-भाष्ये । 'हलोऽनन्तराः-' इत्यत्र यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इति भावः ॥

( आक्षेपबाधकभाष्यम् )

**अत्रापि[2] मात्राकालो गृह्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम्[3] ॥ ४ ॥**

( प्रदीपः ) **अत्रापीति** । सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः ॥

( उद्द्योतः ) **सानुनासिकेति** । अणुदिच्छास्त्रं हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव, न त्वप्रसिद्धसवर्णकल्पकमिति भावः ॥

---

( शिवसूत्रम् )

## ॥ हयवरट् ॥ ५ ॥

( अथ हकाराधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**सर्वे[4] वर्णाः सकृदुपदिष्टाः, अयं हकारो द्विरुपदिश्यते—पूर्वश्चैव परश्च । यदि पुनः पूर्व एवोपदिश्येत, पर एव वा । कश्चात्र विशेषः ?**

( प्रदीपः ) **हयवरट् ॥ पूर्वश्चेति** । पूर्वपरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वपरव्यपदेशः ॥

( उद्द्योतः ) **हयवरट्** ॥ ननु **'अयं हकारः'** इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं **'पूर्वश्च'**इत्यादिना भेदाश्रयणमत आह—**पूर्वपरेति** । एतद्भाष्यात् **'एकत्वं वर्णानाम्'** इत्येवं पक्षो भगवतः संमत इति ज्ञायते ॥ भाष्ये—**यदि पुनरिति** । न चैवं परहकाराभावे लकारस्याप्यभावेन तत्राद्याश्रयणेन **'हलन्त्यम्'** इत्यत्रान्योन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम् । **'रन्त्यं[5] हर्'**इति न्यासेन **'लन्त्यं यल्'**इति न्यासेन वा तत्परिहाराल्लाघवाभावेऽपि–एवं कर्तुं शक्यं न वा–इत्येव विचारतात्पर्यात् । यद्वा[6] **'हरन्त्यम्'** इत्यस्यैवावृत्त्या हर्बोधकसूत्रसमुदायान्त्यमिदित्यर्थः ॥

**परे तु** परहकाराभावेऽपि "ल" इत्येव सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिद्ध्यर्थम् । तदर्थं रान्तस्यापि शक्तिकल्पने गौरवात् । **'हलन्त्यम्'** इत्यस्यावृत्त्या 'हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमित्' इत्यप्यर्थ इत्यदोष इत्याहुः ॥

( ४८ पूर्वत्रानुपदेशे दूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ हकारस्य परोपदेशेऽड्ग्रहणेषु[7] हग्रहणम् ॥ * ॥

( भाष्यम् )

**हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणं कर्तव्यम् । "आतोऽटि नित्यम्" "शश्छोऽटि" "दीर्घादटि समानपादे", हकारे चेति वक्तव्यम् । इहापि यथा स्यात्—महाँ[8] हि सः ॥**

( प्रदीपः ) **शश्छोऽटीति** । हकारपरस्य शकारस्याभावात् प्रसङ्गोच्चारितमेतत् ॥

( उद्द्योतः ) **अड्ग्रहणेष्विति** । अट् गृह्यते येषु सूत्रेष्वित्यर्थः ॥ **'शश्छोऽटि'**इत्यस्योदाहरणादाने बीजमाह—**हकारपरस्येति** । न च 'तत् श् ह्-इत्याह' इत्युदाहरणसंभवः । शास्त्रबोधितं सौत्रं च विहाय हलामुच्चारणार्थाचं विनोच्चारणस्यासाधुत्वेन तादृशोदाहरणाभाव इत्याशयात् । अत्र च भाष्ये एतदुदाहरणादानमेव मानम् । **'आतोऽटि'** **'दीर्घादटि-'** इत्युभयोरुदाहरणं—**'महाँ हि सः'** इति । **'अट्कुपु–'** इति सूत्रेऽपि ग्रहणफलं 'अर्हेण' इति बोध्यम् ॥

( ४९ पूर्वत्रानुपदेशे दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ उत्त्वे च ॥ * ॥

( भाष्यम् )

**उत्त्वे च हकारग्रहणं कर्तव्यम् । "अतो रोरप्लुतादप्लुते" "हशि च" हकारे चेति वक्तव्यम् । इहापि यथा स्यात्—पुरुषो हसति, ब्राह्मणो हसतीति ॥**

( प्रदीपः ) अरुत्वमपि न प्राप्नोतीति वक्तव्यं 'भो हसति' इति रोर्यत्वार्थम् ॥

( उद्द्योतः ) **अरुत्वमपीति** । इदंमिण्त्वस्याप्युपलक्षणम् ।

---

१ उक्तदोषपरिहारेऽप्यन्यत्र दोष एवेत्याह—**यद्यपीति** ॥ तथा चैक एव हल् यद्वयादिरिति संयोगसंज्ञाया अभावेन ततः पूर्वस्य प्लुतो न स्यादिति भावः ॥ छाया ॥

२ उक्तमेव परिहारमत्रातिदिशति—**अत्रापीति** ॥ छाया ॥ 'तत्रापि' इति प. पाठः ॥ **अत्रापि**–अणुदित्सूत्रेण सवर्णग्रहणस्थलेऽपि ॥

३ 'तुम् । असच्च कथं शक्यं प्रतिपत्तुम्' इति क. च. ट. पाठः ॥

४ एवेन अइउण्सूत्राद्युक्ततदन्यपक्षव्यावृत्तिः ॥ **'अयं हकारो द्विरुपदिश्यते'** इत्यत्रायमिति प्रत्यभिज्ञया नानात्वपक्षानङ्गीकारसूचनादिति भावः ॥ छाया ॥

५ परहकाराभावे 'रन्त्यं हर्' इति न्यासेन पूर्वहकाराभावे 'लन्त्यं यल्' इति न्यासेन वेति भावः । यत्तु राजलक्ष्मीकारेण 'लन्त्यं हल्' इति न्यासो दर्शितः सोऽनवधानात् ॥

६ उभयाभावे लाघवादाह—**यद्वेति** ॥ छाया ॥

७ 'षु ग्रहणं' इत्येव प. पुस्तके पाठः ॥

८ **महाँ हि स इति । 'दीर्घादटि समानपादे'** इति नकारस्य रुत्वे **'आतोऽटि नित्यम्'** इत्यनुनासिकत्वे **'भोभगो'**-इति यत्वे **'हलि सर्वेषाम्'** इति यलोपः । यद्यपि तत्राश्ग्रहणं कृतमिति तत्राप्येतदेव फलं सुवचम्, तथापि भगवता तस्य खण्डितत्वात्तन्नोक्तमत्रेति बोध्यम् ॥ छाया ॥

९ इदमुभयं सूत्ररीत्या न भाष्यरीत्येति यथाश्रुतमेव भाष्यं सम्यगिति प्रदर्शितं **भावप्रकाशे** । तद्धूनयन्नाह—**केचिदिति** ॥ छाया ॥

तेन लिलिहिढ्वे-इत्यादौ 'विभाषेटः' इति ढत्वविकल्पसिद्धिरिति केचित् ॥ भाष्ये 'हशि च' इति सिद्धान्तरीत्या निर्देशः । इदानीं तु 'यशि च'इति सूत्रम् ॥

( पूर्वोपदेशाङ्गीकारभाष्यम् )

**अस्तु तर्हि पूर्वोपदेशः ।**

( परत्रानुपदेशे दूषणभाष्यवार्तिकम् )

***पूर्वोपदेशे[1] कित्वक्सेड्विधयो[2] झल्ग्रहणानि च***

( भाष्यम् )

**यदि पूर्वोपदेशः कित्त्वं विधेयम्—स्निहित्वा-स्नेहित्वा, सिस्निहिषति-सिस्नेहिषति, "रलोऽव्युपधाद्धलादेः-" इति कित्त्वं न प्राप्नोति[3] ॥**

**क्सविधिः । क्सश्च विधेयः—अधुक्षत्, अलिक्षत्, "शल इगुपधादनिटः क्सः" इति क्सो न प्राप्नोति ॥**

**इड्विधिः । इट् च विधेयः—रुदिहि, स्वपिहि, वलादिलक्षण इण्न प्राप्नोति ॥**

**'झल्ग्रहणानि च' ।**

**किम् ?**

**अहकाराणि स्युः ॥**

**तत्र को दोषः ?**

**"झलो झलि" इतीह न स्यात्-अदाग्धाम्, अदाग्धम् ।**

**तस्मात्[4]पूर्वश्चैवोपदेष्टव्यः परश्च ॥**

**( उद्योतः ) अहकाराणि स्युरिति ।** अतस्तत्र[5] हकारग्रहणं कर्तव्यमिति भावः ॥ **अदाग्धामिति ।** घत्वस्यासिद्धत्वादिति भावः ॥

( उपसंहारभाष्यम् )

**यदि[6] किंचिदन्यत्राप्युपदेशे प्रयोजनमस्ति, तत्राप्युपदेशः कर्तव्यः ॥**

**( प्रदीपः ) यदि किंचिदिति ।** प्रयोजनार्थो हि वर्णानामुपदेशो न स्वरूपप्रतिपत्त्यर्थः ॥

**( उद्योतः )** स्वरूपप्रतिपत्त्यर्थ एवायमक्षरसमाम्नाय इति भ्रमं वारयति—भाष्ये-**यदि किंचिदिति** ॥ तद्याचष्टे—**प्रयोजनार्थ इति** । शास्त्रीयप्रयोजनार्थ इत्यर्थः । एवं चाद्यहकारस्याशिणोरपि प्रयोजनं सूचितम् । अत एव **मञ्चा हसन्तीति 'पुंयोगात्'** इति सूत्रे भाष्यप्रयोगः सङ्गच्छते । एतेन पूर्वहकारोपदेशप्रयोजनवार्तिके न्यूनता परिहृता ॥ **'कर्तव्यः'** इत्यस्य स्यात् इति शेषः । **उपदेशः**-अत्रोच्चारणमात्रम् ॥ **अन्यत्रापि**=प्रत्याहारान्तरे । सर्वथा हकारस्य द्वेधोपदेशः कर्तव्य इत्यत्रास्य तात्पर्यम् ॥

( इति हकाराधिकरणम् )

---

( अथ रेफाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**इदं विचार्यते—अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत-'हरयवट्' इति, पर एव वा यथान्यासमिति । कश्चात्र विशेषः ?**

**( प्रदीपः ) इदमिति ।** उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः ॥

**( उद्योतः ) दोषप्रयोजनेति ।** अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम् ॥

**( ५० यथान्यासोपदेशे दूषणवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः ॥**

---

१ एतद्भाष्यवार्तिकम् । अन्यूनाक्षरकुण्डलनाभावात् । 'हकारस्य परोपदेशे' इति वार्तिके प्रथमतः परोपदेशस्यैव करणीयत्वमाश्रित्य व्याख्यानात् । यदि 'पूर्वोपदेशे' इत्याद्यपि कात्यायनवार्तिकं स्यात्तर्हि पूर्वमेव तदुच्चारयेत् । अतोऽपि नैतत्कात्यायनवार्तिकम् । एवमेव रेफाधिकरणेऽपि 'पूर्वोपदेशे कित्त्वप्रतिषेध' इत्यादि भाष्यवार्तिकमेवेति प्रतीयते ॥

२ विधिशब्दे कर्मणि किः । कित्त्वेतीतरेतरयोगद्वन्द्वः । पृथक्पदम् ॥ आर्षमेकवचनम् । क्रमस्य बोध्यत्वात् पूर्वनिपातस्तस्य । एते विधेया इत्यर्थः । छाया ॥

३ **प्राप्नोतीति ।** अतोऽत्र 'हाच्च' इति वाच्यमिति भावः । एवमग्रेऽपि ॥ छाया ॥

४ उपसंहरति—**तस्मादिति ।** तदेवमुभयत्र पूर्वोपदेशस्य, चतुर्षु परोपदेशस्य फलं दर्शितम् ॥ छाया ॥

५ इदं दिक्प्रदर्शनम्, मधुलिंहीत्यादौ नुम्सिद्धये **'नपुंसकस्य'** इत्यत्रापि तद्ग्रहणं बोध्यम् ॥ छाया ॥

६ 'यदि च किञ्चि' इति चशब्दघटितः क. च. छ. प. पाठः ॥

७ **स्यादितीति ।** संभावने लिङ् । तथा चान्यत्राप्येतदुपदेशफलं यदि पाणिन्युद्देश्यकमभविष्यत् तर्हि तदनुरोधेनान्त्यानुबन्धवत्तत्राप्युपादेक्ष्यत् । यतस्तु तथा न, अतः श्रुत्यनुरोधेनैवमेव कृतं तथा न कृतम् । तत्फलमपि पाणिन्युद्देश्यकं दर्शितम् । अत एवाशिणोः फलमाद्यहकारस्य न दर्शितमित्यर्थः ॥ छाया ॥

८ **अत्रास्येति ।** ग्रन्थस्येति शेषः । एवं चान्यवत् सकृदेवोपदेष्टव्य इति शङ्काया अनवसर एवेति भावः ॥ छाया ॥

९ विचरति नाना गच्छति यद्वस्तु तद्विचार्यते-नानात्वं नीयत इत्यर्थ सार्वधातुके ( ३।१।६७ ) सूत्रे कैयट आह ॥

अनुनासिकस्य—स्वर्नयति, प्रातर्नयति-इति । "यरोऽनुनासिकेऽनुनासिको वा" इत्यनुनासिकः प्राप्नोति ॥

द्विर्वचनस्य—मद्रह्लदः, भद्रह्लदः, यरः-इति द्विर्वचनं प्राप्नोति ।

परसवर्णस्य—कुण्डं रथेन, वनं रथेन, "अनुस्वारस्य ययि-" इति परसवर्णः प्राप्नोति ॥

( प्रदीपः ) **स्वर्नयतीति** । णकारोऽत्र प्राप्नोति । न ह्यत्र सवर्णग्रहणमस्ति ॥ **मद्रह्लद इति** । द्विर्वचने कृते तस्यासिद्धत्वात् 'रो रि' इति रेफलोपो नास्ति, '**हलो यमां**' इति लोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्गः ॥ **कुण्डं रथेनेति** । अनुनासिकेनैव परसवर्णेन भाव्यमिति नियमाभावाद्रेफः प्राप्नोति, तस्य चासिद्धत्वात् 'रो रि' इति रेफलोपो नास्ति ॥

( उद्योतः ) **णकारोऽत्रेति** । **स्थानेऽन्तरतम**त्वादिति भावः ॥ ननु रेफस्य सवर्णाभावात्कथमत्रानुनासिकोऽत आह—**न ह्यत्रेति** ॥ ननु द्वित्वेऽपि '**रो रि**' इति '**हलो यमां**' इति लोपान्न दोषोऽत आह—**द्विर्वचन इति** ॥

( यकारात्पूर्वपाठाभ्युपगमभाष्यम् )

अस्तु तर्हि पूर्वोपदेशः ।

( पूर्वोपदेशदूषणभाष्यवार्तिकम् )

***पूर्वोपदेशे किस्त्वप्रतिषेधो व्यलोपवचनं च***

( भाष्यम् )

यदि पूर्वोपदेशः किस्त्वं प्रतिषेध्यम् । देवित्वा, दिदेविषति । "रलोऽव्युपधात्-" इति किस्त्वं प्राप्नोति ॥

( दूषणनिराकरणभाष्यम् )

नैष दोषः । नैवं विज्ञायते—'रलो व्युपधात्' इति ॥

किं तर्हि ?

"रलः-अव्-व्युपधात्" इति ॥

किमिदम्—अव् व्युपधात्—इति ?

अवकारान्तात् व्युपधात्—अव्व्युपधादिति ॥

( उद्योतः ) भाष्ये—**अव्व्युपधादिति** । 'अव्' इति लुप्तपञ्चमीकम् ॥ ननु पूर्वोपदेशे '**इग्यणः**–' इत्यादौ यथासङ्ख्यनिर्वाहः कथमिति चेन्न । संज्ञाविधानसामर्थ्येन तत्र तद्भावितपक्षाश्रयणान्न दोषः ॥

( व्याख्याभाष्यम् )

'व्यलोपवचनं च' । व्योश्च लोपो वक्तव्यः । गौधेरः, पचेरन्, यजेरन् । 'जीवे रदानुक्'—जीरदानुः । वलीति लोपो न प्राप्नोति ॥

( दूषणनिराकरणभाष्यम् )

नैष दोषः । रेफोऽप्यत्र निर्दिश्यते—"लोपो व्योर्वलि" इति, रेफे च वलि चेति ॥

( यथान्यासाऽभ्युपगमभाष्यम् )

अथवा पुनरस्तु परोपदेशः ॥

( दोषस्मारणभाष्यम् )

ननु चोक्तम्—*रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः* इति ॥

( समाधानभाष्यम् )

अनुँनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः । रेफोष्मणां सवर्णा न सन्ति ॥

---

१ **प्रातर्नयतीति** । स्वर्नयतीत्यत्रानुनासिकस्य प्रतिषेधो वक्तव्यः । अत्रोदाहरणान्ते 'इति'शब्दः प्रयुज्यते, भद्र ह्रदः–वनं रथेनेत्यत्रेतिशब्दो न प्रयुज्यते । प्राचीनपुस्तकेष्वेतादृश एव पाठः । मुद्रितपुस्तकेषु इतिशब्दरहित एव पाठो दृश्यते । प्राचीनपुस्तकेषु परिदृश्यमान इतिशब्दः कथं सङ्गच्छेतेति चेत्; प्रातर्नयतीत्यत्र रेफस्य परोपदेशे दोष एवेति ज्ञापयितुं भाष्ये 'इति'शब्दः प्रयुज्यते । मद्रह्रदः कुण्डं रथेनेत्यादौ नेमौ रहौ कार्थिणौ रेफोष्मणां सवर्णा न सन्तीत्युक्त्यैव दोषो न । प्रातर्नयतीत्यत्र चोद्द्योतदर्शितदिशा सवर्णपदाकर्षणेनैव दोषो वारयितुं शक्य इति विशेषः । एवञ्च प्रत्युदाहरणोत्तरं यत्रेतिशब्दः प्रयुज्यते तत्रैव दोषाभिनिवेश इति भाष्याभिप्रायः ॥

२ **यर इति** । 'अचो रहाभ्यां द्वे' इत्यनेन ह्रद इति रेफस्य द्वित्वं प्राप्नोति ॥

३ **प्रसङ्ग इति** । न च—'एकस्यानेकस्य वा–' इति भाष्योक्तेर्नायं दोषः । वस्तुतो 'न विशेषः' इति न, किं त्वतिसूक्ष्मत्वात्स दुर्लक्ष्य इति तात्पर्यात् । अन्यथा लोपविध्यादेर्वैयर्थ्यमेव स्यात् ॥ छाया ॥

४ नन्वत्र पक्षे 'इको रणचि' 'इग्रणः—' इत्यादावनिष्टापत्तिर्यथासंख्यप्रवृत्तेः । न चैतदनुरोधेन अइउणित्यादावपि 'अऋइण् । उऌक् ।' इति व्युत्क्रमस्वीकारः । तथा सति ग्राहकसूत्रभिन्नस्थलेऽण्ग्रहणे सर्वत्र उग्रहणमिति वैपरीत्यापत्तेः । तथा सति तृढो वृढ इत्यत्र 'ढ्रलोपे—' इति दीर्घः स्यात्, शंभू राजत इत्यत्र न स्यात् । तथा ऋकारादेशानामुदात्तादीनां रपरत्वं स्यात्, **उदोष्ठ्ये**ति विहितोकारस्य न स्यात् । न चास्वरितत्वाद्यथासंख्यं नेति वाच्यम्, तावताऽन्तरतमपरिभाषायाः संप्रसारणसंज्ञाविधावप्रवृत्तेः स्फुटत्वात् । तस्मात्तत्र यथासंख्येनैव निर्वाहो वाच्यः सिद्धान्ते । स चानिष्टावहोऽत्रपक्षे इत्याशयेन शङ्कते—**ननु पूर्वोपेति** ॥ छाया ॥

५ **तद्भावीति** । वाक्यस्य संज्ञेति पक्षे—भाष्ये संप्रसारणस्येत्यादौ संप्रसारणशब्देन जातस्य ग्रहणमित्युक्ततया तदेकवाक्यतयाऽत्र पक्षे तेन तद्भावितस्य संज्ञेति सूचनात् । तेन द्युभ्यामित्यादावपि न दीर्घप्राप्तिरिति भावः ॥ छाया ॥

६ एवं पूर्वोपदेशसमर्थनेऽपि ( पाणिनीयन्यासपरिवर्तनेन ) मूल एव कुठाराघात इत्याह—**अथ वेति** ॥ छाया ॥

७ यद्यप्युद्देशक्रमेणैव परिहार उचितस्तथापि द्वयोरेकपरिहारनिवार्यत्वादाह—**अनुनासिकपरसवर्णेति** । **रेफोष्मेति** । यत इत्यादि ॥ छाया ॥

( प्रदीपः ) **रेफोष्मणामिति** । अनुनासिकपरसवर्णविधाने हि स्थानेऽन्तरतम इति परिभाषोपस्थानाद्दोषाभावः । न हि रेफस्य णकारोऽन्तरतमः, नाप्यनुस्वारस्य रेफः ॥

( उद्द्योतः ) भाष्ये-**रेफोष्मणामिति** । विजातीया इति शेषः । तेन सजातीयेषु सत्स्वपि न दोषः ॥ ननु माभूद्रेफस्य विजातीयः सवर्णः, तथाप्यनुनासिकविधौ सवर्णग्रहणाभावादनुनासिकः स्यादेवेत्यत आह—**अनुनासिकपरेति** ॥ **न हि रेफस्येति** । न च रेफस्य णकारः स्थानेनान्तरतमो भवत्येवेति वाच्यम् । '**स्थानेऽन्तरतमे**' इति सप्तम्यन्तपाठे स्थानप्रयत्नोभयान्तरतमे स्पर्शे 'चिन्मात्रम्' इत्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नादृशे रेफे न प्रवर्तते—इति भावात् ॥ **नापीति** । यद्यप्यन्तरतमानन्तरतमयोः प्राप्तावन्तरतम एवेति '**स्थानेऽन्तरतमः**' इत्यनेन नियमः, 'कुण्डं-रथेन' इत्यादौ चानन्तरतमस्यैव प्राप्तिरितीदमयुक्तम्; तथापि संभवदनुस्वारान्तरतमके 'अङ्कितः' इत्यादौ चरितार्थः परसवर्णविधी रेफे न प्रवर्तते—इति भावः । इदं जातिपक्षे इति केचित् ॥ वस्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्तते—इति वक्तुं शक्यम् । तद्वक्ष्यति '**इको यणचि**'इत्यत्र कैयटः—''द्रव्येऽपि पदार्थे उत्सर्गापवादभावः संदिग्धत्वाश्रयोऽस्त्येव'' इति ॥ केचित्तु '**स्थानेऽन्तरतमे**' इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनास्या युक्तेरसंभवदुक्तिकत्वम् । **किं** चैवं सति ऊष्मग्रहणं भाष्ये व्यर्थं स्यात् । तस्मादनुनासिकविधौ सवर्णपदापकर्षपरं भाष्यम् । **रेफोष्मणा**मित्यस्य चानुनासिकोऽनुस्वारान्तरतमश्च सवर्णो नास्तीत्यर्थः । अत एव महिष्मानित्यादौ सूत्ररीत्या स्थानप्रयत्नोभयान्तरतमऋकारसम्भवेऽपि नानुनासिकः, '**नाज्झलौ**' इति निषेधेन सवर्णत्वाभावादिति भाष्याशय इत्याहुः ॥

( द्विर्वचनांशसमाधानभाष्यम् )

**द्विर्वचनेऽपि-नेमौ रहौ कार्यिणौ द्विर्वचनस्य ॥ किं तर्हि ?**

**निमित्तमिमौ रहौ द्विर्वचनस्य । तद्यथा-'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टाम्' इति । नेदानीं तौ भुञ्जाते ॥**

( प्रदीपः ) **नेमौ रहाविति** । हकारवद्रेफोऽपि न कार्यीत्यर्थः । तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लोकव्यवहारादेव शब्दार्थसंबन्धपरिज्ञानवत्सामान्यविधेर्विशेषविधिर्बाधकः । प्रत्यक्षश्च विशेषविधिः, सामान्यविधिस्त्वनुमेयः—इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते । दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकां **तस्मादित्युत्तरस्या**देशापकान्न बाध्यते । लक्ष्यस्थित्यपेक्षणाद्वा बाध्यबाधकभावस्य । क्वचिदपेक्षा नास्ति, यथा—चिचीषतीति दीर्घत्वद्विर्वचनयोः ॥

( उद्द्योतः ) नन्वयत्नादप्रसक्तद्वित्वस्य हस्य ग्रहणमयुक्तमत आह—**हकारवदिति** ॥ ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः, प्रकृते तु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यिभावः किं न स्यात्; यथा—अवगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह—**तत्रेति** । लक्ष्यभेदेन कार्यित्वनिमित्तत्वसंभवेऽपीत्यर्थः ॥ सामान्यविशेषविध्योरेकवाक्यतायामित्यन्वयः ।

---

१ **स्यादेवेत्येति**। अनुनासिकेनैव परसवर्णेन भाव्यमित्यत्र नियामकाभावेन परसवर्णः सजातीयो रेफः स्यादेवेत्यपि बोध्यम् ॥ छाया ॥

२ ननु व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदेन तद्विषयकशास्त्रस्याचारितार्थ्यात्कथमिदमत आह—**इदमिति** । अयं भावः—पाणिन्यादिमते उभयोः पदार्थत्वेऽपि लक्ष्यानुरोधादन्यतरपक्षाश्रयणमिति जातिपक्षस्यात्राश्रयणे तस्य एकत्वाच्छास्त्रमपि सकृदेव समुदाये प्रवर्तते न प्रतिव्यक्त्यावृत्त्या ॥ न चैवं कथं समुदाये प्रवृत्तिः, जातेः स्थानित्वादिधर्मीणां व्यक्तिद्वारकत्वेन तत्र ते प्रवर्तमानास्तद्वतीपु व्यक्तिषु प्रवर्तन्त इति स्वीकारात् । न चैवमुक्तदोषतादवस्थ्यम्, सकृत्प्रवृत्तिरप्यन्तरतमपरिभाषासंस्कृतैवेति दोषलेशाभावादिति ॥ छाया ॥

३ **वस्तुत इति** । अयं भावः—तत्पक्षे प्रतिलक्ष्यं लक्षणभेदाङ्गीकारेऽपि तत्परिभाषैकवाक्यतया तादृशतद्विषयक एव लक्षणभेदो नतु सर्वव्यक्तिविषयक इति ॥ छाया ॥

४ प्रागुक्तं सर्वं दूषयति—**केचित्त्विति** ॥ भाष्यतत्त्वविद इत्यर्थः ॥ **प्रत्येति** । सुध्युपास्य इत्यादौ यणाद्यनापत्तेरिति भावः ॥ छाया ॥

५ **युक्तेरिति** । स्थानेन्तरतमपरिभाषोपस्थानाद्दोषाभावयुक्तेरित्यर्थः । भाष्यसिद्धान्तानुसारेण प्रथमान्तपाठे यतः षष्ठी तत्रेयं परिभाषोपतिष्ठेत । तथा च यरः प्राप्तेष्वादेशेषु सदृशतम आदेशोऽनुनासिकः स्यात्, स च रेफस्य णकार इति अनिष्टमापद्येत ॥

६ **ऊष्मग्रहणमिति** । ऊष्मणः षकारस्य सवर्णो ऋकारोऽस्तीति सवर्णा न सन्तीति कथनं न युज्येत ॥

७ **सवर्णपदेति** । अयं भावः—'अनुस्वारस्य—' इति सूत्रे 'पर' इति लुप्तषष्ठ्यन्तं पृथक् पदम् । सवर्ण इति च पृथक् पदम् । अत एव 'उदः स्थास्तम्भोः' इत्यत्र तदनुवृत्तिरिति ॥ छाया ॥ तथा च सवर्णोऽनुनासिको भवतीति सूत्रार्थः सम्पद्यत इति न दोषः ॥

८ **अत एव**-यरोऽनुनासिक इति सूत्रे सवर्णपदापकर्षणादेव ॥

९ मध्यमेऽपि समाधत्ते—**द्विर्वचनेऽपीति** । प्रतिषेधो न वक्तव्यः इत्यस्यानुषङ्गः ॥ **नेमाविति** । यत इत्यादिः । इदमा प्रत्यक्षं निमित्तत्वं प्रदर्श्यते ॥ **कार्यिणाविति** । साक्षादिति शेषः । तद्विषयत्वेन साक्षादनुपात्ताविलर्थः ॥ निमित्तत्वस्य तुल्यत्वादेकवचनम् ॥ छाया ॥

१० 'परिवेविषाताम्' इति मुद्रितपाठः । जौहोत्यादिकस्य 'विष्लृ व्याप्तौ' इत्यस्य स्वरितेतो रूपं । तत्र परिवेषणफलस्य भोजनप्राप्तेः कर्तृगामित्वाभावादात्मनेपदमसङ्गतम् । प्रामाणिकेषु न तथा पाठः ॥

११ 'परिज्ञानात्सामान्य—' इति क. ख. च. पाठः ॥

१२ 'बाधकभावो न । क्वचि' इति मुद्रितपाठः 'बाधकभावेन क्वचि' इति क्वचित्पाठः ॥

१३ **बाध इति** । तत्काले इति शेषः । अत एव भाष्ये—नेदानीमित्युक्तम् ॥ तुना वैलक्षण्यं सूचितम् । तत्र कर्त्रैक्यं कालैक्यम्, कर्ममात्रभेदः । अत्र तु देशभेदः शास्त्रभेदश्चेति ॥ लक्ष्यैक्येऽपि तवल्कार इत्यादौ लकारादेरुभयदर्शनेनाविरोधादाह—**भिन्नेति** ॥ छाया ॥

शब्दः=वाक्यात्मा, अर्थः=तदर्थः, संबन्धः=प्रतिपाद्यप्रतिपादकभावः, तेषां परिज्ञानं। तद्यथा लोकव्यवहारादेव, तथा तयोर्बाध्यबाधकभावः—संभवे[१]ऽपि भवतीत्येतदपि लोकव्यवहारादेव '**ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय**' इत्यादिरूपादवगतमित्यर्थः । विशेषसंनिधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वं च तद्बीजम् ॥ '**परिज्ञानवत्**' इति पाठः ॥ एवञ्च '**अचो रहाभ्याम्–**' इत्यत्र सामान्यविशेषविधित्वाभावेऽपि तत्र बाधे यद्बीजं तत्प्रकृतेऽप्यस्त्येवेत्याह—**प्रत्यक्षश्चेति** । अविलम्बितप्रतीतिकत्वं–**प्रत्यक्षत्वम्** । विलम्बिततत्कत्वं च–**अनुमेयत्वम्** ॥ **लक्ष्येति** । ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्नाश्रीयते जातिव्यक्तिपक्षयोरुभयोरपीति भावः ॥ **क्वचिदपेक्षा नास्तीति** । बाध्यबाधकभावस्येति शेषः[४] ॥ **यथेति** । बाध्यबाधकभावाभावे दृष्टान्तोऽयम्, न तु कार्यित्वनिमित्तत्वयोः समावेशे इति बोध्यम् ॥ **केचित्तु**[५] **तक्रकौण्डिन्यन्यायो**ऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव । अस्ति च प्रकृते तत् । न[६] ह्येतद्बोध्यनिमित्तत्वं सामान्यत्वप्रयुक्तकार्यित्वानाक्रान्तं क्वचिदप्यस्ति, सर्वत्राचः परत्वात् '**अनचि**' इत्यस्य प्राप्तेः । अतो युक्तो लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः[७] । न[८] चैवं '**इको यण्–**' इत्यादौ, 'मत्वर्थः' इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यात्–इति भाष्याभिप्रायमाहुः ॥

( इति रेफाधिकरणम् )

---

## ( अथायोगवाहोपदेशाधिकरणम् )

### ( वार्तिकावतरणभाष्यम् )

**इदं**[९] **विचार्यते—इमेऽयोगवाहा न क्वचिदुपदिश्यन्ते, श्रूयन्ते**[१०] **च । तेषां कार्यार्थ उपदेशः कर्तव्यः ॥**

**के पुनरयोगवाहाः ?**

**विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमाः**[११,१२] **॥**

**कथं पुनरयोगवाहाः ?**

**यदयुक्ता वहन्ति, अनुपदिष्टाश्च श्रूयन्ते ॥**

( **प्रदीपः** ) **इम इति** । विधानादेषां साधुत्वं स्यात्, प्रत्याहारप्रतिबद्धं तु कार्यं न प्राप्नोति ॥ **के पुनरिति** । तत्स्वरूपप्रश्नः ॥ **कथमिति** । प्रवृत्तिनिमित्तप्रश्नः । '**अयुक्ताः**' इत्यस्यैव हेतुकथनम्—**अनुपदिष्टाश्च**–इति । **अयुक्ताः**—प्रत्याहारलक्षणेन पाठाभावादसंबद्धा इत्यर्थः । उपदेशो द्विविधः—पाठः, ग्रहणकशास्त्रेण प्रत्यायनं च। स द्विविधोऽप्येषां नास्तीत्यर्थः। **च**शब्दो हेतौ । यतोऽनुपदिष्टास्ततोऽयुक्ता इत्यर्थः । क्वचित्तु **च**शब्दो न पठ्यते ॥

( **उद्द्योतः** ) ननु '**कार्यार्थः**' इत्यत्र कार्यं-साधुत्वं चेत् '**खरवसानयोः**' इत्यादिना सिद्धमत आह—**विधानादिति** । '**उपदिश्यन्ते**' इति पाठे भाष्ये वर्तमानसामीप्ये लट् । उपदिष्टा इत्यर्थः ॥ **प्रवृत्तिनिमित्तेति** । प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारः–थमर्थ[१३] इति भावः । केन प्रवृत्तिनिमित्तेनायोगवाहशब्दवाच्यतैषामित्यत्र तात्पर्यम् ॥ ननु '**अनुपदिष्टाश्च**' इति चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति । तदयुक्तम्, अनुपदेशपदार्थस्यानुच्चारणस्य तत्राभावात्। प्रयोगेषूच्चारितत्वात्। न च प्रत्याहारसूत्रानुच्चारितत्वं तथा, '**यदयुक्ताः**' इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह—**अयुक्ता इत्यस्यैव हेतुकथनमिति** । प्रत्याहारबोधकलक्षणेनायुक्ता इत्यन्वयः । तद्व्याचष्टे—**पाठाभावादिति** ।

---

१ **संभवेऽपीति** । कालभेदेन देशभेदेन चेति भावः ॥ छाया ॥

२ भाष्योक्तन्यायेन 'तत्काले तन्न, कालान्तरे तु तद्भवति' इति प्रतिपाद्यते इति भ्रमनिरासाय न्यायान्तरं स्फुटप्रतीयमानकालभेदविषयकमप्याह—**ब्राह्मणेभ्य इति** ॥ छाया ॥

३ नन्वेवं 'प्रत्यक्षानुमितयोः' इति 'श्रुतानुमितयोः' इति वा न्यायविषयता समागतेति न प्रागुक्तबीजकत्वम् । किं च रेफयरोरिगचोश्च प्रत्यक्षत्वं श्रुतत्वं वा तुल्यमेवेति कथं तेनापि निर्वाहोऽत आह—**अविलम्बितेति** ॥ एवं च तयोः प्रत्यक्षत्वादिकमपि न विवक्षितम्, किंतु 'सामान्यश्रुतस्य विशेषश्रुतं बाधकम्' इति । विशेषश्रुतस्य विशेषशब्दबोधितत्वेन शीघ्रोपस्थितिरन्यस्य वैपरीत्येन तथोपस्थितिरिति वैलक्षण्यदृष्टान्तवदत्र सत्त्वात्तदुपपत्तिस्तद्बीजकत्वं च सिद्धमिति न कोऽपि दोषः ॥ छाया ॥

४ पूर्वं 'बाध्यबाधकभावो न' इति पाठस्य सत्त्वादाह—**शेष इति** । पूर्वं षष्ठ्यन्तपाठेऽपि '**क्वचिदविशेषेण विभाषा**' इति पक्षस्यापि वक्ष्यमाणतया नियमाप्रवृत्तिपक्षे कर्तरि सा षष्ठीत्येतदावश्यकम् । तत्र तृतीयान्तपाठस्तु न योग्यः, लक्ष्येत्यत्र समासानापत्तेः ॥ छाया ॥

५ **केचित्त्विति** । भाष्यतत्त्वविद इत्यर्थः ॥ छाया ॥

६ राजलक्ष्मीकारेण 'न ह्येतद्बाधनिमित्तत्वं' इति पाठ उद्धृतः, स च पुस्तकान्तरेष्वनुपलभमानोऽयुक्तश्च ॥

७ **बाध इति** । निमित्तत्वेनेति शेषः ॥ छाया ॥

८ **न चैवं**–नह्येवम् ॥ छाया ॥

९ '**अयोगवाहानाम्—**' इति वार्तिकावताराय विचारान्तरमारभते—**इदमिति** । रत्नकृत् । वस्तुतस्तु '**इदं विचार्यते**' इत्यस्यात्रापाठः संशयाभावात् । यत्र कोटिद्वयोपस्थितिस्तत्रैव तदुक्तेर्भाष्यशैलीसिद्धत्वाच्चेति बोध्यम् ॥ छाया ॥ वस्तुतस्तु यत्र सूत्रासम्बद्ध इव विचारः प्रस्तूयते तत्रेत्थं व्यवहार इत्यत्रापि युज्यते ॥

१० नन्वेवं न सन्त्येव तेऽत आह—**श्रूयन्ते चेति** । प्रयोगे '**विसर्जनीयस्य सः**' इत्यादिसूत्रेषु चेति भावः ॥ छाया ॥

११ तथा च कात्यायनप्रातिशाख्यम् उव्वटभाष्यसंकलितम्—

**अथायोगवाहाः** ॥ का० प्रा० ८ अध्याये ८ सूत्रम् ॥

( उ० भा० ) व्याख्यायन्त इति शेषः तथाहि—

**ᳵक इति जिह्वामूलीयः** ॥ ८।९ ॥ **ᳶप इत्युपध्मानीयः** ॥ ८।१० ॥ **अं इत्यनुस्वारः** ॥ ८।११ ॥ **अः इति विसर्जनीयः** ॥ ८।१२ ॥ **हुँ इति नासिक्यः** ॥ ८।१३ ॥

( उ० भा० ) अयमृक्शाखायां प्रसिद्धः ॥

**कुँ खुँ गुँ घुँ इति यमाः** ॥ ८।१४ ॥

१२ 'स्वारानुनासिक्ययमाः' इति छ. प. पाठः ॥

१३ **थमर्थ इति** । कथमित्यत्र थमुप्रत्ययार्थः प्रकार इत्यर्थः ॥

ग्रहणकशास्त्रेण प्रदेशे प्रवर्तमानेन यो वर्णस्तेषां ग्राहकः, तस्य पाठाभावादित्यर्थः ॥ **एषां नास्तीति**। अतोऽयुक्ता इत्यर्थः। एवं चाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति=प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता[१] ॥ **न पठ्यत इति**। तत्र 'यतः' इत्यध्याहार्यमिति भावः ॥

**( वार्तिकावतरणभाष्यम् )**

**क पुनरेषामुपदेशः कर्तव्यः ?**

**( ५१ सिद्धान्तवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ अयोगवाहानामट्सु णत्वम् ॥ * ॥**

**( भाष्यम् )**

**अयोगवाहानामट्सूपदेशः[२] कर्तव्यः[३] ॥**

**किं प्रयोजनम् ?**

**णत्वम्। उरःकेण-उर≍केण, उरःपेण-उर≍पेण[४]। "अड्व्यवाये" इति णत्वं सिद्धं भवति ॥**

**( उद्योतः )** भाष्ये—**उरःकेणेति**। उरः कायतीति सुबुत्पत्तेः पूर्वं समासेऽपि[५] **'सोपदादौ'** इति न सत्वम्, **'पाशकल्पककाम्येषु'** एव तत्प्रवृत्तेः ॥

**( ५२ सिद्धान्तवार्तिकम् ॥ २ ॥ )**

**॥ * ॥ शर्षु[६] जश्भावषत्वे ॥ * ॥**

**( भाष्यम् )**

**शर्षूपदेशः कर्तव्यः ॥**

**किं प्रयोजनम् ?**

**जश्भावषत्वे। अयमुब्जिरुपध्मानीयोपधः[७] पठ्यते। तस्य जश्त्वे कृते 'उब्जिता-उब्जितुम्' इत्येतत्[८] रूपं यथा स्यात् ॥**

**( प्रदीपः ) शर्ष्विति**। शर्षु पाठे झल्त्वमिति[९] **'झलां जश् झशि'** इति जश्त्वं सिध्यति ॥

**(उद्योतः)** ननु 'शरां जशो भवन्ति' इति लक्षणाभावात् शर्षुपाठस्य न जश्भावः प्रयोजनमत आह—**शर्षु पाठे इति**[१०] ॥

**( उपध्मानीयोपधदूषणभाष्यम् )**

**यद्युपध्मानीयोपधः[११] पठ्यते, उब्जिजिषतीत्युपध्मानीयादेरेव[१२] द्विर्वचनं प्राप्नोति। दकारोपधे पुनः "न न्द्राः संयोगादयः" (६।१।३) इति प्रतिषेधः सिद्धो भवति[१३] ॥**

**( प्रदीपः ) उपध्मानीयादेरिति**। यदि द्विर्वचने पूर्वत्र जश्त्वमसिद्धम्, अथापि **'पूर्वत्रासिद्धीयमद्विर्वचने'**[१४] इति सिद्धं। सर्वथोबिब्जिषतीति[१५] प्राप्नोति ॥

**( उद्योतः ) यदीति**। 'पूर्वत्रे[१६] द्विर्वचने-इत्यन्वयः ॥ **ननु** पूर्वं द्वित्वे जश्त्वात्पूर्वमेव[१७] **हलादिः शेषे** कथमुपध्मानीयस्याभ्यासे[१८] जश्त्वं झश्परत्वाभावात्। **'अभ्यासे चर्च'** इत्यनेन तु **आन्तरतम्यात्प्रकृतिचरां चर** एवेति उपध्मानीय एव स्यादिति चेत् न; चिन्त्यमेवैतत्। उपध्मानीयश्रवणापादनेनापि भाष्यसामञ्जस्यात्। अन्त्ये[१९] तु द्वित्वे कृतेऽपि द्वित्वाश्रयस्य कार्ये कर्तव्येऽसिद्धत्वं नेत्यपि

---

१ **व्युत्पत्तिरिति**। अनेन 'श्रूयन्ते' इत्यग्रे भाष्ये 'अतोऽयोगवाहाः' इति शेष इति सूचितम्। तदवयवार्थस्तु—न विद्यते योगः संबन्धो येषां समाम्नाये तेऽयोगाः। वहन्ति ते वाहाः, अयोगाश्च ते वाहाश्चेति बोध्यः ॥ ते यद्युपदिष्टाः तर्ह्यकारादिवच्छ्रूयेरन्निति योग्यानुपलब्धिसहकृतश्रोत्रेणायोगग्रहः। संस्कर्तेत्यादिप्रयोगवहनं तु सर्वैरेव गृह्यते इति समुदितग्रहे प्रत्यक्षं मानं सूचितमनेनेति बोध्यम् ॥ छाया ॥

२ अध्याहारानुषङ्गाभ्यां वार्तिकं व्याचष्टे—**अयोगेति** ॥ छाया ॥

३ अत्रेदमवधेयम्—अट्सु क्रियमाण उपदेशोऽप्यकारानन्तरमिकारात्प्राक् कर्तव्यः। तेन इण्स्वनन्तर्भावात् पयःसु यशःस्वित्यादाविणूकोरित्यधिकृत्य विधीयमान**मादेशप्रत्यययोरि**ति षत्वं न भवति। अक्षु चान्तर्भावात्संस्कर्तेत्यादावनुस्वारस्याच्त्वमाश्रित्य तस्मात्परस्य सकारस्य द्वित्वं सिध्यति। न चैवं हरिः करोतीत्यादा**विको यणची**ति यण्प्रसङ्गः। विसर्गस्यासिद्धत्वात्। एवं हरिं पश्यतीत्यादावनुस्वारस्यासिद्धत्वं बोध्यम् ॥ शब्दकौ० ॥

४ 'उरःकेण उरःपेण' इत्येव प. पाठः ॥

५ **अपिना** तदुत्तरसमासे तदप्रवृत्तिरेवेति सूचितम् ॥ छाया ॥

६ एषां हकारवदन्यत्राप्यावृत्तिः कार्येत्याह—**शर्ष्विति** ॥ छाया ॥

७ **उपध्मानीय इति**। 'उ≍जिः' इति ॥

८ **तस्येति**। तदीयोपध्मानीयस्येत्यर्थः। यद्वा तस्य उब्जेरुब्जितेत्यादि रूपं यथा स्यादित्यन्वयः ॥ छाया ॥

९ झल्त्वमिव हल्त्वयत्वे अपि नान्तरीयकत्वादेव सिद्धे। तत्फलं **त्वविशेषेणे**त्युत्तरवार्तिकव्याख्यायां व्यक्तीभविष्यति। तथा खर्वमपि। तेन कुप्वोः ≍क≍पौ चेत्यत्र विसर्गसिद्धिः ॥ श० कौ० ॥

१० **'झलां जशोऽन्ते'** इत्यस्यापत्तिस्तु न, एतद्दृष्ट्या विसर्गादीनामसिद्धत्वात् ॥ छाया ॥

११ इदं खण्डयति **यदीति** ॥ छाया ॥ 'यद्युब्जिरुप' इति ख. पाठः ॥

१२ **त्युपध्मानीति**। जश्त्वस्यासिद्धत्वात् **'अजादेर्द्वितीयस्य'** इत्युपध्मानीयजकारविशिष्टेत्यर्थः ॥ छाया ॥

१३ **भवतीति**। तथा च जिसुशब्दस्य द्वित्वे वक्ष्यमाणरीत्या दकारस्य बकारे इष्टरूपसिद्धिरिति भावः ॥ छाया ॥

१४ 'यमद्विर्वचने' इति क. ख. पाठः।

१५ **सर्वथोबीति**। न तूब्जिजिषतीत्यर्थः ॥ छाया ॥

१६ 'अनन्वयाशङ्कावारणायाह—**पूर्वत्रेति**। पूर्वत्र द्विर्वचने कर्तव्ये परं जश्त्वमसिद्धमिति प्रदीपाशयः ॥

१७ **जश्त्वा**दित्यस्य मध्यमणिन्यायेनान्वयः ॥ परिभाषाया **उभौ साभ्यासस्ये**ति ज्ञापकेनानित्यत्वादप्रवृत्तिपक्षे शङ्केयम् ॥ छाया ॥

१८ **कथमुपेति**। जश्त्वस्यासिद्धत्वात्पूर्वं हलादिःशेषेण जकारनिवृत्तौ झश्परत्वाभावादभ्यासे जश्त्वं कथमित्यन्वयः ॥

१९ **अन्त्ये तु**—पूर्वत्रासिद्धीयमिति परिभाषाप्रवृत्तौ तु ॥ छाया ॥

'पूर्वत्रासिद्धीयं' इत्यस्यार्थ इति परत्वाज्जश्त्वे कृत एव 'हलादिः शेषः' इत्याशयान्न[1] दोषः ॥

( दकारोपधदूषणभाष्यम् )

**यदि[2] दकारोपधः पठ्यते, का रूपसिद्धिः—उब्जिता, उब्जितुमिति ?**

( दकारोपधदूषणनिराकरणभाष्यम् )

**असिद्धे[3] भ उब्जेः ।**

**इदमस्ति—"स्तोः श्चुना श्चुः" ( ८।४।४० ) इति, ततो वक्ष्यामि—"भ उब्जेः" उब्जेः श्चुना सन्निपाते भो भवतीति ॥**

**तत्तर्हि वक्तव्यम् ॥**

**न[4] वक्तव्यम्, निपातनादेव सिद्धम् ।**

**किं निपातनम् ?**

**"भुजन्युब्जौ पाण्युपतापयोः" इति ॥**

**इहापि तर्हि प्राप्नोति-अभ्युद्गः, समुद्ग इति ॥**

**अकुत्वविषये[5] तन्निपातनम् ॥ अथवा[6] नैतदुब्जे रूपं, गमेरेतत् ह्युपसर्गाड्डो विधीयते । अभ्युद्गतः-अभ्युद्गः, समुद्गतः-समुद्ग इति ॥**

( **प्रदीपः** ) **निपातनादिति** । द्विर्वचनं[7] कथम् ? निपातनाद्वाक्यशेषोऽनुमीयते—असिद्धप्रकरणे 'स्तोश्चुना श्चुः' इत्यत्र 'उब्जेर्भः' इति । तत्र '**न न्द्राः**' इति दकारस्य द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति '**पूर्वत्रासिद्धीयमद्विर्वचने**' इत्यस्याप्रवृत्त्या भत्वस्यासिद्धत्वादिष्टद्विर्वचनप्रसिद्धिः ॥ अथापि न वाक्यशेषानुमानं, निपातनमेव प्रतिपादकं, तथापि दकारोपधनिर्देशसामर्थ्याद्द्विर्वचने कृते दकारस्य बत्वं प्रवर्तते ॥

**अकुत्वविषय इति** । विशिष्टविषयमनुमानमित्यर्थः[8] ॥

( **उद्योतः** ) **द्विर्वचनं कथमिति** । वकाररहितस्येति शेषः ॥ ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशविशेषावच्छिन्नमत आह—अथापीति । न च 'अभ्युद्गः' इत्यादौ दकारोच्चारणं सार्थकं, '**नैतदुब्जे रूपं**' इति भाष्योक्तौ दोषाभावात् । उपतापातिरिक्तविषयेऽस्माद् घञ् नानभिधानादिति तदाशयः ॥ '**अकुत्वविषये निपातनं**' इति पक्षान्तरे त्वायमेव समाधानम् ॥

( प्रयोजनवार्तिकांशव्याख्याभाष्यम् )

**षत्वं[9] च प्रयोजनम् । सर्पिःषु, धनुःषु । 'शर्व्यवाये' इति षत्वं सिद्धं भवति, "नुम्विसर्जनीयशर्व्यवायेऽपि" ( ८।३।५८ ) इति विसर्जनीयग्रहणं न कर्तव्यं भवति ॥**

( आक्षेपभाष्यम् )

**नुमश्चापि[10] तर्हि ग्रहणं शक्यमकर्तुम् ।**

**कथं—सर्पींषि, धनूंषि ?**

**अनुस्वारे कृते 'शर्व्यवाये' इत्येव सिद्धम् ॥**

( समाधानभाष्यम् )

**अवश्यं नुमो ग्रहणं कर्तव्यम् । अनुस्वार[11]विशेषणं नुम्ग्रहणम् । नुमो योऽनुस्वारस्तत्र यथा स्यात्, इह मा भूत्-पुंस्विति ॥**

( **प्रदीपः** ) **अवश्यमिति** । अनुस्वारस्य शर्त्वात्तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणं नियमार्थम्—नुमो योऽनुस्वारस्तत्रैव यथा स्यात्, अन्यत्र मा भूत्—पुंस्विति ॥

( **उद्योतः** ) **अनुस्वारस्य शर्त्वादिति** । यद्यपि इण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः 'सुहिन्सु' इत्यादौ संभवति,

---

१ **न दोष इति** । तथा च भाष्य उपध्मानीयशब्दः स्थान्यादेशसाधारण इति तदादेर्द्वित्वे इष्टरूपासिद्धौ तात्पर्यं भाष्यकैयटयोः ॥ छाया ॥

२ उक्ताशयानभिज्ञस्तर्हि सर्वप्रयोगव्यत्यय इति पृच्छति—**यदीति** । **केति** । तर्हीत्यादिः । उब्जितेत्यादिरूपसिद्धिः किमाकारेत्यर्थः । कथमिति यावत् ॥ छाया ॥

३ स्वाशयं प्रकाशयन्समाधत्ते—**असिद्ध इति** ॥ '**पूर्वत्रासिद्धम्**' इत्यसिद्धप्रकरणे '**भ उब्जेः**' इति वाच्यमित्यर्थः ॥ प्रासङ्गिकमिदं वार्तिकमित्येके ॥ भगवत एव प्रौढिवाक्यमित्यन्ये ॥ छाया ॥

४ प. पुस्तके 'न वक्तव्यम्' इत्यस्य न पाठः ॥

५ 'षये निपातनं' इति प. पाठः ॥

६ निपातनेनैव बत्वस्य सामान्यतो निपातनेऽपि न दोष इत्याह—**अथवेति** ॥ उपतापादन्यत्रास्माद्घञ इव सामान्यतः क्विबादेरप्यनभिधानमिति बत्वस्य सामान्यत एव निपातनमाश्रीयत इति भावः ॥ छाया ॥

७ घञन्तस्याकुत्वार्थकवचने बकारपाठेन तत एव निपातनाद्बत्वं भगवतोक्तमित्याशयेन शङ्कते—**द्विर्वचनमिति** । समाधत्ते—**निपातनादित्यादि** ॥ छाया ॥

८ **यत्तु**—कुत्वाभावेन सहैव बत्वं निपात्यते इति रत्नकृत् । तन्न, उब्जिजिषतीत्यादौ तदभावापत्तेरत आह—**विशिष्टेति** । विशेषविषयकवाक्यशेषानुमानमित्यर्थः । तथा चानेन भाष्येण वचनारम्भपक्षोक्तं कैयटेनाद्यपक्षत्वेनोक्तं श्चुना योगे बत्वमित्येवोच्यत इति नानिष्टमिष्टसिद्धिश्च ॥ अयं भावः—कुत्वाभावनिपातनमुपतापविषयं न घञ्मात्रविषयम् । एवं चाभ्युद्ग इत्यादौ तत्सत्त्वेपि तदभावात् '**चजोः—**' इति कुत्वविषयतया श्चुनाऽयोगात्तन्न । तत्सत्त्वेनोब्जिजिषतीत्यादिसिद्धिश्च । यत्राकुत्वं तत्रैव बत्वमिति रत्नोक्तार्थाङ्गीकारे तु तत्र कुत्वस्यैवाप्राप्त्या निपातनाप्राप्त्या तदसंगतिः स्पष्टैव । असिद्धत्वादेव परत्वान्तरङ्गत्वयोर्नायं विषयः । अन्यथा ताभ्यामादौ भत्वे न न्द्रा इति निषेधो न स्यादिति ॥ छाया ॥

९ प्रयोजनवार्तिकांशे जश्भावपदं व्याख्याय षत्वपदमुदाहरणदानादिना व्याचष्टे—**षत्वं चेति** ॥ छाया ॥

१० 'श्चापि ग्रहणं' इति प. पाठः ॥

११ तत्र यथा **नक्षत्रं दृष्ट्वा वाचं विसृजेदिति** कालोपलक्षणे दिवा नक्षत्रदर्शनेऽपि न भवति, रात्रावदर्शनेऽपि भवति । एवमिहापि सत्यपि नुम्यनुस्वाराऽभावे न भवति, असत्यपि नुम्यनुस्वारे सति भविष्यतीति ॥ प० म० ॥

तथापि तदनभिधानमिति भावः । 'पुंसु' इत्यत्र 'संपुङ्कानां–' इत्येतत्प्रवृत्तिपरविवरणग्रन्थस्तु चिन्त्य एव । तस्य 'समः सुटि' 'पुमः खय्यम्परे' 'कानाम्रेडिते' इति सूत्रत्रयमात्रविषयत्वात् ॥

( वार्तिकावतरणभाष्यम् )

**अथवाऽविशेषेणोपदेशः कर्तव्यः ॥**

( प्रदीपः ) **अविशेषेणेति** । प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देशेन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्रोपदेशः कार्य इत्यर्थः ॥

( उद्योतः ) ननु सूत्रविशेषानाश्रयणे तत्प्रत्याहारासंनिवेशात्कथं तन्निबन्धनकार्यप्रवृत्तिरत आह—**प्रयोजनविशेषमिति** ॥ **'अविशेषेण'** इति भाष्यस्य प्रयोजनविशेषनिर्देशं विनेत्यर्थ इति भावः ॥ **यत्र यत्रेत्यादि** । यद्यत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषय[1]सकलप्रयोजनोद्देशेनेत्यर्थः ॥

( भाष्यम् )

**किं प्रयोजनम् ?**

( ५३ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अविशेषे संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः ॥ * ॥**

( भाष्यम् )

**अविशेषेण संयोगसंज्ञा[2] प्रयोजनम् । उ३ञ्जकः[3] । "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुरु" इति गुरुसंज्ञा, "गुरोः—" इति प्लुतो भवति[4] ॥**

( प्रदीपः ) **उ३ञ्जक इति** । उपध्मानीयस्य जश्त्वे कृते संयोगसंज्ञायां तस्यासिद्धत्वात्संयोगाभावाद्गुरुत्वाभावात् प्लुतो न स्यात् ॥

( उद्योतः ) **जश्त्वे कृते संयोगसंज्ञायामिति** । कार्यकालपक्षे इदम् ॥

( प्रयोजनवार्तिकांशव्याख्याभाष्यम् )

**उपधासंज्ञा च[5] प्रयोजनम्—दुष्कृतं, निष्कृतं, दुष्पीतं, निष्पीतम् । "इदुदुपधस्य चाप्रत्ययस्य" इति षत्वं सिद्धं भवति[6] ॥**

( उद्योतः ) भाष्ये—**इदुदुपधस्येति** । विसर्गस्यात्त्वे ह्युपधात्वमिति भावः ॥

( प्रयोजननिरासभाष्यम् )

**नैतदस्ति प्रयोजनम् । न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते ॥**

**किं[7] तर्हि ?**

**सकारो विशेष्यते-इदुदुपधस्य सकारस्य[8] यो विसर्जनीय इति ॥**

**अथवा[9]—उपधाग्रहणं न करिष्यते, इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः—इदुद्भ्यामुत्तरस्य विसर्जयनीयस्येति ॥**

( उद्योतः ) **इदुदुपधस्य सकारस्येति** । विसर्गस्थान्युपलक्षणमेतत् । अत एव निरोऽपि निष्कृतमिति सिध्यति । अत एव वक्ष्यमाण[10]पक्षान्तरेणाविरोधः । निष्कृतमित्यादौ सुबुत्पत्तेः पूर्वं समासेऽपि **'इणः षः'** इति न । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ॥

( प्रयोजनवार्तिकांशव्याख्याभाष्यम् )

**अलोऽन्त्यविधिश्च[11][12] प्रयोजनम्—वृक्षस्तरति, प्लक्षस्तरति । "अलोऽन्त्यस्य" विधयो[13] भवन्तीत्यलोऽन्त्यस्य सत्वं सिद्धं भवति ॥**

---

१ **तत्तद्विषयेति** ॥ तत्तत्प्रदेशस्येत्यर्थः । अनेन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्र सकलप्रयोजनोद्देशेनोपदेशः कार्य इति कैयटेऽन्वयः सूचितः । स चार्थादट्शरोरेव । तथा च ल्यबन्तान्तवाक्यार्थ एवानेन तत्र हेतुं सूचयन्फलतया प्रतिपाद्यते, न तु बहुषु तथोपदेशः प्रतिपाद्यते । तयोरेवोपदेशेन सर्वफलानां सिद्धत्वात् ॥ छाया ॥

२ 'गसंज्ञाच प्र' इति प. पाठः ॥

३ 'उ३ब्जक' इति सम्बोधन्तः पाठः प. पुस्तके ॥

४ **भवतीति** । इदं फलमुब्जेरुपध्मानीयत्वाङ्गीकर्तृवार्तिककारमते । सिद्धान्तभूतदकारोपधत्वपक्षे तु न चाशङ्का न चोत्तरमिति नेदं फलमिति बोध्यम् ॥ छाया ॥

५ **उपधासंज्ञा चेति** । चो वार्तिकरीत्या पूर्वपरसमुच्चायकः, भाष्यरीत्या वक्ष्यमाणमात्रसमुच्चायक इति बोध्यम् ॥ छाया ॥

६ 'भविष्यति' इति प. पाठः ॥

७ **कस्तर्हीति** पाठः । किं तर्हीति पाठे सामान्ये नपुंसकं ज्ञेयम् ॥ छाया ॥

८ इदुदुपधस्य पदस्यावयवो यः सकारस्तस्येत्यर्थः । तथा च सकारमन्त्यमलमादाय तस्य तत्त्वं वाच्यमिति तदा तत्त्वापेक्षा नेदानीमिति षत्वं प्रतीदुदुपधत्वं विशेषणं न, किंतूपलक्षणमिति भावः ॥ छा. ॥

९ बहुलाघवादाह—**अथवेति** ॥ **इदुद्भ्यामिति** । तृतीयान्तमिदम् । **तुः**-यत इत्यर्थः । **परमिति** । परत्वेनेत्यर्थः । अनेन 'इदुद्भ्यामप्रत्ययस्य' इति न्यासः सूचितः ॥ छाया ॥

१० **वक्ष्यमाणेति** । 'अथवोपधाग्रहणं न करिष्यते' इति पक्षान्तरेण । 'सकारस्य' इत्यस्योपलक्षणानाश्रयणे निरो निष्कृतमित्यत्र न स्यात्, उपधा ग्रहणं न करिष्यत इति पक्षाश्रयणे च स्यात्–इति पक्षभेदेन फलभेदवारणार्थमुपलक्षणाश्रयणं युक्तम् ॥

११ सर्वे चेदं **संभवति सामानाधिकरण्ये**–इति न्यायस्य **'पदाङ्गाधिकारे'** इत्यस्य चानाश्रयणेनोक्तम् । तदाश्रयणे त्वाद्यपक्षे 'इदुदुपधस्य सकारान्तस्य पदस्य यो विसर्जनीयस्तदन्तस्य' इत्यर्थः, द्वितीयपक्षे–इदुद्भ्यामुत्तरो यो विसर्जनीयस्तदन्तस्य पदस्येत्यर्थो बोध्यः । सिद्धान्ते तु–इदुदुपधस्य विसर्जनीयान्तस्य पदस्येत्यर्थः । अलोऽन्त्यस्येत्यनेन विसर्जनीयस्य तदिति बोध्यम् ॥ छाया ॥

१२ प. पुस्तके चशब्दो नास्ति ॥

१३ **विधय इति** । विध्येकवाक्यतया लब्धमिदम्, आदेशा इत्यर्थः । अन्यथा विसर्जनीयान्तस्य पदस्य विधीयमानं सत्वं सर्वादेशः स्यात् तस्यानल्त्वेनान्त्यस्यालोऽभावेन तदप्रवृत्तेः । अलां मध्येऽन्त्यस्याल इत्यर्थे त्वकारस्य स्यादिति भावः ॥ छाया ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । "निर्दिश्यमानस्यादेशा भवन्ति" इति विसर्जनीयस्यैव भविष्यति ॥**

( प्रयोजनवार्तिकांशव्याख्याभाष्यम् )

**द्विर्वचनं[1] प्रयोजनम्–उरꣳꣳकः, उरꣳꣳपः । "अनचि च" अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति ॥**

**( उद्द्योतः ) द्विर्वचनं प्रयोजनमिति ।** विसर्गजिह्वामूलीयादेर्द्विरुच्चारणे विशेषस्याग्रहात् उच्चारणस्य कर्तुमशक्यत्वाच्च शास्त्रप्राप्तिमात्रेणैतत्प्रयोजनकथनमिति संतोष्टव्यम् ॥

( प्रयोजनवार्तिकांशव्याख्याभाष्यम् )

**स्थानिवद्भावप्रतिषेधश्च प्रयोजनम् । यथेह भवति–उरःकेण–उरःपेणेति "अड्व्यवाय" इति णत्वम्, एवमिहापि स्थानिवद्भावात्प्राप्नोति–व्यूढोरस्केन–महोरस्केनेति । तत्र "अनल्विधौ" इति प्रतिषेधः सिद्धो[2] भवति ॥**

**( प्रदीपः ) महोरस्केनेति । 'पूर्वत्रासिद्धीये न स्थानिवत्'** इति निषेधः **'अचः परस्मिन्पूर्वविधौ'** इत्यस्य, न तु **'स्थानिवदादेशः'** इत्यस्य ॥

**( उद्द्योतः ) ननु 'सोऽपदादौ'** इति सत्वस्य स्थानिवत्त्वं **'पूर्वत्रासिद्धीये'** इति निषेधान्नेत्यत आह—**पूर्वत्रेति** ॥

( इत्ययोगवाहोपदेशाधिकरणम् )

( अथ वर्णार्थवत्ताधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**किं पुनरिमे वर्णा अर्थवन्तः, आहोस्विदनर्थकाः?**

**( प्रदीपः )** इदानीमन्यदपि वर्णगतं वस्तु विचार्यते[3]—**किं पुनरिति ।** पक्षद्वयेऽपि प्रतिवर्णं विभक्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम् ॥

**( उद्द्योतः ) 'इमे'** इत्यनेन न **'हयवरट्'**सूत्रस्था एव गृह्यन्ते, किं तु वर्णमात्रमित्याह—**इदानीमिति** ॥ **'अर्थवन्तः'** इति साध्यम् । **'वर्णाः'** इति पक्षः । पक्षतावच्छेदकमेव हेतुः । धातुप्रातिपदिकेत्यादिस्तु दृष्टान्तः ॥ **अनुत्पत्तिज्ञानम्**–अनुत्पत्त्युपायज्ञानम् ॥

( ५४ अर्थवत्तासाधकप्रथमवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥ * ॥

( भाष्यम् )

**[4]धातव एकवर्णा अर्थवन्तो दृश्यन्ते—एति, अध्येति, अधीत इति ॥**

**प्रातिपदिकान्येकवर्णान्यर्थवन्ति—आभ्याम् , एभिः, एषु ॥**

**प्रत्यया एकवर्णा अर्थवन्तः–औपगवः, कापटवः ॥**

**निपाता एकवर्णा अर्थवन्तः—अ-अपेहि, इ–इन्द्रं पश्य, उ–उत्तिष्ठ, अ-अपक्राम ।**

**[5]धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे—अर्थवन्तो वर्णाः–इति ॥**

**( उद्द्योतः )** भाष्ये—**धातव** इत्यादि प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्येवंरूपवर्णस्फोटाश्रयेण । अयं च शास्त्रव्यवहारमात्रोपयोगी । एतद्वासनावशादेव लोकव्यवहारेऽपि शास्त्रज्ञास्तथा व्यवहरन्ति, धर्मे चैवंविधज्ञानस्योपयोग इति बोध्यम् ॥

( ५५ अर्थवत्तासाधकद्वितीयवार्तिकम् ॥ २ ॥ )

## ॥*॥ वर्णव्यत्यये चार्थान्तरगमनात् ॥*॥

( भाष्यम् )

**वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहे–अर्थवन्तो वर्णा इति ।**

**कूपः सूपो यूप इति ।**

**कूप इति सककारेण कश्चिदर्थो गम्यते । सूप इति ककारापाये सकारोपजने चार्थान्तरं गम्यते । यूप इति ककारसकारापाये यकारोपजने[6]ऽर्थान्तरं गम्यते । तेन मन्यामहे–यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति ॥**

**( प्रदीपः ) वर्णव्यत्यये–इति ।** एकस्य वर्णस्याभ्युपगमे-

---

१ तदेवं वार्तिककृता प्रयोजनत्रय उक्तेऽपि भाष्यमते तत्र यद्यप्याद्यं भगवता न खण्डितम्, तथापि प्राक् मूलस्यैव खण्डितत्वेन खण्डितप्रायमिति विशिष्यात्र तथा नोक्तम् । तदेतद्ध्वनयंश्चरमहितमाह—**द्विर्वचनं प्रयोजनमिति ॥** छाया ॥ मुद्रितपुस्तकेषु 'उरꣳꣳकः–उरꣳꣳपः' इति जिह्वामूलीयोपध्मानीययोर्द्विर्वचनं दृश्यते ॥

२ **सिद्धो भवतीति ।** तदेवं वार्तिकेन फलपञ्चके तस्योक्तेऽपि भाष्यमते फलद्वयं स्थितम् । तत्रापि चरमं युक्तमिति बोध्यम् ॥ छाया ॥

३ **विचार्यत इति ।** अनेनात्र भाष्ये–**'इदं विचार्यते'** इत्यपेक्षितम् । परंतु त्रुटितमिति सूचितम् । तथाच वार्तिकावतरणमिति भावः ॥ छाया ॥ सूत्रार्थाक्षेपपरिहारादिविचारावसरे सूत्ररचनाद्यप्रस्तुतविचारवेलायां 'इदं विचार्यते' इति प्रयोगो भाष्यकृतां शैलीसिद्धः संप्रदायः । वर्णविचारस्य प्रस्तुतत्वादत्र 'इदं विचार्यते' इति न प्रयुक्तमिति युक्तमेव । त्रुटितं भाष्यमित्यादि कल्पनमपि दृढतरप्रमाणाभावान्नातीव रोचत इति विचारणीयं सुधीभिः ॥

४ इतः प्राक् 'अर्थवन्तो वर्णाः । कुतः । धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात्' इत्यधिकः पाठो मुद्रितेषु दृश्यते । प्राचीनपुस्तकेषु तादृशपाठादर्शनान्नात्र गृहीतः । अयुक्तोऽप्ययं पाठः, अग्रे धातुप्रातिपदिकप्रत्ययेत्यादि वार्तिकानुवादभाष्यदर्शनात् ॥

५ उपसंहरति— **धात्विति ॥** छाया ॥

६ 'जने चार्थान्त' इति प. पाठ. ।

ऽन्यस्यापगमः=व्यत्ययः ॥ **सककारस्येति** । तस्यैवान्वयव्यतिरेकावनुविधत्तेऽर्थावसाय इति भावः ॥

**( उद्द्योतः )** हेत्वन्तरमाह[1]—**वर्णव्यत्यये चेति** ॥ ननु कूपादौ न सिंहादाविव वर्णव्यत्ययोऽत आह—**एकस्येति** ॥ **तस्यैवान्वयेति** । ऊपशब्दस्य तु तदीयशक्त्युद्बोधकत्वरूपं द्योतकत्वं प्रादिवत् । अत एव तेषामिवैषामपि प्रातिपदिकसंज्ञाऽऽपादनं करिष्यते ॥

**( ५६ अर्थवत्तासाधकतृतीयवार्तिकम् ॥ ३ ॥ )**

**॥ * ॥ वर्णानुपलब्धौ चानर्थगतेः ॥ * ॥**

**( भाष्यम् )**

**वर्णानुपलब्धौ चानर्थगतेर्मन्यामहे—अर्थवन्तो वर्णा इति ।**

**वृक्षः-ऋक्षः, काण्डीरः-आण्डीरः ।**

**वृक्ष इति सवकारेण कश्चिदर्थो गम्यते, ऋक्ष इति वकारापाये सोऽर्थो न गम्यते । काण्डीर इति सककारेण कश्चिदर्थो गम्यते, आण्डीर इति ककारापाये सोऽर्थो न गम्यते ॥**

**( प्रदीपः ) वर्णानुपलब्धौ चेति** । अर्थान्तरावगमात्प्रकृतोऽर्थो न गम्यत इति विवक्षितम् ॥

**( उद्द्योतः )** तृतीयहेतुमाह—**वर्णानुपलब्धौ चेति** ॥ 'अनर्थगतेः' इत्यस्य तद्वर्णसत्तायां योऽर्थस्तदर्थानवगतेरित्यर्थ इत्याह— **अर्थान्तरेति** ॥

**( आक्षेपभाष्यम् )**

**किं तर्ह्युच्यते-'अनर्थगतेः' इति, न साधीयो ह्यत्रार्थस्य गतिर्भवति?**[2]

**( प्रदीपः )** इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति[3] पृच्छति—**किं तर्हीति** ॥ **साधीय इति** । परमतापेक्षया प्रकर्ष आरोप्यते । यथा 'न किंचिदयं तत्र करोति' इत्युक्ते कश्चिदाह—'सुतरामयं करोति' इति ॥

**( उद्द्योतः )** प्रश्नमुपपादयति—**भाष्ये—न साधीय इति** । नञि काकुः ॥ **परमतापेक्षयेति** । परेण 'अनर्थगतेः' इत्युक्तत्वादिहार्थगतिरस्तीत्यभ्युपगम्य परमते कटाक्षेण अन्यस्थलीयार्थगत्यपेक्षयाऽत्रातिशयेनार्थगतिरस्तीति विवक्षेति भावः ॥

**( समाधानभाष्यम् )**

**एवं तर्हीदं पठितव्यं स्यात्-"*वर्णानुपलब्धौ चातदर्थगतेः*" इति ॥**[4]

**किमिदं—अतदर्थगतेरिति ?**[5]

**तस्यार्थः-तदर्थः, तदर्थस्य गतिः-तदर्थगतिः, न तदर्थगतिः-अतदर्थगतिः, अतदर्थगतेरिति ॥**

**अथवा सोऽर्थः-तदर्थः, तदर्थस्य गतिः-तदर्थगतिः, न तदर्थगतिः-अतदर्थगतिः, अतदर्थगतेरिति ॥**

**( प्रदीपः ) एवं तर्हीति** । प्रकृतोऽर्थो न गम्यते, अर्थान्तरं तु गम्यत इत्यर्थः ॥ **तस्यार्थ इति** । वर्णस्य[6] ॥

परं प्रति वर्णानामर्थवत्त्वमसिद्धमिति कथं 'तस्य' इति वर्णः परामृश्यत इत्याह—**सोऽर्थ इति** । प्रकृतोऽर्थ इत्यर्थः ॥

**( उद्द्योतः )** तच्छब्दार्थमाह—**वर्णस्येति** ॥ परे तु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः । अत एव पूर्वं भाष्ये **'सककारेण कश्चिदर्थो गम्यते'** इत्युक्तमित्याहुः ॥ लाघवेन तु कर्मधारयमाह—भाष्ये—**सोऽर्थ इति** ॥ **प्रकृतोऽर्थः**-तस्मिन्वर्णे सति योऽर्थः प्रतीयते स इत्यर्थः ॥

**( आक्षेपभाष्यम् )**

**स तर्हि तथा निर्देशः कर्तव्यः ?**[7]

**( सिद्धान्तभाष्यम् )**

**न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखमस्य-उष्ट्रमुखः, खरमुखः । एवमतदर्थगतेः-अनर्थगतेरिति ॥**[8]

**( प्रदीपः ) उष्ट्रमुख इति** । गतार्थत्वादप्रयोग एव द्वितीयस्य मुखशब्दस्य लोपोऽभिधीयते । अत्र हि उष्ट्रो मुखमस्येत्येव विग्रहः ॥ न च प्राणी प्राण्यन्तरस्य मुखं भवति[9]-इति विशिष्टावयववृत्तिरुष्ट्रशब्दः[10] सादृश्यान्मुखं विशिनष्टि । एवमिहापि 'अनर्थगतेः' इत्यत्रार्थशब्देन प्रक्रान्तोऽर्थ उच्यते, नार्थमात्रमित्यर्थः ॥

**( उद्द्योतः )** ननु दृष्टान्ते **'सप्तम्युपमानपूर्व-'**इति वचनेनोत्तरपदलोपेऽपि प्रकृते तच्छब्दलोपः केन ? **किं च** तच्छब्द उत्तरपदमपि

---

१ **हेत्वन्तरमिति** । साधारणं हेतुमुक्त्वा कांचित्कमन्वयव्यतिरेकरूपमित्यर्थः ॥ छाया ॥

२ 'साधीयोऽत्राप्यर्थ' इति प. पाठः ॥

३ **अनेनेति**—'अनर्थगतेः' इति हेतुबोधकेनेत्यर्थः ॥ छाया ॥ 'अनेनोक्तमिति मत्वा पृच्छति' इति क. पाठः ॥

४ तुष्यतु दुर्जन इति न्यायेनोत्तरमाह—**एवं तर्हीति** ॥ इष्टार्थस्य स्फुटमुपपत्तय इति शेषः ॥ छाया ॥

५ इतरस्तु 'अतदर्थगतेः' इत्यनेन 'वृक्षभिन्ना घटादयः सर्वे गम्यन्ते' इत्युक्तम्, इत्याशयेन पृच्छति-**किमिदमिति** ॥ छाया ॥

६ 'तस्य वर्णस्य' इति क. ख. पाठः ॥

७ न्यासान्तरप्रत्याख्यानं वाचयितुमन्यः पृच्छति—**स तर्हीति** ॥

८ व्याख्याविशेषेणेष्टार्थलाभ इत्याशयेन सदृष्टान्तमुत्तरमाह—**उत्तरेति** । यत इत्यादिः ॥ छाया ॥ 'न कर्तव्यः' इत्यस्य प. पुस्तके न पाठः ॥

९ 'भवति—इति शिवदत्तशोधितपाठस्तु शोधकस्य पाण्डित्यमेव गमयति' इति गुरुप्रसाद आह, तत् प्रामाणिकेषु प्राचीनेषु अ. क. ख. पुस्तकेषु तादृशपाठोपलम्भादप्रामाणिकमेव । 'सम्भवति' इति तत्प्रदर्शितपाठो न दृश्यते ॥

१० **विशिष्टावयववृत्तिः**—विशिष्टो य उष्ट्रमुखरूपोऽवयवस्तद्वृत्तिः । उष्ट्रशब्दः संपूर्णावयविवाचकोऽपि अत्रासम्भवान्मुखमात्रवृत्तिर्भवतीति भावः ॥

न, तच्छब्देन नञः समासाभावादत आह—गतार्थत्वादिति । तथा च तद्वदत्रापि लक्षणेति भावः ॥

( ५७ अर्थवत्तासाधकचतुर्थवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ संघातार्थवत्त्वाच्च ॥ * ॥

( भाष्यम् )

**संघातार्थवत्त्वाच्च मन्यामहे—अर्थवन्तो वर्णा इति ।**

**येषां संघाता अर्थवन्तः, अवयवा अपि तेषामर्थवन्तः । येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः । तद्यथा–एकश्चक्षुष्मान्दर्शने समर्थः, तत्समुदायश्च शतमपि समर्थम् । एकश्च तिलस्तैलदाने समर्थः, तत्समुदायश्च खार्यपि समर्था ॥ येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः । तद्यथा–एकोऽन्धो दर्शनेऽसमर्थः, तत्समुदायश्च शतमप्यसमर्थम् । एका च सिकता तैलदानेऽसमर्था, तत्समुदायश्च खारीशतमप्यसमर्थम् ॥**

**( उद्द्योतः )** चतुर्थहेतुमाह–भाष्ये–सङ्घातार्थवत्त्वाच्चेति । **'एका सिकता'** इति भाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि ॥

( अर्थवत्तादूषणभाष्यम् )

**यदि तर्हीमे वर्णा अर्थवन्तः, अर्थवत्कृतानि प्राप्नुवन्ति ॥**

**कानि ?**

**"अर्थवत्प्रातिपदिकम्" इति प्रातिपदिकसंज्ञा । 'प्रातिपदिकात्' इति स्वाद्युत्पत्तिः, 'सुबन्तं पदम्' इति पदसंज्ञा ॥**

**तत्र को दोषः ?**

**"पदस्य" इति नलोपादीनि प्राप्नुवन्ति–धनं, वनमिति ॥**

**( प्रदीपः ) नलोपादीनीति** । श्रवणं तु विभक्तेर्न भवति, यतो[3] यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापि । तत्र तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यम् । समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते, न त्वर्थवत्समुदायमात्रस्य । येनैव चार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानामपि–इति विभक्त्युत्पत्तिश्चोद्यते ॥

**( उद्द्योतः )** तदन्तर्गतत्वादिति । इदं चिन्त्यम्, **'इत्थंभूतलक्षणे'** इति सूत्रस्थस्वग्रन्थविरोधात् । तत्र हि—संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदवयवत्वं नेत्युक्तम् । तस्मादन्तरङ्गत्वात्तदवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदन्तरं कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुब्लोप इति वक्तुं युक्तम् । 'ध्वनति'इत्यादौ तु न तदापत्तिः, धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वं तु व्यपदेशिवद्भावेन बोध्यम् । वस्तुतः **'इत्थंभूत–' इति** सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः ॥ धकारे जश्त्वं–आदिपदार्थः ॥ **सुबन्तावयवसमुदायस्येति** । सुबन्तावयवेति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम्—भेदे सति यदर्थयोः संसर्गस्तद्वारकार्थवत्समुदायस्य, तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते न[4] भेद इत्याह—**येनैव चेति** ॥

( वर्णस्यार्थवत्तायां दोषनिराकरणे भाष्यवार्तिकम् ॥ )

## ॥ संघातस्यैकार्थ्यात्सुबभावो वर्णात् ॥

( भाष्यम् )

**संघातस्यैकत्वमर्थः, तेन वर्णात्सुबुत्पत्तिर्न भविष्यति ॥**

**( प्रदीपः )** अत्र परिहारमाह—**संघातस्येति** । वृक्ष इत्यत्रैकत्वं विभक्त्या द्योत्यते । तच्चैकमित्येकैव विभक्तिरुत्पद्यते । यथा–बहवो द्रष्टार एकेनैव प्रदीपेन दृश्यमर्थं पश्यन्ति[5] । सा चोत्पद्यमाना समुदायादेव तन्त्रेण सर्वानुग्राहिण्युत्पद्यते, समुदाय[6]द्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति न प्रत्येकम्, असुबन्तत्वात् । **'यस्मात् प्रत्ययविधिः'** इत्यनुवर्तनात्[7] ॥

१ एवं च प्रत्याख्यानाशयक एवायं ग्रन्थ इत्याह—**तथाचेति** । एवं च वार्तिकं नापूर्वमिति भावः ॥ न चैवं प्रत्याख्यानप्रकारस्यावश्यकत्वे लाघवेन कैयटस्य युक्तत्वेन कथमन्यत्र तत्खण्डनपूर्वकं वचनावश्यकत्वप्रतिपादनमिति वाच्यम् । अस्य भाष्यस्यैकदेश्युक्तित्वादिति केचित् । अत एव 'द्रष्टव्यः' इत्युक्तम् । अन्ये तु **'अतदर्थगतेः'** इति भाष्येऽर्थकथनम्, न तु विग्रहः । अत एव विशिष्टमुपात्तम् । एवं चात्र वाचनिको गतिशब्दस्य लोपः, अर्थस्येष्टस्य गतिरर्थगतिः । तद्वद्गतिरर्थगतिः । न अर्थगतिरनर्थगतिरिति विग्रहो बोध्य इत्याहुः । **परे तु**–न सः–असः, असश्चासावर्थश्चेत्यनर्थः । तस्य गतिरिष्टार्थभिन्नार्थावगतिरिति तदर्थ इत्याहुः ॥ छाया ॥

२ तथा चेत्थं प्रयोगः–वृक्ष इति संघातः अर्थवदवयवकः, संघातार्थवत्त्वाच्चक्षुष्मदादिसंघातवत् यन्नैवं तन्नैवम् । यथान्धादिसमुदाय इति ॥ छाया ॥

३ **यदैवेति** । नचैकाज्द्विर्वचनन्यायेन तस्यैव स्यान्न तेषामिति वाच्यम्, यत्र समुदायकार्येणावयवानामप्युपकारस्तत्रैव तत्प्रवृत्तेः प्रकृते विभक्त्यादिरूपस्य तस्य तत्राभावात् । नचैवमपि संख्याकर्मादेरभावान्न सेति वाच्यम्, अर्थवत्त्वे तस्यापि संभवात् ॥ **तन्त्र–तस्यां** सत्याम् । **विभक्तेः**–अन्तर्गतायाः ॥ छाया ॥

४ **प्रकृते न भेद इति** । अत्र तु न ततो भिन्नार्थत्वं तेषामित्यर्थः । एवं च साऽपरिहार्यैव ॥ छाया ॥

५ 'द्रष्टारो दृश्यमर्थमेकेनैव' इति मुद्रितपाठः ॥ **सा च**–विभक्तिश्च ॥

६ **समुदायेति** । नच समुदायविभक्त्याऽवयवानां विभक्तिमत्त्वाभावेन तुल्यरूपोपकाराभावात्कथमिदमिति वाच्यम्, समुदायावयवयोरेकत्वार्थकत्वेन तया तद्गतस्यापि तस्योक्तत्वमिति तत्संभवात् ॥ छाया ॥

७ 'त्वनुवर्तनादसुबन्तत्वात्' इति मुद्रितपाठः ॥

( उद्द्योतः ) तच्चैकमिति । 'सङ्घातस्यैकत्वम्' इति भाष्यस्य सङ्घातस्याप्येकत्वमर्थः । एवञ्च विभक्तिः समुदायादेवेति भावः ॥ ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसंबन्धिनी चेत् प्रतिवर्णं पदत्वं प्राप्नोतीत्यत आह—पदसंज्ञा त्विति । यतश्चार्थबोधनाय विभक्त्युत्पत्तिस्तस्य संज्ञा प्रवर्तते, न त्वेषामिति भावः ॥ केचित्तु विभक्तिः प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका । सङ्ख्या च समुदायस्यैवार्थः, न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः । 'एकत्वं सङ्घातस्यार्थः' इति भाष्यस्वरसात् । प्रकृत्यंशे वर्णव्यत्ययापाययोः सङ्ख्यान्तरानुपजननात्सा समुदायस्यैवार्थ इति तद्भावः ॥ न चाव्ययेभ्य इवैकवचनं दुर्वारम् । सङ्ख्यारहितार्थप्रतिपादकेषु तथास्वीकारेऽपि वस्तुतः सङ्ख्यावत्यर्थे सङ्ख्यानभिधायकस्वाद्युत्पत्तौ मानाभावात् । एवंचैषां प्रकृतित्वमेव नेति 'न केवला प्रकृतिः' इत्यस्यापि न विषयः । एतेन प्रत्येकं पदसंज्ञाऽनुग्रहाय द्विर्वचनवैषम्यात् स्वादेव प्रत्येकं सुबुत्पत्तिरित्यपास्तमित्याहुः ॥

( ५८ अनर्थकतासाधकप्रथमवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः ॥ * ॥

( भाष्यम् )

अनर्थकास्तु वर्णाः ।

कुतः ?

'प्रतिवर्णमर्थानुपलब्धेः' । न हि प्रतिवर्णमर्था उपलभ्यन्ते ॥

किमिदं प्रतिवर्णमिति ?

वर्णं वर्णं प्रति—प्रतिवर्णम् ॥

( प्रदीपः ) अनर्थकास्त्विति । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्ते, अन्यथा शास्त्रविरोधः प्राप्नोति ॥ किमिदमिति । असमासशङ्कया प्रश्नः, समासेन तूत्तरम् । तेनैव वीप्सा द्योतिता—इति द्विर्वचनं न भवति ॥

( उद्द्योतः ) अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति—अनर्थकास्त्विति ॥ सर्ववर्णानां पक्षत्वे हेतोर्भागासिद्धत्वं स्यादत आह—धात्वादीति ॥ विपक्षे बाधकमाह—अन्यथेति । वर्णव्यत्ययेत्यादिहेतोरर्थानुपलब्धेरिति हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव सङ्गतेरित्यपि बोध्यम् ॥ असमासशङ्कयेति । तथा च वीप्सा न प्रतीयेतेति भावः ॥ तेनैवेति । वीप्सायां तस्य विधानादिति भावः ॥

( ५९ अनर्थकत्वसाधकद्वितीयवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् ॥ * ॥

( भाष्यम् )

वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे—अनर्थका वर्णा इति ॥

वर्णव्यत्यये—कृतेस्तर्कः, कसेः सिकताः, हिंसेः सिंहः । वर्णव्यत्ययो नार्थव्यत्ययः ॥

अपायः=लोपः—घ्नंति, घ्नन्तु, अघ्नन् । वर्णापायो नार्थापायः ॥

उपजनः=आगमः—लविता, लवितुम् । वर्णोपजनो नार्थोपजनः ॥

विकारः=आदेशः—घातयति, घातकः । वर्णविकारो नार्थविकारः ॥

यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम् । न चेह तद्वत् । अतो मन्यामहे—अनर्थका वर्णा इति ॥

( प्रदीपः ) वर्णव्यत्ययेति । यदुक्तम्—*वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः* इति, तस्यानैकान्तिकत्वमुद्भाव्यते ॥

( उद्द्योतः ) ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाभावसाधे-

---

१ यतश्चेति । यस्मात्प्रातिपदिकात्तदर्थबोधनायविभक्तिरुत्पद्यते तस्य-प्रातिपदिकस्य सुबन्तत्वनिमित्ता पदसंज्ञा प्रवर्तत इत्यर्थः ॥

२ कैयटोक्तौ वक्ष्यमाणारुच्या सिद्धान्तमतेन संख्याकर्मादेरभावादेव सा नेति भाष्यार्थमाह—केचित्त्विति ॥ प्रकृतिबोध्येति । पञ्चकाभिप्रायेणेदम् ॥ छाया ॥

३ 'वर्णंवर्णं प्रतिवर्णं' इत्येव प. पाठः ॥

४ समासेन त्विति । वीप्सार्थकेन तेनेत्यर्थः ॥ तथाचानेकार्थत्वात्संदेहेन प्रश्नः, वीप्सयोत्तरमिति तत्त्वं बोध्यम् । वाक्ये 'लक्षणेत्थंभूत—' इति कर्मप्रवचनीययोगे द्वितीया षष्ठ्यपवादः । द्वाविपूपावितिवत्तत्र द्विर्वचनप्रतिशब्दयोः प्रयोगः ॥ छाया ॥

५ क्रमेणोदाहरति—वर्णव्यत्यय इत्यादिना ॥ छाया ॥

६ यद्यपि 'पिकः कपिः' 'साक्षरा राक्षसाः' इत्यादावर्थव्यत्ययोऽपि दृश्यते तथापि नासौ सार्वत्रिकः । किं चैवमपि उक्तहेतोस्तर्कादौ व्यभिचारस्तदवस्थ एव । किंच तत्र वर्णव्यत्यय एव न, समुदितभेदात् । अत एव तत्र धातुभेदेनैव तयोः साध्यत्वम् । प्रकृते तु वर्णस्य वर्णयोर्वा व्यत्यय इति बोध्यम् ॥ अपायशब्दस्य शास्त्रप्रसिद्धपर्यायमाह—लोप इति ॥ उप समीपे जायते प्रादुर्भवतीत्युपजनस्तस्य तथा पर्यायमाह—आगम इति ॥ विकारोऽन्यथाभावः स च भावरूप इत्याशयेन तथा तमाह—आदेश इति ॥ छाया ॥

७ छ. पुस्तके 'हतः, घ्नन्ति—' इति पाठो दृश्यते । प्राचीनपुस्तकेषु 'हतः' इति पाठो न ।

८ उपसंहरति—यथैवेति ॥ वर्णानामर्थवत्त्वे तद्व्यत्ययात्तदपि स्यात् यतस्तन्नातस्तत्र व्यभिचारादर्थवत्त्वमेव नेति ॥ भावः ॥ छाया ॥

९ साधकमिति । तस्य सत्त्वेन तेन विरोधात्तत्साधनं दुष्करम् । तथाच द्वितीयादिहेतूद्भावनमयुक्तम् । तत्र द्वन्द्वोत्तरपदकषष्ठीतत्पुरुषेण चत्वारो हेतव इति भावः ॥ छाया ॥

कमत आह—**यदुक्तमिति**। एवंचार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनद्वाराऽनर्थकतासाधकत्वमस्य ॥ भाष्ये—**'अर्थदर्शनात्'** इत्यस्य वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः ॥ **'नार्थव्यत्ययः'** इत्यस्य नार्थान्तरावगतिः, किं तु तस्यैवावगतिरित्यर्थः ॥

( तटस्थाक्षेपभाष्यम् )

**उभयमिदं वर्णेषूक्तम्—अर्थवन्तोऽनर्थका इति च। किमत्र न्याय्यम्?**

( समाधानभाष्यम् )

**उभयमित्याह ॥**

**कुतः?**

**स्वभावतः। तद्यथा-समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न। न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद्वाऽनर्थक इति सर्वैरनर्थकैः।**

**तत्र किमस्माभिः शक्यं कर्तुम्?**

**यद्धातुप्रत्ययप्रातिपदिकनिपाता एकवर्णा अर्थवन्तः, अतोऽन्येऽनर्थका इति। स्वाभाविकमेतत् ॥**

( प्रदीपः ) **उभयमित्याहेति**। यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं तत्रैवासावभ्युपगन्तव्या, न सर्वत्रेत्यर्थः ॥

( उद्योतः ) उभयस्य न्याय्यत्वं विषयभेदेनेत्याह—**यत्रान्वयेति**। यथा-'एति' 'इतः' इत्यादौ ॥ **न सर्वत्र**—कूपादावित्यर्थः ॥

( आक्षेपभाष्यम् )

**कथं य एष भवता वर्णानामर्थवत्तायां हेतुरुपदिष्टः-'अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् वर्णव्यत्यये चार्थान्तरगमनात् वर्णानुपलब्धौ चानर्थगतेः संघातार्थवत्त्वाच्च' इति?**

( समाधानभाष्यम् )

**संघातान्तराण्येवैतान्येवंजातीयकानि अर्थान्तरेषु वर्तन्ते—कूपः, सूपः, यूपः-इति।**

**यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थः सूपे स्यात्, सूपार्थश्च कूपे, कूपार्थश्च यूपे, यूपार्थश्च कूपे, यूपार्थश्च सूपे। यतस्तु खलु न किंचित्सूपस्य वा यूपे, यूपस्य वा कूपे, कूपस्य वा यूपे, यूपस्य वा सूपे; अतो मन्यामहे—संघातान्तराण्येवंजातीयकान्यर्थान्तरेषु वर्तन्त इति।**

**इदं खल्वपि—भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम्। यो हि मन्यते—यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति; ऊपशब्दस्त्वस्यानर्थकः स्यात् ॥**

( प्रदीपः ) **संघातान्तराणीति**। तदुक्तं—

**'न कूपसूपयूपानामन्वयोऽर्थस्य विद्यते।**
**ततोऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ॥'** इति ॥

( उद्योतः ) **न कूपयूपेति**। वर्णानामर्थवत्त्वे 'ऊप'शब्दस्य त्रिष्वन्वयादर्थान्वयः स्यात्, न च दृश्यते। ततः समुदायान्तरत्वप्रयुक्तमेवार्थान्तरत्वं तदर्थानवगतिश्च, न तु व्यत्ययादिकृतमित्यर्थः ॥ ननु ककारसकारयकाराणामेवार्थवत्त्वम्, ऊपस्तु शक्त्युद्बोधक एव—इति कस्यार्थस्य सत्ता तत्र तत्रापाद्यत इति चेत्; तर्हि भग्नमेव वर्णानामर्थवत्त्वम्, तत्रैव पदे ऊ-पयोरर्थाभावात्। **किंच** सङ्ख्या समुदायस्यैवार्थ इत्यपि नियन्तुमशक्यं, कूपगतैकत्वस्य यूपादिभिरप्रतीत्या संख्ययाऽपि कादिभिरन्वयव्यतिरेकसत्त्वात्। द्विर्वचनेन वैषम्यं तु प्रागुक्तमेव। तस्मात्समुदायस्यैवार्थवत्त्वम्। तदेव ध्वनयन्नाह—भाष्ये—**इदं खल्वपीत्यादि** ॥

---

१ वर्णा अर्थवन्तो वर्णव्यत्यये चार्थान्तरगमनात्। स्वविपरीतवर्णसमभिव्याहारे तदर्थबोधकत्वाभाववद्वर्णसमुदायसमभिव्याहृतत्वादित्यर्थः। वर्णानुपलब्धौ चानर्थगतेः। स्वानुपलब्धौ तदर्थबोधकत्वाभाववद्वर्णसमुदायसमभिव्याहृतत्वादित्यर्थः। इमौ च हेतू केवलव्यतिरेकिणौ। व्यभिचारप्रदर्शनस्य द्वारभूता याऽनर्थकता तत्साधकत्वमित्यर्थः। एवं च प्रकृतहेतुना वर्णानामनर्थकत्वे साधितेऽर्थवत्त्वसाधकनिरुक्तहेतुद्वयस्य साध्याभाववद्वृत्तित्वरूपं व्यभिचारित्वं बोध्यम् ॥ (र. ना.)

२ **स्वभावत इति**। स्वाभाविकशक्त्यशक्तिमत्त्वादित्यर्थः ॥ केषांचिद्वर्णानां तत्त्वेन तत्त्वेऽपि सर्वेषां न तथा, केषांचिदतत्त्वेनातथात्वेऽपि सर्वेषां न तथेत्यत्र दृष्टान्तमाह—**तद्यथेति** ॥ छाया ॥

३ 'इति कृत्वा सर्वैः' इति च. पाठः।

४ **विषयभेदेनेति**। अन्यथा वर्णत्वसामान्येन तयोर्दुर्वचत्वेनैतदसंगतिः स्पष्टैवेति भावः ॥ छाया ॥

५ **कूपादाविति**। समुदायस्थानां तत्संपादनेन कृतार्थानां **फलवत्संनिधाविति** न्यायेन न पृथगर्थत्वकल्पनमिति भावः ॥ छाया ॥

६ एवं सिद्धान्ते हेतुं श्रुत्वा पूर्वपक्षिणं तटस्थः पृच्छति—**कथमिति**। य एष हेतुः स कथं त्वया तत्रोपदिष्ट इत्यर्थः। सिद्धान्तिनं प्रति किमुत्तरमभिसंधायोक्तमिति यावत्। **हेतुरिति** जातावेकवचनम् ॥ छाया ॥

७ तस्मिन्मूकीभूते सिद्धान्त्येवाह—**संघातान्तरेति** ॥ छाया ॥

८ 'कूपे, सूपार्थश्च यूपे' इति च. प. पाठः ॥

९ 'यूपे सूपस्य वा कूपे कूपस्य वा सूपे' इति च. प. पाठः ॥

१० **इदमिति**। युक्त्यन्तरमपि निश्चितमुच्यत इत्यर्थः। तदेवाह—**भवतेति** ॥ छाया ॥

११ 'न कूपसूपयूपानां' इति क. ख. पाठः ॥

१२ **नच दृश्यत इति**। न हि तेषामर्थानामितरेतरत्रान्वयो दृश्यत इत्यर्थः। अतः **'समुदायस्यैवार्थान्तरवाचित्वं'** इति शेषः ॥ छाया

१३ 'संख्याया अपि' इति गौडपुस्तकपाठः। एतादृशश्च पाठः प्राचीनपुस्तकेषु न दृश्यते ॥

( आक्षेपभाष्यम् )

तत्रेदमपरिहृतम्—*संघातार्थवत्त्वाच्च* इति ॥

( समाधानभाष्यम् )

**एतस्यापि प्रातिपदिकसंज्ञायां परिहारं वक्ष्यति ॥**

( प्रदीपः ) **एतस्यापीति** । '[1]दृष्टा ह्यतदर्थेन गुणेन गुणिनोऽर्थवत्ता[2], सुराऽङ्गवद्रथाङ्गवच्च–इति ॥

( उद्द्योतः ) **दृष्टो हीति** । अतदर्थेन रथाङ्गेन गुणिनो रथस्य यथाऽर्थवत्ता तथा प्रकृतेऽपीति भावः ।

इति वर्णानामर्थवत्ताधिकरणम् ॥

( अथ प्रत्याहारेष्विद्ग्रहणाभावाधिकरणम् )

( सूत्रानुवादभाष्यम् )

[3]अइउण्-ऋऌक्-एओङ्-ऐऔच् ॥

( आक्षेपश्लोकवार्तिकम् ॥ १ ॥ )

**प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ॥**

( भाष्यम् )

**य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेन ग्रहणं कस्मान्न [4]भवति ?**

**किं च स्यात् ?**

**दधि णकारीयति, मधु णकारीयतीति "इको यणचि" इति यणादेशः प्रसज्येत ॥**

( उद्द्योतः ) भाष्ये—**अज्ग्रहणेष्विति** । **प्रत्याहारे**=अक्षरसमाम्नायेऽ[5]**ज्ग्रहणेषु**=अच्प्रत्याहारग्राहकेषु पठितानामनुबन्धानां

---

१ 'दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थं भावः' इति ख. पाठः ॥

२ **अर्थवत्तेति** । व्रजिक्रियायां सामर्थ्यमित्यर्थः । नेदं रथाङ्गानां प्रत्येकमिति भावः ॥ एवं सुराङ्गेषु प्रत्येकमतत्त्वेऽपि समुदायस्यैवोन्मादजननसामर्थ्यम् । तथाच संघातार्थवत्त्वस्यानैकान्तिकत्वादिष्टासाधकत्वमिति भावः ॥ नन्वेवं पदावयवानां प्रकृत्यादीनां वाक्यावयवानां पदानामपि तत्त्वापत्तिरिति वाच्यम्, **यत्रे**त्यादिना कैयटेनैव परिहृतत्वात् । अस्ति च तत्र ताभ्यां प्रकृत्यादेरर्थवत्त्वमिति बोध्यम् ॥ छाया ॥

३ **प्रत्याहारेऽनुबन्धानाम्**–इति श्लोकवार्तिकं खण्डशो व्याख्यातुमाशङ्कादेरसार्वत्रिकत्वं ध्वनयितुं तत्र तथोक्त्या शङ्कायाः प्रासङ्गिकत्वं सूचयितुं च तद्विषयसूत्राण्यासक्तानुबन्धान्याह—**अइउणित्यादिना** ॥ छाया ॥

४ 'भवतीति' इति प. पाठः ॥

५ **अज्ग्रहणे**ष्वित्युपलक्षणम् । एवं चाङ्ग्रहणे चकारस्यापि ग्रहणाद्रुचीनामित्यादा**वट्कुप्वाङ्नुम्व्यवाय** इति णत्वं स्यात् । एवमिण्ग्रहणेन चकारग्रहणाद्रुरुच्चिध्वे इत्यादौ **विभाषेट** इति वा ढः स्यात् ॥ श० कौ० ॥

णकारस्याङ्ग्रहणेन ग्रहणे कर्णेनेत्यादौ णत्वापत्तिः ॥ **चुटुतुलशर्व्यवाये** नेति तु वर्णान्तरे चरितार्थमिति प्रत्याहारघटकवर्णेषु न प्रवर्तते इति केचित् ॥

अत्र वदन्ति–अजतिरिक्तप्रत्याहारेषु तेषां ग्रहणे फलाभावः । तथाहि–न तावद् **'उरण्'** इत्यत्र फलम्, णस्य ऋस्थानिकत्वाभावात् । नापि **'ढ्रलोपे'** इत्यत्र, असंभवात् । **'केऽणः'** इत्यत्रापि न, तत्राच्परिभाषोपस्थितेरेवं सत्यङ्गीकारेण तत्सामर्थ्याद्व्यञ्जनभिन्नस्यैवाणो ग्रहणात् । **'अणोऽप्रगृह्यस्या–'** इत्यत्रापि न, तत्रानुनासिकस्यैव सत्त्वात् 'अप्रगृह्यस्य' इति पर्युदासेन तदन्याक्ष्वेव प्रवृत्तेश्च । **अणुदि**दित्यत्रापि न, एवमपि विधिषु फलाभावात् । वक्ष्यमाणरीत्या **'अट्कुप्वा–'** इत्यत्र कुग्रहणानर्थक्यापत्तेश्च ॥ **'अकः सवर्णे–'** इत्यत्रापि न सवर्णविशेष्यस्याचस्तत्र सत्त्वात् । तत्राज्ग्रहणस्य प्रतिपादयिष्यमाणत्वात् । **केऽण** इत्यत्रोक्तरीत्या निर्वाहाच्च । **इको यणि**त्यत्रेक्यपि न, **स्थानेन्तर**ेत्यनया णस्थाने णस्यैव विधानसंभवात् । तथा वारणसंभवाच्च । **इको गुणे**त्यत्रापि न, तस्य तत्र शब्दपरत्वात् । व्यञ्जनानां गुणादिवारणस्ये**को गुणे**त्यत्र भाष्य एव स्पष्टत्वाच्च । **इकोऽसवर्ण** इत्यत्रापि न, तेन संधिकार्याप्रवर्तनेनादोषात् । **केऽण** इत्यत्रोक्तरीतिसंभवात् । असवर्णग्रहणाद्विद्यमानसवर्णाज्भिन्नस्य सवर्णसदृशस्य ग्रहणाच्च । **'इसुसुक्तान्तात्'** इत्यत्रापि न, ठस्यैवासंभवात् । **श्युक** इत्यत्रापि न, एकाच्पदानुवृत्तेः । श्रिसाहचर्यात्तत्र व्यञ्जनान्योगन्तस्यैव ग्रहणाच्च । **एङि पर**ेत्यत्रापि न, **अकः सवर्णे** इत्यत्र दीर्घ इति योगं विभज्य पूर्वपरयोरित्यधिकारस्यैकादेशस्य दीर्घत्वप्रतिपादनेन तदेकवाक्यतया पक्षान्तरेऽपि तत्राप्रवृत्तिकल्पनेनासंभवात् । **एङः पदान्ता**दित्यत्रापि न, असिद्धत्वेनासंभवात् । **एचोऽयवे**त्यत्रापि न, **स्थानेन्तर**ेत्यनया वारणसंभवात् । **वृद्धिरेची**त्यत्रापि न, **इको गुणे**त्यत्रोक्तरीतिसंभवात् । एच **इग्**ित्यत्रापि न, **स्थानेन्तर**ेतिनिर्वाहात् । असिद्धत्वाच्च । अच्यग्रहणस्य प्रतिपादयिष्यमाणत्वेन ह्रस्वस्यैवाप्राप्तेश्च ॥ **अट्कुप्वि**त्यत्रापि न, तथासति ऋङ्योरट्त्वादन्येषां तत्सवर्णत्वादेव सिद्धे कुग्रहणानर्थक्यापत्तेः । एवं च रुचीनामित्यादौ न दोषः । तत्र तत्सामर्थ्यात्तद्भिन्नस्यैवाट्त्वेन ग्रहणात् । एवं **चुटुतुलशरित्यस्य** सामान्यापेक्षत्वेन तत्र प्रवृत्तिसंभवाच्च । **इण** इत्यनुवृत्तौ **विभाषेट** इत्यत्रापि न, इट्साहचर्यात्तदन्यस्यैवेणस्तत्र ग्रहणात् । एवंच रुरुच्चिध्व इत्यादौ न दोषः । अत एव पूर्वसूत्रेऽप्येवम् । एवमन्यत्रापि बोध्यम् ॥ नैवं परिहार **इको यणची**त्यत्राजंशे संभवति, साहचर्यं त्वनित्यम्, यणापि तत्प्रवृत्तेश्च ॥ अतएव दधि णकारीयतीत्यत्र यणापत्तिरेव भाष्ये दत्ता । अत एव स्थान्यंशेऽतिप्रसङ्गोऽपि नोद्भावितः । अत एव सूत्रचतुष्टयोपन्यासः सफलः । अन्यथा तदसंगतिः स्पष्टैवेत्यन्ये ॥ परे तु **न य्वाभ्या**मित्यादौ यथासंभवमस्तु कश्चित्तत्फलम् । तथापि न दोषः । तावदंशस्याप्युपलक्षणत्वेन ग्रहणात् । **अज्ग्रहणे**ष्वित्युक्तिस्तु व्यापकत्वात् प्रथमोपस्थिताकारत्यागाभावसूचनार्थत्वाल्लोकशास्त्रप्रसिद्धत्वाच्च बोध्या । बहुवचनं तु प्राग्वत् । एवमग्रेपि । सूत्रचतुष्टयोपन्यासोऽपि अत्र पक्षे सफलः, तेनोक्ताभिमतस्थलेष्वेव शङ्कादिबोधनात् । इयं चात्र सूत्रे तदुपन्यासपूर्वकमुपन्यास एवापत्तिर्नान्यथा कथमपि, अनिष्टापत्तेः । एतदरुचिसूचनायैव मनसि निधायेत्यत्र **मनसी**त्युक्तमित्याहुः । वस्तुतस्तु–प्रथमोपस्थितत्यागे बीजं प्रकटयितु**मणगा**दीत्युक्तिः । तत्र च प्रागुक्तरीत्या फलाभावः स्पष्ट एव । त एव चादिपदग्राह्याः । चरमे ऐचि फलसत्त्वेऽप्यादिभूताकारात्यागाय तस्यैवोक्तिरिति सोऽप्युपलक्षणत्वेन ग्राह्यः । अज्ग्रहणेष्वित्युक्त्या चानुबन्धघटितप्रत्याहार एव शङ्कादिसूचनात् । एवंच न कोपि दोष इति बोध्यम् ॥ छाया ॥

प्रत्यासत्त्याऽक्षु ग्रहणं कुतो नेत्यर्थः ॥ तत्फलितार्थमाह—**य एते इति ।** अक्षु=तद्बोधकसूत्रेषु प्रागुक्तेषु ॥ **प्रत्याहारार्थाः**=तदुपकारकाः ॥ **अज्ग्रहणेन**=अच्शब्देन ॥ अणगादिप्रत्याहारेषु तेषां ग्रहणे फलाभावं मनसि निधाय **'अज्ग्रहणेन'** इत्युक्तम् । न च हशादौ ट्ग्रहणस्यापत्तिः । हल्षु उच्चारणार्थाकारोच्चारणेनोच्चारणार्थवर्णहीनहलां हल्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् ॥

**( सिद्धान्तसमाधानश्लोकवार्तिकखण्डम् )**

## *आचारात्,

**( भाष्यम् )**

**किमिदमाचारादिति ?**

**आचार्याणामुपचारात् । नैतेष्वाचार्या अच्कार्याणि कृतवन्तः ॥**

**( प्रदीपः ) आचारादिति ।** आचारः=व्यवहारः । 'तृषिमृषिकृषेः—' इति यण् न कृतः ॥

**( सिद्धान्तसमाधानश्लोकवार्तिकखण्डम् )**

## *अप्रधानत्वात्,

**( भाष्यम् )**

**अप्रधानत्वाच्च । न खल्वप्येतेषामक्षु प्राधान्येनोपदेशः क्रियते ।**

**क्व तर्हि ?**

**हल्षु ।**

**कुत एतत् ?**

**एषा ह्याचार्यस्य शैली लक्ष्यते—यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति—अचोऽक्षु हलो हल्षु ॥**

**( प्रदीपः ) अप्रधानत्वादिति ।** 'प्रधानाप्रधानसंनिधौ प्रधानमेव कार्याणां प्रयोजकं' इति परार्थानामनुबन्धानामच्संज्ञा न प्रवर्तत इत्यर्थः ॥ **शैलीति ।** शीले भवा—**शैली**=समाधानपूर्विका प्रवृत्तिः । यथा—लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते क्षत्रियैः सह क्षत्रिया इति, एवमिहापि वर्णा आचार्येण निर्दिष्टा इत्यर्थः ॥

**( उद्योतः )** (भाष्ये) **प्राधान्येन**—प्रत्याहारेषु ग्रहणार्थत्वेन ॥ **परार्थेति ।** अजादिस्वरूपबोधनार्थत्वेन **परार्थत्वम् ।** यथा—अकारादयः संज्ञिविशेषसमर्पणायोपात्ताः, न तथा णादय इत्यर्थः ॥ अप्रधानत्वमप्याचार्याचारेण साधयति—भाष्ये—**आचार्यस्येति ।** आचार्यशब्देन—अनादिः शब्दपुरुषः । एवंचात्यत्र संज्ञिविशेषसमर्पणायोपात्तत्वादितामसज्ञित्वमेवेति भावः ॥

**( सिद्धान्तसमाधानश्लोकवार्तिकखण्डम् ॥ )**

## *लोपश्च बलवत्तरः ॥ १ ॥

**( भाष्यम् )**

**लोपः खल्वपि तावद्भवति ॥**

**( प्रदीपः ) लोपश्चेति ।** परत्वान्नित्यत्वाद्वा 'आदिरन्त्येन सहेता' इत्यनेनाच्संज्ञाविधानकालेऽनुबन्धानां लोपादसन्निधानादच्संज्ञा न प्रवर्तते । अनुबन्धा ह्युच्चारण एव सन्ति, इत्संज्ञाप्रतिबद्धं च कार्यमसन्त एव प्रतिपादन्ति, स्वतस्तु न किंचित्कार्यं प्रतिपद्यन्ते ॥

**( उद्योतः ) 'परत्वात्'**इत्याद्यन्तरङ्गत्वोपलक्षणम् । एवञ्च पूर्वमनुबन्धलोपात् **'आदिरन्त्येन—'**इतिसंज्ञाविधानकालेऽसंनिधानादित्यन्वयः । एवञ्चानुबन्धसदृशभिन्नानामेव मध्यगसदृशानां ग्राह्यतां बोधयतीति भावः ॥ भाष्ये—**लोपः खल्वपि तावदिति ।** सर्वतः

---

१ किं च टादेरुपदिष्टत्वात्तत्र ग्रहणं न । यदि तत्रापि ग्रहणमिष्टं स्यात्तर्हि द्विस्तमुपदिशेद्धवत् इत्यपि बोध्यम् ॥ छाया ॥

२ एवं पूर्वपक्षे समाधित्रयम्—**आचारादित्यादि ।** तत्र तावदाचारो ज्ञापकः, स च व्यापकः । अक्षु हलामनुबन्धानां सर्वेषामग्रहणे उणादेल्यादीनां तत्त्वसंभवात् ॥ छाया ॥

३ एवं ज्ञापकेन सर्वसिद्धावपि तत एव **प्रधानाप्रधानयो**रिति लोकन्यायमूलकोऽपरो हल्षु अजग्रहस्यापि प्रसङ्गतः साधकः समाधिरित्याह—**अप्रधानत्वादिति ।** अक्षु हल्षु च णादीनामुपदेशेऽपि यत्रानन्यार्थ उपदेशस्तत्र स्वरूपप्रतिपत्त्यर्थ एव सः । हल्षु चोच्चारणार्थाकारयुतानां तेषामेव तथा, न त्वन्येषाम् । केषांचिदुच्चारणार्थत्वात् केषांचिदित्संज्ञासिद्ध्यर्थत्वात् । एवं तेषामक्ष्वपि अणादिसंज्ञासिद्ध्यर्थत्वेनान्यार्थत्वान्न स्वरूपप्रतिपत्तये सः । अत एव लोकन्यायमूलकत्वेनाद्यतोऽस्य लघुत्वात्सौत्रत्वात्तेषामुपपत्तौ तदसंभवाच्चोक्तिः । तस्मादयमपि व्यापकः । यद्यपि वार्तिकादयुक्तरीत्या एक एव हेतुरिति प्रतीयते, तथापि भगवतोक्तयुक्त्या खण्डशः सचकारं व्याख्यातत्वाद्धेतुद्वयमेवेति बोध्यम् ॥ छाया ॥

४ 'अप्रधानत्वाच्च' इत्यस्य प. पुस्तके न पाठः ॥

५ तदेवं संज्ञाप्रवृत्तिकालेऽनुबन्धानां संनिधानमभ्युपेत्य द्वेधा समाहितम् । वस्तुतस्तु तदेव नेति हल्स्वपि हलामितामग्रहणमित्याह—**लोपश्चेति** ॥ छाया ॥

६ नन्विदमयुक्तम् । कार्यकालपक्षस्य मुख्यतया तत्र संज्ञाशास्त्रस्य पृथग्वाक्यार्थाबोधेनान्तरङ्गत्वेन तदानीमेव प्राप्त्या कृताकृतप्रसङ्गित्वाभावादत आह—**परत्वादित्याद्यन्तरङ्गेति** ॥ छाया ॥

७ **एवं चेति ।** अन्तरङ्गत्वेन बाधकत्वे चेत्यर्थः ॥ छाया ॥

८ **सर्वत इति ॥** सकलसंज्ञात इत्यर्थः । यत्र तु प्रत्याहारे योऽनुबन्धोऽपेक्षितस्तस्य **'आदिः—'** इति वचनसामर्थ्यात् प्रत्याहारान्यथानुपपत्त्या च तत्प्रवृत्तेः प्राक्, लोपेन लुप्ते वा तस्मिन्भूतपूर्वेण तेन सहित आदिः संज्ञा भविष्यति । काकादिवत् स्मर्यमाणानामेव तेषां तत्रोपयोगात् । मध्यानां तु न तेषां सा, श्रूयमाणेष्विकारादिषु सावकाशत्वादिति कृष्णरत्नकौस्तुभादयः ॥ वस्तुतस्तु—इदन्त्यसदृशेनेत्यर्थस्यावश्यकत्वेन तासां सिद्धिः सूत्रसार्थक्यं च । अन्यथा व्यक्तिपक्षेऽनिर्वाहात् । तत्त्वप्रत्यभिज्ञाया अपि सादृश्यमूलकत्वात् । किंच—'आदिरकारादिः अन्त्येनेता णकारादिना सहोच्चार्यमाण आबन्ताक्षिप्तानां संज्ञा'—इत्येवम् **'आदिरन्त्येन'** इत्येकवाक्यतया **'अइउण्'** इत्यादीनां संज्ञासूत्रत्वेन तेषां मुख्यकार्यकालपक्षे विध्येकवाक्यतावश्यकता, कार्यार्थत्वात् संज्ञायाः । तथाच विधिस्थाणादेः संज्ञात्वं लब्धम् ।

प्रथममित्यर्थः ॥ यत्तु एवमपि[1] 'लण्'इत्यकारस्य हल्षु ग्रहणापत्तेः 'आचारात्'इत्येव समाधिरत्र युक्त इति । तन्न, 'अतो लरान्तस्य' इति सूत्रे लकारोच्चा[2]रणेन 'लण्'सूत्रस्थस्यानुनासिकत्वाभावज्ञापनात् । एवञ्च[3] तस्यानुबन्धत्वमेव न, किन्तूच्चारणार्थत्वमेव । अत एव भाष्ये 'अइउण्'इत्यादिसूत्रचतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता । श्लोके च 'अज्ग्रहणेषु'इत्येवोक्तम् । **उरण्रपर**सूत्रे च लपरत्वस्योपसंख्यानमेव कार्यमिति **तुल्यास्य**सूत्रे वक्ष्यते ॥

( सिद्धान्तसमाधानरीत्यन्तरश्लोकवार्तिकम् )

***[4]ऊकालोऽजिति वा योग-**
**स्तत्कालानां यथा भवेत् ।**
**अचां ग्रहणमच्कार्यं**
**तेनैषां न भविष्यति ॥ २ ॥**

( भाष्यम् )

**अथवा योगविभागः करिष्यते—"ऊकालोऽच्" उ-ऊ-उ३ इत्येवंकालोऽज्भवति । ततः[5]—ह्रस्वदीर्घप्लुतसंज्ञश्च भवति—ऊकालोऽच् ॥**

( प्रदीपः ) **ऊकालोऽजिति** । सिद्धेऽच्त्वे योगविभागेन कालविशेषावच्छिन्नस्याच्त्वं नियम्यते, ततोऽनुबन्धानामूकालत्वाभावादच्त्वाभावः ॥

( उद्योतः ) भाष्ये—'**तत्कालानामचां ग्रहणमच्पदेन यथा स्यात्**-इति योगविभागः कार्यः' इत्यन्वयः ॥ **सिद्धेऽच्त्व इति** । अकारादीनामुपदेशात्सवर्णग्रहणाच्चेति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि[6] 'कुक्कुटः' इत्यत्रापि प्राप्नोति ॥**

( प्रदीपः ) **एवमपीति** । ककाराकृतेरुपदेशान्मात्रिकस्याच्त्वं मन्यते[7] ॥

( उद्योतः ) ननु ककारद्वयस्य मात्रिकवर्णत्वं कथम्, एकस्यैव ऋलृगित्यत्रोपदेशात्-अत आह—**ककाराकृतेरिति** ॥

---

तथा सति '**उरण् रपरः**' '**यणचि**' इत्यादौ तयोराद्यन्तत्वस्य कथमप्यभावाद्वक्ष्यमाणरीत्या तस्येत्त्वाभावाच्च 'आदिसदृश इत्सदृशेन सह' इत्यर्थं विनेष्टासिद्धेः स्फुटत्वात् । '**अइउणित्यादि**' सूत्रेष्वेव प्रत्याहारसिद्धिरिति तु न, सहोच्चारणाभावात् । किंच '**आदिः**'-इति सूत्रदृष्ट्या त्रिपाद्या यथोद्देशपक्षेऽसिद्धत्वेऽपि स्वगृहे जातशक्तिग्रहेण '**इको झल्**' '**सनूझलोः**' इत्यादाविव '**झलां जशोऽन्ते**' इत्यादौ त्रिपाद्यामपि व्यवहारः पदादिव्यवहारवत् । कार्यकाले तु संज्ञाशास्त्रस्य पृथग्वाक्यार्थबोधस्यैवाभावेन विधिप्रदेशे कल्पनावश्यकत्वेनासिद्धत्वशङ्कापि नेति न 'झलाम्' इत्यादौ दोषः । एवंच '**एच इग्**–' इत्यादौ संहितायां जश्त्वेन तत्र तदप्रवृत्तेरिष्टत्वेऽप्यर्थबोधानुकूलवाक्ये कल्पिते ककारसत्त्वेन पक्षद्वयेऽपि तत्प्रवृत्त्येष्टसिद्धिः । **किंच** स्वसाध्यप्रत्याहारघटितत्रिपादीस्थसूत्राणां स्वप्रवृत्तावगत्या सिद्धत्ववत्त्रिपादीस्थकार्यघटितप्रत्याहारघटितसूत्रेषु सपादसप्ताध्यायीस्थेषु स्वप्रवृत्तावगत्या प्रवृत्त्यर्थमुक्तरीत्या वस्तुत एव वा तेषामसिद्धत्वस्यैवेष्टत्वेन सत्त्वेन वा शङ्काया एवाभावः, ज्ञापकस्य विशेषापेक्षत्वात् । **किंचे**गादिशब्देष्वित्संज्ञायाः प्रसङ्ग एव न, भावघञ्पक्षेऽज्ञातस्वस्वरूपज्ञापकोच्चारणविषयत्वाभावादप्रवृत्तिवत्करणघञ्पक्षे रूढ्यर्थतावच्छेदकप्रतिपादकत्वसत्त्वेऽपि योगार्थतावच्छेदकतादृशोपदेशसाधनत्वाभावात्तदप्रवृतेः । फलाभावादपि तदप्रवृत्तेश्च । प्रत्याहारसिद्धेरन्यथाऽप्युक्तरीत्या सिद्धत्वात् । अत एव वैयाकरणशब्दे ञित्स्वरो न, तस्येत्सदृशत्वेऽपि तत्त्वाभावात् । ऐऔजिति चेत्संज्ञामादाय तु न सः, प्रयोगे विधीयमानस्य तत्त्वाभावात् । यतस्तदुपस्थापके ऐच्पदे तत्त्वाभावः । धुडादौ तु न तथेति तत्र तदुपस्थाप्ये आनर्थक्यात्तत्प्रवृत्तावप्यत्र न तथेति वैषम्यं स्पष्टमेव । एवं चेत्पदस्योक्त एवार्थ इत्यस्यापि समाधेर्व्यापकत्वमेवेति बोध्यम् ॥ छाया ॥

१ **एवमपीति** । लोपस्य बलवत्त्वेऽपीत्यर्थः । तथाच हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेन '**उपदेशेऽज्**–' इत्यस्य वाक्यार्थाभावेन **लणि**त्यकारस्येत्संज्ञालोपयोरभावेन प्रत्याहारेषु जातिग्रहणपक्षस्यैव भाष्यकृता सिद्धान्तितत्वेन हल्प्रत्याहारे लणित्यकारप्रवेशे मामाँस्त्रायस्वेत्यत्रानुनासिकपक्षेऽनुस्वारापत्तिर्दुर्वारा, सोऽस्तीत्यादौ सुलोपापत्तिश्चेति भावः ॥ छाया ॥

२ **लकारोच्चारणेनेति** । लण्सूत्रस्थाकारस्यानुनासिकत्वे रप्रत्याहारेण सिद्धे लकारोच्चारणं व्यर्थं स्यादिति भावः ॥

३ ननु हल्प्रत्याहारेऽकारस्य प्रवेशो दुर्वारः, नहि तत्र लोपो लभ्यते । ततः प्रागच्संज्ञाविरहेणो**पदेशे**जितीत्संज्ञाया अप्रवृत्तेः । एवं चाद्यसमाधानमपि दुरुपपादम् । उदाहृतस्याचारस्य **लोपश्च बलवत्तरः** इत्यनेनैव गतार्थत्वादिति चेत् । **सोऽस्यादि**रिति निर्देशेन प्रथमस्य गुणानां भेदकत्वेन चरमस्य च समाधानस्य सूपपादत्वादिति **कौस्तुभो**क्तं तु प्राचामनुरोधेनेति सूचयन्नाह—**एवं चेति** ॥

४ न्यायाद्यनभिज्ञं प्रति गत्यन्तरमाह—**ऊकालोऽजितीति** ॥ छाया ॥ **वा**–अथवा 'ऊकालोऽच्' इति योगः कार्यः, येन तत्कालानामचामच्पदेन ग्रहणं यथा भवेत्–तत्कालानामचामेवाच्संज्ञा यथा स्यात्, तेन **एषां**–णकारादीनामितामच्कार्यं न भविष्यतीति वार्तिकार्थः ॥

५ 'ततो ह्रस्वदीर्घप्लुतः । ह्रस्व' इति च. छ. पाठः ॥

६ अत्रैकदेशी दोषमाह—**एवमपीति** ॥ छाया ॥ **कुक्कुट इति** । ऊकालोऽजिति पृथग्योगे–ऊकालो वर्णोऽच्संज्ञको भवतीति सूत्रार्थः । तथा च 'क्कु' इत्यत्र ककारद्वयस्यैका मात्रा, तत्र मात्रार्धद्वयमपि ककारस्यैवेति वर्णैकत्ववादे ककारद्वयस्याच्संज्ञा प्राप्नोतीति यणाद्यापत्तिः । 'अप्सु' इत्यादौ पकारसकारसंयोगे नायं दोषः, ऊकाल एको वर्णोऽत्र नास्तीत्याशयः ॥

७ **मन्यते इति** । नहि वचनसहस्रेणापि अपूर्वो धर्मस्तत्र प्रतिपादयितुं शक्यः, अच्समुदाये तत्त्ववद्धल्समूहे तत्त्वस्याभावादिति भावः ॥ छाया ॥

( समाधानभाष्यम् )

**तस्मात्पूर्वोक्त एव परिहारः ॥**

**( प्रदीपः )** अत्र च यद्यप्ययं परिहारोऽस्ति–'द्वावेतौ ककारौ, न च वर्णद्वयेनैका जातिर्व्यज्यते' इति, तथापि पूर्वमेव 'मात्राकालोऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्ति'इत्युक्तत्वात्पुनरिह नोक्तः ॥

**( उद्द्योतः ) न च वर्णद्वयेनेति** । जातिरपि स्वपर्याप्त्यधिकरणव्यञ्जकैव तद्द्वारैव कार्यभागिति भावः ॥

( भाष्यम् )

**एष एवार्थः—**

( श्लोकवार्तिकम् )

**अपर आह—**

***ह्रस्वादीनां वचनात्**
**प्राग्यावत्तावदेव योगोऽस्तु ।**
**अच्कार्याणि यथा स्यु-**
**स्तत्कालेष्वक्षु कार्याणि ॥ ३ ॥**

**( उद्द्योतः )** भाष्ये—**एष एवार्थ इति** । **'अपर आह'** इत्यादिना वार्तिककृतोक्त इत्यर्थः ॥ **ह्रस्वादीनामिति** । **'ह्रस्वदीर्घप्लुतः'** इत्यतः प्राक् यावत् 'ऊकालोऽच्' इति, तावदेवास्तु पृथक्सूत्रम् । फलं दर्शयति—**अच्कार्याणीति** । अज्निमित्तकार्याणि तत्कालेष्वक्षु कर्तुमर्हाणि यथा स्युः–इत्यन्वयः ॥

( इति प्रत्याहारेष्विद्ग्रहणाभावाधिकरणम् ॥ )

( अन्तःस्थोपदेशाधिकरणम् ॥ )

( आक्षेपभाष्यम् )

**अथ किमर्थमन्तःस्थानामण्सूपदेशः क्रियते ?**

**( प्रदीपः ) अथ किमर्थमिति** । 'अजुदित्सवर्णस्य' इति कस्मान्न कृतमिति **प्रश्नः** ॥ इण्ग्रहणेन ग्रहणार्थस्त्वन्तःस्थानामत्रावश्यकर्तव्य उपदेशः 'गीर्षु' इत्यादौ मूर्धन्यो यथा स्यादिति ॥

**( उद्द्योतः )** अणः सुष्वुपदेशः—**अण्सूपदेशः**=अण्शब्दोच्चारणम्, तदन्तःस्थानां बोधकं **'अणुदित्–'**इत्यत्र किमर्थं क्रियत इत्यर्थो भाष्यस्येत्याह—**अजुदिदिति** ॥ **'अणसु**=अण्मध्ये, तेनात्र स्थाने किमर्थं उपदेशः' इति तु नार्थ इत्याह—**इण्ग्रहणेनेति** ॥

( समाधानभाष्यम् )

**ईह–सय्यँन्ता, सव्वँत्सरः, यल्ँलोकं, तल्ँलोकमिति परसवर्णस्यासिद्धत्वादनुस्वारस्यैव द्विर्वचनम् । तत्र परस्य परसवर्णे कृते तस्य यय्ग्रहणेन ग्रहणात् पूर्वस्यापि परसवर्णो यथा स्यात् ॥**

---

१ सिद्धान्तीमं दोषं परिहरति—**तस्मादिति** ॥ यतस्तत्र **'नच मात्रिकं व्यञ्जनमस्ति'** इति **एओङ्** सूत्रे उक्तरीत्या न दोषप्राप्तिरतो न दुष्टत्वमस्य, किंतु पूर्वोक्तः परिहार एवेत्यर्थः ॥ यद्वा पूर्वोक्तः 'एओङ्' सूत्रोक्त एवात्र परिहार इत्यर्थः ॥ यत्तु–**पूर्वोक्त एव परिहार** इति ग्रन्थ **आचारादि**त्यादिप्रागुक्तपरिहारपरः–इति । तन्न, बहुवचनाभावात् । एकस्यैवेष्टत्वे विनिगमनाविरहाच्च । अस्य प्रागुक्तत्वेनात्र तद्वथानुक्त्या तदसंगतेश्च । तदाकाङ्क्षाशान्त्यभावाच्च । उत्तरग्रन्थस्यैवमपीत्यतः प्रागौचित्येनाग्रे तदुक्त्यसंगत्यापत्तेश्च । तस्मादुक्त एवार्थः, न भवदभिमतः ॥ छाया ॥ अत्र दाधिमथानुकरणशीलो गुरुप्रसादः–'पूर्वोक्तः–आचारादित्यादिवार्तिकोक्तं समाधानत्रयं' इत्याह । तत् छायादर्शनेन पराहतमेव । अपि च 'तस्मात्पूर्वोक्त एव परिहारः । एष एवार्थः' इति भाष्ये एतच्छब्देन 'ऊकालोऽच्' इत्यस्य ग्रहणं न त्वाचारादित्यादीनाम्, अग्रिमश्लोकवार्तिकविरोधात् ॥ आ. संज्ञके 'तस्मात्पूर्व एव' इति पाठः ॥

२ अस्यादुष्टत्वादेवामुमर्थमृष्यन्तरसंवादेन द्रढयति—**एष एवार्थ इति** ॥ अन्यवार्तिककृताऽप्युक्त इति शेषः ॥ छाया ॥ एष एवार्थ इति भाष्यकारवचनम्, अपर आह इत्यारभ्य वार्तिककृद्वचनम् । 'ऊकालोऽजिति वा योगः' इति वार्तिककार एवान्यमतमत्र संगृह्णाति । यावत् ह्रस्वादीनां वचनात्प्राक् तावदेव योगोऽस्तु–ह्रस्वदीर्घप्लुत इत्यतः प्राक् यावान् भागस्तावदेव प्रथमं सूत्रमस्तु । ऊकालो वर्णोऽच्कार्यं लभत इति तदर्थः । नैतदच्संज्ञाविधायकं, आदिरन्त्येनेति सूत्रेण तस्याः सिद्धत्वात् । एवञ्चानेनाच्त्वप्रयुक्तं कार्यं ऊकालस्य वर्णस्यैवेति नियम्यते । अत एव 'तावदेव' इत्येवकारो वार्तिके प्रदर्शितः । तथा च णकारादीनामच्संज्ञायामपि ऊकालत्वाभावात्तत्प्रयुक्तं कार्यं न भवतीति पूर्ववार्तिकतोऽस्य विशेषः । तावता योगेन फलितमाह—**अच्कार्याणीति** । **आदिरि**त्यनेन संज्ञासिद्धौ पुनः संज्ञाविधानं व्यर्थमित्यरुच्यैव द्वितीयमिदं प्रदर्शितं भगवतेति प्रतीयते ॥

३ प्रसङ्गादन्तःस्थानामप्यत्रोपदेशस्य फलं श्रोतुं पृच्छति—**अथेति** ॥ यरलवानामण्मध्ये उपदेशस्य किं फलमित्यर्थः । अयं भावः—अत्र **'हण्'** इत्येकं सूत्रं कार्यम् । **'यवरलट्'** इति तदग्रे कार्यम् । तेन तेषामट्त्वस्य इत्त्वस्यात्त्वस्य हल्त्वस्याल्त्वस्यात्र सिद्धिः ॥ नचैवमपीण्त्वस्याभावाद्गीर्ष्वित्यादौ षत्वं न स्यादिति वाच्यम् । **शर्व्यवायेपी**त्यत्र रप्रश्लेषेण द्विरेफनिर्देशेन **रोरी**ति लोपे सौत्रत्वाद-दीर्घेण चात्र निर्वाहात् । वस्तुतस्तु—**इण्कोर्नुम्विसर्जनीये**ति संहितापाठे रेफप्रश्लेषेण **रोरी**तिलोपेन निर्वाह इति बोध्यम् । यान्तलान्तशब्दास्तु तादृशा नैव सन्ति । एवं चात्र पाठेन लब्धस्याण्त्वस्य किं फलमिति ॥ छाया ॥

४ ननु 'अणसु किमर्थमन्तःस्थानामुपदेशः क्रियते' इति यथाश्रुतव्याख्याने 'गीर्षु' इत्यादौ षत्वार्थमन्तःस्थानामिण्सूपदेश आवश्यक इति 'अणसु' इत्यादिभाष्यमनुपपन्नं स्यादत आह–**अणः सुष्ठूपदेश इति** ॥

५ **तेन–'अणसु'** इति सप्तम्यन्तपदच्छेदेन, अन्तःस्थानां अत्र किमर्थमुपदेश इति नार्थः ॥

६ उत्तरमाह—**इहेति** । वक्ष्यमाणेष्वित्यर्थः ॥ छाया ॥

७ **अनुस्वारस्यैवेति** । अपवादे परसवर्णे तिरोहिते पूर्वमेव द्वित्वप्रवृत्तिरिति भावः । एतेन मस्य परसवर्णस्य च व्यावृत्तिः ॥ छाया ॥

८ **यय्ग्रेति** । अन्यथात्र निरनुनासिकस्यैव पाठेन तस्यातत्त्वेन तत्परत्वात् स न स्यादिति भावः ॥ छाया ॥

( उद्द्योतः ) 'इह सय्यँन्ता' इत्यादिभाष्यं 'गुणा भेदकाः' इति पक्षे। भेदकत्वपक्षे चेदमेवाणग्रहणं मानमिति भावः। यथास्थितसूत्रन्यासे इदम्। जातिपक्षेणाणग्रहणप्रत्याख्याने तु न कश्चिद्विचारः। एवं 'गुणा अभेदकाः' इति न्याय्यपक्षेऽपि न विचार इति बोध्यम् ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्—*द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्* इति, यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति ॥

( उद्द्योतः ) भाष्ये—वक्ष्यत्येतदिति। सिद्धत्ववचनं चावश्यकम्। अन्यथा परस्यानुस्वारस्य 'वा पदान्तस्य' इति परसवर्णे तस्यासिद्धत्वात्पूर्वस्य 'अनुस्वारस्य ययि-'इत्यस्यानापत्तौ रूपासिद्ध्यापत्तेः ॥

( समाधानसाधकभाष्यम् )

परसवर्णे तर्हि कृते तस्य यग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यात् ॥

( उद्द्योतः ) तर्हि द्विर्वचनसिद्धिरेव फलमित्याह—परसवर्णे तर्हीति ॥

( समाधानबाधकभाष्यम् )

मा भूत् द्विर्वचनम् ॥

( समाधानसाधकभाष्यम् )

ननु च भेदो भवति—सति द्विर्वचने त्रियकारम्, असति द्विर्वचने द्वियकारम् ॥

( प्रदीपः ) ननु च भेद इति। श्रुतिकृतोऽस्त्येव भेदः, सूक्ष्मत्वात्तु दुर्लक्ष्यः ॥

( उद्द्योतः ) ननु न भेदः, अनुपलब्धेरत आह—श्रुतिकृत इति ॥

( समाधानबाधकभाष्यम् )

नास्ति भेदः, सत्यपि द्विर्वचने द्वियकारमेव ॥ कथम्?

"हलो यमां यमि लोपः" इत्येवमेकस्य लोपेन भवितव्यम् ॥

( समाधानसाधकभाष्यम् )

एवमपि भेदः । सति द्विर्वचने कदाचिद्द्वियकारम्, कदाचित् त्रियकारम् । असति द्वियकारमेव ॥

स एष कथं भेदो न स्यात्?

यदि नित्यो लोपः स्यात्। विभाषा च स लोपः॥

( उद्द्योतः ) [ भाष्ये ] यदि नित्यो लोपः स्यादिति। तदा भेदो न स्यादित्यर्थः ॥ विभाषा चेति। चस्त्वर्थे ॥

( समाधानबाधकैकदेशिभाष्यम् )

यथाऽभेदस्तथाऽस्तु ॥

( उद्द्योतः ) एकदेश्याह—यथाऽभेद इति। यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति, तथैवास्तु । माऽनुवृतत् विभाषाग्रहणमिति भावः ॥

( समाधानसाधकसिद्धान्तिश्लोकवार्तिकम् )

*अनुवर्तते विभाषा,

शरोऽचि यद्वारयत्ययं द्वित्वम् ॥

( भाष्यम् )

यदयं "शरोऽचि" इति द्विर्वचनप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः—अनुवर्तते विभाषेति ॥

( उद्द्योतः ) तृतीयो ज्ञापकमुपन्यस्यति—अनुवर्तत इत्यादिना । 'झरो झरि'इति लोपे–इत्यर्थः। मध्यस्थतया 'हलो यमां' इत्यस्यापि वैकल्पिकत्वं सिद्धमिति भावः॥

( जिज्ञासाभाष्यम् )

कथं कृत्वा ज्ञापकम्?

( तस्यैव हेतुसूचकमुत्तरार्धम् )

*नित्ये हि तस्य लोपे

प्रतिषेधार्थो न कश्चित्स्यात् ॥ १ ॥

( भाष्यम् )

यदि नित्यो लोपः स्यात्, प्रतिषेधवचनमनर्थकं स्यात् । अस्त्वत्र द्विर्वचनम्, "झरो झरि सवर्णे" इति लोपो भविष्यति। पश्यति त्वाचार्यः—विभाषा स लोप इति, ततो द्विर्वचनप्रतिषेधं शास्ति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति ज्ञापकम्। नित्येऽपि तस्य लोपे स प्रति-

---

१ यथास्थितसूत्रन्यासे–अण्ग्रहणप्रत्याख्यानाभावे, इदं-सय्यँन्तेत्यादि फलप्रदर्शनम्॥

२ परसवर्णेति । इदमुपलक्षणं 'पूर्वत्रासिद्धीयमद्विर्वचने' इति परिभाषाया अपि ॥ छाया ॥

३ 'तावत्पूर्वं भवति' इति प. पाठः ॥

४ एवं प्रयोजने खण्डिते द्वितीयं तत्त्रैवाह—परेति ॥ छाया ॥

५ इदमपि खण्डयत्येकदेशी—मा भूदिति ॥ छाया ॥

६ उत्तरमाह सिद्धान्ती—ननु च भेद इति ॥ उच्चारण इति रूप इति वा शेषः ॥ छाया ॥

७ अनुपलब्धेरिति । अत एव 'व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषो नास्ति' इति भाष्यं संगच्छते ॥ छाया ॥

८ एकदेशी प्रत्याख्याता आह—नास्तीति ॥ छाया ॥

९ उत्तरमाह सिद्धान्ती—एवमपीति ॥ छाया ॥

१० प्रश्नपूर्वकं भेदमुपसंहरति–स एष इति। प्रश्नस्योत्तरमसंभावनारूपमाह—यदीति । असंभावनामेव दर्शयति—विभाषेति ॥ छाया ॥

११ सिद्धान्तीति। सिद्धान्तिभाष्यसहायवार्तिकमित्यर्थः॥ वार्तिककारीयमिदमार्याधमिति केचित् । भाष्यकारशिष्यस्येति तत्त्वम् । पूर्ववार्तिकसंबन्धाभावात् ॥ छाया ॥ अत्र यद्वक्तव्यन्तत्प्रस्तावनायामुच्यते ॥

१२ एकदेशी प्रत्याख्याता खण्डयति—नैतदिति ॥ छाया ॥

षेधोऽवश्यं वक्तव्यः । यदेतत्—"अचो रहाभ्याम्" इति द्विर्वचनम्, लोपापवादः स विज्ञायते ॥

कथम्?

यर इत्युच्यते । एतावन्तश्च यरः—यदुत झरो वा यमो वा । यदि चात्र लोपः स्याद्द्विर्वचनमनर्थकं स्यात् ॥

किं तर्हि तयोर्योगयोरुदाहरणम्?

यदङ्कृते द्विर्वचने त्रिव्यञ्जनः संयोगः—प्रत्तम्, अवत्तम्, आदित्यः ॥

इहेदानीं कर्त्ता-हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवति । एवमिहापि लोपो न स्यात्—कर्षति-वर्षतीति । तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः ॥

**( उद्द्योतः )** लोपापवाद इति । यद्यपि 'हर्यनुभवः' इत्यादौ तदुदाहरणे लोपेऽप्राप्तेऽपि द्विर्वचनमारभ्यते तथापि कृते द्वित्वे पश्चाल्लोपेऽपि द्विर्वचनं व्यर्थमित्याशयेनापवादत्वोक्तिरिति भावः ॥

तयोर्योगयोः–लोपविधायकयोः ॥ 'प्रत्तं'इत्यादौ दाधातोः क्ते आतस्तकारः 'अच उपसर्गात्–' इत्यनेन । आदित्ये–आदित्याद्ध्वाद्यर्थण्यान्तात् ण्यः ॥

**( उपसंहारभाष्यम् )**

**तदेतदत्यन्तसंदिग्धमाचार्याणां वर्तते—विभाषानुवर्तते न वेति ॥ ५ ॥**

**( प्रदीपः ) तदेतदिति** । ज्ञापकत्वमस्य विघटयति ॥ आचार्योपदेशपारम्पर्यात्तु ज्ञायते—'अनुवर्तते विभाषा' इति । तस्मात्रिव्यञ्जनसंयोगश्रवणाय **'अणुदित्—'** इति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ॥ ५ ॥

**( उद्द्योतः )** तद्व्याचष्टे—**ज्ञापकत्वमस्य विघटयतीति** । सर्वथा 'असंभवी' इत्युपसंहरतीत्यर्थः ॥ ज्ञापकेन तदनुवृत्तिं साधयतस्तत्खण्डनेऽनुवृत्तिः संदिग्धैवेति भावः ॥ **'लण्'**सूत्रे 'विभाषा स लोपः' इत्युक्तेराह—**आचार्येति** । अणग्रहणाज्ज्ञापकादित्यपि कश्चित् । तत्तु वार्तिककृताणग्रहणप्रत्याख्यानान्नोक्तम् ॥ ५ ॥

( इत्यन्तःस्थोपदेशाधिकरणम् )

( शिवसूत्रम् )

## ॥ लण् ॥ ६ ॥

( व्याख्यानत इति परिभाषाऽधिकरणम् )

( आक्षेपभाष्यम् )

**अयं णकारो द्विरनुबध्यते—पूर्वश्चैव परश्च । तत्राणग्रहणेष्विणग्रहणेषु च संदेहो भवति—पूर्वेण वा स्युः, परेण वेति ॥**

**( प्रदीपः )** लण् ॥ ६ ॥ **संदेहो भवतीति** । किं प्रत्यासत्तिराश्रीयते, अथवा व्याप्तिरिति संदेहः ॥

**( उद्द्योतः )** लण् ॥ ६ ॥ **किमिति** । क्व प्रत्यासत्तिः, क्व व्याप्तिः–इति सन्देह इत्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**कतमस्मिंस्तावदणग्रहणे संदेहः?**

**( उद्द्योतः )** भाष्ये—**कतमस्मिन्निति** । वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्त्वात्प्रश्नः ॥ **'कतरस्मिन्'**इति पाठेऽपि डतरादिविधौ उपाधिप्रत्याख्यानान्न दोष इति बोध्यम् ॥

( सन्देहोदाहरणभाष्यम् )

**"ढ्रलोपे पूर्वस्य दीर्घोऽणः" ( ६।३।१११ ) इति ॥**

( सिद्धान्तिनः समाधानश्लोकवार्तिकम् )

***असन्दिग्धं**

( भाष्यम् )

**पूर्वेण, न परेण ॥**

( हेत्वाक्षेपभाष्यम् )

**कुत एतत्?**

( सिद्धान्त्येकदेशिहेतुश्लोकवार्तिकम् )

***पराभावात्**

( भाष्यम् )

**न हि ढ्रलोपे परेऽणः सन्ति ॥**

---

१ **पवाद इति** । अन्यथा लोपस्य सर्वत्राप्रतिहतत्वात्कच्चिदपि द्वित्वस्य न श्रवणमिति तद्वैयर्थ्यमेव स्यादिति तस्य तत्त्वम् ॥ ततश्च कर्षतीत्यादौ तन्निवृत्तये तदिति भावः ॥ छाया ॥

२ **त्रिव्यञ्जनः संयोग इति** । त्रीणि व्यञ्जनानि यस्यावयवाः स **त्रिव्यञ्जनः संयोगः**–समुदाय इत्यर्थः । यथाश्रुतं तु न युक्तम् । बहूनां समवाये द्वयोर्द्वयोरेव संयोगसंज्ञेति सिद्धान्तितत्वात् ॥ तस्य प्रकृतेऽनुपयोगाच्च ॥ छाया ॥

३ प्रकृते योजयन्कृतज्ञापकनिराकरणमुपसंहरति—**तदेतदिति** । यस्माल्लोपस्य नित्यत्वेऽपि निषेधः **तत्**–तस्मात्कारणात् **एतद्**–अन्यतरस्यांग्रहणानुवर्तनं **संदिग्धं**–तेनानिर्णेयमित्यर्थः ॥ छाया ॥

४ 'पूर्वश्च परश्च' इति प. पाठः ॥

५ **पूर्वेण वेति** । 'सहयुक्ते' इति तृतीया । अकारादेः प्राधान्यात् । अनुबन्धस्य च गुणत्वात् ॥ पूर्वणकारेण वा परणकारेण वेत्यर्थः ॥ छा. ॥

६ सन्देहस्वरूपमुपपादयति—**क्व प्रत्यासत्तिरिति** ॥ कचित्प्रत्यासत्तिरेव, क्वचिद्व्याप्तिरेवेति ज्ञानेऽपि सन्देहस्वरूपानवगमात् ॥

७ **'असंदिग्धं पराभावात्सवर्णेऽणतपरं ह्युकृत् । द्वयोरन्यत्र परेणेण् स्याद्व्याख्यानाच्च द्विरुक्तितः ॥'** इति श्लोकवार्तिकं खण्डशो व्याचष्टे—**असंदिग्धमिति** । इदं चाक्षिप्तभवतिक्रियाविशेषणम् ॥ छाया ॥

८ **पराभावादिति** । परणकारकृतप्रत्याहारसंग्राह्यस्य प्रथमसूत्रोपात्तान्यस्याभावादित्यर्थः । तदेवाह—**नहीति** । ढरेफलोपनिमित्ते परतः पूर्वाणन्ये **न** सन्तीत्यर्थः ॥ छाया ॥

( उद्योतः ) न हि ढ्लोप इति । 'वेर्ढा' इत्यादौ गुणोऽसिद्ध इति भावः ॥

( हेतुनिरासभाष्यम् )

**ननु चायमस्ति—आतृढः, आवृढः-इति ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**एवं तर्हि-सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात्, "ढ्लोपे पूर्वस्य दीर्घोऽचः" इत्येव ब्रूयात् ॥**

**अथवा—एतदपि न ब्रूयात्, अचो ह्येतद्भवति-ह्रस्वः-दीर्घः-प्लुत इति ॥**

( उद्योतः ) दीर्घोऽच इत्येवेति । मात्रालाघवाभावेऽपि संग्राह्यलाघवायासंदेहाय चेति भावः ॥ [ भाष्ये—अचो हीति । 'अचश्च' इति परिभाषणादिति भावः ॥ ]

( द्वितीयं सन्देहोदाहरणभाष्यम् )

**अस्मिंस्तर्ह्यण्ग्रहणे संदेहः-"केऽणः" इति ॥**

( समाधानभाष्यम् )

**असंदिग्धं पूर्वेण, न परेण ।**

**कुत एतत् ?**

**पराभावात् ।**

**न हि के परेऽणः सन्ति ॥**

( प्रदीपः ) न हि के पर इति । नन्वल्पोपानत्—उपानत्का-इति ह्रस्वे कर्तव्ये **'नहो धः'** इत्यस्यासिद्धत्वादस्ति के परतो हकारः, तथा 'गीष्का' इत्यादौ रेफः ॥

**अत्राहुः—'न मु ने'** इत्यत्र योगविभागेन धत्वादीनामसिद्धत्वाभावात्तेषु च कृतेषु हकारादीनामभावः ॥

( उद्योतः ) तथा गीष्केति । विसर्गस्यासिद्धत्वादिति भावः ॥ **तेषु च कृतेष्विति ।** परत्वादिति भावः । योगविभागस्य भाष्यानारूढत्वात्-'गोका' इत्यादिभाष्यात्-'के परे' इति भाष्याच्च तेषामनभिधानं वक्तुं युक्तम् ॥

( हेतुनिरासभाष्यम् )

**ननु चायमस्ति—गोका, नौकेति ॥**

( सिद्धान्तिभाष्यम् )

**एवं तर्हि—सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात्, "केऽचः" इत्येव ब्रूयात् । अथवा—एतदपि न ब्रूयात्, अचो ह्येतद्भवति ह्रस्वो दीर्घः प्लुत इति ॥**

( तृतीयं सन्देहोदाहरणभाष्यम् )

**अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः—"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥**

( समाधानभाष्यम् )

**असंदिग्धं पूर्वेण, न परेण ।**

**कुत एतत् ?**

**पराभावात् । न हि पदान्ताः परेऽणः सन्ति ॥**

( प्रदीपः ) न हि पदान्ता इति । ननु **'भोभगो'** इत्यत्राश्ग्रहणस्य प्रयोजनं वक्ष्यते- वृक्षव् करोतीत्यत्र **'हलि सर्वेषाम्'** इति लोपो मा भूदिति, तत्कथमुच्यते-'न हि पदान्ताः' इति । उच्यते—**'अप्रगृह्यस्य'** इति पर्युदासेनाच एवानुनासिकेन भाव्यं न तु हल इत्युक्तं—**न हि पदान्ता इति** । कार्यभाज इत्यर्थः ॥

( उद्योतः ) न हि पदान्ता इति । पदानामेवानुनासिकोऽवसाने जायत इत्याश्रित्येदमुक्तम् । न तु तत्र पदान्ताधिकारोऽस्ति ॥ **लोप इति** । अशा हलो विशेषणादिति भावः ॥

**पर्युदासेनेति** । क्रियमाणेऽप्यण्ग्रहणे-इत्यर्थः ॥ भाष्येऽपि न सत्त्वं निषिध्यते, किं तु कार्यित्वमेवेत्याह—**कार्यभाज इति** । एवं चानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः ॥ वस्तुतोऽस्या अग्रे सिद्धान्त्युक्तित्वेन तदज्ञानेनैव पूर्वपक्षस्यौचित्येनैवं भाष्यव्याख्यानमनुचितं, पूर्वपक्षस्य संदेहस्य चानुत्थानात् । तस्मादष्टमाध्यायस्थं

---

१ ननु 'वृहू उद्यमने' इत्यतस्तृचि ऊदित्त्वादिड्भावे गुणे रपरे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रेफस्य दीर्घे स्थानसाम्यादृकारे जाते ढलोपस्यासिद्धत्वाद् **'उपधायाश्च'** इतीत्त्वे रपरे पूर्वेण **'आद्गुणः'** इति गुणे जाते वेर्ढेति यथा स्यादित्येवमर्थमण्ग्रहणं स्यादत आह—**वर्ढेत्यादाविति । 'असिद्धं बहिरङ्गमन्तरङ्गे'** इत्यसिद्धत्वम् । तथाच वर्ढेत्याद्येव रूपं न तु वेर्ढेत्यादि । **नाजानन्तर्ये**-इति त्वनित्या नास्त्येव वेति भावः ॥ छाया ॥

२ **अनर्थकं स्यादिति** । ढ्लोपे परतोऽजतिरिक्तस्य परस्याणोऽसम्भवात् ढ्लोपे पूर्वस्य दीर्घोऽच इत्येव सूत्रं कार्यमिति भावः । वर्ढेत्यादौ तु गुणस्यासिद्धत्वम्पूर्वमुक्तमेव ॥

३ अयं कोष्ठकान्तर्गतःपाठोऽग्रे 'तेषामनभिधानं वक्तुं युक्तम्' इत्यतः परो दृश्यते, खण्डशो मुद्रणेऽत्र संगृहीतः । **अचश्चेतीति** । ढ्लोपेतिसूत्रेऽण्ग्रहणे कृते तत्सामर्थ्यात् 'अचश्च' इति परिभाषा नोपतिष्ठेत, तदभावे हि परिभाषयैवाचपदोपस्थानान्नाज्ग्रहणप्रयोजनमित्याशयः ॥

४ कैयटोक्तिं दूषयति—**वस्तुत इत्यादिना । अस्याः**—'अप्रगृह्यस्य' इत्याद्युक्तयुक्तेरित्यर्थः ॥ छाया ॥

५ भाष्यस्य पारमार्थिकं कैयटोक्तव्याख्यानमबुद्ध्वाऽष्टमाध्याये पूर्वपक्षसंदेहयोरुत्थानसंभवेनायमुद्द्योतश्चिन्त्यः ( रघुनाथः ) । 'भाष्यव्याख्यानमनुचितं' इति प्रतिपादयत उद्द्योतकारस्याभिप्रायस्तु—यदि अणोऽप्रगृह्यस्येति सूत्रेऽप्रगृह्यस्येति पर्युदास इति भाष्याभिप्रायस्तदाऽण् पूर्वणकारेणैव प्रत्याहार इत्यप्यभिप्रायः । तथा चात्रत्यः 'अस्मिंस्तर्ह्यण्ग्रहणे' पूर्वपक्ष एव भज्येत । अतोऽत्र पर्युदासमजानत एवायं पूर्वपक्षः, अतो नेदं व्याख्यानं युक्तमित्येव । एवञ्च 'उद्द्योतश्चिन्त्यः' इत्युक्तिस्तु र. ना. पण्डितस्य 'शूरोऽसि कृतविद्योऽसि' इत्युक्तिं सारयति ॥

६ अष्टमाध्यायस्थस्येति शेषः ( र. ना. ) । वस्तुतः **पूर्वपक्षस्य**—अत्रत्यस्य 'अस्मिंस्तर्हि'इत्यादिना क्रियमाणस्य **सन्देहस्य**—अत्रैव क्रियमाणस्येत्येव व्याख्यानं युक्तम् । अष्टमाध्याये भोभगोसूत्रेऽश्ग्रहणप्रयोजनं प्रतिपादयता भगवता कैयटेन वा नान्यः पूर्वपक्ष उपस्थापितः, येनास्य विरोधः स्यात् । एवञ्च **पूर्वपक्षस्य**—इत्यस्य व्याख्यानं—अष्टमाध्यायस्थेत्येतत्प्रामादिकमेव ॥

७ **अष्टमाध्यायस्थं भाष्यं**—उत्तरार्थं तर्हि अश्ग्रहणं कर्तव्यं हलि सर्वेषां हलि अशि यथा स्यात् । इह मा भूत्—वृक्षवयतेरप्रत्ययः वृक्षव् करोति—इति भोभगोसूत्रस्थं भाष्यम् ॥

भाष्यमेकदेश्युक्तिरित्येवोचितम् । व्याख्यातं च तत्रोपाध्यायैरित्थमेव ॥

( हेतुनिरासभाष्यम् )

**ननु चायमस्ति—कर्तृ, हर्तृ ॥**

**( उद्द्योतः )** भाष्ये—**कर्तृ हर्त्रिति** । ऐचामप्युपलक्षणम् । अत एव '**अचोऽप्रगृह्यस्य**'इत्युक्तम् । अन्यथा 'अकोऽप्रगृह्यस्य' इति वदेत् ॥

( सिद्धान्तिभाष्यम् )

**एवं तर्हि—सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यात्, अण्ग्रहणमनर्थकं स्यात् । "अचोऽप्रगृह्यस्यानुनासिकः" इत्येव ब्रूयात् ।**

**अथवा—एतदपि न ब्रूयात् । अच एव हि प्रगृह्या भवन्ति ॥**

**( प्रदीपः ) अचोऽप्रगृह्यस्येति** । हलो हि न भाव्यमिति-अत्र 'अण्'ग्रहणसामर्थ्यात्पूर्वेणेति स्थितम् ॥ तत्र वृक्षं वृश्चतीति क्विपि कृते वृक्षवृश्चमाचष्टे-इति णिचि टिलोपे च कृते वृक्षवयतेर्विचि 'वृक्षव्' इति भवति । क्विपि तु '**कौ लुप्तं-कौ विधिं प्रति च न स्थानिवत्**' इति निषेधात्संप्रसारणप्रसङ्गः, '**लोपो व्योर्वलि**' इति वलोपप्रसङ्गश्च । विचि तु स्थानिवद्भावाद्धल्निमित्तो वलोपो न भवति । '**हलि सर्वेषां**' इत्यनेन तु लोपे क्रियमाणे '**पूर्वत्रासिद्धे न स्थानिवत्**' इति स्थानिवत्त्वनिषेधाद्वलोपः प्राप्तोऽश्ग्रहणानुवृत्त्या निवर्त्यते ॥

**( उद्द्योतः ) निषेधात्संप्रसारणप्रसङ्ग इति** । चिन्त्यमिदम् । णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोपविधानेन वृश्चतेः स्थानित्वेनाभावेन वकारे **एकदेशविकृत**न्यायेन वृश्चतित्वस्य दुर्लभत्वात् । अर्धाधिकविकारेण प्रत्यभिज्ञाऽभावाच्च । अत एव राजकीयमित्यादौ अल्लोपो न । व्रश्च एव टिलोपस्थानित्वे तु प्रकृतिभावापत्तिः । **एतेन** विचि **एकदेशविकृत**न्यायेन वृश्चतित्वात्षत्वापत्तिः । न च णिलोपस्य स्थानिवत्त्वान्न षत्वम् । पूर्वत्रासिद्धीये तन्निषेधादिति **परास्तम्** । न च '**व्रश्च-**'इति सूत्रे पदाधिकारेण व्रश्चान्तत्व**मेकदेशविकृत**न्यायेन सुलभमिति वाच्यम् । '**स्कोः-**' इति सूत्रात् 'अन्ते'ग्रहणमनुवर्त्य वैयधिकरण्येनैवान्वयाश्रयणेनादोषात् । अत एव 'अन्ते'ग्रहणं चरितार्थम् । अर्धाधिकविकाराच्च । एवं च वृक्षभृज्जो णिजन्तात्क्विपि 'वृक्षभ्' इत्यादौ षत्वं नेत्याहुः ॥ **वलोपप्रसङ्गश्चेति** । इदमुपलक्षणं, कौ विधौ स्थानिवत्त्वनिषेधादूठ्प्रसङ्गश्चेत्यपि बोध्यम् ॥

( चतुर्थसंदेहभाष्यम् )

**अस्मिंस्तर्ह्यण्ग्रहणे संदेहः-"उरण् रपरः" इति ॥**

( समाधानभाष्यम् )

**असंदिग्धं पूर्वेण, न परेण ॥**

**कुत एतत् ?**

**पराभावात् ।**

**न ह्युः स्थाने परेऽणः सन्ति ॥**

( हेतुनिरासभाष्यम् )

**ननु चायमस्ति-कत्रर्थं, हर्त्रर्थमिति ।**

( आपत्तिप्रश्नभाष्यम् )

**किं च स्यात्—यद्यत्र रपरत्वं स्यात् ?**

( आपत्तिदर्शनभाष्यम् )

**द्वयो रेफयोः श्रवणं प्रसज्येत ॥**

( आपत्तिबाधकभाष्यम् )

**"हलो यमां यमि लोपः" इत्येवमेकस्यात्र लोपो भविष्यतीति ॥**

( आपत्तिसाधकभाष्यम् )

**विभाषा स लोपः, विभाषाश्रवणं प्रसज्येत ॥**

( आपत्तिबाधकभाष्यम् )

**अयं तर्हि नित्यो लोपः-"रो रि" इति ॥**

**( उद्द्योतः )** भाष्ये—**रो रीति** । त्रिपाद्यां बहिरङ्गासिद्धत्वाभावादिति भावः ॥

---

१ इत्थं तत्र प्रदीपः–अश्ग्रहणानुरोधेन चैतद्भाष्यकारेणोदाहृतम् । तथाहि लणित्यत्रोक्तं न पदान्ता हलोऽणः सन्तीति ॥

२ 'हर्तृ इति' इति प. पाठः ॥

३ **एचामप्युपेति** । अग्ने वायो पचै वायावित्यादौ तेषां संभवादिति भावः ॥ छाया ॥ 'अचामुपलक्षणम्' इति ज· पाठः ।

४ **सामर्थ्यादिति** । न हि पदान्ताः परे हलोऽण, सन्तीति हकारादीनाम्पदान्तेऽनुनासिकप्राप्त्यसम्भवेनाण्ग्रहणं व्यर्थन्तत्सामर्थ्यात्पूर्वेण प्रत्याहारः समर्थितो भवति ॥

५ **अच एव हीति** । प्रगृह्यसंज्ञा हि अच एव भवतीति प्रगृह्यभिन्नस्तत्सवर्णोऽण् अजेव गृह्येतेति अज्ग्रहणमप्यत्र न कार्यम्, अप्रगृह्यस्येति पर्युदास इत्याशयः ॥

६ भोभगो इति सूत्रस्थभाष्यप्रतिपादित वृक्षव् करोतीत्यस्याभिप्रायमाह—**तत्र वृक्षमित्यादिना** ॥

७ **निषेधादिति** । णिलोपस्य स्थानिवद्भावेत्यादिः ॥ **संप्रसारणेति** । एकदेश–इति न्यायेन 'ग्रहिज्या–' इत्यनेनेति शेषः ॥ छाया ॥

८ **निवर्त्यत इति** । इदमपि चिन्त्यम् '**अत उपधायाः**' इति वृद्धेर्दुर्वारत्वादिति ॥ छाया ॥

९ **विधानेनेति** । तथाच टेः, 'सर्वे–' इति न्यायेन विशिष्टस्य वा स्थानित्वं लब्धम् । न वृश्चतेः । तदाह—**वृश्चतेरिति** । तथाच न शास्त्रीयन्यायप्रवृत्तिः । तदाह—**एकेति** । नन्वेवमपि लौकिकन्यायेन तत्त्वमित्यत आह—**अर्धाधिकेति** । अर्धविकारेऽपि तदप्रवृत्तिः किमु वक्तव्यं तदधिकविकार इति सूचयितुमाह—**अत एवेति** ॥ अर्धन्यूनविकारे प्रत्यभिज्ञासत्त्वेन तत्प्रवृत्त्यङ्गीकारेऽप्यर्धप्रभृतिविकारे तदभावेनातत्प्रवृत्त्यङ्गीकारादेवेत्यर्थः ॥ छाया ॥

१० प्रकृत्यैकाजित्यनेन ॥

११ 'भवति' इत्येव प. पाठः ॥

( आपत्तिसाधकभाष्यम् )

'पदान्तस्य' इत्येव[1] सः ॥

( आपत्तिबाधकभाष्यम् )

न शक्यः सः 'पदान्तस्य' इत्येव विज्ञातुम्[2] । इह हि लोपो न स्यात्-जर्गृधेर्लङ्-अजर्घाः[3]-इति ॥

( प्रदीपः ) अजर्घा इति । गृधेर्यङ्लुकि रुगागमेऽभ्यासस्य कृते लङि सिपि शब्लुकि गुणरपरत्वसिलोपभष्भावजश्त्वरुत्वरलोपदीर्घत्वेषु रूपम् ॥

( उद्द्योतः ) भष्भावः-'एकाचो बशो भष्' इत्यनेन । तत्र हि 'एकाचः' इति 'झषन्तस्य' इति च 'धातोः'इत्यपेक्षया व्यधिकरणषष्ठीति भावः ॥ रुत्वम्-दश्चेत्यनेन ॥

( आपत्तिसाधकभाष्यम् )

इह तर्हि-मातृणां-पितृणामिति रपरत्वं प्रसज्येत ॥

( आपत्तिबाधकभाष्यम् )

आचार्यप्रवृत्तिर्ज्ञापयति-नात्र रपरत्वं भवतीति । यदयम् "ॠत इद्धातोः" इति धातुग्रहणं करोति ॥ कथं कृत्वा ज्ञापकम् ?

धातुग्रहणस्यैतत्प्रयोजनम्-इह मा भूत्-मातृणां पितृणामिति । यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं स्यात् । रपरत्वे[4] कृतेऽनन्त्यत्वादित्त्वं न भविष्यति । पश्यति त्वाचार्यः—नात्र रपरत्वं भवतीति । ततो धातुग्रहणं करोति ॥

( आपत्तिसाधकभाष्यम् )

इहापि तर्हि[5] न प्राप्नोति-चिकीर्षति[6]-जिहीर्षतीति ॥

( प्रदीपः ) इहापि तर्हीति । धातुग्रहणेन हि लिङ्गेनाधातोरेव रपरत्वं निवर्तितम् । धातोस्तु रपरत्वे सत्यनन्त्यत्वान्न प्राप्नोतीति प्रश्नः ॥

( उद्द्योतः ) भाष्ये—'इहापि तर्हि' इत्यस्य 'ॠत इत्त्वं' इति शेषः ॥ ननु धातुग्रहणेन ॠकारस्य दीर्घो न रपर इति ज्ञापनात् 'अज्झन–' इति दीर्घस्याप्यरपरत्वात् कथमत्रेत्त्वाप्राप्तिरत आह–धातुग्रहणेनेति ॥

( आपत्तिबाधकभाष्यम् )

मा भूदेवम् । "उपधायाश्च" इत्येवं भविष्यति ॥

( आपत्तिसाधकभाष्यम् )

इहापि तर्हि प्राप्नोति-मातृणामिति ॥ तस्मात्तत्र धातुग्रहणं कर्तव्यम् ॥

( प्रदीपः ) इहापीति । तस्माद्धातुग्रहणस्य प्रयोजनवत्वान्न ज्ञापकत्वमित्यर्थः ॥

( उद्द्योतः ) भाष्ये—तस्मात्तत्रेति । न च 'इह किंचिन्नपो' इति न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम् । 'गॄ'इत्यादेरनुकरणे प्रकृतिवदनुकरणमित्यस्याभावे'ग्रो यङि'इत्यादावित्त्वाभावार्थमिहापि तदावश्यकत्वात् । गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च । तदाह—तस्मादिति । एवंच रपरत्वेऽपि मातॄणामित्यादौ 'उपधायाश्च' इतीत्ववारणेन धातुग्रहणस्य चारितार्थ्येन रपरत्वनिवृत्तौ न ज्ञापकतेत्यर्थः ॥

( सिद्धान्तिसमाधानभाष्यम् )

एवं तर्हि-सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यात्, अणग्रहणमनर्थकं स्यात् "उरन्नपरः" इत्येव[7] ब्रूयात् ॥

( उद्द्योतः ) भाष्ये—सामर्थ्यात्पूर्वेणेति । न च 'गम्ला' इत्यादौ यणादेशे लपरत्वार्थमेव परेणाण्ग्रहणं स्यादिति सामर्थ्यं कथम् ? ऋकारांशे हल्रूपाणि 'रो रि'इति प्रवृत्त्या फलाभावेन तत्साहचर्यात् ऌकारांशेऽपि हल्रूपाणि अप्रवृत्तिरित्याशयात् । रलयोः समानश्रुतित्वेन तत्रापि 'रो रि' इत्यस्य प्रवृत्तेरित्यन्ये ॥ ऌकारे यण्घटितप्रयोगानभिधानमेवैतद्भाष्यप्रामाण्यादित्यन्ये ॥

( पञ्चमसन्देहभाष्यम् )

अस्मिंस्तर्ह्यण्ग्रहणे संदेहः—"अणुदित्सवर्णस्य चाप्रत्ययः" इति ॥

( समाधानभाष्यम् )

असंदिग्धं परेण, न पूर्वेण ॥

( हेत्वाक्षेपभाष्यम् )

कुत एतत् ?

( सिद्धान्तश्लोकवार्तिकम् )

*सवर्णेऽण् तपरं ह्युर्ऋत् ॥

( भाष्यम् )

यदयम्—"उर्ऋत्" इत्यृकारे तपरकरणं करोति[8], तज्ज्ञापयत्याचार्यः—परेण, न पूर्वेणेति ॥

( प्रदीपः ) सवर्णे इति । 'अचीकृतत्' इति ॠकारस्य ऋकार एव यथा स्यात्, ॠकारो मा भूदित्येवमर्थं तपरत्वं क्रियते । यदि च पूर्वेण णकारेणाण्ग्रहणं स्यात् ऋकारोऽनण्त्वाद्भिन्नकालस्य ग्राहक एव न भवतीति ॠकारो नैव स्थानी, नाप्यादेशः प्रसजतीति किं तपरत्वेन ? कृतं च तज्ज्ञापकं परेणाण्ग्रहणस्य ॥

१ 'इत्येवं सः' इति प. पाठः ॥

२ 'पदान्तस्य विज्ञातुं' इति प. पाठः ॥

३ एतदुत्तरं 'पास्पर्धः–अपास्पाः' इत्यधिकमुदाहरणं प. पुस्तके ॥

४ रपरत्वे इति । मातृणामित्यत्र दीर्घस्य रपरत्वे ॠकारान्तत्वाभावात् 'ॠत इत्' इति न भविष्यतीत्यर्थः ॥

५ 'तर्हीत्वं न' इति प. पाठः ।

६ चिकीर्षतीति । अत्र 'कॄ स' इत्यवस्थायां 'अज्झन–' इति दीर्घे रपरत्वे च ॠकारान्तत्वाभावादित्वं न प्राप्नोतीत्यर्थः ॥

७ इत्येवेति । हादेरविधानाद्रेफस्य तत्त्वेऽपि दोषाभावस्योक्तत्वेनेदानीं तदभावेऽप्यक्षतेश्चेति भावः ॥ छाया ॥

८ 'ऋकारं तपरं करोति' इति प. पाठः ॥

( उद्द्योतः ) भाष्ये—सवर्णेऽण् तपरमिति । यत् 'उकेत्' सूत्रे तपरं करोति तज्ज्ञापकं-सवर्णेऽण्ग्रहणं परणकारकमिति वार्तिकाक्षरार्थः ॥ इत्येवमर्थमिति । ह्रस्वो यथा स्यात्, दीर्घो मा भूदित्येवमर्थमित्यर्थः ॥ ऋकार इति । उद्देश्यसमर्पक इत्यर्थः । न च भाव्यमानत्वेन सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम्[1], तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनापूर्वबोध्यत्वाभावेन चाविधेयत्वात् । कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यत् ॥

( आक्षेपभाष्यम् )

ईणग्रहणेषु तर्हि संदेहः ॥

( समाधानभाष्यम् )

असंदिग्धम् परेण, न पूर्वेण-इति ॥

( हेतुजिज्ञासाभाष्यम् )

कुत एतत् ?

( सिद्धान्तहेतुश्लोकवार्तिकम् )

*व्योरन्यत्र परेणण् स्यात् ।

( भाष्यम् )

यत्रेच्छति पूर्वेण, संमृद्य ग्रहणं तत्र करोति—व्वोरिति । तच्च गुरु भवति ॥

कथं कृत्वा ज्ञापकम् ?

तत्र विभक्तिनिर्देशे संमृद्यग्रहणे चार्धचतस्रो मात्राः, प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः-परेण, न पूर्वेणेति ॥

( प्रदीपः ) अर्धचतस्र इति । अर्धेन चतस्रः, चतुर्थी हि मात्रा तत्रार्धमिति ॥

( उद्द्योतः ) भाष्ये—संमृद्येति । आदेशेन तौ निवल्यैत्यर्थः । 'अर्धचतुर्थाः' इति वक्तुमुचिते आह—अर्धेनेति ॥ भाष्ये—तिस्रो मात्रा इति । 'इणः' इति पदच्छेदाभिप्रायेणेदम् । तदुक्तम्—विभक्तिनिर्देशे इति । संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् ॥

( आक्षेपभाष्यम् )

किं पुनर्वर्णोत्सत्ताविवायं णकारो द्विरनुबध्यते ?

( प्रदीपः ) किं पुनरिति । वर्णोत्सत्तिः=वर्णोच्छेदः । वर्णान्तरमनुबन्धः किं न क्रियते-इत्यर्थः ॥

( उद्द्योतः ) अणादिग्रहणेषूक्तैर्महद्भिर्यत्नैः सन्देहपरिहारे प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानुबध्यत इत्याशयेनाह—भाष्ये—किं पुनरिति ॥

( समाधानभाष्यम् )

एतज्ज्ञापयत्याचार्यः—भवत्येषा परिभाषा—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्" इति । अणुदित्सवर्णे परिहाय पूर्वेणाण्ग्रहणम्, परेणेण्ग्रहणम्-इति व्याख्यास्यामः ॥ ६ ॥

( प्रदीपः ) व्याख्यानत इति । न्यायादागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ॥ ६ ॥

( उद्द्योतः ) एतत्-वक्ष्यमाणम् । आचार्यः=शिवः । ननु ज्ञापितेऽपि प्रवर्तकतया निवर्तकतया वा नास्य चारितार्थ्यमत आह—न्यायादिति । उक्तो न्यायः ॥ आगमः=उपदेशपरम्परा, तत्सिद्ध एवायमर्थो णकारानुबन्धनरूपस्तव्यवहारेण बोध्यत इत्यर्थः । एवञ्च व्याख्यानेनैव—पूर्वणकारेण केचित्, केचित्परणकारेण-इति निर्णये ज्ञापकानुसरणक्लेशो वृथेति सूचितम् ॥ ६ ॥

( इति व्याख्यानतःपरिभाषाऽधिकरणम् )

( शिवसूत्रे )

ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥

( सूत्रैक्यसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थमिमौ मुखनासिकावचनौ वर्णावुभावप्यनुबध्येते, न ञकार एवानुबध्येत ?

( प्रत्याक्षेपभाष्यम् )

कथं यानि मकारेण ग्रहणानि—'हलो यमां यमि लोपः' ( ८।४।६४ ) इति ?

( प्रत्याक्षेपसमाधानभाष्यम् )

सन्तु ञकारेण, "हलो यञां यञि लोपः" इति ॥

---

१ तद्वैयर्थ्यमिति । तथा चाज्ञापकमिति दिव औदित्यादिवदुच्चारणार्थत्वमेवेति भावः ॥ छाया ॥

२ अभ्यनुज्ञानं-प्रतिप्रसवः ॥

३ एवमण्ग्रहणेषु निर्णीयेण्ग्रहणेष्वपि तमाह—इण्ग्रहणेष्वित्यादिना ॥ छाया ॥

४ 'विव णकारो' इति प. पाठः ॥

५ 'द्विरनुबध्यते । *व्याख्यानाच्च द्विरुक्तितः । एतज्ज्ञा-' इति मुद्रितेषु पाठः । प्रामाणिकपुस्तकेषु 'व्याख्यानाच्च द्विरुक्तितः' इति चतुर्थचरणस्य पाठो न । कात्यायनवार्तिकानां स्वातन्त्र्येण प्रामाण्यम्, अन्येषां च भाष्योक्तत्वादेव प्रामाण्यावसरः । अत एव 'त्रिमुनिव्याकरणं' इत्युपपद्यते ॥

६ नाहेति । 'व्याख्यानाच्च द्विरुक्तितः ।' इति चतुर्थपादं व्याख्यातुं शङ्कते इत्यर्थः ॥ छाया ॥

७ 'इह परेणेण्' इति प. पाठः ॥

८ न्याय इति । ज्ञापकसामर्थ्यान्यतररूप इत्यर्थः ॥ छाया ॥

९ उपदेशपरम्परेति—

'परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः ।
ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥'

इत्येवंरूपोपदेशेत्यर्थः ॥ छाया ॥

१० ञकार इति । 'ञमङणनझभञ्' इत्येकमेव सूत्रं किमर्थं न क्रियत इति प्रश्नाशयः ॥

( इष्टापत्तिबाधकभाष्यम् )

**नैवं शक्यम् । झकारभकारयोरपि झकारभकारयोर्लोपः प्रसज्येत ॥**

( इष्टापत्तिसाधकभाष्यम् )

**न झकारभकारौ झकारभकारयोः स्तः ॥**

(उद्योतः) झभञ् ॥८॥ भाष्ये—न झकारेत्यादि । अज्रहितहल्मात्रानुकरणं तु सूत्रादन्यत्र नास्तीति 'हयवरट्'सूत्रे प्रपञ्चितम् ॥

( द्वितीयाक्षेपभाष्यम् )

**कथं "पुमः खय्यम्परे" (८।३।६) इति ?**

( इष्टापत्तिभाष्यम् )

**एतदप्यस्तु ञकारेण—"पुमः खय्यञ्परे" इति ॥**

( इष्टापत्तिबाधकभाष्यम् )

**नैवं शक्यम् । झकारभकारपरेऽपि हि खयि रुः प्रसज्येत ॥**

( इष्टापत्तिसाधकभाष्यम् )

**न झकारभकारपरः खयस्ति ॥**

( तृतीयाक्षेपभाष्यम् )

**कथं "ङमो ह्रस्वादचि ङमुण्नित्यम्" (८।३।३२) इति ?**

( इष्टापत्तिभाष्यम् )

**एतदप्यस्तु ञकारेण—"ङञो ह्रस्वादचि ङञुण्नित्यम्" इति ॥**

( इष्टापत्तिबाधकभाष्यम् )

**नैवं शक्यम् । झकारभकारयोरपि पदान्तयोर्झकारभकारावागमौ स्याताम् ॥**

( उद्योतः ) झकारभकारयोरपि हि पदान्तयोरिति । पदान्तयोस्तयोः सतोस्ततः परस्याजादेः पदस्य झभौ स्यातामित्यर्थः ॥

( इष्टापत्तिसाधकभाष्यम् )

**न झकारभकारौ पदान्तौ स्तः ॥**

( प्रदीपः ) झभञ् ॥ ८ ॥ न झकारेति । भकारस्य पदान्तस्य जश्त्वेन भाव्यमिति तस्याभावः । उज्झेर्झकारः 'संयोगान्तस्य—' इति लुप्यते–इति तस्याप्यभावः ॥

( इष्टापत्तिबाधकैकदेशिभाष्यम् )

**एवमपि पञ्चागमभाश्रय आगमिनः, वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥**

( उद्योतः ) एवमपि पञ्चागमा इति । लक्ष्यसंस्कारकालिकं संख्यासाम्यं यथासंख्यप्रवृत्तौ निमित्तमिति मन्यते ॥

( इष्टापत्तिसाधकैकदेशिभाष्यम् )

**सन्तु तावद्येषामागमानामागमिनः सन्ति । झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः ॥**

( प्रदीपः ) सन्तु तावदिति । उद्देशानुदेशाभ्यां संख्यासाम्याद्यथासंख्ये लब्धे प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्तते नान्य इत्यर्थः ॥

( उद्योतः ) सिद्धान्ती तु प्रतिपत्तिकालिकमेव संख्यासाम्यं तत्प्रवृत्तौ निमित्तमित्याह—सन्त्विति । येषामागमानामागमिनः सन्ति तेषां भवन्तु इत्यर्थः ॥ अनुदेशः=प्रतिनिर्देशः । भगवता तु स्पष्टप्रतिपत्तयेऽनुबन्धद्वयमदर्शि ॥ ७ ॥ ८ ॥

( इति सूत्रैक्यसाधनाधिकरणम् )

( अक्षरसमाम्नायाधिकरणम् )

( तत्राक्षरनिर्वचनम् )

( वार्तिकावतरणभाष्यम् )

**अथ[4] किमिदमक्षरमिति ?**

( प्रदीपः ) किमिदमिति । 'अक्षरसमाम्नायः' इति व्यवहारात् 'यो वा इमां स्वरशोऽक्षरशः' इति चोक्तत्वात्प्रश्नः ॥

( उद्योतः ) इति व्यवहारादिति । 'अइउण्' सूत्रेऽयं व्यवहारो भाष्ये ॥ प्रश्न इति । तद्घटकीभूताक्षरपदार्थावगमायेति भावः ॥

( सिद्धान्तश्लोकवार्तिकम् )

## *अक्षरं[5] न क्षरं विद्यात् ।

( भाष्यम् )

**न क्षीयते, न क्षरतीति वाऽक्षरम् ॥**

१ 'कारपरयोरपि हि' इति छ. पाठः ।

२ 'रपि हि' इति छ. झ. पाठः ।

३ तस्येति । प्रत्याख्यातुरित्यर्थः ॥ छाया ॥ 'तस्याभावः' इति पाठे भकारस्येत्यर्थः ॥ 'तस्य भावः' इति ख. पाठोऽसङ्गतः ॥

४ अथाक्षरशब्दनिर्वचनपरं वार्तिकमवतारयति—अथेति । अत्र प्रवृत्तिनिमित्तभूतं वस्तु किमित्यर्थः ॥ छाया ॥

५ अक्षरं नक्षरमिति । श्लोकवार्तिकमेतन्न कात्यायनवार्तिकम्, तद्वार्तिकेषु यादृशो व्यवहारो भगवतस्तादृशस्यात्रादर्शनात् । वार्तिकोत्थानाय च 'अथ किमिदं' इति प्रश्नः । 'येनाक्षरसमाम्नायमधिगम्य महेश्वराद्'इत्याद्यभियुक्ताभिव्याहारैश्चतुर्दशसूत्र्या अक्षरसमाम्नाय इति व्यवहाराच्चतुर्दशसूत्रीव्याख्यानावसानेऽक्षरविषयः प्रासङ्गिक एवायं प्रश्नः । अथशब्दोऽनन्तरवाची, चतुर्दशसूत्रीव्याख्यानानन्तरमिति तदर्थः । इतिशब्दो वस्तुनिदर्शनार्थः । न क्षीयत इत्यादिद्विविधव्याख्यानेनाक्षरशब्दस्य नित्यार्थता प्रतिपाद्यते । अश्नुते–व्याप्नोतीत्यनेन च व्यापकार्थत्वम् । ततश्च वर्णं वाऽऽहुरित्यनेन तस्य वर्णे रूढिः समर्पिता । यथा 'येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्यय स शब्दः' इति नित्यं शब्दम्प्रतिपाद्य 'अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः' इति लोकाभिमतमपि तस्य रूपं प्रतिपाद्यते, तथाऽत्रापि सिद्धान्तसम्मतमक्षरस्य स्वरूपं श्लोकचरणाभ्यामुक्त्वा वैयाकरणसिद्धान्तावगाहनासमर्थानां लौकिकानामभिमतं तृतीयचरणेन प्रतिपाद्यते, व्याकरणस्य सर्वेप्सितत्वात् । एतादृशश्च वर्णसमाम्नायः किमर्थमत्रोपदिश्यत इति प्रश्नस्तु स्वरसतः प्राप्तः । अधिकरणमेतदक्षरसमाम्नायस्तुत्यर्थं तन्महत्वप्रतिपादनार्थञ्च ॥

( प्रदीपः ) **अक्षरं न क्षरमिति** । क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति । तत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम्[1] । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम् । व्यवहारनित्यतया वर्णपदवाक्यस्फोटानां नित्यत्वम्[2], जातिस्फोटस्य वा ॥

( उद्द्योतः ) भाष्ये—'**अक्षरं**' इत्यस्य '**न क्षरं**' इति विग्रहप्रदर्शनम् ॥ **तच्चेति** । अक्षरं चेत्यर्थः ॥ ब्रह्मतत्त्वस्यैव तत्त्वे हेतुगर्भं विशेषणमाह—**परमार्थतो नित्यमिति** । यतस्तत् प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्ववदित्यर्थः ॥ नन्वेवं प्रकृते किमायातमत आह—**व्यवहारनित्यतया चेति** । सर्वेषां शब्दानामाकाशादिवत् सृष्ट्यादावुत्पत्तिः, प्रलये च नाश इत्यर्थः । एवं च व्यवहारनित्यतयाऽक्षरब्रह्मसादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः शास्त्रप्रवृत्तिद्वारा बोधक इति 'अक्षरसमाम्नायः' इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः । एवञ्च शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः ॥ न्यायादिनयेऽप्याह—**जातिस्फोटस्य वेति** ॥

( सिद्धान्तश्लोकवार्तिकम् )

## *अश्नोतेर्वा सरोऽक्षरम् ॥

( भाष्यम् )

**अश्नोतेर्वा[3] पुनरयमौणादिकः सरन्प्रत्ययः । अश्नुते इत्यक्षरम् ॥**

( प्रदीपः ) **अश्नोतेर्वेति** । सरन्प्रत्ययस्यानुबन्धलोपे[4] कृतेऽनुकरणं—**सर** इति । तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं—पदं वाक्यं वा ॥

( उद्द्योतः ) भाष्ये—**अश्नोतेर्वेति** ॥ तद्व्याचष्टे—**अर्थमश्नुते इति** । वर्णानामनर्थकत्वेन **चिन्त्यमिदम्** । नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमस्तीति भाष्यार्थ इत्यन्ये ॥

( सिद्धान्तान्तरश्लोकवार्तिकम् )

## *वर्णं वाऽऽहुः पूर्वसूत्रे ।

( भाष्यम् )

**अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते ॥**

( प्रदीपः ) **वर्णं वाऽऽहुरिति** । रूढिरियं वर्णस्येत्यर्थः ॥ **पूर्वसूत्र इति** । व्याकरणान्तरे '**वर्णा अक्षराणि**' इति वचनात् ॥

( उद्द्योतः ) ननु न्यायादिनयेऽव्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोऽत आह—**वर्णं वाऽऽहुरिति** ॥ चघटितः पाठोऽत्र प्रामादिकः, व्याख्यानभाष्ये '**अथवा**' इत्युक्तेः ॥ नन्वनन्तरोक्तयोगाभावात्कथं तेषु प्रयोगोऽत आह—**रूढिरिति** । तदुक्तं भाष्ये—**अक्षरमिति संज्ञेति**[5] ॥ **व्याकरणान्तरे इति** । पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इति भावः ॥ एवं च '**अक्षरसमाम्नायः**' इत्यस्य श्रुतिरूपो वर्णसंघात इत्यत्र तात्पर्यम्[6] ॥

( इत्यक्षरनिर्वचनम् ॥ )

---

( वर्णोपदेशप्रयोजनप्रश्ने श्लोकवार्तिकम् )

## *किमर्थमुपदिश्यते[7] ॥ १ ॥

( भाष्यम् )

**अथ किमर्थमुपदेशः क्रियते[8] ?**

( प्रदीपः ) **किमर्थमिति** । वर्णानां साधुत्वस्याप्रतिपाद्यत्वात्पदस्यैव साधुत्वान्वाख्यानात्**प्रश्नः** ॥

( उद्द्योतः ) भाष्ये—**उपदिश्यत इति** । अक्षरसमाम्नायोपदेशः किमर्थ इत्यर्थः ॥ पूर्वं कृतोऽप्ययं विचारः कंचिद्विशेषं वक्तुं पुनः क्रियते ॥

( समाधाने श्लोकवार्तिकम् )

## *वर्णज्ञानं[9] वाग्विषयो यत्र च ब्रह्म वर्तते ॥ तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥२॥

( भाष्यम् )

**सोऽयमक्षरसमाम्नायो[10] वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः । सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥**

**( इति माहेश्वरीयं विधिशेषप्रकरणम् ॥ )**

---

१ **रूपमिति** । तथा चानश्वरत्वं प्रवृत्तिनिमित्तं दर्शितमित्यविनाशी तदर्थ इति नित्योऽर्थः फलतीति भावः ॥ छाया ॥

२ 'व्यवहारे नित्यतया तु वर्णपदवाक्यस्फोटानां नित्यत्वाज्जाति' इति ख. पाठः ।

३ तदेवमक्षरशब्दोऽविनाश्यर्थपरतया व्युत्पादितः । इदानीं व्यापकपरतया व्युत्पादयति—**अश्नोतेर्वेति** ॥ छाया ॥

४ **लोप इति** । पद्यानुरोधेनेति भावः ॥ छाया ॥

५ **संज्ञेतीति** । तथाच वर्णत्वं प्रवृत्तिनिमित्तमिति भावः ॥ छाया ॥

६ **तात्पर्यमिति** । एवं च नित्यव्यापकवर्णलक्षणमर्थत्रयमक्षरशब्दस्योक्तम् । तत्र प्राधान्येन नित्यव्यापकयोरिह शास्त्रेऽनुपयोगात्सामर्थ्येन वर्णविशेषणतया तयोरिति नित्यव्यापकवर्णसमाम्नायोऽक्षरसमाम्नाय इति सिद्धम् ॥ छाया ॥

७ तदेवं श्लोकवार्तिकस्य पादत्रयं व्याख्यातम् । अथ वार्तिककृदेवोत्तरवार्तिकावतारणाय चतुर्थपादेन प्रयोजनप्रश्नं करोति—**किमर्थमुपदिश्यत इति** ॥ छाया ॥

८ 'अथ किमर्थमुपदेशः क्रियते' इति ग्रन्थः प. पुस्तके नास्ति ॥

९ प्रयोजनपरं श्लोकवार्तिकं संपूर्णमाह—**वर्णज्ञानमिति** ॥ छाया ॥

१० अदृष्टमपि फलमाह—**सोऽयमिति** ॥ छाया ॥ 'योऽयमक्ष' इति प. पाठः ॥

**( प्रदीपः ) वर्णज्ञानमिति ।** वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाचो विषयः, शास्त्रेण वाग्विसीयते-आबध्यते, शास्त्रेण तस्याः परिज्ञानादित्यर्थः ॥ **यत्र चेति ।** ब्रह्म=वेदः पदे वर्तते । तस्य च शास्त्रं विषयः, लौकिकानां वैदिकानां च शास्त्रं विषय इत्यर्थः ॥ **तदर्थमिति ।** शास्त्रप्रवृत्त्यर्थमित्यर्थः ॥ **इष्टबुद्ध्यर्थमिति ।** कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः ॥ **लघ्वर्थमिति ।** अनुबन्धकरणार्थमित्यर्थः ॥ **वाक्समाम्नाय इति ।** एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः ॥ **पुष्पितः फलित इति ।** दृष्टादृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां ॥ **चन्द्रतारकवदिति ।** अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति ॥ **ब्रह्मराशिरिति ।** ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीत्यर्थः ॥ **सर्ववेदेति ।** सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोति ॥ **मातापितराविति ।** माहात्म्यातिशयः शास्त्रस्य प्रत्याहारमात्रफलाख्यानद्वारेण ख्याप्यते ॥ **महीयेते इति ।** पूजां प्राप्नुत इत्यर्थः । महीयशब्दः कण्ड्वादियगन्तः ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ २ ॥

**( उद्योतः ) येन शास्त्रेणेति ।** चतुर्दशसूत्र्यात्मकेन तन्मूलकपाणिनिव्याकरणेन चेत्यर्थः ॥ **तत्=शास्त्रम् ॥ वाचो विषयः—** बन्धनं, प्रतिपादकमित्यर्थः ॥ भाष्ये **'यत्र च'** इत्यनेन वाक् परामृश्यते इत्याह**—पदे वर्तत इत्यादिना ॥ शास्त्रं विषय इति ।** प्रतिपादकमित्यर्थः । वर्णज्ञानं शास्त्रं वाचो विषयः ॥ का सा वाक् ? **यत्र ब्रह्म च वर्तते,** चात्पुराणादि-इति भाष्याक्षरार्थः ॥ **'तदर्थं'** इत्येतद्व्याचष्टे**—शास्त्रप्रवृत्त्यर्थमिति ॥ कलादीति ।** इदं प्रयोजनं पस्पशान्ते दूषितम् ॥ **अनुबन्धकरणार्थमिति । 'लघ्वर्थं'** इत्यक्षराणामत्रार्थे स्वारस्यं **चिन्त्यम् ।** अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थो वा ॥ **वाक्समाम्नायः—**वाक्सङ्ग्रहोपाय इत्यर्थः । तदाह**—एतावद्भिरेवेति ॥** दृष्टफलेनाभ्युदयेन वा **पुष्पितः ।** अदृष्टफलेन निःश्रेयसेन वा **फलितः ॥ वाग्व्यवहारस्येति ।** तत्संग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः ॥ यथाश्रुते हि भाष्येऽक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः। अत एवैतत्प्रतीकमुपादाय हरिणा-**''अस्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्ताऽस्ति, एवमेव वेदे पारंपर्येण स्मर्यमाणम्''** इति व्याख्यातम् ॥ **ब्रह्मतत्त्वमेवेति ।** तदुक्तं नन्दिकेश्वरेण—

'अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ॥'

इत्यादिना सर्ववर्णानां मायेश्वररूपता वर्णेभ्य एव च महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्रीं योजयता ॥ तदाह**—सर्ववेदेत्यादि ॥**

**अन्ये तु वर्णज्ञानं—**चतुर्दशसूत्र्यात्मकं शास्त्रं **वाचः—**वेदशास्त्रपुराणरूपायाः सकलवाचो **विषयः—**बन्धनम् । **यत्र च** वर्णसमाम्नाये **ब्रह्म** बोध्यतया **वर्तते ।** व्याख्याता चैषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण । **तदर्थं—**सकलवाग्ज्ञानार्थं ब्रह्मबोधनार्थं च । अनेन सकलवेदाध्ययनेन यत् फलं तदक्षरसमाम्नायज्ञानेन सूचितम् । तद्वक्ष्यति**—सर्ववेदेत्यादि ॥ 'सोऽयं'** इत्यादिभाष्यग्रन्थश्चैतच्छ्लोकपूर्वार्धस्यैव व्याख्यानपरः । तत्र **'वर्णज्ञानं'** इत्यस्य व्याख्या-**'सोऽयमक्षरसमाम्नायः'** इति । **'वाग्विषयः'** इत्यस्य व्याख्या-**'वाक्समाम्नायः'** इति, सर्ववाङ्मूलत्वात् । तदध्ययनतन्मूलव्याकरणाध्ययनाभ्यां **पुष्पितः । फलितः—**तदर्थभावनया जनिततत्त्वज्ञानरूपफलः । **चन्द्रतारकवत् प्रतिमण्डित** इत्यनेनास्यानादित्वं सूचयति । तादृशोऽयं **ब्रह्मराशिर्वेदितव्यः,** बोध्यबोधकयोरभेदात् ॥ **सर्ववेदेति ।** सर्ववेदाध्ययनजन्यपुण्यफलस्य चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञानेऽध्ययनमात्रे भवति । इदमेव पूर्वं पुष्पितत्वम् । तादृशपुत्रवत्त्वेन च मातापित्रोः स्वर्गे पूजा भवति । यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति । **इष्टबुद्ध्यर्थ**मित्यादि तु प्राग्व्याख्यातत्वान्न व्याख्यातमित्याहुः ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

( अक्षरसमाम्नायाधिकरणं समाप्तम् )

( इति प्रत्याहाराह्निकम् )

काशिकामादिसूत्राणां नन्दिकेशकृतां शुभाम् ॥
लोकोपकारिणीं दिव्यां व्याकरोमि यथामति ॥ ३ ॥

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ॥**
**उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥१॥**

इह खलु सकललोकनायकः परमेश्वरः परमशिवः सनकसनन्दनसनत्कुमारादीन् श्रोतॄन् नन्दिकेशपतञ्जलिव्याघ्रपादवसिष्ठादीनुद्धर्तुकामो ढक्कानिनादव्याजेन चतुर्दशसूत्र्यात्मकं तत्त्वमुपदिदेश । तदनु ते सर्वे मुनीन्द्रवर्याश्चिरकालमाश्रितानामस्माकं तत्त्वं चतुर्दशसूत्र्यात्मकमुपदिदेशेति मत्वा, अस्य सूत्रजालस्य तत्त्वार्थं नन्दिकेश्वरो जानातीति तं नन्दिकेश्वरं प्रणिपत्य पृष्टवन्तः । तेषु पृष्टवत्सु स षड्विंशतिकारिकारूपेण तत्त्वं सूत्रागामुपदेष्टुमिच्छन्निदमाचष्ट**—नृत्तावसाने इति ।** अहमिति शेषः । नटराजराज इत्यनेन मङ्गलानि दर्शितानि । विश्वरूपविलासवैचित्र्यचमत्कारप्रवीणत्वान्नटराजराजः, ताण्डवाख्यरासमात्रविलासवैचित्र्यचमत्कारप्रवीणत्वस्य त्वन्यत्र नटादावपि सत्त्वात् ।

१ 'श्रेयसाभ्यां वा' इति झ. पाठः ।

२ कैयटेनार्थस्योक्तत्वे भाष्याक्षरायोजनाचार्थानुक्तेश्चाह—वर्णेति ॥ छाया ॥

३ **लघ्वर्थं चे**ति भाष्ये चकारेणानुबन्धकरणार्थत्वं समुच्चीयते । तदेव कैयटेनोक्तमिति न दोष इत्यपरे ॥ छाया ॥

४ **नन्दिकेश्वरेणेति ।** 'वर्णज्ञानं' इति वार्तिकेनाक्षरसमाम्नायोपदेशप्रयोजनं-ब्रह्मज्ञानमित्युच्यते । स चाक्षरसमाम्नायो नन्दिकेश्वरेण ब्रह्मपरतया व्याख्यातः । अतस्तदत्र प्रदर्श्यते ।

उपमन्युभाष्यसहिता नन्दिकेश्वरकाशिका—

नमः शिवाय देवाय सर्वज्ञाय परात्मने ॥
यस्योन्मेषनिमेषाभ्यां व्यक्ताव्यक्तमिदं जगत् ॥ १ ॥
गुरुं शिवं कुमारं च शिवतत्त्वविशारदम् ॥
प्रणम्य नन्दिकेशादीन् शिवभक्तान् मुहुर्मुहुः ॥ २ ॥

१ 'श्रीशंकरं कु' 'श्रीशं गुरुं कु.' 'श्रीशं गुहं कु-' इति पाठः ॥

२ 'मङ्गलादीनि' इति क्वचित्पाठो दृश्यते ॥

स त्वा[1]त्मतत्त्वं वागाद्यगोचरं–इति ज्ञापनार्थं ढक्कानिनादव्याजेन सनकादीनुद्धर्तुकामो **नवपञ्चवारं**—चतुर्दशवारं स्वान्तर्गतमात्मतत्त्वं प्रकटयितुं नृत्तावसाने ढक्कां[2] **ननाद**—नादितवान् ॥ अहं तदेतद् विततनिनादोद्भूतवर्णात्मकमाद्यमतिरहस्यमेतच्छिवसूत्रजालं-शिवसंबन्धिसूत्रसमूहं कल्याणरूपसूत्रसमूहं वा **विमर्शे**—विचार्य स्फुटीकरोमीत्यर्थः । 'विमर्शे' इति छान्दसं बोध्यम् ॥ १ ॥

**अत्र सर्वत्र सूत्रेषु ह्यन्त्यवर्णचतुर्दशम् ॥**
**धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥ २ ॥**

अनुबन्धाः पाणिन्याद्युद्देश्यका एवेत्याह—**अत्रेति** । एष्वित्यादिरर्थः । अन्त्यवर्णेति पाठः, **'अन्त्यं वर्ण'** इति वा । उभयथापि बहुव्रीहिः । कदम्बमन्यपदार्थः समासान्तः[3] । 'चतुर्दश' इति वा पाठः, तदा तत्पुरुषः । ह्येकयोरितिवच्चतुर्दशेति प्रयोगः । **धात्वर्थं** धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थमित्यर्थः । अन्त्यवर्णजालं शब्दे[4] इति न्यायेन । तथा चोक्तमिन्द्रेण—**'अन्त्यवर्णसमुद्भूता धातवः परिकीर्तिताः'** इति ॥ २ ॥

## अइउण् ॥ १ ॥

**अकारो ब्रह्मरूपः स्यान्निर्गुणः सर्ववस्तुषु ॥**
**चित्कलामिं समाश्रित्य जगद्रूप उणीश्वरः ॥ ३ ॥**

तत्राद्येन सूत्रेण सर्ववर्णानां समस्तभुवनानां च समुद्भवरूपं स्वात्मतत्त्वमुपदिष्टमित्याह—**अकारो ब्रह्मेति** । अनेन अः-परमेश्वरो निर्गुणः इं-मायामाश्रित्य उः-व्यापकः सगुणः ण्-ईश्वर आसीत्–इति सूत्रार्थः सूचितः । अत्र प्रमाणम्—**'असद्वा इदमग्र आसीत्ततो वै सदजायत'** इति श्रुतिः । **असद्ब्रह्म वै** निश्चयेन **अग्रे** सृष्टेः पूर्वमिदमकाररूपाक्षरात्मक**मासीत्, ततो**ऽक्षरात् असतो वै **सत्**—सगुणमजायत–जातमिति तदर्थः ॥ तदुक्तं गीतायाम्—**'अक्षराणामकारोऽस्मि'** इति ॥ ३ ॥

**अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ॥**
**आद्यमन्त्येन संयोगादहमित्येव जायते ॥ ४ ॥**

अत एवाह—**अकार इति** । 'आदिरन्त्येन सहेता' इत्यादिरकारोऽन्त्यो हकारः, अकारादिहकारान्ता वर्णास्ततः–परमात्मन एवाभवन्नित्यर्थः । **'परमः शिवः'** इति पाठान्तरम् ॥ ४ ॥

**सर्वं परात्मकं पूर्वं ज्ञप्तिमात्रमिदं जगत् ॥**
**ज्ञप्तेर्बभूव पश्यन्ती मध्यमा वाक् ततः स्मृता ॥ ५ ॥**
**वक्त्रे विशुद्धचक्राख्ये वैखरी सा मता ततः ॥**
**सृष्ट्याविर्भावमासाद्य मध्यमावाक्समायुतम् ॥ ६ ॥**
**(ज्ञप्त्याविर्भावमात्रात्मा मध्यमा वाक् समीरिता ॥**
**इति पाठान्तरम्)**

**सर्वमिति** । ईश्वर एवानादिजीवोपाध्याश्रितकर्मप्रेरितप्राणव्यापारानन्तरं नाभौ पराख्यं मायापरिणाममुपेत्य हृदि पश्यन्त्याख्यमुपेत्य विशुद्धचक्रे मध्यमाख्यमुपेत्य पश्चाद्वक्त्रे वैखर्याख्यमवाप्य वेदादिरूपो भवतीत्यर्थः । श्रुतिरपि—**"वागेव विश्वा भुवनानि जज्ञे"** इति । सूक्ष्मा वागेव विश्वाकारेण विपरिणमते विवर्तते वेति बोध्यम् ॥ श्रुत्यन्तरमपि—**'वाचैव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते'** इति ॥ **सर्ववस्तुषु**-परापश्यन्तीमध्यमावैखर्यादिषु **'इं चित्कलामाश्रित्य'** इत्यत्र **'गायत्रीमीं पद्मिनीमीम्'** इतिवदीकारो बोध्यः । तत्र सूत्रे इकारस्तु त्रिनेत्रेण नोदितः, ईकार एव प्रकटीकृतः । अत्र सर्ववर्णसम्भवकाले अ इ उ ऋ ऌ इति वर्णपञ्चकमेव सर्वेषामेकोनपञ्चाशदक्षराणां भूतपञ्चकानां पञ्चवर्गाणाञ्च क्रमेण योनिः । तच्च दीर्घह्रस्वभेदाद्द्विविधम् ॥ ६ ॥

**अकारं संनिधीकृत्य जगतां कारणत्वतः ॥**
**इकारः सर्ववर्णानां शक्तित्वात्कारणं मतम् ॥ ७ ॥**
**जगत्स्रष्टुमभूदिच्छा यदा ह्यासीत्तदाभवत् ॥**
**कामबीजमिति प्राहुर्मुनयो वेदपारगाः ॥ ८ ॥**
**अकारो ज्ञप्तिमात्रं स्यादिकारश्चित्कला मता ॥**
**उकारो विष्णुरित्याहुर्व्यापकत्वान्महेश्वरः ॥ ९ ॥**

तत्र सर्वत्रेकारस्यैव स्वतन्त्रतामाह—**अकारमिति** ॥ ७ ॥ **जगत्स्रष्टुमिति** च । उक्तं च—

**'स्वप्रकाशपरमात्मवस्तुनो दृश्यमानजगतः सिसृक्षया ॥**
**कामतः परशिवप्रवेशनं कामबीजमिदमेव निश्चितम् ॥'** इति ॥

**"बीजं बिन्दुद्वयारूढं साधर्ययोनिस्वरूपकम् ॥**
**महाकामकलारूपमात्मानं चिन्तयेत्प्रिये ॥"**

इति च ॥ ८ ॥ उक्तमेव द्रढयति—**अकार इति ॥ उकार इति** । उ व्यापकत्वेन ण् ईश्वर आसीदित्यर्थके **'उणीश्वरः'** इत्यत्रेति भावः ॥ ९ ॥

## ऋऌक् ॥ २ ॥

**ऋऌक् सर्वेश्वरो मायां मनोवृत्तिमदर्शयत् ॥**
**तामेव वृत्तिमाश्रित्य जगद्रूपमजीजनत् ॥ १० ॥**
**(ऋऌक्सर्वेशो मायाख्यां विस्तारितचराचराम् ।**
**पत्नीमाश्रित्य चिद्रूपो जनयामास केवलः ॥**
इति पाठान्तरम्)

ननु सर्ववेदान्तेषु परमेश्वर एक इति निश्चितत्वान्मायामिं चित्कलां समाश्रित्य जगद्रूपोऽभूदित्युक्तेरद्वैतहानिः स्यादित्याशङ्कायामाह—**ऋऌगिति** । तत्राद्यपाठे—ऋ-परमेश्वरः ऌ-मायाख्यां मनोवृत्तिं क्-अदर्शयत् । तामेवाश्रित्य स्वेच्छया जगज्जनयामासेत्यर्थः ॥ पाठान्तरे–स तां मनोवृत्तिमाश्रित्येदं चराचरं जनयामासेत्यर्थः ॥ 'ऋ परमेश्वरः' इत्यत्र **'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्'** इति श्रुतिः प्रमाणम् । ऋतं तत्पदार्थं परं ब्रह्म सत्यमित्यर्थः ॥ श्रुत्यन्तरमपि—**'सोऽकामयत बहु स्यां प्रजायेय'** इति ॥ श्रीतन्त्रेऽपि—**'मम चाभून्मनोरूपं ऌकारः परमेश्वरि'** इति । 'मम वृत्तिर्मनोरूपं' इति पाठान्तरम् । ऋऌवर्णौ यथा तादात्म्यमापन्नौ तथेत्यर्थः ॥ १० ॥

---

१ 'त्वात्मज्ञापनाय ढक्कानि' इत्येव त. पाठः ॥
२ 'स्यादयशः पटहो ढक्का' इत्यमरः ॥
३ 'समासार्थः' इति पाठः ।
४ 'शब्दन्यायेन' इति त. पाठः ।

वृत्तिवृत्तिमतोरत्र भेदलेशो न विद्यते ॥
चन्द्रचन्द्रिकयोर्यद्वद्यथा वागर्थयोरपि ॥ ११ ॥
( वागर्थाविव सुन्दरि ॥ इति पाठान्तरम् )
स्वेच्छया स्वस्य चिच्छक्तौ विश्वमुन्मीलयत्यसौ ॥
वर्णानां मध्यमं क्लीबमृलृवर्णद्वयं विदुः ॥ १२ ॥

तदाह—भेदलेश इति । वास्तव इत्यर्थः ॥ ११ ॥ १२ ॥

**एओङ् ॥ ३ ॥**

एओङ्मायेश्वरात्म्यैक्यविज्ञानं सर्ववस्तुषु ॥
साक्षित्वात्सर्वभूतानां स एक इति निश्चितम् ॥ १३ ॥

ननु 'जनयामास' इत्युक्ते जन्यजनकभावेऽद्वैतहानिः स्यादित्याशङ्कायां—तत्सृष्ट्वा तदेवानु प्राविशत्तदनुप्रविष्ट-इति श्रुतिमाश्रित्याह—एओङ्मायेश्वरेति ॥ जन्यजनकत्वं च स्वस्यैव तद्रूपेण वर्तमानत्वादिति नाद्वैतहानिः । अकारोकाराभ्यां निष्पन्नप्रणवरूपेणोंकारेण सगुणनिर्गुणयोरैक्यबोधितेनैव दृष्टान्तेन सर्वत्रैक्यबुद्धौ द्वैतनाशो ध्वनितः । समष्टिव्यष्टिभेदेन पूर्ववर्णयुतद्वितीयस्य तद्युक्ततृतीयस्य च समन्वयबोधकमिदं सूत्रम् । अ-अक्षरात्मकः इ-मायायुक्तः सन् यः स उ-ज्ञानरूपः प्रज्ञानात्मा सर्ववस्तूनामेकत्वं-अद्वैतोपपत्तिः, न नानात्वं जन्यजनकत्वं च । स्वयं प्रविश्य तद्रूपेण वर्तत इत्यर्थः ॥ वटबीजन्यायेन च पूर्वसूत्रद्वयजनितं वर्णपञ्चकमेव सकलजगत्कारणमिति प्रागुक्तम् । उत्तरसूत्रवर्णानामपि तस्मादेव सम्भवः । समष्टिव्यष्टिभेदेषु पूर्ववर्णयुतद्वितीयस्य पूर्ववर्णयुततृतीयस्य च संयोगजनकमिदं सूत्रम् । समन्वयबोधनमप्येकत्वेनोक्तम् । अत्राप्यपरत्वे सर्ववेदसम्मतं च । तथा च सनकदक्षिणामूर्तिसंवादमहावाक्यविवरणे—

'शृणु त्वं सावधानेन चतुर्णामपि साम्यता ॥
वेदानां च महाभाग चतुष्काणामिहोच्यते ॥ १ ॥
ब्रह्मशब्देन यद्वस्तु तत्प्रज्ञानमुदीरितम् ॥
प्रज्ञानं ब्रह्म यस्माद्धि तस्माद्ब्रह्मास्म्यहं ततः ॥ २ ॥
तद्ब्रह्म सर्वसाक्षित्वात् तत्त्वमस्येव तत्त्वतः ॥
अन्यत्त्ववारणार्थाय ह्ययमात्मेत्यथर्वणि ॥ ३ ॥'
इति ॥ १३ ॥

**ऐऔच् ॥ ४ ॥**

ऐऔच् ब्रह्मस्वरूपः सन् जगत्स्वान्तर्गतं ततः ॥
इच्छया विस्तरं कर्तुमाविरासीन्महामुनिः ॥ १४ ॥

स्वात्मभूतस्य[1] परमेश्वरस्य जगत्कारणत्वं कथमित्याशङ्कायामाह—ऐऔजिति । ततः स्वान्तर्गतं जगद्विस्तारयितुमिच्छुः ऐ-आदिशक्तियुक्तोऽक्षर इति । अतः पूर्वसूत्रगताकारेकारदीर्घयोगस्यैव ऐकारत्वमेकत्वं च ॥ सम्यक्ज्ञानस्वरूपः परमेश्वरो यः स पूर्वसूत्रगत अकारदीर्घ उकारदीर्घस्यैव योगे औकारत्वं । यः प्रज्ञानात्मा मायाशबलितः स औकारो यः स आउ इत्याविर्भावे । उक्तं च स्वरविमर्शिन्याम्—

'उकारज्ञानसंयोगात्सर्वसंभूतिरिष्यते' इति ॥

इच्छया जगद्विस्तारयितुमुद्युक्त इत्यर्थः । अत्राह—

प्रणवेन जगद्व्याप्तं मायायामवतिष्ठते ॥

इति ज्ञानोत्तमे ॥ एवं तत्त्वसमुदायानां त्रयोदशवर्णाच्छिवादिप्रकृत्यन्तानामुद्भवः । प्रकृतिपुरुषविवेकमुत्तरत्र कथयत्यस्मिन् सूत्रे उपसंहारत्वेन पठ्यते । अत्र ह्रस्वदीर्घप्रभेदाच्चतुर्दशस्वराणामेव कीर्तनं चतुर्दशभुवनचतुर्दशचक्रचतुर्दशप्रकाराणामिति निष्कर्षः । तदुक्तं शिवगौरीसंवादे महामन्त्रप्रकाशिन्याम्—

तत्त्वमत्र महेशानि मम रूपं त्वमेव हि ॥
चतुर्दशात्मकं चक्रं तव चक्रमितीरितम् ॥
त्रयोदशात्मकं तुर्यमावयोर्मिश्रमम्बिके ॥
उच्छूनकाले बिन्द्वात्मा तस्मादक्षरसंभवः ॥
बिन्दुस्फोटनमात्रेण वर्णानां च समुद्भवः ॥
तस्मादाकाशमुख्यानि भूतानि समजायत ॥
बिन्दुश्रीचक्रराजस्य परब्रह्मात्मकन्त्विति ॥
चतुर्दशात्मकं पश्चाच्चक्राकारेण संभवः ॥
उत्पन्नभुवनान्यत्र चतुर्दश चतुर्दश ॥ इति ॥ १४ ॥

**हयवरट् ॥ ५ ॥**

भूतपञ्चकमेतस्माद्धयवरण्महेश्वरात् ॥
व्योमवाय्वम्बुवह्न्याख्यभूतान्यासीत्स एव हि ॥ १५ ॥

तत आत्मनः सकाशादाकाशादिभूतसंभवमाह—भूतपञ्चकमिति॥ स एवेति । परमेश्वर एवेत्यर्थः ॥ १५ ॥

हकाराद्व्योमसंज्ञश्च यकाराद्वायुरुच्यते ॥
रकाराद्वह्निस्तोयं तु वकारादिति शैववाक्[2] ॥ १६ ॥

हकारादित्यादि । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी' इति श्रुतेरेतस्मात्परमेश्वराद्भूतपञ्चकमाकाशादिकं प्रपञ्चकारणमासीत् ॥ १६ ॥

अत्रास्मिन् सूत्रे भूतपञ्चकमासीदित्युक्तम् । तत्राकाशादिभूतचतुष्टयमेवोक्तं न पृथिवीत्याकाङ्क्षायां यदाधारस्वरूपं समस्तकारणमिति सूत्रान्तरेणावोचत्—

**लण् ॥ ६ ॥**

आधारभूतं भूतानामन्नादीनां च कारणम् ॥
अन्नाद्रेतस्ततो जीवः कारणत्वाल्लणीरितम् ॥ १७ ॥

भूतानां प्राणिजातानामुद्भिज्जस्वेदजजरायुजाण्डजादीनां प्रधानकारणत्वादाधारभूतं पृथिवी ॥ १७ ॥

**ञमङणनम् ॥ ७ ॥**

शब्दस्पर्शौ रूपरसगन्धाश्च ञमङणनम् ॥
व्योमादीनां गुणा ह्येते जानीयात्सर्ववस्तुषु ॥ १८ ॥

पुनश्चान्नपानयानादीनां कारणत्वेन स्थितानां तन्मात्राणामुत्पत्तिक्रममाह—शब्दस्पर्शाविति । व्योमादीनां गुणानेकैककारणानेतान् जानीयात् ॥ सर्ववस्तुष्विति । अत्र केषांचिद्ग्रन्थे अकारादिक्षकारान्ताः षट्त्रिंशत्तत्त्वमयाः कतिचित्तन्त्रराजादिग्रन्थे पञ्चपञ्चक्रमेण भूतलिपिप्रकारेण । एवमन्यत्र बीजनिर्णयभेदा बहवः सन्ति, अत्र तु तत्रोक्तप्रकारेणोद्घाटितम् ।

'पञ्चवर्गेष्वन्तिमवर्णाः शब्दस्पर्शादयो गुणाः ॥'

इति वचनात् सर्वजगत्कारणभूतस्य वर्णरूपपुरुषस्य सर्वेषां च व्योमादिगुणा इत्यर्थः ॥ १८ ॥

---

१ 'स्वात्मभूतस्य' इति त. पाठः ॥

२ 'दिति सैव वाक्' इति थ. पाठः ॥

# प्रथमाध्याये प्रथमपादे तृतीयाह्निकम् ।

## अथ पाणिनीयं विधिशेषप्रकरणम् ।

( १-वृद्धिसंज्ञासूत्रम् १ । १ । ३ । १ ॥ )

## वृद्धिरादैच् १ । १ । १ ॥

( सूत्रस्वरूपसाधनाधिकरणम् )

( उद्योतः ) वृद्धिरादैच् ॥ द्विपदं सूत्रं, 'कृतमनयोः साधुत्वं' इति भाष्यदर्शनात् । अन्यथोद्देश्यानेकत्वाद् वृद्धिशब्दस्यावृत्तिर्वाक्यार्थबोधाय कार्या स्यात् । द्वन्द्वे तु समाहारस्यैकस्योद्देश्यस्य शब्दतः संभवात् तां विनाऽपि सिद्ध्यति । न च समाहारे टच्प्रसङ्गः, समासान्तविधेरनित्यत्वात् । 'प्रतेरंश्वादयः' इति सूत्रेंऽश्वादिगणे राजन्शब्दपाठाल्लिङ्गात् । अन्यथा 'राजाहः' इति टचा सिद्धे किं तेन ॥ यद्वा पदत्रयं, पस्पशायां भाष्ये 'वृद्धिः-आत्-ऐच्' इति पदविभागदर्शनात् । वृद्धिशब्दस्त्वावृत्त्या योज्यः । अत्र पक्षे 'अनयोः' इति भाष्यं खण्डयोरित्यर्थकम् ॥

**झभञ् ॥ ८ ॥**

**घढधष् ॥ ९ ॥**

**वाक्पाणी च झभञासीद्विराड्रूपं चिदात्मनः ॥**
**सर्वजन्तुषु विज्ञेयं स्थावरादौ न विद्यते ॥ १९ ॥**
**वर्गाणां तुर्यवर्णा ये कर्मेन्द्रियपदा हि ते ॥**
**घढधष् सर्वभूतानां पादपायू उपस्थकः ॥ २० ॥**
**कर्मेन्द्रियगणा ह्येते जाता हि परमार्थतः ॥**

ततः सूत्राभ्यां कर्मेन्द्रियवर्गमुद्घाटयति—**वाक्पाणी चेति** । परमात्मनश्चिद्रूपशिवस्य प्राणिजातस्य च झकारभकारौ स्थावरादिषु विना विराड्रूपं विज्ञेयमित्यर्थः ॥ १९ ॥

अथ क्रमप्राप्तं पादादिकमाह—**घढधषिति** । **परमार्थतः**-परमशिवसकाशात् । इमे कर्मेन्द्रियगणाः सर्वजन्तूनां पादपायूपस्था घढधष्वर्णजाता इत्यर्थः ॥ २० ॥

**जबगडदश् ॥ १० ॥**

**श्रोत्रत्वङ्नयनघ्राणजिह्वाधीन्द्रियपञ्चकम् ॥**
**सर्वेषामपि जन्तूनामीरितं जबगडदश् ॥ २१ ॥**

अथ क्रमप्राप्तं ज्ञानेन्द्रियसम्भवमाह—**श्रोत्रत्वङिति** ।

**"वर्गाणां मध्यवर्णोत्थो ज्ञानेन्द्रियगणः स्मृतः ॥"**

इति वचनात् जबगडदवर्णसम्भवो ज्ञानेन्द्रियगण इति तस्य सर्वत्रस्यैव ज्ञानेन्द्रियगणः समुत्पन्न इति, सर्वत्र सर्वेषां प्राणिजातानामेते वर्णा ज्ञानेन्द्रियाणां जनका इति वा ज्ञातव्यमित्यर्थः ॥ २१ ॥

**खफछठथचटतव् ॥ ११ ॥**

**प्राणादिपञ्चकं चैव मनोबुद्धिरहंकृतिः ॥**
**बभूव कारणत्वेन खफछठथचटतव् ॥ २२ ॥**
**वर्गद्वितीयवर्णोत्थाः प्राणाद्याः पञ्च वायवः ॥**
**मध्यवर्गत्रयाज्जाता अन्तःकरणवृत्तयः ॥ २३ ॥**

ततः प्राणादिपञ्चकमनोबुद्ध्यहंकाराः समुन्मील्यन्ते—**प्राणादीति** ॥ २२ ॥

**वर्गद्वितीयेति** । एतैरष्टवर्णैः प्राणादिपञ्च मनोबुद्ध्यहंकृतयश्च जगतां कारणत्वेन संभूता इत्यर्थः ॥ २३ ॥

**कपय् ॥ १२ ॥**

**( अन्यद्वयसमुद्भूतौ पुरुषः प्रकृतिर्गुणः ॥**
**'प्रकृतिर्गुहा' इति पाठः )**

**प्रकृतिं पुरुषं चैव सर्वेषामेव निश्चितम् ॥**
**सम्भूतमिति विज्ञेयं कपाभ्यामिति निश्चितम् ॥ २४ ॥**

ततः सर्वप्राणिकारणत्वेनाद्यन्तवर्गद्वयाद्यक्षरग्रहणेन सम्पुटीभावं प्रकृतिपुरुषाभ्यां प्रकाशयति—**प्रकृतिमिति** । ककारपकारजातौ प्रकृतिपुरुषावित्यर्थः ॥ २४ ॥

**शषसर् ॥ १३ ॥**

**सत्त्वं रजस्तम इति गुणानां त्रितयं पुरा ॥**
**समाश्रित्य महादेवः शषसर् क्रीडति प्रभुः ॥ २५ ॥**
**शकाराद्राजसं रूपं षकारात्तामसोद्भवः ॥**
**सकारात्सत्त्वसंभूतिरिति त्रिगुणसंभवः ॥ २६ ॥**

ततोऽवस्थात्रयं निरूपयति—**सत्त्वं रजस्तम इति** । पुरा सृष्टेः प्राक् शषसवर्णसंभूतान् सत्त्वरजस्तमोगुणानाश्रित्य परमशिवः सर्वभूतेषु क्रीडतीत्यर्थः ॥ २५ ॥

स्पष्टम् ॥ २६ ॥

**हल् ॥ १४ ॥**

**तत्त्वातीतः परः साक्षी सर्वानुग्रहविग्रहः ॥**
**अहमात्मा परो हल् स्यादिति शंभुस्तिरोदधे ॥ २७ ॥**

**इति नन्दिकेश्वरकृता काशिका समाप्ता ॥**

सर्वतत्त्वजनकः स्वयं तत्त्वातीत इति ज्ञापनार्थमेतत्सूत्रं चकारेत्याह—**तत्त्वातीत इति** । सर्वानुग्रहविग्रहः साक्षी तत्त्वातीतो हल् स्यादिति ढक्कानिनादव्याजेन सर्वेषां मुनिजनानां तत्त्वमुपदिशन् तिरोदधे इत्यर्थः ॥ **हकारः शिववर्णः स्या**दिति शैवागमस्थितिरिति शिवम् ॥ २७ ॥

इति आदिसूत्रनन्दिकेश्वरकाशिकायास्तत्त्वविमर्शिन्युपमन्युकृता संपूर्णा ॥

१ अस्मिन्विधिशेषप्रकरणे **'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'लुक्तद्धितलुकि'** इत्यादिविधिसूत्राणां पदलाघवाय करणेऽपि मक्षग्रामादिवन्न प्रकरणाख्याहानिः ॥ दाधिमथाः ॥

२ **पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।**
**आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम् ॥**

इत्यभियुक्तोक्तेरादौ पदच्छेदमाह—**द्विपदमिति** । इदमिति शेषः ॥ छाया ॥

३ हरदत्तानुरोधेनाह—**यद्वेति** ॥ छाया ॥

४ नन्वत्र पक्षे वृद्धिशब्दस्याकारेणैव संबन्धे निराकाङ्क्षत्वेनैचा संबन्धो न स्यात् । न चावृत्तिः, मानाभावात् चाद्यभावाच्च, तदनन्वयापत्त्याऽऽवृत्तिकल्पनायामपि वाक्यभेदापत्तेश्च—इति चेत् । न, पौरुषेयवाक्ये तस्यादूषकत्वात् । वेदे त्वपूर्वभेदकल्पनापत्त्या स दूषकः । तद्विषयक एव **'संभवत्येक-'** इति घण्टाघोष इत्याशयेनाह—**वृद्धीति** ॥ छाया ॥

५ संभवतीतिरीत्योक्तभाष्यविरोधं परिहरति—**अत्रेति** ॥ खण्ड-

( आक्षेपभाष्यम् )

**कुत्वं कस्मान्न भवति "चोः कुः" पदस्य-इति ?**

**( प्रदीपः ) वृद्धिरादैच् ॥ १।१।१ ॥ कुत्वं कस्मादिति ।** अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्यत्वाच्च सर्वसंज्ञानां लौकिकत्वादादैच्छब्दस्यानुकरणशब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति **प्रश्नः** । तत्र कुशब्दः पञ्चसु वर्णेष्वासक्तरूपो वाचकत्वेन विनियुक्त इति शब्दस्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः ॥

**( उद्द्योतः )** असाधुशब्दोच्चारणे पाणिनेरश्रद्धेयतापत्त्या तदुक्तपदानां साधुत्वं विचारयति—भाष्ये—**कुत्वमित्यादि** । ननु ऐच्छब्दस्य **'आदिरन्त्येन-'**इत्यनेन कृत्रिमतया लौकिकवैदिकबहिर्भूतत्वेन कथं सुबादिशास्त्रप्राप्तिः ? लौकिकत्वं च लोकेऽर्थबोधनाय प्रयुक्तशब्दत्वम्, अत आह—**अनेकेति** ॥ **'नित्यत्वाच्च'** इति चो हेतौ, यतः शब्दार्थसंबन्धस्य नित्यत्वात्सर्वसंज्ञानां नित्यत्वमतो लौकिकत्वाच्छास्त्रप्राप्तिरित्यन्वयः ॥ लोकेऽर्थान्तरेऽप्रसिद्धानामपि संज्ञानां नित्यत्वमिति बोधयितुं सर्वशब्दः ॥ नन्वेवं **'वृद्धिरादैच्'**इत्यादीनां वैयर्थ्यमत आह—**शक्तीति । शक्त्यवच्छेदः**–तत्संकोचः । **विनियोगः**–विशेषे नियमः । अभिमतातिरिक्तार्थान्तरव्युदासाय च सः ॥ परिसंख्यायां चात्र शास्त्रे प्रायेण नियमव्यवहार इति बोध्यम् ॥

**यद्वा-शक्त्यवच्छेदः**—शक्तिनिश्चयः, **'शब्दार्थस्यानवच्छेदे'** इत्यादावयच्छेदशब्दस्य तदर्थकत्वदर्शनात् । फलरूपे हेतौ तृतीया ॥ **विनियोगः**–उपदेशः । शक्तिनिश्चयफलकोपदेशादित्यर्थः । एवंच तत्सङ्केतकरणरूपप्रकरणादर्थान्तराप्रतीतिरिति बोध्यम् ॥ इदमेव युक्तं, सर्वार्थवाचकत्वेऽपि सङ्केतरूपत्वेनाज्ञातशक्तिबोधकतया विधित्वसंभवेनैषां नियमार्थत्वासंभवात् ॥ नन्वेवं लौकिकार्थबोधो न स्यादत उक्तम्—**'अनेकशक्तेः'** इति । स्वशास्त्रे एव प्रकरणादन्यार्थाबोध इति भावः । अनेकस्मिन्ननेका वा शक्तिरस्येति विग्रहः । अन्त्ये 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वम् । **कोपधप्रतिषेधे तद्धितवुग्रहणाद्वा 'स्त्रियाः'**–इति पुंवत्त्वम् । आश्रयभेदादेव शक्तिभेद इति मते आद्यम् । निरूपकभेदाद्भेदे द्वितीयः । नित्ये शब्दार्थसंबन्धे पुरुषव्यापारात्प्रागवाचकस्य न पुरुषव्यापारेण वाचकता शक्या कर्तुमतः **'सर्वे सर्वार्थवाचकाः'** इत्यभ्युपगमादनेकशक्तित्वावसायः । तादात्म्यमेव च शब्दार्थयोः शक्तिः । अत्र पक्षे गौणमुख्यविभागः प्रसिद्ध्यप्रसिद्धिमूलः । **'अन्यायोऽनेकार्थत्वं'** इति त्वश्रद्धेयमेवेति निरूपितं मञ्जूषायाम् । **अत्र** लौकिकशब्दत्वं **साध्यम्,** शास्त्रीयसंज्ञात्वसमानाधिकरणं नित्यत्वं **हेतुः,** अतो न वैदिकेषु व्यभिचारः । **'सर्वसंज्ञानां'** इति वदता सूचितमिदम् ॥ **'अपूर्वाः संज्ञाः क्रियन्ते'** इति पक्षेऽपि लौकिकत्वं साधयति—**अनुकरणेति** । अयमपि लौकिकत्वे हेतुः, **'आदिरन्त्येन'** इत्यनेन संज्ञात्वेन विनियुक्तस्यैच्शब्दस्यानुकरणं सूत्रे, लक्षणया तेनैवोपस्थापितयोरैकारौकारयोस्तात्पर्यवशा-

---

योरिति । उद्देश्यविधेयरूपभागयोरित्यर्थः । **'द्वयोर्हि प्र—'** इत्येतत्तु नीलोत्पलादिसाधारणम् । प्रकृतपरत्वेऽपि चोक्ताभिप्रायम् । अत एव **'नचादैच्छब्दः'** इत्यत्राग्रे शब्दशब्दोपादानम् । अन्यथा 'आदैच्पदम्' इत्येवावक्ष्यत् । शब्दत्वं चैकानेकपदसाधारणम् । न च पदयोरेव विशेषणविशेष्यभावः । महावाक्येऽवान्तरवाक्यानामपि तस्य दर्शनात् । **अहरह** इतिवच्चास्यानुपयोगात् तपरत्वमुच्चारणसमवाय्येव निमित्तं नान्वयपर्यवसायीति तस्यैजर्थत्वमपि निर्विघ्नम् । अन्यथा **'सहि वहोः-'** इत्यत्र वर्णग्रहणानर्थक्यापत्तिः, अस्य ओद्भवतीत्यन्वयकाले तस्य तत्त्वाभावेन तत्कालग्रहणाप्रसङ्गात् । तस्माद्युक्तमेतदपि ॥ छाया ॥

१ **कस्मादित्यत्र** हेतोरिति शेषः । **'निमित्तकारण—'** इति पञ्चमी ॥ छाया ॥

२ **ननु** सिद्धप्रयोगनिष्पत्त्यर्थत्वात् व्याकरणस्य कथमलौकिके 'आदैच्'शब्दे प्रवृत्तिरत आह—**अनेकेति** ॥ ( ज. पु. टि. )

३ **अनुकरणेति** । यद्यपि 'ऐच्'शब्दस्याद्यन्तानुकरणत्वेन औकारस्य संज्ञित्वालाभः, तथाप्याद्यन्ताभ्यां साहचर्यादौकारस्याप्युपस्थितिरिति भावः ॥ ( ज. पु. टि. )

४ 'आसक्तस्वरूपो' इति अ. पाठः ॥

५ **पत्त्येति** । तथा च शास्त्रस्याप्रामाण्यापत्तिरिति भावः ॥ छाया ॥

६ **साधुत्वमिति** । तावदिति शेषः । तस्यैव प्रथमोपस्थितत्वादिति भावः । एतेनैतद्विचारादेः सार्वत्रिकत्वं ध्वनितम् । अत एवान्यत्र पुनर्न विचारः, युक्तितौल्यात् ॥ छाया ॥

७ **विचारयतीति** । भाष्यकृदिति शेषः । एतेन सवार्तिकसूत्रव्याख्यार्थं प्रवृत्तस्य भगवतो मुख्यतात्पर्यं सूत्रव्याख्यान एवेति ध्वनयितुमेवैतद्विचारारम्भः । तद्विचारे तज्ज्ञानस्य कारणत्वादिति सूचितम् ॥ छाया ॥

८ **त्यनेनेति** । संकेतितत्वेनेति शेषः ॥ छाया ॥

९ **आद्य इति** । विग्रह इति शेषः ॥ छाया ॥ मुद्रितपुस्तके 'आद्यः' इति पाठः । एकशक्तिपक्षे एव नियमः सम्भवतीति तन्मते आद्यं समाधानमित्युच्यते । अत एव 'आद्यं' इत्येव पाठः श्रेयान् ॥

१० **अत्र पक्ष इति** । सर्वे सर्वार्थवाचका इति पक्ष इत्यर्थः । अत्र हि 'कुत्वं कस्मान्न भवति' इति प्रश्नोपपादकग्रन्थे पक्षद्वयम्–सर्वे सर्वार्थवाचका इत्यभ्युपगमेनैकः, सर्वे सर्वार्थेत्यस्य योगिदृष्ट्यैव फलोपधायकत्वात् 'अपूर्वाः संज्ञाः क्रियन्ते' इति द्वितीयः पक्षः । प्रथमे च प्रकारद्वयम्–सर्वेषां शब्दानां सर्वार्थवाचकत्वात्संज्ञासूत्राणां वैयर्थ्येन नियमपक्षः, सर्वेषां तत्त्वेऽपि संज्ञाशास्त्राणामज्ञातशक्तिज्ञापकत्वेन विधिपक्षः । एवञ्च प्रथमपक्षे प्रकारद्वयम्, द्वितीये चैक एव प्रकारः । प्रथमे पक्षे गौणमुख्यविभागः प्रसिद्ध्यप्रसिद्धिमूलकः । द्वितीये च शक्तलाक्षणिकभेदेन । पक्षद्वयमप्येतत् 'सन्ति यदृच्छाशब्दाः' इति पक्षे–इति ध्येयम् ॥

११ नन्वेवमनुकार्योपस्थितावप्यैकारादेर्बोधो न स्यात् **'उच्चारितः शब्द एव'** इति भाष्योक्तेरत आह—**लक्षणयेति ॥ तात्पर्येति ।** तज्ज्ञानस्य बोधे कारणत्वादिति भावः ॥ छाया ॥

१२ 'कार्ययोर्बोधविष' इति घ. पाठः ।

च्छाब्दबोधविषयतेति बोध्यम् ॥ अनुकरणे च सर्वशब्दानां साधुत्वेन शास्त्रविषयतेति भावः ॥ यत्तु 'ऐच्' इत्याद्यन्तावयवद्वारा समुदायानुकरणमिति । तन्न । तथा सति **'आदिरन्त्येन-'** इति सूत्रवैयर्थ्यापत्तेः । वृद्धिशब्दादेः शास्त्रविषयताया एवमप्यनुपपादनाच्च ॥ नन्वनुकरणत्वाननुभवः । किं च **त्रयी शब्दानां प्रवृत्तिरिति** पक्षे उक्तहेतुद्वयस्याप्यभावोऽत आह—**जातीति** । वैयाकरणव्यवहाराच्चे तत्सिद्धिरिति भावः ॥ अत्र पक्षे जातिबोधार्थमेव संज्ञासूत्राणीति बोध्यम् । अत्रापि पक्षे लौकिकत्वं संज्ञापक्षवदेव बोध्यम् ॥ **हरदत्तस्तु**—वृद्धिशब्दो वृधेर्भावे क्तिन्नन्तः, अभेदोपचाराच्च वृद्धियुक्तादैक्षु वृत्तिः । लक्षणयैव सिद्धे सूत्रं नियमार्थं, वृद्धियुक्तप्लुतदीर्घैकारादीनां बोधो मा भूदिति त्रयीपक्षे सूत्रार्थमाह । तन्न । **'अदेङ् गुणः'** इत्यादावसंभवात् ॥ ननु कुत्वमित्यत्र संज्ञात्वपक्षे ककारादिपञ्चकगतप्रवृत्तिनिमित्ताभावात् त्वप्रत्ययोऽनुपपन्नः । किं चात्र ककारस्य प्राप्तिर्न तु कुवृत्तिधर्मस्येति कुत्वमित्यसङ्गतमत आह—**तत्रेति** । **आसक्तरूपः**-संबद्धस्वरूपः । एवञ्च कुशब्दः कुशब्दवत्ककारादिषु शक्त इत्येवं शक्तिग्रहात्कुशब्दस्य प्रवृत्तिनिमित्तत्वम् । संबन्धश्चानादिव्यवहारसिद्धतादात्म्यम् । तादात्म्येन कुशब्दं प्रवृत्तिनिमित्तीकृत्य शक्तित्वेन तस्य ग्रहे बाधकाभावात् ॥ **केचित्तु**—शब्दस्य स्वरूपं-कुशब्दत्वं सामान्यं, तत्कादिष्वारोपितं प्रवृत्तिनिमित्तं तद्व्यक्तिश्च वाचिकेत्याहुः । तेन च कुत्वशब्देन स्वार्थाश्रयः ककारो लक्ष्यते-इति **ककारः कस्मान्नेति** चोद्यपर्यवसानम् ॥

वस्तुतः कुत्वकुरादयोर्भत्वभसंज्ञापदयोश्च पर्यायतेति **'ऋलक्'** सूत्रे निरूपितमिति न कश्चिद्दोषः ॥

**( समाधानभाष्यम् )**

**भत्वात् ॥**

**( आक्षेपभाष्यम् )**

**कथं भसंज्ञा ?**

**( समाधानभाष्यम् )**

**"अयस्मयादीनि छन्दसि" इति ॥**

**( समाधानबाधकभाष्यम् )**

**'छन्दसि' इत्युच्यते, न चेदं छन्दः ॥**

**( समाधानसाधिका भाष्येष्टिः । )**

## छन्दोवत्सूत्राणि भवन्ति ॥

( प्रदीपः ) **छन्दोवदिति** । न वैशेषिकादिसूत्राणि, अपि त्वङ्गत्वाद्व्याकरणसूत्राण्येव । इष्टिश्चेयम्—**'छन्दोवत्-'** इति ॥

( उद्योतः ) **अङ्गत्वात्**—पदपदार्थबोधनद्वारा वेदोपकारकत्वात् । **सुखं व्याकरण**मित्यादिनाऽङ्गत्वनिरूपणाच्च । **प्रधानं च षट्स्वङ्गेषु व्याकरण**मिति परपशायां भाष्योक्तेश्च ॥ अस्यामिष्टौ नार्षत्वं प्रयोजकं, **नैषेष्टिरस्ति-'छन्दोवत्कवयः कुर्वन्ति'** इति **यूड्वा ख्याविति** सूत्रे भाष्योक्तेः । तस्मादङ्गत्वमेव प्रयोजकमिति भावः ॥

---

१ **अनुकरणमितीति** । अयं हि तेषां भावः—आद्यन्तावयवानुकरणद्वारा 'ऐच्' इति 'ऐ औ च्' इति सूत्रस्यानुकरणम् । संज्ञाविधिकाले **'लोपश्च बलवत्तरः'** इति न्यायेन चस्यासंनिधेरैकारौकारयोरेव सा प्रवर्तत इति ॥ छाया ॥

२ ननु नात्र पक्षे **आदिरन्त्येने**ति व्यर्थं, हस्तचेष्टादेरवाचकस्यापि तद्व्यञ्जकत्वेन यथा संकेतो भरतशास्त्रे तथेहाप्यवाचकत्वेऽप्यणादीनामर्थद्योतकत्वेनेह शास्त्रे व्यवहाराय तेन संकेतः क्रियते । अन्यथा त्रयीपक्षेऽक्षरसमाम्नायसंज्ञासूत्रतदुपजीविशास्त्राणामानर्थक्यं प्रसज्येतेत्यत आह—**वृद्धीति** ॥ छाया ॥

३ **च तत्सिद्धिरिति** । वृद्धित्वादिजातिसिद्धिश्चेत्यर्थः ॥ वैशेषिकपरिभाषया द्रव्यत्वादिजातिसिद्धिवदिति भावः ॥ चेनेदं सूचितम्—सिद्धान्ते विद्यमानब्रह्मसत्ताया एव जातित्वस्वीकारादत्रापि तत्संभव इति ॥ छाया ॥

४ **असंभवादिति** । दीर्घैकारादिपदेन प्लुतस्याग्रहणे सिद्धे तद्ग्रहणस्य वैयर्थ्याच्च ॥ छाया ॥ **तद्ग्रहणस्य**—तपरकरणस्य । वृद्धिसंज्ञायां कथञ्चित्तादृशप्रवचनसंभवेऽपि गुणसंज्ञायान्तदसंभव इत्यर्थः ॥

५ **निमित्ताभावादिति** । अनुगतस्य तस्य जात्यादिरूपस्याभावात् । न च कत्वाद्येव तत् । अननुगतत्वादक्षादिवन्नानार्थतापत्तेः **'चोः कुः'** इत्यादावावृत्तिप्रसङ्गात् । तत्र युगपदन्वयबोधेऽप्यत्रानन्वयाच्च । नहि चस्य स्थाने कत्वाद्यापादनं युक्तम् । एतेन कुत्वं नाम कुशब्दनिष्ठा जातिरित्यपि परास्तमिति भावः ॥ छाया ॥

६ **धर्मस्येति** । स च यदि वाचककुशब्दनिष्ठस्तर्हि तस्य वाच्यावृत्तित्वेन तदर्थत्वासंभवः । अथ **चोः** कुरित्यादिस्थकुशब्दानुकरणेनानुकार्यनिष्ठसामान्यं तदर्थस्तर्हि तच्छब्दस्वरूपं तद्गता जातिर्वा निर्दिश्येत न कादिस्तद्बोध्य इति भावः ॥ छाया ॥

७ एकव्यक्तिसंनिवेशितयदृच्छाशब्दस्थले गतिद्वयम्—आनन्त्यव्यभिचारयोरभावेन तत्रातिरिक्तप्रवृत्तिनिमित्ताभावेऽपि शक्यस्यैवार्थस्य विषयताद्वयेन भानम्, तदुत्तरत्वादेः प्रकारत्वावच्छिन्नः स एवार्थः । यद्वा शब्दपराद्वाच्येऽर्थे एव त्वादिरिति ॥ एवं च कुत्वमित्यत्राद्यपक्षवद्द्वितीयपक्षेऽपि निर्वाहः । क्वादीनां कादीनामेकत्वमिति मते तेषु शक्तिस्ततो डित्थादिपदादिव शक्यार्थ एव त्वादिरिति कुत्वकुशब्दयोः पर्यायता । तेषामनेकत्वमिति मते तु तत्तज्जात्युपलक्षितेषु तेषु सा । टिघुभादीनां तु शक्यानन्त्यात्तत्पदमेव प्रवृत्तिनिमित्तम् । तदेव च तदुत्तरत्वाद्यर्थः । भत्वादिपदैर्भसंज्ञैवोच्यते । तदाह—**वस्तुत इति** ॥ त्रयीपक्षे तु कुरित्यनुगतप्रतीतेः कादिनिष्ठं कुत्वं जातिर्वाच्यगतं कत्वादि वा तत् । तदेव च तदर्थः । तदापि जात्या व्यक्त्याक्षेपाद्योग्यतया ककारप्रश्ने एव पर्यवसानम् ॥ छाया ॥

८ परिहरति—**भत्वादिति** । **'विभाषा गुणे'** इति पञ्चमी । तया पदत्वस्य बाधात् ॥ छाया ॥

९ ननु यचीत्यस्य निमित्ताभावादप्रवृत्तिः, **'अयस्मया—'** इत्यस्य तु अच्छन्दस्त्वात् । तथा च सा दुर्लभेत्याशयेनाशङ्कते—**कथमिति** ॥ छाया ॥

१० **छन्द इति** । छन्दःसाधने छन्दस्त्वाप्रसिद्धेरिति भावः ॥ छा. ॥

११ 'पदपदार्थकथनद्वारा' इति घ. पाठः ॥

१२ **अस्यामिष्टाविति** । एतत्प्रवृत्तिविषय इत्यर्थः ॥ छाया ॥

ननु छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिरत आह—इष्टिरिति । तथा च भाष्यकारीयातिदेशात्सूत्रेषु छन्दःकार्यप्रवृत्तिरिति भावः ॥

(आक्षेपभाष्यम्)

**यदि भसंज्ञा, "वृद्धिरादैजदेङ् गुणः" इति जश्त्वमपि न प्राप्नोति ॥**

(उद्योतः) भाष्ये—जश्त्वमपीति । संहितया पाठे इत्यर्थः ॥

(समाधानभाष्यम्)

**उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद्यथा—'स सुष्टुभा स ऋक्वता गणेन' । पदत्वात्कुत्वम्, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वम्, भत्वात्कुत्वं न भविष्यति ॥**

(उद्योतः) उभयसंज्ञान्यपीति । उभे संज्ञे येषामिति विग्रहः । संज्ञाद्वयहेतुककार्यदर्शनेन तद्वत्त्वकल्पनेति भावः ॥

(इति सूत्रस्वरूपसाधनाधिकरणम्)

(अथ तद्भावितपक्षनिराकरणाधिकरणम्)

(उभयपक्षस्वरूप-तद्भावितपक्षदूषणभाष्यम्)

**किं पुनरिदं तद्भावितग्रहणम्—वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते तेषां ग्रहणम्, आहोस्विदादैज्मात्रस्य?**

**किं चातः?**

**यदि तद्भावितग्रहणम्, 'शालीयः-मालीयः' इति वृद्धलक्षणश्छो न प्राप्नोति ।**

**आम्रमयम्-शालमयम्, वृद्धिलक्षणो मयण्न प्राप्नोति ।**

**आम्रगुप्तायनिः-शालगुप्तायनिः, वृद्धिलक्षणः फिञ् न प्राप्नोति ॥**

(प्रदीपः) किं पुनरिति । उभयथा शास्त्रे दर्शनात्पक्षद्वयेऽपि दोषसंभवात्प्रश्नः ॥

(उद्योतः) ननु सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह—उभयथेति । लुगादिसंज्ञासु तद्भावितपक्षस्य, लोपसंज्ञायामदर्शनमात्रस्येति भावः ॥ ननु टिघुभादिसंज्ञास्वतद्भावितानामेव ग्रहणं दृश्यते—इति सोऽपि पक्षः शङ्कितुमुचित इति चेत् । न । तत्र हि तद्भावितासंभवादतद्भावितानामेव ग्रहणम्, न च तथा प्रकृते—इति उभयथेत्युक्तम् ॥ वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणम् । वृद्धिशब्दैकत्वे द्वितीयः पक्ष इति भावः ॥ भाष्ये—वृद्धि-

---

१ सूत्रे इति । जातावेकवचनम ॥ कथमिति । मुख्यच्छन्दःसु साफल्यात्तदुपकारकत्वेनोपचरितच्छन्दस्त्वकेषु सूत्रेषु तेन न्यायेनाप्रवृत्तेः । तथा च तत्कार्यभाक्त्वयोगेन सूत्राणां छन्दस्तुल्यता दुर्वचेति भावः ॥ छाया ॥

२ इष्टिरितीति । यूरुयाख्याविति सूत्रस्थकैयटस्याप्यत्रैव तात्पर्यमिति प्रतिपादितं तत्रैवोद्योते ॥ एतेन—तत्र तथा वदतः कैयटस्य नेयमिष्टिरभिमतेति वृद्धिसंज्ञासूत्रस्थस्वग्रन्थविरोधः । किंच यदि निर्देशान्यथानुपपत्तिः शरणं तर्हि तत एव कुत्वाभावोऽस्तु । किमनेन गणपाठकल्पनया छन्दस्त्वोपचारेण च । किंच गौणमुख्यन्यायबाधज्ञापने गौरवम्—इति कृष्णोक्तमपास्तम् ॥ यत्तु तत्सूत्रे प्रवर्तकेनोक्तम्—नेदमपूर्वं वचनं किंतु छन्दःशब्दशक्तिरेव प्रदर्श्यते—इति । तन्न, तादर्थ्यादिति कैयटविरोधात् । नहि शक्यार्थो गौणो भवति । तस्मादिष्टिरेवेत्येव ज्यायः ॥ एतेन—"इजादेश्च" इति सजश्त्वकेनाकुत्वकनिर्देशेनैव ज्ञापितम्—तत्र सूत्रशब्दः सूत्राधानाजादिसंज्ञानां भाष्यवार्तिकयोश्चोपलक्षणम् । तेनादैचेत्याद्यसदादिप्रयोगेऽपि कुत्वाद्यकरणे दोषो न । ईदृशव्याख्याने मूलं तु 'भत्वाज्जश्त्वं न' 'आदैज्मात्रस्य' इत्यादिभाष्यप्रयोगः, 'अजुपलक्षणार्थम्' इत्याद्याधुनिकशिष्टप्रयोगश्च । एतेन 'कैयटोक्तं चिन्त्यम्, उक्तभाष्यादिप्रयोगाणामसाधुतापत्तेः, ज्ञापकसिद्धस्येष्टित्वकथनानौचित्याच्च' इति—रत्नोक्तमपास्तम् । यूरुयाख्याविति सूत्रे 'नह्येषेष्टिरस्ति' इति भाष्योक्त्या पूर्वस्यास्तत्त्वस्याभिमतत्वेन तद्विरोधापत्तेः । अत्र प्रथमसूत्रे विचारस्य सर्वत्र निर्वाहस्य सत्त्वेनेतः पूर्वमज्ञापितत्वेन तथाभिमतत्वे कुर्वन्तीत्यग्रे शङ्कापूर्वकं तत्कथनौचित्येन तदर्थमूरीकृत्य शङ्कान्तरकरणानौचित्येन च तथान्येनेष्टत्वात् । सूत्रशब्देन भाष्यवार्तिकग्रहणेऽप्यन्येषां ग्रहणे मानाभावेन तेषामसाधुत्वे इष्टापत्तेः । तत्प्रयोगस्य ज्ञापकत्वेऽतिप्रसङ्गात् । तेषां साधुत्व आग्रहे प्रोक्तभाष्यादिप्रयोगाणामेव तत्त्वसंभवादुत्तरभाष्यस्य निर्दलतापाताच्चेति दिक् ॥ तदेतत्सर्वं हृदि निधायाह—तथाचेति । तस्येष्टित्वे चेत्यर्थः ॥ छाया ॥

३ दृश्यन्ते इति । अनेन दृष्टानुविधिश्छन्दसि भवतीति सूचितम् । तेन विपर्ययशङ्का निरस्ता ॥ छाया ॥

४ तद्भावितेति । तेन—वृद्धिशब्देन भावितानां—विहितानां ग्रहणमित्यर्थः ॥ छाया ॥

५ मालीय इतीति । ननु प्रथमप्रत्युदाहरणोत्तरमितिशब्दः प्रयुज्यते, उत्तरत्र नेति कथं वैषम्यमिति चेत्; प्रत्युदाहरणबाहुल्ये यदुत्तरमितिशब्दः प्रयुज्यते तस्मिन्नेव निरभे इति भाष्यकाराणां शैलीसिद्धः संप्रदायः । तथाच तद्भावितग्रहणे शालीयो मालीय इति रूपे एव न सिद्ध्यतः । आम्रमयमिति मयड्वैतयोर्भाषायामिति मयटा सिद्ध्येत् । आम्रगुप्तायनिरित्यस्य च फिञोऽभावे फिनाऽपि रूपसिद्धिः । एवञ्च शालीय इति रूपं न स्यादित्येतत्प्रदर्शनार्थमत्रेतिशब्दः प्रयुज्यते ॥

६ 'वृद्धलक्षणः' इति प. पाठः ॥

७ ननु मा भूत् फिञ्, रूपे स्वरे च विशेषाभावात् । 'प्राचामवृद्धात्—' इति फिनेवात्र प्रार्थ्यताम्, किं वृद्धिसंज्ञानिमित्तः फिञ् प्रार्थ्यत इति चेदत्राहुः—आम्रगुप्तस्य युवा—आम्रगुप्तायनिरिति फिञन्तात् 'ण्यक्षत्रिय—' इति अणो लुगर्थं फिञपेक्षणादिति केचित्, तन्न; 'अब्राह्मण—' इत्यादिना युवप्रत्ययस्य लुक् सिद्धेः । तस्मादाम्रगुप्तायनिरित्यादौ फिञ् भवतीति सिद्धान्तो भज्येतेत्याशयेनेदम् ॥ (ज.पु.टि.)

८ मात्रेति । सामान्येन विधानादिति भावः ॥ छाया ॥

९ चस्त्वर्थे, प्रकृत इत्यग्रे योज्यः ॥ छाया ॥

१० तत्रेति । सर्वभासादौ दोषाल्लुगादिशब्दवत् । तेनैकः संज्ञिविशेषणमपरः संज्ञापर इति भावः ॥ छाया ॥

लक्षणो मयडिति । 'नित्यं वृद्धशरादिभ्यः' इत्यस्य वृद्धसंज्ञाद्वारा वृद्धिलक्षणत्वं बोध्यम् ॥ 'वृद्धलक्षणः' इति पाठे एषां वृद्धित्वाभावेन समुदायानां वृद्धत्वाभावादित्यर्थः ॥ फिञिति । **उदीचां वृद्धादगोत्रा**दिति । न च **प्राचामवृद्धा**दिति फिनाऽप्येतत्सिद्धं, पुंवद्भावनिषेधोऽप्याम्रगुप्तायनीभार्य इत्यादौ **जातेश्चे**ति सिद्ध इति वाच्यम् । आम्रगुप्तायनेरपत्यं युवेत्यर्थेऽणो **ण्यक्षत्रियार्षञित** इति लुकि आम्रगुप्तायनिरित्येव रूपं पितरि पुत्रे चेष्यते, फिनि तु ञितः परत्वाभावान्न सिध्येत् । न चाब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योप**संख्यान**मिति तत्सिद्धिः । ब्राह्मणगोत्रे तदप्रवृत्तेः ॥

( द्वितीयपक्षे दूषणभाष्यम् )

**अथादैज्मात्रस्य ग्रहणम्, सर्वो[1] भासः-सर्वभास इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोति ॥**

**इह तावती भार्या यस्य-तावद्भार्यः-यावद्भार्यः "वृद्धिनिमित्तस्य-" इति पुंवद्भावप्रतिषेधः प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये—**एष विधिरि**ति । पूर्वपदान्तोदात्तत्वमित्यर्थः ॥ **तावद्भार्ये** 'आसर्वनाम्नः' इत्यात्वस्य वतुनिमित्तमिति पुंवत्त्वनिषेधप्राप्तिः ॥

( सिद्धान्तभाष्यम् )

**अ[2]स्तु तर्हि—आदैज्मात्रस्य ग्रहणम् ॥**

( उद्द्योतः ) यदि प्रथमपक्षे दोषो दुरुद्धरोऽस्तु तर्हीत्यन्वयः ॥

( आक्षेपानुवादभाष्यम् )

**ननु चोक्तं—सर्वो भासः-सर्वभास इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोतीति ॥**

( समाधानभाष्यम् )

**नै[3]ष दोषः । नैवं विज्ञायते—उत्तरपदस्य वृद्धिः-उत्तरपदवृद्धिः, उत्तरपदवृद्धाविति ॥**

**कथं तर्हि ?**

**'उत्तरपदस्य' इत्येवं प्रकृत्य या वृद्धिस्तद्वत्युत्तरपदे-इत्येवमेतद्विज्ञायते । अवश्यं चैतदेवं विज्ञेयम् । तद्भावितग्रहणे सत्यपीह प्रसज्येत—सर्वः कारकः-सर्वकारक इति ॥**

( प्रदीपः ) **उत्तरपदस्येत्येवमि**ति । तत्र हि **'वृद्धौ सर्वं च'** इत्यप्युच्यमाने वृद्धिमात्रस्योत्तरपदस्याभावात्सामर्थ्याद्वृद्धिमदुत्तरपदं ग्रहीष्यत इत्यतिरिच्यमानमुत्तरपदग्रहणं सामर्थ्यादुत्तरपदाधिकारमवगमयति ॥

( उद्द्योतः ) **तद्वत्युत्तरपदे इति** । समासाक्षिप्तोत्तरपदशब्देन सामानाधिकरण्यायो**त्तरपदस्ये**त्येवं वृद्धिर्यस्मिन्निति बैहुव्रीहिरिति भावः ॥ तत्राधिकारलक्षणायां बीजमाह—**तत्र हीति** ॥ **न च आ**-अवतीति–औः, सर्वस्य-औः–सर्वौरित्यादौ वृद्धिरूपोत्तरपदसंभवः । न चैकादेशे व्यपवर्गाभावः । **नेन्द्रस्ये**ति निषेधेन पूर्वोत्तरपदसंबन्धिकार्यस्यैकादेशात्प्राक् प्रवृत्तिस्वीकारात् । तथा च सर्वशब्दान्तोदात्तत्वे शेषनिघातेन औकारस्यानुदात्तत्वे एकादेशस्य **स्वरितो वानुदात्ते** इति पाक्षिकः स्वरितः स्यादिति **वाच्यम्** ॥ तादृशानामभिधाने दृढतरमानाभा[5]वात्, स्वरितत्वाद्वा-अधिकारलाभ इति बोध्यम् ॥

( द्वितीयदूषणनिराकरणभाष्यम् )

**यद[6]प्युच्यते—इह तावती भार्या यस्य-तावद्भार्यः, यावद्भार्य इति "वृद्धिनिमित्तस्य-"इति पुंवद्भावप्रतिषेधः प्राप्नोतीति ।**

**नैष दोषः । नैवं विज्ञायते—वृद्धेर्निमित्तं-वृद्धिनिमित्तं, वृद्धिनिमित्तस्येति ॥**

**कथं तर्हि ?**

**वृद्धेर्निमित्तं यस्मिन्सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तस्येति ॥**

**किं च वृद्धेर्निमित्तम् ?**

**योऽसौ ककारो णकारो ञकारो वा ॥**

**अथवा यः कृत्स्नाया वृद्धेर्निमित्तं तद्वृद्धिनिमित्तम् ॥**

**कश्च[7] कृत्स्नाया वृद्धेर्निमित्तम् ?**

**यस्त्रयाणामाकारैकारौकाराणाम् ॥**

( प्रदीपः ) **वृद्धेर्निमित्तं यस्मिन्निति** । निमित्तशब्दोपादानसामर्थ्याद्व्यधिकरणपदो बहुव्रीहिराश्रीयते । अन्यथा **'वृद्धेस्तद्धितस्य'**इत्येवं ब्रूयात् । वृद्धिनिमित्तत्वाच्च तद्धित एव वृद्धिशब्देनाभिधास्यते । **अथवा** वृद्धेः संबन्धी यस्तद्धित इति वैयधिकरण्येन संबन्ध आश्रयिष्यते ॥ **योऽसौ ककार इति** । कणञित्सु सत्सु वृद्धिर्भवतीति तेषामेव निमित्तत्वम् ॥ **अथवेति** । निमित्तशब्दोपादानादेवाश्रितबहुत्वसंख्यो वृद्धिशब्दः समस्यते, वृद्धीनां निमित्तं–वृद्धिनिमितमिति ॥

---

१ **सर्वो भास इति** । इदं विग्रहप्रदर्शनं तु बहुव्रीहित्वशङ्कानिरासाय । तत्र हि पूर्वपदप्रकृतिस्वरेण भाव्यमेवान्तोदात्तेन ॥ आद्यपक्षे तु समासान्तोदात्तत्वं भवति ॥ छाया ॥

२ आवृत्तौ मानाभावात्तत्फलस्यान्यथासिद्धत्वात्सूत्रार्थाशानेन तत्र पक्षे दोषोक्तेश्च द्वितीयपक्षं स्वीकारोति सिद्धान्ती—**अस्तु तर्हीति** ॥ छाया ॥

३ **नैवमिति** । यत इत्यादिः । यत एतत्सूत्रस्थं निमित्तमेवमर्थकं न विज्ञायते इत्यर्थः ॥ छाया ॥

४ **बहुव्रीहिरिति** । व्यधिकरणबहुव्रीहेरन्यत्रावश्यकतयाऽत्रापि लाघवात्तदङ्गीकारादिति भावः ॥ यद्वा अधिकारानुकरणप्रथमान्तोत्तरपदशब्देनाभेदोपचारेण वृद्धेर्विशेषणान्न व्यधिकरणबहुव्रीहित्वशङ्का ॥ छाया ॥

५ **मानाभावादिति** । अत्र चेदं भाष्यमेव मानम् ॥ प्रकारान्तरेणेदं सुयोजमिति न तत्र भाष्यं मानमित्याशयेनाह—**स्वरितत्वेति** । उत्तरपदशब्दे स्वरितत्वप्रतिज्ञयाऽधिकारगतिरिति भावः ॥ छाया ॥

६ द्वितीयदोषमुद्धरति—**यदप्युच्यत इति** ॥ छाया ॥

७ 'किञ्च कृत्स्नाया' इति प. पाठः ॥

८ 'लिखितपुस्तकेषु **'च'** पाठो न दृश्यते' इति गुरुप्रसाद आह, तेनादृष्टोऽपि प्रामाणिकेषु दृश्यत एव चशब्दपाठः ॥

( उद्योतः ) अन्यथा वृद्धेरिति । वृद्ध्यात्मकतद्धिताभावाद्वृद्धिनिमित्तग्रहणमिति भावः ॥ नन्वर्शःशब्दादर्शआद्यचि टापि 'अर्शसा' इत्यादौ वृद्धिरूपसंभव इत्यरुचेराह—अथवेति । व्यधिकरणबहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवद्भावाप्रवृत्तिरिति भावः ॥ तेषामेवेति । एवशब्दोऽप्यर्थे । विशिष्टस्य निमित्तत्वे विशेषणानामपि तत्त्वमिति भावः ॥ ननु वृत्तावमेदैकत्वसंख्यावगतेर्बहुवचनान्तेन विग्रहोऽनुपपन्नोऽत आह—निमित्तेति । तत्र कात्स्न्यं प्रतिपत्तिकालिकं न प्रयोगसमवायीति न पारिषद्याभार्ये दोषः । न च वैयाकरणभार्येऽपि निषेधापत्तिः, इष्टापत्तेः । अत एवादैज्मात्रस्येति पक्षेऽत्र दोषानुद्भावनम् । तद्भावितानामेवेति पक्षेऽपि न य्वाभ्यामिति सूत्रे ऐजंशेऽपि वृद्धिपदसंबन्धेन निषेधप्रवृत्तिरत्र सूपपादा । अत एव देविकाशिंशपेति सूत्रे भाष्यकृता तत्संबंधो दर्शित इत्याहुः ॥ आदैज्मात्रग्रहणादेव 'मालादीनां च' इति सार्थकम् । अन्यथाऽस्यावृद्धत्वात् 'प्रस्थेऽवृद्धं–' इत्येव सिद्धे किं तेन ॥

( इति तद्भावितपक्षनिराकरणम् ॥ )

( अथ संज्ञासूत्रत्वसाधनाधिकरणम् )

( ६० आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥*॥ संज्ञाधिकारः संज्ञासंप्रत्ययार्थः ॥*॥

( भाष्यम् )

"अथ संज्ञा" इत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः ।

किं प्रयोजनम् ?

'संज्ञासंप्रत्ययार्थः' वृद्ध्यादीनां शब्दानां 'संज्ञा' इत्येष संप्रत्ययो यथा स्यात् ॥

( प्रदीपः ) 'संज्ञाधिकारः–' इति वार्तिकम् । तस्य व्याख्यानं—अथ संज्ञेत्येवमिति । 'अथ'शब्दः संज्ञायाः प्रस्तावद्योतनार्थः ॥ वृद्ध्यादीनामिति । 'संप्रत्ययः'इत्येतदपेक्षया कर्मणि षष्ठी । वृद्ध्यादयः संज्ञात्वेन यथा प्रतीयेरन्नित्यर्थः ॥

( उद्योतः ) वार्तिकमिति । सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्तिकत्वम् ॥ एतेन सूत्रव्याख्यानाय प्रवृत्तस्य कात्यायनस्यायुक्ता दुरुक्तचिन्तेत्यपास्तम् ॥ प्रस्तावेति । वार्तिकेऽधिकारशब्दोक्तः स इति भावः ॥ वृद्ध्यादीनां संज्ञात्वावच्छेदनिबन्धनषष्ठ्यनुपपन्नेत्यत आह—संप्रत्यय इति ॥ भाष्ये—संज्ञेत्येष इति । शब्दार्थज्ञानामितरेतराध्यासादिदं नानुपपन्नम् ॥

( ६१ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ इतरथा ह्यसंप्रत्ययो यथा लोके ॥ * ॥

( भाष्यम् )

अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां 'संज्ञा' इत्येष संप्रत्ययो न स्यात् ॥

इदमिदानीं बहुसूत्रमनर्थकं स्यात् ।

---

१ नचार्शःशब्दात् स्त्रियां मत्वर्थेऽचि टापि एकादेशेऽन्तवद्भावेन तत्वे चार्शसा भार्या यस्येत्यत्र दण्डः प्रहरणमस्यां क्रीडायां सा दाण्डा क्रीडा यस्येत्यत्र च वृद्धिरूपः स संभवतीति वाच्यम् । विकारप्रतिषेधसामर्थ्यात्तत्र वृद्धिरूपतद्धितानाश्रयणात् ॥ छाया ॥

२ ननु तावद्भार्य इत्यत्र व्यपदेशिवद्भावेन वतुरेव तथेति दोष एवात आह—अधीति ॥ छाया ॥

३ विशिष्टस्य–ककारणकारविशिष्टप्रत्ययस्य । विशेषणानां–ककारणकारादीनाम् ॥

४ न चात्र पक्षे निमित्तं यदि फलोपहितं तर्ह्यसंभवः । माथुरीभार्य इत्यादावेकप्रयोगे सर्ववृद्ध्यप्रवर्तकत्वात् । स्वविषये यथायथं वृद्धिप्रवर्तकत्वविवक्षायां वैयाकरणभार्येऽप्यतिप्रसङ्गः, अध्येत्रणोऽपि छान्दसो नैरुक्तो मौहूर्तिक इत्यादिप्रयोगभेदेन सर्ववृद्धिप्रवर्तकत्वात् । स्वविषये क्वापि तत्त्वायोगव्यवच्छेदविवक्षायां नैरुक्तो मौहूर्तिक इत्यादावपि न स्यात् वैयाकरणशब्द एवाणोऽतत्त्वात् । यत्किंचिद्वृद्धेस्तदविवक्षायां तु पारिषद्याभार्य इत्यादावप्रसङ्गः, आकारमात्रप्रवर्तकत्वात् । कात्स्न्र्यविवक्षायां तु यावद्भार्यो दुश्चिकित्स्यः । सर्ववृद्धियोग्यताविवक्षायां तु वैयाकरणभार्येऽतिप्रसङ्गः, योग्यतावच्छेदकणित्वस्याण्यपि सत्त्वात् । निमित्तग्रहणानर्थक्यं चात्र पक्षे स्यादिति वाच्यम् । प्रतिपत्तिकालिकयावद्वृद्धिनिमित्तत्वस्य विवक्षितत्वेन क्वापि दोषाभावात् । तदेतद्ध्वनयन्नाह—तत्रेति ॥ छाया ॥

५ वैयाकरणेति । 'न य्वाभ्याम्' इति सूत्रस्थकैयटाद्यभिमतशब्देऽपीत्यर्थः ॥ छाया ॥

६ ननु प्रथमपक्षे तदभावितत्वादप्राप्तिरिति फलभेदापत्तिरत आह—तद्भावीति । अपिर्द्वितीयसमुच्चायकः । अत्र–वैयाकरणभार्ये ॥ छाया ॥

७ पाणिनिसंमतोऽप्ययमेव पक्ष इत्याह—आदैजिति ॥ छाया ॥

८ संज्ञासूत्रत्वसिद्ध्यर्थं पूर्वपक्षप्रतिपादकवार्तिकं खण्डशो व्याचष्टे—संज्ञेति । कर्तव्य इति शेषः ॥ अत एवाग्रेऽनुवादे तथा वक्ष्यति ॥ अत एव 'कथं कार्यः' इत्यपेक्षायां तत्प्रकारं प्रतिपादयन्व्याचष्टे—अथ संज्ञेत्येवमिति । प्रकृत्येति । प्रशब्द आदिकर्मणि, कृञुच्चारणक्रियः । तथा च 'अथ संज्ञा' इत्येवमधिकारसूत्रं कृत्वेत्यर्थः ॥ वृद्ध्यादय इति । वृद्ध्यादिपदवन्ति सूत्राणीत्यर्थः ॥ छाया ॥

९ 'अथ संज्ञा इति प्रकृत्य–' इति अ. प. पाठः ।

१० अथ शब्दाधिक्यादपव्याख्येति भ्रमनिरासायाह—तस्येति ॥ छाया ॥

११ संज्ञात्वादिति । तथा च वृद्ध्यादीनां शब्दानां संज्ञाप्रतियोगिकभेदाभाव इति भावः ॥ छाया ॥

१२ अन्यथा दोषमाह—इतरथेति ॥ हि यतः ॥ छाया ॥

१३ इष्टापत्तिं निराचष्टे—इदमिति । अविगीतपाठमित्यर्थः ॥ छा. ॥ सिद्धान्ती शङ्कते—इदमिदानीमिति । इदानीं–संज्ञाधिकाराभावे–वृद्ध्यादिसूत्राणां संज्ञासंज्ञिभावाबोधकत्वे । संज्ञाधिकारवादी इष्टापत्त्या परिहरति—अनर्थकमिति ॥

अनर्थकमित्याह[1] ।

कथम्[2] ?

'यथा लोके' । लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते ।

अर्थवन्ति तावत्—'देवदत्त गामभ्याज[3] शुक्लां दण्डेन' 'देवदत्त गामभ्याज कृष्णाम्' इति ।

अनर्थकानि—'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः । अधोरुकमेतत्[4]कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः[5]' इति ॥

( प्रदीपः ) यथा लोके इति । कात्यायनेनासंप्रत्यये लोको दृष्टान्तत्वेनोपात्तः । भाष्यकारस्तु वाक्याध्याहारेणानर्थकत्वे लोकं दृष्टान्तत्वेन योजयति—बहुसूत्रमिति । बहुव्रीहिः, प्रकरणं चान्यपदार्थः । समाहारे द्विगुर्वा ॥ अर्थवन्ति चेति । यथा लोकोऽर्थवन्ति प्रयुङ्क्ते, एवमनर्थकान्यपीत्यर्थः । यावच्चाप्तत्वमाचार्यस्य न साधितं तावदनर्थकत्वशङ्का, झटिति समन्वयानवगमाद्वा ॥ दश दाडिमानीति । पदार्थानां समन्वयाभावादत्रानर्थकत्वम् ॥

( उद्द्योतः ) भाष्यकारस्त्विति । अधिकारं विनाऽसंप्रत्यये दृष्टान्तस्य लौकिकस्याभावादर्थापरिज्ञाने दृष्टान्तानुपयोगाच्चेति तद्भावः॥ वाक्याध्याहारेणेति । 'इदमिदानीं' इति वाक्याध्याहारेणेत्यर्थः[6] ॥ ननु द्विगौ अकारान्तोत्तरपदत्वात् स्त्रीत्वे ङीप्स्यादत आह—बहुव्रीहिरिति । अन्यपदार्थस्याशाब्दत्वाद्बहुव्रीहिर्दुर्ज्ञेयोऽत आह—समाहारे इति । पात्रादित्वात्स्त्रीत्वाभावः । अत[7] एव त्रिसूत्रीत्यादि सङ्गच्छते, बहुसूत्रशब्दस्यैव तत्र पाठात्—इत्यभिमानः[8] ॥ नन्वनर्थकदृष्टान्तेऽर्थवन्तीत्यादि व्यर्थमत आह—यथेति[9] । यद्यप्यन्वितार्थकपदसमूह एव वाक्यम्, तथापि भाष्ये पदसमूहे एव वाक्यशब्दः प्रयुक्तोऽतः 'अनर्थकानि वाक्यानि' इति न विरुद्धम् ॥ झटिति-विनाऽऽचार्याचारादिज्ञानेन ॥ पदार्थानाम्[10]-कुण्डमजाजिनमित्यादीनाम् । स्फ्यकृतोऽपत्यं—स्फैयकृतः ॥

( ६२ आक्षेपान्तरवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ संज्ञा[11]संज्ञ्यसंदेहश्च ॥ * ॥

( भाष्यम् )

क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यः ॥

कुतो ह्येतत्—वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति । न पुनरादैचः संज्ञा, वृद्धिशब्दः संज्ञीति ?

( प्रथमाक्षेपानुवादभाष्यम् )

यत्तावदुच्यते[12]—'संज्ञाधिकारः कर्तव्यः संज्ञासंप्रत्ययार्थः' इति ।

न कर्तव्यः[13] ॥

( ६३ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ आचार्याचारात्संज्ञासिद्धिः ॥ * ॥

( भाष्यम् )

आचार्याचारात्संज्ञासिद्धिर्भविष्यति ॥

किमिदं—आचार्याचारादिति ?

आचार्याणामुपचारात् ॥

( प्रदीपः ) आचार्याचारादिति । आचार्याणां व्यवहारादित्यर्थः ॥

( उद्द्योतः ) उपचारोनाम गौणी वृत्तिरिति भ्रमं व्युदस्यति—व्यवहारादिति । अनेन व्यवहाराच्छक्तिग्रह उक्तः । स च शक्तिग्राहकशिरोमणिः ॥

( ६४ सिद्धान्तिवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ यथा लौकिकवैदिकेषु ॥ * ॥

( भाष्यम् )

तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥ लोके

---

१ अनर्थकमित्याहेति । अत्रेष्टापत्तिरेवेत्याहेति भावः ॥ छाया ॥

२ नन्वस्तेर्भूरित्यादौ तत्त्वदर्शनात्तदेककर्तृकस्य कथं तत्त्वमित्याशयेन शङ्कते—कथमिति ॥ लोके वाक्यद्वैविध्यदर्शनान्नात्र तथा सुवचमित्याशयेनाह—यथेति ॥ छाया ॥

३ अजधातोर्लोटि रूपं । प्रेरयेत्यर्थः ॥

४ अर्द्धोरुकं-चण्डातकम्, चड्डीति भाषायां प्रसिद्धम् । क्वचित् 'अधरोरुकं' इति प. पाठः ॥

५ श्यैङ् गतावित्यस्य निष्ठायां रूपम् ॥

६ इति वाक्येति । इत्यादिवाक्येत्यर्थः ॥ छाया ॥

७ अत एव-गणे बहुसूत्रशब्दस्यैव पाठात् ॥

८ अभिमान इति ॥ अनेनारुचिः सूचिता । तद्बीजं तु तन्त्रोत्तरपदानामेव पाठेन तथा दुर्वचमिति ॥ तस्मात्संज्ञापदानिर्देशे सूत्रस्येषदसमाप्तत्वाद्बहुच् । यद्वा—बहुपदत्वाद्बहुत्वं सूत्रपदेन सूत्रं तत्समूहो वेति कर्मधारय इति बोध्यम् ॥ छाया ॥

९ यथेतीति । तद्वत्सूत्रेष्वपि द्वैरूप्यं स्यादिति भावः । एतदर्थमेव भाष्येऽर्थवद्वाक्योदाहरणम् । न केवलमेतत्सूत्रानर्थक्यमात्रेणान्यसूत्राणां तत्त्वमापाद्यम् । लोकेऽर्थवतामपि केषांचित्सत्त्वात्तद्वत्संभवसंसर्गाणामस्तेर्भूरित्यादीनामर्थवत्त्वे बाधकाभावादिति तद्भावः॥ छाया॥

१० पदार्थानामिति । मिथ इति शेषः । तथा च प्रत्येकक्रियाध्याहारेण समन्वयेन संसर्गबोधकत्वेऽपि महावाक्यस्यातत्त्वेनानर्थक्यम् । एवं च तादृशमानर्थक्यमभिहितं, न तु पदानामर्थशून्यतारूपं; सर्वेषां तेषां तस्य सत्त्वादिति भावः ॥ छाया ॥ स्फ्यशब्दो यज्ञीयशस्त्रवाचकः ॥

११ यत्नान्तरस्य कर्तव्यतामाह—संज्ञेति ॥ असंदेह इति । बहुव्रीहिः । तन्निवर्तकः शब्दो वक्तव्य इत्यर्थः ॥ 'परा संज्ञा' इति वक्तव्यमिति यावत् ॥ छाया ॥ सन्देहस्याभाव इति नञ्तत्पुरुष इत्यपि बोध्यम् ( र. ना. ) ॥ अभावस्य वक्तुमशक्यत्वेन 'असंदेहो वक्तव्यः' इति भाष्यमनुपपद्येत, अतो 'बहुव्रीहिः' इत्येव सुवचम् ॥

१२ पूर्वाक्षेपवार्तिकं खण्डयितुमनुवदति—यत्तावदिति ॥ छाया॥

१३ 'न वक्तव्यः' इति प. पाठः ॥

**तावन्मातापितरौ पुत्रस्य जातस्य संवृते[1]ऽवकाशे नाम कुर्वाते-देवदत्तो यज्ञदत्त इति । तयोरुपचा[2]रादन्येऽपि जानन्ति इयमस्य संज्ञेति ॥ वेदे याज्ञिकाः संज्ञां कुर्वन्ति—स्फ्यो[3] यूपश्चषाल इति । तत्रभवतामुपचारादन्येऽपि जानन्ति—इयमस्य संज्ञेति ॥**

( उद्योतः ) भाष्ये—**वेदे याज्ञिका इति** । यज्ञकाण्डद्रष्टारो ऋषय इत्यर्थः । वेदकर्तृत्ववत्[4]संज्ञाकर्तृत्वं तेषां द्रष्टव्यम् ॥

( दार्ष्टान्तिकभाष्यम् )

**एवमिहापि । इहैव तावत्केचिद्व्याचक्षणा आहुः—वृद्धिः[5] शब्दः संज्ञा, आदैचः संज्ञिन इति ॥**

**अपरे पुनः "सिचि वृद्धिः" इत्युक्त्वाऽऽकारैकारौकारानुदाहरन्ति । तेन[6] मन्यामहे—यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिन इति ॥**

( प्रदीपः ) **वृद्धिशब्दः संज्ञेति** । वृद्धिशब्दस्य प्रत्यायनशक्तिर्व्याख्यानेनै[7]वं प्रकाश्यते । यथा-आदैचां वर्णानामिति वर्णत्वम् ॥ **अपर इति** । प्रदेशाद्वा संज्ञासंज्ञ्यभिव्यक्तिः । संज्ञासूत्रार्थाद्वा प्रदेशार्थस्य व्यवस्थेत्यर्थः ॥

( उद्योतः ) भाष्ये—**इहैवेति** । **वृद्धिरादैच्**सूत्रे एवेत्यर्थः ॥ असत्याः शक्तेर्व्याख्यानेनोत्पादयितुमशक्यत्वादाह—**वृद्धिशब्दस्येति** । **प्रत्यायनशक्तिः**—प्रत्यायने-बोधजनने कारणीभूता शक्तिः । भाष्ये—**उदाहरन्तीति** । **वृद्धिरादैजि**ति सूत्रार्थकथनार्थं तत्प्रदेशत्वेन 'सिचि वृद्धिः-' इत्युक्त्वा तदुदाहरणत्वेनाकार्षीत्-अक्षैषीत्-अश्रौषीदित्युदाहरन्तीत्यर्थः । एवं च वृद्धिशब्दस्य प्रत्यायकत्वमादैचां प्रत्याय्यत्वं निर्णीय **वृद्धिरादैच्**सूत्रस्य संज्ञाबोधकत्वं वृद्धिशब्दस्य संज्ञात्वं च निर्णयन्तीति भावः ॥ **तेन**—अपराचार्योक्तोदाहरणेन ॥

( आक्षेपान्तरानुवादभाष्यम् )

**यदप्युच्यते—'क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यः' इति ॥**

( ६५ सिद्धान्तवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ संज्ञासंज्ञ्यसंदेहश्च[8] ॥ * ॥

( भाष्यम् )

**संज्ञासंज्ञिनोश्चासंदेहः सिद्धः ॥**

**कुतः ?**

**आचार्याचारादेवं[9] । उक्त आचार्याचारः ॥**

( ६६ सिद्धान्तहेतुवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ अनाकृतिः ॥ * ॥

( भाष्यम् )

**अथवा[10]—अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

( प्रदीपः ) **अनाकृतिरिति** । आकृत्या साहचर्या[11]द्भेदो लक्ष्यते । तेनायमर्थः—वृद्धिशब्द एकत्वा[12]त्संज्ञा, आदैचां बहु[13]त्वात्संज्ञित्वम् । लाघवार्थं संज्ञाकरणम् । यथा—'**सर्वादीनि सर्वनामानि**' इत्यनेकस्यैका संज्ञा क्रियते । न त्वेकस्यानेका प्रयोजनाभावात् ॥ **आकृतिमत इति** । अवस्थाभेदेष्वपि स एवायमिति प्रत्य[14]भिज्ञानिमित्तकं देवदत्तत्वादिकं सामान्यमस्तीति 'आकृतिमतः' इत्युक्तम् ॥

१ **संवृते**-श्रोतृजनासमवहिते गृहादावित्यर्थः ॥ छाया ॥

२ **तयोरिति** । मातापित्रोरित्यर्थः । द्विविधवृद्धव्यवहाराद्दवादिपदेष्विव वाचकताग्रह इति भावः ॥ छाया ॥

३ **स्फ्यः**—खादिरं खड्गसदृशं यज्ञसाधनकाष्ठम् । **यूपः**—तक्षणादिसंस्कृतं पशुनियोजनकाष्ठम् । **चषालः**-यूपाग्रे स्थाप्यमानं यूपवलयसंज्ञकं काष्ठम् ॥ छाया ॥

४ **वेदकर्तृत्ववदिति** । यथा ऋषीणां वेदद्रष्टृत्वेऽपि वेदकर्तृत्वमुपचरन्ति तथा संज्ञाकर्तृत्वमपि याज्ञिकानामुपचार इति भावः ॥

५ 'वृद्धिशब्दः' इति प. पाठः ॥

६ ते इति विभक्तिप्रतिरूपकमव्ययमित्यन्यत्र ॥ छाया ॥ 'ते मन्यामहे' इति पाठाभिप्रायमेतत् । इदानीं 'तेन' इत्येव पाठो दृश्यते ॥

७ **व्याख्यानेनैवेति** । न तु प्रोक्षणेन व्रीहिष्वपूर्वसाधनशक्तिवदसती सा संज्ञा शास्त्रेणोत्पाद्यते । उक्तहेतोः । न च व्याख्यानाच्छक्तिज्ञानं, शक्तिज्ञानाच्च व्याख्यानमित्यन्योन्याश्रयः । पूर्वव्याख्यानाद्वक्तुस्तत्संभवात् ॥ छाया ॥

८ यद्यप्यसंदेहे प्रथमहेतुः '**अनाकृतिः**' इत्युक्तो वार्तिककृता, तथापि भगवान् सिद्धान्तवार्तिकोक्तहेतुं मध्यमणिन्यायेन तत्रापि संयोजयन् '**संज्ञासंज्ञ्य**-' इति पूर्वपक्षवार्तिकमेव सिद्धान्तपरतया योजयति—**संज्ञेति** ॥ '**न वक्तव्यो यतः**' इति शेषः । क्वचित् '**न वक्तव्यः**' इति पाठ एव ॥ छाया ॥

९ **एवो** हेतुसौलभ्यद्योतकः ॥ तेन ह्येकस्य संज्ञात्वेऽपरस्य संज्ञित्वे निश्चिते 'का संज्ञा, कः संज्ञी' इति संदेहाभाव इति भावः ॥ छाया ॥

१० एकस्य हेतोरुक्तत्वादेव '**अनाकृतिर्लिङ्गेन वा**' इति वाशब्दस्योभयत्र संबन्धमभिप्रेत्यासंदेहे साध्ये '**अनाकृतिः**' इति प्रथमान्तं हेतुत्वेनान्वयायोग्यमिति संज्ञादिपदाध्याहारेण व्याचष्टे—**अथवेति** ॥ छाया ॥

११ **साहचर्यादिति** । यत्राकृतिस्तत्र भेद इति तत्त्वम् ॥ छाया ॥

१२ **एकत्वादिति** । स्वरूपेण जात्यात्मना वेति भावः ॥ छाया ॥

१३ **बहुत्वादिति** । **अशब्दसंज्ञेति** निषेधादादैच्छब्दः संज्ञिपर इत्याकारादीनां स्वरूपेण जात्यात्मना वेति भावः ॥ तथा च '**अनाकृतिः**' इत्यादेः 'एका व्यक्तिः' इत्यर्थकत्वेन घसंज्ञासूत्रे एव कोटावेका व्यक्तिः, अन्यकोटावनेकव्यक्तयः । तत्र सा संज्ञा ताः संज्ञिन इति तात्पर्यम् ॥ छाया ॥

१४ 'प्रत्यभिज्ञानिमित्तं' इति अ. पाठः ॥

( उद्द्योतः ) नन्वाकृतिः=जातिस्तद्भेद आदैक्ष्वपि, तदभावस्तु[1] न वृद्धिशब्देऽपीत्यत आह—आकृत्येति । बहुव्रीहिरिति[2] भावः ॥ अनाकृतिरित्येतन्न्यायसिद्धमित्याह—लाघवार्थमिति ॥ नन्वेकस्यापि तव्यादेरनेकाः कृत्कृत्यप्रत्ययसंज्ञाः क्रियन्तेऽत आह—प्रयोजनेति । सति हि प्रयोजने तथा । प्रकृते न तथा, प्रयोजनाभावादिति भावः ॥ प्रत्यभिज्ञानिमित्तकम्—प्रत्यभिज्ञाप्रमाणकमित्यर्थः । वस्तुतो[3] भाष्ये—आकृतिमत इत्यस्य भेदवत इत्यर्थः । अवस्थाभेदेन च तत्रारोपितः सः । आरोपितभेदे च जातिसत्त्वे न मानम्[4] । अत एव 'देवदत्ता' इत्यादौ न ङीषिति कश्चित्[5] ॥

( ६७ सिद्धान्तहेतुवार्तिकम् ॥ ८ ॥ )

॥ * ॥ लिङ्गेन वा[6] ॥ * ॥

( भाष्यम् )

**अथवा—किंचिल्लिङ्गमासज्य वक्ष्यामि—इत्थंलिङ्गा संज्ञेति । वृद्धिशब्दे च तल्लिङ्गं करिष्यते, नादैच्छब्दे ॥**

( प्रदीपः ) लिङ्गेन वेति । कलादिना वर्णदोषेणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**इदं[7] तावदयुक्तम् । यत्तावदुच्यते—आचार्याचारादिति ।**

**किमत्रायुक्तम्[8] ?**

**तमेवोपालभ्य—'अगमकं ते सूत्रम्' इति, तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम् ।**

**अपरितुष्यन्[10] खल्वपि भवाननेन परिहारेण "*अनाकृतिर्लिङ्गेन वा*" इत्याह ॥**

( प्रदीपः ) तमेवोपालभ्येति । यो हि सूत्रकारमुपालभते—'अगमकं ते सूत्रं' इति, स कथं वृत्तिकारान् प्रामाण्येनाश्रयतीत्यर्थः ॥ अपरितुष्यन्निति । त्वयाऽपि परिहारान्तरं ब्रुवताऽऽचारो न प्रमाणत्वेनाश्रित इत्यर्थः ॥

( उद्द्योतः ) स कथं वृत्तिकारानिति । 'तस्यैव[11]' इति भाष्यस्य तदीयस्यैवेत्यर्थ इति भावः ॥

( तृतीयहेतौ गौरवाक्षेपभाष्यम् )

**तच्चापि[12] वक्तव्यम् ॥**

( प्रदीपः ) तच्चापीति । 'लिङ्गेन वा' इत्येतद्वक्तव्यमित्यर्थः । 'अनाकृतिः[13] संज्ञा' इत्येतत्तु न्यायसिद्धत्वान्न वक्तव्यम् ॥

( उद्द्योतः ) लिङ्गेन वेत्येतदिति । लिङ्गासङ्गः[14], इत्थं लिङ्गा संज्ञेति च वक्तव्यमित्यर्थः ॥

( तृतीयहेतुस्वीकारे लाघवप्रदर्शकभाष्यम् )

**यद्यप्येतदुच्यते[15] । अथवैतर्हि इत्संज्ञा न वक्तव्या, लोपश्च न वक्तव्यः । संज्ञालिङ्गमनुबन्धेषु करिष्यते । न च संज्ञाया निवृत्तिरुच्यते, स्वभावतः संज्ञा[16] निवर्तते । तेनानुबन्धानामपि निवृत्तिर्भविष्यति ॥**

( प्रदीपः ) अथ वैतर्हीति । एवं सतीत्यर्थः । ङकारा[17]दिष्वनुबन्धेषु कलादिकमासङ्क्ष्यते । ततश्च तेषां संज्ञात्वे सति

---

१ तदभाव इति । प्रत्युच्चारणं शब्दभेदस्य सिद्धान्तितत्वेन वृद्धिशब्दस्वरूपजातिसत्त्वादिति भावः ॥ छाया ॥

२ बहुव्रीहिरिति । एवञ्चाकृतिपदेनात्र न जातिर्गृह्यते किंतु भेद एव लक्ष्यते । तथा च न भेदो यस्यामित्यनाकृतिरिति बहुव्रीहिरिति ॥

३ ननु 'आकृत्या भेदो लक्ष्यते' इत्युक्त्वा आकृतिमत इत्यत्राकृतिशब्दस्य जातिपरं प्रदीपव्याख्यानमयुक्तमत आह—वस्तुत इति ॥

४ न मानमिति । अत एव 'देवदत्त इति संज्ञा क्रियते' इति भाष्योक्तिः संगच्छते । अन्यथा गवादिवज्जातिशब्दत्वे तदसंगतिः स्पष्टैव ॥ छाया ॥ 'आरोपितभेदेन च' इति मुद्रितपाठः स लेखकप्रमादात् । यत्रारोपितो भेदस्तत्र न जातिरिति तदभिप्रायः ॥

५ कश्चिदिति । अनेनारुचिः सूचिता । तद्बीजं स्वजादित्वात्तत्र टाबिति नेदं फलमिति ॥ छाया ॥

६ लिङ्गेन वेति । असंदेह इत्यस्यानुपङ्गः । तस्यैव प्रकृतत्वात् ॥ छाया ॥

७ प्रथमहेतुं दूषयति—इदं तावदिति । लिङ्गेन वेत्यस्य वक्ष्यमाणदूषणापेक्षस्तावच्छब्दः ॥ छाया ॥

८ किमत्रेति । शब्दोऽर्थो वेत्यर्थः । निर्धारणे त्रल् ॥ छाया ॥

९ तदयुक्तत्वमेव दर्शयति—तमेवेति । मूलभूतसूत्रकारमेवेत्यर्थः । उपालभ्य-सनिन्दमुक्त्वा ॥ तत्प्रकारमाह—अगमकमिति । संसर्गाबोधकत्वादनर्थकमित्यर्थः ॥ छाया ॥

१० वार्तिककृतोऽपीदमभिमतमित्याह—अपरीति ॥ *'आचार्याचारात्'* इति परिहारेणापरितुष्यन्निति संबन्धः ॥ छाया ॥

११ ननु भाष्ये वृत्तिकाराणां नामापि न गृहीतं, तत्किमुच्यते प्रदीपे-वृत्तिकारानिति; अतस्तद्भाष्यतः सम्पादयति—तस्यैवेतीति । तदीयस्यैव—तदीयव्याख्यानस्यैव ॥

१२ तृतीयं दूषयति—तच्चापीति ॥ छाया ॥ संज्ञाधिकारवादी 'यत्तावदुच्यते' इत्यादिना सिद्धान्तिमतोपरि एकं दूषणमुक्त्वा दूषणान्तरमाह—तच्चापीति । मया संज्ञाधिकारमात्रं कृतं, त्वया पुनर्लिङ्गासङ्गः कर्तव्यः, इत्थं लिङ्गा संज्ञेत्यपि च वक्तव्यमित्यर्थः ॥

१३ द्वितीयं तु युक्तमेवेत्याह—अनाकृतिरिति ॥ छाया ॥

१४ लिङ्गेति । प्रतिसंज्ञमित्यादिः । संज्ञेति चेति । तथा च संज्ञाधिकारासंदेहयोः करणे यथा गौरवं तथात्रापीति नास्ति ततो लाघवमित्यविशेषात्तद्बीत्यैतदुक्तिरयुक्तैवेति भावः ॥ छाया ॥

१५ कात्यायनीयस्तृतीयं लघवेन समर्थयते—यद्यप्येतदिति । यद्यप्येतत् वचनेनैव साध्यते तथापि संज्ञाधिकारादितो लाघवातिशय एवेत्यर्थः ॥ तमेवाह—अथैव तर्हीति ॥ छाया ॥ सिद्धान्ती दूषणमाह—यद्यपीति । संज्ञासंज्ञिपरिच्छेदार्थं कित्वादिलिङ्ग आसज्यमाने गौरवं यद्यपि भविष्यतीत्यर्थः । एतत्—गौरवग्रस्तकलादिलिङ्गमित्यर्थः । अथवैतर्हीति । एवं सति बहुलाघवकारि गौरवं न दोषावहमिति भावः ॥ ( अ. पु. टि. )

१६ 'संज्ञाः संज्ञिनं प्रत्याख्य निवर्तन्ते' इति प. पाठः 'संज्ञा संज्ञिनं प्रत्याख्य निवर्तते' इति च. छ. पाठः । प्रदीपदर्शनेन नायं भाष्यपाठ इति प्रतीयते ॥

१७ संज्ञालिङ्गमिति भाष्यस्यार्थमाह—ङकारेति ॥ छाया ॥

'ङादात्मनेपदं' इति करिष्यते । संज्ञा च संज्ञिनं प्रत्याय्य स्वयं निवर्त्तत इतीत्संज्ञा लोपश्च न वक्तव्यौ भवत इत्यर्थः ॥

( उद्द्योतः ) ङकारादिष्विति । धात्वादिपाठितेत्यर्थः । ननु संज्ञालिङ्गे कृतेऽपीत्संज्ञाद्यभावे कथं तेषां निवृत्तिरत आह—भाष्ये—**स्वभावतः संज्ञेति** ॥ तद्व्याचष्टे—**संज्ञा संज्ञिनमिति** ॥

( आक्षेपभाष्यम् )

**[1]सिध्यत्येवम् । अपाणिनीयं तु भवति ॥**

( उद्द्योतः ) भाष्ये—**अपाणिनीयं त्विति** । [2]अनन्तस्थलेषु दोषविशिष्टपठने, आनुनासिक्यादिवत् प्रतिज्ञाकरणे च दुर्ज्ञेयत्वादिति भावः ॥

( सिद्धान्तिभाष्यम् )

**[3]यथान्यासमेवास्तु ॥**

( आक्षेपानुवादभाष्यम् )

**ननु चोक्तम्—"*संज्ञाधिकारः संज्ञासंप्रत्ययार्थ इतरथा ह्यसंप्रत्ययो यथा लोके*" इति ॥**

( अनर्थकत्वनिराकरणेन समाधानभाष्यम् )

**न यथा लोके, तथा व्याकरणे । प्रमाणभूत आचार्यो दर्भपवित्रपाणिः [4]शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन [5]सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण ॥**

**[6]किमतो यदशक्यम् ?**

**अतः संज्ञासंज्ञिनावेव ॥**

( प्रदीपः ) **प्रमाणभूत इति** । प्रामाण्यं प्राप्त[7] इत्यर्थः । **'भू प्राप्तौ'** इत्यस्य **'आधृषाद्वा'** इति णिजभावपक्षे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते ॥ **दर्भपवित्रेति** । प्रमादाभावं दर्शयति ॥ **प्राङ्मुख इति** । प्राच्यां अभ्युदयहेतुत्वात् ॥ **महतेति** । मनःप्रणिधानं दर्शयति ॥ एतच्च सर्वमागमाद्बोद्धव्यम् । एवमानर्थक्ये परिहृते संज्ञासंप्रत्ययाय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति—**किमत इति** ॥

( उद्द्योतः ) ननु भवतेर्जन्मार्थ[9]त्वेनाभूततद्भावप्रतीत्या च्वौ

---

१ इदं कात्यायनीयोक्तसमर्थनं दूषयति भगवान्—**सिध्यत्येवमिति** । अयं भावः—यया संज्ञया सह यः पठितस्तस्यैव सा संज्ञा प्रत्यासत्त्या, नान्यस्येति **'ञीतः क्तः'** इत्यादौ **'अः क्तः' 'टोरथुच्' 'डोः क्रिः' 'अनुप्रदात आत्मनेपदम्'** इत्यादि लघुभूतो न्यासः कार्यः । **'इत्थं संज्ञा'** इत्यग्रे **'आदिस्तेनान्त्येन सह'** इति सूत्रं कार्यम् । 'कलादिनाऽन्त्येन वर्णेन सहोच्चार्यमाण आदिर्मध्यगानामुपलक्षणं स्यात्' इति तदर्थ इति ॥ छाया ॥

२ नन्वेवमपाणिनीयत्वे इष्टापत्तिरत आह—**अनन्तेति । दुर्ज्ञेयेति** । अयं भावः—यदीत्संज्ञादि नोच्यते तर्हि प्रत्याहारानुबन्धानां निवृत्त्यर्थं तेष्वपि कलाद्यासञ्जनीयम् । ततश्च **एओङिति** 'ङ'संज्ञाविधानसामर्थ्यादेदोतोरपि ङसंज्ञत्वात् **ङादात्मनेपद**मिति दोधेङ्भ्यामपि स्यात् । अनुदात्तग्रहणे च कृत्रिमत्वादेधत्यादिभ्य आत्मनेपदवद् **एकाच** इतीण्निषेधोऽपि स्यात् । न स्याच्च वसत्यादिभ्यः । अनुदात्तेषु तेषां पाठस्तु धातुस्वरबाधनार्थः स्यात् । उभयगत्याश्रयणे तु वसत्यादेरिण्निषेधवदात्मनेपदमपि स्यात् । **षढोः कः सि**—कृत्रिमत्वात्षसंज्ञकस्य प्रत्ययाकारस्यैव स्यात्—द्विमूर्धस्य दीर्घसक्थस्य पद्माक्षस्य । **छशां ष** इत्येतच्च तुदतो भवत इत्यादौ शशपोरेव स्यात् शसंज्ञकत्वात्, द्रष्टा द्रक्ष्यतीत्यादौ न स्यात् **अशब्दसंज्ञेति** निषेधात् । तथा—**ऋच्छत्यृता**मिति प्रश्लिष्टऋकारेण कृत्रिमत्वाद्विथृपिस् इत्यादीनां लिटि गुणः स्यान्नार्तेः । परस्मैपदसंज्ञाऽपि ल्युट्ण्वुलादेशानाकादीनामेव स्यात् । ततश्च शेषादेव परस्मैपदमिति नियमादेधत्यादिभ्यस्ते न स्युरिति दिक् ॥ छाया ॥

३ तस्माद्यथान्यासमित्संज्ञादिकं वक्तव्यमेवेत्याह भगवान् सिद्धान्ती—**यथेति** । यद्यपि मध्यमसमाधानेनादुष्टेन तत्सिद्धिः, तथापि तस्य क्वाचित्कत्वं न सार्वत्रिकत्वमिति हृदि निधाय प्रथमसमाधेरिष्टत्वे संज्ञासिद्धिरेवादौ नेति प्रथमपूर्वपक्षस्तदवस्थ इत्यादौ तमनूद्यासंभवात्तत्त्वमित्येवंप्रकारेण निराकरोति—**ननु चोक्तमित्यादि संज्ञिनावेवेत्यन्तेन** ॥ दृष्टान्तविघटनेन दूषयति— **न यथेति** । यथा लोके, न तथेत्यर्थः । लोके हि भ्रमप्रमादविप्रलिप्साकरणापाटवादिवक्तृदोषाद् दशदाडिमादिवाक्यानामानर्थक्यं भवितुमर्हति न तद्वत्सूत्रे तत्प्रयोजकवक्तृदोषाभावात् परमास्तिकमहर्षीणां भ्रमादिशङ्कानवकाशाच्चेति तात्पर्यम् ॥ छाया ॥

४ भूप्रदेशाशुद्धिकृतच्चित्तविक्षेपाभावमाह—**शुचाविति** । जनवार्तादिकृतव्यासङ्गाभावमाह—**अवकाश इति** ॥ छाया ॥

५ **सूत्राणीति** पाठः । **सूत्र**मिति पाठे तु जात्यभिप्रायमेकवचनम् ॥ यद्वा बहुसूत्रप्रणयनानन्तरं श्रान्तस्योद्वेगादिना प्रमादादि संभाव्येतापि न त्विदं प्रथमसूत्र इत्येकवचनेनाह ॥ छाया ॥ 'सूत्रं' इति प. पाठः ॥

६ **किमत इति** । आनर्थक्याभावेऽपि संज्ञासंज्ञिपरिच्छेदः कथमित्यर्थः । अत्रोत्तरमाह—**यदशक्यमिति** । यत्—यतः पक्षान्तरं प्रतिपत्तुमशक्यम्, अतः संज्ञासंज्ञिनावेवात्र प्रतिपत्तव्यौ । अथवा—सर्वोऽपि शंकाग्रन्थः, वर्णेनाप्यनर्थकेन भवितुमशक्यं—अतः किमित्यर्थः । अत्रोत्तरमाह—**अतः संज्ञेत्यादिना** । यत एकोऽपि वर्णो नानर्थकः, अतो वृद्ध्यादैचौ संज्ञासंज्ञिनौ प्रत्येतव्यावित्यर्थः ॥ ( अ. पु. टि. )

७ नच तत्त्वमेव कथमिति वाच्यम् । यतः श्रुत्यादिषट्प्रमाणानि ज्ञातवान् । **'तन्मे प्रमाणं शिवः'** इत्यभियुक्तोक्तेः **'ज्ञानं महेश्वरात्'** इति स्मृतेश्च नित्यप्रमातृतया ज्ञानहेतुतया च प्रमाणं महेश्वरं प्राप्तोऽतस्तथेत्यर्थात् ॥ छाया ॥

८ **प्राच्या इति** । **'प्राचीं देवा अभजन्त पितरोऽवाचीम्'** इति श्रुतेर्देवाभिमुख्येन च तदानुकूल्यसिद्धेरित्यपि बोध्यम् ॥ छाया ॥

९ ननु भवतेः सत्तार्थकत्वे भूतपदानर्थक्यम्, सत्तायाः प्रमाणान्तराधृतत्वेनाविधेयत्वात्प्रामाण्यमात्रस्य विधेयत्वेन प्रमाणमितीयतैवेष्टसिद्धेः । प्राप्त्यर्थत्वे तु चुरादिण्यन्तत्वेन प्रमाणभावित इति स्यादत आह—**जन्मेति** । छाया ॥ 'भवेर्जन्मार्थ-' इति घ. पाठः ॥

सति प्रमाणीभूत इति स्यात्, तदविवक्षायां तु प्रमाणमाचार्यः प्रकारान्तरेण भूत इति अर्थः स्यादत आह—**प्रामाण्यमिति**। 'वृत्तिविषये' इति प्रकृताभिप्रायम्॥ **प्रमादः**-पिशाचादिसंबन्धः॥ **आगमः**-संप्रदायः प्रकृतभाष्योक्तिर्वा॥ भाष्ये—**अनर्थकेनेति**। बोध्यार्थरहितेनेत्यर्थः। तेन पारायणे सर्वेषामदृष्टार्थत्वेऽपि दृष्टप्रयोजनराहित्यरूपमनर्थकत्वं वर्णपदसूत्राणामस्त्येवेति न वक्ष्यमाणसूत्रादिप्रत्याख्यानासङ्गतिः॥ **संज्ञासंप्रत्ययाय**-संज्ञात्वनिश्चयाय॥ भाष्ये—**किमत इति**। **अतः**-तादृशकर्तृकत्वात्[२] **किं**-कथमर्थवत्त्वं **यद्**-यतस्तत् **अशक्यनिरूपणमित्यक्षरार्थः**॥

**( संज्ञेतरार्थाक्षेपभाष्यम् )**

**कुतो नु खल्वेतत्—संज्ञासंज्ञिनावेवेति। न पुनः साध्वनुशासनेऽस्मिन् शास्त्रे[३] साधुत्वमनेन क्रियते?**

**( उद्योतः ) साध्वनुशासने**-इत्यनेन साधुत्वपक्षस्याकाण्डता वारिता॥

**( आक्षेपनिराकरणभाष्यम् )**

**[४]कृतमनयोः साधुत्वम्।**

**कथम्?**

**वृधिरस्मायविशेषेणोपदिष्टः प्रकृतिपाठे, तस्मात् क्तिन्प्रत्ययः। आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः॥**

**( प्रदीपः ) कृतमनयोरिति**। आदैच्छब्दस्य द्वन्द्वत्वात् 'अनयोः' इति द्विवचननिर्देशः॥ **आदैच इति**। तेषां च[५] द्वन्द्वनिर्देशोऽयमादैच्छब्द इत्यर्थः॥

**( उद्योतः ) द्वन्द्वत्वादिति**। 'अनयोः' इत्यस्य पदयोरिति विशेष्यम्। पदानामेव साधुत्वान्वाख्यानादिति भावः॥ भाष्ये—**अविशेषेणेति**। प्रत्ययविशेषमनादायेत्यर्थः॥ ननु वर्णसमाम्नाये आकाराद्युपदेशेऽप्यादैच्छब्दस्य किमागतमत आह—**तेषां चेति**। संज्ञाग्रहणद्वारेणेति शेषः॥ **तपर** इति **आदिरन्त्येने**ति च तेषां कृतयोरादैच्संज्ञयोर्द्वन्द्वनिर्देशेन द्वन्द्वशास्त्रेण कृतं साधुत्वमित्यर्थः। ऐजित्यपि[६] तन्मूलकादिरन्त्येनेत्यनेन बोधितमित्याशयेन भाष्ये—**अक्षरसमाम्नाये उपदिष्टा** इत्युक्तम्॥

**( आक्षेपभाष्यम् )**

**[७]प्रयोगनियमार्थं तर्हीदं स्यात्—वृद्धिशब्दात्परे आदैचः प्रयोक्तव्या इति॥**

**( प्रदीपः ) प्रयोगनियमार्थमिति**। 'आदैज्वृद्धिः' इति प्रयोगो मा भूदित्यर्थः॥

**( आक्षेपनिराकरणभाष्यम् )**

**[८]नेह प्रयोगनियम आरभ्यते॥**

**किं तर्हि?**

**संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते, तेषां यथेष्टमभिसंबन्धो भवति। तद्यथा-आहर पात्रम्, पात्रमाहरेति॥**

**( प्रदीपः ) नेहेति**। प्रयुज्यते-इति प्रयोगः। तस्य[९] स्वतन्त्रस्य पदस्य प्रयुज्यमानस्य नियमो नारभ्यते, अपि तु पदावयवस्य प्रकृतिप्रत्ययोपसर्जनागमादिरूपस्य। लोके च केवल एव वृद्धिशब्दः प्रयुज्यत इति न तस्यानेन नियमः क्रियते, लोके प्रयुक्तानां हीदमनुशासनम्॥

**( उद्योतः )** ननु **'उपसर्जनं पूर्वं-परश्च'**इत्यादिभिः प्रयोगनियम आरभ्यत एवेत्यत आह—**प्रयुज्यत इति**॥ **स्वतन्त्रस्य**—

---

१ **संज्ञासंप्रत्ययाय**-संज्ञात्वनिश्चयायेत्यर्थमाहोद्योतकारः। गुरुप्रसादस्तु **'सम्प्रत्ययाय**-तत्सिद्धये'इत्यर्थमाह। तदयुक्तम्, आनर्थक्ये परिहृते सूत्रस्य संज्ञादिषड्विधेष्वन्यतमत्वमर्थादुपपन्नमेवेति पक्षे संज्ञात्वस्यापि सिद्धिरेव, अतः 'तत्सिद्धये' इत्यर्थो नोचितः। किन्तु 'तन्निश्चयाय' इत्येव वक्तव्यम्। यथाऽवहननस्य पक्षे प्राप्तत्वात् व्रीहीनवहन्तीत्यस्य तन्निश्चयार्थकत्वं तद्वदेवात्रापि। एवञ्च प्रामाणिकग्रन्थकृद्भिरुद्धार्थं प्रतिपादयन्नयं विद्वद्भिरुपेक्षितव्योऽपि बालबुद्धिभेदनिवारणायात्रोपन्यस्तः॥

२ **तत्**-वृद्धिरादैजित्यस्य परिभाषाविध्यादिपरत्वम्। यतः परिभाषाविध्यादिपरत्वमस्य सूत्रस्याशक्यनिरूपणं, अस्य चाचार्यप्रणीतत्वादर्थवत्त्वमतोऽस्य पारिशेष्यात् संज्ञासूत्रत्वमित्याशयः। अत्र 'तत्—अर्थवत्त्वं' इति व्याख्यानं नातीव समञ्जसम्, 'संज्ञासम्प्रत्यय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति' इति प्रदीपस्वारस्यविरोधात्। 'अतः संज्ञासंज्ञिनावेव' इति भाष्यप्रतिपादितनिश्चयासम्भवाच्च॥

३ 'साधुत्वमनयोः क्रियते' इति प. पाठः॥ **क्रियत इति**। **'क्षय्यजय्यौ शक्यार्थे'** इतिवत्। इतीति शेषः॥ छाया॥

४ सिद्धान्ती समाधत्ते—**कृतमिति**॥ अलाक्षणिकं हि कार्यं निपातनेन साध्यत इति भावः॥ छाया॥ **अनयोः**-वृद्धिरादैच्पदयोः॥

५ **तेषाञ्च**-अक्षरसमाम्नाये उपदिष्टानामाकारैकारौकाराणां च। आदैच्छब्दस्य साधुत्वं द्वन्द्वशास्त्रेणेति प्रदीपाशयः। अक्षरसमाम्नाये उपदिष्टा इति भाष्याक्षरस्वारस्यात्—आत्पदस्य वर्णसमाम्नाये उपदेशात् साधुत्वं, ऐच्पदस्य च वर्णसमाम्नायमूलकादिरन्त्येनेति सूत्रेण साधुत्वमित्युद्योताशयः॥

६ अक्षरसमाम्नाय इत्युक्तिस्वारस्यमाह—**ऐजित्यपीति**। अपिनाऽकारादिसमुच्चयः। प्रत्ययस्त्वत्र न श्रुत इति प्रकृतिमात्रं व्युत्पादितम्। बहुवचनं तु तस्यार्थपरत्वं, न शब्दपरत्वमिति सूचयितुम्॥ छाया॥

७ एतावता प्रबन्धेन प्रधाने साधुत्वे निरस्ते **'आनर्थक्यात्तदङ्गेषु'** इति न्यायेन विधेयान्तरमाशङ्कते पूर्वपक्षी—**प्रयोगेति**। स च संज्ञातोऽन्तरङ्ग इति भावः। अत्र पौर्वापर्यरूपः प्रयोगनियमोऽभिप्रेतो न साधुभाषणनियमः। तदाह—**वृद्धीति**। **आदैच इति**। न च स्वरूपग्रहणम्, **अशब्दसंज्ञेति** निषेधात्। यद्यपि साहचर्यमनियतम्, **आदैच उपदेश** इत्यादिदर्शनात्। तथापि सति साहित्ये एव तथा नियमः। तत्र स्वरूपाग्रहणेन **वृद्धिरात्** इत्यादिप्रयोगो व्यावर्त्यत इति केचित्। अन्ये तु केवलाकारादेस्तदसंभवेऽपि तदन्तद्वारेण नियमः स्यादित्याहुः॥ छाया॥

८ सिद्धान्तीदं दूषयति—**नेहेत्यादि-हरेतीत्यन्तेन**॥ छाया॥

९ क्वचिन्मुद्रिते 'तत्र' इति पाठः। अनन्वितार्थकः सः॥

इति गत्युपसर्गनिरासः । तौ हि द्यो[1]तकत्वात्परतन्त्रौ ॥ पदावयवस्येति । आदिना द्योतकाः ॥ युक्त्यन्तरमाह—लोके चेति । शिष्टलोकाभिप्रायम्, प्रयुक्तानां चेदमनुशासनमिति भावः ॥ केवलः—अदैच्पदासंबद्धः ॥ भाष्ये—संस्कृ येति । साधुत्वेनान्वाख्यायेत्यर्थः ॥ अभिसंबन्धः–पौर्वापर्यलक्षणः ॥

(आक्षेपभाष्यम्)

**[2]आदेशास्तर्हीमे स्युः । वृद्धिशब्दस्यादैचः ॥**

(आक्षेपनिराकरणभाष्यम्)

**[3]षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः ॥**

(प्रदीपः) **षष्ठीनिर्दिष्टस्येति** । स्थानशब्दोऽर्थवाची, तिष्ठन्त्यस्मिञ्शब्दा इति स्थानम् । न च वृद्धिशब्दार्थमादैचो वक्तुं शक्ताः, तेनात्र षष्ठ्यर्थाभावादिति तात्पर्यम् । तथाहि षष्ठ्यभावेऽपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावः । यथा—**'नाभि नभं च' 'परस्त्री परशुं च'** इति ॥

(उद्योतः) षष्ठ्यभावेऽपि **'नाभि नभं'**इत्यादावादेशदर्शनादाह—**स्थानेति** । सूत्रगत इति शेषः । [4]तत्र हि सूत्रे स्थानशब्दोऽधिकरणव्युत्पत्त्याऽर्थवाची भावव्युत्पत्त्या प्रसङ्गवाची च तन्त्रेणोपादीयते । [5]अन्यथा केवलार्थशब्दं प्रसिशब्दं वोपाददीत । एवं च—याऽनियोगा षष्ठी सा प्रसङ्गनिरूपितसंबन्धार्थिकैवेत्येकोऽर्थः । द्वितीये तु षष्ठीशब्दो लक्षणया स्थानिपरः । 'स्थाने'इति सप्तमी वाच्यस्यार्थस्याधिकरणत्वविवक्षया बोध्या । योगशब्दश्च युज्यत इति व्युत्पत्त्या आदेशवाची, ततोऽर्शआद्यच् । तेन स्थानी स्वार्थाभिधानसमर्थादेशवानित्यर्थ इति भावः ॥ भा[6]ष्यस्य तु षष्ठीनिर्दिष्टस्य स्थानिनो योऽर्थस्तस्य वाचकौ[7] उच्यन्ते । न चात्रादैक्षु षष्ठीनिर्दिष्टस्य स्थानिनोऽर्थमभिधेयत्वेन पश्याम इत्यर्थः ॥ **षष्ठ्यर्थाभावादिति** । षष्ठीबोध्यस्थान्यर्थाभिधानसामर्थ्याभावादिति भावः ॥ **तदर्थसद्भावादिति** । आदेशस्य स्थान्यर्थबोधनसामर्थ्यसद्भावादित्यर्थः ॥ [8]वस्तुतस्तु स्थानं–प्रसङ्ग एव । स च्चार्थवत एव, अर्थप्रत्यायनाय शब्दप्रयोगात् । ए[9]वं चार्थप्रयुक्त एव स्थान्यादेशयोः संबन्ध इति स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति **वदन्ति** ॥

(आक्षेपभाष्यम्)

**[10]आगमास्तर्हीमे स्युः । वृद्धिशब्दस्यादैच आगमाः ॥**

(आक्षेपनिरासभाष्यम्)

**[11]आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते, लिङ्गेन च । न चात्र षष्ठीं, न खल्वप्यागमलिङ्गं पश्यामः ॥**

(प्रदीपः) **आगमा अपीति** । [12]अत्राप्यर्थोऽपेक्ष्यते । अनागमकानामर्थे सागमका इत्यर्थः ॥ **लिङ्गेन चेति** । देशविशेषप्रतिपत्तये टकारादिलिङ्गं तत्र क्रियत इत्यर्थः ॥

(उद्योतः) **अत्रापीति** । व[13]स्तुतोऽवयवषष्ठ्यैवागमा उच्यन्ते

---

१ **द्योतकत्वादिति** । अनेन वाचकानां तेषां निरासः । इदमामन्तस्याप्युपलक्षणम् । उपसर्जनस्य परार्थाभिधायित्वात् आमन्तस्यानभिव्यक्तपदार्थत्वात्तत्त्वमिति भावः ॥ छाया ॥

२ एवं प्रयोगनियमार्थत्वे खण्डिते पक्षान्तरमाशङ्कते पूर्वपक्षी—**आदेशा इति** ॥ छाया ॥

३ सिद्धान्तीदमपि निरस्यति—**षष्ठीत्यादि-पश्याम इत्यन्तेन** ॥ छाया ॥

४ कैयटाभिप्रायेण षष्ठीस्थान इति सूत्रस्यार्थमाह—**तत्र हीति** ॥

५ **अन्यथा**–केवलेऽर्थे प्रसङ्गे वा विवक्षिते ॥ छाया ॥

६ कैयटाभिप्रायेण षष्ठीनिर्दिष्टस्येत्यादिभाष्यं योजयति—**भाष्यस्येति** ॥

७ **वाचका इति** । आदेशा इति शेषः ॥ छाया ॥

८ अभिमतार्थस्य प्रसिद्धार्थतोऽपि लाभात्कैयटश्चिन्त्य एवेति ध्वनयन्नाह—**वस्तुत इति** । एतेन द्वितीयार्थनिरासः । भाष्यस्य तु स एवार्थोऽत्रापीति भावः ॥ एतेन–कैयटोक्तं चिन्त्यम् । अत्र स्थानशब्दानुक्त्या तद्व्युत्पादनस्याकाण्डताण्डवत्वात् । तत्सूत्रगतस्य तु तस्य तदर्थकत्वेन तथा व्याख्यानानौचित्यात् । प्रकृतानुपयोगाच्च । न हि तस्य तत्त्वं विनाऽत्रत्यस्य षष्ठीपदस्य तदर्थलक्षकत्वं न युज्यते येन तस्य तत्त्वप्रतिपादनं प्रकृतोपयोगि स्यात् । किंच षष्ठ्यर्थाभावादिति दुर्वचमेव, षष्ठ्यर्थसंबन्धस्य वस्तुमात्रे सत्त्वात् । सुध्युपास्य इत्यादौ तत्राशक्तानां तत्त्वदर्शनाच्च । **सर्वे सर्वपदा**–इति न्यायाश्रयणं तु अत्रापि तुल्यम् । प्रकृतभाष्यस्य प्रायोऽभिप्रायेण तत्र परिभाषाश्रयणोपपत्त्या **नाभि नभमि**त्यादौ तदङ्गीकारेऽपि बाधकाभावात् । एवं च षष्ठीनिर्दिष्टस्य **षष्ठीस्थाने** इति परिभाषोक्तेः प्रायेणादेशविधौ षष्ठ्यन्तेनैव स्थानिनो निर्देशाच्चेत्याशयः ॥ नन्वेवमुक्तरीत्याऽयं परिहारो न सम्यगिति चेत्, न, **वृद्धिर्यस्ये**ति सूत्रे वृद्धिशब्दस्यादैजादेशागमादर्शनात्पाणिनेः स्थान्यादेशभाव आगमागमिभावश्च न संमत इत्यत्र तात्पर्यात्–इति रत्नोक्तमपास्तम् । हेतोराभासत्वाभावाय तथोक्तेरावश्यकत्वात् । त्वदीयतात्पर्यस्याशब्दार्थत्वाच्च ॥ छाया ॥

९ स्वाभिप्रायेण भाष्यार्थमाह—**एवञ्चेति** ॥

१० एवमादेशपक्षे निराकृते पूर्वपक्षी आगमत्वमापादयति—**आगमा इति** । संज्ञाद्वारेण परनिर्दिष्टानामादैचामन्तावयवत्वं कथंचित्प्रतीयमानं संज्ञाविधानादन्तरङ्गमिति भावः ॥ छाया ॥

११ सिद्धान्तीदमपि निरस्यति—**आगमा इत्यादि पश्याम इत्यन्तेन** ॥

१२ ननु **नद्याभ्या**मित्यादौ षष्ठ्यभावेऽप्यागमत्वं दृष्टमत आह—**अत्रापीति** ॥ अयं भावः—षष्ठीपदेन प्राग्वत्षष्ठ्यर्थस्यागम्यर्थाभिधानसामर्थ्यं विवक्षितम् । **षष्ठीस्थान** इत्यत्राद्यन्तावित्यनुवर्तते स्थानशब्दः सप्तमी च प्राग्वत् । **योगे**त्यपि प्राग्वत्, आगमवाचीति विशेषः । षष्ठीपदमागमिपरं प्राग्वत् । आगमी आगम्यर्थाभिधानसमर्थागमवान्भवतीत्यर्थः । नचागमस्यानर्थकत्वेन तद्बाधितम्, अनागमकानां सागमका आदेशा इति सिद्धान्तात् । एवं चात्रापि सोऽभिधेयत्वेनापेक्ष्यते । भाष्यं तु प्राग्वदेव व्याख्येयमिति ॥ छाया ॥

१३ **वस्तुत इति** । लिङ्गशून्यस्थल इति शेषः ॥ छाया ॥

इत्यर्थः ॥ कलादिलिङ्गभ्रमव्यावृत्तये आह—देशेति । देशविशेषप्रतिपत्त्यर्थयत्नसाध्यागमप्रतीतिर्यत्नाभावे नेत्यर्थः ॥

( सिद्धान्तसमाधानभाष्यम् )

**इदं खल्वपि भूयः सामानाधिकरण्यमेकविभक्तित्वं च । द्वयोश्चैतद्भवति ।**

**कयोः ?**

**विशेषणविशेष्ययोर्वा, संज्ञासंज्ञिनोर्वा ।**

**तत्रैतत्स्यात्—विशेषणविशेष्ये इति ।**

**तच्च न, द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो भवति । न चादैच्छब्दः प्रतीतपदार्थकः ।**

**तस्मात्संज्ञासंज्ञिनावेव ॥**

**( प्रदीपः ) इदं खल्वपीति ।** विशेषणविशेष्यभावनिराकरणेन संज्ञापक्षं स्थापयति ॥ 'देवदत्तः पचति' इत्यस्ति सामानाधिकरण्यं न त्वेकविभक्तित्वम्, 'गौः-अश्वः' इत्यस्त्येकविभक्तित्वं न तु सामानाधिकरण्यं—इत्युभयोरुपादानम् । संज्ञासंज्ञिनोरप्यस्ति विशेषणविशेष्यत्वं प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानम् । तत्तु सामानाधिकरण्यं शब्दयोरेव **केचिदिच्छन्ति,** द्वाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यामेकस्याधिकरणस्याभिधेयस्य प्रतिपादनाद्विशेषणविशेष्यार्थप्रतिपादनाच्च विशेषणविशेष्यत्वम् । **अन्ये तु** नीलमुत्पलमिति प्रवृत्तिनिमित्तयोर्जातिगुणयोरेकमधिकरणमाश्रय इति सामानाधिकरण्यं विशेषणविशेष्यभावं चार्थयोरेव मन्यन्ते ॥ **न चादैच्छब्द इति ।** न ह्यस्य कश्चिल्लौकिकोऽर्थः प्रसिद्ध इत्यर्थः ॥

**( उद्द्योतः ) इदं खल्वपी**ति भाष्यं पूर्वोक्तपक्षाणामसंभवं प्रतिपादयति ॥ **अस्ति सामानाधिकरण्यमिति ।** न च तादृशे संज्ञासंज्ञित्वसंभावनेति भावः ॥ **इत्युभयोरिति ।** विशेषणविशेष्यत्वसंज्ञासंज्ञित्वसंभावनास्थलप्रदर्शनायेत्यर्थः ॥ **संज्ञासंज्ञिनोरपीति ।** उद्भिदादिसंज्ञा हि स्वरूपेणैव संज्ञिनं सजातीयाद्यागान्तराद्विजातीयाच्च होमादेर्व्यवच्छिनत्तीति विशेषणम् । संज्ञी च व्यवच्छेद्यः सन्विशेष्यः । विषयताविशेषरूपमपि तयोरस्त्येवेति भावः ॥ **प्रसिद्धीति ।** '**द्वयोर्हि प्रतीत—**' इत्यादिना भाष्ये उक्तमेतत् । **यद्वा** सत्यपि व्यवच्छेद्यव्यवच्छेदकभावे संज्ञासंज्ञिनोर्विशेष्यविशेषणभावो लोके न प्रसिद्ध इत्यर्थः ॥ ननु सामानाधिकरण्यं नाम द्वयोः शब्दयोरेकाभिधेयसंबन्धः, तत्तु न युक्तम् । सामानाधिकरण्यस्य शब्दधर्मत्वेन विशेषणत्वादेश्चार्थधर्मत्वेन **विशेषणविशेष्ययोः सामानाधिकरण्यमिति** भाष्यासङ्गतिः, संज्ञासंज्ञिनोरेकाभिधेयसंबन्धाभावेन **संज्ञासंज्ञिनोर्वा सामानाधिकरण्य**मित्यस्याप्यसङ्गतिरत[10] आह—**तत्त्विति ॥ भिन्नप्रवृत्तीति ।** अनेन पर्यायनिरासः । वस्तुत[11] इदं चिन्त्यम्, **अद्ये देवि सरस्वति इडे काव्ये विह्व्ये एतानि तेऽद्ये नामानीत्यादौ नामन्त्रिते समानाधिकरणे** इत्यस्य व्यावृत्तये तत्र सामान्यवचनग्रहणमिति तत्सूत्रस्थभाष्यविरोधापत्तेः[12] । युगपदधिकरणवचनतापक्षे पट्वीमृद्व्यावित्यत्र समानाधिकरणलक्षणपुंवद्भावशङ्कापरभाष्यविरोधापत्तेश्च ॥ विशेषणत्वादिकं चोपपद्यत इत्याह—**विशेषणेति ।** भाष्ये '**संज्ञासंज्ञिनोः**' इत्यत्र संज्ञिपदेन संज्ञिसमर्पकः शब्दोऽभिप्रेतः । संज्ञाशब्दे च शब्दः प्रवृत्तिनिमित्तं, संज्ञिनि तत्सम्बन्धात् । संज्ञिबोधकशब्दे च संज्ञिगततत्तद्धर्मः प्रवृत्तिनिमित्तम् । एवं च वृद्धिशब्दवद्भिन्ना आदैच इति बोधः । वृद्धिशब्दवत्त्वं च लोकसिद्धतादात्म्येनेत्याशयः ॥ **अन्ये त्विति**[13] । संज्ञासंज्ञिनोस्तूक्तं प्रवृत्तिनिमित्तमिति सामानाधिकरण्यम् । एकविभक्तिकत्वं त्वत्र पक्षे शब्दद्वारा बोध्यम् । विभक्तिशब्देन शक्तिर्वा । भाष्ये **संज्ञासंज्ञिनोरि**त्यस्य तत्प्रवृत्तिनिमित्तयोरित्यर्थः ॥ 'अन्ये तु' इति मतेऽरुचिबीजं तु **प्रतीतपदार्थकयो**रिति बहुव्रीहिस्वरसभङ्गः ॥ **विशेषणविशेष्यभावो भवती**त्यस्य तदर्थप्रतिपादकत्वं भवतीत्यर्थः ॥ ननु वैयाकरणानामादैच्छब्दः प्रतीतपदार्थक एवेत्यत आह—**न हीति** । वृद्धिशब्दार्थान्वययोग्य[14] इति शेषोऽत्र द्रष्टव्यः ॥ **केचित्तु**[15] वृद्ध्यादिशब्दाः शब्दपरा एव । वृद्धिशब्दाभिन्ना आदैच इति बोधः । तदुक्तं हरिणा—

**"वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः[16] ।**
**आदैच्प्रत्यायितैः शब्दैः[17] सम्बन्धं यान्ति संज्ञिभिः ॥"**

इति । सामानाधिकरण्यं चैकविशेष्यकप्रतीतिजनकत्वमित्याहुः ॥

---

१ 'इत्यर्थो भाष्यस्य' इति मुद्रितपाठः ॥

२ **यत्नेति । पूर्वौ** तु इत्यादौ पूर्वादिग्रहणमेव लिङ्गं यत्न इति भावः ॥ छाया ॥

३ सिद्धान्ती पूर्वोक्तपक्षाणामसंभवमेव सूचयन्संज्ञासंज्ञिभावनिर्णये दृढतरां युक्तिं प्रतिपादयति—**इदमिति ॥**

४ शङ्ककवाक्यं स्वयमेवाशङ्कते—**तत्रेति ॥** छाया ॥

५ सिद्धान्ती निरस्यति—**तच्च नेति । लोक** इति मध्यमणिन्यायेनान्वेति ॥ छाया ॥

६ तदेवं तन्निरासे परिशेषात्संज्ञासंज्ञिनावेवेत्याह—**तस्मादिति ॥** छाया ॥

७ 'पादयति ॥ तद्व्याचष्टे—**विशेषणेति ॥**' इति घ. पाठः ।

८ 'तत्तयोरस्त्येव' इति मुद्रितपाठः ॥

९ **संज्ञासंज्ञिनोरिति ।** मध्यमणिन्यायेनान्वयः ॥ छाया ॥

१० 'प्यसङ्गतेरत' इति मुद्रितपाठः ॥

११ **इदं**—भिन्नप्रवृत्तिनिमित्ताभ्यामिति विशेषणम् ॥ छाया ॥

१२ **विरोधेति ।** त्वन्मते तस्यैवाभावेनाप्राप्त्या तत्सार्थक्योक्तेस्तच्छङ्कायाश्चासंगतत्वादिति भावः ॥ छाया ॥

१३ समानमधिकरणमभिधेयं ययोरिति व्युत्पत्तिः पूर्वमते । समानमधिकरणमाधाराधेययोः प्रवृत्तिनिमित्तयोरिति व्युत्पत्त्यनुसारेणाह—**अन्ये त्वितीति ॥** छाया ॥

१४ ननु **सर्वं नाम धातुज**मिति व्युत्पादने तत्रापि कश्चिदर्थः प्रसिद्ध एवात आह—**वृद्धीति ।** लोकप्रसिद्धेत्यादिः ॥ छाया ॥

१५ इत्याशय इति सूचितामरुचिं प्रकटयन्प्रागुक्तरीत्या सिद्धान्तमाह—**केचित्त्विति ॥** छाया ॥

१६ **स्वरूपोपेति ।** तद्बोधका इत्यर्थः ॥ छाया ॥

१७ **शब्दैः**—आकारादिभिः ॥ छाया ॥

(सिद्धान्तभाष्यम्)

**तत्र[१] त्वेतावान्संदेहः—कः संज्ञी का संज्ञेति ॥**

**स चापि क्व सन्देहः—यत्रोभे[२] समानाक्षरे ।**

**यत्र त्वन्यतरल्लघु[३] सा संज्ञा ॥**

**कुत एतत्?**

**लघ्वर्थं हि संज्ञाकरणम् ॥ तत्राप्ययं[४] नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति[५] ।**

**किं तर्हि?**

**अनाकृतितामपि[६] । अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोके ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

(उद्योतः) भाष्ये—**यत्रोभे इति** । प्रत्यय अनीयरित्यादौ ॥ **लघ्वर्थमित्यस्य** लाघवार्थमित्यर्थः[७] ॥

(समाधानान्तरभाष्यम्)

**अथवा[८]-आवर्तिन्यः संज्ञा भवन्ति । वृद्धिशब्दश्चावर्तते, नादैच्छब्दः । तद्यथा[९]—इतरत्रापि देवदत्तशब्द आवर्तते, न मांसपिण्डः ॥**

(प्रदीपः) **आवर्तिन्य इति** । देवदत्तादिशब्दा हि दानादिप्रतिपादनायावर्त्त्यन्ते ॥

(उद्योतः) **न मांसपिण्ड इति** । दूरस्थस्यापि[१०] नामोच्चारणमात्रेण दानादिसंभवादिति भावः ॥

(समाधानान्तरभाष्यम्)

**अथवा[११]—पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा ॥**

**कुत एतत्?**

**सतो[१२] हि कार्यिणः कार्येण भवितव्यम् । तद्यथा—इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

(प्रदीपः) **अथवेति** । सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते शब्देन पूर्वनिर्दिष्टे संज्ञा प्रवर्तत इत्यर्थः ॥ ततश्च **'अदेङ् गुणः'** इत्यादावदेङादयः संज्ञिनो गुणादयः संज्ञाः ॥

(उद्योतः) **सतो** हीत्यादिना न भावरूपं विवक्षितम्, अभावस्यापि लोपादिसंज्ञादर्शनात् । नापि विद्य[१२]मानत्वं, प्रत्ययविधौ संज्ञाविशिष्टस्यापि विधा[१३]नादत आह—**बुद्ध्येति** । अत एव **सावर्णिर्भविता मनुरित्यादौ** न दोषः । एवं च सच्छब्देन पूर्वं बुद्ध्या विषयीकृ[१४]तत्वं विवक्षितमित्यर्थः । बुद्धिसत्तासमाविष्ट एव चार्थः शब्देन बोध्यत इति सिद्धान्तात् ॥ तत्त्वं हि पूर्वोच्चारितस्यैव भवतीत्याह—**शब्देन पूर्वेति** ॥

(आक्षेपभाष्यम्)

**कथं[१५] "वृद्धिरादैच्" इति?**

(समाधानभाष्यम्)

**एतदेकमाचार्यस्य[१६] मङ्गलार्थं मृष्यताम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्द-**

---

१ निर्णीतेऽप्यर्थे विशेषमभिधातुमुपक्षिपति स्वयमेव—**तत्रेति** ॥ **संदेह इति** । स्यादिति शेषः ॥ छाया ॥

२ **उभे**-विधेयानुवाद्ये ॥ छाया ॥

३ **लघु**-अल्पाक्षरम् ॥ छाया ॥

४ ननु सर्वनामसंप्रसारणसर्वनामस्थानकर्मप्रवचनीयादौ वैपरीत्येन न लाघवमिति तत्र कथम् । न चान्वर्थत्वाय तत्, तत्त्वनिबन्धनस्य तस्य संज्ञात्वनिर्णयात्प्रागसिद्धेरत आह—**तत्राप्ययमिति** । **तत्र**-निर्णयेऽपि **अयं**-अध्येतेत्यर्थः । सूत्रकारो वा संज्ञासंज्ञिभावो वा ॥ **वोपेति** । निर्णायकत्वेन स्वीकर्तुमित्यर्थः । अन्यस्यापि तस्य तादृशस्य त्यागे मानाभावात् ॥ इदं तु स्पष्टत्वात्प्रागुक्तम् । ननु तदेवादर्तव्यमिति भावः ॥ छाया ॥

५ 'यितुमर्हसि' इति प. पाठः ॥

६ **अनाकृति** । अस्य प्रागदूषितत्वादिति भावः । अपिर्लाघवसमुच्चायकः । तथाच क्वचित्किंचिदाश्रयणीयमिति भावः ॥ छाया ॥

७ **लाघवार्थमिति** । अन्यथा व्यावृत्तानुवृत्तभिन्नभिन्नधर्मोक्तौ प्रतिव्यक्तिनिर्देशे वा गौरवं स्यात् । तथा च **हलोऽनन्तरा** इत्यत्र विशिष्टानुवाद्यस्य संज्ञित्वमिति भावः ॥ छाया ॥

८ यद्यनाकृतिशब्देनाखण्डपदत्वं विवक्षितं तर्हि तदपि सर्वनामादिसंज्ञास्वतिव्याप्तमत आह—**अथवेति** । **आवर्तिन्यः**-प्रदेशेषु पुनः पुनरुच्चार्यमाणाः । संज्ञी तु तदधीनप्रतीतिकत्वात्स्वरूपेण नोच्चार्यते । तदाह—**वृद्धीति** ॥ छाया ॥

९ न केवलमत्रैवेदं किंतु लोकेऽपीत्याह—**तद्यथेति** ॥ छाया ॥

१० **दूरस्थेति** । तथाच स्मृतिः—

'दूरस्थं पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् ।
दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् ॥'

इति ॥

११ ननु संज्ञाया अपि नावर्तननियमो गुह्यस्यापि नाम्नः **'पुमानयं जनिष्यते असौ नामेति नामधेयं गृह्णाति यत्तद्गुह्यमेव भवति'** इति गृह्ये दर्शनादत आह—**अथवेति** । स्वरूपेण संज्ञाद्वारेण वा पूर्वनिर्दिष्टोऽनुवाद्य इत्यर्थः । संज्ञाविधौ तस्योद्देश्यत्वम्—

'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
सिद्धं धर्मिणमुद्दिश्य साध्ये धर्मो विधीयते ॥'

इति न्यायादिति भावः । तदाह—**सतो हीति** ॥ छाया ॥

१२ **विद्येति** । सत्ताजातियोगिविवक्षापि न, अदेङादावतिप्रसक्तेरित्यपि बोध्यम् ॥ छाया ॥

१३ यथा 'यूनस्तिः' इत्यत्र तद्धितसंज्ञाविशिष्टस्यैव तिप्रत्ययस्य विधानम् ॥

१४ **कृतत्वमिति** । अज्ञातस्यानुवादानुपपत्तेरिति भावः ॥ छाया ॥

१५ नन्वेवमत्र सूत्रे वैपरीत्यापत्तिरित्याह—**कथमिति** ॥ छाया ॥

१६ लाघवादिभिर्व्यवस्थामत्र हृदि निधाय पाठव्यत्यये बुद्धिपूर्वं हेतुमाह—**एतदेकमिति** ॥ छाया ॥

मादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि च । अध्येतारश्च वृद्धियुक्ता यथा स्युरिति ॥

सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा । "अदेङ् गुणः" इति यथा ॥

( प्रदीपः ) इह तु मङ्गलार्थोऽन्यथा पाठक्रमः । आर्थस्त्वन्यथा क्रमः । अन्ये तु सिद्धिहेतवो भविष्यन्ति ॥ 'अपृक्त एकाल्प्रत्ययः' इति तु परिभाषा, न संज्ञेति नास्ति व्यभिचारः । अपृक्तशब्देन ह्येकाकी कथ्यत इति अनियमेन ग्रहणे प्राप्ते नियमः क्रियते ॥

( उद्योतः ) भाष्ये—**माङ्गलिकः**–मङ्गलप्रयोजनः ॥ **महतः**–अर्थतः ॥ एकैकं सूत्रं शास्त्रमिति **शास्त्रौघस्ये**त्युक्तम् ॥ **मङ्गलादीनी**त्यादिना स्वप्रयोजनं श्रोतृप्रयोजनं चोक्तम् ॥ **प्रथन्ते**–विस्तृतानि भवन्ति । तेन समाप्तिरर्थाक्षिप्ता ॥ **आर्थस्त्वन्यथेति** । आदैज् वृद्धिरित्याकारः । आनुपूर्वीज्ञानस्यासत्तिविधया हेतुत्वादिति भावः ॥ कथं तर्हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिरत आह—**अन्ये त्विति** । लाघवादयः । आदैचो वृद्धिपदाभिन्ना इत्यर्थः । एवंचानुपूर्वीव्यत्यासेन विलम्बेन बोधजनकशब्दोच्चारणं मङ्गलार्थं क्षम्यतामिति बोध्यम् । अत्रैकशब्दः प्रथमार्थकः, प्रथमं तथाकरणं मङ्गलार्थमेव । एवं चान्यत्रापि तथाकरणमुद्देश्यविधेयभावेनान्वये तादृशस्यैव साधुत्वमिति भ्रमवारणार्थमित्याहुः ॥ **परिभाषेति** । तदा हि **यत्राऽपृक्तपदं तत्रैकालि**त्याद्युपतिष्ठत इत्यर्थात्प्राथम्यं युक्तमेवेत्यर्थः । वस्तुत इदं **वृद्धि**सूत्रेऽपि सुवचम् । किं चैव**मपृक्तसंज्ञाया**मित्यादि भाष्यवार्तिकव्यवहारानुपपत्तिः ॥ **केचित्तु** परिभाषात्वेऽपि **एकाल्प्रत्ययो**द्देशेनापृक्तपदवद्देशस्थत्वं विधेयम्, पदपरत्वार्थं तत्रापि लक्षणाऽऽवश्यकत्वेन सामानाधिकरण्यान्वयार्थं तावत्पर्यन्तं लक्षणाया उचितत्वात् । पदत्रयाध्याहारे गौरवाच्च । एवं च परिभाषात्वेऽप्युद्देश्यत्वेन तस्यैव पूर्वं पाठो युक्तः । आनुपूर्वीव्यत्यासाद्दोषस्तूभयोः सम इति **वदन्ति** ॥

( सिद्धान्तिभाष्यम् )

दोषवान्खल्वपि संज्ञाधिकारः । अष्टमेऽपि हि संज्ञा क्रियते—"तस्य परमाम्रेडितम्" इति । तत्रापीदमनुवर्त्यं स्यात् ॥

( उद्योतः ) भाष्ये—**अनुवर्त्यं स्यादिति** । तच्चासंबद्धबहुव्यवायादशक्यमिति भावः ॥

( समाधानान्तरभाष्यम् )

अथवा–अस्थानेऽयं यत्नः क्रियते । न हीदं लोकाद्भिद्यते, यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात् । तद्यथा—अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशति—अयं गौरिति । न चास्मायाचष्टे 'इयमस्य संज्ञा' इति । भवति चास्य संप्रत्ययः ॥

( प्रदीपः ) **अस्थान इति** । अन्तरेणापि संज्ञाशब्दप्रयोगं लोकव्यवहारवदत्र संज्ञासंज्ञिसंबन्धः सिध्यतीत्यर्थः ॥

( उद्योतः ) (भाष्ये) **अस्थाने**–अनवसरे । **भिद्यते**–विलक्षणं भवतीत्यर्थः ॥

( आक्षेपभाष्यम् )

तत्रैतत्स्यात्—'कृतस्तत्र पूर्वैरभिसंबन्धः' इति ॥

( उद्योतः ) **अभिसंबन्धः**–संज्ञासंज्ञिभावः । ततो ज्ञातुं शक्य इति भावः ॥

---

१ लोकदृष्टान्तमुक्त्वा शास्त्रदृष्टान्तमाह—**सर्वत्रैव हीति** । हिर्निश्चये । बहुष्वपीत्यर्थः । यद्वा क्वचिदभिमतार्थबोधनायान्यथा पाठेऽपि शाब्दबोधोपयोगिसामग्रीसंपादनायान्यथावाक्यकल्पनमावश्यकमिति सर्वत्र तदस्तीति न व्यभिचार इत्याह—**सर्वत्रैवेति** ॥ छाया ॥

२ अ. पुस्तके 'आर्थस्त्वन्यथा क्रमः' इत्यस्य पाठो न ॥

३ ननूद्देश्यविधेययोर्व्युत्क्रमेण पाठात् कथं संज्ञासंज्ञिभावज्ञानमित्यत आह—**अन्ये त्विति** । न ह्युद्देश्यविधेयक्रममात्रमेव संज्ञासंज्ञिज्ञापकम्, किं तर्हि आचार्याचारादपि । तथा च व्युत्क्रमेऽपि आचार्याचारादिरूपा अन्ये हेतवः संज्ञासंज्ञिभावसिद्धिहेतवः 'कर्म' भविष्यन्तीत्यर्थः । ( अ. पु. टि. )

४ **आसत्तीति** । आसत्तेरुपस्थितिरूपत्वादिति भावः ॥ छाया ॥

५ ननु **'आर्धधातुकं शेषः' 'कृदतिङ्' 'स्वं रूपं शब्दस्य' 'अपृक्त एकाल्' 'अणुदित्सवर्णस्य' 'तपरस्तत्कालस्य' 'आदिरन्त्येन' 'येन विधिस्तदन्तस्य'** इत्यादावपि तथा सत्त्वात्कथमेकत्वमत आह—**अत्रैकेति** ॥ छाया ॥ **अत्र**–'एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्' इति भाष्ये ।

६ कैयटं खण्डयति—**वस्तुत इति** ॥ वदन्तीत्यत्रान्वयः ॥ छाया ॥

७ तत्त्वमभ्युपेत्यापि खण्डयति—**केचित्त्विति** ॥ छाया ॥

८ **पदत्रयेति** । यत्र तत्रोपतिष्ठते इतीत्यर्थः ॥ पददोषापेक्षया वाक्यदोषस्य गुरुभूतत्वादिति भावः ॥ छाया ॥

९ न केवलमुक्तहेतुत एव तदधिकाराकरणम् । अपि तु दोषवत्त्वादपीत्याह—**दोषेति** ॥ छाया ॥

१० **असंबद्धेति** हेतुद्वयम् । **'व्यवायान्नानुषज्येत'** इति न्यायबाधितत्वाद्दुरुपपादमित्यर्थः ॥ छाया ॥

११ क्रियमाणोऽप्ययं यत्नो निष्फलत्वादनुचित इत्याह—**अथवेति** ॥ **अयं**–संज्ञाधिकारः । **इदं**–संज्ञाकरणम् । लोकात्–तद्व्यवहारात् ॥ अस्य हेतुत्वाय विपरीतव्याप्तिमाह—**तद्यथेति** ॥ **उपेति** । कालान्तराविवक्षया व्यवहारपरम्परया वा तत्त्वात्तथा निर्देशः ॥ छाया ॥

१२ **अनवसरे**–निवर्त्यसंदेहशून्यविषये ॥ छाया ॥

१३ **कृतस्तत्र पूर्वैरिति** । **तत्र**–गोपिण्डे **अभिसंबन्धः**–गोव्यवहारविषयत्वस्याभिसम्बन्धः । गोपिण्डस्य गौरितिव्यवहारविषयत्वात् गोपदशक्यत्वं गृहीतमित्यर्थः ॥ **इहापि**–आदैक्ष्वपि पूर्वैर्वृद्धिरिति व्यवहारः कृतः ॥ **अथ तत्रेति** । उपदेश्येन पुरुषेण गोपिण्डे गौरिति व्यवहारो न कृतः, तथापि परकीयव्यवहारमादाय तादृशव्यवहारविषयत्वज्ञानात् शक्तिग्रह इतिवत् आदैक्ष्वपि आचार्यव्यवहारविषयत्वज्ञानात् वृद्धिपदेऽपि शक्तिग्रह इत्यर्थः ॥

( समाधानभाष्यम् )

**इ[1]हापि कृतः पूर्वैरभिसंबन्धः ।**

**कैः ?**

**आ[2]चार्यैः ॥**

( आक्षेपभाष्यम् )

**त[3]त्रैतत्स्यात्—यस्मै तर्हि सम्प्रत्युपदिशति तस्या-कृत इति ॥**

( उद्योतः ) तस्याकृत इत्यस्य तेनाज्ञात इत्यर्थः । तथा च तेन कथं प्रतिपत्तुं शक्य इति भावः ॥

( समाधानभाष्यम् )

**लो[4]केऽपि हि यस्मै सम्प्रत्युपदिशति तस्याकृतः । अथ तत्र कृतः, इहापि कृतो द्रष्टव्यः ॥**

( उद्योतः ) अथ तत्रेति । अनुमानादि[5]ना ज्ञात इत्यर्थः ।

( इति संज्ञासूत्रत्वसाधनम् )

---

( अन्योन्याश्रयपरिहाराधिकरणम् )

( ६८ संज्ञासंज्ञिभावाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ स[6]तो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः ॥ * ॥**

( भाष्यम् )

**स[7]तः संज्ञिनः संज्ञाभावात् त[8]दाश्रये संज्ञिनि वृद्ध्यादिष्वितरेतराश्रयत्वादप्रसिद्धिः ॥**

**का इतरेतराश्रयता ?**

**सतामादैचां संज्ञया भवितव्यम्, संज्ञया चादैचो भाव्यन्ते । त[9]दितरेतराश्रयं भवति । इ[10]तरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा—नौ[11]र्नावि बद्धा नेतरेतरत्राणाय भवति ॥**

( प्रदीपः ) सतो वृद्ध्यादिष्विति । विधौ चा[12]यं दोषः, नानुवादे—'वृद्धिर्यस्य—' इत्यादौ । तत्र च संज्ञाविधानस्य चरितार्थत्वात् 'मृजेर्वृद्धिः' इत्यादौ वृद्धिशब्द एवादेशः प्राप्नोति ॥

( उद्योतः ) सतो वृद्ध्यादिष्विति । स[13]तः—निष्पन्नस्य संज्ञाभावात्—संज्ञासंबन्धात् तदाश्रये—संज्ञाश्रये संज्ञया संज्ञिविधायके शास्त्रे मृजेर्वृद्धिरित्यादौ वृद्ध्यादिषु—वृद्ध्यादिपदेषु इतरेतराश्रयत्वादप्रसिद्धिः—वाक्यार्थाप्रसिद्धिरित्यर्थः । अविद्यमाने संबन्धस्य वक्तुमशक्यत्वादिति भावः ॥

( इतरेतराश्रयिदृष्टान्तभाष्यम् )

**न[14]नु च भोः—इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते । तद्यथा—नौः शकटं वहति, श[15]कटं च नावं वहति ॥**

( प्रदीपः ) ननु च भो इति । नौश[16]कटस्याभिमतदेशान्तरप्राप्तिरितरेतराश्रयेति चोद्यम् ॥

( उद्योतः ) वहनक्रियायामितरेतराश्रयत्वाभावेऽपि तत्फ[17]लतीत्याह—( भाष्ये ) नौः शकेति ॥

( दृष्टान्तनिरासभाष्यम् )

**अ[18]न्यदपि तत्र किंचिद्भवति—जलं स्थलं वा । स्थले शकटं नावं वहति । जले नौः शकटं वहति ॥**

---

१ उत्तरमाह—इहापीति । कृत एव संबन्ध उत्तरकालं बोध्यते ॥ छाया ॥

२ अन्यकृत एव बोधनीय इत्यनियमादुत्तरमाह—आचार्यैरिति । प्रश्नानुरूपमुत्तरम् ॥ ततश्चोपदेशः सुकर इति भावः ॥ छाया ॥

३ संभवत्यप्युपदेष्टृत्वे श्रोत्रा कथं बोद्धव्यमिति शङ्कते—तन्नैतदिति ॥ छाया ॥

४ परिहरति—लोकेपीति ॥ इहापीति । सामानाधिकरण्यनिर्देशेनेत्यर्थः ॥ छाया ॥

५ आदिना 'अयं गौः' इति वाक्यप्रयोगसामर्थ्यादिपरिग्रहः ॥ छाया ॥

६ आदैज्मात्रस्य संज्ञेति सिद्धान्तपक्षे दोषमाह—सत इति ॥ छाया ॥

७ सत इत्यादेर्विशेष्यं दर्शयन्व्याचष्टे—सत इति । संज्ञिनि-तद्विधायके ॥ छाया ॥

८ 'तदाश्रये संज्ञाश्रये संज्ञिनि' इति प. पाठः ॥

९ 'तदेतदितरा' इति मुद्रितेषु पाठः ॥

१० तत्रेष्टापत्तिं परिहरति—इतरेतरेति । मुख्यकारणस्य हि सहकारिकारणसमवधानाच्छक्तिलाभः सहकारिणोऽपि सा शक्तिः स्वोपकार्यव्यापारमपेक्ष्य भवेत् तदैकव्यापारात्पूर्वमितराप्रवृत्तिनियमात्कार्यानारम्भ एव स्यादित्यर्थः ॥ छाया ॥

११ नौर्नावीति । कर्णधाररहितं नौद्वयं मिथः संबद्धं मिथः परतीरप्रापणाय न भवतीत्यर्थः ॥ छाया ॥

१२ ननु संज्ञाविधानसामर्थ्याद्विधिषु भाविसंज्ञाविधानेनायं न दोषोऽत आह—विधौ चेति । सिचि वृद्धिरित्यादावित्यर्थः ॥ छाया ॥

१३ भगवता सर्ववार्तिकस्याविवृतत्वात्तदक्षरस्वारस्यादाह—सत इति ॥ छाया ॥

१४ तत्र व्यभिचारमाशङ्कते—ननु चेति ॥ छाया ॥ इतरेतराश्रयाण्यपीति । यथा देशान्तरप्राप्तिरूपं कार्यं नौशकटोभयाश्रितमपि भवति तथा मृजेर्वृद्धिरित्यादावपि आदैज्विधानरूपं कार्यं स्यादेवेति भावः । वहनरूपञ्च कार्यमुभयाश्रितं न, यतस्तत्रैकस्यैव कर्तृत्वात्, तदाह प्रदीपे—नौशकटेति ॥

१५ 'शकटमपि नावं' इति प. पाठः ॥

१६ नौशकटस्येति । सेनाङ्गत्वादेकवद्भावः ॥ छाया ॥

१७ तत्फलतीति । देशान्तरप्राप्तिरूपफले तत्सत्त्वात्तत्रापि सत्त्वमिति भावः ॥ छाया ॥

१८ उत्तरमाह—अन्यदपीति । अन्यदेवेत्यर्थः ॥ छाया ॥ नैतदितरेतराश्रयमित्याह—अन्यदपीति ॥

( इतरेतराश्रयिदृष्टान्तान्तरभाष्यम् )

यथा तर्हि त्रिविष्टब्धकम् ॥[1]

( दृष्टान्तान्तरनिराकरणभाष्यम् )

तत्राप्यन्ततः[2] सूत्रकं भवति ॥

( प्रदीपः ) सामग्र्यन्तरानुप्रवेशेनोत्तरम् ॥

( उद्योतः ) सामग्र्यन्तरेति । कारणान्तरेत्यर्थः ॥ सूत्रकं- कीलादि ॥ न[3] च सामान्यलक्षणया भूतभाविसकलविषयकशक्तिग्रहः संभवत्येव । अन्यथा तवापि तत्तद्बोद्धृबुद्धौ असंनिहितसकलाकार- विषयकशक्तिग्रहासंभवेनानुवादेऽपि दोषः स्यात् । सामान्यलक्षणाऽन- ङ्गीकारेऽपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारणभावा- भ्युपगमान्न दोष इति वाच्यम् । जातिप्रकारकशक्तिग्रहस्य स्वाश्रयी- भूतसकलव्यक्तिबोधकत्वेऽप्यनुत्पन्ने जात्याश्रयत्वसंबन्धस्य वक्तुमशक्य- तया भाविव्यक्तेर्जात्याश्रयत्वाभावात् तद्बोधासंभवेन मृजेर्वृद्धिरित्यत्र तज्जन्योत्पत्तिज्ञप्त्योः परस्पराश्रय इति भावात्[4] । वृद्धिरादैजित्यस्य विद्यमानेषु बुद्धिस्थेषु चारितार्थ्येन भाविनामुद्देश्यत्वासंभवेन तत्र वृद्धिपदस्य शक्तिग्रहासंभवाच्च ॥

( आक्षेपोपसंहारभाष्यम् )

इदं[5] पुनरितरेतराश्रयमेव ॥

( ६९ अन्योन्याश्रयवारकसिद्धान्तिवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं[6] तु नित्यशब्दत्वात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ।

कथम् ?

'नित्यशब्दत्वात्'। नित्याः शब्दाः, नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते, न संज्ञया आदैचो भाव्यन्ते ॥

( प्रदीपः ) सिद्धं त्विति । न हि मृजेर्वृद्धिरपूर्व आकारो भाव्यते किं तु मृजाद्युपदिष्टे मार्ष्ट्यादीनामसाधुत्वबुद्धिः प्राप्नो- तीति तेषां साधुत्वान्वाख्यानं क्रियते ॥

( उद्योतः ) यद्यप्यस्य सूत्रस्य शाटकं वयेत्यादाविव भावि- संज्ञाविज्ञानेन सिध्यति, यथा च तत्रोत्पत्त्यनन्तरं गृहीतशक्तिकशाट- कसादृश्याच्छाटकपदशक्तिग्रहस्तथा प्रकृतेऽपि स्पष्टं चेदमिग्यण इति सूत्रे भाष्ये, तथाप्यत्र वास्तवमेव[7] परिहारमाह—भाष्ये— सिद्धं त्विति । एतच्च मञ्जूषायां विस्तरेण निरूपितम् ॥

( आक्षेपभाष्यम् )

यदि[8] तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम् ?

( आक्षेपवारकं भाष्यवार्तिकम् ॥ )

किमर्थं[9] शास्त्रमिति चेन्निवर्त- कत्वात्सिद्धम् ॥

( भाष्यम् )

निवर्तकं शास्त्रम् ।

कथम् ?

मृजिरस्मा[10]यविशेषेणोपदिष्टः । तस्य सर्वत्र मृजि- बुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते—मृजेर- क्ङित्[11]सु प्रत्ययेषु मृजेः प्रसङ्गे मार्जिः साधुर्भवतीति ॥

( इत्यन्योन्याश्रयनिराकरणम् । )

---

१ दृष्टान्तान्तरमाह—यथा तर्हीति ॥ त्रिवीति । मिथःसंब- द्धास्त्रयो वेणवस्तत् ॥ छाया ॥

२ अत्रापि व्यभिचारं निरस्यति—तत्रापीति ॥

३ ननु शब्दानित्यत्वपक्षे इयं शङ्का । तत्र हि 'लक्षणैकचक्षुष्को व्याकरणबलेनैव शब्दव्युत्पत्तिमिच्छति इति यद्यपि तथापि न दोष इति नित्यत्वपर्यन्तधावनं भगवतो व्यर्थं' इति कौस्तुभोक्तिं खण्डयति— न चेति । 'मालादावाकारे श्रुते आत्व—' इति शेषः । लक्षणया— प्रत्यासत्त्या । शक्तीति । वृद्धिशब्देत्यादिः ॥ अन्यथा—उक्तप्रकारा- नङ्गीकारे ॥ तवापि—तन्नित्यत्ववादिनोऽपि ॥ छाया ॥ ननु दूरत- श्चन्दनं पश्यतः पुरुषस्य सुरभिचन्दनमिति प्रतीतिर्भवति, सा सामान्य- लक्षणाप्रत्यासत्त्या । एवं भूतभाविव्यक्तीनामपि तादृशप्रत्यासत्त्या प्रतीतिः स्यात् । एवञ्च सामान्यलक्षणया वृद्धिपदशक्तिग्रहवतः पुरुषस्य मृजेर्वृद्धिरित्यादावपि बोधेन नेतरेतराश्रयरूपो दोषोऽत आह—न च सामान्येति । प्रत्यासत्त्यनाश्रयणे दोषमाह–अन्यथे- त्यादिना । तादृशप्रत्यासत्त्यनङ्गीकर्तृमतेऽपि इतरेतराश्रयदोषपरिहार- प्रकारमाह—शक्तिग्रहबोधेत्यादिना । तदेतत्सर्वं निराकरोति— जातिप्रकारकेत्यादिग्रन्थेन । तद्बोधासम्भवेन—वृद्धिपदात् शक्ति- ग्रहकाले भाविव्यक्तीनां बोधासम्भवेन । तज्जन्योत्पत्तिज्ञप्त्योः— वृद्धिपदनिष्ठशक्तिग्रहजन्या याऽऽदैचामुत्पत्तिः, तत्पदनिष्ठशक्तिग्रह- जन्या या जात्याश्रयत्वसम्बन्धज्ञप्तिः, तयोः परस्पराश्रयत्वम् । शक्ति- ग्रहजन्योत्पत्तिं विना सम्बन्धज्ञप्तिरशक्या, सम्बन्धज्ञप्तिं विनोत्पत्तिर- शक्येति भावः ॥

४ भावादिति । 'सतो वृद्ध्यादिषु' इति वदतो भाष्यकृदादेरिति भावः ॥ छाया ॥

५ अत्र त्वन्योन्याश्रयस्यापरिहार्यत्वेनाप्रसिद्धिरेवेत्युपसंहरति— इदमिति ॥ ( दा. )

६ एवं प्राप्तमन्योन्याश्रयं परिहरति—सिद्धं त्विति ॥ ( दा. )

७ वास्तवमिति । अयं भावः—यद्यपि तत्र गत्यन्तराभावात्तदा- श्रयणेऽपि कृतेऽनुवादविषये मालादौ चारितार्थ्येन तदाश्रयणं दुर्वचं तथापि सिद्धान्तितादैज्मात्रग्रहणपक्षोपपत्त्यर्थमनुवाद इव विधावप्यस्यो- पस्थितेरवश्यं वाच्यतयैतदुपस्थितिसामर्थ्येनात्रापि तदाश्रयणं सुवचम् । अन्यथा तद्भावितग्रहणपक्षस्यैव सिद्धयाऽऽदैज्मात्रग्रहणमिति पक्षासंगतिः स्पष्टैवेति ॥ छाया ॥

८ शब्दानां नित्यत्वे शास्त्रवैयर्थ्यमिति शङ्कते—यदीति ॥

९ नित्यशब्दत्वपक्षेऽपि न शास्त्रवैयर्थ्यमित्युत्तरयति–किमर्थ- मिति ॥ नेदं कात्यायनवार्तिकम्, विवरणव्यवहारभेदात् । अन्यच्च सिद्धशब्दान्तं कात्यायनवार्तिकेषु न दृश्यत इतीदं भाष्यवार्तिकमेव ॥

१० अस्मै साधुशब्दव्युत्पत्तये । पाणिनिना प्रत्ययविशेषानाश्रयेण 'मृजूष् शुद्धौ' इति धातुपाठ उपदिष्ट इत्यर्थः । तस्य साधुशब्दव्युत्सोः । सर्वत्र तिबादावपि । तत्रानेन तद्बुद्धौ प्रसक्तायां मृजेरिति सूत्रेण ॥ छाया ॥

११ अक्ङित्स्विति । क्ङिति चेति निषेधविषयपरिहारेण विधिप्र- वृत्तेरेवमुक्तम् । मार्जिरिति । कृतवृद्धिक इत्यर्थः ॥

( अथ समुदितसंज्ञानिराकरणाधिकरणम् )

( वार्तिकावतरण आक्षेपभाष्यम् )

**प्रत्येकं[1] वृद्धिगुणसंज्ञे भवत इति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**समुदाये मा भूतामिति ॥**

( प्रदीपः ) **प्रत्येकमिति** । यद्यपि नित्यशब्दत्वेनैतदपि व्यवतिष्ठते, तथापि न्यायव्युत्पादनायोपन्यासः ॥ **समुदाये मा भूतामिति** । अन्यथा 'मृजेर्वृद्धिः' इत्यादौ समुदाय आदेशः प्राप्नोति । समुदायावयवसन्निधौ क्व तात्पर्यं कस्य च नान्तरीयकत्वमिति विचार्यते ॥

( उद्योतः ) **न्यायेति** । वक्ष्यमाणन्याय[2]द्वयेत्यर्थः ॥ ननु वृद्धिर्यस्येत्यादौ समुदायासंभवात् प्रत्येकमेव संज्ञेत्यत आह—**अन्यथेति** । एवं च तमादाय तत्रापि संभवः । [3]द्वन्द्वनिर्देशात्समुदायस्यैव स्यादिति भावः ॥ **समुदायेति** । '[4]मातापित्रोर्मृतेऽहनि' इतिवद्बोधे साहित्यं न तु क्रियानिष्पत्तौ—इति भावः ॥

( ७० आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ [5]अन्यत्र सहवचनात्समुदाये संज्ञाऽप्रसङ्गः ॥ * ॥**

( भाष्यम् )

**अन्यत्र सहवचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः । यत्रेच्छति सहभूतानां कार्यं, करोति तत्र सहग्रहणम् । तद्यथा–"सह सुपा" "उभे अभ्यस्तं, सह" इति ॥**

( प्रदीपः ) **अन्यत्रेति** । यत्नसाध्या समुदायप्रतिपत्तिरिति यत्नाभावे न भवतीत्यर्थः ॥ ननु सहग्रहणं नियमार्थं स्यात्–समुदायस्यैव समाससंज्ञा यथा स्यात्, नावयवानामिति । नैतदस्ति, उभयत्र तात्पर्याभावाद्युगपदुभयत्र प्रसङ्गाभावाल्लिङ्गत्वमेव सहग्रहणस्यान्यत्र समुदाये तात्पर्यं नास्तीत्यस्यार्थस्य ॥ **उभे अभ्यस्तं सहेति** । [6]अत्र सहग्रहणं वार्तिककारस्य कर्तव्यत्वेन स्थितम् । भाष्यकारस्तूभेग्रहणस्यैतत्प्रयोजनं स्थापयिष्यति ॥

( उद्योतः ) **उभयत्रेति** । समुदायेऽवयवे चेत्यर्थः ॥ उभयत्र तात्पर्याभावे हेतुः— **युगपदिति** । फलाभावादिति भावः ॥ [7]यद्यपि पर्यायः प्राप्नोति, तथापि समासविधिनियमोभयपरत्वे गौरवमित्यतो लिङ्गत्वकल्पनमेवोचितमित्यत्र तात्पर्यम् ॥ **भाष्यकारस्त्विति** । [8]तदेकदेशीत्यर्थः । द्वे इत्यनुवृत्त्यैव सिद्धे **उभेग्रहणं** सहार्थकमिति भावः ॥

( ७१ आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ [9]प्रत्यवयवं च वाक्यपरिसमाप्तेः ॥ * ॥**

( भाष्यम् )

**प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा —देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति । न चोच्यते प्रत्येकमिति । प्रत्येकं च [10]भुंजिः परिसमाप्यते ॥**

( प्रदीपः ) **प्रत्यवयवं चेति** । अत्र वाक्यशब्देन वा[11]-

---

१ मुद्रितपुस्तकेषु इतः प्राक् '*वृद्धिगुणसंज्ञयोः प्रत्येकं वचनम्*। वृद्धिगुणसंज्ञयोः प्रत्येकं ग्रहणं कर्तव्यम्' इत्यधिकः सवार्तिकः पाठो दृश्यते । क्वचित् '*प्रत्येकं वृद्धिगुणसंज्ञावचनम्* । प्रत्येकं वृद्धिगुणसंज्ञावचनं कर्तव्यम्' एतादृशश्च । प्राचीनपुस्तकेषु प्रामाणिकेषु एतादृशपाठस्यानुपलम्भान्नात्र गृहीतः । तन्मुद्रकैः काल्पनिकत्वमस्य पाठस्य टिप्पण्या स्फुटीकृतम् । काल्पनिकाः पाठा अप्रामाणिकत्वान्नात्राद्रियन्ते ॥

२ **न्यायद्वयेति** । ब्राह्मणभोजनन्यायगर्गदण्डनन्यायेत्यर्थः ॥ छाया ॥ 'न्यायेत्यर्थः' इति घ. पाठः

३ ननु समुदायस्य प्राप्तिरेव कथं यदर्थं प्रत्येकमित्युच्यते । ये तु प्रत्याहारेण मिथः सापेक्षप्रतीतेर्मिलितानामेव सेत्याहुः । तन्न, अचीत्यादिष्वपि मिलितानामेव निमित्तत्वापत्तेरत आह—**द्वन्द्वेति** ॥ छाया ॥

४ **मातापित्रोरिति** । 'प्रतिसांवत्सरं कार्यं मातापित्रोर्मृतेऽहनि' इत्यत्र मातापित्रोरितिद्वन्द्वप्रतीतसाहित्यस्य यथा कार्यमित्यत्रान्वयो नतु क्रियोत्पत्तौ तथाऽत्रापि आदैजिति द्वन्द्वसाहित्यस्य बोध एवान्वयो नतु वृद्धिक्रियोत्पत्ताविति वृद्धिसंज्ञा प्रत्येकस्य न समुदायस्येति भावः ॥

५ तत्रादौ ज्ञापकेन परिहरति—**अन्यत्रेति वार्तिकेन** ॥ छाया ॥

६ ननु भगवत **'उभे अभ्यस्तम्'** इत्युक्त्वा **'सह'** इत्युक्तिः पूर्वापरविरुद्धा, उभेग्रहणेनैव तदर्थं प्रतिपाद्य सहग्रहणप्रत्याख्यानादत आह—**अत्रेति** ॥ छाया ॥

७ ननु युगपदुभयत्र प्रसङ्गाभावादुभयत्र-समुदायेऽवयवे च तात्पर्यं नास्तीति न नियमार्थत्वं सहग्रहणस्येति प्रदीपे उक्तम्, तत्र युगपदुभयत्र प्रसङ्गाभावेऽपि पर्यायेण प्राप्तिरस्तीति नियमार्थत्वं तस्य संभवतीत्यभिप्रायेणाह—**यद्यपीति** । पर्यायेऽवयवस्य यदा प्राप्तिस्तदा सह सुपेत्यस्य विध्यर्थत्वं समुदायस्य प्राप्तौ च नियमार्थत्वमित्याह—**तथापीत्यादिना** ॥

८ ननु तत्सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनेष्टसिद्धिमाश्रित्य **सहेति** वार्तिकं प्रत्याख्यातम् । एवं च तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभेग्रहणमपि प्रत्याख्यातप्रायमेव । एवं च द्वे इत्यनुवृत्त्यैव सिद्धे तत्स्पष्टार्थम् । यत्तूभेग्रहणसामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकम् । तेन समुदितेः इत्यर्थलाभ इति । तन्न, अशब्दार्थत्वात् । शब्दाधिक्यादर्थाधिक्यस्य बहुशो भगवतोपहसितत्वाच्च । ध्वनितं चेदं **'तदसति प्रयोजने सहार्थं विज्ञास्यते'** इति ग्रन्थेन भाष्येऽत आह—**तदेकेति** । तच्छिष्य इत्यर्थः ॥ छाया ॥

९ एवं वार्तिककारो ज्ञापकेनाक्षेपं निराकृत्य लोकयुक्तितोऽपि निराकरोति—**प्रत्यवयवमिति** ॥

१० **भुजिः**–भोजनक्रिया ॥

११ मुद्रितपुस्तकेषु 'वाक्यार्थः फलं' इति पाठो दृश्यते ॥

क्यार्थफलमुच्यते । तच्च देवदत्तादीनां भोजनम् । तस्य चैतदेव रूपं यत्प्रत्येकपरिसमाप्त्या संपद्यते । अन्नादनादिरूपत्वात्तृप्तिफलत्वाच्च भोजनस्य । नाट्यक्रिया तु समुदाये समाप्यते, गीतादिक्रियासमुदायरूपत्वात्तस्याः । संयोगसंज्ञा त्वन्वर्थत्वात्समुदाये प्रवर्तते । वृद्धिसंज्ञा तु लक्ष्ये पृथगादैचां दर्शनात् **'मालादीनां च'** इति लिङ्गाच्च प्रत्येकमवतिष्ठते ॥

**( उद्योतः )** न ज्ञापकादेव, किं तु युक्तितोऽपि प्रत्येकं संज्ञेत्याह—भाष्ये—**प्रत्यवयवमिति** ॥ ननु प्रत्येकं वाक्यपरिसमाप्तिमुपक्रम्य प्रत्येकं भुजिसमाप्त्युक्तिरयुक्ता, न हि भुज्यर्थोऽत्र वाक्यार्थः । किं तु ण्यन्तार्थोऽत आह—**अन्नेति** ॥ वाक्यार्थस्तु अत्र प्रयोजकव्यापारस्तस्य समुदायविषयत्वसंभवात्फलग्रहणम् । तच्च प्रयोज्यव्यापाररूपमित्याह—**तच्चेति** ॥ ननु विशिष्टपरिमाणस्यादनीयस्य भोजनक्रिया समुदाये पर्यवस्यतीत्यपि वक्तुं शक्यमत आह—**तृप्तिफलत्वाच्चेति** ॥ सर्वाऽपि क्रिया प्रत्येकं समाप्यत इति भ्रमो न कार्य इत्याह—**नाट्येति** ॥ **गीतादीति** । आदिना नृत्तवाद्यादि ॥ **अन्वर्थत्वात्**–संयुज्यन्ते वर्णा अत्रेति ॥ लक्ष्यानुसारात्तत्र समुदाये वाक्यपरिसमाप्तेराश्रयणमिति तत्त्वम् ॥ प्रकृतेऽन्यतरन्यायाश्रयणे हेतुमाह—**वृद्धिसंज्ञेति** ॥ **लिङ्गादिति** । **प्रस्थेऽवृद्ध**मिति निषेधबाधनार्थं हि तदिति भावः ॥ **न च** नामधेयरूपमालादीनामाद्युदात्तार्थं तत्, तस्य **वा नामधेयस्ये**ति पक्षे वृद्धत्वादिति **वाच्यम्** । **अभिव्यक्ते**ति न्यायेन तत्राप्रवृत्तेः ॥

**( आक्षेपभाष्यम् )**

**ननु चायमप्यस्ति दृष्टान्तः—'समुदाये वाक्यपरिसमाप्तिः' इति । तद्यथा—'गर्गाः शतं दण्ड्यन्ताम्' इति । अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति ॥**

**( प्रदीपः ) गर्गा इति** । अत्र शतस्येप्सिततमत्वात् प्राधान्यम्, अपादानस्थानप्राप्ता गर्गा गुणकर्म, 'न च गुणभेदे प्रधानस्य भेदः' इति शतदण्डनं समूहे परिसमाप्यते ॥ **अर्थिनश्चेति** । शतस्य प्राधान्यं प्रतिपाद्यते । दण्डपरायां चोदनायां शतस्य प्राधान्यमतो वाक्यादवगम्यते ॥

**( उद्योतः )** समुदाये समाप्तौ युक्तिमाह—**अत्र शतस्येति** । एवं चाकथितसूत्रे दण्डिरपि परिगणनीय इति भाव इत्येके ॥ उद्देश्यस्वरूपमार्थं प्राधान्यं शतस्येत्यनुद्देश्यत्वेन गर्गा गुणकर्म । दण्डेश्च स्वस्वप्रदानकदानानुकूलव्यापारानुकूलव्यापारः शासनरूपोऽर्थः । शासनं–नियन्त्रणम् । तत्र ण्यन्त इव **'कर्तुः–'** इत्युभयोः कर्मत्वम् । कर्तृप्रत्ययसमभिव्याहारे धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वेन गर्गाणां शाब्दं प्राधान्यम् । तत्रैव प्रधाने कर्मणि लकारः । **"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्"** इत्युक्तेः । दुहादिष्वस्याप्रामाणिकः पाठ इति वक्ष्यते ॥ **अपादानस्थानप्राप्ता** इत्यनेन चानुद्देश्यत्वमात्रमभिप्रेतमिति **परे** ॥ **शतस्य प्राधान्यमिति** । शारीराभिहननलक्षणदण्डव्यावर्तनेनेति भावः ॥

---

१ **तस्य चैतदेवेति** । वाक्यार्थफलभूतप्रयोज्यब्राह्मणकर्तृका भुजिक्रिया सामर्थ्यात्प्रत्येकं पर्यवस्यतीत्यर्थः । एवेनान्यथा तदसिद्धिः सूचिता । तथाहि—एकेन पादप्रक्षालनम्, अन्येनासन उपवेशनम्, अपरेणान्नगिलनमित्येवं भुजिक्रिया न निर्वर्त्यते भिन्नाधिकरणत्वेन तत्स्वरूपस्यैवाप्रतिलम्भात् । अपि तु एकाधिकरणेनैव निर्वर्त्यते । तदाह—**अन्नादेति** ॥ छाया ॥

२ ननु भाष्ये **'वाक्यपरिसमाप्तिः'** इत्युक्त्वा भुजिपरिसमाप्त्युक्तिरयुक्ता इक्प्रत्ययान्तभुजिशब्दस्य धातुपरत्वाद्वाक्यस्य पदसमूहपरत्वात् । किं च परिसमाप्तिः पर्यवसानं, तच्चार्थस्य न शब्दस्येत्युभयत्र तथोक्तिरयुक्तेति चेत् । न, भुजिवाक्यशब्दयोरर्थपरत्वात् । एवमप्ययुक्तत्वमाह—**ननु प्रत्येकमिति** ॥ **वाक्यार्थः**–वाक्यजन्यधीविशेषः ॥ छाया ॥

३ **न्यतरेति** । ब्राह्मणभोजनन्यायेत्यर्थः ॥ छाया ॥

४ **तदितीति** । समुदायस्य संज्ञायां तु मालादौ तदभावेन तदभावात्तदभावेन पूर्वेणापर्युदासात्तेनैव सिद्धे सूत्रारम्भो व्यर्थ एव स्यादिति भावः ॥ छाया ॥

५
अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यो न शब्देषु तदुक्तिषु ॥ १ ॥

६ ननु केवललोकयुक्तित एव निर्णये तत्र युक्त्यन्तरस्यापि सत्त्वेन संदेहस्तदवस्थ एवेति ज्ञापकाश्रयणमेव युक्तम्, न द्वितीयमित्याशयेनाशङ्कते—**ननु चेति** ॥ छाया ॥

७ 'अर्थिनो राजानश्च' इति प. पाठः ॥

८ अर्थिनश्चेति वाक्यशेषस्योपयोगं प्रकटयति—**शतस्येति** छा. ॥

९ **समुदाय इति** । शङ्कोक्ते समुदायपरिसमाप्तिदृष्टान्त इत्यादिः ॥ छाया ॥

१० ननु प्रदीपोक्तदिशा शतस्य प्रधानत्वे तत्रैव लादयो भवन्तीति गर्गाः शतं दण्ड्यन्तामित्येतदनुपपन्नमत आह—**एवं चेति** । शतस्य प्राधान्ये तत्रैव लादयो भविष्यन्ति । अप्रधाने लकारसम्पादनार्थं दुहादिषु दण्डिपरिगणनमावश्यकम् । तथा च 'अप्रधाने दुहादीनां' इत्यभियुक्तोक्तेर्गर्गाः शतमित्येतदुपपद्येतेति भावः ॥

११ 'एके' इत्यनेन सूचितामरुचिं प्रतिपादयन् सिद्धान्तमाह—**उद्देश्येति** ॥ छाया ॥

१२ **नियन्त्रणमिति** । शरीराभिहननरूपार्थस्यात्राभावात् शासनस्य नियन्त्रणमित्येवार्थः ॥

१३ **ण्यन्त इवेति** । गतिबुद्धीतिसूत्रस्य नियमपरत्वात्तस्य च विधिमुखेन प्रवृत्तौ ण्यन्तेऽपि कर्तुरित्यनेनैवोभयोः कर्मत्वमिति भावः ॥

१४ नन्वेवमपि **'प्रधानकर्मण्याख्येये'** इत्युक्तेः शतरूपे कर्मणि लापत्तिरत आह—**कर्तृप्रत्ययेति** ॥ छाया ॥

१५ **तत्रैवेति** । शब्दशास्त्रे तस्यैव प्राधान्येन ग्रहणात्तत्सन्निवेत्यर्थः ॥ छाया ॥

१६ **दुहादिष्विति** । एवं चेत्यादिः ॥ छाया ॥

१७ अत्र कैयटस्यापीदमेवाभिमतमित्याह—**अपादानेति** । चोऽप्यर्थे । मात्रपदेनापादानत्वेनाविवक्षितत्वरूपशाब्दार्थनिरासः । एवं चेप्सिततमत्वादित्यस्योद्देश्यत्वादित्यर्थ इति बोध्यम् ॥ छाया ॥

( समाधानभाष्यम् )

**सत्येतस्मिन्दृष्टान्ते[1] यदि तत्र सहग्रहणं क्रियते[2], इहापि प्रत्येकमिति वक्तव्यम्[3] ।**

**अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवति, इहापि नार्थः[4] प्रत्येकमिति वचनेन ॥**

(प्रदीपः) **अथ तत्रान्तरेणेति** । न्यायादन्वर्थत्वाच्च समाससंज्ञायाः समुदाये परिसमाप्तौ सिद्धायां योगविभागार्थं तत्र सहग्रहणं स्थितमिति **'तत्रान्तरेण'** इत्युक्तम् ॥

(उद्योतः) ननु 'अन्तरेणापि' इति वाच्ये सार्वकालिकासत्त्वप्रतिपादकमपिशब्दरहितमयुक्तमत आह—**न्यायादिति** । शतदण्डनन्यायेत्यर्थः ॥ **योगविभागेति** । तिङन्तसमासायेति भावः ॥

( इति समुदायसंज्ञानिराकरणम् । )

( अथ तपरग्राह्यनिराकरणीयाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ किमर्थमाकारस्तपरः[5] क्रियते ?**

(प्रदीपः) **अथ किमर्थमिति** । किमाकृतिपक्षे[6] भिन्नकालनिवृत्त्यर्थम्, **अथवा** व्यक्तिपक्षे गुणान्तरयुक्तानां[7] ग्रहणार्थमिति **प्रश्नः** ॥

(उद्योतः) भाष्ये—**किमर्थमिति**—चतुर्थीतत्पुरुषः[8] ॥

( ७३ सिद्धान्तसमाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ आकारस्य तपरकरणं[9] सवर्णार्थम् ॥ * ॥

( भाष्यम् )

**आकारस्य तपरकरणं क्रियते ।**

**किं प्रयोजनम् ?**

**सवर्णार्थम् । "तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ।**

**केषाम् ?**

**उदात्तानुदात्तस्वरितानाम् ॥**

(प्रदीपः) **आकारस्येति** । व्यक्तिः पदार्थो भेदकाश्च गुणा इति दर्शने यद्गुणस्यैवोच्चारणं तद्गुणस्यैव संज्ञाप्रसङ्गे गुणान्तरयुक्तानामपि संज्ञाप्रतिपत्त्यर्थं तपरत्वमित्यर्थः ॥

(उद्योतः) (भाष्ये) तपरकरणं क्रियत इति । 'पाकं पचति' इतिवत् सामान्यविशेषभावेन सहप्रयोगः ॥ आत्वजातेर्भिन्नकालावर्णवृत्तित्वाभावाद् द्वितीयपक्षमाश्रयति[10]—**व्यक्तिरिति** ॥ **यद्गुणस्येत्यादिर्बहुव्रीहिः** ॥

( कारणजिज्ञासाभाष्यम् )

**किं च कारणं न स्यात् ?**

(प्रदीपः) **किं च कारणमिति** । अभेदका गुणाः, मुण्डेन हि कृते चौर्ये कुन्तलित्वावस्थायामपि चौरोऽयमिति व्यपदिश्यत एवेति **प्रश्नः** ॥

(उद्योतः) भाष्ये—किं च कारणमिति । **निमित्तकारणहेतुष्विति** हेतौ प्रथमा ॥

( कारणप्रदर्शकैकदेशिभाष्यवार्तिकम् )

## ॥ भेदकत्वात्स्वरस्य[11] ॥ * ॥

( भाष्यम् )

**भेदका उदात्तादयः ।**

**कथं पुनर्ज्ञायते—भेदका उदात्तादय इति ?**

**एवं हि दृश्यते लोके—य उदात्ते कर्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै[12] चपेटां ददाति—अन्यत् त्वं करोषीति ॥**

---

१ सिद्धान्त्युक्तस्य दृष्टान्तस्य प्रतिदृष्टान्ते शङ्ककेन दत्ते सिद्धान्ती निर्णेतुकाम आह—**सत्येतस्मिन्निति** । सत्यप्येतस्मिन्नित्यर्थः ॥ लौकिकदृष्टान्ताश्रयणमुभयत्र भवतीत्येकरूपतैवोचिता न त्वर्धजरतीयमिति भावः ॥ छाया ॥

२ **क्रियत इति** । भोजनन्यायसंभवात् ॥ छाया ॥

३ **वक्तव्यमिति** । गर्गदण्डनन्यायसंभवात् ॥ छाया ॥

४ **नार्थ इति** । न्यायान्मालादीनां चेति ज्ञापकाच्चेष्टसिद्धेरिति भावः ॥ छाया ॥

५ **'आकारस्य तपरकरणम्'** इत्येव पाठो भवेत्, अग्रिमसिद्धान्तवार्तिकभाष्ययोस्तथैव पाठस्योपलम्भात् ॥ तथैव भगवतः शैलीदर्शनात् ॥ छाया ॥ अस्मिन् ग्रन्थे छायासंबन्धोऽनिर्णीतः ॥

६ संशयस्यानेककोटिविषयत्वात्कोटिद्वयमाह—**किमाकृतीति** ॥ छाया ॥

७ व्यक्तिपक्षे आकारस्यानण्त्वेन सवर्णग्रहणाप्रसङ्गादाह—**गुणेति** । तदाऽण्विषये गुणानां भेदकतैव, अण्ग्रहणाज्ज्ञापकादिति भावः ॥ छाया ॥

८ वार्तिकेन विशिष्यास्य विधानादाह—**चतुर्थीति** ॥ छाया ॥

ननु तपरस्तत्कालस्येति सूत्रेण तपरत्वप्रयोजने स्पष्टमुक्तेऽपि 'किमर्थं तपरः क्रियते' इति भाष्यमनुपपन्नमत आह—**चतुर्थीतत्पुरुष इति** । कस्मै-इति किमर्थम् । एवञ्चास्य भाष्यस्य तपरत्वप्रयोजनं न प्रश्नविषयः किन्तु प्रयोजनयोर्मध्ये कस्मै प्रयोजनायैतत्तपरकरणमिति प्रश्नः । अत एव पूर्वं बहुत्र प्रयुक्तोऽपि 'किमर्थं'इति शब्दो नैवं व्याख्यातः । तत्र तत्र निष्फलत्वमाक्षिप्यैव कोऽर्थ इति प्रश्नाशयात् ॥

९ वार्तिके-**तपरेति** । भावपरम् । सवर्णपदं तद्ग्रहणपरम् ॥ तथाच तस्य तपरत्वकरणं सवर्णग्रहणार्थमित्यर्थः ॥ छाया ॥

१० 'माश्रयते' इति ध. पाठः ॥

११ **भेदकत्वादिति** । उपात्तविजातीयनिवर्तकत्वादित्यर्थः ॥ छाया ॥ नेदं वररुचिकृतं वार्तिकम्, अन्यत्र दृष्टस्य समानाक्षरानुवादभाष्यस्यात्रानुपलम्भात् । भाष्यकृता 'भेदकत्वाद्गुणस्य' इति न्यासान्तरमपि प्रदर्श्यते । वररुचिवार्तिके एतादृशन्यासान्तरप्रदर्शकभाष्यस्यान्यत्रानुपलम्भादपि न वररुचिकृतमेतदिति ॥

१२ वर्गपञ्चाशदितिवत् **खण्डिकेति**संज्ञाथर्वणानाम् । तदध्यापक इत्यर्थः । भगवतस्तत्त्वादेवमुक्तिः ॥ छाया ॥

( भाष्यम् )

[1]अस्ति प्रयोजनमेतत् ।

किं तर्हि ?

इति—

(उद्द्योतः) अस्ति प्रयोजनमेतदिति काक्वा सूचितमाशयं पृच्छति[2]—किं तर्हीति । किं तर्हि–इति प्रश्ने इति–इदं वक्तव्यमित्यर्थः ॥

( कारणप्रदर्शकन्यासान्तरभाष्यम् )

**भेदकत्वाद्गुणस्येति वक्तव्यम् ।**

किं प्रयोजनम् ?

आनुनासिक्यं नाम गुणः, तद्भिन्नस्यापि ग्रहणं यथा स्यात् ।

किं च कारणं न स्यात् ?

'भेदकत्वाद्गुणस्य' । भेदका गुणाः ॥

[3]कथं पुनर्ज्ञायते—भेदका गुणा इति ?

एवं हि दृश्यते लोके—एकोऽयमात्मा-उदकं नाम, तस्य गुणभेदादन्यत्वं भवति—अन्यदिदं शीतम्, अन्यदिदमुष्णमिति ॥

(प्रदीपः) भेदकत्वादिति । सर्वगुणसंग्रहार्थं गुणग्रहणं कर्तव्यमित्यर्थः ॥ एकोऽयमिति । उदकत्वजातियोगादत्रैकत्वं न विवक्षितं । किं तर्हि ? विशिष्टभाजनस्थमेकमुदकद्रव्यम्, तदेव च गुणान्तरयोगादन्यत्वेन लोके व्यपदिश्यते ॥

(उद्द्योतः) तदाह—भेदकत्वादित्यादि ॥ जात्यात्मनैकत्वे व्यक्तिभेदादेवोपपत्तेर्न गुणभेदकृतभेदे इदमुदाहरणं स्यादत आह—उदकत्वेति । आत्मशब्दो द्रव्यवाची भाष्ये ॥

( अभेदकत्वाक्षेपसिद्धान्तिभाष्यम् )

[4]ननु च भोः—अभेदका अपि गुणा दृश्यन्ते । तद्यथा—देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति । तथा-बालो युवा वृद्धः, वत्सो दम्यो बलीवर्द इति ॥

(उद्द्योतः) बालो युवा–इति भाष्ये स्वामाख्यां न जहातीत्यनुकर्षः । एतेनाभेदकत्वे प्रत्यभिज्ञा प्रमाणं दर्शितम् ॥

( आक्षेपभाष्यम् )

[5]उभयमिदं गुणेषूक्तम्—भेदकाः-अभेदकाः-इति किं पुनरत्र न्याय्यम् ?

(प्रदीपः) उभयमिति । आम्नायशब्दा नियतस्वरा[6] इति वेदे गुणानां भेदकत्वम् । लोके तूभयथा व्यवहारः-गोपिण्डो वत्साद्यवस्थाभेदात् क्रयविक्रयादिषु मूल्यादिभेदाद्भेदेन व्यवह्रियते, स एवायमिति प्रत्यभिज्ञानादभेदेनापि[7] ॥ इति प्रश्नः-किं पुनरिति ॥ अत्रेति । शास्त्रे ॥

(उद्द्योतः) ननु गुणेषूभयाङ्गीकारे खण्डिकोपाध्यायचपेटादानं[8] विरुध्येतेति चेन्न, यतः 'उभयं' इति लोकमात्रविषयमिति न विरोध इत्याह—आम्नायेति ॥ ननूभयोरपि न्याय्यत्वप्रतिपादनेन किं पुनरत्र न्याय्यमिति प्रश्नोऽयुक्तोऽत आह—शास्त्रे इति । 'अत्र' इति निर्धारणेसप्तमी[9] नेति भावः ॥

( सिद्धान्तसमाधानभाष्यम् )

[10]अभेदका गुणा इत्येव न्याय्यम् ।

कुत एतत् ?

यदयम्—"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इति उदात्तग्रहणं करोति । यदि भेदका गुणाः स्युः, उदात्तमेवोच्चारयेत् ॥

(प्रदीपः) उदात्तमेवेति । तस्माद्गुणरहितस्योच्चारणाभावान्नान्तरीयकत्वादुच्चार्यमाणोऽपि गुणः प्रयत्नमन्तरेण न विवक्षित इत्यर्थः ॥ यद्येवं कथमन्यत्रोक्तं—'उदात्तनिपातनं करिष्यते' इति, यावता तत्राप्यविवक्षा प्राप्नोति । नैष दोषः; तत्रापि हि 'स्थानेऽन्तरतमः' इति वचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्य उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं विज्ञा[11]-

---

१ उक्तार्थं प्रकारान्तरेणापि द्रढयंस्तत्सूचककाकुस्वरेण तपरत्वस्योक्तफलमङ्गीकरोति—अस्तीति ॥ छाया ॥ किं तर्हीतिप्रश्नस्य 'इति' इत्युत्तरम् । इतिशब्देन वक्ष्यमाणं गृह्यते ॥

२ पृच्छतीति । प्रश्नपूर्वं प्रतिपादयतीत्यर्थः ॥ छाया ॥

३ उक्तप्रत्यभिज्ञावष्टम्भेनोक्तदृष्टान्तेन स्वरमात्रस्यैव तत्त्वं सिद्धमित्यभिमानेन चाह—कथं पुनरित्यादि ॥ छाया ॥

४ एवमेकदेशिना तपरसूत्रे तपरशब्दे बहुव्रीहिमेव जानता गुणानां भेदकत्वमाश्रित्य गुणभिन्नानां सवर्णानां ग्रहणार्थं तपरकरणमिति स्थापिते सिद्धान्ती स्वाभिमतमभेदकत्वपक्षं प्रापयति—ननु चेति ॥ छाया ॥

५ एवं सिद्धान्तिना गुणानामभेदकत्वपक्षे दर्शिते संदिग्धचेता एकदेशी सिद्धान्तिनमेव न्याय्यपक्षं पृच्छति—उभयमिति ॥

६ मन्त्रे त्रैस्वर्यं ब्राह्मण एकश्रुतिर्बह्वृचानाम् । तैत्तरीयाणां तूभयत्रापि त्रैस्वर्यमित्यादिरूपेण नियतस्वरत्वम् ॥

७ नाप्यन्तः कैयटग्रन्थः पूर्वप्रतीकविवरणम् । इति प्रश्न इत्युत्तरप्रतीकावतरणम् ॥ इति–इत एव हेतोः प्रश्न इति तदर्थः ॥ छाया ॥

८ 'पाध्यायचपेटपदं विरु–' इति ग. पाठः । गुणत्वावच्छेदेनोभयाश्रयणे चपेटागुणविषयेऽपि तदुभयम्, तथाचाभेदे चपेटादानं न संभवति । लोकत्वावच्छेदेनोभयाश्रयणे गुणेषु क्वचिद्भेद एवेति तदुदाहरणसङ्गतिरित्याशयः ॥

९ निर्धारणसप्तमी नेति । अत्र–भेदकाभेदकगुणमध्ये किं न्याय्यमिति नार्थः, उभयोरपि न्याय्यत्वस्योक्तत्वात् । अत्र–शास्त्रे कस्याश्रयणं न्याय्यमित्यर्थः ॥

१० सिद्धान्ती तत्संदेहं नियमपूर्वकं निरस्यति—अभेदका गुणा इत्येवेति ॥

११ विज्ञायत इति । एवं चोदात्तोच्चारणरूपयत्नसत्त्वात्तत्र तद्विवक्षायां तत्प्रयुक्तनिषेधाप्राप्त्या तदकार्यत्वोक्तिर्युक्तैवेति भावः ॥ छा.॥

यते । [1]एवमनुनासिकस्य प्रयत्नाधिक्येनोच्चारणं विवक्षार्थमेव, 'उञः' 'ऊँ' इति यथा ॥ **अन्ये त्वाहुः**–एकश्रुत्या सूत्राणि पठ्यन्त इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति ॥

**( उद्योतः )** ( भाष्ये ) **इत्येव न्याय्यमिति** । विधेयाण्-भिन्नविषये इति शेषः । तत्रैतत्कृतस्यापि **अप्रत्यय** इति निषेधात् । अतस्तथैव ज्ञापकमुपन्यस्यति ( भाष्ये )—**यदयमिति ॥ प्रयत्नं**—स्वशब्देनोपादानरूपम् ॥ **कथमिति** । यथा[2] वध्यादेशे उदात्तनिपातनेन **एकाच** इति सूत्रस्थमेकाज्ग्रहणं न कार्यमिति ॥ **यः स्वरः प्राप्त इति** । हन्तेरनुदात्तत्वादनुदात्त इत्यर्थः । **न** चैवमस्थ्यादीनामाद्युदात्तत्वेनादेशानङः स्थान्यनुरूपेऽनुदात्ते उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति ज्ञापितेऽपि व्यर्थ[3]मुदात्तग्रहणमिति **वाच्यम्** । परमास्थिशब्दादावन्तोदात्ते उदात्तगुण[4]कस्यापि स्थानित्वेन विवक्षायां[5] मानाभावादित्याशयात् ॥ नन्वेवमपि चतसर्याद्युदात्तनिपातनसामर्थ्यात् 'चतस्रः' इत्यत्र **चतुरः शसी**त्यस्याप्रवृत्तिरिति भाष्योक्त[6]मनुपपन्नम् । चतुःशब्दस्य **त्रः संख्याया** इत्याद्युदात्ततया तत्स्थानिकचतसरि स्थानिस्वरेणाद्युदात्तोच्चारणोपपत्त्या **चतुरः शसी**त्येतद्बाधकत्वायोगादत आह—**अन्ये त्विति** । ऐकश्रुति[7]श्च **विभाषा छन्दसी**ति वैकल्पिकी, तत्पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थम् । त्रैस्वर्येण पाठमभिप्रेत्य[8] तु प्रकृतसूत्रस्थं ज्ञापकमित्यविरोधः ॥ 'अन्ये तु' इत्यरुचिबीजं तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं, तद्रूपाद्यलात् तत्र तत्रोदात्तादिविवक्षा । तिसृचतसृ इत्यत्रापि द्वन्द्व[9]प्रयुक्तान्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम् । संपूर्णाष्टाध्यायी आयार्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्कस्यचित्पदस्यैकश्रुत्या पाठः, यथा **दाण्डिनायना**दिसूत्रे—ऐक्ष्वाकेति । एतावदेव भाष्याल्लभ्यते ॥ यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्, तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः ॥

( आक्षेपभाष्यम् )

**यदि[10] तर्ह्यभेदका गुणाः, अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्स्वरितादेः स्वरितान्ताच्च प्राप्नोति ॥**

**( प्रदीपः ) अनुदात्तादेरिति** । अजुपलक्षणार्थोऽनुदात्तश्रुतिः स्यादिति **प्रश्नः** ॥

( उद्योतः ) **स्वरितादेरिति**—भाष्ये–उपलक्षणम्, उदात्तादेरन्तानुदात्ताच्च प्राप्नोतीत्यपि बोध्यम् ॥

( समाधानभाष्यम् )

**नैष[11] दोषः । आश्रीयमाणो गुणो भेदको भवति । तद्यथा—'शुक्लमालभेत' 'कृष्णमालभेत' । तत्र यः शुक्ल आलब्धव्ये कृष्णमालभते, न हि तेन यथोक्तं कृतं भवति ॥**

**( प्रदीपः )** उत्तरे त्वज्ग्रहणमेव कुर्यादित्यभिप्रायः ॥

**( उद्योतः ) आश्रीयमाण इति** । शब्देन[12] निपातनेन वाऽऽश्रीयमाण इत्यर्थः ॥ नन्वेवमनुदात्तादिग्रहणं व्यर्थं स्यादत आह—**अजिति** ॥

( एकदेशिसमाधानभाष्यम् )

**असंदेहार्थ[13]स्तर्हि तकारः । ऐजित्युच्यमाने संदेहः स्यात्—किमिमावैचावेव, आहोस्विदाकारोऽप्यत्र निर्दिश्यते ?**

( समाधानबाधकभाष्यम् )

**संदेह[14]मात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते-'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति । त्रयाणां ग्रहणमिति व्याख्यास्यामः । अन्यत्रापि ह्ययमेवंजातीयकेषु संदेहेषु न कंचिद्यत्नं करोति । तद्यथा-"औतोम्शसोः" इति ॥**

---

१ प्रसङ्गादाह—**एवमिति** । लाघवेन प्राप्तानुनासिकोपदेशं विहाय गौरवेणेति शेषः ॥ छाया ॥

२ **यथेति** । हन्त्यादेशवधेः स्थानिवत्त्वादिण्निषेधे प्राप्ते तद्वारणायेति शेषः ॥ छाया ॥

३ **व्यर्थमिति** । तथा च तत्त्वासंभव इति भावः ॥ प्रत्युत क्रियमाणं तद्यत्नाधिक्येऽप्यविवक्षां ज्ञापयेदित्यपि बोध्यम् ॥ छाया ॥

४ **गुणस्यापीति** । अन्त्यस्येति शेषः ॥ छाया ॥

५ **विवक्षायामिति** । त्वदुक्तरीत्येत्यादिः ॥ छाया ॥

६ **भाष्योक्तमिति । 'त्रिचतुरोः' 'चतुरः शसि'** इत्यत्रेति शेषः ॥ एवं च भाष्यान्तरविरोधस्तदवस्थ एवेति भावः ॥ यद्यपि **'चतेरुरन्'** इति व्युत्पत्तावपि नित्त्वात्त्वमेव तथाप्यव्युत्पत्तिपक्षस्यैव सिद्धान्तितत्वात्तन्न युक्तमिति ध्वनयन्नाह—**अ इति** ॥ छाया ॥

७ नन्वेतावतापि कथं मिथो विरोधपरिहारः, प्रकृतभाष्यासंगतेस्तादवस्थ्यात् । किं चैवं सत्यनङोऽप्युदात्तोच्चारणेनैव सिद्धावुदात्तग्रहणवैयर्थ्यापत्तिः, उक्तज्ञापनासंभवश्च । तथाहि—आश्रीयमाणत्वं स्वशब्देन विवक्षितम्, उत यत्नविशेषेण । नाद्यः । निपातनस्वरस्य भेदकत्वाभावापत्तेः । नान्त्यः । अनङादिषूदात्तोच्चारणादियत्नविशेषाश्रयणादेव सिद्धे तदानर्थक्यापत्तेरतो मूलशैथिल्यात्कथं ज्ञापकतेति नारायणादयः । तत्खण्डिकां तदाशयप्रतिपादिकां प्रवर्तकोक्तिमाह—**एकेति** । तां वैकल्पिकीमङ्गीकृत्य **पक्षान्तरै**रिति न्यायावष्टम्भेन तत्र तत्र तथोक्तमिति भावः ॥ 'अच्छन्दसि' इति छेदः ॥ छाया ॥

८ **भिप्रेत्य त्वि**त्यनेनास्याभ्युपेत्यवादत्वं ध्वनितम् ॥ **प्रकृतेति** । स्वरूपेणोपात्तस्य गुणस्य नान्तरीयकत्वेनाविवक्षितत्वसंभवात्तस्य तत्त्वोपपत्तेरिति भावः ॥ छाया ॥

९ 'प्रयुक्तेऽन्तोदा' इति घ. पाठः ।

१० अभेदज्ञापने भेदवाद्येकदेश्यतिप्रसङ्गमाह—**यदीति** ॥ यद्यभेदका गुणास्तर्हीत्यर्थः ॥ छाया ॥

११ अभेदवादी सिद्धान्ती तदतिप्रसङ्गं निरस्यति—**नैष दोष इति** । यत इति शेषः ॥ छाया ॥

१२ **शब्देनेति** । स्वशब्देन निपातनेन वा कार्यान्वयितयोपात्त इत्यर्थः ॥ छाया ॥

१३ सिद्धान्तनिर्दिष्टाभेदपक्षेण स्वैकदेशिप्रोक्तसवर्णग्रहणार्थत्वे खण्डिते सिद्धान्तिना पुनरेकदेशी फलान्तरमाह—**असंदेहार्थ इति** ॥ असति तकारे किमत्र वर्णत्रयमुत वर्णद्वयमिति संदेहः स्यादित्यर्थः ॥ छाया ॥

१४ इदमपि खण्डयति सिद्धान्ती—**संदेहमात्रमिति** ॥ छाया ॥

( प्रदीपः ) व्याख्यानत इति । 'प्रश्थेऽवृद्धं'-इत्याद्युदात्तत्वे सिद्धे **'मालादीनां च'** इति मालाशब्दस्य वृद्धार्थत्वादुपादानस्याकारप्रश्लेषनिश्चय इत्यर्थः ॥

( सिद्धान्तिसमाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः-खट्वेन्द्रः, खट्वा उदकं-खट्वोदकम्, खट्वा ईषा-खट्वेषा, खट्वा ऊढा-खट्वोढा, खट्वा एलका-खट्वैलका, खट्वा ओदनः-खट्वौदनः, खट्वा ऐतिकायनः-खट्वैतिकायनः, खट्वा औपगवः-खट्वौपगव इति ॥**

( प्रदीपः ) **इदं तर्हीति ।** ननु भाव्यमानत्वादादैचो ग्राहका न भविष्यन्ति । नैतदस्ति । न ह्यत्र संज्ञाविधावादैचो भाव्यन्ते । किन्तु ऐज्भिरण्त्वात्त्रिमात्रचतुर्मात्राणां ग्रहणात्संज्ञाप्रसङ्गात् वृद्धिगुणविधौ तेषामपि प्रसङ्गात्तन्निषेधाय तपरत्वम् ॥

( उद्योतः ) ऐजर्थं तपरत्वमित्याह—**इदं तर्हीति**-भाष्ये । चतुर्मात्रोऽपि प्लुतः **प्लुतावैच** इति सूत्रे भाष्ये स्पष्टः ॥ कार्यकालमाश्रित्य नोदयति—**नन्विति** । अयं भावः—तत्पक्षे **मृजेर्वृद्धि**-रित्यादावुपस्थितं **वृद्धिरादैजि**ति पदैकवाक्यतयाऽन्वेति । एकं वृद्धिपदं तु प्रत्यभिज्ञामात्रफलकमनुवाद एव । एवं च भाव्यमानत्वं स्पष्टमेवेति ॥ उत्तरस्य त्वयं भावः—अनुवादत्वकल्पनापेक्षया तत्रोपस्थितं **वृद्धिरादैजि**ति नत्रैव शक्तिग्रहं संपाद्य वाक्यभेदेन **मृजेर्वृद्धि**-रित्यस्यार्थं बोधयति । **ज्योतिष्टोमेन यजेते**त्यादौ तु शक्तिग्राहकशास्त्रान्तराभावादगत्या विधावेव सामानाधिकरण्यान्नामधेयत्वावगतिः कल्प्यते । न तु विद्यमाने शक्तिग्राहके तथाकल्पनमुचितं पदस्यानुवादकत्वकल्पनं चेति ॥ यत्तु—कार्यकालपक्षे **वृद्धिरादै**जित्यादेर्यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्यर्थः । यथा च ज्योतिष्टोमादिपदानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिस्तथेहापि **मृजेर्वृद्धि**-रित्यादौ सामानाधिकरण्यान्नामधेयत्वावगतिः । उपस्थापकेन वृद्ध्यादिपदेन उपस्थाप्यस्य वृत्त्या बोधनात्परं संज्ञासूत्रत्वावगतिरिति । तन्न, कार्यकालं संज्ञापरिभाषं भस्येत्युपस्थितमिदं भवति-'यचि भम्' इतीति **स्यङः संप्रसारणमि**ति सूत्रस्थभाष्येण, कार्यकालं संज्ञापरिभाषं **प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति—'ईदूदेद्द्विवचनं प्रगृह्यं'** इति **ईदूदेदि**ति सूत्रस्थभाष्येण च विरोधात् । त्वदरीत्या ह्युपस्थितमिदं भवति **यचीती**त्येव वक्तव्यं स्यात् । अथ **संज्ञे**त्यादिप्रकृतसूत्रस्थवार्तिकविरोधश्च । प्रकारान्तरेणात्रत्यतत्प्रत्याख्यानपरभाष्यविरोधश्च । किंच **मृजेर्वृद्धि**रित्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसंपत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थेऽन्वये मानाभावात् तत्रैवपरिभाषाऽनुपस्थित्यापत्तिः, वृद्धिपदेनाविधानात् ॥ **मृजेर्वृद्धि**-रित्यादौ इक्पदोपस्थापकस्यापि विधेयाकाङ्क्षासत्त्वाद् विधिविषये एव तत्प्रवृत्तेश्च भवत्येवान्वयः । एवं च ज्योतिष्टोमवाक्याद्वैलक्षण्येनात्र नामधेयता दुरुपपादा । किं चोपस्थाप्यार्थस्य वृत्त्या बोधनात्संज्ञासूत्रत्वं वा, **इको गुणे**त्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाभावः ॥ वृद्ध्यादिपदैर्वृत्त्या बोधनं च दुरुपपादम् । अनुवादेऽपि संज्ञासूत्रोपस्थिति**रणोऽप्रगृह्यस्य वृद्धिर्यस्ये**त्यादिविषये भाष्ये स्पष्टेति दिक् ॥

( आक्षेपभाष्यम् )

**अथ क्रियमाणेऽपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ?**

( समाधानभाष्यम् )

**"तपरस्तत्कालस्य" इति नियमात् ॥**

---

१ व्याख्यानप्रकारमाह—**प्रश्थेऽवृद्धमिति** । प्रस्थेवृद्धमित्यत्राकारप्रश्लेषोऽस्ति न वेति संशये मालादीनाञ्चेत्यत्र मालाशब्दोपादानस्य वृद्धार्थत्वादकारप्रश्लेषनिश्चयः ॥

२ सूत्रद्वयेऽपि भिन्नकालानां संज्ञानिवृत्त्यर्थं तपरकरणमिति सूचयन्नेव गुणोदाहरणपूर्वं वृद्ध्युदाहरणं दर्शयति—**खट्वेति ॥ सर्वत्र शेषषष्ठ्या समास** इति ॥ छाया ॥

३ उत्तरसूत्रसाधारण्येनात्रत्यस्य तस्यासाधारणं फलं भाष्यकृदाह—**ऐजर्थमिति ॥** तदर्थमपीत्यर्थः, तत्रोत्तरसूत्रे उभयार्थता स्पष्टैव । अत्रत्वन्यथा । अतदर्थत्वेऽप्यसंदेहार्थतया पूर्वार्थता बोध्या । अत एव जश्त्वमित्यग्रे स्पष्टमिति दिक् ॥ छाया ॥

४ ननूकाल इत्युक्तेश्चतुर्मात्रस्याप्लुतत्वेन कथमिदम् । न च ह्रस्वदीर्घप्लुतसंज्ञा एकमात्रद्विमात्रत्रिमात्राणां भवतु गानादौ प्रसिद्धानां चतुर्मात्रादीनां सत्त्वं तु चातुर्वर्ण्यबहिष्कृतानामपि मनुष्यत्वमिवाव्याहतमिति वाच्यम् ।

'ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि' ।

इति शिक्षानुसारेणोक्तत्रयभिन्नानामच्त्वस्याप्यभावादिति चेत् । न, तत्र तृतीयवाक्ये 'ऊ' इति एकमात्रद्विमात्रभिन्नपरमिति भगवदभिप्रेतमिति ध्वनयन्नाह—**चतुर्मात्र इति ॥** छाया ॥

५ **तथाऽन्वेतीति** । वृद्धिसंज्ञाविशिष्टादैचो भवन्तीति वाक्यार्थः ॥ **प्रत्यभिज्ञेति** । तथा च तत्रैवोपस्थितिसंपादनेन साफल्यमिति सर्वथानर्थक्यं नेति भावः ॥ छाया ॥

६ **वाक्यभेदेनेति** । पूर्वान्वयि ॥ छाया ॥

७ कौस्तुभोक्तमतमनूद्य दूषयति—**यत्तु कार्यकालेत्यादिना ॥**

८ **स्थापकस्यापि**—वृद्ध्यादिपदस्य ॥ **विधेयेति** । उद्देश्यस्येत्यादिः ॥ छाया ॥

९ ननु न विधेयाकाङ्क्षा सर्वत्र, अनुवादेऽपि तत्प्रवृत्त्या तत्रैवोपस्थितौ मानाभावादत आह—**विधिविषेति** । अयं भावः—विधेयसमर्पकगुणादिपदश्रुतिस्तदुपस्थितौ लिङ्गम् । विधिवाक्ये प्रथमाया विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः, एतन्मूलक एव विधावित्युद्घोषः । एवं च तत्र विधीयत इत्यस्यैवाध्याहारः । अत एव **'अतो गुणे'** इत्यादौ न दोष इति ॥ छाया ॥

१० **तपरः** इत्यत्र पञ्चमीसमासमनाश्रितवत एकदेशिनः शङ्का—**अथेत्यादिना ॥** छाया ॥

११ पञ्चमीसमासं मनसि धृतवतः सिद्धान्तिन उत्तरम्—**तपर इति ॥** छाया ॥

( समाधानबाधकभाष्यम् )

ननु तः परो यस्मात्सोऽयं तपरः ॥

( समाधानसाधकभाष्यम् )

नेत्याह । तादपि परस्तपरः ॥

( इष्टानुपपत्तिसाधकभाष्यम् )

यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्—यवः, स्तवः । लवः, पव इत्यत्र न स्यात् ॥

( अनुपपत्तिबाधकभाष्यम् )

नैष तकारः ।

कस्तर्हि ?

दकारः ॥

( आक्षेपभाष्यम् )

किं दकारे प्रयोजनम् ?

( प्रतिबन्ध्या समाधानभाष्यम् )

अथ किं तकारे ? यथसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपि । वृद्धिरादैच् ॥ १ ॥

( प्रदीपः ) एवं स्थिते चोदयन्ति—यद्यैजर्थस्तकारस्तेनाकारस्य संबन्धाभावात् कथं 'आत्' इत्येतत्पदमुच्यते । तात्पर्येणैजर्थत्वं तकारस्योच्यते, आनुषङ्गिकं त्वाकारार्थत्वं । ज्ञापकद्वारेण ह्याकारप्रश्लेषे विज्ञायमाने प्रतिपत्तिगौरवं भवति । सति तु तकार आकारस्वरूपप्रतिपत्तिः स्पष्टा भवतीति तकारसहितस्याकारस्यासंदिग्धानुकार्यप्रतिपादनार्थत्वाद्विभक्त्युत्पत्तौ सत्यां 'आत्' इत्येतत्पदं सिद्धम् ॥ १ ॥

( उद्द्योतः ) भाष्ये 'किं तकारे' इत्यस्य तादपि परस्तपर इत्यनङ्गीकुर्वत इति शेषः ॥ संबन्धाभावादिति । शेषशेषिभावाभावादित्यर्थः । तान्तस्य पदत्वाभावे जश्त्वं न स्यादिति भावः ॥ आनुषङ्गिकं फलं दर्शयति—ज्ञापकद्वारेणेति ॥ १ ॥

( २ परिभाषासूत्रम् १ । १ । २ । आ. ३ ॥ )

## इको गुणवृद्धी ॥ १ । १ । ३ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

इग्ग्रहणं किमर्थम् ?

( प्रदीपः ) इको गुणवृद्धी ॥ ३ ॥ इग्ग्रहणमिति । वक्ष्यमाणज्ञापकवशादाकारादिनिरासादिक एव गुणवृद्धी भविष्यत इति प्रश्नः ॥

( उद्द्योतः ) इको गुण० ॥ ३ ॥ गुणवृद्धिग्रहणस्योत्तरत्र निषेध्यसमर्पणायावश्यकत्वेऽपि इकपदस्येकः स्थान इत्यर्थार्थमावश्यकत्वेऽपि योगविभागविषयकोऽयं प्रश्नो भाष्ये—इग्ग्रहणमिति ॥

( ७४ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् )

इग्ग्रहणं क्रियते ।

किं प्रयोजनम् ?

आकारनिवृत्त्यर्थं सन्ध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं च ॥

( प्रदीपः ) आत्सन्ध्यक्षरेति । आकारादीनां स्थानित्वस्य निवृत्त्यर्थमित्यर्थः ॥

( उद्द्योतः ) ननु इक्ग्रहणेनाकारादीनां निवृत्तिरशक्या कर्तुमत आह—स्थानित्वस्येति ॥

---

१ एकदेशी पञ्चमीसमासाज्ञानं प्रकटयति—ननु इति ॥ छाया ॥

२ सिद्धान्ती स्वाभिप्रेतं पञ्चमीसमासं प्रकटयति—नेत्याहेति । एवमेव नेत्याहेत्यर्थः ॥ अत एवाह—तादपीति । व्याख्यानादिति भावः ॥ अपिना बहुव्रीहिसमुच्चयः ॥ छाया ॥

३ एकदेशी पञ्चमीसमासाङ्गीकारेऽव्याप्तिं दर्शयति—यदीति ॥ छाया ॥

४ सिद्धमिति । अयं भावः—तात्पर्येत ऐजर्थत्वेऽपि न तस्य परशेषत्वम्, किंत्वगत्या प्रासङ्गिकोपकार्यस्य पूर्वस्यैव शेषत्वम् । दैजिति तु न पदमिति स्पष्टं कौस्तुभादौ । अत एवात्र 'वृद्धिः, आत्, ऐच्' इति पदविभागप्रदर्शकभाष्यसंगतिरिति ॥ छाया ॥

५ नन्वव्यवहितोत्तरत्वस्य सत्वात्कथं तदभावोऽत आह—शेषेति ॥ अयं भावः—एकार्थकवर्णसमूहः पदम् । इदं त्वैजर्थं नाकारार्थम् । तथा च तदनुपकारिणस्तस्य कथं तच्छेषत्वम् । तदुक्तम्—

'तादर्थ्येन हि शेषत्वं नाश्रयाश्रयिभावतः ।
राजार्थौपयिकं नित्यमुष्ट्रो वहति कुङ्कुमम् ॥' इति ॥ छाया ॥

६ इक्ग्रहणमिति । अवयवद्वारा समुदायस्य प्रश्नः । तत्पदाभावे गुणवृद्धिग्रहणमपि नावश्यकमित्याशयः । न धात्विति सूत्रेऽस्यावश्यकत्वेऽपि अत्रेदं किमर्थमित्याशयेन प्रश्नः ॥

७ इदानीं पदोपस्थितिपक्षाभावेन 'इकः' इति षष्ठ्यन्तमेवार्थपरं, न तु सान्तं प्रथमान्तं शब्दपरमित्याशयेनाह—इक्पदेति ॥ छाया ॥

८ योगविभागेति । 'न धातुलोप आर्धधातुके' इत्यनेन सहैव पठितव्यं स्यादिति भावः ॥

९ ननु 'आकारनिवृत्त्यर्थं' इति भाष्यमनुपपन्नम्, अत्रेक्ग्रहणे कृतेऽपि 'सार्वधातुकार्धधातुकयोः' इत्यस्याङ्गान्त्यस्य तयोः परे गुण इत्यर्थादन्त्यस्य वर्णमात्रस्य गुणप्रसिरतः कैयट आह—स्थानित्वस्येति । अत्रेक्ग्रहणे कृते गुणवृद्धिनिरूपितस्थानितायाः वर्णमात्रप्राप्तायाः लक्षणया संकोच इति भावः । यत्तु 'आकारादीनामप्राप्तेरन्यथार्थमाह' इत्यादि वदन्ति तत्तुच्छम्, वर्णमात्रे तस्याः प्राप्तेः ॥

१० स्थानित्वस्येति । तस्य तत्र लक्षणेति भावः ॥ छाया ॥

( प्रथमप्रयोजनोपपादनभाष्यम् )

**आकारनिवृत्त्यर्थं तावत्—याता, वाता । आकारस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

( प्रदीपः ) आकारस्याङ्गान्त्यस्य वृद्धिविधावभावाद्विशेषाभावाच्चाकारस्य च **'अतो लोपः'** इति लोपविधाना[1]दाकारस्य गुणप्रसङ्गमुदाहरति—**यातेति** ॥

( उद्द्योतः ) ननु आकारस्य वृद्ध्युदाहरणादाने गुणांशे च अकारोदाहरणादाने किं बीजमत आह—**आकारस्येति** । **वृद्धिविधौ**=सिच्वृद्धिविधौ । अयासीदित्यादौ अपवादत्वात्सगिड्भ्यां सा बाध्यते इति भावः ॥ [2]इतरवृद्धिविधौ संभवेऽप्याह—**विशेषाभावादिति** ॥ **अकारस्येति** । **ण्यल्लोपा**विति पूर्वविप्रतिषेधेनातो लोपस्य वृद्धिगुणबाधकत्वा[3]दिति भावः ॥ पुत्रीयतीत्या[4]दौ त्वविशेष इति बोध्यम् ॥ **आकारस्य गुणः—सार्वधातुकार्धधातुकयोरि**त्यनेन ॥

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**सन्ध्यक्षरनिवृत्त्यर्थम्—ग्लायति, म्लायति । सन्ध्यक्षरस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

( प्रदीपः ) **ग्लायतीति** । एचां द्विमात्रत्वाविशेषात् प्रयत्नाधिक्याभावादैकारोपदेशेऽप्येकारो गुणः स्यात् ॥

( उद्द्योतः ) ननु चैकारोच्चारणसामर्थ्यात् गुणो नेत्यत आह—**एचामिति** । सर्वेषां विवृत एव प्रयत्न इत्यभिमानः ॥

( तृतीयप्रयोजनोपपादनभाष्यम् )

**व्यञ्जननिवृत्त्यर्थम्—उम्भिता, उम्भितुम्, उम्भितव्यम् । व्यञ्जनस्य गुणः प्राप्नोति । इग्ग्रहणान्न भवति ॥**

( प्रदीपः ) **उम्भितेति** । भकारस्यौष्ठ्यत्वादोकारो गुणः स्यात्[5] ॥

( प्रथमप्रयोजननिराकरणभाष्यम् )

**आकारनिवृत्त्यर्थेन[6] तावन्नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति—नाकारस्य गुणो भवतीति । यदयम् "आतोऽनुपसर्गे कः" ( ३।२।३ ) इति ककारमनुबन्धं करोति ॥**

**कथं कृत्वा ज्ञापकम् ?**

**कित्करण एतत्प्रयोजनम्—कितीत्याकारलोपो यथा स्यात् । यदि चाकारस्य गुणः स्यात्, कित्करणमनर्थकं स्यात् । गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्यात्—गोदः, कम्बलद इति । पश्यति त्वाचार्यः—नाकारस्य गुणो भवतीति, ततः ककारमनुबन्धं करोति ॥**

( प्रदीपः ) **पररूपेणेति** । **अतो लोप**[7]स्तु न भवति, आर्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानात् ॥

( उद्द्योतः ) **आर्धधातुकोपदेश इति** । गुणनिष्पन्नश्च तदुत्तरकालिक इति भावः ॥

( द्वितीयप्रयोजननिराकरणभाष्यम् )

**सन्ध्यक्षरनिवृत्त्यर्थेनापि नार्थः । उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भविष्यति ॥**

( प्रदीपः ) **उपदेशसामर्थ्यादिति** । प्रतिपत्तिलाघवार्थमेकारमेवोपदिशेदित्यर्थः ॥

( उद्द्योतः ) **पतिपत्तिलाघवम्**—प्रक्रियालाघवम् । **"तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥"** इति पाणिनीयशिक्षोक्तेः प्रयत्नलाघवमपि बोध्यम् ॥

( तृतीयप्रयोजननिराकरणभाष्यम् )

**व्यञ्जननिवृत्त्यर्थेनापि नार्थः । आचार्यप्रवृत्तिर्ज्ञापयति-न व्यञ्जनस्य गुणो भवतीति । यदयं जनेर्डं शास्ति ॥**

**कथं कृत्वा ज्ञापकम् ?**

**डित्करण एतत्प्रयोजनम्-डितीति टिलोपो यथा स्यात् । यदि व्यञ्जनस्य गुणः स्यात्, डित्करणमनर्थकं स्यात् । गुणे कृते त्रयाणामकाराणां पररूपेण सिद्धं रूपं स्यात्-उपसरजो मन्दुरज इति । पश्यति त्वाचार्यः-न व्यञ्जनस्य गुणो भवतीति । ततो जनेर्डं शास्ति ॥**

( प्रदीपः ) **यदयं जनेरिति** । य[8]द्येवं **मिदेर्गुणो** विधीयमानो ज्ञापकेन व्यञ्जनस्य निरस्तत्वादिग्ग्रहणाभावा[9]च्च सर्वादेशः प्राप्नोति । मिद इः-मिदिः-इत्याश्रयणादिकारस्यैव भविष्यतीत्यदोषः ॥

( उद्द्योतः ) **इग्ग्रहणेति** । ततश्च **मिदे**रिति नावयवषष्ठी, किंतु स्थानषष्ठीति सर्वादेशो गुणः स्यादित्यर्थः ॥

---

१ **विधानादिति** । तस्य च गुणवृद्ध्योरप्रसङ्गादिति शेषः ॥ छाया ॥

२ **इतरेति** । **अचो ञ्णितीति** वृद्धिविषय इत्यर्थः ॥ **विशेषाभावादितीति** । कृतायामकृतायां वा वृद्धौ विशेषाभावान्निर्दिष्टस्थानिकत्वेन परिभाषायाः सत्त्वेऽसत्त्वे च विशेषाभावाच्चेत्यर्थः ॥ छाया॥

३ **बाधकत्वादिति** । तथा च चिकीर्षिताऽचिकीर्षीदवधीदित्यादावङ्गान्त्यस्यातोऽसंभव इति भावः ॥ छाया ॥

४ **आदिना** भवतिपचतीति संग्रहः । तत्र हि तिब्निमित्तकः शब्निमित्तकश्च प्राप्तः ॥ छाया ॥

५ **स्यादिति** । तथा चोनवितेति स्यात् । तत्र कार्येऽनुस्वारादेरसिद्धत्वात् । यद्यपि व्यञ्जनस्य मात्रिक उचितस्तथापि स्थानत आन्तर्यस्य प्राबल्यात्स एवेति भावः ॥ छाया ॥

६ ज्ञापकेन फलातिक्रमेण दूषयति—**आकारेति** ॥ छाया ॥

७ 'लोपश्च' इति झ. पाठः ।

८ ज्ञापकेन निर्वाहकारिणं प्रति शङ्कते—**यद्येवमिति** । ज्ञापकेन निर्वाहः परिभाषाया अभावे इत्यर्थः ॥ छाया ॥

९ 'भावात्सर्वादेशः' इति झ. पाठः ।

( प्रथमप्रयोजनबाधकज्ञापकनिराकरणभाष्यम् )

**नैतानि सन्ति ज्ञापकानि । यत्तावदुच्यते—कित्करणं ज्ञापकं-आकारस्य गुणो न भवतीति ॥**

**उत्तरार्थमेतत्स्यात्—"तुन्दशोकयोः परिमृजापनुदोः" ( ३।२।५ ) इति ॥**

( प्रदीपः ) **यत्तावदिति** । विशेषप्रतिपादनाय सकलज्ञापकाक्षेपः ॥

( उद्योतः ) भाष्ये—**नैतानि सन्ति ज्ञापकानीति** । छत्रिन्यायेन ॥ ननु नैतानि सन्ति ज्ञापकानीति प्रतिज्ञायाम्ये ज्ञापकसमर्थनमयुक्तमित्यत आह—**विशेषेति** । 'टकः कित्त्वं ज्ञापकम् । यं विधिं प्रति' इत्यादिविशेषप्रतिपादनायेत्यर्थः ॥

( प्रथमप्रयोजनबाधकज्ञापकान्तरभाष्यम् )

**यत्तर्हि "गापोष्टक्" ( ३।२।८ ) इत्यनन्यार्थं ककारमनुबन्धं करोति ॥**

( प्रदीपः ) **केचिदाहुः**—टकः कित्त्वेन ज्ञापकेनाकारनिवृत्त्यर्थत्वे निराकृते 'यदप्युच्यते'इति ज्ञापकाक्षेपो ग्रन्थच्छायां न पुष्णाति, तस्मादार्थेन क्रमेण सर्वज्ञापकभङ्गोपन्यासं कृत्वा यथासंभवं ज्ञापकसमर्थनं कर्तव्यम् ॥

( उद्योतः ) शङ्कते—**केचिदिति** । 'यदप्युच्यते'इति समुच्चयार्थापिशब्देनेति शेषः ॥ **आर्थेन**=सामर्थ्यप्राप्तेन ॥ **भङ्गेति** । भङ्गसदृश इति भावः ॥

( द्वितीयप्रयोजनबाधकसामर्थ्यदूषकभाष्यम् )

**यदप्युच्यते-उपदेशसामर्थ्यात्संध्यक्षरस्य गुणो न भवतीति ॥ यदि—यद्यत्संध्यक्षरस्य प्राप्नोति, तत्तदुपदेशसामर्थ्याद्बाध्यते, आयादयोऽपि तर्हि न प्राप्नुवन्ति ॥**

( प्रदीपः ) **आयादयोऽपीति** । ऐकारोच्चारणस्याविकृतरूपश्रवणार्थत्वादिति भावः ॥

( सामर्थ्यदूषणनिराकरणभाष्यम् )

**नैष दोषः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । गुणं च प्रत्युपदेशोऽनर्थकः, आयादीनां पुनर्निमित्तमेव ॥**

( प्रदीपः ) **यं विधिमिति** । आयादेशस्य ह्यैकार एव निमित्तमित्यायादेशो न बाध्यते । न हि ग्लायित्येवं पाठः शक्यः कर्तुम्, त्वया ग्लायत इत्यादिरूपासिद्धिप्रसङ्गात् । **न ध्याख्येति** निपातनादात्वं गुणवन्न बाधिष्यते ॥

( उद्योतः ) **ग्लायत इति** । **आदिना** जग्लावित्यादि ॥ नन्वेवमात्वमपि बाध्येत । न हि तस्य ऐकारो निमित्तं, 'ग्ले' इति पाठेऽपि सुकरत्वादत आह—**न ध्याख्येति** । 'ध्या' इति कृतात्वनिर्देशेनैकारोच्चारणस्यात्वाबाधकत्वज्ञापनादिति भावः ॥ न चास्य सौत्रत्वम् । बाधकत्वमङ्गीकृत्य सौत्रत्वकल्पनापेक्षयाऽबाधकत्वज्ञापनस्य लघुत्वादित्याहुः ॥ न च रैशब्दादिभ्य आचारक्विपि रायतीत्यादौ सन्ध्यक्षरस्य गुणः स्यादिति वाच्यम् । एजन्तेभ्य आचारक्विबभाव एतद्भाष्यप्रामाण्यात्—इत्यदोषात् ॥ **गुणवदिति** । वैधर्म्ये दृष्टान्तः ॥

---

१ **सूत्रारम्भवादी** उक्तान्प्रत्याख्यानोपायान्दूषयितुं प्रतिजानीते—**नैतानि सन्तीति** ॥ आद्यान्त्ययोः साफल्येनान्यत्वात्, मध्यमस्यातिप्रसक्तत्वाच्चेति भावः ॥ छाया ॥

२ **उत्तरार्थमिति** । 'तदयुक्तम् । यतः' इत्यादिः ॥ छाया ॥

३ ननु सूत्रनिबन्धनज्ञापकव्यवहारस्योपदेशसामर्थ्येऽभावेन ज्ञापकाज्ञापकसमुदाये ज्ञापकशब्दस्याप्रवृत्त्या कथं बहुवचनमत आह—**छत्रीति** ॥ छाया ॥ एकसार्थवाहित्वेन छत्र्यच्छत्रिसमुदाये छत्रिणो यान्तीति प्रयोगवद्बहुवचनमिति भावः ॥

४ एवमुक्तज्ञापके निराकृते ज्ञापकान्तरमाह—**यत्तर्हीति** । तज्ज्ञापकमित्यग्रे शेषः । अत्राकारलोप एव तात्पर्यमिति सूचयितुम**नन्यार्थमिति** । अग्रे प्रत्ययान्तरकरणात्तत्र चानिकां गुणभाजामभावादकारस्य तु विशेषाभावादिति भावः ॥ छाया ॥

५ **न पुष्णातीति** । ज्ञापकत्वनिरासोत्तरं ज्ञापकान्तरनिरासश्चेत्तत्समुच्चायकोऽपिशब्दो घटेत । न च प्रकृतेऽस्ति सः, मध्ये टकः कित्वस्य ज्ञापकत्वोपन्यासात् । किंच ज्ञापकस्थापनोत्तरं ज्ञापकान्तरस्थापनमेव युक्तं न तु तत्खण्डनम्, क्रमदोषात् । तथा च सामान्यप्रतिज्ञानुसारेण **'पनुदोः'**— इत्यग्रे **'यदप्युच्यते उप'**— इत्यादि **'न प्राप्नुवन्ति'** इत्यन्तं **'यदप्युच्यते जनेः'**— इत्यादि **'ओकारः प्राप्नोति'** इत्यन्तं च ग्रन्थं समाप्य ततो **'यत्तर्हि'** इत्यादि **'करोति'** इत्यन्तं **'नैष'** इत्यादि **'निमित्तमेव'** इत्यन्तं च ग्रन्थं लिखित्वा **'तस्मादिग्ग्रहणं कर्तव्यम्'** इत्युचितमिति भावः ॥ परिहरति—**तस्मादिति** ॥ अत्र **केचिदित्यनेनारुचिः** सूचिता । तद्बीजं तु—तथाकरणे **'यत्तर्हि'** इत्यादिफक्किकात्रयस्यासंगत्यापत्तिः, तत्स्थाने फक्किकान्तरकल्पने स एव दोष इति । तस्माद्यथाश्रुतमेव भाष्यं युक्तम् । मध्य एव ज्ञापकान्तरकथने सामर्थ्यसमर्थने च बाधकाभावात् । किं च—**'नैतानि'** इति सर्वज्ञापकखण्डनस्य महाक्रमात् । अवान्तरखण्डनप्रक्रमस्य टकः कित्त्वेन ज्ञापकेन विच्छेदेऽपि महाप्रक्रमस्याविच्छेदात् । तदावेशात्तेन विच्छेदमनालोच्य तथोक्तिरिति ॥ छाया ॥

६ 'भङ्गस्योपन्यासं' इति ज. पाठः ॥

७ अनुपपत्तिं परिहरति—**नैष दोष इति** ॥ छाया ॥

८ **सुकरेति** । न चात्वं निरवकाशम्, 'दो षो' इत्यादौ सावकाशत्वात् । न च तत्रापि तत्सामर्थ्यादात्वं न, धतीत्यादौ तस्य लोपार्थत्वात् । न चैवम् 'आदोतः' इत्येव वाच्यं किमेच्ग्रहणेनेति वाच्यम् । धेट्प्रभृत्यर्थमेच्ग्रहणस्यावश्यकत्वात् । न च तत्रोपदेशसामर्थ्यम्, धयतीत्याद्यर्थत्वादिति भावः ॥ छाया ॥

९ **लघुत्वादिति** । किं चानुमानिकवचनकल्पने मानाभावात् । मम तु ऐजुपदेशसामर्थ्यप्राप्तात्वबाधकवचनस्याभावमात्रकल्पनमिति न किंचिदपूर्वं कल्प्यमिति दिगित्यपि बोध्यम् ॥ **आहुरित्यरुचिबीजं** तु एज्ग्रहणसामर्थ्यादेव बाधाभावे सिद्धे इदमयुक्तमेवेति ॥ छाया ॥

( तृतीयप्रयोजनबाधकज्ञापकनिराकरणभाष्यम )

**य[1]दप्युच्यते—जनेर्डवचनं ज्ञापकम्—न व्यञ्जनस्य गुणो भवतीति ॥ सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति । न च जनेर्गुणेन सिद्ध्यति । कुतो ह्येतत्-जनेर्गुण उच्यमानोऽकारो भवति, न पुनरेकारो वा स्यादोकारो वेति ?**

( ज्ञापकसाधकभाष्यम् )

**आ[2]न्तर्यतोऽर्धमात्रि[3]कस्य व्यञ्जनस्य मात्रिकोऽकारो भविष्यति ॥**

( ज्ञापकबाधकभाष्यम् )

**एवमप्यनुनासिकः प्राप्नोति ॥**

( ज्ञापकसाधकभाष्यम् )

**पररूपेण शुद्धो भविष्यति ॥**

( प्रदीपः ) **पररूपेणेति** । रूपग्रहणस्येदमेव प्रयोजनम्—यादृक् पर[4]स्य रूपं तादृगेव यथा स्यादिति ॥

( उद्द्योतः ) ननु पररूपेऽपि गुणानामभेदकतया कदाचित्सानुनासिकोऽपि स्यादत आह—**रूपग्रहणस्येति** ॥ **परे** तु अत्र पररूपशब्देन परशब्देन वा यदुपस्थितं रूपं प्रयोगस्थं तस्य ग्रहणम्, स्थाने जायमानः किंगुणक इत्याकाङ्क्षायाम**न्तरतम**परिभाषयोभयगुणकः । प्रकृते चोभयान्तरतमासंभवात् परशब्देन यद्गुणस्योपस्थितिस्तद्गुणक एव भविष्यतीति भाष्याशयात् 'रूपग्रहणस्य'इत्यादि **चिन्त्यम्** । गुणानां श[5]ब्दत्वादिवत् शब्दरूपत्वाभावेन व्यावृत्त्यसंभवश्च रूपग्रहणेनेत्याहुः ॥

( ज्ञापकबाधकभाष्यम् )

**एवं तर्हि गमेरप्ययं डो वक्तव्यः । गमेश्च गुण उच्यमान आन्तर्यत ओकारः प्राप्नोति ॥ त[6]स्मादिग्ग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) **गमेरप्ययमिति । सप्तम्यां जनेर्डः** ( ३।२।९७ ) इत्यतो**ऽन्येष्वपि दृश्यते** ( १०१ ) इत्यत्र डोऽनुवर्तमानो गमेरपि विधीयत इत्यज्ञापकं डित्त्वमिति व्यञ्जननिवृत्त्यर्थं सूत्रं स्थितम् ॥

( **उद्द्योतः** ) ननु **गमेरप्ययं** ड इति भाष्यमनुपपन्नं, 'गमश्च अन्तात्यन्ताध्वदूरपार–' इति सूत्रे पठितेनान्यत्रापि दृश्यत इति वार्तिकेन 'नगः–अगः' इत्यादौ डस्य सत्त्वादत आह—**सप्तम्यामिति** । **सप्तम्यां** जनेरित्युत्तरं पठितेऽन्येष्वपि दृश्यत इति सूत्रे दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वेन तेनैव प्रकृत्यन्तरादपि डे सिद्धेऽन्तात्यन्तेति प्रकरणस्थं वा[7]र्तिकं न कार्यमिति भावः ॥ भाष्ये—**आन्तर्यत ओकार इति** । स्थानत आन्तर्यादिति भावः ॥ ननु **तनोतेर्डडः सन्वच्चे**ति डित्करणान्न व्यञ्जनस्य गुण इति चेन्न । उणादीनामव्युत्पत्तिपक्षाङ्गीकारात् ॥ **न चैवमपि** स्थानप्रयत्नान्तरतमेषु इकारादिषु चरितार्थानि गुणादिशास्त्राणि व्यञ्जने न प्रवर्तन्त इति **वाच्यम्** । ईशादौ शकारे तथाप्यतिप्रसङ्गात् । सूत्रमते स्थानप्रयत्नैक्यादिति भाष्याशयः । 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्य भाष्ये प्रत्याख्यानेनास्या युक्तेरसंभवदुक्तिकत्वाच्च ॥

( इति सूत्रप्रयोजननिरूपणाधिकरणम् ॥ )

---

( अथ गुणवृद्धिशब्दानुवृत्त्यधिकरणम् )

( आक्षेपभाष्यम् )

**य[8]दीग्ग्रहणं क्रियते, द्यौः-पन्थाः-सः-इममिति, एतेऽपीकः प्राप्नुवन्ति ॥**

( उद्द्योतः ) भाष्ये—**एतेऽपीति** । औकारादयः ॥ एषूदाहरणेष्विकः प्राप्नुवन्तीत्यन्वयः ॥ 'सः' इत्यत्र तु न स्यादेवेति भावः ॥ त्य[9]**दादीनाम** इत्यत्र त्यदादीनामिति तु **तदोः सः सा**वित्युत्तरार्थं स्यात्, संज्ञोपसर्जनव्यावृत्त्यर्थं च स्यादिति बोध्यम् ॥

( ७५ सिद्धान्तसमाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सं[10]ज्ञया विधाने नियमः ॥ * ॥

( भाष्यम् )

**संज्ञया ये विधीयन्ते तेषु नियमः ॥**

( प्रदीपः ) **संज्ञयेति** । गुणवृद्ध्यनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्धत्वाद् द्वितीयं गुणवृद्धिग्रहणमाश्रितगुणवृद्धिशब्दव्यापारार्थं विज्ञायते । तेन गुण इत्येवं यो गुणः, वृद्धिरित्येवं या वृद्धिरिति विज्ञायते । **अथवा** गुणवृद्धिमात्रग्रहणे गुणवृद्ध्यधिकारादेव सिद्धे पुनर्गुणवृद्धिग्रहणं गुणवृद्धिशब्दव्यापाराश्रयणार्थं विज्ञायते ॥

---

१ व्यञ्जनस्य तदभावार्थं सूत्रं स्थापयितुमनुवदति—**यदप्युच्यत इति** ॥ छाया ॥

२ योगविभागखण्डकोऽसिद्धिं परिहरति—**आन्तर्यत इति** । अत्यन्ताधिककालापेक्षया स्वल्पाधिककाल एवान्तरतमो भवतीति भावः ॥ छाया ॥

३ 'कस्य मात्रिको भवि–' इति क० पाठः । 'कस्य व्यञ्जनस्य मात्रिको भवि–' इति ख० पाठः ॥

४ 'पररूपं' इति क० ख० पाठः ॥

५ **शब्दत्वेति** । यथा शब्दत्वं न शब्दस्य रूपं तथा गुणोऽपि न शब्दस्य रूपमिति रूपग्रहणेन व्यावृत्त्यसम्भव इत्याशयः ॥

६ उपसंहरति—**तस्मादिति** । व्यञ्जननिवृत्तेरन्यथा दुःशकत्वादित्यर्थः ॥ छाया ॥

७ **वार्तिकम्**—'अन्यत्रापि दृश्यते' इत्येतत् ॥

८ **'तस्मादिग्ग्रहणं कर्तव्यम्'** इत्यनेन सूत्रस्य कर्तव्यतोपदिश्यते, तथाच गुणवृद्धी इक एव भवत इति सूत्रार्थः स्यात् । तेन द्यौरित्यादौ दोष इत्याशयः ॥

९ ननु 'त्यदादीनामः' इत्यत्र 'इक्'पदोपस्थितौ 'इदम्'शब्दस्यैवात्वप्रसङ्ग इति त्यदादिग्रहणं व्यर्थमत आह—**त्यदादीनाम इति** ॥

१० **संज्ञयेति** । सामर्थ्याद्गुणवृद्धिसंज्ञयोरेव ग्रहणम् । सामान्यविवक्षयैकवचनम् । विधात्रैकैकोक्तेर्वा । करणे तृतीया । विधानशब्दे कर्मणि ल्युट् बाहुलकात् । विषयसप्तमी । **नियमः**-परिभाषारूपः । नियामकोऽयं योगः ॥ छाया ॥

(उद्योतः) आश्रितेति । आश्रितो गुणवृद्धिशब्दव्यापारः= उच्चारणं येषु आदैक्षु विधीयमानेषु तदर्थमित्यर्थः ॥ तेनेति । 'इत्येवं' इत्यध्याहृत्य स्वरूपपदार्थकेनान्यतरेण विशेषणादीदृशार्थलाभ इति भावः ॥ अत एव संबन्धानुवृत्तिप्रदर्शनपरभाष्ये गुणवृद्धी इत्युच्चार्य गुणवृद्धिग्रहणमनुवर्तत इति उक्तम् ॥ उपक्रमस्थगुणवृद्धिग्रहण-सामर्थ्यादित्येतद्भाष्यस्वारस्यादाह—अथवेति । पुनरुपादानसामर्थ्यादिहत्यं गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षणिकमिति भावः ॥

(आक्षेपभाष्यम्)

**किं वक्तव्यमेतत् ?**

(समाधानभाष्यम्)

**न हि,**

**कथमनुच्यमानं गंस्यते ?**

**गुणवृद्धिग्रहणसामर्थ्यात् ॥**

(सामर्थ्याक्षेपभाष्यम्)

**कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम् ?**

(समाधानभाष्यम्)

**प्रकृतं गुणवृद्धिग्रहणमनुवर्तते ॥**

**क्व प्रकृतम् ?**

**"वृद्धिरादैच्-अदेङ्गुणः" इति ॥**

(आक्षेपभाष्यम्)

**यदि तदनुवर्तते, 'अदेङ्गुणो वृद्धिश्च' इत्यदेङां वृद्धिसंज्ञाऽपि प्राप्नोति ॥**

(प्रदीपः) अदेङामिति । पूर्वसूत्रे संज्ञिसंबन्धायोपात्तो यादृशो वृद्धिशब्दस्तादृश एवोत्तरत्रानुवर्तते इति 'अदेङां' इत्युक्तम् । तेनैतन्न चोदनीयम्—वृद्धिशब्दोऽनुवर्तमान आदैचः प्रत्याययतीत्यादैचां गुणसंज्ञा प्राप्नोति—इति ॥

(उद्योतः) यादृश इति । स्वरूपपदार्थक इत्यर्थः ॥ नन्वेवं सति उत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम् । अनुवर्तमानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाभावादिति चेत्, न । आगन्तूनामन्ते निवेश इति न्यायेनादेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रे स्वरूपपरत्वं तस्य, उत्तरत्र तु योग्यतयाऽर्थपरत्वम् । इक इति सूत्रेऽपि न धातुलोप इत्यादिसाहचर्येणार्थपरत्वं, 'इकः' इति षष्ठीनिर्देशाच्चेति भाष्याशयात् ॥

(१ समाधानभाष्यम्)

**संबन्धमनुवर्तिष्यते—"वृद्धिरादैच्" "अदेङ्गुणः" वृद्धिरादैच् ततः—"इको गुणवृद्धी" इति । गुणवृद्धिग्रहणमनुवर्तते, आदैजदेङ्ग्रहणं निवृत्तम् ॥**

(प्रदीपः) संबन्धमिति । संबध्यत इति संबन्धं, कर्मणि घञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः । आदैज्ग्रहणसंबन्धं वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तते, तेनादेङ्भिर्न संबध्यते । इह त्वनुवृत्तमादैचो जहाति । कान्तारोत्तारणाय सार्थस्येव त्यागोपादाने ॥

(उद्योतः) नपुंसकस्येति । घञजपः पुंसीति तु प्रायिकमिति भावः ॥ यत्तु भावविषयमेवैतदिति । तन्न । 'मांसं भक्षोऽस्य' इति कर्मण्यणिति सूत्रस्थभाष्यप्रयोगविरोधात् ॥ तेनेति । अत्रादैजित्यनुवृत्तिर्न स्वकार्याय, किं तु वृद्धिशब्दस्यान्यसंबन्धनिवृत्तये-इति भावः ॥ भाष्ये - वृद्धिरादैजदेङ्गुण इति सूत्रक्रमनिर्देशः । पुनर्वृद्धिरादैजित्यभिधानमदेङित्यत्र संबन्धानुवृत्तिं दर्शयितुम् ॥ इको गुणवृद्धी इत्युक्तिस्तु यथान्यासाभिप्रायेण ॥ आदैजदेङ्ग्रहणमिति । स्वरितत्वाप्रतिज्ञानेनादेङ्ग्रहणवदादैजित्यपि निवृत्तमित्यर्थः ॥ क्वचित्तु आदैज्ग्रहणं निवृत्तमित्येव पाठः ॥

(२ समाधानभाष्यम्)

**अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥**

---

१ यद्यप्येवमुपपादितम्, तथापीदं चिन्त्यम् । अनुवर्तमानयोस्तयोरसमस्तयोरेकवचनान्तयोः समस्तद्विवचनान्तपरपदार्थाविभागापन्नगुणभूतवर्तिपदार्थतया तद्विशेषणत्वासंभवात् । प्रत्येकं समुदायविशेषणत्वं तु बाधितमेव । न हि संभवति देवदत्तयज्ञदत्तौ गदी कुण्डलीति । सामानाधिकरण्येनान्वये समानविभक्तिकत्वस्येव समानवचनत्वस्यापि तन्त्रत्वादित्यभिप्रेत्याह—उपक्रमेति ॥ तत इत्यादिः । अन्यथा सामर्थ्यादिरयुक्तत्यसंङ्गतिः स्पष्टैव ॥ छाया ॥

२ उक्ताशयानभिज्ञ आह—किमिति । संज्ञयेति विशेषणं किमपूर्वं कर्तव्यमित्यर्थः ॥ छाया ॥

३ अधिकारेण विधेयसिद्ध्या नोक्तदोष इत्याह—प्रकृतमिति ॥ छाया ॥

४ ननु समस्तद्विवचनान्तस्याप्रकृतत्वात् 'प्रकृतम्' इत्ययुक्तमित्याह—क्वेति ॥ छाया ॥

५ असमस्तमेव सूत्रद्वयादनुवर्तत इत्याह—वृद्धिरिति ॥ छाया ॥

६ 'संज्ञा प्राप्नोति' इति अपिशब्दरहितः प. पाठः ॥

७ ननु शब्दाधिकारे संज्ञासूत्रतोऽन्यत्र संज्ञाशब्दानां संज्ञिपरत्वमिति नियमेन 'आदैचां गुणसंज्ञा प्राप्नोति' इति वक्तुमुचितमत आह—पूर्वसूत्र इति ॥ अर्थाधिकार इति भावः ॥ छाया ॥ 'पूर्वसूत्रे संज्ञासंज्ञि संब—' इति झ. पाठः ॥

८ नन्वेवं सति-पूर्वसूत्राभ्यामनुवृत्तयोर्गुणवृद्धिशब्दयोः स्वरूपपरत्वे सतीत्यर्थः ॥

९ अदेङ्गुण इति सूत्रेऽनुवर्तमानस्य वृद्धिपदस्य गुणपदसाहचर्यमुपपादयति—आगन्तूनामिति ॥

१० तत्-गुणपदेत्यर्थः ॥ छाया ॥

११ उत्तरत्र तु-न धातुलोपादौ तु ॥ छाया ॥

१२ गुणवृद्धिग्रहणसामर्थ्यादिति भाष्योक्तं सामर्थ्यं सम्पादयति—इक इतीति ॥ इतोऽप्यनुवर्तमानस्य योग्यतयैवार्थपरत्वमिति भावः ॥

१३ संबन्धमिति । 'नैष दोषः । यतः'—इत्यादिः ॥ छाया ॥

१४ 'वृद्धिग्रहणमनुवर्तते आदैज्ग्रहणं निवृत्तं' इति प. पाठः ॥

१५ 'घञजपाः पुंसि' इति ज. ग. पाठः ॥

( प्रदीपः ) अथवेति । वृद्धिशब्दस्येहाकाङ्क्षावशादुपस्थानं, न तु 'अदेङ् गुणः' इत्यत्र ॥

( उद्योतः ) ननु मण्डूकस्य चेतनत्वात्तथा गतिसंभवेऽपि शब्दस्य कथं सेत्यत आह—वृद्धिशब्दस्येति । स्वरितत्वासङ्गादनुवर्तमानस्यापीति शेषः ॥ इहेति । इक इति सूत्र इत्यर्थः । अदेङित्यत्र तु न संबन्धः, गुणसंज्ञासंबन्धेनादेङां निराकाङ्क्षत्वादिति बोध्यम् ॥

( ३ एकदेशिसमाधानभाष्यम् )

**अथवैकयोगः करिष्यते-"वृद्धिरादैजदेङ्गुणः" ततः-"इको गुणवृद्धी" इति । न चैकयोगेऽनुवृत्तिर्भवति ॥**

( प्रदीपः ) अथवैकयोग इति । एको भवतिरध्याहियते । वृद्धिरादैजदेङ्गुणो भवति-इत्येकवाक्यत्वं संपद्यते । यद्यपि प्रतिपत्तिकाले भवतिक्रिया भिद्यते, तथाप्येककाला[3] प्रतिपत्तिरित्यादैच्संबद्धा वृद्धिसंज्ञाऽदेङ्संबद्धा गुणसंज्ञेति नास्ति वृद्धिसंज्ञया अदेङ्भिः संबन्धः ॥

( उद्योतः ) नन्वेकयोगत्वं नैकार्थत्वं, भिन्नविषयसंज्ञाद्वयविधानात्। नापि निरन्तरपाठः, तस्येदानीमपि सत्त्वेन करिष्यत इत्यस्यासङ्गतेः। णेरणावित्यादौ एकयोगेऽप्यनुवृत्तिदर्शनाच्च अत आह—एक इति ॥ प्रतिपत्तिकाले=लक्ष्यसंस्कारकवाक्योपप्लवकाले ॥ एककालेति । आदैच् वृद्धिसंज्ञः, अदेङ् गुणसंज्ञो भवतीति संग्राहकवाक्यार्थबोध एककाल इति भावः ॥ समूहालम्बनात्मक एको वाक्यार्थबोध इति तात्पर्यम् ॥ यद्वा—आदैच् वृद्धिसंज्ञोऽदेङ्गुणसंज्ञश्च भवत इत्येको वाक्यार्थबोध इति तात्पर्यम् । प्रतिपत्तिः=वाक्यार्थबोधः । णेरणावित्यादाववान्तरवाक्यार्थभेदान्न दोषः ॥ केचित्तु एककाला प्रतिपत्तिर्भवतु, तावता स्वरितत्वगुणप्राप्तवृद्धिपदसंबन्धाभावः कुत इति चिन्त्यम् । न च स्वविषयवाक्यजबोधानन्तरं निराकाङ्क्षतयाऽन्यत्रान्वयाप्रसक्तौ हि तत्प्राप्तये स्वरितासङ्गो न त्वेतदेकयोग इति वाच्यम् । व्यवधाननिबन्धनायामनेकसंबन्धाप्राप्तावनेकसंबन्धाय स्वरितत्वासङ्ग इत्यस्यापि वक्तुं शक्यत्वात् ॥ तस्मादयमत्र भाष्यार्थः—तदधीते तद्वेदेत्यत्र द्विस्तद्ग्रहणादेकयोगेऽनुवृत्त्यभावः—इति । स्पष्टं चेदं तदस्मिन्नस्तीति सूत्रे भाष्ये । एकयोगत्वं च द्वयोः संहितापाठ एव ॥ वस्तुत एकयोगेऽप्यनुवृत्तिर्भवति, तदस्यास्त्यस्मिन्निति सूत्रे द्विस्तद्ग्रहणाभावात्, तदधीत इति सूत्रे तु बालानां सुखबोधाय द्विस्तद्ग्रहणमित्यप्युक्तं तत्रैव । अतोऽत्र भाष्येऽयं समाधिरेकदेशिन इत्याहुः ॥

( ४ समाधानभाष्यम् )

अथवा—

*** अन्यवचनाच्चकाराकरणाच्च प्रकृतापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति * ॥**

**अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति । यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ॥**

( प्रदीपः ) अथवान्यवचनादिति । यथा कप्रत्ययेनाण् बाध्यते, असंदिग्धत्वादनवकाशत्वात्तात्पर्याच्च कविधेः । अणस्तु विपर्ययात् । एवमदेङ्गुण इत्यत्र वृद्धिग्रहणमनुवृत्तं संसंदिह्यते—किमुत्तरार्था वेहानुवृत्तिरथेहार्थापीति । सावकाशा च वृद्धिसंज्ञा, तात्पर्यं च नास्ति । गुणसंज्ञा तु तात्पर्यादसंदेहान्निरवकाशत्वाच्च वृद्धिसंज्ञासंबन्धमदेङां बाधते । प्रत्ययसंज्ञा तु संज्ञिविशेषणासंयुक्ताऽधिकारेणैव विधीयमाना कृत्यादिसंज्ञाविषयेऽपि प्रवर्तते ॥

( उद्योतः ) ननु वृद्धिगुणसंज्ञयोः सामान्यविशेषत्वाभावात्कथमुत्सर्गापवादसाम्यमत आह—यथेति । आत इत्युपादानादेव तद्विषये कस्यासंदिग्धत्वम् । अत एव तदतिरिक्तावकाशविरहः, तदुद्देशेनैव प्रवृत्तिरूपं तात्पर्यं च ॥ ननु गुणसंज्ञया वृद्धिसंज्ञावत् कृत्यादिसंज्ञयाऽपि प्रत्ययसंज्ञा बाध्येतेत्यत आह—प्रत्ययेति । न तव्याद्याकाङ्क्षया प्रत्ययसंज्ञायाः संबन्धः, येन संनिहितकृत्यादि॰

---

१ गुणेति । विधेयगुणरूपसंज्ञाश्रवणेन तत्संबन्धेनेत्यर्थः ॥ तदुक्तम्—

"यस्य येनाभिसंबन्धो दूरस्थस्यापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्" ॥ इति छाया ॥

२ 'गुण इति' इति पाठः ॥ छाया ॥

३ एककालेति । यदैवादैचां वृद्धिसंज्ञा प्रतीयते तदैवादेङां गुणसंज्ञेति समूहालम्बनवत्प्रतीतिक्रमः, संज्ञिविशेषसंबद्धसंज्ञाद्वयस्याध्याहृतभवतिक्रियया युगपत्तन्त्रेणान्वय इति भावः ॥ छाया ॥

४ दानीमपि । भिन्नसूत्रसंहितापाठकालेऽपि ॥ छाया ॥

५ नन्वेवं तथा बोधो न दृष्टचरोऽत आह—यद्वेति । द्विवचनान्तो भवतिरध्याहरिष्यते । तत्र समुच्चयस्तु 'गामश्वम्' इतिवदिति भावः ॥ छाया ॥

६ कैयटोक्तभाष्याशयं खण्डयति—केचित्त्विति । भाष्यतत्त्वविद इत्यर्थः ॥ छाया ॥

७ स्वविषयत्वं बोधेऽन्वेति ॥ छाया ॥

८ स्ववाक्यं व्याचष्टे—अन्यस्या इति । 'कृञः श च' इत्यादावन्यवचनं चश्चेत्युभयमस्तीति तत्र तेन प्रकृतक्तिन्नादेः समुच्चय उचितः, इह तु चाभावाद् 'आतोऽनुप'—इत्यत्रेव स नेति भावः ॥छाया॥

९ विपर्ययादिति । अणो विपर्ययान्न कप्रत्ययबाधकत्वमित्यर्थः । विपर्ययश्चाणः—सन्दिग्धत्वमादन्तेषु, सावकाशत्वमादन्तभिन्नेषु-इति ॥

१० सदिति । सदपीत्यर्थः ॥ छाया ॥ क. ख. झ. पुस्तकेषु 'तत्संदि' इति पाठः ।

११ नास्तीति । अदेङ्मात्रोद्देशेनाप्रवृत्तत्वादिति भावः ॥ छाया ॥

१२ स्यासंदिग्धत्वमिति । आदन्तो धातुः कप्रत्ययविषयो न वेति संदेहाविषयत्वमित्यर्थः ॥ छाया ॥

१३ संज्ञयापीति । अपिर्व्युत्क्रमे । संज्ञया प्रत्ययसंज्ञापीत्यर्थः । संनिहितकृदादिसंज्ञाभिस्तव्यादीनां निराकाङ्क्षत्वादिति भावः ॥ छाया ॥

संज्ञया निराकाङ्क्षत्वान्न प्रत्ययसंज्ञया संबन्धः स्यात् । किं तु संज्ञाऽऽकाङ्क्षया ॥ सा हि स्वस्य बहुविषयत्वलाभाय कतिपयानन्तरविषयलाभेऽपि पुनः पुनर्विषयान्तरमाकाङ्क्षते । बहुविषयत्वं चास्याः[1] संज्ञिविशेषासंबन्धेन धिकारकरणादवसीयत इति भावः ॥ प्रकृते तु न तथेति बोध्यम् ॥

( ५ समाधानभाष्यम् )

**अथवा वक्ष्यत्येतत्[2]—"अनुवर्तन्ते च नाम विधयः, न चानुवर्तनादेव भवन्ति । किं तर्हि? यत्नाद्भवन्ति" इति ॥**

( प्रदीपः ) **अथवेति** । 'विभाषा[3] तिलमाषोमा–' इत्यत्र ह्युमाभङ्गयोरधान्यत्वात्खञोऽप्राप्तौ चोदितायां खञ्ग्रहणस्यानुवृत्तिराश्रिता, अनुवर्तमानश्च खञ् यत्नाभावात् व्रीहिशाल्यादिभिर्न संबध्यते, अपि तु विभाषाश्रुत्या[4] यत्नेन तिलादिभिरेव संबध्यते। तथेहापि वृद्धिग्रहण**मदेङ्गुण** इत्यत्रानुवर्तमानमपि यत्नाभावादेङ्भिर्न संबध्यते । इह[5] पुनर्गुणवृद्धिग्रहणं यत्नो भवति ॥

( उद्द्योतः ) **खञोऽप्राप्ताविति** । यत्ना मुक्ते–इति शेषः । **मण्डूकगतयोऽधिकारा**[6] इत्यस्यैव 'स्वरितलिङ्गेनानुवर्तमानं यत्राकाङ्क्षा तत्रैव संबध्यते' इति विशेषमभिधातुमयं पक्षः । स[7] च संबन्धाय तत्र विभाषाग्रहणरूपं यत्नविशेषं कुर्वतः सूत्रकृतोऽप्यभिमतः। अस्य[8] विशेषस्य प्रागकथनं तु एतद्विशेषद्वारा पुनस्तत्परामर्शेन तत्रैव परिहारे मुख्यताबोधनायेति बोध्यम् ॥ **इह त्विति** । अकर्तव्यत्व[9]विशिष्टं पुनर्गुणवृद्धिग्रहणं यत्न इत्यर्थः । अनुवृत्तौ हि तदकर्तव्यं भवतीत्याहुः ॥

( ६ समाधानभाष्यम् )

**अथवा—उभयं[10] निवृत्तम् । तदपेक्षिष्यामहे ॥**

( प्रदीपः ) **अथवेति** । अपेक्षालक्षणं लौकिकमधिकारमाश्रयति । समुदायस्य चापेक्षायां नास्त्येतत्–**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति** गुणस्यैवापेक्षा युक्ता–इति, समुदायस्य[11] भेदाभावात् ॥

( उद्द्योतः ) भाष्ये—**उभयं निवृत्तमिति** । स्वरित[12]लिङ्गाना[13]सङ्गेनाननुवृत्तिरेव निवृत्तिरित्यर्थः ॥ **अपेक्षेति** । 'इकः' इत्येतावन्मात्रस्येतराकाङ्क्षत्वात् । समुदायापेक्षायां च लक्ष्यानुसार एव बीजम् । **अनन्तरस्येति** न्यायेन गुणस्यैवापेक्षा युक्तेत्येतन्नास्ति–इत्यन्वयः । समुदायत्वं[14] च युगपद्बुद्धौ संनिधानात् क्रमेणासंनिधानाच्चेति बोध्यम् ॥

( इति गुणवृद्धिशब्दानुवृत्त्यधिकरणम् )

---

१ **चास्या इति** । प्रक्रान्तप्रत्ययसंज्ञाया इत्यर्थः ॥ छाया ॥

२ **वक्ष्यत्येतदिति** । गोनर्दीय इति शेषः ॥ **च** एवार्थः ॥ **नाम** निश्चये **विधयो** विधीयमानाः ॥ **न च** न हि ॥ छाया ॥

३ कुत्र वक्ष्यतीत्यत आह—**विभाषेति** ॥ छाया ॥

४ **श्रुत्या यत्नेनेति** । तद्रूपयत्नेनेत्यर्थः । स तत्समुच्चायको न तु विकल्पार्थः । वाक्यस्य महाविभाषयैव सिद्धेः । यद्यप्यन्यांशे तस्य विकल्पार्थत्वमेव तथापि तिलादिभिः प्रत्येकं तत्संबन्धादुमाद्यंशे तत्संबन्धस्तदर्थ एव । न च तत्र मानाभावः, तथा सति पूर्वत्रैव तयोः पाठौचित्यात् । तस्मात्तदंशे तथैव । अनुवर्तमानमपि वृद्धिग्रहणमदेङ्गुण इत्यत्रादेङ्भिर्न संबध्यते इत्यन्वयः ॥ **चकाराकरणाच्चेति** समाधिनाऽयं गतार्थस्तु न, तत्र विशेषरूपेणोक्तम्, अत्र तु सामान्यरूपेणेति भेदात् । यद्वाऽधिकारेणोपस्थिताया अपि वृद्धिसंज्ञाया अङ्गपदसंज्ञावत्समुच्चयो न, चाकरणादिति पूर्वमुक्तम् । इह तु तस्या उपस्थितिरेव नेति विशेष उच्यते ॥ छाया ॥

५ 'इह तु पुनर्' इति ख. पाठः ॥

६ द्वितीयपक्षेण पौनरुक्त्यं परिहरति—**मण्डूकेति** ॥ छाया ॥

७ **स च**–विशेषश्च ॥ **तत्रेति** । मध्यमणिन्यायेनान्वेति ॥ छाया ॥

८ नन्वयं तत्रैव कुतो नोक्तोऽत आह—**अस्येति** ॥ केचित्तु—तत्रासत्यामाकाङ्क्षायां संनिधिरेव नास्तीत्युक्तम् । अत्र तु संनिधौ सत्यसत्यपि वाऽऽकाङ्क्षाभावे संबन्धो नेति भेद इत्याहुः ॥ छाया ॥

९ ननु पुनर्गुणवृद्धिग्रहणस्य न यत्नत्वं तथा सति वैयर्थ्यापत्तेरत आह—**अकर्तव्येति** । हि–यतः । **तत्**–पुनर्गुणवृद्धिग्रहणम् ॥ छाया ॥

१० अत्र 'उभयं निवृत्तं' इत्यादि भाष्यस्यायमप्यर्थः—**उभयं**–आदैजदेङ्ग्रहणं निवृत्तम् । **तत्**—वृद्धिगुणग्रहणं स्वरितलिङ्गासङ्गादपेक्षिष्यामहे–अनुवर्तेत इत्याशयः । अथवा—**उभयं**–गुणवृद्धिग्रहणं निवृत्तं स्वरितलिङ्गानासङ्गादिति भावः, **तत् अपेक्षिष्यामहे**—'इकः' इति पदस्य सापेक्षत्वादाकृष्यत इत्यर्थः । अत्रानुवृत्तिविषये भाष्यकृता षट् पक्षाः समुपस्थापिताः । सम्बन्धमनुवर्तिष्यत इति प्रथमः, द्वितीयश्च–मण्डूकगतयोऽधिकाराः, तृतीयश्च–एकयोगः करिष्यते, चतुर्थश्चापवादपक्षः, पञ्चमः–– न चानुवर्तनाद्भवन्ति किं तु यत्नात्, षष्ठश्च-उभयं निवृत्तमिति । अधिकारश्च द्विविधः—शास्त्रीयो लौकिकश्च । अन्तिमो लौकिकोऽपेक्षालक्षणः । पञ्चमः पक्षो द्वितीयस्यैव प्रपञ्चः । तृतीयपक्षो ह्येकदेशिनः प्रथमसदृशः । शास्त्रीयेऽप्यधिकारेऽपेक्षालक्षणत्वमाश्रीयत एव ॥

११ निषेधे हेतुमाह—**समुदायेति** । तस्यैकापेक्षाविषयत्वादानन्तर्यस्य च भेदसापेक्षत्वादिति भावः ॥ छाया ॥

१२ नन्वनुवृत्तिवन्निवृत्तिरपि यत्नसाध्येति कथं कस्य च सा, किंचाप्रकृता साऽत आह—**स्वरितेति** । अनेन—**'उभयम्'** आदैजदेङ्ग्रहणं निवृत्तम् । 'तत् गुणवृद्धिग्रहणमपेक्षिष्यामहे' इति 'यदुभयं गुणवृद्धिग्रहणमनुवृत्तं तदपेक्षिष्यामहे' इति वा भाष्यार्थः सूचितः ॥ छाया ॥

१३ 'लिङ्गानां सङ्गेनानुवृत्ति' इति घ. पाठः । युक्तोऽयमपि पाठः, यतः 'अथवा मण्डूकगतयो' इत्यादिभिर्ये पक्षा भाष्ये समुपस्थापितास्तेषामयमर्थः—'प्रकृतं गुणवृद्धिग्रहणमनुवर्तते' इत्युपक्रमभाष्यस्यैतत्तात्पर्यमिति । अत्र च 'निवृत्तं'इत्यस्य उपक्रमोक्त'अनुवर्तते' इत्येतत्तात्पर्यपरत्वम् । तच्चानुवृत्तिनिवृत्त्युभयज्ञापनायापि प्रयत्नस्यावश्यकत्वेन 'आदैजदेङ्' पदयोः स्वरितत्वं निवृत्तिबोधकम्, गुणवृद्धिपदयोश्चानुवृत्तिबोधकमिति लिङ्गानां सङ्गेनादैजदेङ्पदयोर्निवृत्तिर्गुणवृद्धिपदयोश्चानुवृत्तिरिति 'अनुवर्तते' इत्यस्यार्थ इत्येवं प्रकारेण बोध्यते ॥

१४ ननु न समुदायः शब्दोपात्तोऽत आह—**समुदायत्वमिति** । तीक्ष्णबुद्धीनामिति भावः ॥ छाया ॥

( अथ परिभाषात्वसाधकाधिकरणम् )

( पक्षद्वयोपस्थापकभाष्यम् )

**किं पुनरयमलोऽन्त्यशेषः, आहोस्विदलोऽन्त्यापवादः ?**

**कथं चायं तच्छेषः स्यात्, कथं वा तदपवादः ?**

**यद्येकं वाक्यम्—तच्चेदं च, अलोऽन्त्यस्य विधयो भवन्ति-'इको गुणवृद्धी अलोऽन्त्यस्य' इति । ततोऽयं तच्छेषः ॥**

**अथ नानावाक्यम्, 'अलोऽन्त्यस्य विधयो भवन्ति','इको गुणवृद्धी-अन्त्यस्य चानन्त्यस्य च' इति । ततोऽयं तदपवादः ॥**

**( प्रदीपः ) किं पुनरिति ।** उभयथा संभवाद्दोषदर्शनाच्च **प्रश्नः** । तत्राङ्गस्य गुण इति षष्ठीनिर्देशाल्लिङ्गात् 'अलोन्त्यस्य' इत्युपतिष्ठते, गुणश्रुत्या तु 'इकः' इति । तत्र यदि पूर्वमिकाऽङ्गं विशेष्यते—इगन्ताङ्गस्य गुणो भवतीति, स च भवन्न**लोन्त्यस्ये**त्यन्त्यस्य भवति, तदा सोऽस्य शेषो भवति ॥ यदा त्वङ्गस्येति पूर्वमेवान्त्यमलं षष्ठी नीयते—अङ्गान्त्यस्य गुण इति पश्चादिकाऽन्त्योऽल् विशेष्यते, तदा तस्यायं विशेषणत्वाच्छेषो भवति ॥

अथ तु 'अङ्गस्य' इति गुणवृद्धिविधौ न स्थानषष्ठी, किं तर्हि? इगपेक्षयाऽवयवषष्ठी, तदा स्थानषष्ठ्यभावात् 'अलोऽन्त्यस्य' इत्यस्यानुपस्थानमिति तदपवादपक्षो भवति । अप्राप्यैनुमानमेव हि बाधः, वचनेन प्राप्तस्य बाधायोगात् । ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्येको गुणवृद्धी इत्यर्थः संपद्यते ॥ समुच्चयस्त्वसंभवान्नोपन्यस्तः । न हि युगपद्वौ षष्ठ्यर्थौ संभवतः—स्थानेयोगोऽवयवयोगश्च-इति ॥ विकल्पोऽपि न भवति, एकत्वात्षष्ठ्यर्थस्य । तस्मात्तच्छेषतदपवादपक्षावेवात्राशङ्कितौ ॥

**यद्येकमिति ।** अनेकयोगव्यवहितयोरपि एकस्मिन्कार्यदेशे स्वस्वनिमित्तसन्निधापितयोरङ्गाङ्गिभावात्—विशेषणविशेष्यभावादेकवाक्यत्वोपपत्तिः ॥ **अथ नानेति । अङ्गस्येती**गपेक्षयाऽवयवषष्ठ्यामिकः स्थानित्वात्तद्विशेषणत्वादङ्गस्यानुपस्थान**मलोन्त्यस्ये**त्यस्य । ततश्चानयोर्भिन्नविषयत्वान्नानावाक्यत्वम् ॥

**( उद्द्योतः ) षष्ठीति ।** स्थानषष्ठीत्यर्थः । 'षष्ठी स्थाने' इति

---

१ **अलोऽन्त्यशेष इति ।** एकदेशानुकरणेन सूत्रबोधकस्य तस्य शेषशब्देन षष्ठीतत्पुरुषो बहुव्रीहिर्वा । एतेन—सूत्रमनुकृत्य तथा समासे कृते 'प्रकृतिवद्' इति न्यायेन तदवयवस्य 'सुपः' इति लुक्—इति रत्नोक्तमपास्तम् । अस्वस्वामीयमित्यादौ दोषापत्तेः ॥ तथा च स्वसंज्ञाभ्यां विहितयोरिक्स्थानिकत्वनियामकत्वेऽप्यसति तद्व्यत्यासङ्गिकोऽयं विचार इति भावः ॥ छाया ॥

२ **'गुणानां च परार्थत्वात्'**—इति (पू. मी. ३।१।२१) न्यायेन मिथोऽसंबन्धादनेकयोगव्यवहितत्वादप्राकरणिकत्वान्मिथोऽनपेक्षित्वाद्द्वयोर्विध्युपकारकत्वाच्च कथं शेषशेषिभावादीति पूर्वपक्षिणं पृच्छति—**कथं चायमिति** ॥ चस्त्वर्थे । क्वचित् 'वा' इति पाठः ॥ छाया ॥

३ **यद्येकमिति । 'गुणः कृतात्मसंस्कारः'** (पू. मी.) इति न्यायेन ।

'यस्य येनार्थसंबन्धो दूरस्थस्यापि तस्य सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥'

इति न्यायेन व्यवहितयोरप्येकत्र कार्यप्रदेशे स्वस्वनिमित्तसंनिधापितत्वेन च तत्संभवः । तत्र च प्रदेशभेदाद् द्वयी गतिः । तथाहि—**'सार्वधातुकार्ध-' 'जुसि च'** इत्यादाववान्तरवाक्यार्थबोधोत्तरमनयोर्जातवाक्यार्थबोधयोरागमने पृथग्वाक्यार्थबोधोत्तरं वाक्यैकवाक्यतान्यायेन गृहीतपरिभाषार्थेन देशसामान्याश्रयेण प्रवृत्तायास्तस्या गुणवृद्धिरूपादेशविशेषाश्रयेण प्रवृत्ताया अस्याः सहैव लक्ष्यसंस्कारकत्वसंभवेन यदैकवाक्यतयाऽन्वयः । तत्र च **'अङ्गस्य'** इत्यधिकारप्राप्तम् । तथा च विशेषणविशेष्यभावे कामचाराद् 'अङ्गान्त्यस्याल इको गुणः' इति 'अङ्गस्येकोऽन्त्यस्यालो गुणः' इति वा वाक्यार्थेन फलितेन लक्ष्यसंस्कारकेण मिथो विशेषणविशेष्यभावापन्नयोरेव प्रवृत्तिराश्रीयते—इत्येका ॥ 'इगन्ताङ्गस्यान्त्यालः' इति **'संभवति'**-इति न्यायेन व्याख्याने तु तयोर्मिथोविशेषणविशेष्यभावो न प्रतिपादितः स्यात् ।

**'यद्येकं वाक्यम्'** इत्यादि तथा प्रदर्शकभाष्यविरोधापत्तिश्च । तत्साध्यफलं त्वनेनैव सिद्धम् । तदाह—**यद्येकमिति । 'विधयो भवन्ति'** इत्यनेन विधिदेशे पृथग्वाक्यार्थबोध आदौ सूचितः ॥ अथ **'मिदेर्गुणः'** इत्यादाववान्तरवाक्यार्थबोधोत्तरमनयोरुपस्थितौ पृथग्वाक्यार्थबोधोत्तरमुक्तरीत्या 'मिदेरङ्गस्यान्त्यस्याल इको गुणः' इति 'मिदेरङ्गस्येकोऽन्त्यस्यालो गुणः' इति वार्थो न संभवति, बाधात् । अतो भिन्नवाक्यात् वाच्या—'मिदेरङ्गस्येको गुणः' । 'मिदेरङ्गान्त्यस्यालो गुणः' इति । सा च समकक्षत्वे संभवति, न तु प्रवृत्तिसमाश्रयणे, **येन नाप्राप्तिन्यायेन** सामान्यायास्तस्या अनया बाधसंभवात् । तथा च तदनुपस्थितिरेवेति 'मिदेरङ्गस्येको गुणः' इत्येक एव वाक्यार्थः पर्यवसन्नः—इत्यपरा ॥ तदाह—**अथ नानावाक्यम्—तच्चेदं चेति** । तत्रापाततः संभावितवाक्यमादावाह—**अलोऽन्त्यस्येत्यादि** ॥ एतद्बाधकबाध्यमाह—**इक इत्यादि** ॥ द्वयोर्भिन्नवाक्यतामेव स्फोरयितुमाह—**अन्त्यस्यानन्त्यस्येति** ॥ छाया ॥

४ **नीयते इति ।** तत्रोपसंक्षिप्यत इत्यर्थः ॥ छाया ॥

५ नन्वपवादो नाम बाधः । स च प्राप्तस्य प्रवृत्तत्वेनायुक्तः, अप्रवृत्ते च बाध्यविषयाभावात्कस्य बाधः । न चातिदेशिकवचनप्राप्तानां तेषां 'शरमयं बर्हिः' इति प्रत्यक्षवचनप्रापितैस्तैर्बाधो युक्तः, प्रकृते तूभयमपि प्रत्यक्षम् । अतस्तथा सति षोडशिग्रहणाग्रहणवद्विकल्प एव तुल्यबलत्वात्स्यात् । अत आह—**अप्राप्येति** ॥ हि यतः केनचिद्रूपेणाप्रवृत्तस्य बाध्यत्वात् । तथा च बुद्ध्या प्रवृत्तं बाध्यते । तद्धि नात्यन्तं प्रवृत्तम् । अनुष्ठानरूपफलापर्यवसानात् । नाप्यत्यन्तमप्रवृत्तं, तद्बुद्धेः प्रवृत्तत्वात् । तथा च लक्ष्यभेदाल्लक्षणभेद इति न्यायेनावयवषष्ठ्यावरुद्धविषये स्थानषष्ठीभ्रमेण प्राप्तनियमाभासस्यावयवषष्ठीदर्शनादप्राप्तस्य बाध इत्यर्थः ॥ छाया ॥

६ भाष्यीयन्यूनतां निराचष्टे—**समुच्चय इति** ॥ छाया ॥

परिभाषया तत्त्वनिर्णयः । अस्य[1] च सूत्रस्य गुणवृद्धिशब्दाभ्यां विधीयमानौ वृद्धिगुणौ 'इकः स्थाने' इत्यर्थेऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या । गुणश्रुत्येत्यस्य गुणशब्देन विधेय[2]बोधकतयेत्यर्थः ॥ तत्र यदीति । बुद्धेः क्रमिकत्वाद्विशेषणविशेष्यभावे कामचाराचेति भावः ॥ सोऽस्येति । इगन्तस्येति षष्ठ्यास्ते[3]नान्त्येऽल्यनुसंहारादेतद्विशेषणत्वं-एतत्[4]परिच्छेदकत्वं तस्येति भावः ॥ तदा तस्यायं विशेषणत्वादिति । तच्छेषशब्दे तत्रेण बहुव्रीहिषष्ठीतत्पुरुषाविति भावः ॥

[ भाष्ये[5] 'इको गुणवृद्धी' इति पूर्वपरान्वयि[6], तेन तद्द्वयलाभ इति भावः ॥ परिच्छेदक[7]भावकृत एव च शेषित्वव्यवहार इति बोध्यम् ॥ ]

अथ त्विति । अवान्तरवाक्यार्थबोधकालेऽनिर्णीतार्थकत्वेन स्थानषष्ठीत्वसंभावनया तत्प्रवृत्तावपि पश्चादिक इत्यस्योपस्थितौ मिदेरित्यादौ योग्यत्वेन तत्साहचर्येण चान्यत्राप्यवयवषष्ठीत्वनिर्णये तदसंबन्ध इति भावः ॥ बाधायोगादिति । आत्यन्तिकबाधायोगादित्यर्थः । पाक्षिकस्तु[9] बाधः षोडशीग्रहणादौ भवत्येवेति बोध्यम् ॥ समुच्चय इति । मिदेरन्त्यस्येकश्चेत्येवमाकारः ॥ न हीति । प्रत्यर्थं शब्दनिवेशेनैकस्य नानेकाभिधायकत्वम् । तत्रे आवृत्तौ च न मानमिति भावः ॥

अनेक[10]योगेति । एवं चैकं वाक्यमिति भाष्यमयुक्तमिति भावः ॥ उत्तरम्[11]—एकस्मिन्नित्यादि ॥ अङ्गाङ्गिभावश्च न गुणगुणिभाव इत्याह—विशेषणेति ॥ इकः स्थानित्वादिति । सा[12] च नालोऽन्त्यसूत्रप्रवृत्तौ निमित्तम्, अल्समुदायोत्तरस्थानषष्ठीत्वाभावात् । 'अङ्गस्य[13]' इति च न स्थानषष्ठीति भावः ॥ तद्विशेषणत्वादिति । अवयवित्वेन विशेषणत्वादित्यर्थः ॥ नानावाक्यत्वमिति । अत्र पक्षे पुगन्तेत्यादि नियमार्थमिति बोध्यम् ।

( भाष्यम् )

कश्चात्र[14] विशेषः ?

( ७ । तच्छेषपक्षदूषणवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वृद्धिगुणावलोऽन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् ॥ * ॥

( व्याख्याभाष्यम् )

वृद्धिगुणावलोऽन्त्यस्येति[15] चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्तव्यम् ॥

"मिदेर्गुणः" ( ७।३।८२ ), इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ॥

"मृजेर्वृद्धिः" ( ७।४।११४ ), इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ॥

"पुगन्तलघूपधस्य" ( ७।३।८६ ) गुणः, इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ॥

ऋच्छेर्लिटि गुणः ( ७।४।११ ), इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ॥

दृशेः "ऋदृशोऽङि गुणः" ( ७।४।१६ ), इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति ॥

क्षिप्रक्षुद्रयोर्गुणः ( ६।४।१५६ ), इक इति वक्तव्यम् । अनन्त्यत्वाद्धि न प्राप्नोति[16] ॥

---

१ नन्वेवं तस्या अवान्तरवाक्यार्थबोधोत्तरं प्रवृत्तिः, अस्यास्तु पदश्रुतिर्लिङ्गमिति पूर्वं प्रवृत्तिरिति कथमनयोः संभवोऽत आह—अस्य चेति । प्रवृत्तेरित्यनेनान्वयः ॥ छाया ॥

२ 'विधेयत्वबोधिकयेत्यर्थः' इति च. झ. पाठः ॥

३ तेनान्त्येति । तेन—अलोऽन्त्यस्येत्यनेन गुणादिकार्याणामन्त्येऽलि अनुसंहारः क्रियते, स एवात्र परिच्छेदः ॥

४ न गुणगुणिभावकृतं नापि मिथोऽपेक्षाकृतं तदित्याह—एतत्परीति ॥ छाया ॥

५ भाष्ये इक इति । यदि पूर्वमिकाऽङ्गं विशेष्यते तदा इकोगुणेति सूत्रमलोऽन्त्यस्य शेषः । यदि च पूर्वमङ्गस्येति षष्ठी अन्त्यमलमन्वेति इकोगुणेति च परमन्वेति तदा इकोगुणेति सूत्रं शेषि । एवञ्च पूर्वपरान्वयभेदेन भाष्ये द्वयस्यास्य लाभः॥ कचिच्चायं पाठोऽग्रे—उद्द्योते 'विशेषणेति' इति प्रतीकोत्तरमुपलभ्यते तदा पूर्वमलोन्त्यस्येत्यनेनैकवाक्यत्वादन्वेति, एकवाक्यत्वाभावाच परं—अङ्गस्येत्यनेनान्वेति तदा तच्छेषतदपवादपक्षद्वयस्य लाभः इति । उत्तरत्र पाठे 'इको गुणवृद्धीति' इति प्रतीकम्, 'भाष्ये' इत्यस्य च स्वारसिकोन्वयः । पूर्वत्र पाठे 'भाष्ये' इत्यस्य 'तद्द्वयलाभः' इत्यत्रान्वयः, इकोगुणेति च न प्रतीकम् । बहुषु पुस्तकेषु पूर्वत्रैव पाठ उपलभ्यते ॥

६ उक्तं समूलयति—पूर्वपरान्वयीति । मध्यमणिन्यायेनेति भावः ॥ छाया ॥

७ मुद्रितपुस्तकेषु 'परिच्छेद्यपरिच्छेदक' इति पाठः । अलोऽन्त्यस्येत्यनेन परिच्छेदः क्रियते, परिच्छेदकृत एव तस्मिन्सूत्रे शेषित्वव्यवहारः, नतु गुणगुणिभावमूलक इति भावः ॥

८ 'एवं च शेषशेषित्व' इति च. झ. पाठः ॥

९ तथा व्याख्यानफलमाह—पाक्षिक इति । द्वितीयवचनेन पूर्ववचनप्राप्तस्येति भावः ॥ छाया ॥ उपलब्धादर्शपुस्तकेषु 'षोडशीग्रहणा' इति दीर्घमध्यपाठः सर्वत्र समुपलभ्यमानः कथमुपपद्येत ? ।

१० अनेकयोगेतीति ॥ शङ्कत इत्यादिः ॥ छाया ॥

११ उत्तरमिति । इदं कार्यकालपक्षवद्यथोद्देशेऽपि बोध्यम् ॥ छाया ॥

१२ ननु तामादायैव कुतो नोपस्थितिरत आह—सा चेति ॥ छाया ॥

१३ नन्वङ्गस्येति षष्ठीमादाय कुतो नात आह—अङ्गस्येतीति ॥ छाया ॥

१४ [पुनरपि तटस्थो द्वयोर्विशेषं] पृच्छति—कश्चात्रेति ॥ छाया ॥

१५ अलोऽन्त्यस्येति । इक इति शेषः ॥ छाया ॥

१६ न प्राप्नोतीति । क्षिप्रक्षुद्रशब्दाभ्यामिष्ठनि 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' इति सूत्रेण यणादिपरस्य रस्य लोपेऽवशिष्टे हलन्तेऽनन्त्यत्वादिकारस्य गुणो न प्राप्नोतीत्यर्थः ॥ छाया ॥

( प्रदीपः ) **वृद्धिगुणाविति** । मिदादीनामनिगन्तत्वादलोन्त्यस्येत्येतदङ्गमिग्ग्रहणं[1] न सन्निपततीति तेषु[2] प्रदेशेष्विग्ग्रहणं कर्तव्यम् ॥

( उद्योतः ) **मिदादीनामिति** । गुणादिविधौ परिभाषाद्वयस्य परस्परसंबन्धापरित्यागेनोपस्थानं **तच्छेषत्वम्** । तत्रैकस्या असंभवे द्वितीयाऽपि न प्रवर्तत इति भावः ॥ भाष्ये—**अनन्त्यत्वाद्धीति** । तच्छेषपक्षेऽनन्त्यत्वादिको गुणो न प्राप्नोतीत्यर्थः ॥

( ७७ तच्छेषदूषणान्तरवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ सर्वादेशप्रसङ्गश्चानिगन्तस्य ॥ * ॥**

( एकदेशिव्याख्याभाष्यम् )

**सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति । याता, वाता ॥**

**किं कारणम् ?**

**"अलोन्त्यस्य" इति षष्ठी । षष्ठी चैव ह्यन्त्यमिकमुपसंक्रान्ता, अङ्गस्येति च स्थानषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति ॥**

( प्रदीपः ) दोषान्तरमप्याह—**सर्वादेशप्रसङ्गश्चेति** । अङ्गस्येत्येतद्भेदेन सर्वाङ्गेषु व्याप्रियते । तत्रेगन्तेष्वेव 'अलोऽन्त्यस्य' इति विधिरन्यत्र तु षष्ठ्या अन्त्येऽल्यनुपसंहारात्—याता—वाता—इति सर्वादेशो गुणः प्राप्नोति ॥

( उद्योतः ) **अङ्गस्येति च स्थानषष्ठीति** । अङ्गस्य स्थाने गुणो भवति । स च यत्रान्त्य इक् तत्रान्त्यस्येक इत्यर्थ इत्यभिमानः । तदाह—**भेदेनेति** । शास्त्रस्य बहुविषयत्वायेत्यर्थः ॥ **तत्रेगन्तेष्वेवेति** । तच्छेषत्वादिति भावः ॥ **अन्यत्र**—अनिगन्तविषये गुणशास्त्रे ॥

( दूषणोद्धारभाष्यम् )

**नैष दोषः । यथैव ह्यलोऽन्त्यस्येति षष्ठी अन्त्यमिकमुपसंक्रान्ता, एवमङ्गस्येत्यपि स्थानषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति, कुतो गुणः कुतः सर्वादेशः ॥**

( प्रदीपः ) **यथैव हीति** । 'अङ्गस्य' इति षष्ठी उच्चारितैवान्त्यमलं नीतेति नास्या अपरं रूपमस्तीति नास्ति सर्वादेशगुणप्रसङ्गः ॥

( उद्योतः ) **अन्त्यमलमिति** । इक्परिभाषाशेषभूतालोऽन्त्यपरिभाषयेत्यर्थः ॥ **अङ्गस्येत्यपि स्थानषष्ठीति** भाष्ये—**अन्त्यमिकमुपसङ्क्रान्तेत्यनुकर्षः** । एवं च संग्राहकवाक्यस्येगन्तमात्रविषयत्वादनिगन्तविषयकलक्षणाभाव एव । आवृत्तौ च न मानमिति भावः । अत एव गापोष्टकः कित्त्वं सार्थकम् ॥

( वार्तिकसमन्वयान्तरभाष्यम् )

**एवं तर्हि नायं दोषसमुच्चयः ॥**

**किं तर्हि ?**

**पूर्वापेक्षोऽयं दोषः । ह्यर्थे चायं चः पठितः—**

***मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्य * इति ।**

**मिदेर्गुणः 'इकः' इति वचनादन्त्यस्य न, 'अलो-**

---

१ त्येतदङ्गमिति । प्राग्वत्समासद्वयम् ॥ छाया ॥

२ तेषु—'मिदेर्गुणः' इत्यादिषु ॥ छाया ॥

३ हीत्यस्यार्थमाह—**तच्छेषेति** । सार्वेत्यादौ स्वीक्रियमाणे सतीत्यर्थः ॥ अत्रेति शेषः ॥ छाया ॥

४ सार्वधातुकार्धधातुकयोरित्यादीनि गुणवृद्धिविधायकानि सूत्राणि सार्वधातुकार्धधातुकपराङ्गमात्रपराणि, तथा च यत्रेगन्ताङ्गस्य सम्भवस्तादृशलक्ष्यविषयकसूत्रे परिभाषाद्वयोपस्थाद् इगन्ताङ्गस्य गुण इत्याद्यर्थः । यत्र चेगन्ताङ्गासम्भवो यातेत्यादौ, तद्विषयकशास्त्रे तच्छेषपक्षाश्रयणेन परिभाषयोरनुपस्थानात् 'अङ्गस्य गुणः' इत्येवार्थः स्यात् । एवञ्च तत्र सर्वादेशो गुणः प्राप्नोतीत्याशयेन वार्तिककार आह—**सर्वादेशेति** ॥

५ 'चैव हि' इत्यनन्तरम् 'अङ्गस्य' इति शेषः ॥ छाया ॥ 'अलोऽन्त्यस्येति षष्ठी चैव ह्यन्त्यमिक' इत्येव मुद्रितपुस्तकेषु पाठः ॥

६ **स्थानषष्ठीति** । 'भेदेन व्यापृताऽनिगन्तेष्वनुपसंहृता चान्त्येऽलि' इति शेषः ॥ छाया ॥

७ चशब्दस्वारस्यादेकदेशिमतमाह—**दोषान्तरमिति** ॥ छाया ॥

८ त्वभीति । एकदेश्युक्तित्वात् ॥ छाया ॥

९ **भेदेनेतीति** । प्रतिलक्ष्यं लक्षणभेदादित्यर्थः ॥ छाया ॥

१० **ष्वेवेतीति** । भिन्नानां तेषां मध्ये इगन्तविषयकगुणशास्त्रेष्वेवेत्यर्थः ॥ छाया ॥

११ वस्तुतो यथा-उद्देश्यतावच्छेदकव्यापकत्वं गुणवृद्धिविधायकशास्त्रस्य तथैव तयोः परिभाषयोरपीति यातेत्यादिलक्ष्यविषयकशास्त्रेष्वपि गुणवृद्धिशब्दाभ्यां तयोर्विधानात्स्थानषष्ठीसत्वाच्च इक्परिभाषाऽलोन्त्यपरिभाषयोरप्युपस्थितिः । एवञ्च 'अङ्गस्य गुणः' इत्येतावन्मात्रार्थबोधकगुणशास्त्रस्याभावादेव यातेत्यादौ न सर्वादेशगुणप्रसङ्ग इत्यभिप्रायेण भाष्यकार आह—**नैष दोष इति** ॥ 'यथैव तर्ह्यलोऽन्त्यस्येति' इति क. ख. पाठः ॥

१२ **स्थानषष्ठीति** । अन्त्यस्येति इकोविशेषणं, अङ्गस्येति चान्त्यविशेषणम् । अङ्गस्येति स्थानषष्ठ्यपि—इति योज्यम् ॥

१३ **तत्र षष्ठ्येवेति** । तद्विषयकतादृशषष्ठीघटितलक्षणमेवेत्यर्थः ॥ छाया ॥

१४ **अत एव**—अनिगन्तविषये गुणप्राप्त्यभावादेव । अङ्गस्येति षष्ठ्यपि अन्त्यमिकमुपसंक्रान्तेति षष्ठ्या अभावाद्गुणो न प्राप्नोति, तथाचाकारलोपार्थं कित्वमावश्यकम् । गुणे हि आकारस्यैवाभावेन लोपाप्राप्तेः कित्त्वमनर्थकमिति भावः ॥

१५ नन्वेवं वार्तिकासंगतिरत आह—**एवं तर्हीति** । एवं सतीत्यर्थः ॥ **नायं**—द्वितीयवार्तिकबोध्यः ॥ **पूर्वापेक्ष इति** । इग्ग्रहणाकरणापेक्ष इत्यर्थः ॥ छाया ॥

१६ 'चः पठितः' इति ग. पाठः ॥

१७ स एव फलितसमस्तवार्तिकपाठमाह—**मिदीति** ॥

ऽन्त्यस्य' इति वचनादिको न । उच्यते च गुणः । स[1] सर्वादेशः प्राप्नोति ॥ एवं सर्वत्र ॥

( प्रदीपः ) पूर्वापेक्षोऽयमिति । 'मिदादिष्विग्ग्रहणं कर्तव्यम्' इत्यत्रैवार्थे हेतुत्वेनेदमुपात्तमित्यर्थः ॥ उच्यते चेति । 'मिदेर्-' इति चोदनया ॥

( उद्योतः ) हिश्च हेत्वर्थ इत्याह—मिदादिष्विति ॥

( इति तच्छेषपक्षदूषणम् । )

( अथ तदपवादपक्षाभ्युपगमभाष्यम् )

अस्तु[2] तर्हि तदपवादः ॥

( ७८ तदपवादपक्षदूषणवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ इग्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः ॥ * ॥**

( भाष्यम् )

इग्मात्रस्येति[3] चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यस्य[4] प्रतिषेधो वक्तव्यः ॥

जुसि ( ७।३।८३ ) गुणः, स यथेह भवति–'अजुहवुः-अबिभयुः' इति, एवम्-'अनेनिजुः-पर्यवेविषुः' अत्रापि प्राप्नोति ॥

सार्वधातुकार्धधातुकयोः ( ७।३।८४ ) गुणः, स यथेह भवति–'कर्ता-हर्ता-नयति-तरति-भवति', एवम्-'ईहिता-ईहितुम्-ईहितव्यम्' इत्यत्रापि प्राप्नोति ॥

ह्रस्वस्य ( ७।३।१०८ ) गुणः, स यथेह भवति -'हे अग्ने-हे वायो' इति, एवं-'हे अग्निचित्-हे सोमसुत्' इत्यत्रापि प्राप्नोति ॥

जसि ( ७।३।१०९ ) गुणः, स यथेह भवति -'अग्नयः-वायवः' इति, एवं-'अग्निचितः-सोमसुतः' इत्यत्रापि प्राप्नोति ॥

ऋतो ङिसर्वनामस्थानयोः ( ७।३।११० ) गुणः, स यथेह भवति–'कर्तरि-कर्तारौ-कर्तारः' इति, एवं -'सुकृति-सुकृतौ-सुकृतः' इत्यत्रापि प्राप्नोति ॥

घेर्ङिति ( ७।३।१११ ) गुणः, स यथेह भवति —'अग्नये-वायवे' इति, एवम्-'अग्निचिते-सोमसुते' इत्यत्रापि प्राप्नोति ॥

ओः ( ६।४।१४६ ) गुणः, स यथेह भवति–'बाभ्रव्यः-माण्डव्यः' इति, एवं-'सुश्रुत्[5]-सौश्रुतः' इत्यत्रापि प्राप्नोति ॥

( प्रदीपः ) इग्मात्रस्येति । यद्यङ्गस्येतीगपेक्षयाऽवयवषष्ठी तदा 'अलोऽन्त्यस्य' इत्यस्य निमित्ताभावादनुपस्थानम्, स्थानषष्ठी हि अस्योपस्थाने निमित्तम् । ततश्चाङ्गावयवस्यान्त्यस्यानन्त्यस्य चेको गुणः प्राप्नोतीति दोषः ॥ ह्रस्वस्य गुण इति । समानन्यायत्वादेतदुक्तम् । अङ्गस्यावयवो यो ह्रस्वस्तस्य गुण इति । न त्वत्रेक्परिभाषोपतिष्ठते, निर्दिष्टस्थानिकत्वात् ॥ अन्ये त्वाहुः—अत्रापि परिभाषोपस्थाने सति ह्रस्वेनेग्विशेष्यते-ह्रस्वस्येको गुणो यथा स्यात्, दीर्घस्य मा भूदिति ॥ ओर्गुण इति । अत्राप्यस्या उपस्थानमनन्त्यस्याप्युकारस्य गुणार्थम् । असति ह्यस्या उपस्थानेऽङ्गस्येति स्थानषष्ठी स्यादङ्गं चोकारेण विशेष्यत इत्युकारान्तस्यैवाङ्गस्य गुणः स्यात् ॥

( उद्योतः ) अनन्त्यस्य चेक इति । यद्यपि जुसि चेत्यादीनां प्रधानभूतेग्विशेषणत्वे तस्मिन्निति परिभाषया व्यवहितस्येको न भविष्यति, तथापि प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया जुसि चेत्यादिभिरप्यङ्गमेव विशेष्यत इत्यभिप्रायः ॥ समानन्यायेति । गुणप्रकरणवैरूप्याय सर्वत्राङ्गस्येत्यवयवषष्ठ्येव स्यादिति भावः ॥ निर्दिष्टेति । अनियमे नियमकारिणीत्वात्परिभाषाया इति भावः ॥ अन्ये त्विति । अयं भावः—न ह्यनियम इति श्रुतिः स्मृतिर्वा, किंतु परिभाषा लिङ्गवती फलवती चेति नियमः, फलं चेतरव्यावृत्तिवदितरसंग्रहोऽपीति ह्रस्वस्येत्यस्याङ्गविशेषणत्वव्यावर्तनेनावयवषष्ठीत्वबोधनेनानन्त्यस्यापि गुणसम्पादनमेव फलं स्यात् । अकारे गुणागुणयोर्न विशेष इति ॥ तदेतद्ध्वनयति—अनन्त्यस्याप्युकारस्येति ॥ नन्वेवं ह्रस्वग्रहणं व्यर्थमत आह—दीर्घस्येति ॥ घिसंज्ञौ[7] वर्णयोरेवेति पक्षे ङिति गुणस्य 'अग्निचिते' इत्यादौ प्रसङ्गो बोध्यः ॥

१ ततश्च मिथ एकवाक्यतापन्नयोर्द्वयोरपि निवृत्तिः, अन्यतरप्रवृत्तौ विनिगमकाभावात् । तथा च 'षष्ठी स्थाने योगा' इति सर्वादेशः स्यादित्याह—स सर्वेति ॥ छाया ॥

२ एवमाद्ये तच्छेषपक्षे दूषणान्यभिधाय तदपवादपक्षेऽपि दूषणान्यभिधातुमुपक्रमते—अस्तु तर्हीति ॥

३ इग्मात्रेति । मात्रपदेन बाध्यालोन्त्यपरिभाषाव्यवच्छेदः ॥ छाया ॥

४ 'सार्वधातुकार्धधातुकह्रस्वाद्योः' इति उवर्णपर्यन्तशब्दानां समाहारद्वन्द्वे छान्दसत्वान्नुमभावः, मध्यमपदलोपिसमासेनोकारान्तस्य पुंस्त्वं वा । गुणेष्विति पृथक् पदमिति ॥ छाया ॥ वस्तुतस्तु सर्वाणि यथासंभवं सूत्रसूत्रैकदेशानुकरणानि । तथा च 'जुसि' इत्यारभ्य 'ओर्गुणेषु' इत्यन्तमेकमेव पदम् ॥ दाधिमथाः ॥ दाधिमथानुसारेण वार्तिकार्थकरणे लक्ष्यदोषाभावेऽपि भाष्ये–जुसि गुणः सार्वधातुकार्धधातुकयोर्गुणो जसि गुण इत्यादौ सर्वत्र गुणपदप्रदर्शनेन 'गुणेषु' इति पृथक्पदमित्येव युक्तम् । अन्यथा वार्तिकव्याख्यानविशेषभूतेऽस्मिन् जुसि गुण इत्यादिभाष्ये गुणशब्दाधिक्यमयुक्तमध्याहार्यं वा स्यात् ॥

५ सुश्रुदिति । प्रकृतेर्हलन्तत्वबोधनाय ॥ छाया ॥

६ 'इग्मात्रस्य चेत्' इति वार्तिकस्वरसभङ्गस्यात्र पक्षे सत्त्वादाह—अन्ये त्विति ॥ छाया ॥

७ ननु भाष्ये 'घेर्ङिति' इत्युपन्यासोऽयुक्तः, अग्निचिदादेरघ्यन्तत्वादघित्वाच्चेत्यत आह—घिसंज्ञेति ॥ छाया ॥

( भाष्यम् )

नैष[1] दोषः ।

( ७९ सिद्धान्त्येकदेशिवार्तिकम् ॥ ६ ॥ )

॥ * ॥ पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् ॥ * ॥

( भाष्यम् )

पुग[2]न्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति—पुगन्तलघूपधस्यैवानन्त्यस्य नान्यस्यानन्त्यस्येति ॥

( प्रदीपः ) पुगन्तेति । भेत्तेत्यादौ गुणे सिद्धे[3] पुनःश्रुतिर्नियमार्थेति गुरूपधस्य 'ईहिता' इत्यादौ न भविष्यति । नापि हे अग्निचिदित्यादौ, उ[4]भयनियमाश्रयणादिति भावः ॥ ननु च भेत्तेति दकारस्य ह्रेपयतीति पकारस्य च यथा स्यादिति विध्यर्थमेतत्स्यात् । नैतदस्ति, पुकि अन्तः—पुगन्तः, लघ्वी उपधा—लघूपधा, ततः समाहारद्वन्द्वनिर्देश इत्यन्त्य[5]स्य गुणेन भाव्यम् ॥

( उद्द्योतः ) पुनःश्रुतिः–पुनर्गुणविधानम् ॥ ननु चेति । ब[6]हुव्रीहिसमासः, सामर्थ्यादिक्परिभाषाऽनुपस्थितिश्चेति भावः ॥ भिदो दकारोच्चारणं तु भिन्नो भित्तमित्यादौ चरितार्थम्, क्नोः कित्त्वेनानिग्लक्षणत्वेऽपि निषेधप्रवृत्तेः । पुग्विधानमपि क्ष्मापयतीत्यादौ यलोपार्थम्, ओकाररूपगुणार्थं च चरितार्थमित्याशयः ॥ पुकीति । लाघवात्तत्पुरुषे निर्णीते[7] नियमार्थत्वं न दोषावहमित्यर्थः ॥ ननु पुगन्तग्रहणं दार्पयतीत्यादौ[8] अनन्त्यस्यानिकोऽपि गुणार्थं स्यादिति कथं नियमार्थत्वमिति चेन्न । गुणे उपधावृद्ध्या विशेषाभावात् ॥

( नियमदूषणभाष्यम् )

प्रकृ[9]तस्यैव नियमः स्यात् ॥

किं च प्रकृतम् ?

सार्वधातुकार्धधातुकयोरिति । तेन भवेदिह नियमान्न स्यात्-'ईहिता-ईहितुम्-ईहितव्यम्' इति । ह्र[10]स्वाद्योर्गुणस्त्वनियतः सोऽनन्त्यस्यापि प्राप्नोति ॥

( प्रदीपः ) प्रकृतस्येति । एकेन वाक्येन नियमद्वयस्या[11]लाभात्प्रकृतस्यैव गुणस्य नियमः स्यात्—पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोरिति, न[12] तु सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति ॥

( उद्द्योतः ) प्रकृतस्यैवेति । अनन्तरस्यैवेत्यर्थः ॥

( नियमान्तरदूषणभाष्यम् )

[13]अथाप्येवं नियमः स्यात्—पुगन्तलघूपधस्य सार्वधातुकार्धधातुकयोरेवेति ॥

एवमपि सार्वधातुकार्धधातुकयोर्गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति—ईहिता-ईहितुम्-ईहितव्यमिति ॥

( प्रदीपः ) अथापीति । अनन्तरस्य विधिर्वेति परिभाषा यदि नाश्रीयते–इति भावः ॥

( उद्द्योतः ) नन्वनन्तरस्येति न्यायविरुद्धोऽयं नियम इत्यत आह—अनन्तरस्येति । लक्ष्यानुसारश्चानाश्रयणे बीजं बोध्यम् ॥

( उभयविधनियमदूषणभाष्यम् )

अथाप्युभयतो नियमः स्यात्—पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोः, सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति ॥

---

१ एवं तदपवादपक्षेऽपि दत्तान्दोषान्परिहरति सिद्धान्त्येकदेशी—नैष दोष इति । जातावेकवचनम् ॥ यत इति शेषः ॥ छाया ॥

२ पुगन्तेति । अनन्त्यस्य चेत् पुगन्तलघूपधस्यैवेति नियमात् 'ईहिता' इत्यादौ दोषवारणेऽपि हे अग्निचिदित्यादौ दोषवारणार्थं पुगन्तलघूपधस्य चेत् अनन्त्यस्यैवेति नियमानुपयोगात् अनन्त्यस्य चेत् पुगन्तेति सूत्रेण विधीयमान एवेति उभयोर्नियमोऽप्याश्रयणीयः । अत एव 'उभयतो नियमाश्रयणात्' इत्यनुक्त्वा 'उभयनियमाश्रयणात्' इत्येव कैयटेनोक्तम् । अत एव च सर्वदोषपरिहारार्थं भाष्ये—अनन्त्यस्य चेत् पुगन्तेति सूत्रेणैव नान्यस्यानन्त्यस्येत्याशयकमुक्तम् ॥

३ सिद्धे पुनरिति । 'सार्वधातुकार्ध–' इति सूत्रेण गुणे सिद्धे 'पुगन्त–' इत्यनेन पुनर्गुणविधानमित्यर्थः ॥ छाया ॥

४ उभयेति । अग्रे 'प्रकृतस्यैव नियमः' इति दर्शनादिदानीमुभयनियम एवाश्रीयते । तेन लघूपधेऽग्निचिदित्यादौ दोषवारणेऽपि हे पिचव्य इत्यादौ दोषस्तदवस्थ एवेत्याशयः ॥

५ इत्यन्त्यस्येति । पुकि परतो योऽन्त्यस्तस्य गुणेन भाव्यमिति हि तदर्थः । क्वचित् 'गुणेन न भाव्यम्' इत्येव पाठः ॥

६ बहुव्रीहिसमासः—पुगन्तेतिसूत्रे पुगन्तलघूपधस्येत्यत्र ॥

७ 'निर्णीते निषादस्थपतिन्यायेन निय' इति च. झ. पाठः ॥

८ 'दापयत्यादौ' इति घ. पाठः ॥

९ उक्तनियमेन क्वचिद्दूषणोद्धारो न सर्वत्रेति सयुक्तिकं दर्शयति—प्रकृतस्यैवेति ॥ छाया ॥ अनन्तरस्य विधिर्वेति न्यायेनायं नियमः सार्वधातुकार्धधातुकयोरित्यस्यैव स्यात् । तथाच 'ह्रस्वस्य गुणः' 'ओर्गुणः' इत्यादिभिर्विधीयमानोऽनन्त्यस्यापि प्राप्नोतीति भावः । प्रकृतस्य–अनुवर्तमानस्यानन्तरस्य । ह्रस्वाद्योरित्युक्तत्वात् 'जुसि च' इत्येतदपि नियम्यते, अनेनिजुरित्यत्र लघुपधत्वाद्दोषो दुरुद्धर इत्यन्यत् । जुसि चेत्यस्य व्यावर्तनार्थं ह्रस्वाद्योरित्युक्तम् । अन्यथाऽऽदिपदस्य सादृश्यवाचित्वात्तस्यापि ग्रहणं स्यात् ॥

१० ह्रस्वाद्योरिति । ह्रस्वस्य गुणः-जसि गुणः-ऋतो ङि गुणः-घेर्ङिति गुणः-ओर्गुण इति विधीयमानो गुणोऽनन्त्यस्यापि प्राप्नोतीत्याशयः । आदिपदेन 'ओर्गुणः' इत्यस्यापि ग्रहणे सिद्धे पुनस्तदुक्तिस्तत्रादिशब्दस्य सदृशार्थत्वं नेति बोधयितुम् । एवञ्च जुसि चेति गुणस्तु नियम्यत एवेति ॥

११ 'स्याभावात्' इति क. ख. पाठः ॥

१२ 'प्रकृतस्यैव' इत्येवकारव्यवच्छेद्यमाह—न त्विति ॥ अनन्तरस्य विधिर्वा इति न्यायादिति भावः ॥ छाया ॥

१३ विपरीतनियमाङ्गीकारे ह्रस्वाद्योर्गुणविषये दूषणपरिहारेऽपि पूर्वोक्तपरिहारे एव दूषणापात इति वदति—अथाप्येवमिति ॥ छाया ॥

**एवमप्ययं जुसिगुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति–'अनेनिजुः-पर्यवेविषुः' इति ॥**

(प्रदीपः) **अथापीति** । अभ्युपेत्यवादेनोच्यते, आत्र-स्यादिन्यायाश्रयणेन वा। एकस्मिंस्तु वाक्ये नियमद्वयं न लभ्यते ॥ **एवमपीति** । अनेनिजुः पर्यवेविषुरित्यत्र लघूपधं चाङ्गं सार्वधातुकं चास्तीति **जुसि चे**ति गुणः प्राप्नोति। हे पिचव्य हे बुद्धे बुद्धये बुद्धय इत्यादौ चालघूपधत्वादनन्त्यस्य गुणोऽपरिहृतः ॥

(उद्द्योतः) **अभ्युपेत्यवादः**-क्लेशेनाङ्गीकार इत्याहुः ॥ **पिचव्येति** । उगवादियत्। उवर्णान्तस्याङ्गस्येको गुण इति व्याख्यानमभिप्रेत्यात्र दोषोपन्यासः ॥ परंतु **सौश्रुत इत्यत्रापि प्राप्नोतीति** भाष्याननुगुणा सा व्याख्येति चिन्त्योऽयं कैयट **इत्याहुः** ॥ केचित्तु कैयटपुस्तके 'पिचव्य' इति न दृश्यत एव ॥

(इति तदपवादपक्षदूषणप्रकरणम्)

(अथासंबद्धपरिभाषानिरासाधिकरणम्)

(भाष्यम्)

**एवं तर्हि—नायं तच्छेषः, नापि तदपवादः। अन्यदेवेदं परिभाषान्तरमसंबद्धमनया परिभाषया ॥**

(प्रदीपः) **एवं तर्हीति** । परस्परानपेक्षयोः स्वस्वनिमित्तप्रयुक्तसन्निधानयोर्द्वयोः परिभाषयोः प्रदेशेषु स्वकार्यप्रतिपादनम्। तत्र यदि कथंचिदेकस्मिन् विषये सन्निपातो भवति, नैतावता परस्परापेक्षा भवतीत्यर्थः ॥ **अन्यदेवेति** । अन्तरशब्दो विशेषवाचीति अन्यान्तरशब्दयोरविरुद्धः प्रयोगोऽपर्यायत्वात् ॥

(उद्द्योतः) तच्छेष इति शब्दोऽसंभवदुक्तिकत्वग्रस्तोऽपीत्याह–**परस्परेति** । विशेषणविशेष्यभावमात्रेण शेषशेषिव्यवहारो न क्वापि दृष्टचर इति भावः ॥ अत एवाग्रे एतत्पक्षोक्तदूषणोद्धारेऽपि **नायं तच्छेष** इत्युक्तिः सङ्गच्छते ॥ **सन्निपात इति** । जायमानोऽपि संनिपातः सावकाशत्वेन विप्रतिषेधोपयोग्येव, न तच्छेषत्वोपयोगी। अत एव नापवादत्वमपि। उक्तदोषाचेति भावः ॥ **असंबद्धमनयेति** भाष्यस्य–शेषशेषिभावानापन्नमुत्सर्गापवादभावानापन्नं चेत्यर्थः ॥

(परिभाषान्तरपक्षसमर्थकभाष्यम्)

**परिभाषान्तरमिति च मत्वा क्रोष्ट्रीयाः पठन्ति—**

(क्रोष्ट्रीयवार्तिकम्)

***नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन* इति ॥**

(भाष्यम्)

**यदि चायं तच्छेषः स्यात्, तेनैवं तस्यायुक्तो विप्रतिषेधः। अथापि तदपवादः, उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः ॥ तत्र नियमस्यावकाशः—"राज्ञः क च" राजकीयम्। "इको गुणवृद्धी"**

---

१ **एवमपि**–उभयतो नियमाश्रयणेऽपि । **गुणोऽनियतः**–जुसि गुणविषये इष्ट नियमाभावः। जुसि चेत्यस्य नियमाक्रान्तत्वेऽपि अनेनिजुरित्यादौ लघूपधत्वाद्दोष इति तात्पर्यम् ॥

२ भाष्यमुपलक्षणमित्याह—**हे पिचव्येति** ॥ छाया ॥

३ **उगवादीति**। पिचुशब्दादित्यादिः। हितार्थ इति भावः ॥ छा.॥ वस्तुतो उगवादियदित्यादिर्न कैयटाभिप्रायः । प्रदीपे 'हे पिचव्य' इति सम्बुद्ध्यन्तमुदाहरणं ह्रस्वस्य गुण इत्यभिप्रायेण प्रदर्श्यते। ओर्गुण इत्यस्य तदुदाहरणाभिप्राये हि 'पिचव्यः' इति प्रथमान्तमेवोदाहरेत् सम्बुद्ध्यन्तानुधावनस्य निर्दलत्वापत्तिः। ह्रस्वस्य गुण इत्यस्य 'अङ्गसम्बन्धिह्रस्वस्येको गुणः' इत्यर्थे 'हे पिचव्य' इत्यत्रेकारस्यापि गुणः स्यादिति तदभिप्रायः। 'हे पिचव्य हे बुद्धे' इति ह्रस्वस्योदाहरणे । 'बुद्धये' इति ऋतो ङीत्यस्य। 'बुद्धयः' इति जसि चेत्यस्य। ओर्गुण इत्यस्योदाहरणं न प्रदर्शितम्। इङ्मात्रस्येति चेदिति वार्तिकव्याख्यानावसरे 'असति ह्रस्वा उपस्थानेऽङ्गस्येति स्थानषष्ठी स्यादित्युकारान्तस्यैव गुणः स्यात्' इति प्रतिपादयतः प्रदीपस्य 'उवर्णान्तस्याङ्गस्येको गुणः' इति कथमभिप्रायः स्यात्? एवञ्च 'उगवादियदित्यादिन्चिन्त्योऽयं कैयट इत्याहुः' इत्यन्त उद्द्योतो नातीव रमणीयः। ह्रस्वस्येत्यस्योदाहरणद्वयप्रदर्शने बीजाभावात्तन्मूलोऽयमुद्द्योत इत्याशयेन वा समर्थनीय इति ममैतत्साहसमपि विचारणीयं विद्वद्भिः ॥

४ एवं संयोज्य दूषयति—**परं त्विति** ॥ छाया ॥

५ **आहुरि**त्यरुचिबीजं प्रकटयति—**क्वचित्त्विति** ॥ छाया ॥

६ तदेवं पक्षद्वयं संदूष्य **"स्वतन्त्रोऽयं परिभाषाविशेषः"** इति क्रोष्ट्रीयसंमतं पक्षं दूषयितुमाह—**एवं तर्हीति** ॥ **अयं**–योगः, परिभाषाविशेष इत्यर्थः ॥ छाया ॥

७ 'किं तर्हि?' इत्यत आह—**अन्यदेवेति** । अन्यदेवेत्यस्यार्थमाह—**असंबद्धमनया परिभाषयेति** ॥ प्रागुक्तया प्रक्रियया तच्छेषत्वतदपवादत्वरूपयाऽनाक्रान्त इत्यर्थः ॥ एवकारः स्फुटार्थः ॥ छाया ॥

८ नन्वयुक्तमेतत्, एवं सति क्व संनिपातः कान्यतरत्यागः स च कस्येत्यत्र नियामकाभावेन सर्वेष्टासिद्धेः । अतः क्रोष्ट्रीयवार्तिकमत्र योजयति—**परिभाषान्तरमिति** । च एवार्थे । 'परिभाषान्तरम्' इत्येव हृदि निधायेत्यर्थः ॥ 'विप्रतिषेधवार्तिकम्' इति शेषः ॥ तदाह—**नियमादिति** ॥ विधेयगतद्वित्वस्य सूत्रे आरोपेण 'भवतः' इत्युक्तम् ॥ अत एव—**'इको गुणवृद्धी इत्येतद्भवति विप्रतिषेधेन'**—इत्यग्रे वक्ष्यति ॥ छाया ॥

९ ननु कथमिदं वार्तिकमुक्ताशयकमेव पूर्वपक्षयोरपि प्रवृत्तिसंभवादत आह—**यदि चायमिति** ॥ **स्यादिति** । तर्हीति शेषः ॥ छाया ॥

१० **तेनैव**–विशेषणेनालोऽन्त्यस्येत्यनेनैव। **तस्य**—इको गुणवृद्धीत्यस्य। 'यदि चायं' इत्यारभ्य 'उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः' इत्यन्तो ग्रन्थो वार्तिकेऽस्मिन् पूर्वोक्तपक्षद्वयस्यासम्भवप्रदर्शनपरः ॥

११ **वाद इति**। स्यात्तर्हीति शेषः ॥ एकत्र युगपत्प्राप्ते मिथो विषये लब्धानवकाशत्वेनातुल्यबलत्वमिति भावः ॥ छाया ॥

१२ विप्रतिषेधं निरूपयति—**तत्रेति**। वार्तिकोक्तयोर्मध्ये ॥ छाया॥

इत्यस्यावकाशः—चयनं[1] चायको लवनं लावकः[2] । इहोभयं प्राप्नोति-'मेद्यति-मार्ष्टि' इति । "इको गुणवृद्धी" इत्येतद्भवति विप्रतिषेधेन[3] ॥

( प्रदीपः ) चयनमिति । अलोऽन्त्यपरिभाषायाः प्रयोजनाभावादत्रा[4]नुपस्थानमित्याशयः ॥ चायक इति । कथमत्रेक्[5]परिभाषोपतिष्ठते यावताऽच इति स्थानी निर्दिष्टः । अत्राहुः—अच इत्यस्याङ्गविशेषणतयोपयोगादचः स्थानित्वाभावाद्वृद्धिग्रहणेन लिङ्गेनेक्[6]परिभाषाऽत्राप्युपतिष्ठत एव ॥ मेद्यतीति । इक इति वचनादिकारस्य प्राप्नोति, अलोऽन्त्यस्येति वचनाद्दकारस्य ॥

( उद्योतः ) (वार्तिके) नियमादिति । अलोऽन्त्यपरिभाषायाः पूर्वाचार्यसंज्ञा नियम इति ॥ तेनैव तस्यायुक्त इति । स्वाङ्गेन स्वस्येत्यर्थः । शेषशेषिणोरभेदं मत्वा 'तेनैव' इत्याद्युक्तम्[7] ॥ नन्वङ्गस्येति स्थानषष्ठीदर्शनात्सार्वधातुकेत्यादावप्यलोऽन्त्यपरिभाषाप्रवृत्त्या कथमिक्परिभाषायाश्चयनमित्यवकाशोऽत आह—अलोऽन्त्येति । अङ्गेनेको विशेषणेन पुगन्ते[8]त्यादिनियमेन च तत्प्रयोजनसिद्धेरिति भावः ॥ अत्राहुरिति । अचा[9] विशेषिताङ्गेनेको विशेषणसंभवात्प्राप्येति[10] । गावावित्यादि त्वेष[11] न जानातीति भावः ॥

( विप्रतिषेधबाधकभाष्यम् )

नैष[12] युक्तो विप्रतिषेधः । "विप्रतिषेधे[13] परम्" इत्युच्यते । पूर्वश्चायं योगः, परो नियमः ॥

( प्रदीपः ) नैष युक्त इति । इष्टसिद्धये इत्यर्थः । यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यम्, न तु कार्यकालतायाम् ॥

( उद्योतः ) इष्टेति । इष्टसिद्धिफलकत्वमेव हि तस्य युक्तत्वमिति भावः ॥ न तु कार्येति । द्वयोरप्येकदेशस्थत्वेन परत्वासंभवादिति भावः ॥ वस्तुतः कार्यकालपक्षेऽपि पाणिन्युच्चारणरूपपाठकृतं परत्वमस्त्येव । अन्यथैकत्र प्रयोगरूपदेशे सर्वेषां मेलनेन परत्वस्योच्छेद एव स्यात् । प्रयोगसाधनफलकान्येव शास्त्राणि । न चैवं कार्यकालपक्षमादाय त्रिपाद्यामेषां प्रवृत्तिर्यथोद्देशे तु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेनाप्रवृत्तिरेव स्यात्-इति भाष्याद्युक्तं विरुध्येतेति वाच्यम् । परिभाषायाः[14] सिद्धत्वेन तत्पक्षेऽसिद्धेनापि कार्येण स्वार्थ तदाकर्षणसंभवादित्यष्टमे उपपादयिष्यमाणत्वात् । ध्वनितं चेदं तस्मिन्निति निर्दिष्ट इत्यत्र भाष्यकैयटयोरिति चिन्त्यमेतत् ॥

( विप्रतिषेधसाधकभाष्यम् )

इष्टवाची[15] परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥

( विप्रतिषेधबाधकभाष्यम् )

एवमप्ययुक्तो[16] विप्रतिषेधः । द्विकार्ययोगो[17] हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः ॥

( प्रदीपः ) द्विकार्ययोग इति । द्वाभ्यां कार्याभ्यां योगो यस्य स्थानिनः स विप्रतिषेधविषयत्वाद्विप्रतिषेधः ॥

( उद्योतः ) ननु द्विकार्ययोग इत्यस्य द्वाभ्यां कार्याभ्यामन्यस्य योग इत्यर्थः, उत द्वयोः परस्परेण योग इत्यर्थः ? उभयत्रापि त्रिपदतत्पुरुषो [18]दुर्लभः । [19]कर्मधारयपूर्वपदकोऽपि न, दिक्सङ्ख्ये इति नियमेन तस्य दुर्लभत्वादत आह—द्वाभ्यामित्यादि[20] ॥ अत्रापि पक्षे विप्रतिषेधशब्देन सामानाधिकरण्यानुपपत्तेराह—विप्रतिषेधेति॥

---

१ चयनमिति । सार्वधातुकार्धधातुकयोरित्यत्राङ्गस्येति स्थानषष्ठी अवयवषष्ठी वेति निर्णयस्य वाक्यार्थाधीनत्वात् गुणपदस्य च विधेयसमर्पकस्य पूर्वमप्यवगमात् इको गुणवृद्धीत्यनेनेक्पदोपस्थितावङ्गस्येत्यवयवषष्ठीनिर्णयेनालोऽन्त्यस्येत्यस्यानुपस्थानमिति इको गुणेत्यस्यावकाशः । एतदभिप्रायेणैव 'प्रयोजनाभावादनुपस्थानं' इत्युक्तं कैयटेन ॥

२ 'लावक इति' इति छ. पाठः । वस्तुतोऽत्रेतिशब्दोऽसङ्गतः । 'तत्र नियमस्यावकाश इत्यारभ्य मेद्यति मार्ष्टीति' इत्यन्त एकाभिप्रायको ग्रन्थः । तदन्ते 'इति'शब्दस्य विद्यमानत्वान्मध्ये तस्यानुपयोगः स्पष्ट एवेति ॥

३ विप्रतीति । पूर्वविप्रतीत्याशयः ॥ छाया ॥

४ अत्रेति । एतद्विषयके सार्वधातुकेत्यादावित्यर्थः ॥ छाया ॥

५ अत्रेगिति । एतद्विषयके 'अचो ञ्णिति' इत्यत्रेत्यर्थः ॥छा.॥

६ नेगिति । अनिगङ्गनिरासायेति भावः ॥ छाया ॥

७ युक्तमिति । मिथोनिरपेक्षयोस्तुल्यबलविरोधलक्षणो विप्रतिषेधो मिथ एकवाक्यतापन्नयोर्द्वयोर्न युक्त इति भावः ॥ छाया ॥

८ नन्वेवमनन्त्येऽतिप्रसङ्गापत्तिरत आह—पुगन्तेति । तदिति । अलोन्त्यपरिभाषेत्यर्थः ॥

९ अचेति । हलन्तनिरासायेति भावः ॥ छाया ॥

१० यत्तु 'चायक' इत्याद्यपि गुणावकाश एव, गौरित्यादौ सावकाशां वृद्धिं बाधित्वा परत्वात्तत्र स एवेति गुणस्यैव प्रवृत्तेः । अच इत्यत्र तत्सामर्थ्येनैतदनुपस्थानात् । गुणोत्तरमुपधावृद्ध्येष्टसिद्धेश्च-इति रत्नकृत् । तदयुक्तम्-इति ध्वनयितुमाह—प्रापेति ॥ छाया ॥

११ एष इति । असिद्धान्तित्वादिति भावः ॥ छाया ॥

१२ सिद्धान्ती विप्रतिषेधं दूषयति—नैष इति ॥ छाया ॥

१३ एकदेशी हेतुमाह—विप्रतीति ॥ छाया ॥

१४ 'परिभाषायां' इति घ. पाठः ॥

१५ विप्रतिषेधवादी आह—इष्टवाचीति ॥ अत्र चेदं भाष्यमेव मानम् ॥ छाया ॥

१६ सिद्धान्ती स्वोक्तं द्रढयति—एवमप्येति ॥ छाया ॥

१७ एकदेशी हेतुमाह—द्विकार्येति ॥ न चात्रेति । नहि मेद्यतीत्यादाविकारदकारान्यतरादिरूप इत्यर्थः ॥ छाया ॥

१८ दुर्लभ इति । विधायकाभावादिति भावः ॥ छाया ॥

१९ कर्मेति । विशेषणमितिसमासपूर्वपदकषष्ठीतत्पुरुष इत्यर्थः ॥ तस्येति । कर्मधारयस्यैवेत्यर्थः । न च तद्धितार्थोत्तरेति समाहारे द्विगुः, ङीप्प्रसङ्गात् । पात्रादित्वकल्पने मानाभावात् ॥ छाया ॥

२० द्वाभ्यामित्यादीति । तथा च त्रिपदव्यधिकरणबहुव्रीहिरगत्याऽऽश्रीयत इति भावः ॥ छाया ॥

( विप्रतिषेधसाधकभाष्यम् )

नावश्यं द्विकार्ययोग एव विप्रतिषेधः ॥

किं तर्हि ?

असंभवोऽपि । स चास्त्यत्रासंभवः ॥

कोऽसावसंभवः ?

इह तावत्—'वृक्षेभ्यः-प्लक्षेभ्यः' इति एकः स्थानी, द्वावादेशौ, न चास्ति संभवः-यदेकस्य स्थानिनो द्वावादेशौ स्याताम् । इहेदानीं—'मेद्यति, मेद्यतः, मेद्यन्ति' इति द्वौ स्थानिनौ, एक आदेशः, न चास्ति संभवः—यत् द्वयोः स्थानिनोरेक आदेशः स्यादित्येषोऽसंभवः । सत्येतस्मिन्नसंभवे युक्तो विप्रतिषेधः ॥

( प्रदीपः ) **नावश्यमिति** । द्विकार्ययोगत्वाभावे केवलोऽप्यसंभवो विप्रतिषेध इत्यर्थः ॥ **इह तावदिति** । दीर्घत्वं च यञ्यनन्तरे विधीयते, एत्वं झल्यनन्तरे । न च संभवोऽस्ति यत् द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं स्यात् ॥ **इहेदानीमिति** । मिदेरित्येका षष्ठी सा यद्यवयवसंबद्धा तदेकारस्य गुणेन भाव्यम्, अथ स्थानषष्ठी **तदाऽलोऽन्त्यस्येति** वचनादिकारस्येति । न चास्ति संभवो युगपदुभयोर्गुणस्येत्यर्थः ॥

( उद्योतः ) द्विकार्ययोगेऽप्यसंभवसत्त्वादाह—**केवलोऽपीति** । ननु 'आ-ए' इति 'ए-आ' इति वाऽऽदेशसंभवोऽस्त्येवेत्यत आह—**न चेति** ॥ **द्वयोरिति** । कार्ययोरित्यर्थः । अनन्तरे यञि दीर्घः साधुरनन्तरे झलि एत्वं साधुरित्यर्थ इति भावः ॥ **आद्गुण** इत्यादौ द्वयोः स्थानिनोरेकादेशस्य संभवादाह—**मिदेरिति** ॥ **न चास्ति संभवो युगपदिति** । युगपद्वाक्यार्थद्वयबोधाभावादिति भावः ॥

( विप्रतिषेधबाधकभाष्यम् )

एवमप्ययुक्तो विप्रतिषेधः । द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति । अनवकाशश्चायं योगः ॥

( विप्रतिषेधोपपादनस्मरणभाष्यम् )

ननु च—इदानीमेवास्यावकाशः प्रक्लृप्तः—चयनं चायको लवनं लावक इति ॥

( विप्रतिषेधबाधकभाष्यम् )

अत्रापि नियमः प्राप्नोति । नाप्राप्ते नियमेऽयं योग आरभ्यते । यावता च नाप्राप्ते नियमेऽयं योग आरभ्यते, ततस्तदपवादोऽयं योगो भवति । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः ॥

अथापि कथञ्चित् "इको गुणवृद्धी" इत्यस्यावकाशः स्यात् । एवमपि यथेह विप्रतिषेधादिको गुणो भवति-मेद्यति-मेद्यतः-मेद्यन्ति-इति, एवमिहापि स्यात्—अनेनिजुः-पर्यवेविषुरिति ॥

( प्रदीपः ) **एवमपीति** । यदीदं नारभ्येत गुणवृद्धी कस्य स्याताम्? **अलोऽन्त्यस्येति** चेत्, **येन नाप्राप्ति**न्यायेन तदर्थस्यापवादत्वाद्विप्रतिषेधानुपपत्तिरित्यर्थः । एवं च क्रोष्ट्रीयमतं-असंबद्धपरिभाषान्तरपक्षश्च नोपपद्यते ॥

( उद्योतः ) ननु उक्तरीत्या प्रयोजनाभावादलोऽन्त्यस्याप्रवृत्तौ "अत्रापि नियमः प्राप्नोति"इत्यसङ्गतमित्यत आह—**यदीदमिति** । एतदभावे संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सर्वत्राङ्गस्येति स्थानषष्ठ्येव । कृते त्वस्मिन्नवयवषष्ठी सेति भावः ॥ **अथापि कथंचिदिति** भाष्यस्य-उक्त एवाशयः । **क्रोष्ट्रीयमतं**-विप्रतिषेधः । **असंबद्धपरिभाषा**पक्षश्च तदुपजीव्यः । तत्र विप्रतिषेधरहितोऽन्त्यस्त्वयुक्त एव । क संनिपातः क्वान्यतरत्यागः स च कस्येत्यत्र विनिगमकाभावेन सर्वेष्टासिद्धेः । तस्माद् द्वयमप्येकपक्षभूतमेव बोध्यम् ॥

( इत्यसंबद्धपरिभाषापक्षनिरासाधिकरणम् ॥ )

( अथ सिद्धान्तभूतपदोपस्थितिपक्षनिरूपणम् )

( सिद्धान्तिभाष्यम् )

एवं तर्हि—वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयात् 'इकः' इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ॥

---

१ विप्रतिषेधवादी आह—**नावश्यमिति** ॥ न नियत इत्यर्थः ॥ **संभवोपीति** । केवलेत्यादिः ॥ छाया ॥

२ उक्तमेव दृष्टान्तपूर्वमसंभवद्वयं प्रतिपादयन् विशदयति—**इह तावदिति** ॥ छाया ॥

३ 'वयवसम्बन्धे' इति क. पाठः ।

४ सिद्धान्ती आह—**एवमप्ययुक्त इति** ॥ उक्तासंभवमात्रसत्त्वेपीत्यर्थः । तत्र हेतुमाह—**द्वयोर्हीति** । **संभवेति** । युगपदेकत्र प्राप्तयोरित्यर्थः ॥ छाया ॥

५ 'विप्रतिषेधः' इत्यस्य ख. घ. प. पुस्तके न पाठः ।

६ सिद्धान्ती दूषयति—**अत्रापीति** ॥ अफलत्वेऽपि पर्जन्यन्यायेनेति भावः ॥ छाया ॥ **अत्रापि नियम** इत्यादि भाष्यस्यायमाशयः—सार्वधातुकार्धधातुकयोरिति सूत्रे श्रूयमाणस्याङ्गस्येत्यस्य वाक्यार्थबोधानन्तरमिक्पदोपस्थानादवयवषष्ठ्यन्तत्वेऽपि इक्पदोपस्थितिकाले स्थानषष्ठ्यन्तत्वस्य प्रतीयमानत्वादलोऽन्त्यस्येत्यस्यात्रोपस्थितिरेवेति ॥ वस्तुतस्तु स्थानषष्ठीत्वस्य यावन्न निश्चयस्तावत्परिभाषाया अनुपस्थितिरेवेत्यभिप्रेत्य—**अथापि कथञ्चिदित्युच्यते** भाष्ये ॥

७ 'प्राप्नोति । यावता च नाप्राप्ते' इति छ. पाठः ।

८ 'आरभ्यतेऽतस्तद' इति छ. पाठः । 'आरभ्यते, तदप-' इति ख. पाठः ।

९ **कथंचिदिति** । अफलत्वान्नियमानुपस्थित्येत्यर्थः ॥ छाया ॥

१० **तत्रेति** । तयोर्द्वयोर्मध्य इत्यर्थः ॥ छाया ॥ **तयोः**-क्रोष्टीयमत-असम्बद्धपरिभाषापक्षयोः, **अन्त्यः**-प्रदीपे प्रदर्शितयोरन्त्यः, भाष्ये विप्रतिषेधावतरणत्वेन 'अन्यदेवेदं' इति पूर्वमुपात्तः ॥

११ एवञ्च क्रोष्ट्रीयेत्यादिकैयटग्रन्थेन पक्षद्वयमत्र प्रतीयते, वस्तुत उपजीव्योपजीवकत्वान्नानयोर्भिन्नत्वमिति निगमयति—**द्वयमप्येकेति** ॥

१२ अथ सिद्धान्ती निर्दुष्टं पक्षमाह—**एवं तर्हीति** ॥ छाया ॥

किं कृतं भवति ?

**द्वि[1]तीया षष्ठी प्रादुर्भाव्यते ॥ तत्र कामचारः—गृह्यमाणेन वेकं विशेषयितुम्, इका वा गृह्यमाणम् । याव[2]ता कामचारः, इह तावन्मिदिमृजिपुगन्तलघूपधर्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः—एतेषां य इगिति । इहेदानीं जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेषयिष्यामः—एतेषां गुणो भवति 'इकः' इगन्तानामिति ॥**

( प्रदीपः ) **एवं तर्हीति** । प्रदेशार्थत्वादनयोः परिभाषयोर्गुणत्वात्परस्परेण संबन्धाभावात् प्रदेशवाक्यपर्यालोचनया वाक्यार्थस्यावस्थानमित्यर्थः ॥

( उद्योतः ) **प्रदेशार्थत्वादिति । परस्परेण संबन्धाभावादित्यन्तेन** तच्छेषत्वासंभव उक्तः । पदोपस्थितिपक्षे च विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरस्या लिङ्गमित्येषाऽन्तरङ्गा । त[4]त्त्वेन ग्रहश्च प्रथमाया विधेयविभक्तित्वेन तदन्तत्वेन पदज्ञानकाल एव । तदुक्तं भाष्ये—**गुणो भवतीति यत्रेत्यादि** ॥ नियमस्तु स्थानषष्ठीलिङ्गक इति अवान्तरवाक्यार्थबोधोत्तरकालिकत्वेन बहिरङ्गः ॥ एवं च मिदादावुपस्थितेक्परिभाषायाः सामानाधिकरण्यासंभवाद्वैयधिकरण्यान्वये वृत्ते निमित्ताभावादेवा**लोऽन्त्यस्ये**त्यस्यानुपस्थितिः । **सार्वधातुकार्धधातुकयोरित्यादौ** सामानाधिकरण्यान्वयेऽलोन्त्यस्येत्यनेनान्त्यस्यादेशव्यवस्था ॥ एतेनैकस्या अप्रवृत्तौ अपराऽपि न प्रवर्तेतेत्यपास्तम् ॥ **पर्यालोचनयेति** । प्रदेशे सति संभवे परिभाषाद्वयैकवाक्यतया वाक्यार्थः । अन्यथा त्विक्परिभाषागर्भ एव, अस्या अन्तरङ्गत्वादित्यर्थः ॥

भाष्ये—**वृद्धिर्भवतीत्यादि** । ई[6]तिशब्दो यत्रेत्यर्थः ॥ **इक इत्येतदिति** । सूत्रे 'इकः' इति षष्ठ्यन्तानुकरणमित्यर्थः ॥ अनुवृत्तस्य स्वरूपपरत्वेन गुणशब्दो भवतीत्याद्यर्थः स्यादतः पुनरत्र गुणवृद्धिग्रहणम् । अनुवृत्तस्यार्थपरत्वं तु न, शब्दाधिकारापत्तेः । उभाभ्यां च गुणशब्दवान् गुणो यत्रेत्यादिरर्थः । तदुक्तं—**इति यत्रेत्यादि** । गुणपदं यत्र वर्तते इत्याद्यर्थस्तु न, **अतो गुण** इत्यादावप्यापत्तेः । भवतिक्रियाया अन्तरङ्गत्वाच्च । अस्मादेव गुणवृद्धिग्रहणादत्र 'विधीयते' इत्यस्य तदर्थकस्य भवतीत्यस्य वाऽध्याहार इति । एतन्मूलकमेवा**नुवादे परिभाषा नोपतिष्ठते** इति । अत एव तत्–एतद्विषयमेव, **अचश्चे**त्येतद्विषयमेव च । अ[7]चोऽञ्णितीत्यादौ तु वाक्यार्थबोधकाले श्रौतात्पदेनैवाकाङ्क्षाशान्तौ लिङ्गोपस्थितस्य दुर्बलतयाऽनन्वय इति दिक् ॥

( तच्छेषपक्षोक्तदूषणनिराकरणभाष्यम् )

**अथ[9]वा सर्वत्रैवात्र स्थानी निर्दिश्यते । इह तावत् 'मिदेः–'इत्यविभक्तिको निर्दे[10]शः—मिद् एः-मिदेः, मिदेरिति ॥ अथवा[11] षष्ठीसमासो भविष्यति—मिद इः–मिदिः, मिदेरिति ॥**

---

१ **द्वितीया षष्ठीति** । द्वितीयं षष्ठ्यन्तं पदं प्रादुर्भाव्यत इत्यर्थः ॥ छाया ॥

२ **यावतेति** । यतः कामचारः । 'अतः' इत्यग्रे शेषः ॥ छाया ॥

३ **एतेषामिति** । ह्रस्वाद्यभिप्रायेण बहुवचनम् । सूत्रभेदेनानुवृत्ताङ्गस्येत्यस्यापि भेदेन तदभिप्रायेण वा ॥ व्यधिकरणसंबन्धभ्रमनिरासाय प्रागुक्तं स्पष्टयति—**इगन्तानामिति** ॥ अत एव पूर्वं षष्ठ्यन्तस्येका संबन्धः प्रदर्शितः, अत्र गुणेन ॥ छाया ॥

४ **तत्त्वेन**–विधेयसमर्पकत्वेन । **चो** यत इत्यर्थे । असति बाधक इति शेषः ॥ **तदुक्तमिति** । तदभिप्रेत्योक्तमित्यर्थः । अन्यथा **'भवतीति यत्र ब्रूयात्'** इत्यस्यासंगतिः स्पष्टैव । मम तु 'भवति' इत्यनेन विधेयसमर्पकत्वम्, 'ब्रूयात्' इत्यनेन पदज्ञानकालिकत्वं बोधितमिति न तदसंगतिः ॥ छाया ॥

५ **द्वयैकेति** । परिभाषाद्वयस्य विधिवाक्येन सह वाक्यैकवाक्यतया पदैकवाक्यतया वेत्यर्थः ॥ छाया ॥

६ इतिशब्देन **'त्यदादीनाम'** इत्यादौ **'वृद्धिर्यस्या'** इत्यादौ च व्यावृत्तिः सूचितेत्याह—**इतिशब्दो यत्रेत्यर्थ इति** ॥ विधेयसमर्पकगुणादिशब्दो यत्रेत्यर्थबोधार्थं वाक्यस्येतिना परामर्श इत्यर्थः ॥ छाया ॥

७ नन्वेवं **'अचोञ्णिति'** इत्यादावप्युपस्थितिः स्यात्, गुणादिपदश्रवणात् । न च निर्दिष्टस्थानिकत्वान्न तथा, अच इत्यादेः स्थानित्वनिर्णयस्य वाक्यार्थबोधोत्तरकालिकत्वेन पूर्वमभावादत आह—**अच इति** ॥ आदिना **'अत उपधायाः'** इत्यादिपरिग्रहः ॥ छाया ॥

८ **'इमामगृभ्णन्रशनामृतस्य'** इति मन्त्रे रशनामात्रप्रकाशनसामर्थ्यरूपलिङ्गसत्त्वेऽपि **'इत्यश्वाभिधानीमादत्ते'** इति तदीयब्राह्मणे 'आदत्ते' इति लेट् विधायकः । इतिः—मन्त्रस्य करणत्वबोधकः । अश्वाभिधानीमिति द्वितीयाश्रुतिर्निरपेक्षव्याख्या साध्यत्वबोधिकेति तस्याः प्राबल्यादश्वरशनादाने तस्य विनियोगः, नोक्तलिङ्गेन तन्मात्रादान इति पूर्वमीमांसायां **"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्"** ( ३।३।१४ ) इति सूत्रे स्पष्टमित्यभिप्रेत्याह—**श्रौतेति** ॥ **शान्ताविति** । तयाऽनियमप्रसक्त्यभाव इति भावः ॥ **लिङ्गोपेति** । इक्पदोपस्थितिद्वारा तदर्थप्रकाशकगुणादिपदरूपलिङ्गोपस्थितस्येक इत्यस्येत्यर्थः ॥ **नन्वय इति** ॥ अर्थद्वारेति शेषः । जातेष्टान्वयबोधेन नैराकाङ्क्ष्यात् । तथाच फलाभावादपि न तथेति भावः ॥ छाया ॥

९ तच्छेषपक्षे वार्तिककृदुक्तदोषाः सर्वे मृजिदोषं विनाऽन्यथा सूद्धराः इति पक्षे न सर्वत्र दोषः किंतु मृजावेवेति यदि चायं तच्छेषपक्षसमर्पको ग्रन्थः स्यात्तदादौ तन्नामोल्लेखः स्यादुत तथोपसंहारश्च स्यात् । यतस्तस्य चर्चाऽप्यत्र न, अतस्तत्र न, अतस्तत्रातात्पर्यम् । किं च—प्रागुक्तरीत्या तदसंभव उक्त एव । अत एवासंबद्धानामेकवाक्यताऽपि दुर्लभा । किंच मिदादिषूक्तरीत्या बाधे जुसीत्यादावपि तदापत्तिः, निरवकाशत्वे 'विप्र–' इति सूत्राप्रवृत्तेः । अन्यथा मिदादावतिप्रसङ्गाच्च । वार्तिकमयुक्तमेवेति सूचयितुं वक्ष्यमाणसिद्धान्तं प्रतिपादयितुं पदोपस्थितिपक्षमेव गूढाशयेन समर्थयितुं गुरुभूतत्वेनैकदेश्युक्तपक्षान्तरमाह—**अथवेति । सर्वत्रैवात्रेति** । बहुष्वित्यर्थः । एवो व्युत्क्रमे । निर्दिश्यत एवेत्यर्थः ॥ तथाच 'इकः' इति तदर्थं तत्र न वक्तव्यमिति भावः ॥ छाया ॥

१० 'मिद एः मिदेः मिदेरिति' इति छ. ञ. पाठस्तत्राकार उच्चारणार्थ इत्याश्रयणीयम् ॥

११ लाघवादाह—**अथवेति** ॥ छाया ॥

पुगन्तलघूपधस्येति नैवं विज्ञायते—पुगन्ताङ्गस्य लघूपधस्य चेति ।

कथं तर्हि ?

पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधम्, पुगन्तलघूपधस्येति । अवश्यं चैतदेव विज्ञेयम्, अङ्गविशेषणे हि सतीह प्रसज्येत-भिनत्ति, छिनत्तीति ॥

[1]ऋच्छेरपि [2]प्रश्लिष्टनिर्देशोऽयम्—[3]ऋच्छति-ऋ-ऋ ऋताम्-"ऋच्छत्यृताम्" इति ॥

दृशेरपि योगविभागः करिष्यते—"उ[4]रङि गुणः" उः अङि गुणो भवति । ततो "दृशेः" दृशेश्चाङि गुणो भवति । उरित्येव ॥

[5]क्षिप्रक्षुद्रयोरपि "यणादिपरं गुणः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्—इको यथा स्यादनिको मा भूदिति ॥

( प्रदीपः ) अथवेति । तच्छेषपक्षोक्त[6]दोषपरिहारः । क्षिप्रक्षुद्रयोरपीति । अत्र च योगविभागः क्रियते—स्थूलादीनां यणादिपरं लुप्यते, ततः-पूर्वस्य च गुण इति । अत्र च [7]स्वरितत्वात् [8]क्षिप्रक्षुद्रावेवानुवर्तेते, स्थूलादयो निवृत्ताः, [9]तेषां तु यणादिलोपे सति 'ओर्गुणः' इति गुणो भवति । असिद्धवदत्राभादित्यसिद्धत्वमनित्यत्वान्न भवति । तत्र [10]क्षिप्रक्षुद्रयोर्यण आदिः पकारो दकारश्च, तस्माद्यणादेः परं लुप्यते तस्मादेव च यणादेः पूर्वस्य च गुण इति सिद्धम्—क्षेपिष्ठः क्षोदिष्ठ इति ॥ 'यणादिपरं'इति पञ्चमीसमासः ॥ [11]यदि तर्हि 'पुगन्तलघूपधस्य' इति स्थानी निर्दिश्यते तच्छेषपक्षाश्रयणाच्चात्रेक्परिभाषा नोपतिष्ठते तदाऽस्य गुणस्यानिग्लक्षणत्वात् भिन्नमित्यादौ 'क्ङिति च' इति निषेधो न प्राप्नोति । यथा-लैगवायन इति ॥ नैष दोषः, क्नुसनोः कित्त्वविधानात् ज्ञापकादनिग्लक्षणत्वेऽपि लघूपधगुणस्य प्रतिषेधो भविष्यति ॥

( उद्योतः ) ( भाष्ये ) पुकि अन्त इति । सुप्सुपेति समासः । भिनत्तीत्यत्र गुणापादनं क्ङितीत्यस्य निमित्तसप्तमीत्वात् । इकः सार्वधातुकार्धधातुकयोरिति विशेषणमिति तु न युक्तम्, तस्याङ्गांशे उत्थिताकाङ्क्षत्वात् ॥ भाष्ये-[12]यणादिपरं गुण इति । यणादिपरं लुप्यतेऽवशिष्टस्य गुण इत्यर्थेन क्षिप्रादेः सर्वादेशो गुणः सिद्धः । स्थूलादौ तु ओर्गुण इत्येव सिद्धमिति भावः ॥ ननु पूर्वस्येत्युक्तावपि 'यणपेक्षादेः परं' इत्यर्थे पूर्वस्य गुण इत्यनेनापि तत एव पूर्वस्य गुणापत्तौ स्थूलादिषु थकारादेर्गुणः स्यात् । यण् आदिर्यस्य तद्रूपं परं लुप्यते ततः पूर्वस्य च गुण इत्यर्थे क्षिप्रक्षुद्रयोरन्त्यस्य व्यञ्जनस्य गुणः स्यादत आह—अत्र चेति ॥ अनित्यत्वादिति । आसन्नित्यत्र [13]लोपनिवृत्त्यर्थात् श्नसोरल्लोप इति तपरकरणादित्यर्थः । तथा हि-अस् अन्तीति स्थिते परत्वादल्लोपे तस्यासिद्धत्वात्पुनः प्रसङ्गेनाटि वि[14]कारान्यानुपूर्व्यैक्याभावेन लक्ष्ये लक्षणस्येति न्यायाप्राप्तौ [15]प्राप्तलोपवारणार्थं तपरत्वमाटोऽसिद्धत्वे व्यर्थं सत्तदनित्यत्वे ज्ञापकम् । न चाटोऽप्यना[16]पत्तिः, त[17]त्रानित्यत्वे मानाभावात् ॥ तस्मादेव चेति । पूर्वत्वस्यावध्याकाङ्क्षायां परत्वेऽवधित्वेन क्लृप्त-

१ ऋच्छेरपीति । 'स्थानी निर्दिष्टः । यतः' इति शेषः ॥ एवमेव 'दृशेरपि' इत्यत्र बोध्यः ॥ छाया ॥

२ द्वयोर्ऋतोर्दीर्घस्य चेति त्रयाणां प्रश्लिष्टनिर्देशः । तद्यथा—आ च ऋतश्च-ऋतः, ऋच्छतेरा-ऋच्छत्या स च ऋतश्च तेषामिति षष्ठीतत्पुरुषद्वन्द्वोभयगर्भो द्वन्द्वः । ऋच्छत्या च आ च ऋतश्चेति त्रिपदद्वन्द्वो वा ॥ वस्तुतस्तु चतुर्णामिह प्रश्लेषो बोध्यः । तेनारिवान् सर्वा ऋणान्यारुणीत्यादावर्तेः कसौ गुणः सिद्धः । पुनर्विधानसामर्थ्यात् । अन्यथा कसोः कित्करणसामर्थ्यात्तितीर्वानित्यत्रेव गुणो निषिध्येत—इति प्रकृतसूत्रे शब्दकौस्तुभे प्रकृतसूत्रे उद्द्योते कृत्प्रक्रियायां शब्दरत्ने च स्पष्टम् ॥ ( दा. म. )

३ 'ऋच्छति ऋ ऋतां' इत्येव प. पाठः ॥

४ 'ऋदृशः' इति समाहारद्वन्द्वान्ते श्रूयमाणषष्ठ्याः प्रत्येकं संबन्धमभिप्रेत्याह—उरङि गुण इति । ततो दृश इति च-इति ॥ छाया ॥

५ क्षिप्रक्षुद्रयोरपीति । 'सिद्धम् । यतः' इति शेषः ॥ छाया ॥

६ दोषेति । मृजिभिन्ने इत्यादिः ॥ छाया ॥

७ स्वरितेति । एकदेशे उभयत्रेति भावः ॥ छाया ॥

८ 'क्षिप्रक्षुद्रशब्दावेवा' इति झ. पाठः ॥

९ नन्वेवं तेषां गुणासंबन्धे स्थवीयानित्यादेः कथं सिद्धिरत आह—तेषां त्विति ॥ छाया ॥

१० तयोरेवानुवृत्तौ पूर्वत्वेऽवधिं प्रदर्शयितुं पूर्ववाक्यार्थैकदेशमनुवदति—क्षिप्रेति ॥ परं-विशिष्टं वर्णरूपं वा । चो वाक्यालंकारे ॥ छाया ॥

११ ननु तच्छेषपक्षे पुगन्तेत्यत्र स्थानिनिर्देशार्थत्वानावश्यकत्वेऽपि निषेधप्रवृत्त्यर्थं तदर्थमपि परिभाषावश्यकत्वमिति क्षिप्राद्यंशवत्पुगन्तलघूपधांशेऽपि वार्तिकमयुक्तमिति शङ्कते—यदि तर्हीति ॥ छाया ॥

१२ अनुवृत्त्यर्थचकाराणां सर्वेषां प्रत्याख्यानादाह—यणादिपरं गुण इतीति ॥ अयं भावः—यणादीति पृथक् पदम् । षष्ठ्यर्थे प्रथमा । बहुव्रीहिश्च । शब्दस्वरूपं विशेष्यम् । परमिति तु युवह्रस्वशब्दयोः पूर्वेणापि तयोः सत्त्वेन तत्रानतिप्रसङ्गाय । आदेः परस्येति तु न, आदिग्रहणवैयर्थ्यापत्तेः । न च टिलोपेनैव सिद्धे तद्व्यर्थमेवेति वाच्यम् । सिद्धान्ते तस्यानावश्यकत्वात् । तथाचावशिष्टस्य गुण इत्यर्थाल्लब्धमिति ॥ छाया ॥

१३ लोपेति । आट इत्यादि ॥ छाया ॥

१४ विकारान्येति । आगमसत्त्वेन विकाराभावादानुपूर्वीत्यर्थः ॥ छाया ॥

१५ प्राप्तेति । आट इत्यादिः ॥ छाया ॥

१६ नापत्तिरिति । प्राप्त्यभावापत्तिरित्यर्थः ॥ छाया ॥

१७ तत्रेति । आटीत्यर्थः । ज्ञापकस्य विशेषापेक्षत्वात् । अन्यथा तस्य तद्वारणाय कृतस्यानर्थक्यापत्तिरिति भावः ॥ छाया ॥

त्वादुपस्थितत्वाच्च तस्यैवावधित्वमिति भावः ॥ तद्ध्वनयन्व्याचष्टे- **पञ्चमीसमास इति** । सुप्सुपेत्यनेन । अवयवभूते यणादीत्यत्र समुदिते चेत्यर्थः । न चैवं ह्रस्वशब्दे रस्वशब्दस्यापि लोपापत्तिः, स्थूलादिसाहचर्येणोपान्त्ययणादेः परस्यैव लोपादित्याहुः ॥ **पक्षाश्रयणाच्चेति** । परिभाषाणामनियमे नियमकारिणीत्वाच्चेत्यपि बोध्यम् । एवं 'क्ष्मापयति' इत्यादौ **पुगन्तेति** गुणे उपधावृद्धिरिति न दोषः ॥ **क्सनोरिति** । एतत्क्ङिति चेति सूत्रे उपपादयिष्यते ॥

( वृद्धिपदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ वृद्धिग्रहणं किमर्थम् ?**

( उद्द्योतः ) भाष्ये शङ्कते—**अथ वृद्धिग्रहणमिति** ॥

( प्रत्याक्षेपभाष्यम् )

**किं विशेषेण वृद्धिग्रहणं चोद्यते, न पुनर्गुणग्रहणमपि । यदि किंचिद्गुणग्रहणस्य प्रयोजनमस्ति, वृद्धिग्रहणस्यापि तद्भवितुमर्हति । को वा विशेषः ?**

( प्रत्याक्षेपसमाधानभाष्यम् )

**अयमस्ति विशेषः—गुणविधौ न क्वचित्स्थानी निर्दिश्यते, तत्रावश्यं स्थानिनिर्देशार्थं गुणग्रहणं कर्तव्यम् । वृद्धिविधौ पुनः सर्वत्रैव स्थानी निर्दिश्यते—"अचो ञ्णिति" "अत उपधायाः" "तद्धितेष्वचामादेः" इति ॥**

( प्रदीपः ) **गुणविधाविति** । क्वचिन्न निर्दिश्यत इति नञो व्यवहितेन संबन्धः । क्वचिद्धि निर्दिश्यत एव—**ओर्गुण** इत्यादौ ॥

( उद्द्योतः ) 'न क्वचित्स्थानी निर्दिश्यते' इत्युक्त्या—सर्वत्रैव न निर्दिश्यते–इति प्रतीयते, क्वचिदादिपदप्राग्वर्तिनञः क्वचिदादिपदबोध्याधिकरणादौ सर्वत्राभावप्रतीतेर्व्युत्पत्तिसिद्धत्वात् । तच्चायुक्तमत आह—**क्वचिदिति** ॥

( समाधानभाष्यम् )

**अत उत्तरं पठति—**

( ८० सिद्धान्तिसमाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वृद्धिग्रहणमुत्तरार्थम् ॥ * ॥**

( भाष्यम् )

**वृद्धिग्रहणं क्रियते । किमर्थम् ? उत्तरार्थम् । "क्ङिति" इति प्रतिषेधं वक्ष्यति, स वृद्धेरपि यथा स्यात् ॥**

( उद्द्योतः ) भाष्ये सिद्धान्त्याह—**वृद्धिग्रहणमुत्तरार्थमिति**॥

( पूर्वपक्षिण आक्षेपभाष्यम् )

**कश्चेदानीं क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः । यावता "ञ्णिति" इत्युच्यते ?**

( उद्द्योतः ) पूर्वपक्ष्याह—**कश्चेत्यादि** ॥

( वृद्धिग्रहणप्रयोजनभाष्यम् )

***तच्च मृज्यर्थम्* ।**

( भाष्यम् )

**मृजेर्वृद्धिरविशेषेणोच्यते । सा क्ङिति मा भूत्—मृष्टः-मृष्टवानिति ॥**

( उद्द्योतः ) **अविशेषेणोच्यते । सा क्ङितीति** । प्रत्ययविशेषानाश्रयणमत्राविशेषः

---

१ **उपस्थीति** । तस्य विशेष्यत्वेन द्रागुपस्थितत्वादिति भावः ॥ छाया ॥

२ **आहुरिति** । एतत्सूचितारुचिबीजं तु साहचर्यस्यानित्यत्वेनाप्रवृत्तावत्र दोष एवेत्येतदर्थाश्रयणेन परिभाषाप्रत्याख्यानमयुक्तमेवेत्यावश्यकपरिभाषैव युक्तेति प्रागुक्तबहुव्रीह्यादिकमेव युक्तमिति भाष्यमेकदेश्युक्तिरेवेति ॥ छाया ॥

३ ननु तच्छेषपक्षाश्रयणादेतदनुपस्थितौ तथा स्थानिनिर्देश इति कथं तन्निर्देशोत्तरमेव तदनुपस्थितौ तस्य हेतुत्वमत आह—**परीति** ॥छा.॥

४ **शङ्कत इति** । यद्यपीग्ग्रहणं किमर्थमित्यादिना गुणग्रहणवद्वृद्धिग्रहणस्यापि प्रयोजनमुक्तमेवेति **'वृद्धिग्रहणमुत्तरार्थम्'** इत्यादिवार्तिकासंगतिः, तथापि **'अथवा–'** इत्यादिना कृततच्छेषपक्षोक्तदोषोद्धारमध्ये क्रमप्राप्तमृज्यंशदोषस्यानुद्धारेण तस्य दुरुद्धरत्वसूचनभ्रमस्य निरासद्वारा 'तस्य पक्षस्य दुष्टत्वमेव' इति गूढतात्पर्यमाविष्कर्तुं तदुद्धारप्रकारस्य संभावितस्य **'स्वरूपाऽयाक्रियैव पराक्रिया'** इति न्यायेन गुरुभूतत्वेनैकदेश्युक्तित्वं ध्वनयितुं पूर्वं गुणांशे एव प्रतिपादनेन 'तदर्थमेवेदं सूत्रं न वृद्ध्यंशे' इति भ्रममपाकर्तुं यदर्थम् **'अथवा–'** इत्याद्युक्तं तत्प्रतिपादयितुं कंचिद्विशेषं गुणग्रहणतो वृद्धिग्रहणे प्रतिपादयितुं सिद्धान्तभूतनिर्दुष्टपदोपस्थितिपक्षकथनोत्तरम् **'अथवा–'** इत्यादिना तत्पक्षोज्जीवनप्रकाराभासोट्टङ्कनम् 'एतद्वार्तिकोक्तसिद्धान्तस्य पूर्ववार्तिकायुक्तत्वादेश्च प्रतिपादनायैव, न तु तत्पक्षस्य निर्दुष्टत्वप्रतिपादनाय' इति ध्वनयितुं 'नायं तच्छेषः' इति प्रागुक्ति सिद्धान्तयितुं च पुनःप्रवृत्तवार्तिकमुत्थापयितुमित्यादिः ॥ छाया ॥

५ **सर्वत्रेति** । बहुष्वित्यर्थः । तेन **सिचि वृद्धिरित्यादौ** तदनिर्देशेऽपि न क्षतिः ॥ छाया ॥

६ 'किमर्थं' इत्यस्य प. पुस्तके न पाठः ॥

७ इदानीमित्यस्यार्थमाह—**यावतेति** ॥ छाया ॥

८ एकदेशी आह—**तच्च मृज्यर्थमिति** । इदं **वृद्धिग्रहणमिति** वार्तिकस्यैव शेषभूतखण्डमित्यन्ये ॥ भाष्यकारवचनमित्यपरे ॥ छाया ॥ प्राचीनपुस्तकेषु वार्तिकत्वेनास्यानुपलम्भाद्भाष्यमेवैतत् । प. पुस्तके 'तच्च' इत्यस्य न पाठः ॥

९ वृद्धिग्रहणं **मृजेर्वृद्धिरितिप्राप्तवृद्धेः** क्ङितीतिनिषेधार्थमिग्लक्षणत्वसंपादनार्थमित्यर्थः । तदाह—**मृजेरिति** ॥ छाया ॥

१० ननु धातुना प्रत्ययसामान्याक्षेपादविशेषेणेत्ययुक्तमत आह—**प्रत्ययविशेषेति** ॥ छाया ॥

( प्रयोजनभाष्यम् )

***इहार्थं चापि***

**मृज्यर्थं वृद्धिग्रहणं कर्तव्यम् । मृजेर्वृद्धिरविशेषेणोच्यते । सेको यथा स्यात्, अनिको मा भूदिति ॥**

( प्रदीपः ) **मृजेर्वृद्धिरिति** । तत्र हि सूत्रेऽभिमतस्थान्यनुपादानादलोऽन्त्यपरिभाषयाऽन्त्यस्यैव स्यादित्यर्थः ॥

( उद्योतः ) उत्तरस्याविशेषेणेत्यस्य स्थानिविशेषानुच्चारणेनेत्यर्थः । तदाह—तत्र हि सूत्र इति ॥

( प्रयोजननिरसनभाष्यवार्तिकम् )

***मृज्यर्थमिति चेद्योगविभागात्सिद्धम्***

( भाष्यम् )

**मृज्यर्थमिति चेद्योगविभागः करिष्यते—"मृजेर्वृद्धिरचः" । ततः—"क्ङिति" ञिति णिति च वृद्धिर्भवति, 'अचः' इत्येव ॥**

( आक्षेपभाष्यम् )

**यद्यचो वृद्धिरुच्यते, 'न्यमार्ट्' अटोऽपि वृद्धिः प्राप्नोति ॥**

( प्रदीपः ) **अटोऽपीति** । नन्वडागमात्पूर्वमेव परत्वाद्वृद्धिर्भविष्यति, लक्षणस्य च प्रवृत्तत्वादटि कृते पुनर्लक्षणं न प्रवर्तिष्यते ॥ एवं तर्हि विप्रतिषेधानपेक्षयैवात्र चोद्यपरिहारावुक्तौ ॥

( उद्योतः ) अडागमात्पूर्वमिति । लादेशेषु कृतेष्वडिति पक्षे—इदम् ॥ अटि कृते इति । विकारान्यानुपूर्व्या भेदेन लक्ष्यभेदाच्चिन्त्यमिदम् । परत्वादित्यपि चिन्त्यं, द्वयोर्यौगपद्यासंभवात् ॥ एवं तर्हीति । लँवस्थायामडिति पक्षे—इति भावः ॥

( एकदेशिनः समाधानभाष्यम् )

***अटि चोक्तम्***

**किमुक्तम् ?**

**'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवति' इति ॥**

( उद्योतः ) भाष्ये—अनन्त्यविकारे इति । तयाऽपि सिध्यतीत्यभिमानः ॥ सिद्धान्ते त्वन्यार्थमिग्ग्रहणे कृते तेनैवाटो व्यावृत्तिसिद्धौ सा नैतदर्थेति ष्यङ इति सूत्रे वक्ष्यत इति न विरोधः ॥

( ८१ सिद्धान्तवार्तिकम् ॥ २ ॥ )

**॥ * ॥ वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् ॥ * ॥**

( भाष्यम् )

**वृद्धेस्तु प्रतिषेधो नोपपद्यते ।**

**किं कारणम् ?**

**इक्प्रकरणात् । इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैवं सति मृजेरिग्लक्षणा वृद्धिर्भवति । तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या ॥**

---

१ ननु वक्ष्यमाणरीत्या नोत्तरार्थत्वमतो वार्तिककृदेवाह—**इहार्थं चापीति** ॥ अनिकः स्थानितानिरासायैवेह सफलमित्यर्थः ॥ अपिना पूर्वसमुच्चयः । वक्ष्यमाणयुक्तेरेकदेश्युक्तित्वात् ॥ तद्व्याचष्टे—**इहार्थं चापीति** ॥ छाया ॥ छायादर्शनात् 'इहार्थश्चापि' इति वार्तिकमपीति प्रतीयते, तथापि प्राचीनपुस्तकानामेकस्मिन्नपि तादृशस्य द्विरावृत्तपाठस्य दर्शनाभावेन नैतद्वार्तिकमिति निश्चीयते ॥

२ **अनिक इति** । अन्त्यस्येत्यर्थः ॥ पदोपस्थितिपक्षे तच्छेषपक्षे चेह वृद्धिग्रहणाभावे स्थानषष्ठीसत्त्वेनालोऽन्त्यस्येत्यस्य दुर्वारत्वात् ॥ छाया ॥

३ पूर्वत्र '**अत्र**' इत्युक्तत्वादाह—**उत्तरस्येति** । द्वितीयस्येत्यर्थः । अन्यथा तदुक्तेर्वैयर्थ्यमिति भावः ॥ छाया ॥

४ एवं फलद्वये श्रुते सिद्धान्त्येकदेशी द्वितीयं फलं प्रत्यासत्त्या व्युत्क्रमेण खण्डयति—**मृज्यर्थमिति** ॥ इहार्थमित्यादिः ॥ छाया ॥

५ पूर्वपक्ष्याह—**यद्यच इति** ॥ इति छाया ॥

६ 'भविष्यतीति लक्ष्ये' इति झ. पाठः ॥

७ **लावस्थायामिति** । 'मयतेरिदन्यतरस्याँलुङ्लङ्लङ्क्ष्वडुदात्तः' इति संहितापाठे द्विलकारनिर्देशस्य विवक्षयेति भावः ॥ छाया ॥

८ अनन्त्यविकार इति परिभाषया सिद्ध्यतीत्यस्याभिमानत्वमुपपादयति—**सिद्धान्ते त्विति** । ष्यङः सम्प्रसारणं ( ६।१।१३ ) इति सूत्रे भाष्ये 'न्यमार्ट्' इत्यत्राटो वृद्धिप्राप्तिमनन्त्यविकार इति प्रतिषिध्य 'यथापरिभाषितमिक एव वृद्धिर्भविष्यति' इति सिद्धान्तिना समाधीयते । अतोऽयमभिमान एकदेशिनः ॥

९ **वृद्धीति** । इक्परिभाषायां वृद्धिग्रहणाभावे मृजेर्वृद्धिरिग्लक्षणा न भवति । 'क्ङिति च' इति निषेधस्तु इग्लक्षणयोरेव गुणवृद्ध्योः । तत्र हेतुः—इक् प्रकरणात् इति । तथा च 'मृष्टवान्' इत्यादौ 'क्ङिति च' इति वृद्धिप्रतिषेधानुपपत्तिरित्यर्थः ॥

१० मुद्रितपुस्तकेषु 'प्रकरणात् तस्मादिग्लक्षणा वृद्धिः' इति वार्तिकपाठोऽत्र दृश्यते वार्तिकविषयोपसंहारे पुनः 'तस्मादिग्लक्षणा वृद्धिः' इति पाठो दृश्यते ॥ अन्त्यः पाठः प्रामाणिकपुस्तकेषु न दृश्यते ॥

११ यद्यपि पूर्वं फलयोर्व्युत्क्रमेणोक्तिर्वार्तिककृतोऽनुचिता, तथाप्युत्तरार्थतां विनेहार्थत्वमपि दुर्वचमित्यभिप्रायेण तथोक्तम् । अथैकदेशिना योगविभागेनेहार्थत्वे खण्डिते इहार्थत्वाभावे उत्तरार्थत्वमपि त्वदुक्तमनुपपन्नमिति मृष्ट इत्यादौ दोष एवेत्याह—**वृद्धिप्रेति** ॥ यथाश्रुतोक्तेरफलत्वादन्यथा वार्तिकं व्याचष्टे—**वृद्धेस्त्विति** ॥ छाया ॥

१२ अविशेषेण श्रुताया अपि निषेधश्रुतेः—लैगवायनः कामयते इत्याद्यनुरोधेन स्थानिनियामकेक्परिभाषोत्तरमेव पठितायाः संकोचावश्यकत्वेनेक इति पदस्यार्थाधिकाराच्छन्दपरस्य प्रक्रमात्प्रस्तावादित्यर्थः । तथा सति 'इक इति ये गुणवृद्धी ते न स्तः' इति तदर्थ इत्याह—**इग्लक्षणयोरिति** ॥ सिद्धान्ती सर्वथा पर्यवसितमुपसंहरति—**तस्मादिति** ॥ छाया ॥

१३ **एवं सति**—इक्परिभाषायां वृद्धिग्रहणाभावे सति ॥

( उद्द्योतः ) तस्मान्मृजेरिगिति । निषेधस्य सिद्धये योगविभागमकृत्वा स्थानिसमर्पणायास्या एवोपस्थितिरङ्गीकार्येति भावः ॥

( इक्परिभाषानुपस्थितिसूचकभाष्यम् )

**एवं तर्हि—इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते—परिमृजन्ति, परिमार्जन्ति, परिमम्मृजतुः, परिममार्जतुः—इत्याद्यर्थम्। तदिहापि साध्यम्। तस्मिन् साध्ये योगविभागः करिष्यते—"मृजेर्वृद्धिरचः" भवति ॥**

**ततः—"अचि क्ङिति" अजादौ च क्ङिति मृजेर्वृद्धिर्भवति। परिमार्जन्ति, परिमार्जन्तु।**

**किमर्थमिदम् ?**

**नियमार्थम्-अजादावेव क्ङिति, नान्यत्र।**

**क्वान्यत्र मा भूत् ?**

**मृष्टः, मृष्टवानिति।**

**ततः—"वा", वाऽचि क्ङिति मृजेर्वृद्धिर्भवति। परिमृजन्ति, परिमार्जन्ति, परिमम्मृजतुः, परिममार्जतुरिति ॥**

( उद्द्योतः ) **संक्रम इति**। गुणवृद्धिप्रतिषेधविषयक्ङितः प्राचां संज्ञा। **'अचि'** इत्येव वचनम्। 'आदौ' इति तु तदादिपरिभाषालब्धार्थानुवादः। अत एवाग्रे वक्ष्यति—**ततोऽचि क्ङितीति**। एवं च 'ममृजे-यूयं ममृज' इत्यादौ विकल्पो भवत्येव ॥ एतेनादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिः, तेन पूर्वोदाहृतेषु न वृद्धिरिति हरदत्तोक्तमपास्तम् ॥ तुन्दपरिमृज इत्यत्र यदि वृद्ध्यभाव इष्टस्तर्हि व्यवस्थितविभाषया नेति बोध्यम् ॥ **अजादावेवेति**। विपरीतनियमस्तु न, इष्टानुरोधात् ॥

( प्रयोजनान्तरसूचकभाष्यम् )

**इहार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते, सेको यथा स्यात्, अनिको मा भूदिति ॥**

( उद्द्योतः ) सिचि वृद्धौ स्थानिविशेषानाश्रयणरूपोऽविशेषः। उत्तरार्थत्वे खण्डिते सिद्धान्त्याह—**इहार्थमेवेति** ॥

( प्रयोजनाक्षेपभाष्यम् )

**कस्य पुनरनिकः प्राप्नोति ?**

( उद्द्योतः ) तत् खण्डयति पूर्वपक्षी—**कस्य पुनरित्यादि** ॥

( समाधानभाष्यम् )

**अकारस्य। अचिकीर्षीत्, अजिहीर्षीत् ॥**

( प्रत्याक्षेपभाष्यम् )

**नैतदस्ति। लोपोऽत्र बाधको भविष्यति ॥**

( प्रदीपः ) **अचिकीर्षीदिति**। पूर्वविप्रतिषेधादतो लोपः, यथा-चिकीर्षक इति ॥

( उद्द्योतः ) **पूर्वविप्रतिषेधेति**। **ण्यल्लोपावियङ्यिण्गुण**वृद्धिभ्यः...इत्यादिः ॥ **चिकीर्षक इति**। अन्यथा ह्यत्र परत्वाद्वृद्धौ युकि चिकीर्षायक इति स्यात् ॥

---

१ एवेन गुरुभूतनियमादिनिरासः ॥ अन्यथा 'स्थानिसमर्पणाय' इत्यस्याधिक्यं स्पष्टमेवेति बोध्यम् ॥ छाया ॥

२ अथ **'तस्माद्'** इति ग्रन्थस्योक्ताशयमजानान एकदेशी द्वितीयफलमपि खण्डयति—**'एवं तर्हीति'** ॥ यद्वा सिद्धान्त्येवोक्तग्रन्थस्य तथाशयनिरासपूर्वकोक्ताशयप्रतिपादनार्थमाह—**एवं तर्हीति** ॥ **इहेति**। मृजिविषये इत्यर्थः ॥ छाया ॥

३ 'हापि नः साध्यं' इति क. ख. पाठः ॥

४ यदनन्तरं वचनपाठ इष्टस्तदभ्युपेत्याह—**मृजेरिति** ॥ **'अचि क्ङिति वा'** इत्यपूर्ववचनयोगस्य विभागं दर्शयति—**तत इति** ॥ विभक्तं व्याचष्टे—**अजादाविति** ॥ छाया ॥

५ **इति**योगविभागेन व्याख्यानसमाप्तौ। तथा च तदर्थकृतापूर्ववचनस्य विभज्य व्याख्यानेनैव तावन्मात्रेष्टसिद्धिरिति न तावन्मात्रं फलम्, किं तूक्तमपीति भावः ॥ छाया ॥

६ **'अपेक्षातोऽधिकाराः'** इति न्यायेन **'आतो ङितः'** इत्यतो विभक्तिविपरिणतस्य ङितः इत्यस्य **'अचि र ऋतः'** इत्यतोऽचीत्यस्य **'जराया-'**इत्यतोऽन्यतरस्यामित्यस्यानुवृत्त्या **'क्ङिति च'** इत्यस्यापकर्षेण च तादृशार्थलाभ इति वदत्सु असंगतिं सूचयन्नाह—**अचीत्येवेति**। **'अचि क्ङिति वा'** इत्येत्रापूर्वं वचनं **'मृजेः'** इति सूत्रादग्रे पाठ्यमित्यर्थः। अत एव **"साध्यम्"** इत्येतद्घटितभाष्यसंगतिः। **साध्यमित्यस्य** चापूर्वं कार्यमित्यर्थः। **एवेन** आदिपदव्यावृत्तिर्न क्ङितीत्यादेः। तदाह—**आदाविति त्विति** ॥ छाया ॥

७ भाष्याक्षरस्वारस्यमत्रैवेत्याह—**अत एवेति**। तद्व्याख्याने च **'अजादौ क्ङिति'** इति वक्ष्यते चेत्यपि बोध्यम् ॥ छाया ॥

८ **एवं च**-आदिग्रहणस्य यस्मिन्निति परिभाषालब्धार्थानुवादत्वात्सामर्थ्याभावे च। ममृजे-कर्मणि लिट्, ममृज-मध्यमबहुवचनम्। अत्रादेशे सत्येवाजादित्वं न तु ततः प्रागिति मुख्याजादित्वाभावः ॥

९ **यदीति**। अनेन वस्तुतो वृद्धिरिष्टैवेति सूचितम्। एतेन तासां परिगणनादिदं चिन्त्यमित्यपास्तम् ॥ छाया ॥

१० उभयार्थत्वे गूढाशयेन स्थापिते सिद्धान्ती अन्यार्थत्वमप्याह—**इहार्थमिति**। एवोऽप्यर्थे ॥ **सिजर्थमिति**। सिज्निमित्तकवृद्धेरिक्स्थानिकत्वसंपत्त्यर्थमपीत्यर्थः ॥ छाया ॥ **इहार्थमिति**। इहार्थमेवेत्यस्य व्याख्यानं-सिजर्थमिति। अथवा—**इहार्थं**-'इको गुणवृद्धी' इति सूत्रेऽनिर्दिष्टस्थानिका वृद्धिरिक एव स्थाने यथा स्यादित्येवमर्थमित्यर्थः। तस्य प्रयोजनमाह—**सिर्थजमि**त्यादि वदन्ति ॥

११ उत्तरार्थत्वेऽपि **मृजर्थे तस्मादिति**ग्रन्थ**ाशया**नभिज्ञेनैकदेशिना गुरुभूतप्रकारेण खण्डिते सिद्धान्तप्रतिपादनं सर्वथा निर्बाधमेवेत्याशयेन तमनुद्भाव्य तदभ्युपेत्यैवान्यत्रापि फलसत्त्वादेतदावश्यकत्वं प्रतिपादयन्पूर्ववार्तिकद्वयं व्युत्क्रमेणान्यथा योजयन्नपरिहार्यत्वं ध्वनयन्स्वसिद्धान्तमाहेत्यर्थः ॥ छाया ॥

१२ **अकारस्य**—सनोऽकारस्य ॥

१३ **'लोपोऽत्र'** इति भाष्यार्थं प्रतिपादयन् पूर्वपक्षस्य प्रतीकं धृत्वा परिहारग्रन्थार्थमाह—**पूर्वेति** ॥ एवमग्रेऽपि बोध्यम्। वृद्धेरिग्लक्षणत्वे स्वीकृतेऽस्वीकृते चैतदावश्यकमिति सूचयन्नाह—**यथेति** ॥ छाया ॥

१४ **अन्यथेति**। वृद्धेरिग्लक्षणत्वमङ्गीकृत्य पूर्वविप्रतिषेधानङ्गीकार इत्यर्थः ॥ छाया ॥

( प्रयोजनभाष्यम् )

**आकारस्य तर्हि प्राप्नोति—अयासीत्, अवासीत् ॥**

( प्रयोजनाक्षेपभाष्यम् )

**नास्त्यत्र विशेषः, सत्यां वृद्धावसत्यां वा ॥**

( प्रदीपः ) **अयासीदिति** । परत्वादत्र सगिटोः कृतयोरनन्त्यत्वादाकारस्य नास्ति वृद्धिप्रसङ्ग इति यद्यपि परिहारोऽस्ति, तथापि विशेषाभावेन परिहृतत्वान्नायमाश्रितः ॥

( उद्द्योतः ) **परत्वादत्रेति** । अपवादत्वादित्यर्थः । परशब्द उत्कृष्टवाची ॥

( समाधानभाष्यम् )

**संध्यक्षरस्य तर्हि प्राप्नोति ॥**

**नैव संध्यक्षरमन्त्यमस्ति ॥**

( उद्द्योतः ) भाष्ये—**नैव सन्ध्यक्षरमिति** । वृद्धियोग्यमिति शेषः । उपदेश आत्त्वविधानादिति भावः ॥ **अन्त्यमिति** । अङ्गस्य वृद्धिरित्यर्थेऽलोन्त्यपरिभाषाप्रवृत्तेरिति भावः ॥

( उदाहरणभाष्यम् )

**ननु चेदमस्ति—ढलोपे कृते-उदवोढाम्, उदवोढम्, उदवोढेति ॥**

**नैतदस्ति । असिद्धो ढलोपः, तस्यासिद्धत्वान्नैतदन्त्यं भवति ॥**

( प्रदीपः ) **उदवोढामिति** । ढलोपादीनामसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः, ततो ढलोपादिषु कृतेषु ढलोपस्यासिद्धत्वादोकारस्य न भविष्यति ॥ गोशब्दादाचारे क्विपि अगवीदिति संध्यक्षरमन्त्यमस्ति तस्य कस्माद्वृद्धिर्न भवति ? उच्यते—**'सिचि वृद्धिः-'** इत्यत्र धातुग्रहणं **'ऋत इद्धातोः'** इत्यत औपदेशिकधातुपरिग्रहार्थमनुवर्तत इत्यदोषः ॥

( उद्द्योतः ) **ढलोपस्यासिद्धत्वादिति** । पूर्वं हलन्तलक्षणाया वृद्धेर्जातत्वेनेदानीं **सिचि वृद्धिरित्यस्य** प्राप्त्या **लक्ष्ये लक्षणस्याप्रवृत्तिरिति** भावः ॥ **धातुग्रहणमिति** । सिचा तदाक्षेपे सिद्धे—इति भावः ॥ एवञ्च कव्यादिभ्य आचारक्विपि अकवायीदित्यादौ वृद्धिर्नेति लक्ष्यते ॥ माधवस्तु वृद्धिं मनुते । बहुलं छन्दसीत्यतो बहुलग्रहणानुवृत्त्या सन्ध्यक्षरान्तनामधातौ वृद्धिर्न, अन्यत्र भवत्येवेति तदाशयः ॥ तेन सेश्रब्दादिभ्य आचारक्विपि न वृद्धिरित्यलम् । वस्तुतस्तु **नैव सन्ध्यक्षरमिति** एवगर्भैतद्भाष्यप्रामाण्येन सन्ध्यक्षरान्तेभ्य आचारक्विबेव नेत्याहुः ॥

( उदाहरणभाष्यम् )

**व्यञ्जनस्य तर्हि प्राप्नोति-अभैत्सीत्, अच्छैत्सीत् ॥**

**हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति ॥**

( उद्द्योतः ) हलन्तलक्षणा वृद्धिर्बाधिकेति-भाष्ये । इग्ग्रहणाभावे **येन नाप्राप्तिन्यायेनेति** भावः ॥

( उदाहरणभाष्यम् )

**यत्र तर्हि सा प्रतिषिध्यते—"नेटि" इति । अकोषीत्, अमोषीत् ॥**

( उदाहरणाक्षेपभाष्यम् )

**सिचिवृद्धेरप्येष प्रतिषेधः ।**

**कथम् ?**

**लक्षणं हि नाम ध्वनति भ्रमति मुहूर्तमपि नावतिष्ठते ॥**

( प्रदीपः ) **लक्षणं हीति** । **'नेटि'** इति लक्षणमविशेषेण वृद्धिमात्रस्य निषेधं कथयतीति 'ध्वनति' इत्युच्यते । यो ह्यव्यक्तं कथयति स ध्वनतीत्युच्यते । एवमिहाप्यस्या एव वृद्धेर्निषेध इति नास्ति व्यक्तिः ॥ स्यादेतत्—एकनिषेधे चरितार्थत्वात्पुनः प्रतिषेध्यान्तरे प्रवृत्तिर्न स्यादित्याह—**भ्रमतीति** । सर्वत्र व्याप्रियत इत्यर्थः । स्यादेतत्—यावदेकनिषेध्येऽस्य व्यापारस्तावदेव द्वितीयो विधिः प्रवृत्तः, प्रवृत्तस्य च निषेधोऽशक्यः कर्तुमित्याह—**मुहूर्तमिति** । उभयत्रापि व्यापारानैकत्र विश्राम्यतीत्यर्थः ॥

( उद्द्योतः ) **इत्याहेति** । इत्याशङ्कायामाहेत्यर्थः ॥ **नैकत्रेति** ।

---

१ यथाश्रुतासंगतेराह—**अपवादत्वादिति** ॥ तत्रोदक्षरत्वं निराचष्टे—**परेति** ॥ छाया ॥

२ सूत्रे वृद्धिग्रहणाभावे सिचि वृद्धिरित्यत्र 'इकः' इत्यस्यानुपस्थितौ सन्ध्यक्षरस्य प्राप्तिः ॥

३ तदन्त्यत्वनिषेधस्य सामान्यतो ब्रह्मणाऽपि दुर्वचत्वादाह—**उपेति** ॥ छाया ॥

४ माधवमते भाष्यासंगतिं परिहरति—**बहुलमिति** ॥ छाया ॥

५ **अन्यत्रेति** । अकवायीदित्यादावित्यर्थः ॥ छाया ॥

६ **व्यञ्जनस्येति** । इको गुणेति सूत्रे वृद्धिग्रहणाभावे सिचिवृद्धिरित्यत्रेक्पदानुपस्थितौ 'अभैत्सीत्' इत्यादावन्त्यस्य प्राप्नुयादिति ॥

७ **इग्ग्रहणाभाव इति** । इको गुणेत्यत्र वृद्धिग्रहणाभावेऽत्रेक्पदानुपस्थितावित्यर्थः ॥

८ [ सिद्धान्त्येकदेश्याक्षिपति—] **यत्र तर्हीति** ॥ तत्र व्यञ्जनस्यास्त्वेवेति भावः ॥ छाया ॥ 'प्रतिषिध्यते—अकोषीत्' इत्येव प. पाठः ॥

९ [ पूर्वपक्षी दूषयति—**सिचीति** ॥ ] **एष इति** । **नेटीति** योग इत्यर्थः ॥ छाया ॥

१० **'अतो हलादेः-'** इत्यत्र हलन्तानुवृत्तेः **'नेटि'** इत्यत्रापि तथा भाव्यमिति **'अनन्तरस्य'** इति च हलन्तलक्षणवृद्धेरेव निषेध इति सिचिवृद्धेर्निषेधो दुर्वच इति पृच्छति—**कथमिति** ॥ छाया ॥

११ **लक्षण**शब्देन निषेधः । अत्यन्तलक्ष्याधीनत्वात्तत्त्वम् ॥ छाया ॥

१२ **अविशेषेणेति** । विशेषं विना सामान्यमात्रेणेत्यर्थः ॥ इडादौ परस्मैपदपरे सिचि तन्निमित्ता हलन्तस्य सर्वा वृद्धिर्नेति तदर्थः । अत एव **'अतो हलादेः'** इत्यत्र तदनुवृत्तिरिति भावः ॥ छाया ॥

१३ **अव्यक्तमिति** । निर्विशेषमित्यादिः ॥ छाया ॥

१४ **व्यक्तिः**-वचनव्यक्तिः ॥

१५ 'स्यादेतत्-प्रतिषेधस्यैकनिषेध्ये' इति मुद्रितपाठः ॥

१६ **उभेति** । शब्दवृद्धिकर्मणां विरम्याव्यापाराद्युगपदेव सर्वत्र प्रवृत्तेरिति भावः ॥ छाया ॥

बाध्यसामान्यचिन्तेयम्[1] । **नेटीत्यत्र** हलन्तस्येत्यप्यनुवर्त्य हलन्तस्य या वृद्धिः प्राप्ता सा सर्वाऽपि नेत्यर्थः । तेनालावीदित्यादौ न दोष इति बोध्यम् ॥

( आक्षेपे प्रकारविशेषभाष्यम् )

**अथवा "सिचि वृद्धिः परस्मैपदेषु" इति सिचि वृद्धिः प्राप्नोति । तस्या हलन्तलक्षणा वृद्धिर्बाधिका । तस्या अपि "नेटि" इति प्रतिषेधः ॥**

( प्रदीपः ) **तस्या अपीति** । अपिशब्दात्सिचि वृद्धेरपि ॥

( उद्द्योतः ) बाध्य[2]विशेषचिन्तायामाह—भाष्ये—**अथवेति** । तद्[3]व्याचष्टे—**अपिशब्दादिति** ॥

( दृष्टान्ताक्षेपभाष्यम् )

**अ[4]स्ति पुनः क्वचिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति ?**

( उद्द्योतः ) स्व[5]प्रतिषेध्यहलन्तलक्षणवृद्धिप्रतिषेधद्वारा **भ्रष्टावसरन्यायेन सिचि वृद्धेरप्यभावः** प्रतिपाद्यते इत्यर्थः । तद्ध्वनयन्नाह—भाष्ये—**अस्ति पुनः क्वचिदित्यादि** ॥

( दृष्टान्तभाष्यम् )

**अ[6]स्तीत्याह । सु[7]जाते अश्वसूनृते, अध्वर्यो अद्रिभिः सुतम्, शुक्रं ते अन्यद्-इति पूर्वरूपत्वे प्रतिषिद्धेऽयादयोऽपि न भवन्ति ॥**

( प्रदीपः ) **अस्तीत्याहेति । 'नान्तःपादमव्यपरे'** इति पा[8]ठमाश्रित्यैतदुक्तम् ॥ यद्येवं वृक्षावित्यत्र **'नादिचि'** इत्यनेन पूर्वसवर्ण[9]दीर्घे निषिद्धे वृद्धेरपि प्रतिषेधप्रसङ्गः । नैष दोषः, **'संयोद्धौ-'** इत्यादेर्ज्ञापकादनन्तरस्यैव **'नादिचि'** इति प्रतिषेधात् ॥

( उद्द्योतः ) न[10]नु तत्र प्रकृतिभावेन साक्षादेवोत्सर्गापवादयोर्निवृत्तिः, न त्वपवादेन बाधादुत्सर्गस्येत्यत आह—**नान्त इति** ॥ भाष्ये—**न भवन्तीति** । भ्रष्टावसरन्यायेनेति भावः ॥ **पूर्वसवर्णदीर्घवद्वृद्धेरपीति** । अवर्णादिचि यद्यत्प्राप्तं तन्नेति बाध्यसामान्यचिन्तारूपाद्यपेक्षेणेयं शङ्का ॥ ज्ञापकाद्बाध्यविशेषचिन्तैवाश्रीयते इत्युत्तरम् ॥ **पूर्वसवर्णदीर्घे निषिद्धे वृद्धेरपीति** । पाठे भ्रष्टावसरन्यायानित्यत्वेन क्वचिदपवादनिवृत्तावपि तद्विषये उत्सर्गप्रवृत्तिर्ज्ञाप्यते इति भावः ॥

**परे** तु 'अथवा'इति भाष्यं पूर्वपक्ष्युक्तित्वात्प्रौढ्या । भ्रष्टावसरन्यायस्तु नास्त्येव, उक्तनिर्देशात् । अत एव **नान्तःपाद**मिति सूत्रे एङोऽतीत्यनुवर्त्य एङोऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्वनिषेधकत्वं तस्योक्तमिति वदन्ति ॥

( सिद्धान्तिनः प्रयोजनभाष्यम् )

**उ[11]त्तरार्थमेव तर्हि सिजर्थे वृद्धिग्रहणं कर्तव्यम् । सिचि वृद्धिरविशेषेणोच्यते, सा क्ङिति मा भूत्—न्यनुवीत्, न्यधुवीत् ॥**

( उद्द्योतः ) इहार्थत्वे पूर्वपक्षिणा द्वे[12]धा प्रौढ्याऽपि खण्डिते सिद्धान्ती तदभ्युपेत्याप्याह—**उत्तरार्थमेवेति** ॥ **णुधूधातू** कुटादी ॥

( प्रयोजननिरासभाष्यम् )

**नै[13]तदस्ति प्रयोजनम् । अन्तरङ्गत्वादत्रोवङादेशे कृतेऽनन्त्यत्वाद्वृद्धिर्न भविष्यति ॥**

( प्रदीपः ) **अन्तरङ्गत्वादिति** । उवङादेशः सिचमेवापेक्षते, वृद्धिस्तु सिच्परस्मैपदे ॥

( उद्द्योतः ) भाष्ये—**अनन्त्यत्वादिति** । अचोऽनन्त्यत्वादित्यर्थः ॥ नन्विक्परिभाषाभावेऽन्त्याल्मात्रस्य सा प्राप्नोतीति **अनन्त्यत्वादि**त्यसङ्गतमिति चेत् । न, हलन्तेषु हलन्तलक्षणया बाधेनास्या वृद्धेरजन्त एव व्यवस्थितेरित्याशयात् ॥

( सिद्धान्तिभाष्यम् )

**य[14]दि तर्हि सिच्यन्तरङ्गं भवति—अकार्षीत्, अहार्षीत्, गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति ॥**

( उद्द्योतः ) सिद्धान्त्याह—**यदि तर्हीति** ॥ अत्र **यदी**त्यनेनापवादत्वात्तद्विषयेऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम् ॥ इत

१ **चिन्तेयमिति** । अत्र पक्षे-'अनन्तरस्य विधिर्वा' इति न्यायाप्रवृत्तिः ॥ छाया ॥

२ **बाध्यविशेषेति** । तथाच-**'अनन्तरस्य-'**इति न्यायप्रवृत्त्या तस्या एव निषेध इति भावः ॥ छाया ॥

३ नन्वेवं पूर्वपक्षतो न भेद इति कथं पक्षभेदेन व्याख्यानम् । अतो भाष्यं योजयितुं कैयटं तथैव प्रतीयमानमन्यथा योजयन् 'एवं सति सिचि वृद्धिः स्यादेवेति कथं विशेषपक्षे निर्वाहः' इति शङ्कापनोदायाह—**तदिति** । विशेषचिन्तनमित्यर्थः ॥ छाया ॥

४ **अस्तीति** । अपवादे प्रतिषिद्धे भ्रष्टावसरन्यायेनोत्सर्गस्यापि प्रतिषेध इतीदृशमुदाहरणं शास्त्रेऽन्यत्रापि क्वचिदृश्यत इति प्रश्नः ॥

५ कथमितोऽत्र पक्षे तल्लाभोऽत आह—**स्वेति** ॥ छाया ॥

६ पूर्वपक्षी समाधत्ते—**अस्तीत्याहेति** ॥ छाया ॥

७ ( सुजाते-ऋ० ५-७९-१ ) ( अध्वर्यो-ऋ० ९-५१-१ ) ( शुक्रंते-ऋ० ६-५८-१ )

८ **पाठमाश्रित्येति** । प्रकृत्यान्तःपादमितिपाठे प्रकृतिभावः पूर्वरूपस्यायादीनां च बाधक इति नैतत्पाठे अपवादमात्रप्रतिषेध इति ॥

९ 'सवर्णदीर्घवत् वृद्धेरपि निषे' इति च. क. पाठः ।

१० प्रकृत्येति पाठेन शङ्कते—**नन्विति** ॥ छाया ॥

११ **उत्तरार्थमिति** । उत्तरार्थ-क्ङितिचेत्यत्रानुवृत्त्यर्थम् । अनुवृत्तिरपि किमर्थं तत्राह—**सिजर्थमिति** ॥

१२ **द्वेधा**-'सिचिवृद्धेरप्येष प्रतिषेधः-' 'अथवा सिचिवृद्धिः' इत्येवम् । बाध्यसामान्यचिन्तया तद्विशेषचिन्तया चेतिभावः । तत्र द्वितीयस्य प्रौढिवादत्वमत्र शास्त्रे भ्रष्टावसरन्यायानाश्रणात् । प्रथमस्यैकदेशित्वमग्रे वक्ष्यते, तत्तु न्यस्तारीदित्युपक्रम्य 'हलन्तलक्षणायाश्च नेटीति प्रतिषेधः' इति ग्रन्थेन ॥

१३ एकदेशी आह—**नैतदिति** ॥ छाया ॥

१४ 'न सिच्यन्तरङ्गं-' इति परिभाषां सिषाधयिषुराह—**यदि तर्हीति** ॥

उत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशि-सिद्धान्त्येकदेशिनो-रिति बोध्यम् ॥

( पूर्वपक्ष्येकदेशिनो भाष्यम् )

**मा भूदेवम् । "हलन्तस्य-" इत्येवं भविष्यति ॥**

( सिद्धान्त्येकदेशिनो दूषणभाष्यम् )

**इह तर्हि—न्यस्तारीत्, न्यदारीत् । गुणे[2] कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः ॥**

( पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् )

**मा भूदेवम् । "ल्रान्तस्य" इत्येवं भविष्यति ॥**

( सिद्धान्त्येकदेशिन आक्षेपभाष्यम् )

**इह तर्हि-अलावीत्, अयावीत्-गुणे कृतेऽवादेशे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः ॥**

( पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् )

**मा भूदेवम् । "ल्रान्तस्य" इत्येवं भविष्यति ॥**

( सिद्धान्त्येकदेशिन आक्षेपभाष्यम् )

**"ल्रान्तस्य" इत्युच्यते, न चेदं ल्रान्तम् ॥**

( पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् )

**"ल्रान्तस्य" इत्यत्र वकारोऽपि निर्दिश्यते ।**

( सिद्धान्त्येकदेशिन आक्षेपभाष्यम् )

**किं वकारो न श्रूयते ?**

( पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् )

**लुप्तनिर्दिष्टो वकारः ॥**

( प्रदीपः ) **लुप्तनिर्दिष्ट इति** । 'लोपो व्योर्वलि' इति भावः ॥ किमत्र प्रमाणमिति चेत्, अभियुक्तस्मरणमेव ॥

( उद्द्योतः ) **लुप्तनिर्दिष्ट** इत्यत्र पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थे मयूरव्यंसकादित्वात्समासः । न च गुणे **वार्णादाङ्ग**मिति न्यायेन-अवं बाधित्वा वृद्धौ-आवादेशेऽलावीदित्यादेः सिद्धौ वप्रश्लेषो व्यर्थ इति **वाच्यम्** । **सिचि वृद्धिरि**त्यस्यापवादत्वाज्ञानेनेव एतत्परिभाषाऽज्ञानेनैवास्य प्रवृत्तेरदोषात् । न च वकारप्रश्लेषेऽशवीदशावीदिति शवधातोर्नित्यवृद्ध्यापत्तिः । अस्या एकदेश्युक्तित्वेन तदज्ञानेनैवास्य भाष्यस्य प्रवृत्तेः, जिरिव्रियोर्यथज्ञानवत्—**इत्याहुः** ॥ एतद्भाष्यप्रामाण्यात्स धातुः पवर्गीयान्तो बवयोः समानश्रुतित्वाल्लोके दन्त्योष्ठ्यश्रुतिरित्यन्ये ॥

( सिद्धान्त्येकदेशिनो दूषणभाष्यम् )

**यद्येवम्[3]—मा भवानवीत्, मा भवान् मवीत् -अत्रापि प्राप्नोति ॥**

( उद्द्योतः ) अवेरादि वृद्ध्यवृद्ध्योरविशेष इति आद्निवृत्तये भाष्ये माङ् प्रयुक्तः । एकादेशे पुनरप्यविशेषस्तदवस्थ इति भवानित्युक्तं, मवौ तु प्रयोजनान्तरासत्त्वेऽप्यैकरूप्याय तत्प्रयोगः ॥

( पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् )

**अविमव्योर्नेति वक्ष्यामि ॥**

( सिद्धान्त्येकदेशिन आक्षेपभाष्यम् )

**तद्वक्तव्यम् ?**

( पूर्वपक्ष्येकदेशिनः समाधानभाष्यम् )

**न[4] वक्तव्यम् । 'णिश्विभ्यां तौ निमातव्यौ' ।**

**यद्यप्येतदुच्यते[5], अथवैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति । गुणे कृतेऽयादेशे च यान्तानां नेत्येव प्रतिषेधो भविष्यति[6] ॥**

( प्रदीपः ) **णिश्विभ्यामिति** । णिश्विग्रहणमकृत्वा-अविमवी प्रतिषेधार्थं कर्तव्यौ । एवं सति गौरवाभावः ॥ **निमातव्याविति** । मेङो रूपम् । परिवर्तनीयावित्यर्थः ॥

( उद्द्योतः ) **अविमव्योर्ने**[7]ति निषेधश्च मध्येऽपवादन्यायेनातोल्रान्तस्येत्यस्यैव, तेनातो **हलादे**रिति विकल्पो भवत्येवेति बोध्यम् । **सिचि वृद्धिरि**ति सूत्रं तु अचैषीदित्यादौ गुणे कृते चरितार्थमेतन्मते इति बोध्यम् ॥

( सिद्धान्त्येकदेशिनः पूर्वोक्तदोषवारणाय ज्ञापकभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—न सिच्यन्तरङ्गं भवति-इति । यदयं "अतो हलादेर्लघोः" इत्यकारग्रहणं करोति ।**

**कथं कृत्वा ज्ञापकम् ?**

**अकारग्रहणस्यैतत्प्रयोजनम्-इह मा भूत्—अकोषीत्, अमोषीत्, । यदि सिच्यन्तरङ्गं स्यात्, अकारग्रहणमनर्थकं स्यात् । गुणे कृतेऽलघुत्वाद्वृद्धिर्न भविष्यति । पश्यति त्वाचार्यः-'न सिच्यन्तरङ्गं भवति' इति । ततोऽकारग्रहणं करोति ॥**

( पूर्वपक्ष्येकदेशिन आक्षेभाष्यम् )

**नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् ।**

---

१ **ग्रन्थस्त्विति** ॥ 'मा भूत्' इत्यादि 'यच्चकरोत्यकारस्य ग्रहणं लघोरिति कृते' इत्यन्त इति भावः ॥ छाया ॥

२ 'गुणे रपरत्वे' इति प. पाठः ॥

३ सिद्धान्त्येकदेशी दूषयति—**यद्येवमिति** । **अत्रापीति** । तथाचोभयत्र नित्या वृद्धिः स्यात् । इष्यते त्वाद्ये **'नेटि'** इति निषेधः, अन्त्ये **'अतो हलादेः'** इति विकल्पः ॥ छाया ॥

४ 'न वक्तव्यम्' इत्यस्य प. पुस्तकेन पाठः ॥

५ णिश्विभ्यां निमानं समर्थयति—**यद्यप्येतेति** । **अथवैतर्हि**—एतावता-सिच्यन्तरङ्गाश्रयणेन । तदन्तरङ्गाश्रयणे णिश्विग्रहणानर्थक्यं प्रतिपादयति—**गुणे कृते इति** ॥

६ यद्यप्यत्र न्यासे सार्धमात्राधिक्यं तथापि वृद्धिशब्दाकरणलाघवस्य सार्वत्रिकत्वं, **'जाग्रव्रमचेदिताम्'** इति पाठे तदभावश्चेति बोध्यम् ॥ छाया ॥

७ ननु ह्यन्तेतिसूत्रे अविमव्योः पाठे 'अमावीत्' इति रूपं न स्यादत आह—**अविमव्योर्नेतीति** ॥

८ एतन्मते—सिच्यन्तरङ्गमस्तीति एकदेशिमते ॥

किम् ?

**यत्र गुणः प्रतिषिध्यते तदर्थमेतत्स्यात् । न्यकुटीत्, न्यपुटीत्-इति ॥**

( उद्द्योतः ) ( भाष्ये ) **नैतदस्ति ज्ञापकमिति**। न्यकुटीदित्यादावन्तरङ्गवृद्धिबाधकगुणस्य निषेधेऽपि भ्रष्टावसरन्यायेन न वृद्ध्यभावः । सिद्धान्ते न्यायाभावादिति भावः ॥

**( सिद्धान्त्येकदेशिनः समाधानभाष्यम् )**

**यत्तर्हि णिश्व्योः प्रतिषेधं शास्ति तेन 'नेहान्तरङ्गमस्ति' इति दर्शयति ॥**

( उद्द्योतः ) ( भाष्ये ) **यत्तर्हि णिश्व्योरिति** । ननु णिश्विस्थानेऽविमवी इति वदन्तं प्रति णिश्विप्रतिषेधस्य ज्ञापकत्वाभिधानमयुक्तमिति चेत् । न, ज्ञापकत्वे संभवति निमानासंभव इत्याशयात् ॥

**( पूर्वोक्तज्ञापकस्थिरीकरणभाष्यम् )**

**यच्च करोत्यकारस्य ग्रहणं लघोरिति कृते ॥**

( प्रदीपः ) **'न सिचि'** इति न्यायादप्येतत्सिध्यति, **येन नाप्राप्तिन्यायेनान्तरङ्गस्य वृद्ध्या बाधनात्** । प्रयोजनं च चिरिजिर्योर्यङ्लुगन्तानां च नयत्यादीनां 'अचिरायीत्' 'अजिरायीत्' 'अनेनायीत्' 'अचेचायीत्' इत्यादौ वृद्धिसिद्धिः । अन्यथा गुणायादेशयोः कृतयोर्यान्तत्वाद्वृद्धिप्रतिषेधः स्यात् ॥

( उद्द्योतः ) ( भाष्ये ) **यच्च करोतीति** । इग्ग्रहणाभावेऽकोषीदित्यादौ व्यञ्जनस्य वृद्धिवारणाय बाध्यविशेषचिन्तापक्षे त्वया सिचिवृद्ध्यपवादहलन्तलक्षणाया निषेधे तेन न्यायेन सिचिवृद्ध्यप्राप्तेः स्वीकारेण त्वदीत्या ज्ञापकमेवेति भावः ॥ **एतेन** सिच्यन्तरङ्गाभावेऽपि परत्वाद्गुणस्य वृद्धिबाधकताया दुर्वारत्वेनाकोषीदित्यादौ लघुत्वाभावादेव वृद्ध्यभावेऽत इति व्यर्थमेवेत्यन्त्यं ज्ञापकमसङ्गतम्, तथा णिश्व्योर्गुणे वार्णपरिभाषयाऽयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधाय णिश्विग्रहणमप्यावश्यकमित्याद्यमप्यसङ्गतमित्यपास्तम् । एकदेश्युक्तित्वेनादोषात् ॥ एतदेव ध्वनयन्—**'यदि तर्हि'** इति सिद्धान्त्युक्तौ यद्यन्तर्भावसूचितं 'कृतेऽस्य चारितार्थ्येऽपि स्वप्राप्तिकाले प्राप्तस्य **येन नाप्राप्तिन्यायेन** बाधः' इत्येतत् आह—**न्यायादपीत्यादि** । बाध्यसामान्यचिन्तया च सकलान्तरङ्गबाध इति बोध्यम् । एवंच न ज्ञापकोपयोगः, नापि ज्ञापकसंभवः, नापि प्रयोजनं, वार्णपरिभाषयाऽचिरायीदित्यादौ गुणे कृतेऽयादेशात्पूर्वं वृद्धिप्राप्तेः । न वा वकारप्रश्लेषस्य फलं, नाप्यविमव्योः प्रतिषेधस्य—इति श्वधातौ वृद्धिविकल्प एवेति बोध्यम् ॥

**( ८२ सिद्धान्तिन उपसंहारवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ तस्मादिग्लक्षणा वृद्धिः ॥ * ॥

**( भाष्यम् )**

**तस्मादिग्लक्षणा वृद्धिरास्थेया ॥**

( उद्द्योतः ) एवंच न्यनुवीदित्यादौ उवङं बाधित्वा प्राप्ताया

---

१ ननु भ्रष्टावसरन्यायेन तत्रापि वृद्ध्यभावः सिद्ध इति ज्ञापकत्वमेवास्येति खण्डनासंगतिरत आह—**न्यकुटीदित्यादाविति । अपि**र्गुणसत्तासमुच्चायकः ॥ छाया ॥

२ **इहेति** । सिचीत्यर्थः ॥ छाया ॥

३ **दर्शयतीति** । बोधयतीत्यर्थः । न तु ज्ञापयतीत्यर्थ इति भावः ॥ एवमुक्तिफलं त्वनुपदमेव स्फुटीभविष्यति ॥ छाया ॥

४ **इत्याशयादिति** । अनेनास्यैकदेशित्वं सूचितम् । तच्च स्फुटीभविष्यति ॥ अस्याशयस्त्वित्थम्—सति ज्ञापकत्वे तदनाश्रयणे गुणाभावेनावान्तत्वे तत्र वृद्ध्यर्थं वकारप्रश्लेषानाश्रयणे तयोस्तदर्थं निमानानुपयोग इति ॥ छाया ॥

५ सिंहावलोकनन्यायेन निरस्तज्ञापकं समर्थयते—**यच्चेति** ॥ छाया ॥ 'यत्करो' इति प. पाठः ॥ **करोत्यकारस्येति** । ननु न्यकुटीदित्यत्र वृद्धिवारणार्थमकारग्रहणमिति कथं ज्ञापकमिति चेत्, अन्तरङ्गेन गुणेन वृद्धेर्बहिरङ्गाया बाधनात् । अग्रे ङित्वेन गुणप्रतिषेधेऽपि न वृद्धेरुन्मज्जनं, सुजातेत्यत्र पूर्वरूपप्रतिषेधेऽपि अबाधनवदित्याशयात् ॥

६ 'कृतेऽपि' इति च. झ. पाठः ।

७ **न्यायादपीत्यपिः** पूर्वपक्ष्युक्तज्ञापकसमुच्चायकः ॥ छाया ॥

८ नन्वपिना तत्समुच्चयस्तदा स्यात् यदि प्रयोजनं स्यात् । तेन तस्योत्तरार्धत्वस्थापनं च युज्येत न त्वन्यथाऽत आह—**प्रयोजनमिति** ॥ छाया ॥

९ **'वृद्धिबाध्यविशे'** इति घ. पाठः ।

१० **तेनेति** । भ्रष्टावसरन्यायेनेत्यर्थः ॥ छाया ॥

११ **त्वद्रीत्येति** । अकुटीदित्यादावपि तेन न्यायेन तदप्राप्तेरिति भावः ॥ छाया ॥

१२ **यद्यन्तर्भावसूचितमिति** । यद्यन्तर्भावेन सूचितमित्यर्थः । अस्य **'बाध इत्येतद्'** इत्यत्रान्वयः ॥ छाया ॥

१३ **कृतेऽस्येति** । गुणे कृते वृद्धिशास्त्रस्येत्यर्थः ॥ छाया ॥

१४ **प्राप्तस्येति** । गुणादेरिति शेषः ॥ छाया ॥

१५ **येन नेत्यस्य** स्वविषये स्वेतरेण प्राप्तस्य सर्वस्य स्वेन बाध इत्यर्थ इत्याशयेनाह—**बाध्येति** ॥ भाष्यकृतोऽपि तत्कथनमात्रेण न्यायेन बाधे सामान्यचिन्तैवाश्रयणीया, न तु विशेषचिन्तेत्येतत्प्रतिपादन एव तात्पर्यम् । न ज्ञापकत्वप्रतिपादने । अत एव—अद्ग्रहणस्य प्रागुक्तं संखण्ड्य **'यत्तर्हि'**—इत्यादि **'दर्शयति'** इत्यन्तेनैवमुक्त्वा पुनः **'यच्च'** इत्यनेन साकाङ्क्षत्वमुक्तम् । तेन तस्याप्येतत्प्रदर्शकत्वं न ज्ञापकत्वमिति सूचितम् ॥ छाया ॥

१६ वस्तुतस्तदेव नेत्याह—**नापि ज्ञापकेति** । उक्तरीत्या द्वयोरपि चारितार्थ्यात् । एवं च भाष्यमेकदेश्युक्तिरेव ॥ छाया ॥

१७ ननु तदसंभवेऽपि फलबलात्तथा कल्प्यतेऽत आह—**नापि प्रेति । वार्णेति** । तत्र गुणेऽन्तरङ्गत्वात्पूर्वं कृते तया ततः पूर्वं वृद्धिप्राप्तेरित्यर्थः । तथा च तत्र प्रतिषेधार्थं णिश्विग्रहणं चरितार्थमिति भावः ॥ छाया ॥

वृद्धेर्निषेधायेग्लक्षणा सिच्विवृद्धिरास्थेयेत्युपसंहरति सिद्धान्ती—तस्मा[1]-दिति-भाष्ये । इग्लक्षणत्वेन निषेधायाकोषीदित्यादावनिको गुण-व्यावृत्तये[2] च । बाध्यसामान्यचिन्ता भ्रष्टावसरन्यायश्चैकदेश्युक्तिर्न तु सिद्धान्तः ॥ अत एवं[3] न्यस्तारीदित्युपक्रम्य हलन्तलक्षणायाश्च नेटीति प्रतिषेध इत्युक्तमित्यलम् ॥

( इति पदोपस्थितिस्थापनम् ॥ )

( अथ स्वतन्त्रविधित्वनिराकरणाधिकरणम् )

( ८३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ षष्ठ्याः स्थानेयोगत्वादि-ङ्निवृत्तिः ॥ * ॥

( भाष्यम् )

**षष्ठ्याः[4] स्थानेयोगत्वात्सर्वेषामिकां निवृत्तिः प्राप्नोति[5] । दधि, मधु ॥**

( प्रदीपः ) **षष्ठ्या इति** । स्वतन्त्रमिदं गुणवृद्ध्योर्विधायकमिति पूर्वः पक्षः ॥

( उद्योतः ) **विधायकमिति[6]** । **इको यणची**त्यादि तु स्वविषयेऽस्य बाधकमिति न तद्वैयर्थ्यरूपो दोषः ॥ भाष्ये—**इङ्निवृत्ति**रित्यस्य गुणवृद्धिरूपादेशेनेत्यादिः[7] ॥

( अस्य स्वतन्त्रत्वे दूषणभाष्यम् )

**पुनर्वचनमिदानीं किमर्थं स्यात् ?**

( उद्योतः ) पुनर्वचनं—'मिदेर्गुणः' इत्यादिरूपम्[8] ॥

( ८४ स्वतन्त्रत्वे दूषणसमाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अन्यतरार्थं[9] पुनर्वचनम् ॥ * ॥

( भाष्यम् )

**अन्यतरार्थमेतत्स्यात्[10]–सार्वधातुकार्धधातुकयोर्गुण एवेति ॥**

( प्रदीपः ) **अन्यतरार्थमिति** । ननु अनिकोऽपि यथा स्यात्-इति विध्यर्थं स्यात् न तु नियमार्थम्, नियमाद्विधेर्बलीयस्त्वात् ॥ एवं मन्यते–द्वितीयं गुणवृद्धिग्रहणमनुवर्तते, तेन गुणवृद्धिप्रदेशेष्वपि 'इकः' इत्यस्योपस्थानान्नास्त्यनिकः प्रसङ्गः ॥

( उद्योतः ) **नियमाद्विधेरिति** । प्राप्त[11]बाधादिरूपदोषापत्त्या परिसंख्यारूपो नियमो गुरुरिति भावः ॥ **द्वितीयमिति** । केवल-विधायकत्वेऽनुवृत्त्यैव सिद्धे इहत्यगुणवृद्धिग्रहणमनर्थकं स्यादिति भावः ॥ **यातीत्यादिनिर्देशैर्गुरोरपि नियमस्याश्रयणमित्यन्ये** ॥

( ८५ समानन्यायेनेतरत्राक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ प्रसारणे च ॥ * ॥

( भाष्यम् )

**प्रसारणे च सर्वेषां यणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति–याता, वाता ॥**

( प्रदीपः ) **प्रसारणे चेति** । तुल्यन्यायत्वादुपन्यासः । **'इग्यणः'** इत्यत्र यण इति स्थानषष्ठी । तेन यणः स्थान इग्भवति, स च संप्रसारणसंज्ञ इति वाक्यार्थः स्यात् । वाक्यभेदेन[12] च कार्यद्वयं विधीयते ॥

( उद्योतः ) **तुल्यन्यायेति** । षष्ठीदर्शनरूपो न्यायः[13] ॥ **वाक्य-**

---

१ **तस्मादितीति** । पूर्ववद्बुद्धिस्थाद्धेतोरित्यर्थः ॥ यस्मादकोषीदित्यादौ व्यञ्जनस्य सा प्राप्नोति न्यनुवीदित्यादौ च प्राप्नोति तस्मादिति यावत् ॥ यदि यस्मात् सिच्यन्तरङ्गं न, तस्मात्—इत्यर्थ इष्टस्तर्हि 'तस्मादुत्तरार्थं वृद्धिग्रहणम्' इत्येवोपसंहृतं स्यात् ॥ न च महता यत्नेनोत्तरार्थत्वमुपपाद्येहार्थत्वोपसंहारो न युक्त इति वाच्यम् । उत्तरार्थता मया सम्यक् प्रतिपादिता सा विनाऽप्युपसंहारं सुज्ञाना । इहार्थता तु प्रौढ्या निरस्ता । सा प्रौढिरनेनोपसंहारेण ज्ञापिता भवतीति भाष्याशयात् ॥ किं चानेनोभयोरप्युपसंहारकरणेनादोषात् । अत एव भाष्ये दार्ढ्याय द्विरुक्तिः । तस्य च–इक् लक्षणं स्थानी यस्याः सा वृद्धिरिति स्वीकार्येत्यर्थः ॥ छाया ॥

२ 'वृत्तये चेति भावः । बाध्य' इति च. झ. पाठः ।

३ तत्राद्यस्यैकदेश्युक्तित्वमाह—**अत एवेति** । अन्त्यस्य तु तत्त्वं प्रागुक्तमेव ॥ छाया ॥

४ **षष्ठ्या इति** । इक इति षष्ठ्या इत्यर्थः ॥ तच्च षष्ठ्यन्तमर्थपरं नानुकरणम् । तथा चानिर्धारितसंबन्धविशेषत्वात् **'षष्ठीस्थाने'** इत्यस्य प्रवृत्तिस्तदाह—**स्थानेयोगेति** ॥ छाया ॥

५ 'प्नोति । अस्यापि प्राप्नोति–दधि' इति क. प. ग. पाठः ॥

६ **विधायकमितीति** । विधिनियमसंभवे विधेरेव ज्यायस्त्वादिति भावः ॥ छाया ॥

७ **गुणेति** । अनेन विधीयमानेत्यादिः ॥ छाया ॥

८ **पुनर्वचनमिति** । 'षष्ठ्याः स्थानेयोग–' इत्यादि वार्तिकेन 'इको गुणवृद्धी' इत्यस्य स्वातन्त्र्येण गुणवृद्धिविधायकत्वे बोधिते सर्वत्रापि इकः स्थाने गुणो वृद्धिश्च प्राप्नुत इति 'मिदेर्गुणः' 'मृजेर्वृद्धिः' इत्यादीनि सूत्राणि पुनरुक्तानि किं प्रयोजनानीत्याशयः ॥

९ **आदिना सार्वधातुकार्ध–मृजेर्वृद्धिः–सिचिवृद्धी**त्यादिपरिग्रहः । तथाच तैर्विशिष्य गुणादिविधानादस्य परिभाषात्वमेवोचितमिति भावः ॥ छाया ॥

१० **अन्यतरार्थमिति** । पर्यायेण सर्वत्र प्राप्तयोरनेन गुण-वृद्ध्योस्तत्तन्निमित्तेऽन्यतरस्य निवृत्त्यर्थमिदम् । सार्वधातुकेत्यत्र गुण एव न वृद्धिः, मृजेर्वृद्धिरेव न गुण इत्येवमेक एव यथा स्यादन्यन्मा भूदित्येतदर्थमित्यर्थः ॥ छाया ॥

११ **आदिना**—स्वार्थहानिपरार्थकल्पनयोः संग्रहः । **दोषेति** । दोषत्रयेत्यर्थः ॥ **परीति** । अत्र शास्त्रे परिसंख्याया अपि आर्थिकेतर-निवृत्तिफलकत्वस्य तत्रापि सत्त्वेन नियमत्वेन व्यवहार इत्यन्यत्र स्पष्टम् ॥ छाया ॥ 'बाधानुवादरूप' इति प. पाठः ।

१२ **नन्वनन्तरस्येति** न्यायेन **'इग्यणः'** इति विहितस्यैव, संप्रसारणसंज्ञा स्यादिति 'ष्यङ'–इत्यादिविहिते न स्यादत आह—**वाक्यभेदेन चेति** ॥ छाया ॥

१३ **न्याय इति** । तथा च परिभाषाप्रसङ्गात्सूत्रावयवेऽपीयं शङ्केति भावः ॥ छाया ॥

भेदेनेति । ष्यङः संप्रसारणमित्यादिनिर्वाहाय सामान्येन संज्ञाविधानार्थं वाक्यभेद आवश्यक इति भावः ॥

( स्वातन्त्र्ये दूषणभाष्यम् )

पुनर्वचनमिदानीं किमर्थं स्यात् ? ॥ [1]

( ८६ स्वातन्त्र्ये दूषणनिराकरणवार्तिकम् ॥ ४ ॥ )

॥ * ॥ विषयार्थं पुनर्वचनम् ॥ * ॥

( भाष्यम् )

विषयार्थमेतत्स्यात्-वचिस्वपियजादीनां किल्येवेति ॥

( उद्योतः ) विषयार्थमित्यस्य निमित्तनियमार्थमित्यर्थः ॥

( ८७ समानन्यायेनाक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ उरण्रपरे च ॥ * ॥

( भाष्यम् )

उरण्रपरे [2] च सर्वेषामृकाराणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति—कर्तृ, हर्तृ ॥

( प्रदीपः ) कर्तृ हर्तृ इति । अन्तरतमस्याभावात्सर्वे पर्यायेणाणः प्राप्नुवन्ति ॥

( ८८ सर्वाक्षेपनिराकरणसिद्धान्तवार्तिकम् ॥ ६ ॥ )

॥ * ॥ सिद्धं तु षष्ठ्यधिकारे वचनात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ।

कथम् ?

षष्ठ्यधिकारे [3] इमे योगाः कर्तव्याः । एकस्तावत् क्रियते तत्रैव । इमावपि योगौ षष्ठ्यधिकारमनुवर्तिष्येते ॥

( प्रदीपः ) सिद्धमिति । स्वातन्त्र्यमेषां निवर्तयति । तेन [4] यत्र षष्ठी तत्रैषामुपस्थानम्—अङ्गस्य-वच्यादीनां -ऋत इद्धातोः-इत्यादौ ॥ इमावपीति । स्वरितत्वात् अनयोरन्तरालवर्तिभिश्चायोग्यत्वात्संबन्धाभावः ॥

( उद्योतः ) गुणादिविधावपि [5] अधिकारलब्धा षष्ठीत्याह—अङ्गस्येति । तत्रोरण् [6] रपर इत्यत्र षष्ठीत्यनुवर्त्य पूर्वोक्तार्थः सुलभः । एतयोरपि [7] तत्रानुवृत्त्या षष्ठीति संबन्धेन तदर्थलाभः ॥ तत्रानुवर्तनं [8] यदि लौकिकोऽधिकारस्तर्हि स आकाङ्क्षानिबन्धनः । न च षष्ठीस्थान इत्यस्याकाङ्क्षेत्यत आह—स्वरितत्वादिति ॥ लक्ष्यानुरोधाच्चेत्यपि [9] बोध्यम् ॥

( लौकिकाधिकारसंपादकं भाष्यम् )

अथवा [10]—षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे ॥

( प्रदीपः ) अथवेति । 'षष्ठीस्थाने [11] योगा' इत्यत्र योगविभागः करिष्यते—"षष्ठी" इति, यदेतदनुक्रान्तं तत् यत्र षष्ठी तत्रोपतिष्ठत इत्यर्थः । तत्र योग्यत्वादनयोरेवापेक्षा नान्येषाम् । ततः—"स्थानेयोगा" इति,'षष्ठी' इत्येतदुपतिष्ठते ॥

( उद्योतः ) षष्ठीति । योगविभागे च षष्ठीति सूत्रं साकाङ्क्षमिति लौकिकोऽपेक्षालक्षणोऽधिकार इति भावः ॥ योग्यत्वादिति । व्याख्यानाच्चेत्यपि बोध्यम् ॥ उपतिष्ठत इति । अनुवर्तेत इत्यर्थः ॥

( समाधानान्तरभाष्यम् )

अथवा [12]-इदं तावदयं प्रष्टव्यः—सार्वधातुकार्धधातुकयोर्गुणो भवति-इति, इह कस्मान्न भवति—याता, वाता ?

इदं [13] तत्रापेक्षिष्यते-"इको गुणवृद्धी" इति ॥

यथैव तर्हि इदं तत्रापेक्ष्यते, एवमिहापि तदपेक्षिष्यामहे "सार्वधातुकार्धधातुकयोः-इको गुणवृद्धी" इति ॥ ३ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

---

१ पुनर्वचनं-वचिस्वपीत्यादिरूपम् ॥ छाया ॥

२ पाणिनिना यदभिप्रायेण 'उरण्' इति सूत्रं षष्ठ्यधिकारे कृतम्, स समाधिरुभयत्रेति ध्वनयितुं तत्रापि शङ्कते—उरणिति ॥ उरण् भवति स रपरो भवतीत्यादिव्याख्यानादिति भावः ॥ छाया ॥

३ षष्ठ्यधिकारे इति । षष्ठी स्थाने इति सूत्रस्थषष्ठ्यधिकारे इत्यर्थः ॥ तथा च तदधिकारे 'उरण् रपरः' इति पठितात्प्रागग्रे वा एतावप्यनुवर्त्याविति भावः । एकः—उरण्रपर इति ॥ इमाविति । 'इको गुण' 'इग्यणः' इत्येतावित्यर्थः ॥ छाया ॥

४ तेनेति । तदधिकारस्थत्वेनेत्यर्थः । अयं भावः—'यत्र स्थानषष्ठीनिर्दिष्टस्य उरण् विधीयते तत्र रपर इत्युपतिष्ठते' इति तस्यार्थः । एवं 'यत्र स्थानषष्ठीनिर्दिष्टस्य गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते' 'यत्र च स्थानषष्ठीनिर्दिष्टस्य संप्रसारणं विधीयते तत्रेग्यण इत्युपतिष्ठते' इति चैषां वाक्यार्था बोध्याः । संज्ञासिद्धिस्त्वर्थापत्तिमूलकवाक्यान्तरेण । अत एवानुवादे संप्रसारणस्येत्यादौ न दोष इति ॥ छाया ॥

५ पदोपस्थापकपरिभाषासु अधिकारलब्धा षष्ठी, तेन यत्र षष्ठी स्यात्तत्र पदोपस्थापकपरिभाषाणामुपस्थितिरित्यप्यर्थ इति सूचयति—गुणादीति ॥

६ तत्र—इकोगुण-इग्यणः संप्र-उरण् रपर इत्येतेषु मध्ये ॥

७ एतयोरपि—इकोगुण इग्यण इत्यनयोरपि ॥

८ तत्रेति । षष्ठ्यधिकार इत्यर्थः ॥ नन्वित्यादिः ॥ छाया ॥

९ बहुषु पदेषु स्वरितत्वकल्पने मानाभावाद्गौरवाच्चाह—लक्ष्येति ॥ छाया ॥

१० एवं शास्त्रीयाधिकारमुक्त्वा तत्रापि संबन्धस्याकाङ्क्षामूलकत्वात्तादृशमेव लौकिकमाह—अथवेति ॥ छाया ॥

११ ननु षष्ठीपदं स्थानेयोगेत्यनेन संबद्धं नैतावाकाङ्क्षतीति कथमिदमत आह—षष्ठी स्थानेयोगेत्यत्रेति ॥ छाया ॥

१२ एवं स्वातन्त्र्यं संभाव्य द्वेधा समाहितम् । वस्तुतस्तु तदेव नेति विद्यमानस्वातन्त्र्यके दोषं प्रतिबन्दीमुखेनाह—अथवेति ॥ छाया ॥

१३ उत्तर( मवश्यदेय )माह—इदमिति ॥ छाया ॥

( प्रदीपः ) **अथवेति** । 'अन्यतरार्थं पुनर्-' इति वदताऽवश्यमेवं संवन्धः कर्तव्यः—'यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्रेक इति उपतिष्ठते' इति । अन्यथा याता वातेत्यादिविध्यर्थत्वे संभवति कथमन्यतरार्थं पुनर्वचनं स्यादित्युच्यते । अवश्यकर्तव्यायां चापेक्षायामेकवाक्यतयैवापेक्षाऽस्तु । तेनैकरूप एवास्यार्थः, न तु वाक्यभेदेन स्वातन्त्र्यं पारतन्त्र्यं च ॥ **तदपेक्षिष्यामह इति** । अस्य स्वातन्त्र्यं निरसितुमित्यर्थः ॥३॥

इत्युपाध्याय**जैयट**पुत्र**कैयट**कृते महाभाष्य**प्रदीपे** प्रथमस्याध्यायस्य प्रथमे पादे **तृतीय**माह्निकम् ॥

( उद्योतः ) **अन्यतरार्थमिति** । केवलविधित्वे पुनर्गुणवृद्धिग्रहणवैयर्थ्यमुक्तमेव ॥ **न तु वाक्यभेदेनेति** । एकवाक्यत्वे संभवति तस्यायुक्तत्वमिति भावः । एतेनेग्यण इत्यपि व्याख्यातम् । तत्रापि संज्ञाविधाने इगनुवाद्यः । अनुवाद्यत्वं च **ष्यङः संप्रसारण**मित्यादीनां सार्थक्यायावश्यकम् । एवञ्च–ऐकरूप्यायानुवाद्यत्वमेवास्तु, न तु विधेयत्वं **वचिस्वपी**त्यादीनां नियामकत्वापादकमिति बोध्यम् ॥ **तदपेक्षिष्यामह इति** । एवं च यथा विधेः स्वान्याकाङ्क्षा तथाऽस्यापि स्वसंबन्धिविधेयबोधकशास्त्रापेक्षेति एकवाक्यतैवेति भावः । एवं च स्वातन्त्र्यं दूरापास्तमेव । तदाह—**अस्येति** । [1]आवृत्तौ तु न मानमिति **शिवम्** ॥ ३ ॥

इति श्री**शिवभट्टसुतसतीगर्भजनागोजीभट्ट**कृते भाष्यप्रदी**पोद्योते** प्रथमाध्यायस्य प्रथमे पादे **तृतीय**माह्निकम् ॥

---

# अथ प्रथमाध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ।

( ३ परिभाषासूत्रम् १ । १ । ४ । आ. ४ ॥ )

## न धातुलोप आर्धधातुके ॥ १।१।४ ॥

( प्रदीपः ) **न धातुलोप आर्धधातुके** ॥ ४ ॥ गुणवृद्ध्योः प्राधान्यादयं निषेधः, न तु तद्गुणभावादिक्परिभाषायाः । **'दीधीवेवीटाम्'** इति चासंबद्धं परिभाषानिषेधे स्यात् ॥ कृत्स्नस्य धातोर्लोपे गुणवृद्धिप्रसङ्गाभावादनर्थको निषेधः स्यादिति सामर्थ्याद्धात्वेकदेशलोपोऽत्र धातुलोपोऽभिमतः, अवयवक्रिययाऽपि समुदायस्य व्यपदेशदर्शनात् । यथा–पटो दग्ध इति । **अथवा** समुदायशब्दोऽवयवे तद्रूपारोपाद्वर्तते ॥

( उद्योतः ) **न धातु** ॥ ४ ॥ **प्राधान्यादिति** । **प्राधान्यं** [2] च संस्कार्यत्वरूपम् ॥ **असंबद्धमिति** । अलोन्त्यस्येत्यनेनापि इक एव प्रसक्तया परिभाषानिषेधे वैयर्थ्यम् ॥ **कृत्स्नस्येति** । **दुरीणो लोप**श्चेति रक्संनियोगेन कृत्स्नधातुलोपोऽस्तीति तदसंभवो नोक्तः ॥ **अथवेति** । आद्यपक्षे–अव[3]यवधर्मस्य समुदाये आरोपः, अन्त्ये–समुदायधर्मस्य प्रवृत्तिनिमित्तस्य अवयवे आरोपितत्वमिति भेदः ॥

### ( पदकृत्याधिकरणम् )

### ( आक्षेपभाष्यम् )

**धातुग्रहणं किमर्थम् ?**

( प्रदीपः ) **धातुग्रहणमिति** । उपसर्जनस्यापि यथा परामर्शस्तथा **'केषां शब्दानां'** इत्यत्र प्रतिपादितम् ॥ वि[4]नापि धातुग्रहणेन लोपविशेषणमार्धधातुकं विज्ञास्यते । अनुबन्धलोपस्य चानैमित्तिकत्वात् 'लविता' इति गुणप्रतिषेधो न भविष्यतीति **प्रश्नः** ॥

( उद्योतः ) **परामर्शः**-शब्देन पृथगुपादानम् ॥ **प्रतिपादितमिति** । बुद्ध्या पृथक् निष्कर्षादिति भावः ॥ **लोपविशेषणमिति** । सूत्रे श्रुतत्वादिति भावः ॥

### ( समाधानभाष्यम् )

**इह मा भूत्—लूञ् लविता-लवितुम्[5], पविता-पवितुम् ॥**

( प्रदीपः ) सिद्धान्ते तु गुणवृद्धिविशेषणमार्धधातुकग्रहणमित्यभिप्रायः ॥ अनुबन्धो न धात्वेकदेशः, यस्मादुपदेश एवेत्संज्ञा । प्रयोगे तु लूशब्द एव धातुसंज्ञः, केवलमसौ ञित्कार्यं लभते । लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव युक्ता धातुसंज्ञा ॥

( उद्योतः ) **सिद्धान्ते त्विति** । निषेध्यत्वेन गुणवृद्ध्योः शा[6]ब्दप्राधान्यात् लोपस्य तद्विशेषण[7]त्वादिति भावः ॥ न च लोपशब्दोऽधि[8]करणवचनः, **अदर्शनं लोप** इत्यादौ भावसाधनस्यैव प्रसिद्धत्वात् ॥ गणे सानुबन्धस्य पाठात् विशिष्टस्यैव धातुत्वं स्यादत आह—

---

१ नन्वावृत्त्या द्वितीयोऽर्थोऽत आह—**आवृत्तौ त्विति** । वस्तुतस्तु—अस्य विध्यर्थतावादिना पुनर्वचनस्यान्यतरार्थत्वमुक्ताशयेनैवोक्तम्, न तु कैयटोक्तरीत्येति । अत्रान्यतरार्थमित्यादिरीत्या भाष्यव्याख्यानं चिन्त्यम् । भाष्यस्य तु–अस्य विधित्वेऽपि तस्याविधित्वस्य निर्विवादत्वाद्विधिनियमसंभवे विधेरेव ज्यायस्त्वात्तत्र दोषप्रसङ्गापादनरूपप्रतिबन्दीद्वारा तन्मुखेन निर्णयोऽत्राकाङ्क्षया मिथ इति तात्पर्यं स्पष्टमेवेति शिवम् ॥ छाया ॥

२ **प्राधान्यं चेति** । प्रत्ययोपात्तभावनाक्षिप्तस्य कर्तुः क्रियां प्रति गुणभावेऽपि यथा प्राधान्यम्, यथा वा **दध्ना जुहोती**त्यत्र तृतीयान्तोपात्तदधिगुणं प्रति अनुवादार्थं विध्युपस्थापकतया गुणभूतस्यापि होमस्य, तथा परिभाषोपस्थित्यर्थं तत्प्रदेशभूतस्यानिप्रदर्शनलिङ्गतया गुणभूतयोरपि तदुपकार्यतया प्राधान्यं तयोरिति भावः ॥ छाया ॥

३ **अवयवधर्मस्येति** । क्रियारूपस्येत्यर्थः ॥ छाया ॥

४ प्रश्नबीजमाह—**विनापीति** ॥ छाया ॥

५ 'तुम्, पूञ्-पवि' इति क. ख. ग. पाठः ॥

६ **शाब्देति** । अश्रुतत्वेऽपीत्यादिः । **'सर्वो हि गुणमुल्लङ्घ्य प्रधानेनैव संबध्यते'** इति न्यायादिति भावः ॥ छाया ॥

७ **तद्विशेषणत्वादिति** । निषेधविशेषणत्वेनोपक्षीणत्वादित्यर्थः ॥ तथा च न तस्य विशेषणसंबन्धयोग्यतेति भावः ॥ छाया ॥

८ **धिकरणेति** । तथा च लुप्यतेऽस्मिन्निति व्युत्पत्त्या आर्धधातुकविशेषणं तदिति भावः ॥ छाया ॥

अनुबन्धविति ॥ यस्मादिति । उपदेशपदाभावेऽपि अन्तरङ्गत्वात्सर्वतः पूर्वं सा । धातुसंज्ञा तु प्रत्ययविशेषे विधित्सिते-इति भावः ॥ धातुसंज्ञेत्संज्ञयोः समकालत्वेऽपि न क्षतिरित्याह—लूशब्दस्यैवेति । अन्वयव्यतिरेकाभ्यां तस्यैव क्रियावाचित्वावगमात् । गणपठितक्रियावाचिनां च धातुत्वविधानादिति भावः ॥

( आक्षेपभाष्यम् )

**आर्धधातुक इति किमर्थम् ?**

( समाधानभाष्यम् )

**'त्रिधा बद्धो वृषभो रोरवीति' ( ऋ. सं. ४।५८।३ )॥**

**( प्रदीपः ) रोरवीतीति ।** सत्यार्धधातुकग्रहणे शब्दवत्त्वादन्यपदार्थे बहुव्रीहिरसंदिग्धो भवति, नान्यथा ॥ क्रमेण सूत्रप्रत्याख्यानायार्धधातुकस्य च लोपविशेषणत्वे धातुग्रहणानर्थक्यप्रतिपादनाय प्रत्युदाहरणोपन्यासः ॥

**( उद्योतः ) रोरवीति**–यङ्लुगन्तस्य रूपम् ॥ **शब्दवत्त्वात्**–शब्देनोपादानात् ॥ **नान्यथेति ।** अन्यथाऽन्तरङ्गत्वात्तत्पुरुष एव स्यादित्यर्थः ॥ ननु पदप्रयोजनचिन्ता वृत्तिकारस्योचिता, न भाष्यकारस्येत्यत आह—**क्रमेणेति ।** तत्तत्पदप्रयोजनखण्डनक्रमेणेत्यर्थः ॥ क्रममेवाह—**आर्धधातुकस्य चेति ॥**

( आर्धधातुकपदार्थान्वयाधिकरणम् )

( पक्षद्वयोपस्थापकभाष्यम् )

**किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणम्—'आर्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति ।**

**आहोस्वित् गुणवृद्धिविशेषणमार्धधातुकग्रहणम्—'धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति ?**

**किं चातः ?**

**( प्रदीपः ) किं पुनरिति ।** आर्धधातुकग्रहणं लोपविशेषणं वा, गुणवृद्धिविशेषणं वा, बहुव्रीहिपक्षे उभयविशेषणं वा-इति पक्षत्रयसंभवात् **प्रश्नः ॥**

**( उद्योतः ) लोपविशेषणम्**-श्रुतत्वात् ॥ **गुणादिविशेषणम्**–प्राधान्यात् ॥ तत्र लोपविशेषणत्वे 'आर्धधातुके परे पूर्वस्य धात्वंशस्य लोपे' इति वाच्योऽर्थस्तत्फलितमुक्तम्—भाष्ये—**आर्धधातुकनिमित्ते लोप इति** ॥ एवं गुणवृद्धिविशेषणत्वे 'आर्धधातुके परे प्रत्यासत्त्या पूर्वस्य धातोर्ये गुणवृद्धी' इति वाच्योऽर्थः । अनुवादेऽपि **'इको गुणवृद्धी' 'अचश्च'** इति परिभाषाऽतिरिक्तपरिभाषाणां प्रवृत्तिस्वीकारात् । तत्फलितमुक्तम्—**आर्धधातुकनिमित्ते ये इति ॥ प्राप्नुत** इत्यनेन प्रसक्तस्यैव निषेध इति सूचयति ॥ **बहुव्रीहीति ।** उभयानुग्रहायेति भावः ॥ यद्यपि 'धातुलोपे' इति समस्तमार्धधातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः ॥

---

१ **समकालेति ।** विरोधाभावेन धातुसंज्ञाया इत्संज्ञाप्रतीक्षायां मानाभावादिति भावः ॥ छाया ॥

२ ननु तस्यैव तत्त्वेऽपि केवलगणपठितानां सेति **सानुबन्धकस्य** स्यादेवात आह—**गणपठितक्रियेति** ॥ छाया ॥

३ ननु **'एकाचो द्वे'** इतिवत् 'धातोर्लोपो यस्मिन्' इति बहुव्रीहौ रोरवीतीत्यत्र लुकोऽनैमित्तिकत्वेन न दोष इत्याशयेनाह—**आर्धधातुकेति** ॥ छाया ॥

४ **शब्दवत्त्वात्**–विशेष्यसमर्पकार्धधातुकशब्दसत्त्वात् ॥

५ **रूपमिति ।** 'रु शब्दे' अतो यङि अनैमित्तिकत्वेनान्तरङ्गत्वाल्लुक्त्वाच्च तल्लुकि अन्तरङ्गत्वाद्द्वित्वेऽभ्यासकार्ये **'चर्करीतम्'** इत्यस्यादादौ पाठेन **भूवादिसूत्रेण** धातुत्वाल्लटि तिपि शपि तल्लुकि **'यङो वा'** इति तस्येटि तन्निमित्ते गुणेऽवादेशे च रूपमित्यर्थः ॥ छाया ॥

६ **स्यादिति ।** एवं चानैमित्तिके यङ्लुकि रोरवीतीत्यत्र गुणनिषेधः स्यादिति बहुव्रीहिलाभार्थं तदावश्यकमिति भावः ॥ छाया ॥

७ **किञ्चात इति । अतः**–उभयविधप्रश्नात् **किं ।** अतः प्रश्नात्किं विवक्षितमित्यर्थः ॥

८ भाष्ये यद्यपि द्विकोटिक एव संशयः कृतः । तावता **'सर्वत्र** संशयः कोटिद्वयावलम्ब्येव' इति न भ्रमितव्यम् । सहस्रसंवत्सराधिकरणे ( पू. मी. ६।७।१३ ) बहुकोटिकसंशयस्य दृष्टत्वात् । अत एव—**ईदूदेद्द्विवचनम्'**–इति सूत्रभाष्यमपि संगच्छते । **'कोटिद्वयावलम्बी** विमर्शः संशयः' इति तार्किकोक्तावप्येककोटिकत्वं तस्य व्यावर्त्यम्, न तु बहुकोटिकत्वम् । तथापि तदुपलक्षणं कोट्यन्तरेणापि संभवात् । कण्ठतस्तदनुक्तिस्तु बहुव्रीहिपक्षस्य निर्दुष्टत्वेन गुरुभूतजघन्यत्वेऽपि प्रतिपादयिष्यमाणत्वात्तत्रादिनोभयविशेषणत्वपक्षस्य **यदी**त्यादिना पक्षद्वयसाधारणदोषेण दूष्यत्वेन तत्रादिजगौरवग्रस्तत्वेन पक्षद्वयविविक्तदोषाभावेन चायुक्तत्वमेवेति ध्वनयिष्यमाणत्वाच्चेति तदेव कोटित्रयं संशयोपपत्तये प्रश्नबीजत्वेन प्रतिपादयन्नादौ तत्पुरुषपक्षे कोटिद्वयमाह—**आर्धधातुकेति** ॥ छाया ॥

९ **सूचयतीति ।** तेन लक्ष्ये वर्तमानानामदेङादीनां न निवृत्तिरिति फलति ॥

१० बहुव्रीहिपक्षे तु—धातुलोप इत्यार्धधातुकस्य विशेषणम्, तच्च गुणवृद्ध्योरित्यत एव तत्पुरुषपक्षे युक्तमुभयविशेषणत्वं न तु बहुव्रीहावित्यनुपपन्नं तत्र योजयति—**यद्यपीति** ॥ तथा चोभयविशेषणमित्यसंगतमिति भावः ॥ छाया ॥

११ 'धातुलोपे' इत्यत्र बहुव्रीहावार्धधातुकस्यान्यपदार्थत्वेन धातुलोपे इत्येतदेव तस्य विशेषणं न तु 'आर्धधातुके' इत्येतत्तद्विशेषणमिति 'बहुव्रीहिपक्षे उभयविशेषणं' इति प्रदीपोऽसङ्गतः स्यादत आह—**विशेषणशब्दः परिच्छेदकपर इति ।** एवञ्च बहुव्रीहिपक्षे 'आर्धधातुके' इति पदस्य धातुलोप इत्यत्रान्वय इत्येव प्रदीपतात्पर्यमिति भावः ॥

(पक्षद्वये दोषदर्शकं भाष्यम्)

**यदि[1] लोपविशेषणम्, 'उपेद्धः[2], प्रेद्धः' अत्रापि प्राप्नोति ॥**

**अथ गुणवृद्धिविशेषणम्, 'क्नोपयति[3]' अत्रापि प्राप्नोति ॥**

(उभयेष्टापत्तिभाष्यम्)

**यथेच्छसि[4] तथाऽस्तु ॥**

(प्रथमपक्षाङ्गीकारभाष्यम्)

**अस्तु लोपविशेषणम् ॥**

(पूर्वोक्तदोषस्मारकभाष्यम्)

**कथम्[5]—'उपेद्धः प्रेद्धः' इति ?**

(प्रदीपः) **प्रेद्ध इति** । नन्वाद्गुणोऽनिग्लक्षण इति तन्निषेधो न भविष्यति, परिहारान्तराभिधानादेतन्नाश्रितमित्यदोषः ॥

(उद्द्योतः) **नन्वाद्गुण इति** । नन्विक्[6]स्थानिकत्वादयमपि इग्लक्षणः । न चात्राप्यनुवृत्तमिक इति स्वरूपपरम्, उत्तरसूत्रे[7] इव स्वरूपपदार्थकत्वव्यवस्थापकचशब्दाभावादिति चेत् । न, **इको गुणवृद्धी** इति संपूर्णमनुवर्त्य यत्रेदं[8] तत्र **न धात्वि**त्युपतिष्ठत इत्यर्थेनास्यापि परिभाषात्वाङ्गीकार इति भावात् ॥ **यद्वा** यत्रेदं तद्विहिते गुणवृद्धी नेत्यर्थः । तद्वक्ष्यति—**'यत्रेक्परिभाषा व्याप्रियते तत्रायं निषेधः'** इति **'इक्प्रकरणात्'**इति भाष्यप्रतीके ॥ अर्थाधिकारेण स्वरूपपरस्यैवेक इत्यस्यानुवर्तनाद्वा ॥

(दोषोद्धारकं भाष्यम्)

**बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

(प्रदीपः) **बहिरङ्ग इति** । यदा पूर्वं प्रत्ययः पश्चादुपसर्गयोगस्[9]तदा प्रतिषेधोऽन्तरङ्गः, गुणो बहिरङ्गः ॥ यदा[10] तु पूर्वमुपसर्गयोगस्तदा गुणोऽन्तरङ्गः पश्चात्प्रत्यययोत्पत्तौ[11] निषेधो बहिरङ्गः । सर्वथा[12] बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः । ननु **नाजानन्तर्ये** इति निषेधात् कथं परिभाषाप्रवृत्तिः ? यत्र कार्यविधौ[13] वानन्तर्येणाचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषायाः । यथा—अक्षद्यूरिति । तत्र हि **'इको यणचि'** इति वचनादिग[14]चोराश्रयणम् । अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमित्यदोषः ॥

(उद्द्योतः) **यदेति** । पूर्वं धातुः साधनेनेति सिद्धान्तपक्षे इत्यर्थः ॥ **यदा त्विति** । **पूर्वं धातुरुपसर्गेणे**ति पक्षे पूर्वमेव जातस्य निषेधायोगादिति भावः ॥ **बहिरङ्गस्यासिद्धत्वादिति** । द्वितीये[15] बहिरङ्गनिमित्तस्या**सिद्धत्वात्**—विधिप्रवृत्तिकालेऽनिष्पन्नत्वात् तन्निषेधाप्राप्त्येष्टसिद्धिरित्यर्थः ॥ एतेन 'जातस्य बहिरङ्गस्यान्तरङ्गे कर्तव्येऽनेनासिद्धत्वप्रतिपादनेऽपि जातेऽन्तरङ्गे पश्चात्प्राप्तबहिरङ्गस्यानेनासिद्धत्वप्रतिपादने मानाभावः फलाभावो ज्ञापकविरोधश्च' इत्यपास्तम् ॥ परं[16] त्वयं पक्षः **सुट्कात्पूर्व** इत्यादिसूत्रेषु भाष्ये दूषित इति भाष्योक्तमेव सम्यक् ॥ **नन्विति** । इयं च **षत्वतुकोरि**ति सूत्रेण[17] ज्ञापिता । अन्यथा बहिरङ्गासिद्धत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ **अचोरिति** द्वित्वमविवक्षितम्, धर्मिग्राहकमानस्य तथैव सत्त्वात् ॥ **अनुपस्थान-**

---

१ विशेषमन्यतरपक्षे दोषरूपं दर्शयति—**यदीति** । आद्यपक्षे धातुपदस्य खण्डनीयत्वसूचनायाह—**लोपेति** ॥ छाया ॥ 'किञ्चातः' इति प्रश्नेन यद्विवक्षितन्तदाह—**यदीत्यादिना** ॥

२ **उपेद्धः प्रेद्ध इति** । इन्धेः क्ते तन्निमित्तेऽ**निदिता**मिति नलोपे धत्वे प्रोपयोगे आद्गुणे रूपे इति भावः ॥ **प्राप्नोतीति** । आद्गुणस्य निषेधः प्राप्नोतीत्यर्थः ॥ छाया ॥

३ **क्नोपयतीति** । क्नूयधातोर्णिचि **अर्तिह्रीव्लीति** पुकि तन्निमित्ते **लोपो व्योरिति** यलोपे णिच्रूपार्धधातुकनिमित्तकस्य **पुगन्ते**ति प्राप्तस्य गुणस्य प्रतिषेधः प्राप्नोतीत्यर्थः ॥ 'उपेद्धः प्रेद्धः-क्नोपयति' इत्युत्तरं भाष्य इति शब्दो न प्रयुक्तः । प्रत्युदाहरणोत्तरन्तत्रैवेतिशब्दः प्रयुज्यते यदसाधारणं प्रत्युदाहरणं स्यात् । अत्र तु बहिरङ्गपरिभाषया निपातनेन च सिद्धत्वान्नैते असाधारणे ॥

४ प. फ. पुस्तके 'यथेच्छसि तथाऽस्तु' इत्यस्य न पाठः ॥

५ अत्र सूत्रे 'इकः' इति पदानुवृत्तिमनभिप्रेत्यैवेयं शङ्का ॥ अत्रानुकरणार्थं इतिशब्दः ॥

६ आद्गुण इत्यस्यानिग्लक्षणत्वान्निषेधाप्राप्तिरित्यर्थं सूत्रार्थप्रदर्शनेन सम्पादयति—**नन्विगित्यादिना**—**अनुवर्तनाद्वा**- इत्यन्तेन ग्रन्थेन ॥

७ **उत्तरसूत्रे**—क्ङिति चेति सूत्रे चकारकरणात् 'इकः' इति स्वरूपपरम्, अत्र चकाराभावान्न तथेति भावः ॥

८ **यत्रेदमिति** । यस्मिन् सूत्रे—सार्वधातुकार्धेत्यादौ 'इको गुणवृद्धी' इति सूत्रं प्रवर्तते तत्रेदमपि उपतिष्ठते । अस्मिन् पक्षे परिभाषासूत्रमिदम् । द्वितीयपक्षे—**यत्र**—गुणवृद्धिविधायके **इदं**—इको गुणेतिसूत्रं **तद्विहिते**—सार्वधातुकेत्यादिविहिते गुणवृद्धीनेत्यर्थः । एवञ्च इग्लक्षणयोर्गुणवृद्ध्योरयं निषेध इत्युपपद्यते । तृतीये च 'इकः' इत्यस्यार्थाधिकारेण स्वरूपपरत्वात् अनेन सूत्रेण धातुलोपे आर्धधातुके 'इकः' इति नोपतिष्ठते—इत्यर्थः ॥

९ **तदेति** । निषेधस्तु लोलुवादावेकपदाश्रितगुणाभावाय सफल इति भावः ॥ छाया ॥

१० एकदेश्युक्तिमाह—**यदा त्विति** ॥ छाया ॥

११ **प्रत्ययोत्पत्ताविति** । न लोपे च सति प्रवृत्तियोग्य इति शेषः ॥ छाया ॥

१२ अत्र पक्षे भाष्यविरोधं परिहरति (एकदेशी)—**सर्वथेति** ॥ छाया ॥

१३ **आनन्तर्येणेति** । अन्यप्रतियोगिकानन्तर्येणेत्यर्थः ॥ छाया ॥

१४ **इगचोरिति** । निमित्तभूताच्प्रतियोगिकानन्तर्यानुयोगिनोऽच्रूपस्येक इत्यर्थः ॥ छाया ॥

१५ आद्ये जातस्य समकालप्राप्तस्य वा बहिरङ्गस्य गुणस्यासिद्धत्वेन निषेध्याभावेन निषेधो नेत्यर्थस्य स्पष्टत्वादाह—**द्वितीय इति** । तत्र त्वित्यर्थः ॥ **बहिरङ्गनिमित्तस्येति** । बहिरङ्गनिषेधनिमित्तनलोपनिमित्तक्तस्येत्यर्थः ॥ छाया ॥

१६ 'यदा तु' इत्यत्र तुना सूचितामरुचिमाह—**परं त्विति** ॥ छाया ॥ **अयम्पक्षः**—पूर्वन्धातुरुपसर्गेण युज्यत इतिपक्षः ॥

१७ **सूत्रेणेति** । सूत्रस्थतुग्ग्रहणेनेत्यर्थः ॥ छाया ॥

मिति । अस्[1]यात्रेत्यादि ॥ **तत्र हीति** । ततश्च यणि [2]ऊडसिद्धो न ॥ "तेने[3]नासिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते । अत एव भाष्ये—**विप्रतिषेधसूत्र**भिन्नस्थले न क्वाप्ये[4]तदुल्लेखः । यथा–असिद्धपरिभाषाज्ञापकं **विप्रतिषेधसूत्रे** उक्तमपि पुनर्वाह ऊठ्सूत्रे उक्तं"इति विवरणकृतः ॥ **अस्मिन्निति** । निषेधस्य प्राप्तिपूर्वकत्वात्पश्चात्प्रवर्तमाने इत्यर्थः ॥

( लाघवभाष्यम् )

**[5]यद्येवं, नार्थो धातुग्रहणेन ॥**

( धातुग्रहणाभावे दोषस्मारकभाष्यम् )

**[6]इह कस्मान्न भवति—लूञ्-लविता, लवितुम्, लवितव्यं-इति ?**

( समाधानभाष्यम् )

**[7]आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः ॥**

( द्वितीयपक्षस्वीकारभाष्यम् )

**[8]अथवा—पुनरस्तु गुणवृद्धिविशेषणम् ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—क्नोपयतीत्यत्रापि प्राप्नोतीति [9] ॥**

( उद्द्योतः ) क्नूय्धातोर्णिचि पुकि **लोपो व्योरिति** यलोपः ॥

( समाधानभाष्यम् )

**नैष दोषः,**

**निपातनात्सिद्धम् ॥**

**किं निपातनम् ?**

**"चेले क्नोपेः" [10]इति ॥**

( इत्यार्धधातुकपदार्थान्वयविचाराधिकरणम् )

—॰॰—

( अथ परिगणनाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**परि[11]गणनं कर्तव्यम्—**

( ८९ परिगणनपूर्वपक्षिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ यङ्यक्क्यवलोपे प्रतिषेधः ॥ * ॥**

( भाष्यम् )

**यङ्-यक्-क्य-वलोपे प्रतिषेधो वक्तव्यः ॥**

**यङ्—बेभिदिता, मरीमृ[12]जः ।**

**यक्—कुषुभिता, मगधकः ।**

**क्य—समिधिता, दृषदकः ।**

**वलोपे—[13]जीरदानुः ॥**

( प्रदीपः ) **यङ्यक्क्यवलोप इति** । **'व'** इत्यत्राकारो विवक्षितः । तेन धातुपाठे योऽकारान्तः पठित[14]स्तस्य ग्रहणम् । अन्यथा स्रिविः कथं निवार्येत ?

**बेभिदितेति** । बेभिद्यशब्दात्तृच्, इट्, 'यस्य हलः' इति [15]यलोपः ॥ **मरीमृज इति** । '[16]यङोऽचि च' इति यङ्लुक् ॥ कुषुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू, ताभ्यां यक्, 'ण्वुल्तृचौ', 'यस्य हल' इति यलोपः ॥ समिद्दृषच्छब्दाभ्यां क्यजन्ताभ्यां प्रत्ययौ-'ण्वुल्तृचौ', 'क्यस्य विभाषा' इति यलोपः ॥

---

१ **अस्यात्रेत्यादीति** । अत्रानुपस्थानं परिभाषाया इति कैयटेऽन्वयः ॥

२ 'ऊडसिद्धो नेत्यर्थः' इति च. झ. पाठः ।

३ **तेनेति** । तुग्ग्रहणेनेत्यर्थः ॥ छाया ॥

४ **एतदिति** । सज्ञापकनिषेधेत्यर्थः ॥ छाया ॥

५ लाघवमपि दर्शयति—**यद्येवमिति** ॥ छाया ॥

६ पर आह—**इहेति** ॥ छाया ॥ फ. पुस्तके 'इह' शब्दस्य न पाठः ॥

७ सिद्धान्ती समाधत्ते—**आर्धेति** ॥ छाया ॥

८ '**यथेच्छसीत्युक्त्यनुरोधेन** सिद्धान्त्येव द्वितीयपक्षं दूषणोद्धाराय स्वीकरोति—**अथवेति** । यद्यपि "**अथवा पुनरस्तु गुणवृद्धिविशेषणम् । कथं क्नोपयतीति ? । परिगणनं कर्तव्यम्**" इति भाष्यपाठो विवरणकृन्नारायणादिभिर्व्याख्यातः, तथापि प्रचुरपाठ एवाश्रितः ॥ स एव दूषणमुद्धर्तुमनुवदति—**ननु चेति** ॥ छाया ॥

९ 'प्राप्नोतीति ॥ परिगणनं कर्तव्यम्' इति फ. पाठः ।

१० **इतीति** । अयं भावः—यलोपार्थं निपातनमावश्यकम् । अन्यथा वर्णमात्राश्रयेऽन्तरङ्गे यलोपे कार्ये बहिरङ्गपुकोऽसिद्धत्वेन यलोपो न स्यात् । एवं च तेनैव गुणोऽपि भविष्यति ॥ तदेवं पक्षद्वयमपि निर्दुष्टमिति सिद्धम् ॥ तत्र त्वाद्यो लघुभूतो धातुग्रहणासत्त्वात् । द्वितीयस्तु गुरुभूतस्तत्र तदावश्यकत्वादिति स्थितम् ॥ छाया ॥

११ **परिगणनमिति** । लोपप्रतियोगिनामिति शेषः ॥ **यङिति** । तथा च '**न यङ्यक्क्यवलोप आर्धधातुके**' इति सूत्रं कार्यम् । धातुग्रहणं च न कार्यमुभयथापीति भावः ॥ छाया ॥

१२ 'मरीमृजकः' इति फ. पाठः । तस्मिन्नेव पुस्तके 'मरीमृजः' इत्यपि संशोधितः पाठः ॥

१३ **जीरदानुरिति** । '**जीवे रदानुः**' इति [हयवरट्सूत्रभाष्योक्तरीत्या ] रदानुः । '**लोपो व्योः**' इति वलोपः ॥ छाया ॥

१४ **पठित इति** । 'जीव' इत्यस्यैकदेश इति भावः ॥ छाया ॥

१५ **यलोप इति** । समुदायलोप इति भावः ॥ छाया ॥

१६ **यङोऽचीति** । यङन्तान्मरीमृज्यशब्दात्पचाद्यचीत्यादिः ॥ वस्तुतस्तु मरीमृजक इत्येव पाठः, भाष्ये—'**अनारम्भो वा**' इत्यग्रे तथैवानुवाददर्शनात् । '**यत्र तर्हि–**' इत्यादिना यङ्लुगन्ते बहुषु दोषस्य वक्ष्यमाणत्वाच्च । अत एव पूर्वोत्तरसाहचर्यमपि संगतम् । '**यस्य हलः**' इति समुदायलोप इति त्वयाऽवश्यं वक्तव्यमेवेति यङन्तान्मरीमृज्यशब्दाण्ण्वुल्यपि न दोष इति कैयटश्चिन्त्य एवेति बोध्यम् ॥ **प्रत्ययौ** तृच्ण्वुलौ, '**ण्वुलतृचौ**' इति सूत्रोल्लेखः । एवं प्रागपि । अन्यथा यथासंख्याभावेनासंगतिः स्पष्टैव । 'तथा च '**ण्वुलतृचौ**' इति सूत्रेण प्रत्ययाविति तत्रापि बोध्यम् ॥ छाया ॥

( उद्योतः ) वाक्यकारः सूत्रेऽव्याप्त्यतिव्याप्तिपरिहाराय परिगणनमाह—**परिगणनमिति**—भाष्ये ॥ अत्र **यस्य हल** इति लोपः समुदायलोप इति मत्वा यक्क्ययोः परिगणनं,'बेभिदिता' इत्युदाहरणं च बोध्यम् ॥

( भाष्यम् )

**किं प्रयोजनम् ?**

( ९० परिगणनप्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ नुम्लोपे[1] स्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् ॥ * ॥**

( भाष्यम् )

**नुम्लोपे स्त्रिवि अनुबन्धलोपे च प्रतिषेधो मा भूदिति ॥**

**नुम्लोपे[2]—अभाजि, रागः, उपबर्हणम् ।**

**स्त्रिवेः—आस्त्रेमाणम् ।**

**अनुबन्धलोपे[3]—लूञ्-लविता लवितुम् ॥**

( प्रदीपः ) **नुम्लोप इति । 'नुम्'** इति नकारस्य पूर्वाचार्यसंज्ञा ॥ **उपबर्हणमिति ।** 'बृहि वृद्धौ' इदित्त्वान्नुम् । **'बृंहेरच्यनिटि'** इति वार्तिकेन नलोपः ॥ **आस्त्रेमाणमिति ।** अस्रेमाणमित्यादि[4] वेदे पठ्यते । तत्र नञ्पूर्वात् **स्त्रिवेर्मनिन्**-प्रत्ययः[5] ॥ ऊडादेशश्छान्[6]दसत्वान्न भवति ॥ परिगणने[7] सति धातुग्रहणं न कर्तव्यं भवतीत्यनुबन्धलोपः प्रयोजनत्वेन पठितः ॥

( उद्योतः ) ननु भञ्जिरञ्ज्योरौपदेशिकनस्यैव **'भञ्जेश्च चिणि' 'रञ्जेश्च' 'घञि च—'** इत्यादिना लोप इति नुम्लोप इत्यसङ्गतमत आह—**नुमिनीति** ॥ नन्वनिदिद्बृहिर्, बृहिणा इदं सिद्धमत आह—**बृहि वृद्धाविति** ॥ स नास्त्येवेति पूर्वपक्ष्याशयः ॥ **ऊडादेश इति ।** ज्वरत्वरस्त्रिवीत्यनेन ॥

( आक्षेपभाष्यम् )

**यदि परिगणनं क्रियते, 'स्यदः, प्रश्रथः, हिमश्रथः' इत्यत्रापि न प्राप्नोति[9] ॥**

( उद्योतः ) भाष्ये—**इत्यत्रापि प्राप्नोतीति ।** वृद्धिरिति शेषः ॥ **'न प्राप्नोति'** इति पाठे–निषेध इति शेषः[10] ॥

( समाधानभाष्यम् )

**वक्ष्यत्येतत्[11]—*निपातनात्स्यदादिषु* इति ॥**

( उद्योतः ) निपातनादिति । 'स्यदो जवे' 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति निपातनस्य[12] नलोपमात्रफलकत्वे नलोपविधानेनैव सिद्धे निपातनवैयर्थ्या[13]पत्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**तत्तर्हि परिगणनं कर्तव्यम् ॥**

( परिगणनप्रत्याख्यानभाष्यम् )

**न[14] कर्तव्यम् ॥**

( आक्षेपभाष्यम् )

**नुम्लोपे कस्मान्न भवति ?**

( सिद्धान्तसमाधानभाष्यवार्तिकम् )

***इ[15]क्प्रकरणान्नुम्लोपे वृद्धिः* ।**

( भाष्यम् )

**इ[16]ग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैषेग्लक्षणा वृद्धिः ॥**

( प्रदीपः ) **इक्प्रकरणादिति ।** तेन[17] यत्रेक्परिभाषा स्थान्यन्तरनिवृत्तये व्याप्रियते तत्रायं निषेध इत्यर्थः ॥

---

१ 'नुम्लोपस्त्रिव्य' इति फ. ख. पाठः ॥

२ 'नुम्लोपः' इति क. ख. पाठः ॥

३ 'अनुबन्धलोपः' इति क. ख. पाठः ॥

४ अस्रेमाणं ( ऋ० सं० ३।२९।१३ )

५ 'प्रत्ययो वकारलोपः' इति च. झ. पाठः ॥

६ 'न्दसत्वाद्वकारस्य न भव–' इति मुद्रितपाठः ॥

७ ननु परिगणनाभावेऽपि धातुग्रहणादेवानुबन्धलोपे प्रतिषेधाभावः सिद्ध इति कथमेतत्परिगणनप्रयोजनमत आह—**परिगणने सतीति** ॥ छाया ॥

८ **ऊडादेश इतीति** ॥ यत्तु 'च्छ्वोः–' इत्यूडिति देवः । तन्न, परत्वाद्विशेषविहितत्वाच्च **'ज्वरत्वर–'** इत्यस्यैवौचित्यात् । तेन वस्यैव, अनेन वोपधयोरिति फलभेदादप्यस्यैवौचित्याच्चेति ध्वनयन्नाह—**ज्वरेति** ॥ छाया ॥

९ 'इत्यत्रापि प्राप्नोति' इति क. ख. च. छ. पाठः ॥

१० **शेष इति ।** परिगणनानन्तर्गतत्वादिति भावः ॥ छाया ॥

११ समाधत्ते पूर्वपक्षी—**वक्ष्यतीति** ॥ अनुपदं वार्तिककृदिति शेषः ॥ छाया ॥

१२ 'निपातनं । अस्य' इति च. पाठः ॥

१३ ननु निपातनं नलोपमात्रार्थमत आह—**अस्येति** ॥ छाया ॥

१४ 'न कर्तव्यम्' इत्यस्य फ. पुस्तके न पाठः ॥

१५ वार्तिकमेतदिति केषाञ्चिन्मतम् । छायोक्तिरपि तथैव । तथापि भाष्यवर्तिकमेतत्स्यात्, न कात्यायनवार्तिकम्; कुण्डलनाभावात् । अग्रिमं 'प्रत्ययाश्रय–' इत्यपि भाष्यवार्तिकमेव, सिद्धशब्दान्तं कात्यायन वार्तिकं नेति प्रस्तावनायां स्फुटमुपपाद्यते ॥

१६ सिद्धान्ती समाधत्ते—**इगिति** ॥ उपबर्हणमित्यत्र तु समाधानं वक्ष्यते ॥ छाया ॥

१७ नन्विकः प्रकरणात्–प्रस्तावादधिकाराच्चत्र वृद्धिरित्यर्थोऽस्य वार्तिकस्य वाच्यः । एवं चात्र पक्षद्वयेऽपि इकः-इक्स्थानिके गुणवृद्धी न स्त इति सूत्रार्थ इति नुम्लोपे इष्टसिद्धिः । परंतूत्तरसूत्रे एवमर्थेनानिर्वाहः, पौरोहित्यं लैगवायन इत्यादौ दोषापत्तेः । किं चोक्तवार्तिकार्थो बाधितः, नहि षष्ठ्यन्तमिकपदमर्थपरं प्रकृतं किंतु सान्तं प्रथमान्तं पदपरम् । न च शब्दाधिकारादत्र तथा, अर्थाधिकारे दोषप्राप्तावगत्या शब्दाधिकाराश्रयणेऽप्यर्थाधिकारेऽदोषेण तथा दुर्वचत्वात् । तावतापि तत्र सान्तस्यैव प्रस्तुतत्वेनेकः प्रस्तुतत्वाभावेन बाधितत्वाच्च । नचेक्पदेन सान्तं लक्ष्यते, स्वायत्ते शब्दप्रयोगे निर्मूललक्षणाया अनौचित्यादितिचेत्, उच्यते—इगिति परिभाषाप्रतीकम् । अत एव प्रस्तावार्थकप्रकरणपदं सार्थकम् । अन्यथाऽनुवृत्तेरित्येव वदेत् । तथा च यतः स्थानिनियामिकेक्परिभाषा प्रस्तुत्य निषेधारम्भः, अतः परिभाषाविषयकत्वं निषेधमात्रस्येति नुम्लोपेऽतरवाद्वृद्धिरित्यर्थः—इति, तदेतदभिप्रेत्याह—**तेनेति ।** स्थानिनियामकेक्परिभाषाप्रस्तावेनेत्यर्थः ॥छा.॥

( उद्द्योतः ) तेनेति । अन्यथा 'ओर्गुणः' इत्यादावपि परिभाषाप्रवृत्तौ तस्यापीग्लक्षणत्वे लैगवायन इत्यादौ निषेधः स्यादिति भावः ॥ यत्रेक्परिभाषेति । न चेक इत्यनुवर्त्य 'इको न ते' इत्येव व्याख्यानमुचितमिति वाच्यम् । मरीमृजः सरीसृप इत्यादाविकः प्रत्ययाव्यवहितपूर्वत्वाभावान्निषेधानापत्तेः । तदाह भाष्ये—इग्लक्षणयोरिति । यथैतदर्थलाभस्तथोक्तम् । इक्परिभाषालक्षणयोरिति तदर्थः ॥

( आक्षेपभाष्यम् )

**यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, 'स्यदः, प्रश्रथः, हिमश्रथः' इत्यत्र न प्राप्नोति ॥**

**इह च प्राप्नोति–'अवोदः[3], एधः[4], ओद्मः' इति ॥**

( ९१ सिद्धान्तसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ निपातनात्स्यदादिषु ॥ * ॥

( भाष्यम् )

**निपातनात्स्यदादिषु प्रतिषेधो भविष्यति, न[5] भविष्यति च ॥**

( आक्षेपभाष्यम् )

**[6]यदीग्क्षलणयोर्गुणवृद्ध्योः प्रतिषेधः, स्त्रिँव्यनुवन्धलोपे कथम् । स्त्रिवेः-आस्रेमाणम्, लूञ्-लविता ॥**

( सिद्धान्तसमाधानभाष्यवार्तिकम् )

## *प्रत्ययाश्रयत्वादन्यत्र सिद्धम्* ।

( भाष्यम् )

**आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः ॥**

( प्रदीपः ) प्रत्ययाश्रयत्वादिति । लोपविशेषणमार्धधातुकग्रहणमित्यर्थः ॥

( उद्द्योतः ) लोपेति । प्रत्ययाश्रयत्वादिति भाष्यस्य—लोपे आर्धधातुकप्रत्ययनिमित्तकत्वाश्रयणादित्यर्थ इति भावः ॥

( आक्षेपभाष्यम् )

**[9]यद्यार्धधातुकनिमित्ते लोपे प्रतिषेधः, 'जीर[10]दानुः' ( ऋ० सं० ५।८३।१ ) अत्र न प्राप्नोति ॥**

( प्रदीपः ) जीरदानुरिति । वर्णनिमित्तोऽत्र वलोपो न प्रत्ययनिमित्तः ॥

( उद्द्योतः ) न प्रत्ययेति । प्र[11]त्ययस्याश्रुतत्वादनाक्षिप्तत्वाच्चेति भावः ॥

( ९२ सिद्धान्तसमाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ रकि [12]ज्यः संप्रसारणम् ॥ * ॥

( भाष्यम् )

**नैतज्जीवे रूपम्, रक्येतत् ज्यः संप्रसारणम् ॥**

( प्रदीपः ) रकि ज्य इति । एवं च 'जीर' इत्यवग्रहः सिध्यति । बहुव्रीहित्वा[13]च्च जीरदानुशब्दे रेफाकार उदात्तः ॥

( उद्द्योतः ) अवश्यं जीरदानुशब्दस्यैवमेव व्युत्पत्तिः कार्येत्याह—एवं चेति । अवान्तरपदत्वे सत्येवावग्रह इत्युत्सर्गादिति भावः ॥ ननु रदानुप्रत्यये रेफाकार उदात्तः, समासे त्वन्तोदात्तः स्यादत आह—बहिति । जीरस्य प्रत्ययस्वरेणान्तोदात्तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणेत्यर्थः ॥ जीवेर्विंच्वि तु गु[14]र्णनिषेधो भवत्येव ॥ एतेनार्धधातुकत्वेन यत्र लोपे निमित्तता तत्रैव लोपे निषेध इत्यपास्तम्,

---

१ अयं प्रतिषेध इग्लक्षणयोर्गुणवृद्ध्योरित्यर्थः । 'कथं–प्रेद्ध उपेद्धः' इति भाष्यव्याख्यायामयमर्थः प्रदर्शितः ॥

२ **न प्राप्नोतीति** । प्रतिषेध इति शेषः ॥ **प्राप्नोतीत्यत्रापि** स एव शेषः ॥ तथा चाव्याप्त्यतिव्याप्ती इति भावः ॥ छाया ॥

३ **अवोद इति** । अत्र नलोपगुणयोः कृतयोः **'एङि पररूपम्'** इति पररूपमिति बोध्यम् । केचित्तु निपातनसाहचर्यमात्रेणेदमुदाहृतम् । नलोपमात्रनिपातनेऽप्य**याद्गुण** इति गुणेन सिद्धत्वात् इति । अन्ये त्वेतद्भाष्यप्रामाण्यादेवोपसर्गाविवक्षेति वदन्ति ॥ छाया ॥

४ 'एधः' इत्यस्य फ. पुस्तके न पाठः ॥ अवोदैधौद्मेति सूत्रेणैते निपात्यन्ते ॥

५ **न चेति** । अवोदादिष्वित्यादिः ॥ छाया ॥ 'न च भविष्यति' इति च. झ. फ. पाठः ॥

६ परिगणनाभावे सर्वदोषानुद्धारेण तदर्थं कर्तव्यान्तरापेक्षायाः परिगणनमेव युक्तमित्याशयेनाह—**यदीति** ॥ छाया ॥

७ स्त्रिविलोपे-अनुबन्धलोपे च-आस्रेमाणं-लवितेत्यत्र कथमित्यर्थः ॥

८ ननु 'प्रतिषेधस्यार्धधातुकरूपप्रत्ययनिमित्तकत्वात्' इति वार्तिकार्थाङ्गीकारे द्वितीयपक्षलाभेन तत्र धातुग्रहणसत्त्वेन लवितेत्यादौ दोषवारणेऽपि आस्रेमाणमित्यत्र दोष एवेत्यत आह—**प्रत्ययाश्रयेति** ॥ तथा च स्त्रिवेर्वलोपस्य वलनिमित्तकत्वादन्त्येऽनुबन्धलोपस्यानैमित्तिकत्वान्न प्रतिषेधप्रसङ्ग इति भावः ॥ छाया ॥

९ तदेवं परिगणने द्वयोः साम्येऽपि तदभावे आद्य एव युक्त इति स्थितम् ॥ तत्र शङ्कते—**यद्यार्धेति** ॥ **जीरेति** । तर्हीत्यादिः । **न प्राप्नोतीति** । प्रतिषेध इति शेषः ॥ छाया ॥

१० जीवे रदानुप्रत्ययमाश्रित्यायमाक्षेपः ॥ एतदुत्तरमपि **'इति'**-शब्दो न, प्रत्युदाहरणस्यान्यथासिद्धत्वात् ॥

११ ननु वलोपस्य वर्णनिमित्तकत्वेऽपि स वर्णः प्रत्ययावयव एवेति कथञ्चित् प्रत्ययनिमित्तकत्वं स्यादत आह—**प्रत्ययस्येति** । निमित्ततावच्छेदकमत्र वत्वमेव न प्रत्ययत्वमिति भावः ॥

१२ **रकि ज्य इति** । जीवे रदानुप्रत्यये रूपासिद्धौ वार्तिके **'ज्यावयोहानौ'** इत्यस्मात् रक्प्रत्यये संप्रसारणे च रूपसिद्धिः प्रदर्श्यते । रक्प्रत्यये सम्प्रसारणे 'हलः' इत्यनेन दीर्घे 'जीर' इति सिद्धम् । दानुशब्दश्च 'दाभाभ्यां नुः' इत्युणादिसूत्रेण निष्पन्नो दातीति—दानुरित्यर्थकः ॥

१३ **बहुव्रीहित्वाच्चेति** । **'कनिक्रदद्वृषभो जीरदानू रेतो दधात्योषधीषु गर्भम् ।'** ऋ. ५।८३।१। इतिमन्त्रे 'वृषभो जीरदानुः कनिक्रदत् ओषधीषु रेतो गर्भं दधाति' इत्यर्थके जीरदानुशब्दो मेघवाचको जीरो दानुर्यस्य–क्षिप्रं दानं यस्येत्यर्थक इति बहुव्रीहिरुपपन्नः ॥

१४ **गुणनिषेध इति** । तत्र हि वकारलोपनिमित्तस्य विचो वकारस्य प्रत्ययत्वादिति भावः । वस्तुतो जीवेर्विजभाव एव, प्रत्याख्यानपरभाष्यप्रामाण्यात् ॥

वार्तिकविरोधात् । यङोऽचि चेत्यत्रापि तत्त्वेनानिमित्तत्वाल्लोलुव इत्याद्यसिद्ध्यापत्तेश्च ॥ धिन्व्यादिभ्यस्तु विजभाव एव ॥

( एकदेशिभाष्यम् )

**यावता चेदानीं रकि जीवेरपि सिद्धं भवति । कथमुपबर्हणम् ?**

( उद्द्योतः ) भाष्ये—**यावता चेदानीमिति** । कित्त्वेन गुणनिषेधादिति भावः ॥ अत्र वलोपो **लोपो व्योरित्यनेन** । इदं च यथाश्रुतसूत्रमते । वलोपप्रत्याख्याने तु रकि ज्य इत्येव शरणम् ॥

( सिद्धान्तिभाष्यम् )

**बृहिः प्रकृत्यन्तरम् ॥**

( प्रदीपः ) **बृहिरिति** । 'बृह बृहि वृद्धौ' इति पाठात् ॥

( आक्षेपभाष्यम् )

**कथं ज्ञायते—बृहिः प्रकृत्यन्तरमिति ?**

( सिद्धान्तिभाष्यम् )

**अचि-इति हि लोप उच्यते, अनजादावपि दृश्यते-निबृह्यते ।**

**अनिटि-इति चोच्यते, इडादावपि दृश्यते-निबर्हिता, निबर्हितुमिति ।**

**अजादावपि न दृश्यते-बृंहयति, बृंहकः ॥**

( उपसंहारभाष्यम् )

**तस्मान्नार्थः परिगणनेन ॥**

( आक्षेपभाष्यम् )

**यदि परिगणनं न क्रियते 'भेद्यते, छेद्यते' अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **भेद्यत इति** । गुणो णिलोपश्चार्धधातुकनिमित्त इति पक्षद्वयेऽपि दोषः । अपवादविषयपरिहाराच्चान्तरङ्गोऽपि गुणोऽत्र न प्रवर्तेत इत्युपन्यासः ॥

( उद्द्योतः ) **पक्षद्वयेऽपीति** । तन्त्रेणोभयविशेषणत्वपक्षेऽपीत्यपि बोध्यम् ॥ **गुणो** ण्याश्रयः । **णिलोपो** यगाश्रयः ॥ **अपवादेति** । **प्रकल्प्य वाऽपवादविषय**मिति परिभाषयेति भावः ॥ एतेन "गुणप्रतिषेधौ यत्र समानकालौ तत्र चरितार्थो निषेधो नान्तरङ्गं गुणं बाधितुं क्षमते" इत्यपास्तम् ॥ **न च** 'भेद्यते' इत्यत्राचः **परस्मि**न्निति णिलोपस्य स्थानिवत्त्वेन तत्राभावातिदेशस्य च सत्त्वेन स्थानिनि णिचि सति अभवतो निषेधस्य लोपेऽप्यभावातिदेशान्न दोष इति **वाच्यम्** । स्थानिवद्भावाश्रयणे सूत्रं प्रत्याख्यातमेव-इति तदनाश्रयणेन सूत्रवत् तदनाश्रयणेनैवायं दोष इत्याशयात् ॥

( समाधानभाष्यम् )

**नैष दोषः । धातुलोप इति नैवं विज्ञायते—'धातोर्लोपः-धातुलोपः, धातुलोपे' इति ।**

**कथं तर्हि ?**

**'धातोर्लोपो यस्मिंस्तदिदं, धातुलोपे' इति ॥**

---

१ एतेनेत्यस्यार्थमाह—**वार्तिकेति** । **'वलोपे प्रतिषेधः'** इति वार्तिकेत्यर्थः ॥ छाया ॥

२ ननु वार्तिकं खण्डितमेवेत्यत आह—**यङोऽचीति** ॥ जीरदानुरिति तदुदाहरणपरभाष्यविरोधाच्चेत्यपि बोध्यम् ॥ छाया ॥

३ नन्वेवमपि धिन्व्यादिभ्यो विचि सूत्राभावे गुणः सूत्रसत्त्वे गुणनिषेध इति फलभेदापत्तिरत आह—**धिन्व्यादिभ्य इति** । सूत्रस्य प्रत्याख्यानपरभाष्यप्रामाण्यादिति भावः ॥ एवं तु जीवेरपि तदभावो बोध्यः ॥ छाया ॥ 'धिन्व्यादिभ्योऽस्तु विजभाव एव' इति प्र. पाठः ॥

४ एकदेश्याह—**यावतेति** । **इदानीं**-परिगणनप्रत्याख्यानकाले॥ **जीवेरपीति** । किं जिनातेः संप्रसारणपूर्वरूपदीर्घविधानक्लेशेनेति भावः ॥ छाया ॥

५ **'नुम्लोपे कस्मान्न भवति'** इति शङ्काग्रन्थेन 'अभाजि-रागः-उपबर्हणम्' इति त्रयाणामुपस्थितावपि **'इक्प्रकरणात्'** इति सिद्धान्तभाष्ये वृद्धिग्रहणेन 'नलोपे वृद्धेरेवानुपपत्तिर्दर्शिता परिगणनाभावे । उपबर्हणमित्यत्र तु नलोप एव नेति न निषेधापत्तिर्गुणस्य' इति सूचितं प्रकटीकारयितुं तटस्थः पृच्छति—**कथमुपबर्हणमिति** ॥ छाया ॥ ननु 'कथमुपेद्धः प्रेद्ध इति' 'कथमुपबर्हणं' इति समाने ग्रन्थे इतिशब्दव्यवहारः क्रियते न क्रियत इति कथमिति चेत् । प्रेद्ध इत्यत्रानुकरणत्वात्तदर्थं इतिशब्दः प्रयुक्तः । उपबर्हणमिति नानुकरणम्,'अभाजि राग उपबर्हणं' इत्यत्रेदिद्बृहिधातोरूपमाश्रित्य दोषः । अत्र धातुविशेषमनाश्रित्य रूपसामान्ये प्रश्नोऽत इदं नानुकरणमिति ॥

६ भाष्ये **यावता**-येन कारणेन रकि ज्यः सिद्धं तेन कारणेनेदानीं जीवेरपि रकि सिद्धं भवति-इत्यन्वयः । तत्कारणमाह—**कित्त्वे**-**नेति** । परिगणनप्रत्याख्यानेऽपि रकः कित्त्वेन जीवेर्गुणनिषेधः सिध्यतीत्यर्थः । **अत्र**—जीवेरित्यत्र । ननु लोपो व्योरिति सूत्रे वकारः प्रत्याख्यातोऽत आह—**इदं चेति** । वलोपप्रत्याख्याने तु नैतत्सिध्येदिति भावः॥

७ उक्तमभिप्रेतं धातुपाठमजानन् शङ्कते—**कथमिति** ॥ छाया ॥

८ **उच्यत इति** ॥ **'बृंहेरच्यनिटि'** इति वार्तिकेनेति भावः ॥ **बृंहक इति** । तथा च वार्तिकमव्याप्त्यतिव्याप्तिदर्शनान्नाश्रयणीयम् । किंतु तत्प्रकृत्यन्तरमेवाङ्गीकार्यमिति भावः ॥ छाया ॥

९ तदेवं प्रागुक्तदोषोद्धारेण परिगणने खण्डिते गुरुलघुभूतद्व्यादिमूलभूततत्पुरुषपक्ष एवायुक्त इत्याशयेनाशङ्कते—**यदीति** ॥ **प्राप्नोतीति** । निषेध इति शेषः ॥ विभज्यान्वाख्याने भिदादेर्ण्यन्तात्कर्मणि लटि तङि यकि भिद्-इयत इति स्थिते नित्यत्वात्पूर्वं णिलोपे यकमपेक्ष्य प्रवृत्ते प्रत्ययलक्षणेन णिचमपेक्ष्य प्राप्नुवतो लघूपधगुणस्यानेन निषेधो द्वयोरप्यार्धधातुकनिमित्तकत्वात्पक्षद्वये प्राप्नोतीत्यर्थः ॥ छाया ॥

१० **पक्षद्वयेपीत्यनेन** भाष्येणोभयविशेषणत्वरूपतृतीयपक्षस्य प्रागनुक्तत्वात्तदुक्त्यनर्हत्वं ध्वन्यते तथा च तत्पक्षसमुच्चायकोऽपिः । तत्सूचितमर्थमाह—**तन्त्रेणेति** । तन्त्रादिनेत्यर्थः ॥ तथा च गौरवं स्पष्टम् । एतद्दोषदूष्यत्वं तद्विविक्तदोषाभावश्चेति ध्वनितं, तृतीयपक्षे दोषं योजयितुं विभिन्नार्धधातुकनिमित्तकत्वमाह—**गुण इति** ॥ छाया॥

११ **यस्मिन्निति** । गमकत्वाज्ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । तत्र च श्रुतान्यपदार्थपरित्यागेनाश्रुतान्यपदार्थकल्पनायोगादार्धधातुकमेवान्यपदार्थत्वेनाश्रीयते । अत एव भाष्ये नपुंसकमुक्तम् । तथा च धातुलोपविशेष्यार्धधातुकविशेष्यता गुणवृद्ध्योरिति भावः ॥ छाया ॥ 'यस्मिंस्तादिदं धातुलोपं धातु' इति फ. पाठः ॥

( प्रदीपः ) कथं तर्हीति । बहुव्रीहौ सत्येकार्धधातुकनिमित्तत्वं लोपस्य गुणवृद्ध्योश्चाश्रितमिति 'भेद्यते' इत्यादौ भिन्ननिमित्तत्वाद्गुणो न निषिध्यते ॥

( उपसंहारभाष्यम् )

तस्मादिग्लक्षणा वृद्धिः ॥

( उद्द्योतः ) भाष्ये—तस्मादिग्लक्षणा वृद्धिरिति । प्रतिषेध्येति शेषः । अत एवाभाजीत्यादिसिद्धिरिति भावः ॥

( इति परिगणनाधिकरणम् )

( अथेग्लक्षणत्वे दोषनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

यदि तर्हीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, 'पापचकः, पापठकः, मगधकः, दृषदकः' अत्र न प्राप्नोति ॥

( ९३ सिद्धान्तिसमाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ अल्लोपस्य स्थानिवत्त्वात् ॥ * ॥

( भाष्यम् )

अकारलोपे कृते तस्य स्थानिवत्त्वात् गुणवृद्धी न भविष्यतः ॥

( उद्द्योतः ) अकारलोप इति । अतो लोप इत्यनेन । यङ्लुगन्ताण्ण्वुलि तु सूत्रमतेऽपि निषेधो न, आर्धधातुकनिमित्तलोपाभावात् ॥

( इतीग्लक्षणत्वे दोषनिराकरणम् )

( अथ सूत्रप्रत्याख्यानाधिकरणम् )

( ९४ सिद्धान्तवार्तिकम् ॥ १ ॥ )

॥ * ॥ अनारम्भो वा ॥ * ॥

( भाष्यम् )

अनारम्भो वा पुनरस्य योगस्य न्याय्यः ॥

( आक्षेपभाष्यम् )

कथं—'बेभिदिता-मरीमृजकः-कुषुभिता-समिधिता' इति ?

( समाधानभाष्यम् )

अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावात् गुणवृद्धी न भविष्यतः ॥

( उद्द्योतः ) मरीमृजक इति । अत्राल्लोपस्य स्थानिवत्त्वे क्लित्यजादौ वेष्यत इति विकल्पो न, व्यवस्थितविभाषाऽऽश्रयणात् ॥

( आक्षेपभाष्यम् )

यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः ॥

क्व च स्थानिवद्भावो नास्ति ?

यत्र हलचोरादेशः-लोलुवः-पोपुवः-मरीमृजः-सरीसृप इति ॥

( प्रदीपः ) यत्र हलचोरादेश इति । लुका कृत्स्नो यङ् लुप्यत इत्याशयः ॥

( समाधानभाष्यम् )

अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावात् गुणवृद्धी न भविष्यतः ॥

( प्रदीपः ) अत्रापीति । कृतेऽप्यकारलोपे एकदेशविकृतमनन्यवदिति यकारः प्रत्ययसंज्ञो भवत्येवेति भावः ॥

( उद्द्योतः ) नन्वेवं लुक्शास्त्रं व्यर्थं स्यादत आह—कृतेऽपीति । अवशिष्टे तच्चरितार्थमिति भावः ॥

( समाधानबाधकभाष्यम् )

लुकि कृते न प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—लुकि कृते इति । अनवकाशत्वादन्तरङ्गानपीति न्यायाच्च लुकि कृते लोपो न प्राप्नोतीत्यर्थः ।

( समाधानसाधकभाष्यम् )

इदमिह संप्रधार्यम्—लुक् क्रियतामल्लोप इति, किमत्र कर्तव्यम् ?

परत्वादल्लोपः ॥

( उद्द्योतः ) इतर आशयानभिज्ञ आह—परत्वादिति ॥

( समाधानबाधकभाष्यम् )

नित्यो लुक् । कृतेऽप्यल्लोपे प्राप्नोति, अकृतेऽपि प्राप्नोति ॥

( प्रदीपः ) नित्यो लुगिति । लुक्शास्त्रप्रवृत्तिर्नित्या ॥

( उद्द्योतः ) ननु यस्य लोपः कृतस्तस्य लुगप्राप्तेराह—लुक्शास्त्रेति ॥

---

१ परिगणनखण्डनाय 'इक् प्रकरणात्' इत्यारभ्य प्रसक्तानुप्रसक्तं बहुव्रीहिपर्यवसानेन परिसमाप्य तद्वचनार्थं पूर्वपक्षिणः प्रश्नावकाशदानायोपसंहरति—तस्मादिगित्यादि । यस्मात्सर्वे दोषा निरस्तास्तस्मादित्यर्थः ॥ छाया ॥

२ पूर्वपक्षीग्लक्षणत्वाङ्गीकारेऽव्याप्तिं प्रसजति—यदि तर्हीति ॥ पापचक इत्यादि । पचिपठी यङन्तौ, द्वित्वं, हलादिःशेषः, दीर्घोऽकितः । ततो ण्वुल् । अतो लोपः । यस्य हल इति यलोपः ॥ मगधात्कण्ड्वादियक् ॥ दृषदः सुप इति क्यच् ॥ छाया ॥

३ न प्राप्नोतीति । 'अत उपधायाः' इति वृद्धेरनिग्लक्षणत्वान्निषेधो न प्राप्नोतीत्यर्थः ॥ छाया ॥

४ एतावत्पर्यन्तं सूत्रसमर्थनाय स्थानिवद्भावं विना यथा परिहारः संभावितः स एवोक्तः, इदानीं गत्यन्तराभावात्तेनैवोत्तरमाह सिद्धान्ती—अल्लोपस्येति ॥ अकारलोप इति । परत्वाद् 'यस्य हलः' इत्यादियकारलोपोत्तरमित्यादिः ॥ छाया ॥

५ प्रत्याख्याता सिद्धान्ती आह—अत्रापीति । योगविभागेनेति भावः ॥ छाया ॥

६ एकदेशेति । शास्त्रीयन्यायः । अत एवार्धाधिकविकारे प्रवृत्तिः ॥ छाया ॥

७ उक्ताशयमजानानः सूत्रारम्भवादी निराचष्टे—लुकीति ॥ छाया ॥

( समाधानसाधकभाष्यम् )

[1]लुगप्यनित्यः ।

कथम् ?

अन्यस्य कृते लोपे प्राप्नोति, अन्यस्याकृते । "[2]शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति" ॥

( समाधानबाधकभाष्यम् )

अनवकाशस्तर्हि लुक् ॥

(प्रदीपः) अनवकाश इति । नाप्राप्ते लोपे लुगारम्भात् ॥

( समाधानसाधकभाष्यम् )

सावकाशो लुक् ।

कोऽवकाशः ?

[3]अवशिष्टः ॥

( प्रदीपः ) सावकाश इति । भिन्नविषयौ लुग्लोपौ । आकारस्य लोपः, यकारस्य लुक् । ततश्च नास्ति येन नाप्राप्तिन्यायः ॥

( अभ्युपेत्य समाधानभाष्यम् )

अथापि कथंचिदनवकाशो लुक् स्यात्, एवमपि न दोषः । [4]अल्लोपे योगविभागः करिष्यते—"अतो लोपः" । ततः-"यस्य", यस्य च लोपो भवति । अत इत्येव ॥

किमर्थमिदम् ?

लुकं वक्ष्यति तद्बाधनार्थम् । ततः-"हलः", हल उत्तरस्य च यस्य लोपो भवतीति ॥

(प्रदीपः) अथापिति । 'यङोऽचि च' इत्यत्र यकाराकारसमुदायस्य 'यङः' इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्व्यपदेशस्य गौणत्वादिति भावः ॥

( उद्योतः ) गौणत्वादिति । अतिदेशविषये गौणत्वाङ्गीकारेऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम् ॥ किंच[5] भिन्नविषयेऽपि बाध्यबाधकभावो दृष्टः, यथा—श्यथो लिटीति संप्रसारणस्य वकारे चारितार्थ्येऽपि हलादिः शेषबाधकता । भाष्यकारोऽपि मिदचोऽन्त्यादित्यस्य विषयभेदेऽपि प्रत्ययपरत्वबाधकतां वक्ष्यति ॥ तस्मात्[6]कृते चारितार्थ्येऽपि तत्प्राप्तिकालेऽवश्यं प्राप्त्याऽपवादत्वं भवत्येवेत्याशयः[7] ॥ असंभव एव बाधकत्वमिति वार्तिकानुयायिना सावकाशो लुगित्युक्ते स एव 'अथापि' इत्याह–इति तदुक्तिः—कथंचिदिति[8] ॥ भाष्ये—अत इत्येवेति । अलोऽन्त्यपरिभाषया, अत इत्यनुवृत्तेवेंति भावः ॥ अयं च लुकोऽपवादः । एवं चार्थादवशिष्टस्य लुगिति बोध्यम् । अत्र च भ्रस्जो रोपधेति सूत्रादन्यतरस्यांग्रहणस्य [9]मण्डूकप्लुत्याऽनुवर्तनेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च क्वचिदेव पृथगल्लोपः, न सर्वत्रेति बोध्यम् ॥ [10]मरीमृज इत्यत्र विकल्पस्तु न, व्यवस्थितविभाषाऽऽश्रयणात् । [11]यद्वा तत्र विकल्प इष्ट एव । तदर्थं सूत्रकृतोऽप्ये[12]तत्कल्पनावश्यकत्वं मनसि निधायैव तामाश्रित्य सूत्रप्रत्याख्यानमेव वरमिति भाष्याशयः ॥ लोलु[13]वादौ उवङि अनादिष्टादचः पूर्वस्य विधेरभावेन स्थानिवत्त्वाभावेऽपि नोपधागुणः, अचः पूर्वत्वेन दृष्टलोल्शब्दात्परस्य गुणे कर्तव्ये पञ्चमीसमासेनाल्लोपस्य

---

१ प्रत्याख्याता समर्थयति—लुगप्येति ॥ छाया ॥

२ शब्देति । यद्व्यक्तिसंबन्धितया पूर्वं प्राप्तिस्तद्व्यक्तिसंबन्धितयैव पुनः प्राप्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वमिति भावः ॥ एवं च द्वयोरनित्ययोः परत्वादल्लोप इति स्थितम् ॥ छाया ॥

३ अवशिष्ट इति । उक्तरीत्या कृताल्लोपावशिष्टो यकार इत्यर्थः ॥ छाया ॥

४ अल्लोप इति । तत्समीपे यस्य हल इत्यत्रेत्यर्थः । वटे गाव इति वत्सप्तमी ॥ छाया ॥ वस्तुतस्तु–अल्लोपनिमित्तमित्यर्थः । अन्यथा अल्लोपपदेऽपि तद्विधायकसूत्रे लक्षणाप्याश्रयणीयेति भावः ॥ दाधिमथाः ॥ अत्रेत्थमवधेयम्–अयं दाधिमथाशयस्तदैव सङ्गतः स्यात् यदाऽत्र निमित्तसप्तमी लभ्येत । सैव न । तथाहि–निमित्तात्कर्मसंयोग इति वार्तिकव्याख्यावसरे चर्मणि द्वीपिनमित्याद्येवोदाहरणानि प्रदर्शितानि । संयोगपदेन संयोगसमवायावेव गृह्येते, तेन संबन्धेन संबन्धिनश्च सप्तमीति भाष्याभिप्रायः । एवञ्च यत्र निमित्तस्य कर्मणा संयोगसमवायान्यतरसम्बन्धस्तत्र निमित्तवाचकात्सप्तमी । अत एव वेतनेन धान्यं लुनातीत्यत्र नेयं सप्तमीत्युक्तं कैयटेन । 'अल्लोपे योगविभाग' इत्यत्र संयोगसमवायान्यतरसंबन्धासम्भवान्न निमित्तसप्तमीसम्भवः । ननु 'अविद्यारजनीक्षये यद्बुदेति' इत्यादौ निमित्तसप्तमीदर्शनात् वार्तिके कर्मपदं क्रियापरत्वेन व्याख्याय क्रियायोगे निमित्तवाचकात्सप्तमीत्यर्थं दार्शनिका आहुः । तथा चाल्लोपे योगविभाग इत्यत्रापि विभजनक्रियानिमित्तत्वान्निमित्तसप्तमीति चेत्, भाष्यविरोधादुपेक्ष्योऽयं दार्शनिकाशय इति ॥

५ सावकाश इत्यस्य कैयटीयव्याख्यां खण्डयति—किंचेति । वक्ष्यतीति । श्रमादाविति भावः ॥ छाया ॥

६ एवं कैयटीयव्याख्यां दूषयित्वा स्वयं भाष्यं योजयति—तस्मादिति । कैयटीयव्याख्याया असंभवादित्यर्थः ॥ छाया ॥

७ इत्याशय इति । 'अनवकाशस्तर्हि' इति भाष्यस्येति शेषः ॥ सत्यपि संभवे बाधनं भवति । अस्ति च संभवो यदुभयं स्यादिति न्यायेनेति भावः ॥ छाया ॥

८ कथंचिदितीति । परमतप्रवेश एव क्लेश इति भावः ॥ छाया ॥

९ अतो लोप इत्यत्रासंबन्धायाह—मण्डूकेति ॥ छाया ॥

१० इदं सूत्रमावश्यकम् । अन्यथा बहुषु दोषापत्तेरिति प्राञ्चः सर्वे प्राहुः, तदयुक्तमिति ध्वनयितुं तदुक्तदोषान्क्रमेण तदुक्तरीतिमङ्गीकृत्य खण्डयति—मरीमृज इत्यादिना ॥ छाया ॥

११ व्यवस्थितविभाषाणां परिगणनादाह—यद्वेति ॥ छाया ॥

१२ एतदिति । पृथगल्लोपरूपेत्यर्थः । तथा च गौरवम् । अन्यथा फलभेदापत्तिरिति भावः ॥ छाया ॥

१३ ननु लोलुवादावुवङि उपधागुणः स्यात् । न च—'अचः पर' इति स्थानिवत्त्वम्, उवङोऽनादिष्टादचः पूर्वत्वाभावादत आह—लोलुवादाविति ॥ छाया ॥

स्थानिवद्भावसौलभ्यात् । निमित्तत्वेनाश्रितात्पूर्वस्मादित्यर्थे तु न मानम् । अतिप्रसङ्गस्य तदनित्यत्वेनैव परिहारात् । भाष्यानुक्तत्वात्तदनित्यत्वाभावेऽपि पूर्वस्मात्परस्याव्यवहितस्यैव ग्रहणेन 'हे गौः' इत्यत्रादोषः । अचः पूर्वेत्यंशे स्वरग्रहणाद्भाष्यप्रामाण्याच्चाव्यवधानांशबाधेऽप्यत्र तद्बाधे मानाभावात् । अतिदेशप्रवृत्तिप्राक्कालिकं च तदंशेऽव्यवधानं निविष्टम् । किं चाशास्त्रीयस्यापि तस्य तत्स्थानापन्ने तद्धर्मलाभ इति लोकन्यायेनातिदेशलाभ इति स्थानिवत्सूत्रे वक्ष्यते । लोलूः इत्यस्य लोलुवादेशस्तस्य च गुणघटितो लोलोवित्यादेश इत्याहुः ॥ दरीदृश इत्यत्राङ्गनिमित्तगुणस्तु न, अस्याङ्गस्तकैकगोचरत्वेन लाक्षणिकतया अङ्ग्ग्रहणेनाग्रहणात् ॥ अत एव दरीदृशक इत्यादौ यङन्ताण्ण्वुलि अङ्गनिमित्तगुणाभावः । जङ्गमक इत्यादौ यङन्ताण्ण्वुलि उपधालोपश्च, 'अनङि' इति निषेधाप्रवृत्तेः ॥ जङ्गम इत्यादौ तूक्तयुक्त्या समुदायलुगेवेति न दोषः ॥ निजेगिल इत्यादौ ग्रो यङीति नित्यलत्वमिष्टमेव । सूत्रमतेऽपि

१ कैयटाद्युक्तिं खण्डयति—निमित्तेति ॥ छाया ॥

२ नन्वेवं हे गौरित्यादावतिप्रसङ्गोऽत आह—अतीति ॥ तदिति । पञ्चमीसमासेत्यर्थः ॥ छाया

३ 'हे गौः' इत्यत्र सम्बुद्धेर्गोतो णिदिति णित्वे अचोऽञ्णितीत्यनेन वृद्धौ परनिमित्ताजादेशः स्थानिवत् न, अनादिष्टादचः पूर्वत्वेन दृष्टादव्यवहितस्यात्र कार्याभावात् । किन्तु ततः परस्याः सम्बुद्धेर्लोपाख्यं कार्यमिति अव्यवधानाभावान्न स्थानिवद्भाव इति न दोषः ॥

४ ननु तत्र तस्मिन्नित्यस्य प्रवृत्तिरिति सिद्धान्तभङ्गोऽत आह—अच इति ॥ भाष्येति । चिकीर्षक इत्युदाहरणपरभाष्येत्यर्थः ॥ छाया ॥

५ नन्वतिदेशप्रवृत्त्युत्तरं पूर्वस्मादव्यवहितपरत्वं बाधितमेवात आह—अतीति ॥ छाया ॥

६ ननु पञ्चमीसमासप्रत्याख्याने लोलुवादावनिर्वाहः, तत्सत्त्वेऽपि तस्यानित्यत्वेन पक्षेऽनिर्वाहः, तस्य लक्ष्यविशेषपरत्वे सुतरामनिर्वाहः । अत एव वैयाकरण इत्यादौ स्वरो न, अन्यथाऽनादिष्टादच इकारात्पूर्वत्वेन दृष्टवकारादेरव्यवहितपरस्यैकारादेरुपस्थित्या आयाद्यादेशापत्तिः स्पष्टैवात आह—किं चेति ॥ तस्य—अनादिष्टादचः पूर्वत्वरूपधर्मस्य ॥ वक्ष्यते इति । स्वं रूपमित्यस्याविषये इति भावः ॥ छाया ॥

७ नन्वेवमपि योऽत्रादेश उवङ् सोऽनादिष्टादचः पूर्वत्वं स्थानिद्वारा कथंचिल्लभताम्, न तु तस्येह किंचित्कार्यं विधीयते येनाल्लोपः स्थानिवत्स्यात् । यस्य च कार्यं विधीयते उकारस्य नासावादेशः, येन स्थानिद्वारापि पूर्वत्वं लभ्येतात आह—लोलू इत्येति । लोलुवेति । स्थानिवद्भावादचः पूर्व इति भावः ॥ वित्यादेश इति । तथा चास्मिन्कर्तव्येऽल्लोपस्य स्थानिवत्त्वं युक्तमिति नोपधागुणः पञ्चमीसमासाभावेऽपीति सिद्धम् ॥ आहुरित्यनेनारुचिः सूचिता । तद्बीजं तु अशास्त्रीयधर्मातिदेशे मानाभावः । न च स्थानिवत्सूत्रस्थं भाष्यं मानम्, स्वंरूपमित्यस्याविषये लोकन्यायस्य तेन बोध इति तदर्थमावश्यकत्वेन स्थानिवत्सूत्रेणैवान्यत्रापि भवितव्यमिति शास्त्रेण तस्यैव प्रत्यासत्त्याऽतिदेश इत्याशयात् । किं चान्यत्र लोकन्यायप्रवृत्त्याऽस्विधावपि प्रवृत्त्यापत्तिः । न पदान्तसूत्रे ब्राह्मणकण्डूतिरिति भाष्योदाहरणासंगत्यापत्तेश्च । क्वचित्फलसत्त्वेऽपि तस्यान्यथासिद्धेश्च । तासौ नित्यानित्यत्वस्याप्यतिदेशापत्तेश्च ॥ तमङ्गीकृत्यानित्यत्वेन दोषपरिहारेऽसाधारणफलाभावाच्च । न च न पदान्तसूत्रे सवर्णग्रहणादशास्त्रीयानादिष्टादचः पूर्वत्वमात्रमतिदिश्यते न धर्ममात्रमिति वाच्यम् । तस्य प्रत्याख्यानात् । एवं च न किंचेत्युक्तप्रकारेण गुणवारणमिति ॥छाया॥

८ ननु तर्हि सिद्धान्ते का गतिरिति चेत् । शृणु—पञ्चमीसमासस्य सार्वत्रिकत्वे तूक्तरीत्या तद्वारणम्, तस्य लक्ष्यविशेषपरत्वे तु 'सार्वधातुका'–इत्यग्रे 'जाग्रोऽवि'–इत्यग्रे पठिते 'पुगन्त'–इति सूत्रे 'अविचि'–इत्याद्यनुवृत्त्या स्थानिवद्भावेन ङित्परत्वात्तद्वारणम् । 'अङिति' इत्येकदेशस्यैवानुवृत्तिर्वा । यद्वा तदग्रे पठिते 'नाभ्यस्त' इति सूत्रे 'नाभ्यस्तस्याचि' इति योगं विभज्य तत्सामर्थ्यादचं प्रत्ययं संगृह्य 'लघूपधस्य'इतिमात्रमनुवर्त्य 'अभ्यस्तस्याङ्गस्येको लघूपधगुणो नाचि प्रत्यये परतः' इति निषेधेन तद्वारणम् । पूर्वगुणस्य तु लघूपधानिमित्तत्वाभावेन नानेन निषेध इति स्थानिवत्त्वेनैव भाष्योक्तेन वारणमिति न भाष्यासंगतिः । एवं मरीमृज इत्यादौ विकल्पोऽपि भाष्यमते दुर्वचः । पृथगल्लोपेऽपि पूर्वमकारलोपस्ततो यलोप इति क्रमेणाकारे ङित्त्वप्रत्ययत्वादेरभावेन स्थानिदृष्टधर्मस्यैवातिदेशेन ङित्प्रत्ययपरत्वाभावात् । न चैवमपि लोलुवादावुवङादिसिद्ध्यर्थं वरेग्रहणाज्ज्ञापकात्संभावितधर्मातिदेश आवश्यक इति तदापत्तिरेवेति वाच्यम्, ज्ञापकसिद्धस्येष्टसिद्ध्यर्थमङ्गीकारेऽपि ज्ञापकसिद्धं न सर्वत्रेत्यनिष्टापादनं दुर्वचमिति भाष्याशयात् । किं चोवङाद्यर्थमपि हि न तदतिदेशः, 'दीङो युडचि'–इत्यतः स्वरितत्ववतोऽचीत्यस्य मण्डूकप्लुत्याऽनुवृत्त्यैव सिद्धे पुनरज्ग्रहणात्, 'एतेषामजादौ प्रत्ययेऽच्प्रत्यये चेयङुवङौ भवतः' इति 'अचिश्नुधातु–'इति सूत्रार्थाङ्गीकारेण स्थानिवत्त्वेन व्यवधानेऽपि विशेषविधिसामर्थ्येन तत्सिद्धेः । न च चयो जय इत्यादौ तदापत्तिः, परेण गुणेन बाधात् । अत्र तु न गुणः, स्थानिवत्त्वात् । न च तत्र तं बाधित्वा सोऽस्तु, अत्र च मास्त्वेवोवङिति वाच्यम्, अबाधेनैवोपपत्तौ बाधकल्पने मानाभावात् ॥ किं चोक्तरीत्या सामर्थ्यादचीति योगं विभज्याभ्यासस्येत्यपकृष्य 'अभ्यासवत् इवर्णोवर्णान्तधातोरियङुवङौ स्तोऽच्प्रत्यये' इति पृथगर्थेनेष्टसिद्धेः ॥ द्वित्वे धातुत्वादिकमुत्तरखण्ड एव, अङ्गत्वं तु समुदाये इत्यन्यत्र स्पष्टम् । एवं चाजन्तेऽन्यत्र क्वापि न दोषः । न च भाष्यानुक्तत्वात्सर्वमप्रमाणमिति वाच्यम् । प्रत्याख्यानपरभाष्येणैवोक्तार्थस्य सर्वस्य ध्वननात् । मरीमृज इत्यत्र तु विकल्प इष्ट एवेति ध्वनयितुं विवरणकृन्नारायणाद्युक्तरीतिमनुसत्यैवाह—दरीति । तकैकेति । ङस्य समुदायानुबन्धत्वेन प्रायोगिकवदौपदेशिकस्यापि रूपस्याभावादिति··· । छाया ॥

९ प्रकारान्तरेणापि दरीदृश इत्यादौ निर्वाहादुक्तयुक्तिरसंगतैव । दरीदर्शक इत्यादौ तु गुणादेरिष्टत्वमेवेति ध्वनयितुं समाधितत्त्वमाह—जंगम इति ॥ आदिना सनीस्रंस इत्यादिपरिग्रहः ॥ उक्तेति । योगविभागस्येष्टसिद्ध्यर्थत्वेन पृथगल्लोपस्य क्वाचित्कत्वेनेत्यर्थः ॥ न दोषः—उपधालोपः ॥ छाया ॥

१० नन्वेवं निजेगिल इत्यादौ नित्यलत्वापत्तिः, पृथगल्लोपपक्षे हि विकल्प इष्यतेऽत आह—निजेगिल इति ॥ छाया ॥

न लुमतेति निषेधस्यानित्यत्वात् यङ्परत्वमस्ति। न वेति विभाषेति सूत्रे भाष्ये चेदं ध्वनितमिति तत्रैव निरूपयिष्यामः॥ यदि जरीगृह्यादेः सार्सर्यतेश्चाचि संप्रसारणयङ्चिचेतिगुणाविष्टौ, तर्हि सूत्रमतेऽपि न लुमतेति निषेधानित्यत्वेन साधनीयौ। भाष्यप्रामाण्यादिष्टाविति गम्यते। अत एव पृथगल्लोपे यङो विषयापहाराभावेन अजेर्वी आदेशे यणि वेव्य इति स्यादित्यपास्तम्, योगविभागस्य क्वाचित्कत्वेन तत्र लुक एव प्रवृत्त्याऽक्षतेः॥ पूर्वादिभ्यो वान्तेभ्यो विच् नास्त्येव, अनभिधानात्। इदं च लोपो व्योरिति सूत्रे भाष्येऽपि ध्वनितम्। एतद्भाष्यविरुद्धप्रयोगाणां भाष्यानुक्तानामनभिधानमित्यन्ये॥ न चैवं 'न धातुलुक्यचि' इत्येव सिद्धे आर्धधातुकग्रहणं व्यर्थमिति वाच्यम्। लोपार्धधातुक इत्येव षष्ठीतत्पुरुषेण लोपनिमित्तार्धधातुक इत्यर्थेन लून्वादेर्व्यावृत्तिसिद्धौ धातुग्रहणवत्तस्यापि सत्त्वात्॥ भाष्ये—लुकं वक्ष्यतीति। लुक् अतोलोपापवादः। अपवादश्च प्रायेण पश्चाद्भावीति भविष्यन्निर्देशः॥

( आक्षेपभाष्यम् )

**इहापि तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत—"कृष्णो नोनाव वृषभो यदीदम् ( ऋ. सं. १।७९।२ )" नोनूयतेर्नोनाव॥**

( समाधानभाष्यम् )

**समानाश्रयो लुक् लोपेन बाध्यते।**

**कश्च समानाश्रयः?**

**यः प्रत्ययाश्रयः। अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति॥**

( प्रदीपः ) **समानाश्रय इति।** तुल्यकालत्वादिति भावः॥ नोनावेत्यत्र बहुलग्रहणानुवृत्त्याऽनैमित्तिकोऽन्तरङ्गो लुक् प्रागेव प्रत्ययोत्पत्तेर्भवति॥

( उद्द्योतः ) ननु भिन्नाश्रययोरपि दीर्घवृद्ध्योरियायेत्यादौ बाध्यबाधकभावो दृष्ट इत्यत आह—**तुल्यकालेति॥ बहुलेति। यङोऽचि चेति** चकारेण॥ **अन्तरङ्ग इति।** प्राक्प्रवृत्तिकत्वमन्तरङ्गत्वम्। न हि तदाऽपवादप्रवृत्तिरिति भावः॥

( आक्षेपभाष्यम् )

**कथम्[11]—स्यदः-प्रश्रथः[12]-हिमश्रथः-जीरदानुः ( ऋ. सं. ५।८३।१ )-निकुचित इति?**

( समाधाने भाष्यवार्तिकम् )

*** उक्तं शेषे ***

( भाष्यम् )

**किमुक्तम्?**

*** निपातनात्स्यदादिषु[13] ***

*** रकि ज्यः सम्प्रसारणम् * इति॥**

**निकुचितेऽप्युक्तम्।**

**किम्?**

**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति॥**

**न धातुलोप० ॥ ४ ॥**

( प्रदीपः ) **निकुचित इति।** कित्त्वसंयोगेन नलोपे सति उदुपधत्वमिति निमित्तमकित्त्वस्य न भवति॥ यदि तर्ह्यकारलोपः क्रियते, तदा 'जङ्गमः' इत्यत्र तस्य स्थानिवद्भावादुपधालोपः प्राप्नोति। नैष दोषः, अनङीति प्रतिषेधात्॥ अनर्थपृथगल्लोपे तस्य स्थानिवत्त्वाद्वृद्धिर्न स्याद्व्यवधानेन णल्परत्वाभावादिति भावः॥ छाया॥

१ 'यदीति असंदिग्धे संदिग्धवचनम्। न तु तस्यासिद्धान्तत्वप्रतिपादकमिति सूचयितुमाह—भाष्येति॥ छाया॥

२ आदेश इति। ततो यङि द्वित्वेऽभ्यासगुणे अचि प्रत्यये अलोपेऽवशिष्टस्य तु लुकीति शेषः॥ छाया॥

३ लुक एवेति। तथा च प्रत्ययलक्षणाभावेन विषयापहाराद्यादेशस्याभावेनाहलादित्वाद्यङेव नेति भावः॥ छाया॥

४ नन्वेवमपि 'पुर्व पूरणे' इत्यादिवान्तधातोर्विचि लोपो व्योरिति वलोपे सूत्रमते गुणनिषेधेन पूः पुरौ पुर इत्यादिरूपाणि जायमानानि भाष्यमते न स्युरत आह—पुर्वादिभ्य इति॥ छाया॥

५ भाष्येति। तथा चैतद्भाष्यविरुद्धानामप्यन्यप्रोक्तानामुक्तप्रकारद्वयान्यतरप्रकारेण साधनम्। अतादृशानां त्वनभिधानमिति बोध्यम्॥ छाया॥

६ एवमिति। अन्येषामनभिधाने। तथा च फलाभावेनाचि लुक्येव फलस्य पर्यवसितत्वेन सूत्रकृताऽपि तथैव सूत्रे कर्तव्ये आर्धधातुकग्रहणसामर्थ्यादन्यत्रापि फलमिति पाणिनेरभिमतमिति तदनुरोधेन भगवताऽप्यनभिधानं दुर्वचमिति भावः॥ छाया॥

७ धातुग्रहणेति। तथा च तद्वददृष्टार्थमेव तत्, न तु तदनुरोधेन फलकल्पनाभिनिवेशः कार्य इति भावः॥ छाया॥

८ नोनूयतेरिति। 'णु स्तुतौ' यङ्, द्वित्वम्, अभ्यासगुणः, चादन्यत्रापि यङो लुक्। 'अमन्त्रे' इति निषेधादाम् न। एवं चात्र

९ प्रत्याख्यातोत्तरमाह—समानेति॥ छाया॥

१० प्रत्ययाश्रय इति। अयं भावः—'यङोऽचि, च' इति सूत्रेण यङो लुक् द्वेधा क्रियते—'यङोऽचि' इत्यंशेन अच्प्रत्ययनिमित्तकः। स तु यङन्तात्पचाद्यच्यागते भवतीति तस्मिन्काले अतो लोपोऽपि प्राप्नोति इति समानकालिकत्वं लुग्लोपयोरित्येकः। अपरस्तु 'च' इत्यंशेन विधीयतेऽनैमित्तिकः। स च यङ्प्रत्ययार्थविवक्षायामेव भवति। न हि तदेतरप्रत्ययस्यार्धधातुकस्याविर्भावः। येन तन्निमित्तो लोपः प्राप्नुयात्। तथा च नोनावेत्यादौ त्वनैमित्तिको लोपोऽन्तरङ्गत्वादादौ भवतीति न समानकालिकत्वमिति॥ दाधि०॥

११ एवं सूत्राभावे पापचक इत्यादेर्बेभिदितेत्यादेर्लोलुव इत्यादेश्च सिद्धिमभिधायावशिष्टदोषाणामपि सूत्रसत्त्वोक्तप्रकारेणैव सिद्धिरिति वक्तुं [ स्यद इत्यादौ सूत्रसत्त्वे धात्वंशलोपस्य जातत्वेन निषेधो गुणवृद्ध्योः स्फुट एव सिध्यति सूत्राभावे तु नात्र तादृशो लोपो यस्य स्थानिवद्भावेनोपधात्वं भज्येतेति कथं गुणवृद्धिनिषेध इति तत्र गुणवृद्धिनिषेधार्थं सूत्रमेवावश्यकम् इत्याशयेन ] शङ्कते—कथमिति॥ छाया॥

१२ 'प्रश्रवः-हिमश्रयः' इति फ. पाठः॥

१३ 'दिषु। प्रत्ययाश्रयत्वादन्यत्र सिद्धं। रकि' इति फ. पाठः॥

कोऽयमङिति चेत्। उपधालोपस्यापि तर्ह्यप्राप्तिः, अजादौ प्रत्यये तस्य विधानात् ॥ ननु लोलुवादिषूवङादयः स्थानिवद्भावेन न सिध्यन्ति, तेषां स्थानिन्यदर्शनात् । संभवमात्रेणाप्यतिदेशो भवतीत्यदोषः ॥ ४ ॥

( उद्योतः ) अकित्वस्येति । उदुपधाद्भावादिकर्मणोरिति विहितस्येत्यर्थः ॥ एवं चाकित्त्वाभावे क्ङिति चेत्येव निषेधः सिद्धो निकुचिते-इति भावः । सन्निपातः—संबन्धः । तद्विघात इति कर्मण्यण् ॥ अजादौ प्रत्यये इति । यायायतेः क्विन्वि यातिरित्यादौ आलोपानापत्तेर्वरेग्रहणस्य वैयर्थ्याच्च चिन्त्यमेतत् । अस्य समाधानं त्वस्माभिरुक्तमेव ॥ संभवेति । अत एव न पदान्तसूत्रे वरेग्रहणं चरितार्थम् । सत्यकारे यदि स्याद्यकारलोपस्तदा संभव उवङादेरिति भावः ॥ ४ ॥



( ५ निषेधसूत्रम् ॥ १ । १ । ४ आ. २ ॥ )

## क्ङिति च ॥ १ । १ । ५ ॥

( अथ सप्तम्या निमित्तार्थत्वाधिकरणम् )

( ९५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ क्ङिति प्रतिषेधे तन्निमित्त-ग्रहणम् ॥ * ॥

( व्याख्याभाष्यम् )

**क्ङिति[3] प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम् । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम् ॥**

**किम्प्रयोजनम् ?**

( प्रदीपः ) क्ङिति च ॥ ५ ॥ क्ङिति प्रतिषेध इति । इक[4] इत्यनुवर्तते, गुणवृद्धी इति च । तत्र यदीक् क्ङितीत्यनेन विशेष्यते-क्ङिति परतो य इगिति तदा 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषोपस्थानान्निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वात् 'चितं-स्तुतम्' इत्यादावेव निषेधः स्यात्, न तु भिन्नः-भिन्नवानित्यादाविति तन्निमित्तग्रहणं कर्तव्यम् ॥ यदा तु क्ङिद्ग्रहणं गुणवृद्धिविशेषणम्, तदा परसप्तम्या अप्रसङ्ग एव । न हि विहितयोर्निषेधः, अपि त्वनभिनिर्वृत्तयोरेवेति परिभाषाऽनुपस्थानान्निमित्तसप्तम्येव 'क्ङिति'[5] इति । तन्निमित्ता हि तयोः प्रवृत्तिः ॥

( उद्योतः ) क्ङिति च ॥ ५ ॥ तत्र यदीति । तस्मिन्निति परिभाषाऽनुग्रहायेत्यर्थः ॥ यदा त्विति । निषेध्यत्वेन तयोः प्राधान्यादिति भावः ॥ न हीति । अनभिनिर्वृत्ते पूर्वपरव्यवहारस्य कर्तुमशक्यत्वात्तदनुपस्थानम् । निर्वृत्तनिषेधे तु देवदत्तहन्तृहत-न्यायेन चितमित्यादाविकः श्रवणं न स्यादिति भावः ॥ निमित्तेति । अत्र यस्य च भावेनेति सप्तमी । सा च ज्ञापकत्वार्थिका । ज्ञापकत्वं च संबन्धं विनाऽनुपपन्नं सत् विधिशास्त्रक्लृप्तनिमित्तत्वमादाय पर्यवस्यति । एवञ्च निमित्ततया क्ङित्ज्ञाप्ये गुणवृद्धी नेत्यर्थः । तदाह—क्ङिन्निमित्ता हि तयोः प्रवृत्तिरिति ॥ केचित्तु-सिद्ध-साध्यसमभिव्याहारन्यायेन निमित्तत्वं फलति-इत्याहुः ॥ परे तु—क्ङितीत्येतत् गुणवृद्धिविशेषणमेव । भवनक्रियातदभावयोरमूर्तत्वेन क्ङित्परत्वासंभवात् । इक इत्यस्याप्यनुवृत्त्यनुक्तेः । अनुवृत्तावपि तस्य शब्दपरत्वात् । तस्मान्निमित्तग्रहणाभावे क्ङितीति सप्तम्या 'निर्दिष्टे पूर्वस्य' इत्युपस्थित्या क्ङिति अव्यवहिते पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः । अनुवादे परिभाषा नोपतिष्ठत इति त्विको गुणवृद्धी अचश्चेतिसूत्रद्वयविषयमेवेत्युक्तम् । भाष्ये तस्य निषेधस्यानुपलम्भाच्च । तद्वक्ष्यति—भाष्ये—क्ङित्यनन्तरो गुणभाव्यस्तीति । निमित्तग्रहणे तु तत्सामर्थ्यात्परिभाषाऽनुपस्थानम्, तत्प्रत्याख्याने तु लिङ्गादिना तदनुपस्थानम् ॥ संभवन्त्यां परसप्तम्यां 'यस्य च-' इति सप्तम्या असंभवाच्च, उपपदविभक्तेरिति न्यायात् ॥ सिद्धसाध्यसमभिव्याहारन्यायस्यापि तस्मिन्नितिशास्त्रेण बाध एव ॥ अत[11] एव निमित्तग्रहणप्रयोजनावसरे हत इत्युदाहरिष्यति । कैयटोक्तरीत्या इक्पदानुवृत्तावेव निमित्तग्रहणमिति वार्तिकस्योक्तिसंभवेन तत्प्रयोजनदानानुक्तिसंभवः स्पष्ट एवेत्याहुः ॥

---

१ उक्तमेवेति । 'जङ्गम इत्यादौ तूक्तयुक्त्या—योगविभागस्येष्टसिद्ध्यर्थत्वेन पृथगल्लोपस्य काचित्कत्वयुक्त्या-समुदायलुगेवेति न दोषः' इति ग्रन्थेन पूर्वमुक्तमेव ॥

२ 'किङिति प्र' इति फ. पाठः ॥

३ क्ङिति प्रतिषेध इति । क्ङिति यः प्रतिषेधस्तत्रेत्यर्थः । क्ङितीति स्वरूपपरं वा ॥ छाया ॥

४ इक इत्येति । 'इको गुणवृद्धी' इत्यनुवर्तत इत्येवं वाच्ये एवमुक्तिर्वक्ष्यमाणपक्षद्वयोपपादनाय 'एकं शब्दपरम् अपरमर्थपरम्' इति सूचनाय चेति भावः ॥ अनन्तरसूत्रात् 'न' इत्यनुवर्तते इत्यपि बोध्यम् ॥ छाया ॥

५ 'क्ङितीति भवति । क्ङिन्निमित्ता' इति मुद्रितपाठः ॥

६ 'आनन्तर्यादिति विवरणोक्तमयुक्तम्' यथाश्रुतेऽनुवृत्तावप्यग्रागमनेन तत्तस्य बाधितत्वादत आह—निषेध्येति ॥ छाया ॥

७ षणमेवेति । उक्तहेतोः । अत एव 'क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतः' इति भाष्यं संगच्छते । अन्यथा इक इत्यस्यापि तत्र लेखौचित्येन तदसंगतिः स्पष्टैव ॥ छाया ॥

८ ननु ततोऽपि प्राधान्यात् क्रियायास्तदभावस्य वा विशेषणमुचितमत आह—भवनेति ॥ छाया ॥

९ इदं च तत्सत्त्वमभ्युपेत्य, वस्तुतस्तदेव नेत्याह—भाष्येति ॥ छाया ॥

१० ननु निमित्तग्रहणे कृतेऽप्युक्तरीत्या निर्दिष्टपरिभाषोपस्थित्या दोष एवात आह—निमित्तेति ॥ लिङ्गादिनेति । अनुपदभाष्ये वक्ष्यमाणज्ञापकादिनेत्यर्थः ॥ छाया ॥

११ अत एव—इको गुणेति सूत्रादिक इति पदानुवर्तनमसंभाव्यैवास्य भाष्यग्रन्थस्य सत्त्वादेवेत्यर्थः ॥

( ९६ प्रयोजनवार्तिकम् ॥ २ ॥ )

॥ * ॥ उपधारोरवीत्यर्थम् ॥ * ॥

( भाष्यम् )

उपधार्थं रोरवीत्यर्थं च ॥
उपधार्थं तावत्—भिन्नः, भिन्नवान् ॥
किं पुनः कारणं न सिध्यति ?
क्ङितीत्युच्यते । तेन यत्र क्ङित्यनन्तरो गुणभाव्यस्ति तत्रैव स्यात्—चितम्, स्तुतम् । इह तु न स्यात्—भिन्नः, भिन्नवानिति ॥

( प्रदीपः ) उपधारोरवीत्यर्थमिति । उपधाया अपीकः प्रतिषेधार्थम्, रोरवीतेर्यङ्निमित्तप्रतिषेधनिवृत्त्यर्थम् । अत्र हि तिव्निमित्तो गुणः, न यङ्निमित्तः ॥

( उद्योतः ) उपधाया अपीति । उपधायां रोरवीतौ चार्थः= प्रयोजनं-प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधो यस्य तत्, तन्निमित्तग्रहणमिति भाष्यार्थ इति भावः ॥ उपधारोरवीतिभ्यामिति-उपधारोरवीत्यर्थम्-इति अर्थेन नित्यसमास इत्यन्ये ॥

( प्रथमप्रयोजनबाधकभाष्यम् )

ननु च-यस्य गुण उच्यते, तत् क्ङित्परत्वेन विशेषयिष्यामः । पुगन्तलघूपधस्य च गुण उच्यते । तच्चात्र क्ङित्परम् ॥

( प्रदीपः ) ननु चेति । आकाङ्क्षया 'पुगन्तलघूपधस्य' इति सन्निधानं मन्यते । तथाहि-'क्ङिति गुणवृद्धी न भवतः' इत्युक्ते 'कस्य' इत्याकाङ्क्षायां 'यस्य प्राप्ते' इत्यस्ति पुगन्तलघूपधस्यापेक्षा ॥ अथवा क्ङितीति प्रत्ययग्रहणात्प्रत्ययेनाङ्गं सन्निधाप्यते । ततश्च क्ङिति 'भिन्नं' इत्यादौ लघूपधस्यानन्तर्यात्सिद्धो निषेधः ॥

( उद्योतः ) नन्वसंनिहितं पुगन्ताङ्गादि कथं तत्परत्वेन विशेष्यमत आह—आकाङ्क्षयेति ॥ ननु निषेध्ये गुणवृद्धी प्रति क्ङित्परेरूपं निषेधविषयं प्रति चाकाङ्क्षा, नाङ्गं प्रतीत्यत आह—अथवेति । निषेध्यगुणादेरप्रत्यये क्ङित्प्रसङ्गेन प्रत्ययग्रहणमिति भावः ॥ एवं च प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात्तस्यैव तद्विशेषणमिति भावः ॥

( प्रथमप्रयोजनसाधकभाष्यम् )

पुगन्तलघूपधस्येति नैवं विज्ञायते—पुगन्तस्याङ्गस्य लघूपधस्य चेति ।
कथं तर्हि ?
पुकि अन्तः-पुगन्तः । लघ्वी उपधा-लघूपधा । पुगन्तश्च लघूपधा च पुगन्तलघूपधं, पुगन्तलघूपधस्येति ॥ अवश्यं चैतदेवं विज्ञेयम् । अङ्गविशेषणे हि सतीह प्रसज्येत—भिनत्ति, छिनत्तीति ॥

( प्रदीपः ) लघूपधेति । ततश्च समुदायस्यानिर्देशादवयवस्य चेको व्यवधानात्तदवस्थैवाप्राप्तिरित्यर्थः ॥

( उद्योतः ) आद्यव्याख्यायां परिहारभाष्यं योजयति—ततश्च समुदेति ॥ द्वितीये त्विदं बोध्यम्— नाक्षिप्तविशेषणत्वं न्याय्यमिति ॥ भाष्ये—अङ्गविशेषणे हीति । पुगन्तलघूपधस्येत्यस्य बहुव्रीहिणाऽङ्गविशेषणत्वे-इत्यर्थः ॥

( द्वितीयप्रयोजनसमन्वयभाष्यम् )

'रोरवीत्यर्थम्' । त्रिधा बद्धो वृषभो रोरवीति ॥ ( ऋ. ४।५८।३ )

( आक्षेपभाष्यम् )

यदि तन्निमित्तग्रहणं क्रियते शचङन्ते दोषः-रियति, पियति, धियति, प्रादुद्रुवत्, प्रासुस्रुवत्-अत्र न प्राप्नोति ॥

( प्रदीपः ) तन्निमित्तपक्षस्यापि दुष्टतामाह—शचङन्त इति । सार्वधातुकनिमित्तस्य गुणस्य निषेधेऽपि लघूपधलक्षणनिषेधाप्रसङ्ग इत्यर्थः ॥ रियतिपियतीति । 'रि-पि-गतौ' 'धि-धारणे' इति तुदादौ पाठः ॥

---

१ उपधार्थं—भिन्न इत्यादौ निषेधप्रवृत्त्यर्थं रोरवीत्यादौ यङि क्ङिति परे परसप्तम्या प्राप्तस्य निषेधस्य परिहारार्थञ्च निमित्तग्रहणं कर्तव्यमित्यर्थः ॥

२ 'क्ङिति' इति फ. पाठः ॥

३ अत्र हीति । रोरवीतौ हीत्यर्थः ॥ छाया ॥

४ वार्तिकविग्रहप्रदर्शनपूर्वकं भाष्यार्थमाह—उपधायामित्यादिना ॥

५ प्रवृत्तीति । तथा चाद्ये—अव्याप्तिपरिहारः, द्वितीये-अतिव्याप्तिपरिहारस्तत्फलमिति भावः ॥ छाया ॥

६ 'क्ङित्परं' इति फ. पाठः ॥

७ विशेष्यमिति । विशेषणीयमित्यर्थः ॥ छाया ॥

८ निषेध्ये इति । निषेधस्येत्यादिः ॥ प्रतिचाकाङ्क्षेति । तदुभयं श्रुतिसंनिधानाभ्यां लब्धमेवेति भावः ॥ छाया ॥ क्ङितीति प्रत्ययग्रहणादिति प्रदीपोक्तमुपपादयति—निषेध्येत्यादिना । प्रत्ययग्रहणेन चाङ्गस्यैवाकाङ्क्षितत्वं न तु इकः पुगन्तस्य वेत्याशयः ॥

९ वार्तिकोपपत्तय एवैवं न, किंतु अन्यार्थमपीत्याह—अवश्यमिति ॥ छाया ॥

१० भिनत्तीति । नकाराकारेणाङ्गस्य लघूपधत्वाद्इकारेकारस्य तिपं मत्वा गुणः स्यादित्यर्थः । निमित्तमप्यङ्गस्यैव विशेषणमिति न येन नेतिन्यायेन निर्वाह इति भावः ॥ छाया ॥

११ ततश्चेत्यादीनामाशयस्य पक्षद्वयासाधारणत्वादाह—आद्येति ॥ चोद्यभाष्यस्याभिप्रेतायां सत्यामिति शेषः ॥ छाया ॥ आद्यव्याख्या—'आकांक्षया पुगन्तलघूपधस्येति सन्निधानं मन्यते' इति प्रदीपव्याख्या, तदभिप्रायेण 'ततश्च' इत्यादिग्रन्थः । द्वितीयव्याख्या—अथवा क्ङितीत्यादि, आक्षिप्तस्याङ्गस्य शाब्दान्वयेन तदसम्बन्ध इति भावः । एवञ्च द्वितीयव्याख्या न भाष्याभिप्रेता ॥

१२ प्रदीपीयन्यूनतां परिहरति—द्वितीये त्विति ॥ 'तस्यैवविशेषणत्वान्न तत्त्वम्' इति विवरणोक्तेरसांगत्यादाह—नाक्षिप्तेति । शब्दविशेषणत्वसंभवादाक्षिप्तस्याविशेषणत्वात् आक्षेपस्य द्विविधस्यासंभवाच्चेति भावः ॥ छाया ॥

१३ एवं तस्योपधार्थत्वं व्यवस्थाप्य रोरवीत्यर्थत्वमाह—रोरवीत्यर्थमिति ॥ छाया ॥

१४ 'अत्र प्राप्नोति' इति फ. पाठः ॥

(उद्योतः) यदीत्यनेन न स्वपक्षस्योपादेयतोच्यते, किं तूभयोः साम्यमुच्यत इत्याह—तन्निमित्तपक्षस्यापीति ॥ सार्वधातुकनिमित्तस्य—शनिमित्तस्य ॥ लघूपधलक्षणस्य—तिब्निमित्तस्य ॥

(सिद्धान्तसमाधाने भाष्यवार्तिकम्)

***शचङन्तस्यान्तरङ्गलक्षणत्वात्***

(भाष्यम्)

**अन्तरङ्गलक्षणत्वादत्रेयङुवङोः कृतयोरनुपधात्वात् गुणो न भविष्यति ॥**

(उद्योतः) भाष्ये—अन्तरङ्गलक्षणत्वादिति। प्राधान्येनाच एव यत्रानन्तर्याश्रयणं तत्रैव नाजानन्तर्य इति निषेधप्रवृत्तेस्तस्या अभावाच्चेति भावः ॥ नन्वदुद्रुवदित्यत्र 'सार्वधातुका-' इति गुणात्पूर्वं नित्यत्वाच्चङि 'द्विर्वचनेऽचि' इति निषेधादुवङभावे द्वित्वात्परत्वाल्लघूपधगुणो दुर्वार इति चेन्न। अन्तरङ्गत्वाद्द्वित्वस्यैव प्रवृत्तेः। ओर्गेर्कैदित्करणेनोपधाकार्यस्य द्वित्वात्प्राबल्यबोधनेऽपि न क्षतिः। ज्ञापकस्य सजातीयापेक्षत्वेनोपधाकार्यस्य यत्र द्वित्वसमाननिमित्तता द्वित्वनिमित्तचङ्निमित्तता वा तत्रैव तत्प्राबल्यबोधनादित्याहुः ॥

(तन्निमित्तकग्रहणस्य निर्दोषतोपसंहारभाष्यम्)

**एवं क्रियते चेदं तन्निमित्तग्रहणम्, न च कश्चिद्दोषो भवति ॥**

(सूत्रार्थप्रदर्शनाय फलान्तरप्रदर्शकभाष्यम्)

**इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि-हतः, हथः, उपोयते, औयत, लौयमानिः, पौयमानिः, नेनिक्ते-इति ॥**

(प्रदीपः) हतो हथ इति। यथैव 'अदिप्रभृतिभ्यः शपः' इति शप् निवर्त्यते, एवमकारोऽपि निषेधेन निवर्त्यतेत्याशयः ॥ नन्विग्लक्षणोऽयं गुणो न भवतीति निषेधाप्रसङ्गः। सत्यम्। परिहारान्तरस्य सद्भावादेतन्नाश्रितम् ॥

(उद्योतः) भूयः—पुनरर्थे ॥ एवमकारोऽपीति। 'क्ङित्परे गुणवृद्धी न प्रयोक्तव्ये' इति सूत्रार्थः। तत्र यथा चितमित्यादावसतो गुणादेः प्रागभावः पाल्यते, एवं सतोऽपि निवृत्तिः साध्येत। सतोऽपि निवृत्तेरदिप्रभृतिभ्य इत्यादौ दृष्टत्वादिति भावः ॥ नन्विति। तथा चेक इत्यनुवृत्तिसामर्थ्यादसत एवाप्रयोगः प्रतिपाद्यत इति भावः ॥ (भाष्ये) नेनिक्त इति। अत्र निजां त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः ॥

(फलान्तरप्रत्याख्यानभाष्यम्)

**नैतानि सन्ति प्रयोजनानि। इह तावत्—हतो हथ इति। प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम्। अयश्च धातूपदेशावस्थायामेवाकारः ॥**

(प्रदीपः) प्रसक्तस्येति। सामान्यलक्षणेन विशेषलक्षणापरामर्शेन यत्प्राप्तं पुनर्विशेषलक्षणपरामर्शात् यत् स्वरूपेणानभिनिर्वृत्तं तस्य निवृत्तिः क्रियते। परमार्थतस्तूत्सर्गापवादयोरप्येकवाक्यतायामप्राप्त्यनुमानं बाध इति सिद्धान्तः ॥ चितमित्यादौ च प्रसक्तानभिनिर्वृत्तगुणनिषेधे वचनस्य चरितार्थत्वाद्धतो हथ इति भूताकारनिवृत्तावस्याव्यापारः। 'अदिप्रभृतिभ्यः' इत्यनेन तु गत्यन्तराभावात्सन्नेव प्रक्रियायां शब्निवर्त्यते ॥ यद्येवं भवत इत्यादौ प्रसक्तोऽनभिनिर्वृत्त एव शबकारः कस्मादनेन न निवर्त्यते? नैष दोषः, शब्भवतीत्यस्यां चोदनायां गुणरूपेणाचोदनान्नायं गुणनिषेधविषयः ॥

(उद्योतः) प्रसक्तत्वानभिनिर्वृत्तत्वयोर्विरोधमाशङ्क्याह—सामान्येति ॥ निवृत्तिः—अनभिनिर्वृत्तिः ॥ विहितप्रतिषिद्धयोर्विकल्पस्तर्हि स्यादत आह—परमार्थेति। गुणविध्येकवाक्यतया क्ङिद्भिन्नसार्वधातुकादौ गुण इत्यर्थात् क्ङिति तयोरप्राप्तिरेवेति भावः ॥ सा च पर्युदासविषया। यद्वा प्रसज्यप्रतिषेधेन वाक्यार्थबोधे तदंशे

---

१ स्वपक्षस्य–तन्निमित्तग्रहणाभावपक्षस्य ॥ उभयोः–तन्निमित्तग्रहणाग्रहणपक्षयोः ॥ छाया ॥

२ शचङन्तस्येति अधिकरणस्य संबन्धित्वेन विवक्षायां षष्ठी। अत एवात्र संबद्धशेषपूरणेन तथा व्याचष्टे—अन्तरङ्गेति। पूर्वोपस्थितनिमित्तकत्वेन तयोरन्तरङ्गत्वमिति भावः ॥ छाया ॥

३ नन्तर्येति। अन्यप्रतियोगिकानन्तर्येत्यर्थः। प्रकृते चान्तरङ्गे तस्य न प्राधान्येनाश्रयणम्, बहिरङ्गे च नाच एवाश्रयणमिति भावः। इदं च तत्सत्त्वे, वस्तुतस्तदेव नेत्याह—तस्या इति ॥ असिद्धपरिभाषाया अनित्यत्वेऽपीष्टस्थले प्रवृत्त्या प्रकृते प्रवृत्तिरिति भावः ॥ तत्सत्त्वेऽपि बहिरङ्गप्रवृत्त्युत्तरं यत्रान्तरङ्गप्रवृत्तिस्तत्र तद्विषयत्वेन प्रकृते न विषय इति बोध्यम् ॥ छाया ॥

४ ननु बहूनीत्यर्थे भूयांसीत्युचितमत आह—पुनरिति। तथाच्चान्वयं तदिति भावः ॥ छाया ॥

५ अप्रयोगश्च द्वेधा–सतोस्तयोर्निवृत्त्या, असतोश्च प्रागभावपरिपालनेन, तत्रान्त्यमाह—तत्रेति। आद्यमाह—एवमिति ॥ छाया ॥

६ हतो हथ इतीति। न प्रयोजनमिति शेषः ॥ छाया ॥

७ 'अत्र च' इति फ. पाठः ॥

८ वाक्यतायामिति। फलितायामिति शेषः ॥ छाया ॥

९ निषेध इति। सतीति शेषः ॥ छाया ॥

१० विकल्पस्तर्हीति। तर्हि निषेधस्य प्राप्तिपूर्वकत्वात्सामान्यशास्त्रप्राप्तस्यैव गुणादेरवश्यं व्यावर्तनीयत्वे सति षोडशिग्रहणाग्रहणवद्विकल्प इत्यर्थः ॥ छाया ॥

११ ननु तयोर्विधेयभेदात्कथमेकवाक्यताऽत आह—सा चेति। पर्युदासेति। अयं भावः—नेत्यनुवृत्तं क्ङितो विशेष्यम्। तच्च गुणादिनिमित्तसार्वधातुकादिविशेषणम्। तथा च तद्भिन्ने सार्वधातुकादौ गुणादीति पर्यवसाने क्ङिति तयोरप्राप्तिः फलितेति कुतो विहितप्रतिषिद्धत्वं कुतस्तरां च विकल्प इति ॥ छाया ॥

१२ नन्विदमसंगतम्। असमस्ते प्रयोगे नञोऽत्यन्ताभावार्थकत्वेन पर्युदासस्य दुर्वचत्वात्। प्रधानक्रियाविशेषणत्वे संभवति तद्विशेषणत्वायोगाच्चात आह—यद्वेति। ज्ञानस्येति। नैतावता शास्त्रस्याप्रामाण्यं तस्य विशेषविषयमात्रपरत्वकल्पनात्। अयं भावः—विशेषशास्त्रादर्शने तदालोचने तस्य सर्वविषयत्वं प्रतीतितोऽवगतं, न तु वस्तुगत्या तत्सर्वविषयं। तद्दर्शने तु नायमस्य विषयः। मया त्वन्यविषयकमेव शास्त्रं तदनालोचनरूपनिजदोषादेव तद्विषयकमिति भ्रान्त्याऽवगतमिति मन्यते तदिह तस्यानेन तदल्पविषयकत्वकल्पनेन संकोचमात्रं न त्वप्रामाण्यमिति ॥ छाया ॥

सामान्यशास्त्रजज्ञानस्याप्रामाण्यं कल्प्यते । एकवाक्यताफलसंपत्तेरत्रैकवाक्यतायामित्युक्तमिति द्रष्टव्यम् ॥ **भूताकारेति** । सिद्धाभावपरिपालनेनैव सिद्धौ असिद्धाभावविधाने गौरवा[1]दिति भावः ॥ **प्रक्रियायामिति** । वस्तुतस्तत्रापि लुगद्वाराऽनुत्पत्तिरेवान्वाख्यायते-इति बोध्यम् ॥ **नैष इति** । एकान्ता अनुबन्धा इति भावः । **अ[2]यमेव न्याय्य** इति **तस्यलोप** इति सूत्रे वक्ष्यति ॥

( भाष्यम् )

**इह च-उपोयते-औयत-लौयमानिः-पौयमानिरिति। बहिरङ्गे गुणवृद्धी, अन्तरङ्गः प्रतिषेधः। असिद्धं बहिरङ्गमन्तरङ्गे ॥**

( प्रदीपः ) **उपोयत इति** । वेञो यकि संप्रसारणे कृते उभयपदाश्रितत्वाद्बहिरङ्गो गुणः । औयत इत्यादौ बहिरङ्गा[3]श्रयत्वाच्च वृद्धिर्बहिरङ्गा ॥

( भाष्यम् )

**नेनिक्त इति । परेण रूपेण व्यवहितत्वान्न भविष्यति ॥**

( प्रदीपः ) **नेनिक्ते इति** । क्ङित्परत्वेनाङ्गस्य विशेषणादङ्गस्यात्र कार्यित्वात्पूर्वः पक्षः । उत्तरस्त्वभ्यासस्य कार्यित्वात्तस्य च परेण रूपेण व्यवधानादिति ॥

( उद्योतः ) **कार्यित्वादिति** । अङ्गस्य गुणो भवति, स च तत्संबन्ध्यभ्यासेकः-इत्यर्थ इत्यभि[4]मानः ॥ **उत्तरस्त्विति** । प[5]क्ष इति शेषः ॥ क्ङित्परस्य यस्य गुणः प्राप्तस्तस्य नेति सूत्रार्थ इति भावः ॥

( तन्निमित्तग्रहणप्रत्याख्यानभाष्यम् )

**उ[6]पधार्थेन तावन्नार्थः । धातोरिति वर्तते । धातुं क्ङि[7]त्परत्वेन विशेषयिष्यामः ॥**

(प्रदीपः) **धातुं क्ङित्परत्वेनेति** । **'धातुलोपे'** इत्यत्रोपसर्जनत्वेऽपि धातोर्धातुशब्दमात्रस्य स्वरितत्वादिहानुवृत्तिरित्यर्थः॥

( उद्योतः ) भाष्ये—**धातुं क्ङिदिति** । पर[8]त्वेन निर्दिष्टं यत् क्ङिदिति तद्धातुं प्रति विहितमिति विशेषयिष्यामः । तथा च धातुविहितं क्ङिद् यतः कुतश्चित्परं तदवयवस्य गुणो नेति सूत्रार्थ इत्यर्थः ॥ तद् ध्वनयन्नाह—**मत्[9]वा प्रश्न इति** ॥

( आक्षेपभाष्यम् )

**य[10]दि धातुर्विशेष्यते, विकरणस्य न प्रा[11]प्नोति—चिनुतः, सुनुतः, लुनीतः, पुनीतः-इति ॥**

( प्रदीपः ) **यदीति** । क्ङित्यनन्तरस्य धातोर्गुणवृद्धी न भवत इति वाक्यार्थं मत्वा **प्रश्नः** ॥

( समाधानभाष्यम् )

**नै[12]ष दोषः । विहितविशेषणं धातुग्रहणम्—धातोर्यो विहित इति ॥**

( आक्षेपभाष्यम् )

**धा[13]तोरेव तर्हि न प्राप्नोति ॥**

( प्रदीपः ) **धातोरेवेति** । धातोर्विहितस्य क्ङित्यनन्तरे नेति मत्वा **प्रश्नः** ॥

( समाधानभाष्यम् )

**नैवं[14] विज्ञायते—धातोर्विहितस्य क्ङितीति । कथं तर्हि ? धातोर्विहिते क्ङितीति ॥**

( प्रदीपः ) **धातोर्विहित इति** । धातोर्विहिते क्ङित्यनन्तरो यो धातुर्विकरणो वा तस्य प्रतिषेध इत्यर्थः ॥

( उद्योतः ) **धातुर्विकरणो वेति** । धातुना विहितविशेषणबललब्धमेतदुभयम् ॥

( समाधानान्तरभाष्यम् )

**अ[15]थवा—कार्यकालं हि संज्ञापरिभाषं, यत्र कार्यं**

---

१ **गौरवादिति** । शब्दनित्यत्वभङ्गापत्तेश्चेत्यपि बोध्यम् ॥ कालभेदेन विरम्य व्यापारापाताच्चेति केचित् ॥

२ यत्तु अनेकान्तत्वेऽपि पूर्वत्राश्रितशब्दव्यापारार्थकगुणवृद्धिपदस्यार्थाधिकारानुरोधेनानुवृत्त्या गुण इति गुणो, वृद्धिरिति वृद्धिः क्ङिति न भवतीत्यर्थेनादोषः—इति विवरणकृन्नारायणादयः । तदसदिति ध्वनयन्नाह—**अयमेवेति** । एकान्ता अनुबन्धा इति पक्ष एवेत्यर्थः ॥ छाया ॥

३ **बहिरङ्गाश्रयेति** । बहिर्भूतलङपेक्षत्वादित्यर्थः ॥ **लौयमान्यादौ** बहिर्भूतञिदादिनिमित्तकत्वात्तस्यास्तत्त्वं बोध्यम् ॥ छाया ॥

४ **अभिमान इति** । प्रयोजनदातुरिति शेषः ॥ छाया ॥

५ उत्तरस्त्वित्यसंबद्धं मत्वा—'उत्तरं तु' इति पाठकल्पकविवरणकारोक्त्यसांगत्यायाह—**पक्ष इतीति** ॥ निजामङ्गसंबन्ध्यभ्यासस्य गुण इति तदर्थेन यस्य गुणस्तस्य क्ङितीतिविशेषणमित्यस्यार्थमाह—**क्ङिदिति** ॥ छाया ॥

६ एवं गौणफलानि संखण्ड्य मुख्यं विखण्डयति—**उपधेति** । **धातोरिति वर्तत इति** । पूर्वत्र समासे गुणभूतस्यापि धातुपदस्य लुप्तषष्ठ्यन्तस्य स्वरितत्वेन शब्दाधिकाररीत्याऽनुवृत्तिरित्यर्थः ॥ छाया ॥

७ 'क्ङिन्त्प' इति फ. पाठः ॥

८ क्ङित् परत्वेनेति पृथक्पदे इत्याह—**परत्वेनेति** । क्ङितीतिसप्तम्येत्यादिः ॥ **परमिति** । तत्रेति शेषः ॥ **तदवयवेति** । यतः परं तदवयवेत्यर्थः ॥ छाया ॥

९ **मत्वा प्रश्न इतीति** । उभयोः प्रतीकम् ॥ छाया ॥ अग्रिमप्रदीपप्रतीकम् ॥

१० क्ङित्परत्वेनेति बहुव्रीहिः । एकं पदम् । **इत्थंभूतेति** तृतीया । धातुस्तेन विशेष्यत इत्याशयेन शङ्कते—**यदीति** ॥ छाया ॥

११ 'प्राप्नोतीति' इति फ. पाठः ॥

१२ कंचित्स्वाशयं प्रकाशयति—**नैष इति** । यत इति शेषः ॥ **धातोर्य इति** । तत्संबन्धितया विहित इत्यर्थः ॥ छाया ॥

१३ **धातोरिति** । 'चितं' इत्यादौ । धातोर्विहितस्य निषेध इत्यर्थश्रयणे धातोरेव निषेधो न प्राप्नोतीति भावः ॥

१४ उक्तं सर्वं प्रकाशयति—**नैवमिति** ॥ छाया ॥

१५ ननु धातुग्रहणस्य सूत्रस्य च प्रत्याख्यानान्नायं समाधिर्युक्तोऽत आह—**अथवेति** ॥ छाया ॥

तत्र द्रष्टव्यम् । 'पुगन्तलघूपधस्य गुणो भवति' इत्युपस्थितमिदं भवति "क्ङिति न" इति ॥

( प्रदीपः ) अथवेति । यत्र गुणवृद्धी विधीयेते तत्र 'क्ङिति न' इत्युपतिष्ठते—इत्येवमियं परिभाषा भवति । तत्र 'पुगन्तलघूपधस्य' इत्यत्रास्या उपस्थाने सति येन नाव्यवधानमिति भिन्नमित्यादौ निषेधो भविष्यति ॥

( उद्योतः ) येन नेति । पुगन्तलघूपधेति तत्पुरुष इति भावः ॥ श्रुतत्वात्सार्वधातुकादिकं क्ङितीति च पुगन्तादीनामेवं विशेषणमित्यभिमानः ॥

( समाधानान्तरभाष्यम् )

अथवा यदेतस्मिन्योगे क्ङिद्ग्रहणं तदनवकाशम्, तस्यानवकाशत्वात् गुणवृद्धी न भविष्यतः ॥

( प्रदीपः ) अथवेति । मा भूत्परिभाषा, तथापि प्रतिषेधस्य प्रतिषेध्यापेक्षायां यावन्तो यादृशाः प्रतिषेद्धव्यास्तावन्ति प्रतिषेधसूत्राणीति पुगन्तलघूपधगुणे प्रतिषेध्येऽनवकाशः प्रतिषेधो व्यवहितेऽपि प्रवर्तते ॥ अथवा यथोद्देशपक्षाश्रयेण भाष्यम् । तथाहि—प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते-इति 'यदेतस्मिन्' इत्युक्तम् ॥

( उद्योतः ) प्रतिषेध्यापेक्षायामिति । गुणवृद्धिश्रुत्या तद्रूपप्रतिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रविषयकनिषेधवाक्यानां व्यक्तिपक्षे विनिगमनाविरहादुपप्लव इत्यर्थः ॥ प्रधानानीति । अनेन तद्विषयकनिषेधोपप्लवे बीजं दर्शितमित्याहुः ॥

( समाधानान्तरभाष्यम् )

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'भवत्युपधालक्षणस्य गुणस्य प्रतिषेधः' इति । यदयं "त्रसिगृधिधृषिक्षिपेः क्नुः" "इको झल्, हलन्ताच्च" इति क्नुसनौ कितौ करोति ।

कथं कृत्वा ज्ञापकम् ?

कित्करण एतत्प्रयोजनम्—गुणः कथं न स्यादिति ।

यदि चात्र गुणप्रतिषेधो न स्यात्, कित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यः—भवत्युपधालक्षणस्य प्रतिषेध—इति, ततः क्नुसनौ कितौ करोति ॥

( प्रदीपः ) अथवेति । लिङ्गैर्निर्दिष्टाङ्गविकला 'तस्मिन्निति' परिभाषोपतिष्ठत इत्यर्थः ॥ अनेकपरिहारोपन्यासो न्यायव्युत्पादनार्थः ॥

( उद्योतः ) अङ्गविकलेति । पूर्वस्य परस्य वेति सन्देहेन तदुपस्थितेरिति भावः ॥ न चैवं नेनिक्ते इत्यत्रापि निषेधः स्यात्, येननेति न्यायेनैकवर्णव्यवधाने एव निषेधप्रवृत्तेर्बोधनात् ॥ न्यायव्युत्पादनेति । न्यायव्युत्पत्तिः–तत्प्रतिपत्तिः । श्रोतॄणां तदुत्पादनायेत्यर्थः ॥ भाष्ये—हलन्ताच्चेति । नन्वेतद्विहितकित्त्वस्य न ज्ञापकत्वम् । दिदृक्षतीत्यादावमागमनिषेधेन धिप्सतीत्यादौ नलोपेन च चारितार्थ्यात् । इको झलित्यपि न, तद्विषये इकः क्ङित्परत्वस्यैव संभवादिति चेत् । न, [11] "सृजिदृशोर्झल्यमकित्सनि" "इको झल्" "दम्भेः" इति लघुन्यासेन सिद्धे सामान्यतोऽतिदेशस्य गुण-

---

१ अस्य गुणवृद्धिलिङ्गकत्वेन परिभाषात्वमुपपादयति—यत्रेति ॥ छाया ॥

२ बहुव्रीहिपक्षे दोषतादवस्थ्यादाह—पुगन्तेति ॥ छाया ॥

३ एवेनाङ्गव्यवच्छेदः ॥ अभिमान इति । अनेनारुचिः सूचिता । तद्बीजं त्वङ्गांशे तस्योत्थिताकाङ्क्षत्वेन तद्विशेषणत्वौचित्यमिति ॥ छाया ॥

४ इत एवारुचेरेवाह—अथवेति ॥ छाया ॥ एतस्मिन्निति । 'पुगन्तलघुपधस्य च' इति योगे ॥

५ मा भूदिति । पूर्वोत्तरसूत्रानुरोधेन पुरःस्फूर्तिकनिषेधत्वपरित्यागेनापुरःस्फूर्तिकपरिभाषात्वाश्रयणमयुक्तमिति भावः ॥ छाया ॥

६ 'यदेतस्मिन्योगे' इत्येतत्स्वारस्येनाह—अथवेति ॥ प्रधानानीति । यद्यपि संमार्गादिवन्निषेधस्य वाक्यार्थतया प्राधान्यम्, तथापि वस्तुतः संस्कार्यतया ग्रहादिवन्निषेध्यगुणवृद्ध्योः प्राधान्यं, निषेधस्य च गुणत्वम् । तथाच 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायसंचार इति भावः ॥ छाया ॥

७ आहुरित्यनेनारुचिः सूचिता । तद्बीजं तु व्यक्तिपक्षयथोद्देशपक्षयोर्दुर्बलत्वम् । किं च क्ङितीत्यादिप्रागुक्तरीत्या पुगन्तादिविशेषणमेव वाच्यम् । तच्चायुक्तमेवेत्युक्तमेव । अङ्गविशेषणत्वं तु पूर्वपक्षोक्तरीत्या दुर्वचमिति ॥ छाया ॥

८ इत एवारुचेरेवाह—अथवेति ॥ छाया ॥

९ 'गुणप्रतिषेधः कथं स्या' इति फ. पाठः ॥ कथमिति । कथमपीत्यर्थः ॥ छाया ॥

१० ननु लिङ्गेन तत्परिभाषानुपस्थितिद्वारा प्रतिषेधसिद्धिः, उत तत्प्रवृत्तावपि तत्सिद्धिः । नाद्यः, तथा सति भवदुक्तरीत्या सतिसप्तम्याऽर्थतो निमित्तत्वलाभे उपधार्थेन तावन्नार्थ इत्युपक्रमबाधापत्तेः । नान्त्यः, लिङ्गे सत्यपि व्यवहित एतदप्राप्तेरत आह—लिङ्गादिति ॥ छाया ॥ लिङ्गादिति । क्नोः कित्करणाल्लिंगादव्यवहितांशविकलापरिभाषोपतिष्ठते—इत्यर्थः ॥

११ सृजिदृशोरिति । हलन्ताच्चेति विहितकित्त्वस्य दिदृक्षतीत्यादेव प्रयोजनपरत्वे सामान्यतः कित्वविधानमनर्थकम् । तथाहि—'सृजिदृशोर्झल्यमकिति' इति न्यासापेक्षया तत्रैव 'सृजिदृशोर्झल्यमकित्सनि' इति झलादावकिति सनि चामागम इत्यर्थको न्यासः कर्तव्यः, तेन दिदृक्षतीत्यादिसिद्धम् । इको झलिति सूत्रोत्तरं 'दम्भेः' इत्येव कार्यम्, हलन्ताच्चेति मास्तु । उपधालक्षणगुणस्य प्रतिषेधाभावेऽनेन न्यासेन रूपसिद्धौ सामान्यतो हलन्तात्परस्य सनः कित्वविधानं व्यर्थं सत् ज्ञापयति–भवत्युपधालक्षणस्य प्रतिषेध इति । एवञ्चैकमात्रालाघवमपि ज्ञानलाघवमपि पदलाघवमपि छायोक्तमुपपद्यते ॥

१२ लघ्विति । एकमात्रालाघवस्य एकपदालाघवस्य ज्ञानलाघवस्य च सत्त्वादिति भावः ॥ छाया ॥

प्रतिषेधार्थत्वेन ज्ञापकसाम्राज्यात् । रुदविदमुषां क्त्वासनोर्मृडमृदगुधकुषक्लिशां क्त्वः कित्त्वविधानं च ज्ञापकं बोध्यम् ॥

( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )

**[1]रोरवीत्यर्थेनापि नार्थः । 'क्ङिति' इत्युच्यते, न चात्र क्ङितं पश्यामः ॥**

( आक्षेपभाष्यम् )

**[2]प्रत्ययलक्षणेन प्राप्नोति ।**

( समाधानभाष्यम् )

**"न [3]लुमता तस्मिन्" इति प्रत्ययलक्षणप्रतिषेधः ।**

**[4]अथापि "न लुमताङ्गस्य" इत्युच्यते, एवमपि न दोषः ।**

**कथम् ?**

**न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते ।**

**किं तर्हि ?**

**योऽसौ लुमता लुप्यते तस्मिन्[5]यदङ्गं तस्य यत्कार्यं तन्न भवतीति ॥**

**[6]अथाप्यङ्गाधिकारः प्रतिनिर्दिश्यते, एवमपि न दोषः ।**

**कथम् ?**

**"कार्यकालं संज्ञापरिभाषम्" यत्र कार्यं तत्र द्रष्टव्यम् । सार्वधातुकार्धधातुकयोर्गुणो भवतीति उपस्थितमिदं भवति "क्ङिति न" इति ॥**

**( उद्द्योतः ) अङ्गाधिकार इति ।** स्वरितलिङ्गासङ्गेनेति भावः ॥ **कार्यकालमिति ।** तथा च तत्रोपस्थितत्वादिदमप्याङ्गम्, अङ्गाधिकारस्थैकवाक्यतापन्नत्वादिति भावः ॥ [7]स्वरितत्वासङ्गवशात्तदधिकारपठितमिव तदधिकारस्थकवाक्यतापन्नमपि गृह्यते-इति तात्पर्यम् ॥ निषेधेऽपि[8] परिभाषासादृश्यात्परिभाषात्वमुक्तम् । सादृश्यं च निषे[9]ध्योकाङ्क्षया तदेकवाक्यतामात्रेणेति बोध्यम् ॥

( समाधानान्तरभाष्यम् )

**[10]अथवा छान्दसमेतत्, दृष्टानुविधि[11]श्छन्दसि भवति ॥**

**( उद्द्योतः ) छान्दसमिति । यङोऽचि चेति** चेन **बहुलं छन्दसी**त्यनुकृष्य यङो लुग्विधानादित्यर्थः । **न[12] च हुश्नुवोः-'**इति सूत्रस्थेन हुश्नुवोरित्यस्य भाषायां यङ्लुक्सत्ताज्ञापकपरभाष्येणोवर्णान्तेभ्यो यङ्लुक् भाषायामप्यस्तीति लभ्यते । अन्यथा ज्ञापितेऽप्यचारितार्थ्यं स्पष्टमेवेति **वाच्यम् ।** तत्प्रामाण्येनाजादौ क्ङिति[13] क्वचित्तत्सत्ताङ्गीकारेऽपि सर्वत्र भाषायां तत्सत्त्वे मानाभावात् । तत्रत्यभाष्यस्यैकदेश्युक्तित्वाच्च ॥

( समाधानान्तरभाष्यम् )

**[14]अथवा बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । "असिद्धं बहिरङ्गमन्तरङ्गे ॥**

**( प्रदीपः ) बहिरङ्ग इति ।** ततश्चासिद्धत्वादसत्त्वान्निषेधानुपपत्तिरित्यर्थः ॥

**( उद्द्योतः ) गुणो बहिरङ्ग इति ।** गुणस्य बहिरङ्गता, [15]बहिर्भूतसार्वधातुकाश्रयत्वात् ॥ नन्वसिद्धस्यानिष्पन्नस्यैव निषेधः क्रियते, तत्राह - **असत्त्वादिति ।** शास्त्रासिद्धत्वादत्रासत्त्वबुद्ध्या प्रतियोगिज्ञानाभावान्निषेधानुपपत्तिरिति भावः ॥

( समाधानान्तरभाष्यम् )

**[16]अथवा पूर्वस्मिन्योगे यदार्धधातुकग्रहणं, तदनवकाशम् । तस्यानवकाशत्वात् गुणो भविष्यति ॥**

---

१ द्वितीयमपि तत्फलं खण्डयति—**रोरवीत्येति । क्ङितीति । यत** इत्यादिः ॥ छाया ॥

२ एवमुपदेशाप्राप्तावप्यतिदेशेन निषेधः स्यादित्याह—**प्रत्ययेति** ॥ छाया ॥

३ वार्तिकमतेनाह—**न लुमतेति ।** लुमता लुप्ते तन्निमित्तकं पूर्वस्य कार्यं नेति तदर्थः ॥ छाया ॥

४ तस्य खण्डितत्वेनापाणिनीयत्वेन च सूत्रमतेनाह—**अथापीति** ॥ छाया ॥

५ **यदङ्गमिति ।** लब्धाङ्गसंज्ञकं प्रकृतिरित्यर्थः । **यत्कार्यम्**—तन्निमित्तकमाङ्गमनाङ्गं वा ॥ छाया ॥

६ अभ्युपेत्याप्याह—**अथाप्यङ्गेति** ॥ छाया ॥

७ ननु तत्त्वेऽपि न तत्त्वमतिप्रसङ्गापत्तेरत आह—**स्वरितेति ।** स्वरितेनाधिकं कार्यमिति तदर्थादिति भावः ॥ छाया ॥

८ नन्वस्य निषेधत्वम्, न परिभाषात्वमिति कथमयं परिहारोऽत आह—**निषेधेऽपीति** ॥ छाया ॥

९ पर्युदासन्यायेनैकवाक्यतायाः खण्डितत्वादाह—**निषेध्येति ।** तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहार इति भावः ॥ छाया ॥

१० नन्विदमप्ययुक्तम्, स्वरितत्वे मानाभावात् । तावतापि युगपदर्थद्वयकरणे मानाभावाच्च । अस्य परिभाषात्वेनाप्रसिद्धत्वाच्च **न लुमतेत्य**स्यानित्यत्वाच्चात आह—**अथवेति** ॥ **एतत्**-रोरवीतीति यङ्लुगन्तम् ॥ **दृष्टेति ।** दृष्टमनु लक्ष्यविधिरित्यर्थः ॥ छाया ॥

११ 'विधिश्च छन्दसि' इति फ. पाठः ॥

१२ **न चेति ।** अन्यथोवर्णान्तानेकाच्त्वस्य तयोरेव सत्त्वात्तदानर्थक्यं स्पष्टमेवेति भावः ॥ छाया ॥

१३ **क्ङितीति ।** प्रकृताभिप्रायम्, न तु तत्सूत्रनिविष्टम् । तथाच न तत्प्रयुक्तनिषेध इति भावः ॥ छाया ॥

१४ ननु च्छान्दसत्वमगतिकगतिरत आह—**अथवेति** ॥ छाया ॥

१५ **बहिरिति ।** निषेधनिमित्तयङ इत्यादिः ॥ छाया ॥

१६ नन्विदमप्ययुक्तम, असिद्धपरिभाषया जातबहिरङ्गस्य मिथोऽनपेक्षयोर्मध्येऽन्तरङ्गसमकालप्राप्तिकस्यैव बहिरङ्गस्य वाऽन्तरङ्गे कर्तव्येऽसिद्धत्वबोधनेऽपि अत्र निषेधस्य विधिप्राप्त्यपेक्षत्वेन पूर्वप्राप्तेरवश्यवाच्यतया जातत्वसमकालप्राप्तिकत्वयोरभावेन तदप्राप्तेः । धर्मिग्राहकमानेन तथैव सिद्धत्वात् । निषेधस्य निषेध्यापेक्षायां निषेध्यस्य बहिरङ्गत्वेन निषेधस्य सुतरां बहिरङ्गत्वाच्च ॥ **न धातुलोप** इति सूत्रभाष्यं त्वेकदेश्युक्तिरेवात आह—**अथवेति** ॥ छाया ॥

**( प्रदीपः ) अथवेति ।** ननु बहुव्रीह्यर्थ[1]मुभयविशेषणायार्धधातुकग्रहणं स्यादिति कथमनवकाशत्वम्? उच्यते—विनाप्यार्धधातुकग्रहणेन बहुव्रीहिर्लभ्यते । यथा 'एकाचो द्वे' इत्यत्र । रोरवीतीत्यत्रा[2]नैमित्तिकत्वाल्लोपस्य गुणनिषेधः पूर्वेण न प्राप्नोती[3]त्यार्धधातुकग्रहणसामर्थ्यात्सूत्रान्तरप्राप्तोऽपि निषेधो बाध्यत इत्यर्थः ॥ यङ्निमित्तश्च निषेधोऽन्तरङ्गत्वाद्बाध्यते, न सार्वधातुकनिमित्त इति रोरुत इत्यादौ निषेधो[4] भवत्येव ॥ एतच्च[5] छान्दसत्वमभ्युपेत्य यङ्लुको भाष्यकारेणोक्तम् ॥ भाषाविषयत्वे तु यङ्लुको बहूनि प्रयोजनान्यार्धधातुकग्रहणस्य संभवन्ति । तोतोर्ति, तोथोर्ति, दोदोर्ति, दोधोर्ति, जोहोर्ति, मोमोर्ति-इत्यादिषु तुर्वीथुर्वीदुर्वीधुर्वीत्यादिभ्यो यङ्लुकि[6] तिपि छकारवकारयोः 'राल्लोपः' इति लोपे कृतेऽसत्यार्धधातुकग्रहणे बहुव्रीहावप्याश्रिते 'न धातुलोप-' इति गुणनिषेधः प्राप्नोति[7], स मा भूदित्येवमर्थमार्धधातुकग्रहणं स्यात् । अनेन[8] चात्र व्यवधानान्नास्ति निषेध इति सति[9] प्रयोजने कथमनवकाशं स्यात् ॥

**( उद्योतः ) उभयविशेषणाय बहुव्रीह्यर्थमि**त्यन्वयः[10] ॥ **यथेति । प्रथमस्ये**[11]त्येतत्कर्मधारयेऽपि विशेष्यं शक्यं कर्तुमिति न तत् बहुव्रीहित्वगमकमिति भावः ॥ ननु सूत्रान्तरप्राप्त[12]निवृत्तिः कथं? तत्राह—**सामर्थ्यादिति ।** अयमाशयः—**आर्धधातुके**[13]-इति योगो विभज्यते, धातु[14]लोप इति वर्तते षष्ठीतत्पुरुषश्च । एवं च **धात्वेक**देशलोपे सति प्रत्यासत्त्याऽन्तरङ्गतया च लुप्तधात्वेकदेशनिमित्तो गुणवृद्धिनिषेधश्चेदार्धधातुक एव-इति नियमस्तत्सामर्थ्यात्-इति ॥ तत् ध्वनयन्नाह—**यङ्निमित्तश्चेति ॥ भाषेति । हुश्नुवोः सार्वधातुक** इत्यत्र हुश्नुग्रहणादिति भावः ॥ **इत्यादिभ्य इति ।** आदिना-हुर्छामुर्छे ॥ **राल्लोप इति ।** तत्र हि क्ङितीति नानुवर्तते । तदनुवृत्तिपक्षे तोतोर्मीत्याद्युदाहरणम्[15] ॥ नन्वेवमपि **क्ङिति** चेति निषेधोऽत्र दुर्वार[16] इति तद्वारणं विनाऽस्य चारितार्थ्यं कथमत आह—**अनेनेति ।** बहिरङ्ग[17]राल्लोपस्यान्तरङ्गे यङाश्रये प्रतिषेधे कार्येऽसिद्धत्वाद् द्वाभ्यां व्यवधानात्तदप्राप्तिः[18] । सनः[19] कित्त्वेन तु एकव्यवधानमेवाश्रितमिति भावः ॥ वस्तुतस्तु भाष्यप्रामाण्यादेषां प्रयोगाणां लोकेऽभाव इत्येवाश्रयणीयम्[20] ॥

**( आक्षेपभाष्यम् )**

**इह[21] कस्मान्न भवति—'लैगवायनः' 'कामयते'?**

**( सिद्धान्तसमाधाने भाष्यवार्तिकम् ॥ )**

## * तद्धितकाम्योरिक्प्रकरणात्[22] *

**( भाष्यम् )**

**इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैते इग्लक्षणे ॥**

**( प्रदीपः ) इग्लक्षणयोरिति ।** इक इत्येवं ये गुणवृद्धी तयोर्निषेध इत्यर्थः ॥

---

१ **बहुव्रीह्येति ।** अन्यथा लोपगुणवृद्धीनामेकनिमित्तकत्वं न लभ्येतेति भावः ॥ छाया ॥

२ **रोरवीतीति ।** तथा चेत्यादिः ॥ तं विना तल्लाभे चेति तदर्थः ॥ छाया ॥

३ **न प्राप्नोतीतीति ।** तत्र तद्व्यावृत्त्यर्थं क्रियमाणेति शेषः ॥ छाया ॥

४ **निषेध इति ।** सार्वधातुकनिमित्त इति भावः ॥ छाया ॥

५ अत्र समाधाने स्वमतेनारुचिमाह—**एतच्चेति ।** समाधानमित्यर्थः । यङ्लुकश्छान्दसत्वमभ्युपेत्येत्यन्वयः ॥ छाया ॥

६ **यङ्लुकि**-अनैमित्तिके ॥ छाया ॥

७ **प्राप्नोतीति ।** उभयोरेकनिमित्तकत्वादिति भावः ॥ छाया ॥

८ **अनेनेति । क्ङिति** चेति सूत्रेणेत्यर्थः ॥ छाया ॥

९ **सतीति ।** उक्तरीत्येति भावः ॥ छाया ॥

१० 'मित्यर्थः' इति प. पाठः ॥

११ प्रथमस्येत्येकाचो विशेषणमिति नासावन्यपदार्थ इति विवरणोक्तमयुक्तं, तयोः कामचारादत आह—**प्रथमस्येत्येतदिति ॥** छाया ॥

१२ **प्राप्तेति ।** सूत्रान्तरप्राप्तस्य निषेधस्य निवृत्तिरित्यर्थः ॥ **कथमिति ।** असंबद्धत्वात् सूत्रगतविशेषाणानां तदीयाव्याप्त्यतिव्याप्तिवारकत्वस्य सुप्रसिद्धत्वादिति भावः ॥ छाया ॥

१३ **आर्धधात्विति ।** 'धातुलोपे' इति बहुव्रीहिणार्धधातुकस्यैवान्यपदार्थत्वेन लाभः, धात्वंशलोपनिमित्तस्यार्धधातुकस्यैव लोलुव इत्यादौ संभवादित्यार्धधातुकग्रहणमधिकमिति-इत्यादिः ॥ छाया ॥

१४ **धात्विति ।** तत्रेत्यादिः ॥ **तत्पुरुषश्चेति ।** आश्रीयत इति शेषः । शब्दाधिकाररीत्येति भावः ॥ छाया ॥

१५ **हरणमिति ।** अनुनासिकादिप्रत्ययपरत्वसत्त्वेन तत्र तत्प्रवृत्तेरिति भावः ॥ छाया ॥

१६ **दुर्वार इति ।** 'तेन तद्वारणं मुधा स्यादिति' इति शेषः ॥ छाया ॥

१७ **बहिरङ्गेति ।** तिबाश्रयत्वादिति भावः ॥ छाया ॥

१८ **तदिति ।** क्ङितीति निषेधेत्यर्थः ॥ छाया ॥

१९ ननूक्तज्ञापकादनेकव्यवायेऽपि प्रवृत्तिरत आह—**सन इति ।** एवं प्रकारेण पूर्वनिषेधवारणं तु न, तुल्यनिमित्तकत्वेन **राल्लोपस्या**सिद्धत्वाभावादिति भावः ॥ छाया ॥

२० **श्रयणीयमिति ।** तस्मादत्र यङ्लुकश्छान्दसत्वादाद्यपक्षाद्वा रोरवीतीत्यादौ न दोष इति तदर्थमपि तन्निमित्तग्रहणं मास्त्विति परसप्तम्येव क्ङितीति, वाक्यार्थस्तु प्रागुक्त एवेति स्थितम् ॥ छाया ॥

२१ अथ वार्तिकमवतारयति—**इहेति ।** निषेध इति शेषः ॥ लिगोर्नडादित्वात्फकि **किति** चेति वृद्धावोर्गुणेऽवादेशः ॥ कमेर्णिङि उपधावृद्ध्यादि ॥ उभयत्र उभयथा पिक्ङित्प्रयुक्तो गुणादिनिषेधः स्यात् । णिङो णित्त्वं **णिश्री**ति चङर्थं स्यादिति भावः ॥ छाया ॥

२२ तद्धितान्तलिगुशब्दे णिङन्ते कामिशब्दे च क्ङिति चेति निषेधो न प्रवर्तते, इक्प्रकरणात्-इग्लक्षणयोरनेन निषेधादिति भाष्यवार्तिकार्थः । 'शचङन्तस्यान्तरङ्गलक्षणत्वात्-तद्धितकाम्योरिक्प्रकरणात्' एते वार्तिके भाष्यकृत एव, न भगवतः कात्यायनस्य, कुण्डलनाभावात् ॥

( उद्योतः ) नन्विग्लक्षणयोरित्युक्तावपि लैंगवायने इकूस्थानिकत्वेनेग्लक्षणत्वात्स्यादेव गुणनिषेधोऽत आह—इक इतीति । अर्थाधिकारानुरोधेन पदपरमेव 'इकः' इति सम्बध्यत इति भावः ॥

इति निमित्तार्थत्वनिराकरणम् ॥

( अथ स्थानिवत्त्वप्राप्तदोषवारणम् )

( १२८ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ लकारस्य ङित्त्वादादेशेषु स्थानिवत्प्रसङ्गः ॥ * ॥

( भाष्यम् )

**लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावः प्राप्नोति—अचिनवम्, असुनवम्, अकरवम् ॥**

( प्रदीपः ) लकारस्येति । अनुबन्ध इत्संज्ञकत्वाल्लोपात्स्थानिनि न सन्निधीयत इति 'अनल्विधौ' इति निषेधो न प्रवर्तते । 'पिन्ङिन्न भवति' 'ङित्पिन्न भवति' इति भाष्यकारस्य कल्पना, न वार्तिककारस्येति दोषोपन्यासः ॥

( उद्योतः ) लोपादिति । पदार्थोपस्थितिकाल एवान्तरङ्गत्वाल्लोपप्रवृत्तिरिति भावः ॥ पिन्ङिन्नेति । सार्वधातुकमित्यत्रापिदिति योगविभागेन प्रसज्यप्रतिषेधेनायमर्थो लभ्यते । तत्र योगविभागसामर्थ्यात् स्थानिवत्त्वप्राप्ता अन्या वा ङित्त्वप्राप्तिः सर्वा प्रतिषिध्यत इत्याशयः ॥ भाष्ये—स्थानिवद्भावः प्राप्नोतीति । तथा चाचिनवमित्यादौ गुणनिषेधप्रसङ्ग इति भावः ॥

( एकदेशिसमाधानभाष्यवार्तिकम् ॥ )

## * लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेत् यासुटो ङिद्वचनात्सिद्धम् *

( व्याख्याभाष्यम् )

**यदयं यासुटो ङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यः—न ङिदादेशा ङितो भवन्तीति ॥**

( आक्षेपभाष्यम् )

**यद्येतज्ज्ञाप्यते, कथं "नित्यं ङितः" "इतश्च" इति ?**

( प्रदीपः ) कथं नित्यं ङित इति । ननु ङितो लकारस्येति तत्रार्थः स्थितः, न तु ङित आदेशस्येति । अन्यथा पचावः पचन्तीति लोपः स्यात् । एवं मन्यते—यासुटो ङित्त्वेन ज्ञापकेन स्थानिन एव लकारस्य ङिद्व्यपदेश उच्छिद्यते । ङकारोच्चारणं तु 'लुङ्लङ्लृङ्क्षु' इत्यादौ विशेषणार्थं स्यात् ॥

( उद्योतः ) ननु ङित इति । तथा च न स्थानिवत्त्वेन ङित्त्वं प्रार्थ्यमिति भावः ॥ ङिद्व्यपदेश इति । स्थानिलसंबन्धिङस्येत्संज्ञाभाव एव ज्ञाप्यते । लस्येत्यस्य लघटितस्येति व्याख्या कार्येत्यर्थः ॥

( समाधानभाष्यम् )

**ङितो यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवतीति ॥**

( प्रदीपः ) ङितो यदिति । स्थानिवद्भावेन लादेशे ङिति

---

१ कामयत इत्यत्रादोषादाह—लैगेति । स्थानिकत्वेनेगिति । प्रकृत्यादित्वादभेदे तृतीया ॥ छाया ॥

२ अथ वार्तिकमतं वक्तुं वार्तिकान्तरमाह—लकारस्येति ॥ छाया ॥

३ नन्वनल्विधाविति निषेधेनास्थानिवत्त्वात्कथं ङित्त्वमत आह—अनुबन्ध इति ॥ न प्रवर्तत इति । नल्यपीति लिङ्गात् ॥ ङित्वादेरशास्त्रीयस्याप्यतिदेश इवानुबन्धकार्येऽनल्विधाविति निषेधाप्रवृत्तिरिति केचित् ॥ छाया ॥

४ ननु पित् ङिन्नेति निषेधेन कथं लादेशेषु स्थानिवत्त्वेन ङित्वमत आह—पिदिति ॥ छाया ॥

५ लङो ङित्वस्य नित्यं ङित इत्यादौ साफल्येन मिपः पित्वस्य टिल्लकारादेशत्वे साफल्येन लङादेशे मिपि आतिदेशिकं ङित्त्वं स्यादेव, यत्र तु तयोरन्यतरदनवकाशं तत्रैव ङिच्च पिन्नेत्यादिप्रवृत्तिरिति रत्नप्रकाशोक्तिं खण्डयितुमाह—सार्वेति ॥ अनवकाशत्वेनैव बाधे सिद्धे योगविभागानर्थक्यापत्तेरिति भावः ॥ छाया ॥

६ एतत्कात्यायनवार्तिकमिति मुद्रितपुस्तकेषु संकेतः । व्याख्याभाष्ये यादृशो व्यवहारो भाष्यकृतां तादृशस्यात्राभावान्नैतत्कात्यायनवार्तिकमिति प्रतीयते । अन्यच्च सिद्धशब्दान्तं भाष्यकृतामेव वचनं सम्भवति ॥

७ यदयमिति । यासुटि ङिति कार्याभावेनावयवेऽचरितार्थमिति समुदायस्यैव तन्ङित्त्वमिति तस्य तद्विधानं व्यर्थं संज्ञापकम् । न चातिदिष्टादुपदिष्टं बलीयः । किंच तस्य विशेषरूपत्वमतिदिष्टस्य सामान्यरूपत्वमिति वाच्यम् । वाचनिकातिदेशस्य प्रत्यक्षोपदेशतुल्यत्वात् । पित्त्ववन्ङित्त्वस्यापि विशेषरूपत्वाच्चेति भावः ॥ ङिदादेशा इति । अतिदिष्टङकारेत्कादेशा इत्यर्थः । तेन तसाद्यादेशा ङितो भवन्त्येवेति भावः ॥ छाया ॥

८ सामान्यापेक्षं ज्ञापकमित्याशयेनाह—यद्येतदिति ॥ तथा च भवेत् भवेमेत्यादाविसलोपौ न स्याताम् । आदेशस्य स्थानिवत्त्वेनातत्त्वादिति भावः ॥ इतश्चेत्युपलक्षणं तस्थस्थमिपामित्यस्यापि ॥ छाया ॥

९ स्यादिति । सकारेकारयोरिति शेषः ॥ सार्वधातुकमपिदिति ङित्त्वादिति भावः ॥ छाया ॥

१० नन्वेवं ङकारोच्चारणं व्यर्थमत आह—ङकेति ॥ न च तदनुबन्धकेति न्यायेनैव चङादेरग्रहणे विशेषणार्थत्वमपि किमर्थमिति वाच्यम् । लघटितस्येत्यर्थावश्यकत्वेनोकारादेरपीत्त्वे फलाभावेन तदनुबन्धकत्वस्यैवाभावात् ॥ न चैवमपि निरनुबन्धकेति न्यायेन निर्वाह एव, तथा सति लुङादौ दोषात् स्यतासी इत्यत्र दोषाच्चेति शङ्काशयः । अत एव स्यादित्युक्तं, मन्यते इति च ॥ छाया ॥

११ विशेषापेक्षं ज्ञापकमित्याशयेनाह—ङित इति ॥ छाया ॥

यत्कार्यं पूर्वस्य तन्न भवतीति ज्ञाप्यते, न तु स्थानिन एव ङिद्व्यपदेश उच्छिद्यते । अन्यथा 'नित्यं ङितः' इत्येतन्निर्विषयं स्यादित्यर्थः ॥

( उद्द्योतः ) यत्कार्यं पूर्वस्येति । प्राप्तमिति शेषः ॥ न त्विति । प्रथमोपस्थितेत्संज्ञाशास्त्रबाधापेक्षया स्थानिवत्त्वबाध एव युक्त इति भावः ॥ युक्त्यन्तरमप्याह—अन्यथेति । लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः । ङित आदेशस्येत्यर्थस्तु नेत्युक्तमेव ॥

( आक्षेपभाष्यम् )

किं वक्तव्यमेतत् ?

( समाधानभाष्यम् )

न हि ।

( आक्षेपभाष्यम् )

कथमनुच्यमानं गंस्यते ?

( समाधानभाष्यम् )

**यासुट एव ङिद्वचनात् । अपर्याप्तश्चैव हि यासुट् समुदायस्य ङित्त्वे । ङितं चैनं करोति, तस्यैतत्प्रयोजनम्-ङितो यत्कार्यं तद्यथा स्यात्, ङिति यत्कार्यं तन्मा भूदिति ॥ क्ङिति च ॥ ५ ॥**

( प्रदीपः ) यासुट एवेति । ङितो यत्कार्यं तद्यासुटो न किंचिदतिदेष्टव्यमस्ति, किंतु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते । तच्चेत्स्थानिवद्भावात्स्यादतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणो ङिति यत्कार्यं तदभावस्यैव ज्ञापकः ॥ अपर्याप्तश्चेति । समुदायस्य ङिद्व्यपदेशे कर्तव्ये यासुडसमर्थः । यासुट एव ह्यनेन ङित्त्वं क्रियते, न समुदायस्य । 'क्ङिति च' इत्यत्र तन्निमित्तग्रहणस्य प्रत्याख्यातत्वादगुणनिमित्तेऽपि यासुटि ङिति गुणनिषेधः सिध्यति । यदि समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यत्, यासुटो ङित्त्वं न व्यधास्यत् । विहितं ज्ञापयति—ङिति यत्कार्यं तल्लादेशे न भवतीति ॥ केषांचित्पाठः-'सुपर्याप्तश्चैव हि' इति । तत्रावयवङित्त्वद्वारेण समुदायस्य ङित्त्वं विधीयत इति व्याख्येयम् । एवं हि क्ङितीति निमित्तसप्तमीपक्षेऽपि गुणनिषेधः सिद्ध्यति । अस्मिन्पक्षे 'ङितं चैनं करोति' इति समुदायः परामृश्यते ॥ ५ ॥

( उद्द्योतः ) तदभावस्यैवेति । ज्ञापकस्य सजातीयापेक्षत्वादिति भावः । भाष्ये-यासुट एवेत्यस्य 'न समुदायस्य' इत्यर्थः, एवस्यावधारणार्थत्वात् । यदि समुदायस्य ङित्त्वं स्यात्तदा ङितो यत्कार्यं तदपि तत्र प्राप्तियोग्यमिति तदभावमपि ज्ञापयेत् । तथा हि—नित्यं ङित इत्यादेर्ङित आदेशस्येत्येवार्थः । पचावः पचन्तीत्यादौ तु न दोषः, सार्वधातुकमपिदित्यत्रानुवृत्तङिदित्यस्य लुप्तसप्तमीकतया ङितीव कार्यस्यैवातिदेशादिति भावः ॥ न च यासुटि ङिति किञ्चित् कार्यं प्राप्नोति' तन्निमित्तग्रहणेन निषेधाप्राप्तेरिति वाच्यम् । संप्रसारणप्राप्तेः । न हि तत्र प्रत्यय इत्यस्तीत्याहुः ॥ नन्ववयवे कृतस्य लिङ्गस्य समुदायविशेषकत्वात् 'यासुट् ङित्' इत्युक्तावपि समुदायस्य ङित्त्वं भवत्येव । अत एव तन्निमित्तग्रहणेऽपि निषेधः सिध्यति । तच्च स्थानिवत्त्वेन सिद्धमिति व्यर्थं ङित्त्वं स्थानिनो ङिद्व्यपदेशोच्छेदेऽपि ज्ञापकं स्यात्, ङितो यत्कार्यं तदभावस्यापि वा ज्ञापकं स्यादत आह—भाष्ये-अपर्याप्तश्चैवेति । अस्य ङित्त्वस्य केवले आगमे संप्रसारणविधानेन चरितार्थत्वात् । अवयवेऽचरितार्थस्यैव च समुदायविशेषकत्वम् । अत एव 'पठिता विद्या' इत्यादौ ङीप् नेति भावः ॥ ङितं चैनमिति । अवयवमित्यर्थः ॥ यासुट एव हीति । यासुट् ङिदिति सामानाधिकरण्यात् । यासुट्पदस्य स्वविधानाय स्वरूपपरस्य ङित्त्वसंबन्धे तदादौ लक्षणायां मानाभाव इति भावः ॥ प्रत्याख्यातत्वा-

---

१ निर्विषयमिति । तथा च निर्विषयस्य नित्यं ङित इत्यादेर्बाधापेक्षया सविषयस्थानिवद्भावबाध एवोचित इति भावः ॥ छाया ॥

२ ननु ङित आदेशस्येत्यर्थेन तस्यापि न निर्विषयत्वमत आह—ङित इति ॥ छाया ॥

३ तस्यैतदिति । प्रागुक्तरीत्या स्थानिनो ङिद्व्यपदेशोच्छेदनादावसामर्थ्यादिति भावः ॥ छाया ॥

४ तन्मा भूदितीति । स्थानिवत्त्वेनेति शेषः ॥ छाया ॥

५ एतदेवोपपादयति—यासुट एवेति ॥ छाया ॥

६ नन्वेवं फलाभावोऽत आह—क्ङितीति ॥ छाया ॥

७ अगुणेति । तन्मात्रस्य सार्वधातुकत्वादेरभावादिति भावः ॥ छाया ॥

८ भाष्ये—'अपर्याप्तश्चैव हि' इत्यत्रायं पाठः ॥

९ यादृशकार्यप्राप्तयेऽतिदेशस्तादृशकार्यमेव स्थानिवद्भावेन न भवतीति ज्ञाप्यते इत्याह—ज्ञापकस्येति ॥ छाया ॥

१० एवकारव्यवच्छेद्यमेवोपपादयति-यदीत्यादि ॥ स्यादिति । ङित्त्वेति चेनानुकृष्टयासुटस्तदादिलक्षणयेति भावः ॥ तत्र-यासुड्विशिष्टे ॥ छाया ॥

११ आहुरित्यनेनारुचिः सूचिता । तद्बीजं तु पचेते इत्यादावातो ङित इतीयादेशो न स्यात् । न हि ङित्परत्वेनायं विधीयते, तस्य सिद्धये ङिता तुल्यं ङिद्वदित्याश्रयणात्पचाव इत्यादौ दोष एव । किं च धात्वाक्षिप्ते प्रत्यये एव संप्रसारणम् । एवं च समुदायङित्त्वे न कोऽपि दोष इति । तद्ध्वनयन् शङ्कते—नन्ववयवेति ॥ यासुड् ङिदिति । सामानाधिकरण्येनान्वयादिति भावः ॥ छाया ॥

१२ समुदायस्येत्यादिना प्रदीपोक्तस्य शब्दार्थस्य तात्पर्यं वक्तुं तत्र हेतुमाह—अस्येति । यासुट इत्यर्थः ॥ छाया ॥

१३ तत्र हेतुमाह—अवयवेति ॥ अत एवेति । अचरितार्थस्यैव तद्विशेषकत्वाङ्गीकारादेवेत्यर्थः ॥ पठितेति । अन्यथेटष्टित्त्वस्यावयवत्वसंपादकस्यापि समुदायविशेषकत्वाट्टिड्ढेति ङीप् स्यादिति भावः ॥ छाया ॥

१४ पठितेत्यत्रागमस्येटः टित्त्वेन समुदायस्य टित्त्वमादाय टिदन्तत्वप्रयुक्त इति शेषः । ( र. ना. )

१५ ननु प्रागुक्तरीत्या लक्षणया तदादेर्ङित्त्वमत आह—यासुड्िति ॥ छाया ॥

दिति । [1]स्वरितत्वप्रतिज्ञानात्समुदायगतनिमित्तत्वस्यावयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये ॥ **यदि समुदाये इति** । ननु स्थानिवत्त्वेन समुदायस्य ङित्त्वे यासुटः कथं ङित्त्वमिति चेत् । न । [2]तन्ङित्त्वसाध्यफलस्य तावताऽपि सिद्धेरिति भावः ॥ **केषांचिदिति** । अत्र पाठे—**यासुट एवे**त्येवकारः प्रसिद्ध्यर्थकः । केवलयासुटो ङित्त्वं व्यर्थं, गुणनिषेधे तन्निमित्तग्रहणात् । संप्रसारणमपि धात्वाक्षिप्ते प्रत्यये एव । एवं च सामर्थ्यात्समुदायविशेषकं तदिति भावः ॥ **ङित्तं चैनमिति** । स्थानिवत्त्वेन ङित्त्वे सिद्धेऽपीति शेषः ॥ **ङितो यत्कार्यमित्यादि** । ज्ञापकस्य सजातीयापेक्षत्वादिति भावः ॥ न हि यासुड्विशिष्टस्य ङित्त्वप्रयुक्तं किंचिदनेन ङित्त्वेन प्राप्नोति । **नित्यं ङित** इत्यस्य च ङितो लस्येत्येवार्थात् । 'आदेशस्य ङितः' इत्यर्थे तु दोष उक्त एव । **सार्वधातुक**मित्यादौ ङिदित्यस्य उपमेये प्रथमादर्शनेन [3]सप्तम्यन्तताया अन्याय्यत्वादिति भावः ॥ [4]नन्विदं ङित्त्वं स्तुयादित्यादावनिग्लक्षणवृद्धिबाधनार्थं, चिनुयुरित्यादौ **जुसि चे**ति निषेधार्थं च चरितार्थमिति चेत् । न, [5]**ङिच्च पिन्ने**ति भाष्योक्तकल्पनयैव सिद्धेः । [6]एतदर्थमेव हि भाष्ये तत्स्वीकारः ॥ [7]**यत्तु**—संज्ञापूर्वकविधेरनित्यत्वेन वृद्धिवारणम् । अत एव 'उत औत्' इति नासूत्रीति । तन्न । अस्यार्थस्य भाष्यास्पृष्टत्वात् । [8]**ज्ञाजनोर्जे**त्यस्याङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यासङ्गतेश्च । अनयैवान्यथासिद्धेः । [9]**जुसि चे**त्यत्र **ह्रस्वस्याची**त्यतोऽचीत्यनुवर्त्याजादौ जुसि गुणविधानान्न चिनुयुरित्यत्र दोषः ॥ [10]एवं च अत्रत्यपूर्वपक्षसिद्धान्तावेकदेशिन एवेति बोध्यम् ॥ ५ ॥

( ५ निषेधसूत्रम् ॥ १ । १ । ४ आ. ३ ॥ )

## दीधीवेवीटाम्[11] ॥ १ । १ । ६ ॥

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

[12]किमर्थमिदमुच्यते ?

( समाधानभाष्यम् )

[13]गुणवृद्धी मा भूतामिति । आदीध्यनम्, आदीध्यकः । आवेव्यनम्, आवेव्यकः-इति ॥

( दीधीवेवीप्रत्याख्यानभाष्यम् )

[14]अयं योगः शक्योऽकर्तुम् ।

कथम् ?

( १३० सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥ * ॥ दीधीवेव्योश्छन्दोविषयत्वात् दृष्टानुविधित्वाच्च छन्दसश्छन्दस्यदीधेददीधयुरिति च गुणदर्शनादप्रतिषेधः ॥*॥**

( भाष्यम् )

'दीधीवेव्योश्छन्दोविषयत्वात्' । दीधीवेव्यौ छ-

---

१ ननु तस्य प्रत्याख्यानेऽपि तदर्थस्याभिमतत्वमेवात आह—**स्वरितेति** ॥ स्वरितेनाधिकं कार्यमित्यर्थादिति भावः ॥ छाया ॥

२ **तन्ङित्त्वेति** ॥ यासुड्ङित्त्वेत्यर्थः । **फलस्य**—गुणनिषेधादेः । **तावतापि**—समुदायङित्त्वेनापि ॥ छाया ॥

३ **सप्तेति** । लुप्तेत्यादिः ॥ उपमानोपमेययोः समानविभक्तिकत्वनियमादिति भावः ॥ छाया ॥

४ वस्तुत इदं ङित्त्वं न ज्ञापकमिति ध्वनयितुं शङ्कते—**नन्विदमिति** ॥ **इग्लक्षणवृद्धीति** । **उतो वृद्धि**रितीत्यर्थः ॥ उत इति स्थानिनिर्देशेन परिभाषानुपस्थित्या तस्या अनिग्लक्षणत्वादिति भावः ॥ ननु विनिगमनाविरहः । किं च-उत औल्लुकि हलीति वाच्ये वृद्धिग्रहणेन स्थानिनिर्देशेऽपि परिभाषोपस्थित्या तस्या अपीग्लक्षणत्वमत आह—**चिन्विति । जुसि चे**ति गुणस्य निषेधबाधकस्य निषेधार्थ चेत्यर्थः । पुनर्ङित्त्वादिति भावः ॥ छाया ॥

५ प्रकारान्तरेणानिर्वाहादाह—**ङिच्चेति** ॥ छाया ॥

६ ननु सैव फलाभावान्मास्त्वत आह—**एतदिति** । यतः स्तुयादित्याद्यर्थमेव कल्पनास्वीकार इत्यर्थः । अत एव यासुटो ङित्त्वस्यापि तदर्थतया साफल्येन न ज्ञापकतेति भावः ॥ छाया ॥

७ कौस्तुभाद्युक्तिं खण्डयति—**यत्त्विति** ॥ छाया ॥

८ नन्वस्पृष्टत्वेऽप्यप्रतिषिद्धन्यायेनाभिमतः स्यादत आह—**ज्ञाजनोरिति** । इति घटकादेशसंबन्धिदीर्घोच्चारणस्येत्यर्थः ॥ **अनयैवेति** । संज्ञापूर्वको विधिरनित्य इति परिभाषयैवेत्यर्थः ॥ प्रकारान्तरेण तज्ज्ञापनं विनैव तस्य साफल्यमिति भावः ॥ छाया ॥

९ द्वितीयदोषमुद्धरति—**जुसीति** ॥ छाया ॥

१० उपसंहरति—**एवं चेति** । भाष्योक्तप्रकारं विनाऽनिर्वाहे चेत्यर्थः ॥ तथा च कोऽपि पाठोऽस्तु न तत्र निर्भरः ॥ छाया ॥

११ अत्रेट् आगमः, न तु धातुः प्रसिद्धतरत्वात् । न च प्रसिद्धेः साहचर्यं बाधकम्, यथा गुरुभार्गवशब्दौ व्यस्तावुपदेष्टृपरशुरामबोधकौ, समस्तौ पुनर्देवगुरुदैत्यगुरुबोधकौ; एवं च धातोरेव ग्रहणं युक्तमिति वाच्यम् । द्वन्द्वेऽल्पाच्तरत्वेनेटः पूर्वनिपाते कार्ये परनिपातकरणस्य साहचर्यनियमस्यानित्यताज्ञापनार्थत्वादिति बोध्यम् ॥ इति छाया ॥

१२ वक्ष्यमाणरीत्या सूत्रमनारम्भणीयमित्याशयेनाचार्यैकदेशी सूत्रमाक्षिपति—**किमर्थमिति** ॥ छाया ॥

१३ एकदेश्याह—**गुणेति । आदीध्यनमित्यादि** । गुणादौ निषिद्धे **एरनेकाच** इति यण् ॥ छाया ॥

१४ एकदेश्युक्तं दीधीवेव्योरेव फलं श्रुत्वाऽसहमानः सिद्धान्ती वैषम्यादिदः फलमश्रुत्वैवाह—**अयं योग इति** । कर्मणि घञ् । दीधीवेवीरूपयुग्ममित्यर्थः । अत एव—**'इटश्चापि'**—इति भाष्येण पौनरुक्त्यं न, योगशब्दस्य सूत्रपरत्वे तु पौनरुक्त्यं स्पष्टमेव । एतेन—सूत्राभिप्रायेण नारायणोक्तमवतरणमपास्तम् । अत एव कथमिति प्रश्ने वार्तिककृदाह तयोरेव—**दीधीति** ॥ छाया ॥

न्दोविषयौ । 'दृष्टानुविधित्वाच्छन्दसः' । दृष्टानुविधि'श्छन्दसि भवति । 'छन्दसि अदीधेददीधयुरिति च गुणस्य दर्शनादप्रतिषेधः' । अनर्थकः प्रतिषेधः-अप्रतिषेधः । "प्रजापतिर्वै यत्किञ्चिन्मनसाऽदीधेत्," "होत्रायं वृतः कृपयन्नदीधेत् ( ऋ. सं. १०।९८।७ )" "अदीधयुर्दाशराज्ञे वृतासः (ऋ. सं. ७।३३।५ )" ॥

( प्रदीपः ) दीधीवेवी० ॥६॥ छन्दोविषयत्वादिति । भाषायामेतयोः प्रयोगाभावात् ॥ दृष्टानुविधित्वाच्चेति । यद्यपि भाषायामपि दृष्टमेवानुविधीयते 'सिद्धे शब्दार्थसंबन्धे' इति न्यायात्, तथाप्यादीध्यनमित्यादिप्रयोगश्छन्दसि नास्ति । दृष्टस्यैव छन्दस्यनुविधानमित्यर्थः, न छन्दस्येव दृष्टानुविधानमिति । अथवा 'दृष्टानुविधिः' इत्यस्यायमर्थः—गुणश्छन्दसि दृश्यते न तु सर्वत्र गुणनिषेध इति ॥ अदीधेदिति । लङ्, व्यत्ययेन तिप् ॥ अदीधयुरिति । 'जक्षित्यादयः षट्' इत्यभ्यस्तत्वाज्जुसादेशो झेः ॥

( उद्द्योतः ) दीधी० ॥६॥ भाषायामिति । अनन्यभावो हि विषयशब्दार्थ इति भावः ॥ दृष्टस्यैवेति । भाषायां तु संप्रति प्रयोगेऽदृष्टस्यापि व्याकरणान्तरानुसारेण शिष्टप्रयोगादिना वाऽवगतसाधुत्वस्याप्यनुविधानमित्यर्थः ॥ एवं च वेद आदीध्यनमित्यादिलक्ष्याभावादसंभवदुक्तिकं सूत्रमिति भावः ॥ अथवेति । एवं च लक्षणस्याव्याप्तिप्रतिपादकं भाष्यमिति भावः ॥ व्यत्ययेनेति । दीधीङो ङित्त्वात् ॥ परस्मैपदोपलक्षणं तिप्-इति ॥

( आक्षेपभाष्यम् )

भवेदिदं युक्तमुदाहरणम्—अदीधेदिति । इदं त्वयुक्तम्—अदीधयुरिति । अयं जुसि गुणः प्रतिषेधविषय आरभ्यते, स यथैव "क्ङिति च" इत्येतं प्रतिषेधं बाधते, एवमिममपि बाधेत ॥

( समाधानभाष्यम् )

नैष दोषः, जुसि गुणः प्रतिषेधविषय आरभ्यमाणस्तुल्यजातीयं प्रतिषेधं बाधते ।

कश्च तुल्यजातीयः प्रतिषेधः ?

यः प्रत्ययाश्रयः । प्रकृत्याश्रयश्चायम् ॥

( प्रदीपः ) प्रकृत्याश्रयश्चायमिति । तेनश्चान्तरङ्गत्वादनेनैव भाव्यमित्यर्थः ॥

( उद्द्योतः ) अन्तरङ्गत्वादिति । नन्वेवं बहिरङ्गस्य जुसि गुणस्य कथमनेन निषेध इति चेत् । न । सर्वस्यापि गुणस्य प्रत्ययाश्रयत्वेन बहिरङ्गतयाऽन्तरङ्गनिषेध्याभावादिति भावः ॥

( समाधानान्तरभाष्यम् )

अथवा-येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते 'क्ङिति च' इत्येतस्मिन्प्रतिषेधे जुसि गुण आरभ्यते । अस्मिन्पुनः प्राप्ते चाप्राप्ते च ॥

---

१ 'दृष्टानुविधिश्छन्दसि भवति' इति भाष्यस्य द्विधाऽर्थः प्रदीपे प्रकाशितः—भाषायां व्याकरणसिद्धस्य प्रयोगेऽदृष्टस्यापि शिष्टप्रयोगेणानुमितसाधुत्वस्यापि वा प्रयोगः कर्तुं शक्यते छन्दसि तु तादृशस्य प्रयोगः कर्तुं न शक्यतेऽतश्छन्दसि दृष्टस्यैवानुविधानम्, अथवा छन्दसि गुणो दृश्यतेऽतः सर्वत्र गुणाभावविधायकमेतन्न युज्यते–इति ॥

२ एवं नि वेवेति पलितो दूतः' ( ऋ. ३।५५।९ ) नि वेवेति श्रेणिभी रथानाम् ( ऋ. ४।३८।६ ) इत्यादौ वेवीङोऽपि गुणो दृश्यते । तथापि तस्य यङ्लुगन्तवेतिनापि निर्वाहसंभवात्तस्यासाधारणत्वाभावात्तन्नोदाहृतं भगवतेति बोध्यम् ॥ दाधिमथाः ॥

३ असंभवमुक्त्वाऽव्याप्तिमाह वार्तिककृत्—छन्दस्यदीधेदिति । अत एव चद्वयसंगतिः ॥ भाष्यकारस्तु 'दृष्टानुविधित्वाद्' इति हेतुं चं विना व्याख्यातवान् । तथाच तन्मते चो वाक्यालंकारे इति दृष्टानुविधीत्यारभ्य एक एव हेतुः, तन्मतेनाह—अथवेति ॥ स्यायमिति । इत्यस्यैव 'छन्दस्यदीधेत्' इत्यर्थो न तु हेत्वन्तरमित्यर्थः ॥ तदाह—गुण इति । क्वचिदिति शेषः ॥ छाया ॥

४ प्रदीपोक्तहेतौ हेतुमाह—अनन्येति । हि यतः । धातुपाठे साधारणतया पाठेऽपि भाष्याद्युक्तेस्तत्त्वम् । यथोत्तरं मुनीनां प्रामाण्यम् ॥ छाया ॥ 'अनन्यत्रभावो' इति प. पाठः ॥

५ प्रदीपे–अपिना वेदसमुच्चयः । अत्र 'तथापि' इत्यग्रे 'पाठक्रमाद्' इति न्यायेन 'दृष्टस्यैव' इत्यादि 'विधानमिति' इत्यग्रे 'आदीध्यनम्' इत्यादि 'नास्ति' इत्यन्तग्रन्थो बोध्यः ॥ तदेतद्ध्वनयन्नाह—भाषायां त्विति ॥ लक्षणैकचक्षुष्कमतेनाह—व्याकरणेति । लक्ष्यैकचक्षुष्कमतेनाह—शिष्टेति ॥ आदिना तदीयानुमानादिपरिग्रहः ॥ छाया ॥

६ एवं च–उक्तभाष्यस्य तथार्थकत्वे च ॥ सूत्रमिति । सूत्रैकदेश इत्यर्थः ॥ छाया ॥

७ दाहरणमिति । प्रकृतनिषेधे सत्यपि गुणो दृश्यते इत्यस्येति शेषः । एवमग्रेऽपि ॥ एवमिममपीति । प्रकृतमपीत्यर्थः । ततश्च नायमस्याव्याप्तिविषय इति भावः ॥ छाया ॥

८ उदाहरणदाता समाधत्ते—नैष इति ॥

९ तुल्यजातीयमिति । गुणस्य जुस्निमित्तकत्वाच्चन्निमित्तकमेव निषेधमित्यर्थः ॥ छाया ॥

१० नन्वेवं जुसि गुणोऽपवादत्वाद्बाधको मा भूदस्य निषेधस्य, परत्वात्तु बाधकः किं न स्यादत आह—ततश्चेति ॥ तुल्यजातीयबाधकत्वे चेत्यर्थः ॥ क्ङितीति प्रतिषेधस्यायं गुणो बाधकोऽस्तु, जुसि गुणविषये एतद्विषये स्वयमेवान्तरङ्गत्वाद्गुणबाधकः । तथा च तदप्राप्तौ तद्विषये आरभ्यमाणः सोऽप्यत्र न स्यादिति भावः ॥ छाया ॥

११ निषेध इति । निषेधप्रसङ्ग इत्यर्थः ॥ निषेध्येति । अन्तरङ्गस्य निषेध्यस्याभावादित्यर्थः ॥ छाया ॥

१२ ननु तुल्यजातीयस्य नियामकता न सार्वत्रिकी । अतः पक्षान्तरमाह—अथवेति ॥ नाप्राप्त इति । आद्यो नञा द्वितीयो नशब्देन नैकधेत्यादाविव समासः । यत्कर्तृकावश्यंप्राप्ताविति तदर्थः । द्वौ नञाविति न्यायात् ॥ छाया ॥

( प्रदीपः ) **येन नाप्राप्त इति ।** कार्यविशेषचिन्तापेक्षायामयं न्यायः, न तु कार्यसामान्यं बाध्यमित्यस्यापेक्षायां न्यायावतारः ॥

( उद्योतः ) सर्वत्रैतन्न्यायानाश्रयणे हेतुमाह—**कार्यविशेषेति ।** यच्छब्देन तत्तद्रूपेण कार्याणां परामर्शादिति भावः ॥ केचित्तु[1]–सामान्यचिन्ताविषयेऽप्येतं न्यायं योजयन्ति । तदा **येने-**त्यस्य स्वेतरेणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**यदि[2] तर्ह्ययं योगो नारभ्यते, कथं–दीध्यदिति ?**

( प्रदीपः ) **कथं दीध्यदिति ।** लेट्, तिप्[3], **'इतश्च लोपः परस्मैपदेषु'** इतीकारलोपः । **'लेटोऽडाटौ'** इत्यडागमः ॥

( १३१ सिद्धान्तसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ दीध्यदिति[4] च श्यन्व्यत्ययेन ॥ * ॥**

( भाष्यम् )

**दीध्यदिति श्यन् एष व्यत्ययेन भविष्यति ॥**

( प्रदीपः ) **श्यन्व्यत्ययेनेति ।** श्यनो ङित्त्वाद्गुणाभावः । **'यीवर्णयोर्दीधीवेव्योः'** इतीकारलोपः ॥ क्वचित्तु **'शो व्यत्ययेन'**[6] इति पाठः । तत्र शस्य ङित्त्वाद्गुणाभावः । **'एरनेकाचः–'** इति यणादेशः ॥

( उद्योतः ) [ केचित्तु[7] शो व्यत्ययेति पाठः ॥ ]

( एकदेशिप्रत्याख्यानभाष्यम् )

**इटश्चापि[8] ग्रहणं शक्यमकर्तुम् ॥**

( आक्षेपभाष्यम् )

**कथम्[9]—अकणिषम्, अरणिषम्, कणिता श्वः, रणिता श्व इति ?**

( उद्योतः ) भाष्ये–**अकणिषमिति ।** सिजन्तस्याङ्गस्य मिपोऽमि लघूपधगुणः प्राप्नोति ॥ श्वःप्रयोगो लुडर्थः । तत्र हि तिपो डाऽऽदेशे टिलोपे च तास्प्रत्ययान्तमङ्गं भवति । तृचि तु अनङ्गत्वान्न गुणप्राप्तिरिति भावः ॥

( समाधानभाष्यम् )

**"आर्धधातुकस्येड्वलादेः"[10] इत्यत्र इडिति वर्तमाने पुनरिड्ग्रहणस्य प्रयोजनम्—इडेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ॥**

**किं चान्यत्प्राप्नोति ?**

**गुणः ॥**

( प्रदीपः ) **इडिति वर्तमान इति । 'नेड्वशि कृति'** इत्यतः ॥

( उद्योतः ) भाष्ये–**पुनरिड्ग्रहणस्येति ॥ न[11] च** नेत्यस्य निवृत्त्यर्थं तत्; स्पष्टं चेदं **नेड्वशी**त्यत्र भाष्ये इति **वाच्यम् । क्वचिदेकशोऽप्यनुवर्तत** इति न्यायेन **नेड्वशी**त्यत्रत्यनञो निवृत्तिसिद्धेरिति भावः[12] ॥ वस्तुतस्[13]त्वत्रत्यमिदं भाष्यमेकदेश्युक्तिः । **आर्धधातुकस्ये**ति सूत्रस्थेड्ग्रहणस्य च **नेड्वशी**ति **सूत्रे** भाष्ये प्रत्याख्यानात् । तत्करणेन[14] नियमरूपगुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ **अङ्गस्ये**[15]त्यनुवृत्तावपि अङ्गाधिकारविहितविकारस्यैव व्यावृत्तेः शब्दमर्यादयाऽलाभाच्च । अन्त्ये[16]ऽपि सिद्धत्ववचनस्य ज्ञापकत्वाश्रयणे गौरवमिति बोध्यम् ॥

---

१ 'केचित्तु' इति च. झ. पाठः ॥

२ [ सूत्रारम्भवादी शङ्कते–**यदीति** ] **योग इति ।** युग्ममित्यर्थः ॥ छाया ॥

३ **तिबिति ।** शपो लुगित्यपि बोध्यम् ॥ अनेन **गुणनिषेधे** एरनेकाच इति यणि रूपसिद्धिः । अन्यथा दीधयदिति स्यादिति भावः ॥ छाया ॥

४ यद्यपि सर्वे विधयश्छन्दसि विकल्पन्ते इति गुणाभावे यणि दीध्यदिति सिद्धम् । तथापि यक्षानुरूपबलिन्यायेनाह—**दीध्यदिति चेति ।** दीध्यदित्यत्र चेत्यर्थः ॥ छाया ॥

५ श्यन्निति भिन्नं कर्तृपदम्, चो वाक्यालंकार इत्याह–**दीध्यदिति च श्यन्नेष इति ॥** छाया ॥

६ 'शव्यत्ययेन' इति च. झ. पाठः ॥

७ क. पुस्तकेऽस्य न पाठः ॥

८ एवं सिद्धान्तिना धातुयुग्मग्रहणे प्रत्याख्याते तदङ्गीकृत्याह–महमिकान्यायेनैकदेश्याह—**इटश्चापीति ॥** छाया ॥

९ पूर्वं तत्प्रयोजनानामनुक्तत्वादत्रैव प्रश्नद्वारेण तानि सर्वाण्याह) सिद्धान्ती—**कथमकणिषमिति ॥** छाया ॥

१० एकदेशी समाधत्ते—**आर्धधातुकेति ॥** छाया ॥

११ भाष्यान्तरविरोधमुद्धर्तुं शङ्कते—**न चेति ॥** छाया ॥

१२ **भाव इति ।** तथा च तत्रत्यपूर्वपक्षभाष्यमेकदेश्युक्तिरिति तात्पर्यम् ॥ छाया ॥

१३ सिद्धान्तमाह—**वस्तुत इति । इदम्**–इटश्चापीत्यादि ॥ छाया ॥

१४ ननु विनिगमनाविरहोऽत आह–**तत्करणेनेति ॥ छाया ॥**

१५ एवं सामान्येन तत्र दोषमभिधायाथे (आङ्गं यदिति समाधाने दोषान्तरमाह—**अङ्गस्येति ॥** छाया ॥

१६ द्वितीय आह—**अन्त्येऽपीति । अथवेति** पक्षेऽपीत्यर्थः ॥ **सिद्धत्वेति । सिज्लोप एकादेश** इतीत्यर्थः ॥ छाया ॥

( आक्षेपभाष्यम् )

**[1]यदि नियमः क्रियते, 'पिपठिषतेरप्रत्ययः पिपठीः' [2]दीर्घत्वं न प्राप्नोति ॥**

( प्रदीपः ) **पिपठीरिति** । पिपठिषतेः क्विप्, **'अतो लोपः'** इत्यकारलोपः । षत्वस्यासिद्धत्वात् **'ससजुषो रुः'** इति रुत्वम् । **पूर्वत्रासिद्धे न स्थानिवदि**त्यल्लोपस्य [3]रुत्वे स्थानिवद्भावाभावः ॥

( उद्द्योतः ) क्विबिति । अप्रत्यय इत्यस्याश्रूयमाणः प्रत्यय इत्यर्थः । कृदन्तत्वात्प्रातिपदिकत्वे स्वादयः ॥

( समाधानभाष्यम् )

**नैष दोषः । आङ्गं यत्कार्यं तन्नियम्यते । न चैतदाङ्गम् ॥**

( प्रदीपः ) **आङ्गमिति** । [4]**'अङ्गस्य'** इत्यनुवर्तनादङ्गाधिकारविहितं यद्रूपान्तरमिटस्तदेव निवार्यते—**इडेव यथा स्यादि**ति नियमेनेत्यर्थः । **'र्वोरुपधायाः'** इति च दीर्घत्वं [5]नाङ्गम् । [6]यत्तु **'ग्रहोऽलिटि दीर्घः'** इति दीर्घत्वं, तद्वचनाद्भवति ॥ पिपठिषि ब्राह्मणकुलानीत्यत्र त्वकारलोपस्य स्थानिवद्भावात् झलन्तत्वाभावान्नुमभावः, तेन पिपठींषीति कथं **'सान्तमहतः संयोगस्य'** इति दीर्घत्वमिति न चोदनीयम् । **क्वौ विधिं प्रति न स्थानिवदि**त्यर्थो [7]व्यवस्थापयिष्यते, न तु **क्वौ लुप्तं न स्थानिव**दिति ॥

( उद्द्योतः ) **झलन्तत्वाभावादिति** । [8]स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम् ॥ ननु क्वौ लुप्तस्य स्थानिवत्त्वनि[9]षेधादल्लोपस्य स्थानिवत्त्वं दुर्लभमत आह—**क्वाविति** ॥

( समाधानान्तरभाष्यम् )

**[10]अथवा-असिद्धं दीर्घत्वं तस्यासिद्धत्वान्नियमो न भवति ॥ दीधीवेवीटाम् ॥ ६ ॥**

( प्रदीपः ) **अथवेति** । इडेवेत्यस्मिन्नियमे दीर्घत्वस्या[11]सिद्धत्वान्नास्ति नियमेन व्यावृत्तिः । ततश्च शास्त्रदृष्ट्याऽविकृतरूप एवेद्, प्रयोग एव तु विकृतः । [12]अलावीदित्यत्र तु **सिज्लोप एकादेशे सिद्ध** इत्यसिद्धत्वनिषेधवचनात्सवर्णदीर्घत्वं भवति ॥

( उद्द्योतः ) **अलावीदित्यत्रेति** । [13]**न च** समाप्तेत्यत्र ह्रस्वादङ्गादिति सिज्लोपाय सिद्धत्ववचनं चरितार्थं, सिद्धत्वे हि परत्वात्सिज्लोपे ततो वृद्धिः । अन्यथा पूर्वं वृद्धौ स न स्यादिति **वाच्यम् । लावस्थायामडि**ति पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपाप्राप्त्या तदेकवाक्यत्वेन पक्षान्तरेऽपि सिज्लोपाभावस्यैवौचित्येन समार्थ्येत्येव रूपस्यौचित्यात्सत्यभिधाने ॥ **सि[14]ज्लोप एकादेशे** इति तु सिज्लोपोत्तरप्राप्तसवर्णदीर्घरूपैकादेशविषयमेवेति बोध्यम् । [15]वस्तुतो नियमस्यैकदेश्युक्तित्वाद्विफलोऽयं विचार इति तत्त्वम् ॥ ६ ॥

---

( ६ संयोगसंज्ञासूत्रम् ॥ १ । १ । ४ आ. ४ ॥ )

# हलोऽनन्तराः संयोगः ॥ १ । १ । ७ ॥

( अनन्तरपदार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**[16]अनन्तरा इति कथमिदं विज्ञायते—अविद्यमानमन्तरमेषामिति, आहोस्विदविद्यमाना अन्तरा एषामिति ?**

---

१ सिद्धान्ती अक्षिपति—**यदीति** ॥

२ **दीर्घत्वं–र्वोरुपधाया** इत्यनेन ॥ छाया ॥

३ **रुत्वे इति** । पदान्तत्वनिबन्धन इति भावः ॥ छाया ॥

४ अङ्गसंबद्धत्वसत्त्वेन यथाश्रुतभाष्यासंगतेराह—**अङ्गेति** ॥ **तदेवेति** । सजातीयत्वादिति भावः ॥ छाया ॥

५ **नाङ्गं**–नाङ्गाधिकारविहितम् ॥ छाया ॥

६ नन्वेवमप्यग्रहीदित्यत्र **ग्रहोऽलिटी**त्याङ्गो दीर्घो न स्यादेवात आह—**यत्त्विति** ॥ **तेनेति** । नुमभावेनेत्यर्थः ॥ छाया ॥

७ **व्यवस्थेति । न पदान्ते**त्यत्र सार्वत्रिकत्वेनेति शेषः ॥ ततश्च क्विनिमित्तककार्ये निषेधः, नुम् तु न तथेति सिद्धं स्थानिवत्त्वमिति भावः ॥ छाया ॥

८ ननु तथापि स्थानिवत्त्वेनाजन्तलक्षणो नुम् स्यादेवात आह—**स्वविधाविति** ॥ छाया ॥

९ **निषेधादिति** । **क्विलुगुपधे**ति वचनेनेत्यर्थः ॥ एवं चोक्तदोषस्तदवस्थ इति तात्पर्यम् ॥ छाया ॥

१० तदेवं नियमेन निवृत्तिप्राप्तिमभ्युपेत्योक्तं, वस्तुतः सैव नेत्याह—**अथवेति** ॥ छाया ॥

११ **दीर्घत्वस्येति** । त्रिपादीस्थस्य र्वोरित्यस्येत्यर्थः ॥ छाया ॥

१२ नन्वेवमप्यलावीदित्यत्र सवर्णदीर्घव्यावृत्तिः स्यादेवात आह—**अलावीदिति** ॥ पूर्वमतेऽनाङ्गत्वाददोषेऽप्यत्र दोषाभावायाह—**सिजिति वचनात्** । वचनसामर्थ्यात् ॥ छाया ॥

१३ वचनसामर्थ्यं विघटयति—**न चेति । अन्यथा**–तस्यासिद्धत्वे ॥ **स नेति** । ह्रस्वात्परत्वाभावादिति भावः ॥ छाया ॥

१४ नन्वेवं तस्य का गतिरत आह—**सिजिति ॥ विषयमिति** । प्रत्यासत्त्या सिज्लोपाभावाभावितया तन्निमित्तकैकादेशे इति वार्तिकार्थाङ्गीकारात् । न चैकादेशपदसामर्थ्यात्तथा, सवर्णदीर्घपदापेक्षया मात्रातो लघुत्वादिति भावः ॥ छाया ॥

१५ अयं सर्वोऽप्यभ्युपेत्यवादो न तत्त्वमुक्तयुक्तेरित्याह—**वस्तुत इति** ॥ छाया ॥

१६ वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादाह पूर्वपक्षी—**अनन्तरा इति । इदं** सौत्र**मनन्तरा** इति पदं **कथं** किमर्थकमित्यर्थः ॥ छाया ॥

**( प्रदीपः ) हलोऽनन्त० ॥ ७ ॥ कथमिति** । किमन्तरशब्दस्य नञा बहुव्रीहिः, अथवा–अन्तराशब्दस्येति **प्रश्नः । अन्तरं**–विवरं, वर्णशून्यकालः ॥ **अविद्यमाना इति** । मध्ये येषामन्ये वर्णा अविद्यमाना इत्याधेयस्य निषेधः, न त्वाधारस्य ॥

**( उद्योतः )** हलोऽनन्तराः ॥ ७ ॥ **अन्तरा**शब्दो मध्ये इत्यर्थे ॥ **न त्वाधारस्येति** । कालमात्रस्येत्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**किं चातः ?**

( प्रत्याक्षेपसमाधानभाष्यम् )

**यदि विज्ञायते–अविद्यमानमन्तरमेषामिति, अवग्रहे संयोगसंज्ञा न प्राप्नोति–'अप्स्विति–अप्ऽसु'** ( ऋ०सं०पद० १।२३।१९ ) **इति । विद्यते ह्यत्रान्तरम् ॥**

**अथ विज्ञायते–अविद्यमाना अन्तरा एषामिति, न दोषो भवति ॥**

**( प्रदीपः ) अवग्रह इति** । अर्धमात्राकालोऽवग्रह इष्यते । अर्धमात्राकालं स्थित्वा वर्णान्तरं समुच्चार्यते तत्र **'गुरोरनृतः'** इति प्लुतो न भवेत् ॥

**( उद्योतः ) अर्धेति** । वर्णाद्वर्णोच्चारणेऽर्धमात्राकालस्य नियतत्वात्तदधिकोऽर्धमात्राकाल इत्यर्थः । अत एव **मात्राकालोऽवग्रह** इति प्रातिशाख्यान्तरैरविरोधः ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**यथा न दोषस्तथाऽस्तु ॥**

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अथवा पुनरस्तु–अविद्यमानमन्तरमेषामिति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्–अवग्रहे संयोगसंज्ञा न प्राप्नोति–अप्स्विति अप्ऽसु–इति । विद्यते ह्यत्रान्तरम् ।**

( आक्षेपबाधकभाष्यम् )

**नैव दोषो न प्रयोजनम् ॥**

**( प्रदीपः ) नैव दोष इति** । दोषनिवृत्तये संज्ञा क्रियते, प्रयोजनाभिनिर्वृत्तये वा । इह चोभयाभावः, अधिकरणवृत्तेर्दूराद्धूतसंबन्धाभावात् । **'विचार्यमाणानां'** इत्यादौ तु **'वाक्यस्य टेः'** इत्यनुवर्तते, न तु **'गुरोरनृतः'** इति अप्सव्यशब्दे दोष इति चेत्, नैवंविधे विषये प्रकृत्यवयवस्यावग्रहं पदकाराः कुर्वन्ति । अप्सुयोनिरित्यादावपि 'समासपदानामन्तोऽवगृह्यते' इति सुशब्दात्पूर्वस्य नास्त्यवग्रहः ॥

**( उद्योतः ) नैव दोष** इत्यादेः–संज्ञाऽभावे न दोषः, संज्ञायां च न प्रयोजनमित्यर्थः–इत्याह–**दोषनिवृत्तये इत्यादि ॥ अप्सव्यशब्दे इति** । अप्सुशब्दादिगादियति **अपो योनियन्म**-

---

१ नात्रैकवचनबहुवचनमात्रकृतसंदेहोऽभिमतः, अर्थाभेदे तन्मात्रकृतभेदस्याकिंचित्करत्वात् । वृत्तौ संख्यासामान्याप्रतीतेश्च । एतेन नपुंसकेन क्रियारूपवाचिना नञो बहुव्रीहिरुत वर्णरूपव्यवधायकवाचिना पुंलिङ्गेनेति प्रश्न इति रत्नप्रकाशोक्तमपास्तम् । अर्थाभेदे लिङ्गकृतभेदस्याकिंचित्करत्वात् । तस्य लौकिकत्वात्समासोत्तरमविशेषात् । कोशे क्रियावर्णरूपार्थकत्वानुक्तेश्च । किं चाद्ये क्रिययैव व्यवधानं तत्कर्त्रा वा । नाद्यः, तया व्यवधानाभावात् सत्वेनाप्रतीतेः । द्वितीयोऽपि न, तयैव व्यवधानसंभवात् पक्षान्तरोक्तेरसांगत्यापत्तेश्च । एतेन द्वितीयोऽपि निरस्त इति दिक् । तदेतद्ध्वनयन्नाह–**किमन्तरेति** । तथाच किमाधारकालनिषेध उताधेयवर्णनिषेध इति तात्पर्यम् ॥ छाया ॥

२ अन्तरशब्दस्यानेकार्थत्वेऽप्यन्यार्थासंभवादाह–**विवरमिति** । तथा च च्छिद्रवाच्ययमिति भावः । विवरं–न मूर्तद्रव्याभावो विवक्षितः, हल्मध्ये मूर्तद्रव्याप्रसङ्गादित्याह–**वर्णेति** ॥ छाया ॥

३ अन्तराशब्दोऽत्राव्ययमित्याह–**अन्तरेति** । तथा चाधिकरणशक्तिप्रधानोऽयमिति भावः ॥ छाया ॥

४ नन्वाधेयनिषेधे आधारनिषेधः संपन्न एव, तं विना तदभावात् । एवं च **न त्वाधारस्ये**त्ययुक्तमत आह–**कालमात्रेति** । मात्रपदेन वर्णव्यावृत्तिः । तथा चाधारपदं तन्मात्रपरम्, आधेयपदं तन्मात्रपरमिति भावः ॥

५ **न दोष इति** । आधेयवर्णस्यैव निषेधात्कालरूपाधारस्यानिषेधात्संयोगादिसंज्ञासिद्धिरित्यर्थः ॥ छाया ॥

६ **तत्र**–अवग्रहे संयोगसंज्ञाया अभावेन गुरुसंज्ञाया अभावे ॥ छाया ॥

७ 'ह्यत्रान्तरमिति' इति फ. पुस्तकपाठः । मुद्रितपुस्तकेष्वपीतिशब्दघटितः पाठोऽस्ति । वस्तुतः 'विद्यते ह्यत्रान्तरं' इत्यंशो **न** प्रदर्श्यविषयः, 'प्ऽसु इति' इत्यन्तोंऽशः प्रदर्शनीयस्तत्रेतिशब्दोऽपि वर्तते । अविद्यमानमन्तरमेषामिति विग्रहे-अवग्रहे दोषः स्यादित्येव प्रदर्शनीयम् । विद्यते ह्यत्रान्तरमित्यस्य वस्तुस्थितिदर्शकत्वम् । अत्रेतिशब्दो न स्वारसिक इति प्रतिभाति ।

८ **इह च**–अप्सु–इत्यत्र च । **वृत्तेरिति** । अप्स्वित्यस्येत्यर्थः ॥ छाया ॥

९ **वाक्यस्य टेरिति** । तथा चागुरुत्वेऽपि वाक्यस्य टेः प्लुतं इत्यत्रावाक्यत्वात्तदप्रवृत्तिरेवेति तदपि न प्रयोजनमिति भावः ॥ छाया ॥

१० **पूर्वस्येति** । अप्शब्दस्येत्यर्थः ॥ **गुरोरनृत** इत्यत्र **दूराद्धूते** चेत्यनुवृत्तावपि यथा दूराद्धूतत्वमविवक्षितं तथा संबोधनविभक्तिविषयसंबोधनमपि नोपलक्ष्यत्वेन विवक्षितं किं तु बोधनमात्रमित्यप्सव्यशब्दादौ तत्संभव इति भावः ॥ छाया ॥

११ शङ्काशयमाह–**अप्स्विति** । भवार्थे इति शेषः ॥ छाया ॥

तुग्विलत्लुक् ॥ प्रकृत्यवयवस्य=तद्धितप्रकृत्यवयवस्य। अत्र च वैदिकसंप्रदाय एव शरणम् ॥ अन्त इति। समासे समस्यमानपदान्त एवावग्रहः। अयमपि वैदिकसंप्रदाय एव ॥

(इत्यनन्तरपदार्थनिरूपणम्)

(अथ प्रत्येकं संयोगसंज्ञानिराकरणाधिकरणम्)

(१३२ आक्षेपवार्तिकम् ॥ १ ॥)

## ॥ * ॥ संयोगसंज्ञायां सहवचनं यथाऽन्यत्र ॥ * ॥

(भाष्यम्)

**संयोगसंज्ञायां सहग्रहणं कर्तव्यम्। "हलोऽनन्तराः संयोगः सह" इति वक्तव्यम्।**

**किं प्रयोजनम्?**

**सहभूतानां संयोगसंज्ञा यथा स्यादेकैकस्य मा भूदिति ॥ 'यथाऽन्यत्र'। तद्यथा—अन्यत्रापि यत्रेच्छति सहभूतानां कार्यं, करोति तत्र सहग्रहणम्। तद्यथा—"सह सुपा" "उभे अभ्यस्तं सह" इति॥**

(प्रदीपः) **संयोगसंज्ञायामिति**। वृद्धिसंज्ञावत् आनन्तर्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोति ॥

(उद्द्योतः) नन्वनन्तरग्रहणादेकैकस्य संज्ञा दुर्लभेत्यत आह—आनन्तर्येति। एवं च तदुपलक्षणमिति भावः ॥

(दूषणप्रश्नभाष्यम्)

**किं च स्यात् यद्येकैकस्य हलः संयोगसंज्ञा स्यात्?**

(प्रदीपः) **किं च स्यादिति**। द्वयोरानन्तर्ये एकैकस्यापि संयोगसंज्ञायां गुरुसंज्ञाप्रतिबन्धकार्यसिद्धिरिति **प्रश्नः** ॥

(उद्द्योतः) संज्ञाप्रतिबन्धेति पाठे कर्मणि घञ् बोध्यः। संज्ञाप्रतिबद्धेति पाठः सुगम एव ॥

(दोषप्रदर्शनभाष्यम्)

**इह—निर्यायात्, निर्वायात्—"वाऽन्यस्य संयोगादेः" इत्येत्वं प्रसज्येत।**

**इह—संहृषीष्टेति "ऋतश्च संयोगादेः" इतीट् प्रसज्येत।**

**इह च—संह्रियेत इति "गुणोऽर्तिसंयोगाद्योः" इति गुणः प्रसज्येत ॥**

**इह च—दृषत्करोति, समित्करोतीति संयोगान्तस्य लोपः प्रसज्येत ॥**

---

१ **त्यलुगिति**। ओर्गुणो **वान्तो यि** प्रत्ययवादेशश्चेत्यपि बोध्यम्। संभवत्यस्य दूराद्भूतसंबन्ध इत्यसत्यां गुरुसंज्ञायां प्लुतो न स्यादिति भावः ॥ छाया ॥

२ **तद्धितेति**। तद्धितप्रत्ययप्रकृतिभूताप्सुशब्दावयवभूताप्शब्दस्येत्यर्थः ॥ छाया ॥

३ अवान्तरपदत्वे सत्यवग्रह इत्यस्य व्यभिचारादाह—**अन्नेति** ॥ छाया ॥ युक्तं चैतत्—**'गोभ्यो गातुं'** (ऋ. ८।४५।३०) **'गोभिर्मदाय'** (ऋ. ९।४३।१) **'चित्र इद्राजा राजका इदन्यके'** (ऋ. ८।२१।१८) इत्यादौ गोभ्यो गोभिः राजका इत्यादीनां सत्यपि पदत्वेऽवग्रहाकरणात्। **'ईयिवांसमतिस्रिधः'** (ऋ. ३।१०।४) इत्यादौ ईयिवांसमिति विनापि पदसंज्ञां क्वसोः पूर्वमिडागमान्तेऽवग्रहकरणाच्च। इति श. कौ. ॥

४ **च्छतीति**। पाणिन्यादिरिति शेषः ॥ वर्तमानसामीप्ये लट् ॥ एवं **करोतीत्यत्रापि** बोध्यम्। अत्र यद्यपि वार्तिककृतः **'सह सुपा'** इत्येक एव दृष्टान्तत्वेनाभिमतः, इदानीं तत्र तस्य सिद्धत्वात्, तथापि **'उभे अभ्यस्तम्'** इत्यत्र करिष्यमाणसहग्रहणकत्वेऽप्यवश्यकार्यत्वेन बुद्ध्यारूढत्वात्तदपि दृष्टान्ततया भगवतोक्तम्। एककर्तृकत्वेऽपि स्थलभेदान्न तदनुपपत्तिः ॥ वस्तुतस्तु वर्तमानसामीप्ये लट्। आद्ये भूतप्रतिपत्तिरन्त्ये भावित्वस्येति न काऽप्यनुपपत्तिरिति बोध्यम्॥छाया॥

५ सहग्रहणेन सूत्रं पूरणीयम्। अन्यथा दोषापत्तिरित्याह—**वृद्धीति** ॥ छाया ॥

६ **एवं चेति**। आनन्तर्येण व्यवस्थितानां निश्चितत्वेन विद्यमानानां न तु तद्विशिष्टानामित्यर्थकानन्तर्येत्याद्युक्तौ चेत्यर्थः ॥ **तत्—आनन्तर्यम्** ॥ छाया ॥

७ 'संज्ञाप्रतिबद्धका' इति च. झ. पाठः ॥

८ **कार्येति**। शिक्षेत्यादौ **गुरोश्च हल** इत्यप्रत्ययसिद्धिरित्यर्थः ॥ तथा च किमापद्येतान्यदनिष्टमिति भाष्यार्थ इति भावः ॥ छाया ॥

९ एषु दोषेषु प्रथमान्तिमयोरितिशब्दो न दृश्यते, अन्येषु सर्वेष्वपि दोषेष्वितिशब्दप्रयोगः। तत्र प्रथमे वाऽन्यस्येत्यस्य वैकल्पिकत्वेन निर्वायादित्यपि रूपं भवति, अतस्तत्र प्रकाशार्थकेतिशब्दस्य न प्रयोगः। अत एव निर्वायादित्यत्रैत्वम्प्रसज्येतेत्यर्थो न, किन्तु निर्वायादित्यस्मिन्विषये एत्वं प्रसज्येतेत्येवार्थः। यत्रेति शब्दप्रयोगो यथा—'संहृषीष्टेति' तत्र संहृषीष्टेत्यत्रेट्प्रसज्येतेत्येवार्थः। एवञ्च 'संहृषीष्टेति' इत्यादावितिशब्दस्य पदार्थप्रकाशनमर्थः। निर्यातो निर्वात इत्यत्रापि 'निर्वाणोऽवाते' इत्यनेन सिद्धत्वात्तत्र प्रकाशनार्थस्येतिशब्दस्य न प्रयोगः। एवञ्च प्रत्युदाहरणोत्तरं यत्रेतिशब्दस्तत्प्रत्युदाहरणं न सिध्यति, यत्रेतिशब्दो नास्ति तत् सिध्येदनिष्टञ्चापद्येतेति भाष्यशैलीसंप्रदायः ॥

१० **संहृषीष्टेति**। संपूर्वाद्धरतेराशीर्लिङि तङि रूपम्। **'लिङ्सिचा—'** इति कित्त्वाद्गुणो न ॥ **इट्प्रेति**। अझलादित्वेनाकित्त्वाद्गुणे संहरिषीष्टेति स्यादिति भावः ॥ छाया ॥

११ **संह्रियत इति**। अत्र सामान्यशिष्टरिङः **संयोगादित्वेन** विशेषविहितो गुणो बाधकः स्यादिति संह्रर्यत इति स्यादिति भावः ॥ छाया ॥

१२ **दृषत्केति**। कसंनिधौ दस्य संयोगत्वात्। **संयोगान्तस्येति** बहुव्रीहिः। पदं चान्यपदार्थः। तथाच **'अलोऽन्त्यस्य'** इति अन्त्यदस्य लोपः स्यादिति भावः ॥ छाया ॥

इह च—शक्ता, वस्तेति "स्कोः संयोगाद्योः–" इति लोपः प्रसज्येत ॥

इह च—निर्यातो निर्वातः–"संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं प्रसज्येत ॥

( प्रदीपः ) **निर्यायादिति** । सति रेफे यकारः संयोग इति एत्वप्राप्तिः ॥ ननु समुदायस्यापि संज्ञित्वे **'अचो रहाभ्यां द्वे'** इति यकारस्य द्विर्वचने कृते कस्मादेत्वं न भवति । यथा-ग्लेयादिति । एत्वे कर्तव्ये **'पूर्वत्रासिद्धं'** इति द्विर्वचनस्यासिद्धत्वान्नायं दोषः ॥

**शक्तेति** । तकारे झलि परतः ककारः संयोगो भवति, आदिश्च–इति लोपप्रसङ्गः ॥

( उद्द्योतः ) **कस्मादिति** । बहूनां संनिधानेऽविशेषेण द्वयोर्बहूनां च संज्ञायाः सिद्धान्तयिष्यमाणत्वादिति भावः ॥ परिहरति—**एत्वे इति । पूर्वत्रासिद्धीयमद्विर्वचन** इति तु द्विर्वचने कार्येऽन्यस्यासिद्धत्वं नेत्यर्थकम्, न तु द्विर्वचनस्य तदभावप्रतिपादकमिति भावः ।

**संयोगो भवत्यादिश्चेति** । प्रत्येकसंज्ञापक्षे स्कोः संयोगावयवत्वासंभवेन षष्ठीसमासासंभवाल्लाघवाच्च कर्मधारय एवेति भावः ॥ आदिशब्दश्च पूर्वभूतसमीपवाची । आदित्वं च प्रत्यासत्त्या संयोगत्वाक्रान्तवर्णान्तरापेक्षयैवेति पदान्तांशे संयोगादिग्रहणचारितार्थ्यं बोध्यम् । अन्यथा ह्यर्कयतेरप्रत्ययेऽर्क्–इत्यादावन्तकस्यापि लोपः स्यात् ॥

( दोषपरिहारभाष्यम् )

**नैष दोषः ।**

**यत्तावदुच्यते—इह तावन्निर्यायात्-निर्वायात्-"वाऽन्यस्य संयोगादेः" इत्येत्वं प्रसज्येतेति ॥**

नैवं विज्ञायते–संयोग आदिर्यस्य सोऽयं संयोगादिः, संयोगादेरिति ।

कथं तर्हि ?

संयोगावादी यस्य सोऽयं संयोगादिः, संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम् ॥

( प्रदीपः ) **संयोगाविति** । कथं वृत्तावुपसर्जनार्थस्य द्वित्वावगतिरिति चेत् । आदिग्रहणसामर्थ्यात् । अन्यथा 'संयोगात्' इति वक्तव्यं स्यात्, संयोगात्परो य आकारस्तदन्तस्याङ्गस्यैत्वमित्यर्थलाभात् ॥

( उद्द्योतः ) **कथं वृत्ताविति** । अयं पूर्वपक्षोऽयुक्तः, संयोगस्य द्वित्ववत्त्वेन प्रतीतेरेव भावात् । संयोगत्वेनैवानेकसंयोगप्रतीतेः । न हि वृत्तावनेकबोध उपसर्जनान्नेति भाष्यसंमतः । संख्याविशेषानवगमस्यैव भाष्यकृतोक्तत्वात् । न त्वनेकानवगम इति तेनोक्तमिति विभाव्यताम् ॥ **संयोगात्पर इति । न** चाङ्गाद्यावयवसंयोगग्रहणायादिग्रहणम् । तत्र यद्यपि दरिद्रातौ न फलम् । आर्धधातुकविवक्षायां तस्यालोपविधानात्, तथापि खट्वादिभ्य आचारकिबन्तेभ्यो लिङि 'खट्वायात्' इत्यादौ एत्ववारणं फलमिति **वाच्यम् । स्यसिच्**सूत्रादुपदेशपदानुवृत्त्या घुमास्थाद्यन्यस्यौपदेशिकस्यैव ग्रहणेन नामधातुष्वेत्वाप्रवृत्तेरिति भावः ॥ खट्वादिभ्य **आतो धातो**रितिसूत्रस्थभाष्यप्रामाण्येनाचारकिपोऽभावाच्च । सिद्धान्ते तु निर्यायादित्यादिवारणायाङ्गावयवसंयोगग्रहणाय तदिति बोध्यम् ।

( द्वितीयदूषणोद्धारभाष्यम् )

**यदप्युच्यते—इह हषत्करोति-समित्करोति-इति संयोगान्तस्य लोपः प्रसज्येतेति ।**

१ **पूर्वत्रेति** । अत्र द्वित्ववदेत्वस्याप्युपसर्गनिमित्तकत्वेन समत्वात्त्वाभावेन न पक्षद्वयेऽपि **'असिद्धं बहिरङ्गमन्तरङ्गे'** इत्यस्याः प्रवृत्तिरिति भावः ॥ छाया ॥

२ ननु शक्तेत्यादौ तृचस्तकारे झलि परे यौ कसौ न च तयोराद्यावन्यौ ताविति कथं लोपप्राप्तिः । न चाद्यन्तवद्भावेनादित्वम् । अत्र पक्षे हि नादिशब्दोऽवयववाची, वर्णस्यान्यवर्णं प्रति तत्त्वासंभवात् । किं तु व्यवस्थावाची । तथा च झल्परो यः संयोगस्ततः पूर्वयोस्तयोर्लोप इत्यर्थ इत्यत आह—**प्रत्येकेति** ॥ छाया ॥

३ **लोपः स्यादिति । रात्सस्येति** नियमादत्र संयोगान्तलोपाप्राप्तिः । स चोर्गित्यादौ सावकाशः । एवं चादिग्रहणाभावेऽपि **रात्सस्ये**ति नियमसामर्थ्यादत्र लोपो नेति निरस्तं वेदितव्यम् ॥ छाया॥

४ [ तटस्थो दूषणानि प्रत्येकसंज्ञापक्षेऽपि परिहरति—] **नैष दोष इति** । जातावेकवचनम् ॥ अन्यथासिद्धेरिति शेषः ॥ तमेवानुवादपूर्वं प्रत्येकमाह—**यत्तावदिति** ॥ छाया ॥

५ **नैवमिति** । तत्रेत्यादिः । एकवचनान्तेन समासादेकसंयोग आदिर्यस्येत्येवं न विज्ञायत इत्यर्थः ॥ **संयोगावादी यस्येति** फलितार्थकथनमिदम् । विग्रहस्त्वेकवचनान्तेनैव । परंतु आदिग्रहणसामर्थ्यात्संयोगत्वेनानेकसंयोगस्यैवात्र ग्रहणं नैकस्येति तात्पर्यम् ॥ अत एव ग्लायात् ग्लेयादित्यादौ नाव्याप्तिः ॥ यद्वा—आदिग्रहणसामर्थ्याद्विवचनान्तेन समासे द्वित्ववत्त्वेन संयोगप्रतीतिरत्रेष्टा, बहूनां समवधानेऽपि द्वयोरेव संयोगसंज्ञाङ्गीकारान्न तत्राव्याप्तिः ॥ छाया ॥

६ **पूर्वपक्षोऽयुक्त इति** । सिद्धान्तस्तु युक्त एवेति भावः ॥ तत्राद्यपक्षाभिप्रायेणाह—**संयोगेति ॥ वानेकेति** । एकसंयोगवत् ॥ तत्र बीजमाह—**नहीति ॥ विशेषेति** । तथाचैकत्वस्याप्यनवगम इति भावः ॥ छाया ॥

७ 'प्रतीतेरेवाभावात्' इति च. झ. पाठः ॥

८ सिद्धान्तं द्रढयितुं शङ्कते—**न चाङ्गेति** । तस्य प्रथमावयवेत्यर्थः ॥ छाया ॥

९ **नामधात्विति** । तेषामुपदेशाभावादिति भावः ॥ छाया ॥

१० एवं विवरणाद्युक्तयुक्तिमुक्त्वा स्वयुक्तिं भेदेनाह—**खट्वेति ॥ भाष्येति । 'आतोनापः'** इति वार्तिकप्रत्याख्यानपरभाष्येत्यर्थः ॥ छाया ॥

११ ननु सिद्धान्तेऽप्यादिग्रहणानर्थक्यमत आह—**सिद्धान्ते त्विति** । समूहे संयोगसंज्ञायां त्वित्यर्थः ॥ **दित्यादीति** । दित्यादावेत्ववारणायेत्यर्थः ॥ छाया ॥

**नैवं विज्ञायते—संयोगोऽन्तो यस्य तदिदं संयोगान्तं, संयोगान्तस्येति ।**

**कथं तर्हि ?**

**संयोगावन्तावस्य तदिदं संयोगान्तं, संयोगान्तस्येति ॥**

( प्रदीपः ) **संयोगावन्ताविति** । अत्रापि संयोगस्य लोप इत्येव, संयोगेन पदस्य विशेषणात्तदन्तविधौ सिद्धेऽन्तग्रहणमाश्रितसंख्याभेदः संयोगो यथा गृह्येतेत्येवमर्थं विज्ञायते ॥

( तृतीयदूषणोद्धारभाष्यम् )

**यदप्युच्यते—[१]इह च शक्ता-वस्तेति "स्कोः संयोगाद्योरन्ते च" इति लोपः प्रसज्येतेति ।**

**नैवं विज्ञायते—संयोगावादी-संयोगादी, संयोगाद्योरिति ।**

**कथं तर्हि ?**

**संयोगयोरादी-संयोगादी, संयोगाद्योरिति ॥**

( प्रदीपः ) **संयोगयोरिति** । षष्ठीसमास आश्रीयत इत्यर्थः । 'संयोगयोः' इति तु द्विवचननिर्देशः स्कोर्द्वित्वात्तत्समीपयोर[२]पि हलोर्द्वित्वात् । तेना[३]यमर्थः—झलि परतो यः संयोगः पदान्ते च यः संयोगः, तस्यादिः-समीपो यः ककारः सकारश्च तयोर्लोप इति । न चैवं सति 'शक्ता-वस्ता' इत्यत्र लोपः प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—**आदी इति** । यद्यपि मुख्यादित्वमुभयोर्व्याहतं, तथाप्येक आदिशब्दो गौण इति भावः ॥ पूर्ववद्द्विवचनान्तसमासेन दोषपरिहार इति न भाष्यार्थः, उभयत्रापि द्विवचनोपादानात् । अत आह—**ष[४]ष्ठीति** । एवं च झलं[५]शेऽपि संयोगादिविशेषणमर्थवद्भवतीति भावः ॥ आदिशब्दश्च नावयववाची, असंभवादित्याह—**समीप इति** । झला[६]दिविशेष्यस्य संयोगस्योपसर्जनत्वेऽपि सौत्रत्वाद्वृत्तिः । न च शक्तेत्यत्र व्यपदेशिवद्भावेन स्वस्यापि स्वसमीपत्वेन दोषस्तदवस्थः, आदिग्रहणसामर्थ्याद् व्यपदेशिवद्भावाप्रवृत्तेः ॥

( चतुर्थदूषणोद्धारभाष्यम् )

**यदप्युच्यते—इह च निर्यातो निर्वा[७]त इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं प्रसज्येतेति ।**

**नैवं विज्ञायते-संयोग आदिर्यस्यासौ संयोगादिः, संयोगादेरिति ।**

**कथं तर्हि ?**

**संयोगावादी यस्य सोऽयं संयोगादिः, संयोगादेरिति ।**

( प्रदीपः ) **'संयोगादेरातः'** इत्यत्रापि 'संयोगादातः' इत्येव संयोगात्परो य आकारस्तदन्ताद्धातोर्नत्वमिति सिद्धे आदिग्रहणं द्वित्वसंख्याश्रयणार्थम् ॥

( आक्षेपभाष्यम् )

**कथं कृत्वा एकैकस्य संयोगसंज्ञा प्राप्नोति ?**

( प्रदीपः ) **कथं कृत्वेति** । संयोगसंज्ञाया अन्वर्थत्वात्—संयुज्यन्तेऽस्मिन्वर्णा इति समुदायः संयोग इत्यर्थस्याश्रयणात्सहग्रहणं न कर्तव्यमित्यर्थः ॥

( उद्द्योतः ) [८]वस्तुतस्तु प्रत्येकं संज्ञेति पक्षो वाच्यवृत्त्या सूत्रान्न लभ्यत एवेति व्युत्पादयितुं गूढाशयः पृच्छति—भाष्ये—**कथं कृत्वेति** ॥ तमेवालाभं व्याचष्टे—**संयोगेति** । [९]एवंचान्वर्थसंज्ञाविरोधात्प्रत्येकं वाक्यपरिसमाप्तिन्यायो नात्राश्रयितुं शक्यत इति व्यर्थं सहेतीति भावः ॥ किं [१०]चं श्रुतमानन्तर्यं प्रत्येकसंज्ञावादिनोपलक्षणमाश्रयितव्यम् । विशेषणत्वमेवोचितं, तत्त्वे संभवति उपलक्षणत्वस्यान्याय्यत्वात् । किं [११]चायन्तग्रहणसामर्थ्याद्द्विवचनान्तेनैव विग्रह इत्यर्थस्य नियमेनालाभः । बहुवचनान्तेनापि संभवादित्याहुः ॥ [१२]वस्तुतोऽन्वर्थसंज्ञा चिन्त्या, तदाश्रयणे घटपटौ संयुज्येते यत्रेत्यादौ संयोगानुयोगिप्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः ।

---

१ अ. पुस्तके 'इह च' इत्यस्य न पाठः, फ. पुस्तके पाठो दृश्यते । सर्वत्रापि दृश्यमानस्य 'इह च' इत्यस्यात्राभावे कारणं न दृश्यते ॥

२ **तत्समीपयोरिति** । ततश्च नोपसर्जनद्वित्वप्रतिपादनपरं भाष्यमिति भावः ॥ छाया ॥ 'हलोर्द्वित्वात्कृतः' इति च. झ. पाठः ॥

३ ननु झलीत्यस्य संयोगादिविशेषणत्वे षष्ठीसमासस्य कर्मधारयाद्विरोधोऽत आह—**तेनेति** ॥ यद्यप्युपसर्जनं संयोगस्तथापि संयोगादिग्रहणसामर्थ्यात्संयोगो झलीत्यनेन विशेष्यते । एवं पदान्त इत्यनेनापि । अन्यथा तत्राप्यादिग्रहणवैयर्थ्यादिति भावः ॥ छाया ॥

४ **षष्ठीतीति** । न च लाघवात्कर्मधारय इत्युक्तम्, लक्ष्यानुरोधेन दुर्बलस्याप्यङ्गीकारादिति भावः ॥ छाया ॥

५ **झलंशेऽपीति** । अपिना पदान्तांशसमुच्चयः ॥ छाया ॥

६ ननु सविशेषणानामिति निषेधात्कथं वृत्तिरत आह—**झलादीति** । आदिना पदान्तपरिग्रहः ॥ छाया ॥

७ अत्र 'निर्वात इति' इत्येवमितिशब्दपाठः सर्वत्रोपलभ्यते । दोषप्रदर्शनावसरे 'इति'शब्दप्रयोगाभावेऽपि वातेः कर्तरि नत्वप्राप्तेः सत्त्वेनात्र पदार्थप्रकाशनार्थं इतिशब्दो युज्यते ॥

८ एवमभ्युपेत्य प्रत्येकं संयोगसंज्ञां दोषपरिहारेण सहग्रहणस्याफलत्वं प्रतिपादितम् ॥ इदानीं तदसंभवादेव तदफलत्वमित्याह—**वस्तुत इति** ॥ छाया ॥

९ **अथेत्यादि** [ वक्ष्यमाण ] भाष्याशयमाह—**एवं चेति** ॥ छाया ॥

१० अस्य दूष्यत्वेनायुक्तत्वात्साधकान्तरमथेत्यादिवक्ष्यमाणभाष्याभिमतमाह—**किं चेति** ॥ **मेवोचितमिति** । मेव तूचितमित्यर्थः ॥ छाया ॥

११ परिहारसंगतिमप्याह—**किं चाद्यन्तेति** ॥ **बह्विति** । तथा च पाक्षिकवक्ष्यमाणदोषापत्तिरिति भावः ॥ छाया ॥

१२ **आहुरित्यरुचिर्बीजं** प्रकटयति—**वस्तुत इति** ॥ छाया ॥

तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव ज्यायः ॥ अत एव भगवता गर्गदण्डनन्यायमाश्रित्य सहग्रहणं प्रत्याख्यातं, न तु महासंज्ञयेत्यलम् ॥

( समाधानभाष्यम् )

**प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा-इति । तद्यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः ॥**

( समाधानबाधकप्रतिबन्दीसिद्धान्तिभाष्यम् )

**ननु चायमप्यस्ति दृष्टान्तः—समुदाये वाक्यपरिसमाप्तिः-इति । तद्यथा—गर्गाः शतं दण्ड्यन्ताम्-इति । अर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति ॥**

( सहग्रहणप्रत्याख्यानभाष्यम् )

**सत्येतस्मिन्दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते, इहापि सहग्रहणं कर्तव्यम् । अथ तत्रान्तरेण प्रत्येकमितिवचनं प्रत्येकं वृद्धिगुणसंज्ञे भवतः, इहापि नार्थः सहग्रहणेन ॥**

( आक्षेपभाष्यम् )

**अथ यत्र बहूनामानन्तर्यं, किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति, आहोस्विदविशेषेण ?**

**कश्चात्र विशेषः?**

( प्रदीपः ) **आहोस्विदिति** । द्वयोरित्यस्य विशेषस्यानाश्रयणाद्बहूनामेवेत्यर्थः । यथा पपाचेत्यत्र समुदायस्यैकाचो द्विर्वचनं नावयवैकाचः । यदा तु द्वयोरेव हलोरानन्तर्यं तदा द्वयोर्भवत्येव, 'हलः' इति जातौ बहुवचननिर्देशात् ॥

**( उद्द्योतः )** ननु 'अविशेषेण' इत्यस्य द्वयोर्बहूनां चेति नार्थः । अस्याविशेषस्याग्रे वक्ष्यमाणत्वात्, मस्जौ दोषदानासङ्गतेश्चात आह—**द्वयोरित्यस्येति** । अत एव भाष्ये—**समुदाये संयोगादिलोप** इति वक्ष्यति ॥ तत्रै युक्तिमाह—**यथेति** ॥ **हल इति जाताविति** । वस्तुतो हलौ च हलश्चेत्येकशेषः, **स्वरितादिति** सूत्रेऽनुदात्तानामित्यत्र भाष्ये तथैव वक्ष्यमाणत्वात् ॥

( १३३ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ समुदाये संयोगादिलोपो मस्जेः ॥ * ॥

( भाष्यम् )

**समुदाये संयोगादिलोपो मस्जेर्न सिद्ध्यति । मङ्क्ता, मङ्क्तुम् ।**

**इह च निर्ग्लेयात्-निर्ग्लायात्, निर्म्लेयात्-निर्म्लायात्, "वाऽन्यस्य संयोगादेः" इत्येत्वं न प्राप्नोति ॥**

**इह च संस्वरिषीष्टेति "ऋतश्च संयोगादेः" इतीण्न प्राप्नोति ॥**

**इह च संस्वर्यते इति "गुणोऽर्तिसंयोगाद्योः" इति गुणो न प्राप्नोति ॥**

**इह च गोमान्करोति-यवमान्करोतीति "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति ॥**

**इह च निर्ग्लान इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति ॥**

( प्रदीपः ) **मङ्क्तेति** । **'मस्जिनशोर्झलि'** इति नुमि कृते नसजानां संयोगसंज्ञा, न तु सजयोरिति सलोपाप्रसङ्गः ॥ **निर्ग्लेयादिति** । यः संयोगो नासावङ्गादिः, यश्चाङ्गादिर्गकारलकारसमुदायो नासौ संयोगः ॥

**( उद्द्योतः )** भाष्ये **'पूर्वं धातुरुपसर्गेण'** इत्याश्रित्य क्वचित्, क्वचिच्च वाक्यसंस्कारपक्षाश्रयेण दोषोपन्यासः ॥

---

१ उक्तार्थं द्रढयति—**अत एवेति** । किं चानन्तरा इति विशेषणवलात्तदप्रसङ्ग इति तद्व्यर्थम् । इदमेवाथेत्यादिभाष्याभिमतं यदि तदाऽस्तु तथैव । सर्वथा महासंज्ञाऽनुक्तत्वान्नाभिमता । अन्यथा सर्वनामादिसंज्ञास्विवात्रापि तथोच्येतैवेति भावः । यत्तु—बहुवचननिर्देशाद्धल इत्येकशेषावगतसाहित्यस्य विवक्षितत्वात्समुदायस्य संज्ञेति कृष्णः । तन्न, तथा सति द्वयोस्तदभावापत्तेः । बहूनामेकत्र सत्त्व एवापत्तेश्चेति दिक् । तदाह—**अलमिति** ॥ छाया ॥

२ सिद्धान्ती प्रतिदृष्टान्तेनाक्षेप्तृदृष्टान्ते प्रतिबन्द्या दूषिते निर्णेतुकाम आह—**सत्येतस्मिन्निति** । सत्येऽपि तस्मिन् ब्राह्मणभोजनदृष्टान्ते स्पष्टार्थं वृद्धिसंज्ञायां प्रत्येकमित्युच्यते इत्याद्यर्थः । वार्तिककृतेति शेषः ॥ **इहापीति** । तर्हीति शेषः । सत्यपि एतस्मिन् गर्गदण्डनन्याये इत्यनुकृष्यते । तत्तन्न्यायप्रवृत्तिसूचनाय स्पष्टार्थमिति भावः ॥ **कर्तव्यमिति** । वार्तिककृतेति भावः ॥ छाया ॥

३ **अथेति** । यथा ब्राह्मणभोजनन्यायस्य प्रसिद्धतरत्वमाश्रित्य प्रत्येकमिति नोच्यते गुणवृद्धिसंज्ञायां सूत्रकृता, तथैव गर्गदण्डनन्यायस्यापि प्रसिद्धतरत्वात्सग्रहणेनापि सूत्रकृन्मते नार्थं इति भावः ॥ छाया ॥

४ इदानीं संयोगस्य लोके यत्किंचित्प्रतियोग्यनुयोगिकत्वेन प्रसिद्धत्वात्तत्संज्ञास्वारस्येन वर्णान्यवधानानाश्रयणस्वारस्येन च द्वयोरेव समुदायस्य संज्ञेति प्रतिपादयितुमुपक्रमते—**अथेति** ॥ द्वयोर्द्वयोरित्यत्रावधारणं ज्ञेयम् ॥ छाया ॥

५ अयं पक्षो बहूनां संनिधावेवेत्याशयेनाह—**यदा त्विति** ॥ **हल इति** । वर्णग्रहणे जातिग्रहणादिति भावः ॥ छाया ॥

६ नन्विदमेवाग्रे विशदीक्रियतेऽत आह—**मस्जाविति** । तत्रापि द्वयोस्तत्त्वेन सिद्धे स न सिध्यतीत्यस्यासंगतेरित्यर्थः ॥ छाया ॥

७ तत्र—द्वितीयपक्षे ॥ **यथेतीति** । पूर्वपक्षादेव न शङ्कावसरः, सिद्धान्ते दूष्यत्वात् ॥ छाया ॥

८ **वस्तुत इति** । यद्यपि तत्रैकवचनान्तमप्युक्तम् । तथाप्यनन्तरा इति विशेषणात्तदसंभवादाह—**हलौ चेति** ॥ छाया ॥

९ शेषपूरणेन वार्तिकं व्याचष्टे—**समुदाय इति** । तत्रैव संज्ञाङ्गीकार इत्यर्थः ॥ छाया ॥

१० अत्र दोषाभावस्य वक्ष्यमाणत्वात्तुल्यकक्ष्यं दोषत्रयमाह—**इह चेति** ॥ छाया ॥

११ **यः संयोग इति** । रगलसमुदाय इति भावः ॥ छाया ॥

१२ ननु **पूर्वं धातुः साधनेनेति** सिद्धान्तपक्षे नेदं दोषचतुष्टयम्, तथा पदसंस्कारपक्षे गोमानित्यत्रापि न दोषोऽत आह—**भाष्ये पूर्वं धातुरिति** । **क्वचित्**—स्थलचतुष्टये । **क्वचिच्च**—गोमान् करोतीत्यत्र । तथा चेयमप्यरुचिस्तत्र बोध्या ॥ छाया ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि-द्वयोर्द्वयोः संयोगः[1] ॥**

( १३४ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ हलोः संयोग इति चेत् द्विर्वचनम् ॥ * ॥

( भाष्यम् )

**द्वयोर्हलोः संयोग इति चेत् द्विर्वचनं न सिद्ध्यति । इन्द्रमिच्छति-इन्द्रीयति, इन्द्रीयतेः सन्-इन्दिद्रीयिषति । "न न्द्राः संयोगादयः" इति द्विर्वचनं न[2] प्राप्नोति ॥**

( प्रदीपः ) **इन्दिद्रीयिषतीति** । अत्र द्वौ संयोगौ-नदौ दरौ च, तत्र दकारस्य संयोगादित्वात् द्विर्वचननिषेधप्रसङ्गः ॥

( १३५ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ न वाऽज्विधेः ॥ * ॥

( भाष्यम् )

**न वा एष दोषः ।**

**किं कारणम् ?**

**अज्विधेः । नदराः संयोगादयो न द्विरुच्यन्ते । अजादेरिति वर्तते ॥**

( प्रदीपः ) **न वाऽज्विधेरिति** । अजाश्रयः[3] प्रतिषेधविधिः । **'अजादेः'** इति कर्मधारयः । तेनाच आदेः परे-अनन्तरा न्द्रा न द्विरुच्यन्ते । इन्द्रशब्दे तु दकारो नकारेण व्यवहितत्वात् द्विरुच्यत एव ॥

( उद्द्योतः ) **परेऽनन्तरा इति । तस्मादित्युत्तरस्येत्यस्यो**पस्थितेरिति भावः । चन्द्रीयतेः सनोऽभिधाने **यथेष्टं नामधातु**ष्विति द्वितीयैकाचो द्वित्वं नकारसहितस्यैव । आद्यवयवाचः परत्वाभावेनैतन्निषेधाप्रवृत्तेरिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**अथ[4] यद्येव बहूनां संयोगसंज्ञा, अथापि द्वयोर्द्वयोः । किं गतमेतदियता सूत्रेण, आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ?**

( समाधानभाष्यम् )

**गतं[5]मित्याह ।**

**कथम् ?**

**यदा तावद्बहूनां संयोगसंज्ञा, तदैवं विग्रहः करिष्यते-अविद्यमानमन्तरमेषाम्-इति ॥**

( प्रदीपः ) **अविद्यमानमिति** । बहूनां चा[6]नन्तरत्वे समुदायद्विर्वचनवत् बहूनामेव संयोगसंज्ञा, न द्वयोर्द्वयोः ॥

( उद्द्योतः ) **बहूनां चाविवरत्वे इति** । 'बहूनां चानन्तरत्वे' इति क्वचित्पाठः । नन्वत्र विग्रहे कमित्यादौ कमयोः संयोगसंज्ञा स्यात्, तयोर्मध्ये वर्णशून्यैं[7]कालरूपच्छिद्राभावादिति चेन्न । वर्णशून्यकालव्यवायमात्रवारणे फलाभावात्सामर्थ्येन सवर्णकालव्यवायोऽपि व्यावर्त्यत इत्यदोषः ॥ **द्विर्वचनवदिति** । 'ए[8]षां' इति बहुवचनादिति न भ्रमितव्यम्, तस्य सूत्रे हल इतिवत्सत्त्वात् । अन्तराशब्देन विग्रहेऽपि तत्सत्त्वाच्च । अ[9]न्यथा द्वयोर्न स्यात् । किं त्वन्तरशब्देन विग्रहाद्बहूनां समवधाने तेषामप्यनन्तरत्वादिति भावः ॥

( समाधानशेषभाष्यम् )

**यदा द्वयो[10]र्द्वयोः, तदैवं विग्रहः करिष्यते—अविद्यमाना अन्तरा एषाम्-इति । द्वयोश्चैवान्तरा कश्चिद्विद्यते वा न वा ॥**

( प्रदीपः ) **अविद्यमान इति** । म[11]ध्ये य आधेयः स द्वयोरेव मध्ये भवतीति संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद्बहुषु द्वयो[12]र्द्वयोः संयोगसंज्ञा भवतीति पक्षः ॥ **द्वयोश्चैवान्तरेति** । **'अन्तरान्तरेण युक्ते'** इति द्वितीया कस्मादत्र न भवति । उच्यते—य[13]दा मध्यापेक्षया नियतावधिरूपता

---

१ **संयोग इति** । संयोगसंज्ञेत्यर्थः ॥ छाया ॥

२ **न प्राप्नोतीति** । दकारसहितस्येति भावः ॥ छाया ॥

३ **अज्विधेरित्यस्यार्थान्तरनिरासाय समासमर्थं चाह—अजाश्रय इति** ॥ छाया ॥

४ एवमाद्यं पक्षं संदूष्य द्वितीयं समर्थ्य सूत्रे बहुवचनोक्तेरक्षरमर्यादया सूत्रतस्तस्यालाभ एवेति मूलाशुद्धिदोषनिरासद्वारा तं युक्तपक्षं सिद्धान्तयितुं शङ्कते—**अथेति** ॥ **गतं**—स्यादिति शेषः ॥ **भूयो**—विपुलम् । द्विविधोऽप्यर्थो यथाश्रुतसूत्रादेव लभ्यते, उतैकः । तथाऽपरः क्रियमाणपदान्तरयुक्तादिति भावः ॥ छाया ॥

५ प्रागुक्तविग्रहणद्वयवशादेव द्वयमपि तत एवावगतमित्याह—**गतमिति** । तत्प्रतिपादयति—**यदेत्यादिना** । अवधारणमुभयत्रापि ज्ञेयम् ॥ छाया ॥

६ 'चाविवरत्वे' इति अ. भिन्नपुस्तकेषु पाठः ॥

७ **वर्णेति** । विशेषणाभावप्रयुक्तविशिष्टाभावादिति भावः ॥ **वर्णेति** । यत इत्यादिः ॥ छाया ॥ 'वर्णशून्यछिद्रा' इति घ. पाठः ।

८ यत्तु—अविद्यमानमिति । बहूनां द्वयोर्द्वयोश्चाव्यवधानस्याविशेषेण हल इति बहुवचननिर्देशेन बहूनामेवेति भावः । कैयटोक्तं तु न युक्तम् । तद्वदत्रावयवानुग्रहेण तयोर्वैषम्यादिति रत्नकृत् । तन्न, पूर्वपक्षयुक्तित्वेन प्राग्वदत्रापि वैषम्याज्ञानात् । तदेतद्ध्वनयंस्तदुक्ताशयं खण्डयति—**एषामितीति** ॥ छाया ॥

९ विपक्षे बाधकमाह—**अन्यथेति** । तत्त्वाङ्गीकार इत्यर्थः ॥ **द्वयोरिति** । यत्र द्वावेव तत्रेति भावः ॥ छाया ॥

१० 'द्वयोर्द्वयोः संयोगसंज्ञा तदैवं' इति मुद्रितपाठः ॥

११ अन्तराशब्दस्यार्थमाह—**मध्ये इति** । तदाक्षिप्तमाह—**य आधेय इति** ॥ वर्ण इत्यर्थः ॥ अत एव **कश्चिदि**ति वक्ष्यति भाष्ये ॥ छाया ॥

१२ **द्वयोर्द्वयोरिति** । सावधारणम् ॥ छाया ॥

१३ प्रकृताशयेनाह—**यदा मध्येति** । तद्रूपाधिकरणेत्यर्थः ॥ ननु मध्ये इत्यस्यावधिमद्वाचकत्वस्य पूर्वादिवदभावेन तस्य न तदाकाङ्क्षा । नहि मध्ये तिष्ठतीत्यादौ तथा दृश्यते किंतु निरूपकाकाङ्क्षैव कयोरिति दृश्यतेऽत आह—**निवक्ष्यत इति** । निरूपकयोरिति भावः ॥ छाया ॥

विवक्षिता–'त्वां च मां चान्तरा कमण्डलुः' 'अग्नी अन्तरा' 'धवखदिरावन्तरा' इति, तदा द्वितीया ॥ यदा तु नियतावधित्वं न विवक्ष्यते, अपि तु संबन्धमात्रं तदा षष्ठ्येव भवति । तदा हि न ज्ञायते—किं तयोरेवावधित्वमुतान्यसहितयोः–इत्यवधिनियमाभावात् । द्वितीयाया युक्तग्रहणान्नियतावधिविवक्षाविषयाया अभावः ॥

**( उद्योतः )** संसर्गविप्रयोगावेव भाष्ये दर्शयति—**द्वयोश्चैवेति ।** विद्यत इत्यन्तं दृष्टान्तार्थम् । **अवत्साधेनु**रित्यादौ विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः । अन्तरा विद्यत इति–न विद्यत इति वा यत्तत् द्वयोरेवेत्यर्थः ॥ **नियतावधिरूपतेति ।** अवधित्वं हि अन्यासहितत्वे एव तयोर्नियमेन भवति, अन्यसाहित्ये तु न तत्रावधित्वस्य नियमेन प्रतीतिः, अवधित्वविवक्षायामेव च द्वितीयेति भावः ॥ यस्य च नियमेनावधित्वं तस्यैवावधित्वविवक्षा शब्देनेति तात्पर्यम् । **नियतत्वं**–अन्यासहितत्वं, तद्वैशिष्ट्येन याऽ**वधिरूपता** सा विवक्षिता यदा भवतीत्यक्षरार्थः । अन्यथा–अवधित्वविवक्षायां द्वितीया, तत्त्वाविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन नियतेति कथनमधिकं स्यादिति बोध्यम् ॥ **युक्तग्रहणादिति ।** न च तदभावेऽन्तराऽन्तरेणशब्दाभ्यां द्वितीयापत्तिः । तयोरव्ययत्वेन विशेषाभावात् । न च प्रथमाबाधनेन **सपूर्वायाः प्रथमाया** इत्यस्याप्रवृत्त्यर्थम् । व्यवस्थितविभाषया तस्यं सुपरिहरत्वात् । तस्माद्युक्तग्रहणं संबन्धविशेषस्य प्रतिपादनाय, अवधित्वस्य प्रतियोगित्वस्य वा । तेन प्रयोगमन्तरेणेत्यपि सिद्धम् । एवं च संबन्धमात्रविवक्षायां षष्ठ्येवेति भावः ॥

**( आक्षेपभाष्यम् )**

**एवमपि बहूनामेव प्राप्नोति । यान् हि भवानत्र षष्ठ्या प्रतिनिर्दिशति, एतेषामन्येन व्यवाये न भवितव्यम् ॥**

**( प्रदीपः ) यान् हीति ।** 'एषां' इति बहुवचननिर्देशादिति न बोद्धव्यम्, बहुत्वस्याविवक्षणात् । अन्यथा 'शिक्षा' इत्यादौ द्वयोर्न स्यात् । तस्माद्योऽसावन्तरा स द्वयोर्भवति न वेति यदुक्तं तत्रोच्यते—यदा द्वयोर्द्वयोरन्तरा न भवति तदा बहवोऽनन्तरा इति तेषामेव प्राप्नोति । यदा हि बहूनां मध्ये भिन्नजातीयोऽच् भवति, तदा मा भूत् । तदभावे तु प्रवर्तितव्यमेव बहूनां संज्ञया, समुदायद्विर्वचनवदित्यर्थः ॥

**( उद्योतः )** ननु भाष्ये **द्वयो**रिति षष्ठीद्विवचननिर्दिष्टस्य द्वित्वात् **'यान्हि'** इति बहुवचननिर्देशोऽनुपपन्न इति चेन्न । प्रकृते द्वयोरित्यनेन न केवलौ वर्णौ निर्दिष्टौ । तथा सति तयोरेवावधित्वात् द्वितीयापत्तिः, किं त्वन्यसहितावपि, अत एव षष्ठी । एवं च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षणेन द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्तिहलां बहुत्वात्तदुपपत्तिः । 'अनन्तरा' इत्यपाठात्कल्प्यमानविभक्तेर्बाधाङ्गीकारे पाठवैयर्थ्यापत्तेस्तच्छ्रवणस्यैव सर्वत्रापत्तेश्च । किं च तत्र प्रथमापदोल्लेखेन पूर्वसाहचर्येण च सार्थकविभक्तेरेव ग्रहणमिति तस्य प्रवृत्तिरेव नेति बोध्यम् ॥ छाया ॥

---

१ विद्यत इत्यन्तस्य प्रकृतानुपयोगादाह—**विद्यत इत्यन्तमिति ।** एतेन प्रथमवाशब्द इवार्थे, द्वितीयोऽप्यर्थ इति सूचितम् ॥ छाया ॥

२ प्रतिज्ञातार्थं प्रकटयन् चस्य यदित्यर्थकत्वेन समुदितवाक्यार्थ मध्य इत्यादिकैयटसूचितयोजनाक्रममाह—**अन्तरा इति ।** अत्र वाशब्दस्तत्त्वेनोभयार्थः । तथा च यथा अन्तरा विद्यते इति यत् तद्द्वयोरेव, एवं 'न' इत्यपि द्वयोरेवेत्यर्थ इति बोध्यम् ॥ छाया ॥

३ द्वयोरिति षष्ठीद्विवचननिर्देशाद् यानिति द्वितीयाबहुवचननिर्देशाच्च लब्धं वक्ष्यमाणार्थसूचकं नियतपदम् । तदर्थं प्रतिपादयितुमस्याशयमाह—**अवधीति । हि**-यतः । **तयोः**-निरूपकयोः ॥ छाया ॥

४ ननु विवक्षाऽन्यस्यान्यरूपेणापि 'स्थाल्या पच्यते' इत्यादौ दृष्टाऽत आह—**यस्य चेति** ॥ छाया ॥

५ नन्वेवमपि मूलतः कथमुक्तार्थलाभोऽत आह—**नियतत्वमिति ॥** तत्र स भावप्रधानः । लक्षणे च प्रकृत्यादित्वात्तृतीया **सुप्सुपेति** समास इति भावः ॥ छाया ॥

६ **तयोरिति ।** अटाबन्तसाहचर्याट्टाबन्तस्यात्तृतीयान्तसाहचर्याच्चतृतीयान्तस्याग्रहणम् । अत एव 'किमनयोरन्तरेण ज्ञातेन' इति सिद्धम् । **अन्तरेण**–विशेषेण । यद्वा–अन्तराशब्दस्य प्रथमैकवचनान्तस्यानभिधानादन्तरा इत्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यते इति तत्साहचर्यादन्तरेणेत्यप्यव्ययमेव । तदुक्तं भाष्ये—**अन्तराशब्दोऽयमदृष्टापचारो निपात एवेतीति** भावः ॥ तथा च श्रवणनिवृत्त्यर्थं न तदिति तात्पर्यम् ॥ छाया ॥

७ **त्यर्थमिति ।** युक्तग्रहणमिति भावः ॥ छाया ॥

८ **तस्य**–सूत्रस्य । वस्तुतस्तु तृतीयोच्चारणकरणात्पूर्वोत्तरसाहचर्येण तस्य प्रथमाबाधकत्वं दुर्वचम् । तस्या अन्तरङ्गत्वाच्च । अन्यथा

९ उपसंहरति—**तस्मादिति ॥** द्वितीयसंग्रहस्य कैयटोक्तिरुपलक्षणमित्याह—**प्रतीति** ॥ छाया ॥

१० अथ प्रागनुक्तत्वेनैवावगतनिष्फलत्विकां तृतीयकोटिं प्रसङ्गाद्गूढाशयेन खण्डयितुं बहूनां समवाये बहूनामेव, द्वयोः समवाये द्वयोरेवेति सिद्धान्तयितुं च शङ्कते—**एवमपीति ।** संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वेऽपीत्यर्थः ॥ तत्र हेतुमाह—**यान् हीति ॥ हि** यतः । **व्यवाये** इति सत्सप्तम्यन्तम् ॥ छाया ॥

११ अत्र केचिद्व्याचक्षते—यानिति भाष्यं न द्वयोरितिषष्ठ्यभिप्रायं तत्र द्वित्वात्, किंतु 'अविद्यमाना अन्तरा एषाम्' इत्यभिप्रायकम् । सूत्रे च हल इति बहुत्वं विवक्षितम्–इति । तत् खण्डयति—**एषामिति ॥ बहुत्वस्येति ।** तथा बहुत्वस्यैवाविवक्षणादित्यर्थः ॥ किंतु **वस्तुत** इत्युक्तरीतिरेव विवक्षितेति भावः ॥ **अन्यथा,**–तथैवाङ्गीकारे । तथा च तत्प्रयुक्तगुरुत्वप्रयुक्ताप्रत्ययो न स्यादिति भावः ॥ छाया ॥

१२ ननु तर्हि किमभिप्रायकं भाष्यमत आह—**तस्मादिति ।** द्वयोरिति भाष्यमर्थतोऽनुक्तमनुवदति—**योऽसाविति ॥** छाया ॥

१३ **बहुवचनेति ।** बहुवचनान्तेन प्रतिनिर्देश इत्यर्थः ॥ **प्रकृते इति ।** यत इत्यादिः । तदुपपत्तिरित्यत्रान्वयः ॥ **केवलौ**–तावेव ॥ अपिना केवलपरामर्शः ॥ **त्रयाणामिति ।** तन्निर्देशे चेत्यर्थः ॥ छाया ॥

१४ हल इतिवदनन्तरा इत्यत्राप्येकशेष इत्याह—**अनन्तरा इति ।** उक्तरीत्या युक्तितश्च तथा लाभादिति भावः ॥ छाया ॥

नेन च न विद्यतेऽन्तरा यौ वर्णौ[१] तौ, यौ च समुदायावन्तरा न विद्येते तौ च गृह्यन्ते, एकशेषादिति न दोषः । तत्सर्वमभिप्रेत्याह—**यदा द्वयोर्द्वयोरिति** । द्व्यवयवकसमुदाययोरित्यर्थः । **यान्**[२] वर्णान् द्वयोः समुदाययोरित्यर्थकषष्ठ्या **प्रतिनिर्दिशतीति** भाष्यार्थ इति भावः ॥ अनन्तरा इत्यस्यात्र पक्षे व्यावर्त्यं[३] दर्शयन् पूर्वोक्तमेवार्थं दृष्टान्तेनोपपादयितुमाह—**यदा हि बहूनामिति** । न च स्रष्टेत्यादौ रेफषकारयोर्वर्णयोरन्तरा कस्यचित्सत्त्वेऽपि सरौ रषौ चेति समुदायौ तयोश्चान्तरा न कश्चिदिति तेषां संयोगत्वं स्यादिति वाच्यम् । वर्णयोरन्तरा विद्यमानत्वेनानन्तरत्वाभावात् । सर्वविधानन्तरत्वस्यैव निमित्तत्वादित्याहुः ।

**( समुदायसंज्ञाभ्युपगमभाष्यम् )**

**अ[४]स्तु तर्हि समुदाये संज्ञा ॥**

**( समुदायसंज्ञादूषणस्मारणभाष्यम् )**

**न[५]नु चोक्तं—*समुदाये संयोगादिलोपो मस्जेः* इति ॥**

**( समुदायसंज्ञादूषणनिराकरणसिद्धान्तिभाष्यम् )**

**नै[६]ष दोषः । वक्ष्यत्येतत्-*अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम्* इति ।**

**( प्रदीपः ) अन्त्यात्पूर्व इति** । तच्चानुषङ्गलोपार्थमवश्यं वक्तव्यम् । अन्त्यादचः परे नुमि सत्यनुपधात्वात् 'मग्नः' इत्यत्र नलोपो न स्यात् । कृतेऽपि संयोगादिलोपे तस्यासिद्धत्वादनुपधात्वमेव नकारस्य ॥

**( उद्योतः ) अनुषङ्गः**–नकारः । तल्लोपोऽनिदितामित्यनेन ॥

**( समुदायसंज्ञादूषणनिराकरणैकदेशिभाष्यम् )**

**अ[७]थवाऽविशेषेण संयोगसंज्ञा विज्ञास्यते-द्वयोरपि, बहूनामपि । तत्र[८] द्वयोर्या संयोगसंज्ञा तदाश्रयो लोपो भविष्यति ॥**

**( प्रदीपः ) अविशेषेणेति** । बहुष्व[९]नन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपि-इत्ययमिदानीमविशेषः । कार्यार्थत्वात्[१०]संयोगसंज्ञाया विरोधाभावा[११]देकया संज्ञया सर्वेषामनुग्रहासिद्ध्या द्विर्वचनेन वैधर्म्यादविशेषेणेत्युक्तम् ॥

**( उद्योतः ) बहूनामपीति** । न्यायतः सूत्रात्सम्भवमात्रेणेदमुक्तम् । न तु फलोदाहरणमस्य न्याय्यमस्ति । ध्वनितं चेद**मङ्गेन संयोगादिमि**ति ग्रन्थेन भाष्ये ॥ न[१२]नु द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यादिति कथमेतत्पक्षोत्थानमत आह—**कार्येति** । द्विर्वचनं हि श्रवणार्थमेव न शास्त्रीयकार्यार्थम् । एकस्याचो बह्ववयवत्वं युगपद्विरुद्धं च । एकेन द्वित्वेन सर्वानुग्रहश्चेति वैषम्यम् ॥

**( समुदायसंज्ञापक्षोक्तदूषणान्तरनिराकरणसिद्धान्तिभा० )**

**यदप्युच्यते—'इह च निर्ग्लीयात्-निर्म्लीयात्-निर्ग्लैयात्-निर्म्लैयात् "वाऽन्यस्य संयोगादेः" इत्येत्वं न[१३] प्राप्नोतीति ।**

**अङ्गेन संयोगादिं विशेषयिष्यामः—अङ्गस्य संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम् ॥**

**यदप्युच्यते—इह च गोमान्करोति-यवमान्करोतीति "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोतीति ।**

**पदेन संयोगान्तं विशेषयिष्यामः—पदस्य संयोगान्तस्येति ॥**

**यदप्युच्यते—इह निर्ग्लानो निर्म्ली[१४]नः "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोतीति ॥**

---

१ **यौ वर्णाविति** । केवलावित्यर्थः । अवधित्वविवक्षया द्वितीया । एवमग्रेऽपि ॥ छाया ॥

२ एवं सति भाष्याक्षरार्थमाह—**यानिति** ॥ छाया ॥

३ **व्यावर्त्यम्**–एतेषामिति भाष्येणैवोक्तम् ॥ छाया ॥

४ बहूनां संनिधाने तथैव लाभे तमेव स्वीकरोति सिद्धान्ती—**अस्तु तर्हि समुदाये इति** । तत्रैवेत्यर्थः ॥ दोषाणां सुपरिहरत्वादिति भावः ॥

५ समुदायपक्षे दत्तं दूषणं स्मारयति तटस्थः—**ननु चोक्तमिति** ॥

६ [ सिद्धान्ती स्मारितं दूषणं परिहरति—**नैष इति** ॥ ] **वक्ष्यत्येतदिति** । यत इत्यादिः । **मिदचोन्त्यात्पर** इति सूत्रे वार्तिककृदिति शेषः ॥ छाया ॥

७ अथैकदेशी प्रागनुक्तां कोटिं संभवाद्वार्तिकाकरणलाघवादत्राह—**अथवेति** ॥ छाया ॥

८ **तत्रेति** । तयोर्मध्य इत्यर्थः ॥ **लोप इति** । संयोगादिलोप इत्यर्थः ॥ छाया ॥

९ **बहुष्वेति** । तथा च द्वयोरेव बहूनामेवेति विशेषाश्रयणं नेति भाष्यार्थो बोध्यः । विनिगमकाभावादिति भावः ॥ छाया ॥

१० **कार्यार्थत्वादित्यनेन**—बहुषु यदि न तत्कार्यं द्वयोस्तु भवति तदा तयोः संज्ञेति द्वयोरिति भवतीत्युक्तम् ॥ छाया ॥

११ **विरोधाभावादित्यनेन**–यथैको बहूनां नावयवो विरोधात्, नैवमिह—इति सूचितम् ॥ **एकयेत्यादिना** यथा समुदाये द्विरुक्तेऽवयवा अपि तदन्तःपातितया तथा भवन्ति नैवमत्र तया तत्कार्यसिद्धिरिति सूचितम् ॥ छाया ॥

१२ ननु विनिगमकस्य सत्त्वेन कथं तदभाव इत्याशङ्कते—**नन्विति** ॥ छाया ॥

१३ **न प्राप्नोतीति** । तदपि न, यत इति शेषः ॥ छाया ॥

१४ 'निर्म्लीन इति संयोगादे' इति मुद्रितपुस्तकेषु सर्वत्र पाठः, प्राचीनपुस्तकेष्वपि लेखकप्रमादात्तादृशः पाठः क्वचिदुपलभ्यते । वस्तुतस्तु अत्र पदार्थप्रकाशनपर **इति**शब्दो नावश्यकः, न च तादृशः पाठः प्रामाणिकपुस्तकेषु । पूर्वं धातुः साधनेनेति सिद्धान्तपक्षेऽत्र नत्वस्य निराबाधत्वेन 'निर्म्लीन इत्यत्र नत्वं न प्राप्नोति' इति नार्थः किंतु एतद्विषये नत्वाभाववद्रूपमपि स्यादित्येवार्थः । अतो नात्रेतिशब्दः प्रामाणिकः । अत एव 'निर्म्लैयादिति वाऽन्यस्य' इतीतिशब्दघटकोऽपि पाठो मुद्रितपुस्तकेषूपलभ्यमानः प्रामादिक एव, सिद्धान्तपक्षे तस्य निराबाधात् ॥

**धातुना संयोगादिं विशेषयिष्यामः—धातोः संयोगादेरिति ॥**

(प्रदीपः) बहूनां संनिधौ बहूनामेव संयोगसंज्ञेत्यस्मिन्पक्षे आश्रीयमाणे मस्जेर्दोषः **'अन्त्यात्पूर्वः—'** इति परिहृतः । शेषान्दोषान्परिहर्तुमाह—**यदप्युच्यत इति । पाठक्रमादर्थक्रमो बलीयानिति 'मस्जेरन्त्यात्पूर्वं'** इत्यस्यानन्तरमिदं द्रष्टव्यम् ॥ निर्ग्लैयादित्यादिषु यद्यपि त्रयो हलः सन्निहितास्तथापि कार्यार्थत्वात्संज्ञायास्त्रिषु च कार्याभावादङ्गपदधात्ववयवसंयोगस्य तेषु लक्षणेष्वाश्रितत्वात्[१]समुदाये कार्याभावे चावयवानां स्वकार्यारम्भात् द्वयोरेव संज्ञा प्रवर्तत इति भाष्यार्थः ॥ व्याख्यानान्तरमत्र क्लिष्टत्वान्नोक्तम् ॥

**( उद्द्योतः )** न[२]नु पक्षान्तरेण व्यवधानादासत्त्यभाव इत्यत आह—**पाठेति ।** श[३]ब्दस्यार्थप्रत्यायनाङ्गत्वेन गुणत्वात्तदीयः क्रम आर्थक्रमविरोधे दुर्बल इति भावः ॥ **अङ्गपदधात्ववयवेति । संयोगादे**रित्यादावाद्यन्तशब्दयोरवयववाचितयेति भावः ॥ अयमाशयः—अङ्गादेरादावन्ते वा व्यञ्जनत्रयाभावात् त्र[४]याणां फलाभावात्संज्ञाऽप्राप्तौ कथं द्वयोर्न स्यात्—इति ॥ यद्यपि सामानाधिकरण्यान्वयेऽपि अङ्गाद्यवयवस्यैव संयोगस्याश्रयणं, नान्यस्य—इति **अङ्गेन संयोगादिं विशेषयिष्याम** इत्यनुपपन्नं, तथापि संयोगरूपमादिमङ्गेन परिच्छेत्स्यामः—अङ्गाद्यवयवसंयोगस्यैव बहुव्रीहिणाऽऽश्रयणमित्यर्थ इति न दोषः । एवंच **बहूनामपी**त्याश्रयणे फलाभाव इति स्पष्टमेवोक्तम् । क्लिष्टकल्पनया तादृशसंयोगानयनं तु न, अनभिधानादित्याशयः ॥ अदादिषु **'षस स्वप्ने'** इत्येव पाठो न तु **'षस सस्ति स्वप्ने'** इति, एतद्भाष्यप्रामाण्याज्जक्षित्यादिसूत्रस्थभाष्यप्रामाण्याच्चेति बोध्यम् ॥ **व्याख्यानान्तरमिति ।** पाठक्रमावाधायैवं व्याचक्षते—**'न प्राप्नोतीति'** इत्यत्र—**इति**शब्दो यस्मादर्थ उत्तरान्वयी, यस्मादङ्गेन संयोगादिर्विशेष्यते—अङ्गावयवः संयोगो गृह्यते—इत्यर्थः । एवं च बहूनामेव संयोगत्वे यः संयोगो नासावङ्गावयवः, यश्चाङ्गावयवो नासौ संयोगः । तस्मादेत्वं न प्राप्नोतीति यै[५]दपि, तदप्यसत् । यतोऽविशेषेण संज्ञोच्यते इति शेषः—इति । तत् क्लिष्टम्, शेषपूरणात् । ई[६]तेः स्वरसतो वाक्यसमाप्त्यर्थतायाः प्रतीयमानत्वाच्च । **एवं तावत्सर्वमाङ्गं परिहृत**मित्यस्यास्वारस्याच्च ॥

( इति समुदायसंज्ञापक्षस्थापनम् )

( अथानन्तरशब्दार्थनिरूपणम् )

( १३६ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्व[७]रानन्तर्हितवचनम् ॥ * ॥

( भाष्यम् )

**स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**व्यवहितानां मा भूत् । पचति, पनसम् ॥**

**( प्रदीपः ) पचति पनसमिति ।** 'हलः' इति वचनादचा सह सकारमकारयोर्मा भूत्संज्ञा । तै[९]योरेव तु प्राप्नोति, ततश्च सलोपप्रसङ्गः ॥

**( उद्द्योतः ) हल इतीति ।** तै[१०]द्धि असावित्यादौ **स्कोरि**ति सलोपवारणायावश्यकमिति भावः ॥

---

१ त्रिष्विव द्वयोरपि कार्याभावश्चेन्न स्यादेव सा नैवमत्रेत्यनुवादपूर्वमाह—**समुदाय इति ॥ एवेन** बहूनामेवेत्यस्य बहूनामपीत्यस्य व्यावृत्तिः ॥ छाया ॥

२ नन्विदमयुक्तम्, अत्र पक्षे वार्तिकस्याभावेनादौ द्वयोः संयोगसंज्ञासत्त्वेऽपि संयोगादिलोपस्यासिद्धत्वादन्त्याचः परे नुमि तदानीमनुपधात्वेन तल्लोपाप्राप्तिवद्द्वयोः संयोगसंज्ञया संयोगादिलोपे कृतेऽपि तस्यासिद्धत्वेनानुपधात्वेन तत्र लोपानापत्तेः । तदर्थं वार्तिकस्य तत्र कार्ये तत्सिद्धत्वज्ञापकस्य वाऽऽश्रयणे गौरवं स्फुटमेव । तस्मात्तत्र बहूनामित्येव पक्षो युक्तः । तस्य वार्तिकेन सिद्धेः । अत एवैकाज्द्विर्वचनन्यायावतारः । न चोक्तं वैषम्यम् । यत्रावयवे तथा कार्यसिद्धिस्तत्रावयवेष्वपि सा प्रसनौ(?)तु वार्तिकेन तत्कार्यस्यान्यथासिद्धिरिति तदुपर्बृहितन्यायेन समुदायस्यैव सेति तत्र पक्षे प्रागुक्तशेषदोषपरिहाराय प्रवृत्तस्य यदपीत्यादिभाष्यस्य तेन संगतिप्रदर्शनाय प्रवृत्तं कैयटमवतारयति—**नन्विति ॥** छाया ॥

३ **शब्देति ।** तथाचैवमुक्त्या संदंशपतितस्याथवेत्यस्यानभिमतत्वसूचनद्वारा तत्र पक्षे फलसत्त्वेन तत्र प्रवृत्तया तदुद्धारेऽप्यन्यत्रानुद्धारेण तत्र तदुक्तरीत्या वक्ष्यमाणरीत्या वा फलाभावात् स पक्षोऽयुक्तः । किं त्वाद्य एवेति सूचितमित्यनुपदमेव स्फुटीभविष्यति ॥ छा. ॥

४ ननु मस्जौ तदस्तीत्यत आह—**त्रयाणामिति ॥** द्वयोरेव संज्ञया कार्यसिद्धेरिति भावः ॥ **संज्ञाऽप्राप्ताविति ।** नञः प्रश्लेषः ॥ **कथमिति ।** फलसत्त्वादन्यथा शास्त्रानर्थक्यप्रसङ्गात् ॥ छाया ॥

५ **यदपीति ।** उच्यत इति शेषः ॥ छाया ॥

६ ननु शेषपूरणं सिद्धान्तेऽप्यत आह—**इतेरिति ॥ ननु** निपातानामनेकार्थत्वान्नायं दोषोऽत आह—**एवमिति ॥** तेन तत्कृतस्त्वत्रैव परिहार इति लभ्यते । तथा व्याख्याने तु सर्वत्रैव परिहारलाभ इति तदसंगतिः स्पष्टैवेति भावः ॥ छाया ॥

७ अथानन्तरा इत्यस्य वक्ष्यमाणरीत्या साफल्यं हृदि निधायाह—**स्वरेति ॥** छाया ॥

८ **हल इति ।** अनन्तरा इत्यादिः । तस्य च तद्व्यवहारविषया इत्यर्थः । अत एवानुल्लेखो भाष्ये । बहुवचनादपि एकव्यावृत्तेरिति केचित् । वस्तुतस्तद्वदत्रैकशेष एकवचनान्तस्याप्युल्लेखापत्त्या तस्यापि स्याद् बहुवचनस्य संग्राहकत्वादिति तदावश्यकमिति बोध्यम् ॥ छाया ॥

९ **तयोरेवेति ।** तयोस्तु प्राप्नोत्येवेत्यर्थः ॥ छाया ॥

१० नन्वचा सह संयोगसंज्ञायामपि न दोष इति हल इति व्यर्थमेवात आह—**तद्धीति ॥** सावित्यस्य संयोगत्व इति भावः ॥ छाया ॥

( आक्षेपबाधकभाष्यम् )

[1]ननु च 'अनन्तराः' इत्युच्यते। तेन व्यवहितानां न भविष्यति ॥

( आक्षेपसाधकं भाष्यवार्तिकम् )

***[2]दृष्टमानन्तर्यं व्यवहितेऽपि* ॥**

( भाष्यम् )

**व्यवहितेऽप्यनन्तरशब्दो दृश्यते। तद्यथा—'अनन्तराविमौ ग्रामौ' इत्युच्यते, तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्ति[3] ॥**

( आक्षेपबाधकभाष्यम् )

**[4]यदि तर्हि व्यवहितेऽप्यनन्तरशब्दो भवति, आनन्तर्यवचनमिदानीं किमर्थं स्यात्?**

( आक्षेपसाधकं भाष्यवार्तिकम् )

***[5]आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम्* ॥**

( भाष्यम् )

**एकस्य हलः संयोगसंज्ञा मा भूदिति ॥**

**[6]किं च स्यात् यद्येकस्य हलः संयोगसंज्ञा स्यात्?**

**इयेष-उवोष "इजादेश्च गुरुमतोऽनृच्छः" इत्याम् प्रसज्येत ॥**

**( प्रदीपः ) एकप्रतिषेधार्थमिति।** '[7]अनन्तराः' इत्यनेन संज्ञाया विषयो निर्दिश्यते। यत्रानन्तरव्यवहारस्तत्र संज्ञा। न चैकाकिन्यनन्तरव्यवहार इति भावः। एकप्रतिषेधस्य च प्रयोजनम्—इयेषेत्यादौ 'इजादेः—' इत्यामो निवृत्तिः। **गुरुमद्वचन**मियायेत्यादिनिवृत्त्यर्थं स्यात् ॥

**( उद्द्योतः ) न चेति।** आनन्तर्यस्य सप्रतियोगिकत्वादिति भावः ॥ [8]प्रकृते चान्यस्य प्रतियोगिनोऽनुपादानादुपस्थितहलेव प्रतियोगित्वेनाश्रीयत इति बोध्यम् ॥ भाष्ये—**उवोषेति** प्रसङ्गोच्चारितम्। तस्य[9] विकल्पितामकृत्वात्। [10]उवोखेति कवर्गद्वितीयान्तो वा पाठः ॥

इयायेति। इण् लृ इत्यस्यामवस्थायां व्यपदेशिवद्भावादिजादित्वमस्ति, गुरुमत्त्वं तु न। **न** चेयङि कृते गुरुमदिजादित्वादाम् स्यादिति वाच्यम्। लिट्धातुसंनियोगेन संपन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाभावादिति भावः ॥

( १३७ समाधानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ [11]न वाऽतज्जातीयव्यवायात् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः।**

**किं कारणम्?**

**[12]अतज्जातीयस्य व्यवायात्। अतज्जातीयकं हि लोके व्यवधायकं भवति ॥**

( अनुयोगभाष्यम् )

**[13]कथं पुनर्ज्ञायते—अतज्जातीयकं लोके व्यवधायकं भवतीति?**

( उत्तरभाष्यम् )

**[14]एवं हि कंचित् कश्चित्पृच्छति—'अनन्तरे एते**

---

१ अन्य आह—**ननु चेति** ॥ छाया ॥

२ वार्तिकक्रत्परिहरति—**दृष्टमिति** ॥ छाया ॥ अत्रेत्थमवधेयं—'दृष्टमानन्तर्यं व्यवहितेऽपि—आनन्तर्यवचनमिदानीं किमर्थमिति चेदेकप्रतिषेधार्थं' इत्युभे वार्तिकत्वेन मुद्रितपुस्तकेषु प्रतिनिर्दिश्येते। छायाकारोऽपि 'वार्तिकक्रत्परिहरति दृष्टमिति' इति ग्रन्थेन तत्त्वमनयोः प्रमाणयति। एवमपि नेमे कात्यायनवार्तिके, तादृशस्यान्यूनपदस्य व्याख्याभाष्यस्यानुपलम्भात्। अपि च 'स्वरानन्तर्हितवचनम्' इति वार्तिकोक्तपूर्वपक्षस्योत्तरं 'नवाऽतज्जातीयेन व्यवायात्' इति वार्तिकेन प्रदर्श्यते, न तु दृष्टमानन्तर्यमिति शङ्काया उत्तरं तेन प्रतिपाद्यते। दृष्टमानन्तर्यमित्यस्यापि वार्तिकत्वे तदुत्तरं न वेत्यनेन नोक्तम्—नाप्यन्येन वार्तिकेनेति ग्रन्थस्वरसभङ्गापत्तिः। दृष्टमानन्तर्यमित्यस्यापि 'नवाऽतज्जातीय' इत्येवोत्तरमित्याग्रहे 'कथमनन्तराविमौ ग्रामाविति' इति भाष्यं तदुत्तरभाष्यञ्च पुनरुक्तं स्यात्—इति। एवमपि यदि वार्तिकत्वे एवाग्रहस्तर्हि भाष्यवार्तिके एते न तु भगवतः कात्यायनस्येति गृहाण—इति सुधियो विदाङ्कुर्वन्तु ॥

३ 'भवन्तीति' इति 'इति'शब्दघटितः पाठो मुद्रितेषु, स प्रामादिकः। 'इतिहेतुप्रकरणप्रकाशादिसमाप्तिषु' इति प्रदर्शितेष्वितिशब्दार्थेष्वत्र कस्याप्यनन्वयात् ॥

४ शङ्ककः पूर्वपक्षिण आक्षेपं निरस्यति—**यदीति** ॥ छाया ॥

५ पूर्वपक्षी स्वकीयाक्षेपसमर्थनाय शङ्कोक्तिं समाधत्ते वार्तिकेन—**आनन्तर्येति। एकस्येति।** उक्तरीत्यैकशेषेणेति भावः ॥ छाया ॥

६ इष्टापत्तिं निराचष्टे—**किं च स्यादिति** ॥ चस्त्वर्थे। व्युत्क्रमेणान्वयः ॥ **प्रसज्येतेति**। तथा च तन्निवृत्तिस्तस्य फलमिति भावः ॥ छाया ॥

७ नन्वशाब्दत्वात्कथं तेन तन्निषेधोऽत आह—**अनन्तरा इति** ॥ छाया ॥

८ नन्वेवमप्यन्यनिरूपितमेव तद्गृहीत्वैकस्य कुतो नात आह—**प्रकृते चेति**। नत्वेकैकस्यैतत्संभवतीत्यनेकहलामवश्यं ग्रहणमिति नैकाकिनि तद्व्यवहार इति भावः ॥ छाया ॥

९ **तस्येति**। उषविदेत्यनेन ॥ छाया ॥

१० एवं दण्ड्यादिमतेनोक्त्वा तदज्ञाननिरासाय सिद्धान्तमाह—**उवोखेतीति** ॥ छाया ॥

११ सिद्धान्ती अनन्तरा इत्यनेनैवानतिप्रसङ्गात्तन्न कार्यमित्याह—**न वेति** ॥ छाया ॥

१२ वार्तिके कृद्योगषष्ठ्या समास इत्याह—**अतज्जातीयस्येति** ॥ छाया ॥

१३ ननु प्रागुक्तव्यवहारेणातज्जातीयस्य लोकेऽव्यवधायकत्वमेव दृष्टमिति कथमिदमित्याशयेनाह—**कथमिति** ॥ केन व्यवहारेणेत्यर्थः ॥ छाया ॥

१४ तं व्यवहारमेव दर्शयति—**एवं हीति** ॥ छाया ॥

**ब्राह्मणकुले' इति । स आह—नानन्तरे, वृषलकुलमनयोरन्तरा-इति ॥**

( प्रदीपः ) **वृषलकुलमिति** । यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं तथापि भिन्नजातीयमव्यवधायकमिति यदुक्तं तदनेन निवर्त्यते ॥

( उद्द्योतः ) कुलमत्र गृहम् ॥ **ब्राह्मणकुलमपीति** । तत्तद्रू[1]पेण ग्रहणे तस्यापि विजातीयत्वादिति भावः ॥ भाष्ये—**अनयोरन्तरा**-इति षष्ठ्युपादानादन्यसं[2]हितयोरवधित्वसूचनात्तत्तद्रूपेणाग्रहणबोधनात् ब्राह्मणकुलस्याव्यवधायकत्वमेवेत्यन्ये ॥ **भिन्नजातीयेति** । **तयोश्चान्तरा नद्यश्च पर्वताश्च भवन्तीति** भाष्येणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**किं पु[3]नः कारणं क्वचिदतज्जातीयं व्यवधायकं भवति, क्वचिन्न ?**

( समाधानभाष्यम् )

**स[4]र्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥**

( आक्षेपभाष्यम् )

**क[5]थम्—अनन्तराविमौ ग्रामाविति ?**

( समाधानभाष्यम् )

**ग्रा[6]मशब्दोऽयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते, तद्यथा—ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते, तद्यथा—ग्रामं प्रविष्ट इति । अस्ति मनुष्येषु वर्तते, तद्यथा—ग्रामो गतो ग्राम आगत इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते, तद्यथा-ग्रामो लब्ध इति ॥**

**तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते—अनन्तराविमौ ग्रामाविति । स[7]र्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥**

**हलोऽनन्तराः ॥ ७ ॥**

( प्रदीपः ) **ग्रामशब्दोऽयमिति** । केचिदर्थभेदेन शब्दभेदमिच्छन्ति । प्रत्य[8]भिज्ञानं तु सामान्यनिबन्धनम् ॥ अन्ये तु एकशब्द[9]त्वं, तत्र चानेकशक्तियोगः-एकशक्तित्वं चेति दर्शनविकल्पः ॥ त[10]त्र यदा एकशब्दत्वपक्षस्तदा '**तद्यः सारण्यके**' इति भाष्यं शक्तिभेदादुपचरितभेदाश्रयम् ॥ भेदपक्षे तु '**ग्रामशब्दोऽयं बह्वर्थः**' इति भाष्यम् । अभिन्नसामान्यनिमित्तैकत्वाध्यवसायाश्रयम् ॥ **तद्यः सारण्यक इति** । ततश्च ग्रामशब्दार्थे नदीनां पर्वतानां चान्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामयोरुच्यते । '**ग्रामे नाध्येयं**' इत्यत्र तु ग्रामशब्दो वाटपरिक्षेपवृत्तिः, शुचौ देशेऽध्ययनप्रतिपादनतात्पर्यात् । ततः सीमन्यधीयत एव ॥ ७ ॥

( उद्द्योतः ) **ग्रामशब्दोऽयमित्यस्य तद्यः सारण्यक इत्यस्य** चा[11]विरोधायाह—**केचिदिति** । **अन्याय्यश्चानेकार्थत्वमिति** तदाशयः । **सामान्यं च ग्रामशब्दत्वादि** ॥ **अन्ये त्विति** । व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः ॥ **तत्र चेति** । निरू[12]पकभेदाच्छक्तिभेद इति भावः ॥ **एकेति** । समवायैकत्वनये रसो रूपवानित्यादिप्र[13]योगवदन्यार्थबोधकालेऽन्यार्थबोधो वारणीयः । तदर्थसंबन्धेन शक्त्यग्रहात् । तत्त[14]दर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार इति भावः ॥ **तत्र यदेति** । एकै[15]शक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयणमिति बोध्यम् ॥ **ग्रामशब्दोऽयं बह्वर्थ** इति तु मुख्यार्थमेव । अ[16]त्र सर्वार्थनिरूपितवृत्तीनां '**वर्तते**' इत्येकशब्दबोध्यत्वेनाभेदबोध-

---

१ **तत्तद्रूपेणेति** । विशेषेणैवात्र प्रश्न इति सजातीयमपि व्यवधायकमिति भावः ॥ **णाग्रहणेति** । सामान्येनैवात्र प्रश्न इति विजातीयमेवोत्तरं युक्तमिति तदेवोक्तमिति तत्र भिन्नजातीयस्यैव व्यवधायकत्वं न सजातीयस्येति भावः ॥ छाया ॥

२ 'अन्यसहितावधि' इति घ. पाठः ॥

३ प्राग्वत्पूर्वपक्षी पृच्छति—**किं पुनरिति** ॥ वृषलकुलस्य व्यवधायकत्वम्, न नद्यादेरित्यत्र किं विनिगमकमिति भावः ॥ छाया ॥

४ सिद्धान्ती समाधत्ते—**सर्वत्रैवेति** । तज्जातीयकस्य तु व्यवधायकत्वं प्रागुक्तरीत्या काचित्कं विशेषप्रश्नोत्तरविषयकम् । अत एव एतौ घटावनेन घटेन व्यवहितावित्यादिव्यवहारोपपत्तिरिति भावः ॥ छाया ॥

५ तमजानन् पृच्छति—**कथमनेति** ॥ छाया ॥

६ स्वाशयमुद्धाटयति—**ग्रामशब्दोऽयमिति** ॥ छाया ॥

७ उपसंहरति—**सर्वत्रैवेति** । एवं च व्यवहिते तदप्रयोगेण तेनैवानतिप्रसङ्गे वार्तिकं न कार्यमिति भावः ॥ छाया ॥

८ नन्वेवं प्रत्यभिज्ञानस्य का गतिरत आह—**प्रत्यभिज्ञेति** ॥ ग्रामशब्दत्वाद्यभिन्नसामान्यनिमित्तैकत्वाभिप्रायमित्यर्थः ॥ छाया ॥

९ **शब्दत्वमिति** । इच्छन्तीत्यस्यानुषङ्गः । अर्थभेदेऽपीति भावः ॥ **तत्र च पक्षे** । **विकल्प** इत्यत्रान्वयः ॥ छाया ॥

१० तयोर्मिथो विरोधं परिहरति—**तत्रेति** । तयोर्मध्ये इत्यर्थः ॥ अनेकशक्तियोग आह—**शक्तिभेदादिति** ॥ छाया ॥

११ **चाविरोधेति** । अन्यथोपक्रमे एकत्वस्य, उपसंहारे भेदस्य ग्रामशब्दस्य प्रतीतेर्विरोधः स्पष्ट एव ॥ छाया ॥

१२ आद्यस्याशयमाह—**निरूपकेति** ॥ **अन्यायश्चेति** न्यायविरोधस्तु न, अक्षादिवदगत्या तत्स्वीकारादिति भावः ॥ छाया ॥

१३ **प्रयोगवत्**-प्रयोगो यथा वारणीयः ॥ वारणे हेतुमाह—**तदर्थेति** । तथा चात्र पक्षे सर्वप्रतीतिः स्यादिति दोषो नेति भावः ॥ छाया ॥

१४ नन्वेवमनेकार्थत्वोच्छेदापत्तिरत आह—**तत्तदिति** ॥ अत्र पक्षे प्रत्यभिज्ञानं न जातिविषयकम्, व्यक्तिविषयकत्वे बाधकाभावात् ॥ छाया ॥

१५ न्यूनतां निराचष्टे—**एकेति** ॥ छाया ॥

१६ यद्येकशक्तियोग एकं शक्यतावच्छेदकं तर्ह्यर्थभेद इति व्याहतम्, एकशक्यतावच्छेदकावच्छिन्नस्यैकार्थत्वनियमात् । अथ नाना शक्यतावच्छेदकं तर्ह्येकशक्तियोग इति व्याहतम्, शक्यतावच्छेदकभेदे शक्तिभेदावश्यंभावात् । अन्यथा घटादिशब्दानामप्येकशक्तियोगे नानार्थता स्यादिति कृष्णः । तन्न, अर्थभेदेनोपचरितभेदाङ्गीकारेणादोषात् नानार्थत्वस्योक्तरीत्या स्वीकारेणानतिप्रसङ्गाच्चेति ध्वनयंस्तमेव पक्षं समर्थयते—**अत्रेति** । एषु वाक्येष्वित्यर्थः ॥ छाया ॥

नादेकशक्तित्वपक्षो भाष्यबोधितः । तत्र वर्तनक्रियाऽस्तिक्रियायाः कर्त्री । शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः । **वाटपरिक्षेपो** नाम शालासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते ॥ सारण्यकससीमकवृत्तिस्त्वत्र न गृह्यते इत्याह—**शुचाविति । सीमनीति** च ॥ ७ ॥

( ७ अनुनासिकसंज्ञासूत्रम् ॥ १ । १ । ४ आ. ५ )

## मुखनासिकावचनोऽनुनासिकः ॥ १ । १ । ८ ॥

( मुखनासिकावचनशब्दार्थनिरूपणम् )

( आक्षेपभाष्यम् )

**किमिदं 'मुखनासिकावचनः' इति ?**

( प्रदीपः ) **मुखनासिकावचनोऽनुनासिकः** ॥ ८ ॥ प्राण्यङ्गत्वात्समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम्, 'अवचनं' इति नञ्समासाश्रयणेऽर्थो न संगच्छते इति **प्रश्नः–किमिदमिति** ॥

( उद्द्योतः ) **मुखना०** ॥ ८ ॥ **प्राण्यङ्गत्वादिति** । एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् ॥ **अर्थ इति** । अभिमतोऽर्थ इत्यर्थः ॥

( समाधानभाष्यम् )

**मुखं च नासिका च–मुखनासिकम् । मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः ॥**

( आक्षेपभाष्यम् )

**यद्येवं 'मुखनासिकवचनः' इति प्राप्नोति ॥**

( समाधानभाष्यम् )

**निपातनाद्दीर्घत्वं भविष्यति ॥**

( प्रदीपः ) **निपातनादिति** । प्रसङ्गेनास्य लौकिकशब्दस्य साधुत्वं क्रियते । निपातनानां च बाधकत्वात् 'मुखनासिकवचनः' इति न भाव्यम् । अबाधकत्वपक्षे तु भाव्यमेव ॥

( उद्द्योतः ) सौत्रत्वादिति कुतो नोक्तमित्यत आह—**प्रसङ्गेनेति** ॥ **अबाधकत्वेति । पक्षे** त्विँत्यनेनाबाधकत्वस्वीकर्तृवृत्तिमतमसङ्गतमित्युक्तम् । भाष्यकृदसंमतरूपापत्तेः । **बाधकान्येव निपातनानीति सर्वादिसूत्रे** भाष्ये उक्तेः ॥

( समाधानान्तरभाष्यम् )

**अथवा-मुखनासिकं-आवचनमस्य सोऽयं मुखनासिकावचनः ॥**

( आक्षेपभाष्यम् )

**अथ किमिदं 'आवचनं' इति ?**

( समाधानभाष्यम् )

**ईषद्वचनं–आवचनम् । किंचिन्मुखवचनं, किंचिन्नासिकावचनम् ।**

( प्रदीपः ) **ईषद्वचनमिति** । भागस्य मुखेनोच्चारणात् भागस्य नासिकया । अस्मिन्पक्षे 'मुखनासिकवचनः' इत्यपि भवति । यो हीषदुच्यते स उच्यत एव । यथा–ईषच्छुक्लोऽपि शुक्ल एव ॥

( उद्द्योतः ) **अस्मिन् पक्ष इति** । आङ्रहितस्येति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आङ्रहितैतत्पदाभ्यां समासस्यानभिधानमेवेत्याहुः ॥ ननु भागस्य मुखाद्युच्चार्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकवचन इति प्रयोगस्तत्रासङ्गतोऽत आह—**यो हीति** ॥

( समासान्तरभाष्यम् )

**मुखद्वितीया वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ॥**

( प्रदीपः ) **मुखद्वितीयेति** । मुखसहाया–इत्यर्थः ।

---

१ अनन्वयं परिहरति—**तत्रेति** । तयोर्मध्ये । सर्वत्रेति भावः ॥ छाया ॥

२ अर्थमेव सर्वत्राह—**शालेति** । आदिना वाटपरिक्षेपादिपरिग्रहः ॥ छाया ॥

३ **रूपेति** । एतेन दैर्घ्यमलाक्षणिकमिति शब्दानुपपत्तिरेव प्रश्नतात्पर्यम् । नार्थानुपपत्तिः, तस्या द्वन्द्वेऽप्यसत्त्वादिति सूचितम् ॥ छाया ॥

४ यथाकथंचिदर्थसंगतेराह—**अभीति** । ताभ्यामुच्चार्यमाणस्यानुनासिकसंज्ञालक्षण इत्यर्थः ॥ छाया ॥

५ सिद्धान्ती समाधत्ते—**मुखं चेति** ॥ छाया ॥

६ **प्रसङ्गेनेतीति** । अस्य लौकिकत्वात्तथा दुर्वचमिति भावः ॥ छाया ॥

७ नन्वेवं कथं पक्षान्तरोक्तिरत आह—**पक्षे त्विति** । एवं चासंमतिप्रदर्शनाय परमतमुक्तम् । न त्वयं सिद्धान्त इति भावः ॥ छाया ॥

८ अन्यथा तदुपपत्तौ निपातनकल्पनमयुक्तमित्यस्वरसादाह—**अथवेति** ॥ छाया ॥

९ ईषद्वचनमित्युक्तावविशिष्टस्यावचनमेवेत्यर्थनिरासायाह—**किंचिदिति** । भागरूपं मुखवचनकं न भवतीत्यर्थः । एवं च करणे ल्युटा आङ ईषदर्थत्वेन तयोरेकदेशं प्रत्येव व्यापारेण तदुभयमीषद्भागतः प्रकाशसाधनमस्येत्यर्थ इति भावः ॥ छाया ॥

१० **तैतत्पदाभ्यामिति** । मुखनासिकवचनपदाभ्याम् । **समासस्य**–बहुव्रीहेरित्यर्थः ॥ **एवेन** तृतीयचतुर्थपक्षानुरोधेनास्यावश्याश्रयणीयत्वं ध्वनयति ॥ छाया ॥ 'तैतत्पदवचनपदा' इति घ. पाठः ॥

११ ननु संपूर्णस्य मुखादिवचनत्वस्य 'अकुह–' इत्यादिभिरुक्तत्वेनाद्यपक्षस्य युक्तत्वेऽपि द्वितीयपक्षस्यासंगतिरेवात आह—**मुखद्वितीति** ॥ छाया ॥

१२ नन्वत्र मुखं द्वितीयं यस्या इति समासे द्वितीयशब्दस्य पूरणप्रत्ययान्तत्व उभयवचनस्येत्यस्य कथं लाभोऽत आह—**मुखसहायेति** ॥ छाया ॥

तत्र नासिका मुखसाहचर्यान्मुखशब्देनोच्यते । मुखं च नासिका च–मुखनासिका, सा वचनमस्येति ॥

( उद्योतः ) सहायेति । अव्युत्पन्नो[1] द्वितीयशब्दः सहायवाचीत्यर्थः ॥ शाकपार्थिवादित्वादुत्तरलोपे शब्दानित्यत्वापत्तिरत आह—तत्रेति ॥ परन्त्विदं चिन्त्यं, भाष्यकृतैवैरीत्या तदप्रत्याख्यानात् ॥

**( समाधानान्तरभाष्यम् )**

**मुखोपसंहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ॥**

( प्रदीपः ) मुखोपसंहितेति[2] । मुखस्य च नासिकायाश्चान्तरालं[3] स्थानान्तरमेवानुनासिकस्य दर्शयति । तत्र[4] सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते । पदसंस्कारपक्षे मुखनासिकापदनिरपेक्षं 'वचनं'इत्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संस्क्रियते । पश्चात्स्त्रीत्वस्य पदान्तरसंबन्धेन प्रतीयमानत्वाद्बहिरङ्गत्वान्ङीप्प्रत्ययो न भवति । यदा[5] तु स्त्रीत्वाश्रयेण 'वचनी' इतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इति भवत्येव ॥ अत्र[6] चानेकं दर्शनम् । अनुनासिकस्य पूर्वः परो वा भागो मुखेनोचार्यते, भागो नासिकया । तत्र नासिकावचनभागानुरागवशात् मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते । यथा–सँय्यन्तेत्यत्रानुनासिकयकारानुरागात् अकारोऽनुनासिक इव प्रतिभाति ॥ अत्र च प्रासादवासिन्यायो नास्ति; भागस्यैव मुखेन नासिकया चोच्चारणात् न तु समग्रस्य ॥ अन्येषां[7] तु दर्शनं–मुखनासिकान्तरालं स्थानान्तरमेवास्य–इति । अत्रापि नास्ति प्रासादवासिन्यायः ॥ यदा सर्व एव वर्णो मुखेनोचार्यते नासिकया च तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे । यथा–भ्राष्ट्रेणोखया च पक्वः सूप उभाभ्यां व्यपदिश्यते ॥

( उद्योतः ) मुखस्य चेति । उपशब्दसामर्थ्यादिति भावः । यद्यपि[8] वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचनः–मुखनासिकया वचन इति वा तत्पुरुषोऽपि वक्तुं शक्यः, तथापि कर्मणि तस्य बाहुलकलभ्यत्वात्करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये ॥ तत्रान्त्ययोर्नासिकाशब्दसामानाधिकरण्यात्स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि नद्यृतश्चेति कवापत्तिरत[9] आह—पदसंस्कारेति ॥ भागस्य मुखेनोच्चारणाननुभवादाह—अत्रेति । तस्यादित[10] इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः ॥ ये तु[11] तत्तद्देशावच्छिन्नवाय्वभिघातस्य तत्तद्वर्णजनकत्वात्स्थानानां करणत्वमेव । स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य । अत एवोत्तरसूत्रे भाष्ये–अस्यन्त्यनेन वर्णानित्यास्यमिति करणे व्युत्पत्तिर्दर्शितेति वदन्ति । तन्मते प्रासादवासिदृष्टान्तासङ्गतेराह[12]—भ्राष्ट्रेण चेति ॥ एतेन[13] कण्ठादिकं तु स्थानं, नासिका तु करणमिति मन्दोक्तमपास्तम् । अत[14] एवात्र सूत्रे हरिणा—"स हि वर्णो न मुखेनैव नापि नासिकयैव चात्मवृत्तिं लभते, किं तु वायुनाऽनुपरतशक्तिनाऽन्यतरकरणमभिहत्यान्यतरकरणेऽभिहन्यमाने आत्मव्यक्तिं लभते" इत्युक्तम् ॥

**( पदकृत्यनिर्वचनायाक्षेपभाष्यम् )**

**अथ मुखग्रहणं किमर्थम् ?**

**( समाधानभाष्यम् )**

**'नासिकावचनोऽनुनासिकः' इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत । मुखग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

---

१ अव्युत्पन्न इति । न तथा, किंतु 'असिद्वितीयोऽनुससार पाण्डवम्' इतिवदिति भावः ॥ छाया ॥

२ स्थानभेदेन पक्षान्तरमाह—मुखोपेति ॥ छाया ॥

३ स्थानभेदकृतमेव तृतीयपक्षतो भेदमाह—मुखस्य चेति ॥ अन्तरालमिति । तत्रत्यं चर्मपुटकमित्यर्थः ॥ अत एवाह—स्थानान्तरमिति ॥ छाया ॥

४ नन्वेवं कथं मुखनासिकेत्युक्तिरत आह—तत्रेति । सूत्र इत्यर्थः । एवं चात्र पक्षे गौण्या वृत्त्या कर्मधारय एवेत्ययमपि पूर्वतो विशेष इति भावः ॥ छाया ॥

५ वाक्यसंस्कारपक्ष आह—यदा त्विति ॥ छाया ॥

६ नन्वनेकप्रदर्शनं भाष्ये निष्फलमत आह—अत्र चेति ॥ अनुनासिकविषये इत्यर्थः ॥ तत्रादौ द्वितीयपक्षेणाह—अनुनेति ॥ परो वेति । विनिगमनाविरहादिति भावः ॥ भाग इति । अर्थादपर इति भावः ॥ तत्र–तयोर्मध्ये ॥ छाया ॥

७ तुरीयपक्षेणाह—अन्येषां त्विति ॥ प्रथमतृतीयपक्षाभ्यामाह—यदा सर्व इति ॥ अनेन वक्ष्यमाणभाष्यविरोधः परिहृतः ॥

८ यदेत्यादिप्रदीपमवतारयति—यद्यपीति ॥ द्वितीयपक्षे आह—नावचन इति । इदमुपलक्षणमाद्यपक्षस्यापि ॥ तृतीयतुरीयपक्षयोराह—कथा वचन इति ॥ तत्पुरुष इति । अन्तरङ्गत्वादिति भावः ॥ छाया ॥

९ वापत्तिरिति । तथा च मुखनासिकावचनीक इति स्यात् ॥

१० ननु वर्णानामखण्डत्वस्य प्राक्प्रतिपादितत्वात्कथमिदमत आह—तस्यादित इति ॥ छाया ॥

११ ननु भ्राष्ट्रेणोखयेति कैयटोऽधिकोऽनुपयुक्तश्चेत्यत आह—ये त्विति ॥ तत्तद्देशेति । आस्यीयतत्तत्प्रदेशेत्यर्थः ॥ स्थानानां–कण्ठादीनां वर्णाभिव्यक्तिजनकानाम् ॥ छाया ॥

१२ दृष्टान्तासंगेति । तस्य वास्तवाधारविषयत्वादिति भावः ॥ छाया ॥

१३ खण्डनकृदुक्तिं खण्डयति—एतेनेति । कण्ठादीनामपि करणत्वस्यैवोक्तभाष्यात्प्रतीयमानत्वेनेत्यर्थः ॥ कण्ठादिकं स्थानमिति ।

'अनुस्वारयमानां च नासिकास्थानमुच्यते'

इति शिक्षोक्तेर्ङादीनां नासिका करणम् ॥ किंच स्थानत्वे कङ्योः सावर्ण्यानुपपत्तिर्यावत्स्थानैक्याभावात् । यत्किंचित्स्थानैक्येन तत्त्वे तु ङमामपि सावर्ण्यापत्तिरिति तद्भावः ॥ छाया ॥

१४ तद्भाष्यस्य सिद्धान्तत्वमाह—अत एवेति ॥ स हीति । ङादिरित्यर्थः ॥ नुपरतेति । अनेन पुनरभिघातयोग्यता सूचिता ॥ विनिगमनाविरहादाह—अन्यतरेति । तेषां स्थानत्वे तु करणपदासंगतिः स्पष्टैव ॥ छाया ॥

(प्रदीपः) यमानुस्वाराणामेवेति । प्रासादवासिन्यायानवतारपक्ष इति भावः । तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः । 'विड्वनोरनुनासिक स्यात्' इत्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसंभवादप्रतिपत्तिः स्यात् ॥

(उद्योतः) यमो नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयान्यतमसदृशो वर्णः ॥ आदितश्चत्वारो वर्णा इति विवरणेऽपि चतुःशब्दस्य चतुःसदृशे लक्षणा बोध्या । अत एवायोगवाहत्वप्रतिपादकहयवरट्सूत्रस्थभाष्याविरोधः ॥ न्यायानवतारेति । कचटतपानामेवेत्येवकारोऽप्यत्रैवं पक्षे-नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः ॥ अप्रतिपत्तिरिति । अत्र विड्वनोर्ञम इति वक्तुं शक्यम् । यरोऽनुनासिक इत्यत्र त्वप्रतिपत्तिः, तत्र ञमि ञम्वेत्युक्तेर्विकलेष्टासिद्धेः ॥

(आक्षेपभाष्यम्)

**अथ नासिकाग्रहणं किमर्थम्?**

(समाधानभाष्यम्)

**'मुखवचनोऽनुनासिकः' इतीयत्युच्यमाने क-च-ट-त-पानामेव प्रसज्येत । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

(प्रदीपः) कचटतपानामिति । 'पक्' इति चकारलोपप्रसङ्गः, 'ओदनपक्' इत्यत्र 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घप्रसङ्गः ॥

(उद्योतः) चकारलोपेति । निष्ठावत्वकुत्वयोरसिद्धत्वात् पचेरनुदात्तोपदेशवनतीत्यनेनेति भावः ॥

(मुखग्रहणप्रत्याख्यानभाष्यम्)

**मुखग्रहणं शक्यमकर्तुम् ॥**

(आक्षेपभाष्यम्)

**केनेदानीमुभयवचनानां भविष्यति?**

(समाधानभाष्यम्)

**प्रासादवासिन्यायेन । तद्यथा-केचित्प्रासादवासिनः, केचित् भूमिवासिनः, केचिदुभयवासिनः । ये प्रासादवासिनः, गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनः, गृह्यन्ते ते भूमिवासिग्रहणेन । ये उभयवासिनः, गृह्यन्त एव ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च ॥**

**एवमिहापि केचिन्मुखवचनाः, केचिन्नासिकावचनाः, केचिदुभयवचनाः । तत्र ये मुखवचनाः, गृह्यन्ते ते मुखग्रहणेन । ये नासिकावचनाः, गृह्यन्ते ते नासिकाग्रहणेन । ये उभयवचनाः, गृह्यन्त एव ते मुखग्रहणेन नासिकाग्रहणेन च ॥**

(प्रदीपः) प्रासादवासिन्यायेनेति । अयं न्यायः क्रियाशब्देष्वेव, न रूढिशब्देषु ॥

(उद्योतः) ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत्स्वत्रमेव कुतो न प्रत्याख्यायते—इत्यत आह—अयमिति । योगेन ह्युभयग्रहणं स रूढिषु नास्तीत्यर्थः । अनुनासिकशब्दस्य च

---

१ 'कुँ खुँ गुँ घुँ इति यमाः' इति कात्यायनप्रातिशाख्यानुसारेण "चत्वारस्ते यमाः कुँ खुँ गुँ घुँ इति" गौतमोक्त्यनुसारेण 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः' इत्युपक्रम्य गणनाविभागप्रदर्शने 'चत्वारश्च यमाः स्मृताः' इति पाणिनीयशिक्षानुसारेण च कवर्गीयाद्यवर्णचतुष्टयसदृशा एव चत्वारो यमसंज्ञकाः । न तु प्रतिवर्गीयचतुर्वर्णसदृशाः, त्रिषष्टिसंख्यागणनायाश्चतुःसंख्यागणनायाश्चानुपपत्तेः । अत एव हस्तलिखितप्राचीनपुस्तकेषु 'सूर्यं आत्क्मा' 'लक्ष्मीश्च पत्क्न्यौ' 'पात्क्नीवतश्मे' इत्यादौ तकारोत्तरमपि मध्ये ककारसदृश एवोपलभ्यते । अत एव यज्ञशब्दादौ गकारश्रुतिः । 'अनुपसर्गाज्ज्ञः' इत्यादौ श्रुत्वमपि संयोगाद्यजकारमाश्रित्योपपद्यते ॥ यज्ञ इत्यादौ द्वौ जकारौ इति तु वैदिकव्यत्ययेनापि यमाकरणे द्वित्वेनापि वा संगच्छत इति न विरोधः ॥ दाधिमथाः ॥

२ ष्याविरोध इति । अन्यथा तेषां स्वत एवाक्षरसमाम्नायिकत्वेन तदर्थं तत्त्वप्रतिपादनासंगतिः स्पष्टैवेति भावः ॥ छाया ॥

३ अत्रैव—तदनवतारपक्ष एवेत्यर्थः ॥ एवेन तदवतारप्रथमतृतीयपक्षव्यावृत्तिरित्येतद्ध्वनयन्पूर्वत्रासंभवेऽप्यत्र संभवादाह—नासिकाया इति ॥ छाया ॥

४ ष्टासिद्धेरिति । यदेतन्नॄ इत्यब्रवीदित्यादावनुनासिकानुपपत्तिरिति भावः ॥ छाया ॥

५ अथ वर्णानामुत्सर्गतो निरवयवत्वेनाखण्डत्वस्य सिद्धान्तितत्वाद्द्वितीयपक्षोऽयुक्त इति ध्वनयन्नाह—मुखेति ॥ तद्विनापि सर्वेष्टसिद्धेरिति शेषः ॥ छाया ॥

६ शङ्कते—केनेदानीमिति । मुखग्रहणाभाव इत्यर्थः ॥ छाया ॥

७ उत्तरयति—प्रासादेति ॥ छाया ॥

८ फ. पुस्तके येशब्दरहितः 'उभय—' इत्यादिः पाठः ॥

९ एवेनाग्रहणव्यवच्छेदः । यथा प्रत्येकवासिनां तत्तच्छब्देन ग्रहणम् । एवमुभयवासिनामपि अविनाभावादित्यर्थः ॥ छाया ॥

१० प्रकृते योजयति—एवमिति । उक्तरीतिरत्राप्यस्तीत्यर्थः ॥ तामेव रीतिमाह—केचिदिति । एकपुत्र इत्यादौ संख्याशब्दस्य न्यूनाधिकव्यवच्छेदकत्वनियमात्तथासत्त्वेऽप्यत्र तादृशावधारकाभावात्सर्वं वाक्यमित्यस्य प्रासादवासिन्यायेन बाध इति भावः ॥ छाया ॥

११ अयमित्यादिकैयटग्रन्थस्तत्त्वकथनेन प्रकृतोपयोगीति दण्डी । ननु लोके तद्वदश्वकर्णादिपदवाच्यस्याप्यन्यतरग्रहणेन ग्रहणं कुतो नेति चेत्, शृणु—यत्रावयवयोगेनार्थधीस्तत्रान्यतरग्रहणेन तद्ग्रहणम्, अश्वकर्णादौ तु न तथेत्यदोषादित्येवंपर इति कृष्णः ॥ तदुभयमप्यसंगतमिति ध्वनयन्नाह—नन्विति । अनुनासिकपदस्यान्वर्थत्वादिति भावः ॥ छाया ॥

१२ ननु तस्य यौगिकत्वमेव महासंज्ञाकरणादत आह—अनुनासिकेति । महासंज्ञाकरणं लोकानुरोधेनेति भावः ॥ छाया ॥

रूढिशब्दत्वम् । तस्य क्रियाशब्दत्वं तु वक्तुमशक्यम्, अनु–पश्चान्नासिका व्याप्रियते यस्मिन्निति योगस्य ञमङणनेषु निरूपयितुमशक्यत्वात् । विनिगमनाविरहेण युगपदुभयोर्व्यापृतेः ॥ एतेनानुपश्चान्नासिकां गत इत्यर्थको नासिकामनुगत इति योगोऽपि परास्तः । यथाकथंचिद्योगोपपादने तु रूढिरेव फलितेति दिक् ॥ ८ ॥

( आक्षेपभाष्यम् )

**भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति ॥**

( समाधानभाष्यम् )

**नैवं दोषो न प्रयोजनम् ॥**

( प्रदीपः ) **नैव दोष इति** । अनुवादे तावत् यमानुस्वाराणामसंभव एव । विधावप्यान्तरतम्यान्मुखवचनस्योभयवचनो भविष्यति, न तु केवलनासिकावचनः ॥ ८ ॥

( अन्योन्याश्रयपरिहारायाक्षेपभाष्यम् )

**इतरेतराश्रयं तु भवति ।**

**का इतरेतराश्रयता ?**

**सतोऽनुनासिकस्य संज्ञया भवितव्यम्, संज्ञया च नामानुनासिको भाव्यते, तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

( सिद्धान्तसमाधानभाष्यम् )

**अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् ।**

**किमुक्तम् ?**

***सिद्धं तु नित्यशब्दत्वात्* इति ।**

**नित्याः शब्दाः । नित्येषु च शब्देषु सतोऽनुनासिकस्य संज्ञा क्रियते, न संज्ञयाऽनुनासिको भाव्यते ॥**

**यदि तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम् ?**

( सिद्धान्तभाष्यवार्तिकम् )

***किमर्थं शास्त्रमिति चेत्-निवर्तकत्वात्सिद्धम्* ॥**

( भाष्यम् )

**निवर्तकं शास्त्रम् ।**

---

१ ननु तस्य तत्त्वमेव कुतो नात आह—**तस्येति** । योगस्य क्रियान्तर्भावेणैव वाच्यत्वादाह—**क्रियेति** ॥ तादृशाकारादिषु तदभिव्यक्तौ सत्यां नासावच्छिन्नवायुसंयोगेन तद्गुणाभिव्यक्त्यङ्गीकारेण संभवादाह—**ञमेति** ॥ तत्रातद्गुणस्वरूपानुपलब्ध्योभयावच्छेदेन वायुसंयोगोत्तरमेव तादृशस्वरूपाभिव्यक्त्याऽविनिगमकेनोभयोः स्थानत्वेन युगपदेवोभयसंबन्ध इत्याह—**विनीति** ॥ यमानुस्वारयोरप्युपलक्षणमिदम् । **'अनुस्वारयमानां च'** इति शिक्षोक्त्या नासिकामात्रस्थानत्वेन तस्या एव तत्र संबन्धात् । तेषां मुखनासिक्यत्वपक्षे पूर्वरीतिरप्यनुसंधेया ॥ छाया ॥

२ नन्वनोरभिहत्येति गत इत्यस्याभिव्यञ्जित इत्यर्थेन द्वितीययोगसंभवः । किं च नासिकादिशब्देन प्रागुक्तस्तद्व्यापारस्तमनु पश्चाद्गतो जात इत्यर्थेन प्रथमयोगस्यापि सर्वत्र संभवोऽत आह—**यथेति** । साधुत्वार्थमसताप्यवयवार्थेन रथंतरादिवद्व्युत्पत्तिरिति भावः ॥ नन्वेवं **भवेदित्यादि—प्रयोजन**मित्यन्तवक्ष्यमाणभाष्यासंगतिः । तत्र हि तद्व्यवहारे सति दोषफलाभावोक्तिर्युक्ता न त्वन्यथेति सूत्रमते प्रागुक्तयोगाश्रयणमावश्यकम् ॥ शिक्षाप्रातिशाख्यादौ लोके च तद्व्यवहारस्य तथैवोपपत्तिरिति प्रागुक्तं सर्वं कैयटयोजनादिकमयुक्तम् । अत एव पूर्वं **'पूर्वः परो वा'** इति कैयटेनोक्तम् **'अन्यतर–'** इत्यादि हर्युक्तं च संगच्छते—इति चेत् ॥ न, आशयानवबोधात् । तथाहि अस्तु तथा योगः, तथापि न तस्य क्रियाशब्दत्वम् । क्रियाप्रवृत्तिनिमित्तकत्वेन प्रसिद्धशब्दघटितत्वं ह्यत्र तत्त्वम् । तत्र तथैव सत्त्वात् । एवं च तत्सामान्यादन्यत्रापि तथैव प्रवृत्तिर्न तु यथाकथंचिद्यौगिके । अत एव **क्रियाशब्देष्वि**त्येवोक्तं कैयटेन न तु यौगिकेष्वेवेति, उद्द्योते च तस्य **क्रियाशब्दत्व**मित्येवोक्तं न तु यौगिकशब्दत्वमिति । किं चोक्तार्थानिष्टत्वे प्रासादवासिशब्दादेरपि समस्तत्वेनैकार्थीभावसत्त्वेन परमार्थतो रूढेरेव सत्त्वेनासंगतिः स्पष्टैव । तस्मादत्र वचनशब्दस्य तादृशस्य तद्वत्सत्त्वान्मुखग्रहणप्रत्याख्यानस्य सुवचत्वेऽपि न सूत्रप्रत्याख्यानं तेन सुवचम् । तस्य तदर्थमुक्तयोगस्यावश्यकत्वेऽप्यतादृशत्वात् । अन्यथा दध्योदनादिशब्दानामपि क्रियान्तर्भावसत्त्वात्क्रियाशब्दत्वापत्तेः । किंच तैत्तिरीयप्रातिशाख्योक्त(२।५०)मुखनासिक्यत्वपक्षेण सूत्रमते निर्वाहेण भाष्यासंगतेरभावादितिदिक् ॥ छाया ॥

३ एवं सर्वेष्टसिद्धावपि प्रागुक्तातिप्रसङ्गं शङ्कते—**भवेदिति** ॥छा.॥

४ इष्टापत्त्या परिहरति—**नैवेत्यादिना** ॥

५ **केवल इति** । तं मनुत इत्यादावनुनासिकोऽनुस्वार एव । न तु ञम्, **'यरोऽनुनासिके'** इत्यादावनु**स्वारस्ये**त्यतः सवर्णपदापकर्षादित्यन्यत्र विस्तरः ॥ छाया ॥

६ इतः प्राक् 'इतरेतराश्रयं तु' इति वार्तिकमपि मुद्रितपुस्तकेषु दृश्यते । तादृशपाठो लिखितपुस्तकेषु न दृष्टचरः । असतः पाठस्य कल्पनायां प्रमाणमपि नास्ति । यत्तु नवेति विभाषासूत्रे 'विप्रतिषिद्धं तु–विप्रतिषिद्धं तु भवति' इति वार्तिकं व्याख्याभाष्यञ्च दृश्यते, तद्वदत्रापि वार्तिकमावश्यकमिति भाष्यशैलीतः प्रतीयत इति वदन्ति । तदनैकान्तिकम्, तेनैव हेतुना इतरेतराश्रयप्रतिपादनपरे वृद्धिसंज्ञासूत्रभाष्ये 'इदं पुनरितरेतराश्रयमेव' इति भाष्यतः प्राक् वार्तिकानुमानं स्यात्, तत्तु न दृश्यते । अतो नैतादृशं वार्तिकमस्तीति प्रामाणिकानां सिद्धान्तः ॥

७ एतदपि वार्तिकमेवेत्याग्रहो मुद्रितपुस्तकेषु । वस्तुतो नैतद्वार्तिकम्, व्याख्याभाष्यस्यात्रानुपलम्भात् । अनुनासिकसंज्ञेत्यादेरस्त्वयमर्थः—अनुनासिकसंज्ञायामितरेतराश्रयप्रसङ्गे यद्वक्तव्यं तत्पूर्वमेव वार्तिककृतोक्तमिति । उक्तमित्यनेन वार्तिककृदुक्तं 'सिद्धं तु नित्यशब्दत्वात्' इत्येव गृह्यते । अत एव तत्र 'इति'शब्दः प्रयुक्तः । अत्रत्येतिशब्देन 'इत्येव वार्तिककृता इतरेतराश्रये उक्तम्, अन्यत्सर्वं भाष्यकृतः' इत्यपि ज्ञायते । अन्यत्रोक्तार्थस्य वार्तिकार्थस्यान्यत्रोपस्थापने उक्तमित्यादिशब्दैः सुस्पष्टं तथा प्रतिपाद्यते, न तु भाष्योक्तपदार्थस्य पुनः प्रदर्शने भाष्यकृतां तथाव्यवहार इति स्पष्टं तद्विदाम् । वृद्धिसंज्ञासूत्रस्थं 'किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम्' इति यदि वार्तिकं स्यात्तर्हि तदुपस्थापकेऽस्मिन्भाष्ये किमर्थं शास्त्रमित्युक्त्वा किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धमित्युक्तमेवेत्यादिकं वक्तव्यं स्यात्, तथा नोक्तमिति नेदं वार्तिकमित्यपि ज्ञेयम् ॥

कथम्?

आङ्स्वायविशेषेणोपदिष्टोऽननुनासिकः । तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता, तस्यानेन निवृत्तिः क्रियते—छन्दस्यचि परत आङोऽननुनासिकस्य प्रसङ्गेऽनुनासिकः साधुर्भवतीति ॥ मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

—•—

( सवर्णसंज्ञाप्रकरणम् )

( ८ सवर्णसंज्ञासूत्रम् ॥ १ । १ । ४ आ. सू. ६ )

## तुल्यास्यप्रयत्नं सवर्णम् ॥ १ । १ । ९ ॥

( तुल्यास्यप्रयत्नपदार्थनिरूपणम् )

( विग्रहदर्शकभाष्यम् )

**तुलया संमितं तुल्यम् । आस्यं च प्रयत्नश्च—आस्यप्रयत्नम् । तुल्यास्यं तुल्यप्रयत्नं च सवर्णसंज्ञं भवति ॥**

( प्रदीपः ) **तुल्यास्यप्रयत्नम्** ॥ ९ ॥ चत्वारोऽत्र पक्षाः संभवन्ति—द्वन्द्वगर्भो बहुव्रीहिः, त्रिपदो बहुव्रीहिः, तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, आस्यप्रयत्नशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिरिति । तत्र द्वन्द्वगर्भो बहुव्रीहिरिति पक्षे वार्तिकस्यावतार इति तमेव भाष्यकारः पूर्वं दर्शयति—**तुलया संमितमिति** । व्युत्पत्त्यर्थमेव तुलोपादीयते । रूढिशब्दस्त्वयं सदृशपर्यायः । यथा—प्रवीणः-कुशलः-प्रतिलोमः-अनुलोम इत्यवयवार्थाभावः, एवं तुल्यशब्देऽपि ॥

( उद्द्योतः ) **तुल्यास्यप्र०** ॥ ९ ॥ **तत्पुरुष इति** । तुल्यास्यशब्दयोर्मयूरव्यंसकादित्वात्पूर्वपदार्थप्रधानस्तत्पुरुषः । आस्यप्रयत्नशब्दयोश्च **साधनं कृतेत्यनेन** समासः ॥ ननु स्थानादिकं न तुलया संमीयतेऽत आह—**व्युत्पत्त्यर्थमेवेति** ॥

( जिज्ञासाभाष्यम् )

**किं पुनरास्यम्?**

( प्रदीपः ) **किं पुनरास्यमिति** । किं मुखम्, अथ तत्र भवं तात्वादिकं स्थानमिति **प्रश्नः** ॥

( उद्द्योतः ) **किं मुखमिति** । तद्धितान्तातद्धितान्तास्यशब्दविषयकसन्देह इत्याशयः ॥

( समाधानभाष्यम् )

**लौकिकमास्यम् । ओष्ठात्प्रभृति प्राक्काकलकात् ॥**

( प्रदीपः ) **लौकिकमिति** । पशुः—अपत्यं-देवता-इत्यादिवत् प्रसिद्धमित्यर्थः ॥ यद्यपि तात्वादिकमपि लौकिकमास्यम्, तथापि तत्र योगवशादास्यशब्दो वर्तत इति झटिति न तत्प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमुक्तम् । तस्यैव च प्राथम्यात् ग्रहणं युक्तमित्यर्थः ॥ **ओष्ठादिति** । **काकलकं** नाम ग्रीवायामुन्नतप्रदेशः ॥

( उद्द्योतः ) तद्धितान्तमपि लौकिकमेव न वैदिकमित्यत आह—**पशुरिति** ॥ **झटिति**—पदश्रवणमात्रेणेत्यर्थः ॥

( आक्षेपभाष्यम् )

**कथं पुनरास्यम्?**

( प्रदीपः ) **कथं पुनरिति** । यदि निमित्तवशात्प्रवर्तते ततस्तात्वादिष्वपि प्रवर्तिष्यत इति **प्रश्नः** ॥

( उद्द्योतः ) **निमित्तवशात्**—अवयवार्थवशात् ॥

---

१ 'तत्रानेन' इति फ. पाठः ॥

२ 'भवति' इत्येवेतिशब्दरहितः पाठः फ. पुस्तके । अत्रेत्येतिशब्दः पूर्ववद्धेत्वर्थः । शास्त्रस्य निवर्तकत्वप्रदर्शनेऽयं हेतुः ॥

३ इतः प्राक् मुद्रितपुस्तकेषु 'किमिदं तुल्यास्य प्रयत्नमिति' इत्यधिकः पाठो दृश्यते, तदुपपादनार्थं च भाष्यकारस्येयं शैली यत् आक्षेपोत्तरमेव समाधानवचनमुपन्यस्यत इति केचिद्वदन्ति; तदुभयमप्यप्रामाणिकम् । तुलयासंमितमित्यादि न समाधानवचनम्, किन्तु वार्तिककृदुपस्थापितपूर्वपक्षावतरणरूपमेतद्भाष्यम् । अतो नात्राक्षेपभाष्यस्यावसरः । एतादृशश्चाक्षेपरहितो भाष्यपाठः 'हल्ङ्याभ्यो दीर्घा—' इत्यादिसूत्रेषूपलभ्यत इति नायं भाष्यपरिपाटीव्यतिक्रमः । अन्यच्च लेखकप्रमादानुमानापेक्षया क्वाप्यनुपलब्धस्य पाठस्य कल्पनमप्यनुचितमेव ॥

४ **आस्यप्रयत्नमिति** । **'जातिरप्राणिनाम्'** इत्येकवद्भावः ॥ छाया ॥

५ द्वन्द्वगर्भबहुव्रीहिं सूचयन्नाह—**तुल्यास्यमिति** ॥ द्वन्द्वान्वितपदार्थस्य प्रत्येकं द्वन्द्वघटकसर्वपदार्थान्वय इति भावः ॥ छाया ॥

६ **त्रिपद इति** । तुल्य आस्ये प्रयत्नो यस्येति व्यधिकरणपद इत्यर्थः ॥ छाया ॥

७ **वार्तिकेति** । **'सवर्णसंज्ञायां भिन्न–'** इति वार्तिकेत्यर्थः । आस्यशब्दो मुखपरः प्रयत्नशब्दो यत्नमात्रपरः, तथैवोक्तत्वात् ॥ छाया ॥ अस्मिन्नेव विग्रहे लौकिकमास्यं प्रयतनञ्च प्रयत्नः । तथा च जबगडदानां सावर्ण्यप्राप्तिसम्भवः । अन्येषु विग्रहेषु तद्धितान्तमास्यमिति भाष्यकृतोक्तत्वान्न जबगडदानां सावर्ण्यसम्भव इति सवर्णसंज्ञायामिति वार्तिकस्याप्रसक्तिरिति द्वन्द्वगर्भो बहुव्रीहिरेव वार्तिकावतरणत्वेन पूर्वं निर्दिश्यते ॥

८ **सदृशेति** । सदृशमात्रेत्यर्थः । **'नौवयोधर्म–'** इत्यादिना व्युत्पादनं त्वसताऽप्यवयवार्थेन साधुत्वायेति भावः ॥ तदेतद्ध्वनयन्नाह—**यथेति** । तत्परिच्छिन्नसुवर्णादेरप्यन्यपरिच्छेदकत्वेन तद्रूपसमानधर्मसंबन्धादन्यत्रापि तत्प्रयोग इति नरसिंहादौ तथा बुद्ध्युदयेऽपि तुल्यशब्देऽन्यत्र प्रयुक्ते तदभावात् । तथा च प्रकृष्टो वीणायाम्, कुशाल्लाँति, लोमान्यनुगतः प्रतिगतश्चेतिवदत्र । एतदर्थमेव **'रूढिशब्दस्तु'** इत्युक्तमिति भावः ॥ छाया ॥

९ तृतीयविग्रहे रूपं साधयति—**तुल्यास्येति** ॥

१० चतुर्थविग्रहे रूपं साधयति—**आस्यप्रयत्नेति** ॥

११ नन्वास्यशब्दस्य मुखे रूढत्वे साधुत्वं न स्यादतोऽवयवार्थस्तत्रावश्यमाश्रयणीयस्तथासत्यावश्यकत्वात्स एवास्तु इत्याशयेनाह—**यदीति** ॥ वस्तुतस्तु रूढेऽपि साधुत्वार्थे का व्युत्पत्तिरिति प्रश्न इति भाष्यव्याख्यानमुचितम् ॥ छाया ॥

( समाधानभाष्यम् )

**अस्यन्त्यनेन वर्णानिति–आस्यम् ॥**

**अन्नमेतदास्यन्दत इति वा–आस्यम् ॥**

( प्रदीपः ) **अस्यन्त्यनेनेति** । सत्यपि निमित्ते रूढिवशान्मुखे एव वर्तते न ताल्वादिष्वित्यर्थः । **'कृत्यल्युट–'** इति करणे ण्यत् । असननमत्रव्यक्तिस्फोटपक्षेऽभिव्यक्तिः, जातिस्फोटपक्षे तूत्पत्तिः ॥ **अन्नमेतदिति** । आङ्पूर्वात्स्यन्दतेः **'अन्येष्वपि दृश्यते'** इति डः । **एतत्**–आस्यं कर्म, **अन्नं** कर्तृ । आस्यन्दते–द्रवीकरोति, अन्नप्रक्षेपेण मुखस्य द्रवत्वोत्पादनात् ।

( उद्द्योतः ) **जातिस्फोटेति** । **'वर्णान्'** इति वर्णपदं बोधकपरम् । तत्र जातेर्बोधकत्वे तस्या नित्यत्वादभिव्यक्तिः–असनं, तदाश्रयव्यक्तीनां वाचकत्वे तु उत्पत्तिरिति भावः । अत एव **वर्णा**निति बहुवचनं सङ्गच्छते । एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिकेति पक्षे तदसङ्गतिः स्पष्टैव ॥ क्वचित्तु **'व्यक्तिस्फोटपक्षेऽभिव्यक्तिः । जातिस्फोटपक्षे तूत्पत्तिः'** इति पाठः ॥ अयमेव सांप्रदायिकः पाठः ॥ **'एकैव व्यक्तिर्वाचिका कत्वादिकं तु ध्वनिनिष्ठं ध्वनिविशेषव्यङ्ग्यं वा । सा च नित्या'** इति व्यक्तिस्फोटवादः, तदाऽभिव्यक्तिः स्पष्टैव । बहुवचनं त्वेकस्यैव बहुरूपत्वादारोपितबहुत्वमादाय नेयम् ॥ **'व्यक्तयोऽनन्ता जन्याश्च । तत्र जातिरेव शक्ता'** इति जातिस्फोटवादः, तदोत्पत्तिरित्यर्थः ॥ **अन्येष्वपीति** । दृशिग्रहणाद्धात्वन्तरादपि स इति भावः ॥

( आक्षेपभाष्यम् )

**अथ कः प्रयत्नः ?**

( प्रदीपः ) **अथ कः प्रयत्न इति** । किं प्रयतनं–प्रयत्नः, अथ प्रारम्भो यत्नस्येति **प्रश्नः** ॥

( समाधानभाष्यम् )

**प्रयतनं प्रयत्नः । प्रपूर्वाद्यततेर्भावसाधनो नङ् प्रत्ययः ॥**

( प्रदीपः ) **भावसाधन इति** । भावेऽभिधेये नङ्प्रत्ययः क्रियते । तेन नशब्दस्येह भावः साधनं भवति ॥

( उद्द्योतः ) ननु साधनशब्देन कारकशक्तिरभिधीयते–इति भावस्य साधनत्वमनुपपन्नमत आह—**भावे इति** ॥ **नङ्**–**'यजयाच–'** इत्यनेन ॥

( आक्षेपभाष्यम् )

**यदि लौकिकमास्यम्, किमास्योपादाने प्रयोजनं सर्वेषां हि तत्तुल्यम्भवति ?**

(प्रदीपः) **किमास्योपादान इति** । आस्य एव सर्ववर्णानां निष्पादादिति भावः ॥ नासिकाऽपि न बाह्या वर्णोत्पत्तिनिमित्तम् । किं तर्हि? आस्यान्तश्चर्म विततमस्ति पणवचर्मवत्, तत्संबद्धा रेखा नासिका । तस्यां वाय्वभिघाताद्वर्णोत्पत्तिः । विसर्जनीयस्यैकीयमतेनोरस्यत्वात्सावर्ण्याभावेऽपि न दोषः ॥

( उद्द्योतः ) ननु तुल्यावास्यप्रयत्नमात्रौ येषां जनकावित्यर्थे नासिकास्थानञङादिनिवृत्त्यर्थमास्योपादानं स्यादत आह—**नासिकाऽपीति** । एवं चास्यग्रहणे कृतेऽपि तद्व्यावृत्तिर्दुरुपपादेति भावः । वस्तुतस्तु अवधारणगर्भसमासे ह्रस्वाकारादिभिर्दीर्घाकारादीनां सावर्ण्यानापत्तिः । तज्जनकवायुसंयोगानामपि तुल्यत्वात् । अवधारणागर्भसमासे त्वनुनासिकव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयः ॥ एवंच नासिकाया बाह्यत्वेऽपि न क्षतिः । अत एव **मुखनासिके**ति सूत्रे मुखं च नासिका चेति–मुखद्वितीया नासिकेति च विग्रह–

१ **अन्नमेतदिति** । अन्नं प्राप्यैतदास्यमास्यन्दते द्रवीभवतीत्यर्थः । तथा च डः कर्तरि ॥ छाया ॥

२ **सत्यपीति** । तस्य व्युत्पत्तिनिमित्तत्वेऽपि न शब्दप्रवृत्तिनिमित्तत्वमिति भावः ॥ छाया ॥

३ 'मत्र जातिस्फोटपक्षेऽभिव्यक्तिः, व्यक्तिस्फोट–' इति च. क. पाठः ॥

४ उभयोर्छेखस्वारस्यात्पक्षान्तरमाह—**एतदिति** ॥ भाष्यस्थवर्णपदानामर्थकथनमात्रमनेन क्रियते । तथाच भाष्यमपि फलितार्थकथनपरं न तु विग्रहपरम् । स त्वास्यन्दते द्रवीक्रियत इति बोध्यः । तथाचान्तर्भावितण्यर्थात्कर्मणि डः । तत्रापिना कारकान्तरस्यापि परिग्रहः ॥ छाया ॥

५ जातिस्फोटपक्षे वर्णानित्यस्यासंगतिं परिहरति—**वर्णानितीति** ॥ छाया ॥

६ **बहुवचनं**–'अस्यन्त्यनेन वर्णान्' इति भाष्यस्थं बहुवचनम् ॥

७ **अथेति** । पक्षान्तरे ॥ छाया ॥

८ आद्यपक्षमेव लोके तयोः पर्यायतया प्रसिद्धेराह—**प्रयतनमिति** । यत्नमात्रमित्यर्थः ॥ छाया ॥

९ **तेनेति** । तस्यार्थप्रयुक्तत्वेन तत्र तस्य प्रयोजकत्वेनेत्यर्थः॥छाया॥

१० सिंहावलोकनन्यायेनाह—**यदीति** ॥ तथाच द्वन्द्वगर्भबहुव्रीहिपक्षो युक्त इति भावः ॥ छाया ॥

११ जातिप्राधान्य एव तेनैकवद्भावाद्दाह—**तुल्याविति** ॥ **सर्वं वाक्यमिति** न्यायेनाह—**मात्राविति** । जनकत्वं षष्ठ्यर्थ इत्याह—**जनकाविति** ॥ **ञमादीति** पाठः । **ञमङ्गादी**ति पाठो वा ॥ आदिना यमानुस्वारयोः, अन्तस्थापञ्चमयुक्तहकारस्य च संग्रहः । अन्त्यस्योरःस्थानकत्वात्तद्भिन्नानां नासिकास्थानकत्वादिति भावः ॥ छाया ॥

१२ **वस्तुतस्त्विति** । नासिका नास्यान्तर्गता किन्तु भिन्ना, मुखनासिकेति सूत्रे मुखनासिकयोर्द्वन्द्वेन निर्देशात्, 'मुखवचनोऽनुनासिक इतीयत्युच्य–' इत्यादिभाष्यस्वारस्याच्चेत्युद्द्योताशयः । प्रदीपे च 'नासिका न बाह्या' इत्यादिग्रन्थेन नासिकाया आस्यान्तर्गतत्वं स्वीक्रियते । तथा च तत्पक्षे मुखनासिकावचन इत्यादिनिर्देशोऽसङ्गतः । मुखवचनोऽनुनासिक इत्यादिभाष्यमपि न स्वारस्येन सङ्गच्छत इति मुखशब्दस्य मुखमात्रपरत्वमाश्रित्य कथञ्चिद्गौण व्यवहारेणोपपादनीयमित्यनयोः सुस्पष्टं मतभेदः ॥

प्रदर्शनं भाष्ये । न तु अवयवावयविविषये एवं प्रयोगः सचेतसाम् ॥ सहस्तो देवदत्त इत्यादौ विद्यमानवाची सहशब्दः । अत एव **मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्रसज्येते**ति भाष्ये 'एव'शब्दः सङ्गच्छते । अन्यथा यमादीनां ङादीनां च मुखवचनत्वात्तदसङ्गतिः स्पष्टैव । आस्यानन्तर्गतत्वे तु न दोषः, मुखमात्रवचनत्वाभावात् । [2]प्रासादवासिन्यायप्रदर्शकभाष्येणापि ध्वनितमेतत् । कैयटोक्तास्यान्तर्गतत्वपक्षे तु सूत्रे मुखपदं मुखावयवपरम् । ब्राह्मणवसिष्ठन्यायेन च नासिकातिरिक्तावयवग्रहणम् । एवकारश्चाप्यर्थः । दृष्टान्तोऽप्येकांशेन बोध्य इति ॥ नन्वे[3]वमपि विसर्जनीयव्यावृत्तये तत्स्यादत आह—**विसर्जनीयस्येति** । ततश्चान्येषां [4]कण्ठादिस्थान एवेति भावः ॥ उरस्यमतेऽप्याह—**सावर्ण्याभावेऽपीति** ॥

( समाधानभाष्यम् )

**[5]वक्ष्यत्येतत्—'प्रयत्नविशेषणमास्योपादानम्'इति॥**

**( प्रदीपः ) वक्ष्यतीति** । नास्य परीक्षाऽवसर इति भावः ॥

**(उद्योतः)** ननु इदानीमेव किं नोच्यतेऽत आह—**[6]नास्येति** ॥

( १३८ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् ॥ * ॥

( भाष्यम् )

**सवर्णसं[7]ज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति—[8]जबगडदशाम् ।**

**किं कारणम् ?**

**प्रयत्नसामान्यात् । एतेषां हि समानः प्रयत्नः ॥**

**( प्रदीपः ) सवर्णसंज्ञायामिति** । द्वन्द्वे प्रयत्नस्यास्येनाविशेषणान्[9]मुखप्रयत्नयोस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः । [10]भाष्ये शकारः प्रत्याहारपाठवशात्पठितः । अत्र प्रत्याहारे जबगडदानां प्राप्नोतीत्यर्थः । शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव । ततश्च 'ऊर्जः' इत्यादौ '**झरो झरि**–' इति लोपप्रसङ्गः ॥

**( उद्योतः )** '[11]**द्वन्द्वे प्रयत्नस्यास्येनाविशेषणात्**' इत्यस्योपयोगश्चिन्त्यः ॥ **अत्रेति** । एतद्वर्णसमूहसाध्यप्रत्याहारे इत्यर्थः । ऊर्ग्= अन्नं, तस्माज्जातः—ऊर्ग्जः ॥

( १३९ न्यासान्तरेण समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ [12]सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ।**

**कथम् ?**

**आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**[13]एवमपि किमास्योपादाने प्रयोजनम्, सर्वेषां हि तत्तुल्यम् ?**

**( प्रदीपः ) एवमपीति** । आस्ये येषां तुल्यो देश इत्यास्येन देशो विशेष्यते । तत्र व्यभिचाराभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः ॥

**( उद्योतः ) आस्ये इति** । देशविशेषणवैयर्थ्याभिप्रायेण **प्रश्न** इति भावः । **न च** नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति **वाच्यम्** । अनुनासि[14]काकारादौ कण्ठादिपु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्म उत्पद्यते–इत्यनुभवेन **वृद्धिरादैच्**सूत्रस्थात्—'**भेदकत्वात् गुण**-

१ **प्रयोग इति** । अत एव **'सामान्यविशेषयोर्द्वन्द्वो न'** इत्यादि भाष्योक्तं संगच्छेत् ॥ व्यभिचाराभासमुद्धरति—**सहस्त इति** ॥ छाया ॥

२ **प्रासादेति** । तस्य व्याप्यव्यापकभावानापन्नविषयकत्वस्य प्रतिपादितत्वात् ॥ छाया ॥

३ **एवमपि**—यमाद्यव्यावर्तकत्वेऽपि । **तत्**—आस्यपदम् ॥ छाया ॥

४ **'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः'** इति शिक्षानुरोधेनाह—**कण्ठादीति** ॥ छाया ॥

५ **वक्ष्यत्येतदिति** । एकस्यैवौपाधिकभेदेन प्रथमपुरुषप्रयोगः, अन्यथोभयत्र भगवत एव कर्तृत्वेनोत्तमपुरुषौचित्यम् ॥ तथा च **गोनर्दीय आहे**तिवत्प्रयोगः ॥ द्वन्द्वगर्भबहुव्रीहौ तस्य तद्विशेषणत्वासंभवादेवमुक्तम् ॥ छाया ॥

६ **नास्येतीति** । इदानीमेतद्विचारे उदासीनता । अन्यथा वार्तिकोत्थितिर्विलम्बिता स्यादिति वार्तिकमुत्थाप्याक्षिप्य तत्समाध्यवसरे तथा वक्ष्यतीति तत्रैव विचारयिष्याम इत्यर्थः ॥ छाया ॥

७ संबन्धिनो वैषयिकाधिकरणत्वविवक्षया सप्तमी ॥ भिन्नदेशेषु भिन्नस्थानेषु वर्ण्येषु स्वस्ववर्ग्याणामाभ्यन्तरप्रयत्नसाम्यात् ॥ अव्याप्तेरभावादाह—**अतिप्रसङ्ग इति** ॥

८ उक्तमेव विवृणोति—**जबगडदेति** । मिथः सावर्ण्यं प्राप्नोतीति शेषः ॥ छाया ॥

९ उपक्रमानुरोधेनाह—**मुखेति** ॥ **प्रयत्नेति** । आभ्यन्तरेत्यर्थः ॥ छाया ॥

१० उपक्रमभाष्ययोजनेऽपि जशामित्युचितम् । अथ सर्वेषां तदापत्तिसूचनाय तथोक्तिरिति चेदेवमपि शकाराधिक्यमत आह—**भाष्ये शकार इति** ॥ छाया ॥

११ सवर्णसंज्ञायामितिप्रतीकस्थकैयटैकदेशं दूषयति—**द्वन्द्व इति** ॥ छाया ॥

१२ वार्तिककृन्न्यासान्तरेण समाधत्ते—**सिद्धं त्विति** ॥ **आस्ये** प्रागुक्ते । न्यासे आर्षमेकवचनमिति सूचयन्नाह—**येषामिति** ॥ छाया ॥

१३ **एवमपि**—तादृशन्यासेऽपि ॥ **सर्वेषामिति** । नसिकास्यान्तर्गतेति मते । उरस्यत्वमते तु न दोष इत्युक्तं प्राक् ॥ छाया ॥

१४ **काकारादौ** । तद्विषये । अनुभवेऽन्वयः ॥ छाया ॥

**स्येति वाच्यम्** । आनुनासिक्यसङ्ग्रहार्थं । तद्यथैकोऽयमात्मा' इत्यादिभाष्यकैयटात् तथैव लाभेन च तेषुं नासिकाया देशत्वाभावस्य क्लृप्तत्वात् आदिष्वपि तथैव--इत्यभिमानात् । देशैपदेन ताल्वादि-स्थानमेवोच्यते-इति जबगडादिषु न दोषः ॥

**( समाधानभाष्यम् )**

**प्रयत्नविशेषणमास्योपादानम् । सन्ति हि आस्याद्वाह्याः प्रयत्नाः, ते हापिता भवन्ति । तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति ।**

**के पुनस्ते ?**

**विवारसंवारौ, श्वासनादौ, घोषवदघोषता, अल्पप्राणता-महाप्राणता-इति ।**

**तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः श्वासानुप्रदाना अघोषाः । एके—अल्पप्राणाः, अपरे—महाप्राणाः ।**

**तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः । एके-अल्पप्राणाः, अपरे-महाप्राणाः ।**

**यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यवर्ज्यम् । आनुनासिक्यमेषामधिको गुणः ॥**

**( प्रदीपः ) प्रयत्नविशेषणमिति** । तस्य संभवव्यभिचारसद्भावादित्यर्थः । बाह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते-स्पृष्टेषत्स्पृष्टताविवृततासंवृतताख्याः ॥

**( उद्योतः )** भाष्ये—**प्रयत्नविशेषणमिति** । **देशैप्रयत्न**-मिति द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः ॥ **स्पृष्टतेत्यादि** । आस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यैकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते । तेषांं चास्यवृत्तित्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजनकत्वेनेति बोध्यम् । **आस्ये**—इत्यस्य 'यत्कार्यं तज्जनकः' इति शेषो वा ॥ भाष्ये—**ते हापिता इति** । सवर्णसंज्ञा स्वनिमित्तत्वेन बाह्यप्रयत्नाञ्जहाति-इति तया ते स्वनिमित्तत्वं हापिता इत्यर्थः ॥ **विवारसंवारौ**=कण्ठबिलस्य विकाससङ्कोचौ । विवृतैः कण्ठो यैः, श्वासोऽनुप्रदीयते यैरित्यर्थः । **एके**-उक्तवाक्ययोः प्रथमोपात्ताः । **नादः**—वर्णोत्पत्त्यनन्तरभावी अनुरणनरूपः शब्दः ॥ **यथा तृतीया** इत्यनेन तेषामल्पप्राणत्वं बोधितम् ॥ देशविशेषणमप्यास्यग्रहणमावश्यकमिति गूढाशयेनाह—भाष्ये—**आनुनासिक्यमेषामधिको गुण इति** । अयं भावः—अत्र देशपदेन ताल्वादिस्थानमुच्यते । स्थानशब्देन च योगरूढ्या वर्णाभिव्यक्तिजनकवायुसंयोगानुयोगि ताल्वाद्युच्यते । तत्र यद्यपि अकारादीनां गुणमात्रजनिका नासिका, स्वरूपस्य कण्ठादिभिरेवाभिव्यक्तिसिद्धेः; तथापि आदीनां स्वरूपस्य न केवलताल्वादिना नापि केवलनासिकयाऽभिव्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात्तेषां नासिकाऽपि स्थानम् । **न चैवं** त्वङ्करोपीत्यादौ चरितार्थं परसवर्णशास्त्रं संयन्तेत्यादौ न प्रवर्तेत । उक्तरीत्या यादीनां नासिकास्थानत्वाभावेन स्थानत आन्तर्याभावादिति **वाच्यम्** । **स्थानेऽन्तरतमे** इति सप्तम्यन्तपाठस्य दूषितत्वेनास्या

१ इति वाच्यमित्यधिकं भाति । ( र॰ ना॰ ) रघुनाथस्य 'अधिकं भाति' इति कथनमयुक्तम्, वृद्धिरादैच्सूत्रस्थस्यार्थतोऽनुवादोऽयम् । तत्र हि 'भेदकत्वाद्गुणस्येति वक्तव्यम्' इत्युच्यते । 'आनुनासिक्यसंग्रहार्थम्' इत्यपि 'सर्वगुणसंग्रहार्थं'इतिप्रदीपानुकरणम् । तद्यथेत्यादि भाष्यस्य ॥

२ **तेषु**-अनुनासिकाकारादिषु ॥ छाया ॥

३ ननु देशशब्देन प्रदेशग्रहणे प्रागुक्तदोष एवात आह—**देशेति** ॥ छाया ॥

४ व्यभिचारस्थलमाह—**सन्तीति** ॥ छाया ॥

५ **णतेतीति** । यद्यप्यत्र भाष्येऽष्टावेवोक्तास्तथापीतिनाऽन्येषामप्युदात्तादीनां सप्तानां संग्रहो बोध्यः । नचोदात्तादीनां तत्त्वे न मानम्, एकस्थानकवर्णनिष्ठानां तेषां प्रयत्नभेदेनैव भेदस्य व्यवस्थापनीयत्वात् । अन्यथा तद्भेदस्य निर्मूलत्वापत्तेः । **अइउण्**सूत्रस्थं भाष्यं ह्रस्वत्वादीनां तत्त्वे मानमित्यन्यत्र स्पष्टम् ॥ यद्यपि घोषाघोषाल्पप्राणमहाप्राणेति प्रयत्नचतुष्टयेनैव प्रक्रियांशनिर्वाहः सुकरस्तथापि शिक्षानुरोधेनान्येषामुक्तिः ॥ छाया ॥

६ **तस्येति** । तत्रेत्यर्थः ॥ **चत्वार इति** । सूत्रमते **नाज्झला**-विति सूत्रेण विवृतत्वव्याख्यानां सवर्णसंज्ञानुपयुक्तत्वबोधनेन तद्रीत्येदम् ॥ **संवृततेति** स्वरूपकथनपरम् ॥ एदैतोरोदौतोश्च न मिथः सावर्ण्यम्, गुणवृद्धिसंज्ञादौ प्रत्याहारद्वयग्रहणवैयर्थ्यापत्तेः ॥ भाष्यमते तु सप्त प्रयत्नाः ॥ छाया ॥

७ ननु तत्पक्षे तुल्यस्थानं—आस्ये तुल्यप्रयत्नं चेत्यर्थस्य लाभेन कथं द्वन्द्वोऽत आह—**देशेति** ॥ छाया ॥ वार्तिके तुल्यदेशप्रयत्नमिति द्वन्द्वः ॥

८ नन्वेषामाभ्यन्तरत्वं स्पृष्टत्वादि च कथमत आह—**आस्यान्तरिति** ॥ छाया ॥

९ तेषां मुख्यतत्त्वाभावादाह—**तेषां चेति** ॥ छाया ॥ **तेषां**—आभ्यन्तरप्रयत्नानाम् ॥

१० व्यस्तत्वेनात्र पक्षेऽसंभवात्पक्षान्तरमाह—**आस्य इति** ॥ छाया ॥

११ **विवृत इति** । विवाराख्यबाह्यप्रयत्नयोगादिति भावः ॥ **श्वास इति** । वर्णनिष्पत्तेरनु पश्चात् प्रदीयते यैरित्यर्थः । विवृते च तस्मिन्पदोपरि वर्तमानाः श्वासा भवन्ति तदनुप्रदानमनुस्वननं घण्टानिर्ह्रादवत् । यथा निर्ह्रादोऽनुस्वननमनु भवति तथेहापीत्याहुः ॥ इदमुभयमग्रेऽपि बोध्यम् । संवृते तस्मिन्निति तु विशेषस्तत्र बोध्यः ॥ छाया ॥

१२ **उक्तेति** । वर्गाणां प्रथमतृतीया इत्यर्थः ॥ तथा च **अपरे** तेषां द्वितीयचतुर्थां बोध्याः ॥ छाया ॥

१३ **अपिना** प्रयत्नविशेषणसमुच्चयः ॥ कण्ठतस्तथानुक्तत्वादाह—**गूढेति** ॥ छाया ॥

१४ **अत्र**—न्यासान्तरे ॥ अनतिप्रसङ्गायाह—**रूढ्येति** ॥ छाया ॥

१५ **तत्र**—अनुनासिकानां मध्ये विषये ॥ **मात्रपदेन** धर्मिव्यावृत्तिः ॥ अत एव तस्यानित्यत्वादाह—**जनिकेति** ॥ छाया ॥

१६ **केवलेति** । गुणविभक्तस्वरूपानुपलम्भादिति भावः ॥ **अपिना** कण्ठादिसमुच्चयः ॥ छाया ॥

युक्तेर्गर्भस्रावात् ॥ [1]अनुनासिकाकारादीनामपि सा स्थानमिति त्वयुक्तमेव । एवं हि उत्पादकसामग्रीभेदात्कङयोरिव स्वरूपभेदस्यैवापत्तौ अभेदकगुणपक्षेऽपि निरनुनासिकैः सानुनासिकग्रहणानापत्तिः । एवं [2]च यावत्स्थानसाम्ये सवर्णसंज्ञा-इति सिद्धान्ते नासिकारूपदेशभेदात्कङादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्यकम् । [3]नासिकाया आस्यान्तर्गतत्वेऽपि **मुखनासिके**तिसूत्रे नासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम् । अन्यथाऽत्र स्थाने एतत्कथनवैयर्थ्यापत्तिः । आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव ह्यत्र प्रक्रान्तम् ॥ [4]**न चेदं** प्रयत्नविशेषणास्यग्रहणव्यावर्त्यमेवास्तु, अनुनासिकयकारादीनां आदिभिः सावर्ण्यं च व्यावर्त्यम्, तत्फलं च तञ्जुङ्वे तन्नमतीत्यादौ **अनुस्वारस्य ययी**त्यनेन यकारलकारयोरनुनासिकयोरभाव इति **वाच्यम्** । अनुस्वारस्य नासिकास्थानत्वेन स्थानतोऽन्तरतमयो[5]रनयोरेव प्रवृत्तेः । अनुनासिकयादीनां तु उक्तरीत्या न नासिका स्थानमित्यदोषात् । इदमेव ध्वनयितुं **गुण** इत्युक्तम् । [6]**गुण**पदेन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते । [7]एवं च तत्सादृश्यादत्रापि गुणशब्दप्रयोगः । अत एव बाह्यप्रयत्नानुपक्रम्या**ऽमोनुनासिका न ह्रावि**ति शिक्षायामुक्तम् । [8]अत **एवोदात्तादिभिः सहैकादश बाह्यप्रयत्ना** इति कैयटो वक्ष्यति । उदात्तादीनामपि वृद्धिसंज्ञासूत्रशेषे गुणत्वेन व्यवहारात् । [9]अत एव **'एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति । बाह्यं ह्यास्यात्स्थानमवर्णस्य' '[10]एवंमपि व्यपदेशो न प्रकल्पते—आस्ये येषां तुल्यो देशः'** इति भाष्यं स्वरसतः सङ्गच्छते । [11]अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाभावेन तदसङ्गतिः स्पष्टैव । आस्येन देशविशेषणाभावान्न दोष इत्येव वक्तव्ये **सर्वमुखे**त्यादिसमाधानस्यापि निर्दलत्वापत्तिश्च ॥ '[12]**एके**' इत्यनेन सर्वमते तु कण्ठस्थानमिति ध्वनयति ॥

( आक्षेपभाष्यम् )

**[13]एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति ।**
**किं कारणम् ?**
**बाह्यं ह्यास्यात्स्थानमवर्णस्य ॥**

( प्रदीपः ) **बाह्यं ह्यास्यादिति** । काकलकस्याधस्तादुपजत्रुस्थानमवर्णस्यैक इच्छन्ति । सति च बाह्यदेशसंभवे तद्व्यवच्छेदायास्येन देशो विशेष्यत इति **प्रश्नः** ॥

( समाधानभाष्यम् )

**[14]सर्वमुखस्थानमवर्णमेक इच्छन्ति ॥**

( प्रदीपः ) **सर्वमुखेति** । [15]अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियत इति नास्य बाह्यस्थानता ॥

( आक्षेपभाष्यम् )

**[16]एवमपि व्यपदेशो न प्रकल्पते—'आस्ये येषां तुल्यो देशः' इति ॥**

---

१ प्राचोक्तं खण्डयति—**अनुनेति** ॥ **अपिना** आदिसमुच्चयः ॥ **सा**–नासिका ॥ **उत्पादकेति** । एकस्थान–स्थानद्वयरूपसामग्रीभेदादित्यर्थः ॥ **स्वरूपेति** । अनुनासिकाननुनासिकयोरित्यर्थः । **अपिना** भेदपक्षसमुच्चयः ॥ छाया ॥

२ प्रकृतमाह—**एवं चेति** । आदीनामुभयस्थानकत्वे चेत्यर्थः ॥ **सिद्धान्ते इति** । वक्ष्यमाणे इति भावः ॥ छाया ॥

३ नन्वेवमपि नेष्टसिद्धिर्नासिकाया आस्यान्तर्गतत्वेन तत्तुल्यत्वाभावादत आह—**नासिकाया इति** ॥ अपिना सिद्धान्तभूततद्बाह्यत्वसमुच्चयः ॥ **ग्रहणेनेति** । मुखपदेनेति भावः ॥ तत्पक्षे तदावश्यकत्वात् ॥ **अन्यथा** । तद्विशेषणत्वानावश्यकत्वे ॥ **अत्र स्थाने इति** । बाह्यप्रयत्नप्रतिपादनावसरे इत्यर्थः ॥ **एतदिति** । आनुनासिक्यमित्येतदित्यर्थः ॥ छाया ॥

४ अन्यथायोजनं खण्डयति—**न चेदमिति** ॥ **एवेन** देशविशेषणव्यवच्छेदः ॥ **आदिभिरिति** । अन्यथा स्थानबाह्यप्रयत्नतौल्यात्स्यादिति भावः ॥ **अनुस्वारस्य ययीत्यनेनेति** । तदनुवर्तने **वा पदान्तस्ये**त्यनेनेत्यर्थः ॥ छाया ॥

५ तत्प्राबल्यादाह—**अनयोरेवेति** । ननु तत्स्थानं तयोरपीति फलमेवात आह—**अनुनेति** ॥ **क्तरीत्येति** । तस्यास्तत्र गुणजनकत्वादित्यर्थः ॥ छाया ॥

६ ननु न तत्र लोकप्रसिद्धगुणत्वमत आह—**गुणेति** । अस्याप्यतिप्रसक्तत्वादाह—**आन्तरेति** ॥ छाया ॥

७ ननु विवाराद्यष्टस्वलोऽन्तर्भूतत्वाद्दोषस्तदवस्थ एवात आह—**एवं चेति** । तेषां तत्त्वे चेत्यर्थः ॥ छाया ॥

८ कैयटसंमतिमप्याह—**अत एवोदात्तेति** ॥ **कैयट** इत्युक्त्वा न्यूनता तस्यापि ध्वनिता । अत्र मूलमाह—**उदात्तेति** ॥ छाया ॥

९ एवमुक्तभाष्येण तस्य देशविशेषणत्वे साधिते भाष्यान्तरमप्यत्र साधकमित्याह—**अत एवेति** । तस्य तद्विशेषणत्वस्याभिमतत्वादेवेत्यर्थः ॥ छाया ॥

१० **वर्णस्ये**त्याद्यग्रे यद्यपि समाधानग्रन्थोऽप्यस्ति तथापि तस्य प्रकृतासाधकत्वादाह—**एवमिति** ॥ छाया ॥

११ **अन्यथा**–तथाभिमतत्वे ॥ मात्रव्यवच्छेद्यमेवाह—**देशेति** ॥ छाया ॥

१२ **एके इत्यनेनेति** । भाष्यकैयटोभयस्थेनेत्यर्थः ॥ तथा च पूर्वपक्षसमाध्योस्तयोरेकदेश्युक्तित्वम् । अत एवाग्रिमभाष्यस्य संमतित्वेनोल्लेखेऽपिशब्दसंगतिश्चेति बोध्यम् ॥ छाया ॥

१३ **एवमप्यवर्णेति** । बाह्यप्रयत्नवारणायास्यग्रहणस्य प्रयत्नविशेषणत्वेऽपि अष्टादशभेदभिन्नस्यावर्णस्य मिथ इत्यर्थः ॥ छाया ॥

१४ यक्षानुरूपबलिन्यायेन मतान्तरमाश्रित्य समाधत्ते—**सर्वमुखेति** ॥ छाया ॥

१५ यत्तु-सर्वाणि मुखान्तर्गतानि स्थानान्यवर्णस्येत्यर्थः । तन्न, तथासति दध्यत्रेत्यादौ सवर्णदीर्घापत्तेः । पित्रर्थमित्यादावीषत्स्पृष्टापत्तेः । चक्री अत्रेत्यादौ शाकलानापत्तेश्च । यणस्तु दध्युदकादिरवकाशस्तदेतद् ध्वनयन्नाह—**अवर्णेति** । भाष्ये बहुव्रीहिरिति भावः ॥ छाया ॥

१६ **एवमपीति** । अवर्णस्य सर्वमुखस्थानकत्वेऽपीत्यर्थः ॥ **व्यपेति** । भेदेन मुख्यो व्यवहार इत्यर्थः ॥ तमभिनयति—**आस्ये येषामिति** । आधाराधेयभावस्य सत्येव भेदे उपपत्तेरिति भावः ॥ छाया ॥

( प्रदीपः ) एवमपीति । अवर्णस्यास्यमेव देशो न त्वास्ये देशः ॥

( समाधानभाष्यम् )

**व्यपदेशिवद्भावेन[1] व्यपदेशो भविष्यति ॥**

( प्रदीपः ) व्यपदेशिवद्भावेनेति । सर्वावस्था[2]युक्तमास्यमास्यशब्देनोच्यते, देशशब्देन तु विशिष्टैवावस्था वर्णोत्पादनहेतुः । तत्र बुद्धिकृतभेदाश्रयो व्यपदेशः ॥

( आक्षेपभाष्यम् )

**सिध्यति[3] । सूत्रं तर्हि भिद्यते ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपस्मारकभाष्यम् )

**ननु चोक्तम्-* सवर्णसंज्ञाया भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् * इति ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**नैष[4] दोषः । न हि लौकिकमास्यम् ।**

**किं तर्हि ?**

**तद्धितान्तमास्यम् । आस्ये भवं-आस्यम्, "शरीरावयवाद्यत्" ।**

**किं पुनरास्ये भवम् ?**

**स्थानं करणं च ॥**

( प्रदीपः ) नहीति । प्राथमकल्पिकमित्यर्थः[5] । यौगिकस्य तु व्यवहितस्य ग्रहणम् ॥ स्थानमिति । ताल्वादि[6] ॥ करणमिति । स्पृष्टतादि, जिह्वाया अग्रोपाग्रमध्यमूलानि वा ॥ यद्येवं प्रयत्नग्रहणं न कर्तव्यं, तस्याप्यास्ये भवत्वादास्यग्रहणेन ग्रहणात् । सत्यमेतत्, प्रत्येकं तु व्यापारनिरासार्थमुभयोरुपादानम् । तेन द्वयोस्तुल्यत्वे[7] सवर्णसंज्ञा भवति ॥

( उद्योतः ) व्यवहितस्येति । यद्यपि रूढिर्योगापहारिणी, तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः ॥ ताल्वादीति । शिक्षायां तेन रूपेणैव वर्णस्थानत्वकथनादिति भावः । एतेन ताल्वादिपूर्वाधरभागभेदादुदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यपास्तम् । आस्यभवशब्देन तद्रूपावच्छिन्नस्यैव ग्रहणेनादोषात् ॥ ननु प्रयत्नपदेनैव तद्[8]ग्रहणसिद्धिरत आह—जिह्वाया अग्रेत्यादि ॥ प्रत्येकं त्विति । प्रत्येकनिरूपितसादृश्यग्रहणनिरासार्थमित्यर्थः । यद्यपि[9] ज्ञापकेनापि प्रत्येकव्यापारनिरासः सुकरः, तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः ॥ तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः प्रयत्नपदमास्यपदेन स्थानमात्र[10]ग्रहणार्थम् । स्थानं करणं चेति भाष्ये करणपदेन वायुसंयोगोऽपि । प्रयत्नग्रहणाच्च नातिप्रसङ्ग इति तात्पर्यम् । अत[11] एव यावत्स्थानैक्यपरेण 'नैतौ तुल्यस्थानौ' इति भाष्येण न विरोध इति दिक् ॥

( आक्षेपभाष्यम् )

**एवमपि[12] प्रयत्नोऽविशेषितो भवति ?**

( प्रदीपः ) अविशेषित इति । आस्येनेत्यर्थः । द्वन्द्व[13]पक्ष एवात्र स्थित इति प्रश्नः । ततश्च बाह्याः प्रयत्ना न त्यक्ताः स्युः ॥

( समाधानभाष्यम् )

**प्रयत्नश्च[14] विशेषितः ।**

**कथम् ?**

**न हि प्रयतनं-प्रयत्नः ।**

**किं तर्हि ?**

**प्रारम्भो यत्नस्य-प्रयत्नः ॥**

( प्रदीपः ) प्रारम्भो यत्नस्येति । तत्र[15] पूर्वं स्पृष्टतादयश्चत्वारः, पश्चान्मूर्द्धनि प्रतिहते-निवृत्ते प्राणाख्ये वायौ विवारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते ॥

( उद्योतः ) भाष्ये—प्रारम्भो यत्नस्येति निर्धारणे षष्ठी,

---

१ आद्यन्तवत्सूत्राविषयत्वादाह—व्यपेति । व्यपदेशिवदेकस्मिन्निति परिभाषयेत्यर्थः ॥ छाया ॥

२ व्यवहारस्य गौणत्वे बीजमाह—सर्वावस्थेति ॥ ता अप्यारोपिता एवेति भावः ॥ छाया ॥

३ एवं न्यासान्तरेऽन्यदोषशून्ये सूत्रभेदमेव दोषमाह पूर्वपक्षी—सिध्यतीति । यद्यपि सिध्यति तर्हि तथापि सूत्रभेदो भवतीत्यर्थः ॥ छाया ॥

४ अदोषे हेतुमाह—नहीति ॥ छाया ॥

५ प्राथमेति । तत्प्रतीतिविषय इत्यर्थः ॥ छाया ॥

६ ताल्वादीति । कण्ठादीत्युचितम् ॥ छाया ॥

७ तुल्यत्वे । तत्रैव ॥ छाया ॥

८ तदिति । स्पृष्टतादीत्यर्थः ॥ छाया ॥

९ कैयटोक्तं दूषयति—यद्यपीति । 'यजुष्येकेषाम्' इति ज्ञापकेनेत्यर्थः ॥ अपिना युक्त्यन्तरसमुच्चयः । तस्य यौगिकत्वेऽपि तन्त्रादिकं विना न युगपदुभयोपस्थितिः, 'सुकृदुच्चरितः' इति न्यायात् । तन्त्रे च न मानम्, द्विवचनादिगमकाभावादेकशेषोऽपि न । स्थानं करणं चेति वस्तुकथनं न तु युगपदनुभवाभिनय इति ॥ छाया ॥

१० मात्रपदेनेतरनिरासः । भाष्ये तु तद्भवं सर्वं प्रदर्श्यते, न त्वत्र तस्य ग्रहणं प्रतिपाद्यते इति न तद्विरोध इति ध्वनयन्नाह—स्थानमिति ॥ अपिना जिह्वाग्रादि ॥ छाया ॥

११ अत्र मानमाह—अत एवेति । तेन स्थानमात्रग्रहणादेवेत्यर्थः । अन्यथा क्वापि तदभावेन तदसंगतिः स्पष्टैव । अत एव वलयोर्न सावर्ण्यम् । अन्यथा तद्वानित्यादौ दोषापत्तिरिति ॥ छाया ॥

१२ एवमपीति । तद्धितान्तास्यशब्दाश्रयणेऽपीत्यर्थः ॥ छाया ॥

१३ द्वन्द्वेति । द्वन्द्वगर्भबहुव्रीहिपक्ष एवेत्यर्थः ॥ ततश्चेति । एवं च शादिभिश्छादीनां सावर्ण्यमग्रे वक्ष्यमाणं स्यादिति भावः ॥ छाया ॥

१४ चोऽप्यर्थे । प्रश्नशब्देनेति भावः ॥ तदेव तदनभिज्ञाशङ्कापूर्वमाह—कथमिति ॥ छाया ॥

१५ तत्र–वर्णाभिव्यक्तिविषये ॥ चत्वार इति । विवृतत्वव्याप्यानामीषद्विवृतत्वविवृततरत्वविवृततमत्वानां नाज्झलाविति सूत्रेण सवर्णसंज्ञानुपयुक्तत्वबोधनमित्याशयः ॥ भाष्यमते तु सप्त प्रयत्नाः ॥ छाया ॥

जातौ चैकवचनम् । **आरम्भ** इति कर्मणि[1] घञ् । यत्नानां मध्ये प्रथमं[2] वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः ॥ अत्रापि[3] नासिकाया अग्रहणमुपपादितरीत्यैवेति बोध्यम् । अत्रेदं बोध्यम्—शब्दप्रयोगेच्छयोत्पन्नयत्नान्नाभिप्रदेशात्प्रेरितो[4] वायुर्वेगान्मूर्धपर्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन्करोति । तत्र[5] ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वात् **'आस्ये प्रयत्नाः'** इत्युच्यन्ते, **'आभ्यन्तराः'** इति **'प्रारम्भः'** इति, च । गलविवरादिविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति ॥ एवं[6] मात्राकालिकत्वादिकमपि वाय्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पवायुं प्रेरयति कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरणरूपं कार्यमास्यबाह्यदेशमिति[7] तस्यापि व्यावृत्तिरास्यपदेनोक्ता **अउण्**सूत्रे भाष्ये ॥ मूर्ध्नि[8] प्रतिहते वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः, पश्चान्निवृत्ते प्राणाख्ये–इत्यन्वयः कैयटे । अत एव—

**"सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।**
**"वर्णाञ्जनयते"**

इति शिक्षया न विरोध इति दिक् ॥

( आक्षेपभाष्यम् )

**यदि[9] प्रारम्भो यत्नस्य-प्रयत्नः, एवमप्यवर्णस्य एङोश्च सवर्णसंज्ञा प्राप्नोति ?**

**( प्रदीपः ) एवमपीति ।** संध्यक्षरेषु प्रथमभागस्याकारेण सादृश्यात्सवर्णसंज्ञाप्राप्तिरिति **प्रश्नः** ॥

**( उद्योतः )** भाष्ये—**यदि प्रारम्भ** इत्यत्र यदीत्यस्य यद्यपीत्यर्थः[10] ॥ **अकारेणेति ।** ततश्च स्वसवर्णाकारस्य तत्र सत्त्वेन तद्वारा तुल्यस्थानत्वेनावर्णैङोः सावर्ण्ये गव्यमित्यत्र **यस्येति** लोपप्रसङ्ग इत्यभिमानः ॥

( समाधानभाष्यम् )

**प्रश्लिष्टावर्णावेतौ ॥**

**( प्रदीपः ) प्रश्लिष्टावर्णाविति ।** नात्र भागविवेकोऽस्ति, पांसूदकवदित्यर्थः[11] ॥

**( उद्योतः ) पांसूदकेति । प्रश्लिष्टा**विलस्य प्रकर्षेण श्लिष्टौ= मिलिताविल्यर्थः । ततश्च तदननुभवेन केवलताल्वादिस्थानकत्वेन च नानयोः सावर्ण्यप्राप्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**अवर्णस्य तर्हि ऐचोश्च सवर्णसंज्ञा प्राप्नोति ॥**

**( प्रदीपः ) अवर्णस्येति ।** विभागोऽत्र सुलक्ष इति **प्रश्नः** ॥ ततश्च नाव्यमित्यत्र[12] **'यस्य–'** इति लोपप्रसङ्गः ॥

**( उद्योतः ) विभागोऽत्रेति ।** एवं च पूर्ववत्तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः ॥

( समाधानभाष्यम् )

**विवृततरावर्णावेतौ ॥**

**( उद्योतः )** भाष्ये एतदुत्तरं—**विवृततरावर्णाविति ।** एवं च तद्द्वारा तयोरपि विवृततरत्वेन प्रयत्नभेदाद्ध्रस्वेन न सावर्ण्यम् । औकारस्य[13] ततोऽपि विवृततरत्वात्तेनाप्यनयोर्न सावर्ण्यं फलाभावश्चेति भावः ॥

( आक्षेपभाष्यम् )

**एतयोरेव[14] तर्हि मिथः सवर्णसंज्ञा प्राप्नोति ॥**

**( प्रदीपः ) एतयोरिति ।** ततश्च **'एत ऐ'** इत्यौकारोऽपि स्यात्, भाव्यमानस्यापि क्वचित्सवर्णग्रहणदर्शनात् ॥

**( उद्योतः ) एतयोरेवेति ।** यत्किंचित्[15]स्थानसाम्ये सवर्णसंज्ञेत्यभिमानः ॥ क्वचित्—**अदसोऽसेर्दादु दो म** इत्यादौ ॥

( समाधानभाष्यम् )

**नैतौ तुल्यस्थानौ ॥**

---

१ **कर्मणीति । अकर्तरीत्यनेनेति** भावः ॥ छाया ॥

२ प्रशब्दार्थमाह—**प्रथममिति** ॥ तद्व्याचष्टे—**वर्णोत्पत्तेरिति** ॥ आरम्भपदार्थमाह—**रभ्येति** ॥ छाया ॥

३ **अत्रापि**–तद्धितान्तास्यशब्दग्रहणेऽपि ॥ छाया ॥

४ **यत्नादिति ।** तदिच्छावन्मनोभिहतकायाग्निनेति शेषः ॥ **तत इति ।** अग्रे मार्गाभावात् ॥ **निवृत्त इति ।** वक्रं प्राप्येति शेषः ॥ **यत्नविशेषेति ।** उक्तयत्नेत्यर्थः ॥ छाया ॥

५ **तत्र**–तयोर्मध्ये । स्वतस्तयोस्तत्त्वस्य दुरुपपादत्वादाह—**ये इति । उच्यन्ते** इत्यस्य स्थलत्रयेऽपि संबन्धः ॥ छाया ॥

६ बाह्यानामेकादशोक्तिरुपलक्षणम्—तेन ह्रस्वत्वादेरानुनासिक्यस्यापि च संग्रह इति ध्वनयन्नाह—**एवमिति** ॥ छाया ॥

७ **बाह्यदेशमितीति** । तदपि बाह्यमिति शेषः ॥ इदं समूलयति—**तस्यापीति** ॥ ह्रस्वत्वादिजनकयत्नस्यापीत्यर्थः ॥ **व्यावृत्तिरिति ।** आस्यविशेषणेन सवर्णसंज्ञासूत्रेऽग्रहणमित्यर्थः ॥ छाया ॥

८ यथाश्रुतग्रन्थस्य शिक्षाविरुद्धत्वादाह—**मूर्ध्नीति** ॥ शेषपूरणमावश्यकमाह—**वर्णोत्पत्तेरिति** ॥ छाया ॥

९ यथाश्रुतेऽनुपपत्तेराह—**यदीति** ॥ **एङोश्चेति** । मिथ इति भावः ॥ छाया ॥

१० **त्यर्थ इति ।** एतेन **एवमपी**त्यस्य तथापीत्यर्थः सूचितः ॥ **भिमान इति ।** अनेन—एचां सभागत्वं पूर्वपक्ष्यभिमतं······ पुनस्तत्त्वस्य खण्डितत्वेनाखण्डत्वस्य प्रतिपादितत्वान्न दोष इत्यरुचिः सूचिता ॥ छाया ॥

११ ननु प्रश्लिष्टनिर्दिष्टानामपि वर्णानां स्वप्रयुक्तकार्यदर्शनात्स्यादेव संज्ञाऽत आह—**पांसूदकवदिति** ॥ छाया ॥

१२ **नाव्यमिति ।** अत्र पूर्वभागस्यैव तत्सदृशत्वं पूर्वपक्ष्यभिमतम् । उभयत्र तथोक्तिस्वारस्यात् । अत एव पूर्वं प्रथमभागस्येति कैयटेनोक्तम् । एवं च **यस्येति** लोप औकारस्योचितः ॥ छाया ॥

१३ वर्णपदस्वारस्येन भाष्याभिप्रायमाह—**आकारस्येति** ॥

१४ **एतयोरेवेति ।** एङैचोश्चेत्यर्थः ॥ एवकारेणावर्णव्यवच्छेदः ॥

१५ **यत्किंचिदिति ।** आभ्यन्तरप्रयत्ने सतीत्यादि ॥ अत एव **स्थानेन्तरेत्यनेनेदानीमनिर्वाहः** ॥ छाया ॥

**( उद्योतः )** भाष्ये—**नैतौ तुल्यस्थानाविति** । तोर्लीति परसवर्णरहिततद्ग्रहणात्तामितिनिर्देशात् यावत्स्थानसाम्यमत्र विवक्षितमिति भावः ॥ यत्त्वेषां समुदितं स्थानमिति । तन्न । "दन्त्योष्ठ्यो वः स्मृतो बुधैः । ए ऐ तु कण्ठ्यतालव्यौ" इति शिक्षायां प्रत्येकं **तत्र भव** इत्यधिकारस्थयदनापत्तेः । **दन्तोष्ठ्य** इति पाठस्त्वसङ्गतः, शरीरावयवसमुदायस्य शरीरावयवत्वाभावात्, स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववत् । स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठे भव इत्याद्युपपत्तिः ॥ शरीरे मे वेदनेत्यप्येवमेवेति दिक् ॥

**( आक्षेपभाष्यम् )**

**उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति ॥**

**( उद्योतः )** भाष्ये—**उदात्तादीनां तर्हीति** । यावत्स्थानैक्यवत् यावत्प्रयत्नैक्यविवक्षणादिति भावः ॥

**( समाधानभाष्यम् )**

**अभेदका उदात्तादयः ॥**

**( प्रदीपः ) अभेदका इति** । लिङ्गेनैतत्प्रतिपादितम्—**न शास्त्रे एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्त** इति, तेन प्रारम्भभेदेऽप्युदात्तादीनां मिथः सवर्णसंज्ञा भविष्यति ॥

**( उद्योतः ) स्वशब्दाः**=उदात्तादिशब्दाः । एवं चात्र प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति भावः ॥

**( एकदेशिभाष्यम् )**

**अथवा किं न एतेन-प्रारम्भो यत्नस्य प्रयत्न इति ?**

**किं तर्हि ?**

**प्रयतनमेव-प्रयत्नः । तदेव च तद्धितान्तमास्यम् । यत्समानं तदाश्रयिष्यामः ।**

**किं सति भेदे ?**

**सतीत्याह । सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम् ।**

**कुत एतत् ?**

**भेदाधिष्ठाना हि सवर्णसंज्ञा, यदि हि यत्र सर्वं समानं तत्र स्यात्, सवर्णसंज्ञावचनमनर्थकं स्यात् ॥**

**( प्रदीपः ) यत्समानमिति** । स्पृष्टत्वस्य समानत्वाद्वर्गाणां बाह्यप्रयत्नभेदेऽपि सवर्णसंज्ञा भविष्यति ॥ **किं सतीति** । स्पृष्टताद्यभेदाद्विवारादिभेदेऽपि यथा भवति तथा स्पृष्टतादिभेदेऽपि विवाराद्यभेदात्प्राप्नोतीति **प्रश्नः** ॥ **सत्येवेति** । **'झरो झरि'** इत्येवान्यथा ब्रूयात् । यथासंख्यनिरासार्थं हि तत्र सवर्णग्रहणं कृतं 'शिण्ढि' इत्यत्र ङकारस्य ढकारे परतो लोपार्थम् । यदि च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्यात्, ङकारढकारयोर्भेदात्सवर्णत्वं नास्तीति सवर्णग्रहणमनर्थकं स्यात् ॥

**( उद्योतः )** भाष्ये—**उदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यस्य आस्येन प्रयत्नोऽविशेषित** इत्यस्य च समाध्यन्तरमाहैकदेशी—**अथवा किं न एतेनेति** । नः=अस्माकम्, एतेन=प्रारम्भो यत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन किमित्यर्थः । क्लिष्टत्वादिति भावः ॥ **बाह्यप्रयत्नभेदेऽपीति** । एवमुदात्तादिभेदेऽपि भविष्यतीत्यपि बोध्यम् ॥ यद्यपि सवर्णसंज्ञाया न प्रयत्नभेदगर्भत्वं, तथापि ज्ञापकादेतदर्थसिद्धिरित्याह—**झरोझरीति** ॥ भाष्ये—**सत्येव हि भेदे इति** । यत्किञ्चित्प्रयत्नभेदे सत्येवेत्यर्थः ॥ **कुत एतदिति** । सूत्राक्षरैस्तदलाभ इति **प्रश्नः** ॥

समाधत्ते—**भेदाधिष्ठाना हीति** । यत्किञ्चित्प्रयत्नभेदेत्यर्थः ॥ तत्र ज्ञापकमाह—**यदि हीति** । **सवर्णसंज्ञावचन**मित्यस्य सवर्णपदोच्चारणमित्यर्थः । संज्ञा तु—**अणुदित्सवर्णस्ये**त्याद्यर्थमावश्यिकेति बोध्यम् ॥ **भेदादिति** । बाह्यप्रयत्नभेदादित्यर्थः ॥ नन्वेवं यत्किञ्चित्स्थानैक्यादेकारौकारयोः सावर्ण्यापत्तिरिति चेन्न । ज्ञापकात्प्रयत्नांशे यावत्प्रयत्नसमानत्वत्यागेऽपि स्थानांशे तत्त्यागे मानाभाव इत्याशयात्, **यंजुष्येकेषा**मित्यादिनिर्देशैः स्थानांशे यावत्स्थानतुल्यत्वविवक्षणाच्च ॥

---

१ **उदात्तादीनामिति** । आदिनाऽनुदात्तस्वरितह्रस्वदीर्घप्लुतचतुर्मात्रानुनासिकपरिग्रहः ॥ छाया ॥

२ **प्रयत्नैक्येति** । आभ्यन्तरप्रयत्नैक्येत्यर्थः । उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वेन तेषामाभ्यन्तरत्वादिति भावः ॥ छाया ॥

३ तत्त्वेऽप्यत्र प्रयत्नशब्देनाग्रहणप्रतिपादनायाह—**अभेदका इति** । अन्यथा गुणत्वोक्तिरसंगता स्यादिति भावः ॥ छाया ॥

४ **लिङ्गेनैतदिति** । **अनङुदात्त** इत्यादि ज्ञापकेनेत्यर्थः ॥ **तेनेति** । उदात्तादिशब्दैर्विना बोधितानां तेषामनङुदात्त इत्यनेन तदनुवादस्यात्रोदात्तादिषु गुणशब्देन कृतत्वेनात्राग्रहणेनाविवक्षा तथा सवर्णसंज्ञानुपयुक्तत्वान्तरतमपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणितत्वेनेत्यर्थः ॥ **प्रारम्भेति** । वस्तुतस्तत्त्वादाभ्यन्तरप्रयत्नभेदेऽपीत्यर्थः ॥ छाया ॥

५ कैयटादेरज्ञानाय पूर्वमुक्ताभेदका इति समाध्यनन्तरं **'अथवा—'** इति भाष्योक्तिस्वारस्येनाह—**उदात्तेति** । **'अथवा यत्समानम्'** इत्येवं सति वाच्ये **'किं न'** इत्यादिमध्यग्रन्थस्वारस्येन **'यदि तर्हि—'** इत्यादि वक्ष्यमाणसिद्धान्तिग्रन्थस्वारस्येन च कैयटाभिमतमाह—**आस्येनेति** ॥ दोषस्य स्फुटत्वादस्यैकदेश्युक्तित्वम् । तद्व्याचष्टे—**नोऽस्माकमिति** । अस्यापि निर्दिष्टत्वादाह—**क्लिष्टेति** ॥ एतेन—**'अथवा यत्समानं तदाश्रयिष्यामः । एवं सति नोऽस्माकं प्रारम्भो यत्नस्य प्रयत्न इत्यनेनापि किम् । किं तर्हि प्रयतनमेव प्रयत्नः, तदेव च तद्धितान्तमास्यमित्येवास्तु'** इति भाष्ययोजना सूचिता। एवं च भाष्यीयाद्यशङ्कोत्तराशयोऽयम् । अत एवैतन्न्यूनतानिरासाय तदृष्टान्तेन द्वितीयशङ्कोत्तराशयमाह—**एवमिति** ॥ छाया ॥

६ यथाश्रुतभाष्यार्थस्तु नेत्याह—**संज्ञा त्विति** ॥ छाया ॥

७ **एवं**—यत्किञ्चित्प्रयत्नैक्याङ्गीकारेण तदङ्गीकारे ॥ छाया ॥

८ तत्र ज्ञापकमप्याह—**यजुष्येकेषामिति** ॥ छाया ॥

यत्तु[1] तुल्यत्वस्य भेदघटितत्वात्सवर्णसंज्ञा भेदाधिष्ठानेत्यर्थ इति । तन्न । तेन[2] सावर्ण्यनियामकप्रयत्नयोः स्थानयोश्च परस्परभेदलाभेऽपि वर्णानां यत्किञ्चित्प्रयत्नभेदस्य ततोऽलाभात् स्थाना[3]नामनन्ततस्तत्तत्कालरूपोपाधिभेदेन भेदो बोध्यः ॥

( सिद्धान्तिन आक्षेपभाष्यम् )

**यदि तर्हि 'सति भेदे किंचित्समानम्' इतिकृत्वा सवर्णसंज्ञा भविष्यति । शकार-छकारयोः षकार-ठकारयोः सकार-थकारयोः सवर्णसंज्ञा प्राप्नोति । एतेषां हि सर्वमन्यत्समानं करणवर्जम् ॥**

( प्रदीपः ) **सर्वमिति । 'वर्गा[4]णां प्रथमद्वितीयाः'** इत्यस्यां शिक्षायां पठितमघोषत्वादि । करणं तु भिन्नं, वर्गाणां स्पृष्टत्वादूष्मणां च विवृतत्वात् । सति सवर्णत्वे निश्छद्म निष्ठुरं निस्स्थानं मधुलिट्स्थानमित्यत्र **'झरोझरि'** इति लोपः प्राप्नोतीति । छद्मनो निष्क्रान्तमिति[5] प्रादिसमासः । **'अनचि च'** इति शकारस्य द्विर्वचनम् ॥

**( उद्द्योतः )** भाष्ये—**यदि तर्हि सति भेदे**-इत्यादि सिद्धान्तिवचः ॥ **शकारछकारयोरिति** । तस्मा[6]दप्रारम्भो यत्नस्येति आवश्यकमिति भावः ॥ **ननु** निश्छद्मेत्यत्र हलः परत्वाभावात्कथं लोपप्राप्तिरत आह—**अनचि चेति** ॥

( एकदेशिसमाधानभाष्यम् )

**एवं तर्हि—प्रयतनमेव—प्रयत्नः, तदेव तद्धितान्तमास्यम् । न त्वयं द्वन्द्वः-आस्यं च प्रयत्नश्च आस्यप्रयत्नमिति ।**

**किं तर्हि ?**

**त्रिपदोऽयं बहुव्रीहिः—तुल्य आस्ये प्रयत्न एषामिति ॥**

( प्रदीपः ) **तुल्य आस्य इति** । तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेति **'अमूर्द्धमस्तकात्'** इत्यलुङ् भवति । तद्धितान्तास्यशब्दाश्रयणसामर्थ्यादेव 'आस्ये' इत्येकत्वं विवक्ष्यते । तेनैकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्नः-इति आश्रीयते ॥

**( उद्द्योतः )** तत्रै[7]कदेशी प्रौढ्या समाधानमाह—**एवं तर्हीत्यादि** ॥ **स्वाङ्गवाच्येवेति** । **अमूर्धे**त्यादिपर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनःश्रुतिरवधारणार्थेति भावः ॥ **संज्ञायामित्यनुवृत्तेर्न**[8] दोष **इत्यन्ये** ॥ नन्वे[9]वं भिन्नस्थानानामपि स्यादत आह—**तद्धितान्तास्येति** । आ[10]स्यपदोपादानसामर्थ्याच्च तद्ग्रह इति भावः ॥ **एकत्वं विवक्ष्यत इति** । तद्विवक्षां विनाऽपि प्रत्यासत्त्या प्रयत्नयोरेकास्यभववृत्तित्वलाभ **इत्यन्ये** ॥

( भाष्यम् )

**अथवा पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः-तुल्य आस्ये-तुल्यास्यः, तुल्यास्यः प्रयत्न एषामिति ॥**

( प्रदीपः ) **अथवेति । मयूरव्यंसका**दित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः ॥

( भाष्यम् )

**अथवा—परस्तत्पुरुषस्ततो बहुव्रीहिः—आस्ये प्रयत्नः-आस्यप्रयत्नः, तुल्य आस्यप्रयत्नो येषामिति ॥**

**( उद्द्योतः )** त्रिपदे[11]बहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातापत्तेः पूर्वपदार्थप्रधानतत्पुरुषस्याप्यगतिकगतित्वाद्भाष्ये तृतीय आश्रितः ॥

( इति तुल्यास्यप्रयत्नशब्दार्थनिरूपणम् ॥ )

---

**( अथानिष्टसावर्ण्यनिराकरणम् )**

**( १४० आक्षेपवार्तिकम् ॥ ३ ॥ )**

**॥ * ॥ तस्य ॥ * ॥**

( भाष्यम् )

**तस्येति तु वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्यात् । अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत्-इति ॥**

( प्रदीपः ) **तस्येति** । यत्तदोर्नित्याभिसंबन्धादाह—**यो यस्येति** । अन्यथा[12] वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे[13] तदाश्रयमन्यस्यापि कार्यं प्राप्नोति । सूत्रारम्भस्तु रेफोष्मणां निवृत्त्यर्थः स्यात् ॥

**( उद्द्योतः ) रेफोष्मेति । रेफोष्मणां सवर्णा न सन्ती**त्युक्तेरिति भावः ॥

---

१ दण्ड्याद्युक्तिं निराचष्टे—**यत्त्विति** ॥ छाया ॥

२ यक्षानुरूपो बलिरिति न्यायेनाह—**तेनेति** ॥ छाया ॥

३ ननु स्थानानां न स्वतो भेदोऽत आह—**स्थानानामिति** ॥ तत्तत्कार्यगतभेदारोपस्य संभवादाह—**अनन्त इति** ॥ छाया ॥

४ अन्यत्पदसमभिव्याहारेण सर्वपदस्य संकोच इति तमाह—**वर्गाणामिति** ॥ छाया ॥

५ **इति**—इत्यत्र ॥

६ वक्ष्यमाणस्यासिद्धान्तत्वादाह—**तस्मादिति** ॥ छाया ॥

७ **तत्र**—उक्तपूर्वपक्षे ॥

८ आवश्यकयुक्त्या लघुतया निर्वाहमाह—**संज्ञायामिति** । **'हलदन्तात्सप्तम्याः संज्ञायाम्'** इत्यत इति भावः ॥

९ **एवं**—तुल्यत्वस्य स्थानविशेषणत्वाभावे ॥ छाया ॥

१० ननु तत्रैव किं मानमत आह—**आस्येति** । अन्यथोक्तरीत्या तदानर्थक्यं स्पष्टमेव ॥ **तद्ग्रहः**—तद्धितान्तत्वग्रहः ॥

११ द्वयोः क्रमेणारुची आह—**त्रिपदेति ॥ पूर्वपदार्थेति । मयू**रेत्यादि कैयटोक्तेत्यर्थः ॥ **तृतीय इति** । अथवा पर इतीत्यर्थः ॥ छाया ॥

१२ **अन्यथा**—तस्येत्यस्याभावे ॥ छाया ॥

१३ 'सवर्णत्वे लब्धे तदा—' इति च. पाठः ॥

( १४१ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ तस्यावचनं वचनप्रामाण्यात् ॥ * ॥

( भाष्यम् )

तस्येति न वक्तव्यम् ।

अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मान्न भवति ?

'वचनप्रामाण्यात्' । सवर्णसंज्ञावचनसामर्थ्यात् । यदि हि अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात् सवर्णसंज्ञावचनमनर्थकं स्यात् ॥

( प्रदीपः ) तस्यावचनमिति । 'तस्य' इत्ययमनुकरणशब्दः, 'तस्य'इत्यस्यावचनमित्यर्थः ॥ सवर्णसंज्ञावचनमिति । न च रेफोष्मणां निवृत्त्यर्थं वचनं, रेफस्यापि रेफः सवर्णो भवत्येव । एवमूष्मसु द्रष्टव्यम् ॥

( उद्योतः ) तस्यावचनमिति वार्तिके तच्छब्देन कस्य परामर्शोऽत आह—तस्येत्ययमिति । तस्यावचनमित्यत्र षष्ठीतत्पुरुष इति भावः । एवं च स्यो न विभक्तिरिति लुगभावः ॥ वस्तुतस्तच्छब्देन पूर्वोक्तस्य तस्यशब्दस्य परामर्श इति वक्तुं युक्तम् ॥ रेफस्यापीति । रेफोष्मणामित्येतत् विजातीयसवर्णाभावप्रतिपादनपरमित्यर्थः । तत्र रेफांशे तुल्यास्यप्रयत्नासंभव एव, ऊष्मसु तु नाऽज्झलाविति निषेधादिति बोध्यम् । एवं च व्यावर्त्याभावेन सवर्णसंज्ञावचनसामर्थ्यात् 'यस्य-तस्य' इति लप्स्यत इति भावः ॥

( १४२ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ संबन्धिशब्दैर्वा तुल्यम् ॥ * ॥

( भाष्यम् )

संबन्धिशब्दैर्वा पुनस्तुल्यमेतत् । तद्यथा-संबन्धिशब्दाः 'मातरि वर्तितव्यम्' 'पितरि शुश्रूषितव्यम्' इति, न चोच्यते—'स्वस्यां मातरि' 'स्वस्मिन् वा पितरि' इति । संबन्धाच्चैतद्गम्यते—या यस्य माता, यश्च यस्य पितेति ॥

एवमिहापि-"तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्र संबन्धिशब्दावेतौ, तत्र संबन्धादेतद्गन्तव्यम्—यत्प्रति यत्तुल्यास्यप्रयत्नं तत्प्रति तत्सवर्णसंज्ञं भवतीति ॥

( प्रदीपः ) एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन परिहर्तुमाह—संबन्धिशब्दैरिति ॥ संबन्धिशब्दाविति । तुल्यास्यप्रयत्नशब्दस्य संबन्धिशब्दत्वात्तत्समानार्थोऽपि प्रदेशवाक्येषूपात्तः सवर्णशब्दः संबन्धिशब्दः । यथा-तुल्याय कन्या दातव्या-इत्युक्ते न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददाति, अपि त्वात्मना । तथेहापीत्यर्थः ॥

( उद्योतः ) ननु सवर्ण इति संज्ञाशब्दस्य कथं संबन्धिशब्दत्वमत आह—तुल्यास्येत्यादि । स्वार्थभिन्नप्रतियोगिकसंबन्धनिमित्तशब्दः संबन्धिशब्द इति भावः ॥

परे तु अत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दाविलत्यर्थौ भाष्यस्य । सवर्णशब्दो हि प्रदेशेऽपि सवर्णपदवत्परः, न तु तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य संबन्धिशब्दत्वं दुरुपपादम् । उपक्रमोपसंहाराभ्यां चैवमेवोचितम् ॥ उपक्रमे हि तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवतीत्युक्तमित्याहुः ॥

( अथ ऋऌवर्णयोः सावर्ण्यम् )

( १४३ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ ऋकारऌकारयोः सवर्णविधिः ॥ * ॥

( भाष्यम् )

ऋकारऌकारयोः सवर्णसंज्ञा विधेया । होतृ-ऌकारः-होतॄकारः ।

किं प्रयोजनम् ?

"अकः सवर्णे दीर्घः" इति दीर्घत्वं यथा स्यात् ॥

( प्रदीपः ) ऋकारऌकारयोरिति । स्थानभेदान्न प्राप्नोतीत्यारम्भः ॥ अत्र चानयोरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते, न त्वेतयोरन्येन सहेति बोद्धव्यम् ॥

( उद्योतः ) (भाष्ये) ऋकारऌकारयोरित्यत्र ऋत्यक इति प्रकृतिभावः । वार्तिकेऽप्येवमेव पाठ इति प्रामाणिकाः ॥ सावर्ण्यप्रतियोग्यनिर्देशादाह—अत्र चेति ॥ भाष्ये-होतृ ऌकारः-होतॄकार इति । ऌकारशब्दो देवतावाचीत्येके ॥ विवृतस्य ऌकारस्य दीर्घस्याभावादॄकारो दीर्घ उदाहृत इति बोध्यम् ॥

( सावर्ण्यखण्डनभाष्यम् )

नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत्—"*सवर्णदीर्घत्वे ऋति ॠ वा वचनम्-" "*ऌति ॡ वा वचनम्*" इति ॥

( प्रदीपः ) वक्ष्यत्येतदिति । तत्र 'ॡ वा वचनम्' इत्यत्र दीर्घ इत्यनुवर्तते । तत्र ऌति ऌशब्दे विकल्पितेऽप्राप्त एव

१ षष्ठीति । तस्येत्यस्यावचनमितीत्यर्थः ॥ एवं च-अनुकरणत्वे च ॥ स्यो न विभक्तिरिति ॥ अस्यवामीयमितिवदिति भावः ॥ छाया ॥

२ प्रतिपत्तिलाघवादाह—वस्तुतस्त्विति ॥ छाया ॥

३ भाष्यविरोधं परिहरति—रेफोष्मेति ॥ स च द्वेधेत्याह—तत्रेति । तयोर्मध्य इत्यर्थः ॥ एवं च-तेषां सजातीयसवर्णत्वे च ॥ छाया ॥

४ अन्यथा भाष्यं योजयन् कैयटं दूषयति—परे त्विति ॥ छाया ॥

अत्र सूत्रे-सवर्णसंज्ञासूत्रे ॥

५ अत्र हेतुमाह—सवर्णेति । हि-यतः । एवमग्रेऽपि ॥ तस्य संज्ञाशब्दत्वादाह—सवर्णपदेति । अपिनैतत्परिग्रहः ॥ युक्तत्वमस्याह—उपेति ॥ छाया ॥

६ इत्यत्र-व्याख्यानग्रन्थे ॥ अत एवाह—वार्तिकेऽप्येवमिति ॥ छाया ॥

७ तत्र-तस्मिन् सति ॥ छाया ॥

पक्षे दीर्घो भविष्यति । स च भवन् ऌवर्णस्य दीर्घाभावादृवर्णस्यान्तरतमो दीर्घ ॠकारो भविष्यति ॥

( उद्द्योतः ) नैतदस्तीति । सवर्णसंज्ञाया इति शेषः ॥ नन्वीषत्स्पृष्टेन मुक्तेऽपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभोऽत आह—तत्रेति[1] ॥

( सावर्ण्यमण्डनभाष्यम् )

**तत्सवर्णे यथा स्यात् । इह मा भूत्-दध्यॢकारः, मध्वॢकार इति ॥**

( प्रदीपः ) तत्सवर्ण इति । यद्यविधाय सवर्णसंज्ञां तदुच्यते, अग्मात्रस्य ऌति तत्कार्यं स्यात्-दध्यॢकार इति । तस्माद्विधेया सवर्णसंज्ञा ॥

( उद्द्योतः ) भाष्ये-तद्वचनद्वयारम्भेऽपि सवर्णसंज्ञाऽऽवश्यकीत्याह—तत्सवर्णे इति ॥ अग्मात्रस्येति । अनग्ग्यावृत्त्यर्थमक इति वर्तते, सवर्णसंज्ञा[3]ऽभावात्सवर्ण इति नानुवर्तेत इति भावः ॥

( सावर्ण्यखण्डनभाष्यम् )

**यदेतत्सवर्णदीर्घत्वे 'ऋति' इति एतत् 'ऋतः' इति वक्ष्यामि । ततः—"ऌति" । ऌकारे वा ऌ भवति, ऋत इत्येव ॥**

( प्रदीपः ) ऋत इति वक्ष्यामीति । ऋकारस्य ऋकार एव सवर्ण इति ऋत्येव भविष्यति । ततः "ऌति" । ऋत इत्येव । इदं चासवर्णार्थम् । तेन ऌति रूपद्वयं सिद्धम् । तत्रासंहितायामृकारे होतृ ऋकार इति रूपम्, संहितायामपि 'ऋत्यकः' इति शाकलप्रकृतिभाव एतदेव रूपम् । शाकलाभावे 'होतॄकारः' 'होतृकारः' इति रूपद्वयम् । ऌकारेऽसंहितायां संहितायां वा शाकले होतृऌकार इति रूपम् । शाकलाभावे तु होतॄकारो होतॢकार इति रूपद्वयम् ॥

( उद्द्योतः ) खण्डयति—यदेतदिति-भाष्ये ॥ सवर्ण इतीति । आद्यवार्तिके सवर्णसंज्ञाऽनुवर्तते इति भावः ॥ तेन ऌतीति । सिद्धान्तेऽपि व्यवस्थितविभाषया-अनभिधानेन वा होतृ ऌकारे पूर्ववार्तिकं गमॢ ऌकारे चोत्तरवार्तिकं न प्रवर्तते । एवं कॄ इति दीर्घस्य ऋकारे परे पूर्वस्य, तस्यैव ऌकारे उत्तरस्य चाप्रवृत्तिस्तत एवेति भावः ॥ रूपद्वयमिति । ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भावः ॥ तत्रासंहितायामिति । समासे संहिता नित्या । असमासे त्वीदृशं रूपं दुर्लभं, होतृशब्दे विभक्तिश्रवणापत्तेः । होतृशब्दस्य नपुंसके संबुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम् ॥ भाष्ये तु होतृऌकार इति दीर्घप्रवृत्तियोग्यदशोच्चारणम् ॥ इतिस्थिते इति शेषः । [10]एवं शाकले होतृऌकार इत्यपि चिन्त्यं, सवर्णत्वविधायकवचनाभावे एतद्विचारसत्त्वेन तत्र ऋत्यक इत्यस्याप्राप्तेः । इकोऽसवर्णे इत्यपि 'न समासे' इति निषिद्धम् । नित्य[11]ग्रहणं तु तत्र भाष्ये प्रत्याख्यातमित्याहुः ॥

( सावर्ण्यमण्डनभाष्यम् )

**तन्न वक्तव्यं भवति ॥**

( प्रदीपः ) तन्न वक्तव्यमिति । द्वावप्येतौ दीर्घौ 'ॠ ॡ' इति । तत्र ऋकारे कदाचित् 'ॠ' इति दीर्घः कदाचित् ॠ । ऌकारेऽपि 'ॠ' 'ॡ' इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भावः ॥

( उद्द्योतः ) सवर्णसंज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न कार्यमित्याह—भाष्ये—तन्न वक्तव्यमिति ॥

( सावर्ण्यखण्डनभाष्यम् )

**अवश्यं तद्वक्तव्यम् । ऊकालोऽच् ह्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते । न च 'ॠ'कार 'ॡ'कारो वाऽजस्ति ॥**

( प्रदीपः ) न चेति । अर्धतृतीयमात्रत्वादिति केचिदाहुः । अन्ये तु ईषत्स्पृष्टकरणत्वात्, अनयोॠकारॡकारयोश्च विवृतत्वात्ताभ्यां तयोरग्रहणादनच्त्वमाहुः ॥

( उद्द्योतः ) इतर आह—अवश्यमिति ॥ अर्धतृतीयेति । [12]तावताऽपि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह—ईषत्स्पृष्टेति । विवृत[13]त्वाभावे उपस्थितरेफीयप्रयत्नत्यागे मानाभावादिति भावः ॥ ताभ्यामिति । असावर्ण्यादिति भावः ॥

( सावर्ण्यमण्डनभाष्यम् )

**ॠकारस्य ॡकारस्य चाच्त्वं वक्ष्यामि ।**

**तच्चावश्यं वक्तव्यम्, प्लुतो यथा स्यात् । होतृ ऋकारः-होतॄकारः, होतृ३कारः । होतृ ऌकारः-होतॢकारः, होतॢ३कार इति ॥**

( प्रदीपः ) अच्त्वं वक्ष्यामीति । सत्यच्त्वे दीर्घसंज्ञाऽनयोर्भविष्यति । येषां तु मतमर्धतृतीयमात्रावेताविति, तेषां मते

---

१ तत्रेतीति । तयोर्मध्य इत्यर्थः ॥ छाया ॥

२ तत्-वचनद्वयम् ॥ छाया ॥

३ संज्ञाभावादित्यत्राकारप्रश्लेषः ॥ सवर्ण इतीति । एतत्सूचनायैव भाष्ये सवर्णदीर्घत्व ऋतीत्युक्तम् । सवर्णनिमित्तकदीर्घविधायकसूत्रस्थवार्तिक इति तदर्थः ॥ छाया ॥

४ अस्याः पङ्क्तेः पाठो बहुषु पुस्तकेषु न दृश्यते ॥

५ 'सवर्णग्रहणमनु' इति च. झ. पाठः ॥

६ सिद्धान्तेऽपीति । यथास्थितवार्तिकपाठेऽपीत्यर्थः ॥ तासां परिगणितत्वादाह—अनभीति ॥ छाया ॥

७ एवं-तद्वत् ॥ तस्यैव-कॄ इति दीर्घस्यैव ॥ तत एव-अनभिधानादेव ॥ छाया ॥

८ कैयटं दूषयति—समास इत्यादिना ॥ क्लिष्टमिति । तस्य पुंस्त्वादिति भावः ॥ छाया ॥

९ भाष्यासंगतिं परिहरति—भाष्ये त्विति ॥ छाया ॥

१० अग्रिमं दूषयति—एवमिति ॥ सवर्णत्वेति । सवर्णसंज्ञेत्यर्थः ॥ छाया ॥

११ ननु तन्नित्यसमासे-इत्यत आह—नित्येति ॥ छाया ॥

१२ तावतापि । अर्धतृतीयमात्रत्वेऽपि ॥ ताभ्यां-'तयोः' इति शेषः ॥ छाया ॥

१३ ईषत्स्पृष्टत्वे बीजमाह—विवृतत्वेति ॥ छाया ॥

सत्यप्यच्त्वे द्विमात्रत्वाभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति । तस्माद्विमात्रावेतावभ्युपगन्तव्यौ ॥ **तच्चावश्यमिति** । त्वयाऽपि **'ऋवा वचनं ऌवा वचनं'** इति ब्रुवताऽच्त्वमनयोर्वक्तव्यम् । अन्यथा विधानमात्रमनयोः स्यात्, नाच्कार्यं प्लुतः । सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद्ग्रहणे सति प्लुतसंज्ञा भविष्यतीति प्लुतसिद्धिः ॥

**( उद्द्योतः )** भाष्ये—वचनद्वयप्रत्याख्यानवाद्याह—**ऋकारस्येत्यादि** ॥ **सत्यच्त्वे इति** । [1]अयोगवाहेषु पाठादिति भावः ॥ **नाच्कार्यमिति** । [2]तस्य प्लुतसंज्ञा तत्स्थाने प्लुतश्चेति भावः ॥

**( आक्षेपभाष्यम् )**

**किं पुनरत्र ज्यायः ?**

**( प्रदीपः ) किं पुनरिति** । एकैकस्मिन्संहितायां शाकलाभावपक्षे रूपद्वयं साध्यम् । तच्चोभयथाऽपि सिध्यति । [3]तत्र सवर्णसंज्ञायामसत्यां यथा सिध्यति तथा पूर्वमेवोक्तम् । सत्यां तु यथा सिध्यति [4]तथोच्यते—द्वयोर्ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त 'ऋ' भवति कदाचिद्विवृत ऋकारः । ऌकारेऽपि कदाचिदृकारान्तरतमः 'ऋकारः' कदाचिद् ऌकारान्तरतम ऌकार इति साम्यमुभयोः पक्षयोः ॥

**( उद्द्योतः )** अत्र पक्षेऽपि [5]उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्वऋकारऌकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः पक्षयोस्तुल्यफलता चेति बोध्यम् । तदेव ध्वनयन् पृच्छति—भाष्ये—**किं पुनरत्रेति** ॥ **ऋकार इति** । विवृत इत्यर्थः ॥ **ऌकार इति** । ईषत्स्पृष्ट इत्यर्थः ॥

**( समाधानभाष्यम् )**

**[6]सवर्णसंज्ञावचनमेव ज्यायः, दीर्घत्वं[7] चैव हि सिद्धं भवति । अपि च ऋकारग्रहणे ऌकारग्रहणं संनिहितं भवति । "ऋत्यकः"-खट्वऋश्यः, मालऋश्यः । इदमपि सिद्धं भवति—खट्वऌकारः, मालऌकार इति ॥ "वा सुप्यापिशलेः"- उपर्कारीयति, उपार्कारीयति । इदमपि सिद्धं भवति—उपल्कारीयति, उपाल्कारीयति ॥**

**( उद्द्योतः )** भाष्ये—**दीर्घत्वं चैव हीति** । ईषत्स्पृष्टविवृतरूपो दीर्घो वर्ण इत्यर्थः ॥ [8]**खट्व-ऌकार इति** । होतृऌकार इत्यस्याप्युपलक्षणम् ॥

**( एकदेशिन आक्षेपभाष्यम् )**

**यदि तर्हि ऋकारग्रहणे ऌकारग्रहणं संनिहितं भवति, "उरण्रपरः" ऌकारस्यापि रपरत्वं प्राप्नोति ॥**

**( समाधानभाष्यम् )**

**ऌकारस्य लपरत्वं वक्ष्यामि । तच्चावश्यं वक्तव्यम् । असत्यां सवर्णसंज्ञायां विध्यर्थम् । तदेव सत्यां रेफबाधनार्थं भविष्यति ॥**

**(प्रदीपः) लपरत्वमिति** । व्याख्यास्यामीत्यर्थः ॥ **'रपरः'** इत्यत्र **'र'** इति लकाराकारेण प्रत्याहार आश्रीयते । [10]तत्रान्तरतम्यादृकारस्याण् रपरो भवति, ऌकारस्याण् लपर इति ॥ **असत्यामिति** । [11]असत्यां सवर्णसंज्ञायां **'उरण् रपरः'** इत्यत्र ऌकारग्रहणं कर्तव्यं भवति ॥

**(उद्द्योतः)** वचनस्य काप्यदर्शनादाह—**व्याख्यास्यामीति** । [12]**अन्ये** तु लण्सूत्रस्थाकारस्यानुनासिकत्वेऽतो ऌान्तस्येत्यत्र भगवान्पाणिनिर्लकारं नोच्चारयेत्, प्रत्याहारेणैव निर्वाहात् । तस्मादपूर्वं वचनं कार्यमित्येव भाष्याशय उचित इत्याहुः ॥ **आन्तरेति** । रश्रुते रपरो लश्रुतेर्लपर इत्यर्थः ॥ सवर्णसंज्ञावादी तदभाववादिनं प्रति तवाप्यावश्यकं तदित्याह—**तच्चावश्यमिति** । लकारस्याण् लपर इत्येतत् ॥

**( एकदेशिन आक्षेपभाष्यम् )**

**[13]इह तर्हि—"रषाभ्यां नो णः समानपदे" इत्यृकारग्रहणं चोदितं मातॄणां पितॄणामित्येवमर्थम् । तदिहापि प्राप्नोति—क्लृप्यमानं पश्येति ।**

---

१ न वाचनिकमच्त्वमित्याह—**अयोगेति** ॥ अनेन तयोरच्त्वं संपादयितुमयोगवाहेषु पाठं करिष्यामीति भाष्यार्थः सूचितः ॥ छाया ॥

२ प्लुत इत्यस्यार्थद्वयमाह—**तस्येति** । जातावेकवचनम् । तयोरित्यर्थः ॥ एवं च भाष्यस्थप्लुतशब्दस्याप्यर्थद्वयं बोध्यमिति सूचितम् ॥ छाया ॥

३ **तत्र**–तयोर्मध्ये ॥ **इह तु**–सवर्णसंज्ञापक्षे तु ॥ छाया ॥

४ **'अकः सवर्णे दीर्घ** इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टैकासंभवाद्विकल्पः । यश्चान्तरतमो नासौ दीर्घो यश्च दीर्घो नासावन्तरतम इति' इति मुद्रितपुस्तकेषु 'तथोच्यते' इत्युत्तरमधिकः पाठः ॥

५ **उक्तयुक्त्येति** । व्यवस्थितविभाषयाऽनभिधानेन वेत्यर्थः ॥ **'व्यवस्थितेति** । अनभिधानेनेत्यपि बोध्यम् ॥' इति च्छायायां दर्शनाद् **व्यवस्थितविभाषया** इत्येवात्र पाठो भवेदित्यनुमीयते ॥

दाधिमथाः ॥

६ सिद्धान्ती समाधत्ते—**सवर्णसंज्ञेति** ॥ वचनद्वयारम्भे गौरवस्य स्पष्टत्वात् ॥ फलान्तरमपि सवर्णसंज्ञाया अस्तीत्याह—**अपि चेति** ॥

७ **दीर्घत्वमिति** । **हि**–यतो वचनद्वयं तत्र दीर्घानुवृत्तिं विना दीर्घत्वं सिद्धमेव भवतीत्यर्थः ॥ छाया ॥ 'दीर्घत्वे' इति घ. पाठः ॥

८ **खट्वऋश्य इत्यादि** । ङ्यापोरिति ह्रस्वः ॥ छाया ॥

९ 'तद्व्याचष्टे' इति प. पाठः ॥

१० **तत्र**–तयोर्मध्ये ॥ छाया ॥

११ ननु स्थानिन एवासत्त्वात्कथं तस्य तत्त्वमत आह—**असत्यामिति** ॥ छाया ॥

१२ इदं दूषयति—**अन्ये त्विति** ॥ छाया ॥

१३ सवर्णसंज्ञावादिमते तदभाववादी दोषमाह—**इह तर्हीति** ॥ **इति**–इत्यत्र ॥ **तत्**–तस्मात् ॥ छाया ॥

( प्रतिबन्दीभाष्यम् )

**अथासत्यामपि सवर्णसंज्ञायाम्, इह कस्मान्न भवति—प्रक्लृप्यमानं पश्येति ॥**

( प्रदीपः ) **प्रक्लृप्यमानमिति । 'कृत्यचः'** इति णत्वप्रसङ्गः ॥

( प्रतिबन्दीसमाधानेनाक्षेपनिरासभाष्यम् )

**"चुटुतुलशर्व्यवाये न*" इति वक्ष्यामि ॥**

**अपर आह—"त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये न" इति वक्ष्यामीति । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऌकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यति ॥**

( प्रदीपः ) **त्रिभिश्चेति ।** पूर्वस्मादयं विशेषः—पूर्वत्र शरन्तर्भूतोऽपि षकारः साक्षाण्णत्वनिमित्तत्वात् व्यवधायकत्वेन नाश्रीयते । इह तु तस्यानुपादानमेवँ ॥ **वर्णैकदेशा इति ।** अवयँवस्य स्वव्यापारानिवर्तनात् । अग्रहणपक्षे तु क्षुभ्नादेराकृतिगणत्वाण्णत्वाभावः ॥

( उद्योतः ) **साक्षादिति । रषाभ्यामिति** वचनादित्यर्थः ॥ नन्वँत्र लकाराभाव इत्यत आह—भाष्ये—**वर्णैकदेशा इत्यादि ॥ अग्रहणपक्षे त्विति ।** प्रक्लृप्यमानमित्यत्र क्लृप्यमानमित्यत्र चेति भावः । आद्ये **कृत्यच** इति, द्वितीये **ऋवर्णान्नस्येति** प्राप्तिः ॥

( सिद्धान्तोपसंहारभाष्यम् )

**यँद्येवं, नार्थो रषाभ्यां णत्वे ऋकारग्रहणेन । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऋकारे रेफः, तदाश्रयं णत्वं भविष्यति ॥**

( प्रदीपः ) ऋँदितां ऌदितां च भेदेनानुबन्धनिर्देशात् भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाभावात्संकराभावः ॥ ९ ॥

( उद्योतः ) **भेदेनेति ।** ओणृ गम्लृ इति भेदेनानुबन्धनिर्देशः । **'नाग्लोपिशास्वृदितां' 'पुषादिद्युताद्यॢदित'** इति च भेदेनोपादानमित्यर्थः ॥ ९ ॥



१ संज्ञावादी आह—**अथेति** ॥ छाया ॥

२ **च**—उक्तसमुच्चये ॥ तदिदं चोभयं वक्तव्यमिति भावः ॥ छाया ॥

३ **मेवेति ।** इतीति शेषः ॥ छाया ॥

४ ग्रहणे बीजमाह—**अवयवेति ॥** अवयवान्तर्भूतस्याप्यवयवस्य स्वव्यापारकरणसामर्थ्याङ्गीकारादित्यर्थः ॥ छाया ॥

५ **नन्वत्रेति ।** तथाचोक्तवचनेनापि नेष्टसिद्धिरिति भावः ॥छाया॥

६ संज्ञावादी लाघवमन्यदप्याह—**यद्येवमिति ॥** ग्रहणपक्षाङ्गीकारे इत्यर्थः ॥ **रषाभ्यामिति ।** णत्वविधायके रषाभ्यामित्यत्रेत्यर्थः ॥ एवं सवर्णसंज्ञापक्षः समर्थितो भगवता ॥ छाया ॥

७ सवर्णसंज्ञायामतिप्रसक्तं संकरदोषमुद्धरति—**ऋदितामिति ॥** छाया ॥

८ **नाग्लोपीति ।** घटकलशादिवत्पर्यायवचनत्वं तु न एकेनैवेष्टसिद्ध्या प्रक्रियायां तथा करणानौचित्यात् । न हि संदेहाच्छास्त्रप्रवृत्तिरुचितेति भावः ॥ छाया ॥

( ९ संज्ञानिषेधसूत्रं ॥ परिभाषासूत्रं वा ॥ १।१।४आ. ७ ॥ )

# नाज्झलौ ॥ १ । १ । १० ॥

( शकारसावर्ण्यनिषेधनिराकरणम् )

( १४४ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् ॥ * ॥

( भाष्यम् )

**अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति ।**

**किं कारणम् ?**

**अज्झल्त्वात् । अच्चैव हि शकारो हल्च ।**

**कथं तावदच्त्वम् ?**

**इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम् ।**

**हल्षु चोपदेशाद्धल्त्वम् ॥**

( प्रदीपः ) **नाज्झलौ ॥ १० ॥** अकारहकारयोरिकारशकारयोश्चँ तुल्यस्थानप्रयत्नत्वात्सवर्णसंज्ञा प्राप्ता निषिध्यते । अत एव च निर्देशादचामज्भिर्हलां हल्भिः सवर्णत्वानिषेधः ॥ **अज्झलोरिति ।** प्रकृतत्वात् सवर्णसंज्ञाया इति बोद्धव्यम् ॥ **शकारप्रतिषेध इति ।** द्विवँचनान्तस्य समासः, भेदाधिष्ठानत्वात्सवर्णसंज्ञायाः ॥ **इकार इति ।** अत्र हि सूत्रे **'अच्'** इतीकारो गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति । स्वात्मनि क्रियाविरोधादस्मिन्नेव सूत्र इदं न व्याप्रियत इति सवर्णत्वनिषेध इकारशकारयोर्नास्ति । **'यस्येति च'** इत्यादौ तु शकार इकारेण न गृह्यते, अनेन सवर्णत्वनिषेधात् । इह तु स्वात्मनि व्यापारो नास्ति, अस्ति च पूर्वेण सवर्णत्वमिकारशकारयोरिति भावः । **प्रकल्प्य चापवादविषयमिति** न्यायोऽत्र नास्ति, अपवादस्यैवासंपत्त्या ॥

( उद्योतः ) **नाज्झलौ ॥ १० ॥ अकारेत्यादि ।** एवंच

९ चेन ऋकारषकारादिग्रहणम् ॥ अस्य निषेधस्य विशेषप्रवृत्तस्य संकोचे मानाभावात् । अन्यथाऽन्यत्रानिष्टापत्तेः । **'ऋष्यन्धक'** इत्यादिगमकमप्यविशेषप्रवृत्तौ । ज्ञापकादेव तत्र सिद्धिरिति तु न, तथा सति **ऋदुशनस्पुरुद**मित्यादिनिर्देशेन ज्ञापकेनाकारहकारादिष्वपि निर्वाहे सूत्रस्यैव वाऽनारभ्यतापत्तेः ॥ छाया ॥

१० **द्विवचनान्तस्येति ।** शकारयोः प्रतिषेधः—**शकारप्रतिषेध** इति । अचपदोपात्तशकारस्य हल्पदोपात्तशकारेण **सवर्णसंज्ञायाः** प्रतिषेधः प्राप्नोति । 'नाच्' इति सवर्णदीर्घनिर्देशात् अचामज्भिर्न सावर्ण्यनिषेधो न वा हलां हल्भिः, किन्तु अचां हल्भिः सावर्ण्यनिषेध इति सूत्रार्थः ॥

हरिरित्यादौ[1] दीर्घः, शयनमित्यादौ यणापत्तिरिति भावः ॥ **अत एवेति ।** पूर्वसवर्णदीर्घनिर्देशादित्यर्थः । किं[3] चैवं सति **'अकः सवर्णे'** इति **'झरो झरि सवर्णे'** इत्यस्यासङ्गतिरित्यपि बोध्यम् ॥ **भेदाधिष्ठानत्वादिति ।** व्यक्त्यैक्ये हि तुल्यास्यप्रयत्नत्वासंभव इति भावः ॥ **सवर्णग्रहणेनेति—**भाष्ये । सवर्णग्राहकेणाणुदित्सूत्रेणेत्यर्थः ॥ **अत्र हि सूत्रे इति ।** उच्चारितस्यैव[4] प्रत्यायकतामत्रत्यपूर्वपक्षी **न** जानाति, प्रत्याहारेषु जातिग्रहणमिति च न जानाति ॥ ननु सति सवर्णत्वे इकारः शकारं गृह्णीयात् । तदेव च न, **नाज्झलाविति** निषेधादत आह—**स्वात्मनीति ।** यद्यपि **स्वाध्यायोऽध्येतव्य** इत्यात्मानमपि विषयीकरोतीति एकस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तरमन्यत्र निषेधेऽपि स्ववाक्यार्थबोधात्प्राक् स्वघटकपदार्थोपस्थितिवेलायां स्ववाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावान्नत्रिकारशकारयोस्तदभावबोधनमिति भावः ॥ **अपवादस्यैवासंपत्त्येति । अपवादस्य नाज्झलावित्यस्यासंपत्त्या** प्रार्ग्बोधाभावेन स्वविषयेऽप्राप्त्यैतद्घटकपदोपस्थितयोरिकारशकारयोर्नापवादविषयत्वमित्यर्थः ॥

**( वार्तिकांशावतरणभाष्यम् )**

**तत्र को दोषः ?**

( १४५ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्र सवर्णलोपे दोषः ॥ * ॥**

**( भाष्यम् )**

**तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि—"झरो झरि सवर्णे" इति लोपो न प्राप्नोति ॥**

( प्रदीपः ) **परश्शतानीति ।** शतात्पराणि शताधिकानीत्यर्थः । **'कर्तृकरणे कृता बहुलम्'** इति बहुलवचनात्समासः । **पारस्करादि**त्वात्सुडागमः, सकारस्य श्चुत्वम् , **'अनचि च'** इति द्विर्वचनम् । **'झरो झरि'** इति लोपाप्रसङ्गात् त्रिशकारकश्रवणप्रसङ्गः । **'शरोऽचि—अनचि च'** इत्यत्र इकारेण शकारो न गृह्यते, अनेन सवर्णत्वनिषेधात्—इत्यस्ति शकारस्य द्विर्वचनम् ॥

( उद्योतः ) **बहुलेति ।** मयूरव्यंसकादित्वात्सुप्सुपेति[9] वा समास इत्युचितम् ॥ ननु कथं शस्य द्वित्वम्, **अचि** नेति **शरोऽचीति**[10] वा निषेधापत्तेरत आह—**शरोऽचीति** ॥

---

१ आद्यादिना दधि शीतलमित्यादिपरिग्रहः । द्वितीयादिना दधि षष्ठमित्यादिपरिग्रहः ॥ छाया ॥

२ **सवर्णदीर्घपूर्वसवर्णेति** पाठः । क्वचित् **सवर्णदीर्घनिर्देशा**दित्येव पाठः । तत्र झल एव निर्दिष्टत्वेन पूर्वसवर्णस्यैवासंभवेन तस्य तत्त्वासंभवात्तथोक्तमिति बोध्यम् ॥ **पूर्वसवर्णदीर्घनिर्देशा**दिति पाठेऽपीमामेवारुचिं पूर्वत्र बोधयन्पूर्वनिपातवैपरीत्यं कृतवानिति न कोपि दोष इति बोध्यम् ॥ छाया ॥

३ निर्देशस्य सौत्रत्वादेवोपपत्तौ कैयटस्थचसंग्राह्यमाह—**किं चैवमिति ॥** उक्तवाक्याङ्गीकार इत्यर्थः ॥ क्रमेणोभयत्र ज्ञापकमाह—**अक इत्यादि ॥ इति—**इत्यस्य ॥ **इत्यस्य—**इत्यस्य च ॥ **अणुदित्सूत्रं** तु न ज्ञापकं, हल्ग्रहणेनैव साफल्यात् । तन्निषेधरूपैककार्यान्वयसत्त्वेन द्वन्द्वोपपत्त्या तस्यापि न गमकत्वम् ॥ छाया ॥ यत्तु **नाणशला**वित्येव कुतो न सूत्रितमिति ॥ तन्न । कर्तृषट्कं दधिसान्द्रमित्याद्यसिद्ध्यापत्तेः । ऋकारलकारयोरनण्त्वात् । ग्रहणकशास्त्रातिरिक्ते पूर्व एवाणित्युक्तत्वात् ॥ अस्तु वा परोऽण् तथापि अजपेक्षया व्यक्तिगौरवमेव स्यादिति अज्ग्रहणमपनीयाण्ग्रहणं क्रियतामिति शङ्काया गर्भस्रावेण गतत्वात् ॥ शलंशे तु व्यक्तिलाघवे सत्यपि वर्णोच्चारणे विशेषो नास्तीत्युत्तरम् ॥ शब्दकौस्तुभः ॥ **नाकूशला**विति तु न सूत्रितम् । अविशेषात् । एवमप्युकारवैयर्थ्यात् । तेन तस्य तदप्राप्तिः ॥ छाया ॥

४ अत्रत्यपूर्वपक्षस्यैकदेश्युक्तित्वमाह—**उच्चारितेति ॥** स्पष्टत्वाय **न जानातीत्य**स्य पुनरुक्तिः ॥ छाया ॥

५ 'वाक्यार्थरूपसाव' इति घ. पाठः ॥

६ **प्राक्—**पदार्थोपस्थितिवेलायाम् ॥ तात्पर्यार्थमाह—**एतदिति ॥** छाया ॥

७ **पारेति ।** संज्ञेयम् । अत एव **'कार्याणि'** इति संज्ञिन उल्लेखो भाष्ये ॥ असंज्ञात्वे तु पृषोदरादित्वात्सुट् बोध्यः ॥ **त्रिशकारकेति ।** सर्वदेत्यादिः । रूपेत्यन्तः ॥ छाया ॥

८ एवं च 'परस्कोटीनि परस्लक्षाणि परसयुतानि' इत्येवमेव रूपाणि बोध्यानि ॥ न च 'परोरजसे' इत्यार्षप्रयोगे 'परोरजांसि' इति कविप्रयोगे रुत्वोत्वयोः सिद्ध्यै सुगागम एव किं न कल्प्यते । 'परश्शतानि' इति तु **"वा शरि"** इत्यस्य वैकल्पिकत्वेन विसर्गाभावे सत्वे श्चुत्वे च सिद्धमिति परोयुतानि परोलक्षाणि परःकोटीनि इत्येवंरूपाण्येव भवन्तीति वाच्यम् । उपस्कृतादौ विसर्गापत्तिपरिहारायावश्यकटित्वस्य **"सुट्कात्पूर्वः"** इति सुट एव प्रकृतत्वेन सुकः कल्पनायां निर्मूलत्वापातात् । अत एव **"परोक्षे लिट्"** इति सूत्रभाष्ये परोक्षपदसिद्धये

**"परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम् ।**
**उत्वं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात् ॥"**

इति प्रकारत्रयाङ्गीकारक्लेशोऽङ्गीकृतः ॥ वैकल्पिकेषु भावानुष्ठानस्यैवाङ्गीकृतत्वेन सत्त्वानुपपत्तेः । वैदिके प्रयोगे तु वर्णव्यत्ययेन सकलेष्टसिद्धिः । वैदिकप्रयोगमनुसृत्य प्रयुञ्जानाः कवयस्तु प्रत्यवयन्त्येव । तथाचोक्तम् **'छन्दोवत्कवयः कुर्वन्ति नैषेष्टिः'** इति केचित् ॥ दाधिमथाः ॥ **वस्तुतस्तु** पारस्करादित्वात्सुट् संज्ञायामेव प्रवर्तते । 'परस्कोटीनि' इत्यादीनां संज्ञाशब्दत्वे तादृशानामभिधाने वा युज्येत वक्तुमेतत् । 'परोक्षे' इत्ययं न संज्ञाशब्द इति तत्सिद्ध्यर्थं प्रकारत्रयाङ्गीकारो युज्यते । परोरजांसीत्यादिप्रयोगाणाञ्च संज्ञात्वं नाभिमतमिति पृषोदरादित्वात्सुटि निराबाधानि तानीति वैदिकप्रयोगप्रसाधनार्थं वर्णव्यत्ययपरिश्रमो विफल एव ॥

९ बाहुलकस्य सर्वथाऽगतित्वादाह—**मयूरेति ॥** असमानाधिकरणे तदप्रवृत्तेराह—**सुप्सुपेतीति ॥** राजदन्तादित्वात्परनिपात इति बोध्यम् ॥ छाया ॥

१० तस्य पर्युदासत्वे आह—**शरोऽचीति ।** अनिष्टत्वादाह—**आपत्तेरिति ॥** प्रसज्यप्रतिषेधस्यैव सिद्धान्तत्वमन्यत्र स्फुटमिति न तथावतरणं किंतु प्रतिपदोक्तत्वादाह—**शरोऽचीत्येवमिति** सर्वथा कैयटासंगतिरेवेति बोध्यम् ॥ छाया ॥

( १४६ समाधानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ [1]सिद्धमनच्त्वात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ।

कथम् ?

अनच्त्वात् ।

कथमनच्त्वम् ?

"[2]स्पृष्टं स्पर्शानां करणं" । "ईषत्स्पृष्टमन्तस्थानाम्" । "विवृतमूष्मणाम्" ईषदित्यनुवर्तते ॥ "स्वराणां च" विवृतम्, ईषदिति निवृत्तम् ॥

( प्रदीपः ) **सिद्धमनच्त्वादिति** । सूत्रप्रत्याख्यानसाधारणमुक्तम् । प्रयत्न[3]भेदादज्झलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः ॥

( उद्योतः ) ननु प्रयत्नभेदेनानच्त्वे [4]सूत्रमेव व्यर्थं स्यादत आह—**सूत्रेति** ॥ भाष्ये-**ईषदित्येति** । [5]एङैचोः परस्परसावर्ण्याभावाय विवृतत्वव्याप्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमतेऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एव ज्यायान् । किं[6]च दीर्घप्लुताकारहकारयोः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः ॥

( १४७ समाधानान्तरवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ वा[7]क्यापरिसमाप्तेर्वा ॥ * ॥

( भाष्यम् )

वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतम् ।

किमिदं वाक्यापरिसमाप्तेरिति ?

वर्णानामुपदेशस्तावत् । उपदेशोत्तरकाला-इत्संज्ञा । इत्संज्ञोत्तरकालः "आदिरन्त्येन सहेता" इति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालं "अणुदित्सवर्णस्य चाप्रत्ययः" इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति । न चात्रेकारः शकारं गृह्णाति ॥

( प्रदीपः ) **वाक्यापरिसमाप्तेरिति** । [8]भवतु वा तुल्यास्यप्रयत्नत्वं, तथापीहेकारेण शकारो न गृह्यते, सवर्णसंज्ञाया अस्मिन्सूत्रेऽनिष्पादात् । अस्मिन् हि सूत्रे निष्पन्ने सत्यपवादविषयपरिहारेणेष्टविषये सवर्णसंज्ञा प्रवर्तते । न त्वेतत्सूत्रनिष्पत्त्यवस्थायाम् । ततश्चाज्झूपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु [9]निष्पन्नेषु '**अणुदित्सवर्णस्य**' इत्येत् '**अस्य च्वौ**' इत्यादिषु प्रवर्तते, न त्वज्झूपदेशादिषु, नापि स्वात्मनि । [10]ततश्चात्र सूत्रेऽङ्गानिष्पत्त्या '**अणुदित्**–' इत्यस्याप्रवर्तनादिकारेण शकारस्याग्रहणात्सवर्णत्वं शकारयोः सिद्धम् । एवमीकारोऽप्यत्रेकारेण न गृह्यत इतीकारशकारयोः सवर्णत्वमस्तीति 'कुमारी शेते' इत्यत्र सवर्णदीर्घत्वं प्राप्तं 'अचि' इत्यनुवृत्त्या निवार्यते ॥

( उद्योतः ) **वाक्यापरिसमाप्तेर्वेति** । [11]अन्यथा **नाज्झलावित्यस्य** निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तव पूर्वपक्षस्यैवा[12]नुत्थानं स्यादिति भावः ॥ अनिष्पादमुपपादयति—**अस्मिन्हीति** ॥ **सूत्रे निष्पन्ने इति** । [13]जनितवाक्यार्थबोधे इत्यर्थः ॥ **प्रवर्तते इति** । '[14]एते परस्परं सवर्णसंज्ञाः' इति प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः । तदेव च लक्ष्यसंस्कारकमिति भावः ॥ **निष्पत्त्यवस्थायाम्**–वाक्यार्थबोधावस्थायाम् ॥ **सवर्णत्वेषु निष्पन्नेषु** । [15]तत्र सवर्णत्वनिष्पत्तिरिष्टविषये सवर्णपदवाच्यत्वग्रहः ॥ **नापि स्वात्मनीति** । अनिष्पत्तेरिति भावः ॥ **अङ्गानिष्पत्त्या**–अङ्गस्य=इष्टविषयसवर्णपदवाच्यत्वज्ञानस्यानिष्पत्त्या ॥ भाष्ये–**तावत्**=प्रथमम् ॥ **उपदेशोत्तरकालेति** । ज्ञातस्य संज्ञाविधानादिति भावः ॥ **प्रत्याहारोत्तरकाला सवर्णसंज्ञेत्यादेः**–इष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणम्, तदुत्तरकालमणुदिदित्येतदकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयति

---

१ अज्झलाम्प्रयत्नभेदेन सूत्रानर्थक्यं प्रकृतदोषोद्धारकत्वञ्चोपपादयति वार्तिककारः—**सिद्धमिति** ॥

२ स्पृष्टमित्यादीनि चत्वारि शौनकप्रातिशाख्यसूत्राणि बोध्यानि ॥ दा० ॥

३ **भेदादिति** । तथाच शरामनच्त्वान्निषेधाप्रवृत्त्या मिथः सावर्ण्येन लुप्तमध्यशकारकं रूपं सिद्धमिति भावार्थः सूचितः ॥ छाया ॥

४ **सूत्रमेवेति** । तथाच '**एकं संधित्सतोऽपरं प्रच्यवते**' इति न्यायापत्तिरिति भावः ॥ छाया ॥

५ ननु सूत्रमते विवृतत्वव्याप्यानां सवर्णसंज्ञानियामकत्वं नावश्यकमिति लाघवम्, प्रत्याख्यानवादिनाञ्च तदावश्यकमिति गौरवं परिहरति—**एङैचोरिति** ॥

६ प्रकृतेऽपि भेदाश्रयणमावश्यकमेवेत्याह—**किं चेति** । प्रक्षेपोऽप्रामाणिक इति भावः ॥ **इदमपि**–एतत्कृतप्रयत्नवैलक्षण्यमपि ॥ **तस्य**–पाणिनेः ॥ छाया ॥

७ ननु सूत्रसत्त्वे प्राप्तान्दोषान् प्रयत्नभेदेन निवारयतः सूत्रानर्थक्यमेवापन्नमित्यतो द्वितीयसमाधानमाह—**वाक्यापरीति** । वाशब्दोऽथवाऽर्थकः ॥

८ अभ्युपेत्यवादेन तु पक्षान्तरं भाष्ये, तदाह—**भवतु वेति** ॥ इह–प्रकृतसूत्रे ॥

९ 'निष्पन्नेषु' इत्यस्य घ. पुस्तके न पाठः ॥

१० पर्यवसितमाह—**ततश्चेति** ॥

११ अस्य पक्षस्य पूर्वपक्षिण आवश्यकत्वमाह—**अन्यथेति** ॥ वाक्यापरिसमाप्तिन्यायानङ्गीकारे इत्यर्थः ॥ छाया ॥

१२ **अनुत्थानमिति** । नाज्झलाविति निषेधस्य स्वस्मिन्नपि प्राप्तावत्राच्पदेन शकारग्रहणं सम्भवतीति प्रकृतदोषासम्भवः ॥

१३ निष्पत्तेः स्वरसतः पूर्वं सत्त्वादाह—**जनितेति** ॥ छाया ॥

१४ पूर्वं सामान्यतो बोधस्य सत्त्वादाह—**एते इति** ॥ **एवेन** पूर्वजातव्यवच्छेदः ॥ एवमग्रे बीजानि बोध्यानि ॥ छाया ॥

१५ **तत्र**–तेषामुपदेशादिचतुर्णां मध्ये ॥ छाया ॥

इत्यर्थः ॥ **अपरिसमाप्तिश्च** सवर्णनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमित्यर्थः । तज्जन्ये शक्तिग्रहे बाधकसंभावना[1]हिताप्रामाण्यसंभावनासत्त्वादिति तात्पर्यम् ।

[2]यत्तु **नाज्झला**वित्यतः प्राक् **तुल्यास्ये**त्यस्य बोधाभावेन सवर्णपदार्थज्ञानाभावात् **अणुदि**दित्यस्य वाक्यार्थाबोध इत्यर्थ इति । तन्न । अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया **तुल्यास्ये**त्यतः प्राक् निषेधवाक्यार्थाभावः, न तु विपरीतमित्यदोषा[3]दिति दिक् ॥

**सिद्धमिति** । [4]अत्रत्याच्पदार्थोपस्थितिकाले वाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावादिकारशकारयोः सवर्णत्वज्ञानेऽप्यणुदित्सूत्रजस्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहस्याभावान्नेकारेणात्र शकारग्रहणमिति भावः ॥ ननु वाक्यापरिसमाप्तिन्यायस्यास्मदादीन्प्रति प्रवृत्तत्वेऽपि पाणिनेस्तत्तच्छास्त्रप्रणयनान्यथाऽनुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञा[5]नस्यैतच्छास्त्रासाध्यत्वेन च **नाज्झला**वित्यादौ सवर्णाभिप्रायेण प्रयोगः स्यात् । अस्मदादीनां बोधस्तु तत्तात्पर्यज्ञव्याख्यातृपरंपरया लक्षणया भविष्यतीति [6]शकारयोः प्रतिषेधः प्राप्नोति । [7]एवमकारहकारयोरपीति चेन्न । ज्ञानसत्त्वेऽपि तदभिप्रायेण प्रयोगे तात्पर्यग्राहकाभावात् । [8]करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहाराभावस्यैव प्रतिपादनाच्च । [9]अत एव **हलन्त्य**सूत्रे इतरेतराश्रयमाशङ्क्य एकशेषेण समाहितं भाष्ये । अन्यथा पाणिनिना हल्पदार्थस्य ज्ञातत्वेन तस्यान्योन्याश्रयाभावात्तेन तदभिप्रायेण प्रयोगे बोद्धृबोधस्य लक्षणयैवोपपत्तौ [10]तत्पर्यन्तधावनमनर्थकं स्यात् । मम तु पाणिनेस्तथा व्यवहाराभावान्न दोषः ॥ उक्ता[11]र्थे ज्ञापकमप्युपन्यस्यति—**एवमीकारोऽपीति** । अत्र पक्षे दीर्घप्लुताकाराभ्यां हकारे सावर्ण्यवारणं तु प्रश्लेषाद्बोध्यम् । तत्र तात्पर्यग्राहका **वेलासु** इत्यादिनिर्देशाः प्रागुक्तं भाष्यं च-इति बोध्यम् ॥

( आक्षेपभाष्यम् )

**यथैव तर्हीकारः शकारं न गृह्णाति, एवमीकारमपि न गृह्णीयात् ।**

**तत्र को दोषः ?**

**कुमारी-ईहते-कुमारीहते, अकः सवर्णे दीर्घत्वं न प्राप्नोति ॥**

( प्रदीपः ) त[12]त्र क्व ग्रहणकशास्त्रं प्रवर्तते क्व नेति विषयविभागदर्शनाय चोद्यं करोति—**यथैव तर्हीति** । इकारस्य[13]त्रााग्राहकत्वं दृष्टमिति '**अकः सवर्णे दीर्घः**' इत्यत्रापि प्राप्तमिति **प्रश्नः** ॥

( उद्द्योतः ) प्रदर्शनाय–बो[14]धनाय ॥

( समाधानभाष्यम् )

**नैष दोषः । यदेतत् "अकः सवर्णे दीर्घः" इति प्रत्याहारग्रहणं, तत्रेकार ईकारं गृह्णाति, शकारं न गृह्णाति ॥**

( उद्द्योतः ) भाष्ये–यदेतदिति । त[15]द्बोधवेलायां वाक्यपरिसमाप्तेरिति भावः ॥

( व्याख्यान्तरभाष्यम् )

**अपर आह—**

**'*अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्*'** ।

**अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति ।**

**किं कारणम् ?**

**अज्झल्त्वात् । अच्चैव हि शकारो हल्च ।**

**कथं तावदच्त्वम् ?**

**इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम्, हल्षु चोपदेशाद्धल्त्वम् ॥**

**तत्र को दोषः ?**

***तत्र सवर्णलोपे दोषः*** ।

**तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि । "झरो झरि सवर्णे" इति लोपो न प्राप्नोति, इति ॥**

---

१ 'बाधकसंभावनोहित' इति मुद्रितपाठः ॥

२ प्राचोक्तं भाष्यार्थं दूषयति—**यत्त्विति** ॥ छाया ॥

३ **अदोषादिति** । तथा च सामान्यज्ञानं पूर्वमस्त्येव ॥ छाया ॥

४ **अत्रत्य**–नाज्झलाविति सूत्रस्येत्यर्थः ॥

५ **तज्ज्ञानस्य** । पाणिनिज्ञानस्येत्यर्थः ॥ छाया ॥

६ 'इकारशकारयोः' इति घ. पाठः ॥

७ भाष्यमुपलक्षणमेवेत्याह—**एवमकारयोरपीति** ॥ हकारग्रहणेन तस्य हल्त्वात् ॥ छाया ॥ 'एवमकारयोः' इति घ. पाठः ॥

८ ननु तत्प्रणयनमेव तात्पर्यग्राहकमत आह—**करिष्यमाणेति** । अनेन भाष्येणेति शेषः ॥ छाया ॥

९ इदं द्रढयति—**अत एवेति** । तथा तदभावादेवेत्यर्थः । **अन्यथा**–तथा तदङ्गीकारे ॥ छाया ॥

१० पूर्वपक्षस्याज्ञानेनोपपत्तेराह—**तत्पर्यन्तेति** । एकशेषेण समाधिपर्यन्तेत्यर्थः ॥ छाया ॥

११ अग्रिमग्रन्थस्य प्रकृतासंबद्धत्वं निराचष्टे—**उक्तार्थे इति** ॥ **ज्ञापकम्**–अचीत्यनुवृत्तिरूपम् ॥ **अत्र पक्षे**–तुल्यप्रयत्नत्वपक्षे ॥ **तत्र**–प्रश्लेषे ॥ **प्रागुक्तमिति** । अन्यथा फलभेदे प्रत्याख्यानाय तदुक्तिरसंगता स्यादिति भावः ॥ छाया ॥

१२ **तत्र**–वाक्यापरिसमाप्तौ ॥ छाया ॥

१३ ननु अकः सवर्णे इत्यादेर्ग्रहणकशास्त्रलिङ्गत्वात्कथं चोद्यमत आह—**इकारेति** । **दृष्टं**–सामान्यतः प्राप्तमेतद्दृष्टान्तेन । तथा च विमत इकारः सवर्णाग्राहक इकारत्वात् एतत्सूत्रगताच्गतेकारवदिति प्रयोगो बोध्यः ॥ छाया ॥

१४ मुख्यार्थासंभवादाह—**बोधनायेति** ॥ छाया ॥

१५ **तद्बोधेति** । तथा च स्वस्वाङ्गान्यतरगतत्वोपाधिपराहतमनुमानमिति भावः ॥ छाया ॥

*सिद्धमनच्त्वात्* ।

सिद्धमेतत् ।

कथम् ?

अनच्त्वात् ।

कथमनच्त्वम् ?

*वाक्यापरिसमाप्तेर्वा* । उक्ता वाक्यापरिसमाप्तिः ॥

( प्रदीपः ) अनच्त्वमेवे[1] वाक्यापरिसमाप्त्या साध्यते, न तु प्रयत्नभेदेनेत्याह—अपर आहेति ॥

( आक्षेपभाष्यम् )

अस्मिन्पक्षे—'वा' इत्येतदसमर्थितं भवति ॥

( प्रदीपः ) अस्मिन्पक्ष इति । एकत्र हि साध्ये हेतुविकल्पो भवति, इह तु साध्यभेदः । सिद्धेरनच्त्वं हेतुः, अनच्त्वस्य वाक्यापरिसमाप्तिः ॥

( उद्द्योतः ) एकत्रेति । तुल्यार्थानां[2] विकल्प इति न्यायादित्यर्थः ॥

( समाधानभाष्यम् )

एतच्च समर्थितम् ।

कथम् ?

अस्तु वा शकारस्य शकारेण सवर्णसंज्ञा, मा वा भूत् ॥

( प्रदीपः ) एतच्चेति । 'अस्तु वा ग्रहणमिकारेण शकारस्य' इति वाक्यशेषाध्याहारात् । प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः ॥

( उद्द्योतः ) मा वा भूदित्येतत्सूचितप्रतिज्ञाया आशयमाह—अस्तु वेति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्-परश्शतानि कार्याणि, "झरो झरि सवर्णे" इति लोपो न प्राप्नोति[3] ॥

( आक्षेपबाधकभाष्यम् )

मा भूल्लोपः ॥

( आक्षेपसाधकभाष्यम् )

ननु च भेदो भवति—सति लोपे द्विशकारम्, असति लोपे त्रिशकारम् ॥

( प्रदीपः ) ननु चेति । श्रुतिकृतं भेदमुपगम्योच्यते ॥

( उद्द्योतः ) ननु 'व्यञ्जनपरस्यै[4]कस्यानेकस्य वा नोच्चारणे विशेषः' इति न्यायात् कथं भेद इत्यत आह—श्रुतिकृतमिति ॥

( आक्षेपबाधकभाष्यम् )

नास्ति भेदः, असत्यपि लोपे द्विशकारमेव ।

कथम् ?

विभाषा द्विर्वचनम् ॥

( उद्द्योतः ) भाष्ये—असति लोपे त्रिशकारमिति वदन् प्रष्टव्यः—किं द्विशकारं न स्यादिति तवाशयः, उत त्रिशकारं स्यादिति । आद्ये आह—असत्यपीति । द्विशकारं भवत्येवेत्यर्थः ॥

( आक्षेपसाधकभाष्यम् )

एवमपि भेदः, असति[5] लोपे कदाचिद्द्विशकारम्, कदाचित् त्रिशकारम् । सति लोपे द्विशकारमेव ॥

( उद्द्योतः ) द्वितीये आह—एवमपीति । विभाषा द्विर्वचनेऽपीत्यर्थः ॥

( तटस्थाक्षेपभाष्यम् )

स एष कथं भेदो न ?

( प्रदीपः ) 'स एष कथं भेदो न' इत्यत्रैव च्छेदः । भेद[6] एवेत्यर्थः ॥

( उद्द्योतः ) एवमपीत्यनेन भेद···एवेत्युक्त्वा तदुपपादनावसरे यदि लोपो न स्यादिति वाच्यम्, किमुच्यते 'नित्यो लोपः स्यात्' इति । अतश्छित्त्वा भिन्नकर्तृकत्वेन योजयति—स एष इति । त्रिशकारमिष्टमेवेति तात्पर्यम् ॥

( तटस्थाक्षेपनिरासभाष्यम् )

स्यात्, यदि नित्यो लोपः स्यात् । विभाषा तु स लोपः ॥

( प्रदीपः ) इतर आह—'स्याद्भेदो यदि नित्यो लोपः स्यात् विभाषा तु स लोपः' इति ततो नास्ति भेद इत्यर्थः ॥

( समाधानभाष्यम् )

यथाऽभेदस्तथाऽस्तु ॥ १० ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

( प्रदीपः ) द्विर्वचनमपि विभाषा, 'यरोऽनुनासिकेऽनुनासिको वा' इत्यतो वेत्यनुवर्तनात् । लोपोऽपि विभाषा, 'झयो होऽन्यतरस्याम्' इत्यतोऽन्यतरस्यामित्यनुवर्तनादित्यर्थः ॥ १० ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

---

१ अनच्त्वमेवेति । एवो व्युत्क्रमे । वाक्यापरिसमाप्त्यैवेत्यर्थः ॥ अत एवाह—न त्विति । एतदर्थमेव पुनरादितोऽनुवाद इति भावः ॥ छाया ॥

२ 'तुल्यार्थास्तु विकल्पेरन्' ( १२।३।१० पू. मी. ) इति जैमिनीयमर्थतोऽनुवदति—तुल्यार्थानामिति ॥ छाया ॥

३ मुद्रितपुस्तकेषु 'प्राप्नोतीति' इति शब्दघटितः पाठो दृश्यते, भाष्यपरिपाटीविरुद्धत्वात् तथाऽनुपलम्भाच्चोपेक्ष्यः ॥

४ व्यञ्जनपरेति । व्यञ्जनात्परस्य व्यञ्जनपरकस्य चेत्यर्थः ॥ छाया ॥

५ यथाश्रुतेऽनुपपत्तेराह—असतीति ॥ छाया ॥

६ भेद एवेत्यनेन—भाष्ये 'सर्वं वाक्यम्' इति न्यायेन तथेति सूचितम् ॥ छाया ॥

( उद्द्योतः ) झयो ह इति । इदं वृत्तिरीत्या । भाष्यरीत्या तु वाऽवसान इत्यत इति बोध्यम् ॥ १० ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

## अथ पञ्चमाह्निकम् ।

( अथ प्रगृह्यसंज्ञाप्रकरणम् )

( १० प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. १ सू. ॥ )

## ईदूदेद्द्विवचनं प्रगृह्यम् ॥ १ । १ । ११ ॥

( अथ तपरपाठप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमीदादीनां तपराणां प्रगृह्यसंज्ञोच्यते ?**

( प्रदीपः ) ईदूदेद्द्विवचनं प्रगृह्यम् ॥ ११ ॥ किमर्थमिति । ईदूतोरनण्त्वाद्भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम् । उदात्तादीनामभेदकत्वाद्गुणान्तरयुक्तानां सवर्णानां ग्रहणार्थमपि नोपपद्यते । जातिपक्षेऽपि दीर्घोच्चारणात्प्रयत्नाधिक्यात् ह्रस्वानां न भविष्यति, प्लुतानां चेष्यत एव-इतीष्टव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः ॥

( उद्द्योतः ) ईदूदेत् ॥ ११ ॥ व्यक्तिपक्षे ईदूतोस्तपरयोरुपादानं भिन्नकालनिवृत्तये वा-गुणान्तरयुक्तग्रहणाय वा स्यात् । तत्र नाद्य इत्याह—ईदूतोरिति । एवं चाणुदित्स्य प्राप्त्यभावान्न तद्बाधकतपरसूत्रप्रवृत्तये तपरत्वमित्यर्थः ॥ तपरसूत्रेऽण्ग्रहणाननुवृत्त्या तस्य प्राप्तावपि फलाभावात् न द्वितीय इत्याह—उदात्तादीनामिति ॥ ननु जातिपक्षे भिन्नकालनिवृत्त्यर्थं स्यात्, तत्पक्षे हि तपरसूत्रं नियमार्थमेवेत्यत आह—जातीति ॥ प्लुतानां चेष्यत एवेति । एतच्च भाष्ये एव स्फुटम् ॥ इष्टव्याघातमिति । जातिपक्षे ईदूदंशेऽपि तपरत्वेनैव प्लुतव्यावृत्तिरित्यभिमानः ॥

( समाधानभाष्यम् )

**"तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ।**

**केषाम् ?**

**उदात्तानुदात्तस्वरितानाम् ॥**

( प्रदीपः ) तपर इति । व्यक्तिपक्षो भेदकाश्च गुणा इति भावः ॥ केषामिति । प्लुतानामग्रहणप्रसङ्गात्प्रश्नः ॥ उदात्तेति । क्वचिदनुनासिकग्रहणमप्यस्ति, तत् गुणप्रसङ्गेनोच्चारितम् । न हि प्रगृह्योऽनुनासिकः सम्भवति, "अणोऽप्रगृह्यस्यानुनासिकः" इति निषेधात् ॥

( उद्द्योतः ) भेदकाश्च गुणा इति । भेदकत्वात्स्वरस्येति वार्तिकोक्तिरणुविषये भेदकपक्षोऽप्यस्तीत्यभिमानः ॥ इदं प्रयोजनमीदूतोरेव न त्वेदंशे, अणुदित्सूत्रेणैव सिद्धेः ॥

( आक्षेपभाष्यम् )

**अस्ति प्रयोजनमेतत् ।**

**किं तर्हीति ?**

**प्लुतानां तु प्रगृह्यसंज्ञा न प्राप्नोति ।**

**किं कारणम् ?**

**अतत्कालत्वात् । न हि प्लुतास्तत्कालाः ॥**

( प्रदीपः ) प्लुतानां त्विति । व्यक्तिपक्षाश्रयणादयं दोषः, न तु तपरत्वात् ।

( उद्द्योतः ) ननु तत्कालसवर्णसंग्रहार्थं तपरत्वमुक्तं नातत्कालव्यावृत्त्यर्थं, तत्कुतः प्लुतानां न प्राप्नोतीत्यत आह—व्यक्तिपक्षेति । ईदूदंशे इदम्, एदंशे तु तपरत्वादेव दोष इति बोध्यम् ॥

( आक्षेपबाधकभाष्यम् )

**असिद्धः प्लुतः, तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥**

( प्रदीपः ) असिद्ध इति । शास्त्रासिद्धत्वाश्रयणात् प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषया बुद्धिः प्रवर्तते । तथा हि वक्ष्यति—*असिद्धत्ववचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च* इति ॥

( उद्द्योतः ) ननु इतिशब्दादिसमभिव्याहारे कार्यार्थं प्रगृह्य-

---

१ भाष्येति । सूत्रपाठभेदादिति भावः ॥ 'सर्वत्र शाकल्यस्य' 'वा हत—' इत्यादि त्वस्यैव प्रपञ्चः ॥ छाया ॥

२ नन्वेकारे यत्नाभावात्तत्र प्लुतव्यावृत्त्यर्थं तदित्यत आह—प्लुतानां चेति । चस्त्वर्थे ॥ एवं फलाभावरूपदोषमुक्त्वा अनिष्टत्वरूपदोषमेतत्प्रसङ्गात्सर्वत्रेत्याह—तीष्टेति ॥ छाया ॥

३ प्रवृत्तय इति । असंदेहार्थं तदस्त्विति भावः ॥ छाया ॥

४ वार्तिकरीत्या विध्यर्थतयाऽऽह—तपरेति ॥ छाया ॥

५ नियमेति । सवर्णपदानुवृत्तेः ॥ एवेन विध्यर्थत्वव्यवच्छेदः ॥ छाया ॥

६ 'एतच्चाग्रे भाष्ये' इति च. झ. पाठः ।

७ ननु तपरसूत्रस्य नियमार्थत्वेनाण्येव प्रवृत्त्या एकारे एतद्दोषसत्त्वेऽपीदूदंशे न तथेति चिन्त्यमिदमित्याह—जातिपक्ष इति ॥ छाया ॥

८ यथा स्यादिति । इत्येवमर्थमिति शेषः ॥ वार्तिकरीत्याऽयं ग्रन्थः । अन्यथाऽनुपपत्तेः ॥ छाया ॥

९ प्रसङ्गादिति । तत्प्रसङ्गरूपं दोषं सर्वथा लक्ष्यीकृत्येत्यर्थः ॥ प्रश्न इति । केषांचित्सिद्धत्वात्प्रश्न इत्यर्थः ॥ छाया ॥

१० निषेधादिति । पूर्वमनुनासिकत्वे तु प्रगृह्यत्वं दुर्वचं, विषयाभावात् । प्रगृह्यत्वे तु तदसंभव एवेति भावः ॥ छाया ॥

११ व्यक्तिपक्षेतीति । जातिपक्षे नायं दोषः, संध्यक्षरेष्विव दीर्घप्लुतसाधारणजात्यङ्गीकारादिति भावः । तदाह—ईदूदंश इति ॥ छाया ॥

१२ षत्वतुकोरित्यत्रेदमुक्तम् । तथाचैकरूप्याय सर्वत्र शास्त्रासिद्धत्वमेवेति भावः ॥ छाया ॥

संज्ञाप्रवृत्तेरन्तरङ्गत्वात्पूर्वं प्लुते तेन स्थानिनो निवृत्तत्वेन प्लुतासिद्धत्वेऽपि कथं स्थान्याश्रया प्रगृह्यसंज्ञेत्यत आह—**शास्त्रेति** । प्रवृत्तेऽपि शास्त्रेऽसिद्धवत्त्वेन तत्प्रवृत्तिबुद्ध्यभावेन प्लुतबुद्ध्यभावाद्द्विमात्रविषयाया बुद्धेस्त्रिमात्रे सत्त्वाद् द्विमात्रबुद्ध्या त्रिमात्रस्य संज्ञेत्यर्थः ॥ एतेन शास्त्रासिद्धत्वाच्छास्त्राप्रवृत्तौ स्थानिनः प्रगृह्यत्वेऽपि पुनः प्लुते तस्य तत्र स्यात् । न च स्थानिवत्त्वम्, **अनल्विधा**विति निषेधात् । प्लुतस्थान्यल्वृत्तिधर्मत्वात् ॥ एवं चागच्छतमग्नी३ इत्यादावणोऽप्रगृह्यस्येत्यनुनासिकः स्यादित्यपास्तम् ॥ ननु प्राधान्यात्कार्यासिद्धत्वमेव स्यादत आह—**तथाहीति** ॥ उत्सर्गः=स्थानी ॥

( आक्षेपसाधकभाष्यम् )

**सिद्धः प्लुतः स्वरसन्धिषु ।**

**कथं ज्ञायते—'सिद्धः प्लुतः स्वरसंधिषु' इति ?**

**यदयं "प्लुतः प्रकृत्या" इति प्लुतस्य प्रकृतिभावं शास्ति ।**

**कथं कृत्वा ज्ञापकम् ?**

**सतो हि कार्यिणः कार्येण भवितव्यम् ॥**

**( प्रदीपः ) यदयमिति** । असिद्धत्वे 'प्लुतः प्रकृत्या' इत्येवमाश्रयणायोगात् कार्यित्वेनाश्रयणादसिद्धत्वाभावोऽनुमीयते । सामान्येन स्वरसन्धिप्रकरणविषयं सिद्धत्वं ज्ञाप्यते, न तु प्रकृतिभाव एव । यथा रोरुत्वे । एवं सोत्सर्गं सापवादं च प्रकरणमिति प्रकृतिभावेऽपि प्रगृह्यत्वहेतुके सिद्धत्वमुच्यते ॥

**( उद्योतः ) सामान्येनेति** । तदुत्सर्गेऽपीत्यर्थः ॥ ननु प्रकृतिभावो न स्वरसन्धिप्रकरणस्थस्तत्राह—**सोत्सर्गमिति** । तदुत्सर्गनिरूपितापवादत्वस्यात्रापि सत्त्वेनेदमपि तत्प्रकरणस्थमेवेति भावः ॥ प्रगृह्यत्वहेतुके प्रकृतिभावेऽपीत्यन्वयः ॥

( प्रयोजनजिज्ञासाभाष्यम् )

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**( प्रदीपः ) किमेतस्येति** । प्रकृतिभाव एवाश्रयात्सिद्धत्वमस्त्विति **प्रश्नः** ॥

( प्रयोजनभाष्यम् )

**'अप्लुतादप्लुते' इत्येतन्न वक्तव्यं भवति ॥**

**( प्रदीपः )** इतरो लाघवं दर्शयति—**अप्लुतादिति** । सिद्धे हि प्लुते 'अतः-अति'-इति तपरत्वादेवोत्त्वाप्रसङ्गः ॥

**( उद्योतः ) प्रकृतिभाव एवेति** । प्लुतप्रकृतिभाव इत्यर्थः ॥ भाष्ये—**एतस्येत्यस्य** स्वरसन्धिप्रकरणविषयत्वेन ज्ञापनस्येत्यर्थः ॥

---

१ **न्तरङ्गत्वादिति** । इत्याद्यनपेक्षत्वादिति भावः ॥ कार्यासिद्धत्वेनेयं शङ्का । एवंच सिद्धेऽसिद्धत्वरूपेणादौ तत्प्रवृत्तिरावश्यिकेति तात्पर्यम् ॥ **कथं स्थान्येति** ॥ देवदत्तहन्तृहतन्यायादिति भावः ॥छाया॥

२ **शास्त्रेतीति** । तथाच भाष्ये प्लुतपदं शास्त्रपरमिति भावः ॥ उक्तहेतोरेवाह—**प्रवृत्तेऽपीति** ॥ छाया ॥

३ मिश्राद्युक्तिं खण्डयति—**एतेनेति** । **पुनः**-पश्चात् ॥ **तस्येति** । प्लुतस्य प्रगृह्यत्वं न स्यादित्यर्थः । तस्य कार्यस्यासिद्धत्वाभावेनात्राग्रहणेन सूत्राप्राप्तेरिति भावः ॥ **लक्ष्ये लक्षणस्येति** न्यायपर्यन्तानुधावनं त्वफलम् ॥ छाया ॥ अत्र हि कार्यासिद्धत्वशास्त्रासिद्धत्वयोर्भेद उद्द्योते स्पष्टमुपपादितः । कार्यासिद्धत्वपक्षे हि कार्यस्यासिद्धत्वेऽपि स्थानिनो निवृत्तत्वेन स्थान्युपलब्धिर्न भवति, शास्त्रासिद्धत्वे च शास्त्रप्रवृत्तिबुद्ध्यभावेन तत्कृता स्थानिनिवृत्तिरपि नेति स्थान्युपलब्धिरिति । मिश्रादयस्तु तस्यासिद्धत्वात्तत्काला एवेति भाष्यस्य पक्षद्वयेऽप्यनुपपत्तिं मन्यन्ते, तच्छास्त्रासिद्धत्वव्याख्यानेन पराहतमिति भावः ॥

४ नन्वस्याः "शे" "उञः" इत्यादौ विशिष्टेऽपि सत्त्वात्कथमल्विधित्वमत आह—**प्लुतस्थान्यलिति** ॥ आदेशापनेयत्वात् ॥ छाया ॥

५ एवं कार्यित्वेन व्यतिरेकमुक्त्वाऽन्वयमाह—**कार्यित्वेनेति** ॥ छाया ॥

६ नन्वेवं प्रकृतिभाव एव सिद्धत्वं स्यादिति स्वरसंधिष्विति भाष्यासंगतिः । अन्यथा प्रकृतिभाव इत्येव ब्रूयादत आह—**सामान्येनेति** ॥ अस्यार्थमाह—**स्वरेति** ॥ भाष्ये स्वरसंधिग्रहणं प्रकरणोपलक्षणमित्याह—**प्रकरणेति** ॥ इदमेव व्यतिरेकमुखेन द्रढयति—**न त्विति** ॥ अत्र वैधर्म्ये दृष्टान्तमाह—**यथा रोरुत्वे इति** ॥ **एवमिति** पाठे—यथा रोरुत्वे एवं तत्रैव न त्वित्यर्थः ॥ छाया ॥

७ 'यथा रोरुत्व एव । सोत्सर्गं' इति क० च० ञ० पाठः । यथा रोरुत्वे एव न प्लुतः सिद्धः किन्तु संहिताधिकारविहितकार्यापेक्षया प्लुतः सिद्ध इति कल्प्यते तथा प्रकृतिभावे एव प्लुतः सिद्ध इति न, किन्तु स्वरसन्धिप्रकरणविषयं सिद्धत्वमिति तदर्थः । प्रकृते पाठे—**यथा रोरुत्वे** संहिताधिकारविहितकार्यापेक्षया प्लुतः सिद्ध एवं स्वरसन्धिप्रकरणापेक्षया प्रकृतिभावेऽपि सिद्धत्वमुच्यत इत्यर्थः । यत्तु राजलक्ष्मीकारेण 'यथा रोरुत्वं प्रति नासिद्धत्वमाश्रयणसामर्थ्यात्, एवं प्रकृते प्लुतस्य प्रकृतिभावे एवासिद्धत्वमिति न' इत्याद्युक्तम्, तत्प्रामादिकम् । अतो रोरिति सूत्रे 'सिद्धः प्लुतः स्वरसन्धिषु' इति भाष्यव्याख्याने प्रदीपकृता 'सामान्येन संहिताधिकारविहितकार्यापेक्षं सिद्धत्वं' इत्युक्तत्वात् । 'सिद्धः प्लुतः स्वरसन्धिषु' इति भाष्यस्य 'रोरुत्वे एव' इत्यर्थासम्भवाच्च ॥

८ **तदुत्सर्गेऽपीति** । प्लुतप्रकृतिभावोत्सर्गे संधिकार्येऽपीत्यर्थः ॥ **अपि**ना तस्यापि समुच्चयः ॥ छाया ॥

९ अप्यर्थं द्रढयञ्शङ्कते—**नन्विति** ॥ **तदुत्सर्गेति** । प्लुतप्रकृतिभावोत्सर्गसंधिरूपकार्यनिरूपितापवादत्वस्य प्रगृह्यप्रकृतिभावेऽपि सत्त्वेन प्लुतः प्रकृत्येत्येतदपीत्यर्थः ॥ छाया ॥

१० यथाश्रुतेऽनुपपत्तेराह—**प्रगृह्यत्वेति** ॥ संनिहितसापेक्षशास्त्रसमुदायः प्रकरणमिति भावः ॥ नन्वेवं प्लुतस्य प्रकृतिभावविधानसामर्थ्येन तत्र तस्य सिद्धत्वं ज्ञाप्यते इत्येव कुतो नोक्तमृजुतया कैयटेन, प्रकृतिभावं प्रति तु उक्तरीत्याश्रयात्सिद्धत्वमेवेति चेत् ॥ न; **'प्लुतस्य प्रकृतिभावं शास्ति'** इत्यस्य **'सतो हि कार्यिणः'** इत्यस्य च भाष्यस्यासामञ्जस्यापत्तेः । असिद्धत्वेऽपि स्थानिबुद्ध्या तत्र प्राप्त्यणादिनिवारकतत्साार्थक्याच्च ॥ छाया ॥

११ उक्तरीत्यभावे यथाश्रुतानुपपत्तेराह—**प्लुतेति** ॥ सामान्यतो न प्रयोजनप्रश्नः किंतु विशेषत इत्याह—**भाष्ये एतस्येत्यस्येति** ॥ छाया ॥

( आक्षेपबाधकभाष्यम् )

**कि[1]मतो यत्सिद्धः प्लुतः स्वरसन्धिषु । संज्ञाविधावसिद्धः । तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥**

( प्रदीपः ) **किमत इति** । यथोद्देशे संज्ञापरिभाषे, प्रगृह्यसंज्ञा स्वरसन्धिप्रकरणमध्यपतिता न भवतीति **प्रश्नः** ॥

( आक्षेपसाधकभाष्यम् )

**संज्ञाविधौ च सिद्धः ।**

**कथम् ?**

**कार्यकालं हि संज्ञापरिभाषम्, यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्, "प्रगृह्यः प्रकृत्या" इत्युपस्थितमिदं भवति—"ईदूदेद्विवचनं प्रगृह्यम्" इति ॥**

( प्रदीपः ) **कार्यकालमिति** । कार्यार्थत्वाद्गु[2]णानां कार्यस्य च प्रधानत्वात् प्रधानदेशत्वस्य न्याय्यत्वादित्यर्थः ॥

( उद्योतः ) कार्यार्थत्वादिति । तदेकवाक्यतापन्नं संज्ञासूत्रं तत्प्रकरणस्थमिति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम् ?**

( समाधानभाष्यम् )

**प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

( प्रत्याक्षेपबाधकभाष्यम् )

**मा भूदेवम् । प्लुतः प्रकृत्या-इत्येवं भविष्यति ॥**

( प्रत्याक्षेपसाधकभाष्यम् )

**नैवं शक्यम्, [3]उपस्थिते हि दोषः स्यात् । "अप्लुतवदुपस्थिते" इ[4]त्यत्र पठिष्यति ह्या[5]चार्यः—*वद्वचनं प्लुतकार्यप्रतिषेधार्थम् । प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात्* इति ।**

**तस्मात्प्लुतस्य प्रगृह्यसंज्ञैषितव्या । प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

( प्रदीपः ) **उपस्थिते हीति** । उपस्थितः—अनार्ष इतिकरणः । 'अग्नी इति' इत्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे प्रगृह्याश्रयः प्रकृतिभाव ई[6]ष्यते । तदाह-**पठिष्यतीति** । यत्र प्रगृह्यसंज्ञा नास्ति स प्लुताश्रयप्रकृतिभावप्रतिषेधविषयः—देवदत्ता३ इति, देवदत्तेति ॥

( उद्योतः ) **प्रतिषिद्धे इति** । [7]अप्लुतवद्भावेन बाधिते इत्यर्थः ॥ भाष्ये—**प्रगृह्यप्लुतप्रतिषेधेति** । प्रगृ[8]ह्याश्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः ॥ [9]प्रगृह्याश्रयस्यापि कुतो न निवृत्तिरित्यत आह—**अन्येनेति** । 'प्रगृह्यः प्रकृत्या' इ[10]त्यनेनेत्यर्थः ॥ नन्वीदृशेऽपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह—**यत्रेति** ॥

( आक्षेपबाधकरीत्यन्तरनिराकरणभाष्यम् )

**यदि पुनर्दीर्घाणामतपराणां प्रगृह्यसंज्ञोच्यते ?**

---

१ **किमत इति** । स्वरसंधिषु प्लुतः सिद्धोऽतः किम् । यत्—यतः संज्ञाविधावसिद्ध इत्यन्वयः ॥ छाया ॥

२ **गुणानामिति** । अङ्गानामित्यर्थः । तेषां प्रधानदेशकालान्वयस्य न्यायसिद्धत्वमिति भावः ॥ छाया ॥

३ **उपस्थित इति** । तस्मिन्परत इत्यर्थः ॥ छाया ॥

४ फ. पुस्तके 'अत्र'शब्दपाठो नास्ति ॥

५ **आचार्य इति** । वार्तिककारः ॥ **प्लुतकार्येति** । फलितार्थकथनमिदम् । **अप्लुतवदि**त्यनेनाप्लुतसादृश्यविधानस्यैव लाभेन शब्दमर्यादया प्लुतकार्यं नेत्यर्थस्यालाभात् ॥ ननु तत्कार्यप्रतिषेधे वतिरेव मास्त्वत आह—**प्लुतेति** । तत्स्थानेऽप्लुतस्य विधानेन तन्निवृत्तौ हीत्यर्थः ॥ प्रसज्यप्रतिषेधेन व्याख्यानं तु न युक्तं, गौरवात् ॥

६ **इष्यत इति** । स न स्यादिति शेषः ॥ **पठिष्यतीति** । **अप्लुतवदुपस्थित** इत्यत्रेति शेषः भाष्ये तु नैतत्पाठः । तथा शैल्या अभावादिति कैयटाशयः ॥ वस्तुतः—'**अप्लुतवदुपस्थित इति**' इति । '**अत्र प–**' इति च विच्छिन्नं भाष्ये दृश्यते । तत्र **इती**त्यन्तेन लक्ष्यविषयकसूत्रोपन्यासः पूर्वान्वयी । ततः—**अत्रे**त्यनेन तत्सूत्रपरामर्श इति बोध्यम् ॥ छाया ॥ वस्तुतः 'अप्लुतवदुपस्थिते इत्यत्र पठिष्यति' इत्यविच्छिन्नो भाष्यपाठः प्राचीनेषु प्रामाणिकपुस्तकेषु बहुषु दृश्यते । नागपुराभिजनानां म. म. कृष्णशास्त्रिघुलेमहोदयानां ग्रन्थसम्पत्तिरत्ने संवत् १७५० तमे लिखिते श्रीमन्नागेशान्तेवासिना श्रीसदाशिवभट्टेन परिशीलितपुस्तके 'दुपस्थिते इत्यत्र प' इत्येवमविच्छिन्न एव पाठः । तथा च छायोपनिबद्धो ग्रन्थयोजनाप्रयासो विफल एव । कैयटाशयश्च विच्छिन्नपाठे नानुकूलः, किन्तु अविच्छिन्नपाठे 'अत्र'शब्दरहितपाठे वा योजयितुं शक्य इति प्रतिभाति ॥

७ शास्त्रे तत्प्रतिषेधाभावादाह—**अप्लुतेति** ॥ छाया ॥

८ **प्रगृह्यप्लुते**त्यस्य भाविप्रगृह्यसंज्ञकप्लुतप्रतिषेधप्रसङ्ग इति शाब्दोर्थः । तत्फलितमाह—**प्रगृह्याश्रय इति** । प्लुते कृते तस्यासिद्धत्वाद्दीर्घबुद्धिवत्तद्गतं प्रगृह्यत्वमनुकार्ये सुलभम् । अनुकरणे तु प्रकृतिवदित्यतिदेशात्तत्वम् । तथाच द्विमात्रस्य श्रवणं स्यात् त्रिमात्रस्य चेष्यत इति भावः ॥ छाया

९ वत्करणे शङ्कते—**प्रगृह्याश्रयस्यापीति** । अप्लुतवद्भावेन सूत्रस्यैकत्वात्संपूर्णसूत्रस्यैव निवृत्तिः । यद्वा प्रकृतिभावत्वेन तस्यैक्यात्तत्प्रकृतिभावस्यापि प्लुतकार्यत्वान्निवृत्तिः । यद्वा तस्य निषेधेऽपि प्रगृह्याश्रयप्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावे तस्यापि निवृत्तिस्तथा च दीर्घादिकं स्यादिति भावः ॥ छाया ॥

१० **त्यनेनेति** । तथा चाद्ययोः सूत्रभेदेन तथा दुर्वचम् । अन्त्ये शब्दसापेक्षाप्लुतवद्भावापेक्षया वर्णमात्रापेक्षप्रकृतिभावस्यान्तरङ्गत्वेन तथा दुर्वचमिति भावः ॥ तथा च '**अन्येन**' इतिग्रन्थो व्यवहितशेषो नाव्यवहितशेषः ॥ वस्तुतस्तु—अव्यवहितशेषतयापि स्वरसतया तथा प्रतीयमानः सुयोजः । तथाहि प्लुतो द्विविधः—शुद्धः प्रगृह्यत्वविशिष्टश्च । अत्र शुद्धस्थले एव तथा स्याद्वतेरभावेऽत आह—**अन्येनेति** । प्रतिलक्ष्यं लक्षणभेदेन तथापि तद्विषयकशास्त्रेण विहितत्वादित्यर्थः ॥ यद्वा—इतरधर्मानाक्रान्तत्वविशिष्टतद्रूपस्यानुद्देश्यतावच्छेदकत्वेन प्लुतत्वमात्रस्योद्देश्यतावच्छेदकत्वेन तदन्येन रूपेण विहितत्वादित्यर्थ इति बोध्यम् ॥ छाया ॥

**एवमप्येकार एव एकः सवर्णान्गृह्णीयात्, ईकारोकारौ न गृह्णीयाताम् ।**

**किं कारणम् ?**

**अनणत्वात् ॥**

**( प्रदीपः ) यदि पुनरिति ॥** ननु[1] व्यक्तिपक्षाश्रयणात् प्लुतानां न सिध्यति, न पुनस्तपरत्वात् ॥ अयमत्राशयः— आकृतिपक्ष आश्रयिष्यते । दीर्घोच्चारणाच्च प्रयत्नाधिक्यात् ह्रस्वानां न भविष्यति, प्लुतानां तु प्रवर्तिष्यते ॥ **एवमपीति ।** अयं भावः— आकृतिपक्षे यथा ह्रस्वानां प्रयत्नाधिक्यान्न भवति, तथा दीर्घोच्चारणसामर्थ्याद्विशिष्टव्यक्तिस्थैवाकृतिर्गृह्यत इति प्लुतानां न स्यात् । यथा[2] स्थूलं गामानयेत्युक्ते न कृशस्यानयनं भवतीति आकृतिपक्षेऽपि विशिष्टैव दीर्घा व्यक्तिर्गृह्यते । तथा चानणत्वादीदूतौ ग्राहकौ न स्याताम् ॥

**( उद्द्योतः ) न पुनस्तपरत्वादिति ।** तद्वक्ष्यति भाष्ये— **'दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति'** इति ॥ **प्लुतानां त्विति ।** तपरत्वाभावे[3] इत्यर्थः । तपरत्वे तु **तपरसूत्रस्य** जातिपक्षेऽनण्यपि नियमार्थत्वान्न स्यादिति भावः ॥ ईत्वादि[4] इत्याद्यनतिरिक्तं मन्यते ॥ **आकृतिरिति ॥** विना व्यक्त्युच्चारणं जातिनिर्देशाभावादवश्यं व्यक्तावुच्चारणीयायां लाघवाय ह्रस्व एव प्रयोक्तव्ये गुरुदीर्घोच्चारणेन तद्व्यक्तेरुपलक्षणत्वं विहाय विशेषणत्वस्यैवाश्रयणाद्विशिष्टव्यक्तिस्थैव जातिर्गृह्यत इति न्यूनकालव्यक्तिगताया इवाधिककालव्यक्तिगताया अपि न ग्रहणमिति भावः ॥ भिन्नभिन्नव्याप्यजातिस्वीकारे तु निर्दिष्टव्याप्यजातेः प्लुतेऽभाव एवेत्यपि बोध्यम् । ईत्वजातेस्तु[5] प्लुते सत्त्वात्तेन प्लुतग्रहणं भवत्येव । ततो लघुव्यक्तेरभावाच्च ॥ नन्वेवं भाष्येऽनणत्वादिति हेतुरसङ्गतोऽत आह— **आकृतिपक्षेऽपीति ।** ईदृशे विषये तत्तदित्वादिजातिविशिष्टा व्यक्तिरेव गृह्यत इत्यर्थः ॥ जातिप्राधान्ये[6] फलाभावात्, व्यक्तिद्वारा कार्यसंबन्धाश्रयणे गौरवाच्च, तस्यायुक्तत्वाच्च । तद्विशिष्टव्यक्तिग्रहणेऽप्यणत्वाभावान्न तौ ग्राहकाविति भावः ॥

**( आक्षेपबाधकरीत्यन्तरनिराकरणभाष्यम् )**

**यदि पुनर्ह्रस्वानामतपराणां प्रगृह्यसंज्ञोच्यते ?**

**नैवं शक्यम् । ईहापि[8] प्रसज्येत— अकुर्वीहि अत्र, अकुर्वह्यत्रेति ॥**

**( प्रदीपः ) यदि पुनरिति ।** ह्रस्वसाहचर्यादीकारोऽपि ह्रस्वशब्देनाभिधीयत इति 'ह्रस्वानां' इति बहुवचनम् । तत्र[9] ह्रस्वनिर्देशेऽणत्वादाकृतिपक्षे वा यत्नाधिक्याभावात् भिन्नकालानां ग्रहणं सिध्यतीत्यर्थः ॥

**( आक्षेपोपसंहारभाष्यम् )**

**तस्माद्[10] दीर्घाणामेव तपराणां प्रगृह्यसंज्ञा वक्तव्या । दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये— **तस्माद्दीर्घाणामेव तपराणामिति ।** गुणान्तरयुक्तसङ्ग्रहायासन्देहाय[11] चेत्यर्थः ॥

**( समाधानभाष्यम् )**

**एवं तर्हि किं न एतेन यत्नेन— 'यत् सिद्धः प्लुतः स्वरसंधिषु' इति । असिद्धः प्लुतः । तस्यासिद्धत्वात्तत्काला एव भवन्ति[12] ॥**

**( आक्षेपभाष्यम् )**

**कथं यत्तज्ज्ञापकमुक्तम्— "प्लुतप्रगृह्या अचि" इति ?**

**( समाधानभाष्यम् )**

**प्लुतभावी प्रकृत्या-इत्येवमेतद्विज्ञायते ॥**

**( प्रदीपः ) प्लुतभावीति ।** प्लुतो भावी यस्य सः-प्लुतभावी स्थानी प्रकृतः, तस्यैव प्रकृतिभावः ॥ ननु प्लुतस्यासिद्धत्वात्स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते ? नैष दोषः[13] । प्लुतोऽस्य भावीति बुद्ध्या प्रकल्पनमेतत् । न च तत्र प्लुतस्यासिद्धत्वम्, अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात् ॥

**( उद्द्योतः )** कर्मधारयभ्रमं व्युदस्यति— **प्लुतो भावीति ॥** यद्यप्याश्रयात्सिद्धत्वेनापि सिध्यति, तथापि शास्त्रबाधापेक्षया लक्ष-

---

१ **अतपराणा**मिति विशेषणं व्यर्थमिति शङ्कते— **नन्विति ॥** **सवर्णान्गृह्णीयाद**िति यथाश्रुतभाष्यासंगतेराह— **अयं भाव इति ॥** छाया ॥

२ ह्रस्वांशे दृष्टान्तमाह— **यथेति ॥** छाया ॥

३ **तपरत्वाभाव इति ।** एवं चात्र पक्षे तपरत्वस्याफलत्वाद् **'अतपराणाम्'** इति भाष्ये न विशेषणपरं किं तु सामान्ये विवक्षापरमिति भावः ॥ छाया ॥

४ ननु जातिपक्षेऽपि प्रकृते व्यापकजातिनिर्देशस्य दुर्वचत्वेन व्याप्यजातेर्भिन्नत्वेन कथं प्लुतसंग्रहः किमर्थं चोक्तरीत्या ह्रस्ववारणमत आह— **ईत्वादीति ॥** दीर्घमात्रसमवेतेत्यादि ह्रस्वसमवेतत्वाद्यनतिरिक्तमित्यर्थः ॥ छाया ॥

५ मन्यत इति सूचितामरुचिमाह— **भिन्नेति ॥** एवं चास्मिन्पक्षेऽप्यनिष्टमेवेति भावः ॥ छाया ॥

६ नन्वेवमेकार एवेत्यस्य का गतिरत आह— **एत्वेति । तेन** एकारेण ॥ उक्तयुक्त्यभावमप्याह— **तत इति ॥** छाया ॥

७ उक्तप्रकारेण वारणे तात्पर्यमाह— **जातीति ॥** छाया ॥

८ इकारांशमात्रे दोषमाह— **इहापीति ॥** छाया ॥

९ **तत्रेति ।** तस्मिन्नतपरे ह्रस्वनिर्देश इत्यर्थः ॥ तपरत्वे त्वग्नी वायू इत्यादौ न स्यादिति भावः ॥ छाया ॥

१० पूर्वपक्षी स्वाक्षेपमुपसंहरति— **तस्मादिति ॥**

११ दीर्घफलस्योक्तत्वात्तपरत्वफलमाह— **गुणान्तरेति ॥** अभेदकत्वेनाकृतिपक्षेण वाऽस्य सिद्धत्वादाह— **असंदेहाय चेति ॥** छाया ॥

१२ 'भवन्तीति' इति फ. पाठः ॥

१३ **नैष दोष इति ।** यत इति शेषः ॥ **न चेति ।** नहीत्यर्थः ॥ **तत्र**–बौद्धे प्रकल्पने ॥ छाया ॥

णाश्रयणमुचितमिति भाष्याभिप्रायः ॥ **प्रकृत इति** । [1]प्लुतशब्देन बोधित इत्यर्थः ॥ **बुद्ध्येति** । शास्त्रीये कार्येऽसिद्धत्वम्, न [2]चायं व्यवहारः शास्त्रीयं कार्यमिति भावः ॥

**( आक्षेपभाष्यम् )**

**[3]कथं यत्तत्प्रयोजनमुक्तम् ?**

**( समाधानभाष्यम् )**

**क्रियते तन्न्यास एव—"अप्लुतादप्लुते" इति ॥**

**( आक्षेपभाष्यम् )**

**एवमपि यत्सिद्धे प्रगृह्यकार्यं तत्प्लुतस्य न प्राप्नोति—"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥**

**( प्रदीपः )** कार्यकालपक्षमाश्रित्याह—**एवमपीति** । [4]ततश्च 'अग्नी ३' इत्यत्र **'अप्रगृह्यस्य'** इत्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वात्प्रगृह्यत्वाभावादनुनासिकः स्यात् ॥

**( उद्द्योतः ) कार्यकालपक्षमाश्रित्येति** । अयं भावः—[5]तत्र पक्षे संज्ञाशास्त्राणां न पृथक् बोधकत्वम् । **पूर्वत्रासिद्ध**मिति चातिदेशः कार्यार्थः । कार्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । **किं च** 'पूर्वत्रासिद्धम्' इत्यस्याधिकारत्वेन पूर्वत्रेदमसिद्धमिति तदर्थः । तत्र कार्यकालपक्षे तत्तद्देशोपस्थितसंज्ञापरिभाषाणामप्यसिद्धत्वबोधनम् । एवं च प्लुतदृष्ट्याऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्यास्यापि तद्दृष्ट्याऽसिद्धत्वेन प्लुतशास्त्रेऽनुवृत्त**पूर्वत्रासिद्ध**मित्यत्रत्यपूर्वग्रहणेन-**ईदूदेत्-अदसोमादि**त्यस्य ग्रहीतुमशक्यत्वमिति ॥ [6]यथोद्देशे तु स्वातन्त्र्येण संज्ञादीनां कार्यबोधकत्वात्तत्प्रति प्लुतासिद्धत्वबोधनं शक्यमेव ॥ एतेन कार्यकालपक्षेऽपि पाठकृतपूर्वत्वाक्षतिरित्यपास्तम् ॥ भाष्ये—**यत्सिद्धे प्रगृह्येति** । [7]प्लुते सिद्धकाण्डस्थे यत्प्रगृह्यकार्यमित्यर्थः । यत्प्रगृह्यकार्यदृष्ट्या प्लुतः सिद्धस्तदिति यावत् ॥

**( समाधानभाष्यम् )**

**एवं तर्हि किं न एतेन—'कार्यकालं संज्ञापरिभाषम्' इति, यथोद्देशमेव संज्ञापरिभाषम् । अत्र चासावसिद्धः, तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥**

**( प्रदीपः )** यथोद्देशपक्षाश्रयेण परिहारः । कथं पुनरयं पक्षः, यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्याय्या । नैष दोषः । यदाऽनुद्दिश्य प्रयोजनविशेषं [8]प्रयोजनमात्रमभिसन्धाय भविष्यति किंचिदनेन प्रयोजनं–इति संज्ञापरिभाषं प्रणीयते, तदा संभवत्येवायं पक्षो यथाश्रुतग्राहिप्रतिपत्रपेक्षः । महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्रपेक्षस्तु कार्यकालपक्षः ॥

**( उद्द्योतः ) यथोद्देशेति** । [9]नन्वत्र पक्षेऽग्नी ३ इत्यादौ प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षेऽनुनासिकप्रतिबन्धेन फलवत्यां संज्ञायां ततः प्लुते तं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावात्–अल्विधित्वेन स्थानिवत्त्वाभावाच्चाप्रगृह्यत्वेनानुनासिकः स्यादिति चेन्न । संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजसत्त्वेन पुनस्तस्याः सुलभ[10]त्वात् । एतदेव ध्वनयता **प्लुतस्यासिद्धत्वात्तत्काला एव भवन्तीत्ये**वकारः प्रयुक्तः । प्लुतात्प्राक् संज्ञायां च तत्काला एवेति तदर्थ इत्यलम् ॥ **प्रणीयते**=बोध्यते ॥

( इति तपरप्रयोजननिरूपणम् )

—>o<—

**( अथ द्विवचनविशेषणताविचारभाष्यम् )**

**कथं पुनरिदं विज्ञायते—ईदादयो यद्द्विवचनम्-इति, आहोस्विदीदाद्यन्तं यद्द्विवचनमिति ॥**

**( प्रदीपः ) कथं पुनरिति** । ईदादयो यदि संज्ञिनस्तद्विशेषणं तु द्विवचनं तदा द्विवचनान्तत्वमीदादीनां न संभव-

---

१ अप्रकृतस्य कस्यचिदभावेन प्रकृत इति व्यर्थमत आह—**प्लुतेति** ॥ छाया ॥

२ **अयं व्यवहार इति** । शास्त्रीयव्यवहार इत्यर्थः ॥ छाया ॥

३ [तटस्थः पूर्वपक्ष्युक्तप्रयोजनस्य का गतिरिति पृच्छति—] **कथं यत्तत्प्रयोजनमिति** । यत्प्रयोजनमुक्तं तत्कथमित्यर्थः ॥ छाया ॥

४ इष्टापत्तौ दोषमाह—**ततश्चेति** ॥ ननु संज्ञायाः कार्यार्थत्वादनुनासिकस्य च प्रगृह्याकार्यत्वात्कथं संज्ञोपस्थितिरत आह—**प्रतिषेधे इति** । तथाच न पर्युदासः किंतु प्रसज्यप्रतिषेध इति भावः ॥ छाया ॥

५ **तत्र**–कार्यकालपक्षे ॥ परिभाषातो विशेषमाह—**संज्ञेति** ॥ **पृथगिति** । स्वदेशे इत्यर्थः ॥ **कत्वमिति** । किंतु प्रदेशवाक्येन सहैव वाक्यैकवाक्यतयेति शेषः ॥ तदेवोपपादयति—**पूर्वत्रेति** ॥ **तत्र**–तथासति ॥ **अस्यापि**–प्रगृह्यसंज्ञाशास्त्रस्यापीति ॥ **इति**र्भावसमाप्तौ ॥ छाया ॥

६ परिहारीयमत्रैव प्रतिपादयन्नतदाश्रयणे बीजमाह—**यथोद्देशे त्विति** ॥ **कार्येति** । संज्ञादिरूपकार्येत्यर्थः ॥ एवं व्याख्याने फलमाह—**एतेनेति** । उक्तप्रकारेणेत्यर्थः ॥ छाया ॥

७ भाष्ये **'सिद्धे'** इति सत्सप्तमीत्याह—**प्लुते इति** ॥ **यदि**त्यस्य व्यवहितान्वय इति भावः ॥ प्रत्यासत्त्या प्लुतस्यैव ग्रहणमिति वार्तिककृदुक्तसिद्धकाण्डभ्रमनिरासायाह—**यत्प्रेति** ॥ छाया ॥

८ **अनुद्दिश्ये**त्यस्यैव व्याख्या–**प्रयोजनमात्र**मिति ॥ अनभिसंधाने कारणमाह—**भवीति** ॥ तथाच प्रतिपत्तृभेदेन पक्षद्वयोपपत्तिरिति भावः ॥ एवं च मुख्यत्वं कार्यकालस्य गौणत्वं यथोद्देशस्य ॥छाया॥

९ मिश्रोक्तिं खण्डयति—**नन्विति** ॥ **प्लुतस्य**–तच्छास्त्रस्य ॥ **तमिति** । प्रागुक्तरीत्येति भावः ॥ **बीजेति** । कार्यनिरपेक्षतया तद्रूपस्य उक्तरीत्या सामर्थ्यरूपस्य च बीजस्याभावादित्यर्थः ॥ **लक्ष्ये लक्षणस्ये**ति न्यायाच्चेत्यपि बोध्यम् ॥ छाया ॥

१० **सुलभेति** । लक्ष्ये लक्षणमित्यपि संजातकार्यविषयकमिति बोध्यम् ॥ अत्र मानमाह—**एतदेवेति** ॥ **एवेन** फलान्तरव्यवच्छेदः ॥ **ध्वनयता**–भगवता । इदमेवाभिप्रेत्य **'भविष्यति किंचित्'** इति कैयटेनोक्तम् ॥ वस्तुतो नैवं यथोद्देशपक्षस्वरूपम् । किं त्वन्यादृशम् । तत्तु केचिदित्यादिना परिभाषेन्दुशेखरे व्यक्तमिति बोध्यम् ॥ तदाह—**इत्यलमिति** ॥ छाया ॥

तीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम् । अथ द्विवचनं संज्ञि तद्विशेषणमीदादयस्तदा तदन्तविधिरप्रधानेन प्रधानस्येतीदाद्यन्तं द्विवचनमिति पक्षः ॥ तत्रोभयोरपि पक्षयोर्दोषदर्शनात्प्रश्नः ॥

( उद्द्योतः ) ईदादय इति । प्राथम्याददसोमादित्यनेनैकरूप्याचेति भावः ॥ तदेति । अन्तशब्दोऽवयववचनस्तदन्तस्येति बहुव्रीहिश्चेत्यर्थः ॥ अथेति । संज्ञाया आनन्तर्याद्येन विधिरित्यस्यानुग्रहाच्चेति भावः ॥

( विशेषजिज्ञासाभाष्यम् )

कश्चात्र विशेषः ?

( १४८ प्रथमपक्षे दोषप्रदर्शकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः ॥ * ॥

( भाष्यम् )

**ईदादयो द्विवचनं प्रगृह्या इति चेत्, अन्त्यस्य प्रगृह्यसंज्ञा विधेया-पचेते इति, पचेथे इति ॥**

( प्रदीपः ) पचेते इतीति । एकारोऽत्र द्विवचनं न भवति, अपि तु तस्यान्तः ॥

( उद्द्योतः ) भाष्ये—अन्त्यस्येति । द्विवचनान्त्यस्य वर्णस्येत्यर्थः ॥

( दूषणबाधकभाष्यम् )

**वचनाद्भविष्यति ॥**

( प्रदीपः ) वचनादिति । द्विवचनावयवे द्विवचनशब्दो वर्तिष्यत इत्यर्थः ॥

( दूषणसाधकभाष्यम् )

**अस्ति वचने प्रयोजनम् ।**

**किम् ?**

**खट्वे इति, माले इति ॥**

( प्रदीपः ) अस्तीति । मुख्ये संभवति गौणस्य ग्रहणमन्याय्यमित्यर्थः ॥ खट्वे इति । 'अन्तादिवच्च' इत्यादिवद्भावादेकारो द्विवचनम् ॥

( उद्द्योतः ) गौणस्येति । जघन्यत्वसामान्याल्लाक्षणिकमपि गौणपदेन गृह्यत इति भावः ॥

( दूषणबाधकद्वितीयपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि—ईदाद्यन्तं यद्द्विवचनम्-इति ॥**

( १४९ द्वितीयपक्षे दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ ईदाद्यन्तमिति चेदेकस्य विधिः ॥ * ॥

( भाष्यम् )

**ईदाद्यन्तमिति चेदेकस्य प्रगृह्यसंज्ञा विधेया—खट्वे इति, माले इति ॥**

( प्रदीपः ) एकस्येति । असहायस्येत्यर्थः । ईदूतोः केवलयोरेव संभव इति वचनसामर्थ्यात्तयोः सिध्यति, एकारान्तस्य तु द्विवचनस्य 'पचेते' इत्यादौ संभवात् 'खट्वे' इत्यत्र न सिध्यतीति दोषः ॥ 'येन विधिस्तदन्तस्य' इत्यत्र 'स्वस्य च रूपस्य' इति नाश्रितमिति दोषोपन्यासः ॥

( उद्द्योतः ) प्रथमोपस्थितेदूत्परित्यागेन एकारान्तोदाहरणदाने बीजमाह—ईदूतोरिति ॥ नाश्रितमिति । वार्तिककृतेति शेषः ॥

( १५० द्वितीयपक्षे समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ न वाऽऽद्यन्तवत्त्वात् ॥ * ॥

( भाष्यम् )

**न वा एष दोषः ।**

**किं कारणम् ?**

**आद्यन्तवत्त्वात् । आद्यन्तवदेकस्मिन्कार्यं भवतीत्येवमेकस्यापि भविष्यति ॥**

( तृतीयपक्षाभ्युपगमभाष्यम् )

**अथवा एवं वक्ष्यामि—'ईदाद्यन्तम्' ईदाद्यन्तं यद्द्विवचनान्तम्-इति ॥**

( प्रदीपः ) अथवेति । प्रत्ययग्रहणे यस्मादिति द्विवचनेन तदन्तविधिः, पश्चाद्द्विवचनान्तमीदादिभिर्विशेष्यत इत्ययं तृतीयः पक्षो भवति—ईदाद्यन्तं यद्द्विवचनान्तमिति ॥ ननु संज्ञाविधौ प्रत्ययग्रहणेन तदन्तविध्यभावः 'सुप्तिङन्तं पदम्' इत्यत्रान्तग्रहणेन ज्ञापित इति कथमेतत्पक्षोपपत्तिः ? चतुर्थपक्षप्रतिक्षेपाय वक्ष्यत्येवैतद्भाष्यकार इति नैतदपूर्वं चोद्यम् ॥

---

१ अशाब्दत्वनिरासाय वचनसामर्थ्याल्लब्धमर्थमाह—ईदाद्यन्तमिति ॥ तत्र-तयोः ॥ छाया ॥

२ नन्वन्तशब्दस्य समीपवचनत्वे तदन्तस्यैव द्विवचनान्तत्वसंभवोऽस्त्येवेत्याह—अन्तेति ॥ छाया ॥

३ द्विवचनावयव इति । तदन्त्य इत्यर्थः । सामर्थ्याल्लक्षणेति भावः ॥ छाया ॥

४ गौणपदासंगतिं परिहरति—जघन्येति । प्रकृत इति शेषः ॥ तथाच न तन्त्रायसंचारोऽपि तु मुख्यार्थबाधरूपलक्षणाबीजाभावान्न लक्षणेति तात्पर्यम् ॥ छाया ॥

५ ईदूतोरितीति । तथाचैतद्विधिबाध इति भावः ॥ छाया ॥

६ ननु सिद्धान्तिनाऽऽश्रितत्वादिदमयुक्तमत आह—वार्तिकेति ॥ तदेकदेशिनेत्यर्थः ॥ इदमपि सूत्ररीत्या बोध्यम् । तथाच तद्रीत्याऽयं ग्रन्थः । वार्तिककृताऽपि तस्य चेत्युक्तम् ॥ छाया ॥

७ चतुर्थेति ॥ पूर्वं मिथो विशेषणविशेष्यभावानाश्रयणेन समुदाये उभयोर्विशेषणत्वे जाते तदाश्रयेण स्वरूपभेदस्य सत्त्वेन 'विशेषयिष्यामः' इत्याद्युक्तिस्वारस्येन च 'अथवा' इत्यादिप्रतिज्ञाया अभावेऽपि तस्य चतुर्थपक्षत्वमित्यर्थः ॥ छाया ॥

( उद्द्योतः ) तदन्तविधिरिति । [3]अस्मादेव वचनाच्छब्दस्वरूपं विशेष्यमादायेति भावः ॥ इत्ययं तृतीयः पक्ष इति । व्य[2]पदेशिवद्भावानाश्रयणमस्य बीजम् ॥

( १५१ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधः ॥ * ॥

( भाष्यम् )

**ईदाद्यन्तं द्विवचनान्तमिति चेल्लुतिषेधो प्रकि वक्तव्यः । कुमार्योरगारं-कुमार्यगारम् । वध्वोरगारं-वध्वगारम् । एतद्धीदा[3]द्यन्तं श्रूयते, द्विवचनान्तं च भवति प्रत्ययलक्षणेन ॥**

( प्रदीपः ) दो[4]षान्तरेणेमं पक्षं निराकर्तुमाह—**लुकि प्रतिषेध इति** । दोषसद्भावेनैवास्य पक्षस्य निराकरणात्तदन्तविध्यभावोऽत्र नोक्तः ॥ **कुमार्यगारमिति** । कथं पुनरत्र द्विवचनान्तस्य समासः, यावता वृत्तौ संख्[5]याविशेषो न गम्यते । नैष दोषः । यथा 'तावकीनः' इत्यादावादेशेन संख्याविशेषो व्यज्यते, तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्येतेति दोषोपन्यासः ॥

( उद्द्योतः ) **तदन्तविध्यभावोऽत्र नोक्त इति** । ईदादिभिः श्रूयमाणत्वेन द्विवचनविशेषणमेव न्याय्यमिति एतत्पक्षासंभवरूपो दोषो नोक्त इत्यपि बोध्यम् ॥ **आदेशेनेति** । एकार्थयुष्मदादेर्विहितेन तवकाद्यादेशेनेत्यर्थः ॥ **प्रकृतिभावेनेति** । अन्य[1]थाऽनुपपद्यमानेनेत्यर्थः । एवं हि सिद्धान्ते प्रगृह्यत्वाभावेन द्वित्वव्यञ्जकाभावादस्य प्रयोगस्यासाधुत्वापत्तिः । असाधुप्रयोगे च भगवतोऽश्रद्धेयतापत्तिः । अतः पूर्वपदार्थतावच्छेदकरूपेणैव बोधो न तु सङ्ख्यावत्त्वेनेत्येव भाष्यसंमतम् । अतो वृत्तौ सङ्ख्याऽनवगमेऽप्यनेकार्थप्रतीत्या तथा-विग्रहे बाधकाभाव इति बोध्यम् ॥

( १५२ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ॥ * ॥

( भाष्यम् )

**यदयम् "ईदूतौ च सप्तम्यर्थे" इत्यर्थग्रहणं करोति, तज्ज्ञापयत्याचार्यः—न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति ॥**

( प्रदीपः ) **सप्तम्यामिति** । **'ईदूतौ सप्तमी'** इत्येव तदन्तविधौ सति प्रत्ययलक्षणेन 'सोमो गौरी अधिश्रितः' इत्यादिषु सिद्धायां प्रगृह्यसंज्ञायामर्थग्रहणं ज्ञापयति—**प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं न भवति**-इति ॥

( गौरवाक्षेपभाष्यम् )

**तर्त्तहि ज्ञापकार्थमर्थग्रहणं कर्तव्यम् ॥**

(प्रदीपः) **तर्त्तहीति** । आद्यन्तवद्भावानाश्रयणाय तृतीयः पक्षः परिगृहीतः । त[11]त्र च दोषप्रतिविधानार्थमधिकमर्थग्रहणं ज्ञापकार्थं कर्तव्यं भवतीति सुतरां गौरवं भवतीत्यर्थः ॥

( उद्द्योतः ) **सुतरामिति** । अकरणात्करणं गुरु, तस्य च ज्ञापकत्वेनाश्रयणमिति सुतरां गौरवमित्यर्थः ॥

( चतुर्थपक्षाश्रयणेन समाधानभाष्यम् )

**[12][ न कर्तव्यम् । ] ईदादिभिर्द्विवचनं विशेषयिष्यामः, ईदादिविशिष्टेन च द्विवचनेन तदन्तविधिर्भवि[13]ष्यति—ईदाद्यन्तं यद्द्विवचनं तदन्तं-ईदाद्यन्तम्—इति ॥**

---

१ यत्तु **'प्रत्ययग्रहणे-'** इत्यस्य **'यस्माद्'** इति योगविभागसाधितत्वेन तदन्तपदशून्यत्वेन तत्सत्त्वेऽपि **'प्रत्ययग्रहणे चापञ्चम्याः'** इति तदन्तविधिफलप्रदर्शकवार्तिकेन **'स्त्रीप्रत्यये च'** इति निषेधेन च तस्यास्तदादिनियमपरताया एव स्वीकार्यत्वाच्चिन्त्योऽयं कैयट इति ॥ तन्न । अर्थानवबोधात् । यथाचैतत्तथोक्तं परिभाषेन्दुशेखरे । तद् ध्वनयन्नाह—**अस्मादिति** । अन्तरङ्गत्वादिति भावः ॥ शब्दानुशासनप्रस्तावादाह—**शब्देति** ॥ छाया ॥

२ ननु द्वितीयस्य निर्दुष्टत्वे सति किमिति तृतीयपक्षाश्रयणमित्यत आह—**व्यपदेशीति** । आनन्तर्येण तथैव स्वरसतो लाभादिति भावः ॥ छाया ॥

३ 'द्यन्तं च श्रूयते' इति फ० पाठः ॥

४ **दोषान्तरेणेति** । साधारणं विहायोक्तेनासाधारणेन पूर्वोक्तपक्षद्वयदोषान्यदोषेणेत्यर्थः ॥ **इममिति** । समाधिना व्यवधानाभावेनाज्ञातज्ञापनरूपविधानाभावेनान्वादेशत्वाभावादेनादेशो न ॥ **दोषेति** । लक्ष्यासिद्धिरूपदोषेत्यर्थः ॥ छाया ॥

५ **संख्याविशेष इति** । एकत्वादीत्यर्थः ॥ न चैवमेकवचनान्तेनापि समासो न स्यादिति वाच्यम् । एकवचनस्यैकत्वाभावेऽपि प्रवृत्तेः सर्वसंमतत्वात् ॥ छाया ॥

६ न्यूनतां निराचष्टे—**ईदादिभिरिति** । श्रुतस्य श्रुतेनैव संबन्धस्य न्याय्यत्वात् ॥ **द्विवचनेति** । द्विवचनस्य विशेष्यीकरणमेवेत्यर्थः ॥ छाया ॥

७ **अन्यथा**—द्विवचनान्तसमासं विना ॥ छाया ॥

८ प्रदीपे दोषमाह—**एवं हीति** ॥ छाया ॥

९ उक्तदोषमुद्धरति—**सप्तम्यामिति** । तद्घटितसूत्रे इत्यर्थः ॥ **प्रत्ययेति** । नियमशास्त्राणां विधिरूपेण प्रवृत्तेरिति भावः ॥ छाया ॥

१० **प्रगृह्यसंज्ञायामि**त्यस्य विशेषपरत्वनिरासायाह—**प्रगृह्यसंज्ञाप्रकरणेति** । तथाच लुकि प्रतिषेधो न वाच्य इति भावः ॥ छाया ॥

११ **तत्र च**-तत्रापि, गौरवेऽन्वयः ॥ छाया ॥

१२ [ ] चिह्नगतोंऽशः 'अ' पुस्तके न पठ्यते ॥ पक्षान्तरेणोक्तदोषनिरासादुक्तज्ञापनार्थतया तत्र कार्यमित्याह—**नेति** । अत एव तत्सूत्रस्थभाष्यविरोधो नेति बोध्यम् ॥ तमेव पक्षमाह—**ईदादिभिरिति** ॥ छाया ॥

१३ 'भवति' इति फ० पाठः ॥

( प्रदीपः ) **ईदादिभिरिति** । अत्र पक्षे 'कुमार्यगारं' इत्यत्राप्रसङ्गः । न ह्यत्रेदूदेदन्तं द्विवचनम्, किं तर्हि ? 'ओस्' इति सकारान्तम् ॥ **तदन्तमिति** । द्विवचनान्तम् ॥ **ईदाद्यन्तमिति** । ईदादिभिः साक्षात्समुदायस्य संबन्धाभावादीदादिशब्देनेदाद्यन्तमुच्यते, तेनेदाद्यन्तान्तमित्यर्थः ॥

( उद्द्योतः ) **ईदादिभिरिति**–भाष्ये । श्रुतस्य[1] श्रुतेन संबन्धो न्याय्य इति भावः ॥ **साक्षात्**–द्विवचनमनपेक्ष्य ॥ **समुदायस्य**–प्रत्ययान्तस्य ॥

( आक्षेपभाष्यम् )

**एवमप्यशुक्ले वस्त्रे शुक्ले समपद्येतां-शुक्ल्यास्तां वस्त्रे-अत्र प्राप्नोति । अत्र हीदादि च द्विवचनं, तदन्तं च भवति प्रत्ययलक्षणेन ॥**

( प्रदीपः ) **शुक्ल्यास्तामिति** । शुक्लशब्दाद्द्विवचनं 'औ', तस्य '**नपुंसकाच्च**'इति शीभावः, ततश्च्विप्रत्ययः । शीशब्दस्य '**सुपः**' इति लुक् । '**अस्य च्वौ**' इतीत्वं । तद्धितान्तत्वात्सुप् । तस्य '**अव्ययात्**' इति लुक् । अत्र हि शीशब्द ईकारान्तं द्विवचनम्, तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति ॥ **अत्र हीदादि च द्विवचनमिति** । ईदादिशब्देनेदाद्यन्तमुच्यते ॥ क्वचित्तु पाठः—'**ईदाद्यन्तं च श्रूयते**' इति, तत्रैवं व्याख्येयम्—ईदाद्यन्तं च श्रूयते सूत्रे, तदन्तविधिरीदादिभिर्द्विवचनस्याश्रीयत इत्यर्थः । यस्त्वयं '**अस्य च्वौ**' इतीकारः, स[2] द्विवचनस्य न कश्चिदिति न तदभिप्रायेण भाष्यं व्याख्येयम् ॥

( उद्द्योतः ) नन्वत्र पक्षे न द्विवचनेनेदादि विशेष्यत इति कथमीदादि च द्विवचनमितीत्यत आह—**ईदादीति** । तदन्तत्वं चास्य[3] व्यपदेशिवद्भावेन बोध्यम् ॥ **श्रूयते सूत्र इति** । यच्छ्रूयते[4] सूत्रे द्विवचनं तदीदाद्यन्तमिति भाष्ये योजनेत्याशयः ॥

( समाधानभाष्यम् )

**अत्राप्यकृते[5] शीभावे लुग्भविष्यति ॥**

( आक्षेपसाधकभाष्यम् )

**इदमिह[6] संप्रधार्य-लुक् क्रियतां, शीभाव इति । किमत्र कर्तव्यम् ?**

**परत्वाच्छीभावः ॥**

( समाधानसाधकभाष्यम् )

**नित्यो लुक् । कृते शीभावे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥**

( आक्षेपसाधकभाष्यम् )

**अनित्यो लुक् । अन्यस्य कृते शीभावे प्राप्नोत्यन्यस्याकृते । शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ।**

**शीभावोऽप्यनित्यः, न हि कृते लुकि प्राप्नोति । उभयोरनित्ययोः परत्वाच्छीभावः, शीभावे कृते लुक् ॥**

( उद्द्योतः ) अनित्यत्वेऽपि लुकः शीभावो नित्यश्चेदतुल्यबलत्वात्परत्वादिति पूर्वोक्तमनुपपन्नमतो भाष्ये **शीभावोऽप्यनित्य** इत्युक्तम् ॥ कृते लुकि तदप्राप्तिस्तु प्रसङ्गरूपषष्ठ्यर्थस्याभावादिति भावः ॥

( आक्षेपदार्ढ्यभाष्यम् )

**अथापि कथंचिन्नित्यो लुक्स्यात् । एवमपि[7] दोषः, वक्ष्यत्येतत्-*पदसंज्ञायामन्तवचनमन्यत्र[8] संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम्* इति । इदं चापि प्रत्ययग्रहणम्, अयं चापि संज्ञाविधिः । अवश्यं[9] खल्वस्मिन्नपि[10] पक्षे आद्यन्तवद्भाव एषितव्यः ॥**

**तस्मादस्तु स[11] एव मध्यमः पक्षः ॥ ११ ॥**

( प्रदीपः ) **अथापि कथंचिदिति** । स्थानि[12]विशेषानपेक्षायां कृताकृतप्रसङ्गित्वेन लुक्शास्त्रस्य प्रवर्तनादित्यर्थः ॥ **अथवा** नित्यत्वेन बाधकत्वं लक्ष्यते । तेनान्तरङ्गानपीति शीभावस्य लुक् बाधक इत्यर्थः ॥ **एवमपि दोष इति** । पक्षस्यो[13]त्थानमेव नास्तीति एतत्पक्षासंभव एव दोषः ॥ **अवश्य-**

---

१ **श्रुतस्येति** । '**गुणानां च**' इति तु न

'**गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।**
**प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥**'

इति न्यायात् ॥ प्रधानोपकारश्च कुमार्यगारमित्यादौ संज्ञाऽभावः ॥ छाया ॥

२ **स द्वीति** । तस्य प्रकृत्यवयवत्वेन द्विवचनासंबन्धात् ॥ छाया ॥

३ **चास्येति** । द्विवचनस्येदाद्यन्तत्वं चेत्यर्थः ॥ छाया ॥

४ **श्रूयते** इत्यग्रे **द्विवचन**मित्यादि च तत्र पाठः । 'सूत्रे' इत्यार्थिकमित्याह—**यदिति** ॥ छाया ॥

५ तत्र शङ्कते—**अत्राप्येति** । एवं च प्रत्ययलक्षणेऽपि न तदन्ततेति भावः ॥ छाया ॥

६ समाधत्ते—**इदमिहेति** ॥ छाया ॥

७ तृतीयपक्षसाधारणं दोषमाह—**एवमपीति** ॥ छाया ॥

८ **अन्यत्रे**ति ज्ञापनफलाशयेन ॥ ज्ञाप्यांशस्तु **संज्ञाविधावि**त्यादिरेव ॥ छाया ॥

९ द्वितीयपक्षसमर्थनाय तत्साधारणं दोषमाह—**अवश्यमिति** ॥ **अस्मिन्निति** । चतुर्थे इत्यर्थः ॥ **अपिना** द्वितीयसमुच्चयः ॥ छाया ॥

१० 'खल्वप्यस्मिन् पक्षे' इति फ. पाठः ॥

११ **स एव**–आद्यन्तवद्भाववानेव ॥ तत्त्वस्य चतुर्थेऽपि सत्त्वादाह—**मध्यम इति** ॥ छाया ॥

१२ 'क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता' इति न्यायार्थमाह—**स्थानीति** । अस्य कादाचित्कत्वादेव कथंचिदित्युक्तं भाष्ये । **कथंचिदि**त्यस्य प्रकारान्तरेणेत्यर्थाशयेनाह—**अथवेति** ॥ **नित्यत्वेन**—तद्बोधकेन ॥ छाया ॥

१३ तदाशयमाह—**पक्षेति** ॥ **इति** हेतौ तेन हेत्वन्तरनिरासः ॥ **एवेन** लक्ष्यासिद्धिरूपदोषस्य प्रागुक्तस्य निरासः ॥ छाया ॥

मिति । यदाश्रयणभयादयं पक्षोऽङ्गीकृतस्तस्याद्यन्तवद्भावस्यास्मिन्नपि पक्षेऽवश्यमाश्रयणमङ्गीकर्तव्यम् । 'अग्नी' इत्यत्र हीकार एव द्विवचनं, न त्वीकारान्तम् ॥ **तस्मादिति** । द्वितीय एव पक्षोऽस्त्वित्यर्थः ॥

**'मणीवादीनां प्रतिषेधो वक्तव्यः'** इति भाष्यकार-वार्तिककाराभ्यामपठितत्वादप्रमाणमेतत् । **'मणीवोष्ट्रस्य'** इति तु प्रयोगो वाशब्दस्योपमानार्थस्य । 'रोदसीव' इत्यादिस्तु छान्दसः प्रयोगः । छन्दसि तु सर्वे विधयो विकल्प्यन्ते ॥ ११ ॥

**( उद्द्योतः ) अग्नी इतीति** । खट्वे इत्यस्याप्युपलक्षणमेतत् ॥ **द्वितीय इति** । प्रत्ययांशे तदन्तविधिसत्त्वेन पक्षद्वयस्यैकत्वबुद्ध्या तस्य मध्यमत्वोक्तिरिति बोध्यम् ॥ **एतदिति** । वृत्तिकारोक्तमित्यर्थः ॥ ११ ॥

( ११ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. २ )

## अदसो मात् ॥ १ । १ । १२ ॥

**( मूत्वमीत्वयोरसिद्धत्वनिराकरणाधिकरणम् )**

( १५३ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**मात्प्रगृह्यसंज्ञायां तस्य-ईत्वस्य ऊत्वस्य चासिद्धत्वादयावेकादेशाः प्राप्नुवन्ति, तेषां प्रतिषेधो वक्तव्यः । अमी अत्र, अमी आसते, अमू अत्र, अमू आसते ॥**

**( प्रदीपः ) अदसो मात् ॥ १२ ॥ मात्प्रगृह्येति** । अस्मिन्सूत्रन्यास इत्यर्थः ॥ **ऊत्वस्य चेति** । चशब्दान्मत्वस्य च । शास्त्रासिद्धत्वाच्च स्थानिलक्षणमेव कार्यं प्राप्नोति, नादेशलक्षणमित्ययादिप्रसङ्गः ॥ 'अमी आसते' इत्यत्रायादेशः प्राप्नोति । 'अमू आसाते' इत्यावादेशः । 'अमी अत्र' इत्यत्र-एकादेशः ॥ ननु च द्विपदाश्रयत्वाद्बहिरङ्गा अयादयोऽन्तरङ्गेष्वीत्त्वादिष्वसिद्धा इति पूर्वाभावे कथं **'पूर्वत्रासिद्धं'** इतीत्त्वादीनामसिद्धत्वं स्यात्? नैष दोषः । **'नाजानन्तर्ये-'** इति बहिरङ्गपरिभाषाया निषेधात् ॥

**( उद्द्योतः ) अदसो मात्** ॥ १२ ॥ **अस्मिन्निति** । मात्पदघटिते इत्यर्थः ॥ यदि तु **अदसो दा**दित्युच्यते, दात्परश्च पूर्वोत्तरसाहचर्यादवर्णभिन्नोऽच्-औकारैकाररूप एव, तदा न स्याद्दोष इति भावः ॥ इदमेव ध्वनयितुं 'अदसः प्रगृह्यसंज्ञायाम्' इति नोक्तम् ॥ नन्वीत्त्वोत्त्वयोरसिद्धत्वेऽपि **अदसोमा**दित्यत्रे**दूदि**ति निवर्त्य मात्परौकारैकारयोरपि प्रगृह्यत्वान्नायादिप्रसङ्गोऽत आह—**चशब्दान्मत्वस्येति** । एवं चैदौतोर्मात्परत्वाभावादेवमपि न प्रगृह्यत्वप्राप्तिरिति भावः ॥ नन्वीत्त्वादीनामसिद्धत्वेऽपि तन्निवर्तितौकाराद्यभावेन कथमयादिप्राप्तिः । किं चायादीन्प्रत्यसिद्धत्वेऽपि प्रगृह्यसंज्ञायामाश्रयात्सिद्धत्वेन तत्संज्ञायां तत्सामर्थ्यान्नायादयोऽत आह—**शास्त्रेति** ॥ **नादेशलक्षणमिति** । प्रकृतिभाव इत्यर्थः । प्रगृह्यत्वं त्वनुनासिकपर्युदासेन चरितार्थमिति भावः ॥ **एकादेशः—एङः पदान्तादतीति** ॥ **नाजानन्तर्ये इति** । अयादावजानन्तर्यादिति भावः ॥ त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्ते**र्विसर्जनीय**सूत्रे भाष्ये वक्ष्यमाणत्वान्न दोष इति **परे** ॥

( आक्षेपबाधकभाष्यम् )

**ननु च प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥**

---

१ **यदेति** । तृतीयपक्षदोषनिरासाय द्वितीयस्यादरे यदाश्रयणभयं तस्मादित्यर्थः ॥ **अयं** चतुर्थः ॥ छाया ॥

२ ननु मध्यमत्वस्यायमात्रनिरूपितत्वेन कथं तदुक्तिरत आह—**प्रत्ययांश इति** ॥ यदि त्वेतद्भाष्यबलात्तस्य परिष्कारकत्वमेवोच्यते तदा यथाश्रुतमेव सम्यगिति बोध्यम् ॥ छाया ॥

३ मूत्वमीत्वयोरन्तरङ्गत्वेन बलीयस्त्वम्, **'अन्तरङ्गं बलीयः'** इति न्यायात् । **नाजानन्तर्ये** इति निषेधस्तु **'असिद्धं बहिरङ्गमन्तरङ्गे'** इत्यस्या एव न तु तद्वाहृतपरिभाषायाः । यद्यपि **'असिद्धं बहिरङ्गमन्तरङ्गे'** इत्यनयैव गतार्थत्वा**दन्तरङ्गं बलव**दिति पृथक्परिभाषा न कर्तव्येति **विप्रतिषेधे** परमिति सूत्रे भाष्यकृद्वक्ष्यति । तथाप्यभ्युच्चयमात्रं तत् । **अन्तरङ्ग**परिभाषाया निरपवादत्वाद् **असिद्ध**परिभाषायास्तु **नाजानन्तर्ये** इति सापवादत्वादुभयोरावश्यकत्वात् इति **भागवृत्तिकाराः** । **कैयटलघुविवरणकारादयो**ऽप्येवम् ॥ **बृहद्विवरणकारास्तु नाजानन्तर्ये** इति परिभाषा मास्तु । तज्ज्ञापकतया यत्संमतम्, तेनासिद्धपरिभाषाया अनित्यत्वमेव ज्ञाप्यते इत्याहुः ॥ कथं तर्हि वार्तिककृतोक्तम्—**विप्रतिषेधाद्वा**—इति । सत्यम् । अत एवापरितोषाद्भाष्यकारेण **अथवेति** पक्षान्तरमाश्रितमिति दिक् ॥ श. कौ. ॥

४ अनतिप्रसङ्गायाह—**दात्परश्चेति** । **'ईदूदेत्' 'शे'** इति साहचर्यादित्यर्थः ॥ छाया ॥

५ **अभावेनेति** । देवदत्तहन्तृहतन्यायात् ॥ **संज्ञायां**—कृतायाम् ॥ छाया ॥ वस्तुतो देवदत्तहन्तृहतन्यायस्यात्र शास्त्रेऽनाश्रयणम् । अपि च पूर्वत्रासिद्धमित्यत्र कार्यासिद्धत्वाश्रयणे तत्कृतास्थानिनिवृत्तिरपि जातेत्यभिप्रेत्य 'तन्निवर्तितौकाराद्यभावेन' इत्याशङ्कितमुद्द्योते । शास्त्रासिद्धत्वे तु शास्त्रस्यैवासिद्धत्वात् तत्कृता स्थानिनिवृत्तिरपि नेत्येकारौकारयोः सत्त्वेनायादयः प्राप्नुवन्ति । तथा शास्त्रासिद्धत्वपक्षे एकारस्यैव सत्त्वेन प्रगृह्यसंज्ञाविधानसामर्थ्यादित्यतदपि न युज्यतेऽतः शास्त्रासिद्धत्वमित्याशयः ॥

६ संज्ञावैयर्थ्यं परिहरति—**प्रगृह्यत्वमिति** ॥ छाया ॥

७ हरदत्तरीत्याऽयं समाधिरित्याह—**अयादाविति** ॥ छाया ॥ 'उत्तरकालप्रवृत्तिके अयादा' इति च. झ. पाठः ॥

८ इदं सर्वं दूषयति—**त्रैपादिकेति** । पक्षद्वयेऽपीति भावः ॥ **न दोष इति** । तथाच दोष एव नेति शङ्का समाधिश्चायुक्तौ इति भावः ॥ छाया ॥

**( प्रदीपः ) ननु चेति ।** यथोद्देशपक्षे आश्रयात्सिद्धत्वं भविष्यतीत्यर्थः ॥

**( उद्द्योतः ) यथोद्देशेति ।** नन्वाश्रयात्सिद्धत्वेन प्रगृह्यत्वेऽपि मूत्वादेरसिद्धत्वादयादिकं स्यादेवेति चेन्न । एवमपि[1] संज्ञाशास्त्रवैयर्थ्यादत्रत्याश्रयणेनायादिकं प्रत्यपि सिद्धत्वं ज्ञाप्यत इत्याशयात् ॥

( आक्षेपसाधकं भाष्यवार्तिकम् )

## *वचनार्थो हि सिद्धे* ।

( भाष्यम् )

**नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ?**

**यत्सिद्धे[2] प्रगृह्यसंज्ञाकार्यं तदर्थमेतत्स्यात्–"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥**

**( प्रदीपः )** कार्यकालपक्षमाश्रित्याह—**वचनार्थो हीति ।** वचनस्य प्रयोजनमित्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**यत्सिद्धे इति ।** न च तत्र पूर्वसूत्रेणैव सिद्धिः । अद्विवचने तदप्रवृत्तेः । पूर्वसूत्रविषये यथोद्देशस्यैव भाष्यकृताऽङ्गीकाराच्च ॥

( आक्षेपबाधकभाष्यम् )

**नैकं[3] प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्—"अणोऽप्रगृह्यस्यानुनासिकोऽदसो न" इति ॥**

**( प्रदीपः ) नैकमिति ।** अनेक[4]कार्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यत इत्यर्थः । अन्यसूत्रमेकेनापि प्रयुज्यते–**'मुद्रादण्'** इत्यादि ॥ **तत्रैवायमिति ।** न[5] च तत्र 'ईदूदेत्–' ग्रहणं कर्तव्यं, मादिति[6] वा । यस्मादणोऽवसानेऽनुनासिको विधीयते, पूर्वेण च णकारेणाण्ग्रहणमिति 'असौ-अमुके-अमुकाभ्यां' इत्यादावनुनासिकस्याप्रसङ्ग एव । तदेवं[7] कार्यकालेऽपि संज्ञापरिभाषे प्रकरणोत्कर्षेण विधीयमाना प्रगृह्यसंज्ञा सर्वप्रगृह्यकार्यार्थी सती असिद्धत्वं बाधिष्यत इत्यर्थः ॥

**( उद्द्योतः )** नन्वीदाद्युपजीवनायात्र[8] करणमित्यत आह—**नचेति ।** हेऽमुके[9] अमुका इत्यादौ तु 'अदसः'[10] इत्यावर्त्य न विद्यते दस्य स्थाने सो यस्य, तादृशादस इत्यर्थेनानुनासिकः स्वमतेऽपि भवत्येवेति भाष्याशयमाहुः ॥ तादृशानामनभिधानमेवेत्यन्ये ॥ **प्रकरणोत्कर्षेणेति ।** संज्ञा[11]प्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः ॥ **सर्वेति ।** प्रकृतिभावानुनासिकप्रतिषेधेत्यर्थः ॥

( १५४ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ विप्रतिषेधाद्वा ॥ * ॥

( भाष्यम् )

**अथवा प्रगृह्यसंज्ञा क्रियताम्–अयादयो वा–इति[12] । प्रगृह्यसंज्ञा भविष्यति विप्रतिषेधेन ॥**

**( प्रदीपः ) विप्रतिषेधाद्वेति ।** 'अयावेकादेशप्रतिषेधो वा वक्तव्यः' 'विप्रतिषेधाद्वा प्रगृह्यसंज्ञा' इति विकल्पार्थो वाशब्दः । **'नैकं प्रयोजनम्'** इत्यादिस्तु परिहारो भाष्यकारेणोक्तो न वार्तिककारेणेति न तदपेक्षो[13] विकल्पः ॥

**( उद्द्योतः )** भाष्ये—**विप्रतिषेधाद्वेति ।** अन्तरङ्गत्वान्मूत्वादौ[14] कृते पदान्तरसमभिव्याहारेऽयादिभ्यः परत्वात्संज्ञासिद्धौ तत्सामर्थ्यान्मूत्वादिकं प्रकृतिभावं प्रत्यपि नासिद्धम् । आश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः ॥

( समाधानबाधकभाष्यम् )

**नैष[15] युक्तो विप्रतिषेधः । "विप्रतिषेधे परम्" इत्युच्यते । पूर्वा च प्रगृह्यसंज्ञा, परेऽयादयः ॥**

**( प्रदीपः ) नैष युक्त इति ।** इष्टसिद्धये–इति भावः ॥

**( उद्द्योतः )** ननु प्रगृह्यसंज्ञाऽभिनिर्वर्तमाना—इत्यादि

---

१ **एवमपि**–प्रगृह्यत्वेऽपि ॥ फलाभावादिति भावः ॥ छाया ॥

२ **यत्सिद्धे प्रगृह्येति ।** सिद्धे सिद्धकाण्डस्थे ईत्वादौ सति यत्प्रगृह्यसंज्ञाकार्यं यत्कार्यदृष्ट्या ईत्वादिकं सिद्धं तदर्थमित्यर्थः ॥ छाया ॥

३ अत्रास्वरसमाह—**नैकमिति** ॥ छाया ॥

४ यद्यप्येकफलस्य सामान्यशास्त्रानारम्भकत्वमित्यर्थस्तथापि प्रकृतत्वादाह—**अनेकेति** ॥ अत एवाह—**अन्यदिति** ॥ छाया ॥

५ ननु तत्रैव–अणोऽप्रगृह्यस्येत्यत्रैव 'अदसो न' इति क्रियमाणे तत्रेदादेरनुवर्तनाभावात्तदपि कर्तव्यमिति गौरवं स्यात्तन्निवारयितुमाह—**नचेति** ॥ ईदादेरनुवर्तनानावश्यकत्वमुपपादयति—**यस्मादित्यादिना** ॥

६ लाघवादाह—**मादिति वेति** ॥ तथा चाधिकं गौरवमिति भावः ॥ छाया ॥

७ उपसंहरति—**तदेवमिति** ॥ **अपिना** यथोद्देशसमुच्चयः ॥ **सतीति** । तदन्यथानुपपत्त्या संज्ञावदयादिकं प्रत्यपि सामर्थ्यादिति शेषः ॥ तथा च वार्तिकं न कार्यमिति भावः ॥ छाया ॥

८ **ईदाद्युपजीवनाय**–ईदादेरेव प्रगृह्यसंज्ञाविधानाय ॥

९ अदसो नेति न्यासेऽतिप्रसङ्गमावृत्त्या निवारयति—**हेऽमुक इति** ॥ तत्र सिद्धान्तमाह—**तादृशानामिति** ॥

१० **अदस इति । अदसो** नेत्यत्रेतिभावः ॥ **स** इति अकार उच्चारणार्थः । **स्वमतेऽपि**–भाष्यमतेऽपि ॥ **आहुरित्यरुचिबीजं** त्वावृत्त्यादौ न मानमिति ॥ भाष्यासंगतिस्तु नेत्याह—**तादृशानामिति ।** भाष्यप्रामाण्यादेवेति भावः ॥ छाया ॥

११ प्रकरणस्योत्कर्षाभावादाह—**संज्ञेति** ॥ छाया ॥

१२ अयं 'इति' शब्दः फ. पुस्तके न ॥

१३ **न तदपेक्ष इति ।** वार्तिकग्रन्थे पठितपूर्वापेक्षयैवाग्रिमेण विकल्पस्यौचित्यात् ॥ छाया ॥

१४ ननु द्वयोर्युगपत्प्राप्त्यभावेन कथं विप्रतिषेधः, कथं च तेनेष्टसिद्धिः, प्रकृतिभावदृष्ट्या तस्यासिद्धत्वादत आह—**अन्तरङ्गत्वादिति ।** पदसंस्कारपक्षे तदानीं प्रगृह्यत्वाप्राप्तेरिति भावः ॥ **यादिभ्यः इति ।** तद्दृष्ट्या सिद्धत्वात्तत्प्राप्तिः । **अपिना**ऽयादिपरिग्रहः ॥ छाया ॥

१५ प्रतिषेधवादी विप्रतिषेधं दूषयति—**नैष इति** ॥

वक्ष्यमाणप्रकारेण घटत एव विरोध इत्ययुक्तमेतत्-इत्यत आह—इष्टेति ॥

( समाधानसाधकभाष्यम् )

**परा[1] प्रगृह्यसंज्ञा करिष्यते ॥**

( प्रदीपः ) **करिष्यत इति** । आश्रयिष्यते-इत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**सूत्रविपर्यासः[2] कृतो भवति ॥**

( प्रदीपः ) इतरस्त्वगृहीताभिप्राय आह—**सूत्रविपर्यास इति** ॥

( समाधानसाधकभाष्यम् )

**एवं[3] तर्हि परैव प्रगृह्यसंज्ञा ।**

**कथम् ?**

**"कार्यकालं संज्ञापरिभाषम्", यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । "प्रगृह्यः प्रकृत्या" इत्युपस्थितमिदं भवति "अदसो मात्" इति ॥**

( प्रदीपः ) अभिप्रायं प्रकाशयितुमाह—**एवं तर्हीति** ॥

( उद्योतः ) भाष्ये—**परैवेति** । पूर्वं पाठेऽपि तत्र वाक्यार्थबोधाभावेनेति भावः[4] ॥

**कथमिति** । पाठकृतं स्वगतं पूर्वत्वमनपगतमिति **प्रश्नः** ॥

उत्तरयति—**कार्यकालमिति** । तत्पक्षे संज्ञाशास्त्रस्य प्रदेशदेश एवार्थबोधः । तदुत्तरं च विरोधोपस्थितिस्तत्कार्यज्ञानं चेति तत्रत्यपरत्वमेव **विप्रतिषेधसूत्रप्रवृत्तौ** बीजमिति भावः ॥ **परैवेत्येवकारेण** पाठकृतं पूर्वत्वं विद्यमानमपि **विप्रतिषेधसूत्रप्रवृत्तौ** न नियामकमिति सूचितम् । परिभाषाणां[5] तु तत्पक्षेऽपि तत्तद्देशेऽर्थबोधोऽस्त्येवेति तद्विषये **विप्रतिषेधसूत्रप्रवृत्तौ** पाठकृतमेव तन्नियामकमिति तात्पर्यम् । **आकडारस्थ**[6]भपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्र परया पूर्वबाधसिद्धिः ॥ **ष्यङः[7] संप्रसारणमिति** सूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति तत्रैव निरूपयिष्यामः ॥ **परे[8] तु** 'परैव' इत्यस्य संज्ञापदेन तत्कार्यप्रकृतिभाव उच्यते इति भावः ॥ आशयानभिज्ञस्य प्रश्नः—**कथमिति**, एकदेशिन उत्तरम्—**कार्यकालमित्यादीत्याहुः[9]** ॥ एतेन[10] "कार्यकालपक्षेऽपि पाठकृतपरत्वमयादीनामेव[11] । अन्यथा **ङमो ह्रस्वादची**त्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषाप्रवृत्त्या परत्वात्तत्र **तस्मादित्युत्तरस्ये**त्येवेति सिद्धान्तासङ्गतिः, उभयोरप्येकदेशस्थत्वेन परत्वासंभवात्" इत्यपास्तम् ॥

( समाधानबाधकभाष्यम् )

**एवमप्ययुक्तो विप्रतिषेधः ।**

**कथम् ?**

**द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः । एचामयादयः, ईदूतोः प्रगृह्यसंज्ञा ॥**

( प्रदीपः ) **द्विकार्ययोगो हीति** । द्वाभ्यां कार्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः ॥

( उद्योतः ) **द्वाभ्यामिति** । 'योगः' इति कर्मणि घञ् । द्विकार्यशब्दस्य **पात्राद्यन्तत्वादस्त्रीलिङ्गस्य** योगशब्देन **कर्तृकरणे कृते**ति समासः ॥ ( भाष्ये[12] ) **ईदूतोः प्रगृह्यसंज्ञे**त्यस्य तत्कार्यप्रकृतिभाव इत्यर्थः ॥

( समाधानसाधकभाष्यम् )

**नावश्यं द्विकार्ययोग एव विप्रतिषेधः ।**

**किं तर्हि ?**

**असंभवोऽपि । स चात्रास्त्यसंभवः[13] ।**

**कोऽसावत्रासंभवः ?**

**प्रगृह्यसंज्ञाऽभिनिर्वर्तमाना अयादीन् बाधते, अयादयोऽभिनिर्वर्तमानाः प्रगृह्यसंज्ञाया निमित्तं विघ्नन्ति-एषोऽसंभवः[14] । सत्यसंभवे युक्तो विप्रतिषेधः ॥**

( प्रदीपः ) **असंभवोऽपीति** । असंभव[15] एव विप्रतिषेधः । स तु कदाचित् द्विकार्ययोगो भवति, कदाचित्केवलोऽपि ।

---

१ विप्रतिषेधवादी समर्थयति—**परेति** ॥

२ प्रतिषेधवादी दूषयति—**सूत्रेति** ॥

३ [ विप्रतिषेधवादी समर्थयति ]—**एवं तर्हीति** । **तर्हि**रप्यर्थे । **एवमपि**-सूत्रविपर्यासेऽकृतेऽपि ॥ छाया ॥

४ **इति भाव इति** । यत्र वाक्यार्थबोधः स एव देश इति संज्ञाशास्त्राणां कार्यकालपक्षे विधिदेश एव वाक्यार्थनिष्पत्तेः स एव तेषां देशो **विप्रतिषेधे परमित्यस्य** प्रवृत्तौ निमित्तमतः प्रगृह्यसंज्ञा परैवेत्याशयः प्रदीपस्य ॥

५ नन्वेवं **ङमोह्रस्वा**दित्यत्रत्यभाष्यासंगतिरत आह—**परीति** । तथाच प्रागुक्तं संज्ञाशास्त्रमात्रविषयकमिति भावः ॥ **तदिति** । कार्यकालेत्यर्थः । **अपिना** यथोद्देशसमुच्चयः ॥ छाया ॥

६ नन्वेवमपि भपदसंज्ञादौ दोष एवात आह—**आकडारेति** ॥ छाया ॥

७ नन्वेवं **ष्यङ** इति सूत्रस्थभाष्यविरोधोऽत आह—**ष्यङ इति** ॥ छाया ॥

८ संज्ञापरिभाषयोर्वैरूप्याय सिद्धान्तमाह—**परे त्विति** ॥ त्यस्येति ग्रन्थस्य भाव इत्यत्रान्वयः ॥ छाया ॥

९ **आहुरिति** । वस्तुतस्तु **विप्रतिषेध परमित्यस्य** प्रवृत्तौ पाठकृतमेव परत्वमाश्रयणीयमिति युक्तम्, वैषम्ये बीजाभावात् । तथाच प्रगृह्यसंज्ञायाः परत्वं दुरुपपादमिति ग्रन्थयोजनामीदृशीमाहुरित्यर्थः ॥

१० यदर्थमित्थं व्याख्यातम् तदाह—**एतेनेति** ॥ **परिभाषेति** ॥ परिभाषाद्वयेत्यर्थः ॥ छाया ॥ **एतेन**—विप्रतिषेधसूत्रप्रवृत्तौ संज्ञाशास्त्राणामपि पाठकृतपरत्वाश्रयणेन ॥

११ **दीनामेवेति** । न संज्ञासूत्राणामिति भावः ॥

१२ सिद्धान्तरीत्या व्याचष्टे—**भाष्ये ईदूतोरिति** ॥ छाया ॥

१३ 'चास्त्यत्रा' इति फ. पाठः ॥

१४ 'विघ्नन्तीत्येषोऽसंभवः' इति मुद्रित पाठः ॥

१५ अस्माग्रेऽपेरुक्त्या द्विकार्ययोगः केवलः-तत्समुच्चयो वेति प्रतीयमानार्थनिरासायाह—**असंभव एवेति** ॥ तथाच भाष्येऽग्रे प्रदीपे चापिरेवार्थे न समुच्चय इति भावः ॥ **अवश्यमित्युक्तिस्वारस्या**दाह—**स तु कदेति** ॥ **दधातेरिति** । तथाचान्वयव्यभिचारः ॥ **असंभव इति** । स विप्रतिषेधो भवतीत्यर्थः । **व्याघातादिति** । तथाच तेनैव तदङ्गीकाराद्व्यतिरेकव्यभिचार इति भावः ॥ छाया ॥

तथा हि-सति संभवे द्विकार्ययोगो न विप्रतिषेधः, यथा-एकस्य दधातेरडागमद्विर्वचने भवतः—अदधादिति । क्वचिदेकस्य द्विकार्ययोगाभावेऽप्यसंभवोऽस्ति, यथा-त्रपूणामित्यत्र नुमूनुटोः प्रकृतिप्रत्ययभक्तयोः परस्परनिमित्तव्याघातात् ॥ **अयादीन्बाधत इति ।** प्रकृतिभावविधानात् ॥ **निमित्तमिति ।** ईत्वमूत्वं च ॥

**( उद्योतः ) कदाचिदिति ।** एवंच प्रकृते केवलासंभवरूपः स इत्यर्थः । केवलद्विकार्ययोगो न सर्वथा विप्रतिषेध इत्याह—**तथा हीति ॥ ईत्वमूत्वं चेति ।** तद्विघातेन संज्ञाऽभावे तत्कार्यप्रकृतिभावविघातः स्पष्ट एवेति भावः ॥

**( समाधानबाधकभाष्यम् )**

**एवमप्ययुक्तः । सतोर्हि विप्रतिषेधो भवति । न चात्रेत्वोत्वे स्तः । नापि मकारः । उभयमसिद्धम् ॥**

**( उद्योतः )** केचित्तु—संज्ञाकार्यस्य अयादिभिर्विप्रतिषेधोऽयुक्तः । वाक्यसंस्कारपक्षे मूत्वादितः पूर्वमेवायादिप्राप्त्या-मूत्वाद्युत्तरं च संज्ञायां तत्प्राप्त्या युगपत्प्राप्त्यभावात् । तस्मात् प्रगृह्यसंज्ञाशब्देन तज्जनक-मूत्वादिकं लक्षयित्वा तस्यायादिभिर्विप्रतिषेध इति वार्तिकार्थः, तमपि दूषयति-भाष्ये—**एवमपीति ॥**

**( १५५ समाधानसाधकवार्तिकम् ॥ ३ ॥ )**

**॥ * ॥ आश्रयात्सिद्धत्वं यथा रोरुत्वे ॥ * ॥**

**( भाष्यम् )**

**आश्रयात्सिद्धत्वं भविष्यति । तद्यथा—रुरुत्वे आश्रयात्सिद्धो भवति ॥**

**( प्रदीपः ) आश्रयात् सिद्धत्वमिति ।** प्रगृह्यसंज्ञायां कार्यित्वेनाश्रयणादसिद्धत्वाभावादीत्वादीनां तेषामयादीनां च विप्रतिषेधो निरूप्यते । तथाहि-सतोर्हि विप्रतिषेधो भवतीति पूर्वपक्षे 'ईदादीनां' एव विप्रतिषेध आक्षिप्तः । तत्रायादीनां चयनं चायकः, लवनं-लावकः, अग्नेऽत्र-इत्यत्रावकाशः । ईदादीनां तु यत्रायादीनामप्रसङ्गः सोऽवकाशः-अमी स्थिताः-अमू स्थितौ-अमीभ्य इति । 'अमी अत्र' इत्यादावुभयप्रसङ्गे परत्वादीत्त्वादय एव भवन्ति ॥ अत्र व्याख्यानान्तरं क्लिष्टत्वान्नोपन्यस्तम् ॥

**( उद्योतः ) कार्यित्वेनाश्रयणादिति ।** तत्सामर्थ्याद्दयादीन्प्रत्यपि सिद्धत्वमित्यर्थः ॥ यथोद्देशे इदम् । **'कथं ? कार्यकालं'** इति तु प्रकृतिभावायादिविप्रतिषेधविषयम् । इदानीं तु स नेति स्पष्टमेव ॥ **असिद्धत्वाभावादिति ।** ईत्वादीनामसिद्धत्वाभावादित्यन्वयः ॥ सामान्यत एवासिद्धत्वाभावबोधनादित्यर्थः ॥ **तेषां**—ईत्वादीनाम् ॥ **परत्वादिति ।** ईत्वादिषु जातेषु तेषामसिद्धत्वाभावादयादीनामप्रसङ्ग एवेति भावः ॥ **व्याख्यानान्तरमिति ।** प्रगृह्यत्वकार्यप्रकृतिभावेनायादीनां विप्रतिषेधपरमेव भाष्यम् । **सतोरित्यस्य** युगपत्प्राप्तयोरित्यर्थः । वाक्यसंस्कारपक्षे ईत्वादीनामसिद्धत्वेन ततः प्रागेव तत्प्राप्तिः, कृते त्वीत्वादावस्य-इति न तयोर्युगपत्प्राप्तिरिति भावः ॥ तदाह—**न चात्र**-इत्यादि ॥ **अत्र**—अयादिप्राप्तिकाले । असत्त्वे हेतुः—**उभयमसिद्धं**-इति । **पूर्वत्रासिद्धेनेति** शेषः ॥ परिहरति—**आश्रयादिति ।** पदसंस्कारपक्ष एवात्राश्रीयत इति भावः । एवंचोभयोर्युगपत् प्राप्तिः । प्रगृह्यसंज्ञायां तत्कार्ये च तयोः सिद्धत्वादयादीन्प्रति चासिद्धत्वादित्युपपन्नो विप्रतिषेध इति ॥ वाक्यसंस्कारपक्षे कृतस्य पूर्वपक्षस्य पदसंस्कारपक्षाश्रयेण परिहार इति **क्लेशः ॥**

**परे** त्वनुक्तेदादिविप्रतिषेधखण्डनतत्समर्थनपरत्वेन व्याख्यापेक्षयेदमेव युक्तं, पक्षान्तरैरपि परिहारकरणादित्याहुः ॥

**( समाधानबाधकाक्षेपभाष्यम् )**

**किं पुनः कारणं रुरुत्वे आश्रयात्सिद्धो भवति, न पुनर्यत्रैव रुः सिद्धः, तत्रैवोत्वमप्युच्येत ?**

**( प्रदीपः ) न पुनर्यत्रैवेति । 'रोः सुपि'** इत्यस्यान-

---

१ प्रथमपक्षे आह—**प्रकृतीति ॥ विधानादित्यस्य** तद्वारेत्यर्थः ॥ सिद्धान्ते तु प्रगृह्येत्यस्य प्रकृतिभाव इत्येवार्थः ॥ छाया ॥

२ यथाश्रुतार्थे दोष इत्याह—**केवलेति ॥** छाया ॥

३ प्रथमपक्षाशयेनोक्तं सिद्धान्तरीत्या योजयति—**तद्विघातेति ॥** छाया ॥

४ **उभयमिति ।** एकस्मिंल्लक्ष्ये द्वयोरेव सत्त्वादुभयमित्युक्तम् ॥ छाया ॥

५ **कार्यस्य**-प्रकृतिभावस्य ॥ पूर्वं पदसंस्काराशयकत्वस्योक्तत्वादाह—**वाक्येति ॥ तदिति ।** प्रकृतिभावेत्यर्थः ॥ इत्यर्थ इत्याहुरिति पाठः ॥ **तमपि**-पक्षम् ॥ एवंच **एवमपी**त्यस्य बुद्धिस्थतत्पक्षाङ्गीकारेऽपीत्यर्थः ॥ छाया ॥

६ **प्रगृह्यसंज्ञाशब्देन**—मात्प्रगृह्यसंज्ञायामिति वार्तिके तच्छब्देन ॥

७ 'द्धत्वं च यथा' इति फ. पाठः ॥

८ 'भवतीति' इति फ. पाठः ॥

९ **पूर्वेति ।** एतत्पूर्वं इत्यर्थः ॥ छाया ॥

१० पूर्वविरोधं परिहरति—**यथोद्देश इति ॥** छाया ॥

११ अग्रे तेषामिति सत्त्वादाह—**ईत्वादीनामिति ॥** छाया ॥ उक्तरीत्यार्थमाह—**सामेति ॥** छाया ॥

१२ सिद्धान्तरीत्याह—**प्रगृह्यत्वेति ॥** पूर्वपक्षाशयमाह—**वाक्येति ॥** छाया ॥

१३ 'भावेऽवायादी' इति ज. पाठः ।

१४ **सिद्धेनेति ।** तत्सूत्रेणेत्यर्थः ॥ छाया ॥

१५ **तत्कार्ये च**-प्रकृतिभावे ॥ छाया ॥

१६ प्रदीपं दूषयति—**परे त्विति ॥** तस्य खण्डनेन यत्तस्य प्रागुक्तस्य समर्थनं तत्परत्वेनेत्यर्थः ॥ यदितु कैयटस्यान्यत्तात्पर्यम् । तथाहि—उपक्रान्तसंज्ञाविप्रतिषेधपरमेवेदं **'सतोर्हि'** इति । **नचात्रेत्यत्र** 'प्रगृह्यसंज्ञा' इत्यध्याहारः । तत्र हेतुः—**'ईत्वोत्वे स्तो नापि'** इति । **'मकारः'** इत्यत्र नापीतिमात्रस्यावृत्तिरिति ॥ आवृत्त्यध्याहाराभ्यां दुरूहत्वमस्येति **क्लेश**-इत्युच्यते तदा सम्यगेव ॥ छाया ॥

१७ उक्तं द्रढयितुं प्रसङ्गादाह—**किं पुनरिति ॥** छाया ॥

१८ 'प्युच्यते' इति फ. पाठः ॥

न्तरं **'अत उरत्ति'** इति वक्तव्यम् । एवं चासिद्धत्वं न बाधितं भवति । तत्र पाठक्रमेऽसिद्धत्वस्य प्राप्त्यभावात् प्लुतस्य चोत्वे सिद्धत्वात्तत्कालत्वाभावात् **'अप्लुतादप्लुते'** इति न वक्तव्यं भवति ॥

**( उद्द्योतः ) रोः सुपीत्यस्यानन्तरमिति** । न चैवं **हशिचे**त्यस्यैतदुत्तरत्वाद्ढ्रोरीति दृष्ट्याऽसिद्धत्वापत्तौ मनोरथासिद्धिः । **ढो ढे लोपः-रोरीत्यनयोर्यरोऽनुनासिक** इत्यतः पूर्वं पाठः कार्य इत्याशयात्[1] ॥

( भाष्यम् )

**नैवं शक्यम् ॥**

**( १५६ समाधानसाधकवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ असिद्धे ह्याद्गुणाप्रसिद्धिः ॥ * ॥

( भाष्यम् )

**असिद्धे ह्युत्वे आद्गुणस्याप्रसिद्धिः स्यात्—वृक्षोऽत्र, प्लक्षोऽत्र । तस्मा[2]त्तत्राश्रयात्सिद्धत्वमेषितव्यम् । यथा[3] तत्राश्रयात्सिद्धत्वं भवति, एव[4]मिहाप्याश्रयात्सिद्धत्वं भविष्यति ॥**

( समाधानान्तरभाष्यम् )

**अथवा[5]—प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥**

**( प्रदीपः ) अथ वेति** । यथोद्देशपक्षाश्रयेणैतदुच्यते ॥

**( उद्द्योतः )** अनु[6]नासिकपर्युदासेन चारितार्थ्यमाशङ्क्याह—**यथोद्देशेति । एतत्-वचनसामर्थ्याद्वा०** इति वा[7]र्तिकं तद्व्याख्यानभाष्यं चेत्यर्थः ॥

पूर्व[8]भाष्यस्य व्याख्यान्तरवादिनस्तु वाक्यसंस्कारपक्षेऽप्याह—**अथवेति** । वस्तुतस्तु प्रकृतिभावोपस्थितसंज्ञायां तयोर्निमित्तत्वेनाश्रयणरूपवचनसामर्थ्यादयादीन्प्रत्यपि सिद्धत्वं ज्ञाप्यते इत्यर्थ इति कार्यकालेऽपि न दोषः ॥ **किं च** यथोद्देशेऽपि संज्ञां प्रति निमित्तत्वेनाश्रयणात्तद्दृष्ट्या मीत्वस्य सिद्धत्वेन संज्ञाया अनुनासिकप्रतिबन्धेन चारितार्थ्यमस्त्येव । प्रकृतिभावविषयकसंज्ञोपप्लवसामर्थ्याश्रयणे तु किं विशिष्य यथोद्देशाश्रयणेन ? एवमुपक्रमस्थभाष्येऽपि बोध्यमित्याहुः ॥

( समाधानान्तरभाष्यम् )

**अथवा—योगविभागः करिष्यते । "अदसः" अदस[9] ईदादयः प्रगृह्यसंज्ञा भवन्तीति[10] । ततः-"मात्" माच्च परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । अदस इत्येव ॥**

**किमर्थो योगविभागः ?**

**एको[11] यत्तत्सिद्धे प्रगृह्यकार्यं तदर्थः, अपरो[12] यदसिद्धे ॥**

**( प्रदीपः )** कार्यकालतायाम[13]प्याह—**अथ वेति** । 'अदसः' इति संबन्धसामान्ये षष्ठी । अदसः संबन्धिन ईदूदेत इति ॥

---

१ **इत्याशयादिति** । पूर्वपक्षिण इति भावः ॥ तस्माद्विप्रतिषेधः सर्वथा युक्त इति बोध्यम् ॥ छाया ॥

२ 'स्मादत्रा' इति फ. पाठः ॥

३ 'तत्र यथा' इति फ. पाठः ॥

४ 'एवमिहापि भवि' इत्येव फ. पाठः ॥

५ 'अथवा प्रगृह्यसंज्ञावचन-अथवा योगविभागः-अथवाऽऽहायमदसोमात्' इत्येतत्समाधानत्रयमपि न भाष्यकृतः किन्तु कस्यचित् पूर्वाचार्यस्य वार्तिककृतः । अत एव 'ननु च प्रगृह्यसंज्ञावचनसामर्थ्यात्' इत्यादिपूर्वभाष्येण न विरोधः । भाष्यकृताऽत्र वार्तिकानि नोपात्तानि, तदर्थ एवोपात्तः । अत एवेदानीं वार्तिकपाठो भाष्यपुस्तकेषु नोपलभ्यते । वार्तिकाकारस्तूद्योते प्रदर्शितः । यत्र वार्तिकानि भाष्यकृतैवोपात्तानि तत्र वार्तिकस्वरूपानुवाद उद्द्योते न दृश्यते, अत्र तु दृश्यत इति उद्द्योतकारेणापि सवार्तिकस्तादृशो भाष्यपाठो न दृष्टः ॥ वस्तुतस्तु पूर्वस्य 'ननु च प्रगृह्यसंज्ञा' इत्यादिग्रन्थस्य कार्यकालपक्षाभिप्रायेण प्रतिपादितस्य 'वचनार्थो हि सिद्धे' इति निरासः क्रियते । इदानीं यथोद्देशपक्षाश्रयेण तदेव पुनरपि समर्थ्यत इति भाष्योक्तावपि न विरोधः ॥

६ **अनुनासिकेति** । कार्यकाल इत्यादिः ॥ छाया ॥

७ **वार्तिकमिति** । अनेन **'ननु च-'** इत्यादिपूर्वेणापौनरुक्त्यं सूचितम् । तस्य भाष्यीयत्वाद् एतस्य वाक्यकारीयत्वात् । अयं विप्रतिषेधतो लघुः । तत्र ह्याश्रयात्सिद्धत्वेनायादीन् संज्ञां च प्रति सिद्धत्वमाश्रित्य विप्रतिषेधेनायाद्यभावो ज्ञाप्यते । अत्र तु वचनसामर्थ्यात्साक्षादेव तदभावसिद्धिरिति ॥ **सिद्धं धर्मिण**मिति न्यायविरोधस्तु न, ( पू. मी. ८।२।१७ अधि० ) हविरार्तिवदसिद्धस्याप्युद्देश्यत्वाविरोधात् ॥ छाया ॥

८ प्रदीपं दूषयितुमन्यथावतरणमाह—**पूर्वेति ॥ एवमपी**त्यादिभाष्यस्येत्यर्थः ॥ **व्याख्यान्तरेति** । उद्द्योतोक्तव्याख्यान्तरेत्यर्थः ॥ **वादिन** इत्यस्याहुरित्यत्रान्वयः॥ पदसंस्कारेणोक्तत्वादाह—**वाक्येति ॥** एवं च तत्र विप्रतिषेधासंभवात्पक्षान्तरमिति भावः ॥ **वस्तुतस्त्व**त्यस्य बोध्यमित्यत्रान्वयः ॥ **प्रेति** । तत्रोपस्थितेत्यर्थः ॥ **तयोः**-ईत्वोत्वयोः ॥ **इत्यर्थ इति** । अस्य वार्तिकादेरिति भावः ॥ एतेन ततो भेदोऽपि सूचितः ॥ पूर्वमेतादृशवचनसामर्थ्यं न ॥ अत एव वैपरीत्ये आह—**किं चेति ॥ मीत्वस्य**-मीत्वादेः ॥ तस्मादेवमावश्यकमित्याह—**प्रकृतीति ॥ एवमिति** । इदानीं भेदस्तु प्रागुक्त एव बोध्यः ॥ **इति बोध्य**मिति पाठः ॥ छाया ॥

९ 'अदसः परे ईदा' इति फ. पाठः ॥

१० 'भवन्ति' इत्येव फ. पाठः ॥

११ व्युत्क्रमेणाह—**एक इति** । अन्य इत्यर्थः । द्वितीय इति यावत् ॥ छाया ॥

१२ **अपरो यदसीति** । परभिन्नोऽपर आद्य इत्यर्थः ॥ छाया ॥

१३ **तायामपीति** । अपिना यथोद्देशसमुच्चयः ॥ छाया ॥

(उद्द्योतः) [1]भाष्ये-**'योगविभागाद्वा'** इति वार्तिकं व्याचष्टे **अथवेति** ॥ अदस इत्यस्य पञ्चम्यन्तत्वे उत्तरत्र मादित्यस्य विशेषणानापत्तिरत आह—**संबन्धेति** ॥ (भाष्ये) **यत्तत्सिद्धे इति** । मूत्वे इति शेषः । [2]यत्र कार्ये मूत्वं सिद्धं तत्प्रगृह्यकार्यमित्यर्थः ॥ **अपरो यदसिद्ध इति** । यत्र मूत्वमसिद्धं तदित्यर्थः ॥

(आक्षेपभाष्यम्)

**इ[3]हापि तर्हि प्राप्नोति—अमुया, अमुयोरिति । किं[4]च स्यात् यद्यत्र प्रगृह्यसंज्ञा स्यात् ? प्रगृह्याश्रयः प्रकृतिभावः प्रसज्येत ॥**

(प्रदीपः) **इहापीति** । 'अदस् टा' 'अदस् ओस्', अत्वम्, टाप्, सवर्णदीर्घत्वम् । 'आङि चापः' इत्येत्वम् । 'अदे आ' 'अदे ओस्' इति स्थिते 'अदसः' इत्यत्र 'मात्' इति विशेषणाभावात्प्रगृह्यसंज्ञायां सत्यामयादेशाप्रसङ्गः ॥

(आक्षेपनिरासभाष्यम्)

**नैष दोषः । प[5]दान्तप्रकरणे प्रकृतिभावः । न चैष पदान्तः ॥**

(आक्षेपभाष्यम्)

**ए[6]वमपि 'अमुकेऽत्र' अत्रापि प्राप्नोति ॥**

(प्रदीपः) **अमुकेऽत्रेति** । 'अदसः' इत्यनेन प्राप्नोति ॥

(आक्षेपबाधकभाष्यम्)

**द्विवचनमिति वर्तते ॥**

(आक्षेपसाधकभाष्यम्)

**य[7]दि द्विवचनमिति वर्तते 'अमी अ[8]त्र' अत्र न प्राप्नोति ॥**

(आक्षेपबाधकभाष्यम्)

**एवं तर्हि 'ए[9]दन्तं' इति निवृत्तम् ॥**

(प्रदीपः) **एदन्तमिति** । ईदूतोरेव स्वरितत्वप्रतिज्ञानादिति भावः । अ[10]ननुवृत्तिरेव च निवृत्तिः । यद्येवं माद्ग्रहणं न कर्तव्यम्, एद्ग्रहणनिवृत्त्यैव 'अमुकेत्र' इत्यत्राप्रसङ्गात् । नैतदस्ति । सति माद्ग्रहणे योगविभागो भवति, नान्यथा ॥

(उद्द्योतः) ननु समस्तत्वात्समुदायानुवृत्तिः स्यात्तत्कथमेतो निवृत्तिरत आह—**ईदूतोरेवेति** ॥ **नान्यथेति** । सि[11]द्धान्ते तु व्यर्थमेव माद्ग्रहणमिति भावः ॥

(समाधानान्तरभाष्यम्)

**अथवा-आहायम्—"अदसो मात्" इति, न च ईत्वोत्वे स्तः, ना[12]पि मकारः । त[13]त एवं विज्ञास्यामः—'मार्थादीदाद्यर्थानाम्' इति ॥**

(प्रदीपः) एकयोगे परिहारान्तरमप्याह—**अथ वेति** ॥ **मार्थादिति** । मार्थ एव स्थानी मशब्देनोक्तः, ईदूदेदर्थश्चेदूदेदिति । न चास्यां कल्पनायामसिद्धत्वं भवति, बुद्धिसङ्कलनायामसिद्धत्वाभावस्योक्तत्वात् ॥

(उद्द्योतः) भाष्ये ***मार्थादीदाद्यर्थानां वा*** इति वार्तिकं व्याचष्टे—**अथवाऽऽहेति** । ननु एवं सति 'अदेऽदौ' इत्यस्यामवस्थायां प्रगृह्यत्वेऽपि मीत्त्वमूत्वयोः [14]कृतयोरीकारादीनामप्रगृह्यत्वादेत-

---

१ भाष्ये तत्पाठादर्शनादाह—**भाष्ये योगेति** ॥ तथा च तन्न धृतमिति भावः । एवमग्रेऽपि । अत्र पक्षे हविरार्तिदृष्टान्ताश्रयणमपि न, लोके शास्त्रे च सिद्धस्यैव संज्ञाविधानात् । **अत एव** 'सतो-' इत्यादिवृद्धिसंज्ञासूत्रभाष्यसंगतिः ॥ **विशेषणेति** । धर्मपरम् ॥ अवयवषष्ठ्याममीत्यादाववयवत्वं दुर्बोधम् ॥ एतेन "ईदाद्यपेक्षयावयवषष्ठी, गौर्यसावित्यादौ सामीप्यसंबन्धेनातिप्रसङ्गापत्त्या कैयटोक्तं चिन्त्यं" इत्यपास्तम् । तद्घटितप्रयोगघटकत्वसंबन्धेनानतिप्रसङ्गात् ॥ अत्र तदनुवृत्तिः, अग्रे न दृष्टा, तस्य मात्परत्वाभावात् । अत आद्ये दोषं वक्ष्यति—**इहापीति** । एवं च बहुवचनासंगतिरेकदेशानुवृत्तेरसंभवात् ॥ छाया ॥

२ **यत्तदिति** । मूत्त्वे सिद्धे यत्तत्प्रगृह्यकार्यं तदर्थ इत्यर्थः । तत्फलितमाह—**यत्रेति** ॥ एवमग्रेऽपि ॥ छाया ॥

३ योगविभागे दूषणमाह—**इहापि तर्हीति** । तर्हि योगविभागाङ्गीकारे इहापि प्राप्नोतीत्यन्वयः ॥

४ 'किञ्च स्यात् ? यदि प्रगृह्यसंज्ञास्यात्प्रगृ' इति फ. पाठः ॥

५ **पदान्तेति** । **एङः पदान्तादि**त्यतोऽनुवृत्तिर्विभक्तिविपरिणामश्चेति भावः ॥ छाया ॥

६ पदान्तानुवृत्तावप्यतिप्रसङ्गस्तदवस्थ एवेत्याक्षिपति—**एवमपीति** ॥

७ फ. पुस्तके 'यदि द्विवचनमिति वर्तते' इत्यस्य न पाठः ॥

८ 'अमी अत्रेति न' इति फ. पाठः ॥

९ **एदन्तमिति** । तत्परमेद्ग्रहणमित्यर्थः ॥ छाया ॥

१० नन्वेवं कथं निवृत्तिरत आह—**अननुवृत्तिरिति** । अस्वरितत्वात् ॥ छाया ॥

११ अयमपि न सिद्धान्त इत्याह—**सिद्धान्ते त्विति** ॥ अयमेतत्पक्षाभिसंधिः—एकयोगत्वे एकत्र चारितार्थ्ये वचनसामर्थ्यं न संभवतीति प्रकारान्तरेण तद्दर्शितम् । इदानीं योगविभागद्वारा स्फुटं तदुच्यत इति सिद्धत्वेन ततः क्वापि न दोषः । विध्यर्थं च सूत्रद्वयमिति ॥ छाया ॥

१२ **नापीति** । असिद्धत्वात् ॥ **त इति** । ते वयमित्यर्थः ॥ **मार्थादिति** । मः अर्थ आदेशत्वेन प्रयोजनमस्येत्यर्थः ॥ एवमग्रेऽपि ॥ छाया ॥

१३ 'त एवं' इत्येव च. क. फ. पाठः ॥

१४ **कृतयोरिति** । एतेन "प्रकृतिभावादीत्वादिकं भावि न स्यात् 'प्रगृह्यः प्रकृत्या' इति विकारमात्रनिवर्तनात्" इत्यपास्तम् । तदप्रवृत्तौ संज्ञाया एवाप्रसक्तेः । अचि परे तन्निमित्तककार्यं प्रति प्रकृतिभावेनेत्वादित्वं प्रति तदप्राप्तेश्च ॥ **एतदिति** । यणाद्यापत्त्येति भावः ॥ ननु स्थानिवत्त्वेन तत्त्वमत आह—**अलिति** ॥ अस्थानिवत्त्वेनेति शेषः ॥ यद्यप्यादौ प्रगृह्यत्वेऽयादीन्प्रत्येव प्रकृतिभावे ततो मीत्वादौ तस्याप्रगृह्यत्वेऽप्यसिद्धत्वादेव स्वरसंध्यभावे न दोषः, तथाप्यनुनासिको न स्यात् । तद्दृष्ट्या तस्य तस्य सिद्धत्वात् । किं च प्रकृतिभावदृष्ट्यापि मीत्वस्यासिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेन तदभावात्सोऽपि न स्यादिति भावः ॥ छाया ॥

द्वैयर्थ्यम्, अविधिविधित्वेन प्रगृह्यत्वाभावादिति चेन्न । [1]प्रदेशे प्रगृह्यस्थानिकस्यापि लक्षणया ग्रहणेनादोषात् ॥

( समाधानभाष्यम् )

**[2]उक्तं वा ।**

**किमुक्तम् ?**

**'अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे [3]सिद्धे वक्तव्ये, प्रगृह्यसंज्ञायां च' इति ॥**

( प्रदीपः ) **उक्तं वेति** । असिद्धत्वमेवात्र प्रतिषिद्धमित्यर्थः ॥ **स्वरे इति** । [4]अचीत्यर्थः ॥ **बहिष्पदलक्षण इति** । द्वितीयपदव्यवस्थित इत्यर्थः । तेनैकपदव्यवस्थितेऽचि असिद्धे ईत्वोत्वे । तेन 'अमुया' 'अमुयोः' इत्यत्रायादेशो भवत्येव ॥ **प्रगृह्यसंज्ञायां चेति** । प्रगृह्यसंज्ञायामेव सिद्धत्वेन सिद्धे लक्ष्ये प्रपञ्चार्थः पूर्ववाक्योपन्यासः ॥

( उद्योतः ) **द्वितीयेति** । द्वितीयपदस्थेऽचि यत्कार्यं तत्रासिद्धत्वं नेत्यर्थः ॥

[ [5]अन्ये तु 'अथवा वचनसामर्थ्यात्' इत्यादिभाष्यं भाष्यकृत एवोक्तिः । अत एव सांप्रतपुस्तकेषु वार्तिकापाठ इत्याहुः ॥

अन्ये तु अन्त्ये '**उक्तंवेत्यस्य(त्र)**' वार्तिकत्वं मत्वा कोशे वार्तिकपाठो भ्रष्ट इत्याहुः ॥ ]

**सिद्धे इति** । प्रगृह्यत्वे सिद्धत्वमयादीन् प्रति सिद्धत्वं विना सप्रयोजनं नेति सामर्थ्यात्तान् प्रत्यपि तौ सिद्धाविति भावः ॥

---

( अनिष्टापत्तिनिवारणम् )

( १५७ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तत्र सकि दोषः ॥ * ॥**

( भाष्यम् )

**तत्र सककारे दोषो भवति—अमुकेऽत्र ॥**

( प्रदीपः ) **तत्र सकि दोष इति** । मात्परं यदीदाद्यन्तमिति दोषोपन्यासः । पूर्वसूत्रे हि तदन्तं गृहीतमितीहापि तदन्तस्यैवानुवृत्तिरिति भावः ॥

( उद्योतः ) विशेष्यासंनिधाने कथं तदन्तविधिरत आह—**पूर्वसूत्रे इति** । अर्थाधिकारादिति भावः ॥

( १५८ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा ग्रहणविशेषणत्वात् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ।**

**किं कारणम् ?**

**ग्रहणविशेषणत्वात् । न माद्ग्रहणेन ईदाद्यन्तं विशेष्यते ।**

**किं तर्हि ?**

**ईदादयो विशेष्यन्ते-मात्परे य ईदादय-इति ॥ १२ ॥**

( प्रदीपः ) स्वरितत्वेन [6]शब्दमात्रमनुमीयत इति उत्तरेऽभिप्रायः । [7]तत्र माद्ग्रहणेन गृह्यमाणमीदूदेद्विशेष्यते, तेन 'अमुकेऽत्र' इत्यत्र व्यवधानाद्दोषाभाव एव । [8]योगविभागे दोषप्रसङ्गात् 'एदन्तमिति निवृत्तं' इत्युक्तम् । एकयोगे तु तन्निवृत्त्या न प्रयोजनमिति **'न वा ग्रहणविशेषणत्वात्'** इत्युत्तरमुक्तम् ॥ १२ ॥

( उद्योतः ) **शब्दमात्रमिति** । एवं च विशेष्याभावान्न तदन्तविधिरिति भावः ॥ १२ ॥

---

( १२ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. ३ ॥ )

**शे ॥ १ । १ । १३ ॥**

( अनिष्टापत्तिनिराकरणम् )

( आक्षेपभाष्यम् )

**[9]इह कस्मान्न-भवति—काशे, कुशे, वंशे-इति ?**

( प्रदीपः ) शे ॥ १३ ॥ **इह कस्मादिति** । अत्र हि

---

१ ननु उपस्थितेऽस्योपयोगाभावोऽत आह—**प्रदेश इति** ॥ **प्रगृह्येति** । बहुव्रीहिः । अत्र लक्षणावत्त्वात्रापि लक्षणेति भावः ॥ यद्यपि कार्यकाले**ऽणो**ऽप्रेत्यत्र मुख्यार्थसंभवेन तदबाधान्नोचिता लक्षणा तथापि तात्पर्यानुपपत्त्या लक्षणा । अत एव **नैक**मिति न्यायोऽनुगृहीतो भवतीति दिक् ॥ छाया ॥

२ **उक्तं वेति** ॥ **स्वरितो** वेति सूत्रे वार्तिककृतेति शेषः ॥ तदेव प्रश्नपूर्वमाह—**किमुक्तमिति** ॥ छाया ॥ 'उक्तं वा' इत्येतद्भाष्यमेव न वार्तिकम्, कुण्डलनाया अदर्शनात्, उक्तस्य प्रकारप्रदर्शने 'अदस ईत्व' इत्यादेर्भाष्यस्यैवोपादानाच्च । एतद्भाष्यं वार्तिकव्याख्यायामुपलभ्यते तस्यैवात्रोपादानम् । प्रगृह्यसंज्ञायाञ्चेति तु वार्तिकं नैव दृश्यते, 'प्रगृह्यसंज्ञायाञ्च सिद्धे वक्तव्ये' इति भाष्यस्यैवायमेकदेशः । अतो मुद्रितपुस्तकेषु वार्तिकत्वेन प्रदर्शनमन्याय्यमेव ॥

३ 'सिद्धे वक्तव्ये' इत्यस्य फ. पुस्तके न पाठः ॥

४ उदात्तादिनिवृत्तये आह—**अचीति** । अदःशब्दापेक्षया बहिष्ट्वादि ॥ छाया ॥

५ [ ] एतच्चिह्नगतोंऽशो न ज. पुस्तकादिषु प्रामाणिकेषूपलभ्यते । उपलब्धपुस्तकेषु प्रामाणिकाप्रामाणिकेषु बहुष्वपि न दृष्टचरोऽयं पाठः । 'अन्ये तु' इत्यस्य पुनर्ग्रहणादपि नायमुद्योतग्रन्थ इति प्रतीयते । कस्मिंश्चित्पुस्तके टिप्पनरूपेण वर्तमानस्यास्य ग्रन्थस्य मूले प्रवेश इत्येव प्रतीयते ॥

६ **शब्दमात्रमिति** । शब्दाधिकार इति भावः ॥ छाया ॥

७ **तत्रेति** । तथानुवृत्तावित्यर्थः ॥ छाया ॥

८ नन्वेदन्तमिति निवृत्तमित्युक्तत्वादेव न दोष इति किमिति नवेत्युत्तरमत आह—**योगेति** ॥ वस्तुतोऽनुवृत्तिरेव न, फलाभावादिति बोध्यम् ॥ छाया ॥

९ **'शे'** इति भाविवौद्धसुबादेशानुकरणम् ॥ तदनभिज्ञः शङ्कते—**इहेति** ॥ छाया ॥

प्रत्यक्षमेव 'शे' इति रूपम् । 'युष्मे-अस्मे' इत्यत्र तु शकारस्यानुबन्धस्याश्रवणादनु[1]मेयमिति **प्रश्नः** ॥

**( उद्द्योतः )** शे ॥ १३ ॥ प्रत्यक्षमेवेति । एवंच 'इह-'इति भाष्यस्य इहैवेत्यर्थः ॥ **युष्मे इति** । **सुपां सुलुगिति** विभक्त्यादेशः शेशब्द इत्यर्थः ॥

**( १५९ समाधानवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ शेऽर्थ[2]वद्ग्रहणात् ॥ * ॥

**( भाष्यम् )**

**अर्थवतः शेशब्दस्य ग्रहणम् । न[3] चैषोऽर्थवान् ॥**

**( प्रदीपः ) शेऽर्थवद्ग्रहणादिति** । 'स्वं[4] शब्दस्य' इत्येवान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्याप्यङ्गीकरणार्थं रूपग्रहणं कृतम् । अत्र[5] च शशब्दोऽनर्थकः, सप्तम्येकवचनं त्वर्थवत्, तयोः समुदायोऽर्थान्तराप्रादुर्भावादनर्थकः ॥

**( उद्द्योतः )** शेश्चा[6]सावर्थवांश्च, तस्य ग्रहणादित्यर्थः। शक्तिग्रहनिरपेक्षप्रतीतिकत्वेनान्त**रङ्गत्वम्** । अर्थ[7]प्रतीतावपि प्रतीयमानत्वं—**अहेयत्वम्** । शब्दान्तरैरप्रत्यायनाद**साधारणत्वम्** ॥ **अप्रादुर्भावः**—अप्रतीतिः ॥

**( एकदेशिन आक्षेपभाष्यम् )**

**ए[8]वमपि-हरिशे, बभ्रुशे-इत्यत्र प्राप्नोति ॥**

**( प्रदीपः ) एवमपीति** । अत्र[9] हि मत्वर्थीयसप्तम्येकवचनयोरर्थवतोः समुदायोऽर्थवानेव, अवयवधर्मानुविधानात्समुदायस्येति **प्रश्नः** ॥

**( उद्द्योतः )** मत्वर्थीयो लोमा[10]दिशः ॥

**( समाधानभाष्यम् )**

**एवं तर्हि[11] 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इत्येवं न भविष्यति ॥**

**( प्रदीपः ) लक्षणेति** । प्रतिपदोक्ते हि झटिति प्रतिपत्तिर्भवति, लाक्षणिके तु लक्षणानुसन्धानद्वारेण बहिरङ्गा[12]-इति न तस्य ग्रहणम् ॥

**( सिद्धान्तिसमाधानभाष्यम् )**

**अ[13]थवा पुनरस्तु—'अर्थवद्ग्रहणे नानर्थकस्य' इत्येव ।**

**क[14]थं हरिशे-बभ्रुशे-इति ?**

**ए[15]कोऽत्र विभक्त्यर्थेनार्थवान्, अपरस्तद्धितार्थेन । समुदायोऽनर्थकः ॥ १३ ॥**

**( प्रदीपः ) अथ वेति** । अर्थ[16]वत्समुदायस्यापि कस्यचिदानर्थक्यं, यथा–दशदाडिमादिवाक्यस्य पदार्थानां परस्परसमन्वयाभावात् । इहापि हरिशशब्दवाच्यार्थगतसंख्याधिकरणशक्तिप्रतिपादनाय प्रवृत्ता सप्तमी न शप्रत्ययमात्रप्रतिपाद्येनार्थेनान्वेतीति शेशब्दस्यानर्थक्यम् ॥ १३ ॥

**( उद्द्योतः ) आनर्थक्यमिति** । प्रत्य[17]क्षानुमानिकन्यायापेक्षया रूपग्रहणानुगतार्थवत्परिभाषा प्रबलेति भावः ॥ १३ ॥

---

१ **अनुमेयमिति** । तथाच श्रुतानुमितन्यायसंचारो बोध्यः ॥ छाया ॥

२ **आनर्थक्यप्रतिहतान्**मिति न्यायेनानुमेयस्याप्यर्थवतो ग्रहणमुचितं न प्रत्यक्षस्यापि निरर्थकस्येत्याशयेनाह—**शेऽर्थवदिति** । सिद्धमिति शेषः ॥ छाया ॥

३ 'न चायमर्थवान्' इति फ. पाठः ॥

४ ननु शब्दानुशासने यथाकथंचिच्छब्दमात्रस्य ग्रहणमुचितं न त्वर्थवत एवाह आह—**स्वमिति** ॥ छाया ॥ स्वंरूपमिति सूत्रे स्वं शब्दस्येत्येव सिद्धेरूपग्रहणप्रयोजनमाह—**स्वं शब्देति** ।

५ **अत्र च**-काशे इत्यादौ च ॥ **सुपा**मिति विहितस्य तु स्वान्यथेन तत्त्वमिति तस्यैव ग्रहणम् ॥ छाया ॥

६ **'अर्थवतः शेशब्दस्य'** इति व्याख्यायाः पूर्वरूपस्य चानुरोधादाह—**शेश्चासाविति** ॥ वस्तुतः **'शे'** इति सूत्रेऽर्थवद्ग्रहणात्सिद्धमित्यर्थः । सर्वत्र तथैवाचार्यशैलीसत्त्वात् । व्याख्या तु संभवात्तात्पर्यार्थपरा । सूत्रे इवात्रापि लुप्तविभक्त्यन्तत्वेन तदनुकरणत्वेन पूर्वरूपसंभवः । किंच समासे 'अर्थवच्छेग्रहणात्' इत्युचितम्, उक्तप्रसिद्धरीत्योपपत्तौ राजदन्तादित्वकल्पनमफलं चेति बोध्यम् ॥ छाया ॥

७ **अर्थप्रतीति** ।

**'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'**

इति हर्युक्तेः ॥ तथा च शब्दसमकक्षतयाऽर्थस्येहाश्रयेणैतन्मूलकपरिभाषयाऽर्थवत एव ग्रहणं न्याय्यमिति भावः ॥ छाया ॥

८ **एवमपीति** । 'हरिशे' इत्यादौ हरिशब्दात् लोमादित्वाच्छप्रत्यये सप्तम्येकवचने च शप्रत्ययस्यार्थवत्त्वं सप्तमीप्रत्ययस्यापि–इति उभयोरर्थवत्त्वेन समुदायस्याप्यर्थवत्त्वं स्यादित्याशयेन शेशब्दस्यार्थवत्वं प्रतिपादयति ॥

९ **अत्र हीति** । हरिश इत्यादौ हि ॥ छाया ॥

१० **लोमादिश इति** । उभयत्रेति भावः ॥ छाया ॥

११ **एवं तर्हीति** । 'हरिशे' इत्यत्र 'शे' इति रूपं लक्षणेन सपन्नं 'युष्मे' इत्यत्र च प्रतिपदोक्तमिति तस्यैवग्रहणं, न त्वस्य ॥

१२ **अन्तरङ्गबहिरङ्गशब्दाभ्यां** शीघ्रोपस्थितिकत्व-विलम्बोपस्थितिकत्वे उच्येते । तयोरेव तद्वीजत्वात् । न तु तत्परिभाषाविषयत्वम् ॥ छाया ॥

१३ सिद्धान्त्याह—**अथवेति** ॥ शशब्दस्य सप्तम्येकवचनेऽनभिधानमिति भावः ॥ छाया ॥

१४ ननु गामानयेत्यादिबदर्थवत्समुदायस्यार्थवत्त्वमुक्तमेवैकदेशिनेत्याशयेनाह—**कथमिति** ॥

१५ **'प्रत्ययानां प्रकृत्यर्थान्वित-'** इति न्यायेन सिद्धान्तमाह—**एक इत्यादि** । **एकः**–अन्यो द्वितीयः ॥ **अपरः**–आद्यः ॥ छाया ॥

१६ एकदेश्युक्तिमपि विघटयति—**अर्थवदिति** ॥ प्रत्ययानामिति सूचयन्नाह—**इहापीति** ॥ छाया ॥

१७ ननु पुनः पूर्वपक्षाश्रयणे किं बीजं तथापि निर्वाहादत आह—**प्रत्यक्षेति** ॥ लौकिकलाघवगौरवमूलकप्रत्यक्षेतिन्यायाभिन्नलक्षणेतिन्यायापेक्षयेत्यर्थः ॥ **अनुगता**–बोधिता ॥ न्यायसिद्धाद्वचनसिद्धस्य प्राबल्यम् । किं च तस्य गुणभूतशब्दमात्रसंबन्धित्वमस्य तु प्रधानभूतार्थाश्रितत्वमित्यपि ततस्तत्त्वमिति बोध्यम् ॥ छाया ॥

( १३ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. ४ )

# निपात एकाजनाङ् ॥ १ । १ । १४ ॥

( पदकृत्याधिकरणम् )

( आक्षेपभाष्यम् )

**निपात इति किमर्थम् ?**

( प्रदीपः ) **निपात एकाजनाङ् ॥ १४ ॥ निपात इति किमर्थमिति ।** निपातस्यैवैकाचोऽर्थवत्त्वात् प्रत्ययस्य केवलस्य प्रयोगाभावादानर्थक्यात् कल्पितरूपत्वात् कल्पनायाश्च नियमाभावात् **प्रश्नः** ॥

( उद्योतः ) **निपात० ॥ १४ ॥ आनर्थक्यादिति ।** [1]अर्थवत्त्वानिश्चयादित्यर्थः । तत्र हेतुः—**कल्पितरूपत्वादिति** ॥ ततः किं तत्राह—**कल्पनाया इति ।** अत एव केचित्–शतिपं, अन्ये शप्तिपौ वदन्ति । तत्रेयतोऽर्थवत्त्वमिति न निश्चेतुं शक्यत इत्यर्थः ॥ ननु निपातग्रहणाभावे एकाजिति [2]वर्णग्रहणादर्थवत्परिभाषाया अप्रवृत्तावर्थवद्ग्रहणे मानाभाव इति चेन्न । बहुव्रीहिरित्याशयात् । **गौणमुख्यन्यायस्य** तु नेह प्रवृत्तिः । पर्युदासेनैवाज्रूपत्वे लब्धे एकाज्ग्रहणस्य गौणमुख्यसंग्रहार्थत्वात्–न्यायानित्यत्वाच्च ॥ एतेन "सत्यभिमाने–अनिः-इः-अभवत्–ईअभवदित्यादौ प्रगृह्यत्वं न स्याद् **गौणमुख्यन्यायात्**" इति परास्तम् । अत एवौदित्यत्रैव च्व्यन्तप्रतिषेध आरब्धः ॥

( समाधानभाष्यम् )

**चकारात्र, जहारात्र ॥**

( प्रदीपः ) **चकारात्रेति ।** अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः ॥ निपातोऽपि केवलो न प्रयुज्यते, द्योतकत्वात्–इति साम्यमेव निपातप्रत्यययोः ॥ **अततेर्डः**–'अ आगच्छ' इत्यपि प्रत्युदाहरणम् ॥

( उद्योतः ) **अन्वयेति ।** [3]व्याकरणानुसन्धानानुगृहीताभ्यामित्यर्थः । तस्यैव चासच्छास्त्रप्रवृत्त्युपयोगित्वादिति भावः ॥ [4]वस्तुतोऽनर्थकनिपातेऽपि अस्य प्रवृत्तेरोत्सूत्रे भाष्ये वक्ष्यमाणत्वादत्रार्थवत एव ग्रहणमिति न नियमः ॥ प्रश्नाशयस्तु—**अनाङिति** पर्युदासादप्रत्ययस्य ग्रहणमिति । उत्तराशयस्तु–पर्युदासेन तथाऽऽश्रयणे न मानं, निपातग्रहणादेव । तेन प्रत्ययानुकरणे एतत्प्रवृत्तिरिति ॥ [5]अ आगच्छेत्यत्रापि न, प्लुते प्रकृतिभावो दुर्वार इति प्लुताभावे कथंचिदुदाहरणत्वं यदि सवर्णदीर्घे तथा बोधः ॥

( आक्षेपभाष्यम् )

**एकाजिति किमर्थम् ?**

( प्रदीपः ) **एकाजिति किमर्थमिति ।** एकग्रहणसामर्थ्याद्बहुव्रीहिं मन्यते, ततश्च 'प्रेदं ब्रह्म' इत्यनिष्टनिवृत्तिर्न कृतेति **प्रश्नः** ॥

( उद्योतः ) **एकग्रहणेति ।** [6]स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावेनैकग्रहणं विनाऽपि कर्मधारयार्थलाभादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**प्रेदं ब्रह्म, प्रेदं क्षत्रम् ॥**

( आक्षेपबाधानुपपत्तिभाष्यम् )

**एकाजित्यप्युच्यमानेऽत्रापि प्राप्नोति । एषोऽपि ह्येकाच् ॥**

---

१ ननु कल्पितरूपत्वेन कल्पितार्थवत्त्वमपि स्यादत आह—**अर्थवत्त्वेति ॥ तत्र हेतुरिति ।** तत्रानिश्चये, प्रयोगाभावस्तु कल्पितरूपत्वे हेतुरिति भावः ॥ **ततः किमिति ।** तद्रूपत्वात्कथं तदनिश्चय इत्यर्थः ॥ **तत्रेयत इति ।** एवं च तस्मात्तदशक्यत्वेन तदनिश्चय इत्यर्थः ॥ छाया ॥

२ **वर्णग्रहेति ।** वर्तिपदार्थप्राधान्येनान्तरङ्गतया कर्मधारयात् ॥ **बहुव्रीहिरिति ।** लक्ष्यानुरोधाद् एकग्रहणसामर्थ्याच्च । **व्याहरती-** त्यादिनिर्देशस्तु सौत्रः ॥ **शयादिति ।** पूर्वपक्षिणः ॥ ननु सिद्धान्तेऽपि **गौणमुख्येति** न्यायेन नातिप्रसङ्ग इति तद्व्यर्थमेवात आह—**गौणेति ।** शब्दतस्तथाऽलाभादाह—**न्यायेति** ॥ उक्तस्य फलमाह—**एतेनेति ।** **सतीत्यनेनान्यथा** दोष एव नेति सूचितम् ॥ ननु तत्र तदभावे इष्टापत्तिरत आह—**अत एवेति ॥** एवेन प्रकृतसूत्रव्यच्छेदः । अन्यथाऽत्रापि तथा वाच्यः । यतो नोक्तोऽतस्तथेति भावः ॥ छाया ॥

३ तयोरपि अवास्तवत्वाद्वैपरीत्यापत्तेश्चाह—**व्याकरणेति ।** तदागमन्यायेन प्रत्ययस्य तादृशोपलम्भान्न वैपरीत्यमिति भावः ॥ मुख्यस्य तस्य वाक्य एव सत्त्वादाह—**तस्यैव चेति ।** तथा कल्पितार्थवत्त्वस्यैवेत्यर्थः ॥ **स्यदिति ।** एतदित्यर्थः ॥ छाया ॥

४ प्रदीपं दूषयति—**वस्तुत इत्यादिना ॥ अत्र**–प्रकृतसूत्रे ॥ तर्हि कथं प्रश्नोऽत आह—**प्रश्नेति ॥ तथेति ।** अप्रत्ययेत्यर्थः ॥ **निपातेति ।** अन्यथा तदानर्थक्यं स्पष्टमेव । तथा चानित्यत्वात्तन्न्यायाप्रवृत्तिः ॥ तत्फलमाह—**तेनेति ॥ प्रत्ययेति ।** तस्यानुकरणेऽनितिपरत्वे गतित्ववन्निपातत्वस्यापि सत्वादिति भावः ॥ **इति**–सिद्धान्तसमाप्तौ ॥ छाया ॥

५ अततेरित्यपि दूषयति—**अ आगेति ॥ पि प्लुते–दूराद्धूते चेति** ॥ तथा च संध्यभावस्य तदेष्टत्वम् । न तु प्रत्युदाहरणत्वम् ॥ कैयटाशयमाह—**इति प्लुताभावे इति ।** तस्य वैकल्पिकत्वात् । **इतिर्हेतौ ॥ उदेति ।** प्रत्युदेतीत्यर्थः ॥ कथंचित्त्वमेव स्पष्टयति—**यदीति ॥ तथा बोध इति ।** तदभाववद्बोध इत्यर्थः । तथा च तदन्यथानुपपत्त्या तदापि न संधिरित्युभयथापि न प्रत्युदाहरणत्वमित्यर्थः ॥ छाया ॥ च. पुस्तके 'अ आगच्छेत्यत्रापि प्लुते प्रकृतिभावो दुर्वार इति प्लुताभावे कथंचिदुदाहरणत्वं यदि तर्हि स' इति पाठः, अयमेव छायादृष्टः । झ पुस्तके नशब्दो नास्ति । 'दुर्वार इति परास्तं प्लुता' इति च ॥

६ एकत्वविवक्षायाः कैयटदण्डिकृष्णाद्युक्ताया दूषयिष्यमाणत्वमाह—**स्वाङ्गेति ॥** एवं चैकग्रहणांश एव तात्पर्यम् । अन्यथा तस्यानेकाज्व्यावृत्त्यर्थत्वस्य स्पष्टतया प्रश्नासंगतिश्च । अतएवाग्रे—**एवं तर्हीत्यादिना** एकग्रहणस्यैव फलं वक्ष्यति भगवान् ॥ छाया ॥

( आक्षेपबाधोपपत्तिभाष्यम् )

**एकाजिति नायं बहुव्रीहिः—एकोऽज् यस्मिन् सोऽयमेकाच् , एकाजिति ।**

**किं तर्हि ?**

**तत्पुरुषोऽयं समानाधिकरणः—एकः अच्—एकाच् , एकाजिति ॥**

( प्रदीपः ) **तत्पुरुषोऽयमिति ।** अन्तरङ्गत्वाद्वर्त्तिपदार्थप्राधान्यादिति भावः ॥

( उद्द्योतः ) अन्तरङ्गत्वे हेतुमाह—वर्त्तीति ॥

( आक्षेपभाष्यम् )

**यदि तत्पुरुषोऽयं समानाधिकरणः, नार्थ एकग्रहणेन ॥**

( प्रत्याक्षेपभाष्यम् )

**इह कस्मान्न भवति—प्रेदं ब्रह्म, प्रेदं क्षत्रम् ॥**

( उद्द्योतः ) भाष्ये—इह कस्मादिति । अजन्तो निपात इत्यर्थ इति प्रश्नः ॥

( प्रत्याक्षेपबाधकभाष्यम् )

**अजेव यो निपात इत्येवं विज्ञायते ॥**

( उद्द्योतः ) **अजेव य इति ।** निपातेनाज्विशेषणादित्यर्थः ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ?**

( उद्द्योतः ) **किं वक्तव्यमिति ।** निपातस्य न्यायप्राप्तविशेष्यत्वाभावायेत्यर्थः ॥

( समाधानभाष्यम् )

**न हि ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ?**

( समाधानभाष्यम् )

**अज्ग्रहणसामर्थ्यात् । यदि हि अचान्यच्च तत्र स्यात् , अज्ग्रहणमनर्थकं स्यात् ॥**

( उद्द्योतः ) **यदि हीति ।** अजन्तग्रहणेऽज्ग्रहणवैफल्यमिति भावः ॥

( सामर्थ्यानुपपत्तिभाष्यम् )

**अस्ति ह्यन्यदज्ग्रहणस्य प्रयोजनम् ।**

**किम् ?**

**अजन्तस्य यथा स्यात् । हलन्तस्य मा भूत् ॥**

( सामर्थ्योपपत्तिभाष्यम् )

**नैव दोषो न प्रयोजनम् ॥**

( प्रदीपः ) **नैव दोष इति ।** ननु 'पुरोऽहिः' इति हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात् । नैष दोषः, प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात् सकारस्य च कार्यान्तराप्रसङ्गात् । उत्वे तु रुत्वमाश्रयात्सिद्धम् ॥

( उद्द्योतः ) **प्रगृह्यसंज्ञायामिति ।** ननु सान्तस्य प्रगृह्यत्वे एकदेशविकृतन्यायेन रान्तस्यापि तत्त्वात्प्रकृतिभावः स्यादिति चेन्न । प्रकृतिभावेऽप्यसिद्धत्वात् ॥

( सामर्थ्यानुपपत्तिभाष्यम् )

**एवमपि कुत एतत्—द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः "आद्यन्तवदेकस्मिन्" "येन विधिस्तदन्तस्य" इति च,—इयमिह परिभाषा भविष्यति—"आद्यन्तवदेकस्मिन्" इति, इयं च न भविष्यति—"येन विधिस्तदन्तस्य" इति ? ॥**

( प्रदीपः ) **एवमपीति ।** अन्यतरनिवृत्त्याऽज्ग्रहणस्यार्थवत्त्वादज्मात्रं गृह्यते तदन्तं निरस्यते, विपर्ययस्तु न भवतीति विशेषाभावात् **प्रश्नः** ॥ पारार्थ्यसामान्यात् संज्ञाऽतिदेशौ परिभाषाशब्देनोक्तौ ॥ **सावकाशयोरिति ।** निरवकाशस्य बाधकत्वादेवमुक्तम् । तत्र तदन्तविधेरवकाशः—**'ओरावश्यके'** लाव्यं—पाव्यम्—इति । आद्यन्तवद्भावस्यावकाशः—**'मिदचोऽन्त्यात्परः'**—तानि—यानीति । अत्र हि साक्षादन्त्यग्रहणमस्तीति तदन्तविध्यभावः ॥ **समवस्थितयोरिति ।** इह प्राप्तयोः ॥

( उद्द्योतः ) अथ निपातस्य विशेष्यतया अजन्त इति व्याख्या-

---

१ व्यधिकरणनिरासायाह—**समेति** ॥ स्पष्टार्थमाह—**एक इति** ॥ छाया ॥

२ 'एकाच्' इति पदस्य फ. पुस्तके एकदैव पाठः ॥

३ **वर्त्तीति । निषादस्थपतिन्यायेन** लाघवादित्यर्थः ॥ छाया ॥

४ **आनर्थक्येति** न्यायेन ततो बहुव्रीहिरेव प्रबल इति शङ्कां वक्ष्यमाणफलान्तरेणापनेतुं विशिष्टप्रश्नतात्पर्यमाह—**यदीति** ॥छाया॥ आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायाकारः ॥ 'यदि तत्पुरुषः समानाधि' इत्येव फ. पाठः ॥

५ **अजेवेति** । अज्ग्रहणसामर्थ्येन सर्वं वाक्यमिति न्यायेन वाऽवधारणलाभः ॥ छाया ॥

६ **अस्ति हीति ।** नानर्थकम्, यत इत्यादिः ॥ छाया ॥

७ **हलन्तस्य**—रान्तस्य ॥ ननु सान्तस्यैवास्त्वत आह—**सकारस्येति** ॥ तस्य रुत्वं तु न कार्यं, प्रकृतिभावे रुत्वस्यासिद्धत्वात् । तदज्निमित्तककार्यत्वस्य तत्राभावाच्चात आह—**कार्यान्तरेति** ॥ छाया ॥

८ ननु सान्तस्य योग्यमेव कार्यान्तरं व्यावर्त्यमिति शङ्कते—**नन्विति । स्थानिवदित्यस्य** त्रिपाद्यामपि प्रवृत्तेः । तथा चोत्वं न स्यादिति भावः ॥ **प्रकृतीति ।** रुत्वस्येति भावः । **अपिना** संज्ञासमुच्चयः । तथाच प्रकृतिभावः सान्तं पश्यति न रान्तमिति तत्र प्रगृह्यत्वेऽपि स्वबारणीयतादृशकार्यप्रसङ्गो यत्र च तत्प्रसङ्गो न तं स्वयं पश्यतीति तत्राप्रवृत्तिरेवेति भावः ॥ छाया ॥

९ 'सिन् इति च' इत्यपि फ. पाठः ॥

१० **इति च**—इत्यनयोर्मध्ये ॥ **न्तस्येति ।** एतत् कुत इत्यन्वयः ॥

११ **सामान्यादिति ।** दृश्यते च **'प्रकृतिवद्'** इत्यतिदेशरूपा **'प्रातिपदिकग्रहणे—'** इति संज्ञारूपा परिभाषा ॥ छाया ॥

नेऽपि अज्ग्रहणसामर्थ्यान्मुख्याजन्तपरिग्रहेण केवलाज्रूपव्यावृत्तिरज्ग्रहणस्य फलं स्यादिति मनसि निधाय पृच्छति—**एवमपीति**—भाष्ये ॥ **अन्यतरनिवृत्त्येति** । निपातस्य विशेषणत्वे तदन्तपरिभाषाऽप्रसक्तिरेव निवृत्तिः । विशेष्यत्वे त्वजिति विशेषणसामर्थ्यात्तदन्तस्यैव ग्रहेण मुख्याजन्तपरिग्रहादाद्यन्तवदित्यस्य निवृत्तिरिति भावः ॥ **विपर्ययः**—निपातस्य विशेष्यत्वेनाजन्तपरिग्रहः केवलाचो निवृत्तिरिति ॥ **इति विशेषाभावादिति** । अत्र च कारणाभावादित्यर्थः ॥ **संज्ञा-येन विधिरिति** । **अतिदेशः**—आद्यन्तवदिति ॥ **लाव्यमिति** । 'उङ् शब्दे' इत्यत आवश्यके ण्यदनभिधानान्नेति भावः ॥

**( सामर्थ्यानुपपत्तिनिराकरणभाष्यम् )**

**आचार्यप्रवृत्तिर्ज्ञापयति-इयमिह परिभाषा भविष्यति-"आद्यन्तवदेकस्मिन्" इति, इयं न भविष्यति-"येन विधिस्तदन्तस्य" इति । यदयं-'अनाङ्' इति प्रतिषेधं शास्ति ॥**

**( प्रदीपः ) आचार्यप्रवृत्तिरिति** । यदि तर्हि लिङ्गेन तदन्तविधिर्निराक्रियते तदा तन्मूलाद्यन्तवत्परिभाषा कथं प्रवर्तेत ? नैष दोषः, **'आद्यन्तवत्'**-इत्यस्योपस्थानाय तदन्तविधिः प्रथमं सन्निधीयते, पश्चात्तु लिङ्गात् परित्यज्यते ॥ **अथ वा** लिङ्गादज्ग्रहणं निपातेन विशेष्यत इति विशेष्येण तदन्तविधेरभावादतिदेशस्यापि मा भूत् प्रवृत्तिः, तत्फलसंपत्त्या तूक्तम्—**परिभाषा भविष्यतीति** ॥

**( उद्योतः ) यदि तर्हीति** । एवं च **इयमिह भवतीति** भाष्यमनुपपन्नमिति भावः ॥ ननु पूर्वं प्रवर्त्य पश्चात्परित्यागापेक्षयाऽप्रवृत्तौ लाघवमित्यभिप्रेत्याह—**अथवेति** ॥

**( समाधानभाष्यम् )**

**एवं तर्हि-सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति तज्ज्ञापयत्याचार्यः—'अन्यत्र वर्णग्रहणे जातिग्रहणं भवति' इति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

***दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्* इति यदुक्तं तदुपपन्नं भवति ॥**

**( प्रदीपः ) एवं तर्हीति** । संज्ञाया विधीयमानत्वात् प्राधान्यात् संज्ञिनो गुणत्वात् **पशुना यजेतेति**वत् संख्याया विवक्षायां सिद्धायामेकग्रहणमन्यत्र जातिसंप्रत्ययार्थम् । अच्समुदायग्रहणाशङ्काया निरासार्थं ह्येकग्रहणं ज्ञापनफलं संपद्यते ॥ किं पुनः स्यात् यद्यत्राच्समुदायस्य ग्रहणं स्यात् ? उच्यते—इह 'अइउ अपेहि' इति समुदायस्यैका संज्ञा स्यात्, नावयवानाम् ; समुदायैकाज्द्विर्वचनवत्—इत्यन्त्यस्यैव प्रकृतिभावाद्यणादेशो न स्यात् । पूर्वयोस्तु स्वरसंधिः स्यात् । अच्ससमुदायपरिग्रहानुरोधाच्च निपातसमुदायो गृह्येत, एकनिपातस्याच्समुदायस्याभावात् ॥

**( उद्योतः )** ननु एकग्रहणाभावेऽच्समुदायस्य स्यादिति तन्निवृत्त्यर्थमेकग्रहणं, तत्राह—**संज्ञाया इति** ॥ **गुणत्वादिति** । संज्ञोपकारकत्वादित्यर्थः । पशोरपि यागोपकारकत्वाद्गुणत्वम् । न हि यागः पश्वर्थः, अपि तु यागार्थः पशुः । **ग्रहं संमार्ष्टी**त्यादौ तु ग्रहार्थत्वात्संमार्गस्य ग्रहस्य प्राधान्यमिति[12] च तद्गतसंख्या विवक्षितेति भावः ॥ [13]**परे तु** संज्ञा स्वकार्यद्वारा संज्ञ्युपकारिका, न तु संज्ञी संज्ञोपकारकः । अन्यथा ग्रहोऽपि कर्मत्वेन संमार्गार्थः स्यादिति **विधेयविशेषणं विवक्षितमनुवाद्यविशेषणमविवक्षित**मिति मीमांसकमर्यादैव ज्यायसी, भाष्यसंमता च—इतीदं **चिन्त्यम्** । तस्मात् स्वाङ्गसमुदाये स्वाङ्गत्वाभावादच्समुदायेऽच्त्वाभावाच्च तद्ग्रहणप्रसक्तिरित्येकग्रहणं विनाऽपि सिद्धिरिति तज्ज्ञापकमिति भाष्याशय **इत्याहुः** ॥

( भाष्ये )—**जातिग्रहण**मित्यस्य तर्ज्जात्याश्रयानेकव्यक्तिग्रहणमिति

---

१ **भाषाप्रसे**त्यत्राकारप्रश्लेषः ॥ छाया ॥

२ **सामर्थ्यादिति** । अवधारणेनेति शेषः ॥ छाया ॥

३ विशेषशब्दः करणव्युत्पन्न इत्याह—**अत्र चेति** । इत्युक्तौ चेत्यर्थः ॥ छाया ॥

४ दोषमुद्धरति—**उङिति** ॥ छाया ॥

५ 'भवति' इति फ. पाठः ॥

६ पूर्वपक्षाशयमाह— **एवं चेति** ॥ **अथवेतीति** । विशेषणविशेष्यभावव्यत्यय एव ज्ञापकम् । यथा **येनेति**सूत्रवार्तिकानां तद्व्यवस्थापकत्वं तद्वत् ॥ वस्तुतस्तु कृतार्थेति शेषपूरणे न कोऽपि दोष इति बोध्यम् ॥ छाया ॥

७ **एवं तर्हीति** । एकग्रहणसामर्थ्योपक्षयप्रदर्शनम् । अज्ग्रहणमात्रे क्रियमाणे प्रेदमित्यादौ दोषवारणे सिद्धे सति यदेकेत्याद्यर्थः ॥ **अन्यत्रेति** । फलपरमिदम्, न तु ज्ञाप्यांशकोटिप्रविष्टम्, तादृशार्थज्ञापनासंभवात् । आनर्थक्यापरिहारात् । न हि **पीनो देवदत्त** इत्यत्र रात्रिजागरणादिकल्पनं युक्तिमत् ॥ छाया ॥

८ **यदुक्तमिति** । **हलन्ताच्चे**त्यत्र । **दम्भेः सिद्ध**मित्यन्वयः । अत्र हेतुः—**हलिति** ॥ छाया ॥

९ तद्विशदयति—**अजिति** ॥ **हि**—यतः ॥ **ज्ञापनेति** । बहुव्रीहिः ॥ छाया ॥

१० ननु प्रत्येकं निपातत्वेन समुदायस्याचत्त्वात्कथमापत्तिरत आह—**अजिति** । चस्त्वर्थे ॥ छाया ॥

११ संस्कारकत्वरूपगुणत्वस्याभावादाह—**संज्ञोपेति** ॥ तदेवाह—**पशोरिति** ॥ छाया ॥

१२ 'मिति न तद्गतसंख्या विव' इति च. ज्ञ. पाठः ॥

१३ इदं दूषयति—**परेस्त्विति** ॥ **स्वकार्येति** । तत्तच्छास्त्राव्यवहितेत्यर्थः ॥ **कर्मत्वेन**—तत्कर्मत्वेन ॥ **मीमांसकेति** । गुणगता सा विवक्षितेति तैः क्वापि नोक्तम् । अत एव ग्रहोद्देशेन संमार्गविधानेपि तस्य न प्राधान्यम् । अत एव **वृद्धिसूत्रे** प्रधानानुरोधेन संज्ञाया आवृत्तिरुक्ता ॥ छाया ॥

१४ 'तज्जात्याश्रयैकानेकव्यक्तिग्रहणमित्यर्थः' इति पाठः ॥ **तदिति** । उपात्तेत्यर्थः । यथासंभवमिति भावः ॥ यथाश्रुतार्थत्यागे बीजमाह—**अन्यथेति** । उक्तार्थानङ्गीकार इत्यर्थः ॥ **ननु तस्य तथै**वार्थोऽस्तु अत आह—**प्रवृत्तीति** ॥ छाया ॥

भावः । अन्यथा जातिग्रहणेऽपि जातेरेकैकव्यक्तिव्यङ्ग्यतयाऽसंगतिरेव । प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्वेन तस्यावक्तव्यत्वाच्च ॥ **इहेत्यादि** । अत्रेदं **चिन्त्यम्**–समुदायसंज्ञयाऽवयवानामननुग्रहान्नात्र द्विर्वचनन्यायः । नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणम्–स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनेव, एकैकत्र सूत्रचारितार्थ्यात्–**इति** । तस्मात्तितउशब्दैकदेश अउशब्दानुकरणे उक्तसमुदायानुकरणे वाऽनितिपरे निपातसंज्ञके 'अउ अकरोत्' इत्यादौ प्रगृह्यत्वं स्यात्तद्वारणार्थंकग्रहणमिति तत्त्वम् ॥ भाष्ये–**दम्भेरिति** । दम्भेः सनि **दम्भ इच्चे**तीत्त्वे **सनीवन्ते**ति इडभावपक्षे इक्समीपो नकारः, न ततो झलादिः सन् परः, यतश्च भात्परः सन् न स इक्समीप इति **हलन्ताच्चे**ति किस्वाभावे **'अनिदितास्-'** इति नलोपो न स्यादिति चोद्ये जात्याश्रयानेकस्येक्समीपत्वं-सनश्च तस्मात्परत्वम्–इति किस्वे धिप्सतीति सिद्धिरित्यर्थः । अनेन सामीप्यमव्यवहिते एवेति सूचितम् ॥

( आक्षेपभाष्यम् )

**अनाङिति किमर्थम् ? ॥**

**( प्रदीपः ) अनाङिति किमर्थमिति** । ङिदङितोराकारयोर्विषयविभागप्रदर्शनाय **प्रश्नः** ॥

**( उद्द्योतः ) प्रदर्शनाय**–प्रदर्शनं कारयितुमित्यर्थः ॥

( समाधानभाष्यम् )

**आ उदकान्तात्–ओदकान्तात् ॥**

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—आ एवं नु मन्यसे, आ एवं किल तदिति ?**

**( प्रदीपः ) इह कस्मादिति** । अनुबन्धनिवृत्तौ विशेषापरिज्ञानात् **प्रश्नः** ॥

( समाधानभाष्यम् )

**सानुबन्धकस्येदमाकारस्य ग्रहणम्, अननुबन्धकश्चात्राऽऽकारः ॥**

( आक्षेपभाष्यम् )

**क पुनरयं सानुबन्धकः क पुनरयं निरनुबन्धकः ?**

( समाधानभाष्यम् )

**'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।**
**एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥ १ ॥ १४ ॥**

**( प्रदीपः )** अर्थवशात् विशेषावसाय इत्युत्तरम् ॥ **ईषदर्थे**–आ उष्णं–ओष्णमिति । **'आङीषदर्थे'** इति चोक्तम् ॥ **क्रियायोगे**–आ इतः–एतः, प्रादिषु हि ङित् पठ्यते ॥ **'आङ् मर्यादाभिविध्योः'** इति च समासविधौ ङिन्निर्दिष्टः–आ उदकान्तात्–ओदकान्तात्, आ अहिच्छत्रात्–आहिच्छत्रादिति ॥ विना तेन–इति **मर्यादा**, सह तेन–इत्य**भिविधिः** ॥ पूर्वप्रकान्तस्य वाक्यार्थस्यान्यथात्वद्योतनयाऽऽकारः प्रयुज्यते–आ एवं नु मन्यसे, नैवं पूर्वममंस्थाः संप्रति मन्यस इति । वाक्यारम्भसूचनायाऽऽकार इत्यपरे ॥ तथा स्मृतेः सूचक आकारः प्रयुज्यते ततः स्मृतोऽर्थो निर्दिश्यते—आ एवं किल तदिति ॥१४॥

**( उद्द्योतः )** किंचिद्विधानायोपात्तस्यान्यविधानाय पुनरुपादानमन्वादेशः । प्रकृते च विधानद्वयाभावात् 'एतं' इत्येनादेशो न कृत इत्याहुः ॥ **विना तेनेत्यादि** । यथा-आकाशी वृष्टो देव इत्यादौ काशीमभिव्याप्य काशीं वर्जयित्वेति वाऽर्थः ॥ १४ ॥

---

१ तत्रादौ दृष्टान्तवैधर्म्यमाह—**समुदायेति** ॥ अग्रहणे दृष्टान्तमाह—**स्वाङ्गेति** ॥ ननु सामर्थ्यात्स्यादत आह—**एकैकत्रेति** ॥ **इति**–चिन्त्यत्वसमाप्तौ ॥ छाया ॥

२ भाष्याशयमाह—**तस्मादिति** ॥ स्वरूपबोधनाय संध्यकरणम् ॥ **उक्तेति** । अइउ इति निपातसमुदायेत्यर्थः ॥ **इत्यादौ**–इत्याद्येकदेशे, **आदिना** समुदायपरामर्शः ॥ छाया ॥

३ **अनेन**–भाष्येण । अन्यथाऽनर्थकमेव चोद्यादि सर्वं स्यादिति भावः ॥ छाया ॥

४ प्रश्नकर्तुरग्रे तत्प्रदर्शकत्वाभावाद्यथाश्रुतासंगतेराह—**प्रदर्शनमिति** ॥ पुनः प्रश्नपूर्वकतत्प्रदर्शनं कारयितुमयं पक्षः । ङकारादर्शनान्मूलभूततत्साफल्यविषयकः सामान्यतः प्रश्न इत्यर्थः ॥ छाया ॥

५ **निवृत्तौ**–सत्याम् ॥ छाया ॥

६ **इदम्**–अनाङिति ॥ छाया ॥

७ **मर्यादाभिविधाविति** । शाकपार्थिवादिः । अन्यथा कथमप्यसंगतेः ॥ **यः**–आत् ॥ छाया ॥

८ **उक्तमिति** ॥ **कुगतीत्यत्र** वाक्यकृता ॥ छाया ॥

९ **अन्यथा त्वेति** । अनभिमतत्वेत्यर्थः । तदाह—**नैवमिति** ॥ **स्मृतेरिति** । विस्मृतस्य स्मृतिविषयताया इत्यर्थः ॥ **'एवं किल तत्' इति** स्मृतार्थनिर्देशादिदमर्थो लब्धः । तदाह—**तत इति** ॥ छाया ॥

१० **विधानेति** । अत्रोभयत्र विधानं प्रवर्तनाविषयत्वरूपमिति प्रकृते एकसत्त्वेऽपि द्वयं नास्तीति न्यायेन द्वितीये विधानसत्त्वेऽप्याद्ये तदभावेन तद्द्वयाभावादेतमित्यत्र स न कृत इत्यर्थः ॥ **आहुरिति** ॥ कौस्तुभकृदादय इत्यर्थः ॥ अत्रारुचिबीजं तु **कथितानुकथनमात्र**मिति भाष्यविरोध इति ॥ तस्मादज्ञातज्ञापनरूपापूर्वबोधनमेवोभयत्रापि विधानम् । न तु तत् । अत **एवेमकाभ्यां रात्रिरधीता अथो आभ्यामहरप्यधीत**मित्युदाहरणसंगतिः । तदपि प्रकृते आद्ये न, ईषदर्थादिवृत्तित्वस्य सिद्धत्वेनाबुद्धबोध्यत्वाभावेनानुवाद्यत्वाद् अतो नादेशः । वस्तुतस्तु मिथोनिराकाङ्क्षयोरेव तयोर्यत्र सत्ता तत्रैवान्वादेशत्वमिति पूर्वार्धोक्तस्य नित्यमुत्तरसापेक्षत्वेनाधोक्तिरूपत्वेन तद्वाक्यपूर्त्यभावेनोक्तस्य पुनरुक्तिरूपत्वाभावेन तस्य संभव एव नेति न तत्प्रसक्तिः । अत एव कैयटाद्युक्तिरिति बोध्यम् ॥ छाया ॥

११ **एनादेशः**–'एतमातं' इति भाष्यकारिकायाम् ॥

१२ लाघवाद्धुभयोरेकमेवोदाहरणमाह—**यथेति** ॥ छाया ॥

( १४ संज्ञासूत्रम् ॥ १ । १ । ५ आ. ५ )

## ओत् ॥ १ । १ । १५ ॥

( सूत्रवैयर्थ्यनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ?**

( समाधानभाष्यम् )

**आहो इति, उताहो इति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । निपातसमाहारोऽयम् । आह-उ-आहो इति । उत-आह-उ-उताहो इति । तत्र "निपात एकाजनाङ्" इत्येव सिद्धम् ॥**

( प्रदीपः ) **ओत् ॥ १५ ॥ निपातसमाहारोऽयमिति ।** अनर्थकानामपि निपातानां 'कमीमिदु' इत्यादीनां दर्शनादर्थभेदाभावेऽपि निपातसमाहारत्वमुक्तम् ॥

( उद्योतः ) **ओत्** ॥ १५ ॥ दर्शनादिति । [1]**वेदे, चादीनां पादपूरणार्थानां च लोकेऽपीत्यादिः ॥ अर्थभेदाभावेऽपि ॥** तन्नानात्वाभावेऽपि अवयवा अनर्थकाः, निपातसमुदाय एवार्थवानिति भावः । उ[2]शब्दोऽत्र निरनुबन्धकः । तेन '**उञः**' इत्यनेन सिद्धिरिति न भ्रमितव्यम् ॥

( समाधानसाधकभाष्यम् )

**एवं तर्ह्येकनिपाता इमे ॥**

( प्रदीपः ) **एवं तर्हीति ।** चादिषु त[3]था पाठादिति भावः ॥

( समाधानान्तरभाष्यम् )

**अथ[4]वा प्रतिषिद्धार्थोऽयमारम्भः । ओ षु यातं मरुतः । ओ षु यातं बृहती च शक्वरी । ओ चित्सखायं सख्या ववृत्याम् ( ऋ० १०।१०।१ ) ॥**

( प्रदीपः ) **ओ षुयातमिति ।** [5]आ उ–ओ इत्यत्रान्तवद्भावाद्ङवत्त्वमाङ्–इति '**अनाङ्**' इति प्रतिषेधः प्राप्नोति, पर्युदासे तु न दोषः । तत्र 'आङ्' सदृशस्योकारस्याङा सहैकादेश आदिवद्भावादुकारग्रहणेन गृह्यत इति सिध्यत्येव प्रगृह्यसंज्ञा । तस्याश्च प्रयोजनं क्वचिच्छाखायाम्—**ओ अयातम्**–इति पाठे प्रकृतिभावः ॥

( उद्योतः ) **पर्युदासे त्विति ।** वस्[6]तुतः पर्युदासेऽपि दोषः, आङ्भिन्नत्वस्याशास्त्रीयत्वात् । न च स्वाश्रयमाङ्भिन्नत्वम्, आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशेऽतिदिश्यमानविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यस्य निवृत्तेरतिदेशस्वभावसिद्धत्वात् । **न चान्तवत्त्वमेवं दुर्लभं,** शास्त्रीयकार्याभावादिति **वाच्यम् ।** त[7]त्रापि प्रतिषेधस्य गम्यतया शास्त्रतात्पर्यविषयत्वेन प्रगृह्यत्वाभावस्य शास्त्रीयतयाऽन्तवत्त्वप्रवृत्तेरिति बोध्यम् ॥ **तस्याश्चेति ।** प्रगृ[8]ह्येषु पदपाठे **इति**शब्दप्रयोगनियमादपि फले विशेषो बोध्यः ॥

---

( च्व्यन्ते सूत्रप्रवृत्तिनिराकरणाधिकरणम् )

( १६० आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ ओतश्च्विप्रतिषेधः ॥ * ॥

( भाष्यम् )

**ओद[9]न्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः । अनदः-अदः-अभवत्=अदोऽभवत्, तिरोऽभवत् ॥**

( प्रदीपः ) **अदोऽभवदिति ।** च्व्यन्तत्वेनात्र निपातत्वम्, '**ऊर्यादिच्वि–**' इत्यत्र निपाताधिकारात् । प्रतिषिद्धा[10]र्थत्वादस्य कथमत्र प्राप्तिरिति चेत्, उभ[11]यार्थत्वाददोषः । तथा ह्योदन्तस्य निपातस्य प्रगृह्यसंज्ञा विधीयमाना प्रतिबन्धाभावात् 'अदोऽभवत्' इत्यत्रापि भवतु, **ओ षु यात**मित्यत्रापि परत्वात् सिद्ध्यर्थत्वाच्च ॥ छाया ॥

---

१ न्यूनतां निराचष्टे—**वेदे इति ॥ तन्नानेति ।** अर्थनानेत्यर्थः ॥ छाया ॥

२ **ननूञ** इत्यनेन सिद्धमिति वाच्ये **निपा**तेति कथमुक्तिरत आह—**उशब्दोऽत्रेति ॥** छाया ॥

३ **तथेति ।** अन्यथा पुनः पाठो वृथा स्यादिति भावः ॥ छाया ॥

४ निपातसमुदायाश्रयणेऽपि दोषं निरस्यति–**अथवेति ।** अनाङिति प्रतिषेधविषये प्रगृह्यसंज्ञार्थमेतत्सूत्रमित्यर्थः । अत्र कैयटः प्रसज्यप्रतिषेधाश्रयण एव सूत्रसाफल्यमाह । उद्द्योतकारस्तु पर्युदासेऽपि 'ओषुयातं' इत्यादौ सूत्रं सफलं मन्यते ॥

५ प्रतिषिद्धपदस्वारस्यात्प्रसज्यप्रतिषेधेनेदमित्याह—**आउओ इति ॥** छाया ॥

६ प्रदीपं दूषयति—**वस्तुत इति ॥** सादृश्यस्य स्वाश्रितस्य सत्त्वादाह—**आङ्भिन्नेति ॥** छाया ॥

७ **तत्रापि**–पर्युदासेऽपि ॥ एवं च पक्षद्वयसाधारणमिदं भाष्यम् । नचोञ इति सिद्धिः, उक्तोत्तरत्वात् । शाकल्यान्यमते रूपसिद्ध्यर्थत्वाच्च ॥ छाया ॥

८ फलमत्रैवाह—**प्रगृह्येष्विति ॥** छाया ॥ तथा च शुक्लयजुःप्रातिशाख्ये कात्यायनः **"प्रगृह्यं चर्चायामितिना पदेषु"** इति ( ४।१८ ) प्रदर्शितवान् ॥ दाधिमथाः ॥

९ वार्तिके–ओत इत्यधिकरणस्य शेषत्वविवक्षया षष्ठी । तथा शैलीसत्त्वात् । तदाह—**ओदन्त इति ॥** छाया ॥

१० 'अथवा प्रतिषिद्धार्थोऽयमारम्भः' इति भाष्योक्तिं **स्मारयति–प्रतिषिद्धार्थेति ॥**

११ ननु 'ओत्' इति सूत्रं 'अथवा प्रतिषिद्धार्थोयमारम्भः' इति भाष्यात् प्रतिषिद्धार्थमेव । तथा च यत्र 'आ-उ' इत्यनयोः सन्धौ 'ओ' इति रूपं भवति तत्र पूर्वान्तवद्भावेनाङ्त्वादनाङिति प्रतिषेधे प्राप्ते यत्र 'ओ' रूपं तत्र प्रगृह्यसंज्ञाविधानार्थमेवैतत्सूत्रं । एवञ्च 'अदोऽभवत्' इत्यादौ तादृशौकाराभावेन नास्य प्राप्तिरिति ओतश्च्विप्रतिषेधोऽनर्थक इत्याशङ्कायामाह—**उभयार्थत्वेति ।** एवञ्च प्रतिषिद्धार्थोऽयमारम्भ इत्यस्य प्रतिषिद्धार्थ एवेति नार्थ इति भावः ॥

'अनाङ्' इति प्रतिषेधं बाधत इति प्रतिषिद्धार्थमपि स्यादिति को विरोधः ?

**( उद्द्योतः )** भाष्ये—**ओतश्चेति** । पूर्वसूत्रवदत्राप्यर्थाधिकाराद्गौणमुख्यन्यायस्याप्रवृत्तिरित्याशयः ॥ **प्रतिषिद्धार्थत्वादिति** । प्रतिषिद्धसंज्ञाकं पदं प्रतिषिद्धपदेनोच्यते ॥ **परत्वादिति** । **निषेधाश्च बलीयांस** इत्यस्य तु नायं विषयः, तस्य[1] पूर्वेण सह पाठात्तन्निषेधकत्वादिति भावः ॥

**( आक्षेपबाधकभाष्यम् )**

**न वक्तव्यः । 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य' इत्येवं न भविष्यति ॥**

**( प्रदीपः )** ओकारस्य प्रतिपदोक्तस्य ग्रहणमित्युत्तरम् ॥

**( उद्द्योतः )** **प्रतिपदोक्तस्येति** । न च **प्रतिषिद्धार्थोऽयमारम्भ** इति पूर्[2]वभाष्यासङ्गत्याऽनैतत्परिभाषाया अप्रवृत्तिरेवानित्यत्वादुचितेति वाच्यम् । अस्यैकदेश्युक्तत्वात् ॥

**( आक्षेपसाधकभाष्यम् )**

**एवमपि[3]-अगौः-गौः समपद्यत—गोऽभवत्, अत्र प्राप्नोति ॥**

**( प्रदीपः )** **एवमपीति** । ओकारस्यात्र प्रतिपदोक्तत्वमस्ति, **'गमेर्डो'** इति साक्षादुच्चारणात् । यस्य[4] हि साक्षादुच्चारणं नास्ति **'आद्गुणः'** इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते तल्लाक्षणिकमुच्यते ॥

**( उद्द्योतः )** तद्ध्वनयन् भाष्ये-आह—**एवमपीति** ॥ ननु लक्षणेन प्रतिपादितत्वादिदमपि लाक्षणिकमत आह—**यस्य हीति** ॥

**( समाधानभाष्यम् )**

**एवं तर्हि "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति । तद्यथा-'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इति न वाहिकोऽनुबध्यते ॥**

**( प्रदीपः )** **एवं तर्हीति** । गुणादागतो **गौणः**, यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः । मुखमिव प्रधानत्वान्**मुख्यः** । तत्र **'स्वं रूपं-'** इत्यत्र रूपग्रहणेनार्थपरिग्रहस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम् । स चार्थः प्राथम्यान्मुख्य एव गृह्यते । गौणे ह्यर्थे शब्दः प्रवर्तमानो मुख्यार्थारोपेणैव प्रवर्तते । अनियतश्च गौणोऽर्थः । तस्माल्लौकिकोऽयं न्यायः—**'गौणमुख्ययोः-'** इति ॥ 'गोऽभवत्' इत्यत्र जाड्यादिना धर्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य । गोऽभवदित्यत्र च वृत्तौ प्र[6]कृतेः कर्तृत्वं, संघीभवन्ति ब्राह्मणा इति बहुवचननिर्देशात् । प्रकृतौ च गोत्वमारोपितं, न मुख्यमिति प्रगृह्यत्वाभावः ॥

**( उद्द्योतः )** **प्रधानत्वात्**—अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात् ॥ ता[7]दृशार्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वं च बोध्यम् । गौणमुख्यन्यायबीजं दर्शयितुमाह—**तत्र स्वं रूपमिति** ॥ प्राथम्यमेवोपपादयति—**गौणे हीति** । आ[9]रोपाय हि पूर्वं तदुपस्थितिरावश्यकीति भावः ॥ **मुख्यार्थारोपेणेति** । आरोपितसिंहत्ववान् माणवकादिसमभिव्याहारे सिंहशब्दार्थ इति भावः ॥ मुख्यस्यैव ग्रहणे युक्त्यन्तरमाह—**अनियतश्चेति** । सिंहशब्दस्य माणवकबलीवर्दादिषु प्रयोगादिति भावः ॥ एतेन—वर्णग्रहणे **लक्षणप्रतिपदोक्त**परिभाषाऽप्रवृत्तेरोका[10]रस्य लाक्षणिकत्वमित्यादि चिन्त्यमित्यपास्तम्, अनयैव तस्यापि वारणात् । **ह्वा[11]वाम**श्चेत्यादेस्तज्ज्ञापकस्य **लक्षणप्रतिपदोक्त**परिभाषाऽनित्यत्वमात्रज्ञापकतया वर्णग्रहणे सर्वत्र तदप्रवृत्तौ मानाभावाच्च ॥ **न चेय[12]मपि अर्थवत्**परिभाषामूलकत्वात्तद्वदेव विशिष्टरूपोपादानविषयेति कथमत्र वर्णग्रहणे प्रवर्ततां, तत्रैवार्थोपस्थितेः सत्त्वादिति **वाच्यम्** ॥ 'निपातः' इति विशिष्टरूपोपादानसत्त्वात् ॥ निपात[13]संज्ञा हि चादिपदोपस्थितचादीनां सति संभवेऽर्थवतामेवेति ये

---

१ **तस्येति** । **अनाङिति** प्रतिषेधस्य **निपात एकाजित्यंशेनेत्यर्थः** ॥ **तन्नीति** । **अनन्तरस्येति** न्यायात् ॥ एतेन 'प्रतिषिद्धार्थोयमारम्भः' इति प्रतिज्ञाहानिर्दर्शिता । तथा चानेन प्रतिषिद्धार्थव्यवस्था व्यर्थमेव क्रियत इति भावः । एकनिपातपक्षे तु न काचिदनुपपत्तिरिति बोध्यम् ॥ छाया ॥

२ **पूर्वेति** । तत्पक्षे सर्वेषां लाक्षणिकत्वात् ॥ **अस्यैकेति** ॥ एतेनैकनिपातपक्ष एव स्थापितोऽनेन, पक्षान्तरे सर्वेषां तत्त्वादेतत्समाध्यनुपपत्तिरिति निरस्तम् ॥ छाया ॥

३ **एवमपीति** । लक्षणप्रतिपदोक्तपरिभाषया 'अदोऽभवत्' इत्यादौ 'ओत्' इत्यस्याप्रवृत्तिं प्रसाध्यापि ॥

४ **हि**—यतः, **'उच्यते-'** इत्यत्रान्वयः । यत्सूत्रे यस्मिन्न गृह्यते तत्र लाक्षणिकत्वादिना परिभाषाविषयत्वम् । सूत्रोपात्तस्य यस्य रूपस्य लक्षणप्रवृत्तिं विना न संभवः तस्यैव लाक्षणिकस्य तद्विषयत्वम् । इदमेव ध्वनयितुम्—**ओकारस्येति**-**आद्गुण इत्यादि सामान्यलक्षणेनेति** चोक्तम् ॥ भाष्यमप्येवमेव समञ्जसम् ॥ छाया ॥

५ **संप्रत्यय इतीति** । 'एवं न भविष्यति' इत्यस्यानुषङ्गः । उभयत्रेति भावः ॥ अस्य लौकिकत्वबोधनायात्र दृष्टान्तमाह—**तद्यथेति** ॥ छाया ॥

६ प्रकृतित्वञ्चात्र विकारनिरूपितं न तु प्रत्ययनिरूपितम् । एवमग्रेऽपि ( र. ना. )

७ एवमर्थे तत्त्वसिद्धावपि शब्दे कथमत आह—**तादृशेति** ॥ तादृशतादृशेति यावत् ॥ छाया ॥

८ **दर्शयितुमिति** । **'सचार्थः'** इत्यादिनेति शेषः । तथा च तदुपोद्घातत्वेनेदमुच्यते इति भावः ॥ छाया ॥

९ ननु किमतः, प्राथम्यासिद्धेरत आह—**आरोपायेति** । यत एवमतः प्राथम्यमिति भावः ॥ छाया ॥

१० **ओकारस्येति** । अदोऽभवदित्यत्रेति भावः ॥ **एतेनेत्यस्यैव** व्याख्या—**अनयैवेति** । गौणमुख्यपरिभाषयैवेत्यर्थः ॥ छाया ॥

११ इदं पररीत्याऽतः सिद्धान्तमाह—**ह्वावेति** ॥ **तदिति** । वर्णग्रहणेऽप्रवृत्तीत्यर्थः ॥ **मात्र**पदेन विशेषव्यवच्छेदः ॥ **मानेति** । तथा च नैवं तस्यैकदेश्युक्तित्वं किं तु प्रागुक्तरीत्यैवेति भावः ॥

१२ उपोद्घातत्वेनैतेनेत्याद्युक्त्वा प्रकृतमाह—**न चेयमिति** ॥ **सत्त्वादिति** । अनुवृत्त्येति भावः ॥ छाया ॥

१३ नन्वनर्थकानामपि तेषां सत्त्वादर्थवत **एवाग्रहणात्कथ**मेतत्प्राप्तिरत आह—**निपातसंज्ञेति** ॥ **सतीत्यनेन** तेषामपि संग्रहः सूचितः ॥ अत एवाह—**ये इति** ॥ छाया ॥

सार्थकास्तेषां निपातपदेनापि तत्तदर्थविशिष्टानामेवोपस्थितिरिति प्रकृतसूत्रस्थनिपातपदेन मुख्यार्थकनिपातानामेव ग्रहणम्, न तु गौणार्थकानामिति भावः ॥ एवंच कार्यकालपक्षेऽपि 'च्व्यन्ता निपाताः' इत्यस्यात्रानुपस्थितिरेतत्परिभाषावशात्। विशिष्टरूपपदेन चार्थवद्रूपमेवोच्यते ॥ प्रकृते गौणत्वमुपपादयति—जाड्यादिनेति ॥ आरोपे बीजमाह—प्रकृतेः कर्तृत्वमिति । एवंच गोऽभवदित्यस्य गोभिन्नकर्तृकं गोसदृशरूपेण भवनमर्थः । यत्र च योगीश्वरशापादिना मुख्यगोरूपप्राप्तिस्तत्र च्विर्नेष्यते इति गोसदृशरूपेण भवनप्रतीतेस्तस्य गौणत्वमिति भावः ॥ ननु सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति भाष्ये विकृतेरपि कर्तृत्वदर्शनादुक्तं—वृत्ताविति । एवंच च्व्यन्ते प्रकृतेरेव कर्तृत्वमिति भावः ॥ प्रकृतेरेव कर्तृत्वे हेतुमाह—सङ्गीभवन्तीति ॥

( समाधानबाधकभाष्यम् )

**कथं तर्हि वाहीके वृद्ध्यात्वे भवतः—गौस्तिष्ठति, गामानयेति ?**

( समाधानसाधकभाष्यम् )

**अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयम्, शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ॥ १५॥**

( प्रदीपः ) **शब्दाश्रये चेति** । स्वार्थे वृत्तात् प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद्गौणत्वं प्रतीयते । तस्मिं च स्वार्थस्य मुख्यव्यपदेशो नास्ति, गौणापेक्षया सम्बन्धिशब्दत्वात् मुख्यव्यपदेशस्य; गौणाभावेऽभावात्—**शब्दाश्रये** चेत्युक्तं, न त्वत्रार्थो नापेक्ष्यते । तत्र यथा **'श्वेतं छागमालभेत'** इति गुणद्रव्ययोः श्रौतः क्रियासंबन्धः, वाक्यीयात्तु न्यायात् पश्चात् परस्परेण । एवं 'गां वाहीकमानय' इति पूर्वं क्रियाभिसंबन्धापेक्षया विभक्तावुत्पन्नायां वाक्यीयात्तु न्यायात् सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति **'पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येषु'** इत्युक्तम्—**'शब्दाश्रये च'** इति ॥ १५ ॥

( उद्योतः ) ननु **शब्दाश्रये** चेतिभाष्यस्यार्थरहितवर्णमात्राश्रये इत्यर्थः प्रतीयते, स चायुक्तः, सर्वनामस्थानाम्शसाक्षिप्तप्रातिपदिकस्य 'ओतः' इत्यनेन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह—**स्वार्थे इति** । स्वार्थादिप्रयुक्तकार्येण **पूर्णस्य** पदस्यार्थप्रतिपादनाय प्रयोगार्हस्य पदार्थान्तरान्वये बाधप्रतिसन्धाने गौणार्थस्यापि तद्गुणारोपादेव बोधेन द्वितीयपरिभाषाया अभावात् ॥ अत एव **युष्मद्युपपद** इत्यादौ वैषम्यस्य निर्वाहेण कौस्तुभादेर्युक्तत्वात् ॥ प्रकृतेऽर्थवतो ग्रहणस्योक्तत्वेनासंबद्धप्रलापाभावात् ॥ अत एव विशिष्टरूपोपादानसत्त्वात्स्वं **रूपे**त्यस्यांशस्योक्तत्वेन तद्विषयत्वस्यानुक्तत्वाच्चेति दिक् ॥ छाया ॥

---

१ **च्व्यन्तानिपाता इति** । ऊर्यादिच्विडाचश्चेति संज्ञासूत्रे च्विरिति प्रत्ययग्रहणेऽपि केवलप्रत्ययस्य क्रियायोगाभावेन तत्र सामर्थ्यात्तदन्तविधिः क्रियते, तथा च च्व्यन्तो निपातसंज्ञक इत्यर्थः । एवञ्च च्व्यन्तो निपात इत्यस्य कार्यकालपक्षेऽपि ओदिति सूत्रे नोपस्थानं भवति, गौणमुख्ययोरितिन्यायादित्यर्थः ॥

२ **अनुपेति** । अन्यथा तत्सामर्थ्यात्स्यादेव ॥ नन्वेवमपि रूपे न वैशिष्ट्यं कस्यचिदिति कथं तद्विषयकत्वमत आह—**विशिष्टेति** ॥ एतेन—गोशब्दोत्र गौणार्थक इत्येतावन्मात्रेणायं न्याय उक्तः, न तु वार्तिकं विनाऽनेनैव निर्वाहः । प्रगृह्यसंज्ञाया अपि वृद्ध्यात्वसमकक्षत्वेन न्यायेन वारणासंभवात् । नह्यत्रार्थाश्रयणं वृद्ध्यात्वयोर्नेति युक्तिमत् । किं च गौणत्वमात्रेणेयं संज्ञा न, तर्हि निपातादिसंज्ञापि न स्यात् । तस्माद्वार्तिकेनैव वारणम्, न तु न्यायेन । फलं त्वस्य माणवकादिशब्दाङ्गगाद्यभावः । अग्निशब्दस्य तेजस्वित्वादिशून्यसंज्ञायां तु **प्रसिद्धाप्रसिद्धेति** न्यायेन तद्वारणम् । प्रसिद्धमुख्ययोरप्रसिद्धगौणयोरपर्यायत्वेनैकयाऽन्यस्या गतार्थत्वं न ॥ एतेन गतार्थतां वदन्कौस्तुभकृन्निरस्तः । **युष्मद्युपपद** इत्यादावादेशाभावोऽतित्वमित्यादौ तद्भाव इति वैषम्यस्य दुरुपपादत्वात् ॥ मन्मते तु आद्ये प्रसिद्धेति वारणम्, अन्त्ये प्रसिद्धशब्दमात्राश्रये द्वयोरप्रवृत्त्या तद्भावः ॥ एतेन **स्वं रूपमित्यादि—मुख्ययोरितीत्यन्तं** कैयटोक्तं निरस्तम्, प्रकृतसूत्रेऽर्थवतः कस्याप्यग्रहणेन स्वं रूपमित्यादेरसंबद्धप्रलपत्वात् । नहि **ओत्—निपातान्यतरशब्दः स्वं रूपमित्यस्य** विषयः । तस्य शब्दशास्त्रे कृता या संज्ञा तदात्मकत्वादिति निरस्तम् ॥ सर्वस्य भाष्यस्यासंगत्यापत्तेः । तदज्ञानकल्पनापेक्षया स्वाज्ञानकल्पनाया एव युक्तत्वात् । वार्तिकखण्डनार्थमेव भगवतः प्रवृत्तत्वात् । वैषम्यस्य भगवतैवाग्रेऽन्याश्रयणेन कण्ठतो निरस्तत्वात् । निपातसंज्ञाया विशिष्टरूपोपादानाभावेनास्या अप्रवृत्तेः । अव्ययसंज्ञायां तु यथा न तथा वक्ष्यते । अप्रसिद्ध-

३ ननु स्वरूपत एव तद्रूपेण भवनं कुतो नात आह—**यत्र चेति** ॥ तत्संभवमाह—**योगेति** ॥ छाया ॥

४ **वाहीक इति** । तल्लक्षकयोः शब्दयोरित्यर्थः ॥ छाया ॥

५ **अर्थेति** । लौकिकार्थवत्त्वयोग्यपदाश्रये उक्तन्यायेन मुख्यस्यैव ग्रहणं भवतीत्यर्थः ॥ छाया ॥

६ ननु तदानीमपि न्यायसंचारः कुतो न तस्य मुख्यत्वस्य सत्त्वादाह—**तस्य चेति** ॥ **व्यपदेशो** व्यवहारः । अग्रे **व्यपदेश**शब्देन शब्दः ॥ छाया ॥

७ **ननुवृद्ध्यात्वे**ऽर्थस्योपस्थितिर्न, केवलशब्दाश्रयत्वमेव तयोरित्यर्थो भाष्यस्य प्रतीयते । तत्र औतोम्शसोरित्यादौ प्रातिपदिकस्योपस्थानेन ओदन्तात्प्रातिपदिकादित्यर्थे विशिष्टरूपसत्वेनार्थवत्त्वोपस्थितेर्निराबाध्यत्वात् शब्दाश्रये चेति भाष्यमनुपपन्नमत आह—**गौणाभावेऽभावादिति** । एवञ्च वृद्ध्यादिसमये गौणार्थासम्भवेन स्वार्थस्य मुख्यत्वं नास्ति, गौणत्वं तु नास्त्येवेति गौणमुख्यन्यायो नात्र प्रवर्तते । अत्र तु अर्थो नापेक्ष्यत इति न, किन्तु तस्य गौणमुख्यव्यवहारो नास्तीति भावः ॥

८ उक्ताशयव्यतिरेकमाह—**न त्विति** ॥ छाया ॥

९ वृद्ध्यात्वे क्रमेणाह—**सर्वेति** ॥ छाया ॥

१० **प्रतीतेरिति** । तथा चानयोर्विशिष्टशब्दाश्रयत्वेपि तदानीं गौणार्थकत्वमेव नेति न न्यायप्रवृत्तिरिति भावः ॥ छाया ॥

प्रतीतेरिति भावः । आक्षेपे[1], आक्षिप्तस्य वा शाब्देऽन्वये मानाभावाच्च ॥ **गौणापेक्षयेति**। मुख्यशब्दस्य गौणापेक्षया संबन्धिशब्दत्वात्, **गौणाभावे**=गौणस्य बुद्ध्यसंनिधाने **मुख्यव्यपदेशस्य**=मुख्यपदस्याभावादित्यन्वयः[2] ॥ एवंच **शब्दाश्रये** चेति भाष्यस्य मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये—इत्यर्थः । पदव्यपदेशरहितस्य कार्यित्वेनाश्रयणमिति फलितमिति तात्पर्यम् ॥ ननु द्वितीयादेः कर्म[3]त्वाद्यर्थकस्य कारकत्वज्ञानसापेक्षतया गां वाहीकमानयेत्यादौ विशिष्टस्य क्रियासंबन्धेन कर्मत्वेऽपि तदभिधानाय जायमाना द्वितीया समुदायस्याप्रातिपदिकत्वात्प्रत्येकं[4] प्रवर्तते, ततश्च पूर्वमेव गौणत्वादात्वं न स्यादत आह—**तत्रेति** ॥ **श्रौतः क्रियासंबन्ध इति** । द्वितीया[5]श्रुत्यनुपपत्त्या कल्पित इत्यर्थः ॥ विभक्त्यन्तेन हि उपस्थितार्थस्य क्रियान्वय इति ततः **प्राक्** गुणे साक्षात्परंपरासाधारण्येन, द्रव्ये च साक्षात् सामान्यतः क्रियाजन्यफलाश्रयत्वादिविवक्षयोभयत्र विभक्तिरिति भावः॥ **वाक्यीयान्न्यायात्**—आकाङ्क्षादिमूलकशक्त्या । **पश्चात्**—विभक्त्युत्पत्त्यनन्तरम्[6] ॥ **एवमिति** । द्वितीयादेः सामान्यतः क्रियासंबन्धज्ञानापेक्षत्वात् तज्ज्ञानमूलकद्वितीयाद्युत्पत्तौ गोपदार्थस्य वाहीकान्वयः पश्चादेव । एवंच कर्मणोरेव विशेष्यविशेषणभावः, न तु विशिष्टस्य कर्मत्वमिति भावः ॥ **यत्तु**[7]—विभक्त्यर्थस्य क्रियाकारकसंबन्धरूपत्वेन तयोः संबन्धबोधः श्रुतिकृत इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमं तयोरन्वयबोधः पश्चाद्गुणद्रव्ययोः परस्परान्वयबोधः । एवं गां वाहीकमानयेत्यादावपि—इति कैयटार्थं व्याख्याय दूषयन्ति—गां वाहीकं पाठयेत्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासंबन्ध एवासंभवी तत्र पूर्वमेव गौणत्वावगतेरात्वाद्यनापत्तेरिति, तदेतेन परास्तम् । विभक्त्यन्तस्यैव प्रयोगेण तत उपस्थितानामर्थानामितरान्वयेन प्रातिपदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च, तादृशबोधद्वयकल्पने गौरवाच्च, अनुभवाभावाच्च ॥ **किं च**—अपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थत्वग्रहेण[9] 'अत्वं त्वं संपद्यते' 'अमहान्महान्भूतस्तवद्भवति'इत्यादौ भाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यमात्रविषयत्वम्[10], उपात्तविशिष्टरूपके इत्यपि बोध्यम् । **अत**[11] **एवात इञि**-त्यादेः श्वशुरसदृशस्यापत्यमित्यर्थेऽपि प्रवृत्तिः । **किं च**[12] गामित्युक्ते सर्वा क्रिया प्रसक्तेत्याद्यर्थवत्सूत्रस्थभाष्यबलात्**संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति**—इति **वृद्धिसूत्रस्थ**भाष्याच्च सामान्यतः क्रियाजन्यफलाश्रयत्वादेरेव द्वितीयादिनियामकत्वेन मदुक्तव्याख्यैव तस्योचिता । प्रयोक्ताऽ[13]पि पदान्येवार्थे मुख्ये गौणे वा प्रयुयुक्षति, न तु प्रातिपदिकादिक्रमेणेति सुष्ठूच्यते—**पदकार्ये**ष्विति ॥ **सामानाधिकरण्यादिति** । इद[14]मुपलक्षणं, पठनादिक्रियाऽन्वयादित्यपि बोध्यम् ॥ १५ ॥

(१५।१६ प्रगृह्यसंज्ञादेशिसूत्रम् ॥ १ । १ । ५ आ. ६)

## उञः[15] ॥ १ । १ । १७ ॥

## ऊँ ॥ १ । १ । १८ ॥

### ( अनिष्टापत्तिवारणाधिकरणम् )

### ( आक्षेपभाष्यम् )

## इह कस्मान्न भवति—आहो इति, उताहो इति ?

१ अभ्युपेत्येदम्, वस्तुतो विशिष्टशब्दाश्रयत्वमेव नेति तदप्राप्तिरेवेत्याह—**आक्षेपे इति** । अन्वयस्य पदत्वेन संभवेनान्यथानुपपत्त्यभावादिति भावः ॥ ननु तेषां प्रकृत्यंशे एव साकाङ्क्षत्वमिति साऽस्त्येवात आह—**आक्षिप्तस्य वेति** ॥ तत्र वृत्त्युपस्थाप्यत्वस्यैव नियामकत्वादिति भावः ॥ छाया ॥ वृद्ध्यात्वविषये प्रातिपदिकाधिकाराभावेन विशिष्टशब्दाश्रयत्वमेव तयोर्नेति भावः । प्रतिपदिकस्याक्षेपे तु शाब्दे तदन्वयो नेति ॥

२ सर्वथा तदभावस्यासत्त्वादाह—**गौणस्येति** ॥ एतावता किमत आह—**एवं चेति** । तदानीं तस्य मुख्यत्वाभावे चेत्यर्थः ॥ शाब्दार्थमाह—**मुख्येति** ॥ फलितार्थमाह—**पदेति** ॥ फलितं–फलितार्थः ॥ **तात्पर्यमिति** । कैयटस्येति भावः ॥ छाया ॥

३ **कर्मत्वेति** । धर्मपक्षे इदम् । धर्मिपक्षे तदवच्छिन्नेत्यर्थः ॥ **तयेति** । कारकत्वस्य क्रियानिरूपितत्वेन तदन्वयावश्यकत्वेनेति शेषः ॥ छाया ॥

४ **प्रत्येकमिति** । आनर्थक्यन्यायेन ॥ **तत्रेतीति** । तस्मिन्सतीत्यर्थः ॥ छाया ॥

५ तस्य शक्त्या वाक्यबोध्यत्वेन वस्तुतः श्रुतिबोध्यत्वाभावादाह—**द्वितीयेति** ॥ एवं चायं सर्वो ग्रन्थः स्वरीत्या, न तु जैमिनिरीत्येति बोध्यम् ॥ **ततः**–विभक्तेः ॥ **सामान्यतः**–क्रियात्वेन ॥ एवमग्रेऽपि ॥ छाया ॥

६ **पश्चादेव**–विभक्त्युत्पत्त्यनन्तरमेव ॥ फलितमाह—**एवं चेति** ॥ छाया ॥

७ नारायणकौस्तुभाद्युक्तिं खण्डयति—**यत्त्विति** ॥ **संबन्धेति** । तयोः संबन्धेत्यर्थः ॥ अत एवाह—**तयोरिति** ॥ **शीघ्रमिति** । तस्या निरपेक्षप्रमाणत्वात् ॥ **पश्चादिति** । समभिव्याहाररूपवाक्यात् ॥ **व्याख्याय**–प्रतिपाद्य ॥ गां वाहीकमानयेत्यादौ निर्वाहेऽप्यन्यत्रानिर्वाहमाह—**गामिति** ॥ छाया ॥

८ एतदुक्तरीत्या तत्रापि सिद्धत्वेन दोषान्तरायाह—**विभक्त्यन्तेति** ॥ छाया ॥

९ **गौणार्थकत्वस्य ग्रहेणेति** पाठः ॥ मुनिसंमतिमप्याह—**अत्वमिति** । आदिना **मद्भवति महान् भवती**त्यादिपरिग्रहः । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः । भाष्यप्रयोगेऽप्येवम् ॥ छाया ॥

१० विशेषमाह—**उपात्तेति** ॥ बहुव्रीहिः ॥ पदकार्यविशेषणम् ॥

११ एतत्फलमाह—**अत एवेति** । **प्रवृत्तिरिति** । श्वाशुरिरित्येति भावः ॥ एतत्तत्त्वं गदायाम् ॥

१२ इदं प्रयोक्तॄणां तदा गौणार्थकत्वप्रतीतिमभ्युपेत्य, वस्तुतः सापि नेत्याह—**किं चेति** ॥ **करणेनेति** । नियामकत्वस्य लाभेनेत्यर्थः ॥ **तस्य**–कैयटस्य ॥ छाया ॥

१३ तदेवाह—**प्रयोक्तापीति** ॥ **प्रयुयुक्षत** इति पाठः ॥

१४ न्यूनतां निराचष्टे—**इदमुपेति** ॥ छाया ॥

१५ अत्र केचित् 'उञ ऊँ । १ । १ । १७' इत्येकमेव सूत्रं कल्पयन्ति । अभियुक्तव्यवहारश्च–यत्रानन्यथासिद्धवार्तिके योगविभागः प्रदर्श्यते स सर्वोऽपि लोके समाश्रीयत एव । भाष्यदर्शितानां योगविभागानां सूत्रपाठाध्ययनप्रणाल्यनन्तरं जायमानत्वान्न लोके तदाश्रयणम् । एवञ्च वार्तिकप्रदर्शितत्वाद्विभक्तमेवैतत्सूत्रमित्यवगम्यते । विस्तरेण विवृतश्चायं विषयः प्रस्तावनायाम् ॥

( प्रदीपः ) उञ ऊँ ॥ १७-१८ ॥ इह कस्मादिति । निपातसमाहारं मत्वा प्रश्नः ॥

( उद्योतः ) उञ ऊँ ॥ १७-१८ ॥ प्रश्न इति । एवंचात्र ऊँ आदेशः प्राप्नोतीति भावः ॥

( आक्षेपबाधकभाष्यम् )

'उञः' इत्युच्यते । न चात्रोञं पश्यामः ॥

( आक्षेपसाधकभाष्यम् )

उञोऽयमन्येन सहैकादेश उञ्ग्रहणेन गृह्यते ॥

( आक्षेपबाधकभाष्यम् )

आचार्यप्रवृत्तिर्ज्ञापयति-'नोञ एकादेश उञ्ग्रहणेन गृह्यते' इति । यदयं "ओत्" इत्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ति ॥

( प्रदीपः ) यदयमिति । एकादेशे कृते आदिवद्भावात् संज्ञासिद्धिः ॥

( उद्योतः ) संज्ञासिद्धिरिति । 'निपात एकाच्-' इत्यनेनेत्यर्थः ॥ स्थानिवद्भावेन तु नैतल्लभ्यम्, एकादेशस्यान्यल्वृत्तिधर्मत्वात् । एकादेशस्यान्यल्मात्रवृत्तिधर्मस्तु नायम्, 'उञ्'इति समुदायेऽपि सत्त्वात् । तेनान्तादिवद्भावेन ताद्रूप्यानतिदेशेऽपि न दोषः ॥

( आक्षेपसाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । उक्तमेतत्—'प्रतिषिद्धार्थोऽयमारम्भः' इति ॥

दोषः खल्वपि स्यात्, यद्युञेकादेश उञ्ग्रहणेन न गृह्येत । जानु उ अस्य रुजति-जानू अस्य रुजति, जान्वस्य रुजति-"मय उञो वो वा" इति वत्वं न स्यात् ॥

( उद्योतः ) भाष्ये—यद्युञ् इति । सामान्येन ज्ञापकमिति भावः । वत्वाभावपक्षे ऊँ आदेशो न स्यादित्यपि दोषो बोध्यः ॥

( सिद्धान्तिनः समाधानभाष्यम् )

एवं तर्ह्येकनिपाता इमे ॥

अथ वा द्वावुकाराविमौ । एकोऽननुबन्धकः । अपरः सानुबन्धकः । तयोऽननुबन्धकस्तस्यैष एकादेशः ॥

( योगविभागाधिकरणम् )

( १६१ सिद्धान्तवार्तिकम् ॥ १ ॥ )

॥ * ॥ 'उञः' इति योगविभागः ॥ * ॥

( भाष्यम् )

'उञः' इति योगविभागः कर्तव्यः । "उञः", शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञा भवति । उ इति, विति । ततः "ऊँ", उञ ऊँ इत्ययमादेशो भवति शाकल्यस्याचार्यस्य मतेन । दीर्घोऽनुनासिकः प्रगृह्यसंज्ञकश्च-ऊँ इति ॥

( प्रदीपः ) इह रूपत्रयं साध्यम्—उइति-विति-ऊँ इति, तच्चैकयोगे न सिध्यति । एकयोगे हि 'उञः' इति श्रुतिरादेशेन श्रुतत्वात् संबध्यते, न प्रगृह्यसंज्ञया । सा 'निपात एकाजनाङ्' इति नित्यैवास्य भवति । शाकल्यश्रुत्यनुवृत्त्या चादेशे विकल्पिते रूपद्वयं स्यात्—उ इति-ऊँ इति । न तु 'विति' इति, तदर्थमाह—उञ इति योगविभाग इति । 'उञः' इत्यत्र 'शाकल्यस्येतौ' 'प्रगृह्यं' इति चानुवर्तते । तत्र प्रगृह्यसंज्ञैव शाकल्यस्य मतेन विधीयते, नान्येषामिति स्मृत्यन्तरानुसन्धानद्वारेण विभाषा संपद्यते । उ इति-वितीति । 'ऊँ' इत्यत्र च यदि 'शाकल्यस्य' इति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात् । ततश्च 'विति, ऊँ इति' एते द्वे एव रूपे स्याताम् । तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति त्रीणि रूपाणि सिध्यन्ति ॥

( उद्योतः ) नित्यैवेति । आदेशाभावपक्षे इत्यर्थः ॥ न तु वितीति । न च 'उ इति' इत्यस्य निरनुबन्धकोकारमादाय सिद्धत्वेन शाकल्यानुवृत्तिसामर्थ्यात्पक्षे 'विति' इति भविष्यतीति वाच्यम् । मयः

---

१ आदिवदित्युक्तिं सफलयति—स्थानीति ॥ नन्वेवमादिवद्भावोऽपि न स्यान्निषेधादत आह—एकेति ॥ छाया ॥

२ अल्वृत्तिधर्मत्वादिति । 'आहो' इत्यत्राद्गुण इत्येकादेशे स्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वेनाच्त्वधर्मावच्छिन्नत्वेन तत्समानाधिकरणो धर्म उत्वं स्थानिवद्भावेन लब्धुमशक्यमिति भावः ॥

३ अल्मात्रवृत्तिधर्मस्त्विति । उत्वञ्च नाल्मात्रवृत्तिरिति वर्णमात्रवृत्तिधर्मत्वाभावादन्तादिवच्चेत्यनेनानेतुं शक्यमिति ताद्रूप्यस्यातिदेशप्रतिषेधेऽपि बाधकाभाव इत्यर्थः ॥

४ ज्ञापकमिति । यत इति शेषः ॥ दोषान्तरमाह—दोष इति ॥ छाया ॥

५ मुद्रितपुस्तकेषु 'उञ्ग्रहणेन गृह्येत' इति नञ्रहितः पाठो दृश्यमानोऽशुद्धोऽसङ्गतश्च । 'उञ्ग्रहणेन न गृह्येत' इत्येव पाठः प्रामाणिकः॥

६ ननु न सामान्यतो ज्ञापकमिति न भाष्योक्तदोषोऽत आह—वत्वाभावेति ॥ छाया ॥

७ चस्त्वर्थे ॥ छाया ॥

८ तदर्थं-वितीति सिद्ध्यर्थम् ॥ छाया ॥

९ तत्र-उञ इत्यत्र ॥ छाया ॥

१० आदेशाभावेति । तत्पक्षे तेन बाधात् ॥ छाया ॥

११ सामर्थ्यादिति । निपात इत्यप्रवृत्तेरिति भावः ॥ छाया ॥

१२ भविष्यतीति । योगविभागाभावेऽपि रूपत्रयसिद्धिरूपेष्टार्थं साधयति । तथाहि-ऊँ इति रूपमादेशे प्रकृतिभावे च भवत्येव । शाकल्यानुवृत्त्याऽस्य वैकल्पिकत्वेन 'उ इति' इत्यपि स्यात् । तच्च 'उ' निपातेनापि सिध्यतीति शाकल्यानुवृत्तिसामर्थ्यात् 'विति' इत्येव सम्पत्स्यतेति भावः ॥

परत्वे 'किम्विति' इत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गात् । शाकल्यानुवृत्तिसामर्थ्यान्निपातेति प्रगृह्यत्वाभावे मय इति वत्वस्यासिद्धत्वेनेकोयणचीति वत्वेऽनुस्वारापत्तेः । उ इतीत्यतः सानुबन्धकबोधस्यापीष्टत्वेन तदनापत्तेश्चेति भावः । अन्ये तु अनेन[3] प्रकरणात् प्रगृह्यत्वस्य-ॐ आदेशस्य च विधानेन तस्य निपात इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे ॐ इति-वितीति सिद्ध्यति, न तु 'उ इति,' अतो योगविभागः ॥ न[4] चापवादे विशिष्टे ॐ आदेशे असति निपातेति प्रगृह्यत्वं स्यात्, अप्रवर्तमानापवादस्योत्सर्गबाधकत्वाभावात् । अत एव पारेमध्ये इत्यव्ययीभावाभावे उत्सर्गः षष्ठीसमासो भवतीति वाच्यम् । प्रगृह्यपदस्य सर्वत्र[5] साक्षादुद्देश्यसंबन्धस्य क्लृप्तत्वेनात्र विधेयविशेषणत्वे मानाभावात् । सह[6] विधानेन वाक्यभेदस्याप्यभावात्स्थानिवद्भावेन च ॐ इत्यस्य प्रगृह्यकार्यं बोध्यम् । एवंच पक्षे प्रगृह्यत्वाभावेऽप्यस्य तात्पर्यान्नैतदभावे निपात इत्यस्य प्रवृत्तिरित्याहुः ॥ प्रगृह्यस्येति । अनु[7]वर्तमानप्रगृह्यपदस्यादेशेन संबन्धे उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञकस्य ॐभावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधानस्य वैयर्थ्यापत्तेरनुवर्तमानप्रगृह्यपदं षष्ठ्यन्ततया विपरिणमय्य स्थानिना संबध्यत इति भावः ॥ द्वे एवेति । न च[8] 'उ इति' इति रूपमपि निरनुबन्धकोकारमादाय सिद्धम्, सानुबन्धकप्रतीत्यनापत्तेः । मयः परत्वे 'किम्विति' इत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गाच्च । वस्तु[9]तस्तु उञ इत्यस्यात्रानुवृत्तस्यार्थाधिकारादप्रगृह्यपरतैव, प्रगृह्यमिति चादेशविशेषणमेव, तथैव भाष्यस्वरसादिति 'ॐ इति-उ इति' च रूपे स्यातां न तु वितीति तदर्थं विकल्पानुवृत्तिः । ॐ इति[10] दीर्घोच्चारणात्प्रगृह्यपदस्यात्र संबन्ध इति सर्वमवदातम् ॥

( योगविभागवैयर्थ्यभाष्यम् )

**किमर्थो योगविभागः ?**

( उद्द्योतः ) **किमर्थो योगविभाग इति ।** प्रगृह्यत्वादेशयोः शाकल्यमते एव प्राप्त्या एकप्रयोग एव प्रवृत्तिः स्यात् । एवंच-ॐ इति-वितीति च रूपे । ते चैकयोगेऽपि सिध्यत इति **प्रश्नः** ॥ एवं-चैकयोगे वितीति न सिध्यतीति प्रागुक्तकैयटश्चिन्त्य[11] एवेति बोध्यम् ॥

( १६२ योगविभागप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ॐ वा शाकल्यस्य ॥ * ॥**

( भाष्यम् )

**शाकल्यस्याचार्यस्य मतेन ॐ विभाषा यथा स्यात् । ॐ इति, उ इति । अन्येषामाचार्याणां मतेन-विति ॥ १७ ॥**

( प्रदीपः ) **ॐ वा शाकल्यस्येति ।** शाकल्यश्रुतेरेव फलं वाग्रहणेन प्रतिपादयति । एतदेव व्याचष्टे-'शाकल्यस्य विभाषा यथा स्यात्' इति प्रगृह्यसंज्ञाऽऽदेशश्च । तत्र यद्यपि पूर्वसूत्रेषु फलरूपतया निर्देशात् प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयः, तथापीह 'उञः' इति षष्ठीनिर्देशात् स्वरूपपदार्थकः संपद्यते ॥ १७ ॥

( उद्द्योतः ) **शाकल्येति ।** एवं च योगविभागसामर्थ्यात् शाकल्यानुवृत्तिसामर्थ्याच्च तत्र[12] यथाश्रुतम्, किं तु विकल्पमात्रतात्पर्यकमिति विकल्पद्वयेन सकलेष्टसिद्धिरिति भावः । एवंच शाकल्यमत एव विकल्पः फलितः । तदाह—भाष्ये—**शाकल्यस्य विभाषेति ॥** शाकल्यमते 'ॐ' आदेशविकल्पे यत्फलति तद्दर्शयति—**प्रगृह्यसंज्ञाऽऽदेशश्चेति ।** तन्मते पर्यायेणोभयं सिध्यतीत्यर्थः ॥ ननु प्रगृह्यमित्यस्य प्रथमान्तस्य कथमुञ इत्यनेन षष्ठ्यन्तेनान्वय इत्यत आह—**यद्यपीति ॥ फलरूपतयेति ।** फलं संज्ञाया बोध्यतया संज्ञिनः ।

---

१ **मयःपरत्वे इति ।** उनिपातस्य मयःपरत्वे इतिशब्दपरकत्वे च पञ्चरूपाणि सिद्धान्ते योगविभागाश्रयणे सिध्यन्ति । किमु इति—किमूँ इति—किंविति—किम्वँिति—किम्विति—इति । तत्र प्रथममादेशाभावे प्रगृह्यसंज्ञायाञ्च, द्वितीयमादेशे प्रगृह्यसंज्ञायाञ्च, तृतीयमादेशाभावे प्रगृह्यत्वाभावदशायां 'इको यण्' इति यणादेशे हल्परत्वादनुस्वारे च, चतुर्थ-ॐ आदेशस्य स्थानिवद्भावेनोत्त्वे प्रगृह्यसंज्ञायाञ्च मय उञ इति आन्तरतम्यादनुनासिके वकारे तस्यासिद्धत्वान्मकारस्यानुस्वाराभावे च, पञ्चममादेशाभावे प्रगृह्यसंज्ञायाञ्च 'इको यण्' इत्यादेशस्य प्रगृह्यत्वादप्राप्तौ मय उञ इत्यस्य च प्रवृत्तौ तस्यासिद्धत्वान्मोऽनुस्वार इत्यस्याप्रवृत्तौ च रूपाणि भवन्ति । तत्र पञ्चमं रूपं योगविभागाभावे न स्यात्, तदाह—**शाकल्यानुवृत्तीति ।** मय उञ इत्येतच्च सूत्रं प्रगृह्यत्वे एव प्रवर्तते, तदभावे हि 'इको यण्' इत्यस्यैव प्रवृत्तिरिति हल्परत्वादनुस्वारप्रवृत्तौ 'किम्विति' इति रूपं न स्यादित्याशयः ॥

२ असिद्धिप्रसङ्गमुपपादयति—**शाकल्येति** ॥ दोषान्तरं तत्राह—**उइतीति** ॥ छाया ॥

३ **अनेन**-उञ उँ इत्यनेन । उञ इति भावः ॥ श्रुतत्वादाह—**आदेशेति ॥ तस्य**-प्रगृह्यत्वसमानाधिकरणस्यादेशस्य ॥ छाया ॥

४ प्रगृह्यत्वविशिष्टादेशविधिरित्याशयेनाशङ्कते—**न चेति** ॥ छाया ॥

५ **सर्वत्र**-एतदन्यत्र ॥ छाया ॥ **सर्वत्रेति ।** निपात एकाजित्यादिसूत्रेषु प्रगृह्यपदस्य साक्षादुद्देश्यविशेष्यत्वेनान्वयः क्लृप्त इति अत्र विधेयविशेषणत्वे मानाभाव इति भावः ॥

६ ननूभयविधाने वाक्यभेदापत्तिरतस्तथावश्यकमत आह—**सहेति ॥** नन्वेवं कथमादेशे प्रगृह्यत्वमत आह—**स्थानीति ॥** चरमत्वर्थे ॥ एवं च उक्तरीत्याश्रयणम् ॥ तत्र युक्त्यन्तरमप्याह—**एवं चेति** ॥ छाया ॥

७ ननु प्रगृह्यमित्यनुवृत्त्या षष्ठ्यन्तोक्तिः कथमत आह—**अनुवर्तेति ॥ मात्र**-कात्स्न्र्ये ॥ छाया ॥

८ प्राग्वदाह—**न चेति** ॥ छाया ॥

९ 'ॐ' इति विभक्तसूत्रे शाकल्यस्येत्यनुवृत्तौ कैयटप्रतिपादितोपष्टम्भके स्वमतेन विशेषमाह—**वस्तुतस्त्विति** । 'प्रगृह्यसंज्ञकश्च ॐ' इति भाष्यस्वरसाच्च युक्ततरमेतत् ॥

१० **ॐ इतीति ।** यद्यत्र प्रगृह्यपदानुवृत्तिर्न स्यात्तदाऽऽदेशे जाते यण् स्यात् । यणि ह्रस्वदीर्घयोर्विशेषाभावेन दीर्घोच्चारणं व्यर्थं स्यादिति प्रगृह्यपदानुवृत्तिः ॥

११ **चिन्त्य एवेतीति ।** तच्चान्ये त्वित्यादिना प्रागुक्तमेव ॥ छाया ॥

१२ **तत्र**-शाकल्यपदम् ॥ छाया ॥

फलपदेन च तद्बोधकं पदं लक्ष्यते । तद्रूपतया-तत्समानविभक्तिकतयेत्यर्थः ॥ **द्विवचनाद्यभिधेय** इति बहुव्रीहिः । प्रगृह्य[1]शब्दवदभिन्नं द्विवचनादीति बोधः ॥ प्रगृह्यशब्दवत्त्वेन च द्विवचनादि प्रगृह्यपदाभिधेयमिति बोध्यम् ॥ **स्वरूपपदार्थक इति** । उभो वाचकं प्रगृह्यपदमित्यर्थादिति भावः ॥ [2]वस्तुतः पूर्वत्रापि शब्दपर एव । शब्दार्थयोरभेदात्सामानाधिकरण्यम्, पटः शुक्ल इतिवत् । प्रकृते तु पटस्य शुक्ल इत्यत्रेवोक्तरीत्या वैयधिकरण्येनान्वय इति न कश्चिद्दोषः ॥ केचित्तु[3] प्रदेशे वृद्धिपदाभिन्ना आदैच इति उपस्थितिः । संज्ञावाक्ये तु तथा शाब्दबोधः । **द्विवचनाद्यभिधेय** इत्यस्य द्विवचनादिविशेष्यकबोधजनक इत्यर्थः । षष्ठीसमभिव्याहारे तु विशेष्यतया स्वरूपपदार्थक इति कैयटं योजयन्ति ॥ १७ ॥

---

( १७ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. ८ )

## ईदूतौ च सप्तम्यर्थे ॥ १ । १ । १९ ॥

**( अर्थग्रहणप्रयोजननिरूपणाधिकरणम् )**

**( अर्थग्रहणाक्षेपे श्लोकवार्तिकम् ॥ )**

### *ईदूतौ सप्तमीत्येव*

( भाष्यम् )

**ईदूतौ[4] सप्तमीत्येव सिद्धम्, नार्थोऽर्थग्रहणेन ॥**

**(प्रदीपः) ईदूतौ च सप्तम्यर्थे ॥१९॥ ईदूतौ सप्तमीत्येवेति** । सप्तमीसहचरितं यदीदूदन्तं[5] सप्तम्यां वा परतस्तत् प्रगृह्यसंज्ञं भवतीत्येवं प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां 'सोमो गौरी अधिश्रितः' इत्यादौ भविष्यति प्रगृह्यसंज्ञेति **प्रश्नः** ॥

**( उद्द्योतः ) ईदूतौ च०** ॥ १९ ॥ ईकारोकारात्मकसप्तम्या असंभवं मत्वाऽऽह—**सप्तमीसहेत्यादि** । [6]तात्पर्यानुपपत्त्या च लक्षणेति भावः ॥ **सप्तम्यां वेति** । सप्तमीति पदं लुप्तसप्तमीकं व्याख्यास्यत इति भावः ॥ [7]जघन्यवृत्तिकल्पनापेक्षयेदं न्याय्यमिति तात्पर्यम् ॥ **लुप्तायामपीति । न लुमतेति** निषेधस्तु अनित्यत्वान्न सप्तम्यां परत इत्यर्थेऽपीति भावः ॥

( समाधाने श्लोकवार्तिकम् ॥ )

### *लुप्तेऽर्थ[8]ग्रहणाद्भवेत् ।*

( भाष्यम् )

**लुप्तायां सप्तम्यां प्रगृह्यसंज्ञा न प्राप्नोति ।**
**कं[9] ?**
**सोमो गौरी अधिश्रितः ( ऋ० ९।१२।३ ) । इष्यते चात्रापि स्यादिति । तच्चान्तरेण यत्नं न सिध्यती[10]त्येवमर्थमर्थग्रहणम् ॥**

**( प्रदीपः ) लुप्त इति** । संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादसत्यर्थग्रहणे सप्तम्या एव संज्ञिनीत्वादसत्याश्च कार्याभावात् प्रत्ययनिमित्तं यत्रान्यस्य कार्यं विधीयते तत्रैव प्रत्ययलक्षणस्य सद्भावात् 'गौरी' इत्यत्राप्रसङ्गादर्थग्रहणं कृतम् । अर्थग्रहणे सति अर्थनिमित्ता संज्ञेयं भवति, न [11]प्रत्ययनिमित्ता—इति लोपेऽपि सिध्यति ॥

**( उद्द्योतः )** ननु प्रत्ययग्रहणेन तदन्तविधौ ईकाराद्यन्तं यत्सप्तम्यन्तमित्यर्थे प्रत्ययलक्षणेन सिद्धं 'सोमो गौरी' इति, तत्राह—**संज्ञेति ॥ सप्तम्या एवेति** । सप्तमीपदस्य लुप्तसप्तम्य[12]न्तत्वे सप्तमीसहचरितलाक्षणिकत्वे च न मानमिति भावः ॥ यद्यपीकारोकारसप्तम्योरसंभव एव तत्र मानं तथापि **वचनादित्यादिना** तद्वक्ष्यतीत्यत्र तात्पर्यम् ॥ **असत्याश्च कार्याभावादिति** । प्रगृ[13]ह्यसंज्ञाकार्यं हि सन्धिकार्याभावफलकप्रकृतिभावः, लुप्ते षष्ठ्यर्थप्रसङ्गस्य निरूपयितुमशक्यत्वेन सन्धिकार्याप्राप्त्या प्रकृतिभावानुपयोगात्तत्कार्याभाव इत्यर्थः ॥ तदेवाह—**प्रत्ययनिमित्तमित्यादिना** ॥

( समाधानबाधकभाष्यम् )

**नात्र सप्तमी लुप्यते ।**
**किं तर्हि ?**
**पूर्व[14]सवर्णोऽत्र ॥**

**( प्रदीपः ) पूर्वसवर्ण इति** । सति च पूर्वसवर्णे एकादेशे चादिवद्भावाद्भवतीकारः सप्तमीति सिद्धा संज्ञा ॥

**( उद्द्योतः ) पूर्वसवर्णे इति** । स च **सुपां सुलुगित्यनेन** ॥

---

१ प्राचां सिद्धान्तरीत्याह—**प्रगृह्यशब्दवदिति** ॥ छाया ॥

२ अत एव भाष्यसिद्धान्तमाह—**वस्तुत इति** ॥ **उक्तेति** । भेदविवक्षया उभो वाचकमित्यादीत्यर्थः ॥ छाया ॥

३ **केचिदिति** । अक्षरमर्यादया न लभ्यमिदमित्यत्रारुचिः ॥ छाया ॥

४ श्लोकवार्तिकं खण्डशो व्याचष्टे—**ईदूतावित्यादि** ॥ छाया ॥

५ **यदीदूदन्तमित्यस्योभयान्वयः** ॥ **अपिना** पूर्वसवर्णसमुच्चयः ॥ छाया ॥

६ वक्ष्यमाणरीत्याऽन्वयानुपपत्त्यभावादाह—**तात्पर्येति** । चस्त्वर्थे ॥ छाया ॥

७ द्वितीयपक्षाश्रयणे बीजमाह—**जघन्येति** । **अपिना** तस्यापि समुच्चयः ॥ छाया ॥

८ वार्तिके **लुप्ते** इति सामान्ये नपुंसकम् । तदाह—**लुप्तायामिति** ॥ छाया ॥

९ फ. पुस्तके 'क' शब्दस्य न पाठः ॥

१० 'त्येवमर्थग्रह' इति फ. पाठः ॥

११ 'प्रत्ययश्रवणनिमित्तेति' च. छ. क. पाठः ॥

१२ **न्तत्वे इति** । तत्परकत्वे ॥ फलितार्थोऽयम् ॥ छाया ॥

१३ यथाश्रुतासंगतेराह—**प्रगृह्यसंज्ञेति ॥ लुप्ते**—लोपे ॥ छाया ॥

१४ **पूर्वेति** । तनू इत्याशयकमिदम् । गौर्यादावविशेषात् ॥ छाया ॥ 'वर्णोऽत्र भवति' इति फ. पाठः ॥

( समाधानसाधकं श्लोकवार्तिकम् ॥ )

***पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते ॥ १ ॥***

( भाष्यम् )

**यदि पूर्वसवर्णः, आट्-आम्भावश्च प्राप्नोति ॥**

( प्रदीपः ) **आडाम्भाव इति** । एकादेशं बाधित्वाऽऽडामौ स्याताम् ॥

( उद्द्योतः ) **एकादेशमिति** । परत्वाद्वार्णादाङ्गस्य बलीयस्त्वाचेति भावः । एवञ्च ङ्यन्ते गौरीत्यादौ लुक् आवश्यकत्वेन तदर्थमर्थग्रहणमिति तात्पर्यम् ॥

( समाधानबाधकभाष्यम् )

**एवं तर्हि आहायम्-ईदूतौ सप्तमी-इति, न चास्ति सप्तमी ईदूतौ । तत्र वचनाद्भविष्यति ॥**

(प्रदीपः) **वचनादिति** । सर्वत्रैव सप्तमी लुप्यत इति वचनसामर्थ्यात् सप्तमीशब्देन सप्तमीसहचरितस्य ग्रहणान्मुख्यकल्पनाऽसंभवे गौणी कल्पना गृह्यते-इत्याश्रयणात् सिध्यतीति भावः ॥

( उद्द्योतः ) **सर्वत्रैवेति** । ननु ययीत्यादिभ्यो ङौ दीर्घे तनू इत्यादौ ओस्सुपोः पूर्वसवर्णादेशे च ईदूदन्तसप्तमीसंभवात्कथमेतदिति चेन्न । **'ईदूत्सप्तमी प्रगृह्यम्' 'अदसः' 'एच द्विवचनम्'** इत्येव सिद्धे स्थलान्तरे 'ईदूतौ सप्तमी' इति गुरुवचनसामर्थ्येन सप्तमीसहचरितग्रहणमिति भाष्याशयान्न दोष इति केचित् ॥ तन्न । **न चास्ति सप्तमी ईदूतावि**ति भाष्यासङ्गतेः । तस्मादेतद्भाष्यप्रामाण्यात्तेषामनभिधानमिति तत्त्वम् ॥

( समाधाने श्लोकवार्तिकम् ॥ )

***वचनाद्यत्र दीर्घत्वम्***

( भाष्यम् )

**नेदं वचनाल्लभ्यम् । अस्ति ह्येतस्य वचने प्रयोजनम् ॥**

**किम् ?**

**यत्र सप्तम्या दीर्घत्वमुच्यते—'दृतिं न शुष्कं सरसी शयानम्' (ऋ०७।१०३।२) इति । सति प्रयोजने इह न प्राप्नोति—'सोमो गौरी अधिश्रितः' इति ॥**

( प्रदीपः ) मुख्यकल्पना सम्भवत्येवेत्याह—**यत्रेति** । सरसीत्यत्र । सरःशब्दात् परस्य ङिशब्दस्य 'इयाडियाजीकाराणामुपसंख्यानम्' इतीकारे कृते भवतीकारः सप्तमीति तत्रैव स्यात्, न तु 'गौरी' इत्यत्रेति भावः ॥

( उद्द्योतः ) **सरःशब्दादिति** । सरस्शब्दस्यासुनन्तत्वेनाद्युदात्तत्वेऽपि स्वरव्यत्ययात् **'दृतिं न शुष्कं सरसी शयानं'** इत्यत्र सरसीत्यस्यान्तोदात्तत्वं बोध्यम् ॥

( समाधानबाधकं श्लोकवार्तिकम् ॥ )

***तत्रापि सरसी यदि ।***

( भाष्यम् )

**तत्रापि सिद्धम् ।**

**कथम् ?**

**यदि सरसीशब्दस्य प्रवृत्तिरस्ति ।**

**अस्ति च लोके सरसीशब्दस्य प्रवृत्तिः ।**

**कथम् ?**

**दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यन्ते ॥**

( प्रदीपः ) **सरसी यदीति** । 'यदि' इति सम्भावनायाम् । तस्मात् स्थितमेतत्-वचनात् सर्वत्र लुप्तायामपि सप्तम्यां भविष्यतीति नार्थोऽर्थग्रहणेन ॥

( उद्द्योतः ) निराकर्तुः संशयार्थो **यदि**शब्दोऽनुपपन्न इत्यत आह—**संभावनायामिति** । **शास्त्राणि चेत्प्रमाणं स्युरि**तिवद्-

---

१ असावीकार ऊकारश्च सप्तम्यादेशपूर्वसवर्ण एव दृश्यते नात्र सप्तमी लुप्यत इति चेत् । तन्न । सप्तम्याः पूर्वसवर्णं बाधित्वाऽऽम्भावः प्रसज्यते । कथंचिदामादेशाभावेऽप्याडागमः प्रसज्येतेति वार्तिकार्थः ॥ (दा. म.)

२ भावशब्दो विकारपर इत्याह—**आम्भावश्चेति** ॥ छाया ॥

३ **कल्पनासंभव** इत्यत्राकारप्रश्लेषः ॥ छाया ॥

४ नारायणाद्युक्तिं खण्डयति—**नन्वित्यादिना-केचिदित्यन्तेन** ॥ छाया ॥

५ **ओस्सुपोरिति** । तनुशब्दात् ओसि प्रत्यये सुप्प्रत्यये च परतः पूर्वसवर्णादेशे इत्यर्थः । ङिप्रत्यये आडामोः प्राप्तिसत्त्वेन 'ओस्सुपोः' इत्युक्तम् । ययीशब्दाच ङिप्रत्यये आडामोः प्राप्त्यसम्भवेन तदप्युदाहरणमुक्तम् । अत्र र. ना. पण्डितेन पूर्वमुद्रणे 'ऊसुपोः' इति पाठः कल्पितः स प्रामादिकः ॥

६ सिद्धान्तमाह—**तस्मादिति** ॥ छाया ॥

७ **'ईदूतौ सप्तमी'** इति वचनसामर्थ्यादेवाडाम्भावं बाधित्वा पूर्वसवर्णदीर्घो भविष्यति-इति चेत् । तन्न । यत्र सप्तम्या दीर्घेकारादेशस्तत्र वचनस्य चारितार्थ्यादिति वार्तिकार्थः ॥ ( दा. म. )

८ वचनादिति वार्तिकमनन्वितं भेदान्वयेन व्याचष्टे—**नेदमिति** ॥ छाया ॥

९ **उच्यत इति** । तदिति शेषः ॥ छाया ॥

१० स्वरदोषं परिहरति—**सरःशेति** ॥ 'वाङ्मनसी यच्छेत्' इति तु द्वितीयाद्विवचनान्तम् । समासान्तस्त्वनित्यत्वान्न । एतेन तत्र मनःशब्दात्सप्तम्या **इयाडिती**कारेऽपि संहितायामनच्परत्वाद्ब्राह्मणे पदापाठाच न संज्ञायाः फलमिति निरस्तम् ॥ छाया ॥

११ उक्तोदाहरणेऽपि लुक् पूर्वसवर्णो दीर्घो वा भवति । सरसीशब्दस्य दर्शनात् । तथा च सरसी इत्यस्यान्तोदात्तत्वमपि निराबाधमेव । लुकि प्रकृतिस्वरस्य पूर्वसवर्णे तस्यानुदात्तत्वेऽपि **'एकादेश उदात्तेन'** इत्युदात्तस्य श्रवणसिद्धेः ॥ तथा च दीर्घेकारविधानं व्यर्थमेवेति सप्तम्या ईदूद्रूपाया अन्यथानुपपत्त्या वचनसामर्थ्यादेवाडाम्भावनिवृत्तिः सिद्धेति वचनसामर्थ्यादेव प्रगृह्यसंज्ञा भविष्यतीति भावः ॥ छाया ॥

१२ **संशयेति** । बहुव्रीहिः ॥ प्राग्वदाह—**सरसीति** । पिप्पल्यादित्वात् ॥ **भाष्याशय इति** । शाखान्तरे आद्युदात्तपाठे तु तत्र व्यत्ययेन ङीप् ॥ उपसंहरति—**तस्मादिति** ॥ छाया ॥

संदिग्धे संदिग्धवचनमिदमिति भावः ॥ सरसीशब्दो यदि ङीषन्तस्तदाऽन्तोदात्तत्वं न्यायसिद्धम् । असुन उगन्तत्वान्ङीबन्तत्वे तु स्वरव्यत्ययादेव तत्त्वम् । एवं च ततो लुकैवोक्तप्रयोगे सिद्धे इत्यादिति वार्तिके ईकारादेशो न विधेय इति भाष्याशयः ॥ तस्मात्पूर्वोक्तरीत्या वचनसामर्थ्याल्लुप्तेऽपि सिद्धिः ॥

( समाधाने श्लोकवार्तिकम् ॥ )

***ज्ञापकं स्यात् तदन्तत्वे***

( भाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यः-'न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवति' इति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**कुमार्योरगारं-कुमार्यगारम्, वध्वोरगारं-वध्वगारम् । प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति ॥**

( प्रदीपः ) **ज्ञापकमिति** । 'ईदूदेत्' इत्यत्र तृतीयचतुर्थपक्षयोरित्यर्थः ॥ इह प्रगृह्यसंज्ञाप्रकरणे यदि प्रत्ययलक्षणं स्यात् तदा 'ईदूतौ च सप्तमी' इत्येव सप्तमीसहचरितं सप्तम्यां वा परतो यदीदूदन्तं तत् प्रगृह्यमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किं-अर्थग्रहणेन, तत् क्रियमाणं प्रत्ययलक्षणाभावं सूचयति ॥

( उद्योतः ) **सप्तमीसहचरितत्वं** च प्रत्ययलक्षणेन बोध्यम् ॥

( समाधाने श्लोकवार्तिकम् ॥ )

***मा वा पूर्वपदस्य भूत् ॥ २ ॥***

( भाष्यम् )

**अथवा पूर्वपदस्य मा भूदित्येवमर्थमर्थग्रहणम् । वाप्यामश्वः-वाप्यश्वः, नद्यामातिः-नद्यातिः ॥**

( प्रदीपः ) संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात् तदन्तपक्षस्तत्र नैव स्थित इति ज्ञापनफलाभावादाह—**मा वेति** ॥ **वाप्यश्वो नद्यातिरिति** । 'संज्ञायां' इति समासे कृते सप्तमीसहचरितमीकारान्तं पूर्वपदमिति स्यात् प्रगृह्यसंज्ञा-इति तदर्थमर्थग्रहणम् ॥

( उद्योतः ) **संज्ञायामितीति** । अत एवाग्रे भाष्ये जहत्स्वार्थावृत्तिरिति सङ्गच्छते । न च वाक्येन संज्ञाऽनवगमादस्य नित्यसमासत्वे वाप्यामश्व इति विग्रहो नोचित इति वाच्यम् । वाक्यात्संज्ञिनोऽनवगमेन नित्यसमाससदृशत्वेऽपि न तद्विधायके वाग्रहणासंबन्ध इति समासघटकीभूतानां तद्विषये विग्रहाभावे मानाभावात् । ध्वनितं चेदं द्वितीयतृतीयेति सूत्रे भाष्ये-इति तत्रैव निरूपयिष्यते ॥ **सप्तमीसहचरितमिति** । प्रत्ययलक्षणेनेति भावः ॥

( आक्षेपभाष्यम् )

**अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति ?**

( प्रदीपः ) **अथेति** । अस्त्येवात्र सप्तम्यर्थ इति **प्रश्नः** ॥

( समाधानभाष्यम् )

**जहत्स्वार्था वृत्तिरिति ॥**

( प्रदीपः ) **जहत्स्वार्थेति** । समासस्यैवार्थवत्त्वात् पूर्वोत्तरपदयोर्वर्णवदानर्थक्यात् सप्तम्यर्थोऽत्र नास्तीत्यर्थः ॥

( उद्योतः ) **वर्णवदानर्थक्यादिति** । **संज्ञायामिति** समासेऽस्य रूढिशब्दत्वादवयवार्थाप्रतीतेरिति भावः । 'वाप्यामश्वः' इति विग्रहप्रदर्शनं तु रथन्तरादिपदानां रथेन तरतीत्यादिविग्रहप्रदर्शनवद्बोध्यम् । अत एव—**'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी'** इति वृद्धैरुक्तम् ॥

( आक्षेपभाष्यम् )

**अथाजहत्स्वार्थायां वृत्तौ दोष एव ॥**

( उद्योतः ) भाष्ये—**अथाजहत्स्वार्थायामिति । सुप्सुपेति** समासेन केवलयौगिके इत्यर्थः ॥

( समाधानभाष्यम् )

**अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधीयते ॥**

( श्लोकवार्तिकसंग्रहः )

**ईदूतौ सप्तमीत्येव, लुप्तेऽर्थग्रहणाद्भवेत् ।**
**पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते ॥१॥**
**वचनाद्यत्र दीर्घत्वं, तत्रापि सरसी यदि ।**
**ज्ञापकं स्यात् तदन्तत्वे, मा वा पूर्वपदस्य भूत् ॥ २ ॥ १९ ॥**

( प्रदीपः ) **समुदायार्थ इति** । वृत्तौ हि पूर्वपदं स्वार्थमप्यभिधत्ते प्रधानार्थमपि-इति स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधानात् पांसूदकवत् स्वार्थस्य विवेकानवगमात् समुदायार्थो वृत्तौ संसृष्टरूप एवाभिधीयते । सप्तम्यर्थग्रहणेन यावानेवार्थो वाक्ये

---

१ सृधातोरसुन्प्रत्यये निष्पन्नात्सरस्शब्दात् 'उगितश्च' इति ङीप् ॥

२ वार्तिके **ज्ञापकमि**त्यत्र तदभावस्येति शेषः ॥ किं फलमत आह—**तदन्तेति** । संज्ञिनो द्विवचनान्तत्वाभिमते इत्यर्थः । **कुमार्यो**रित्युपलक्षणं शुक्ल्योस्तामित्यादेरपि ॥ छाया ॥

३ **तदन्तत्व** इत्यस्यार्थमाह—**ईदूदेदित्यत्रेति** ॥ भाष्ये प्रगृह्यसंज्ञापदं प्रकरणपरमित्याह—**इहेति** ॥ छाया ॥ ईदूदेद्द्विवचनं प्रगृह्यमितिसूत्रे तृतीयचतुर्थपक्षयोः प्रसङ्गे 'सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य' इत्युक्तं भाष्ये ॥

४ इदं सूत्रमूलयति—**अत एवेति** ॥ **संज्ञेति** । कर्मण्यड् । अत एवाग्रे **संज्ञिन** इत्युक्तिः ॥ छाया ॥ वाप्यश्व इत्यादौ 'संज्ञायां' इति सूत्रेणैव समासे भाष्यसंमतिं प्रदर्शयति—**अत एवेति** ॥

५ ननु वैलक्षण्योपलम्भान्न तत्तुल्यत्वमत आह—**अत एवेति** ॥ छाया ॥ एवकारो भिन्नक्रमः 'तत्र जहत्स्वार्थैव' इति वास्तविकोऽर्थः ॥ दाधिमथाः ॥

६ **समासेनेति** । वाप्यामश्व इति संज्ञायामिति समासे संज्ञाशब्दः । यदा सुप्सुपेति समासस्तदा यौगिकः ॥

७ चोऽप्यर्थे ॥ छाया ॥

सप्तम्यन्तेनाभिधीयते केवलोऽसंसृष्ट उद्भूतस्तस्यैवेह ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा ॥ १८ ॥

( उद्द्योतः ) प्रधानार्थमपीति । अश्वपदशक्तिसमुदायशक्ति-सहकारेण[1] गृहीतशक्तिकाद्वापीपदात्स्वार्थविशिष्टप्रधानार्थस्यैवोपस्थितेरि-त्यर्थः ॥ तत्र[2] समुदायशक्तिः संसर्गांश एव । तदाह—स्वार्थसं-सृष्टस्येत्यादि ॥ विवेकानवगमात्–पृथगनुपस्थितेरित्यर्थः । पांसू-दकं मिलितं यथा संसृष्टमेव ज्ञानविषयो न तु पृथक्, तथा समासा-त्संसृष्ट एवोपस्थितिविषयो न तु पृथगित्यर्थः ॥ यावानित्यस्य विव-रणं–केवल इति । कैवल्यं विवृणोति—असंसृष्ट उद्भूत इति । असंसृष्टत्वं[3]–विशेषणाविशिष्टत्वम् । उद्भूतत्वं–इतराविशेषणत्वमिति बोध्यम् ॥ समुदायरूपोऽर्थः–पूर्वपदार्थविशिष्ट उत्तरपदार्थोऽभि-धीयते–अभिधाभिः परस्परसहकारेणोपस्थाप्यत इति भाष्यार्थः ॥ अर्थग्रहणसामर्थ्यात्सप्तम्यर्थमात्रपर्यवसन्नार्थकमर्थग्रहणमिति भावः ॥ गौरीत्यादौ त्वस्त्येव गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम् । समभि-व्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वस्यैव सप्तम्यर्थपर्यव-सन्नत्वरूपत्वात्[4] ॥ न चार्थग्रहणेऽपि गौरीत्याद्यसिद्धिः, सप्तम्यर्थे ईकाराद्यभावात् । ईदाद्यन्तमित्यर्थस्तु दुर्लभो विशेष्याभावादिति वा-च्यम् । सामर्थ्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावात् ॥ १८ ॥

( इति प्रगृह्यसंज्ञाप्रकरणम् )

—∘∘—

( १८ घुसंज्ञासूत्रम् ॥ १ । १ । ५ आ. ९ )

## दा धा घ्वदाप् ॥ १ । १ । २० ॥

( इष्टानुपपत्तिनिराकरणाधिकरणम् )

( १६३ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् ॥ * ॥

( भाष्यम् )

**घुसंज्ञायां प्रकृतिग्रहणं कर्तव्यम् । दाधाप्रकृतयो[5] घुसंज्ञा भवन्तीति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**आत्वभूतानामियं संज्ञा क्रियते । सा आत्वभू-तानामेव स्यात्, अनात्वभूतानां न स्यात् ।**

**ननु च भूयिष्ठानि घुसंज्ञाकार्याणि अर्धधातुके, तत्र चैते आत्वभूता दृश्यन्ते ॥**

**'शिदर्थम्' । शिदर्थं प्रकृतिग्रहणं कर्तव्यम् । शित्यात्वं प्रतिषिध्यते तदर्थम् । प्रणिदयते, प्रणिधय-तीति ॥**

(प्रदीपः) दाधाघ्व० ॥२०॥ दाधाशब्दयोर्घुसंज्ञा विधीय-माना रूपान्तरयुक्तानां दोदेङ्धेटां न प्राप्नोतीत्याह[6]—घुसंज्ञाया-मिति ॥

किं प्रयोजनमिति । दोदेङ्धेटामेजन्तानामनुकरणानि व्यवस्थाप्यात्वे कृते ददातियच्छतिदधात्यनुकरणानां चैकशेषे कृते द्वन्द्वनिर्देशात् सिद्धा दोदेङ्धेटामपि घुसंज्ञा, कृतात्वानां चैषां स्थानिवद्भावेन सिद्धेति प्रश्नः ॥

आत्वभूतानामिति । भवतेः प्राप्त्यर्थात् "आधृषाद्वा" इति विभाषितणिचः कर्तरि कर्मणि वा क्तप्रत्ययः । तेन आत्वं भूताः–आत्वेन वा भूताः, आकारान्ता इत्यर्थः । न लक्षणेन कृतात्वा इति विज्ञेयम् । अस्याप्ययमभिप्रायः–एजन्तानुकरणत्वे प्रमाणाभावात् प्रक्रियागौरवाच्च प्रयोग एव ये आकारान्ताः प्रयु-ज्यन्ते तदनुकरणानामयमेकशेषनिर्देशः । सामान्यानुकरणं वा 'दा' इति 'धा' इति पृथक् पदं निर्दिष्टमिति ॥

प्रणिदयत इति । घुसंज्ञायां 'नेर्गद–' इति णत्वं भवति ॥

( उद्द्योतः ) दाधाघ्व० ॥ २० ॥ दाधाशब्दयोरिति । प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणादिति भावः ॥

दोदेङ्धेटामेजन्तानामिति । एषां[7] चात्र 'प्रकृतिवदनुकरणं भवति' इतिन्यायादशितीति प्रसज्यप्रतिषेधाश्रयणाच्चात्वमिति भावः ॥ अत्र[8] च पक्षे लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषादीनां न प्रवृत्तिः, सर्वेषां स्वरूपेणैवानुकृतत्वात् ॥ दारयतिधारयत्योश्च नाति-प्रसङ्गः, तयोरनुकरणे आत्वासंभवेनेह दृ धृ इत्यनयोरनुपात्तत्वात् ॥ दीङोऽपि नेह ग्रहणम्, एज्विषयाभावेन तदनुकरणे आत्वासंभवादिति बोध्यम् ॥

नन्वात्वभूतानामित्यस्य जातात्वानामित्यर्थे दाणादीनां संज्ञा न स्यात् निष्ठायाः पूर्वनिपातश्च स्यात्, अत आह—भवतेरिति ।

---

१ शक्तीति । एतदुभयशक्तिसहकारेणेत्यर्थः ॥ उपस्थितावस्या-न्वयः ॥ छाया ॥

२ तत्र–तयोर्मध्ये ॥ छाया ॥

३ उभयोः साफल्यमाह—असंसृष्टत्वमिति ॥ इतरेति । तत्पुरुषः । एवं सति समुदायार्थ इति भाष्ये षष्ठीतत्पुरुष इति भ्रमनिरासाय तदर्थमाह—समुदायरूपोऽर्थ इति । कर्मधारय इति भावः ॥ एवं चासिद्धान्तभूततत्पक्षेऽप्ययं दोषो न दोषान्तरसत्त्वेऽ-पीति तात्पर्यम् ॥ छाया ॥

४ करणतात्पर्यार्थेति । र्थकग्रहणमिति पाठः ॥ सप्तम्यर्थेति । तन्मात्रेत्यर्थः ॥ छाया ॥

५ दाधाप्रकृतय इत्यत्र दाश्च धाश्च प्रकृतयश्चेति द्वन्द्वः । सूत्रे चोपस्थितत्वात्तयोरेव संबन्ध इति भावः ॥ छाया ॥

६ त्याहेति । त्यत आहेत्यर्थः ॥ कृते इति । तेषामिति शेषः ॥ अपिना तेषां यथास्थितानां समुच्चयः ॥ छाया ॥

७ एषां चेति । एतेनोपदेशाद्यभावादप्रत्ययपरत्वाच्च कथमात्व-मित्यपास्तम् ॥ छाया ॥

८ अस्य पक्षस्य युक्तत्वं प्रतिपादयति—अत्र चेति ॥ आदिना-ऽर्थवद्ग्रहणलुग्विकरणपरिभाषादिसंग्रहः ॥ एतेन "लक्षणप्रति-पदोक्तपरिभाषाविरोधादुभयत्रानुकार्यानुकरणयोरेतत्प्रवृत्त्याशयेनैव प्र-कृतीति वार्तिकप्रवृत्तेश्च दोदेङित्यादि चिन्त्यं" इत्यपास्तम् ॥ छाया ॥

प्राप्तात्वानामित्यर्थः ॥ **प्रमाणाभावादिति** । प्रयोगार्थत्वाच्छास्त्रस्योपस्थितप्रयोगस्यानुकरणे संभवति अनुपस्थितैजन्तानुकरणे प्रमाणाभाव इत्यर्थः ॥ **गौरवाच्चेति** । दीङ्स्तृजादावात्वे कृते प्रणिदातेत्यत्र नेर्गदेति णत्वानापत्तेश्चेत्यपि बोध्यम् ॥ एकशेषस्य सर्वदाधारूपाणामानन्त्येन ज्ञानासंभवात् दुर्ज्ञेयत्वेऽप्याह—**सामान्येति** ॥ ननु समाहारद्वन्द्वे 'दाधं' इति स्यात्, अन्यत्र 'दाधौ' इति स्यादत आह—**पृथक्पदमिति** । असो रुत्वे यत्वे लोपे च निर्विसर्गं साधु ॥

( भाष्यम् )

**भारद्वाजीयाः पठन्ति—**

( १६४ भारद्वाजीयमाक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् ॥ * ॥**

( भाष्यम् )

**घुसंज्ञायां प्रकृतिग्रहणं क्रियते ।**

**किं प्रयोजनम् ?**

**शिदर्थं विकृतार्थं च । शित्युदाहृतम् । विकृतार्थं खल्वपि—प्रणिदाता, प्रणिधाता ।**

**किं पुनः कारणं न सिध्यति ?**

**'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इति प्रतिपदं ये आत्वभूतास्तेषामेव स्यात्, लक्षणेन ये आत्वभूतास्तेषां न स्यात् ॥**

( प्रदीपः ) **प्रणिदातेति** । धतेर्देङो वा रूपम् । **प्रणिधातेति**-धेटः ॥ **लक्षणेति** । लाक्षणिके हि लक्षणानुसन्धानद्वारेण प्रतिपत्तिर्बहिरङ्गा, प्रतिपदोक्ते त्वन्तरङ्गा ॥

( उद्योतः ) विकृतानां दोदद्घोरिति सूत्रे धेर्ण्णिवृत्त्यर्थदाग्रहणपर्यालोचनया घुत्वं सुलभमिति मत्वा वार्तिके **'शिदर्थम्'** इत्युक्तम् । भारद्वाजीयैस्तु तावद्विवेकासमर्थान्प्रति **विकृतार्थमि**त्यप्युक्तम् ॥ प्रणिदातेत्यादौ लाक्षणिकत्वं स्फुटयति—**धतेर्देङो वेति** ॥

( प्रकृतिग्रहणानन्वयबोधकं भाष्यम् )

**अथ क्रियमाणेऽपि प्रकृतिग्रहणे कथमिदं विज्ञायते-दाधाः प्रकृतय इति, आहोस्विद्दाधां प्रकृतय इति ?**

**किं चातः ?**

**यदि विज्ञायते-दाधाः प्रकृतय इति, स एव दोषः—आत्वभूतानामेव स्यात्, अनात्वभूतानां न स्यात् ॥**

**अथ विज्ञायते-दाधां प्रकृतय इति, अनात्वभूतानामेव स्यात्, आत्वभूतानां न स्यात् ॥**

( प्रदीपः ) **कथमिति** । 'दाधाप्रकृतयः' इति षष्ठीसमासः-कर्मधारयो वा, उभयथाऽप्यव्याप्तिरिति प्रश्नः ॥

**दाधाः प्रकृतय इति** । 'दीयते' इत्यादावीत्वादेः ॥ **आत्वभूतानामिति** । दाण्दाञ्धाञाम् ॥

( उद्योतः ) प्रकृतय इत्यस्य सापेक्षत्वादाह—**ईत्वादेरिति** ॥ **दाणिति** । 'आत्वभूताः' इत्यनेन उपदेशे आकारान्ता एवोच्यन्ते, तद्भिलक्षणास्त्वनात्वभूता इति भावः ॥

( प्रकृतिग्रहणान्वयबोधकं भाष्यम् )

**एवं तर्हि नैवं विज्ञायते-दाधाः प्रकृतय इति, नापि दाधां प्रकृतय इति ।**

**कथं तर्हि ?**

**दा धा घुसंज्ञा भवन्ति, प्रकृतयश्चैषामिति ॥**

( प्रदीपः ) **प्रकृतयश्चैषामिति** । प्रत्यासत्त्या 'एषाम्' इति लभ्यते ॥

( उद्योतः ) **प्रत्यासत्त्येति** । एवं च 'एषाम्' इति नापूर्वमिति भावः ॥ एतत्सामर्थ्यादेव लाक्षणिकानामप्यनुकरणमनुमास्यत इति तात्पर्यम् ॥

( प्रकृतिग्रहणोपसंहारभाष्यम् )

**तत्तर्हि प्रकृतिग्रहणं कर्तव्यम् ?**

( प्रकृतिग्रहणार्थस्य प्रकारान्तरेण साधकं भाष्यम् )

**न कर्तव्यम् । इदं प्रकृतमर्थग्रहणमनुवर्तते ।**

**क्व प्रकृतम् ?**

**"ईदूतौ च सप्तम्यर्थे" इति । ततो वक्ष्यामि—"दा धा घ्वदाप्" "अर्थे" इति ॥**

( प्रदीपः ) **अर्थ इति** । एतद्द्वितीयं वाक्यम् । सन्निधानाच्च दाधामर्थे यः प्रवर्तते स घुसंज्ञ इति प्रकृतीनामपि सिध्यति ॥

( उद्योतः ) नन्वेकवाक्यत्वे दारयत्याद्येकदेशानर्थकव्यावृत्त्यर्थमेव तत्स्यात्, न त्वन्यरूपप्रापकमत आह—**एतद्द्वितीयमिति** ।

१ केवलएजन्तानामेवानुकरणे दोषमाह—दीङ्स्तृजेति ॥

२ इत्यपीति । एतेन—आत्वं भूता इत्यादि—इतीत्यन्तं कैयटोक्तं चिन्त्यम्, आत्वभूतशब्देन कृतात्वानामग्रहणे मानाभावात् । एजन्तानुकरणस्य स्वयमेवोक्तत्वेनाकारान्तानुकरणत्वप्रमाणस्यैव तत्र प्रमाणत्वसंभवात् । प्रक्रियागौरवाश्रयणस्यौचित्यात् । प्रकृतिग्रहणेन त्ववारणस्योपायान्तरत्वसंभवात् । 'न तु लक्षणेन' इत्यस्य 'प्रयोग एव' इत्यस्य मिथो विरुद्धत्वाच्चेत्यपास्तम् ॥ उक्तहेतोराशयानवबोधाच्च ॥ छाया ॥

३ अत्र च. झ. प्रभृतिषु मुद्रितपुस्तकेषु 'सो रुत्वे' इत्येव पाठो दृश्यते, स प्रामादिकः । झ. पुस्तके 'अत्र सो रु' इति पाठ उद्धृतः. सोऽपि 'असो' पाठाकारार्थानवगमात् विकारितः । वस्तुतस्तु 'दा' इत्यस्य पृथक्पदत्वे तस्यानेकत्वाच्च तस्मादसप्रत्ययस्यैव प्राप्तेरसो रुत्वे इत्येवोचितः ॥

४ अत्रापि 'धेण्णिवृत्त्यर्थं दाग्र' इति झ. पुस्तकपाठः सोऽपपाठः ॥

५ ततो वक्ष्यामीति । प्रकृतत्वादनुवृत्तिं करिष्यामीत्यर्थः ॥छाया॥

६ तत्स्यादिति । एतेन संभवत्येकवाक्यत्वेति न्यायेन वाक्यभेदानौचित्यात् कैयटोक्तं चिन्त्यमित्यपास्तम् ॥ छाया ॥

अर्थवत्परिभाषयैवानर्थकव्यावृत्तौ सिद्धायामर्थग्रहणानुवृत्तिर्वाक्यभेदार्थैवेति भावः ॥

( बाधकभाष्यम् )

**नैवं[1] शक्यम् । ददातिना समानार्थान् रातिरासतिदाशतिमंहतिप्रीणातिप्रभृतीनाहुः, एतेषामपि घुसंज्ञा प्राप्नोति । तस्मान्नैवं शक्यम् ॥**

**न चेदेवं, प्रकृतिग्रहणं कर्तव्यमेव ॥**

**( उद्द्योतः )** भाष्ये—प्रीणातीति । यथा–पितृभ्यः प्रीणातीत्यादौ ॥

( प्रकारान्तरेण साधकं भाष्यम् )

**न[3] कर्तव्यम् । शिदर्थेन तावन्नार्थः । अवश्यं तत्र मार्थं प्रकृतिग्रहणं कर्तव्यम् । प्रणिमयते प्रण्यमयते -इत्येवमर्थम्, तत् पुरस्तादपकक्ष्यते घुप्रकृतौ माप्रकृतौ चेति ॥**

**( प्रदीपः ) तत्पुरस्तादिति ।** घुमाशब्दयोर्मध्ये प्रकृतिग्रहणं कर्तव्यं, तदुभाभ्यामपि सम्भन्त्स्यते ॥

**( उद्द्योतः )** ननु तत्रोभयान्वयाय प्रकृतिग्रहणद्वये कर्तव्येऽत्रैव करणं युक्तमत आह—**तदुभाभ्यामिति ।** घुप्रकृतिमाशब्दानां द्वन्द्वे सन्निधानाविशेषादुभयप्रकृतिर्गृह्यते-इति प्रणिदयते प्रणिमयत इति उभयत्रापि णत्वं सिध्यतीत्यर्थः ॥

( आक्षेपभाष्यम् )

**यदि प्रकृतिग्रहणं क्रियते, प्रनिमिनोति-प्रनिमीनाति-अत्रापि प्राप्नोति ॥**

**( प्रदीपः ) प्रनिमिनोतीति ।** 'मीनातिमिनोतिदीङां ल्यपि च' इत्यात्त्वविधानाद्भवति माप्रकृतित्वमनयोः ॥

**( उद्द्योतः ) आत्वविधानादिति ।** एज्विषये इकारान्तानामात्त्वविधानादिति भावः ॥

( प्रतिबन्दीभाष्यम् )

**अथाक्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्न भवति-प्रनिमाता-प्रनिमातुं-प्रनिमातव्यमिति ?**

( प्रतिबन्दीसमाधानभाष्यम् )

**आकारान्तस्य ङितो ग्रहणं विज्ञायते ॥**

( समाधानभाष्यम् )

**यथैव तर्हि अक्रियमाणे प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञायते, एवं क्रियमाणेऽपि प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञास्यते ॥**

**( उद्द्योतः )** भाष्ये—एवं क्रियमाणेऽपीति । णत्वविधौ माङ्स्यतीति निर्देष्टव्यमिति भावः ॥ यद्यपि लक्षणप्रतिपदोक्तपरिभाषया मीनातिमिनोत्यादेशानां ग्रहणाभावो वक्तुं शक्यस्तथापि मेङोऽग्रहणवारणाय गामादाग्रहणेष्वविशेष इत्युक्तेर्माग्रहणे तदप्रवृत्तिः । 'मा माने' इत्यस्य योगे णत्ववारणाय च ङित्पाठ आवश्यक इति तात्पर्यम् ॥

( भारद्वाजीयप्रयोजननिराकरणभाष्यम् )

**विकृतार्थेन चापि नार्थः । दोष एवैतस्याः परिभाषायाः-"लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव" इति-"गामादाग्रहणेष्वविशेषः" इति ॥**

**( प्रदीपः ) गामादाग्रहणेष्विति ।** अस्य चार्थस्य दैपः पित्त्वं 'अदाप्' इति प्रतिषेधे सामान्यग्रहणार्थं[12] लिङ्गम् । अन्यथाऽस्य लाक्षणिकत्वादत्र ग्रहणं न भविष्यतीति किं प्रतिषेधार्थेन पित्त्वेन ? सामान्यापेक्षया च 'निरनुबन्धकग्रहणे–' इति 'लक्षप्रतिपदोक्तयोः–' इति च परिभाषाद्वयानुत्थानमिह ज्ञापयतीति धेटोऽपि सिध्यति । 'दो दद्घोः' इत्यत्र वा[13] 'दः' इत्येतत् धेण्निवृत्त्यर्थं सत् धेटो घुसंज्ञां ज्ञापयति । न हि दधातिनिवृत्त्यर्थं द इत्येतत्, अस्य 'दधातेर्हिः' इति ह्यादेशविधानाद्दद्भावाप्रसङ्गात् ॥

**( उद्द्योतः ) सामान्येति ।** एतत्सूत्रगृहीतदाधापेक्षया परिभाषागृहीतगा[14]ऽऽद्यपेक्षया परिभाषाद्वयापेक्षया चेत्यर्थः ॥ **निरनुबन्ध-**

१ पूर्वपक्षी खण्डयति—**नैवमिति ॥**

२ अप्रसिद्धत्वादाह—**यथेति ॥** छाया ॥

३ **न कर्तव्यमिति ।** यत इति शेषः ॥ **तत्र**-नेर्गदेति सूत्रे ॥छाया॥

४ ननु घोः पूर्वं पाठे दोष एवात आह—**घुमेति ॥** छाया ॥ 'नेर्गदेति सूत्रे घुमाशब्द' इति च. झ. पाठः ॥

५ **कर्तव्ये**–सतीति शेषः ॥ छाया ॥

६ मिनोतिमीनात्योर्माप्रकृतित्वान्नेर्गदेति सूत्रे प्रकृतिग्रहणे कृते दोष आपाद्यते—**अत्रापीति ॥**

७ भाष्यरीत्येदं न वार्तिकरीत्येत्याह—**एज्विषये इति** ॥छाया॥ 'एज्विषये ईकारान्त' इति च. झ. घ. पाठः । माप्रकृतित्वमनयोरुपपादयति—**एज्विषय इति ॥**

८ तत्र सिद्धान्ती तन्मुखेनैव समाधातुं शङ्कते—**अथेति ॥** नेर्गदेतिसूत्र इति भावः ॥ छाया ॥ प्रनिमातेत्यादौ णत्वं कस्मान्न भवतीत्यर्थः ॥

९ प्रनिमातादीनि मीनातिमिनोत्योरूपाणि, नेर्गदेति सूत्रे प्रकृतिग्रहणाभावे मारूपाभावादत्र प्राप्तिरेव न ॥

१० नेर्गदेति सूत्रे ङितो माधातोर्ग्रहणं विज्ञायत इत्यर्थः ॥

११ इदमेव तस्य न फलमित्याह—**मा मान इति ॥** छाया ॥

१२ **ग्रहणार्थमिति ।** क्रियमाणमिति शेषः ॥ छाया ॥

१३ **वेति ।** अथवा दो दद्घोरित्यत्र धेट्निवृत्त्यर्थं दोग्रहणमिति तत् घुसंज्ञां ज्ञापयतीत्यर्थः । तच्च दोग्रहणं दधातिनिवृत्त्यर्थमपि नेत्याह—**न हीति ॥**

१४ **गृहीतगाद्येति ।** एतेन—अदाब्ग्रहणस्यैव ज्ञापकत्वसंभवेन तदपहाय पित्त्वस्य तदाश्रयणानौचित्यात्कैयटोक्तम्—'**अस्य चार्थस्य**–' इत्यादि चिन्त्यम् । परिभाषान्तराप्रवृत्तेरपि ज्ञापयितुं त्वन्मतेऽपि शक्यत्वेन तदनुक्तौ मानाभावाचेत्यपास्तम् ॥ आशयानवबोधात् । उपायस्योपायान्तरादूषकत्वाच्च ॥ छाया ॥

केति । स च 'दोऽवखण्डने' इत्ययम् ॥ धेटोऽपीति । अन्यथाऽस्य लाक्षणिकत्वाद् ग्रहणाप्रसक्तिः ॥ येत्तु सानुबन्धकत्वादिति । तन्न । निरनुबन्धकस्य 'धा' इत्यस्याप्रसिद्धत्वात् ॥ ये तु दाविषयमेव तज्ज्ञापकं मन्यन्ते, तन्मते धेडंशे ज्ञापकान्तरमाह—दो ददिति ॥

( यदागमन्यायाधिकरणम् )

( १६५ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ समानशब्दप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**समानशब्दानां प्रतिषेधो वक्तव्यः । प्रनिदारयति, प्रनिधारयति । दा धा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) **समानशब्दानामिति** । समानश्रुतीनामित्यर्थः ॥ **प्रनिदारयतीति** । दॄङ्धृङोर्णिचि वृद्धावाकारे कृते दाधाशब्दौ संपद्येते, तौ चार्थवन्तौ । पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः ॥

( उद्योतः ) समानत्वं नार्थत इत्याह—श्रुतीनामिति ॥ तौ चेति । एतेनानर्थकत्वात्तयोर्घुत्वं नेत्यपास्तम् ॥ पश्चादिति । प्रणिदापयतीत्यत्र पुगिवेति भावः ॥ आगमभूतत्वात्—आगमस्वरूपत्वात् ॥

( १६६ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात् ॥ * ॥**

( भाष्यम् )

**समानशब्दानामप्रतिषेधः, अनर्थकः प्रतिषेधोऽप्रतिषेधः ।**

**घुसंज्ञा कस्मान्न भवति ?**

**'अर्थवद्ग्रहणात्' । अर्थवतोर्दाधोर्ग्रहणम् । न चैतावर्थवन्तौ ॥**

( प्रदीपः ) **अर्थवद्ग्रहणादिति** । 'अर्थवद्ग्रहणे नानर्थकस्य' इत्यस्यार्थस्य **'स्वं रूपम्'**-इत्यनेन ज्ञापितत्वात् । **'उरण् रपरः'** इति चाण्विधीयमान एव रपरो भवतीति वृद्धिः क्रियमाणा रपरा भवतीति 'दार्' धातोरेवार्थवत्त्वं न तु तदवयवयोरिति नास्ति घुसंज्ञा ॥

( समाधानहेत्वन्तरभाष्यवार्तिकम् ॥ )

***अनुपसर्गाद्वा***

( भाष्यम् )

**अथवा यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति । न चैतौ दाधौ प्रति क्रियायोगः ॥**

( प्रदीपः ) **अनुपसर्गाद्वेति** । अभ्युपगम्य घुसंज्ञां दोषं परिहरति । घुसंज्ञापेक्षया यस्योपसर्गत्वं तस्मात् परस्य नेर्घौ परतो णत्वं विधीयते । अत्र दाधापेक्षया नास्ति प्रशब्दस्योपसर्गत्वम्, किंतु दार्धार्शब्दापेक्षयेत्यदोषः ॥

( उद्योतः ) अभ्युपगम्येति । अदाविति प्रतिषेधार्थेन दैपः पित्त्वेन दो ददित्यनेन च परिभाषामात्रानुपस्थानज्ञापनसंभवादिति भावः ॥ किंत्विति । तयोरेव क्रियावाचित्वादिति भावः ॥

( आक्षेपभाष्यम् )

**यद्येवम्, इहापि तर्हि न प्राप्नोति—प्रणिदापयति प्रणिधापयतीति । अत्रापि नैतौ दाधावर्थवन्तौ, नाप्येतौ दाधौ प्रति क्रियायोगः ॥**

( प्रदीपः ) **इहापि तर्हीति** । अत्रापि पुकि कृते पकारान्तोऽर्थवान्, न केवलो दाशब्दः । पुगन्तमेव च प्रत्युपसर्गत्वम्, न दाशब्दमिति **प्रश्नः** ॥

( १६७ समाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ न वाऽर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथाऽन्यत्र ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ।**

**किं कारणम् ?**

**अर्थवत आगमस्तद्गुणीभूतोऽर्थवद्ग्रहणेन गृह्यते ।**

**'यथाऽन्यत्र' । तद्यथा—अन्यत्रापि अर्थवत आगमोऽर्थवद्ग्रहणेन गृह्यते ।**

**क्वान्यत्र ?**

**लविता चिकीर्षितेति ।**

( प्रदीपः ) **न वाऽर्थवत इति** । लब्धात्मकस्य भावस्य

---

१ नारायणाद्युक्तिं खण्डयति—**यत्त्विति** ॥ वैयर्थ्यं परिहरति—**ये त्विति** ॥ छाया ॥

२ **एतेनेति** । एतेनार्थवदित्यस्यासिद्धान्तिनोक्तत्वेन तदप्रवृत्त्यैव शङ्कौचित्येन 'तौ च' इत्यादि कैयटोक्तं चिन्त्यमित्याद्यपास्तम् । आशयभेदेन तदुक्तिसामञ्जस्ये दोषलेशाभावात् । एवं योजने एव चमत्कारातिशयाच्च ॥ छाया ॥

३ यथाश्रुतानुपपत्तेराह—**आगमस्वरूपेति** ॥ छाया ॥

४ **ज्ञापितत्वादिति** । प्रतिपादितमिदमसकृत् ॥ एतेन स्वमित्यनेनास्यावैयर्थ्यार्थस्यैव भाष्यसंमतत्वेन ज्ञापितत्वे मानाभावाच्चिन्त्यमित्यपास्तम् ॥ छाया ॥

५ **न चैताविति** । अनयोर्धात्वोर्या क्रिया तद्योग इत्यर्थः ॥ छाया ॥

६ अस्यैव युक्तत्वादरुचिसूचकं नेदमिति ध्वनयन्नभ्युपगमे बीजमाह—**अदाविति** ॥ तथाचैत एवारुच्या भाष्ये पक्षान्तरमिति भावः ॥ छाया ॥

७ आद्यतुल्यतां भाष्योक्तामाह—**अत्रापीति** ॥ छाया ॥

८ द्वितीयतुल्यतां तदुक्तामाह—**पुगन्तमिति** ॥ छाया ॥

निमित्तवशादुपचयापचयौ व्यपदेशहानिं न कुरुतः । यथा देवदत्तस्याङ्गाधिक्याङ्गच्छेदौ । इहाप्यन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति, नाप्यर्थवत्त्वमित्यदोषः ॥ अनर्थकस्याप्यागमो व्यपदेशहानिं न करोति । यथा–सत्यपि रेफे आकाराकारयोर्वृद्धिगुणव्यपदेशाहानिः । इह त्वर्थवतोर्ग्रहणादर्थवत इत्युक्तम् । यदा च प्रकृत्यर्थः प्रेण विशेष्यते तदाऽयं परिहारः, ण्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वात् णत्वं न भवत्येव ॥ **तद्गुणीभूत इति** । प्रयोगसंपादन उपकारक इत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**तद्गुणीभूत इति** । यमुद्दिश्यागमो विहितः स **तद्गुणीभूतः** शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण-तद्बोधकेन **गृह्यते**-बोध्यत आगमविशिष्ट इति परिभाषार्थः ॥ तदाह—**लब्धात्मकस्येति** । तेन दार्धारोर्व्यावृत्तिः सूचिता । **अपचय** इति-दृष्टान्तार्थम् ॥ **अन्तरङ्गत्वादिति** । इदं यथोद्देशे, कार्यकाले तु णत्वदेशा संज्ञाऽसिद्धा स्यादिति बोध्यम् ॥ वस्तुतः कार्यकालपक्षे पूर्वं पुक्प्रवृत्तावपि दापो दाशब्देन ग्रहणाद् घुत्वं सुलभमेवेति चिन्त्यम् ॥ **घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमितीति** । स्वविशिष्टे तयोरानयनादिति भावः ॥ **आकाराकारयोरिति** । रेफविशिष्टयोरित्यर्थः ॥ **इह त्विति** । घुसंज्ञासूत्रे इत्यर्थः ॥ अत्रेदं बोध्यम्–अङ्गावयवाकारस्य मुग्विधायक**आने मुगि**ति सूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नास्याः प्रवृत्तिः । तेन 'दिदीये' इत्यादौ यणादिकं न । अयमेवार्थो भाष्येऽर्थवद्ग्रहणेन ध्वन्यत **इत्याहुः ॥ प्रयोगेति** । इदं चिन्त्यम् । आगमवत्प्रत्ययादेरपि प्रयोगसंपादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिः, मूलयुक्तेस्तुल्यत्वात् । अस्य मूलयुक्तित्वाभावे तु तत्कथनवैयर्थ्यापत्तिः । तस्मान्मदुक्तव्याख्यैव ज्यायसी ॥

**( आगमाक्षेपभाष्यम् )**

**युक्तं पुनर्यन्नित्येषु नाम शब्देष्वागमशासनं स्यात् ?**

**न । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामापूर्वः शब्दोपजनः ॥**

**( प्रदीपः ) युक्तं पुनरिति** । ततश्च नित्येष्वागमविरोधात् तद्द्वारेणादेशविधानाद्दाप्शब्द एवार्थवान्न दाशब्द इति तदवस्थो दोष इति भावः ॥

**( उद्द्योतः )** भाष्ये—**यन्नित्येष्विति** । वियदादिवत् वर्णप्रकृतिप्रत्ययपदवाक्यादिरूपाः सर्गाद्यकालिकोत्पत्तिमन्तः प्रलयकालिकनाशवन्तश्चेति पक्षे–इति भावः ॥ **दाप्शब्द एवार्थवान्न दाशब्द इति** । स तु न दाशब्द इत्यर्थः । एवं च घुत्वाभावात्तदवस्थो दोष इति भावः ॥ श्रौतस्थानषष्ठ्यभावात्स्थानिवत्त्वस्य नैतद्विषये प्रवृत्तिरिति तात्पर्यम् ॥ कूटस्थत्वं व्याचष्टे—भाष्ये-**अविचालिभिरिति** । तद्विवरणं-**अनपायेत्यादि** । द्वन्द्वान्मत्वर्थीये पश्चान्नञ्समासः ॥

**( आदेशाक्षेपभाष्यम् )**

**अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः ॥**

**( प्रदीपः ) अथ युक्तमिति** । तत्रापि स्थानिनमपनीयादेशः क्रियत इत्यनित्यत्वप्रसङ्गः । यश्चोभयोर्दोषो न तमेकश्चोद्यः ॥

**( उद्द्योतः )** नन्वेतावताऽपि स्वपक्षास्थापनाद्वैतण्डिकत्वमस्य स्यादत आह—**यश्चेति** ॥

१ अस्या लौकिकसिद्धत्वमाह—**यथेति** ॥ परिभाषापाठे **यदागमा** इति पाठादत्र **'अर्थवतः'** इति प्रकृताभिप्रायं न सार्वत्रिकमित्याह—**अनर्थकेति** । अत एवात्रैकवचनान्तपाठः ॥ एतेन—**लब्धेत्यादि**—**'इत्युक्तम्'** इत्यन्तं चिन्त्यम् । शब्दविशेषे कृतसंज्ञाया लोकदृष्टान्तेनान्यत्रानयनासंभवात् । अर्थवद्ग्रहणेनैव तत्र तद्व्यानेर्वर्ण्यत्वेन तदानर्थक्यापादनानौचित्यादित्यायुक्तमपास्तम् । नास्या ज्ञापकसिद्धत्वमित्यन्यत्र स्पष्टम् ॥ एतेन **णेरनिटी**त्यनिट्ग्रहणमत्र ज्ञापकमित्यपास्तम् । नास्या ज्ञापकसिद्धत्वमिति भूयादित्यादौ दोषाभावस्य सत्त्वेनोक्तरीत्यन्यथोक्तेरसंबद्धत्वात् ॥ छाया ॥

२ **यमुद्दिश्येति** । य इति शेषः ॥ **तद्गुणी**त्यस्य व्याख्या **शास्त्रेणेति** । एवमग्रेऽपि बोध्यम् ॥ शेषं पूरयति—**आगमविशिष्ट इति** । सोऽपीत्यर्थः ॥ तेनागमस्यापि ग्रहणम् । तेन **इमुड्**-सूत्रस्थभाष्यविरोधो न ॥ छाया ॥

३ **तेन**–लब्धात्मकस्येत्यनेन ॥ **दृष्टान्तेति** । प्रकृतानुपयोगात् ॥ छाया ॥

४ प्रदीपं दूषयति—**वस्तुत इति** ॥ छाया ॥

५ यथाश्रुतासंगतेराह—**रेफेति** ॥ दोषवारणं भाष्याद्यनुक्तं प्राचां सिद्धान्तभूतमाह—**अत्रेदमिति** । **क्वचिदि**त्यस्य व्याख्या **वर्णेति** । **आदिभ्यां** जहारेत्यादावात **औ णल** इति ॥ शब्दतोऽलाभादाह—**ध्वन्यत इति** ॥ **इत्याहुरिति** ॥ अत्रारुचिबीजं तु ततो ज्ञापकादनित्यत्वमेवास्या न तु वर्णग्रहणेऽप्रवृत्तिमात्रम्, **आनेमु**क्सूत्रभाष्याद्यसंगत्यापत्तेरिति स्पष्टं परिभाषेन्दुशेखरे । **अर्थवत** इत्याशयस्तूक्त एवेति ॥ छाया ॥

६ **तुल्यत्वादिति** । एतेनावयवान्योपकारकतायास्तत्राप्रसिद्धत्वेनावक्रता(?)श्रयणानौचित्यादयुक्तमिदमित्यपास्तम् ॥ छाया ॥

७ **मदुक्तेति** । शास्त्रेणेत्यनेनेति भावः ॥ छाया ॥

८ **पुनरिति** प्रश्ने । इति किं युक्तमित्यर्थः ॥ छाया ॥

९ उत्तरयति—**नेति** । युक्तमित्यस्यानुषङ्गः ॥ अयुक्तत्वमेवाह—**नित्येष्विति** । चस्त्वर्थे ॥ **शब्दोपेति** । उपजायमानः शब्द इत्यर्थः ॥ छाया ॥

१० प्रश्नादिसकलतात्पर्यमाह—**ततश्चेति** ॥ एतेन–इदमयुक्तम् । आगमपक्षेऽपि प्रणिदापयतीत्यादावुक्तरीत्यैव साधनीयत्वेनादेशपक्षेऽपि तस्य तथैव साधयितुमौचित्येन तद्दूषणस्पर्शात् । आदेशा इति सिद्धान्ताशयेन शङ्कोक्तेरनौचित्याच्चेत्यपास्तम् ॥ छाया ॥

११ वास्तवनित्यत्वस्याभावादाह—**वियदिति** ॥ द्वितीया**दिना** महावाक्यम् ॥ छाया ॥

१२ ननु स्थानिवद्भावेन तत्त्वमत आह—**श्रौतेति** ॥ छाया ॥

१३ अपौनरुक्त्यायाह—**कूटेति** ॥ छाया ॥

( आदेशसमर्थनभाष्यम् )

वाढं युक्तम् । शब्दान्तरैरिह[1] भवितव्यम् । तत्र शब्दान्तरे शब्दान्तरस्य प्रतिपत्तिर्युक्ता ॥

( प्रदीपः ) **बाढमिति** । प्रसङ्गवाची स्थानशब्दो न निवृत्तिवाची, ततश्च सन्त एव प्रयोगे नित्याः शब्दा बुद्ध्युन्मज्जननिमज्जनद्वारेण प्रतिपाद्यन्ते । आगमस्त्ववस्थितस्यापूर्वः क्रियमाणो नित्यत्वं विरुणद्धि ॥

( उद्द्योतः ) **प्रसङ्गवाचीति** । 'षष्ठी स्थाने' इत्यत्रत्यः । प्रसङ्गश्च बुद्धेरिति भावः ॥ **सन्त एव प्रयोगे नित्या इति** । आदेशरूपा इत्यर्थः ॥ **बुद्ध्युन्मज्जननिमज्जने**–यथाक्रममादेशस्य स्थानिनश्च ॥ भाष्ये—**शब्दान्तरे इति** । तद्बुद्धौ प्राप्तायामित्यर्थः ॥

( सिद्धान्तोपसंहारभाष्यम् )

आदेशास्तर्हीमे भविष्यन्ति–अनागमकानां सागमकाः ।

तत् कथम् ?

'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते' ॥

( प्रदीपः ) **आदेशास्तर्हीति** । इद् भवतीत्यनेन[2] द्वारेण तव्यस्य 'इतव्य' आदेशः क्रियते ॥ **सर्वे इति** । आगमा अपीत्यर्थः ॥ **सर्वपदादेशा इति** । पदशब्देन न सुप्तिङन्तं गृह्यते, अपि तु कार्यं प्रतिपद्यमानं–प्रतीयमानं प्रकृतिप्रत्ययादि तत् सर्वं पदम् ॥ **एकदेशविकारे हीति** । यद्यपि सर्वविकारेऽप्यनित्यत्वं, यथा–पिठरस्थस्य पयसः पाकादिषु, तथापि विकाराभावप्रतिपादनपरमेतत् । बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियत इत्यर्थः ॥ **यद्येवं दाशब्दस्य** दाप्शब्द आदेशः क्रियत इति दाशब्दस्यानर्थक्यप्रसङ्गः । नैष दोषः । नित्यतासमर्थनायादेशपक्ष आश्रितः । प्रक्रियायां तु कल्पितायामागमागमिभाव एव । अन्यथा–आगमादेशयोर्भेदेन व्यवहारो न स्यात् ॥

( उद्द्योतः ) ( भाष्ये ) **आदेशास्तर्हीम इति** । इमे[3]– आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि **आदेशाः**– तत्सदृशा भविष्यन्तीत्यर्थः ॥ **आद्यन्तावित्याद्येकवाक्यतया** आर्धधातुकस्याद्यावयव इडित्यर्थे वृत्ते नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्युद्धौ प्रसक्तायामिकारादिः साधुरिति बोधः ॥ तेनात्रापि बुद्धिविपरिणाममात्रस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः ॥ **यदागमा** इति न्यायस्य चात्रापि पक्षे सत्त्वात्प्रणिदापयतीत्यादौ न दोषः ॥ ये[4] त्वत्र पक्षे आगमत्वं नास्त्येवेति वदन्ति, ते मान्याः । **अनागमकाना**मित्यादिव्यवहारासङ्गतेः । निरवयवकबुद्धिनिमज्जनसावयवकबुद्ध्युन्मज्जनेनागमव्यवहारस्यापि निर्बाधत्वात् । तत्कथमिति प्रश्ने तुल्यन्यायत्वादाह—**सर्वे सर्वपदेति** । यथा[5] **एरुरि**त्यादौ अवयवयोः श्रौतस्थान्यादेशभावेऽपि नित्यत्वानुपपत्तिमूलकः समुदाययोरपि स कल्प्यते, **एवं**–अवयवत्वेन विधानेऽपि अर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवसावयवबुद्ध्योर्विपरिणाममात्रेणादेशत्वव्यवहारो गौणो नित्यत्वरक्षणाय कल्प्यत इति । यथा[6] च तत्र कल्प्यमानस्थान्यादेशभावेन श्रौतावयवस्थान्यादेशभावस्य न त्यागः, अत **एवाचः परस्मिन्नि**त्यादीनामुक्तिसम्भवः । तथाऽत्रापि श्रौतावयवावयविभावस्य न त्याग इति **यदागमा** इत्येतत्प्रवृत्तिरव्याहतैवेति ईदृशस्थान्यादेशभावे स्थानिवत्त्वस्य न प्रवृत्तिः, **स्थानिवदि**तिश्रुतेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावके **एरुरि**त्यादावेव तत्प्रवृत्तेः । न त्वत्र केवलानुमानिके । अत एव **लावस्थायामडि**ति पक्षेऽडादिविशिष्टस्य 'अपिबत्' इत्यादौ न पिबाद्यादेशा इति दिक् । तदेतदाह—**इड्भवतीत्यनेनद्वारेणेति**[7] ॥ **आगमा अपीत्यर्थ** इत्यस्य[8] तथेत्यादिः । अत एवाग्रे वक्ष्यति—'बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियते' इति ॥ एतेन 'आगमा अपि' इत्येवं **सर्व**पदव्याख्यायां **'एकदेशविकारे हि'** इति वाक्यशेषविरोधः । आदेशत्वोपपादिकाया विकारव्यापकीभूताभावप्रतियोगित्वरूपनित्यत्वानुपपत्तेः सकलपक्षावृत्तित्वादित्यपास्तम् ॥ **पद्यमानमिति** । कार्यवत्तया प्रतीयमानं प्रकृत्यादीत्यर्थः । **सर्वपदे**त्यत्र घञर्थे कः । सर्वशब्दश्चात्रावयवकात्स्न्यर्थवाची[9] ॥ **यद्येवमिति** । एवं चैतदवयवस्यानर्थक्यान्न संज्ञा । पुकः पूर्वं 'दा' इत्यस्य तु न संज्ञा, कार्यकालपक्षे संज्ञाया णत्वदेशस्थत्वेन पुकृदृष्ट्याऽसिद्धत्वात्[10] । न च पुग्विशिष्टस्य दाग्रहणेन ग्रहणम् । **यदागमा** इत्यस्याभावात् । पूर्वोक्तरीत्या स्थानिवत्त्वाप्रवृत्तेश्चेति भावः ॥ **आदेशपक्ष इति** । बुद्धिविपरिणामपक्ष इत्यर्थः ॥ कल्पितप्रक्रियादशायां तु न कल्पितागमत्वादिव्यवहारत्याग इति **यदागमा** इत्यादेः सत्त्वेनात्रापि पक्षे न दोष इति भावः ॥



१ इह–आदेशस्थले ॥ तत्र–तथा सति ॥ छाया ॥

२ 'भवतीत्येतद्वारेण' इति घ. पाठः ॥

३ वस्तुतस्तत्त्वस्याभावादाह—**इमे इति** ॥ तत्त्वमुपपादयति—**आद्यन्ताविति** ॥ वृत्ते–निष्पन्ने ॥ छाया ॥

४ प्राचां मतं खण्डयति—**ये त्विति** ॥ विपक्षे बाधकमुक्त्वा तत्र साधकमाह—**निरेति** ॥ इदमेव सर्वम् **'अनागमकानाम्'** इत्यनेनोक्तम् ॥ प्रकृतासंबद्धत्वादाह—**तुल्येति** ॥ छाया ॥

५ तदुक्तिसाफल्यायाह—**यथा चेति** ॥ तत्र–अवयवस्थले ॥ तत्र मानमाह—**अत एवेति** ॥ छाया ॥

६ नन्वेवं स्थानिवत्त्वेन सिद्धमत आह—**ईदृशेति** ॥ तत्र बीजमाह—**श्रौतेति** ॥ इदं सफलयति— **अत एवेति** ॥ छाया ॥

७ 'भवतीत्येतद्वारेण' इति घ. ज. पाठः ॥

८ यथाश्रुतासंगतेराह—**आगेति** ॥ **अत एवेति** । अन्यथा तत्रोभयोक्तिरफलेति स्पष्टमेव ॥ छाया ॥

९ **अवयवेति** । न तु पदबहुत्वे इति भावः ॥ छाया ॥

१० 'द्धत्वात् पूर्वमप्रवृत्तेः' इति च. झ. पाठः ॥

( सन्निपातन्यायाधिकरणम् )

( १६८ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥*॥ दीङः प्रतिषेधः स्थाघ्वोरित्त्वे ॥*॥**

( भाष्यम् )

**दीङः प्रतिषेधः स्थाघ्वोरित्त्वे वक्तव्यः । उपादास्तास्य स्वरः शिक्षकस्येति । आत्त्वे[1] कृते "स्थाघ्वोरिच्च" इतीत्त्वं प्राप्नोति ॥**

( प्रदीपः ) दीङ इति । उपादी-स्-त-इति स्थिते 'मीनातिमिनोति-' इत्यात्त्वे कृते दारूपत्वादर्थवत्त्वाच्च घुसंज्ञाप्रसङ्गः ॥

( प्रत्याक्षेपभाष्यम् )

**कुतःपुनरयं दोषो जायते—किं प्रकृतिग्रहणात्, आहोस्विद्रूपग्रहणात् ?**

( उद्योतः ) सन्निपातपरिभाषया दीङ आत्वे दारूपाश्रयघुत्वं न, प्रकृतिग्रहणस्य प्रत्याख्यातत्वान्न तन्निबन्धनमपि—इति गूढाशयः पृच्छति—भाष्ये—**कुतः पुनरिति** ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**रूपग्रहणादित्याह ॥**

( उद्योतः ) आशयमविदुष उत्तरम्—**रूपग्रहणादिति** ॥

( प्रकृतिग्रहणदोषभाष्यम् )

**इह[2] खलु प्रकृतिग्रहणाद्दोषो जायते- उपदिदीषते, "सनि मीमाघुरभलभ" इति ॥**

( प्रदीपः ) **इह खल्विति** । एचो[3] विषये आत्वविधानाद्दीशब्द एव दाप्रकृतिरिति दोषः ॥

( उद्योतः ) **इह खलु प्रकृतिग्रहणादिति** । घुसंज्ञासूत्रे[4] प्रकृतिग्रहणेऽयं दोषो जायतेऽतस्तत्र प्रकृतिग्रहणं दुष्टमिति भावः ॥

( दोषनिराकरणभाष्यम् )

**नैष दोषः । दाप्रकृतिरित्युच्यते । न चेयं दाप्रकृतिः । आकारान्तानामेजन्ताः[5] प्रकृतयः, एजन्तानामीकारान्ताः[6] । न च प्रकृतिप्रकृतिः प्रकृतिग्रहणेन गृह्यते ॥**

( प्रदीपः ) **न चेयमिति** । एच एव स्थाने आत्वविधानादित्यर्थः ॥

( उद्योतः ) अथैकदेशी एनं दोषं परिहर्तुमाह—**न चेयमिति** ॥ तद्व्याचष्टे—**एच एवेति** । **मीनातीत्यस्योपदेशकाले प्रवृत्तिमसौ[7] न जानाति** । एवं च साक्षाद्दाप्रकृतिसंभवे व्यवहितप्रकृतेर्न ग्रहणमिति भावः ॥ अतिफल्गुत्वात्त्वेतन्मतदूषणानभिनिवेशो[8] भाष्यकृत इति द्रष्टव्यम् ॥ यत्त्विदं[9] वार्तिकमतम्, न चैतत्पक्षे[10]ऽवदान इत्यादावादन्तत्वनिबन्धनयुजाद्यसिद्धिः । '**तत्राकारान्तलक्षणप्रत्ययविधिः**' इति वचनेनैव तत्सिद्धेः । भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्वं सिद्धान्तितमित्यन्यदिति ॥ तन्न । तादृश[11]वार्तिकस्यानुपलम्भात् । विपरीतं **मीनातीति** सूत्रे '**उपदेशवचनं[12] कर्तव्यं कघञ्युचसिद्ध्यर्थम्**' इति वार्तिकम् । **तत्रोपदेशे[13] एच इति विरुद्ध**मित्याशङ्क्य **एज्विषय** इति भाष्यकृता व्याख्यातम् । न तु भवदुक्तवार्तिकं तत्प्रत्याख्यानं वा भाष्ये दृश्यते । एवंच प्रकृतिग्रहणं घुसंज्ञायां वार्तिककारोक्तं दुष्टमेव । न तु तदनुरोधेन गुरुभूतवचनान्तर[14]कल्पनाभिनिवेशः कार्यः । न ह्येकदेश्युक्तमतपरिष्कारे गुरुप्रकारेण क्रियमाणे किंचित्फलमित्या**हुः[15]** ॥

( आक्षेपोपसंहारभाष्यम् )

**स[16] तर्हि प्रतिषेधो वक्तव्यः ॥**

---

१ बहुषु मुद्रितपुस्तकेषु 'मीनातिमिनोतीत्यात्वे कृते' इति पाठो दृश्यते । प्रामाणिकेषु तददर्शनान्नात्रावलम्बितः । प्रदीपदर्शनाच्चाध्यवस्यते न तथा भाष्यपाठ इति ॥

२ रूपेत्युक्तिसमर्थनायाह—**इहेत्यादि** ॥ छाया ॥

३ ननु मीनातिमिनोतीतिसूत्रे एच इत्यनुवर्तनाद्गुणे कृते एवात्वं भवतीति दा प्रकृतिर्दीशब्दो नेत्याशङ्कावारणायाह—**एचो विषये इति**। तत्सूत्रे भाष्ये 'यद्येचो नोपदेशे—अथोपदेशे नैचः' इत्युक्त्वा 'ते वयं विषयं विज्ञास्यामः—एज्विषय इति' इत्युक्तम् ॥

४ **घुसंज्ञेति** । एतेनासंबद्धत्वं निरस्तम् ॥ छाया ॥

५ मीनातिमिनोतीति सूत्रे 'एज्विषयमात्त्वं' इति स्वीकृत्य 'आकारान्तानामेजन्ताः' इत्याद्ययुक्तमेव । इदञ्च वार्तिकाभिप्रायेण भाष्यकृता समाधीयते । वस्तुतस्तु प्रकृतिग्रहणस्य प्रत्याख्यानान्नैतत्समाधानमवशिष्यते । अत उक्तमुद्द्योते—**अतिफल्गुत्वादिति** ॥

६ 'एजन्तानामपीकारान्ताः । न च प्रकृतेः प्रकृतिः' इति मुद्रितपाठः । प्रामाणिकेषु न तथेति नादृतः ॥

७ **असौ**—वाक्यकृत् ॥ छाया ॥ 'दीङः प्रतिषेधः स्थाघ्वोरित्त्वे' इतिप्रतिषेधमपेक्षमाणो वार्तिककारो मीनात्यादीनामुपदेशे आत्वं भवतीति न जानातीति भावः ॥

८ नन्वस्यासिद्धान्तत्वात्कथमिदमत आह—**अतिफेति** ॥ वक्ष्यमाणहेतोः ॥ छाया ॥

९ नारायणकौस्तुभकृदाद्युक्तिं खण्डयति—**यत्त्विति** । **तत्रेति** वचनान्तर्गतम् ॥ छाया ॥

१० **एतत्पक्ष इति** । 'यत्तु' इत्यादिशङ्काकर्तुरयमाशयः—मीनातिमिनोतीति सूत्रमेज्विषये प्रवर्तत इति वार्तिककारो **न** जानाति । तन्मते मीनात्यादीनामेच आत्वमित्येवार्थः । तदनुसारेणैव 'आकारान्तानामेजन्ताः' इत्यादि भाष्योक्तं समाधानमपि । तथाच 'अवदानं' इत्यत्राकारान्तत्वाभावात् 'आतो युच्' इत्यस्याप्राप्तिः खल्वेव स्यात् । तत्साधनार्थं 'तत्राकारान्त-' इति वचनमाश्रयणीयमिति । तदेतत्सर्वं तादृशवचनादर्शनादयुक्तमिति समाधत्ते—**तन्नेति** ॥

११ **तादृशेति** । तत्राकारान्तेतीत्यर्थः ॥ नन्वत्र विवादोऽत आह—**विपेति** । विपरीतं वार्तिकं दृश्यत इत्यर्थः ॥ छाया ॥

१२ '**उपदेशवचनं प्रत्ययविध्यर्थम्**' इति वार्तिकस्थप्रत्ययपदव्याख्याने '**णघञ्युज्विधयस्तर्हि प्रयोजयन्ति**' इति भाष्यफलितम्—'**णघञ्युचसिद्ध्यर्थम्**' इति ॥ दाधिमथाः ॥

१३ भाष्यमपि तथा नेत्याह—**तत्रोपेति** ॥ छाया ॥

१४ **वचनान्तरेति** । तत्राकारान्तेतीत्यर्थः ॥ छाया ॥

१५ **आहुरिति** । भाष्यतत्त्वविदः ॥ छाया ॥

१६ प्रकृतिग्रहणात्प्राप्तदोषस्य कथञ्चिन्निवारणेऽपि रूपग्रहणादुपादास्तेत्यत्र प्राप्तदोषप्रतिबन्धार्थं दीङःप्रतिषेध इति वक्तव्यमिति गौरवं तटस्थेनोपस्थाप्यते ॥

( समाधानभाष्यम् )

**न वक्तव्यः ॥**

( आक्षेपभाष्यम् )

**घुसंज्ञा कस्मान्न भवति ?**

( सिद्धान्तिनः समाधानभाष्यम् )

**"सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इत्येवं न भविष्यति ॥**

(प्रदीपः) **सन्निपातेति** । अकित्त्वसन्निपातेनात्वं क्रियते । यदि चात्र घुसंज्ञा स्यात् 'स्थाघ्वोरिच' इति कित्त्वं स्यादित्यकित्त्वस्य व्याघातः स्यादिति घुसंज्ञां प्रति नैवाकार आत्मानं दर्शयतीति घुसंज्ञा न प्रवर्तते ॥ अत्र **केचिदाहुः**–दीङस्तृजादावात्वे कृते घुसंज्ञा भवत्येवेति प्रणिदातेति णत्वं भवति । अत एव वार्तिककारेण 'स्थाघ्वोरित्त्वे' इति विषयविशेषो निर्दिष्टः ॥ अन्ये **त्वाहुः**–निर्देश एवैजन्तानामनुकरणानामात्त्वे कृते दाण्दाञ्धाञां चैकशेषे द्वन्द्वे च 'दाधा' इति निर्देशाद्दीङो नास्ति प्राप्तिः । न हि तदनुकरणस्यात्त्वमस्ति, अगुणविषयत्वात् ॥

( उद्द्योतः ) **अकित्वेति** । एचो विषयस्यान्यथाऽसंभवादिति भावः ॥ **कित्त्वमिति** । तदभावे[3] संनियोगशिष्टत्वादित्वमपि नेति कार्याभावाद् घुत्वस्याप्रवृत्तिरिति भावः ॥ **प्रणिदातेति**[4] । ननु 'प्रणिदीयते' इत्यत्र नित्यणत्वप्रसङ्गः, णत्वविधौ प्रकृतिग्रहणात्–इति चेन्न, इष्टापत्तेः ॥ **अन्ये त्वाहुरिति** । अत्रारुचिबीजं तु–वार्तिकभाष्य[5]विरोधाद् न तथा सूत्रतात्पर्यमिति ॥ **अगुणेति** । गुणनिमित्तप्रत्ययप्रसङ्गाभावादित्यर्थः ॥

( इति सन्निपातन्यायाधिकरणम् )

( नानुबन्धकृतमनेजन्तत्वन्यायाधिकरणम् )

( १६९ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् ॥ * ॥

( भाष्यम् )

**दाप्प्रतिषेधे[6] दैपि प्रतिषेधो न प्राप्नोति—अवदातं मुखम् ।**

**ननु चाऽऽत्त्वे कृते भविष्यति ।**

**तद्यात्त्वं न प्राप्नोति ॥**

**किं कारणम् ?**

**अनेजन्तत्वात् ॥**

( प्रदीपः ) **दाप्प्रतिषेध इति** । 'दाप् लवने' इत्यस्यैव निषेधः स्यादित्यर्थः ॥ **अवदातमिति** । तत्त्वमत्र प्राप्नोति ॥

( उद्द्योतः ) **इत्यस्यैवेति** । नँ तु दैप इत्यर्थः । तस्य पकारे श्रूयमाणे आत्वायोगादिति भावः ॥ ननु पकारे लुप्तेऽपि कथमात्वम् ? उपदेशकाले एजन्तत्वाभावात्, **नानुबन्धकृत**मित्याद्याश्रयणे तु प्रकृतेऽपि न दोष इति चेन्न । उपदेश इति षष्ठ्यर्थे सप्तम्याः सत्त्वेनोपदिश्यमानस्यैजन्तस्येत्यर्थेन लुप्ते आत्त्वप्रवृत्तेः । सति तु तस्मिन् नात्त्वम्, एजन्तत्वाभावात् यस्मात्परो नास्ति तत्रैवान्तशब्दप्रवृत्तेरिति दिक् ॥ **तत्त्वमिति । अच उपसर्गात्त** इत्यनेनेत्यर्थः ॥

( १७० समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धमनुबन्धस्याऽनेकान्तत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ।**

**कथम् ?**

**अनुबन्धस्यानेकान्तत्वात् । अनेकान्ता ह्यनुबन्धाः ॥**

( उद्द्योतः ) भाष्ये—**अनेकान्ता इति** । एवं च पकारसत्त्वेऽपि एजन्तत्वानपायादात्त्वप्रवृत्तिरिति भावः ॥

( समाधानान्तरभाष्यवार्तिकम् ॥ )

## *पित्प्रतिषेधाद्वा ।*

( भाष्यम् )

**अथवा "दाधा घ्वपित्" इति वक्ष्यामि । तच्चाऽवश्यं वक्तव्यम् । अदाविति ह्युच्यमाने इहापि प्रसज्येत–प्रणिदापयतीति ॥**

( आवश्यकतानिराकरणभाष्यम् )

**शक्यं[9] तावदनेनादाविति ब्रुवता बान्तस्य प्रतिषेधो विज्ञातुम् ॥**

( प्रदीपः ) **शक्यं तावदिति** । दाप्दैपौ धातुषु बान्तौ पठितव्यौ[10] ॥

---

१ **स्यादिति** । तर्हीति शेषः ॥ छाया ॥

२ **कृते इति** । तेषामिति शेषः ॥ छाया ॥

३ **तदभावे**–कित्त्वाभावे ॥ छाया ॥

४ च. झ. पुस्तकयोः 'प्रणिदातेतीति' इति प्रतीकपाठः ॥

५ क्रमस्य विवक्षितत्वादाह—**वार्तिकेति ॥ न तथेति** । एतेन–एजन्तानामनुकरणेऽप्यात्वासंभवाद्दोदेङादेरिव दीङोऽपि कृतात्वस्य ग्रहणसंभवेन तस्यापि घुत्वसंभवाच्चायुक्तम्—**अन्ये त्विती**त्यपास्तम् ॥ **गुणेति** । तत्पुरुषः ॥ छाया ॥ दीङः प्रतिषेधः स्थाघ्वोरित्त्वे–इति वार्तिकतद्भाष्येत्यर्थः । ( र. ना. )

६ **दाप्प्रतिषेध इति** । तथानिषेधे स्वीक्रियमाणे सतीत्यर्थः । न्यासान्तरे तु न दोष इत्यनुपदमेव स्फुटीभविष्यति ॥ छाया ॥

७ एवव्यवच्छेद्यं भाष्योक्तमेवाह—**न त्विति** ॥ छाया ॥

८ **इतीति** । इति सप्तम्याः षष्ठ्यर्थे सत्त्वेनेत्यर्थः ॥ छाया ॥

९ **शक्यमिति** । अयमपि प्रयोगः प्राग्वद्बोध्यः ॥ छाया ॥

१० भाष्ये—**बान्तस्येति** जातावेकवचनमित्याह—**दाप्दैपाविति** ॥ छाया ॥

( उद्द्योतः ) तच्चावश्यमित्यादि विघटयितुं[1] भाष्ये—**शक्यं तावदिति** । लक्षणप्रतिपदोक्तपरिभाषया तु पुगन्तेऽदाबिति निषेधो न शक्यो वारयितुं, गामादाग्रहणेऽविशेषात् । दाबित्यपि पकारोपलक्षितदाग्रहणमेवेति भावः । वान्तपक्षेऽपि चर्त्वेन पस्य सिद्धत्वान्नास्ति सूत्रभेदः ॥

( आक्षेपभाष्यम् )

**सूत्रं तर्हि भिद्यते ॥**

( उद्द्योतः ) सूत्रं[2] तर्हीति । 'अपित्' इति न्यास इत्यर्थः ॥

( सिद्धान्तिभाष्यम् )

**यथान्यासमेवास्तु ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्–"*दाप्प्रतिषेधे न दैपि*" इति ॥**

( परिहारस्मारणभाष्यम् )

**परिहृतमेतत्–"*सिद्धमनुबन्धस्यानेकान्तत्वात्*" इति ॥**

( आक्षेपभाष्यम् )

**अथैकान्तेषु दोष एव ॥**

( समाधानभाष्यम् )

**एकान्तेषु[3] च न दोषः । आत्त्वे कृते भविष्यति ॥**

( समाधानानुपपत्तिभाष्यम् )

**ननु चोक्तम्—'तद्यात्वं न प्राप्नोति, किं कारणम् ? अनेजन्तत्वात्' इति ॥**

( समाधानोपपत्तिभाष्यम् )

**पकारलोपे कृते भविष्यति ॥**

( आक्षेपभाष्यम् )

**न ह्ययं तदा दाप् भवति ॥**

( उद्द्योतः ) शङ्कते—**न ह्ययमिति** ॥

( समाधानभाष्यम् )

**भूतपूर्वगत्या भविष्यति ॥**

( उद्द्योतः ) उत्तरयति—**भूतपूर्वेति** । दात्वं श्रुत्या, पकारवैशिष्ट्यं तु अनयेति भावः ॥

( समाधानसाधकभाष्यम् )

**एतच्चात्र युक्तम्—यत्सर्वेष्वेव सानुबन्धकग्रहणेषु भूतपूर्वगतिर्विज्ञायते । अनैमित्तिको ह्यनुबन्धलोपस्तावत्येव भवति ॥**

( प्रदीपः ) **तावत्येवेति** । इत्संज्ञायां सत्यामेव । प्रयोगे दाशब्द एवायं, पित्कार्यं तु लभत इत्यर्थः ॥

( उद्द्योतः ) **इत्संज्ञायामिति** । उपदेशोत्तरकालं जाताया-मेवेत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**अथवा—आचार्यप्रवृत्तिर्ज्ञापयति–'नानुबन्धकृतमनेजन्तत्वम्' इति । यदयम्–"उदीचां माङो व्यतीहारे" इति मेङः सानुबन्धकस्याऽऽत्त्वभूतस्य ग्रहणं करोति ॥**

( प्रदीपः ) **अथवेति** । अनुबन्धानामेकान्तत्वपक्षे उपदेश एजन्तानामात्त्वमुच्यमानं दैपो न प्राप्नोतीति ज्ञापकोपन्यासः ॥ **माङ इति** । मेङो ग्रहणं न माङः, मेङो व्यतिहारेण नित्ययोगात् । माङ्स्तु विवक्षावशात् 'व्यतिमिमते' इति कादाचित्कत्वात् व्यतिहारयोगस्य । प्रणिदानं[4] व्यतिहार इत्येकोऽर्थः । **'उदीचां मेङः'** इति तु न कृतम् । एवं हि **'नानुबन्धकृतमनेजन्तत्वम्'** इति न ज्ञापितं स्यात् ॥

( उद्द्योतः ) **मेङ इति** । अन्तरङ्गत्वाद्व्यतीहारनित्यसंबद्ध[5] एव गृह्यते; न तु पदान्तरसन्निधानेन बहिरङ्गव्यतीहारवृत्तिरिति भावः ॥ केचित्तु[6] माङोऽनभिधानात्क्त्वाप्रत्ययानुत्पत्तिरिति न तस्य ग्रहणमित्याहुः ॥ **उदीचां मेङ इति** । 'उदीचां मः'[7] इत्यस्याप्युपलक्षणमिदम् । न **चानुबन्धसत्त्वे 'मे'** इत्यस्य धातुत्वाभावात्कथमात्त्वम्, अनुबन्धलोपे एव धातुत्वमित्यर्थस्य **'न धातुलोप'** सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति **वाच्यम्** । आत्त्वविधायके धातोरित्यस्यासंबन्धात् । गवादिशब्दानामुपदेशाभावान्नात्त्वम्[8] । इरेप्रभृतीनामुपदेशेऽपि तेषामशित्परत्वाभावान्नात्त्वम् । प्रसज्यप्रतिषेधेऽपि प्रत्यासत्त्या शित्प्रत्ययपरत्वयोग्यानामेजन्तानामेव ग्रहणान्न दोष इति दिक् ॥

( समाधानान्तरभाष्यम् )

**अथवा दाबेवायम् । न दैबस्ति ।**
**कथम्—'अवदायति' इति ?**
**श्यन्विकरणो भविष्यति ॥ १९ ॥**

( प्रदीपः ) **अथवेति** । दिवादिषु 'दाप् शोधने' इति पठिष्यत इत्यर्थः ॥ १९ ॥

( उद्द्योतः ) **दिवादिष्विति** । ननु ताच्छीलिके चानशि दायमान इत्यत्र स्वरभेदः–श्यनि धातोरुदात्तत्वं, शपि चानशो-

---

१ **घटयितुमिति** । आहेति शेषः ॥ ननु तत्राविशेषेऽप्यत्र दाबित्युक्तेर्न दाग्रहणमत आह—**दाबित्यपीति** ॥ प्रयोगे तस्य काप्यश्रवणादिति भावः ॥ वक्ष्यमाणो न्यासान्तरे दोषो नात्र पक्षे इत्याह—**वान्तेति** ॥ **सिद्धत्वात्**–निष्पन्नत्वात् ॥ छाया ॥

२ अस्य पाठः च. झ. पुस्तकयोर्न ॥

३ 'एकान्तेष्वपि न दोषः' इति मुद्रितपाठः ॥

४ ननु सूत्रे **'व्यतिहारे'** इत्युक्तावपि **'प्रणिदाने'** इति ( धातुपाठे ) अत्रोक्तमिति कथं तस्यैव ग्रहणमत आह—**प्रणीति** । प्रकृत इति भावः ॥ छाया ॥

५ कैयटस्य सहेतुकं तात्पर्यमाह—**अन्तरङ्गत्वादिति** । प्रथमोपस्थितत्वादित्यर्थः ॥ **बहिरिति** । बहुव्रीहिः ॥ छाया ॥

६ **केचिदिति** । नारायणकौस्तुभकृदादय इत्यर्थः ॥ छाया ॥

७ ( उदीचां मेङ इति कैयटन्यासे ) अत्रालाघवादाह—**उदीचां म इतीति** ॥ छाया ॥

८ तत्फलानामन्यथोपपत्तिमाह—**गवादीति** ॥ **नात्वमिति** । पर्युदास इति भावः ॥ **शिदिति** बहुव्रीहिः । अत एव **तिष्ठतु तावत्सान्यासिकमि**त्युक्तं भाष्ये । भाष्यान्तरं त्वेकदेश्युक्तिः । तदाह—**दिगिति** ॥ छाया ॥

ऽन्तोदात्तत्वमिति चेन्न । सतिशिष्टादपि विकरणस्वरात् सार्वधातुकस्वरस्य बलीयस्त्वोक्तेरभयथाऽप्यन्तोदात्तत्वानपायादिति दिक् ॥ १९ ॥

( २० अतिदेशसूत्रम् ॥ १ । १ । ५ आ. ९ ॥ )

## आद्यन्तवदेकस्मिन् ॥ १ । १ । २१ ॥

( प्रदीपः ) **आद्यन्तवदेक०** ॥२१॥ एकशब्दोऽसहायवाची, न संख्यावाची । बहुष्वपि व्यवस्थितस्यैकत्वसंख्याऽस्तीति किं 'एकस्मिन्' इत्यनेन कृतं स्यात् । 'एकस्मिन्' इत्युपमेये सप्तमीनिर्देशात् 'आद्यन्तवत्' इत्युपमानात् सप्तम्यन्ताद्वतिर्विज्ञायते । यथा—मथुरावत् पाटलिपुत्रे प्राकार इति । द्वयोर्ह्युपमानोपमेययोराधाराधेयसंबन्धप्रतिपादनाय वाक्यं प्रयुज्यते । यदि च तयोर्भिन्नविभक्तिकत्वं स्यात्, उपमानोपमेयभाव एव न गम्येत ॥ सर्वातिदेशानां कार्यातिदेशस्य प्राधान्यात्तस्यैवेहाश्रयणम् ॥

( उद्योतः ) आद्यन्तव० ॥२१॥ **बहुष्वपीति** । यद्यप्युत्तरा सङ्ख्या पूर्वसङ्ख्यावाधिका, तथापीतरेषां बुद्धिविषयत्वाभावे बहुमध्यस्थेऽप्येकत्वाङ्गीकारान्न दोषः । यथा शते पञ्चाशदितीति भावः ॥ **किमेकस्मिन्नित्यनेनेति** । तद्धि सभासंनयने भव इत्यर्थे भाकारस्यादित्वे तस्य वृद्धत्वेन प्राप्तछाभावार्थं दरिद्रातेरिवर्णान्तलक्षणाचोऽभावार्थं च । अत्र च स्वरे विशेषः ॥ उपमेये सप्तमीसत्त्वे सप्तम्यन्ताद्वतौ मानमाह—**द्वयोरिति** ॥ **उपमानोपमेययोरिति** । प्राकारपदवाच्येनेति शेषः ॥ **आधाराधेयसंबन्धेति** । आधारत्वाधेयत्वरूपसंबन्धप्रतिपादनायेत्यर्थः ॥ **न गम्येतेति** । उपमानप्रकारकोपमेयविशेष्यकबोधे समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः ॥ **सर्वातिदेशानामिति** । रूप–निमित्त–तादात्म्य–शास्त्र–व्यपदेश–कार्यातिदेशानां मध्ये इत्यर्थः ॥ **प्राधान्यादिति** । सर्वेषां कार्यार्थत्वादिति भावः ॥

( सूत्रप्रयोजनाधिकरणम् )

( प्रयोजनाक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ?**

( प्रदीपः ) **किमर्थमिति** । व्यपदेशिवद्भावेनैव सिद्धत्वान्न कर्तव्यमित्यर्थः ॥

( १७१ प्रयोजनवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् ॥ * ॥

( भाष्यम् )

**सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स आदिः–इत्युच्यते । सत्यन्यस्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्तः–इत्युच्यते । सत्यन्यस्मिन्नाद्यन्तवद्भावादेतस्मात् कारणात् एकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिध्यन्ति, इष्यते च स्युरिति । तान्यन्तरेण यत्नं न सिध्यन्ति–इति एकस्मिन्नाद्यन्तवद्वचनम् । एवमर्थमिदमुच्यते ॥**

---

१ 'चित् प्रत्ययस्वरस्य' इत्येवोचितम् ॥ दाधिमथाः ॥ साहसमेतत् । आत्ममाने खश्च ( ३.२.८३ ) इति सूत्रभाष्ये 'सति शिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते, यदयं तासेः परस्य' इत्येवोक्तम् ॥

२ **नपायादिति** । स्पष्टं चेदं **आत्ममाने खश्चे**ति सूत्रे भाष्ये ॥ **स्थानिवत्सूत्रस्थकैयटस्तु** प्रामादिक इति तत्रैव वक्ष्यते ॥ तदाह—**दिगिति** ॥ छाया ॥

३ **बहुष्वपि** हीति पाठः ॥ छाया ॥

४ **अइउण्**सूत्रभाष्यरीत्या शङ्कते—**यद्यपीति** ॥ छाया ॥ एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात्—ऋषिसहस्रमेकां कपिलामित्यादिरइउणसूत्रोक्ता रीतिः ॥

५ **अत्र च**–दरिद्रास्थले च ॥ छाया ॥ सभासन्नयने रूपवैलक्षण्यम्, दरिद्रातेरचि घञि वा वैलक्षण्याभावाद्विशेषमाह—**अत्रेति** ॥

६ यथाश्रुतानुपपत्तेराह—**प्राकारेति** ॥ **वाच्येनेतीति** । वाच्येन सहेत्यर्थः ॥ कचित्तथा पाठ एव ॥ छाया ॥

७ यथाश्रुते भावपदं विनाऽनुपपत्तेर्धर्मपरतया योजयति—**आधारत्वेति** ॥ छाया ॥

८ निर्धारणषष्ठीत्याह—**रूपेति** । अभ्यर्हितत्वात्सर्वाधारत्वात् पूर्वनिपातः ॥ छाया ॥ तत्र **रूपातिदेशो** यथा—**तृज्वत्क्रोष्टुः** । **निमित्तातिदेशो** यथा–**पूर्ववत्सन** इति । अत्र सन्नन्तेऽपि प्रकृतिगतमात्मनेपदनिमित्तत्वमतिदिश्यते । **तादात्म्यातिदेशो** यथा **सुबामन्त्रिते पराङ्गवत्स्वरे** इति भिन्नपदयोरभेदातिदेशः । **शास्त्रादेशो**– यथा—**कर्मवत्कर्मणा तुल्य**त्यत्र पाक्षिको वक्ष्यते । **व्यपदेशातिदेशो** यथा—आद्यन्तवदेकस्मिन् ॥ **कार्यातिदेशो** यथा–**गोतो णित्** ॥ दाधिमथाः ॥

९ **सर्वेषामिति** । यत्तु रत्नकृत्–अयं व्यपदेशातिदेशः, एकशब्दः संख्यावाची । आद्यन्तशब्दादर्शआद्यजन्तान्मतुप् । प्रत्यासत्त्या एकस्मिंस्तदाद्यन्त इव व्यपदेशो भवतीत्यर्थः ॥ अत एव सभासंनयनादौ न दोषः । कैयटोक्तं तु न युक्तम् । गार्ग्य इत्यादि भाष्यासंगत्यापत्तेः । **वृद्धिर्यस्येति** सूत्रे आदिग्रहणानर्थक्यापत्तेः । आभ्यामित्यादौ दीर्घव्यवस्थाया असंभवापत्तेः । तत्र कथंचित्संभवेऽपि अस्येत्यादौ स्याद्यभावापत्तेः । तेषां तत्राप्रवर्तमानत्वेन तदकार्यत्वात् । **एकाचो द्वे** इत्यादिवक्ष्यमाणसंग्रहापत्तेः । **वृद्धिर्यस्येति** सूत्रे प्रकृतसूत्रगतैकशब्दप्रयोजनपरग्रन्थविरोधापत्तेश्चेति ॥ तन्न । प्रकृतिप्रत्ययमात्रकार्ये विजातीयसत्त्वेऽपि सजातीयाभावेनासहायत्वस्य सत्त्वेन दोषलेशाभावात् । अत एवादिग्रहणस्य स्वग्रन्थविरोधस्य चाभावात् । औपश्लेषिकाधिकरणसप्तम्याऽस्येत्यादावदोषात् । अत एकस्याप्यसंग्रहाभावात्, प्रधानन्यायविरोधापत्तेः । अच्प्रयुक्तगौरवापत्तेः । कार्याणि कार्यमित्यसकृदुक्तिपरभाष्यविरोधापत्तेश्चेति दिक् ॥ छाया ॥

१० **व्यपदेशीति** । लौकिकेनेत्यर्थः ॥ तथा च भाष्येऽर्थशब्दः प्रयोजनवाची ॥ छाया ॥

( प्रदीपः ) इतरो मुख्ये संभवति गौणे न स्यादित्याह—**सत्यन्यस्मिन्निति**। आद्यन्तौ विद्येते यस्मिन् शास्त्रे तत्—आद्यन्तवत्, तस्य भावात्—प्रवर्तनादित्यर्थः। क्वचित् **'आद्यन्तभावात्'** इति पाठः॥

( उद्द्योतः ) **मुख्ये**—व्यपदेशिनि। **गौणे**—व्यपदेशिसदृशे॥ नन्वाद्यन्तवद्भावादिति न वतिः, सत्यन्यस्मिन्मुख्याद्यन्तत्वात्। नापि मतुप्, आद्यन्तशब्दवच्छास्त्रसद्भावस्य परपूर्वसत्त्वानपेक्षत्वेन सत्यन्यस्मिन्नित्यस्यायोगादत आह—**आद्यन्ताविति**। आद्यन्तशब्दाविल्यर्थः। एवं चाद्यन्तवद्भावादित्यस्याद्यन्तपदवच्छास्त्रप्रवृत्तेरित्यर्थः॥ **क्वचिदिति**। आद्यन्तव्यवहारादिति तदर्थः॥

( वार्तिकावतरणभाष्यम् )

**अस्ति प्रयोजनमेतत्।**
**किं तर्हीति?**

( १७२ न्यासान्तरबोधकं वार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तत्र व्यपदेशिवद्वचनम् ॥ * ॥

( भाष्यम् )

**तत्र व्यपदेशिवद्भावो वक्तव्यः। व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम्॥**

( प्रदीपः ) **तत्र व्यपदेशिवद्वचनमिति**। सर्वकार्यसिद्ध्यर्थं व्यापकं कर्तव्यमित्यर्थः॥ तत्र निमित्तसद्भावान्मुख्यो व्यपदेशो यस्यास्ति स व्यपदेशी। यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्यं प्रतीति व्यपदेशिवद्भवतीत्युच्यते॥

( उद्द्योतः ) **सर्वकार्येति**। आद्यन्तापदिष्टाद्यन्तानपदिष्टसर्वकार्यसिद्ध्यर्थं गुर्वपि **व्यपदेशिवदिति आद्यन्तवदित्यस्य** स्थाने कार्यमिति भावः॥ **स तेनेति**। **तेन तुल्यमिति** तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्यम्॥

( न्यासप्रयोजनभाष्यम् )

**किं प्रयोजनम्?**

( न्यासप्रयोजनभाष्यवार्तिकम् ॥ )

## ॥ * ॥ एकाचो द्वे प्रथमार्थम् ॥ * ॥

( भाष्यम् )

**वक्ष्यति-'*एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशः*'-इति। तस्मिन् क्रियमाणे इहैव स्यात्—पपाच-पपाठ। इयाय-आर-इत्यत्र न स्यात्।**

**व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति॥**

( उद्द्योतः ) भाष्ये—**तस्मिन्क्रियमाण इति**। तस्मिन्नाश्रीयमाण इत्यर्थः॥ **पपाचेति**॥ नन्वत्र धातुरेव प्रथम एकाच्, न तु धातोः प्रथम एकाजिति कथमत्र व्यपदेशिवद्भावं विना प्राप्तिरिति चेन्न। आदित्वपर्यायप्रथमत्वस्य सूत्रेणैवातिदेशसिद्ध्या तत्र व्यपदेशिवद्भावारम्भस्य मुख्यं प्रयोजनमित्याशयात्। इयायेत्यादौ तु **द्विर्वचनेऽचीति** रूपस्थानिवत्त्वादज्व्यतिरिक्ताभावेन नैकाच्त्वमिति बोध्यम्॥

( प्रयोजनभाष्यवार्तिकम् )

## *षत्वे चाऽऽदेशसंप्रत्ययार्थम् ॥*

( भाष्यम् )

**वक्ष्यति-आदेशप्रत्यययोरित्यवयवषष्ठ्येषा-इति। एतस्मिन् क्रियमाणे इहैव स्यात्-करिष्यति-हरिष्यति-इति। इह न स्यात्-'इन्द्रो मा वक्षत् ( ऋ० १।१३५।४ )' 'स देवान्यक्षत् ( ऋ० ३।४।३ )'**

**व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति॥**

( प्रदीपः ) **वक्षदिति**। वच् लेट् तिप्, **'इतश्च लोपः'** इतीकारलोपः, **'लेटोडाटौ'** इत्यडागमः, सिप्, कुत्वम्। अत्र सकारमात्रं प्रत्ययो न तु प्रत्ययस्यावयवः सकार इति षत्वं न स्यात्॥

( उद्द्योतः ) भाष्ये—**अवयवषष्ठ्येषेति**। प्रत्ययांशे-इति

---

१ **मुख्य इति**। तथा च शास्त्रीयेण गौणमुख्यन्यायेन लौकिकस्य तस्य बाध इति भावः॥ छाया॥

२ प्रथमपाठस्य व्याख्यानाननुगुणत्वादेवाह—**क्वचिदिति**॥ छाया॥

३ 'आद्यन्तवद्भावात्' इति वार्तिकांशे वच्छब्दानुपपत्तिं प्रकटयति—**नन्वाद्यन्तवदिति**। तेन तुल्यमिति वतिर्न, सत्यन्यस्मिन्मुख्याद्यन्ततुल्यत्वाभावात्। **नापि मतुबित्यस्य**-तदस्ति अस्येत्यर्थे मतुब्नेत्याशयः। तदस्ति यस्मिन्नित्यर्थे मतुबन्नेति भावः॥

४ सौत्रक्रमेणाह—**परेति**॥ छाया॥

५ क्वाचित्कपाठार्थमाह—**आद्यन्तेति**। तथा च स एव युक्त इति तात्पर्यम्॥ छाया॥

६ **एतत्**—वक्ष्यमाणं प्रयोजनमस्तीत्यर्थः। प्रयोजनविशेषजिज्ञासायामाह—**किं तर्हीतीति**। अत्रेतिशब्दः प्रकाशार्थः। तर्हि किन्तत्—इत्यन्वयः॥

७ **तत्र**-प्रयोजने सति॥ छाया॥ **तत्र**—आद्यन्तवदित्यत्र॥

८ गौणमुख्यन्यायबाधनार्थं व्यपदेशिवद्वचनं कर्तव्यमिति भाष्याशय इत्यभिप्रेत्याह—**सर्वेति**॥ **तत्र**-वचने॥ छाया॥

९ **गुर्वीति**। गौरवं मात्राकृतम्, अवान्तरपदत्वेन प्रदकृतमपि॥ छाया॥

१० ननु 'तेन तुल्यम्' इति वतिः क्रियासाम्ये भवति, अत्र व्यपदेशिनि यथाकार्यं भवति तथाऽविद्यमानव्यपदेशेऽपि भवतीत्यर्थात्तृतीयान्ताद्वतिरनुपपन्नोऽत आह—**तेन तुल्यमितीति**। एवञ्च मथुरावत्स्रुघ्ने प्राकार इत्यादिष्विव व्यपदेशिनि यथा कार्यं तथाऽविद्यमानव्यपदेशेऽपीति भावः॥

११ **एकाच इति**। विभक्तिं विहाय समुदायानुकरणम्॥ छाया॥ 'एकाचोद्वे प्रथमार्थं' 'षत्वे चादेशसंप्रत्ययार्थम्' एतद्द्वयं वार्तिकत्वेन मुद्रितपुस्तकेषु निर्दिश्यते। वस्तुतो भाष्यमेवैतत्॥

भावः ॥ **एतस्मिन्क्रियमाण इति** । अवयवषष्ठीत्वे आश्रीयमाणे—इत्यर्थः ॥

( आक्षेपोपसंहारभाष्यम् )

**स तर्हि व्यपदेशिवद्भावो वक्तव्यः ?**

( सिद्धान्तिसमाधानभाष्यम् )

**न वक्तव्यः ॥**

( समाधाने भाष्यवार्तिकम् )

***अवचनाल्लोकविज्ञानात् सिद्धम् ॥***

( भाष्यम् )

**अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत् ॥**

( प्रदीपः ) **अवचनादिति** । अवचनं—वचनरहितं यल्लोकविज्ञानं तस्मात्—लोकव्यवहारादित्यर्थः । इह तावत् 'इयाय' इति य इण्धातुः प्रयोगभेदाद्बहुरूपः—एति-इतः-यन्ति-अयनम्-आयकः-अगात्-गमयतीति तस्यायमेकोऽजवयव इव लक्ष्यते । अथवा—**अर्थवतो धातोरयं वर्णरूप एकोऽजिति अर्थस्य** त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति । एवं शिलापुत्रकस्य शरीरमित्यनेकक्रियाविषयस्यावस्थातुरिदमेकावस्थायुक्तं शरीरमित्यस्ति व्यपदेशः । एवं हि सिप्प्रत्यय इट्सहितोऽपि दृष्टः—'जोषिषत्' इत्यादौ, केवलोऽपि—इति तस्यायं सकार इति व्यपदिश्यते । लोकनिरूढश्चायं व्यवहार इति लोकवच्छास्त्रेऽपि व्यवहारात् **'गौणमुख्य'**न्यायोऽत्र नावतरति ॥

( उद्योतः ) विज्ञानशब्दो व्यवहारवाचीत्याह—**व्यवहारादिति** । तत्फलितव्याख्यानं भाष्ये—**अन्तरेणैवेति** । यथा लोके व्यवहारो वचनं विनैव सिध्यति तथा शास्त्रेऽपि वचनं विना सिध्यतीत्यर्थः ॥ **अगादित्यादि । 'इणो गा लुङि' 'णौ गमिरबोधने'** इत्यादेशौ । **एकोऽच्**—असहायोऽजित्यर्थः ॥ नन्वेकाचोऽवयविनो द्विर्वचनमिति यस्यायमवयवस्तस्य बहुरूपस्य भवितव्यं द्वित्वेनेत्यत आह—**अथवेति** ॥ काल्पनिकभेदेन व्यवहारे दृष्टान्तमाह—**एवमिति** ॥ व्यपदेशः—भेदनिबन्धनसंबन्धव्यवहारः ॥ **शास्त्रेऽपीति** । लोकाप्रसिद्धत्वमेव तत्यागे बीजं, तच्च न प्रकृते-इति भावः ॥

( एकदेशिदृष्टान्तभाष्यम् )

**तद्यथा—लोके 'शालासमुदायो ग्रामः' इत्युच्यते । भवति चैतदेकस्मिन्नपि—'एकशालो ग्रामः' इति ॥**

( दृष्टान्तविघटनभाष्यम् )

**विषम उपन्यासः । ग्रामशब्दोऽयं बह्वर्थः ।**

**अस्त्येव शालासमुदाये वर्तते । तद्यथा—'ग्रामो दग्धः' इति ॥**

**अस्ति वाटपरिक्षेपे वर्तते । तद्यथा—'ग्रामं प्रविष्टः' इति ॥**

**अस्ति मनुष्येषु वर्तते—'ग्रामो गतो ग्राम आगतः' ॥**

**अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा—'ग्रामो लब्धः' इति ॥**

**तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभिसमीक्ष्यैतत्प्रयुज्यते—'एकशालो ग्रामः' इति ॥**

( एकदेशिदृष्टान्तान्तरभाष्यम् )

**यथा तर्हि—'वर्णसमुदायः पदम्' 'पदसमुदाय ऋक्,' 'ऋक्समुदायः सूक्तम्' इत्युच्यते । भवति चैतदेकस्मिन्नपि—'एकवर्णं पदम्' 'एकपदा ऋक्' 'एकर्चं सूक्तम्' इति ॥**

( प्रदीपः ) **पदसमुदाय इति** । पादपर्यायः पदशब्दः । तथा च **'एकपदा ऋक्'** इति पाद एव विवक्षितः । न तु ऋचः कस्याश्चिदप्येकमेव पदं भवति ॥

( उद्योतः ) **पादपर्याय इति । वर्णसमुदायः पदमित्यत्र** तु पदशब्दो यथाश्रुत एव ॥

---

१ **अवचना**दिति बहुव्रीहिणा विज्ञानस्य समानाधिकरणं विशेषणमित्याह—**अवचनमिति** ॥ छाया ॥

२ मुख्यैकाज्व्यपदेशिना सादृश्यमाह—**इहेति** ॥ **इति**-इत्यत्र, य इत्यस्य तस्येत्यत्रान्वयः ॥ छाया ॥

३ **व्यवहारेति** । करणव्युत्पत्त्येति भावः ॥ एवं सति भाष्यविरोधमाह—**तत्फलीति** ॥ छाया ॥

४ अत्र पक्षे दोषमाह—**नन्विति** ॥ **दृष्टान्तमिति** । अनेन **'एवम्'** इत्यस्य यथेत्यर्थः सूचितः ॥ छाया ॥

५ ईदृशो ग्रन्थो हलोनन्तरा इति सूत्रे भाष्ये वर्तते, प्रदीपोद्द्योतयोः स्पष्टमुपपादितश्च तत्रैव । अयं तु विशेषः—अत्र 'अस्ति मनुष्येषु वर्तते ग्रामो गतो ग्राम आगतः' इति, तत्र 'अस्तिमनुष्येषु वर्तते तद्यथा—ग्रामो गतो ग्राम आगत इति' इति च । अत्र 'तद्यथा' इत्यस्यानुपादानादन्ते 'इति' शब्दो न दत्तः । सर्वत्रापि 'इति' शब्दस्य 'इत्यत्र' इत्यर्थः । शाला समुदाये वृत्तिरस्त्येवेत्यन्वयः । एवञ्च अस्तिक्रियाया वर्तनक्रिया कर्त्री । ईदृशश्च प्रयोग इको गुणेति सूत्रभाष्ये—'अस्ति पुनः क्वचिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति' इति दृश्यते । तत्र भवतीत्यस्य 'सत्ता' एवार्थः, पचति भवतीतिवत् प्रयोगः ॥

६ दृष्टान्तान्तरमाह—**यथा तर्हीति** ॥ एवमग्रेपि ॥ छाया ॥

७ **एकपदा** ऋचो यथा—"आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम्" ६।६३।११
"असिक्न्यां यजमानो न होता" ४।१७।१५
"उरौ देवा अनिबाधे स्याम" ५।४२।१७
"सिषक्तु न ऊर्जव्यस्य पुष्टेः" ५।४१।२० इत्यादयः ॥ **एकर्चमिति । 'जातवेदसे'** ऋ॰ सं॰ १ म॰ ९९ सूक्तम्—इति ॥

८ **पादपर्यायः**—तद्वचनः ॥ **इति**-इत्यत्र ॥ तत्र बीजमनुपपत्तिमाह—**न त्विति** ॥ छाया ॥

९ प्रथमं त्यक्त्वाऽग्रे व्याख्याने बीजमाह—**वर्णेति** । अनुपपत्त्यभावात् ॥ छाया ॥

( दृष्टान्तान्तरविघटनभाष्यम् )

**अत्राप्यर्थेन युक्तो व्यपदेशः ।**

**पदं नाम-अर्थः, ऋङ् नाम-अर्थः, सूक्तं नाम-अर्थः ॥**

( प्रदीपः ) **अत्राप्यर्थेनेति** । पदादीनां योऽर्थः सोऽन्य-पदार्थ इत्यर्थः । अभेदोपचाराच्चार्थ एव पदादिभिरभिधीयते ॥

( उद्द्योतः ) **पदादीनामिति** । 'एकवर्णं पदं' इत्यादौ ॥ ननु अर्थस्य पदत्वं कथमत आह—**अभेदेति** । तदुपचारश्च शब्दार्थयोरनादिरिति बोध्यम् ॥ **पदादिभिः**—पदशब्दादिभिः ॥

( सिद्धान्तिनो दृष्टान्तभाष्यम् )

**यथा तर्हि बहुषु पुत्रेष्वेतदुपपन्नं भवति-अयं मे ज्येष्ठः, अयं मे मध्यमः, अयं मे कनीयानिति । भवति चैतदेकस्मिन्नपि-अयमेव मे ज्येष्ठः, अयमेव मे मध्यमः, अयमेव मे कनीयान्-इति ॥**

( प्रदीपः ) **अयमेव मे ज्येष्ठ इति** । प्रथमरूपताऽध्यवसायात् । मध्यमकार्यकरणाच्च **'मध्यमः'** इति व्यपदिश्यते । अन्यो न जनितेति बुद्ध्या **'कनीयान्'** इति व्यपदिश्यते ॥

( उद्द्योतः ) **प्रथमेति** । तस्मात्पूर्वस्याभावादिति भावः ॥ **मध्यमकार्य**—तत्संबन्धजसुखादिकम् ॥

( सिद्धान्तिनो द्वितीयदृष्टान्तभाष्यम् )

**तथा-असूतायामसोष्यमाणायां च भवति—प्रथमगर्भेण हता-इति ॥**

( प्रदीपः ) **असूतायामिति** । बहुकृत्वोऽपि प्रसूता प्रथमपुत्रेण काचिद्धन्यते, तथा याऽपि प्रसोष्यते साऽपि काचित्पूर्वोत्पन्नेन पुत्रेण हन्यत इत्युभयोरुपादानम् । नापि प्रसूता नापि प्रसोष्यते कुक्षिस्थेनैव गर्भेण हता-प्रथमगर्भेण हतेति व्यपदेशः । अपत्यपर्यायो गर्भशब्दः । तस्या एव योग्यताऽध्यवसायेन भाविगर्भापेक्षया 'प्रथमगर्भेण हता' इति व्यपदिश्यते । स्त्र्यन्तरेषु वा बहुपुत्रत्वे सति आद्यगर्भस्य प्रथमव्यपदेशदर्शनात् तथाविधस्य प्रथमगर्भव्यपदेशः ॥

( उद्द्योतः ) **बहुकृत्वोऽपीति** । यथा परशुरामेण रेणुका ॥ **तथा येति** । संप्रति गर्भिणीत्यर्थः । गर्भस्थमादाय तत्रापि प्रथमव्यवहार इत्यर्थः ॥ ननु या सूता सा न गर्भेण हता भवति किं त्वपत्येनेति गर्भेण हतायां तद्व्यतिरेकप्रदर्शनमयुक्तमत आह—**अपत्यपर्याय इति** । तच्चोदरस्थं-बहिर्भूतं वेत्यन्यत् ॥ तत्र प्रथमव्यवहारे बीजमाह—**तस्या एवेति** । **स्त्र्यन्तरेषु**-बहुप्रसववतीषु ॥ **तथाविधस्येति** । अविद्यमानपूर्वगर्भस्येत्यर्थः ॥

( सिद्धान्तिनस्तृतीयदृष्टान्तभाष्यम् )

**तथा-अनेत्यानाजिगमिषुराह-इदं मे प्रथममागमनम्-इति ॥**

( प्रदीपः ) **अनेत्येति** । बहुकृत्वो ह्यागतः पूर्वमागमनं स्मृत्वा प्रथमव्यपदेशं तत्र मुख्यं करोत्येव, आजिगमिषुश्च भावीन्यागमनानि बुद्ध्या व्यवस्थाप्य कुर्यादेव प्रथमव्यवहारम् । यस्तु सकृदेवागतः सोऽपि करोति प्रथमव्यवहारमिति प्रतिपादनार्थं 'अनेत्यानाजिगमिषुः' इत्युपात्तम् । तत्रान्यसंबन्धिषु बहुष्वागमनेष्वाद्यस्य प्रथमव्यवहारदर्शनात् तथाविधत्वात् एकस्मिन्नप्यागमने प्रथमव्यवहारः ॥

( उद्द्योतः ) नन्वागमनं विना 'इदं मे प्रथममागमनं' इति व्यवहारासंभवात् **अनेत्येदं मे प्रथममागमन**मित्यसङ्गतमत आह—**बहुकृत्वइति** । अनेत्येत्यस्येतः पूर्वमिति शेष इति भावः ॥ **तथाविधत्वादिति** । अविद्यमानपूर्वागमनत्वादित्यर्थः ॥

( सूत्रप्रत्याख्याने वार्तिकावतरणभाष्यम् )

**आद्यन्तवद्भावश्च शक्योऽवक्तुम् ॥**

**कथम् ?**

( उद्द्योतः ) परे तु पदऋगादिपदानि अर्थशब्दसमुदायवृत्तीनि, तस्य शब्दमात्ररूपवर्णपादऋगाद्यवयव इत्येव भाष्यार्थः । न तु शुद्धो-

१ एतदपि विघटयति—**अत्राप्येति** ॥ छाया ॥ अपिशब्दोऽर्थेनेति पदोत्तरं योज्यः, अत्रार्थेनापि युक्तो व्यपदेश इत्यर्थः । पदशब्देनार्थोऽप्यङ्गीक्रियत इति 'पदं नामार्थः' इत्यस्यार्थः । **नाम**—अभ्युपगमे, नामप्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने—इति कोशात् ॥

२ एकत्र त्रिविधव्यवहारे बीजान्याह—**प्रथमेत्यादि** ॥

३ प्रथमत्वे बीजमाह—**तस्मादिति** ॥ अनेन न्यायप्रदर्शनमेव कृतम् ॥ छाया ॥

४ एवं पुत्रदृष्टान्ते स्थितेऽपि दृष्टान्तान्तरमाह—**तथेति** ॥ एवमग्रेऽपि ॥ छाया ॥

५ मुख्यव्यवहारं दर्शयति—बहुकृत्वोऽपीत्यादिना-रुपादानमित्यन्तेन ॥

६ व्यपदेशिना तुल्यत्वं प्रथमगर्भेण हतेत्यस्योपपादयति—**तस्या एवेत्यादिना** ॥ ननु योग्यताऽध्यवसायेन भाविगर्भापेक्षया प्रथमत्वं मुख्यव्यवहार एवेत्याशङ्कायां प्रकारान्तरेणोपपादयति—**स्त्र्यन्तरेष्विति** ॥

७ **तत्रापि**—पूर्वं प्रसूय पुनः प्रसोष्यमाणायाः प्रथमापत्येऽपि ॥ अत्र गुरुप्रसादः 'तत्रापि-कुक्षिस्थगर्भेऽपि' इत्येवं विपरीतं व्याख्यातवान् छायानुकरणदक्षः । छायोल्लेखश्च प्रमादादेव रघुनाथेनान्यत्र कृत इत्युभयमप्यसमञ्जसम् ॥

८ **तत्र**—कुक्षिस्थगर्भे ॥ छाया ॥

९ **बहुप्रसवेति** । नीलरूपवदितिवत्प्रयोगः ॥ छाया ॥

१० **तथाऽनेत्य**-इतः पूर्वमनेत्यानाजिगमिषुश्च सकृदागतः प्रथममिदं मे आगमनमित्याहेत्यर्थः । असिन्नागमने प्रथमत्वं व्यपदेशिवद्भावसाध्यम्, तच्च लोके प्रसिद्धमिति लोकव्यवहारात्सिद्धमिति भावः ॥

११ **अनेत्येति** । तथाचेत्यादिः ॥ छाया ॥

१२ **चेन** व्यपदेशिवदित्यस्य समुच्चयः ॥ अग्रे **चेन** तदन्यसमुच्चयः ॥ **आद्यन्तवदिति** । व्यपदेशीत्यस्याप्युपलक्षणम् ॥ छाया ॥

१३ कैयटं दूषयति तदभ्युपेत्य—**परे त्वित्यादिना** ॥ छाया ॥

१४ **तस्य**—एकवर्णं पदमित्यादिघटकपदादिशब्दस्यार्थशब्दसमुदायवृत्तिनः ॥

ऽर्थोऽन्यपदार्थ इति, तथाऽप्रतीतेः । 'एकर्चं सूक्तं पठ' इत्यादिव्यवहारानापत्तेश्च । एवं चार्थवतो धातोरयमेकोऽज् वर्णरूप [१][ इति क्षर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति ] इति कैयटोक्तं चिन्त्यम् । एतद्भाष्यरीत्या तस्य मुख्यव्यवहारत्वेन व्यपदेशिवद्भावाविषयत्वात् । कैयटरीत्या शुद्धार्थस्यान्यपदार्थत्वेऽत्रापि तथैवास्तु, शब्दार्थयोरभेदाच्च शब्देऽपि तत्त्वमिति अत्रापि न व्यपदेशिवद्भावप्रयोजनम् । [१][ किं चैकाजिति बहुव्रीहिणा प्रथमस्येत्युपस्थितावयवस्य विशेषणम् । तस्य चानर्थकत्वमिति अर्थस्योपादानत्यागावत्यसंबद्धौ । एतदेव ध्वनयता पदं नामार्थ इति भाष्ये उक्तम् । धात्ववयवत्वं तु कैयटोक्तरीत्या वक्तुं शक्यम् । अत एव बहुव्रीहिनिर्देशानुपपत्तिरेव व्यपदेशिवदित्याश्रयणे बीजमुक्तम् ॥ ] **'अत्राप्यर्थेन'** इति भाष्यस्य— पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थः ॥ अर्थशब्दोभयवृत्तिपदत्व-ऋक्त्वादीत्याशयः ॥ **पदं नामार्थ** इत्यादेः—अर्थोऽपीत्यर्थः ॥ **यथा तर्हीति** । यथैकस्मिंस्तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारस्तथैकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वस्याप्यारोपेणैकाच्त्वादिव्यवहारोपपत्तिः । द्वितीये तृतीये च दृष्टान्ते [४]प्रथमेत्युपलक्षणं चरमस्यापि । तृतीये कदाचिच्चरममागमनमित्यपि व्यवहारात् । **आद्यन्तवद्भावश्च शक्योऽवक्तुमित्यस्य** प्रकारान्तरेणापीति शेष इत्याहुः ॥ [५][ वस्तुतस्तु ईदृशेषु पातञ्जलोक्तं विकल्पात्मकं वस्तुशून्यमेव ज्ञानमिति आरोपानुपयोग एव । लोकव्यवहारवत्तेनापि शास्त्रीयो व्यवहार इति तत्त्वम् ॥]

( १७३ प्रत्याख्यानसाधकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन् ॥ * ॥

( भाष्यम् )

**अपूर्वलक्षण आदिः, अनुत्तरलक्षणोऽन्तः, एतच्चैकस्मिन्नपि भवति । अपूर्वानुत्तरलक्षणत्वात्— एतस्मात् कारणात् एकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्ति । नार्थ आद्यन्तवद्भावेन ॥**

( प्रदीपः ) इदानीं योगं प्रत्याख्यातुमाह— **अपूर्वेति ॥** यद्यपि बहुष्ववस्थितेषु आद्यन्तशब्दौ प्रयुज्येते, तथाऽप्यपूर्वानुत्तरत्वमात्रमेतयोः प्रवृत्तिनिमित्तम् । तच्चैकस्मिन्नप्यस्तीति नार्थः सूत्रेण ॥

( प्रत्याख्यानासंभवभाष्यम् )

**गोनर्दीयस्त्वाह— सत्यमेतत्, 'सति त्वन्यस्मिन्' इति ॥**

( प्रदीपः ) भाष्यकारस्त्वाह— **सति त्वन्यस्मिन्निति ।** नै ह्यनपेक्षितप्रतियोगिनोराद्यन्तयोः प्रवृत्तिरित्यर्थः । तस्मादेकस्मिन्मुख्य आद्यन्तव्यपदेशो नास्तीति कर्तव्यो योगः ॥ यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्नपि सिध्यति, तथापि गौणत्वात्कार्येण न भवितव्यमिति यस्य भ्रान्तिः स्यात्तं प्रति योगोऽयमारब्धः ॥

( उद्योतः ) **गोनर्दीय**पदं व्याचष्टे— **भाष्यकार इति ॥ अनपेक्षितप्रतियोगिनोः**—अनपेक्षितपरपूर्वयोः, **आद्यन्तयोः**— आद्यन्तरूपार्थयोः, **प्रवृत्तिः**—आद्यन्तशब्दप्रवृत्तिरित्यर्थः ॥ **तथापीति ।** वस्तुतो लोकनिरूढत्वाद् गौणत्वमेवात्र नास्तीत्यर्थः ॥

( सूत्रप्रयोजनाधिकरणम् )

( प्रयोजनजिज्ञासाभाष्यम् )

**कानि पुनरस्य योगस्य प्रयोजनानि ?**

---

१ अस्मिन्नुद्द्योते [ ] एतच्चिन्हितो ग्रन्थो ज-पुस्तके न दृश्यते । प्रक्षिप्त इव प्रतिभाति ॥

२ पूर्वक्रमविवक्षयाऽऽह— **उपादानेति ॥**

३ **अत एव**—धात्ववयवत्वस्य सिद्धत्वादेव । अत्र पक्षे भाष्यासंगतिं परिहरति— **अत्राप्येत्यादिना** ॥ छाया ॥

४ न्यूनतां परिहरति— **प्रथमेत्युपेति** ॥ प्राग्वदाह— **आद्यन्तेति** ॥ एकप्रकारस्योक्तत्वादाह— **प्रकारान्तरेणेति** ॥ छाया ॥

५ वस्तुतः सोपि नेत्याह— **वस्तुत इति** । पतञ्जलिना योगानुशासने समाधिपादे **'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः'** इत्यसूत्रि । तस्य चार्थस्तु शब्दप्रयोगं तज्जन्यज्ञानं चानुपतति तज्जनको बाह्यवस्तुशून्यो वृत्तिविशेषो बाधाबाधकालाविशेषेण सदैव जायमानो विकल्पः— इत्येवं मञ्जूषायामुक्तः ॥ नेदं रजतमिति बाधज्ञानोत्तरमिदं रजतमिति शब्दप्रत्यययोरभावाद् विपर्यये नास्यान्तर्भावः । भवति च चैत्रस्य गौरित्यादौ मुख्यव्यवहारे सर्वज्ञातस्य भेदनियतसंबन्धरूपस्य षष्ठ्यर्थस्य चितेरेव पुरुषत्वेनानुचितत्वेऽपि पुरुषस्य चैतन्यमित्यतो बोधः । भवति च खपुष्पशशशृङ्गादिपदेभ्योऽपि बोधः । अभावस्याधिकरणरूपत्वेनाधाराधेयभावानुपपत्तावपि निष्क्रियः पुरुष इत्यादितो बोधः । तथा गतिनिवृत्तेरभावरूपत्वेऽपि भावरूपत्वस्य तत्रापि पूर्वापरीभावस्य च 'तिष्ठति बाणः, स्थास्यति, स्थितः' इत्यादितो बोधः ॥ दाधिमथाः ॥

६ 'भविष्यतीति । नार्थः' इति मुद्रितपाठः । वस्तुतो वार्तिकछायारूपेऽस्मिन् भाष्ये 'कार्याणि भविष्यन्ति' इत्येतावानेवार्थो वार्तिकस्य, नार्थ आद्यन्तवद्भावेनेति तु भाष्यकृतोपपादितम् । वार्तिके इतिशब्दार्थादर्शनाच्छायाभाष्ये नोचित इतिशब्दः ॥

७ सत्यमित्यादेः— **एतत्** त्वदुक्तं **सत्यम्, तु** परंतु **सत्यन्यस्मिन्नित्यपि** बोध्यम् । तथा च त्वदुक्तं तद्घटकं नतु तावन्मात्रम् । किं तु विशिष्टं प्रवृत्तिनिमित्तमिति भावः । तदाह— **न ह्येति** ॥ छाया ॥

८ भ्रान्तिपदसूचितमाह— **वस्तुत इति** । अनेन सूत्रानावश्यकत्वमेवोक्तम् ॥ छाया ॥

( १७४ प्रयोजनवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ आदिवत्त्वे[1] प्रयोजनं—प्रत्ययञ्निदाद्युदात्तत्वे ॥ * ॥

( भाष्यम् )

**प्रत्ययस्यादिरुदात्तो भवतीति, इहैव स्यात्-कर्तव्यं, तैत्तिरीयः । औपगवः-कापटवः-इत्यत्र न स्यात् ॥**

**"ञ्नित्यादिर्नित्यम्" इति, इहैव स्यात्—अहिचुम्बकायनिः, आग्निवेश्यः । गार्ग्यः-कृतिरित्यत्र न स्यात् ॥**

( प्रदीपः ) **प्रत्ययञ्निदाद्युदात्तत्व इति** । प्रत्ययस्याद्युदात्तत्वं ञ्निति चाद्युदात्तत्वमित्यर्थः ॥ कथं पुनर्भिन्नविभक्त्योर्द्वन्द्वः ? उच्यते[2]—प्रत्ययस्य यदाद्युदात्तत्वं तस्य प्रत्ययोऽपि विषय इति प्रत्ययेऽपि तदुच्यते । यद्वा-ञ्निति यदाद्युदात्तत्वं तत् ञ्नितोऽपि संबन्धि भवतीति नास्ति भिन्नविभक्तित्वम् ॥ **'ऋदोरप्'** इत्याद्युदात्तत्वनिवृत्त्यर्थात्पित्त्वाल्लिङ्गा[3]देकाचोऽपि प्रत्ययस्याद्युदात्तत्वं भविष्यतीति चेत्, अकारविषयमेव लिङ्गं स्यादितीकारोकारयोः प्रत्यययोराद्युदात्तत्वं न स्यात् । विशेषणार्थं वा पित्करणं स्यात् **थाथादि**सूत्रे[4] इत्यज्ञापकं स्यात् ॥

**गार्ग्य इति** । अत्र परत्वात् **'यस्य-'** इति लोपे कृत आदित्वाभावात्प्रकृतेराद्युदात्तत्वं न प्राप्नोति । स्वरविधौ स्थानिवद्भावप्रतिषेधाच्च नास्ति घ्यन्त्वम् । स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वान्नास्ति हल्पेक्षमप्यादित्वम् ॥ **कृतिरिति** । क्तिनो नित्त्वं **'तादौ च निति कृत्यतौ'** इत्येवमर्थं स्यात् । **'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः'** इत्यनाश्रित्यैतदुक्तम् ॥

( उद्द्योतः ) **कथमिति** । भिन्न[5]विभक्त्यन्तयोरसमप्रधानत्वेन साहित्याप्रतीतेरित्यर्थः ॥ **इकारोकारयोरिति** । 'उपाधिः' 'चिकीर्षुः' इत्यादौ ॥ सामान्यापेक्षज्ञापकत्वेऽप्याह—**विशेषणार्थं वेति** ॥ अहिचुम्बकात्प्राचामवृद्धादिति फिन् । अग्निवेशाद्**गर्गादि**यञ् ॥ **स्वरविधाविति** । नन्वस्य स्वरोद्देश्यके विधावित्यर्थो वा- हलः स्वरप्राप्तावित्यर्थो वा[6] । उभयथाऽपि नेह प्राप्तिरिति चेत् । सत्यम्, अत्र सूत्रेऽजन्तरापेक्षमेवादित्वं गृह्यते । अन्त्यस्याच एव तद्यावर्त्यत्वेनोपस्थितत्वादिति भाष्याशयात् । **किं च** स्त्रैणमित्यादावाद्युदात्तत्वं न स्यादिति दोषः । ञित्त्वं तु वृद्ध्यर्थतया सावकाशं बोध्यम् ॥ **क्तिन इति** । अ[7]नेकाज्भ्यस्तु चिरिजिर्यादिभ्योऽनभिधानात् क्तिनभाव इति भावः ॥ ननु तदन्तसप्तमीत्वे गार्ग्यादौ समुदाये मुख्य एवादिः संभवतीति न दोष इत्यत आह—**सौवर्य इति** ॥

( प्रयोजनभाष्यवार्तिकम् ॥ )

## *[8]वलादेरार्धधातुकस्येट् प्रयोजनम् ॥*

( भाष्यम् )

**"आर्धधातुकस्येड्वलादेः" इति, इहैव स्यात्-करिष्यति, हरिष्यति । जोषिषत् ( ऋ० २।३५।१ ) मन्दिषदित्यत्र न स्यात् ॥**

( प्रदीपः ) **जोषिषदिति** । लेट् । **'इट ईटि'** इति च ज्ञापकं सिज्वि[9]षयमेव स्यादिति सिप इण्न स्यात् ॥

( उद्द्योतः ) लेडिति । **'सिब्बहुलं लेटि'** इति सिप् ॥ **इट ईटीति** । न[11] च **यमरमनमा**मित्यत्र वलादेरित्यस्य संबन्धे फलाभावात्कथमेतज्ज्ञापकम् । **रुदादिभ्य** इति सूत्रे वलादेरित्यस्य संबन्धसत्त्वेन मध्येऽपि संबन्धस्यैव न्याय्यत्वात् । अत एव सप्तमे ( ७।२।३ ) भाष्ये—**"एकाचस्तौ वलीति च"** इत्युक्तम् ॥

( प्रयोजनभाष्यवार्तिकम् ॥ )

## *[12]यस्मिन्विधिस्तदादित्वे प्रयोजनम् ॥*

( भाष्यम् )

**वक्ष्यति-'यस्मिन्विधिस्तदादावल्ग्रहणे' इति । तस्मिन् क्रियमाणे[13] "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इहैव स्यात्-श्रियः-भ्रुवः । श्रियौ-भ्रुवौ-इत्यत्र न स्यात् ॥**

---

१ अत्र 'आदिवत्त्वे प्रयोजनं प्रत्ययञ्निदाद्यदात्तत्वे' इत्येतत्कात्यायनवार्तिकं भाष्यवार्तिकं वेति संशयः । व्याख्यानभाष्ये 'आदिवत्त्वे प्रयोजनं' इत्यंशस्यासंस्पर्शात् । आदिवत्त्वे प्रयोजनमिति भाष्यवचनम्, प्रत्ययञ्निदाद्युदात्तत्वे इत्येव वार्तिकमिति वा संतोष्टव्यम् । प्रत्ययञ्निदाद्युदात्तत्वे इत्येतत्प्रथमाद्विवचनान्तम् । आदिवत्त्वे प्रत्ययञ्निदाद्युदात्तत्वे प्रयोजनमित्यन्वयः । 'प्रत्ययस्यादिरुदात्तो भवतीति' इति व्याख्यानञ्च 'प्रत्ययाद्युदात्तत्वे' इत्यस्य । 'ञ्नित्यादिर्नित्यमिति' इत्येतच्च ञ्निदाद्युदात्तत्वे इत्यस्य । उभयत्रापि व्याख्यानभाष्ये इतिशब्दः पदार्थप्रकाशनपरः ॥

२ **उच्यते इति** । एवमभिन्नविभक्त्यन्तप्रदर्शनार्थमेव तथोक्तं भाष्ये । अन्यथा षष्ठ्युपादानमयुक्तं स्यात् ॥ छाया ॥

३ **लिङ्गादिति** । बहुषु लिङ्गेन सूत्रनिराकरणस्य दृष्टत्वात् । तस्य तन्निवृत्त्यर्थत्वं तु सिद्धान्तरीत्या ॥ छाया ॥

४ **सूत्र इति** । पूर्वान्वयि । विशेषणार्थत्वेऽपीत्संज्ञा भवत्येव, तत्त्वस्य तत्राप्रतिबन्धकत्वात् ॥ छाया ॥

५ **भिन्नेति** । व्याख्यानभाष्यात्तथाप्रतीतेरिति भावः ॥ छाया ॥ 'भिन्नविभक्त्यन्तरयोरसम-' इति ज. पाठः ॥

६ समकक्षत्वसूचनाय **वा**द्वयम् ॥ छाया ॥

७ भाष्यानुपपत्तिं परिहरति—**अनेकाज्भ्य इति** ॥ छाया ॥

८ मुद्रितपुस्तकेषु इतः प्राक् 'वलादेरार्धधातुकस्येट्' इति वार्तिकत्वेन निर्दिश्यते । प्रामाणिकपुस्तकेषु न तथा पाठ इति नाश्रितोऽस्माभिः । एतच्च भाष्यवार्तिकम्, व्याख्यानभाष्यानुरोधात् ॥

९ लेडन्तोदाहरणदाने प्रयोजनमाह—**इट इति** । इट ईटीति ज्ञापकादसहाये वलि वलादित्वाभावेऽपि सिच इट् भवतीति ॥

१० **सिज्विषयमिति** । एतेन 'इदमयुक्तं ज्ञापकेन सूत्रप्रत्याख्यानानौचित्यात्' इत्यपास्तम् । बहुशो दृष्टत्वात् ॥ छाया ॥

११ प्रदीपोक्तं ज्ञापकं विघटयति—**न चेति** । एवञ्चात्र वलादेरित्यस्यासम्बन्धेन 'इट ईटि' इति सूत्रमत्र चरितार्थमिति न ज्ञापकमिति भावः ॥

१२ इतः प्राक् 'यस्मिन्विधिस्तदादित्वे' इति वार्तिकत्वेन निर्देशो मुद्रितपुस्तकेषु । प्रामाणिकेष्वनुपलम्भान्निर्मूल इति नाश्रितः । मुद्रितानुरोधे कृते वक्ष्यतीत्यादि व्याख्यानभाष्यस्य व्याख्यानं स्यात् । भाष्यपरिपाटीविरोधादपि नैतादृशं वार्तिकमिति प्रतीयते ॥

१३ **क्रियमाणे**—आश्रीयमाणे ॥ छाया ॥

॥ ( प्रदीपः ) यस्मिन्विधिरिति । 'स्वस्य च रूपस्य' इति नानुवर्तते-इति प्रयोजनत्वेनोपन्यासः ॥

( प्रयोजनभाष्यवार्तिकम् ॥ )

*अजाद्याट्त्वे[1] प्रयोजनम् ॥*

( भाष्यम् )

"आडजादीनाम्" इहैव स्यात्—ऐक्षिष्ट, ऐहिष्ट। अध्यैष्ट-इत्यत्र न स्यात् ॥

( प्रदीपः ) अजाद्याट्त्व इति । सूत्रपाठापेक्षया प्रयोजनोपन्यासः । वार्तिककारस्तु—'अजादीनामटा सिद्धम्—' इत्याह ॥

( अन्तवत्त्वप्रयोजनजिज्ञासाभाष्यम् )

अथान्तवत्त्वे कानि प्रयोजनानि ?

( प्रयोजनभाष्यवार्तिकम् ॥ )

*अन्तवद्[2]द्विवचनान्तप्रगृह्यत्वे प्रयोजनम् ॥*

( भाष्यम् )

"ईदूदेद्द्विवचनं प्रगृह्यम्" इहैव स्यात्-पचेते इति, पचेथे इति । खट्वे इति, माले इति-इत्यत्र न स्यात् ॥

( प्रदीपः ) अन्तवदिति । *येन विधिस्तदन्तत्वे* इत्यनेन गते प्रपञ्चार्थोऽयमुपन्यासः ॥

( उद्योतः ) येन विधिरिति । तेनैव[3] हीदूदेद्द्विवचनमित्यत्र तदन्तविधिरिति भावः ॥

( प्रयोजनभाष्यवार्तिकम् ॥ )

*मिदचोऽन्त्यात्परः प्रयोजनम् ॥*

( भाष्यम् )

इहैव स्यात्—कुण्डानि-वनानि । तानि-यानि -इत्यत्र न स्यात् ॥

( प्रयोजनभाष्यवार्तिकम् ॥ )

*अचोऽन्त्यादि टि प्रयोजनम् ॥*

( भाष्यम् )

"टित आत्मनेपदानां टेरे" इति, इहैव स्यात्—कुर्वाते, कुर्वाथे । कुरुते-कुर्वे-इत्यत्र न स्यात् ॥

( प्रदीपः ) कुरुत इति । अर्थवत्ता[4] व्यपदेशिवद्भावात् तशब्दाकारस्यानर्थकत्वादिह प्रयोजनोपन्यासः ॥

( उद्योतः ) अर्थवतेति । तत्र ह्यर्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः । इदं चिन्त्यम्, 'यद्यपि व्यपदेशिवद्भावेन सिध्यति तथापि गौणत्वान्नेति यस्य भ्रान्तिस्तं प्रति सूत्रारम्भः' इति पूर्वग्रन्थविरोधात्, सूत्रकारेण तदज्ञानात् तदुदाहरणसंभवाच्च । अर्थवतेति[5] चासहायत्वस्यैवोपलक्षणम्, ससहायस्य प्रायेणानर्थकत्वात् । तशब्दाकारश्चा[6]सहाय एव, येन सहायेनाचामन्तत्वस्य बहुव्रीह्यर्थस्य चोपपत्तिस्तादृशसहायाभावात् । अन्यथाऽऽद्यन्तवद्भावोऽपि न स्यात् । विजातीयकन्यादिसहायसत्त्वेऽप्येकपुत्रस्यायमेव ज्येष्ठ इत्यादिव्यवहाराद् ईदृशस्थलेऽपि लोकसिद्धत्वमित्याहुः ॥

( प्रयोजनभाष्यवार्तिकम् ॥ )

*अलोऽन्त्यस्य प्रयोजनम् ॥*

( भाष्यम् )

"अतो दीर्घो यञि सुपि च" इहैव स्यात्—पटाभ्यां, घटाभ्याम् । आभ्यां-इत्यत्र न स्यात् ॥

( प्रदीपः ) आभ्यामिति । अत्र द्वे अन्तवत्त्वे उपयुज्येते । अकारान्त[7]स्यालोऽन्त्यस्य दीर्घत्वं भवतीति पृथक् प्रयोजनोपन्यासः ॥

( प्रयोजनभाष्यवार्तिकम् ॥ )

*येन विधिस्तदन्तत्वे प्रयोजनम् ॥*

( भाष्यम् )

"अचो यत्" इहैव स्यात्—चेयम्, जेयम् । एयम्-अध्येयम्-इत्यत्र न स्यात् ॥

---

१ इतः प्राक् 'अजाद्याट्त्वे' इति वार्तिकं व्याख्याभाष्यञ्चैतदिति मुद्रितपुस्तकेषु दृश्यते । प्रामाणिकपुस्तकेष्वस्यानुपलम्भः ॥

२ अन्तवत्-तत्र तस्य प्रयोजनमित्यर्थः ॥ द्विवचनान्तेति । एकदेशयुक्तमताशयकोऽयं निर्देशः । यद्वा द्विवचनप्रगृह्यत्वे इत्येव पाठः । यद्वा—अन्तस्येदाद्यन्तस्य द्विवचनस्य प्रगृह्यत्वे इत्यर्थः ॥ छाया ॥ मुद्रितपुस्तकेषु 'अन्तवद्विवचनान्तप्रगृह्यत्वे' 'मिदचोऽन्त्यात्परः' 'अचोन्त्यादि टि' 'अलोऽन्त्यस्य' 'येन विधिस्तदन्तत्वे' इति वार्तिकानि प्रदर्श्य प्रयोजनान्तवाक्यानि व्याख्यानभाष्यत्वेनोपवर्णयन्ति । प्रामाणिकेषु तादृशपाठाभावान्नेहाश्रितः । भाष्यवार्तिकानीमानि न कात्यायनस्येति न व्याख्यानन्यूनताऽपि ॥

३ तेनैव हीति । स्वस्य चेत्येतदनाश्रित्येदम् ॥ छाया ॥

४ 'अर्थवता व्यपदेशिवद्भावः' इति तावन्नेयं परिभाषा, तस्या विध्यङ्गत्वात् । व्यपदेशिवद्भावस्तु लौकिक इत्युक्ततया तं प्रत्यङ्गत्वायोगात् । किं तु शास्त्रे व्यपदेशिवद्भावप्रयोजनाय शब्दार्थसमुदायमाश्रित्य तस्यैकदेशः शब्द इति व्युत्पादयितुमर्थवत्ताऽपेक्षितेति परं तस्याशयः । अत एव षष्ठे 'निजौ चत्वार एकाच' इत्येतद्व्युत्पादनावसरे भाष्यकैयटयोरनर्थकेनापि व्यपदेशिवद्भावः स्वीकृतः । लोक इव शास्त्रेप्यनर्थकस्य व्यपदेशिवद्भावसंभवात् । तस्मादर्थवतेति प्रायोवादमात्रम् । सूत्रप्रत्याख्यानं तु सम्यगेवेति दिक् ॥ श० कौ० ॥

५ तथासति भाष्यं योजयन्यथाश्रुतेऽतिप्रसङ्गात्कैयटमपि योजयति—अर्थवतेति चेति ॥ तत्र बीजमाह—ससहेति ॥ अव्यभिचारायाह—प्रायेणेति ॥ नन्वेवमप्यत्र हल्सहाय एवात आह—तशब्देति ॥ असहायत्वं च सजातीयसहायाभावकृतमेव, लोके तस्य तथैव लाभादित्याह—येनेति ॥ आहुरित्यरुचिबीजं तु वस्तुत इत्यादिनाऽनुपदमेव दर्शितम् ॥ छाया ॥

६ 'श्चासहायाभावात् । अन्यथा' इत्येव ज.पुस्तकपाठः ।

७ 'अकारान्तस्याङ्गस्यालो' 'पृथक्प्रयोजनत्वेनोप' इति मुद्रितेषु पाठभेदः ॥

**आद्यन्तवदेकस्मिन् कार्यं भवतीति अत्रापि सिद्धं भवति ॥ २१ ॥**

( प्रदीपः ) **एयमिति** । इङो रूपम् । इणस्तु 'इत्यं' इति भवति ॥ २१ ॥

( उद्द्योतः ) **इत्यमिति** । एतिस्तुशास्विति क्यपो विधानादित्यर्थः ॥ २१ ॥

---

( २१ घसंज्ञासूत्रम् ॥ १ । १ । ५ आ. १० )

## तरप्तमपौ घः ॥ १ । १ । २२ ॥

( औपदेशिकग्रहणाधिकरणम् )

( प्रदीपः ) **तरप्तमपौ** ॥२२॥ अतिशायनिकप्रकरण एव 'तादी घः' 'पितौ घः' इति वा वक्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं—'स्वार्थेऽपि तरबस्ति' इति सूचनार्थम् । तेन 'अल्पाच्तरम्' इत्यादि सिद्धं भवतीत्याहुः[1] ॥

(उद्द्योतः) **तरप्त०**॥२२॥ **प्रकरणोत्कर्षेणेति**। प्रकरणे[2]-संज्ञाप्रकरणे उत्कर्षेण-गुरुभूतन्यासेनेत्यर्थः ॥ **स्वार्थे इति** । अनातिशायनिकस्यापि संज्ञाविधानार्थमत्र सूत्रम् । स चानिर्दिष्टार्थत्वात्स्वार्थे । तस्य संज्ञाफलं च 'उच्चैरेव-उच्चैस्तराम्' इत्यादौ **किमेत्तिङव्ययघादित्याम्-**सिद्धिरिति भावः ॥ **इत्याहुरिति** । अत्रारुचिबीजं तु भाष्यानुक्तिः ॥

( १७५ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ घसंज्ञायां नदीतरे प्रतिषेधः ॥ * ॥

( भाष्यम् )

**घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः । नद्यास्तरो नदीतरः-इति ॥**

( प्रदीपः ) **नदीतर इति** । तरतेः 'ऋदोरप्' इत्यप् । सर्वत्र चानुबन्धाः स्मर्यमाणा एव कार्यं प्रति हेतुत्वं लभन्त इति घसंज्ञाप्राप्तिः । साहचर्यं चेह व्यवस्थाहेतुः सर्वत्र नाश्रीयते । तथा हि[3] 'द्विस्त्रिश्चतुरिति कृत्वोर्थे' इति कृत्वोर्थग्रहणं चतुरशब्दविशेषणार्थं कृतम् । अन्यथा द्विस्त्रिश्शब्दसाहचर्याच्चतुरशब्दोऽपि कृत्वोर्थं एव ग्रहिष्यत इति किं कृत्वोर्थग्रहणेन ॥

( उद्द्योतः ) ननु नायं तरबित्यत आह— **सर्वत्र चेति** ॥ **ननु** तमप्साहचर्यात्तद्धित एव तरो ग्रहीष्यते इति नास्त्यबन्ते तरे प्रसक्तिरत आह—**साहचर्यमिति**[4] । **प्रत्ययाप्रत्यययो**[5]रिति परिभाषाऽपि नाश्रितेति वोध्यम् ॥ इह–शास्त्रे ॥

( १७६ समाधानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ घसंज्ञायां नदीतरेऽप्रतिषेधः[6] ॥ * ॥

( भाष्यम् )

**घसंज्ञायां नदीतरेऽप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । नद्यास्तरः- नदीतरः ॥**

( प्रदीपः ) **अप्रतिषेध इति** । न प्रतिषेधः—इति प्रतिषेधनक्रिया नञा निषिध्यते । भाष्यकारस्तु वस्त्वर्थं व्याचष्टे—'अनर्थकः प्रतिषेधः' इति ॥

( उद्द्योतः ) **वस्त्वर्थमिति** । तात्पर्यार्थमित्यर्थः[7] । असंदेह इतिवत् प्रतिषेधस्याभाव इत्यर्थको नञ्समासः ॥ एवं च 'अनर्थकः' इति भाष्योक्तेर्मध्यमपदलोपी समास इति न भ्रमितव्यमिति भावः ॥

( दोषस्मारकभाष्यम् )

**घसंज्ञा कस्मान्न भवति ?**

( दोषवारकं भाष्यवार्तिकम् )

### *तरप्ग्रहणं ह्यौपदेशिकम्[8] ॥*

( भाष्यम् )

**औपदेशिकस्य तरपो ग्रहणम् । न चैष उपदेशे तरप्शब्दः ॥**

( प्रदीपः ) **औपदेशिकमिति** । उपदेशः प्रयोजनमस्य, तत्र वा भवं-औपदेशिकम् ॥

( उद्द्योतः ) **तरप्ग्रहणं**-तरप्शब्दः, **औपदेशिकं**-उपदेशप्रयोजक इत्यर्थो भाष्यस्य ।' तदाह—**उपदेशः प्रयोजनमिति** । प्रयोजक इत्यर्थः ॥ **न चैष उपदेशे तरप्शब्द** इति भाष्यस्वरसादाह—**तत्र वा भव** इति । 'उपदेशे' इति भाष्ये 'भवः' इति शेषः ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ?**

( समाधानभाष्यम् )

**न हि ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ?**

---

१ केचित्तु सामान्यापेक्षं ज्ञापकमाश्रित्येयसुनोऽपि स्वार्थिकतामाहुः । तेन 'अहो महीयस्तव साहसिक्यम्' इत्यादिप्रयोगाः समर्थिता भवन्ति ॥ श. कौ. ॥

२ यथाश्रुतार्थसंगत्यसंभवादाह—**प्रकरणे इति** ॥ **भाष्यानुक्तिरिति** । **अल्पाच्तर**मित्यादयस्तु सौत्रा इति भावः ॥ छाया ॥

३ **तथा हीति** । वक्ष्यमाणशेषो न पृथक् ॥ सर्वत्र तदनाश्रयणे हीति तदर्थः ॥ छाया ॥

४ **साहचर्यमितीति** । प्रकारान्तरेण समाधत्तेर्वक्ष्यमाणत्वादनित्यत्वेऽपि पाक्षिकाश्रयणं न कृतम् ॥ छाया ॥

५ कैयटानुरोधेनैवाह—**प्रत्ययेति** । सिद्धान्ते तु नास्या लक्ष्यसंस्कारकत्वमित्यन्यत्र स्पष्टम् ॥ छाया ॥

६ पूर्वपक्षवार्तिकमेवाकारप्रश्लेषेण सिद्धान्तपरतया व्याचष्टे—**घेति** ॥ **तर इति** । इत्यत्रेति शेषः ॥ छाया ॥

७ **तात्पर्येति** । अत एवात्र भाष्ये वक्तव्य इति नोक्तम् ॥ छाया ॥

८ एतच्च भाष्यवार्तिकम् । 'औपदेशिकं–उपदेशप्रयोजक इत्यर्थो भाष्यस्य' इत्युद्द्योतदर्शनाद्भाष्यकारीयमेवैतदिति निश्चीयते । अपि च 'घसंज्ञायां नदीतरे प्रतिषेधः' इति वार्तिकमेवाकारप्रश्लेषेण भाष्यकृता समाधाने उपन्यस्तम्, न त्वकारप्रश्लेषविशिष्टं कात्यायनवार्तिकमिति छायाकृदपि प्रमाणयति । तथा च तच्छेषभूतं 'तरप्ग्रहणं ह्यौपदेशिकम्' इत्यपि भाष्यवार्तिकमेवेति ॥

( सिद्धान्तिसमाधानभाष्यम् )

**इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते—यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते ॥**

**कोऽसौ?**

**उपदेशो नाम । न चैष उपदेशे तरप्शब्दः ॥**

( प्रदीपः ) **यत्रास्येति ।** अनुबन्धयुक्तमित्यर्थः ॥ **न चैष इति ।** काल्पनिकमस्य तरप्त्वं, न तु साक्षान्निर्दिष्टम् ॥

( उद्द्योतः ) **सर्वेष्वेव सानुबन्धकग्रहणेष्विति** भाष्यं प्रकृताभिप्रायं, शब्दमात्रग्रहणेऽपि **स्वं रूप**मित्यनेन रूपाश्रयणादिति बोध्यम् ॥ **यत्रास्येति ।** यत्रास्यैतद्रूपं तत्र घसंज्ञेत्यर्थः ॥ एवं चोपदेश एव घसंज्ञा । प्रयोगे तु स्थानिवद्भावेन सेति बोध्यम् ॥ **काल्पनिकमिति ।** **ऋदोरबि**तिसूत्रपर्यालोचनावगतत्वेनानुमानिकमित्यर्थः ॥

( घसंज्ञाभ्युपगमेऽपि दोषाभावप्रदर्शकभाष्यम् )

**अथवा—अस्त्वस्य घसंज्ञा ॥**

**को दोषः?**

( दोषदर्शनभाष्यम् )

**घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ॥**

( समाधानभाष्यम् )

**समानाधिकरणेषु घादिष्वित्येवं तत् ॥**

( प्रदीपः ) **समानाधिकरणेष्विति ।** आतिशायनिकश्च स्वार्थिकत्वात् समानाधिकरणः ॥

( उद्द्योतः ) **स्वार्थिकत्वात्**—प्रकृत्य[1]भिहितद्योतकत्वात्, **समानाधिकरणः**—प्रकृत्या समानविषय इत्यर्थः । सामानाधिकरण्यं चैकविशेष्यकबोधजनकत्वमिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**यदा[2] तर्हि सैव नदी, स एव तरः, तदा प्राप्नोति ॥**

( प्रदीपः ) **यदा तर्हीति ।** ननु 'तीर्णिः' इति भवितव्यम् । एवं तर्हि 'तीर्यत इति-तरः' इति सामान्येन पदं संस्क्रियते, पश्चान्नद्या विशेष्यते इति न दोषः ॥

( उद्द्योतः ) **ननु तीर्णिरिति ।** ॠतः परस्य क्तिनो निष्ठावद्वचनान्नत्वम् ॥ **सामान्येनेति ।** अनिर्धारितकर्मविशेषेणेत्यर्थः । अत एव पुंस्त्व[3]म्, घञपः पुंसीत्युक्तेः ॥

( समाधानभाष्यम् )

**स्त्रीलिङ्गेषु घादिष्वेवं तत् । अवश्यं चैतदेवं विज्ञेयम् । समानाधिकरणेषु घादिष्वित्युच्यमाने[4] इह प्रसज्येत—महिषी रूपमिव, ब्राह्मणी रूपमिवेति ॥ २२ ॥**

( प्रदीपः ) **स्त्रीलिङ्गेष्विति ।** स्वार्थिकश्च प्रकृतिलिङ्गानुविधानात् स्त्रीलिङ्गः ॥ **महिषी रूपमिवेति ।** इवशब्दो भिन्नक्रमः । तेनायमर्थः—महिषीवेयमाकृतिरिति । तत्र 'सुप्सुपा' इति समासे कृते ह्रस्वत्वं स्यात् ॥ २२ ॥

( उद्द्योतः ) **महिषी रूपमिवेति ।** नन्विदमसमस्तं-समस्तं वा । **नाद्यः,** उत्तरपदाधिकाराद्रूपशब्दस्य चातथात्वादप्राप्तेः । **किं च** रूपशब्देनाकृत्यभिधानात्कस्याकृतिरिव महिषीति साकाङ्क्षं स्यात् । **नान्त्यः,** षष्ठीतत्पुरुषे वैयधिकरण्याद्ध्रस्वाप्राप्तेः । विशेषणसमासे तु पूर्वनिपातवैपरीत्यापत्तिः । तस्मादुपमागर्भसमासस्य विग्रहवाक्यमिदम् । स च समासो नो**पमानानि सामान्यवचनै**रित्यनेन, रूपशब्दस्योपमेयवाचकत्वेऽपि साधारणधर्मावाचकत्वात् । साधारणधर्मो ह्यत्र विसंष्ठुलत्वादिः । ना**प्युपमितं व्याघ्रादिभि**रिति, रूपशब्दस्योपमेयवाचित्वेन पूर्वनिपातवैपरीत्यापत्तेः । तस्योपमानवाचित्वे तु कस्य रूपमिति विशेषणस्य सापेक्षत्वाद्वृत्तिर्न स्यादत आह—**इवशब्द इति । सुप्सुपेति** च ॥ **ह्रस्वत्वं स्यादिति ।** अप्रत्यययोरपि घत्वे तत्साहचर्याद्रूपादेरप्रत्ययस्यापि ग्रहणं स्यादिति भावः ॥ यद्यपि रूपमित्युक्ते कस्य रूपमिति अस्त्याकाङ्क्षा तथापि प्रधानस्य साकाङ्क्षत्वान्न दोषः ॥ २२ ॥

—>o<—

( २२ संख्यासंज्ञासूत्रम् ॥ १ । १ । ५ आ. ११ )

## बहुगणवतुडति संख्या ॥ १ । १ । २३ ॥

( लोकप्रसिद्धसंख्यावाचिनां संख्यात्वसाधनाधिकरणम् )

( १७७ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ संख्यासंज्ञायां संख्याग्रहणं संख्यासंप्रत्ययार्थम् ॥ * ॥

( भाष्यम् )

**संख्यासंज्ञायां संख्याग्रहणं कर्तव्यम् । बहुगणवतुडतयः संख्यासंज्ञा भवन्ति, संख्या च संख्यासंज्ञा भवतीति वक्तव्यम् ।**

**किं प्रयोजनम्?**

**'संख्यासंप्रत्ययार्थम्' । एकादिकायाः संख्यायाः संख्याप्रदेशेषु संख्या-इत्येष संप्रत्ययो यथा स्यात् ॥**

( प्रदीपः ) **बहुगणवतुडति० ॥ २३ ॥ संख्यासंप्रत्ययार्थमिति ।** संख्याया एकादिकायाः संख्याप्रदेशेषु संप्रत्ययार्थमित्यर्थः ॥

( उद्द्योतः ) **बहुगण० ॥ २३ ॥** संख्यात्वेन संप्रत्ययस्य लोकत एव सिद्धेराह—**एकादिकाया इति । संख्यासंप्रत्ययेति** वार्तिके सङ्ख्ये[5]ति संप्रत्यय इत्यर्थः । एकादिकायाः सङ्ख्यायाः

---

१ अतत्त्वादाह—**प्रकृत्यभीति** ॥ वस्तुतस्तत्त्वादाह—**प्रकृत्येति** ॥ तदुक्तिं योजयति—**समेति** ॥ पदनिवेशो नेति भावः ॥ छा. ॥

२ नद्यास्तर इति विहाय नद्येव तर इत्याश्रीयते तदा सामानाधिकरण्याद्ध्रस्वस्य प्राप्तिः ॥

३ **पुंस्त्वमिति ।** इदं च प्रायिकमिति **नेकोगुणेति**सूत्रस्थस्व-ग्रन्थविरोधः ॥ राजदन्तादिः, भाष्यस्वारस्यात् ॥ छाया ॥

४ **इत्युच्यमान इति ।** एतावन्मात्र उच्यमान इत्यर्थः ॥ छाया ॥

५ **संख्येतीति ।** अत एवाग्रे **'संख्येति प्रतीता'** इति भगवतोक्तम् ॥ अन्यस्य वार्तिकतोऽलाभादाह—**एकादीति** ॥ एवं सति भाष्यासंगतिं परिहरति—**संख्येत्येष इतीति** ॥ छाया ॥

सङ्ख्याप्रदेशेष्विति शेषपूरणं बोध्यम् ॥ सङ्ख्येत्येष इति भाष्यस्य सङ्ख्येत्येतच्छब्दाभिन्न इत्यर्थः । 'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरः' इति पातञ्जलसूत्रात्[1]। एतच्च पातञ्जलसूत्रवृत्ताबुपपादितमस्माभिः । 'नारद इत्यबोधि' इत्यादावप्येवमेव[2]। एवं च कर्मत्वाप्रसक्तिरेव ॥ 'सङ्ख्याशब्दजन्यः' इत्यर्थे 'सङ्ख्येत्याकारकः' इत्यर्थे च 'एष'शब्दान्वयानुपपत्तिस्तदुपादानवैयर्थ्यं चेति बोध्यम् ॥

( आक्षेपबाधकभाष्यम् )

**ननु चैकादिका संख्या लोके संख्या-इति प्रतीता, तेनास्याः संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति ॥**

( प्रदीपः ) **ननु चेति** । यथा–पशुः[3]-अपत्यं-देवता-इति लौकिकोऽर्थो गृह्यते, तथैकादिकाऽपि संख्या ग्रहीष्यत इत्यर्थः ॥

(उद्द्योतः ) **सङ्ख्या ग्रहीष्यत इति** । सूत्रं त्वधिकसंग्रहार्थमिति भावः ॥

( आक्षेपसाधकभाष्यम् )

**एवमपि कर्तव्यम् ॥**

( १७८ आक्षेपसाधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके ॥ * ॥**

( भाष्यम् )

**अक्रियमाणे हि संख्याग्रहणे एकादिकायाः संख्यायाः संख्येत्येष संप्रत्ययो न स्यात् ।**

**किं कारणम् ?**

**'अकृत्रिमत्वात्' । बह्वादीनां कृत्रिमा संज्ञा । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति ॥**

**'यथा लोके' । तद्यथा–'गोपालकमानय' 'कटजकमानय' इति यस्यैषा संज्ञा भवति स आनीयते, न यो गाः पालयति, यो वा कटे जातः ॥**

( प्रदीपः ) **कृत्रिमाकृत्रिमयोरिति** । न्यायोऽयम्[4]। तथाहि–सर्वार्थाभिधानशक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे व्यवहाराय नियम्यते तदा तत्रैव प्रतीतिं जनयति, नान्यत्र ॥

( उद्द्योतः ) **न्यायोऽयमिति** । अभ्यासाम्रेडितादिसंज्ञाविषये चैतन्न्यायोपयोगो द्रष्टव्यः ॥ **नियम्यते इति** । सर्वार्थबोधकत्वेऽपि लोके तत्रैव गृहीतशक्तिकतयाऽन्यत्र शक्त्यग्रहणे चाधिकसंग्रहार्थत्वादगृहीतशक्तिग्राहकत्वाच्चास्य नियमत्वं **चिन्त्यम्** । न्यायबीजं तु प्रकरणं-इति[5] भाष्य एव स्फुटीभविष्यति ॥

( आक्षेपभाष्यम् )

**यदि तर्हि कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति, "नदीपौर्णमास्याग्रहायणीभ्यः" अत्रापि[6] प्रसज्येत ॥**

( प्रदीपः ) **नदीपौर्णमासीति** । 'यू स्त्र्याख्यौ नदी' इति संज्ञाविधानात् संज्ञिनो[7] ग्रहणं प्राप्तं न तु स्वरूपस्य, 'अशब्दसंज्ञा' इति निषेधात् ॥

( समाधानभाष्यम् )

**पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति ॥**

( प्रदीपः ) **पौर्णमासीति** । नियमार्थं पौर्णमास्याग्रहायणीग्रहणमीकारान्तानां स्यादिति चेत्, एवमपि 'ऊपौर्णमास्या-

१ **'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम्'** इति विभूतिपादे **पतञ्जलिसूत्रम्** ॥१७॥ एतत्सूत्रभाष्ये भगवता **व्यासेन—संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मकः—योऽयं शब्दः सोऽयमर्थः, योऽर्थः स शब्दः इत्येवमितरेतराध्यासरूपः संकेतो भवति । इत्येवमेते शब्दार्थप्रत्यया इतरेतराध्यासात्संकीर्णाः, गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानम् । य एषां प्रविभागज्ञः स सर्ववित्** ॥ इति भाषितम् ॥ अस्यायमाशयः—संकेतस्तु पदपदार्थयोः संकेतकर्तुराहार्यतरेतराभेदारोपरूपेतरेतराध्यासरूपः । अभेदारोपमानं तु विभागाभाव एव । त्रयाणामपि बुद्धिधर्मत्वेन परस्परमविभागात् । शब्देन बौद्धस्यैवार्थस्य प्रतीतेः । तत्रापि नाधुनिकसंकेतो विषयव्यवस्थापकः, तस्यानियतत्वात् । किं तु **स्मृत्यात्मकः** शक्तिग्राहकपाणिन्यादिस्मृत्यात्मकः । ज्ञानाविषय एव वा, न स्वरूपसन्निति । न चेदृशाध्यासस्य संकेतत्वे मानाभाव इति वाच्यम् । **'वृद्धिरादैच्'** इत्यादौ व्याकरणे **'ओमित्येकाक्षरं ब्रह्म' 'रामेति द्व्यक्षरं नाम'** इत्यादिषु शास्त्रेषु **'विष्णुर्नारायणः कृष्णः'** इत्यादिकोशेषु च 'योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः' इत्येवमितरेतराध्यासरूपस्यैव संकेतस्य दर्शनात् । ईदृशारोपस्यैवाश्रयणेन वैदिका मन्त्रार्थयोरभेदेनैवोपासनमाचरन्ति । मीमांसकाश्च मन्त्रमयीं देवतामाहुः । ***इतीन्द्रवद्विषयः*** इति वार्तिके शब्दप्रादुर्भावेऽव्ययीभावं कृत्वा **'एक इन्द्रशब्दोऽनेकस्मिन्क्रतुशत आहूतो युगपत्सर्वत्र भवति'** इति भाष्यकृता व्याख्यातम् ॥ क्वचित्तु भेदं परिकल्प्य 'अस्यार्थस्यायं वाचकः' इत्येवमपि संकेतः । यथा—**'तस्य वाचकः प्रणवः' 'उञः प्रगृह्यम्'** इति ॥ दाधि० ॥

२ प्रसङ्गादाह—**नारद इतीति** ॥ रत्नकृन्नारायणाद्युक्तिं खण्डयति—**संख्येति** ॥ छाया ॥

३ भाष्ये **एकादिके**त्यर्थपरं न तु शब्दपरम् । तदाह—**यथा पशुरिति** ॥ छाया ॥

४ न्यायबीजमाह—**सर्वार्थेति** ॥ छाया ॥ कृत्रिमाकृत्रिमन्यायबीजं–असच्छास्त्रेऽनेन शब्देनैते एवेति नियम एवेति कैयटाशयः ॥

५ कृत्रिमाकृत्रिमन्यायबीजं प्रकरणं, न तु नियम इति प्रतिपादयति—**सर्वार्थेति** । असच्छास्त्रे बहुगणादीनामेव संख्याशब्देन ग्रहणमिति नियम एव न सम्भवति, बहुगणादीनां संख्यात्वेन व्यवहारस्यानुदयात्-इति ॥

६ मुद्रित पुस्तकेषु 'इत्यत्रापि' इति पाठः ॥

७ **अत्रापी**ति भाष्यार्थमाह—**संज्ञिन इति** ॥ छाया ॥

८ नदीपदेन कृत्रिमनदीग्रहणे पौर्णमास्यादिग्रहणं व्यर्थं सन्नियमयति–नदीशब्दस्यैवग्रहणं, न कृत्रिमस्येति भाष्याशयः ॥

ग्रहायणीभ्यः' इति वक्तव्यं स्यात् । ऊकारग्रहणेन च नदीसंज्ञ-कमेवोकारान्तं पौर्णमास्याग्रहायणीशब्दसाहचर्यात् ग्रहीष्यते ॥

( उद्द्योतः ) **नियमार्थमिति** । नियमश्च[1] सामान्यविषय एव न कालवाचिविषयः, व्याख्यानात् । अतो गौर्यादन्तेऽपि न दोषः ॥ नन्वनदीसंज्ञकेभ्योऽपि खलप्वादिभ्य ऊकारान्तेभ्यः स्यादत आह—**ऊकारग्रहणेनेति** । व[2]स्तुतस्तु दोषग्रस्तनियमापेक्षया न[3]दीशब्दे **कृत्रिमाकृत्रिम**न्यायबाधज्ञापनमेव ज्यायः ॥

( आक्षेपभाष्यम् )

**त[4]द्विशेषेभ्यस्तर्हि प्राप्नोति—गङ्गा-यमुनेति ॥**

( प्रदीपः ) **तद्विशेषेभ्य इति** । गङ्गादिभ्यः ॥

( उद्द्योतः ) भाष्ये-**तद्विशेषेभ्यस्तर्ही**ति प्रासङ्गिकी शङ्का, तां व्याचष्टे— **गङ्गादिभ्य इति** । अपगङ्गं परियमुनमित्युदाहरणे । अत्र हि टचि अन्तोदात्तत्वम् । तदभावे **प[5]रिप्रत्युपापावर्ज्यमा-नाहोरात्रावयवेष्वि**ति पूर्वपदप्रकृतिस्वरत्वमित्याहुः ॥

( समाधानभाष्यम् )

**अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति-'तद्विशेषेभ्यो न भवति' इति । यदयं विपाट्शब्दं शरत्प्रभृतिषु पठति ॥**

( प्रदीपः ) **यदयमिति** । नित्यार्थः पाठः स्यादिति चेत्, व्यवस्थितविभाषया विपाट्शब्दस्य नित्यष्टज् भविष्यतीत्यदोषः ॥

( उद्द्योतः ) **नित्यार्थ इति** । **नदीपौर्णमासी**त्यत्रान्यतर-स्यांग्रहणानुवृत्तेरिति भावः ॥ **व्यवस्थितेति** । अत्र च ज्ञापकपर-मिदमेव भाष्यं मानम् । केचि[6]दस्माद्भाष्यान्नदीति सूत्रेऽन्यतरस्यां-ग्रहणं निवर्तयन्ति ॥

( आक्षेपभाष्यम् )

**इह तर्हि प्रा[7]प्नोति—"नदीभिश्च" इति ॥**

( समाधानभाष्यम् )

**बहुवचननिर्देशान्न भविष्यति ॥**

( प्रदीपः ) **बहुवचनेति** । अन्यथा 'आणनद्याः' इत्यादौ यथैकवचननिर्देशस्तथेहापि कर्तव्यः स्यात् ॥

( आक्षेपभाष्यम् )

**स्वरूपविधिस्तर्हि प्राप्नोति ॥[8]**

( समाधानभाष्यम् )

**बहुवचननिर्देशादेव न भविष्यति ॥**

( उद्द्योतः ) **बहुवचननिर्देशादेवेति** । त[9]स्मादपीत्यर्थः । अशब्दसंज्ञेति निषेधादित्यपि बोध्यम् । त[10]त्प्रत्याख्याने त्वयमेव हेतुः । अतोऽस्मान्निषेधान्नदी**पौर्णमासी**त्यादौ स्वरूपग्रहणमपि दुर्ल-भमित्यपास्तम्, लक्ष्यानुसारेण तत्प्रत्याख्यानेन सामर्थ्येन तस्यात्रा-प्रवृत्तेः । **नदीभिश्चे**त्यादौ तु लक्ष्यानुसारादेवार्थग्रहणेन तद्वाचकानां ग्रहणमिति दिक् ॥

( उपसंहारभाष्यम् )

**ए[11]वं न चेदमकृतं भवति—"कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययः" इति । न च कश्चिद्दोषो भवति ॥**

( प्रदीपः ) **न चेदमिति** । अनाश्रितमित्यर्थः ॥

( उद्द्योतः ) अस्य न्यायत्वादकृतमित्ययुक्तमत आह—**अना-श्रितमिति** ॥

( १७९ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उत्तरार्थं च ॥ * ॥**

( भाष्यम् )

**उत्तरार्थं च संख्याग्रहणं कर्तव्यम् । "ष्णान्ता षट्" षकारनकारान्तायाः संख्यायाः षट्संज्ञा यथा स्यात् । इह मा भूत्—पामानः-विप्रुष इति ॥**

---

१ ननु कालवाचिनां चेत्पौर्णमास्याग्रहायण्योरेवेति नियमाश्रयणेन कृत्रिमनदीग्रहणे बाधकाभाव इत्यत आह— **नियमश्चेति** ।

२ प्रदीपं दूषयति-**वस्तुतस्त्विति** ॥ **विधिनियमे**ति न्यायो-ऽप्यनुगृहीतो भवतीत्याह—**ज्याय इति** ॥ छाया ॥

३ मुद्रितपुस्तकेषु 'नदीशब्देन' इति पाठः । प्रामादिकोऽयं पाठ इति पौर्णमास्याग्रहायणीत्यादिभाष्यात्स्पष्टम् । एवञ्च भाष्यस्य पौर्ण-मास्याग्रहायणीग्रहणसामर्थ्यान्नदीशब्दे कृत्रिमन्यायो नेति नदीशब्देन कृत्रिमाया ग्रहणं न भविष्यतीत्यर्थः ॥

४ ननु नदीपौर्णमास्येत्यादौ ज्ञापकेन कृत्रिमाकृत्रिमन्यायानुपस्थि-तावपि नदीत्यस्य शब्दसंज्ञात्वात् स्वं रूपं शब्दस्येत्यस्यात्रानुपस्थितिः । एवञ्चार्थविशिष्टशब्दोपस्थानाभावान्नदीविशेषेभ्यः कार्यं प्राप्नुयादित्या-शयेनाह-**तद्विशेषेभ्य इति** । ईदृशस्थले ज्ञापकादिनैव कार्यं वारणी-यमित्याशयः । अत एवेयं प्रासङ्गिकी शङ्केत्युद्द्योताभिप्रायः ॥

५ **परिप्रेति** । अत एव तथैवोदाहृतमिति ॥ [ अयं भावः— **अपगङ्ग**मित्यादावुदाहृते **'अपपरी वर्जने'** इति कर्मप्रवचनीयसंज्ञा । **'पञ्चम्यपाङ्परिभिः'** इति पञ्चमी । **'अपपरिबहिरञ्चवः पञ्चम्या'** इत्यव्ययीभावः-इति ॥] **आहुः**—भाष्यतत्त्वविदः ॥ छाया ॥

६ तासामन्यत्र परिगणितत्वादाह—**केचिदिति** ॥ एतेन तस्या लक्ष्यैकचक्षुष्कत्वम् । नासदादेः । वचनं विनाऽज्ञानेन तया ज्ञाप-नोपपादनमयुक्तमिति निरस्तम् ॥ छाया ॥

७ **प्राप्नोतीति** । नदीभिश्चेत्यत्र कृत्रिमाकृत्रिमन्यायबलात् कृत्रि-माया ग्रहणं प्राप्नोतीत्यर्थः ॥

८ बहुवचननिर्देशात्कृत्रिमेतिन्यायस्य बाधे स्वं रूपं शब्दस्येति स्वरूपविधिः प्राप्नोतीत्यर्थः ॥

९ एवोऽप्यर्थ इत्याह—**तस्मादपीति** । तत्समुच्चेयमाह—**अश-ब्देति** ॥ हेतुत्रयमाह—**लक्ष्येति** ॥ **अत्र-प्रक्रान्ते 'नदीपौर्ण-'** इत्यत्र ॥ तत्फलमाह—**नदीभिरिति** ॥ अत एव तत्सूत्रभाष्य-विरोधो न, तदाह—**दिगिति** ॥ छाया ॥

१० **तत्प्रत्याख्याने**—अशब्दसंज्ञेत्यस्य प्रत्याख्यानेऽपि बहुवचन-निर्देशादित्येव हेतुः । अत एव भाष्यकृता तन्नोक्तम् ॥

११ **एवं**—ज्ञापकादिभिर्दोषे वारिते इदमनाश्रितं न भवतीति कृत्रिमेति न्यायोऽप्याश्रीयते दोषश्च न भवतीत्यर्थः ॥

(प्रदीपः) **उत्तरार्थं चेति**। अयं[1] हि सूत्रोपात्तः संख्याशब्दः स्वरूपपदार्थकः। उत्तरत्र संज्ञिनिर्देशेन प्रयोजनम्॥

(उद्द्योतः) **स्वरूपेति**। न[2] चैवं बह्वादिसामानाधिकरण्यानुपपत्तिः। शब्दार्थयोरभेदारोपेण तदुपपत्तेरिति भावः॥ **संज्ञिनिर्देशेनेति**। संख्या[3]शब्दबोध्यपञ्चादिशब्दपरेण संख्याशब्दनिर्देशेनेत्यर्थः॥

(वार्तिकोक्ताक्षेपनिराकरणभाष्यम्)

**इहार्थेन[4] तावन्नार्थः संख्याग्रहणेन॥**

(प्रदीपः) **इहार्थेनेति**। इहार्थो यस्य-इति सामान्यविशेषभावान्न पौनरुक्त्यम्॥

(उद्द्योतः) **सामान्येति**। अर्थशब्दोक्तसामान्यं प्रति 'इहार्थो यस्य' इत्यस्य विशेषत्वा[6]दित्यर्थः॥

(आक्षेपस्मारणभाष्यम्)

**ननु चोक्तम्-*इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके*इति?**

(आक्षेपपरिहारभाष्यम्)

**नैष दोषः। अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति। अर्थो वाऽस्यैवंसंज्ञकेन भवति। प्रकृतं वा तत्र भवति—इदमेवंसंज्ञकेन कर्तव्यमिति॥**

**आतश्चार्थात् प्रकरणाद्वा। अङ्ग हि भवान् ग्राम्यं पांशुरपादमप्रकरणज्ञमागतं ब्रवीतु—गोपालकमानय, कटजकमानयेति। उभयगतिस्तस्य भवति। साधीयो वा यष्टिहस्तं गमिष्यति॥**

(प्रदीपः) **आतश्चेति**। इतश्चेत्यर्थः॥ **अर्थः**-सामर्थ्यम्। यथा-गोपालकमानय माणवकमध्यापयिष्यति-इति यष्टिहस्तस्याध्यापनासंभवात्संज्ञिनो ग्रहणम्॥ **प्रकरणं**-प्रस्तावः। यथा-भोजनप्रकरणे सैन्धवमानय-इति लवणे प्रतीतिः, गमनप्रकरणे त्वश्वे॥ **ग्राम्यमिति**। ऊहितुमसमर्थम्॥ **पांशुरपादमिति**। अचिरोषितम्। अत एवाप्रकरणज्ञम्॥ **उभयगतिरिति**। किं संज्ञेयं यस्य कस्यचिन्निर्दिष्टा स्यात्, उत यष्टिहस्तो[8]ऽस्य विवक्षितः स्यात्-इति संदेहवान् भवतीत्यर्थः॥ **साधीयो वेति**। यो मम प्रसिद्धः सोऽनेन चोदितो न च ममैवंसंज्ञकः प्रसिद्ध इत्येवं मन्यते। लोके गोपालकशब्दः संज्ञिनि नियम्यमानः संज्ञ्यन्तरं निवर्तयति, क्रियानिमित्तं त्वर्थं न निरस्यति, तुल्यजातीयविषय एव हि नियमो भवति॥

(उद्द्योतः) भाष्ये-**अर्थादित्यादि**। लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणं, किं त्वन्यदेवेति भावः॥ **अर्थः**-सामर्थ्यम्। तदेव दर्शयति—**अर्थो वाऽस्येति**। अस्य वाक्यस्यार्थः=अध्यापनादिरूपं प्रयोजनं एवंसंज्ञकेन भवति तत्रास्यैव सामर्थ्यमित्यर्थः॥ **प्रकृतं वेति**। इदमेवंसंज्ञकेन कर्तव्यमिति तत्र प्रयोजनं प्रकृतं बुद्धिस्थं भवति, संज्ञाया बुद्धिस्थत्वादित्यर्थः। इदम[9]न्येषामपि पदार्थनियामकानामुपलक्षणम्॥ यद्यपि **रूढिर्योगापहारिणी**त्यप्यत्र संभवति, तथापि **प्रकरणादिसहकृतो योगोऽपि बलवानि**त्यभिप्रेत्येदमेवोक्तम्॥

अन्वयमुक्त्वा व्यतिरेकेणाप्यर्थादेहेतुत्वं प्रतिपादयितुं भाष्ये-**आतश्चेति**॥ **उभयगतिः**-उभयविषयकं ज्ञानं तात्पर्यसन्देहरूपमित्याशयेनाह—**किं संज्ञेयमिति**। वक्तृ[10]तात्पर्यविषयसन्देहवानित्यर्थः॥ ननु रूढेर्योगार्थापहारकत्वेन कथं संदेह इति चेन्न। तत्तत्पुरुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगापहारकत्वं नान्यस्येति भावात्॥ तदेव ध्वनयन्नाह—**साधीय इति**। क्रियाविशेषणमव्ययं वा सम्यगर्थकम्॥ **यष्टिहस्तं गमिष्यति**-तद्विषयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः॥ ननु संज्ञाकरणस्य नियमार्थत्वाद्योगार्थप्रतीतिः श्रोतुर्भ्रम इत्यत आह—**एवं मन्यते। लोके इति**। इद[11]मपि स्वरीत्या॥

---

१ ननु सूत्रे विद्यमानस्य संख्याशब्दस्यैवोत्तरत्रानुवृत्तिः स्यादत आह-**अयं हीति**॥

२ **स्वरूपेति**। तथा च तस्य नानुवृत्तिसंभव इति भावः॥ कुतो नेत्याशङ्कायामाह—**उत्तरत्रेति**। **यत** इत्यादिः। एतेनास्याग्रिमभाष्यानुवादत्वेऽपि प्रकृतभाष्यव्याख्यातृत्वाभावादिदमयुक्तमित्यपास्तम्॥ छाया॥

३ बहुगणवतुडतिसंख्येत्यत्रशब्दविशिष्टार्थपराणां बह्वादिशब्दानां केवलस्वरूपपरसंख्याशब्देन सामानाधिकरण्यं समानविभक्त्यन्तत्वात्प्राप्तमप्यर्थभेदादप्राप्तमुपपादयति—**न चैवमित्यादिना**। बहुगणवतुडतयः संख्याशब्दाभिन्ना इति बोध इत्याशयः॥

४ यथाश्रुतासंगतेराह—**संख्याशब्देति**॥ छाया॥

५ **इह**—बहुगणेतिसूत्रे **अर्थः**-प्रयोजनं यस्येति समासः। बहुगणेतिसूत्रार्थस्य संख्याग्रहणस्य न प्रयोजनमित्यर्थः॥

इह तावन्नार्थः संख्याग्रहणेनेत्येव वक्तव्ये इहार्थेनेत्युक्तिः किमर्थमिति चेत्; बहुगणेतिसूत्रे विधेयसमर्पकसंख्याग्रहणे नाक्षेपसमाधाने, किन्तु वार्तिके यस्य संख्याग्रहणस्यात्रोपसंख्यानमुक्त्वा प्रयोजनमुक्तं तेनैव संख्याग्रहणेन नार्थ इत्येतत्स्फुटं प्रतिपादयितुमीदृश्युक्तिः। एवञ्च-इह प्रयोजनं यस्योक्तं वार्तिककृता तादृशेन संख्याग्रहणेन नार्थ इति भाष्यार्थः॥

६ **विशेषत्वादिति**। एतेनोभयत्र सामान्यपरत्वस्यैव दर्शितत्वेन पौनरुक्त्यापरिहारादिदमयुक्तमित्यपास्तम्॥ छाया॥

७ गोपालकमानयेतिश्रुतवतः पांशुरपादस्योभयगतिः-किं संज्ञेयमुत यौगिकोऽर्थो विवक्षित इति भवति, अथवा यष्टिहस्तविषयं तात्पर्यं पांशुरपादः सम्यग्ग्रहीष्यतीति कैयटाद्यभिप्रायः। अत्र केचित्-उभयगतिस्तस्य भवतीति प्रकथनानन्तरं यष्टिहस्तविषयं तात्पर्यं ग्रहीष्यतीत्युक्तिर्न सम्यक्, किन्तूभयगतिप्रकारमेव भाष्यकार आह-**साधीय इति**। साधीयः-अध्यापयिष्यतीति वाक्यशेषज्ञानात् तात्पर्यं साधीयो ग्रहीष्यति, अथवा यष्टिहस्तविषयं तात्पर्यं ग्रहीष्यतीत्यर्थमाहुः॥

८ 'हस्तोऽसौ' इति इ. पाठः॥

९ **अन्येषां**-संयोगादीनाम्॥ एतेन न्यूनता निरस्ता॥ छाया॥

१० **वक्त्रिति**। इतीत्यादिः। तथा च विशिष्टार्थोऽयम्॥ एतेनास्य भाष्यस्य तदर्थकत्वाभावादेकशब्दस्यान्यत्रार्थस्य निवेशानौचित्याच्चायुक्तमिदमित्यपास्तम्॥ छाया॥

११ प्राग्वद्दूषयति—**इदमपीति**॥ छाया॥

( आक्षेपसाधकभाष्यम् )

**यथैव तर्ह्यर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे संप्रत्ययो भवति, एवमिहापि प्राप्नोति । जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति ॥**

( प्रदीपः ) **एवमिहापीति** । बह्वादय एवात्र संख्यात्वेन प्रकृता इति भावः ॥

( उद्योतः ) अत्र–शास्त्रे । **प्रकृताः**–बुद्धौ संनिहिताः ॥ अनेनात्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसंनिधिरेव **प्रकरणम्** ॥

( समाधानसाधकभाष्यम् )

**न यथा लोके तथा व्याकरणे । उभयगतिः पुनरिह भवति ॥**

( प्रदीपः ) **न यथा लोक इति** । संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तः, न त्वेकादिसंख्यानिरासाय । अधिकार्थप्रतिपत्त्यर्थत्वादिह संज्ञाकरणस्य ॥

( उद्योतः ) **संज्ञात्वेन विनियुक्त इति** । ज्ञापिताज्ञातशक्तिक इत्यर्थः ॥ अत एव न नियमार्थतेत्याह—**न त्विति** । तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाभावः सूचितः ॥ **इहे**-संख्याप्रदेशे, **अधिकार्थे**त्यादिनाऽन्वेति ॥ भाष्ये–**न यथेत्यादि** । व्याख्यातृपरंपरावगतवक्तृतात्पर्यानुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थ **इत्यन्ये** ॥

( उभयगत्युदाहरणभाष्यम् )

**अन्यत्रापि, नावश्यमिहैव ।**

**तद्यथा–"कर्तुरीप्सिततमं कर्म" इति कृत्रिमा कर्मसंज्ञा । कर्मप्रदेशेषु चोभयगतिर्भवति—"कर्मणि द्वितीया" इति कृत्रिमस्य ग्रहणम्, "कर्तरि कर्मव्यतिहारे" इत्यकृत्रिमस्य ॥**

( प्रदीपः ) **कर्मणि द्वितीयेति** । ङ्याप्प्रातिपदिकादनभिहिते कर्मणि संख्यायां द्वितीया विधीयते । न च क्रियायाः संख्या संभवतीति सामर्थ्यात्कारकग्रहणम् । 'कर्तरि कर्मव्यतिहारे' इत्यत्र धातोः साक्षात् क्रियायां वृत्त्या क्रियाया एव ग्रहणम् ॥

( उद्योतः ) **कर्मणि संख्यायामिति** । कर्मगतसङ्ख्यायामित्यर्थः ॥ **न चेति** । तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्ययोगादिति भावः ॥ यद्यपि **रूपबादि**सूत्रस्थभाष्यादेकत्वं क्रियायामस्ति, तथापि द्वित्वाद्यभाव इति तात्पर्यम् ॥ **कारकम्**–शक्तिमद्द्रव्यम् ॥ **साक्षात्क्रियाया**मित्यस्य क्रियायामेवं, न तु कर्मकारके इत्यर्थः । अन्यथा **साक्षात्**पदप्रयोजनं चिन्त्यं स्यात् । न हि धातोः परंपरयाऽपि कारके वृत्तिरस्ति येन तद्व्यावृत्त्या चारितार्थ्यं स्यादित्याहुः ॥

( उभयगत्युदाहरणभाष्यम् )

**तथा–"साधकतमं करणम्" इति कृत्रिमा करणसंज्ञा । करणप्रदेशेषु चोभयगतिर्भवति—"कर्तृकरणयोस्तृतीया" इति कृत्रिमस्य ग्रहणम्, "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इत्यत्राकृत्रिमस्य ॥**

( प्रदीपः ) **कण्वमेघेभ्यः करण इति** । तव्यादिप्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते, क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्त इति सामर्थ्यात् क्रियाग्रहणम् ॥

( उद्योतः ) **धातुसंज्ञा**–क्यङन्तस्य 'सनाद्यन्ता' इत्यनेन ॥ **साधने**–कारके तव्यादयः, अतः कारकापेक्षितक्रियावाचिन एवोत्पद्यन्त इत्यन्वयः ॥

( उभयगत्युदाहरणभाष्यम् )

**यथा–"आधारोऽधिकरणम्" इति कृत्रिमाऽधिकरणसंज्ञा । अधिकरणप्रदेशेषु चोभयगतिर्भवति– "सप्तम्यधिकरणे च" इति कृत्रिमस्य ग्रहणम्, "विप्रतिषिद्धं चानधिकरणवाचि" इत्यकृत्रिमस्य ॥**

( प्रदीपः ) **विप्रतिषिद्धमिति** । द्वन्द्वावयवानां शक्त्यनभिधायित्वादधिकरणं द्रव्यं गृह्यते ॥

( वार्तिकोक्ताक्षेपे द्वितीयसमाधानभाष्यम् )

**अथवा–नेदं संज्ञाकरणम् । तद्वदतिदेशोऽयम्, बहुगणवतुडतयः संख्यावद्भवन्तीति ॥**

( प्रदीपः ) **तद्वदतिदेशोऽयमिति** । संख्याकार्याति-

---

१ अनेन–'प्रकृता' इत्यनेन ॥ तदर्थमाह—**बुद्धीति** ॥ छाया ॥

२ यथा लोके प्रकरणात्कृत्रिमस्य ग्रहणं भवति तथा व्याकरणे न, **इह** पुनरुभयगतिर्भवतीत्यर्थः ॥ कैयटस्तु संज्ञाशास्त्राणां नियमार्थत्वमेव कृत्रिमाकृत्रिमन्यायबीजमिति मन्यते । तथाच संख्यासंज्ञासूत्रस्याधिकार्थप्रतिपत्त्यर्थत्वान्नियमानुपपत्तौ संख्याविषये न्यायानुपस्थितिः । अतो भाष्ये—**इह**- संख्यासंज्ञासूत्र उभयगतिरिति तदभिप्रायः ॥ नागेशभट्टाश्च 'अर्थात्प्रकरणाद्वा' इतिभाष्यात् प्रकरणं कृत्रिमाकृत्रिमन्यायबीजमिति **इह**–व्याकरणे इत्यर्थं मन्यन्ते । तदाहोद्योते–**इत्यन्ये इति** ॥

३ सिद्धान्तरीत्याह—**ज्ञापितेति** ॥ प्रागुक्तासांगत्यदृढीकरणायाह—**तुल्येति** ॥ **मात्रं**–कार्त्स्न्ये ॥ यथाश्रुतासंगतेराह—**इहेत्यादि** ॥ पक्षद्वयेऽपि कैयटासंगतेराह—**भाष्ये नेति** ॥ छाया ॥

४ प्रदीपोक्त इहेत्यस्य शास्त्रे इत्यर्थभ्रमवारणायाह–**इह-संख्याप्रदेश इति** । शास्त्रे वृद्ध्यादिसंज्ञाकरणं नाधिकार्थप्रतिपत्त्यर्थं संख्यासंज्ञाकरणं चाधिकार्थप्रतिपत्त्यर्थमित्याशयः प्रदीपस्य ॥

५ संख्यासंज्ञायामेवोभयगतिरिति भ्रमवारणायाह–**अन्यत्रापीति** ॥

६ प्रदीपस्य साधारण्येऽपि सिद्धान्तमतमाह—**कर्मगतेति** ॥ छाया ॥

७ भाष्यान्तरविरोधं परिहरति—**यद्यपीति** ॥ छाया ॥

८ शक्तिग्रहे दोषतादवस्थ्यादाह—**शक्तिमदिति** ॥ छाया ॥

९ साक्षादर्थमाह—**एवेति** । निपातानामनेकार्थत्वात् ॥ तद्व्यवच्छेद्यमाह—**न त्विति** ॥

१० वैपरीत्यशङ्कानिरासायाह—**साधन इति** ॥ तदर्थमाह—**कारके इति** ॥ च एवार्थ इत्याह—**न एवेति** ॥ छाया ॥

११ भाष्ये **तद्वदिति** षष्ठीतत्पुरुषः । तच्छब्देन संख्या एकादिका, मतुपा कार्यम् । तदाह—**संख्याकार्येति** । प्राधान्यादिति भावः ॥ संभवादाह—**यदि हीति** । एतेन वृद्ध्यादौ तथा सत्त्वेऽप्यतिदेशादर्शनादिदं चिन्त्यमित्यपास्तम् । सति संभवे तथाऽङ्गीकारात् । अन्वर्थसंज्ञावदेतस्यापि तत्फलत्वस्य सुवचत्वाच्च ॥ व्याख्यानयुक्त्यपेक्षयाऽस्याः सुन्दरत्वाच्च ॥ छाया ॥

देशोऽयमित्यर्थः । यदि हि संज्ञा स्यात् टि घु-भादिसंज्ञावदेकाक्षरा क्रियेत । तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयति ॥

( उद्योतः ) एवं सर्वसंज्ञाविषये समाधाय प्रकृतविषये समाधानान्तराण्याह—अथवेति-( भाष्ये ) ॥

( आक्षेपभाष्यम् )

**स तर्हि वतिनिर्देशः कर्तव्यः ॥**

( समाधानभाष्यम् )

**न कर्तव्यः ॥**

( आक्षेपसाधकभाष्यम् )

**न ह्यन्तरेण वतिमतिदेशो गम्यते ॥**

( आक्षेपबाधकभाष्यम् )

**अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा–'एष ब्रह्मदत्तः' अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यसंख्यां संख्येत्याह संख्यावदिति गम्यते ॥**

( उद्योतः ) ब्रह्मदत्त इत्युक्तिविषयस्याब्रह्मदत्तत्वं स्फोरयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति—**एष ब्रह्मदत्त इति ॥ असंख्यां संख्येत्याहेति** । नियतविषयपरिच्छेदहेतुर्हि सङ्ख्या । एवंच बहुत्वादेरसङ्ख्यात्वमिति भावः ॥ बहुत्वं हि त्र्यादिसङ्ख्याव्यापकमखण्डोपाधिरूपम् ॥

( वार्तिकोक्ताक्षेपे तृतीयसमाधानभाष्यम् )

**अथवा—आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येकादिकायाः संख्यायाः संख्याप्रदेशेषु संप्रत्यय इति । यदयं "संख्याया अतिशदन्तायाः कन्" इति तिशदन्तायाः प्रतिषेधं शास्ति ।**

**कथं कृत्वा ज्ञापकम् ?**

**न हि कृत्रिमा त्यन्ता शदन्ता वा संख्याऽस्ति ॥**

( प्रदीपः ) **अथवेति** । गुरुसंज्ञाकरणादेकादयः संख्याशब्देन प्रदेशेषु न त्यज्यन्त इति लिङ्गेनाप्यनुमीयत इत्यर्थः ॥

( उद्योतः ) गुर्विति । नन्वतिशदन्ताया इति लिङ्गात्कन्विधौ कृत्रिमा न गृह्येतेति चेन्न । शास्त्रबाधापेक्षया उभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः ॥

( समाधानबाधकभाष्यम् )

**ननु चेयमस्ति डतिः ॥**

( समाधानसाधकभाष्यम् )

**यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति ॥**

( संपूर्णसूत्रज्ञापकताभ्युपगमभाष्यम् )

**यच्चापि त्यन्तायाः प्रतिषेधं शास्ति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्-डत्यर्थमेतत् स्यात्-इति ॥**

( समाधानभाष्यम् )

**"अर्थवद्ग्रहणे नानर्थकस्य" इति अर्थवतस्तिशब्दस्य ग्रहणम् । न च डतेस्तिशब्दोऽर्थवान् ॥**

( प्रदीपः ) **अर्थवत इति** । ननूभयसंभवे-इयं परिभाषोपतिष्ठते । डत्यन्ता च कृत्रिमाऽस्ति, डतेश्च तिशब्दोऽनर्थक एवेति तस्यैव निषेधः स्यादित्यज्ञापकस्त्यन्तायाः प्रतिषेधः । नैष दोषः । **'अतिशदन्तायाः'** इत्युच्चारणकाल एवार्थवतस्तिशब्दस्य ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव प्रतिषेधस्य ॥

( उद्योतः ) **नैष इति** । 'अतिशदन्तायाः' इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन सङ्ख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोः संभवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात्संख्यापदार्थान्वयवेलायां जायमानानुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यत इति भावः । एतत्पक्षद्वये महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तम्, तन्मूलकपक्षान्तरस्याग्रे वक्ष्यमाणत्वादित्यन्ये ॥

( चतुर्थं समाधानभाष्यम् )

**अथवा महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥**

---

१ **अथवेतीति** । अथवेत्यादीत्यर्थः ॥ छाया ॥

२ **ते मन्यामह इति** । एतत्पदनिर्दिष्टमर्थमब्रह्मदत्तं प्रत्यक्षीकृत्याब्रह्मदत्तं ब्रह्मदत्त इत्याहेति ज्ञानवन्तस्ते वयं मन्यामह इत्यर्थः । अत्र वयमिति कर्तृपदमध्याहार्यम् । **ते**–तादृशज्ञानवन्तः ॥

३ **बहुत्वादेरिति** । तत्त्वाभावात् ॥ छाया ॥

४ नन्वत्र गुरुसंज्ञाकरणादित्यस्य नोपयोगोऽत आह—**नन्वतीति ॥ औचित्यादिति** । गुरुसंज्ञाकरणं चात्र बीजम् ॥ एतेनास्यार्थस्याथवामहतीति वक्ष्यमाणत्वादत्रानौचित्याज्ज्ञापकस्य गुरुसंज्ञासहायानपेक्षणाच्चेदं चिन्त्यमित्यपास्तम् ॥ छाया ॥

५ **इयं**–कृत्रिमा त्यन्ता संख्या **डतिः**–डत्यन्ताऽस्तीत्यर्थः ॥

६ **बहुव्रीहीति** । द्वन्द्वगर्भेत्यादिः ॥ छाया ॥

७ प्रदीपं दूषयति-**एतदिति** । व्याख्यानादुक्तहेतोश्चोक्तार्थसिद्धेरिति भावः ॥ छाया ॥ **एतत्पक्षद्वये**–अथवा नेदं संज्ञाकरणं, अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयतीति भाष्योक्तपक्षद्वये कैयटेन महासंज्ञाया अनुग्राहकत्वमुक्तं तदयुक्तमिति भावः ॥

८ **अथवा महतीयमिति** । एतत्पक्षोपपादने प्रदीपोद्द्योतयोर्मतभेदः । 'संख्या' इति प्रथमसूत्रं संख्यानकरणानां सर्वेषामपि संख्यासंज्ञां विधत्ते, अन्वर्थसंज्ञासामर्थ्यात् । ततश्च 'बहुगणवतुडतयः', एतच्च नियमार्थम् । तेन भूर्यादिशब्दानां संघाद्यर्थवाचिबह्वादीनाञ्च संज्ञा नेति प्रदीपाशयः ॥ एकमेव सूत्रम्, अन्वर्थसंज्ञाबलात् लोकप्रसिद्धानां केवलयोगार्थग्राहितानामेकादीनामपि संख्यावाचिबह्वादिवत्संज्ञेति । भूर्यादिशब्दानाञ्च संख्यानकरणत्वाभावादेवाप्राप्तिः, संघादिवाचिनां बह्वादीनामपि तथैव । अत एव 'असंख्यां संख्येत्याह' इति भाष्यमुपपद्यते । यद्यपि 'एकादिकया चापि संख्यायते' इति अपिशब्देन बह्वादिशब्दैरपि संख्यायत इत्याशयो भाष्यकृतः प्रतीयते, तथापि असंख्यां संख्येत्याभिभाष्याद्बह्वादयो न संख्यानकरणा इत्येवावगन्तव्यम् । तथा च 'एकादिकया चापि' इति भाष्ये चापिशब्दौ वाक्यालङ्कार इति उद्द्योतकाराभिप्रायः ॥

कुत एतत् ?

**लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत, संख्यायतेऽनया-संख्येति । एकादिकया चापि संख्यायते ॥**

( प्रदीपः ) **अथवेति** । ननु महत्याः संज्ञायाः करणात्तदर्थानुगतानामुपात्तानामेव संज्ञिनां भवतु संज्ञा । यथा सर्वादीनामेव संज्ञा, न त्वधिकानाम् । तेन बहुगणशब्दयोः सङ्ख्यावैपुल्यवाचिनोः संज्ञा मा भूत्, एकादीनां तु कथं स्यात्? नैष दोषः । इहान्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्व आक्षिप्यते । तेनैकादीनां तावत् ग्रहणं भवति, पश्चात् **'बहुगणवतुडति'** इति भूर्यादिनिवृत्त्यर्थं नियमार्थं व्याख्यायते। अत एव सङ्ख्यावैपुल्यवृत्त्योर्बहुगणशब्दयोः संज्ञा न भवति । तद्वदतिदेशपक्षेऽपि परस्परसाहचर्यात् संख्यावाचिनोरेव भूर्यादिनिवृत्तये नियमायातिदेशः क्रियत इत्यतिप्रसङ्गो न भवति ॥

( उद्योतः ) भाष्ये—**संज्ञा च नामेति** । **नाम**—प्रसिद्धमेतत्, यतोऽन्यल्लघीयो न भवति सा संज्ञेति ॥ **तदर्थानुगतानामिति** । सङ्ख्यानकरणत्वसमानाधिकरणसङ्ख्याशब्दवदभिन्ना बह्वादय इत्यर्थादिति भावः ॥ **कथं स्यादिति** । महासंज्ञाकरणस्य चरितार्थतया **कृत्रिमन्याय**बाधे मानाभावादिति भावः ॥ **सर्व इति** । नियतानियतसङ्ख्यावाचीत्यर्थः ॥ **आक्षिप्यत इति** । 'सङ्ख्या' इति विभक्तसूत्रे इति शेषः । एवंच सङ्ख्यानकरणीभूताः सङ्ख्यासंज्ञका इत्यर्थः ॥ संज्ञायाः संज्ञ्याकाङ्क्षतया तद्वाचकं पदमुपस्थितान्वर्थवाचकमेव कल्प्यत इत्ययमेवात्राक्षेप इति भावः ॥ **नियमार्थमिति** । 'बहुगण' इति द्वितीयसूत्रे सङ्ख्येति वर्तते । अनियतसङ्ख्यावाचिनां चेद्बह्वादीनामेवेति भावः ॥ **अत एवेति** । अन्वर्थत्वाश्रयणादेवेत्यर्थः ॥ **संज्ञा न भवतीति** । प्राप्तेरेवाभावादिति भावः ॥ **सङ्ख्यावाचिनोरेवेति** । बहुगणयोरित्यर्थः ॥ **नियमायेति** । नियमफलक इत्यर्थः ॥ **परे तु**—परस्परसाहचर्यात्सङ्ख्याव्यापकार्थवाचिनोरेव बहुगणयोर्ग्रहणं, न तु सङ्ख्यावैपुल्यवचनयोरिति व्यर्थाऽन्वर्थसंज्ञा । तस्मात्प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्यापि ग्रहणार्थं महती संज्ञेति भाष्याशयः ॥ **असङ्ख्यां सङ्ख्येत्याहे**तिभाष्येण बह्वादिषु सङ्ख्यापदयोगार्थाभावबोधनाच्चेति योगविभागो व्यर्थः ॥ **'एकादिकया चापि सङ्ख्यायते'** इत्यस्य एकादिकया च संख्यायते साऽपि सङ्ख्याप्रदेशेषु यथा गृह्येतेति महासंज्ञाकरणमित्यर्थः । **च**स्तु वाक्यालङ्कारे । उभावपि वा वाक्यालङ्कार एव । **यद्वा** बह्वादिकयाऽपि सङ्ख्यायते स्वव्याप्यत्रित्वादिद्वारेत्यर्थः ॥ वत्वन्तडत्यन्तयोर्यावदादिशब्दकतिशब्दयोर्यद्यपि साक्षात्सङ्ख्यानकरणीभूतार्थप्रतिपादकत्वमुपपादयितुमशक्यम्, तथापि कतीत्यत्र सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकत्वेन तत्त्वम् । एवं वत्वन्तेऽप्यूह्यमित्याहुः ॥

**( 'उत्तरार्थं च' इति वार्तिकोक्तप्रयोजनप्रत्याख्यानभाष्यम् )**

**उत्तरार्थेन चापि नार्थः संख्याग्रहणेन । इदं प्रकृतमुत्तरत्रानुवर्तिष्यते ॥**

**( आक्षेपभाष्यम् )**

**इदं वै संज्ञार्थम्, उत्तरत्र च संज्ञिविशेषणेनार्थः । न चान्यार्थं प्रकृतमन्यार्थं भवति ॥ न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति । न हि गोधा सर्पन्ती सर्पणादहिर्भवति ॥**

( प्रदीपः ) **संज्ञिविशेषणेनार्थ इति** । **'ष्णान्ता'** इत्यनेन विशिष्टं संज्ञिनं प्रतिपादयितुमुपयोग इत्यर्थः ॥ **न चान्यार्थमिति** । एकशब्दत्वदर्शन इति भावः ॥ भवतु तर्हि प्रतियोगं शब्दभेद इत्याह—**न खल्वपीति** । यथा गोधा देशान्तरगमनमात्रेण गोधात्वं न जहाति, एवं शब्दोऽपि रूपान्तरं न गृह्णातीत्यर्थः ॥

( उद्योतः ) भाष्ये-**संज्ञार्थमिति** । संज्ञा शब्दस्वरूपं, तदर्थकमित्यर्थः । संज्ञिनिरूपितसङ्ख्याशब्दनिष्ठशक्त्यवगमार्थं स्वरूपपरमिति भावः ॥ ननु **ष्णान्तेत्यनेन** सङ्ख्या विशेष्यत इति संज्ञिविशेषणं सङ्ख्याग्रहणमित्ययुक्तमत आह—**ष्णान्तेति** । भाष्ये **संज्ञी**=षट्संज्ञासंज्ञी **विशेष्यते**=स्वेतरव्यावृत्ततया प्रतिपाद्यते येनेत्यर्थः ॥ ननु स्वरितत्वबलेनानुमीयमानस्य शब्दान्तरत्वाच्छब्दभेदेनार्थभेदस्य सत्त्वेन **न चान्यार्थ**मित्ययुक्तमत आह—**एकेति** । यस्य स्वरितत्वं प्रतिज्ञातं तदेवानुवर्तते, न तु तज्जातीयं शब्दान्तरमिति भावः ॥ अर्थाधिकार एव चाभ्यर्हितः, तदर्थस्य चायोग्यत्वादिहासंबन्ध इति भावः ॥ **इत्याहेति** । इत्याशङ्क्याहेत्यर्थः ॥ भाष्ये—**न खल्वपीति** । प्रकृतम**नुवर्तनात्**—देशान्तरगमनादन्यद्भवतीति न खलु-इत्यन्वयः ॥

१ तदर्थमाह—**यत इति** ॥ छाया ॥

२ एकेनोभयालाभादाह—**संख्येति विभक्तेति** ॥ अन्यथाऽप्युपपत्त्या मुख्याक्षेपासंभवादाह—**संज्ञाया इति** । **वर्तते**—अनुवर्तते ॥ छाया ॥

३ तादर्थ्ये चतुर्थीत्याऽऽह—**नियमेति** ॥ छाया ॥

४ कैयटं दूषयति—**परे त्विति** ॥ भाष्यं योजयति—**तस्मादित्यादिना** ॥ छाया ॥

५ लाघवादावश्यकतयाऽऽह—**उभावपीति** ॥ **चापी** इत्यर्थः॥छा.॥

६ अपिं सफलयति—**यद्वेति** ॥ छाया ॥

७ शङ्कते—**यद्यपीति** । **साक्षादि**त्यस्य प्रतिपादकत्वेऽन्वयः ॥ छाया ॥

७ अत्र द्विरुपात्तोऽर्थशब्दो न पुनरुक्तार्थ इतिपूर्ववत् 'इहार्थेन तावन्नार्थः संख्याग्रहणेन' इतिवदवगन्तव्यम् ॥

९ **इदं**—विधेयसमर्पकं वादातीतं संख्यापदम् ॥

१० **न च**-नहि ॥ छाया ॥

११ 'प्रतिज्ञातं' इति ज. पाठः ॥

१२ एवं कैयटतात्पर्यमुक्त्वा भाष्याशयान्तरमाह—**अर्थेति** । अत एव च ॥ **भाव इति** । भाष्यस्येति भावः ॥ छाया ॥

१३ **अन्वय इति** । भाष्येऽपिस्तु समुच्चय इति भावः ॥ छाया ॥

यथेति । सर्पणस्योभयत्र तुल्यत्वेन प्रसक्तमहित्वं गोधाया वार्यत इति नार्थः, सर्पणस्याहिशब्दप्रवृत्तिनिमित्तत्वाभावात्; किं तु देशान्तरगमनं नान्यत्वापादकमित्यर्थ इति भावः ॥ रूपान्तरम्-अर्थभेदम् ॥

( आक्षेपप्रथमयुक्तिसमाधानभाष्यम् )

**यत्तावदुच्यते-'न चान्यार्थं प्रकृतमन्यार्थं भवति' इति ।**

**अन्यार्थमपि प्रकृतमन्यार्थं भवति । तद्यथा-शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते ॥**

( प्रदीपः ) **अन्यार्थमपीति** । पदार्थानां शक्तिवैचित्र्यात् ॥

( उद्द्योतः ) **पदार्थानामिति** । द्वन्द्वः ॥ **शक्तिवैचित्र्यात्**-अनेकशक्तित्वादित्यर्थः ॥ एवंच पूर्वत्र तया शक्त्या स्वरूपपरस्यापि उत्तरत्रान्यया शक्त्या योग्यतावशादर्थपरत्वे बाधकाभावः । शब्दाधिकारोऽत्र लक्ष्यानुरोधादाश्रीयत इति भावः ॥

( आक्षेपद्वितीययुक्तिसमाधानभाष्यम् )

**यदप्युच्यते-'न खल्वप्यन्यत् प्रकृतमनुवर्तनादन्यद्भवति । नहि गोधा सर्पन्ती सर्पणादहिर्भवति' इति ।**

**भवेत् द्रव्येष्वेतदेवं स्यात् । शब्दस्तु खलु येन येन विशेषेणाभिसंबध्यते तस्य तस्य विशेषको भवति ॥**

( प्रदीपः ) **शब्दस्त्विति** । स्वरितत्वेन वाक्यान्तरे शब्दान्तरं वाक्यार्थानुग्राहिवस्तुप्रतिपादनयोग्यमनुमीयते । सादृश्यात्तु तत्त्वाध्यवसाय इत्यर्थः ॥

( उद्द्योतः ) [ भाष्ये ] **भवेत् द्रव्येष्वेतदेवं स्यादिति** । **स्यादिति** संभावनायां लिङ् । **भवेदिति** प्रार्थनायाम् । द्रव्ये विषये पूर्वोक्तार्थकर्तृका संभाविता सत्ता भवत्वित्यर्थः ॥ शब्दभेदनयेऽपि न क्षतिरित्याह— **शब्दस्त्विति** ॥ **येन येन विशेषेति** । विशेष्यत इति **विशेषः**=परिच्छेद्यम्, **विशेषकः**=परिच्छेदकः, तत्परिच्छेदकार्थवानन्य एव शब्दो भवतीत्यर्थः ॥ तदुपपादयति— **स्वरितत्वेनेति** ॥

( समाधानयुक्त्यन्तरभाष्यम् )

**अथवा-सापेक्षोऽयं निर्देशः क्रियते । न चान्यत्किंचिदपेक्ष्यमस्ति । ते संख्यामेवापेक्षिष्यामहे ॥**

( प्रदीपः ) **सापेक्षोऽयमिति** । स्त्रीलिङ्गेन निर्देशः कृतः । तत्र प्रकृतत्वादन्यपदार्थत्वेन संख्या स्वरितत्वेन विनाऽप्यपेक्ष्यत इत्यर्थः ॥

( १८० आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अध्यर्धग्रहणं च समासकन्विध्यर्थम् ॥ * ॥

( भाष्यम् )

**अध्यर्धग्रहणं च कर्तव्यम् ।**

**किं प्रयोजनम् ?**

**'समासकन्विध्यर्थम्' । समासविध्यर्थम्, कन्विध्यर्थं च ॥ समासविध्यर्थं तावत्-अध्यर्धशूर्पम् । कन्विध्यर्थम्—अध्यर्धकम् ॥**

( प्रदीपः ) **अध्यर्धग्रहणं चेति** । वार्तिके संख्याग्रहणं कर्तव्यत्वेन स्थितम् । तदपेक्षया समुच्चयार्थश्चशब्दः । विध्यर्थं चेदं, अध्यर्धशब्दस्य त्रिभागचतुर्भागादिशब्दवदसंख्यावाचित्वात् । अर्धशब्दश्चैकदेशवाची न संख्यावाची, एकदेशादिशब्दवत् । तस्याधिशब्देन समासे कृते यौगिकोऽर्थः प्रतीयते, न संख्या ॥ **अध्यर्धशूर्पमिति** । अध्यर्धेन शूर्पेण क्रीतमिति 'दिक्संख्ये' इत्यनुवर्तमाने 'तद्धितार्थ' इति समासः । ततः 'शूर्पादञन्यतरस्याम्' इति अञष्ठञो वा 'अध्यर्धपूर्व' इति लुक् ॥ **अध्यर्धकमिति** । 'संख्याया अतिशदन्तायाः कन्' इति कन् ॥

( उद्द्योतः ) अध्यर्धस्यासंख्यावाचित्वमुक्तमुपपादयति—**अर्धशब्दश्चेति** ॥

( १८१ आक्षेपप्रयोजनवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ लुकि चाग्रहणम् ॥ * ॥

( भाष्यम् )

**लुकि चाध्यर्धग्रहणं न कर्तव्यं भवति—"अध्यर्धपूर्वात् द्विगोर्लुगसंज्ञायाम्" इति । "द्विगोः" इत्येव सिद्धम् ॥**

( प्रदीपः ) **द्विगोरित्येव सिद्धमिति** । 'समासकन्विध्यर्थम्' इति च संबन्धसामान्ये षष्ठी । तेन समासे विधीयमाने समासनिमित्ते चान्यस्मिन् कार्ये विधीयमान इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते ॥

**अन्ये त्वाहुः**-अध्यर्धशब्दः संख्यावाच्येव । तथाहि गण्यते—एकोऽध्यर्धः, द्वौ-अध्यर्धौ, अध्यर्धतृतीया इति । तन्मते नियमार्थ—

---

१ उपस्पर्शोऽत्राचमनादिः ॥ छाया ॥

२ स्वोक्तयुक्तेः समाधिमाह—शब्दाधीति ॥ छाया ॥

३ एतदेवमित्यस्यार्थः—पूर्वोक्तेति ॥ छाया ॥

४ भाष्ये 'तस्य' इति सकृदेव पाठः । तद्धनयन्नाह—तत्परीति ॥ छाया ॥ इदानीमुपलभ्यमानप्रामाणिकपुस्तकेषु 'तस्य तस्य' इति द्विरावृत्तः पाठो दृश्यते ॥

५ 'क्षोऽयं ष्णान्ता इति निर्देशः' इति मुद्रितपाठः । आदर्शपुस्तकेषु नैवंविध इति नात्र संगृहीतः ॥

६ ते-वयमिति भावः ॥ छाया ॥

७ विनापीति । तथाच लौकिकोऽपेक्षालक्षणोऽधिकार इति भावः ॥ छाया ॥

८ समासेति । अभ्यर्हितत्वात्पूर्वनिपातः ॥ छाया ॥

९ 'अध्यर्धपूर्वात्' इति पाठ इति तद्धितशेखरे । 'अध्यर्धपूर्वद्विगोः' इति 'समाहारद्वन्द्वे सौत्रं पुंस्त्वम्' इति तत्र मनोरमा ॥ दाधिमथाः ॥

१० आहुरित्यरुचिसूचकम् ॥ सा च प्रसिद्धिविरोधरूपा ॥ छाया ॥

अध्यर्धशब्दस्यैव संख्यात्वेन ग्रहणं यथा स्यात्, सार्धादीनां मा भूदिति । वाक्यभेदेन च द्वितीयो नियमः । तस्य च समासकन्विध्यर्थं संख्यात्वं, न कार्यान्तरार्थमिति ॥

( उद्योतः ) ननु समासकन्सिद्धये विधीयमाना संज्ञा कथं लुको निमित्तमत आह—समासेति । समासपदेन द्विगुसमास एव, तस्यैव सङ्ख्यानिमित्तकत्वात् । तन्निमित्तकमपि द्विगुनिमित्तकमेवेत्याह—तेन द्विग्विति ॥

( १८२ आक्षेपवार्तिकम् ॥ ५ ॥ )

॥*॥ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः ॥*॥

( भाष्यम् )

अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यम् ।

किं प्रयोजनम् ?

समासकन्विध्यर्थमेव । समासविध्यर्थं कन्विध्यर्थं च । समासविध्यर्थं तावत्—अर्धपञ्चमशूर्पम् । कन्विध्यर्थम्—अर्धपञ्चमकम् ॥

( १८३ आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम् ॥ * ॥

( भाष्यम् )

अधिकग्रहणं चालुकि कर्तव्यम् ।

किं प्रयोजनम् ?

'समासोत्तरपदवृद्ध्यर्थम्' । समासविध्यर्थमुत्तरपदवृद्ध्यर्थं च । समासविध्यर्थं तावत्—अधिकषाष्टिकः, अधिकसाप्ततिकः ॥ उत्तरपदवृद्ध्यर्थम्—अधिकषाष्टिकः, अधिकसाप्ततिकः ॥

अलुकीति किमर्थम् ?

अधिकषाष्टिकः, अधिकसाप्ततिकः ॥

( प्रदीपः ) अधिकषाष्टिक इति । अधिकया षष्ट्या क्रीत इति संख्याविशेषणमधिकशब्दः, न संख्येति वचनम् । 'तद्धितार्थ' इति समासः । 'प्राग्वतेष्ठञ्' । 'अलुकि' इति वचनाल्लुकि कर्तव्ये संख्यासंज्ञा नास्तीति 'अध्यर्धपूर्व' इति लुङ्न भवति । ततः 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः ॥ ननु 'उत्तरपदवृद्ध्यर्थं' इति वचनाल्लुङ् न भविष्यति, किं 'अलुकि' इत्यनेन । नैतदस्ति, अर्हत्यर्थात् परेष्वर्थेषु यः प्रत्ययस्तस्य लुगभावात्तत्रैवोत्तरपदवृद्धिः स्यात् ॥

( उद्योतः ) भाष्ये—अधिकग्रहणं चेति । लुग्भिन्नसङ्ख्याकार्यसिद्ध्यर्थमधिकग्रहणं सङ्ख्यासंज्ञायां कर्तव्यमित्यर्थः ॥ नन्विति । ञ्णिदादिषु तद्विधानादिति भावः ॥ परेष्वर्थेष्विति । तमधीष्ट इत्यादिष्वित्यर्थः ॥

( १८४ आक्षेपप्रयोजनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ बहुव्रीहौ चाग्रहणम् ॥ * ॥

( भाष्यम् )

बहुव्रीहौ चाधिकशब्दस्य ग्रहणं न कर्तव्यं भवति । "संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये" इति । संख्येयेत्येव सिद्धम् ॥

( १८५ प्रत्याख्यानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ बह्वादीनामग्रहणम् ॥ * ॥

( भाष्यम् )

बह्वादीनां ग्रहणं शक्यमकर्तुम् ॥

( आक्षेपभाष्यम् )

केनेदानीं संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति ?

( प्रत्याख्यानसाधकभाष्यवार्तिकम् )

*ज्ञापकात् सिद्धम्* ॥

ज्ञापकं किम् ?

यदयं-"वतोरिड्वा" इति संख्याया विहितस्य कनो वत्वन्तादिटं शास्ति ॥

( आक्षेपभाष्यम् )

वतोरेव तज्ज्ञापकं स्यात् ॥

( समाधानभाष्यम् )

नेत्याह । योगापेक्षं ज्ञापकम् ॥ २३ ॥

( प्रदीपः ) ज्ञापकात्सिद्धमिति । एकादिवन्नियतसंख्यावाचित्वं बह्वादीनां नास्तीति ज्ञापकाश्रयः ॥ योगापेक्षमिति । अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न बोद्धव्यम्, किंतु योगान् अपेक्षत इति-योगापेक्षम् । यदयं 'बहुपूगगणसङ्घस्य तिथुक्' 'वतोरिथुक्' 'षट्कति' इति डटि परत आगमं शास्ति, तज्ज्ञापयति—भवति संख्याकार्यमिति ॥ २३ ॥

(उद्योतः) नियतसङ्ख्यावाचित्वमिति । नियतविषयपरिच्छेदहेतुत्वरूपसङ्ख्यावाचित्वमित्यर्थः ॥ भाष्ये— यदयमिति । न च वैपुल्यादिवाचिनामपि संख्याकार्यापत्तिः, संख्यापदार्थसंबन्धिबह्वादि-

१ निमित्तकमेवेति । एतेन "द्विगुसंज्ञानिमित्तकस्य लुकः समाससंख्यासंज्ञानिमित्तत्वाभावादिदमयुक्तं" इत्यपास्तम् ॥

२ चः पूर्वसमुच्चये । प्रत्ययान्त इत्यस्य तदुत्तरपदक इत्यर्थः ॥ पूर्वोत्तरवदर्थासंभवात् संख्येयेत्यनुवृत्त्याह—संख्यासंज्ञ इति ॥ अनुवृत्तेराह—समासेति ॥ छाया ॥

३ वार्तिके कन्नप्युपलक्षणत्वेन ग्राह्य इत्याशयेनाह—लुग्भिन्नेति ॥ एतेन द्विगुसंज्ञामात्रस्य तत्रापेक्षया लुकि संख्यासंज्ञानिषेधेऽपि लुकोऽनिवारणादलुकीत्यादि चिन्त्यमित्यपास्तम् ॥ छाया ॥

४ सूत्रं प्रत्याचष्टे—बह्वादीनामिति ॥ छाया ॥

५ यथाश्रुतासंगतेराह—नियतविषयेति ॥ छाया ॥

ग्रहणज्ञापनेन चरितार्थस्य सर्वथा तदसंबन्धिवैपुल्यादिवाचकग्रहणज्ञापने सामर्थ्याभावात् । पूगादिभ्यो डडर्थं **बहुगणेति** सूत्रे कृतेऽपि ज्ञापकावश्यकत्वमिति भावः ॥ केचित्तु 'वतोरिड्वा' इत्यनेन संख्यानकरणत्वाभाववतामप्यन्येषां प्रयोगेषु दृश्यमानसंख्याकार्याणां संख्याकार्यं ज्ञाप्यते । तेनाधिकादीनामपि सिद्धं, तदाह—**योगापेक्षमिति** । प्रयोगापेक्षमित्यर्थः । एतेन पूगादिभ्यः शसादिप्रसङ्गोऽपि वारित इत्याहुः ॥ २३ ॥

( २३ षट्संज्ञासूत्रम् ॥ १ । १ । ५ आ. १२ )

## ष्णान्ता षट् ॥ १ । १ । २४ ॥

( अनिष्टापत्तीष्टानुपपत्तिनिराकरणाधिकरणम् )

( १८६ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ षट्संज्ञायामुपदेशवचनम् ॥ * ॥

( भाष्यम् )

**षट्संज्ञायामुपदेशग्रहणं कर्तव्यम् । उपदेशे षकारनकारान्ता संख्या षट्संज्ञा भवतीति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

**शताद्यष्टनोर्नुम्नुडर्थम् । शतानि, सहस्राणि । नुमि कृते "ष्णान्ता षट्" इति षट्संज्ञा प्राप्नोति, उपदेशग्रहणान्न भवति ॥**

**अष्टानामित्यत्राऽऽत्वे कृते षट्संज्ञा न प्राप्नोति, उपदेशग्रहणाद्भवति ॥**

( प्रदीपः ) **ष्णान्ता०** ॥ २४ ॥ **षट्संज्ञायामिति** । प्रकृतिप्रत्ययविभागेन प्रतिपादनं गुणैः प्रापणमुपदेशः । तेन प्रकृतिप्रत्ययाद्युपदेशे षकारनकारान्ता या संख्या सा षट्संज्ञेत्यर्थः ॥ **नुम्नुडर्थमिति** । अर्थशब्दः प्रयोजनवाची । तत्र नुमि 'शतानि' इत्यादौ षट्संज्ञानिवृत्तिः प्रयोजनम्, नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम् ॥

**अष्टानामिति** । परत्वान्नित्याच्चात्वे कृते नुटोऽप्राप्तिः । कार्यकालत्वात्संज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम् ॥

( उद्द्योतः ) **ष्णान्ता षट्** ॥ २४ ॥ स्वरूपप्रतिपत्त्यर्थाद्योच्चारणस्यान्यत्रोपदेशत्वप्रसिद्धेरुपदेशग्रहणे पञ्चादिषु न स्यादत आह—**प्रकृतीति** । प्रकृतिप्रत्ययविभागेन प्रतिपादनरूपं यत् गुणैः प्रापणं तदुपदेशपदेनात्र गृह्यत इत्यर्थः ॥ एतदभिप्रायेणैवोपदेशेऽजिति सूत्रे वक्ष्यति—**'संकीर्णावुद्देशोपदेशौ'** इति ॥ **प्रत्ययाद्युपदेश इति** । आदिनाऽऽगमः । यथा सप्तन्नादौ **सप्यशूभ्यां तुट्चेति** प्रकृत्यादिभिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्ता सङ्ख्या निष्पन्ना भवति सेत्यर्थः ॥ यद्यपि शतानीत्यादावपि नुमागमोपदेशेन नान्तसङ्ख्यानिष्पत्तिरस्ति तथापि विभक्त्युत्पत्त्यवधिभूतप्रातिपदिकस्वरूपनिष्पादकानामेव तेषां ग्रहणम् । न तु विभक्तिनिमित्तकानामपि, बहिरङ्गत्वादिति भावः ॥ **तत्रेति** । **नुम्नुटोरर्थः**=प्रयोजनं यस्येति बहुव्रीहिरिति भावः ॥ नन्वन्तरङ्गत्वात्पूर्वमेव षट्त्वं प्रवृत्तमात्वेऽपि बहिरङ्गतया आत्वस्यासिद्धत्वान्न निवर्त्स्यतीत्यत आह—**कार्यकालेति** ॥

१ ननु ज्ञापकेन सूत्रप्रत्याख्यानं न चार्वत आह—**पूगेति** ॥ एतेनेदं प्रत्याख्यानमयुक्तं पूगादीनामपि तेन तत्प्रसङ्गादिति निरस्तम् ॥ छाया ॥

२ कैयटापेक्षयाऽऽशयान्तरमाह—**केचित्त्विति** ॥ **शसादीति** । **संख्यैकेतीति** भावः ॥ एतेन—**'अस्य'** इत्यादि चिन्त्यम्, प्रकृतसूत्रापेक्षयैव सुयोजत्वात् । **'नेत्याह । योगापेक्षम्'** इति भाष्यासंगतेश्चेति निरस्तम् ॥ भाष्याक्षरास्वारस्यमत्रारुचिः ॥ छाया ॥

३ एतच्च सूत्रं भाष्ये प्रत्याख्यातम्—**'बहुपूगगणसंघस्य तिथुक्' 'वतोरिथुक्' 'षट्कतिकतिपयचतुरां थुक्'** इति सूत्रैर्डटि परे आगमा विधीयमाना बहुप्रभृतीनां डटो निर्वाहकं संख्यात्वं ज्ञापयन्तीति किमनेन सूत्रेण । ननु **बहुपूगगणसंघेत्यादौ** विशेषाश्रवणात्संघवैपुल्यवाचिनोरपि बहुगणशब्दयोः संख्याकार्यं स्यादिति चेत् ॥ न । अनियतसंख्यावाचिनोरप्येतयोः संख्याकार्यं भवतीत्येतावन्मात्रज्ञापनेन चरितार्थत्वे सति सर्वथा संख्यामप्रतिपादयतोरपि संख्याकार्यकल्पनस्य गौरवपरास्तत्वात् । भूर्यादीनां त्वनियतसंख्यावाचिनां ग्रहणं न भवति, नियतसंख्यावाचिनां पञ्चादीनामेव लोके संख्याशब्दत्वेन प्रसिद्धतरत्वात् । प्रसिद्धाप्रसिद्धयोः प्रसिद्धग्रहणस्य न्याय्यत्वात् ॥ नन्वेवमपि बहुगणयोरिव पूगसंघादीनामपि धाशस्कृत्वसुजादिसंख्याकार्यप्रसङ्गः । न च बहुगणयोः सामान्यापेक्षं ज्ञापकम्, पूगादीनां तु डड्विषयकमेवेति वाच्यम् । अनुपपत्तेः समानत्वैनैकसूत्रोपात्तत्वेन च वैषम्ये बीजाभावादिति चेत् । मैवम् । लक्ष्यानुरोधेन क्वचित्सामान्यापेक्षं ज्ञापकं क्वचिद्विशेषापेक्षमित्याश्रयणात्तदनुरोधेन वैषम्यस्य सोढव्यत्वादिति दिक् ॥ इमां कुसृष्टिमसहमानेनैव सूत्रकृता सूत्रमिदं प्रणीतमिति परमार्थः ॥ श० कौ० ॥

४ **नुमिति** । नित्यसापेक्षत्वात्समासः ॥ छाया ॥ नुम्नुट्पदार्थस्य शताद्यष्टनोर्विषये साकांक्षत्वादर्थशब्देन समासो दुर्लभोऽत आह छायाकृत्-**नित्यसापेक्षत्वादिति** । नुम्नुटौ प्रयोजनमुपदेशवचनस्य न सम्भवतीत्यत उद्द्योते आह-**नुम्नुटोरर्थ इति** ॥

५ **तत्र**-तयोर्मध्ये ॥ छाया ॥

६ अन्यत्र प्रसिद्धस्य 'उपदेश'पदार्थस्यात्र ग्रहणाभावे हेतुमाह—**स्वरूपप्रतीति** । स्वरूपप्रतिपत्त्यर्थं यदाद्योच्चारणरूपमुपदेशस्तस्यात्र न ग्रहणमिति भावः ॥

७ यथाश्रुतासंगतेराह—**प्रकृतीति** ॥ छाया ॥

८ वक्ष्यमाणदोषवारणायाह—**प्रकृत्यादिभिरिति** ॥ छाया ॥

९ **न तु विभक्तीति** । एतेनेदं चिन्त्यम् । शतानीत्यत्रापि तथा सत्त्वेनातिप्रसङ्गावारणात । उपदेशपदस्य प्रसिद्धार्थपरत्वेन प्रातिपदिकोपदेशे इति सुवचत्वाच्चेति निरस्तम् ॥ छाया ॥

१० **प्रवृत्तमिति** । एतेन **'अन्तरङ्गानपि विधीन्बहिरङ्गो विधिर्बाधते'** इति भाष्यं संयोज्य कैयटोक्तं चिन्त्यम, **'षट्संज्ञा न'** इति भाष्याननुगुणत्वात् । संज्ञां विना नुटोऽप्राप्तेः । एवं तं बाधित्वाऽऽत्वप्रवृत्तौ परत्वादेर्हेतुत्वायोगात् कार्यकालमात्रेण संज्ञाया अन्तरङ्गत्वनिराकृत्यसंभवेन तद्भाष्यानुपपादनात् । यथोद्देश एव तदुपपत्तेश्चेति निरस्तम् ॥ छाया ॥

( प्रत्याख्यानभाष्यम् )

**उक्तं वा ।**

**किमुक्तम् ?**

**इह तावत्-शतानि सहस्राणीति 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति ॥**

**अष्टनोऽप्युक्तम् ।**

**किमुक्तम् ?**

***अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम्* इति ॥**

( प्रदीपः ) **अष्टनो दीर्घेति** । तत्र हि दीर्घग्रहणं 'अष्टसु' इति सुप उदात्तत्वनिवृत्त्यर्थं क्रियते । यदि च कृतात्वस्य षट्संज्ञा न स्यात् तदा 'अष्टसु' इति परत्वात् षट्स्वरः 'झल्युपोत्तमम्' इति भविष्यतीति किं दीर्घग्रहणेन ? कृतं च तत् कृतात्वस्याऽपि षट्संज्ञां ज्ञापयति । ततश्चापवादत्वात् षट्स्वरोऽनेन बाध्यत इति दीर्घपक्ष इवादीर्घपक्षेऽपि विभक्तेः स्वरः स्यादिति कर्तव्यं दीर्घग्रहणम् ॥

( उद्द्योतः ) **सुप उदात्तत्वेति । अष्टन** इति प्राप्तेत्यर्थः ॥ आद्युदात्तत्व-इति क्वाचित्कोऽपपाठः । **यद्वा**[२]—दीर्घग्रहणं षट्त्वे यथोद्देशपक्षाश्रयणस्यैव ज्ञापकम् । **तद्वारैव** च षट्संज्ञाज्ञापकत्वम् । तत्पक्षे आत्वस्य बहिरङ्गतयाऽसिद्धत्वेन नान्तत्वबुद्ध्या षट्त्वमस्त्येव । स्पष्टं चेदमष्टनो दीर्घादित्यत्र कैयटे । **किं च** यथोद्देशपक्षे षट्त्वं स्थानिवद्भावेनापि सुलभम्, नकारान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य समुदायधर्मत्वेन तन्निमित्तकनुडादेरल्विधित्वाभावादिति बोध्यम् । न चात्वस्य नित्यत्वात् 'अष्टसु' इति प्रयोग एवासङ्गत इति वाच्यम् । तद्वैकल्पिकत्वस्यापि ज्ञापनात् । **यावता विनाऽनुपपन्नं तत्सर्वं ज्ञाप्यत** इति सिद्धान्तात् ॥ **परत्वादिति** । अष्टन्स्वर आत्वपक्षे चरितार्थः । न च तत्प्रवृत्त्युत्तरमष्टस्वित्यादौ अष्टन्स्वरः स्यादेवेति वाच्यम् । **सकृद्गति**न्यायाश्रयणात् ॥ **अपवादत्वादिति** । न[३] च स्वरप्रवृत्तेः पूर्वमन्तरङ्गस्याप्येकादेशस्याप्रवृत्तेर्यद्वितुपरमित्यादिसूत्रस्थभाष्यसंमतत्वेनाष्टाविंत्यादावष्टन्स्वरश्चरितार्थ इति वाच्यम् । अष्टनो घृतादित्वादन्तोदात्तत्वेनैकादेश **उदात्तेनेत्येव** तत्रान्तोदात्तत्वसिद्धेः । घृतादावस्य पाठे चेदमेव भाष्यं मानम् । गौणे[४] प्रियाष्टाभिरित्यादौ षट्स्वराष्टन्स्वरयोः प्रवृत्तिरस्त्येव । तेषां[५]मनभिधानाच्च । एतेन कदष्टन्शब्दोऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त इति 'कदष्टौ' इत्यस्यैकादेशस्वरेणासिद्धिस्तत्राष्टस्वरः सावकाश इति परास्तम् । तस्याप्यनभिधानात् ॥

( एकदेशिसमाधानभाष्यम् )

**अथवा-आकारोऽप्यत्र निर्दिश्यते—षकारान्ता नकारान्ता आकारान्ता च संख्या षट्संज्ञा भवतीति ॥**

( समाधानबाधकभाष्यम् )

**इहापि तर्हि प्राप्नोति—'सधमादो द्युम्न एकास्ताः' एका इति ॥**

( प्रदीपः ) **एकास्ता इति** । संख्यावाचित्वाभ्युपगमवादी व्यत्ययेन बहुवचनं मन्यते । अन्यवाचित्वाश्रयं तूत्तरम् ॥

( उद्द्योतः ) ननु सङ्ख्यावाचित्वे 'एकाः' इति बहुवचनमनुपपन्नम्, अन्यत्र तु षट्संज्ञायाः प्राप्तिरेव नेत्यत आह—**सङ्ख्येति** ॥

( समाधानसाधकभाष्यम् )

**नैष दोषः । एकशब्दोऽयं बह्वर्थः । अस्त्येव संख्यापदम् । तद्यथा-एको द्वौ बहव इति ॥**

**अस्त्यसहायवाची । तद्यथा—एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति । असहायैरित्यर्थः ॥**

**अस्त्यन्यार्थे वर्तते । तद्यथा—'प्रजामेका रक्षत्यूर्जमेका इति', अन्येत्यर्थः । 'सधमादो द्युम्न एकास्ताः', अन्येत्यर्थः ।**

**तद्योऽन्यार्थे वर्तते तस्यैष प्रयोगः ॥**

---

१ ज्ञापनप्रकारमाह—**'त्रः संख्यायाः'** इत्याद्युदात्तत्वं बाधित्वा **घृतादि**पाठादन्तोदात्तोऽष्टन्शब्दः साधितः । तस्माद्भिसि अष्टभिरष्टाभिरिति रूपद्वयम् । तत्र आत्वाभावे मध्योदात्तम्, आत्वपक्षे त्वन्तोदात्तमिति सिद्धान्तः । तत्र **'षट्त्रिचतुर्भ्यो हलादिः'** इति सूत्रेणाष्टस्वित्यत्र षड्भिरित्यादाविव विभक्तेरुदात्तत्वं प्राप्तम् । तद्बाधित्वा **'झल्युपोत्तमम्'** इति प्राप्तम् । षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवतीति तस्यार्थः । तद्बाधनाय **अष्टनो दीर्घात्** इत्यारभ्यते । दीर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवतीति सूत्रार्थः । तत्र यद्यात्वपक्षे षट्संज्ञा न स्यात्तर्हि तत्र सावकाशोऽष्टनः स्वरः परत्वादात्वाभावपक्षे **'झल्युपोत्तमम्'** इति षट्स्वरेण बाधिष्यते इति किं दीर्घग्रहणेन । कृतात्वस्यापि षट्संज्ञायां सत्यां तु षट्स्वरस्याष्टनः स्वरोऽपवादः संपद्यते । न चाष्टनः स्वरः शसि सावकाश इति वाच्यम् । **तत्रैकादेश उदात्ते**नोदात्त इति सूत्रेण गतार्थत्वात् । अष्टन्शब्दोऽन्तोदात्त इति समनन्तरमेवोक्तत्वात् । तेन दीर्घपक्ष इव तदभावपक्षेऽपि विभक्तेरुदात्तता स्यादिति तद्व्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं सार्थकमेव । तस्माद्दीर्घग्रहणेनात्वपक्षेऽपि षट्संज्ञा ज्ञाप्यते इति स्थितम् ॥ श० कौ० ॥

२ लाघवादाह—**यद्वेति** । अनेन कैयटोक्ते गौरवं सूचितम् ॥ भाष्यं योजयति—**तद्वारैवेति** । तत्पक्षे-यथोद्देशे ॥ कैयटस्य स्वविरोधमपि सूचयन्नाह—**स्पष्टमिति** ॥ छाया ॥

३ तदप्राप्तियोग्येऽचारितार्थ्यरूपबीजाभावमाह—**न च स्वरेति** ॥ छाया ॥

४ गौणे तदविषये तस्य चारितार्थ्यमिति शङ्कामपाकरोति—**गौण इति** ॥ छाया ॥

५ **तेषामिति** । इदमनुपदमेव भविष्यति व्यक्तम् ॥ छाया ॥

( समाधानबाधकभाष्यम् )

**इह तर्हि प्राप्नोति-'द्वाभ्यामिष्टये विंशत्या च' इति ॥**

**( प्रदीपः ) इह तर्हीति** । 'द्वाभ्याम्' इति षट्स्वरः स्यात् ॥

**( उद्द्योतः ) षट्स्वर इति** । "षट्त्रिचतुर्भ्यो हलादिः" इत्यनेन ॥ न च षान्तनान्तसाहचर्यादाकारान्तो बहुवचनान्त एव गृह्यत इति नायं दोषः । साहचर्यस्य सर्वत्राव्यवस्थापकत्वमित्याशयात् ॥

( सिद्धान्तिसमाधानान्तरभाष्यम् )

**एवं तर्हि सप्तमे योगविभागः करिष्यते—"अष्टाभ्य औश्" । ततः-"षड्भ्यः" षड्भ्यश्च यदुक्तमष्टाभ्योऽपि तद्भवति । ततः-"लुक्" लुक् च भवति षड्भ्य इति ॥**

**( प्रदीपः ) सप्तम इति** । 'अष्टाभ्यः' इति कृतात्वानुकरणम् । औश्त्वविधानसामर्थ्याल्लुङ्न विधीयते ॥

**( उद्द्योतः ) कृतात्वेति** । ततश्च कृतात्वस्य [१]कार्यकालपक्षेऽसत्यपि षट्त्वेऽतिदेशान्नुट्सिद्धिरित्यर्थः ॥ **औश्त्वेति** । अत एव विभक्ते जश्शसोरनुवृत्तिर्न । तथा हि सति लुगेवातिदिश्येतेति तद्वैयर्थ्यं स्पष्टमेव । विपरीतं तु न, व्याख्यानात् ॥

( समाधानान्तरभाष्यम् )

**अथवा—उपरि[२]ष्टाद् योगविभागः करिष्यते—"अष्टन आ विभक्तौ" । ततः-"रायः" रायश्च विभक्तावाकारादेशो भवति । 'हलि' इत्युभयोः शेषः ॥**

**( प्रदीपः ) हलीति** । ततश्च 'अष्ट नाम्' इति नुटि कृते आत्वं भवति । जश्शसोस्तु 'अष्टाभ्यः' इति कृतात्वनिर्देशात् ज्ञापकादात्वं भवति । कृतात्वस्य हि निर्देशस्य प्रयोजनम्-यत्रात्वं तत्रौश्त्वं यथा स्यादिति । यदि ह्येतत्कृतात्वस्य निर्देशस्य प्रयोजनं न स्याल्लाघवार्थं 'अष्टभ्य औश्' इति ब्रूयात् ॥

**( उद्द्योतः ) ततश्चेति** । **न च** संनिपातपरिभाषयाऽऽत्वं न स्यात्, अष्टानामिति रूपं तु नुटि 'नोपधायाः' इति दीर्घे नलोपे च सिद्धमिति **वाच्यम्** । असिद्धस्यापि तद्विघातकवि[३]धेरनयाऽप्रवृत्तिबोधने नलोपस्याप्यनापत्तेः । अत **एव 'पुक् ह्रस्वत्वस्यानिमित्तं स्याददीदपदित्यत्र'** इति भाष्ये **क्रन्मेजन्तसूत्रे** उक्तम् । 'जानातेर्मित्त्वेन ज्ञापकेन ह्रस्वविषये [४]तदप्रवृत्तिः' इति च कैयटो वक्ष्यति । अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया [५]तस्या अप्राप्तौ भाष्यासङ्गतिः स्पष्टैव । **किं चा**तिदेशिकनिमित्तविघाताभावमादाय नास्या अप्रवृत्तिः । एवं हि लक्ष्मीत्यादौ संबुद्धिह्रस्वे कृते संबुद्धिलोपे कृतेऽपि प्रत्ययलक्षणेन निमित्तविघाताभावात्तत्रास्या अतिव्याप्तिपरतत्सूत्रस्थभाष्यविरोधः । **किं च** गव्यितेत्यादौ **संनिपात**परिभाषया लोपो नेति सिद्धान्तभङ्गः । यलोपस्य बहिर्भूततज्निमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वात् । [६]वस्तुतस्तु षट्त्वसंनिपातनिमित्तको नुट् । न च तस्य संनिपातस्यात्वं विघातकम्, नापि नलोपः, स्थानिवद्भावेन तयोः कृतयोरपि षट्त्वसत्त्वात् । अत्र पक्षे दीर्घग्रहणं पुनःप्रसङ्गपक्षे अष्टभिरित्यत्र षट्स्वरे कृतेऽष्टन्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञापनार्थमिति बोध्यम् । अतिदेशविषयेऽपि तत्प्रवृत्तौ तु सिद्धं न इष्टम् ॥ अजाद्योर्जश्शसोस्तद्योत्वं न स्यादत आह—**जश्शसोरिति** ॥

( आक्षेपभाष्यम् )

**यद्येवम्—प्रियाष्टौ-प्रियाष्टा-इति न सिध्यति, प्रियाष्टानौ-प्रियाष्टानः-इति प्राप्नोति ॥**

**( प्रदीपः ) यद्येवमिति** । हलादावुच्यमानमात्वमौजसोर्न प्राप्नोति । यत्राष्टार्थस्य प्राधान्यं तत्रौश्त्वेन भवितव्यम्, तत्रैव चौश्त्वेनात्वमनुमीयत इति जस्यप्यात्वमत्र ज्ञापकान्न प्राप्नोति । विभक्तिमात्रे त्वात्वं विधीयमानमौजसोः सिध्यति । 'अष्टन आ विभक्तौ' इत्यत्र 'पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति तदन्तविधिसद्भावाद्बहुवचननिर्देशाभावात् गुणभूतेऽप्यष्टार्थे आत्वेन भाव्यमिति अत्रापि सिध्यतीति **प्रश्नः ॥**

**( उद्द्योतः )** भाष्ये—**प्रियाष्टान इति प्राप्नोतीति** । इत्येव प्राप्नोतीत्यर्थः । [७]अन्यथाऽपकर्षाभावेऽपि आत्त्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्यासङ्गतेः ॥ ननु जसि ज्ञापकसिद्धात्वप्राप्तेरौशश्च प्राप्तेराह—**यत्रेति** । बहुवचननिर्देशादिति भावः ॥ [८]षड्भ्य इत्येतत्साहचर्यादस्य प्राधान्ये एव प्रवृत्तिरिति वा भावः ॥ तस्य च यथाप्रकारान्तरेण गौणेऽप्रवृत्तिस्तथा **सर्वादि**सूत्रे उपपादयिष्यते । [९]शुद्धलक्षणैकचक्षुष्कस्यात्र पूर्वपक्षित्वमिति तात्पर्यम् ॥ **औश्त्वेनेति** । औशेत्यर्थः । त्वप्रत्ययप्रयोगस्तु अनुकरणात् अनुकार्यरूपे भावे इति बोध्यम् । '[१०]आत्वे-' इत्यादिभाष्यप्रयोगात् ॥ **औश्त्वेनेति** । तद्विधायकसूत्रस्थात्वनिर्देशेनेत्यर्थः ॥ **अत्र**—गौणे ॥ **ज्ञापकादिति** ।

---

१ **कार्यकालेति** । अनेन पक्षान्तराश्रयणे फलं दर्शितम् ॥छाया॥

२ **उपरिष्टात्**—ततोऽप्यग्रे ॥ छाया ॥

३ **विधेः**—नलोपस्य ॥ **अनया**—संनिपातपरिभाषया । तस्या लोकमूलकत्वात् ॥ अत्र मानमाह—**अत एवेति** । असिद्धस्थले प्रवृत्तेरेवेत्यर्थः ॥ छाया ॥

४ 'तदप्रवृत्तिं च कैयटो' इति ज. पाठः ॥

५ **तस्याः**—संनिपातेत्यस्याः ॥ **आदिना** कैयटपरिग्रहः ॥ एवमग्रेऽपि ॥ **निमित्तेति** । संनिपातेत्यर्थः ॥ **एवं हि**—तदप्रवृत्तौ हि ॥ विधिरूपेण तेषां प्रवृत्तिरिति सिद्धान्तमतेनाह— **प्रत्ययेति** ॥ **तत्**-क्रन्मेजन्तेति ॥ **लोप इति । यस्य हल** इत्यनेनेति भावः ॥ छाया ॥

६ प्रागुक्तसंगतिं दर्शयन्सिद्धान्तमाह—**वस्तुतस्त्विति** ॥ यथोद्देशेनाह—**स्थानीति** ॥ सकृद्गतिपक्षेऽसंभवादाह—**पुनःप्रसङ्गेति** ॥ **अष्टन्निति** । प्राप्तेत्यादिः ॥ **विकल्पेति** । तन्मात्रेत्यर्थः ॥ **तर्हि**-हलीत्यस्योभयशेषत्वे ॥ छाया ॥

७ **अन्यथा**—सावधारणाव्याख्याने ॥ **तस्य**—प्रयोगस्य ॥ छाया ॥

८ बहुवचननिर्देशस्य तदसाधकत्वस्यान्यत्रोक्तत्वादाह—**षड्भ्य इति** ॥ ननु तत्रैव न मानं भवन्मतेऽत आह—**तस्य चेति** ॥ षड्भ्य इत्यस्येत्यर्थः ॥ छाया ॥

९ नन्वेवमपि पूर्वपक्षासंगतिरनिश्चयादत आह—**शुद्धेति** ॥ यथाश्रुतासंगतेराह—**औशेत्यर्थ इति** ॥ नन्वेवं कथं त्वोऽत आह—**त्वेति** ॥ एवमग्रेऽपि ॥ अत्र मानमाह—**आत्व इत्यादीति** ॥ **आत्वेति** । कृतात्वेत्यर्थः ॥ असंबद्धत्वनिरासायाह—**अस्येति** । **ज्ञापकादित्यस्येत्यर्थः** ॥ छाया ॥

१० 'आत्वे कृते षट्संज्ञा न प्राप्नोति' इति हि भाष्यम् ॥

अस्य प्राप्तियोग्यमपीति शेषः । क्वचित्तु 'ज्ञापकात्' इति न दृश्यते ॥ नन्वनपकर्षपक्षेऽपि अष्टनो विहितमात्वं कथं तदन्ते स्यादत आह—पदाङ्गेति ॥ बहुवचननिर्देशाभावादिति । साहचर्याभावादित्यपि बोध्यम् ॥

( समाधानसिद्धान्तिभाष्यम् )

**यथालक्षणमप्रयुक्ते ॥ २४ ॥**

**( प्रदीपः ) यथालक्षणमिति ।** यस्य विशिष्टः प्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिः, तद्यथालक्षणमनुगन्तव्यम् । तदत्र मा भूदात्वमित्यर्थः ॥ नैव वा लक्षणमप्रयुक्ते प्रवर्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात् ॥ २४ ॥

**( उद्द्योतः )** लक्षणैकचक्षुष्कस्यैवोत्तरमिति मत्वा व्याचष्टे—**तदत्र मा भूदात्वमिति ।** पक्षान्तरेऽपि अनभिधानादात्वाभाव एव बोध्यः ॥ यत्तु भवत्येवात्रात्वमित्यर्थ इति । तन्न । अपकर्षपक्षे आत्वसाधकोपायाभावेन फलभेदापत्तेः ॥ नन्वयं भाष्यार्थो न युक्तः । तथा हि सतीष्यत एवैतदित्येव ब्रूयात् । किं चाप्रयुक्ते इति वाक्यशेषोऽसङ्गतः, प्रयुक्तेऽपि लक्षणानतिक्रमसत्त्वात् । **प्रयुक्तानां हीदमन्वाख्यानमिति** भाष्योक्तेश्चेत्यरुचेराह—**नैव वेति ।** लक्षणस्याभावोऽलक्षणं, तस्य योग्यता–यथालक्षणमित्यव्ययीभावः । अप्रयुक्ते लक्षणाभावस्य योग्यता न तु लक्षणस्येत्यर्थः । एवं च तादृशप्रयोगोऽसाधुरिति भावः ॥ **किं च** भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्या ज्यायसी । एवं च हरदत्तादीनां प्रियाष्टन्शब्दादिषु आत्वादिप्रवृत्तिविचारोऽन्यश्च तत्प्रयोगविचारः प्रामादिक एवेत्यवधेयम् ॥ एतेन पूर्वव्याख्यानेऽस्य साधुत्वमुत्तरव्याख्यानेऽसाधुत्वमिति विरुद्धार्थकव्याख्यानद्वयमयुक्तम् ॥ **किं च** अष्टाभ्य इति निर्देशात्कृताकारादेवाष्टनो जश्शसोरौशिति तद्विषयेऽप्यात्वम् । अन्यथाऽष्टन इत्येव ब्रूयादिति

१ **यथालेति ।** लक्षणमनतिक्रम्येत्यर्थः ॥ छाया ॥

२ तत्पक्षेणैव परिहारो युक्त इत्याह—**लक्षणैकेति ॥ पक्षान्तरेऽपि**—अपकर्षान्यपक्षेऽपि । अत एवैकवाक्यता ॥ छाया ॥

३ प्राचामुक्तिमाह—**यत्त्विति** ॥ छाया ॥

४ **तादृशेति ।** आत्वघटितेत्यर्थः ॥ छाया ॥

५ **आदिना** दीक्षितादिपरिग्रहः ॥ तेषामेवासत्त्वात् ॥ छाया ॥

६ एतेनेत्यस्यार्थमाह—**गौण इति** ॥ छाया ॥

७ **यदि तावदिति ।** अत्र यदिशब्दः पक्षान्तरे, 'पक्षान्तरे चेद्यदि च' इति कोशात् । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति कोशाच्चावध्यर्थस्तावच्छब्दः । संख्यासंज्ञायां क्रियते षट्संज्ञायां न करिष्यत इत्येतावत्पक्षान्तरमिति तदर्थः ॥ अस्मात्पूर्वः **कथंशब्दः**—केन प्रकारेणैकं शक्यमकर्तुमित्यभिप्रायकः । उत्तरस्य च कथंशब्दस्य—डत्यन्तस्य षट्संज्ञा केन प्रकारेण स्यादित्याशयः ॥

८ यथाश्रुतासंगतेराह—**ष्णान्ता चेति** ॥ छाया ॥

९ साहचर्यस्यानित्यत्वेऽपि युक्त्यन्तरं मूलभूतमाह—**संख्येतीति** ॥ छाया ॥

१० 'न करिष्यते' इत्युत्तरं मुद्रितपुस्तकेषु 'कथम्' इत्यधिकः पाठः संनिधापितः । 'बहुत्र नोपलभ्यते' इति च टिप्पण्यामुक्तम् । वस्तुतस्तु 'अथ षट्संज्ञायां क्रियते' इत्यथशब्दस्य प्रश्नार्थकत्वादत्र 'कथम्' इति भाष्येनोक्तम् । अत एव चादर्शपुस्तकेष्वनुपलंभः । 'मङ्गलानन्तरारंभप्रश्नकार्त्स्न्येष्वथो अथ' इति कोशादथशब्दस्य प्रश्नार्थत्वमुपपद्यते । पक्षान्तरार्थयदिशब्दघटितवाक्योत्तरमथशब्दघटितवाक्यानि भाष्ये बहुत्रोपलभ्यन्ते । तानि यथा—न धातुलोप आर्धधातुके इति सूत्रे 'यदि लोपविशेषणमुपेद्धः प्रेद्धः–अत्रापि प्राप्नोति । अथ गुणवृद्धिविशेषणम्' । तदस्मिन्नस्तीति देशे तन्नाम्नीति सूत्रे 'कथं ज्ञायते । यदयं द्विस्तद्ग्रहणं करोति । अथ नाना योगाः' । तपरस्तत्कालस्येति सूत्रे 'यद्यत्राण्ग्रहणमनुवर्तते ततो नियमार्थम् । अथ निवृत्तं ततः प्रापकम्' । इको गुणवृद्धीति सूत्रे 'यद्येकं वाक्यं ततोऽयं तच्छेषः । अथ नाना वाक्यं ततोऽयं तदपवादः' इत्यादीनि । यत्र प्रश्नार्थकोऽथशब्दो नास्ति प्रयुक्तस्तत्र–हयवरट्सूत्रे 'यदि पुनः पूर्व एवोपदिश्येत, पर एव वा । कश्चात्र विशेषः' इत्यादौ पर एव वेत्यथशब्दानुपादानात् कश्चात्र विशेष इति प्रश्नः क्रियते एव । व्याकरणशास्त्रप्राणभूतेऽस्मिन् ग्रन्थे न निरर्थको दुरर्थको वा शब्दव्यवहार इत्यवधेयम् ॥ एवमपि सन्यङोरिति सूत्रे 'किञ्चातः । यदि षष्ठी सन्यङन्तस्य द्विर्वचनेन भाव्यम् । अथ सप्तमी पूर्वस्य द्विर्वचनेन भवितव्यम् । कश्चात्र विशेषः' इति प्रश्नार्थकाथशब्दव्यवहारेऽपि कश्चात्रेति प्रश्नो दृश्यते । तथा च भाष्ये शब्दव्यवहारे नैकरूप्यतेति चेत् । न । अत्र 'किञ्चातः' इत्यनेनार्थभेदविषयकः प्रश्नः क्रियते । 'कश्चात्र विशेषः' इत्यनेन च लक्ष्यगतविशेषप्रश्नः क्रियत इति भिन्नार्थत्वान्न विरोधः । एवञ्चात्र 'कथं' इति पाठोऽज्ञानमूलक एवेति ॥

साप्तमिकभाष्ये 'एकवचननिर्देशात् प्रधान एवौशात्वे' इति प्रश्नाशयोऽपि चिन्त्य इत्यपास्तम् ॥ गौणे प्रियाष्टादीनामनभिधानमिति अत्रत्यसिद्धान्तानुसारेण तद्भाष्यस्य सत्त्वात् । अरुच्यैव व्याख्यानान्तरप्रवृत्तेश्च ॥ २४ ॥

( २४ षट्संज्ञासूत्रम् ॥ १ । १ । ५ आ. १३ ॥ )

## डति च ॥ १ । १ । २५ ॥

( प्रत्याख्यानभाष्यम् )

**इदं डतिग्रहणं द्विः क्रियते—संख्यासंज्ञायां, षट्संज्ञायां च । एकं शक्यमकर्तुम् ।**

**कथम् ?**

**यदि तावत् संख्यासंज्ञायां क्रियते, षट्संज्ञायां न करिष्यते ।**

**कथम् ?**

**"ष्णान्ता षट्" इत्यत्र 'डति' इत्यनुवर्तिष्यते ॥**

**( प्रदीपः ) डति च ॥ २५ ॥ यदि तावदिति ।** तत्र वतुसाहचर्यात्तद्धित एव डतिर्गृह्यते, न तु पातेर्डतिः ॥

**( उद्द्योतः ) डति च ॥ २५ ॥** भाष्ये—**यदि तावदिति । ष्णान्ता च षडिति** सूत्रे पाठ्यं, तत्र चकाराद्यत्नात्स्वरितलिङ्गासङ्गादनुवर्तमानं डतिग्रहणं **संभन्त्स्यत** इति भावः ॥ **न तु पातेरिति ।** एवं चार्थाधिकारादिहापि तद्धितस्यैव ग्रहणमिति भावः ॥ सङ्ख्येति महासंज्ञासामर्थ्यात्तत्र सङ्ख्याप्रश्नविषयडतेरेव ग्रहणमित्यपि बोध्यम् ॥

( प्रत्याख्यानभाष्यम् )

**अथ षट्संज्ञायां क्रियते, संख्यासंज्ञायां न करिष्यते ।**

"डति च" इत्यत्र संख्यासंज्ञाऽप्यनुवर्तिष्यते ॥ २५ ॥

( प्रदीपः ) **अथेति** । तत्र संख्यासंज्ञाया अनुवर्तनादन्वर्थत्वाच्च संज्ञायाः संख्याप्रश्नविषय एव डतिर्गृह्यते, न त्वौणादिको डतिः ॥ २५ ॥

( उद्द्योतः ) भाष्ये—**डति चेत्यत्रेति** । चकारात्षट्संज्ञाऽनन्तरं करणाच्चानेन संज्ञाद्वयस्यापि विधानमित्यर्थः ॥ **अन्वर्थत्वाच्चेति** । सङ्ख्यायतेऽनयेति हि सः । न च तस्यार्थस्य डत्यन्ते संभवः । सङ्ख्याप्रश्नविषयत्वं तु न तदर्थं इति **चिन्त्यमेतत्**[1] । तस्मादुणादीनामव्युत्पन्नत्वान्न तत्र डतिरिति तस्याग्रहणमित्युचितम्[2] । व्युत्पत्तावपि पातेः कतिनाऽपि सिध्यतीति न तत्र डतिनियम इति बोध्यम् ॥ **सङ्ख्याप्रश्नेति** । **संनियोगशिष्टन्यायाच्च**[3] षट्संज्ञाऽपि तस्यैवेति भावः ॥२५॥

( २५ निष्ठासंज्ञासूत्रम् ॥ १ । १ । ५ आ. १४ ॥ )

## क्तक्तवतू निष्ठा ॥ १ । १ । २६ ॥

( प्रदीपः ) **क्तक्तवतू०** ॥२६॥ इहानुबन्धाः कार्यार्थमुपादीयन्ते । प्रयोगस्त्वेषां लुप्तत्वान्नास्ति । यत्र च सारूप्यं तत्र सन्देहः—कथमस्यानुबन्धकार्यं कृतमस्य तु न कृतमिति पूर्वपक्षाभिप्रायः ॥ सिद्धान्तवादी तु मन्यते—अश्रुवेणानुबन्धेन नियतसन्निधाना अर्थाः कारककालादयो लक्ष्यन्ते । तद्दर्शनादनुबन्धस्मृतौ च तल्लक्षितानां कार्याणां साधुत्वं विज्ञायते । तत्र यदा 'देवदत्तेन लूनः शालिः' इति कश्चित्प्रयुङ्क्ते, तदा लक्षणज्ञः कर्मभूतकालावगमात् क्तप्रत्ययं मन्यते । यदा तु 'लोतमालभेत' इति प्रयोगस्तदा मेषवाची लोतशब्दस्तन्प्रत्ययान्तः प्रयुक्त इति मन्यते ॥

( उद्द्योतः ) **क्तक्तवतू** ॥ २६ ॥ अनुबन्धानां नित्यलुप्ततया विशेषणत्वासंभवादुपलक्षणत्वे च तशब्दमात्रस्योपलक्ष्यत्वं[4] मन्यमानो वार्तिकमारभत इत्याह—**इहेति** ॥ **सारूप्यं**-प्रयोगे इति शेषः ॥ **मन्यत इति**[5] । निश्चिनोतीत्यर्थः । नियतं संनिधानं येषामिति विग्रहः ॥ **कारकेति** । न तशब्दमात्रं[6] लक्ष्यम्, किं त्वर्थविशेषाद्यवच्छिन्नमिति भावः ॥ **तद्दर्शनादिति** । कालादिज्ञानादित्यर्थः[7] ॥ **तन्प्रत्ययान्त इति** । ककारानुपलक्षितः[8] प्रयुक्त इति निश्चिनोतीत्यर्थः ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( १८७ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ निष्ठासंज्ञायां समानशब्दप्रतिषेधः ॥ * ॥

( भाष्यम् )

**निष्ठासंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । लोतः, गर्त इति ॥**

( १८८ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ निष्ठासंज्ञायां समानशब्दाप्रतिषेधः ॥ * ॥

( भाष्यम् )

**निष्ठासंज्ञायां समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधः-अप्रतिषेधः ॥**

( आक्षेपभाष्यम् )

**निष्ठासंज्ञा कस्मान्न भवति ?**

( आक्षेपबाधको वार्तिकैकदेशः ॥ )

### *अनुबन्धोऽन्यत्त्वकरः* ॥

( भाष्यम् )

**अनुबन्धः क्रियते सोऽन्यत्त्वं करिष्यति ॥**

( १८९ आक्षेपबाधकहेतुनिराकरणवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अनुबन्धोऽन्यत्त्वकर इति चेन्न लोपात् ॥ * ॥

( भाष्यम् )

**अनुबन्धोऽन्यत्त्वकर इति चेत्,**

**तन्न ।**

**किं कारणम्?**

**'लोपात्' । लुप्यतेऽत्रानुबन्धः । लुप्ते चानुबन्धे नान्यत्त्वं भविष्यति । तद्यथा-कतरद्देवदत्तस्य गृहम्? 'अदो यत्रासौ काकः' इति, उत्पतिते काके नष्टं तद्गृहं भवति ॥**

**एवमिहापि लुप्तेऽनुबन्धे नष्टः प्रत्ययो भवति ॥**

( उद्द्योतः ) भाष्ये—**नष्टं गृहमिति** । अज्ञातमित्यर्थः ॥ **नष्टः प्रत्यय इति** । अज्ञातानुबन्धः[9] प्रत्ययो भवतीत्यर्थः ॥

( आक्षेपबाधकसाधकभाष्यम् )

**यद्यपि लुप्यते, जानाति त्वसौ—सानुबन्धकस्येयं संज्ञा कृतेति । तद्यथा—इतरत्रापि कतरद्देवदत्तस्य गृहम्? 'अदो यत्रासौ काकः' इति, उत्पतिते काके यद्यपि नष्टं तद्गृहं भवति अन्ततस्त[10]मुद्देशं जानाति ॥**

---

१ कैयटं दूषयति—**सङ्ख्येति । नच**-नहि ॥ छाया ॥

२ तत्त्वमाह—**तस्मादिति** ॥ एकदेशिमतेऽप्याह—**व्युत्पत्ताविति** ॥ छाया ॥

३ नन्वेवमपि षट्त्वातिप्रसङ्ग एवात आह—**संनियोगेति**॥छाया॥

४ **मात्र**पदेन कालादिव्यवच्छेदः ॥ छाया ॥ केवलस्य तशब्दस्य कारककालरहितस्योपलक्ष्यत्वमित्यर्थः ॥

५ भेदमरुचिसूचकमित्याह—**निश्चीति** ॥ छाया ॥

६ **मात्र**मवधारणे ॥ छाया ॥

७ चाक्षुषासंभवादाह—**कालादीति** ॥ छाया ॥

८ प्राग्वदाह—**ककारेति** ॥ छाया ॥

९ नाशाभावादाह—**अज्ञातेति** ॥ छाया ॥

१० **अन्ततः**-तथापि ॥ छाया ॥

( उद्योतः ) सानुबन्धकस्येति । पूर्वं यः ककारवांस्तस्येत्यर्थः ॥ उद्देशम्-ऊर्ध्वदेशम् ॥

( १९० आक्षेपवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सिद्धविपर्यासश्च ॥ * ॥

( भाष्यम् )

सिद्धश्च विपर्यासः । यद्यपि जानाति, संदेहस्तस्य भवति—अयं स तशब्दः-लोतः-गर्त इति, अयं स तशब्दः-लूनः-गीर्ण इति । तद्यथा-इतरत्रापि कतरद्देवदत्तगृहम्? अदो यत्रासौ काकः-इति उत्पतिते काके यद्यपि तमुद्देशं जानाति संदेहस्तु तस्य भवति—इदं तद्गृहं-इदं तद्गृहमिति ॥

( प्रदीपः ) सिद्धविपर्यास इति । सिद्धो विपर्यासः, संशय इत्यर्थः ॥ इदं तद्गृहमिति । बुद्धेरनवस्थिततत्वमनेन प्रतिपाद्यते । न त्वेतद्विर्वचनं, वीप्साद्यर्थाभावात् ॥

( उद्योतः ) सिद्धविपर्यासश्चेति । चस्त्वर्थे । सिद्धस्तु विपर्यास इत्यर्थः ॥ यद्यपि विपर्यासो भ्रमात्मकनिश्चयस्तथाप्ययथार्थत्वसाम्यादिह संशयोऽभिप्रेत इत्याह—संशय इति ॥ बुद्धेरनवस्थिततत्वमिति । सन्देहाभिनय इत्यर्थः ॥ वीप्सादीति । पदार्थविषयव्याप्तीच्छा प्रयोक्तृधर्मो हि वीप्सेति भावः ॥

( आक्षेपनिराकरणभाष्यम् )

एवं तर्हि—

( समाधाने भाष्यवार्तिकम् )

*कारककालविशेषात् सिद्धम् ॥*

( भाष्यम् )

कारककालविशेषावुपादेयौ । भूते यस्तशब्दः कर्तरि कर्मणि भावे चेति । तद्यथा-इतरत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्रुवेण निमित्तेन ध्रुवं निमित्तमुपादत्ते—वेदिकां पुण्डरीकं वा ॥

( उद्योतः ) भाष्ये—कारकेति-कालातिरिक्तप्रत्ययार्थपरम् ॥ वेदिकां पुण्डरीकं चेति-भाष्ये । एवं च साक्षादितरव्यावर्तकं विशेषणम् । स्वोपस्थाप्यार्थद्वारा इतरव्यावर्तकमुपलक्षणमिति भावः ॥

( आक्षेपभाष्यम् )

एवमपि 'प्राकीर्ष्ट' इत्यत्र प्राप्नोति ॥

( प्रदीपः ) प्राकीर्ष्टेति । अत्र भूतकालोऽस्तीति भावः ॥

( उद्योतः ) प्राकीर्ष्टेति । यद्यप्यत्र निघातप्रवृत्तेर्न निष्ठात्वकृतो विशेषस्तथापि 'यन्मा प्रकीर्ष्ट' इत्यस्योपलक्षणमिदम् । अत्र हि निपातैर्यद्यदीति निघाते निषिद्धे निष्ठा च द्व्यजनादिति नित्यमाद्युदात्तत्वं स्यात् । असंज्ञायामपि तत्प्रवृत्तिं मन्यते । आदिः सिच इति विकल्पस्त्विष्यत इति भावः ॥

( १९१ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ लुङि सिजादिदर्शनात् ॥ * ॥

( भाष्यम् )

लुङि सिजादिदर्शनान्न भविष्यति ॥

( आक्षेपभाष्यम् )

यत्र तर्हि सिजादयो न दृश्यन्ते—प्राभित्त-इति ॥

( समाधानभाष्यम् )

दृश्यन्तेऽत्रापि सिजादयः ।

किं वक्तव्यमेतत्?

न हि ।

कथमनुच्यमानं गंस्यते?

यथैवायमनुपदिष्टान् कारककालविशेषानवगच्छति एवमेतदप्यवगन्तुमर्हति—यत्र सिजादयो नेति ॥ २६ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

( प्रदीपः ) दृश्यन्तेऽत्रेति । 'सिजादि' इति आदिशब्दः प्रकारे । तत्र 'प्राभित्त घटं देवदत्तः' इति प्रयोगे कर्त्रेकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगः, न निष्ठान्तस्येति प्रतिपद्यन्ते। 'अञ्जिघृषिभ्यः क्तः' इत्यस्य निष्ठासंज्ञा न भवति, उणादीनामव्युत्पन्नत्वाद्बाहुलकाद्वा। अन्यथा 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तत्वं स्यात् ॥ २६ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमस्याध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

( उद्योतः ) सिचोऽत्र लुप्तत्वेनादर्शनादाह—आदिशब्द इति ॥ अञ्जिघृषीति । यद्यप्यत्रोपलक्ष्यकालकारकाद्यभावस्तथापि गुणाभावदर्शनात् क्तोऽयमित्यवगतिः । एवं च सनादिविधावितसंज्ञकन-

१ प्रयोगेऽसत्त्वादाह—पूर्वमिति ॥ छाया ॥

२ यथाश्रुतासंगतेराह—संदेहेति ॥ छाया ॥

३ प्रेक्षापूर्वकारीति । तादृशो हि मनुष्यः काकवद्देवदत्तस्य गृहमिति केनचिदुपदिष्टेऽध्रुवेण काकनिमित्तेन ध्रुवं वेदिकादिरूपं निमित्तमवधारयति । तथा चोत्पतितेऽपि काके वेदिकादिरूपस्य ध्रुवस्य निमित्तस्य सत्वात् 'इदं तद्गृहं-इदं तद्गृहम्' इत्यादिः संशयो न भवति । तथा ककारोपलक्षितस्तशब्द इत्युक्ते ककारेणाध्रुवेण ध्रुवं कारकादिकं निमित्तं सम्पाद्य भूते यस्तशब्द इत्याद्यर्थमवधारयतीति न काऽप्यनुपपत्तिरिति भावः ॥

४ न्यूनतां परिहरति—कालातीति । तस्योपात्तत्वात्, अत एव भाष्ये भावे चेतीत्युक्तम् ॥ छाया ॥

५ भूते यस्तशब्द इत्युक्तावपि 'प्राकीर्ष्ट' इत्यत्र तशब्दस्य भूते विधानाद्दोषमाशङ्कयति—एवमपीति ॥

६ भूते कर्त्रादौ वा यस्तशब्द इतिवत् सिजाद्यसहचरितो यस्तशब्द इत्यप्यवगन्तव्यमिति वार्तिकाभिप्रायः ॥

७ किं वक्तव्यमिति । क्तक्तवतू निष्ठेति सूत्रे सिजाद्यसहचरितस्तशब्द इत्येतद्वक्तव्यं किमित्यर्थः ॥

८ गुणाभावेति । तेषामेव तत्त्वमित्यत्र मानाभावादिति भावः ॥ छाया ॥

९ सेत्संज्ञकस्थले भाष्यसम्मतं सूत्रार्थप्रकारमाह—एवञ्च सनादीति ॥ अध्रुवेण नकारेण ध्रुवः स्वार्थे इच्छादिर्वाऽर्थ उपसंगृह्यत इति भावः ॥

कारोपलक्षितः प्रकृत्यर्थानुवादी इच्छार्थो वा सकारो भवतीत्यर्थः । अनुवादे **सन्यत** इत्यादौ तादृशनकारोपलक्षिते सकारे इत्यर्थः । अत **एवाटश्चे**त्यादेः सार्थक्यम् । अन्यथा यत्र सूत्रे आट्, न तत्र वृद्धिरिष्यते; यत्र चेष्यते प्रयोगे, न तत्राडिति तद्वैयर्थ्यं स्पष्टमेवेति सर्वमवदातम् ॥ २५ ॥

इति श्री**शिवभट्टसुतसतीगर्भजनागोजीभट्ट**कृते भाष्यप्रदी**पोद्योते** प्रथमाध्यायस्य प्रथमे पादे **पञ्चम**माह्निकम् ॥

# अथ प्रथमाध्यायस्य प्रथमपादे षष्ठमाह्निकम् ।

## ( अथ सर्वनामसंज्ञाप्रकरणम् )

**( २६ सर्वनामसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १ )**

## सर्वादीनि सर्वनामानि ॥ १ । १ । २७ ॥

**( तद्गुणाधिकरणम् )**

**( पूर्वपक्षिभाष्यम् )**

**'सर्वादीनि' इति कोऽयं समासः?**

**( प्रदीपः ) सर्वादीनि सर्व० ॥२७॥ कोऽयमिति ।** ननु नपुंसकबहुवचननिर्देशादेव बहुव्रीहिनिश्चयात्समासान्तराशङ्का नैवास्तीति प्रश्नानुपपत्तिः । एवं तर्हि किमयं बहुव्रीहिरेव-आहोस्विद्बहुव्रीहितत्पुरुषयोरेकशेषः । यथा-'कतन्तेभ्यः कण्वादिभ्यश्च' इति प्रश्नः ॥ तत्र सारूप्यार्थं सर्वश्चासावादिः सर्वादिरित्यत्रादिशब्द उपादीयते, न त्वस्य प्रयोजनान्तरमस्ति । तत्र 'नपुंसकमनपुंसकेन-' इति वा '***स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते***' इति वा बहुव्रीहेः शेषः ॥

**( उद्योतः ) सर्वादी ॥ २७ ॥ नन्विति ।** आदिशब्दस्य नित्यपुंस्त्वेन एकवचनान्तत्वेन च समासान्तरे नपुंसकत्वबहुत्वानुपपत्तेरिति भावः ॥ प्रकृते तत्पुरुषः कर्मधारयः, दृष्टान्ते षष्ठीतत्पुरुषः ॥ **न त्वस्येति ।** कर्मधारयघटकस्येत्यर्थः ॥ बहुव्रीहेरेव शेषे युक्तिमाह—**तत्र नपुंसकमिति ।** तत्पुरुषस्तु पुंल्लिङ्ग इति भावः ॥ **स्वरभिन्नानामिति ।** स्वरेण विलक्षणानां सरूपाणां मध्ये उत्तरसूत्रेण यस्य स्वरविधिरित्यर्थः । कर्मधारयः **समासस्ये**त्यन्तोदात्तः । परस्तु **बहुव्रीहौ प्रकृत्ये**ति परशास्त्रेणान्तोदात्तपूर्वपद इति बोध्यम् । तत्राद्ये सर्वशब्दस्य संज्ञा न प्राप्नोति, अन्त्ये तु सिध्यतीति विशेषः ॥

**( समाधानभाष्यम् )**

**बहुव्रीहिरित्याह ॥**

**( प्रदीपः )** वक्ष्यमाणेन न्यायेन विनाऽप्येकशेषेण सर्वशब्दस्य संज्ञा सिध्यतीति मत्वाऽऽह—**बहुव्रीहिरिति ॥**

**( उद्योतः ) वक्ष्यमाणेन**-तद्गुणसंविज्ञानेन ॥

**( अनुयोगभाष्यम् )**

**कोऽस्य विग्रहः?**

**( प्रदीपः )** एवमपि संदेहः । किं प्राथमकल्पिको बहुव्रीहिः, अथ बहुव्रीहितत्पुरुषयोरेकशेषे बहुव्रीहिरिति पृच्छति—**कोऽस्येति ॥**

**( उद्योतः ) प्राथमकल्पिकः**—एकशेषनिरपेक्षत्वेन प्रथमप्रतीतः ॥ वक्ष्यमाणन्यायानभिज्ञस्य प्रश्न इति भावः ॥

**( समाधानभाष्यम् )**

**सर्वशब्द आदिर्येषां तानि-इमानीति ॥**

**यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति ।**

**किं कारणम्?**

**अन्यपदार्थत्वाद्बहुव्रीहेः ।**

**बहुव्रीहिरयमन्यपदार्थे वर्तते, तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति । तद्यथा-'चित्रगुरानीयताम्' इत्युक्ते यस्य ता गावो भवन्ति स आनीयते, न गावः ॥**

---

१ **कोऽयमिति ।** दीनीत्ययं कः समास इत्यन्वयः ॥ छाया ॥

२ **एवं तर्हीति ।** भाष्यस्थसमासपदमन्यथानुपपत्त्या विशेषपरमिति भावः ॥ एवव्यवच्छेद्यस्तत्पुरुषः ॥ **एकशेष इति ।** एकस्य बहुव्रीहेः शेष इत्यर्थः ॥ छाया ॥

३ **तत्र**-तयोर्मध्ये ॥ छाया ॥

४ **तत्र**-तयोर्मध्ये ॥ सूत्रप्रत्याख्यान आह—**स्वरेति** ॥ छाया ॥

५ **एकेति ।** एकशेषतोऽन्यत्रेति भावः ॥ **समासान्तरेति ।** सर्वशब्देन सहेति शेषः ॥ एतेनादिशब्दस्य तादृशस्य क्लीबबहुवचनान्तनिर्देशस्तं विना नेति तत्त्वनिश्चय इत्यपास्तम् । तन्मात्रस्य तथाऽनिर्देशादिति कृष्णः ॥ प्रागुक्तक्रमेणाह—**नपुमिति** ॥ छाया ॥

६ तत्पुरुषत्वसामान्यधर्मेण दृष्टान्तता न तु विशेषधर्मेणापीत्याह—**प्रकृत इति** ॥ छाया ॥

७ सामान्येनादिशब्दस्य दुर्वचत्वादाह—**कर्मेति ।** अन्यथैकशेषो नेति भावः ॥ छाया ॥

८ वार्तिकार्थमाह—**स्वरेणेति** ॥ **इत्यर्थः**-इत्याद्यर्थः ॥ तत्पुरुषे तुल्यार्थैस्यस्योत्तरत्वं तु न, सामान्यस्वरयोर्मध्ये उत्तरत्वस्य विवक्षितत्वात् । आद्यस्य बहुव्रीह्यन्यविषयत्वात् । अन्यथाऽतिप्रसङ्गापत्तेरिति कृष्णः ॥ प्रकृते तत्कृतस्वरभेदाभावाच्चेति तु तत्त्वम् ॥ तदभिप्रेत्याह—**कर्मेति** ॥ छाया ॥

९ नन्वेवं को विशेषोऽत आह—**तत्रेति ।** तयोर्मध्ये । शुद्धबहुव्रीहावित्यर्थः ॥ छाया ॥ **आद्ये**-किमयं बहुव्रीहिरेवेति पक्षे । **अन्त्ये**-बहुव्रीहितत्पुरुषयोरेकशेषपक्षे ॥

१० द्वितीये वाक्यभेदप्रतिपत्तिगौरवे सति लाघवादाह—**वक्ष्यमाणेनेति** ॥ छाया ॥

११ बहुव्रीहिज्ञानेऽपि तद्गुणसंविज्ञानमजानतः सर्वशब्दविषये संशयोऽत आह—**कोऽस्येति ॥**

१२ सामान्योक्त्यात्तदनभिज्ञस्य संदेहतादवस्थ्यमेवेत्याह—**वक्ष्येति** ॥ छाया ॥

१३ सर्वशब्दः शब्दपर इति सूचयन्नाह—**सर्वशब्द इति ॥** छाया ॥

१४ **किमिति ।** कस्मात्कारणादित्यर्थः ॥ छाया ॥

१५ **न गाव इति ।** न ता गाव इत्यर्थः ॥ छाया ॥

**नैष दोषः, [1]भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा–'[2]चित्रवाससमानय' 'लोहितोष्णीषा ऋत्विजः प्रचर[3]न्ति' । [4]तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति ॥**

**( प्रदीपः ) तानीमानीति** । अन्यपदार्थस्य प्राधान्यं प्रदर्श्यते । [5]अन्यथा यथा–चित्रा गावोऽस्येति गवां विशेष्यत्वं तद्वतश्च विशेषणत्वमवगम्यते, तथेहाप्यवगम्येत । [6]अत्र चार्थे बहुव्रीहिर्नेष्यते । यदा तु स्वामिनः प्राधान्यं गवां विशेषणभावस्तदा बहुव्रीहिः । अत [7]एवं चित्रा गावो यस्य स चित्रगुरिति स्वामिनः प्राधान्यं प्रदर्श्यते । 'तानीमानि' इति सर्वनामद्वयोपादानेन प्रत्यक्षविषयत्वादिदंशब्दस्य गणपठितेषु सर्वशब्दस्यान्तर्भावात्तद्गुणसंविज्ञानं सूचयति । **तस्यान्यपदार्थस्य गुणा** उपलक्षणानि तेषामपि कार्ये संविज्ञानं–तद्गुणसंविज्ञानम् । [8]तत्र चित्रगुरानीयतामिति स्वस्वामिभावसंबन्धः षष्ठ्यर्थ इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं, न तु गवाम् । 'दण्डी विषाणी चानीयताम्' इत्यत्र संयोगसमवायलक्षणेन संबन्धेन संबन्धिनि कार्ये विज्ञायमान उपलक्षणस्याप्यन्तर्भावो भवति । इहाप्यादिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थः । तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानामेव पृथक् प्रयोगसत्वात्कार्यार्थया संज्ञया प्रवर्तितव्यमिति सर्वशब्दस्यापि सा सिध्यति । यथा–'देवदत्तशालायां ब्राह्मणा आनीयन्ताम्' इत्युक्ते देवदत्तोऽपि यदि ब्राह्मणो भवति स्वशालास्थश्च तदा सोऽप्यानीयत एव ॥

**( उद्योतः )** [9]विग्रहप्रश्नोत्तरे 'तानि' इत्याद्यधिककथनमयुक्तमत आह—**अन्यपदार्थस्येति ॥ नेष्यत इति** । [10]प्रथमान्तानामन्यपदार्थप्राधान्ये बहुव्रीहिविधानादिति भावः ॥ नन्वेवमपि 'तानि' इत्येव सिद्धे 'इमानि'इति [11]व्यर्थमत आह—**सर्वनामद्वयेति** । सर्वनामद्वयोपादानेन तद्गुणसंविज्ञानं सूचयतीत्यन्वयः ॥ **प्रत्यक्षेति** । उद्भूतावयवभेदस्य गणपठितस्य समुदायस्येदमा परामर्शात् तत्र च सर्वशब्दस्यान्तर्भावादिति भावः ॥ गुणत्वं दर्शयति—**उपलक्षणानीति** । प्रकारतयाऽन्वयीनीत्यर्थः ॥ **कार्ये संविज्ञानमिति** । [12]तच्च द्वेधा । क्वचित् विशिष्टस्य क्रियायां संनिधानमात्रेण, यथा—क्रियायोगाभावेऽपि शुक्लवाससं भोजयेति । क्वचित्तु विशेषणस्यापि क्रियायोगेन, यथा—शुक्लवाससं पश्येति । कार्यं यत्र तद्भावभावि तत्र तद्गुणत्वमित्यर्थः फलितः । एवं तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः, अन्यत्र तदुपलक्षितस्य–इत्यपि भेदः ॥ अयं शब्दशक्तिस्वभावगम्योऽन्तर्भावः–कार्यित्वं कार्यसंनिहितत्वं वा । [13]एवंच यत्र संयोगसमवायान्यतरसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र तद्गुणः, अन्यत्रातद्गुण इत्युत्सर्ग इति गोलार्थः ॥ ननु प्रकृते न संयोगो नापि समवाय इत्यत आह—

१ निषेधे हेतुमाह—**भवति हीति** । हि यत इत्यर्थः । **अपिना**ऽतद्गुणसंविज्ञानसमुच्चयः ॥ छाया ॥

२ लौकिकवैदिके क्रमेणाह—**चित्रवेति** ॥ छाया ॥

३ 'प्रचरन्तीति तद्गुण' इति मुद्रितपाठः ॥

४ **तद्गुण**इत्यादिबहुव्रीहिः ॥ छाया ॥

५ **अन्यथा**–तानीत्यस्याभावे ॥ छाया ॥ **विशेष्यत्वं**–चित्रा गावोऽस्येति विग्रहवाक्ये गवां विशेष्यत्वं प्रतीयत इति भावः ।

६ इष्टापत्तावाह—**अत्र चेति** ॥ चस्त्वर्थे ॥ **तु** ह्यर्थे ॥ छाया ॥ **अत्र चार्थे**–अस्मिन्नर्थे, गवां विशेष्यत्वार्थे बहुव्रीहिर्नेत्यर्थः ॥

७ इदमेव द्रढयति—**अत एवेति** ॥ तत्रैव तदिष्टत्वादेवेत्यर्थः ॥ छाया ॥

८ तयोर्विविक्ते लक्ष्ये आह— **तत्रेति** ॥ उक्तबुद्धिस्थ–तयोर्मध्ये इत्यर्थः ॥ **स्वस्वामिभावसंबन्ध** इति पाठः ॥ छाया ॥

९ **विग्रहेति** । नन्वित्यादिः ॥ अत एवाधिक्यमिति भावः ॥ **आदिने**मानीति ॥ छाया ॥

१० **चस्त्वर्थे**, तुह्यर्थे, तत्रार्थेऽग्रिमस्य हेतुत्वसूचक इत्याह—**प्रथमान्तेति** ॥ एतेन 'पूर्वाचार्यप्रसिद्ध्याऽन्यपदार्थप्राधान्यस्याप्याश्रयणादिति' दण्ड्युक्तं निरस्तम् ॥ अत एव समानार्थताऽपि भाष्योक्तोपपन्ना ॥ छाया ॥

११ **व्यर्थं**–व्यर्थमेव ॥ समीपेऽनन्वयादाह—**सर्वेति** ॥ ननु तानीत्यस्य फलमुक्तं नेदमोऽत आह—**प्रत्यक्षेतीति** ॥ तत्तात्पर्यमाह—**उद्भूतेति** ॥ छाया ॥

१२ प्रदीपन्यूनतां परिहरति—**तच्चेति** ॥ कार्ये संविज्ञानं चेत्यर्थः । मात्रपदेन क्रियायोगव्यवच्छेदः ॥ अनुगममाह—**कार्यमिति** ॥ **तद्गुणत्वं**–तद्गुणसंविज्ञानत्वम् ॥ एवमग्रेऽपि बोध्यम् ॥ एवं तत्र भेदमुक्त्वा तयोर्भेदं प्रदीपोक्तमेवाह—**एवमिति** । अवान्तरभेदवदित्यर्थः ॥ **अन्यत्र**–अतद्गुणसंविज्ञाने । अत्रोपलक्षणत्वं प्रसिद्धम् ॥ एतेन 'गोमान् दण्डी विषाणीत्यादौ मत्वर्थे स्वस्वामिभावसंयोगसमवायानां विषयत्वादाद्ये स्वामिमात्रानयनेऽपि तद्रूपानाशाद्वनस्थाभिरपि ताभिस्तस्य तथाविधस्य सत्त्वेन न स्वस्य क्रियान्वयः । तदन्ययोस्तयोः क्रियाऽनन्वये संयोगादेरभावात्तद्रूपनाश इति तयोरपि तदन्वय इत्यस्तु संबन्धकृतभेदः ॥ बहुव्रीहौ तु स्वस्वामिभावाविशेषेऽपि क्वचित् स्वस्य तत्रानन्वयश्चित्रगुमानयेत्यादौ । क्वचित्क्रियायां सांनिध्यमात्रं न तु संबन्धः शुक्लवाससं भोजयेत्यादौ । अत्र स्वभाव एव शरणम् । कथमन्यथा प्रकृते संयोगादेरभावेनेष्टसिद्धिः । अवयवावयविनोः समवायेऽप्यवयविनोऽत्र कार्यासंबन्धः । विश्वादीनां प्रत्येकं तत्संबन्धेऽपि तान्प्रति सर्वशब्दासंभवादिति चिन्त्यं' इत्यपास्तम् ॥ उक्तानुगतरूपेणैव निर्वाहात् । शब्दतो निष्फलकार्यान्वयस्यात्रापि सत्त्वात् । स च लक्ष्याभावादवयवपर्यवसित इत्यन्यत् । किं च तस्य कार्यसंबन्धे एवाङ्गस्य तत्संबन्ध इत्यस्यानुक्तत्वेन तत्संबन्धानावश्यकत्वात् ॥ गृहस्थदण्डादिना दण्डीत्यादिधियोऽभावादङ्गस्य कार्यान्वयं विना संयोगादिनिरूपणमशक्यमित्याशयात् । तदेतदभिप्रेत्याह—**अयमिति** ॥ लम्बकर्णमानयेत्यादावाह—**कार्यित्वमिति** ॥ तं भोजयेत्यादावाह—**कार्येति** ॥ तथाच–विधेयान्वयितत्कालसंनिहितान्यतरस्वघटकावयवार्थक आद्यः । तद्भिन्नोऽन्त्य इति बोध्यम् ॥ छाया ॥

१३ कैयटाद्यनुरोधेन परिभाषितं तल्लक्षणमाह—**एवं चेति** । उक्तरीत्या तयोर्विविक्तविषयत्वे चेत्यर्थः ॥ अस्यापि दण्डी विषाणी च भोज्यतामित्यादौ व्यभिचारादाह—**उत्सर्ग इति** ॥ छाया ॥

**इहापीति** । एवं च समवायेन संबन्धिनोऽन्यपदार्थत्वेन तद्गुणत्वमेवोचितमित्यर्थः ॥ बहुवचनोपपत्तय आह—**उद्भूतावयवभेद इति** । अवयवगतसंख्यारोपेण बहुवचनमिति भावः ॥ नन्वेवं समुदायस्यैव संज्ञा स्यादत आह—**तस्य चेति** । युगपत्प्रयोगाभावात् पृथक्प्रयोगसत्वाच्च कार्यार्थया संज्ञया तदन्तर्भूतानामेव प्रवर्तितव्यमित्यन्वयः ॥ **'पृथक्प्रयोगत्वात्'** इति पाठे बहुव्रीहेस्त्वो बोध्यः ॥ **सिध्यतीति** । विनिगमनाविरहादिति भावः ॥ नन्वेवं सर्वशब्दस्य संबन्धविशेष्यत्वाभावात्कथं तस्य सर्वनामत्वमत आह—**यथेति** । स्वरूपेणोपलक्षणमपि सर्वशब्दः समुदायान्तर्भूततया संबन्धविशेष्योऽपि । यथा—देवदत्तत्वेन विशेषणमपि देवदत्तो ब्राह्मणत्वेन विशेष्य इति भावः ॥ **अन्यपदार्थत्वादिति** भाष्यस्य—अन्यैः पदार्थो यस्य तत्त्वादित्यर्थः ॥

---

## ( सर्वनामपदसाधुत्वाधिकरणम् )

### ( शङ्काभाष्यम् )

**इह 'सर्वनामानि' इति "पूर्वपदात्संज्ञायामगः" इति णत्वं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः ॥**

( प्रदीपः ) **णत्वं प्राप्नोतीति** । राजपुरुषादिवत्संज्ञाशब्दा अपि शास्त्रप्रक्रियायां सन्तमसन्तं वाऽवयवार्थमाश्रित्य व्युत्पाद्यन्त इति णत्वप्रसङ्गः । प्रयोगे च सणत्वा अणत्वाश्च नित्या एव शब्दाः । तत्र संज्ञायां सणत्वा एव साधवः, असंज्ञायां त्वणत्वा एवेति शास्त्रव्यापाराण्णत्वं प्राप्नोत्येव । सर्वार्थाभिधानयोग्यस्य शब्दस्य शक्तिनियमनमात्रं संज्ञाकरणमिति शब्दार्थसंबन्धनित्यत्वस्यापि न विरोधः ॥

( उद्द्योतः ) ननु सर्वनामशब्दो यदि व्युत्पन्नस्तदा संज्ञोपसर्जनप्रतिषेधवार्तिकारम्भानुपपत्तिः, नो चेत्पूर्वोत्तरपदविभागाभावात् **पूर्वपदादि**ति णत्वाप्राप्तिरत आह—**राजेति** । **सन्तं**—अन्वर्थसंज्ञायाम् ॥ **असन्तं**-शुद्धरूढे रथन्तरादौ ॥ **आश्रित्येति** । द्वितीयेविषये 'आरोप्य' इत्यर्थकम् । सामविशेषे रथकरणकतरणकर्तृत्वमारोप्य साधुत्वान्वाख्यानं यथा तथा सर्वार्थवाचकत्वरूपार्थमारोप्य प्रकृतेऽपीति न वार्तिकानुपपत्तिः, नापि णत्वाप्राप्तिरिति भावः ॥ ननु शब्दनित्यताविरोधात्कथमसतो णत्वस्यापादनमत आह—**प्रयोगे चेति** ॥ ननु संज्ञा चेत्कृत्रिमा तदा शब्दार्थसंबन्धनित्यताहानिः, असंज्ञा चेन्न णत्वप्राप्तिरत आह—**सर्वार्थेति** ॥ **शक्तिनियमनं**—शक्तिसंबन्धबोधनमेवेत्याहुः ॥ **न च** 'भृञोऽसंज्ञायां' इति सूत्रे भाष्ये—"यदेतत्संज्ञायां विधीयते तत्र न संज्ञायामभिधेयायामित्यर्थः, किं तर्हि ? तत्तत्कार्यविशिष्टेन चेत्संज्ञा गम्यत इत्यर्थः" इति वक्ष्यते, ततश्चात्र कथं णत्वप्राप्तिः ? न हि कृतणत्वेन संज्ञाऽवगतिः । अत एव रघुनाथादिशब्दे न णत्वमिति **वाच्यम्** ॥ आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अत **एव महत्याः संज्ञायाः करणे एतत्प्रयोजन**मिति वक्ष्यमाणं सङ्गच्छते । अनादिविनियुक्तसंज्ञास्थले तु यथाविनियुक्तानामेव साधुत्वमिति रघुनाथादौ णत्वाभावोऽध्वपरिमाणसंज्ञाभूतगव्यूतिशब्दे च न वलोपः, संज्ञात्वभङ्गापत्तेरिति दिक् ॥

### ( १९२ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ सर्वनामसंज्ञायां निपातनाण्णत्वाभावः ॥ * ॥

### ( भाष्यम् )

**सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति ॥**

( प्रदीपः ) **निपातनादिति** । लोकेऽप्ययं णत्वरहित एव प्रयुज्यते, तस्यात्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते ॥

(उद्द्योतः) सौत्रत्वादित्येव कुतो नोक्तमत आह—**लोक इति** ॥

### ( आक्षेपभाष्यम् )

**किमेतन्निपातनं नाम?**

( प्रदीपः ) **किमेतदिति** । भवतु अस्य साधुत्वं, णत्वप्रतिषेधे त्वस्य तात्पर्याभावाद्विकल्पः प्राप्नोतीति भावः ॥

### ( प्रतिबन्दीभाष्यम् )

**अथ कः प्रतिषेधो नाम?**

---

१ अनासत्तेराह—**युगपदिति** ॥ गामश्वमितिवदाह—**चेति** ॥ **नन्वेवम्**—सर्वशब्दस्य विशेष्योपलक्षणत्वे ॥ **उपलक्षणमपि**—विशेषणमपि ॥ छाया ॥

२ अन्यत्पदं तदर्थ इत्यर्थभ्रमं तद्व्याख्यानेनैव निराचष्टे—**अन्य इति** । **पदार्थः**—विशेष्यभूतः ॥ छाया ॥

३ **इहेति** शङ्कायाम् ॥ एवमग्रेऽपि ॥ **इति**—इत्यत्र ॥ छाया ॥ केचित् 'इह—अस्मिन् सूत्रे' इति कल्पयन्ति, तदकिञ्चित्करमयुक्तञ्च । अग्रे 'इह इको यणचि-इह तर्हि कर्तरि शप्' इत्यादौ तादृशार्थस्यासम्बन्धः स्यादत इहेति शङ्कायामित्येव युक्तम् ॥

४ **व्युत्पन्नः**—शुद्धयौगिकः ॥ **षेधवार्ती**त्यत्र धर्मीनियमवत्समासः ॥ तत्त्वस्यैव तत्रासत्त्वात् निषेधस्य प्राप्तिपूर्वकत्वात् ॥ छाया ॥

५ **द्वितीयेति** । आद्ये तु यथाश्रुतमेवेति भावः ॥ एवमुक्तेस्तात्पर्यमाह—**सामेति** । शुद्धरूढत्वेऽपीति भावः ॥ **तत्**—साधुत्वान्वाख्यानम् ॥ छाया ॥

६ 'रोप्य तत् प्रकृतेऽ' इति घ. पाठः ॥

७ **प्रयोगे चेतीति** । चस्त्वर्थे ॥ वृद्धिसंज्ञासूत्रस्थसिद्धान्तरीत्याह—**शक्तिसंबन्धेति** । एवेन यथाश्रुतं चिन्त्यमिति सूचितम् ॥ **आहुरिति** सिद्धान्तसूचकम् ॥ छाया ॥

८ **भाष्य** इत्यस्य वक्ष्यत इत्यत्रान्वयः । ततश्च भाष्ययोर्मिथो-विरोध इति भावः ॥ छाया ॥

९ प्रकृतसूत्रभाष्याशयमाह—**आधुनीति** ॥ इदं द्रढयति—**अत एवेति** ॥ उक्ताशयादेवेत्यर्थः ॥ छाया ॥

१० दृष्टान्तवैलक्षण्यं सतद्भाष्याशयमाह—**अनादीति** ॥ **यथेति** न भिन्नं पदम् ॥ **दिगिति** ॥ तदर्थस्तु वक्ष्यमाणरीत्याऽन्वर्थत्वाश्रयेणापि भाष्यं सुयोजमिति ॥ छाया ॥

११ **सर्वेति** । सर्वनामेतिसंज्ञायामित्यर्थः ॥ **निपेति** । अस्मादेव निपातनादित्यर्थः । मुनीनां लक्ष्यैकचक्षुष्कत्वात् ॥ छाया ॥

१२ **भवत्विति** । उक्तानुवादः ॥ छाया ॥

( प्रदीपः ) ईतरः प्रतिषेधेन साम्यं प्रतिपादयितुं पर्यनुयुङ्क्ते—**अथ क इति** ॥

( प्रतिषेधप्रतिपादकभाष्यम् )

**अविशेषेण किंचिदुक्त्वा विशेषेण 'न' इत्युच्यते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते—'इदं न भवति' इति ॥**

( निपातनप्रतिपादकभाष्यम् )

**निपातनमप्येवंजातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते —'इदं न भवति' इति ॥**

( प्रदीपः ) सर्वत्रैवाप्राप्त्यनुमानं बाधः । निपातनं चापि णत्वाप्राप्त्यनुमानमिति भावः ॥

( उद्द्योतः ) साम्यं दर्शयति—**सर्वत्रैवेति** ॥ **निपातनं चेति** । भावाभावयोरेकत्र विरोधादिति भावः ॥

( आक्षेपभाष्यम् )

**ननु च निपातनाच्चाणत्वं स्यात्, यथाप्राप्तं च णत्वम् ॥**

( प्रदीपः ) **ननु चेति** । प्रतिषेधस्य हि निवृत्तावेव तात्पर्यम्, निपातनस्य तु तद्रूपसाधुत्वप्रतिपादने, न तु रूपान्तरनिवृत्ताविति भावः ॥

( उद्द्योतः ) **न त्विति** । प्रयोगभेदेन च भावाभावविरोधपरिहार इति भावः ॥

( प्रतिबन्दीभाष्यम् )

**किमन्येऽप्येवं विधयः ?**

( उद्द्योतः ) भाष्ये-किमन्येऽपीति । **अन्येऽपि विधयः** किमेवं-एवंजातीया इति वक्ष्यमाणाभिप्रायेण **प्रश्नः** ॥

( प्रतिबन्द्युत्तरभाष्यम् )

**भवन्ति ॥**

( उद्द्योतः ) आशयानभिज्ञ उत्तरयति—**भवन्तीति** । यथा स्थानिवदादेश इत्येतद्विषये स्थानिप्रयुक्तं भवति, यथाप्राप्तस्यादेशप्रयुक्तस्य न निवृत्तिरिति भावः ॥

( आक्षेपभाष्यम् )

**इह-"इको यणचि" इति वचनात् यण् स्यात् । यथाप्राप्तश्चेक् श्रूयेत ॥**

( प्रदीपः ) **इको यणचीति** । यणो हि साधुत्वं प्रतिपाद्यते, न त्विङ्निवृत्तिरित्यर्थः ॥

( उद्द्योतः ) शङ्कते—**इको यणिति** । अस्य यदि भवन्तीत्यादिः ॥

( समाधानभाष्यम् )

**नैष दोषः । अस्त्यत्र विशेषः । षष्ठ्याऽत्र निर्देशः क्रियते । षष्ठी च पुनः स्थानिनं निवर्तयति ॥**

( प्रदीपः ) **षष्ठ्याऽत्रेति** । ततश्च संहिताविषये स्वाभाविकोऽप्रयोग इकः षष्ठीनिर्देशेन प्रतिपाद्यते । यथा—'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इति, न तत्र दर्भाः प्रस्तीर्यन्ते ॥

( उद्द्योतः ) **ततश्च संहितेति** । स्थानिनो निवृत्तिर्नाम तत्साधुत्वबुद्धिनिवृत्तिः । सा च संहितायां शाकलाभावे-इति भावः ॥ **प्रस्तीर्यन्त इति** । किन्तु तत्प्रसङ्गे शराः प्रस्तीर्यन्त इति शेषः । तथा च स्थानषष्ठीनिर्देशे उभयत्रापि तात्पर्यमिति भावः ॥

( आक्षेपभाष्यम् )

**इह तर्हि-"कर्तरि शप्" "दिवादिभ्यः श्यन्" इति वचनाच्च श्यन् स्यात् । यथाप्राप्तश्च शप् श्रूयेत ॥**

( प्रदीपः ) **इह तर्हीति** । विकल्पः प्राप्नोतीति भावः । समुच्चयस्तु न भवति, एकेन परदेशस्यावष्टब्धत्वाद्धातुसार्वधातुकयोश्चार्थाभिधाने एकेनैव साहायकस्य संपादनात् ॥

---

१ यद्यपि निपातनस्यान्यत्र विधिसाम्यमपि तथापि प्रकृताशयं भाष्यमित्याह—**इतरः प्रतीति** ॥ छाया ॥

२ **गम्यते**-शब्दतः ॥ छाया ॥

३ **गम्यते**-अनुमानेन ॥ अयमेव भेदः, अन्यत्तुल्यमिति ॥ छाया ॥

४ इतरस्याशयं सूचयन्साम्यमेवाहेत्याह—**साम्यमिति** ॥ छाया ॥

५ प्रागुक्तविरोधाभावमाह—**प्रयोगेति** ॥ चस्त्वर्थे ॥ छाया ॥

६ **किमन्येऽपी**त्यादेः '**श्रूयेत**' इत्य तस्यैकत्वे दण्डिकृष्णाद्यभिमतेऽसंगतिरसंबद्धत्वमानर्थक्यं चांशस्य स्फुटमेवात आह—**किमन्येऽपीतीति** ॥ **वक्ष्येति** । अनुपदमेव **यथे**त्यादिनेति भावः ॥ छाया ॥

७ तमाशयमाह—**यथेति** । एवं च शङ्का सप्रमाणेति साधितम् ॥ छाया ॥

८ अन्येऽपि विधय एवं भवन्तीति स्वीकारे दोषमाह—**इह इक इति** ॥

९ इहार्थमाह—**शङ्कते इति** । तत्रेत्यादिः ॥ अत एवाह—**अस्येति** ॥ छाया ॥

१० **चो** यत इत्यर्थको '**अस्त्यत्र**' इत्यतः प्राग् योज्यः । **पुन**स्त्वर्थे ॥ छाया ॥

११ शब्दनित्यत्वायाह— **स्थानिन इति** ॥ शाकलसत्त्वे—संहितायां च तस्याः सत्त्वादाह—**सा च संहीति** ॥ इदं च वाक्याभिप्रायम् । चिन्वन्ति तन्वन्तीत्यादावेकपदेऽपि बोध्यम् ॥ तस्य शाब्दत्वादाह—**किंत्विति** ॥ स्थानं प्रसङ्ग इत्याह—**प्रसङ्गे इति** ॥ भाष्यादिस्थषष्ठीपदं स्थानषष्ठीपरमित्याह—**स्थानेति** ॥ एतेन '**ततश्चे**त्यादि [प्रदीपोक्तं] चिन्त्यम् । सर्वशास्त्रस्यैव स्वाभाविकप्रयोगविषयत्वेन विशिष्यात्र तदुक्त्ययोगात् । षष्ठीनिर्देशेनैव दर्भाणामभावे शरप्रस्तारेण तस्य स्वाभाविकत्वे मानाभावेन दृष्टान्तत्वायोगाचेति' रत्नोक्तमपास्तम् । शब्दनित्यत्वाय सर्वत्र तथा सत्त्वेऽपि प्रकृताशयेन तथोक्तेः । **दर्भाणा**मित्यस्य दर्भशून्यदेशविषयकत्वेन तत्रापि स्वाभाविकत्वेन दृष्टान्तसंगतेः । अन्यथा दर्भसत्त्वेऽपि तदापत्तेश्चेति **दिक्** ॥ अत एवाह—**स्थानषष्ठीति** ॥ छाया ॥

१२ अयं वचनद्वयसमुच्चयार्थश्चकारः । अग्रिमश्चशब्दः कार्यद्वयसमुच्चायकः ॥

**( उद्द्योतः ) विकल्प इति ।** स्थानषष्ठ्यभावेनोभयत्र तात्पर्याभावादिति भावः ॥ **परदेशस्येति ।** विकरणविधौ **'धातोः' 'परश्च'** इत्यधिकारेण धातोः परो विकरणः प्रयोक्तव्य इत्यर्थादिति भावः ॥ ननु धातोः परो विधातव्य इत्यर्थे पूर्वं श्यनि विहिते पश्चाच्छबपि स्यात्, तिङ्विकरणवत् । 'सार्वधातुके' इति च विषयसप्तमी स्यादत आह—**धात्विति ॥ साहायकं**-सहायकार्यम् ॥

**( समाधानभाष्यम् )**

**नैष दोषः । शबादेशाः श्यन्नादयः करिष्यन्ते ॥**

**( प्रदीपः ) शबादेशा इति ।** श्यनश्च शित्करणं ज्ञापकम्—स्थानिवद्भावाभावस्य । तेन 'करोति' इत्युप्रत्ययस्यापित्त्वादनुदात्तत्वं न भवति । 'कुर्वती' इत्यत्र 'शप्श्यनोर्नित्यम्' इति नुमागमो न भवति, 'आत्' इत्यधिकाराद्वा । 'रुधादिभ्यः श्नम्' इत्यत्र रुधादीनां श्रुतत्वात्तेषामेवान्त्यादचः परः श्नम् भवति, न तु शपः । यथा च-'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति रमागमो रोपधयोर्निवर्तकः, एवं शपः श्नम् ॥

**( उद्द्योतः )** ननु श्यन्नादीनामादेशत्वे स्थानिवद्भावात्पित्त्वे करोतीत्यादौ विकरणस्यानुदात्तत्वं स्यात् । **न च** सति शिष्टस्वरबलीयस्त्वस्य विकरणान्यविषयत्वेनोप्रत्ययस्य कथमुदात्तत्वं सिद्धान्तेऽपीति **वाच्यम् ।** सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य तेन दुर्बलत्वकथनादत आह—**श्यनश्च शित्करणमिति ।** न च शित्वं नियमार्थं स्यात्—शिदेव न पिदिति । शित्त्वस्य नियमार्थत्वकल्पनापेक्षयाऽतिदेशबाधकस्यैवौचित्यात् । अतिदेशबाधश्च तवाप्यावश्यक एव ॥ क्वचित्तु **'नित्करणं'** इति पाठः ॥ तद्धि प्रत्ययाद्युदात्तत्वबाधेन **ञ्नितीत्यनेन** निदन्तस्याद्युदात्तत्वाय । स्थानिवत्त्वात्पित्वेनानुदात्तत्वे तु लसार्वधातुकस्यापि **अदुपदेशादित्यनुदात्तत्वे** धातोरुदात्तत्वं सिद्धमेवेति तदर्थं सत् ज्ञापकमिति भावः ॥ परं त्वयं पाठः **स्थानिवत्सूत्रस्थकैयटविरुद्धः ॥ आदित्यधिकाराद्वेति ।** तुदतीत्यादौ नित्यनुम्व्यावृत्तये पूर्वोक्तसमाधिरेवावश्यकः ॥ 'शप्श्यनोः–' इति सूत्रस्थश्यन्ग्रहणमप्युक्तार्थे ज्ञापकमिति बोध्यम् ॥ नन्वेवं शपः परः श्नम् स्यादत आह—**रुधादिभ्य इति ।** 'सार्वधातुके' इति सप्तम्या 'रुधादिभ्यः' इति पञ्चम्याः षष्ठीकल्पनात्तेषामेवान्त्यादचः परः श्नमिति भावः ॥ **तृणह** इति निर्देशश्च रुधादीनामागमित्वे लिङ्गम् ॥ नन्वेवं शपः श्रवणं स्यादत आह—**यथा चेति ।** शप इत्यस्य षष्ठीकल्पनसामर्थ्यादिति भावः ॥

**( आक्षेपभाष्यम् )**

**तत्तर्हि शपो ग्रहणं कर्तव्यम्?**

**( आक्षेपबाधकभाष्यम् )**

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥**

**क्व प्रकृतम्?**

**"कर्तरि शप्" इति ॥**

**( आक्षेपसाधकभाष्यम् )**

**तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ॥**

---

१ **अधीति ।** उभयोरप्यधिकारेणेत्यर्थः ॥ पूर्वारुच्याऽग्रिमं हेत्वन्तरम् । अत एव चोऽन्त्ये योज्यः प्रदीप इति ध्वनयन्नाह—**ननु धातोरिति ॥ इत्यर्थे**—न तु प्रागुक्ते ॥ ईदृशस्यादृष्टचरत्वनिरासायाह—**तिङिति ॥** नन्वेवमपि प्रकृते सार्वधातुकाव्यवहितपरत्वस्य नोभयोः संभवोऽत आह—**सार्वेति ॥ साहायके 'योपधात्'** इति वुञ् ॥ इदं च भाष्यस्वारस्याच्छ्रूयमाणविकरणकलौकिकप्रयोगविषयं न वैदिकविषयं, तत्रापाद्यमानरूपाभावात् ॥ छाया ॥

२ यथा धातोः परस्तिङ् भवति ततश्च धातोः परः शप् भवति, तद्वत् ॥

३ यद्यपि **नाप्राप्ते** इति वक्ष्यमाणनिर्दुष्टपरिहारोऽस्ति तथापि 'यक्षानुरूपो-' इति न्यायेन पूर्वोपस्थितत्वेन संभवेन चाह—**शबादेशा इति ॥ यत** इत्यादिः ॥ एवमग्रेऽपि ॥ छाया ॥

४ प्रमाणसिद्धस्तथैवार्थ इत्याह—**सार्वेति ॥ एवेन** धात्वादिनिरासः ॥ **श्यनश्चेति** चो ह्यर्थे ॥ **अतिदेशेति । तेनेति** शेषः । क्वचिदनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्त्याऽफलत्वात् ॥ विधिनियमसंभवे विधेरेव ज्यायस्त्वाच्च ॥ युक्त्यन्तरमाह—**अतीति ॥ अत एव चः** किंचेत्यर्थकः ॥ अन्यथा श्यनः शित्त्वं व्यर्थमेवापित्वस्योक्तरीत्या सिद्धत्वादिष्टानुरोधेन व्यवस्थायाः स्वीकारात् । श्यन्ग्रहणानर्थक्यापाताच्च । तद् ध्वनयन् वक्ष्यति—**शप्श्यनोरिति ॥** एतेन–उप्रत्ययस्यापि ततः शित्त्वे प्राप्ते नियमार्थमिदम्–श्यन्नादय एव शितः, नोप्रत्ययोऽपि—इत्यपास्तम् । उक्तयुक्तेः, **नित्यं करोतेः अत उत्सार्वधातुक** इत्यादि ज्ञापकात्तस्याशित्त्वसिद्धेश्च ॥ छाया ॥

५ दण्ड्याद्युक्तिं खण्डयति—**क्वचित्त्विति ॥ धातोरिति ।** दिवादावनेकाज्धातुस्तु **नास्ति, वा वृत्विति** वाशब्दः **'पत ऐश्वर्ये'** इति पूर्ववाक्यसंबद्धोऽस्यैव श्यन्विकल्पार्थो वा, न धात्वन्तःपाती । न च भ्वादौ दिवादौ च पाठाद्विनाऽपि वाशब्दं शप्श्यनौ स्त इति **वाच्यम् ॥** भ्वादिपाठस्य **वृद्भ्यः स्यसनोरित्यन्तर्गणकार्यकरत्वेनोपपत्तेः** शपः श्रुत्युपपादनेऽसामर्थ्यादिति स तथैव । **'ततो वावृत्यमाना सा'** इति भट्टिकाव्ये 'वृत्यमानेव' इत्यर्थ इति तदाशयः ॥ छाया ॥

६ **विरुद्ध इति । ताच्छील्यादिविषये चानशि श्यनो नित्वं प्रकृतेराद्युदात्तार्थं स्यात् । [ तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्वमाश्रीयते ]** इति हि तत्र तेनोक्तम् ॥छाया॥

७ पक्षान्तरमाह—**आदित्यधिकाराद्वेति ॥** अस्याव्यापकत्वमाह—**तुदतीति ॥** तथा च वाशब्दस्तत्रानास्थायामिति **बोध्यम् ॥** तात्त्विकं निःसंदिग्धं व्यापकं समाधिमाह—**शबिति ॥ उक्तार्थे**–अतिदेशबाधे ॥ **एवं**–उक्तरीत्या रुधादिभ्य **इति** पञ्चम्या शबित्यत्र षष्ठीकल्पने ॥ **श्रुतानुमितयोरिति** न्यायेन कैयटाभिमतेनाह—**सार्वेति ॥ पञ्चम्याः**–स्थान इति शेषः ॥ निर्देशाभावादु**भयनिर्देश** इत्यस्यानवसरः । यथाकथंचिन्निर्देशे तत्प्रवृत्तौ पञ्चमीनिर्देशस्याचारितार्थ्येनात्र वैपरीत्ये शङ्कोक्तस्यैव युक्तत्वं चाह—**तृणह इति ॥** पञ्चमीनिर्देशस्तु प्रत्ययप्रकरणादिति भावः ॥ एवं च तया तत्रैव षष्ठीकल्पनं न तु शबित्यत्र ॥ **शप इति ।** तद्वदुक्तरीत्या तत्रापि षष्ठीकल्पनमिति भावः ॥ छाया ॥

( आक्षेपबाधकभाष्यम् )

'दिवादिभ्यः' इत्येषा पञ्चमी 'शप्' इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति "तस्मादित्युत्तरस्य" इति ॥

( आक्षेपसाधकभाष्यम् )

प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥

( आक्षेपबाधकभाष्यम् )

नायं प्रत्ययविधिः। विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥

( उद्द्योतः ) भाष्ये—विहित इति प्रत्यय इति। शब्रूपः प्रत्यय इत्यर्थः ॥

( आक्षेपभाष्यम् )

इह तर्हि-"अव्ययसर्वनाम्नामकच् प्राक् टेः" इति वचनाच्चाकच् स्यात्। यथाप्राप्तश्च कः श्रूयेत ॥

( प्रदीपः ) इह तर्हीति। देशभेदाद्विरोधाभावेऽपि काकचोरेकार्थत्वाद्विकल्प एव चोद्यते, न समुच्चयः ॥

( उद्द्योतः ) एकार्थत्वादिति। अज्ञातादेरेकेन द्योतितत्वान्न द्वयोः समुच्चय इति भावः ॥

( समाधानभाष्यम् )

नैष दोषः। नाप्राप्ते हि केऽकजारभ्यते, स बाधको भविष्यति ॥

( उपसंहारभाष्यम् )

निपातनमप्येवंजातीयकमेव। नाप्राप्ते णत्वे निपातनमारभ्यते, तद्बाधकं भविष्यति ॥

( उद्द्योतः ) येन नाप्राप्तिन्यायेनाकजादीनां बाधकत्वे परेणोक्ते सिद्धान्ती तेनैव न्यायेन निपातनानामपि बाधकत्वमेवेत्याह—निपातनमपीति ॥

( आक्षेपभाष्यम् )

यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति, समस्तते दोषो भवति ॥

इहान्ये वैयाकरणाः समस्तते विभाषा लोपमारभन्ते—"समो हिततततयोर्वा" इति। सततम्-संततम्, सहितम्-संहितमिति ॥

इह पुनर्भवान्निपातनाल्लोपमिच्छति—"अपरस्पराः क्रियासातत्ये" इति। यथाप्राप्तं चालोपम्—संततमिति, एतन्न सिध्यति ॥

( उद्द्योतः ) भाष्ये—एतदिति। 'सततं' 'सन्ततं' इत्युभयमित्यर्थः ॥

( सिद्धान्तिसमाधानभाष्यम् )

कर्तव्योऽत्र यत्नः। बाधकान्येव हि निपातनानि भवन्ति ॥

( प्रदीपः ) कर्तव्योऽत्र यत्न इति। "लुम्पेदवश्यमः" इत्ययं श्लोकोऽन्यार्थमवश्यं पठितव्यः। तेनैवं 'सततं' 'सन्ततम्' इति च सिध्यति, न तु निपातनेनेत्यर्थः। 'सांतत्यम्' इति चानभिधानात् ष्यञन्तस्य प्रयोगाभावः। पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तः पृषोदरादित्वान्न भवति ॥

( उद्द्योतः ) श्लोकोऽन्यार्थमवश्यमिति। एकदेशानुमतिद्वारा 'सातत्ये' इति निर्देशेन स एव श्लोको ज्ञाप्यते—इत्यर्थः ॥ न त्विति। निपातनेन 'सततं' इति न साध्यत इत्यर्थः ॥ नन्वेवं सन्ततात्ष्यञि सान्तत्यमित्यपि स्यादत आह—इति चानभिधानादिति। अत एव भगवता 'सन्ततमिति न सिध्यति' इत्येवोक्तं न तु सूत्रोच्चारितसजातीयं सान्तत्यमिति न सिध्यतीत्युक्तम् ॥ पुराणशब्देनेति। 'पुराणप्रोक्तेषु—' इत्यत्र निपातितेनेत्यर्थः ॥ पृषोदरादित्वादिति। एवं च तेनैवोभयोरपि साधुत्वम्, न तु निपातनेनेति भावः ॥

---

१ पञ्चम्यन्तात्परं षष्ठ्यन्तं बोध्यमिति तत्र मते सूत्रार्थः ॥ छाया॥

२ न च—नहि ॥ छाया ॥

३ प्रकृतोऽनुवर्तते चेत्यन्वयः ॥ छाया ॥

४ अयमुद्द्योतः 'ननु श्यनादीनामादेशत्वे' इत्यतः प्राक् प्राचीनपुस्तकेषु दृश्यते, खण्डशो व्याख्यानवेलायां परस्तादायातः ॥

५ अप्यन्तेन समुच्चयोपपादनं कृतम् ॥ अत एव नानिष्टतया स तद्भवनार्ह इत्यत आह—एकेति ॥ 'एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात्' ( पू. मी. १२।३।१० ) इति न्यायेन तथैवौचित्यादिति भावः ॥ छाया ॥

६ द्योतकत्वेन तत्त्वं न तु वाचकत्वेनेत्याह—अज्ञेति॥ अकेन—अकचा ॥ छाया ॥ 'अज्ञातादेरकेन' इति च. पाठः ॥

७ आदिना श्यन्नादिस्थलेऽप्येवमिति सूचितम् ॥ अत एवाह—सिद्धान्तीति ॥ एतेन प्रागुक्तस्यातत्त्वं सूचितम् ॥

८ सम इति। ततः परे ततशब्दे सतीत्यर्थः ॥ तमेवाह—इहेत्यादिना ॥ इह—शङ्कायाम् ॥ इह—पाणिनीये तु ॥ अलोपोदाहरणमाह—संततमितीति ॥ छाया ॥

९ तेनैवेति। श्लोकेनैवेत्यर्थः। एवेन निपातनव्यवच्छेदः। तेनोभयासिद्धेरिति भावः ॥ छाया ॥ श्लोकश्च—

"लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि।
समो वा हिततततयोर्मांसस्य पचि युड्घञोः ॥" इति ॥

१० तस्य निर्मूलत्वं निराचष्टे—एकेति ॥ छाया ॥

११ एवं—श्लोकेनैवोभयसिद्धौ॥ इति चेति। चस्त्वर्थे॥ छाया ॥

१२ अनभिधानं समूलयति—अत एवेति। तदनभिधानादेवेत्यर्थः। अन्यविकन्यायेनेति भावः ॥ छाया ॥

१३ उभयव्यापारे गौरवमिति लाघवादाह—एवं चेति। तत्त्वावश्यकत्वे चेत्यर्थः ॥ अपिर्वाक्यालंकारे ॥ एवव्यावर्त्यमेवाह—न त्विति। पुराणशब्दस्येति भावः ॥ एवं च तन्नैव निपातनमिति बाधकान्येव हीति भाष्यं समञ्जसम् ॥ छाया ॥

( संज्ञोपसर्जनाधिकरणम् )

( १९३ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ संज्ञोपसर्जनप्रतिषेधः ॥ * ॥

( भाष्यम् )

**संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः । सर्वो नाम कश्चित्, तस्मै-सर्वाय देहि । अतिसर्वाय देहि ॥**

**( प्रदीपः ) संज्ञोपसर्जनीभूतानामिति ।** ये विषयान्तरे दृष्टास्त एवेमामवस्थां प्राप्ता इति विवक्षया च्विप्रत्ययनिर्देशः ॥ **सर्वाय देहीति ।** पदकार्येषु गौणमुख्यन्यायो न प्रातिपदिककार्येष्विति 'शब्दाश्रये च वृद्ध्यात्वे' इत्यत्रोक्तमिति प्रसिद्ध्यप्रसिद्धिवशात्संभवन्नपीह स नोक्तः । ** समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिरेकद्रव्योपनिवेशिनी संज्ञा* ** इत्येतदनपेक्ष्य संज्ञाप्रतिषेधः । तत्र ह्यपेक्षिते परया पूर्वा संज्ञा बाध्यत इति संज्ञासंज्ञया सर्वनामसंज्ञाबाधनात्प्रसङ्गाभावः ॥ **अतिसर्वायेति ।** प्रादिसमासोऽयं, बहुव्रीहौ संज्ञाप्रतिषेधात् । 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति तदन्तविधिः 'परमसर्वस्मै' इत्याद्यर्थ आश्रितः ॥

**( उद्द्योतः ) च्विप्रत्ययेति ।** गणपठितेभ्यः संज्ञोपसर्जनानां भेदात्संज्ञाया अप्राप्तौ प्रतिषेधानर्थक्यमिति शङ्कान्युदासाय भाष्ये च्विरुपात्त इति भावः ॥ तत्तत्पदत्वारोपवत् **तदर्थे** उपसर्जनत्वमप्यारोपितमिति च्वेरुपपत्तिरिति तात्पर्यम् ॥ **पदकार्येष्विति ।** न च संज्ञा तथेति भावः ॥ इदमेव वार्तिकं तस्य न्यायस्य पदकार्यविषयत्वे लिङ्गमिति तात्पर्यम् ॥ अत **एवाभिव्यक्तपदार्था ये** इति न्यायस्याप्यत्राप्रवृत्तिरिति बोध्यम् ॥ अत्र न गुणयोगेन लाक्षणिकत्वरूपं गौणत्वमत आह— **प्रसिद्धीति ।** तन्मूलं प्रसिद्धत्वादिकमत्रापि तुल्यमित्यर्थः ॥ **समासेति ।** अनेन क्रमेणैताः संज्ञा एकसंज्ञाधिकारे कार्या इति वक्ष्यत्याकडारसूत्रे । तदनपेक्ष्यायं संज्ञाप्रतिषेध इत्यर्थः ॥ **एकद्रव्योपनिवेशिनीति ।** लौकिकसंज्ञालक्षणम् । एतेन सर्वनामादिसंज्ञास्वनेकविषयास्विदमव्याप्तमिति परास्तम् ॥ नन्वतिसर्वस्य गणे पाठाभावात्संज्ञासूत्रे विशेष्यासन्निधानेन तदन्तविधेरभावाच्च कथमत्र प्राप्तिरत आह—**प्रयोजनमिति ।** शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥ एतत्तदन्तविधिफलत्वेन 'परमसः' इत्यस्योपन्यासः क्वचिद्दृश्यते स चिन्त्यः, त्यदादीनाम इत्यादावङ्गविशेषणत्वमूलकतदन्तविधिना सिद्धत्वात् ॥ सैभावे तु **विहितविशेषणमिति** बोध्यम् ॥

( आक्षेपभाष्यम् )

**स कथं कर्तव्यः ?**

( १९४ समाधानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ पाठात्पर्युदासः, पठितानां संज्ञाकरणम् ॥ * ॥

( भाष्यम् )

**पाठादेव पर्युदासः कर्तव्यः, शुद्धानां पठितानां संज्ञा कर्तव्या । सर्वादीनि सर्वनामसंज्ञानि भवन्ति, संज्ञोपसर्जनीभूतानि न सर्वादीनि ॥**

**(प्रदीपः) पाठादिति ।** यथा—**'तिङोगोत्रादीनि'** इत्यत्र **कुत्सनाभीक्ष्ण्य**ग्रहणं गोत्रादिपाठविशेषणम्, तथेहापि सर्वादिसन्निवेशो विशेष्यते—असंज्ञोपसर्जनानि सर्वादीनि **गणसन्निविष्टानि**, नान्यानीत्यर्थः ॥

**( उद्द्योतः ) यथेति ।** यथा तत्सूत्रं निघातविधायकं वाक्यभेदेन पाठविशेषणं च, तथेहापीत्यर्थः ॥

---

१ संशांशे आह—**समासेति ॥ सर्वनामसंज्ञाया बाधेति ।** तथा च वक्ष्यमाणरीत्या तेषां सर्वादित्वमपि नेत्यन्तर्गणकार्यमपि न ॥ एतेन कैयटोक्तं **'अनपेक्ष्य'** इति चिन्त्यम् । तथाप्यन्तर्गणकार्यनिवारणाभावादिति निरस्तम् ॥ छाया ॥

२ **भाष्ये,** न तु वार्तिके ॥ ननु कथमेतावता शङ्कानिरासः, अर्थभेदेन शब्दभेदादत आह— **तत्तदिति ।** गणस्थेषु संज्ञाशब्दत्वोपसर्जनशब्दत्वेत्यर्थः ॥ इदं च वार्तिकमतेऽप्यावश्यकमिति दृष्टान्तत्वेनोपन्यस्तम् । अन्यथा तत्रापि शङ्का तस्यैवेति भावः ॥ **तदर्थे—** गणपठितार्थे ॥ प्रदीपस्थद्वितीयेतिहेंतावितिं सूचयन्नाह—**न चेति ।** यतः **संज्ञा**—प्रकृतसंज्ञा **तथा**—पदकार्यमित्यर्थः ॥ तदेव समूलयति—**इदमेवेति ॥ अत एवेति ।** तस्य तद्विषयकत्वे तस्य तन्मूलकत्वादेवेत्यर्थः ॥ **अत्र**—प्रकृते । उभयत्र तन्न्याये तु तथैवेति शङ्काशयः ॥ **तन्मूलमिति ।** न्यायमूलमित्यर्थः ॥ **आदिनोक्तस्यापि** ग्रहणम् ॥ तथा च तत्रोभयोरपि ग्रहणं यथासंभवमिति प्रकृते प्रसिद्ध्या निर्वाह इति भावः ॥ छाया ॥

३ **विहितेति । सर्वनाम्न** इतीति भावः ॥ एतेन **'प्रादीत्यादिकैयटोक्तं चिन्त्यम्'** न **बह्विति** सूत्रस्यालौकिकवाक्यस्यानुपसर्जनसर्वादिपरत्वात् । संज्ञायां तदन्तविध्यभावेऽपि **पदाङ्गेति** सिद्धतदन्तविधिना तत्र सायादिसंभवात् । तस्माद् बहुव्रीहिप्रादिसमाससाधारणमिदमिति रत्नोक्तं निरस्तम् । उक्तयुक्तेः । आरोपेणावश्यकेन तत्रापि तत्सत्वाच्च ॥ छाया ॥

४ वार्तिकस्य सामान्यत्वाच्छङ्कते—**स कथमिति ।** शेषपूरणस्यावश्यकत्वेऽपि वाक्यभेदेन किं संज्ञानिषेध उत सर्वादित्वनिषेध इत्यर्थः ॥ छाया ॥

५ तत्र द्वितीयपक्षाशयेनाह—**पाठादिति ।** पाठशब्दोऽधिकरणघञा गणपरः ॥ तत्र हेतुमाह—**पठितेति ।** यत इत्यादिः ॥ इदमेव विशदयति—**पाठादेवेति । एवेन** पक्षान्तरव्यवच्छेदः ॥ पठितत्वमात्रेऽस्याव्यावर्तकत्वादाह—**शुद्धानामिति ।** अन्याविशेषणानां पौरुषसंकेतशून्यानां चेत्यर्थः । एकवाक्येनोभयालाभाद्वाक्यभेदमाह—**सर्वादीनीति** ॥ छाया ॥

६ सद्दृष्टान्तमाशयमाह—**यथेति ।** भाष्यस्थपाठशब्दार्थो **गणेति** ॥ छाया ॥

७ स्पष्टीकरोति—**यथा तदिति ॥ भेदेनेति ।** तेन **'चनचिदिव—'** इत्यादावेतदर्थकानामेव ग्रहणमिति भावः ॥ छाया ॥

( आक्षेपभाष्यम् )

**किमविशेषेण ?**

**( प्रदीपः ) किमविशेषेणेति ।** किं यत् सर्वेषां सर्वादीनां सर्वनामकार्यं[1] तदर्थमेव-इति **प्रश्नः ॥**

**( उद्योतः )** यदि 'अविशेषेण' इत्यस्य सर्वकार्यार्थमित्यर्थः, तर्हि **'नेत्याह विशेषेण च'** इत्युत्तरग्रन्थासङ्गतिरत[3] आह— **किं यत्सर्वेषामिति ।** यद्यपि[4] सायाद्यपि न सर्वेषां कार्यम्, उभभवदादावसंभवात्; तथाप्यन्तर्गणानाश्रयणेन विधीयमानं कार्यमिति तदर्थो बोध्यः ॥

( समाधानभाष्यम् )

**नेत्याह । विशेषेण[5] च ॥**

**(प्रदीपः) विशेषेण चेति । च**शब्दादविशेषेण चेत्यर्थः । यत् गणपाठोपलक्षितं विशिष्टं कार्यं 'त्यदादीनामः' 'अद्ड्डतरादिभ्यः' इत्यादि, तदर्थमपि पाठविशेषणमित्यर्थः ॥ यत्तु[6] कार्यं 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यादि स्वरूपमात्राश्रयं न सन्निवेशापेक्षं, तदविशेषेण भवति । तत्र हि न गणपठितयोर्युष्मदस्मदोर्निर्देशः, अपि त्वौणादिकयोः ॥

**( उद्योतः ) न संनिवेशेति ।** न सामान्यविशेषसंनिवेशापेक्षमित्यर्थः ॥ **अविशेषेणेति ।** संज्ञोपसर्जनयोरपीत्यर्थः ॥ **न गणेति ।** न गणपठितत्वाकारेणेत्यर्थः ॥

( भाष्यम् )

**किं[8] प्रयोजनम् ?**

**( १९५ प्रयोजनवार्तिकम् ॥ ९ ॥ )**

## ॥ * ॥ सर्वाद्यानन्तर्यकार्यार्थम् ॥ * ॥

( भाष्यम् )

**सर्वादीनामानन्तर्येण[9] यदुच्यते कार्यं तदपि संज्ञोपसर्जनीभूतानां मा भूदिति ॥**

**( उद्योतः )** भाष्ये— **सर्वादीनाम्**–तदन्तर्भूतानां त्यदादिप्रभृतीनाम् ॥ **आनन्तर्येण**–आनन्तर्योपलक्षितत्यदादीनामित्यादिरूपेणेत्यर्थः ॥

( प्रश्नभाष्यम् )

**किं प्रयोजनम् ?**

**( उद्योतः ) किं प्रयोजनमिति ।** किं[10] प्रयोजनमित्यर्थः ॥

**( १९६ प्रयोजनवार्तिकम् ॥ १० ॥ )**

## ॥*॥ प्रयोजनं डतरादीनामद्ड्भावे ॥*॥

( भाष्यम् )

**डतरादीनामद्ड्भावे प्रयोजनम् । अतिक्रान्तमिदं ब्राह्मणकुलं कतरत्–अतिकतरं ब्राह्मणकुलमिति ॥**

**( १९७ प्रयोजनवार्तिकम् ॥ ११ ॥ )**

## ॥ * ॥ त्यदादिविधौ च ॥ * ॥

( भाष्यम् )

**त्यदादिविधौ च प्रयोजनम् । अतिक्रान्तोऽयं ब्राह्मणस्तम्–अतितद् ब्राह्मण इति ॥**

( संज्ञाप्रतिषेधप्रत्याख्यानभाष्यम् )

**संज्ञाप्रतिषेधस्तावन्न वक्तव्यः । उपरिष्टाद्योगविभागः करिष्यते—"पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्", ततः–"असंज्ञायाम्" इति । '[11]सर्वादीनि' इत्येवं यान्यनुक्रान्तानि असंज्ञायां तानि द्रष्टव्यानि ॥**

**( उद्योतः ) [12]असंज्ञायाम्**–इति योगविभागो गणसूत्रे, नाष्टाध्यायीस्थे, तस्य जसि विभाषाविधायकत्वादिति बोध्यम् ॥ **स्वमज्ञातीत्यादा**वपीदमनुवर्तत इति न दोषः ॥ **सर्वादीनीत्येवं यानीति । [13]सर्वादीनि** शब्दरूपाणि **इत्येवं** सर्वविश्वेत्यादिक्रमेण **यानि** पञ्चत्रिंशदनुक्रान्तानि तानीत्यर्थः ॥

( उपसर्जनप्रतिषेधप्रत्याख्यानभाष्यम् )

**उपसर्जनप्रतिषेधश्च[14] न कर्तव्यः । "अनुपसर्जनात्" इत्येष योगः प्रत्याख्यायते, तमेवमभिसंभन्त्स्यामः—अनुपसर्जन-अ-अदिति ॥**

---

१ **किमेति ।** सर्वादित्वावाच्छिन्नोद्देश्यताककार्यार्थमेव पाठात्पर्युदासः किं इत्यभिप्रायः ॥

२ **सर्वं वाक्य**मिति न्यायेनाह— **तदर्थमेवेति** ॥ छाया ॥

३ **ग्रन्थासंगतिरिति ।** तेन तस्यैव प्रतिपादनात् ॥ छाया ॥

४ सर्वनामकार्यमित्यत्र भेदेनाह— **यद्यपीति ॥ उभेति ।** शब्दपरत्वादनेकशेषः ॥ **तदर्थः**–उक्तप्रदीपार्थः ॥ वस्तुतस्तत्र भेद एवेति न दोष इति यथाश्रुतमेव साध्विति बोध्यम् ॥ छाया ॥

५ अविशेषेण पाठात्पर्युदासे मानाभावादाह— **विशेषेणेति ।** सर्वादित्वव्याप्यादिशब्दान्तधर्मावच्छिन्नोद्देश्यताककार्यार्थमपि पाठात्पर्युदास इत्यर्थः ॥

६ अपिस्तत्समुच्चय एव नान्यसमुच्चय इत्याह— **यत्तु कार्यमिति** ॥ छाया ॥

७ **विशेषेति ।** तदुभयसंनिवेशेत्यर्थः ॥ **न गणेति ।** सामान्यविशेषगणेत्यर्थः ॥

८ **किमिति ।** 'विशेषेण च' इत्यस्य प्रयोजनं किमित्यर्थः ॥

९ तदेवाह— **सर्वेति ॥ अपि**स्तत्समुच्चय एव ॥ मक्षिकार्थो धूम इतिवदर्थशब्द इत्याह— **मा भूदिति** ॥ छाया ॥

१० उत्तरानुरोधेनाह— **केति** ॥ छाया ॥

११ असंज्ञायामिति विभक्तसूत्रार्थमाह– **सर्वादीनीत्यादिना ॥**

१२ उपरिष्टादिति भाष्यस्यार्थं सूचयन्नाह— **असंज्ञायामितीति ॥** ननु योगविभागेन प्रक्रान्तसर्वशेषत्वलाभेऽप्युत्तरशेषत्वं कथमत आह— **स्वमज्ञातीति** ॥ अपौनरुक्त्यायाह— **सर्वेति** ॥ छाया ॥

१३ योगविभागफलितमाह— **सर्वादीनीति** ॥ छाया ॥

१४ **चोऽप्यर्थे ॥ तमेवमिति ।** तं-योगमेवं-वक्ष्यमाणप्रकारेण व्याख्यास्याम इत्यर्थः ॥ छाया ॥

**किमिदम् 'अ-अत्' इति ?**

**अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ॥**

**(प्रदीपः) अनुपसर्जनादिति ।** ननु प्रधानेन तदन्तविध्यर्थो योगः प्रारब्धव्यः, 'कौम्भकारेयः' इति यथा स्यादिति ॥ न च 'अण्' इति कृद्ग्रहणम्, तद्धितोऽप्यणस्तीति ॥ नैतदस्ति, 'स्त्रीप्रत्यये चानुपसर्जनेन' इति तदादिनियमाभावात् कारशब्दादपि ङीपि कुम्भकारीशब्दात् 'स्त्रीभ्यो ढक्' इति ढग्भविष्यति ॥ **अनुपसर्जन अ अदिति ।** 'सुपां सुलुक्' इति षष्ठ्या लुक् ॥

**(उद्योतः)** (भाष्ये) **प्रत्याख्यायते इति ।** स्त्रीप्रत्ययप्रकरणस्थमपि सूत्रं तत्रानुपयुज्यमानं कार्यान्तरार्थं परिभाषारूपं ज्ञातव्यमिति भावः॥ **नन्विति ।** अन्यथा समासप्रत्ययविधौ तदन्तविधिप्रतिषेधाद् गृह्यमाणादेव प्रातिपदिकात्स्यात् । प्रत्ययग्रहणे च **प्रत्ययग्रहणपरिभाषया** प्रत्ययान्तादेव स्यान्न तु तदन्तादिति भावः ॥ अनेन चोत्तरत्र तदन्तविधौ ज्ञापिते उपसर्जने निषेधात् प्रधान एव स फलवानिति **प्रधानेनेत्युक्तम् ॥ कौम्भकारेय इति ।** अणन्तत्वेन कारशब्दादेव ङीपि कारीशब्दस्यैव स्त्रीप्रत्ययान्ततया तत एव **स्त्रीभ्यो ढकि** तस्यैव ढक्यङ्गत्वाद्वृद्धिः स्यात, न कुम्भस्येति भावः ॥ तदन्तविधौ तु समुदायात् ङीपि तत एव ढकि समुदायस्याङ्गत्वात्कुम्भशब्दे वृद्धिः सिध्यति ॥ **ननु कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्** तदन्तविध्यभावेऽपि कौम्भकारेयः सिद्धोऽत आह—**न चेति ।** कृत एव ग्रहणे सा, न तु कृदकृद्ग्रहण इति भावः ॥ **नैतदस्तीति ।** न च कदाचित् कारीशब्दादपि स्यात् । कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येनान्वयाभावात् ॥ नन्वेवं कुम्भकारीत्यत्र ङीबेव न स्यात् । कुम्भेनैकार्थीभूताणन्तस्य केवलस्य स्त्रीत्वेनायोगात् । अत एव सूत्रारम्भे न कदाचिदपि कारशब्दान्ङीप् । यस्य च विशिष्टस्य स्त्रीत्वेन योगः, न तदणन्तमिति चेन्न । **अमहत्पूर्व**ग्रहणेन तदन्तग्रहणज्ञापनात् ॥ **नचैवं** बहुकुरुचरेत्यादावतिप्रसङ्गवारणायायं निषेधोऽपि सार्थक इति **वाच्यम् । टिड्ढाणञित्यादौ** उपात्तस्य टिदादेरेव स्त्रीत्वेन विशेषणेनादोषात् । पूर्वत्र-उपात्तं तदन्तं च-स्त्रीत्वेन विशेष्यते, उत्तरत्र च-उपात्तमेवेत्यत्र व्याख्यानमेव शरणमिति वदन्ति ॥

परे तु—**प्रत्याख्यायते** इत्यस्य वार्तिककृतेति शेषः । ***अनुपसर्जनग्रहणमनर्थकम्, प्रातिपदिकेन तदन्तविधिप्रतिषेधात्*** इति हि तत्र वार्तिकम् । तद्रीत्याऽस्य तेन सिद्धिरित्याशयः ॥ **अनुपसर्जनादिति किमर्थम् । बहुकुरुचरा । तदन्तविधिना प्राप्नोति । अत उत्तरं पठति-अनुपसर्जनग्रहणमनर्थक**मिति तत्र भाष्यकृदवतारणेनात्रत्यभाष्येण च तस्य वार्तिककृत्सिद्धान्तत्वप्रतीतेः ॥ यत्तु तदुत्तरं वचनद्वयम्—**ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्या**तिधीवरी, **पूर्वसूत्रनिर्देशो वाऽऽ**पिशला ब्राह्मणीति । तत्त्वाचार्यदेशीयस्य । तत्राद्यस्य पूर्वत्र तदन्ताप्रतिषेधेऽपि उत्तरत्र तदन्तविध्यभावेन बहुकुरुचरादावप्राप्त्याऽस्य सार्थक्यानुपपादनात्तदुक्तित्वम् । अन्त्यं तु स्त्रियामित्यस्याविशेषणत्वात् **स्त्रियां योऽविहित** इत्यादिना भाष्य एव दूषितम् । तेनाद्यस्यैव वार्तिककृत्सिद्धान्तत्वं बोधितम् ॥ **'इदं तर्हि प्रयोजनम् । प्रधानेन तदन्तविध्यर्थम्'** इति तु तत्र भाष्यकृता स्वयं सूत्रप्रयोजनमुक्तमिति न विरोधः ॥ अयं हि तत्र भाष्याशयः—अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेऽपि कदाचित् कारीशब्दादपि स्यादिति पक्षे कुम्भकारेय इत्यस्यापत्तिः ।

---

१ **अकारात्कारावि**ति । सर्वनाम्न उपदिश्यमानौ त्यदादीनाम इत्यकारः-अड्डतरादिभ्यः पञ्चभ्य इत्यदादेशश्चानुपसर्जनस्यैव भवतः, न तूपसर्जनस्येति तदर्थः । एवञ्चातितदित्यत्रोपसर्जनत्वादत्वं न ॥ 'अनुपसर्जनादित्येष योगः प्रत्याख्यायते' इत्येतद्विषये प्रदीपोद्योतयोर्मतभेदः-कौम्भकारेय इत्यत्र कारशब्दान्ङीप्यपि समुदायस्यैवापत्येन योगाद्विशिष्टादेव ढक् स्यादिति कौम्भकारेयसिद्धिः, एवञ्चानुपसर्जनादित्यस्य नोपयोग इति प्रत्याख्यानं भाष्यसम्मतमिति प्रदीपाशयः । उद्योतकारस्तु प्रत्याख्यानञ्चैतन्न भाष्याभिप्रेतं किन्तु वार्तिककाराभिप्रायेणैवैतद्भगवता व्याख्यातम् । कौम्भकारेयसिद्ध्यर्थमनुपसर्जनादित्यावश्यकमेव, अन्यथा निष्कृष्यैकार्थीभावेन कारीशब्दादपि स्यादिति वदन्ति ॥

२ भाष्ये **प्रत्याख्यायत** इति वर्तमानसामीप्य इति लडिति सूचयन्नाह—**स्त्रीभत्ययेति** ॥ भाष्यतात्पर्यमाह—**परीति** ॥ **अन्यथा**-तत्सूत्राभावे ॥ प्रकृतमाह—**प्रत्ययेति** ॥ छाया ॥

३ अधिकारत्वादेवाह—**चोत्तरत्रेति** ॥ साफल्यमाह—**उपेति** ॥ **उक्तमिति ।** फलितमुक्तं न तु शाब्दमित्यर्थः ॥ छाया ॥

४ प्रत्ययेऽप्युक्तरीत्यैवाह—**अणन्तेति** ॥ **ढकीति । स्त्रीभ्य** इति ढकीत्यर्थः ॥ छाया ॥

५ **कृद्ग्रहण** इत्यस्य कृन्मात्रग्रहण इत्यर्थं सूचयन्नाह—**कृत एवेति ॥ सा**-उक्तपरिभाषा ॥ छाया ॥

६ प्रदीपोक्तं पाक्षिकं न नियतमिति शङ्कते—**न चेति ॥ एवं**-तस्य तेनान्वये ॥ ननु तर्हि विशिष्टादेवास्तु अत आह—**यस्य चेति ।** चस्त्वर्थे ॥ छाया ॥

७ **एवं**-तदन्तविध्यङ्गीकारे ॥ अयमाशयो न सिद्धान्त इति सूचनायाह—**वदन्तीति ।** कैयटादय इत्यर्थः ॥ छाया ॥

८ अत एव सिद्धान्तमाह—**परे त्विति ॥ अस्य**-प्रकृतार्थस्य । **तेन-सूत्रेण** ॥ छाया ॥

९ ननु स भाष्ये सिद्धान्तोऽप्यस्त्वित्यत आह—**अनुपेति ॥** एवं सर्वत्र प्रायःसत्त्वादाह—**अत्रत्येति** । लट्लटोः प्रथमोत्तमपुरुषादिस्वारस्येनेति भावः ॥ छाया ॥

१० **तदुत्तरम्-'अनुप'** इति पूर्ववार्तिकोत्तरम् ॥ छाया ॥

११ **तत्र**-तयोर्मध्ये ॥ **प्रतिषेधेऽपि**-तस्मिञ् ज्ञापितेऽपि ॥ **तदुक्तित्वम्**-आचार्यदेशीयोक्तित्वम् ॥ **दूषितमिति ।** तत एव तस्य तत्त्वमिति भावः ॥ **तेन**-तेनापि ॥ न **विरोध इति ।** अत्रत्यतत्रत्यभाष्ययोरिति शङ्कैवायुक्तेति भावः ॥ छाया ॥

१२ **स्यादिति ।** ढगिति शेषः ॥ छाया ॥

[1]यदुक्तं कुम्भेनेत्यादि, तत्तुच्छम् । निष्कृष्यापत्येनैकार्थीभावाभावेऽपि समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात्सामर्थ्याक्षतेः । विशिष्ट-संबन्ध्यपत्ये विशेष्यसंबन्धस्याव्याहतेश्च ॥ अनभिधानेन प्रत्याख्यानं तु न चमत्कारकारि । [2]अत एव परमगार्ग्यस्यापत्यमित्यर्थे तदेकदेशगार्ग्यशब्दात्प्रत्यये परमगार्ग्यायण इति **येन विधिरिति** सूत्रे भाष्ये उदाहृतमिति तत्रैव निरूपयिष्यामः ॥ [3]न च तदन्तविधावपि व्यपदेशिवद्भावेन केवलादपि ङीप् दुर्वारः । **अनुपसर्जनादि**त्येतत्सामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेः । [4]मुख्यव्यपदेशिनोऽभावे एव तदतिदेशप्रवृत्तेश्च । [5]**न च** स्त्रीप्रत्ययेषु तदादिनियमाभावेन कारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वानपायात्तस्मादपि कदाचित् ढक् स्यादेवेति **वाच्यम्** । यतः **प्रत्ययग्रहण** इति नियमेनाधिकस्यैव व्यावृत्तिर्न न्यूनस्य । अस्य युवाऽपत्यमिः, एरपत्यमित्यर्थे **यञिञोश्चे**ति फकोऽनापत्तेः । एवं [6]च तन्निषेधेनानेन तस्यैव संग्रहः, न त्वतद्व्यावर्त्यस्य न्यूनस्य । अयमधिकारोऽप्यत्रार्थे ज्ञापक इत्याहुः ॥

एकपदत्वे उद्देश्यविधेयभावानुपपत्तेराह—**सुपामिति** ॥

( आक्षेपभाष्यम् )

**[7]यद्येवं-अतियुष्मत्-अत्यस्मत्-इति न सिध्यति ॥**

( समाधानभाष्यम् )

**प्रश्लिष्टनिर्देशोऽयम्-'अनुपसर्जन-अ-अ-अत्' इति । [8]अकारान्तात् अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ ॥**

( प्रदीपः ) **अ-अ-अदिति** । अकारेणाकारात्कारौ विशेष्येते । अकारात्परौ यावकारात्कारौ तावनुपसर्जनस्येत्यर्थः । पञ्चम्या अत्' इत्ययं तु युष्मदस्मद्भ्यामनकारान्ताभ्यां विधीयत इति परिभाषाऽनुपस्थानादुपसर्जनाभ्यामपि भवति । 'त्यदादीनामः' इत्ययमकारात्परस्य हलः स्थाने विधीयत इति अकारात्परोऽकारो भवतीति परिभाषोपस्थानात् 'अतितत्' इत्यत्र न भवति । [9]एवं तु प्रियौ द्वावस्येति बहुव्रीहौ कृतेऽकारादविधानात्परिभाषाऽनुपस्थानादत्वं प्राप्नोति 'तदोः सः सा-' [10]इति सत्वमविशेषितमित्युपसर्जनस्यापि प्राप्नोति ॥ [11]तत्रायं समाधिः—'त्यदादीनामः' इत्यत्र त्यदादिषु परिभाषोपस्थानादनुपसर्जनानां तेषां ग्रहणम्, तत्साहचर्यात् द्विशब्दोऽपि तथाविध एव गृह्यते । सत्वविधौ च तथाविधानामेवानुवृत्तिरित्यत्रापि न दोषः ॥ 'अतिसर्वाय' इत्यादौ त्वविशेषकार्यमपरिहृतमेव ॥

( **उद्योतः** ) अ-अ-अदित्यत्र अ इति लुप्तपञ्चम्यन्तं तदाह—**अकारादिति** ॥ **अकारान्ता**दिति भाष्येऽन्तग्रहणं तु फलितार्थपरं यथाकथंचित्, न त्वत्र तदन्तविधिरिति भ्रमितव्यम् । विशेष्यासंनिधानात् । प्रायेण भाष्येऽपि **अकारादकारात्कारा**वित्येव पाठः ॥ शेषे लोपस्यान्त्यलोपत्वपक्षे विधानोत्तरमकारात्परत्वसंभवादाह—**विधीयत इति** । तदुक्तं भाष्ये—**शिष्यमाणाविति ॥ अपरिहृतमेवेति** । [12]एवं चैतदपरितोषाद्भाष्ये पक्षान्तरमिति भाव इति केचित् ॥

**परे** तु—[13]इदं समाधानं **सर्वाद्यानन्तर्यकार्यार्थं प्रतिषेधो वक्तव्य** इत्यस्यैवार्थस्य । डतरादिविषये तस्य प्रधानेऽपि तदन्तेऽप्रवृत्तिरिति विशेषं बोधयन् तद्वारकयुक्त्यैवोपसर्जनेऽपि व्यावृत्तिरित्येवंरीत्या तत्फलकत्वाभावमुपसर्जनप्रतिषेधस्य बोधयितुमेकदेशी पक्षान्तरमाह—**अथवा**-इति । अन्त्यं समाधानद्वयं तु साधारणमित्याहुः ।

( एकदेशिसमाधानान्तरभाष्यम् )

**[14]अथवा-अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्तेस्तद्भवति ॥**

( प्रदीपः ) **गृह्यमाणविभक्तेरिति** । गृह्यमाणानां त्यदादीनां डतरादीनां च स्वार्थद्वारेण संबन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्याः-इत्यर्थः ॥

---

१ कृष्णाद्युक्तानुवादं प्राकृतं खण्डयति—**यदुक्तमिति** ॥ छाया ॥

२ **एवेन** तदभावव्यवच्छेदः ॥ अनभिधानमेव द्रढयति—**अत एवेति** । उक्तार्थद्वयसत्त्वादेवेत्यर्थः ॥ छाया ॥

३ तत्रत्यभाष्यसिद्धान्तोपरि शङ्कते—**न चेति** ॥ छाया ॥

४ सूत्रमन्यथा सफलमत आह—**मुख्येति** ॥ छाया ॥

५ प्रदीपसिद्धान्तोपर्यपि शङ्कते—**न चेति** ॥ **भावेनेत्यस्यानपाया**दित्यत्रान्वयः ॥ छाया ॥

६ **एवं च**-तस्य तद्व्यावर्तकत्वे च ॥ **अनेन**-प्रक्रान्तानुपेत्यनेन ॥ इदं जीर्णोक्त्या द्रढयति—**अयमिति** ॥ **आहुः**-प्राञ्चः ॥ छाया ॥

७ अकारात्कारौ शिष्यमाणावित्यत्र तौ त्यदादी-अड्डतरादिभ्य इत्याभ्यां विहितावित्येतदनालोच्याशङ्कते—**यद्येवमिति** । अतितदित्यत्र नायमत्कारः शिष्यमाण इति न दोषः । अतियुष्मदिति पञ्चम्या रूपम् ॥

८ 'अकारादकारात्कारौ' इति च. छ. क. पाठः ॥

९ शङ्कते—**एवं त्विति** ॥ दोषान्तरमाह—**तदोरिति** ॥ अत एव चः ॥ छाया ॥

१० 'इति च सत्वम' इति क. च. पाठः ॥

११ **तत्रायं**-तयोर्मध्ये आद्ये वक्ष्यमाणः ॥ द्वितीये आह—**सत्त्वेति** ॥ छाया ॥

१२ तदाशयं दण्डिकृष्णरत्नकृदाद्युक्तमाह—**एवं चेति** । सर्वथा तदपरिहारे चेत्यर्थः ॥ उपलक्षणत्वेन तस्यापि ग्रहणं तु नाक्षरस्वरसानुगुणम्, क्लिष्टं च ॥ छाया ॥

१३ **इदं**-तस्य परिभाषात्वरूपम् ॥ **इत्यस्यैवेति** । **'विशेषेण किं प्रयोजनम्'** इति पुनः प्रश्नपूर्वं **'प्रयोजनं डतरा'-'त्यदादि'** इत्येताभ्यां तस्यैव समर्थितत्वात् ॥ तथाच सर्वानिर्वाहादियमेकदेशियुक्तिरेवेति भावः ॥ नन्वेवं किं पक्षान्तरेणात आह—**डतरादीति** ॥ **तस्य**-अड्डादेः ॥ **तद्वारकेति** । प्रधानवारकेत्यर्थः ॥ **तत्फलेति** । गणकार्यफलकत्वेत्यर्थः ॥ **एकदेशीति** । तत्त्वमग्रे स्फुटीभविष्यति ॥ **अन्त्यम्-'अथवा नेदम्'** इति **'अथवा महती-'** इति च ॥ संज्ञोपसर्जनविषयकत्वादाह—**साधारणेति** ॥ छाया ॥

१४ अनुपसर्जनादित्यस्य परिभाषात्वस्वीकारेण 'सर्वाद्यानन्तरकार्यार्थः' इत्येव दोषः परिहृतः, डतरादीनादड्भाव इत्येतच्चावशिष्यते, तदर्थमाह—**अथवाऽङ्गाधिकारे इति** ॥

( उद्द्योतः ) [1]स्वार्थद्वारेणेत्यादेर्विवरणं तदर्थगतेत्यादि । गृह्यमाणविभक्तेरिति संबन्धसामान्ये षष्ठी । तेन विभक्तौ विधीयमानत्वदायत्वस्यापि संग्रह इति भावः ॥

( समाधानबाधकभाष्यम् )

**यद्येवम्, परमपञ्च-परमसप्त "षड्भ्यो लुक्" इति लुक् न प्राप्नोति ॥**

( प्रदीपः ) **यद्येवमिति** । गृह्यमाणाद्या विहिता विभक्तिरित्येवं संबन्धं मन्वानस्य **प्रश्नः** ॥

( उद्द्योतः ) [2]षड्भ्य इति षष्ठ्यर्थे पञ्चमीति मन्वानः शङ्कते—**यद्येवमिति** ॥

( समाधानसाधकभाष्यम् )

**नैष दोषः । षट्प्रधान एष समासः ॥**

( प्रदीपः ) आर्थः संबन्धो[3]ऽत्र गृहीतः—इत्युत्तरेऽभिप्रायः ॥ यद्येवं, पञ्चकाः शकुनय इनि कनः स्वार्थिकत्वाज्जसो लुक् प्राप्नोति । उच्यते, कनि कृते शब्दान्तरत्वान्नान्तत्वाभावान्नायं षट्संज्ञक इत्यदोषः ॥ 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यत्र त्वङ्गेन विभक्तिर्विशेष्यत इत्युपसर्जनाभ्यामपि सिध्यति ॥

( उद्द्योतः ) कनः—संख्यायाः संज्ञासङ्घेत्यनेन विहितस्य ॥ **कनीति** । [4]कनि कृते कन्नन्त एव संख्यावाची, न प्रकृतिः । स च न नान्तः-इति षट्त्वाभावात्ततः परस्य जसो न लुगित्यर्थः ॥ [5]षड्भ्य इति पञ्चम्येव । षड्भ्यः परयोः प्रत्यासत्त्या षडर्थगतसंख्याभिधायिनोर्लुगित्यर्थ इति भावः ॥ **युष्मदित्यादिसिध्यतीत्यन्तग्रन्थो**ऽत्र पुनरुक्तः । अनुपदमग्रे वक्ष्यमाणत्वात् ॥

[6]**परे तु—गृह्यमाणविभक्तेरित्यस्य** गृह्यमाणाद्विहितविभक्तेरित्येवार्थः । अदड्विषयमेतत् । कतरान्तस्यानभिधानमभिप्रेत्य तत्रादड्भाव एवेष्ट इत्यभिप्रेत्य वा ॥ तुल्यन्यायात् **षड्भ्य** इत्यत्रापि विहितविशेषणमेवेति तत्रातिप्रसङ्गं शङ्कते—**यद्येवमिति** । [7]परमपञ्चेत्यादेर्लोके गणनायां व्यवहाराभावेन षट्त्वाभाव इति लुगप्राप्तिरिति **प्रश्नः** ॥ संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन विशिष्टस्यापि षट्त्वमस्त्येव । गणनायां प्रसिद्धानामेव संख्यावाचिनां ग्रहणमित्यत्र न मानमित्युत्तरम् ॥ [8]पञ्चम्यन्तस्य त्वदुक्तसंबन्धेन विभक्त्याऽन्वयो दुरुपपादः । आवृत्तौ मानाभावश्च । **षट्प्रधानः**—इत्यस्य त्वदभिमतषडर्थप्रधानः, अतः समुदायोऽपि षट्संज्ञ इत्यर्थः ॥ षष्ठ्यन्तस्थलेऽपि विहितत्वसंबन्धेनान्वय इत्याशयेन शङ्कते—**इह तर्हीति** ॥ [9]वैषम्यमुपपादयन्स्वाशयमाह—**इह तावादित्यादिना**—इति भाष्यार्थमाहुः ॥

( समाधानबाधकभाष्यम् )

**इह तर्हि-प्रियसक्था ब्राह्मणेन । अनङ् न प्राप्नोति ॥**

( प्रदीपः ) **प्रियसक्थेति** । सक्थिशब्दः शकटावयववचनोऽत्रेति 'बहुव्रीहौ सक्थ्यक्ष्णोः—' इति समासान्तो न कृतः ॥

( उद्द्योतः ) **शकटेति** । स च न स्वाङ्गमिति भावः ॥

( समाधानसाधकभाष्यम् )

**[10]सप्तमीनिर्दिष्टे यदुच्यते, प्रकृतविभक्तौ तद्भवति ॥**

( प्रदीपः ) **प्रकृतविभक्ताविति** । अङ्गार्थसंबन्धिन्यां विभक्तावित्यर्थः ॥

( उद्द्योतः ) **अङ्गार्थेति** । प्रकृतशब्देनाङ्गम् ॥

( समाधानबाधकभाष्यम् )

**यद्येवम्, अतितत्-अतितदौ-अतितदः-इति अत्वं प्राप्नोति ॥**

**[11]तच्चापि वक्तव्यम् ॥**

( प्रदीपः ) **तच्चापीति** । 'गृह्यमाणविभक्तेः' इति 'सप्तमीनिर्दिष्टे यदुच्यते' इति च ॥

( उद्द्योतः ) 'एतच्चापि' इति वक्तव्ये तच्छब्दनिर्देशाद्व्यवहितपरामर्शः, अपिनाऽव्यवहितस्य चेत्याह—**गृह्यमाणेत्यादि** ॥

( पक्षान्तरेण समाधानभाष्यम् )

**[12]न वक्तव्यम् । इह तावत्-"अद्ड्डतरादिभ्यः पञ्चभ्यः" इति पञ्चमी, 'अङ्गस्य' इति षष्ठी, तत्राशक्यं**

---

१ अपौनरुक्त्यायाह—**स्वार्थद्वारेणेत्यादेरिति** ॥ भाष्यीयन्यूनतां परिहरति—**गृह्येति** ॥ छाया ॥

२ कैयटोक्तप्रश्नाशये बीजमाह—**षड्भ्य इतीति** ॥ पूर्वसंगतिः ॥ छाया ॥

३ 'सम्बन्धो गृह्यत इत्यु—' इति अ. पुस्तके पाठान्तरम् ॥

४ कन्नन्तस्य शब्दान्तरत्वेपि प्रकृतेस्तत्त्वं नापगतमत आह—**कनीति** ॥ अन्यथा विधिवैयर्थ्यमेवेति भावः ॥ **स च**—स तु ॥ छाया ॥

५ प्राग्वदुत्तराशयबीजमाह—**षड्भ्य इतीति** ॥ छाया ॥

६ षष्ठीस्वरसादाह—**परे त्विति** ॥ **एवेन** तन्निरासः । अत एवाह—**अदड्डिति** ॥ तदाशयमाह—**कतरान्तेति** ॥ तस्यागतिकगतित्वादाह—**तत्रेति** । उक्तमिति शेषः ॥ छाया ॥

७ विशिष्टस्य तु न तत्त्वमित्याह—**परमेति** ॥ **गणनायां**—संख्येत्यादिः ॥ एवमग्रेपि ॥ **ग्रहणं**—षट्संज्ञासूत्रे ॥ छाया ॥

८ प्रदीपोक्तौ दोषमाह—**पञ्चेति** ॥ उत्तराशयस्य भाष्याभिमतत्वमाह—**षट्प्रधेति** ॥ तस्यापीदमिष्टमेवेत्याह—**त्वदभीति** ॥ छाया ॥

९ **वैषम्यं**—षष्ठीपञ्चम्योर्मिथः ॥ **स्वाशयं**—गृह्यमाणेत्यस्याशयम् ॥ छाया ॥

१० अङ्गाधिकारे सप्तमीनिर्देशे सति यदुच्यते कार्यं तत् **प्रकृतविभक्तौ**—अङ्गविभक्तौ भवति । विभक्तौ परतोऽङ्गस्य भवति, न तु गृह्यमाणस्येत्यर्थः ॥

११ अत्र पक्षे दोषान्तरमाह—**तच्चापीति** । चो वाक्यालंकारे ॥ छाया ॥

१२ **न वक्तव्यमिति** । अन्यथा सर्वत्र निर्वाहात् ॥ तत्रादौ पञ्चमीश्रवणे निर्वाहमाह—**इह तावदिति** ॥ छाया ॥

**विविभक्तित्वात् 'डतरादिभ्यः' इति पञ्चम्याऽङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात्प्रत्ययात्—डतरादिभ्यो यो विहित इति॥**

**( प्रदीपः ) डतरादिभ्यो यो विहित इति ।** अर्थद्वारकं विधानमाश्रयितव्यम् । तेन परमकतरत्-इत्यत्रापि भवति । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यत्र तु प्रकरणेऽङ्गेन विभक्तिर्विशेष्यतेऽर्थद्वारेण, युष्मदस्मद्भ्यां तु परत्वमात्रेणेति-अतियुष्मदित्यादावपि कार्यं भवति ॥

**( उद्योतः ) अर्थद्वारकमिति ।** डतरादिभ्यो विहितो योऽर्थस्तत्प्रतिपादकस्त्वमोरित्यर्थः ॥ तदर्थकप्रत्ययविधानेऽर्थस्यापि विधानमस्तीत्यभिमानः ॥ **डतरादिभ्य** इत्यस्य षष्ठ्यर्थत्वे तु **विविभक्तित्वा**दिति भाष्यविरोधः ॥

**परे** तु विधानस्य सर्वथाऽनाश्रयणेन **'अर्थद्वारकं विधानमाश्रयितव्यम्'** इति स्वग्रन्थविरोधः, तस्माद्विहितविशेषणमिति यथाश्रुतमेव भाष्यम्। परमकतरदित्यत्राद्ड्डादेशे न भाष्यान्तरं मानमस्ति । प्रकृतभाष्यं तु विपरीतं तदभावबोधकमेवेति प्रामाणिकाः ॥ 'त्यदादिप्रकृतिकविभक्तौ' इत्यर्थं मत्वा शङ्कते—**यद्येवं**-इति ॥ उक्ताशयेनाह—**त्यदादिप्रधान**-इति । **अङ्गस्ये**ति सूत्रेऽतो भिस ऐसित्यादौ विविभक्तित्वादसंबन्धमाशङ्क्याङ्गनिमित्तं यो भिसिति संबन्धं वक्ष्यति । तेन न्यायेनात्रापि संबन्धसंभवादियमेकदेश्युक्तिः । तस्माल्लक्ष्यानुसारात् **षड्भ्यो-डतरादिभ्य** इति सूत्रद्वये विहितविशेषणं भाष्यसंमतम्, तस्यार्थस्य लक्ष्यविरोधेन भाष्यकृता दूषणाकरणादित्याहुः ॥

**( पक्षान्तरेण समाधानभाष्यपरिशिष्टम् )**

**इहेदानीम्—"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इति, त्यदादीनामो भवतीति ।**

**अस्थ्यादीनामित्येषा षष्ठी, 'अङ्गस्य' इत्यपि । 'त्यदादीनाम्' इत्यपि षष्ठी, 'अङ्गस्य' इत्यपि । तत्र कामचारः-गृह्यमाणेन विभक्तिं विशेषयितुम्-अङ्गेन वा । यावता कामचारः ।**

**इह तावत्—"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इति। अङ्गेन विभक्तिं विशेषयिष्यामः, अस्थ्यादिभिरनङ्म्—अङ्गस्य विभक्तावनङ् भवति अस्थ्यादीनामिति ॥**

**इहेदानीं—त्यदादीनामो भवतीति । गृह्यमाणेन विभक्तिं विशेषयिष्यामः, अङ्गेनाकारम्-त्यदादीनां विभक्तावो भवति अङ्गस्येति ॥**

**( उद्योतः )** भाष्ये–अकारविषयेऽपि समाधानं वक्तुमाह—**इहेति ॥ इह तावदिति ।** लक्ष्यानुसारश्च तत्र तत्र तथा तथा व्याख्याने बीजम् । **अङ्गस्य विभक्ता**वित्यादेश्चाङ्गार्थगतार्थप्रतिपादकविभक्तावित्याद्यर्थः । षष्ठ्यन्तत्वेन तथाऽन्वयस्य सूपपादत्वादिति भावः ॥

**( समाधानाक्षेपपरिहारभाष्यम् )**

**यद्येवम्, 'अतिसः' अत्वं न प्राप्नोति ॥**

**नैष दोषः, त्यदादिप्रधान एष समासः ॥**

**( प्रदीपः ) अतिस इति ।** शोभनः सः-इति प्रादिसमासः । नञ्समासेऽपि असः-अषट्-अकतरत्-इति भवति ॥

**( उद्योतः ) नञ्समासेऽपीति ।** उत्तरपदार्थप्रधानत्वादिति भावः । 'अतिकतरत्' इति उक्तरीत्या चिन्त्यमेव । अत्रापि पक्षेऽतिसर्वायेत्यादौ दोष एव, परमसर्वत इत्यादिसिद्धये तदन्तस्यापि सर्वनामत्वावश्यकत्वेन सर्वनाम्नो विहितस्य ङेः स्मै–इत्यर्थेऽपि स्मैभावस्य दुर्वारत्वात् । अतोऽप्येकदेश्युक्तिरिदं पक्षद्वयम् ॥

**( सिद्धान्तिभाष्यम् )**

**अथवा—नेदं संज्ञाकरणम्, पाठविशेषणमिदम् । सर्वेषां यानि नामानि तानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते ॥**

**( प्रदीपः ) सर्वेषां यानीति ।** स्वविषयापेक्षया सर्वनामत्वं बोद्धव्यम् । यथा-गोत्वादेः स्वविषयापेक्षं सर्वगतत्वम्, न तु एतानि सर्वादीनि परस्परं पर्यायतां यान्ति, भिन्नार्थत्वात् ॥

**( उद्योतः )** अतः सर्वसाधारणं समाधिमाह—भाष्ये-**अथवा नेदमिति ।** द्वन्द्वे चेत्यादिभिश्च सर्वादित्वस्यैव निषेधस्तत्प्रयुक्तकार्याभावे पर्यवस्यति । एवं विकल्पोऽपीत्य**भिमानः ॥** ननु सर्वा-

---

१ यथाश्रुतभाष्यादनिर्वाहादाह—**अर्थद्वारेति** ॥ छाया ॥

२ तदाशयमाह—**डतरादीति** ॥ अर्थस्य विधेरसंभवादाह—**तदर्थकेति** ॥ ननु पञ्चमी षष्ठ्यर्थे इत्येव प्रदीपाशयोऽस्त्वत आह—**डतरादिभ्य इति** ॥ छाया ॥

३ **अभिमान** इति सूचितामरुचिं कथयन्नन्यथा भाष्याशयमाह—**परे त्वित्यादि ॥ अनेति ।** अर्थसंबन्धस्यैव कैयटेनाश्रयणादिति भावः ॥ छाया ॥

४ स्वाभिप्रायेणाग्रिमं 'यद्येवमतिसः' इत्यादि भाष्यं योजयति—**त्यदादिप्रेति** ॥

५ **'इहेदानीमस्थि-'**इति भाष्यमवतारयति—**भाष्ये इति ॥** तत्रादौ प्रकृतत्वादाह—**अकारेति ॥ अ**पिनाऽस्थ्यादिसमुच्चयः ॥ वक्तुम्-'इह तावदस्थि-'इत्यादिना ॥ तदेवाह—**इहेति ॥** तत्र मानं वैषम्य आह—**लक्ष्येति ॥ तद्गतोऽर्थः**-संख्या ॥ **आदिभ्यां** त्यदादीनां विभक्तावित्यादिपरिग्रहः ॥ छाया ॥

६ **एवम्**—त्यदादिप्रकृतिकविभक्तावित्यर्थाश्रयणे ॥ **त्यदादिप्रधान इति ।** त्यदाद्यर्थगतसर्वार्थवाचकत्वप्रधान एष समास इति तदन्तस्यापि सर्वनामत्वमित्याशयः ॥

७ **अपिः** पूर्वपक्षसमुच्चायकः । अग्रेऽपिना पूर्वोक्तदोषद्वयसमुच्चयः ॥ छाया ॥

८ **पक्षद्वयम्**—अङ्गाधिकारे गृह्यमाणविभक्तेः-विविभक्तित्वाद्विहितविशेषणमिति पक्षद्वयम् ॥

९ **आदिः** प्रकारे । तेन न बहुव्रीहावित्यादेरपि संग्रहः ॥ **चो**ऽप्यर्थे ॥ **पूर्वादी**त्यत्राप्यादिस्तथा ॥ छाया ॥

र्थवाचकत्वं न पूर्वादिशब्दानामित्यसङ्गतमेतदत आह—**स्वविषयेति**। लोकनिरूढप्रवृत्तिनिमित्तेन या अभिधेया व्यक्तयस्ताः—स्वविषयः॥ ननु सर्वादिगणपठितानां शब्दानां सर्वेषां सर्वार्थकत्वेन पर्यायत्वाद्वृथाऽयं व्याख्यानक्लेशोऽत आह—**नन्विति**॥ नन्वेवं घटादिशब्दानामपि स्वविषयापेक्षसर्वनामत्वाद् घटायेत्यादौ स्मैभावाद्यापत्तिरिति चेत्। न, तद्विधायकेषु सर्वनामग्रहणसामर्थ्येन सकृद्गृहीतशक्त्यैव स्वप्रवृत्तिनिमित्ताश्रयविरुद्धानेकजातीयार्थबोधकानामेव सर्वनामपदेन ग्रहणात्। एतदेव ध्वनयितुं **सर्वेषां नामानी**ति बहुवचनान्तपूर्वपदको विग्रहो दर्शितो भाष्ये॥ भाष्ये—**संज्ञोपसर्जने चेति**। संज्ञा त्वेकद्रव्यनिष्ठत्वान्न सर्वेषां नाम। उपसर्जनमपि पदान्तरार्थसंसृष्टार्थवृत्तित्वान्न प्राधान्येन सर्वेषामुपस्थापकम्, नामपदस्वारस्येन तथैव लाभादित्यर्थः॥ उपसर्जनांशे 'विशेषे' इत्यस्य 'विशेषणे' इत्यर्थः॥

(समाधानबाधकभाष्यम्)

**यद्येवम्, संज्ञाश्रयं यत्कार्यं तन्न सिध्यति—"सर्वनाम्नः स्मै" "आमि सर्वनाम्नः सुट्" इति॥**

(समाधानसाधकभाष्यम्)

**अन्वर्थग्रहणं तत्र विज्ञास्यते। सर्वेषां यन्नाम तत्सर्वनाम। सर्वनाम्न उत्तरस्य ङेः स्मै भवति। सर्वनाम्न उत्तरस्यामः सुट् भवति॥**

(समाधानबाधकभाष्यम्)

**यद्येवम्, सकलं कृत्स्नं जगत्-इत्यत्रापि प्राप्नोति॥ एतेषां चापि शब्दानामेकैकस्य स स विषयः, तस्मिन् तस्मिन् विषये यो यः शब्दो वर्तते तस्य तस्य तस्मिंस्तस्मिन्वर्तमानस्य सर्वनामकार्यं प्राप्नोति॥**

(प्रदीपः) **एतेषां चापीति**। ततश्च 'सर्वस्मिन्नोदने' इत्योदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति, सामानाधिकरण्यादनयोः॥ ननु प्रतिनियतवस्तुभागाभिनिवेशित्वाच्छब्दानां सर्वत्वमोदनशब्देन नाभिहितम्, ओदनत्वमपि सर्वशब्देनेति कुतोऽयं प्रसङ्गः॥ तत्रेदं दर्शनम्—सर्वशब्द ओदनार्थावग्रहेण प्रवृत्तः, ओदनशब्दोऽपि सर्वशब्दार्थावग्रहेण। प्रतिपत्ता तु केवलात्सर्वशब्दाद्विशेषं न प्रतिपद्यते, रूपसादृश्यात्; नाप्योदनशब्दात्-इति तत्प्रतिपत्त्यर्थमुभयोरुपादानम्। तत्रैकस्य सर्वनामकार्यं भवति नापरस्य-इति प्रमाणाभावादतिप्रसङ्ग उद्भावितः॥

(उद्द्योतः) भाष्ये-**एतेषां चापीति**-दूषणान्तरम्। **एतेषां चापि**=घटादिशब्दानामपि॥ **एकैकस्य**=तस्यापि॥ **स स विषयः**—सर्वाद्यर्थो विषयः॥ **तस्मिंस्तस्मिन्विषये**=सर्वाद्यर्थरूपे विषये॥ **यो यः शब्दो** घटादिशब्दो **वर्तते तस्य तस्य** घटादिशब्दस्य सर्वाद्यर्थे वर्तमानस्येत्यक्षरार्थः, तद्व्याचष्टे—**ततश्चेति**। **पदैः पदार्थानभिधायाकाङ्क्षादिमूलकशक्तिवशात्संसृष्टवाक्यार्थप्रतीतिर्जन्यत इत्यभिहितान्वयवादे शङ्कते—नन्विति**। गुणद्रव्यादिसमुदायात्मके वस्तुनि **प्रतिनियता** ये भागाः-प्रवृत्तिनिमित्ताख्यास्तद**भिनिवेशित्वात्** तद्वाचकत्वाच्छब्दानामित्यर्थः॥ **योग्येतरान्विते पदानां शक्तेः स्वार्थवत्पदान्तरार्थोऽपि स्ववाच्य** इत्यन्विताभिधानमाश्रित्य परिहरति—**तत्रेति**॥ **अवग्रहः**=क्रोडीकारः॥ **न प्रतिपद्यते**—निश्चिततयेति शेषः॥ **रूपसादृश्यादिति**। ओदनव्यतिरिक्तार्थान्वययोग्यसर्वशब्दरूपस्य तुल्यत्वादित्यर्थः॥ **तत्प्रतिपत्त्यर्थम्**—निर्धारितविशेषप्रतिपत्त्यर्थम्॥

**अपरे** तु—पदे पदैकदेशप्रयोगवत् यदा 'सर्वस्मिन्नोदने' इति वाक्ये प्रयोक्तव्ये 'ओदने' इति वाक्यैकदेशः प्रयुज्यते, प्रकरणाच्च तत एव पदात्तादृशवाक्यार्थबोधस्तत्र दोष इति भाष्याशयः॥ यथा च पदशक्तिग्रहकाले पदैकदेशस्यापि तत्र शक्तिग्रह इति पस्पशायां कैयटेनोक्तम्, तथा वैयाकरणमते विशेषणविशेष्यभावे वाक्यस्य शक्त्यङ्गीकारेण तत्र तत्तत्पदार्थालिङ्गिते समुदितस्य शक्तिग्रहकालेऽवयवभूतैकैकपदस्यापि तत्र शक्तिग्रहेणैकैकपदादपि तादृशविशिष्टार्थबोध इति **इग्यण** इतिसूत्रे भाष्ये ध्वनितम्॥ आकाङ्क्षावादान्ते च मञ्जूषायां निरूपितमित्याहुः॥

**अतिप्रसङ्ग उद्भावित इति**। न च 'सर्वनाम्नः स्मै' इत्यादौ 'सर्वादेः स्मै' इत्याद्येव सूत्राणि सन्त्विति न कृत्स्नादिषु दोषः। अपाणिनीयत्वापत्तेः॥

---

१ **लोकनिरूढेति**। **एतेन** जगतीतलवर्तिवस्तुमात्रवाचकत्वं **सर्वनामत्वम्**। तत्र केचिद्योगपद्येन पर्यायेण च तथा। अन्ये तु पर्यायेणैव। प्रदीपोक्तं तु न युक्तम्, संज्ञादेरपि तथा तत्त्वेन तत्त्वावारणादिति निरस्तम्। भाष्यतस्तथैव प्रतीतेराह—**नन्विति**॥ **नन्वितीति**। तथा च तुल्यार्थे इति तथा व्याख्याने हेतुरयम्॥ छाया॥

२ **एवं**—तथा तत्त्वाङ्गीकारे॥ **तत्**—स्मैभावादि॥ **इदं** समूलयति—**एतदेवेति**॥ छाया॥

३ प्राधान्येत्यत्र बीजमाह—**नामेति**॥ **विशेषण इति**। इदमजहदिति पक्षे। स एव हि सार्वत्रिकः॥ छाया॥

४ **एवं**—सर्वादीनीति सूत्रस्य संज्ञाविधायकत्वाभावे॥

५ विशेषमित्यस्यौदनरूपार्थविशेषमित्यर्थः। **रूपसादृश्यात्**—ओदनगतसर्वत्वान्यगतसर्वत्वयोः स्वरूपतः समत्वादित्यर्थः। (र. ना.)

६ वैयर्थ्यं परिहरति—**भाष्ये एतेषामिति**। निर्धारणषष्ठीयम्॥ वीप्सालभ्यमाह—**सर्वाद्यर्थ इति**॥ **आदि**नोभादि॥ छाया॥ **दूषणान्तरमिति**। पूर्वदूषणापेक्षया—सकलं कृत्स्नमित्यत्रापि प्राप्नोतीति दूषणापेक्षया 'एतेषाञ्चापि' इत्यादिनाऽन्यदेव दूषणमुच्यते इत्यर्थः॥

७ विशेषे गमकाभावादाह—**निश्चीति**॥ तदेवाह—**रूपेति**॥ छाया॥

८ कैयटादिरीत्याऽस्य दोषस्य पाक्षिकत्वमिति सिद्धान्तमतेनान्यं भाष्याशयमाह—**अपरे त्विति**॥ **च**स्त्वर्थे॥ उक्तवदत्र बीजमपि क्रमेण दृष्टान्तदार्ष्टान्तिकभावेनैवाह—**यथा चेति**॥ **तत्र**—पदार्थे॥ **तत्र**—विशेषणविशेष्यभावे॥ **समुदितस्य**—वाक्यस्य। छाया॥

( समाधानसाधकभाष्यम् )

**एवं तर्हि उभयमनेन क्रियते—पाठश्चैव विशेष्यते, संज्ञा च ॥**

( उद्द्योतः ) [१] भाष्ये-एवं तर्ह्युभयमिति ॥

( आक्षेपभाष्यम् )

**कथं पुनरेकेन यत्नेनोभयं लभ्यम् ?**

( समाधानभाष्यम् )

**लभ्यमित्याह ।**

**एकशेषनिर्देशात् ।**

**एकशेषनिर्देशोऽयम्-सर्वादीनि च सर्वादीनि च-सर्वादीनि । सर्वनामानि च सर्वनामानि च-सर्वनामानि । सर्वादीनि सर्वनामसंज्ञानि भवन्ति, सर्वेषां यानि च नामानि तानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते ॥**

( प्रदीपः ) **एकशेषनिर्देश इति ।** ननु सहविवक्षाया अभावात् कथमेकशेषः । एकशेषफलत्वात्तन्त्रन्यायः-आवृत्तिर्वैकशेषशब्देनोच्यते । **अथवा**—आकृत्यभिधानपक्षे एकस्यैव प्रयोगे सिद्धे प्रत्याख्यातमेकशेषशास्त्रं संज्ञापरिभाषावच्छास्त्रप्रक्रियासंपादनार्थं भवतीति सहविवक्षामन्तरेणापि भवत्येकशेषः ॥ **संज्ञोपसर्जने चेति ।** यदा सर्वशब्दः संज्ञात्वेन विनियुज्यते, तदा प्रसिद्धं[२]प्रवृत्तिनिमित्तपरित्यागेन स्वरूपमात्रोपकारी प्रवर्तते इति विशेष एवावतिष्ठते । उपसर्जनमपि जहत्स्वार्थमजहद्वाऽतिक्रान्तार्थविशेषणतामापन्नमतिक्रान्तार्थवृत्ति भवति 'अतिसर्वाय' इत्यत्र ॥ वाक्ये त्वसंसृष्टार्थत्वात् स्वार्थमात्रं प्रतिपादयतो न विशेषेऽवस्थानम् ॥

( उद्द्योतः ) **सहेति ।** एकैकस्योद्देश्यत्वविधेयत्वसत्त्वात्सहविवक्षाऽभाव[३] इत्यर्थः ॥ अर्थद्वयबोधेच्छया एकस्य सकृदुच्चारणमिह **तन्त्रम् ।** अन्त्रोच्चारणं तन्त्रेण, बोद्धबोधस्तु पुनरनुसन्धानेनेत्याशयेनाह—**आवृत्तिर्वेति ।** आवृत्तिश्चेत्यर्थः ॥ **प्रत्याख्यातमिति ।** लौकिकप्रयोगाङ्गत्वेन निराकृतमित्यर्थः ॥ **प्रसिद्धप्रवृत्तिनिमित्तेति ।** तच्च सर्वशब्दस्य यावत्त्वम् । इदमु[४]पलक्षणम्—अनेकार्थसाधारणशक्तिग्रहसहकारेण स्वविषयाणां सर्वेषामर्थानां प्राधान्येन बोधकत्वं **सर्वनामत्वमित्यस्यार्थस्य ॥ स्वरूपमात्रोपकारीति ।** स्वरूपमात्रप्रवृत्तिनिमित्तक इत्यर्थः ॥ **अतिक्रान्तार्थविशेषणतामिति ।** ए[५]वं च प्राधान्येन न सर्वार्थोपस्थापकत्वमिति भावः ॥ जहत्स्वार्थत्वे तु सर्वोपस्थापकत्वमेव नेति बोध्यम् ॥

( समाधानान्तरभाष्यम् )

**अ[६]थवा—महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ।**

**कुत एतत् ?**

**लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत । सर्वादीनि सर्वनामसंज्ञानि भवन्ति । सर्वेषां नामानीति चातः सर्वनामानि-इति । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते ॥**

( प्रदीपः ) **यतो न लघीय इति ।** श[७]ब्दव्यवहारो लघुः, ततोऽपि लघीयो नाम । तत्र गुरुसंज्ञाकरणात्सर्वादीनां विशिष्टो धर्मोऽनुमीयते—नूनमेता[८]नि संज्ञाप्रवृत्तिनिमित्तेन सर्वनामत्वेन युक्तानि । यतस्तदनुरूपा तेषां संज्ञा कृतेति सर्वनामकार्यमन्तर्गणकार्यं च सर्वनामत्वयुक्तानामेव भवति, न संज्ञोपसर्जनानाम् ॥

( उद्द्योतः ) भाष्ये—**अथवा महतीति ।** अ[९]यं भावः—अनेकार्थसाधारणशक्तिग्रहसहकारतः प्राधान्येन स्वविषयसर्वार्थोपस्थितिजनकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासंज्ञया तादृशसर्वादीनामेव गणेऽनुकरणम् । तत्र संज्ञायास्तत्त्वा[१०]भावः स्पष्ट एव ।

---

१ 'भाष्ये-एवं तर्ह्युभयमिति' एतावान् प्रतीकमात्र एवात्रोद्योतः सर्वपुस्तकेषु दृश्यते ॥

२ स्वविषयापेक्षेति प्रागुक्तरीत्याह—**प्रसिद्धेति** ॥ छाया ॥

३ **विवक्षाभाव** इत्यत्राकारप्रश्लेषः । उभयोरेकत्रान्वयाभावेनातुल्यकक्षत्वादिति भावः । शब्दतन्त्रमिदमित्याह—**अर्थेति** ॥ यथाश्रुतकैयटासंगतेरन्यत्र प्रतिपादितत्वादाह—**अन्त्रोच्चेति** ॥ वा चार्थे इत्याह—**आवृत्तिश्चेति** ॥ प्रत्याख्यातत्वे प्रक्रियासंपादकत्वासंभवादाह—**लौकिकेति** ॥ इदमपि कैयटादिरीत्यैव, भाष्यमते हि तत्रापि तन्त्रेणैव निर्वाहात् । उपायस्योपायान्तरादूषकत्वाद्धि तैस्तथोक्तम् ॥ छाया ॥

४ तच्च घटादावतिप्रसक्तमिति प्रागुक्तमतस्तत् सिद्धान्तरीत्याऽऽह—**इदमुपेति** ॥ उपसर्जनसंग्रहाय प्रागुक्तमेवाह—**प्राधेति** ॥ स्वरूपमात्रेणोपकारीति समासाशयेनाह—**स्वरूपेति** ॥ छाया ॥

५ सिद्धान्तरीत्यैव तात्पर्यमाह—**एवं चेति ।** तस्य विशेषणत्वे चेत्यर्थः ॥ अयमाशयो द्वितीयस्येति सूचयन्नाह—**जहदिति** ॥ छाया ॥

६ अत्र पक्षे द्वितीयवाक्यार्थो **वृद्धिरादै**जित्यादिवाक्यार्थवदित्येतद्ध्वनयन्नाह—**अथवा महतीति** ॥ छाया ॥

७ ईयसुनुपपत्तय आह—**शब्देति** ॥ **तत्र**—तथासति ॥ छाया ॥

८ **एतानी**ति पक्षः । **युक्तानी**त्यन्तेन साध्यम् । **यत** इत्यादिना हेतुः, व्यतिरेक्यनुमानेऽत्र घटादिर्दृष्टान्तः । तथा च नायं शाब्दः, अपि त्वनुमानगम्यः । स तूक्त एव ॥ अत्र व्यञ्जना वक्तुमुचिता ॥ छाया ॥

९ ननु प्रातिपदिकसंज्ञावन्महासंज्ञाऽस्तु, किं चाक्षरमर्यादयाऽलाभेन कथं तद्वारणमत आह—**अयं भाव इति** ॥ **स्वविषयेति ।** तत्त्वं प्रागुक्तमेव । एतेन पूर्वमतैकवाक्यता सूचिता । अतोऽपि प्रागुपलक्षणतया तथोक्तम् ॥ **तत्र**—तयोर्मध्ये । **तत्त्वाभावः**—तेन बोधकत्वाभावः ॥ अजहत्पक्षेणाह—**उपेति** ॥ आदौ तल्लाभे बीजमाह—**नामेति ।** तत्र तथैव सत्त्वादिति भावः ॥ छाया ॥

१० तत्त्वाभावः—स्वविषयसर्वार्थोपस्थितिजनकत्वाभावः । ङ. पुस्तके 'स्पष्ट एव' इत्यस्य न पाठः ॥

उपसर्जनस्यापि न प्राधान्येन तदुपस्थापकत्वं, नामपदस्वारस्येन तथैव लाभात् । [1]उपसर्जनं हि–इतरविशेषणतयैव स्वार्थोपस्थापकम् । सर्वादीनि तदन्तानि च सर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्तीत्यर्थः सूत्रस्य । तदन्ते च तत्प्रधानसमासेऽवयवीयताट्टशशक्तिसहकारेण स्वविषयसर्वबोधकत्वं विशेष्यतयाऽस्त्येवेति दिक् ॥ **ततोऽपि लघीयो नामेति** । संज्ञे[2]त्यर्थः । तन्नाम **संज्ञा** यतोऽन्यत् **लघुतरं** नास्तीत्यन्वयो भाष्ये । यद्वा **संज्ञा च नामे**ति पर्यायप्रदर्शनम् । [3]तच्च यतो नान्यल्लघीयस्तत् । एवं च संज्ञायां सर्वतः शब्दव्यवहाराल्लघीयस्त्वं सिद्धम् ॥ लध्वर्थमित्यस्य लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थः ॥ नन्वन्वर्थसंज्ञात्वं नाम योगरूढत्वम् । तत्र योगार्थस्य रूढ्यर्थेनैवान्वयनियमात् पृथगुद्देश्येनानन्वयात् कथं सर्वार्थवाचकानामेव संज्ञेत्यत आह—**अनुमीयत इति** ॥ **नूनमेतानीति** । [4]गणपठितानीत्यर्थः ॥

## ( उभशब्दपाठप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथोभस्य सर्वनामत्वे कोऽर्थः ?**

( उद्द्योतः ) भाष्ये—**अथोभस्येति** । उभयत इत्यादेरुभयशब्दपाठेनैव सिद्धेरिति भावः ॥

( १९८ समाधानवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ उभस्य सर्वनामत्वेऽकजर्थः ॥ * ॥

( भाष्यम् )

**उभस्य सर्वनामत्वेऽकजर्थः पाठः क्रियते । उभकौ ॥**

( आक्षेपभाष्यम् )

**किमुच्यतेऽकजर्थ इति, न पुनरन्यान्यपि सर्वनामकार्याणि ?**

( १९९ समाधानहेतुवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ अन्याभावो द्विवचनटाब्विषयत्वात् ॥ * ॥

( भाष्यम् )

**अन्येषां सर्वनामकार्याणामभावः ।**

**किं कारणम् ?**

**'द्विवचनटाब्विषयत्वात् ।' उभशब्दोऽयं द्विवचनटाब्विषयः । अन्यानि च सर्वनामकार्याणि एकवचनबहु[5]वचनेषूच्यन्ते ॥**

( प्रदीपः ) **अन्याभाव इति** । टाब्विषयत्वमपि न द्विवचनादन्यत्र बोद्धव्यम् । तत्र 'उभादुदात्तो नित्यम्' इत्यत्र नित्यग्रहणस्येदं प्रयोजनम्—वृत्तिविषये उभशब्दस्य प्रयोगो मा भूत्, उभयशब्दस्यैव यथा स्यादिति–उभयपुत्र इत्यादि भवति ॥ **द्विदण्ड्यादिभ्यश्चे**त्यत्र निपातनात् 'उभाबाहु' इत्यादयः साधवः ॥

( उद्द्योतः ) ननु टाबन्ते **सर्वनाम्नः स्याड्**ढित्याद्यन्यसर्वनामकार्यसं[6]भवोऽस्त्येवेत्यत आह—**टाब्विषयत्वमपीति** । 'अन्याभावः' इत्यत्र हेतुत्वेनोपादानादिति भावः ॥ एवं चो[7]भशब्दः केवलद्विवचनविषयष्टाप्सहितद्विवचनविषयो वेत्यर्थः–इति टाब्ग्रहणमनुवादमात्रं नापूर्वमिति तात्पर्यम् ॥ द्विवचनटाब्विषयत्वे [8]उपपत्तिमाह—**तत्रेति** । **द्वित्रिभ्यामिति** सूत्रस्य 'वा'इत्यस्यास्वरितत्वादेवाननुवृत्तौ

---

१ अथ निषेधे हेतुमाह—**उपसर्जनं हीति** ॥ पूर्वत्र वाक्यार्थद्वयप्रयुक्तगौरवमात्रमत्र तु नेत्याह—**सर्वादीनीति** ॥ सर्वार्थेत्यस्य **ताद्दशे**त्यादिः ॥ ननु तदन्तशक्तिग्रह एव न, पदादेव तद्बोधसंभवात् । किं च विशिष्टशक्तिग्रहो नानेकार्थसाधारणः, विशेषणशून्यानुत्थापकत्वादत आह—**तदन्ते चेति** । चस्त्वर्थे ॥ उपसर्जननिरासायाह—**तत्प्रेति** ॥ परीत्या आह—**अवयेति** ॥ **ढशेति** । अनेकार्थसाधारणेत्यर्थः । किं च विशिष्टशक्तिग्रहोऽप्यस्त्येव । न च स नानेकार्थसाधारणः, परमपञ्चेत्यादावुक्तप्रकारवदुक्तरीत्या तेन रूपेण तत्प्रकारकतद्विशेष्यकबोधजनकत्वेन ताद्दशसर्वबोधकस्वस्योभभवदादिवत् सत्त्वेन तत्त्वस्य सत्त्वात् । परमत्वादेराधिक्येऽपि अधिकं प्रविष्टमितिन्यायेनाक्षतेस्तदाह—**दिगिति** ॥ छाया ॥

२ अन्नत्यनामार्थमाह—**संज्ञेत्यर्थ इति** ॥ अनेन सूचितं भाष्यार्थमपौनरुक्त्यायाह—**तन्नामेति** । सुबन्तमित्यर्थः ॥ अन्नार्थक्रमविरोधाचासंगतेराह—**यद्वेति** । तच्च **भावो भावने**त्यादिवत्पृथग्वाक्यम् ॥ छाया ॥

३ तथासति अग्रिमार्थमाह—**तच्चेति** ॥ तात्पर्यार्थमाह—**एवं चेति** । उक्तव्याख्याने चेत्यर्थः ॥ नन्वेवमग्रिमभाष्यासंगतिरत आह—**लध्वर्थमिति** ॥ अन्यत्र बहुशस्तथाक्लृप्तमर्थमाह—**लाघवेनेति** ॥ **तत्र**–तयोर्मध्ये ॥ **नियमात्**–पङ्कजादौ गृहीतात् ॥ छाया ॥

४ सूत्रे **गणानुक्तानी**त्यर्थस्यौचित्येऽप्यन्तर्गणकार्यवारणं न स्यादत आह—**गणपठितानीत्यर्थ इति** ॥ छाया ॥

५ 'वचनविषयेषु–' इति प. पाठः ॥

६ **संभव इति** । अप्कल्पमित्यादिवद्वचनातिक्रमसंभवादिति भावः ॥ तत्र मानमाह—**अन्येति** । तस्येति शेषः ॥ **केवलेति** । पुंनपुंसकयोः ॥ स्त्रियामाह – **टाबिति** ॥ एवं च एतद्भाष्यप्रामाण्यात्ताद्दशस्थल एव तद् । अत एव 'क्वचिद्' इति तत्रोक्तम् ॥ छाया ॥ **तत्र**–नित्यमिति विभक्तसूत्रव्याख्यावसरे शेखरे इत्यर्थः । ( र. ना. )

७ 'चोभयशब्दः' इति घ. ज. ज. पाठः ।

८ उपेति । अनेन **तत्रे**त्यस्य बीजम्–इति, अग्रे '**इति**' इति च शेष इति सूचितम् ॥ ननु वानिवृत्त्यर्थं तदत आह—**द्वित्रीति** ॥ ननु महाविभाषानिवृत्त्यर्थं तदत आह—**तयबिति** ॥ ननु मतान्तरे तथाऽत आह—**प्रत्ययान्तरेति** । तथा च तत्सत्त्वेऽपि तदनिवर्तकत्वमेव । अन्यथा वाक्यासिद्धिरिति भावः ॥ **प्रत्ययान्तरे**त्यस्यैव व्याख्या-**स्वार्थिकेति** ॥ **नित्यत्वस्यैकदेशेऽन्वयः** ॥ **विकल्पो** द्विविधः ॥ स्वराभेदमाह—**अयमपीति** ॥ **संबद्धाद्युदात्तेति** पाठः ॥ छाया ॥

तयपस्थानिकत्वेनायचः-तद्विकल्पेनैव वाक्यसिद्धौ फलाभावेन महाविभाषाया अप्यसंबन्धसिद्धौ प्रत्ययान्तरत्वपक्षे तन्निवृत्तौ दोषाच्च नित्यग्रहणं योगविभागेन स्वार्थिकानादेशभूतायच्प्रत्ययान्तरविधायकमिति भावः ॥ अत्र च नित्यशब्दस्य वाच्यार्थविरोधाद्विकल्पाननुवृत्तिः । अयमप्याद्युदात्त एव, प्रत्ययसंबन्धोदात्तग्रहणानुवृत्तेः ॥ **वृत्तिविषये इति** । अत **एवोभौ साभ्यासस्ये**ति निर्देशः सङ्गच्छते । इदं च सूत्रं योगविभागस्येष्टसिद्ध्यर्थत्वाद् **उभा**विति निर्देशाच्च **उभयोऽन्यत्रे**ति वार्तिकाच्च द्विवचनाश्रवणं यत्र तत्रैव प्रवर्तते, नान्यत्र । तेन नातिप्रसङ्गः ॥ **द्विवचनविषयत्वादि**ति भाष्यस्य द्विवचनसत्त्वे एवोभशब्दः साधुरित्यर्थः ॥ द्विवचनासत्ता च वृत्तिविषय एवेत्याशयेन कैयटे **वृत्तिविषये** इत्युक्तम् ॥

( आक्षेपभाष्यम् )

**यदा पुनरुभशब्दो द्विवचनटाब्विषयः, क इदानीमस्यान्यत्र भवति ?**

( **उद्द्योतः** ) क **इदानीमिति** । अस्योभशब्दस्यार्थप्रतिपादकः कः-शब्दोऽन्यत्र-तसिलादिविषये द्विवचनाभावे भवतीत्यर्थः ॥

( २०० समाधानवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ उभयोऽन्यत्रेति ॥ * ॥

( भाष्यम् )

**उभयशब्दोऽस्यान्यत्र भवति । उभये देवमनुष्याः, उभयो मणिरिति ॥**

( **उद्द्योतः** ) **उभयोऽन्यत्रेति** । द्विवचनविषयत्वाभावसंभावनायामिति भावः ॥ लुग्विषये लुका विषयस्यैवापहारान्न दोषः । संभावनानिवेशाच्चोभयस्य पाठाभावेऽप्युभयत इत्यादिसिद्धिः । अन्यथोभात्तसिलादेः कर्तुमशक्यतया द्विवचनस्य लुगभावेन तद्विषयस्यैव सत्त्वेनायजनापत्तौ 'उभयतः' इत्याद्यसिद्धिः ॥ मम तु यद्यत्र तसिलादि स्यात् तर्हि लुगपि स्यादिति संभावनया विषयाभावसंभावनाऽस्त्येवेति न दोषः । इदमेव ध्वनयितुं विषयपदमुपात्तम् ॥

**उभयेति** । वार्तिके उभयशब्देन स्वार्थिकायजन्तस्यावयव्यर्थकायजन्तस्य च ग्रहणमिति भावः ॥

( आक्षेपभाष्यम् )

**किंच स्यात्, यद्यत्राकज् न स्यात् ?**

( समाधानभाष्यम् )

**कः प्रसज्येत ॥**

( आक्षेपभाष्यम् )

**कश्चेदानीं काकचोर्विशेषः ?**

( **प्रदीपः** ) **कश्चेदानीमिति** । रूपे स्वरे च नास्ति विशेषः । अवँग्रहे च नास्त्यादरः, न हि लक्षणेन पदकारा अनुवर्त्याः । [ उभकाभ्यां हेतुभ्यां उभकयोर्हेत्वोरिति षष्ठीतृतीये सिद्धे, निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वचनात् ॥ ]

( **उद्द्योतः** ) **रूपे इति** । नन्वकचि उभशब्देन तद्विशिष्टस्य ग्रहणादुभकाववयवौ यस्येत्यर्थे उभकयो मणिरिति प्रयोगः सिध्यति, के तु नेति फले विशेषः स्पष्टः । एवमज्ञातोभयोर्घट इत्यर्थेऽकचि उभकघट इति रूपम् । केऽयच्चि उभयक इति स्यादिति रूपे विशेषः स्पष्ट एवेति चेन्न । भाष्यप्रामाण्येनानभिधानात् । अत एव हरिणा **उभयोन्यत्रे**ति वार्तिकमूलभूतं **"उभयस्य द्विवचनं टाप्च लोपश्च यस्य"**इति व्याकरणान्तरसूत्रमुदाहृतम् । तन्मते ह्येषां प्रयोगाणामभावः स्पष्ट एवेति बोध्यम् ॥ **स्वरे चेति** । चित्स्वरप्रत्ययस्वराभ्यामुभयत्रापि अन्तोदात्तत्वस्यैव सिद्धेरिति भावः ॥ **उभकाभ्यामि**त्यादिर्वचनादित्यन्तो ग्रन्थः प्रक्षिप्तः, पुनरग्रे दर्शनात् ॥

( समाधानभाष्यम् )

**"उभशब्दोऽयं द्विवचनटाब्विषयः" इत्युक्तम् । तत्राकचि सति अकचस्तन्मध्यपतितत्वाच्छक्यते एतद्वक्तुं—द्विवचनपरोऽयमिति । के पुनः सति नायं द्विवचनपरः स्यात् । तत्र द्विवचनपरता वक्तव्या ॥**

( **प्रदीपः** ) **उभशब्दोऽयमिति** । द्विवचनेऽनन्तरे श्रूयमाणे उभशब्देन साधुना भाव्यं, न लुप्ते, न व्यवहिते ॥ **के पुनः सतीति** । पूर्वस्य द्विवचनस्य लुप्तत्वादपरस्य केन व्यवधानात् । **तत्र**-कविषये व्यवहितद्विवचनविषय उभशब्दः साधुर्भवतीति वक्तव्यम् ॥

( **उद्द्योतः** ) **श्रूयमाण इति** । विषयशब्दलभ्योऽयमर्थः । श्रूयमाणत्वं च साक्षात्-भावरूपादेशद्वारा वा-इत्यन्यत् ॥ **व्यवधानादिति** । द्विवचनविषयत्वस्याव्यवहितस्यैव निवेशादित्यर्थः ॥ उभय-

---

१ गुरुप्रसादेन 'प्रत्ययसम्बद्धाद्युदात्तग्रह' इति पाठः प्रदर्श्यते स प्रामादिकः, 'नित्यं' इति विभक्तसूत्रे पूर्वसूत्रत उदात्तपदस्यैवानुवृत्तेः । शेखरे—'अयमप्याद्युदात्त एवोदात्तग्रहणानुवृत्तेः' इत्येवोच्यते ॥ 'प्रत्ययसम्बद्धोदात्त' इति ग. पाठः ॥

२ नन्वेवमाद्यस्य द्विवचनेऽतिप्रसङ्गः, द्वितीयस्य 'उभयोर्वासः' इत्यादावत आह—**इदं च सूत्रमिति** ॥ तत्र द्वितीय आह—**योगेति** ॥ उभयसाधारणमाह—**उभयोन्यत्रेतीति** । इदमनुपदमेव स्फुटीभविष्यति ॥ **वृत्तीति** । प्राय इत्यादिः ॥ छाया ॥

३ 'उभयोऽन्यत्र' इत्येव वार्तिकपाठो बहुषु पुस्तकेषु । प्रमाणतरेषु कतिपयेषु इतिशब्दान्तपाठदर्शनात्सोऽत्राद्दृतः । अन्यत्रोभय इति—इत्यन्वयोऽत्र ॥

४ **संभावनायामित्यर्थ** इति पाठः ॥ **अन्यथा**-संभावनाया अनिवेशे ॥ **कर्तुमिति** । अपाठात् ॥ **उपात्तम्**—भाष्ये पूर्वत्र ॥

५ 'च्चोभशब्दस्य' इति ङ. पाठः । **उभयस्य**—उभ उभय इति शब्दद्वयस्य ॥

६ ननु स्वार्थिकोपक्रमेण वार्तिकप्रवृत्तेः कथमुभये इत्याद्युदाहरणं भाष्येऽत आह—**उभय इति वार्तिक इति** । उभयप्रामाण्यादिति भावः ॥ छाया ॥

७ अवग्रहस्तु कप्रत्ययेऽपि पदकारैर्न क्रियते, **'चित्र इद्राजा राजका' 'इदन्यके'** इत्यादौ तथैव निर्णीतत्वात् ॥ श. कौ. ॥

८ **अयं**—श्रूयतिः ॥ लोपवद्वारणायाह—**भावेति** ॥ छाया ॥

९ उभघटाविति क्वचित्पाठः ॥ (र. ना.)

घटाविल्यादौ व्यवहितद्विवचनपरस्य साधुत्ववारणाय—कविषये इति । एवं चैतद्वचनाकरणलाघवार्थमुभशब्दपाठ इति भावः ॥

( आक्षेपभाष्यम् )

**यथैवं तर्हि के सति नायं द्विवचनपरः, एवमाप्यपि सति नायं द्विवचनपरः स्यात् । तत्र द्विवचनपरता वक्तव्या ॥**

( प्रदीपः ) **यथैव तर्हीति** । ननु 'द्विवचनटाब्विषयत्वात्' इत्यत्र टाप उपात्तत्वाच्चोद्यानुपपत्तिः । एवं तर्हि टाब्विषयत्वमेकवचनबहुवचनयोर्मा भूदित्येवमर्थमाप्यपि द्विवचनपरता वक्तव्येत्युक्तम् ॥

( उद्द्योतः ) भाष्ये—**एवमाप्यपीति** । टापा व्यवधानादिति भावः ॥

( समाधाने वार्तिकांशानुवादः ॥ )

***अवचनादापि तत्परविज्ञानम् ॥***

( भाष्यम् )

**अन्तरेणापि वचनमापि द्विवचनपरोऽयं भविष्यति ॥**

( प्रदीपः ) **अवचनादिति** । स्वार्थिकत्वादाप उभार्थस्याहानादापि सिद्धा द्विवचनपरतेत्यर्थः

( उद्द्योतः ) (भाष्ये)—**अन्तरेणापीति** । दीर्घे तद्विशिष्टस्यान्तवद्भावेनोभशब्दत्वमिति भावः ॥ आबन्तादेकवचनाद्यापत्तिस्तु नेत्याह—**स्वार्थिकत्वादिति** । एवं च तत एकवचनादौ द्विवचनविषयत्वं कथमिति न वक्तव्यमिति भावः ॥

( आक्षेपभाष्यम् )

[ [३]**किं वक्तव्यमेतत् ?**

( समाधानभाष्यम् )

**नहि ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ?**

( समाधानभाष्यम् )

**एकादेशे कृते द्विवचनपरोऽयमन्तादिवद्भावेन॥]**

( उद्द्योतः ) **किं वक्तव्यमेतदित्यादिरन्तादिवद्भावेनेत्यन्तोऽपाठः** । अवचनादापीत्यस्य वक्तव्यत्वाभावेन **किं वक्तव्यमिति** प्रश्नासङ्गतेः ॥ [४]तथा भ्रममूलको वा प्रश्न इति बोध्यम् ॥

( प्रत्याख्याने भाष्यवार्तिकम् )

***अवचनादापि तत्परविज्ञानमिति चेत्केऽपि तुल्यम् ॥***

( भाष्यम् )

**अवचनादापि तत्परविज्ञानमिति चेत्केऽपि अन्तरेण वचनं द्विवचनपरो भविष्यति ।**

**कथम् ?**

**'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति ॥**

( प्रदीपः ) **केऽपि तुल्यमिति** । 'द्विवचनविषयत्वात्' इत्यत्र द्विवचनशब्देन प्रत्ययो न गृह्यते । किं तर्हि ? द्व्यर्थाभिधानसमर्थ इत्यर्थः ॥ 'उभयतः' 'उभयत्र' इति त्रतसोरव्ययत्वात् द्वित्वाभिधानसामर्थ्यं नास्तीत्यभेदविषय उभयशब्द एव प्रयुज्यते, न तूभशब्दः ॥ एवं प्रत्याख्यातोऽकजर्थ उभशब्दस्य पाठः ॥ 'सर्वनाम्नस्तृतीया च' इति षष्ठीतृतीयार्थः पाठ इति केचित् । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति वचनात्तदर्थोऽपि पाठो न कर्तव्य **इत्यन्ये** ॥

( उद्द्योतः ) **द्व्यर्थेति** । कृत्रिमाकृत्रिमन्यायस्य तु नेह प्रवृत्तिः, [५]तस्या इह शास्त्रेऽनाश्रयणस्य **संख्यासंज्ञासूत्रे** भाष्ये उक्तेः । [६]अस्य लोकसिद्धव्यवस्थावबोधकत्वेन तत्र न्यायाप्रवृत्तेश्चेति भावः ॥ ननूभकावितिवत् 'उभतः' इत्याद्यपि प्रसज्येतेत्यत आह—**उभयत इत्यादि** । तयोरव्ययत्वेन विभक्त्यन्तीयस्वार्थिकत्वेन चाधिकरणापादानशक्तिविशेष्यकबोधजनकत्वात् ॥ **द्विवचनत्वं** च संख्या[७]प्रकारकसंख्येयविशेष्यकबोधजनकत्वम् ॥ **अभेदविषयः**– वृत्तिविषयः ॥ उक्तमर्थं प्रश्नपूर्वं व्युत्पादयति—भाष्ये-**कथम् ? स्वार्थिका इति** । यतः स्वार्थिकाः प्रकृतितोऽविशिष्टाः–अन्यार्थविशेष्यकबोधाजनका [८]अतः प्रकृतिर्गृह्यते अनेनेति–प्रकृतिग्रहणं, तेन–

---

१ भाष्यस्थतत्रेत्यनूद्य व्याख्या प्रदीपे—**कविषयेत्यादि** ॥ एततात्पर्यमाह—**एवं चेति** ॥

२ इदमुद्धर्त्तुं शङ्कते—**यथैव तर्हीति** ॥ छाया ॥

३ [ ] एतच्चिह्नगतो भाष्यपाठः प्रक्षिप्त इत्युद्योतादवसीयते । प्राचीनपुस्तकेषु कुण्डलनालंकृतः सर्वत्र ॥

४ तमपि पाठं समर्थयते—**तथेति** ॥ छाया ॥

५ **तस्येहेति** पाठः । प्रकरणस्याभिधानियामकत्वसिद्धस्योक्तन्यायस्येत्यर्थः ॥ ननु सर्वत्रानाश्रयणेऽपि क्वचिदस्त्येवात आह—**अस्येति** ॥ उक्तवार्तिकस्येत्यर्थः ॥ **व्यवस्थेत्यनेनानियमाभावः सूचितः** ॥ **तत्र**–द्विवचनांशे ॥ **तद्व्यायेति** पाठान्तरम् ॥ पाठपक्षे शङ्कते—**ननूभेति** ॥ तदनुक्तमपि हेतुमाह—**विभेति** ॥ छाया ॥

६ **अस्य**—अन्याभावो द्विवचनटाब्विषयत्वादिति वार्तिकस्य ॥

७ **संख्येति** । तदित्यादिः ॥ क्वचिद् **द्वित्वसङ्ख्येति** पाठ एव ॥

एकवचनं त्वौत्सर्गिकम् ॥ **उक्तं**–अनुपदमेव ॥

८ **अत इति** । अस्माद्धेतोरित्यर्थः । **प्रकृतिः**–कादेः ॥ प्रत्यासत्तिलभ्यमाह—**तत्प्रकृतीति** । तेन नातिप्रसङ्गः ॥ **प्रकृतीत्यस्योक्तार्थो** ग्रहणपदसमभिव्याहारेणैव, यदि उभशब्देन तस्य ग्रहणमित्येवार्थः स्यात्, तदा प्रकृत्येत्येव ब्रूयादिष्टार्थासिद्धिश्च ॥ यदि औ इत्यनेन तद्ग्रहणं तर्हि विभक्त्येत्येव ब्रूयात् । तदभिप्रेत्याह—**प्रकृतिरिति** ॥ कैयटस्यापीदमेव तात्पर्यं पूर्वमुक्तम् । तथा च तत्र **प्रत्ययपदेन** प्रसिद्ध औ इत्यादिरेव । **समर्थ** इत्यनेन तादृशोऽन्योऽपि प्रत्यय एवेत्यर्थः । तदेतत्स्फुटयति—**द्विवचनं चेति** ॥ आहुरित्यरुचिबीजं तु नायमर्थः कैयटाद्यभिमतः । साहचर्यस्यासार्वत्रिकत्वात् । टाबनुवादफलस्य स्पष्टं भाष्य एवोक्तेश्च । एवं च निरुक्तवचनत्वं कादिवदुभशब्देऽप्यस्तीति नायच् तत्रेति ॥ प्रत्याख्यानं दूढयति—**किंचेति** ॥ छाया ॥

प्रकृतिभूतोभशब्दग्राहकेण द्विवचनशब्देन तत्प्रकृतिकानां स्वार्थिकानां कादीनामपि ग्रहणमित्यर्थः । तेनोभयत इत्यादेर्व्यावृत्तिः । **प्रकृतिग्रहणेनेत्यनेन कृत्रिमाकृत्रिमन्यायाप्रवृत्तिर्ध्वनिता** । द्विवचनं च टाप्साहचर्यात्प्रत्यय एव गृह्यते । एतदर्थमेव टाप्ग्रहणम् । तेनोभयोरुभावित्यत्र समासे भवत्येवायच्-इत्याहुः ॥ **एवं प्रत्याख्यात इति** । किं च अकज्मात्रार्थत्वे **उभाव्ययसर्वनाम्नामकजित्येव** पाठेन सिद्धे संज्ञाप्रयोजको गणे पाठो व्यर्थः । साहचर्याच्च संज्ञादिव्यावृत्तिरिति बोध्यम् ॥

(भवच्छब्दपाठप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**अथ भवतः सर्वनामत्वे कानि प्रयोजनानि ?**

(प्रदीपः) **अथ भवत इति** । अनकारान्तत्वात् स्माया-द्यभावात्प्रश्नः ॥

(समाधानभाष्यम्)

**भवतोऽकच्छेषात्वानि प्रयोजनानि ॥**

**अकच्—भवकान् ॥**

**शेषः—स च भवांश्च भवन्तौ ॥**

**आत्वम्—भवादृगिति ॥**

(प्रदीपः) **शेष इति** । पाठे सति त्यदादित्वाच्छेषो भवति॥

(आक्षेपभाष्यम्)

**किं पुनरिदं परिगणनम्, आहो स्विदुदाहरणमात्रम् ?**

(समाधानभाष्यम्)

**उदाहरणमात्रमित्याह। तृतीयादयोऽपि हीष्यन्ते । "सर्वनाम्नस्तृतीया च"-भवता हेतुना, भवतो हेतोरिति ॥ २७ ॥**

(प्रदीपः) **तृतीयादयोऽपीति** । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इत्यनपेक्ष्यैतदुक्तम् ॥ इदं तु प्रयोजनम्—भावतायनिः, भवद्यञ्, भवन्मयः । पूर्वनिपातश्च—भवन्मित्रः । 'भवतष्ठक्छसौ' इति वृद्धत्वात् ठक्छसौ, गुणवचनसंज्ञाबाधनं च, भवतो भावः-भावत्यमिति मा भूत् ॥ २७ ॥

(उद्द्योतः) **इदं त्विति** । भाष्ये आदिपदसंग्राह्यमित्यर्थः ॥ **भावतायनिरिति** । सति पाठे **त्यदादीनि चेति** वृद्धत्वे **उदीचां वृद्धादिति फिञ्** ॥ **भवद्यङिति** । **विष्वग्देवयोश्च टेरिति** चेन सर्वनाम्नोऽनुकर्षणादद्र्यादेशः ॥ भवन्मये **नित्यं वृद्धेति** मयट् ॥ भवन्मित्रे **बहुव्रीहौ सर्वनामसंख्ययोरिति** पूर्वनिपातः ॥ **भवतष्ठगिति** । शत्रन्तनिवृत्तये वृद्धग्रहणं तत्रानुवर्तत इत्यर्थः ॥ **गुणवचनेति** । एकसंज्ञाधिकारे सकलप्रातिपदिकविषयगुणवचनसंज्ञातः परा सर्वनामसंज्ञेति भावः ॥ २७ ॥

(२६ सर्वनामसंज्ञासूत्रम् ॥ १ । १ । ६ आ. २ ॥)

## विभाषा दिक्समासे बहुव्रीहौ ॥ १ । १ । २८ ॥

(तत्तत्पदप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**दिक्ग्रहणं किमर्थम् ?**

(प्रदीपः) **विभाषा दिक्समासे० ॥ २८ ॥ दिक्ग्रहणमिति** । एकस्मिन्विषये विकल्पप्रतिषेधयोरसंभवात्सामर्थ्याद्विषयभेद आश्रयितव्य इति **प्रश्नः** ॥

(उद्द्योतः) **विभाषा दि० ॥ २८ ॥ एकस्मिन्निति** । सर्वत्र परत्वात्प्रतिषेधे विकल्पवैयर्थ्यम् । सर्वत्र वा विकल्पे भावाभावयोस्तेनैव सिद्धत्वात्प्रतिषेधानर्थक्यमिति तयोरेकविषयकत्वासंभव इति भावः॥

(समाधानभाष्यम्)

**"न बहुव्रीहौ" इति प्रतिषेधं वक्ष्यति, तत्र न ज्ञायते—क्व विभाषा क्व प्रतिषेध इति ॥ दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति—दिगुपदिष्टे विभाषा, अन्यत्र प्रतिषेधः ॥**

(प्रदीपः) वचनमन्तरेणाभिमतो विषयभेदो न लभ्यत **इत्युत्तरम्** ॥

(उद्द्योतः) भाष्ये-**दिगुपदिष्टे इति** । दिक्शब्दोच्चारणेन विहित इत्यर्थः । **बहुव्रीहावि**ति शेषः ॥

(आक्षेपभाष्यम्)

**अथ समासग्रहणं किमर्थम् ?**

(समाधानभाष्यम्)

**समास एव यो बहुव्रीहिस्तत्र यथा स्यात्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति । दक्षिणदक्षिणस्यै देहि ॥**

(प्रदीपः) **समास एवेति** । मुख्य इत्यर्थः । अन्यस्तु तत्कार्यलाभात् तद्व्यपदेशं लभत इत्यमुख्यः ॥

---

१ इतः पूर्वं 'भवतोऽकच्छेषात्वानि' इति वार्तिकं क्वचिन्मुद्रितपुस्तकेषु दृश्यते ॥

२ **अनपेक्ष्येति** । किं तु सूत्रमात्रमपेक्ष्येति शेषः ॥ छाया ॥

३ अस्मिन् सूत्रे दिक्पदाभावे बहुव्रीहावनेन विकल्प उत्तरसूत्रेण च निषेध इति एकत्र निषेधविकल्पयोरनुपपत्तिर्वैयर्थ्यं च, तत्सामर्थ्याल्लक्ष्यानुसारेण कश्चिद्विशेष आश्रयणीय इत्यर्थमाह-**एकस्मिन् विषय इति** ॥

४ **विषयभेद इति** । लक्ष्यानुसारेणेति भावः ॥ छाया ॥

५ **विकल्पे**-पूर्वविप्रतिषेधेन ॥ **तेन**-विकल्पेन ॥ छाया ॥

६ **तत्र**-तस्मिन्सति ॥ छाया ॥

७ **वचनमिति** । मन्दमध्यमानां तादृशलक्ष्याज्ञानादुत्तमानां तदनुसंधाने प्रतिपत्तिगौरवादिति भावः ॥ छाया ॥

८ बहुव्रीहावित्यत एव लाभादाह—**अथ समासेति** ॥ छाया ॥

( उद्द्योतः ) व्या[1]प्यधर्मातिदेशे व्यापकधर्मस्याप्यतिदेशात्समासोऽप्ययमत आह—**मुख्य इति** ॥ ( भाष्ये )-**दक्षिणदक्षिणस्यै इति । आबाधे चे**ति द्विर्वचनबहुव्रीहिवद्भावौ ॥

**( आक्षेपभाष्यम् )**

**अथ बहुव्रीहिग्रहणं किमर्थम् ?**

**( समाधानभाष्यम् )**

**द्वन्द्वे मा[2] भूत्—दक्षिणोत्तरपूर्वाणामिति ॥**

( प्रदीपः ) **दक्षिणोत्तरपूर्वाणामिति** । 'द्वन्द्वे च' इत्यनेन सर्वाद्यन्तस्य द्वन्द्वस्य सर्वनामसंज्ञाप्रतिषेधः, नावयवानाम्-इति 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावः ॥

( उद्द्योतः ) **नावयवानामिति** । न[3] **बहुव्रीहा**विति‌वत् 'द्वन्द्वे चिकीर्षिते न' इत्यर्थो न । यद्यपि द्वन्द्वेऽपि उद्भूतावयवभेदसमुदायस्य प्राधान्येन तं प्रति बहुव्रीहेरिव द्वन्द्वस्य गुणत्वेन तदप्राप्तेरयमेवोचितः, तथापि त्यदादीनां द्वन्द्वाभावेनादन्ते काकचोरविशेषेण फलाभावात् । अन्यपर्यायत्वच्छब्दस्य सर्वनामत्वे **न** मानम्, बहुसंमतत्वाद् गणे तत्पाठस्य । **विभाषा जसी**त्यस्यासङ्गतेश्चेति भावः ॥ एवं चेदं सूत्र**मुपसर्जनप्रतिषेधा**नुवादकमेव । सूत्रकृता तदनभ्युपगमाद्वा कृतं तत् । अत एव कुक्कुटमयूर्याविल्यादावुपसर्जनह्रस्ववारणाय **द्वन्द्वे ने**ति वचनमारब्धं **"गोस्त्रियोः-"**इति सूत्रे भाष्ये इति बोध्यम् ॥ **पुंवद्भाव इति** । इदं चिन्त्यं, मात्रग्रहणेन [4]सिद्धेः ॥

**( समाधाननिराकरणभाष्यम् )**

**नैतदस्ति प्रयोजनम् । "द्वन्द्वे च" इति प्रतिषेधो भविष्यति ॥**

**( समाधानसाधकभाष्यम् )**

**नाप्राप्ते प्रतिषेधे इयं विभाषा आरभ्यते । सा यथैव "न बहुव्रीहौ" इत्येतं प्रतिषेधं बाधते, एवं "द्वन्द्वे च" इत्येतमपि बाधेत[5] ॥**

**( समाधानबाधकभाष्यम् )**

**न बाधते ।**

**किं कारणम् ?**

**येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते "न बहुव्रीहौ" इत्येतस्मिन्प्रतिषेधे इयं विभाषा आरभ्यते, "द्वन्द्वे च" इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च ॥**

(प्रदीपः) **येन नाप्राप्त इति** । अयमत्रार्थः-'न बहुव्रीहौ' इत्यनेन सर्वः स्वविषयो व्याप्तः । 'द्वन्द्वे च' इत्यनेन तु न व्याप्तः, 'विभाषा जसि' इति जसि विकल्पविधानात् ॥ यदि चानेन द्वन्द्वे विभाषा स्यात् जस्यनुवाददोषः प्रसज्येत । बहुव्रीहौ त्वनुवाददोषमलभमाना कृतार्था सती परत्वादियं विभाषा 'द्वन्द्वे च' इत्यनेन बाध्यते ॥

( उद्द्योतः ) ननु यथा बहुव्रीहौ **द्वन्द्वे चे**त्यं[6]प्राप्तावपीयं प्रवर्तते, तथा द्वन्द्वे **न बहुव्रीहा**वित्यप्राप्तेऽपि, इति किमुच्यते **न चाप्राप्ते** इतीत्यत आह—**अयमत्रार्थ इति । एवं न चाप्राप्ते** इत्यस्य भाष्ये **बहुव्रीहा**विलादिः । **द्वन्द्वे चे**त्यस्य तु द्वन्द्वे-इत्यादिः ॥ एवं च बहुव्रीहौ सर्वत्र निषेधप्राप्तिः, द्वन्द्वे तु **द्वन्द्वे चे**त्यस्य न सर्वत्र प्राप्तिर्जसि विभाषया बाधादिति भावः ॥ **सर्वः स्वविषय इति** । सर्वो दिग्[7]बहुव्रीहिरित्यर्थः ॥ **न व्याप्त इति** । सर्वो दिग्द्वन्द्व इति शेषः ॥ यु[8]क्त्यन्तरमप्याह—**यदि चेति** ॥

---

१ **व्यापेति** । नन्वित्यादिः ॥ **अतिदेशादिति** । एवं च व्याप्यधर्मादौ सामर्थ्याद्गौणमुख्येति न्यायाप्रवृत्तावपि व्यापकधर्मांशे तत्प्रवृत्तिर्दुर्निवारेति तदर्थं समासग्रहणमिति भाष्याद्याकूतम् ॥ छाया ॥

२ **मा भूदिति** । तथा सति पक्षे दक्षिणोत्तरपूर्वासामिति स्यादेवेति भावः ॥ छाया ॥

३ यथाऽवयवानां प्राप्तिः, तमर्थमेव सप्तम्युपपादकं खण्डयति—**न बह्विति** ॥ सप्तम्युपपत्तये 'द्वन्द्वे यानि सर्वादीनि' इत्यर्थो दण्डिकृष्णाद्युक्तो न युक्त इति ध्वनयन्निषेधे हेतुमाह—**यद्यपीत्यादि-फलाभावादित्यन्तेन** ॥ **अपि**र्बहुव्रीहिसमुच्चायकः । **तदप्राप्तेरि**त्यत्रान्वयः ॥ **इतरेतरद्वन्द्वाशयेनाह—उद्भूतेति** ॥ **गुणत्वेन**-उपसर्जनत्वेन ॥ **तदेति** । सर्वनामसंज्ञाया अप्राप्तेरित्यर्थः ॥ **अयमेव**-उक्तार्थ एव ॥ एकशेषेण बाधादाह—**द्वन्द्वेति** ॥ ननु त्वच्छब्दस्य तान्तत्वे काकचोर्विशेषोऽत आह—**अन्येत्यादि पाठस्येत्यन्तेन** ॥ **'त्वदधर-'** इति जयदेवोक्त्या तदर्थस्य तस्य सत्त्वेपीत्यादिः ॥ अकच्स्वरयोः सर्वनामत्वसूचकयोरनुपलम्भादिति भावः ॥ अर्थानिषेधे हेत्वन्तरमाह—**विभाषेति** । जसाधारे शीभाव एव विकल्पविधायकस्येत्यादिः ॥ तथा च प्रथमार्थे सप्तमीति तत्त्वम् ॥ अज्ञाननिरासायाह—**सूत्रेति** ॥ इदं द्रढयति—**अत एवेति** । उक्तरीत्या तत्रोपसर्जनत्वसत्त्वादेवेत्यर्थः ॥ **एवं चेत्यादि—बोध्य**मित्यन्त एको ग्रन्थः ॥ छाया ॥

४ **सिद्धेरिति** । मात्रग्रहणं हि कचित्सर्वनामत्वेन दृष्टानां संप्रत्यसर्वनामत्वेऽपि पुंवद्भावार्थम् । अत एव दक्षिणपूर्वायै इत्यत्र संज्ञाऽभावेऽपि पुंवद्भावः ॥ तस्मात्समुदायस्यैवायं निषेधो न त्ववयवानामिति स्थितम् ॥ श० कौ० ॥

५ **बाधेतेति** । एवञ्च द्वन्द्वे चेति निषेधो न भविष्यतीति तदर्थं बहुव्रीहिग्रहणं नावश्यकमित्याशयः ॥

६ **इयं**-विभाषा ॥ **एवं च**-तदर्थस्येष्टत्वे च ॥ अनन्त**र**मिति दण्डिकृष्णाद्युक्त्यसांगत्यायाह—**आदिरिति** ॥ छाया ॥

७ स्वशब्देन न निषेधः किं तु विकल्प इत्याह—**सर्वो दिगिति** ॥ स्वशब्दस्यानुषङ्गेणात्रानिर्वाहादाह—**सर्वो दिग्द्वेति** ॥ छाया ॥

८ अस्त्वेवं ततः किमतो यदि चेत्यादीति दण्डिकृष्णाद्युक्त्यसांगत्यायाह—**युक्त्यन्तरमिति** ॥ अत एव **चो**ऽपि सफलः ॥ छाया ॥

( समाधानबाधकान्तरभाष्यम् )

**अथवा-"पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते, नोत्तरान्" इत्येवमियं विभाषा "न बहुव्रीहौ" इत्येतं प्रतिषेधं बाधिष्यते, "द्वन्द्वे च" इत्येतं प्रतिषेधं न बाधिष्यते ॥**

( समाधानबाधकान्तरभाष्यम् )

**अथ वा-इदं तावदयं प्रष्टव्यः—इह कस्मान्न भवति—या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोऽयं पूर्वोत्तर उन्मुग्धः, तस्मै-पूर्वोत्तराय देहीति ?**

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

**( प्रदीपः ) लक्षणप्रतिपदोक्तयोरिति ।** दिक्समास इति व्यपदेशः 'दिङ्नामानि' इति विहितस्य न्याय्यः, तत्र हि दिक्शब्दोऽस्ति ॥

**( उद्द्योतः )** भाष्ये-**या पूर्वा सोत्तरेति ॥** यद्यपि वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते-या पूर्वात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धोत्तरा यस्य-इत्यर्थात् । एवं चोत्तराशब्दस्य पूर्वनिपातः प्राप्नोति, तथापि समासे तदप्रतीत्या पूर्वापदस्य ज्ञानविशेष्यपर्यन्तलक्षकत्वेन गुणवाचकत्वाद् विशेषणत्वेन पूर्वनिपात इति बोध्यम् ॥ **तत्र हि दिक्शब्दोऽस्तीति ।** न च **शेषग्रहणेनानेक**ग्रहणेन वा सिद्धे उभयोपादानेन पुनर्विधानद्वारा सर्वत्र विशेषविहितत्वात्सोऽपि प्रतिपदोक्तः, स्पष्टं चेदमाँन्महत इत्यत्र भाष्ये इति वाच्यम् । 'पूर्वशब्द उत्तरशब्दः समस्यते' इत्येवं विधानकल्पनेऽपि 'दिक्शब्दः समस्यते' इत्येवं विधानकल्पने मानाभावेन तत्र दिक्शब्दाभावादिति भावः ॥

( उपसंहारप्रत्याख्यानभाष्यम् )

**यद्येवं नार्थो बहुव्रीहिग्रहणेन ॥**

( आक्षेपभाष्यम् )

**द्वन्द्वे कस्मान्न भवति ?**

( समाधानभाष्यम् )

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

( प्रयोजनान्तरभाष्यम् )

**उत्तरार्थं तर्हि बहुव्रीहिग्रहणं कर्तव्यम् ॥**

( बाधकभाष्यम् )

**न कर्तव्यम् । क्रियते तत्रैव—"न बहुव्रीहौ" इति ॥**

( साधकभाष्यम् )

**द्वितीयं कर्तव्यम् । बहुव्रीहिरेव यो बहुव्रीहिः, तत्र यथा स्यात् । बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्—एकैकस्मै देहि ॥**

( बाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । 'समासे' इति वर्तते, तेन बहुव्रीहिं विशेषयिष्यामः—समासो यो बहुव्रीहिरिति ॥**

---

१ अभ्युपेत्याह—**अथ वेति** ॥ छाया ॥

२ अवश्याश्रयणीय**लक्षणप्रतिपदोक्त**परिभाषयैव सिद्धे बहुव्रीहिग्रहणं व्यर्थमेवेत्याशयेनाह—**अथवेदमिति** ॥ छाया ॥

३ **पूर्वोत्तरायेति ।** अनेकमन्यपदार्थे इति समासे बहुव्रीहिरवादत्र विकल्पः प्राप्तोऽपि लक्षणप्रतिपदोक्तपरिभाषया नास्य ग्रहणं किन्तु दिङ्नामानीत्यस्यैवेति बोध्यते । एवञ्च तयैव परिभाषया द्वन्द्वेऽपि न प्राप्तिरिति गूढाशयः । एवमपि 'द्वन्द्वे कस्मान्न भवति' इति पुनरुद्भावनन्तु विषयान्तरप्रदर्शनायैव ॥

४ **विधेयत्वमिति ।** द्वन्द्वोत्तरं त्वः । यथासंख्येनान्वयः ॥ अन्यतरस्य विना लक्षणामसामानाधिकरण्याद्बहुव्रीह्यनुपपत्तेराह—**या पूर्वात्वेति ॥** विशेष्यशब्दो विशेष्यनिघ्नो न तु विशेषणप्रधानादिशब्दवदजहल्लिङ्गः । अत एव **'राजा विशेषणम्, पुरुषो विशेष्यः'** इति **षष्ठी शेष** इत्यत्र **'कश्च नेर्विः'** । **'विशेष्यः'** इति **शदेः शितः** इत्यत्र च भाष्यं, 'संबोधनं प्रकृत्यर्थं प्रति विशेष्यम्' इति 'द्वितीयार्थाश्रय आधेयता फलं विशेष्यम्' इति, 'भावनैव विशेष्या' इति **'धातूपस्थाप्यक्रिया तिङर्थं प्रति विशेष्या'** इत्यादि नानाऽभियुक्तोक्तं **'श्रीदाराद्यैर्यद्विशेष्यम्'** इत्यमरोक्तं च संगच्छते ॥ विशेष्यं धात्वर्थ इति तु 'शक्यं क्षुद्' इतिवत् ॥ एवं **चोत्तरेति** उद्देश्यत्वलक्षणार्थप्राधान्यस्य तस्य सत्त्वेन विधेयस्याप्रधानत्वादिति भावः ॥ छाया ॥

५ प्राचां मतेनाह—**तदेति** । तथा च न तस्योक्तं प्राधान्यमिति प्राथम्यस्यैव तल्लक्षणत्वात्तस्यैव पूर्वनिपात इति तद्भावः ॥ सिद्धान्तमाह—**अपीति** । तत्प्रतीतावपीत्यर्थः ॥ उक्तदोषस्तु न, उद्देश्यत्वप्रतीत्या तथैव लक्षणाङ्गीकारात् । **'न विधौ परः शब्दार्थः'** इति न्यायेन विधेयबोधके लक्षणानौचित्यात् । अत एव **प्रसिद्धपूर्वस्यामुत्त**रात्वप्रकारकज्ञानविशेष्यत्वं न विधेयम्, उत्तरापदस्य **पूर्वनिपाता**पत्तेश्च । तदाह—**पूर्वेति** ॥ **गुणेति** । गुणोपसर्जनद्रव्यवाचकत्वादित्यर्थः । ज्ञानस्य विशेषणत्वात् । एवं च **'सप्तमीविशेषणे'** इत्यस्य प्राप्तिः । तत्र हि सप्तम्यन्तान्योत्तरपदार्थविशेषणस्य विषयताविशेषरूपविशेषणत्वविशिष्टस्य ग्रहणम् । तदाह—**विशेषणेति** ॥ छाया ॥

६ 'वाचकत्वाविशेषणत्वेन पूर्वनिपात इति बोध्यम् । **तत्र** हि **दिक्शब्दोऽस्तीति** । न च विशेष्यपर्यंतलक्षकत्वेन गुणवाचकत्वात्' इति पाठः ॥

७ एवं हि तत्र भाष्यं—यस्माच्छेषो बहुव्रीहिरिति सिद्धे अनेकमन्यपदार्थे इत्याह तेन प्रतिपदोक्तं तत्र भवति—इति । पुनर्विधानाच्च प्रतिपदोक्तवद्बहुव्रीहिर्भवतीत्यर्थः सम्पद्यत इति च तत्र कैयटः ॥

८ **तत्र**—कल्पितवाक्ये ॥ छाया ॥

९ **समासो य इति** । एतेनात्र समासपदेन मुख्यस्यैवौपदेशिकस्य ग्रहणमिति प्रागुक्तं सूचितम् । इदमपि भाष्यं तत्र गमकम् । अन्यथोक्तरीत्या तस्यापि सत्त्वादसंगतिः स्पष्टैव, सूत्रमतेनेदं प्रयोजनमुक्तम् खण्डितं च । सिद्धान्ते तु प्रत्याख्यातमेव तदिति न चाशङ्का न चोत्तरम् ॥ छाया ॥

( एकदेशिभाष्यम् )

**इदं तर्हि[1] प्रयोजनम्—अवयवभूतस्यापि बहुव्रीहेः प्रतिषेधो यथा स्यात् । इह मा भूत्—वस्त्रमन्तरमेषां त इमे-वस्त्रान्तराः, वसनमन्तरमेषां त इमे-वसनान्तराः, वस्त्रान्तराश्च वसनान्तराश्च-वस्त्रान्तरवसनान्तराः[2] ॥ २८ ॥**

( प्रदीपः ) **वस्त्रान्तरेति** । उपसर्जनप्रतिषेधो वार्तिककारस्य न सूत्रकारस्य, '**न बहुव्रीहौ**' इत्यारम्भात्[3] । तन्मतेनेदं प्रयोजनमुक्तम् ॥ २८ ॥

( उद्योतः ) भाष्ये-**अवयवभूतस्यापीति** । प्रधानन्याये[4]नास्य न स्यात्, अस्य समूहं प्रति गुणत्वादिति भावः ॥ तदेतदवयवपदेन सूचितम् । समूहावयवत्वाद्वर्तिपदार्थस्येति बोध्यम् । **वसन**-शब्दो गृहवाचीति नैकशेषः । अन्तरशब्दस्य सर्वनामत्वेऽपि परनिपातो **राजदन्तादि**त्वाद् बोध्यः ॥ **तन्मतेनेति** । किं[6] चावयवयोः सर्वनामत्वेऽपि द्वन्द्वस्य तत्त्वाभावेन सर्वनाम्नोऽविहितत्वाज्जसो न दोष इत्येकदेश्युक्तिरिदं भाष्यम् ॥ २८ ॥

( २७ सर्वनामसंज्ञानिषेधसूत्रम् ॥ १ । १ । ६ आ. ३ )

## न बहुव्रीहौ ॥ १ । १ । २९ ॥

( सूत्रप्रयोजनाधिकरणम् )

( प्रश्नभाष्यम् )

**किमुदाहणरम्[7] ?**

( उत्तरभाष्यम् )

**प्रियविश्वाय ॥**

( प्रदीपः ) **न बहुव्रीहौ ॥ २९ ॥ प्रियविश्वायेति** । प्रियशब्दस्य विश्वविशेषणत्वात्पूर्वनिपातं मन्यते ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् ।**

**सर्वाद्यन्तस्य[8] बहुव्रीहेः प्रतिषेधेन भवितव्यम् । वक्ष्यति चैतत्—'*बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्*' इति, तत्र विश्वप्रियायेति भवितव्यम् ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि-द्व्यन्याय, त्र्यन्याय ॥**

( प्रदीपः ) **द्व्यन्यायेति** । संख्यायाः[9] संख्येयपरतन्त्रत्वाद्विशेषणत्वम् ॥

( समाधानबाधकभाष्यम् )

**ननु चात्रापि सर्वनाम्न एव पूर्वनिपातेन भवितव्यम् ॥**

( प्रदीपः ) **सर्वनाम्न एवेति** । नियमः कथमिति चेत्, उच्यते-विशेषणत्वात्संख्यायाः पूर्वनिपाते प्राप्ते, एवमर्थमुपसंख्यानं स्यात्—सर्वनामसंख्ययोः संनिपाते[10] सर्वनाम्न एव पूर्वनिपातः स्यादिति ॥

( उद्योतः ) न बहुव्रीहौ ॥ २९ ॥ **नियमः कथमिति** । संख्याया अपि तेन पूर्वनिपातविधानादिति भावः ॥ **प्राप्ते इति** । '**सप्तमीविशेषणे**' इत्यनेन ॥

( समाधानसाधकभाष्यम् )

**नैष दोषः । वक्ष्यत्येतत्-'संख्यासर्वनाम्नोर्[11] बहुव्रीहिः परत्वात्तत्र संख्यायाः पूर्वनिपातो भवति' इति ॥**

( प्रदीपः ) **वक्ष्यत्येतदिति** । नैष वाक्यार्थो यस्त्वया कल्पित इत्यर्थः ॥

( उद्योतः ) **नैष इति** । लक्ष्या[12]नुरोधादिति भावः ॥ **न चैवं**

---

१ सूत्रमतेनाह—**इदं तर्हीति** ॥ **इह मा भूदिति** । संज्ञेति शेषः ॥ छाया ॥

२ इदानीं द्वन्द्वसमास इति विभाषा जसीति प्राप्तन्तद्वारणाय बहुव्रीहिग्रहणमित्याशयः ॥

३ **आरम्भादिति** । तेनालौकिके आरोपिततत्के अवयवानामेव निषेध इति भावः ॥ छाया ॥

४ **प्रधानेति** । अन्यथेत्यादिः ॥ **अस्य**-तादृशबहुव्रीहेः ॥ इदमपि भाष्यं तत्र गमकमित्याह—**तदेतदिति** ॥ **गृहेति** । न वस्त्रवाचीति भावः ॥ छाया ॥

५ बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानमिति वार्तिकेन पूर्वनिपातप्राप्तावपीति भावः ॥ ( र. ना. )

६ **तन्मतेने**त्यनेन सूचितमेकदेश्युक्तित्वं द्रढयति—**किंचेति** ॥ **द्वन्द्वस्येति** । द्वन्द्वे चेति निषेधेनेति शेषः ॥ **न दोषः**-शीभावः ॥ छाया ॥

७ वक्ष्यमाणाशयेनाह—**किमिति** ॥ **प्रियेति** । बहुव्रीहौ यानि सर्वादीनीत्यन्वय इत्यभिमानः ॥ तमाशयद्वयम्-**अभिमानः, मन्यत** इति सूचितारुचिमूलकं क्रमेणाह—**सर्वाद्यन्तस्येति** ॥ निषेधाधिकरणं बहुव्रीहिरिति भावः ॥ छाया ॥

८ आपाततः सूत्रार्थं प्रदर्शयति—**सर्वाद्यन्तस्येति** । **एवञ्च** बहुव्रीहौ सर्वनामसंख्ययोरिति विश्वशब्दस्यैव पूर्वनिपाताद्विश्वप्रिय इत्येव भवतीति सर्वाद्यन्तत्वाद्भावान्नात्र दोषः ॥

९ सर्वनामेत्यप्रवृत्तये आह—**संख्याया इति** ॥ **विशेषणत्वम्** । अन्यार्थविशेषणत्वमपि ॥ छाया ॥

१० अध्याहारेणाह—**संनिपाते इत्यादि** ॥ उभयत्र **एवो** न नियमार्थः । अप्राप्तत्वात्तस्य । किंतु सर्वनाम्नोऽपूर्वपूर्वनिपातविधिनाऽन्यस्य तदभावस्यार्थसिद्धस्यानुवादक इति बोध्यम् ॥ छाया ॥

११ वार्तिककृता एवं वक्तव्ये तथोक्तमिति तदर्थान्तरस्यापि लाभ इत्याशयेनाह—**संख्यासर्वेति** ॥ **परत्वात्** । शब्दपरविप्रतिषेधात् । **तत्र**-तयोर्मध्ये ॥ छाया ॥

१२ अध्याहारस्याप्यन्यत्र स्वीकारेण "संनिपातादिपदाध्याहारप्रसङ्गात्" इति दण्डिकृष्णाद्युक्तो दोषो न समञ्जसोऽत आह—**लक्ष्येति** ॥ **एवम्**-उभयत्र तस्या एव पूर्वनिपाते ॥ छाया ॥

वार्तिके संख्याग्रहणं व्यर्थं, विशेषणत्वादेव तस्य पूर्वनिपातप्राप्तेरिति वाच्यम् । परिच्छेदकत्वरूपविशेषणताया अन्यत्रापि संभवात् ॥

( पूर्वोक्तसमाधानाभ्युपगमभाष्यम् )

**[1]इदं चाप्युदाहरणम्—प्रियविश्वाय ॥**

( बाधकस्मारणभाष्यम् )

**ननु चोक्तम्—'विश्वप्रियायेति भवितव्यम्' इति ॥**

( बाधकनिराकरणभाष्यम् )

**वक्ष्यत्येतत्—*वा प्रियस्य* इति ॥**

( सूत्रार्थान्तरप्रदर्शनभाष्यम् )

**न खल्वप्यवश्यं सर्वाद्यन्तस्यैव बहुव्रीहेः प्रतिषेधेन भवितव्यम् ।**

**किं तर्हि ?**

**असर्वाद्यन्तस्यापि भवितव्यम् ।**

**किं प्रयोजनम् ?**

**अकच् मा भूदिति ॥**

( उद्द्योतः ) भाष्ये वृत्तिकारोक्तं सूत्रार्थमाह—**न खल्वपीति**। अस्यार्थस्य [3]यथा लाभस्तथा वक्ष्यते ॥

( आक्षेपभाष्यम् )

**किंच स्यात् ?**

( समाधानभाष्यम् )

**यद्यत्राकच् स्यात्, को न स्यात् ॥**

( आक्षेपभाष्यम् )

**कश्चेदानीं काकचोर्विशेषः ?**

( समाधानभाष्यम् )

**व्यञ्जनान्तेषु विशेषः—अहकं पिता अस्य-मकत्पितृकः, त्वकं पिता अस्य-त्वकत्पितृक इति प्राप्नोति ।**

**मत्कपितृकः-त्वत्कपितृक इति चेष्यते ॥**

( प्रदीपः ) **व्यञ्जनान्तेष्विति** । उपलक्षणमेतत् । 'द्विकपुत्रः' 'द्वकिपुत्रः' इत्यत्रापि विशेषदर्शनात् ॥

( आक्षेपभाष्यम् )

**कथं पुनरिच्छताऽपि भवता बहिरङ्गेण प्रतिषेधेनान्तरङ्गो विधिः शक्यो बाधितुम् ?**

( प्रदीपः ) **कथं पुनरिति** । अन्तरङ्गत्वात्संज्ञानिमित्तेनाकचा तावद्भाव्यं, पश्चात्पदान्तरसंनिधाने वर्तिपदार्थविशेषणान्यपदार्थविवक्षायां बहिरङ्गेण बहुव्रीहिणेत्यर्थः ॥

( उद्द्योतः ) बहिर[4]ङ्गत्वव्युत्पादनाय—**पदान्तरेत्यादि** । **वर्तिपदार्थविशेषणेति** बहुव्रीहिः ॥ **बहुव्रीहिणेति** । ततो बहिरङ्गबहुव्रीहिनिमित्तकेन निषेधेनेति शेषः ॥

( समाधानभाष्यम् )

**'अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते' गोमत्प्रिय इति यथा ॥**

( प्रदीपः ) **अन्तरङ्गानपीति** । 'प्रत्ययोत्तरपदयोश्च' इति सामान्येन ज्ञापकम्—'बहिरङ्गोऽपि समासाश्रयो विधिरन्तरङ्गं बाधते' इत्यस्यार्थस्येति भावः ॥

( उद्द्योतः ) [5]सामान्येनेति । न लुग्विषयमेवेति भावः ॥

( दृष्टान्तवैषम्येण समाधानबाधकभाष्यम् )

**क्रियते तत्र यत्नः—"प्रत्ययोत्तरपदयोश्च" इति ॥**

( प्रदीपः ) **क्रियते तत्रेति** । लुग्विषयमेव तत् ज्ञापकमित्यर्थः ॥

( उद्द्योतः ) [6]उत्तरपदग्रहणं चात्र ज्ञापकं, अन्तर्वर्तिसुपा प्रत्ययपरत्वेनैव सिद्धेः—इत्यादि सप्तमे निरूपयिष्यामः ॥ गोमत्प्रिय इत्यत्र लुका हल्ङ्यादिलोपो बाध्यते, तेन नुम्दीर्घौ नेति भावः ॥

( दृष्टान्तसाम्येन समाधानसाधकभाष्यम् )

**ननु चेहापि क्रियते—"न बहुव्रीहौ" इति ॥**

( उद्द्योतः ) भाष्ये—**ननु चेहापीति** । वैयधि[7]करण्येन संबन्धाश्रयणसामर्थ्यादन्तरङ्गस्यापि निवृत्तिरित्यर्थः ॥

( वैयर्थ्यपरिहारेण समाधानबाधकभाष्यम् )

**अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ?**

**प्रियविश्वाय ॥**

( प्रदीपः ) **अस्त्यन्यदिति** । अत्र हि विधिप्रतिषेधौ समानकालौ, कार्यकालत्वात्संज्ञाया इति मन्यते ॥

( उद्द्योतः ) [8]प्रथमार्थे सप्तम्याश्रयणेन सामानाधिकरण्येनैव संबन्धो न तु विप्रत्यध्याहारेणेत्याशयेनाह—**अस्त्यन्यदिति ॥ अत्र हीति** । बहुव्रीहेर्विभक्त्युत्पत्तौ सर्वनामकार्यस्मायादिप्राप्तेरिति भावः ॥ तत्रावयवनिषेधसामर्थ्यादन्तरङ्गस्यापि बाध इति तात्पर्यम् ॥

---

१ प्रियेत्युदाहृतस्याशयमाह—**इदं चेति** ॥ छाया ॥

२ विश्वप्रियायेत्यत्रापि बहुव्रीहिघटकसर्वादीनां सर्वनामसंज्ञा नेत्यर्थाश्रयणे दोष इत्याह—**न खल्वपीति** ॥

३ **यथेति** । 'बहुव्रीहौ सर्वादीनि' इत्येवमिति भावः ॥ छाया ॥

४ **बहिरङ्गत्वेति** । बहुव्रीहेः ॥ वस्तुस्थितिमाह—**वर्तीति** ॥ तावताऽप्यनिर्वाहादाह—**तत इति** ॥ छाया ॥

५ **सामान्येनेतीति** । लुकि लुक्त्वरूपविशेषानपेक्षया कार्यत्वसामान्यापेक्षयेत्यर्थः ॥ तत्फलितमाह—**न लुगिति** ॥ छाया ॥

६ सूत्रं संपूर्णं ज्ञापकमिति कैयटदण्डिकृष्णरत्नाद्युक्तमयुक्तमिति ध्वनयन्नाह—**उत्तरेति** ॥ **दीर्घौ** । अन्यथा प्रत्ययलक्षणेन प्राप्तौ ॥ छाया ॥

७ **वैयधीति** । बहुव्रीहौ यानि सर्वादीनि इत्येवम् । अन्यथा 'संभवति–' इति न्यायेन तथा नोचितमिति भावः ॥ **स्यापि** । अकचः ॥ छाया ॥

८ तत एवाह—**प्रथमेति** ॥ **स्मायादीति** । तथा चोभयोर्बहिरङ्गत्वादकज्वैलक्षण्यमिति भावः ॥ ननु तत्र साफल्ये कथमकज्निवृत्तिरत आह—**तत्रेति** ॥ त्वत्कपितृक इत्यादावित्यर्थः ॥

( वैयर्थ्यस्थित्या समाधानसाधकभाष्यम् )

**उपसर्जनप्रतिषेधेनाप्येतत्सिद्धम् ॥**

( मतान्तरेण समाधानान्तरभाष्यम् )

**अयं खल्वपि बहुव्रीहिरस्त्येव प्राथमकल्पिकः, यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तित्वं च ।**

**अस्ति तादर्थ्यात्ताच्छब्द्यम्, बहुव्रीह्यर्थानि पदानि—बहुव्रीहिरिति ।**

**तद्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् ॥**

( प्रदीपः ) **अयं खल्वपीति** । सूत्रोपारूढ एवायमर्थ इति प्रतिपादयति । अप्रयोगसमवायि यत् प्रक्रियावाक्यं तत्रायं प्रतिषेधः । न लौकिके वाक्ये प्रयोगार्हे, तस्य पृथगेव प्रयोगात्तादर्थ्याभावात् ॥

( उद्द्योतः ) ननु एतत्प्रकरणस्थसप्तमीनिर्देशाः प्रथमार्थाः । अत एव द्वन्द्वे चेति निषेधः समुदायस्यैव । एवं च वाच्यवृत्त्याऽसर्वाद्यन्तस्य निषेधो न लभ्यत इत्यत आह—भाष्ये—**अयं खल्वपीति** । एतेन बहुव्रीहावित्यत्र 'चिकीर्षिते' इत्यध्याहारेण सिद्धे बहुव्रीहिपदस्य लक्षणा व्यर्थेति परास्तम् ॥ तद्याचष्टे—**सूत्रेति** । भाष्ये—ऐकपद्यं—एकार्थीभावः । एककारकशक्तियोगो वा—**एकविभक्तित्वं** बोध्यम् ॥ **तादर्थ्यात्ताच्छब्द्यं यत्**=यो लभते **तस्येदं ग्रहण**मित्यन्वयः ॥ 'तद्यत्र तादर्थ्यात्' इति पाठः क्वचित् । तत्र बहुव्रीह्यर्थवाक्ये संज्ञाया अप्राप्त्या तत्स्थपदपर्यन्तं लक्षणा बोध्या । तदेतद्बहु**व्रीह्यर्थानि पदानी**त्यनेन सूचितम् ॥ ननु वाक्ये निषेधश्चेत् 'अहकं पिता' इति प्रयोगो न स्यात्, किं च सुपरत्वाभावात्स्वाहौ न स्यातामत आह—**अप्रयोगेति** ॥

( प्रत्याख्यानभाष्यम् )

**गोनर्दीयस्त्वाह—**

**'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम् ।' त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति ॥**

( प्रदीपः ) **गोनर्दीयस्त्वाहेति** । सूत्रप्रत्याख्यानमेतत् । यथोत्तरं हि मुनित्रयस्य प्रामाण्यम् ॥ **स्वरः**—'स्वाङ्गशिटामदन्तानाम्' इत्याद्युदात्तत्वम् ॥

( उद्द्योतः ) तदेतद्वृत्तिकारोक्तं दूषयति—**अकच्स्वरौ त्विति** । एषा स्मृतिरविशेषात्सर्वप्रकरणविषया ॥ **सूत्रप्रत्याख्यानेति** । समुदाये निषेधस्य महासंज्ञया, उपसर्जनप्रतिषेधेन वा सिद्धत्वादिति भावः ॥ एवंच महासंज्ञासिद्धार्थानुवादकं प्रपञ्चार्थं सूत्रम् । एवं द्वन्द्वे चेत्यपि सूत्रमिति सूत्रहृदयम् ॥ **यथोत्तरमिति** । उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात् । स्पष्टं चेदं **धिन्विकृण्व्योरि**ति सूत्रे भाष्ये ॥ एतेन सूत्रसार्थक्याय वृत्तिकारोक्तं व्याख्यानमेव प्रबलमित्यपास्तम् ॥ **शिडिति** सर्वनाम । स्वरोदाहरणं—विश्वप्रियायेति ॥

---

( न्यूनतापरिहाराधिकरणम् )

( २०१ उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ प्रतिषेधे भूतपूर्वस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

**प्रतिषेधे भूतपूर्वस्योपसंख्यानं कर्तव्यम् । आढ्यो भूतपूर्वः—आढ्यपूर्वः, आढ्यपूर्वाय देहीति ॥**

( प्रदीपः ) **आढ्यपूर्वायेति** । अबहुव्रीह्यर्थं वचनम् ॥

( उद्द्योतः ) भाष्ये—**भूतपूर्वस्येति** । भूतपूर्वार्थकपूर्वाद्यन्तस्य समासस्येत्यर्थः ॥

---

१ **मन्यत** इति सूचितामरुचिमेवाह—**अयं खल्वपीति** ॥ महासंज्ञया तस्यापि पाणिन्यभिमतत्वादिति सूत्रमकज्निवृत्त्यर्थमेवेति भावः ॥ **प्राथमेति** । भवार्थे अध्यात्मादित्वाट्ठञि सर्वप्रसिद्ध इत्यर्थः ॥ छाया ॥ द्वन्द्वे चेत्यादिदर्शनात् बहुव्रीहिघटकस्य सर्वादिः संज्ञा नेत्यर्थासम्भवं मनसि निधाय प्रकारान्तरमाह—**अयं खल्वपीति**॥

२ **पृथगेव**—समासं विनैव ॥ **तादर्थ्येति** । तथा च तादर्थ्यादिति भाष्येणैवेदमुक्तम्, न त्वपूर्वमिति भावः ॥ छाया ॥

३ दण्डिकृष्णाद्यक्तावतरणासांगत्यध्वननायाह—**नन्विति** ॥ **अकच्स्वरा**विति वक्ष्यमाणस्मृतेः प्रकरणविषयत्वस्य वक्ष्यमाणत्वादाह—**एतत्प्रकरेति ॥ न लभ्यत इति** । एवं च कथमकज्निवृत्तिरिति भावः ॥ छाया ॥

४ **असर्वाद्यन्तस्य**—विश्वप्रियादेः ॥

५ अन्यवृत्तिकारोक्तं खण्डयति—**एतेनेति** । उक्तार्थसाधनस्य भाष्ये एवंप्रकारेण करणेनेत्यर्थः ॥ अन्यथा तथैव सिद्धे लक्षणाप्रयासो व्यर्थः स्यादिति भावः ॥ छाया ॥

६ ऐकपद्यमेकविभक्तित्वमित्यनयोः पौनरुक्त्यं परिहरति—**एकार्थीति** ॥ विनिगमनाविरहादाह—**एककेति** ॥ **यदित्यस्य** व्याख्या **य** इति ॥ तावताऽप्यनिर्वाहादाह—**तत्रेति** । उभयत्रेत्यर्थः ॥ प्रथमतदित्यस्य तु तस्मादित्यर्थः । तयोर्मध्य इत्यर्थो वा ॥ **सूचितम्** । अन्यथा पदानीति न वदेत् ॥ छाया ॥

७ सर्वनामसंज्ञानिषेधादकचोऽभावेन कप्प्रत्ययव्यवधानेनेति शेषः ॥ ( र. ना. )

८ **गोनर्दीय इति** । गावो नर्दन्ति यस्मिन्पर्वतविशेषे तत्र भवो भाष्यकृत् ॥ गहादित्वाच्छः ॥ छाया ॥

९ सर्वप्रकरणविषयत्वे हेतुः—**अवीति** ॥ ननु समुदायनिषेधार्थत्वमस्त्वत आह—**समुदाय इति** ॥ भाष्यमतमाह—**महेति** ॥ वार्तिकमतमाह—**उपेति** ॥ नन्वेवं पाणिनेरज्ञत्वापत्तिरत आह—**एवं चेति** । सर्वथा फलाभावे चेत्यर्थः ॥ छाया ॥

१० **एतेन**—तद्भाष्यविरोधेन ॥ उभयप्रामाण्यादुभयमपि विकल्पेन साध्वित्यपि तथा ॥ छाया ॥

११ तेनाद्युदात्तत्वे पूर्वपदप्रकृतिस्वरेण स एव स्वरः, तद्ध्वनयन्नाह—**स्वरोदेति** ॥ छाया ॥

१२ **सुपेति**समासकभूतपूर्वशब्दनिरासाय तथा भाष्योदाहरणसिद्धमाह—**भूतपूर्वार्थकेति** ॥ छाया ॥

( २०२ उपसंख्यानानर्थक्ये वार्तिकम् ॥ २ ॥ )

॥ * ॥ प्रतिषेधे भूतपूर्वस्योपसंख्याना-
नर्थक्यं पूर्वादीनां व्यवस्थाया-
मिति वचनात् ॥ * ॥

( भाष्यम् )

प्रतिषेधे भूतपूर्वस्योपसंख्यानमनर्थकम्[1]।

किं कारणम् ?

'पूर्वादीनां व्यवस्थायामितिवचनात्।' पूर्वादीनां व्यवस्थायां सर्वनामसंज्ञोच्यते। न चात्र व्यवस्था गम्यते ॥ २९ ॥

( प्रदीपः ) न चात्रेति । प्राधान्येनेति भावः । अत्र हि पूर्वत्वमाद्यत्वस्य विशेषणम् । यथा-'अतिपूर्वाय' इति पूर्वार्थोऽतिक्रान्तस्य-इत्युपसर्जनत्वात्पूर्वार्थस्य न भवति संज्ञा । मयूरव्यंसकादित्वाच्चात्र समासः ॥ २९ ॥

( उद्द्योतः ) प्राधान्येनेति । [2]प्रयोगकालरूपस्यावधेर्झटिति बोधेन व्यवस्थासत्त्वेऽपि पूर्वार्थस्योपसर्जनत्वान्न भवतीति भावः ॥२९॥

( २८ सर्वनामसंज्ञानिषेधसूत्रम् ॥ १।१।६ आ. ४ ॥ )

# तृतीयासमासे ॥ १ । १ । ३० ॥

( अर्थसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

'समासे' इति वर्तमाने पुनः समासग्रहणं किमर्थम् ?

( समाधानभाष्यम् )

अयं तृतीयासमासोऽस्त्येव प्राथमकल्पिकः, यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं चेति ।

अस्ति तादर्थ्यात्ताच्छब्द्यम्, तृतीयासमासार्थानि पदानि-तृतीयासमास इति । य[3]त्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् ॥

( प्रदीपः ) तृतीयासमासे ॥ ३० ॥ अत्र तादर्थ्यात्ताच्छब्द्यलाभे सति प्रयोगार्हस्य लौकिकस्य वाक्यस्य ग्रहणे सति 'मासेन पूर्वाय' इति प्रयोगः साधुः । वाक्यभेदेन च मुख्ये समासे निषेधः ॥

( उद्द्योतः ) तृतीया० ॥ ३० ॥ अ[4]यमपि समुदायनिषेध एव—सर्वाद्यन्ततृतीयासमासः सर्वनाम नेत्यर्थः ॥ प्रयोगार्हस्येति । 'मासेन पूर्वाय देहि' इति भाष्योदाहरणादिति भावः ॥ भाष्ये—तादर्थ्यादिति च लोकदृष्ट्योक्तम् । लोको हि तस्मादेव वाक्यात्तां वृत्तिं निष्पन्नां मन्यते ॥ नन्वेवं सति समुदायस्य निषेधो न लभ्यतेऽत आह—वाक्यभेदेन चेति । आवृत्त्येति भावः ॥

( समाधानान्तरभाष्यम् )

अथवा 'समासे' इति वर्तमाने पुनः समासग्रहणस्यैतत्प्रयोजनम्—योगाङ्गं यथोपजा[5]येत । सति च योगाङ्गे योगविभागः करिष्यते—"तृतीया" तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय देहि, संवत्सरपूर्वाय देहि ॥

ततः—"असमासे" असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासेन पूर्वाय देहि ॥ ३० ॥

( प्रदीपः ) अथवेति । पर्युदासाश्रयणात्समाससदृशस्य वाक्यस्य ग्रहणम् । पूर्वसदृशेति च प्रतिपदोक्तस्तृतीयासमासो गृह्यते ॥ ३० ॥

( उद्द्योतः ) (भाष्ये)—अथवेति-योगाङ्गमिति । यो[6]गरूपमङ्गमष्टाध्याय्या इत्यर्थः ॥ तृतीयासमासे सर्वादीनीति । तृतीयासमासरूपाणि सर्वाद्यन्तानीत्यर्थः । अन्यथा पूर्वशब्दस्य निषेधेऽपि समासस्य तदनिषेधादुदाहरणे स्मै स्यात् । अवयवस्य तत्त्वेऽपि ततो विभक्तेरविहितत्वान्न दोषः । सप्तम्युच्चारणं तु सूत्रानुरोधादिति बोध्यम् ॥ तृतीयायाः सर्वादीनीति । तृतीयान्तात्पराणीत्यर्थः ॥ तद्बीजं दर्शयति—पर्युदासेति । भाष्ये पञ्चम्युपादानात्पूर्वपदभूतेसूत्रस्य । तत्सामर्थ्यादिति भावः ॥ छाया ॥

१ आनर्थक्ये स्वार्थे ष्यञित्याह—अनर्थकमिति ॥ इत्यर्थमाह—सर्वनामेति ॥ छाया ॥

२ पूर्वशब्दस्यात्र कालवाचित्वाद्भाष्यासंगतिमाह—अप्यन्तेन प्रयोगादिना ॥ कैयटार्थमाह—पूर्वार्थेति । पूर्वार्थस्याप्राधान्ये तदीयव्यवस्थाया अप्यप्राधान्यम् । तथा च नियमेनावधिसापेक्षार्थस्य प्राधान्ये संज्ञा । न चात्र तथा । आद्यो भूतपूर्व इति त्वर्थकथनम्, पूर्वश्चासावाद्यश्चेति विग्रहः । अत एव मयूरव्यंसकादित्वमिति भावः ॥छाया॥

३ 'तद्यत्ताद' इति क. झ. पाठः ॥

४ उक्तहेतोरेवाह—अयमपीति ॥ तादर्थ्यमलौकिके न तु लौकिके इति पूर्वसूत्रे उक्तत्वादाह—लोकेति ॥ मन्यत इति । लौकिकस्य तादर्थ्याभावस्योक्तत्वादित्यर्थः ॥ आवृत्त्येतीति । संपूर्ण-

५ 'यथा विज्ञायेत' इति झ. पाठः ॥

६ योगसंबन्ध्यङ्गत्वस्येदानीमपि सत्त्वादाह—योगरूपमिति ॥ अत्र 'तृतीया' इति लुप्तसम्बन्धसामान्यार्थकषष्ठीकम् । तेनाद्ये समासपदानुवृत्त्या तृतीयासमासार्थलाभः । द्वितीये पञ्चम्यर्थलाभः ॥ अनुवृत्तिश्चैकदेशे स्वरितत्वप्रतिज्ञया तत्रापि पदभेदेन वेति भावः ॥ तृतीयेति । तृतीयान्तेन यः समासस्तदित्याद्यर्थः ॥ ननु यथाश्रुतव्याख्यानादवयवनिषेध एवास्त्वत आह—अन्यथेति । तदनङ्गीकार इत्यर्थः ॥ नन्ववयवसंज्ञामादायायं दोषस्तथापीत्यत आह—अवयवेति ॥ नन्वेवं व्याख्याने सप्तम्यनुचितेऽत आह—सप्तेति ॥ तद्बीजम्—असमासग्रहणेन तादृशवाक्यग्रहणे बीजम् ॥ छाया ॥

नास्य प्रवृत्तिः ॥ **सदृशस्येति** । प्रयोगार्हत्वेन समाससमानपदार्थकत्वेन च सादृश्यम् ॥ **प्रतिपदोक्त इति** । तेन 'मासेन कृताय पूर्वस्मै' इत्यत्र तदर्थके 'मासपूर्वस्मै' इत्यत्र च न दोषः । अत एव भाष्ये प्रथमोपस्थितानन्यान्सर्वादीन्विहाय पूर्व एवोदाहृत इति बोध्यम् ॥ ३० ॥

( २९ द्वन्द्वे सर्वनामसंज्ञाविकल्पसूत्रम् ॥ १।१।६ आ. ५ )

## विभाषा जसि ॥ १ । १ । ३२ ॥

( अर्थप्रदर्शनाधिकरणम् )

( भाष्यम् )

**जसः कार्यं प्रति विभाषा । अकज्झि न भवति ॥ ३२ ॥**

**( प्रदीपः ) विभाषा ज० ॥३२॥ जसःकार्यं प्रतीति ।** जस इः-जसीति निर्देशादिकारेण ईकारस्य ग्रहणादित्याहुः । **अन्ये तु** कार्यकालत्वात्संज्ञाया **जसः शी**त्यत्रैवोपस्थानं मन्यन्ते ॥ ३२ ॥

**( उद्द्योतः ) विभाषा ज० ॥३२॥ इकारेणेति** । तद्रूपस्य सर्वनामकार्यस्याभावात्-इति भावः ॥ सूत्रे **जसी**ति च लुप्तसप्तमीकं लुप्तद्वितीयान्तं वा ॥ **अन्ये त्विति** । जसीत्यस्य च जसघटिते सर्वनामकार्यविधायकसूत्रे द्वन्द्वे **विभाषे**ति संज्ञाविकल्पायोपतिष्ठते-इत्यर्थ इत्यभिमानः ॥ भाष्ये—**अकज्झि न भवती**त्यस्य समुदायनिष्ठकुत्साबोधकोऽकच्न भवतीत्यर्थः । कृताकचा समासस्तु भवत्येव, तत्र सर्वाद्यन्तत्वादनेन विकल्पो भवत्येव । समुदायकुत्साविवक्षायां के नायं विकल्पः, द्वन्द्वस्य सर्वाद्यन्तत्वाभावादिति बोध्यम् ॥ ३२ ॥

( ३० जसि सर्वनामसंज्ञाविकल्पनसूत्रम् ॥ १।१।६आ.६ )

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ १ । १ । ३४ ॥

( गण-सूत्रपाठयोः कालनिर्णयाधिकरणम् )

( २०३ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात् ॥ * ॥

( भाष्यम् )

**अवरादीनां च पुनः सूत्रपाठे ग्रहणमनर्थकम् । किं कारणम् ? 'गणे पठितत्वात्' । गणे ह्येतानि पठ्यन्ते ॥**

**( प्रदीपः ) पूर्वपरा० ॥ ३४ ॥ अवरादीनां चेति ।** किमर्थं प्रतिपदं पूर्वादीनि जसि विभाषार्थं पठितानि, यावता गण एवार्थविशेषेण विशिष्टानि नित्यं सर्वनामसंज्ञार्थं पठ्यन्ते । तत्र **पूर्वादीनि नवे**त्येवं सूत्रं पठितव्यम् । प्राप्तविभाषा चेयं भविष्यति । तेषामेवात्र प्रत्यभिज्ञानात् । गण एवार्थनिर्देशः पाठविशेषणं भविष्यति । यथा **तिङो गोत्रादीनी**त्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणमिति वार्तिककाराभिप्रायः ॥ **अवरादीना**मित्यत्र प्रकारार्थ आदिशब्दः, तेन पूर्वपरशब्दावपि गृह्येते ॥

**( उद्द्योतः ) पूर्वपरा० ॥ ३४ ॥** भाष्ये—**पुनः सूत्रपाठे इति** । गणपाठोत्तरकालिके सूत्रपाठे इत्यर्थः ॥ ननु **पूर्वादीनि नवे**त्येतावत्युक्ते गणस्थग्रहणेन प्राप्तविभाषात्वेऽभावतात्पर्यकत्वेन गौरवादर्थान्तरे एवाप्राप्तविभाषा स्यादत आह—**तेषामेवात्रेति** ॥ नन्वेवमर्थविशेषलाभो न स्यादत आह—**गण एवेति** ॥ **प्रकारार्थ इति** । वस्तुतो लघ्वक्षरत्वादजाद्यन्तत्वाच्च सूत्रेऽवरशब्दस्यैव पूर्वनिपात उचित इत्याशयेनावरादीनामित्युक्तिर्वार्तिककृत इति बोध्यम् ॥

१ अस्यातिप्रसक्तत्वादाह—**समासेति** ॥ **तदर्थकत्वेन**–पदार्थकत्वोभयत्वेन ॥ **न दोष इति** । अत्र हि **कर्तृकरणे** इति समासः । **अत एव**–प्रतिपदोक्तग्रहणस्येष्टत्वादेव । अत एवाकारान्ते तत्र काकचोरविशेषादनकारान्ते प्रतिपदोक्तसमासाभावादलौकिके फलाभावाल्लौकिकस्यैव ग्रहणम् । तेन तथेति गूढाकूतम् ॥ छाया ॥

२ 'भवति । द्वन्द्वे चेति प्रतिषेधात्' इति झ. पाठः ॥

३ सूत्रार्थमाह—**सूत्र इति** । चस्त्वर्थे । जस ईकारे कर्तव्य इत्यर्थः ॥ भाष्यस्वरसादाह—**लुप्तेति** ॥ जससंबन्धिनं ईं प्रतीत्यर्थः ॥ एतेनेदमुपसंख्यानमिति कस्यचिदुक्तं व्यवस्थितविभाषेयमित्यन्योक्तं चापास्तम् । गमकाभावात् । तासां परिगणनाच्च ॥ **जसीत्यस्य**–संपूर्णसूत्रस्य ॥ अत्र पक्षे **'मन्यते' 'अभिमानः'** इत्याभ्यामरुचिः सूचिता । तद्बीजं तु कार्यकालत्वे संज्ञायाः प्रतियोगमुपस्थानावश्यकत्वेन तत्रैवोपस्थितिर्नान्यत्रेत्यत्र विनिगमनाविरहो लक्षणायां मानाभावोऽस्य संज्ञासूत्रत्वेन परिभाषात्वाभावश्चेति ॥ एवं व्याख्याने बीजभूतस्य **''अकज्झि न''** इति भाष्यस्य तात्पर्यमाह—**समुदायेति** ॥

तत्फलमाह—**कृताकेति** ॥ **तत्र**–कृताकचा समासे ॥ नन्वेवं **'अकज्झि'** इति भाष्यासंगतिरेवात आह—**समुदायेति** ॥ **छाया** ॥

४ **तत्र**–तस्मिन्सति ॥ **तेषामेवेति** । पाठसामर्थ्यादिति भावः ॥ वार्तिकासंगतिं परिहरति—**अवरेति** ॥ छाया ॥

५ एवं सति वार्तिककृतोऽज्ञत्वापत्तिरत आह—**वस्तुत इति** ॥ चेन प्रथमोपस्थितत्वसंग्रहः ॥ दण्डचक्रादिन्यायेन समुदितस्य तस्य तत्र हेतुत्वम् । न तु प्रत्येकं तृणारणिमणिन्यायेन । तेन परस्योत्तरस्यापरस्याधरस्य च व्यावृत्तिः ॥ वस्तुतो**ऽवरादीनी**त्यग्रिमभाष्यवदेतस्याप्यर्थः । एतदाशयेनैवाग्रे तथोक्तम् ॥ यद्वा पूर्वघटितसूत्रस्यावश्यकत्वेन परस्य चेन ग्रहेणादीनां चेत्युक्तम् । एतदेव ध्वनयता कैयटेन **'तत्र पूर्वादीनि नव'** इत्याद्युक्तमिति बोध्यम् ॥ छाया ॥

६ वस्तुतस्तु **'द्व्येकयोः' 'अजाद्यतः'** इत्यादिनिर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वं ज्ञाप्यते । अत एव **'शूद्रविट्क्षत्रविप्राणाम्'** इति मनुप्रयोगोऽपि व्याख्यातः ॥ अवरापराधरशब्देषु विशेषाभावाच्चिन्त्यमेतत् ॥ दाधिमथाः ॥

( आक्षेपबाधकभाष्यम् )

**कथं पुनर्ज्ञायते—स पूर्वः पाठः, अयं पुनः पाठ इति ?**

( प्रदीपः ) **कथं पुनरिति** । पूर्वं गणपाठो नियतसंनिवेशो व्यवस्थितः पश्चात्तु सूत्रपाठ इत्यत्र प्रमाणाभावात् । आदिशब्दः प्रकारवाची दृष्टः, व्यवस्थावाची च । तत्र **सर्वादीनी**त्यत्रादिशब्दस्य प्रकारार्थताऽपि संभवति । प्रकारार्थप्रदर्शनाय पश्चादभियुक्ता गणान् पठन्ति । यदुक्तम्—**श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगण** इति ॥ कृतादयश्च वृत्तिकारैर्निदर्शनार्थं पठिताः । तत्र वेदे **मध्यमस्यामवमस्या**मिति प्रयोगदर्शनात्प्रकारार्थता आदिशब्दस्य **सर्वादीनी**त्यत्र संभाव्यत इति प्रश्नः ॥

( उद्द्योतः ) ननु 'सर्वादीनि'इति व्यवहारात् गणपाठस्य पूर्वता निश्चीयतेऽत आह—**आदिशब्द इति** ॥ नतु गणपाठस्य निदर्शनार्थत्वे आदिपदस्य प्रकारार्थता स्यात्, तदेव कुत इत्यत आह—**तत्र वेद इति** ॥ **प्रकारेति** । सर्वनामकार्यवत्त्वमेव सादृश्यमिति भावः ॥

( आक्षेपसाधकभाष्यम् )

**तानि हि पूर्वादीनि, इमान्यवरादीनि ॥**

( प्रदीपः ) **तानि हि पूर्वादीनीति** । पूर्वकालपठितत्वात्पूर्वशब्देन सर्वशब्दोऽभिधीयते । तेनायमर्थः—**सर्वादीनी**त्यत्र व्यवस्थावाच्या**दि**शब्दः । प्रकारवाचित्वे हि कृत्स्नादीनामपि संज्ञा स्यात् । मध्यमस्यामवमस्यामिति तु व्यत्ययेन छान्दसः प्रयोगः ॥ **इमान्यवरादीनीति** । अवरकालपाठात्पूर्वशब्दोऽवरशब्देनोच्यते ॥ तेन पूर्वं गणपाठः, पश्चात्सूत्रपाठ इत्यर्थः ॥

( उद्द्योतः ) **छान्दसः प्रयोग इति** । एवं च **सर्वादीनी**ति व्यवहारादेव गणपाठस्य पूर्वत्वनिश्चय इति भावः ॥ [१]अत्र वदन्ति—**तानि पूर्वादीनी**त्यनेनैव गणपाठस्य पूर्वत्वे सिद्धे, **इमान्यवरादीनी**ति व्यर्थम् । अस्य हि पूर्वादीनीत्यर्थः कैयटाल्लभ्यते । न चायं सूत्रपाठस्य पुनः पाठत्वे साधकः । किं चेमा**न्यपि पूर्वादीनी**ति शङ्काऽप्यनुपपन्ना, त्वदुक्तरीत्या हेतोरभिधानात् । एवं च **हेत्वभिधानमन्तरेणे**त्याद्यपि चिन्त्यमेव । तस्मादत्रादिशब्द आश्रयवाची, **भीष्मादिश्च सुयोधन** इतिवत् ॥ **तानि**=गणपठितानि पूर्वकालाश्रयाणि, **इमानि**=अष्टाध्यायीपठितानि अवरकालाश्रयाणीत्यर्थः । एवं च तत्तत्कालकृतत्वात्पूर्वादिव्यवहार इति भावः ॥

( आक्षेपबाधकभाष्यम् )

**इमान्यपि पूर्वादीनि ॥**

( प्रदीपः ) हेत्वभिधानमन्तरेणाशक्योऽयमर्थः प्रतिपत्तुमित्याह—**इमान्यपीति** ॥

( उद्द्योतः ) तत्र मानाभावमूलकं शङ्कते—**इमान्यपि**—अष्टाध्यायीपठितान्यपि ॥ **पूर्वादीनि**—पूर्वकालाश्रयाणीत्यर्थः ॥ [२]अत्रापिरेवार्थे । अन्यथोभयोः परस्परापेक्षया पूर्वकालत्वासंभवेनाऽपिरनर्थक एव स्यात् ॥ [३]**सर्वादीनी**त्यादौ सर्वत्रादिशब्दः प्रकार एव ॥ तत्तत्कार्यवत्त्वेन च सादृश्यम् । अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयः ॥ ध्वनितं चेदं **कस्ये**दिति सूत्रे [४]भाष्ये-इति ॥

( आक्षेपसाधकभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—स पूर्वः पाठः, अयं पुनः पाठः-इति । यदयं "पूर्वादिभ्यो नवभ्यो वा" इति नवग्रहणं करोति । नवैव हि पूर्वादीनि ॥**

( प्रदीपः ) **नवग्रहणमिति** । तत्र हि नवग्रहणं त्यदादिनिरासार्थं क्रियते । यदि च नियतसंनिवेशो गणपाठः पूर्वस्ततोऽधिकव्यवच्छेदाय नवग्रहणं कर्तव्यम् ॥

( उद्द्योतः ) **नवैवेति**—भाष्ये । अष्टाध्यायां [५]**पूर्वे**त्यादित्रिसूत्रीपठितानीत्यर्थः । अष्टाध्याय्याः पूर्वकालत्वे [६]**पूर्वादी**ति सूत्रेऽष्टाध्यायीसूत्रपठितानामेव तेषां ग्रहणं स्यादिति भावः ॥

( समाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—व्यवस्थायामसंज्ञायामिति वक्ष्यामीति ॥**

( प्रदीपः ) **इदं तर्हीति** । प्रतिनियतविशेषणाभिधानाय प्रतिपदपाठ इत्यर्थः ॥

( उद्द्योतः ) **प्रतिनियतेति** । पूर्वादिसप्तकस्यैव व्यवस्थायामित्यादि, स्वशब्दस्यैवाज्ञातीत्यादि, अन्तरशब्दस्यैव बहिर्योगेत्यादि-विशेषणाभिधानायेत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । एवंविशिष्टान्येवैतानि गणे पठ्यन्ते ॥**

---

१ प्रदीपं खण्डयति—**अत्रेत्यादि-इतीत्यन्तेन** ॥ **हेतोः**—पूर्वकालपठितत्वमूलकसर्वादीनीति व्यवहारस्य ॥ **चिन्त्यमेवेति** । किंच **तानी**त्यादेरपि सर्वादीनीत्यर्थेन तस्यापि पूर्वपाठत्वे प्रागुक्तरीत्या नासाधारणहेतुत्वम् । सामर्थ्येन तथा कल्पने तु क्लिष्टत्वमेवेत्यपि बोध्यम् ॥ भाष्याशयमाह—**तस्मादिति** ॥ तत्र मानं सूचयन्नाह—**भीष्मादिश्चेति** ॥ **पठितानि**—पूर्वादीनि ॥ एवमग्रेऽपि ॥ अत एवाग्रे तथा वक्ष्यति ॥ पूर्वशब्दोऽत्र कालवाचीत्याह—**पूर्वकालेति** ॥ तात्पर्यार्थमाह—**एवं चेति** ॥ छाया ॥

२ पक्षद्वयसाधारणमाह—**अत्रापीति** ॥ परमतसमुच्चायकोऽपिरिति परे ॥ एतच्छङ्काशयमाह—**सर्वादीनीति** ॥ छाया ॥

३ 'इमान्यपि पूर्वादीनि' इत्यस्याश्रयणे 'सर्वादीनि–' इति सूत्रस्यादिशब्दार्थमाह—**सर्वादीति** ॥

४ इत्थं हि तत्र भाष्यं—'यद्यपि किमः, अथापि न किमः, उभयथा कस्मा अनुब्रूहीति भवितव्यम् । सर्वस्य हि सर्वनामसंज्ञा क्रियते, सर्वश्च प्रजापतिः, प्रजापतिश्च कः' इति । प्रजापतिवाचकस्य कशब्दस्यापि संज्ञाकरणादादिशब्दः प्रकारवाची–इमान्यपि पूर्वादीनि–इति च ध्वनितम् ॥

५ **नवैव हीति** भाष्यस्य वैयर्थ्यं कैयटानुक्तत्वात्परिहरति—**अष्टेति** ॥ **मेवेति** । तथा च तदा नवग्रहणवैयर्थ्यमेवेति भावः ॥ छाया ॥

६ 'पूर्वादीनीति सूत्रे' इति ज. पाठः ॥

( प्रदीपः ) **एवंविशिष्टान्येवेति** । पाठविशेषणाय गणेऽर्थनिर्देश इत्यर्थः ॥

( समाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—द्व्यादिपर्युदासेन पर्युदासो मा भूदिति ॥**

( प्रदीपः ) **द्व्यादिपर्युदासेनेति** । त्यदादीनि पठित्वा गणे कैश्चित् पूर्वादीनि पठितानि, तत्राद्व्यादिभ्य इति तसिलादीनां प्रतिषेधः प्राप्नोति । तत्र पुनः सर्वनामसंज्ञया तसिलादिर्विधीयते । तेन द्व्यादिपर्युदासो बाध्यते । यथा 'अनुर्लक्षणे' इति पुनर्विधानेन **हेतु**तृतीया बाध्यते । वाक्यभेदेन च विभाषा जसि विधीयते । यथा **'अमि पूर्वः' 'संप्रसारणाच्च'** इत्यत्र वाक्यभेदेन **'वा छन्दसि'** इति संबन्धाच्छन्दसि विकल्पः क्रियते इति भावः ॥

( उद्द्योतः ) अष्टाध्यायीपाठेनै यथा द्व्यादिपर्युदासाभावस्तथा दर्शयति—**तत्र पुनरिति** । पुनः संज्ञाविधानेन पुनः कार्यविधानद्वारा द्व्यादिपर्युदासो बाध्यत इत्यर्थः ॥ **इति पुनर्विधानेनेति** । एतत्संज्ञाकल्पितेन द्वितीयापुनर्विधानेनेत्यर्थः ॥ नन्वेवं जसि विकल्पो न स्यादत आह—**वाक्यभेदेन चेति** । **विभाषा** जसीत्यनुवृत्त्येत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—नैषां द्व्यादिपर्युदासेन पर्युदासो भवतीति । यदयं "पूर्वत्रासिद्धम्" इति निपातनं करोति ।**

**वार्तिककारश्च पठति-*जश्भावादिति चेदुत्तरत्र ढस्याभावादपवादप्रसङ्गः* इति ॥**

( उद्द्योतः ) जश्भावादिति चेदुत्तरत्रेति । ढोढे लोप इति सूत्रे वार्तिकमिदम् । एतैश्च सूत्रवार्तिकप्रयोगैस्त्यदादितः पूर्वमेव गणे पूर्वादिपाठ इति बोध्यत इति भावः ॥

( समाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्-जसि विभाषां वक्ष्यामीति ॥ ३४ ॥**

( प्रदीपः ) **इदं तर्हीति** । यदि पूर्वादीनि नवेत्युच्येत तदा गणपाठेऽर्थनिर्देशस्य नित्यसंज्ञाविधान एवोपयुक्तत्वात् पाठविशेषणे प्रमाणाभावादप्राप्तविभाषेयमर्थान्तरे पूर्वादीनां जसि विज्ञायेत, प्राप्तविभाषायामुक्तानुवाददोषप्रसङ्गादप्राप्तविभाषायामपूर्वविधानात् ॥ **विभाषामिति** । प्राप्तविभाषामित्यर्थः । प्रतिपदपाठं चान्तरेणासंकरेणार्थनिर्देशोऽशक्यः कर्तुमिति भाष्यकारेण प्रतिपदपाठः समर्थितः ॥ ३४ ॥

( उद्द्योतः ) **पाठविशेषणे प्रमाणाभावादिति** । व्याख्यानातिरिक्तप्रमाणाभावादिति भावः ॥ तथाव्याख्याने बाधकमाह—**उक्तानुवादेति** । भावांशे-इत्यर्थः ॥ अभावतात्पर्यकत्वेन गौरवं दोष इत्यपि बोध्यम् ॥ नन्वप्राप्तविभाषात्ववारणायार्थमात्रनिर्देशः क्रियतां किं प्रतिपदपाठेनेत्यत आह—**प्रतिपदेति** ॥ **असंकरेणेति** । सप्तस्वेव व्यवस्थासंबन्धः, स्वे अज्ञातिधनयोः, अन्तरे बहिर्योगादेरित्येवं रूप इत्यर्थः ॥ एवमप्याद्यसूत्रे **पूर्वादीनि व्यवस्थायामसंज्ञाया**मित्येव कुतो न सूत्रितम्, सप्तानामेव व्यवस्थायां वृत्तेरिति **चिन्त्यम्** ॥ ३४ ॥

---

१ **पूर्वादिसप्तेति** ॥ गणपाठे तदुक्तिस्तु नित्यसंज्ञार्थत्वेनोपक्षीणेति भावः ॥ छाया ॥

२ 'सर्वनामसंज्ञा तसिलादिविधानार्थं विधी—' इति ड्र. पाठः ॥

३ **पाठेन**—अष्टाध्याय्यां प्रतिपदपाठेन ॥ यथाश्रुतासंगतेराह—**पुनः संज्ञेति** । तस्याः कार्यार्थत्वादिति भावः ॥ एवमग्रेऽपि ॥ **विभाषेति** । अत एव त्रलादावपि न विकल्प इति भावः ॥ छाया ॥

४ **निपातनमिति** । निर्देशमित्यर्थः ॥ सामान्यापेक्षत्वमस्येति सूचयन्नाह—**वार्तिकेति** ॥ छाया ॥

५ अपूर्ववचनकल्पने गौरवेण लाघवादेतत्तात्पर्यार्थमाह—**एतैश्चेति** ॥ छाया ॥

६ **वक्ष्यामी**ति छान्दसो वर्तमाने लृट् ॥ छाया ॥

७ व्याख्यानस्य सत्त्वादाह—**व्याख्यानानीति** ॥ तत्त्वगतिकगतिरदृष्टार्थविषयकं चेति भावः ॥ वैयर्थ्याभावायाह—**तथेति** ॥ प्राप्तविभाषयेत्यर्थः ॥ **बाधकं**–तत्पुरःसरम् ॥

८ अन्यत्र तदसंभवादाह—**भावांशे इति** ॥ ननु प्राप्तविभाषायां भावस्य सिद्धत्वान्न तत्र तात्पर्यम् । किं तु पक्षेऽभावांशे इति नायं दोषोऽत आह—**अभावेति** ॥ छाया ॥

९ **अर्थेति** । व्यवस्थाऽसंज्ञाऽज्ञातिधनाख्याबहिर्योगोपसंव्यानेष्वितीत्यर्थः ॥ पूर्वादीनि नवेत्यावश्यकमेवेति सूचयन्मात्रव्यवच्छेद्यमाह—**किं प्रतीति** ॥ अन्यथासिद्ध्याऽसंज्ञायामित्यस्यानुपयोगादाह—**व्यवस्थेति** ॥

१० यद्यपि प्रयोगज्ञैः सुधीभिरसंकरेण प्रतिपत्तुं शक्य एव तथापि मन्दमध्यमतिभिर्न शक्य इति चेत्, तथापि भाष्यमिदमेकदेश्युक्तिरित्याह—**एवमपीति** ॥ अग्रिमसूत्रद्वयं यथास्थितमेवेति भावः ॥ अदृष्टार्थमाह—**असंज्ञेति** ॥ यत्तु—वस्तुतस्तु गणपाठे एव पूर्वादिनवकपाठानन्तरं **'विभाषा जसि'** इति वाच्यम् । तत्र च पूर्वादीन्यर्थविशिष्टान्यनुवर्तनीयानि, तथा चेष्टसिद्धिः । न च सर्वादीनामप्यनुवृत्त्यापत्तिः, नेमस्य जसि विकल्पारम्भाद् इति नारायणः ॥ तन्न, एवमपि समसिमयोरनुवृत्त्यापत्तेः ॥ यदपि गणेऽर्थनिर्देशस्य पाठविशेषणत्वेनान्येषां पाठादेव पर्युदासः । तथा च विभाषाप्रकरणे **'पूर्वादीनि नव'** इत्येव लाघवात्कार्यम् । इयं त्रिसूत्री नैव पाठ्येति । तदपि न, तत्रार्थनिर्देशस्य नित्यसंज्ञाविधावुपक्षीणत्वेनाप्राप्तविभाषात्वापत्तेः । तन्निरासाय सर्वार्थघटितसूत्रे संकरतादवस्थ्यात् । अतः प्रतिपदपाठ एवेति न यत्नान्तरमिति दिक् ॥ **चिन्त्यमिति** । वस्तुतः स्वान्तरयोः प्रतिपदपाठस्यावश्यकत्वेन तदैकरूप्यायात्रापि तथैवोचितम् । संभवत्यैकरूप्ये वैरूप्यस्यान्याय्यत्वात् । तस्य दुष्टत्वं चान्यत्र स्पष्टमिति बोध्यम् ॥ छाया ॥

( ३१ सर्वनामसंज्ञाविकल्पनसूत्रम् ॥ १ । १ । ६ आ. ७ )

## स्वमज्ञातिधनाख्यायाम् ॥ १ । १ । ३५ ॥

( आख्याप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**आख्याग्रहणं किमर्थम् ?**

( प्रदीपः ) **स्वमज्ञा०** ॥ ३५ ॥ आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । आमिनिज्विषयस्त्वैश्वर्यवाची ॥ **आख्याग्रहणमिति** । स्वे पुत्राः स्वे गाव इत्यत्र स्वशब्द आत्मीयत्वमेवाह । पुत्रादिशब्दास्तु ज्ञातिधनयोर्वर्तन्ते, न स्वशब्द इति प्रतिषेधो न भविष्यतीति **प्रश्नः** ॥

( उद्योतः ) **स्वमज्ञाति०** ॥३५॥ **आत्मीयत्वमेवाहेति** । आत्मीयत्वेनैव ततः प्रतीतिर्न तु धनत्वादिनेत्यर्थः ॥

( समाधानभाष्यम् )

**ज्ञातिधनपर्यायवाची यः स्वशब्दस्तस्य यथा स्यात्, इह मा भूत्—स्वे पुत्राः-स्वाः पुत्राः, स्वे गावः-स्वाः गावः ॥ ३५ ॥**

( प्रदीपः ) **तस्य यथा स्यादिति** । प्रतिषेध इति शेषः ॥ **इह मा भूदिति** । असत्याख्याग्रहणे स्वे पुत्रा इत्यादौ स्यादेव प्रतिषेधः । अत्राप्यात्मीयत्वं प्रवृत्तिनिमित्तमुपादाय स्वशब्दो ज्ञातिधनयोर्वर्तते, पुत्रादिभिः सामानाधिकरण्यात् । आख्याग्रहणे तु सति न दोषः । स्वशब्दो ह्यत्रात्मीयस्याख्या, न तु ज्ञातिधनयोरिति विधिः सिद्धः ॥ ३५ ॥

( उद्योतः ) ईदृशविशेषलाभार्थमेवाख्याग्रहणम् । तदभावे आत्मीयत्वादिना ज्ञातिधनवाचकेऽपि निषेधः स्यादित्युत्तरम् ॥ **प्रतिषेध इति शेष इति** । अज्ञातीत्यादिप्रतिषेध इत्यर्थः ॥ **न तु ज्ञातिधनयोरिति** । ज्ञातित्वधनत्वयोरित्यर्थः ॥ ३५ ॥

---

( ३२ सर्वनामसंज्ञाविकल्पनसूत्रम् ॥ १ । १ । ६ आ. ८ )

## अन्तरं बहिर्योगोपसंव्यानयोः ॥ १ । १ । ३६ ॥

( उपसंव्यानग्रहणप्रयोजनाधिकरणम् )

( २०४ प्रत्याख्यानाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उपसंव्यानग्रहणानर्थक्यं बहिर्योगेन कृतत्वात् ॥ * ॥**

( भाष्यम् )

**उपसंव्यानग्रहणमनर्थकम् ।**

**किं कारणम् ?**

**'बहिर्योगेण कृतत्वात्' । बहिर्योग इत्येव सिद्धम् ॥**

( प्रदीपः ) **अन्तरम्०** ॥ ३६ ॥ बहिरित्यनावृतो देश उच्यते, तेन योगो बहिर्योगः । स च बाह्यस्य भवतीति अन्तरे गृहा इति नगरबाह्याश्चण्डालादिगृहा उच्यन्ते । यदा तु बहिःशब्देन बाह्य उच्यते, बाह्येन योगो बहिर्योग इति, तदा नगराभ्यन्तरे ये गृहास्त उच्यन्ते । उभयथाऽपि स्मर्यते । उपसंव्यानशब्दोऽपि कर्मकरणार्थभेदाद्भिन्नार्थः । ततः सर्वथा बहिर्योगात् सिद्धिं मत्वाऽऽह—**उपसंव्यानेति** ॥

( उद्योतः ) **अन्तरम्०** ॥ ३६ ॥ **भिन्नार्थ इति** । नानार्थ इत्यर्थः ॥ **ततः सर्वथेति** । कर्मणि द्वितीयव्याख्यानेन, करणे आद्यव्याख्यानेनेति बोध्यम् ॥

( २०५ प्रत्याख्यानबाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा शाटकयुगाद्यर्थम् ॥ * ॥**

( भाष्यम् )

**न वाऽनर्थकम् ।**

**किं कारणम् ?**

---

१ **आख्येति** । गणपाठसाधारणोऽयं प्रश्नः ॥ **पर्यायेति** । पर्यायतया वक्ति तच्छीलः । ज्ञातिधनयोः पर्यायवाचीति षष्ठीतत्पुरुषः ॥ **पर्यायवाचित्वं** च तच्छब्दभिन्नत्वे सति तत्प्रवृत्तिनिमित्ताक्रान्तत्वम् । **पर्यायः**—क्रमः ॥ **तस्य**—तस्यैव ॥ छाया ॥

२ अपर्युदस्तग्रहणनिश्चयायाह— **आत्मेति** ॥ **इत्यत्र**—इत्यत्रापि ॥

३ **यत्वमेवेत्यत्र** प्रकारतयेति शेषः । अन्यथाऽसंगतिः स्पष्टैवेति ध्वनयन्नाह—**आत्मीयेति** ॥ छाया ॥

४ **पर्यायेति** । यत्र ज्ञातित्वेन धनत्वेन च ज्ञातिधनयोर्बोधस्तत्र निषेधो भवतु । यत्र चात्मीयत्वेनैव बोधस्तत्र निषेधो माभूदित्यर्थमाख्याग्रहणम् । तथा च स्वे पुत्रा इत्यादौ स्वशब्दादात्मीयत्वेनैव बोधो न तु ज्ञातित्वेन धनत्वेन वेति तत्र न निषेधः ॥

५ **ईदृशेति** । ज्ञातित्वादिना बोध एव निषेधो नान्यत्रेत्यर्थः ॥ नन्वेवमत्र पक्षे तत्साफल्येऽतिगौरवमिति लाघवाद् **'आत्मात्मीययोः'** इत्येवास्तु तत एवोक्तार्थलाभाद्—इति चेत् । न । ज्ञातिधनत्वाभ्यामात्मात्मीययोर्वाच्यत्वे तदापत्तेः । न चैवमपि **'आत्मात्मीयाख्यायाम्'** इत्येवेष्टसिद्धिरिति नञ् व्यर्थ एवेति वाच्यम्, पदमात्रालाघवाभावात् ॥ वस्तुतस्तु—आत्मात्मीयार्थसंग्रहाय तथोक्तेरावश्यकत्वम् । अत एव **'स्वामिन्'** इत्यत्रैश्वर्यप्रतीतिः । एतदेव ध्वनयता कैयटेनोक्तम्—**आमिनिजिति** ॥ न च स तन्मात्रविषयः, **'ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी'** इति वाक्ये ततो विविक्ततयाऽपि प्रयोगदर्शनात् ॥ छाया ॥

६ **प्रतिषेध** इति सप्तम्यन्तमिति दण्ड्यसांगत्यायाह—**अज्ञातीति** ॥ ननु तेन तयोर्वाचक एवात आह—**ज्ञातित्वेति** । प्राग्वत् ॥ छाया ॥

७ 'ग्रहणमनर्थकं बहिर्योगेण' इति आ. पाठः ।

८ **बाह्य इति** । उक्तदेशस्थ इत्यर्थः ॥ तथा च **नानार्थत्वमस्य** ॥ अतएवाग्रेऽपिः ॥ छाया ॥

९ यथाश्रुतेऽसांगत्यादाह—**नानार्थ इति** ॥ **ततः सर्वथेतीति** । नानार्थत्वादुभयथेत्यर्थः ॥ **द्वितीयेति** । बहिर्योगपदस्येति भावः ॥ छाया ॥

[ शाटकयुगाद्यर्थम् । ] शाटकयुगाद्यर्थं तर्हीदं स्यात् । यत्रैतन्न ज्ञायते—किमन्तरीयं किमुत्तरीयमिति ॥

( प्रदीपः ) न वेति । समानप्रमाणे शाटकयुगे अपरिहिते इदं न ज्ञायते–किमुत्तरीयं किमन्तरीयमिति, तदर्थमेतदित्यर्थः ॥

( उद्द्योतः ) नन्वल्पमहत्परिमाणाभ्यामन्तरीयोत्तरीयत्वनिर्णयो भविष्यतीत्यत आह—समानेति । पदत्रयमपि सप्तम्यन्तम् ॥ भाष्ये–किमुत्तरीयं किमन्तरीयमित्येतन्न ज्ञायत इत्यन्वयः ॥

( प्रत्याख्यानसाधकभाष्यम् )

अत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति, निर्ज्ञातं तस्य भवति—इदमन्तरीयं इदमुत्तरीयमिति ॥

( प्रदीपः ) अत्रापीति । यथोपसंख्यानत्वं भाविबुद्ध्या व्यवस्थाप्यते तथा बहिर्योगोऽपीत्यर्थः ॥ अन्ये त्वाहुः—आदिशब्दो वार्तिके शाटकयुगाद्यर्थमित्यत्रोपात्तः । तत्र शाटकानां त्रये चतुष्टये वा तृतीयचतुर्थयोर्बहिर्योगाभावादुपसंख्यानग्रहणं कर्तव्यम् ॥

( उद्द्योतः ) तृतीयचतुर्थयोरिति । शरीरसंयुक्तयोरित्यर्थः ॥ भाष्यस्य त्वयं भावः—बहियोग इति सर्यते । तेन परम्परया बाह्यसंबद्धस्यापि सिद्धिरिति ॥

( अनिष्टापत्तिपरिहारः )

( उपसंख्यानभाष्यवार्तिकम् )

*अपुरीति वक्तव्यम् ॥*

( भाष्यम् )

इह मा भूत्—अन्तरायां पुरि वसति ॥

( प्रदीपः ) अपुरीति । गणसूत्र एतत् कर्तव्यम्, लिङ्गविशिष्टपरिभाषया ग्रहणप्रसङ्गात् । इह त्वनेन नार्थः, अत इति जसः शीविधानादाबन्तात्प्राप्त्यभावात् । पूः कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते क्वचित्प्राकाराद्बहिरित्यस्ति पुरो बहिर्योगः ॥ ३६ ॥

( उद्द्योतः ) ननु जसि विकल्पविधायकसूत्रस्थवार्तिकोदाहरणं सप्तम्यन्तमयुक्तमत आह—गणेति । पूंःशब्दस्य विशेष्यत्वे-इत्यर्थः ॥ स च स्त्रियामेव, तदाह—इह त्विति ॥ ३६ ॥

( इष्टानुपपत्तिनिराकरणाधिकरणम् )

( २०६ पूर्वपक्षिण उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ वाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ॥ * ॥

( भाष्यम् )

वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्तव्यम् । द्वितीयायै-द्वितीयस्यै, तृतीयायै-तृतीयस्यै । "विभाषा द्वितीयातृतीयाभ्याम्" इत्येतन्न वक्तव्यं भवति ॥

( आक्षेपभाष्यम् )

किं पुनरत्र ज्यायः?

( समाधानभाष्यम् )

उपसंख्यानमेवाऽत्र ज्यायः । इदमपि सिद्धं भवति—द्वितीयाय-द्वितीयस्मै, तृतीयाय-तृतीयस्मै ॥३६॥

( इति सर्वनामसंज्ञाप्रकरणम् )

---

१ [   ] चिह्नगतः पाठः अ. पुस्तके न दृश्यते ॥

२ 'तर्हीदं वक्तव्यम्' इति क. ख. ङ. पाठः ॥

३ यथाश्रुतं शाटकयुगादित्वं न विवक्षितम्, किंतु तदज्ञानमात्रमित्याह—यत्रेति । अनेनाद्यर्थस्यापि संग्रहः कृतः ॥ छाया ॥

४ सप्तम्यन्तम्—सत्सप्तम्यन्तम् । हस्तेन धृत इति शेषः । इदमन्तरमिति व्यवहारस्तत्रापि दृश्यत इति भावः ॥ एतच्छब्देन पूर्वपरामर्शभ्रमायाह—भाष्ये किमिति ॥ प्रदीपेऽप्येवमेवान्वयः ॥ छाया ॥

५ आख्याग्रहणाभावेन न प्राग्वत्फलमित्याशयेनाह—अत्रापीति । तादृशस्थलेऽपीत्यर्थः ॥ छाया ॥

६ ननु तत्र सर्वथा न बहियोग इति कथं तेन सिद्धिरत आह—यथोपेति ॥ आदिशब्दार्थमनपेक्ष्य भाष्ये वार्तिकोक्तफलनिराकरणमित्याशयेनाह—अन्ये त्विति ॥ तत्र–तस्मिन्सति परिहिते ॥ छाया ॥

७ पूर्ववदपरिहिते फलं नेत्याह—शरीरेति ॥ अन्ये त्विति सूचितामरुचिं ध्वनयन्नाह—भाष्यस्य त्विति ॥ नन्वेवं गृहस्थलेऽपि बाह्यसंबद्धस्य परम्परया तत्त्वापत्तिरिति चेत् । न, बहिर्योगग्रहणस्य तथा सति वैयर्थ्यापत्तेः ॥ गृहेष्वेव बहिर्योगस्य प्रसिद्धिमाश्रित्य पाणिनिनोपसंख्यानग्रहणं कृतमपि न कार्यम् । तत्सामर्थ्यात् गृहस्थले तथावश्यकत्वेन प्राप्तत्वेऽप्यावृत्तिसामर्थ्याच्छाटकस्थलेऽपि तथा तेन गृह्यत इति भावः ॥ छाया ॥

८ 'अपुरीति च वक्त' इति आ. पाठः ॥ मुद्रितपुस्तकेषु 'अपुरि । अपुरीति वक्तव्यम्' इति पाठः, तन्मते 'अपुरि' इति वार्तिकमग्रिमञ्च व्याख्यानभाष्यमिति । तादृशः पाठः प्रामाणिकेषु नोपलभ्यत इति स नादृतः ॥

९ ननु गणेऽन्तरशब्दः पठ्यते नान्तराशब्दोऽत आह—लिङ्गेति ॥ विभक्ताविन्यस्यात एव विभक्तिकार्यत्वाभावान्न प्रवृत्तिः । एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणादित्यपि बोध्यम् ॥ अस्तीति । तथा चान्तरायामित्यस्य प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां चेत्यर्थः ॥ छाया ॥

१० पूःशब्दस्य विशेष्यत्व इति । 'सत्यपि बहिर्योगे' इति 'सर्वनामता न' इति चाद्यन्तयोः शेषः ॥ स च–पूःशब्दश्च ॥ छाया ॥

११ अविशेषादाह—वाप्रकरणे इति ॥ 'पर्यायशब्दानां' इति परिभाषासूचनाय 'वा' इत्युक्तम् । 'द्वेस्तीयः' 'त्रेः प्रसारणं च' इति तयोः साधुत्वे ॥ छाया ॥

१२ ननु वार्तिकेन कृतं सूत्रखण्डनमनुचितमत आह—किमिति ॥ छाया ॥

१३ उपसंख्यानमेवेति । तथा चावश्यके तस्मिंस्तेनैव सिद्धे सूत्रमदृष्टार्थमेवेति भावः ॥ छाया ॥

( अथाव्ययसंज्ञाप्रकरणम् )

( ३३ अव्ययसंज्ञासूत्रम् ॥ १ । १ । ६ आ. ९ ॥ )

## स्वरादिनिपातमव्ययम् ॥ १ । १ । ३७ ॥

( उभयसंज्ञाप्रयोजनम् )

( आक्षेपभाष्यम् )

**किमर्थं पृथग्ग्रहणं स्वरादीनां क्रियते, न चादिष्वेव पठ्येरन् ?**

( प्रदीपः ) **स्वरादिनिपातम०** ॥३७॥ **किमर्थमिति।** स्वरादिषु किंचित्क्रियाप्रधानं किंचित्साधनप्रधानमिति[1] असत्त्ववचनत्वाच्चादिष्वेव स्वरादीनि पठितव्यानीति मत्वा **प्रश्नः** ॥

( उद्योतः ) **स्वरादि०** ॥ ३७ ॥ **क्रियाप्रधानमिति।** क्रियायामेव[2] विशेषणमित्यर्थः। यथा—हिरुगादि। एतचोत्तरसूत्रे कैयटे स्पष्टम् ॥ **किंचिदिति।** यथा-उच्चैरादि ॥

( समाधानभाष्यम् )

**चादीनां वै[3] असत्त्ववचनानां निपातसंज्ञा। स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां च ॥**

( प्रदीपः ) **स्वरादीनां पुनरिति।** स्वस्ति वाचयति स्वः पश्येति स्वस्तिस्वःशब्दे क्रियासम्बन्धेऽनेकशक्तिदर्शनात्सत्त्ववाचित्वनिश्चयः। लोहितगङ्गमित्यादीनाञ्चाव्ययानां सत्त्वधर्मेनपुंसकत्वदर्शनाद्व्यक्तमेव सत्त्ववाचित्वम् ॥

( उद्योतः ) **अनेकशक्तीति।** 'स्वस्तिष्ठ[4]' 'स्व आगतः' इत्यादावित्यर्थः। अनेककारकशक्तियोग एव च सत्त्वमिति भावः ॥ भाष्ये—**असत्त्ववचनानां च** इत्यस्याव्ययसंज्ञेष्यत इति शेषः ॥ **लोहितेति।** **अव्ययीभावश्चेति** स्वरादिषु पठ्यते-इति मते इदम् ॥

( आक्षेपभाष्यम् )

**अथ किमर्थमुभे संज्ञे क्रियेते, न निपातसंज्ञैव स्यात् ॥**

( प्रदीपः ) **न निपातसंज्ञैवेति।** **'प्राग्रीश्वरान्निपाताः' 'स्वरादीनि' 'चादयोऽसत्त्वे'** इति सूत्रन्यासः कार्य इत्यर्थः ॥

( उद्योतः ) नन्वसत्त्ववाचित्वाभावाच्चादिषु पाठाभावाच्च कथं निपातत्वमत आह—**प्राग्रीति** ॥

( समाधानभाष्यम् )

**नैवं शक्यम्। "निपात एकाजनाङ्" इति प्रगृह्यसंज्ञोक्ता, सा स्वरादीनामप्येकाचां प्रसज्येत ॥**

( प्रदीपः ) **स्वरादीनामिति।** 'किमोऽत्[5]' इत्यत्प्रत्ययो 'दक्षिणादाच्' इत्याच्। केन्प्रभृतयस्तु कृत एकाचः सन्तीति भावः ॥

( उद्योतः ) **किमोदिति।** तद्धितश्चेति सूत्रमपि[6] तत्संज्ञाविधायकमेव। एतत्प्रयोजनसत्त्वादेव केवलानामपि तेषां संज्ञा स्यादिति भावः ॥

( आक्षेपभाष्यम् )

**एवं तर्ह्यव्ययँसंज्ञैव[7] स्यात् ॥**

( उद्योतः ) भाष्ये—**एवं तर्ह्यव्ययेति।** **'प्राग्रीश्वराद्व्ययम्' 'स्वरादीनि' 'चादयोऽसत्त्वे'** इति पाठ्यमित्यर्थः ॥

( समाधानभाष्यम् )

**तच्चाशक्यम्[8]। वक्ष्यत्येतत्—*अव्यये[9] नञ्कुनिपातानाम्*इति। तद्गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात्। तस्मात् पृथक् ग्रहणं कर्तव्यम्। उभे च संज्ञे कर्तव्ये ॥ ३७ ॥**

( प्रदीपः ) **तच्चाशक्यमिति।** अव्ययसंज्ञायामेव[10] सत्यां **'अव्ययमेकाजनाङ्'** इति सूत्रं कर्तव्यम्। ततश्चात्प्रभृतीनामपि प्रगृह्यसंज्ञाप्रसङ्गः प्राप्नोति। अथ **'चादय एकाजनाङ्'** इति क्रियते, तदा चादीनामसत्त्ववचनत्वं विशेषणमलभ्यम् ॥ ३७ ॥

---

१ **इतिर्हेतौ** ॥ छाया ॥

२ नन्वस्य क्रियासामानाधिकरण्येऽपि क्रियावाचित्वमेव नेति कुतस्तत्त्वमत आह—**क्रियायामेवेति** ॥ नन्वत्रापि किं मानमत आह—**एतच्चेति** ॥ छाया ॥

३ वै-एवार्थे, व्युत्क्रमे च, असत्त्ववचनानामेवेत्यर्थः ॥ **पुनस्त्वर्थे** ॥ छाया ॥

४ ननूक्तस्थले कर्मत्वमेव, नानेकशक्तियोगोऽत आह—**स्वस्तिष्ठेति** ॥ अनेन **'पश्येति'** इति कैयटस्य **'पश्येत्यादौ'** इत्यर्थः सूचितः ॥ ननु तावतापि कथं तत्त्वमत आह—**अनेकेति** ॥ **सत्त्वत्व-मिति** पाठः ॥ **निपातसंज्ञेत्यस्यानुषङ्गभ्रमायाह—इति शेष इति** ॥ ननु लोहितगङ्गमित्यादेर**व्ययीभावश्चेति** सूत्रविषयत्वेन प्रकृताविषयत्वादत्रानुपयुक्तत्वमत आह—**अव्ययीति** ॥ छाया ॥

५ स्वरादिगणे एकाज्रूपाणां स्वरादीनामभावात्तद्धितादिषु तान्प्रदर्शयति-**किमोदित्यादिना** ॥

६ अपिना कृन्मेजन्त इत्यादिपरिग्रहः। तदपि सर्वं स्वरादिषु पठ्यते इति मतेनेदमपि। एवं सति संज्ञाविधौ तदन्तविधिहेतोरभावान्निषेधप्रवृत्त्या न तदन्तविधिरित्याह—**एतदिति**। अपिना सूत्रमध्ये पुनः पाठात्तदन्तसमुच्चयः ॥ छाया ॥

७ 'व्ययसंज्ञैवास्तु' इति आ. पाठः ॥

८ 'एतच्चाशक्यम्' इति आ. पाठः ॥

९ **'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः'** इति सूत्रेण प्राप्तस्य पूर्वपदप्रकृतिस्वरस्य स्नात्वाकालकादौ वारणाय परिगणनमेतत् ॥ दाधिमथाः ॥

१० ननु **'अव्यये नञ्कुचादीनाम्'** इति पाठे न भाष्योक्तगौरवमत आह—**अव्ययेति** ॥ इममुद्धरति—**अथेति** ॥ **अलभ्यमिति**। ततश्च—अस्यापत्यमित्येतत्संबोधने 'ए अव' इत्यत्र प्रगृह्यत्वापत्तिरिति भावः ॥ छाया ॥

**( उद्द्योतः )** तदा चादीनामिति । यदि तु 'चादयः', **'असत्त्वे'** इति योगविभागेन 'असत्त्वे' इति पाठविशेषणं क्रियते तदा नायं दोषः । तस्माद्भाष्योक्त एव दोषः । न च तत्र प्रादीनामिति वाच्यम्, ऊर्यादीनामसंग्रहापत्तेः । एवं **निपाता आद्युदात्ता** इत्यादावपि दोषो बोध्यः ॥ ३७ ॥

( ३४ अव्ययसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १० )

## तद्धितश्चासर्वविभक्तिः ॥ १।१।३८ ॥

( इष्टानुपपत्तिपरिहाराधिकरणम् )

( २०७ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

**असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम् । विना, नाना ॥**

**( प्रदीपः ) तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥** इह[3] **संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधाद्** यद्यपि केवलस्य प्रत्ययस्य ग्रहणं, तथापि **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति वाचनिकस्तदन्तविधिरस्तीति तदन्तस्याव्ययसंज्ञा विज्ञायते ॥ तत्र वृत्तिकारेण व्याख्यातम्—असर्वा विभक्तिर्यस्य सोऽसर्वविभक्तिरिति ॥ तत्र यदाऽयमर्थः–यस्य तद्धितस्याऽसर्वा विभक्तिः कार्या=यस्मान्न सर्वा विभक्तिरुत्पद्यते इत्यर्थस्तदा न दोषः । यदा तु यस्य तद्धितस्योत्पत्तौ निमित्तत्वेनासर्वा विभक्तिराश्रिता सोऽसर्वविभक्तिः, यथा 'सर्वैकान्य-' इति दाप्रत्ययस्य सप्तम्येवोत्पत्तिनिमित्तमिति । एतस्मिन् सूत्रार्थे विनानानेत्यव्ययसंज्ञा न सिध्यति । न हि 'विनञ्भ्याम्' इत्यत्र प्रतिनियता काचिद्विभक्तिराश्रितेत्याह—**असर्वविभक्ताविति** । अतिव्याप्तिश्चास्मिन् सूत्रार्थे, दाक्षिरितीञः षष्ठ्येव निमित्तमिति संज्ञाप्रसङ्गात् ॥ **अविभक्तिनिमित्तस्येति** । अश्रूयमाणविभक्तिकमव्ययमविभक्तीत्युच्यते । तन्निमित्तस्य यस्येष्यते न च प्राप्नोति तस्योपसंख्यानं कर्तव्यं; न तु सामान्येनाविभक्तिनिमित्तस्य संज्ञा विधेया, विशालविशङ्कटादीनामपि प्रसङ्गात् ॥

**( उद्द्योतः ) तद्धितश्चा० ॥ ३८ ॥ यद्यपि केवलस्येति ।** एवं च केवलतद्धितात्कस्या अपि विभक्तेरभावेना**सर्वविभक्ति**रिति विशेषणमव्यावर्तकमिति भावः ॥ **वाचनिक इति** । शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥ किंच केवलानां संज्ञायां प्रयोजनाभावः, प्रयोजकाभावश्च । अन्वर्थसंज्ञालब्धोऽर्थो हि तत्प्रयोजक इति बोध्यम् ॥ वार्तिकोत्थानाय सूत्रार्थं दर्शयति—**तत्र वृत्तिकारेणेति ॥ सर्वा विभक्तिरिति ।** सर्वावयविकेत्यर्थः ॥ **प्रतिनिय-**

---

१ इदं खण्डयति—**यदि त्विति** । हरदत्तोक्तिरियम् । इत्थं हि तत्सिद्धान्तः—**'तिङो गोत्र'** इतिवदत्र पाठविशेषणत्वम् । एवं चोभे **संज्ञे न** कार्ये । अव्ययानि निपाता इति वाऽस्तु । ततः **'स्वरादिनि'** **'तद्धितश्च'** इत्यारभ्य—**'भावश्च'** इत्यन्तम् । ततः **'चादयोऽसत्त्वे'** इत्यारभ्य—**'कृञि'**इत्यन्तम् । तत्र यस्मिन्प्रदेशे निपातपदं तत्र चादिग्रहणमस्तु, अव्ययप्रदेशे तदन्यतरदस्तु–इति ॥ ततश्च **'चादिरेकाजनाङ्'** इति न्यासेनेष्टसिद्धिः । तदाह—**नायमिति** ॥ अत्र **यदि त्वि**त्यनेनारुचिः सूचिता, तद्बीजं तु दृष्टान्ते **"अजाद्यदन्तम्"** इत्याभीक्ष्ण्यशब्दस्य पूर्वनिपाते कार्येऽन्यथाकरणेनाऽऽवृत्तिद्वाराऽन्यदपि सूचितमिति तत्र तथा युक्तम् । अत्र तु योगविभागेन तस्य पाठविशेषणत्वे न मानम् । **गुणप्रधाने**ति न्यायादपि । तथा प्रकृतभाष्यमप्यत्र साधकम् । एवं च भाष्योक्तदोषदार्ढ्यं समुल्लङ्घ्य कैयटस्याव्ययेत्यादिना दोषान्तरपरता न युक्तेति ॥ तदेतद्ध्वनयन्नाह—**तस्मादिति ॥ पत्तेरिति** । तद्विशेषणतालाभानापत्तेश्चेत्यपि बोध्यम् ॥ तद्ध्वनयन्नाह—**एवमिति** । भाष्योक्तदोषवदित्यर्थः ॥ **अपिना**ऽन्यस्यापि समुच्चयः ॥ **निपात एकाजित्य**त्राप्युक्तदोषो बोध्यः ॥ यत्तु—एकाचोऽनुकरणसंभवेन तथा पाठे तदसंग्रहापत्तिरपि दोष इति । तन्न, त्रिसूत्र्याः कृञ्विषयत्वेनाच्परत्वाभावेन प्रगृह्यत्वे फलाभावात् ॥ एवं **'प्रयोजनं सर्वनाम-'** इत्यत्रापि दोषो बोध्यः ॥ छाया ॥ परे तु लुङ्लङ्लृङ्क्षु अडागमे कृञ्विषयत्वेऽपि प्रगृह्यफलं स्पष्टमेवेति चिन्त्यम् ॥ दाधिमथाः ॥ अनुकरणं चानितीति सूत्रे 'संज्ञाफलं समासः, तत्फलं च ल्यप्' इत्यभियुक्तोक्त्या पराहतमेतत् ॥

२ सूत्रे **असर्वविभक्तिरि**त्यस्य–यस्य तद्धितस्योत्पत्तौ निमित्तत्वेनासर्वा विभक्तिराश्रितेत्यर्थस्वीकारे विनेत्यादीनामव्ययसंज्ञा न प्राप्नोति । **अविभक्ति**=अव्ययं निमित्तं यस्य विनेत्यस्याव्ययसंज्ञा न प्राप्नोतीत्यर्थः । विनञ्भ्यां नानाञ्नाविति सूत्रेण निर्विभक्तिकाद्वेर्नानाञौ विधीयेते ॥

३ **इहेति** । सूत्रे इत्यर्थः ॥ **विज्ञेत्य**त्रान्वयः ॥ **तत्र**–तस्मिन्सति ॥ **तत्र**–वृत्तिकारोक्तौ ॥ तस्याप्यर्थमाह—**यस्मादिति** ॥ छाया ॥

४ **इति तदेति** पाठः ॥ **इत्यर्थ इति** पाठे इति तात्पर्यमित्यर्थः । **यदा त्विति । अयमर्थ** इत्यस्यानुषङ्गः ॥ इतीत्यन्तेन तमुक्त्वा तत्र दोषमाह—**अस्मिन्निति** ॥ अत्र कारणमन्यपदार्थस्तद्धितविशेषणता च । आद्ये कार्यमन्यपदार्थस्तदन्तविशेषणता चेति बोध्यम् ॥ छाया ॥

५ 'विनानानेत्यस्याव्ययसंज्ञा' इति मुद्रितपाठः ॥

६ भाष्यीयन्यूनतां निराचष्टे—**अतिव्याप्तिरिति ॥ अश्रूयेति** । श्रूयमाणविभक्तित्वात्यन्ताभाववदित्यर्थः ॥ **अव्ययं**–व्यादिः ॥ **यस्य**–नादेः ॥ **न च**–नहि ॥ छाया ॥

७ यत्तु केवलस्य संज्ञायां तदन्तात्सुपो विधानेनाव्ययान्न विहित इति लुग् न स्यात् । न चाव्ययात्परत्वेन निर्वाहः, अत्युच्चैसावित्यादावतिप्रसङ्गापत्तेः । अत एवाकजपि न फलमिति दण्डिकृष्णादयः ॥ तन्न । अत्रार्थस्य प्रधानाप्रधानन्यायेन सर्वनामसंज्ञासाहचर्येण च प्रसिद्धान्तरङ्गपदानपेक्षानुपसर्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन समुदायस्यावयवस्य च तत्र संज्ञाया अभावेनादोषेणात्र निर्वाहात् । तद्ध्वनयन्नाह—**एवं चेति** ॥ छाया ॥

८ **शब्देति** । असर्वेति विशेषणादेवेति भावः ॥ ननु मास्तु तद्विशेषणमिति लाघवमेव, वाचनिकतदन्तविधिरन्यत्र सफलोऽत आह—**किं चेति ॥ अर्थः**–उक्तरूपः ॥ विभक्तिसंज्ञायाः समुदायनिष्ठत्वेन तत्र सर्वत्वस्य बाधादाह—**सर्वाविति ॥**

तेति । एवं च विशेषतः कस्या अपि निमित्तत्वेनानाश्रयणात्सर्वविभक्तिनिमित्तकोऽयमिति भावः ॥ ननु सुबन्तात्तद्धितोत्पत्तेरविभक्तिनिमित्तस्तद्धितोऽप्रसिद्धोऽत आह—**अश्रूयमाणेति** । 'तन्निमित्तस्य' इति बहुव्रीहिः ॥

( आक्षेपभाष्यम् )

**किं पुनः कारणं न सिध्यति ?**

( प्रदीपः ) **किं पुनरिति** । 'एकवचनमुत्सर्गतः' इति वचनात् क्रमव्यतिक्रमे कारणाभावात् विनानानेत्यत्राप्यसर्वा विभक्तिरुत्पत्तौ निमित्तमिति **प्रश्नः** ॥

( उद्द्योतः ) ननूत्सर्गत एकवचनमपि सर्वासां स्यादिति बहुवचनान्तविग्रहे सर्वविभक्तेर्निमित्तत्वमव्याहतमत आह—**क्रमव्यतिक्रम इति** । प्रथमातिक्रमे कारणाभावेन प्रथमाया एवैकवचनमिति न दोष इत्यर्थः ॥

( २०८ आक्षेपहेतुवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सर्वविभक्तिर्ह्यविशेषात् ॥ * ॥**

( भाष्यम् )

**सर्वविभक्तिर्ह्येष भवति ॥**

**किं कारणम् ?**

**अविशेषेण विहितत्वात् ॥**

( प्रदीपः ) **सर्वविभक्तिरिति** । अविशेषेणोत्पद्यन्ते, उत्पन्नानां नियमः क्रियते-इत्यव्ययात् सर्वा विभक्तय उत्पद्यन्त इत्यर्थः ॥ **अविशेषादिति** । विशेषस्यानाश्रयणादिति भावः ॥

( उद्द्योतः ) **अविशेषेणेति** । द्व्येकयोरित्याद्येकवाक्यतामनपेक्ष्येत्यर्थः ॥ **उत्पन्नानां नियम इति** । उत्पन्नानां शास्त्रबलान्नियमेन लोपेनेव निवृत्तिः क्रियत इत्यर्थः ॥ इदमप्यर्थनियमे सजातीयापेक्षप्रत्ययनियमे च बोध्यम् ॥ **विशेषस्येति** । द्व्येकयोरित्याद्येकवाक्यतारूपस्येत्यर्थः । **ज्ञापकाद्विभक्तिरिति** पक्षे 'इयमेव' इति विशेषस्येत्यर्थः ॥

( २०९ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ त्रलादीनां चोपसंख्यानम् ॥ * ॥**

( भाष्यम् )

**त्रलादीनां चोपसंख्यानं कर्तव्यम् । तत्र-यत्र, ततः-यतः ॥**

( प्रदीपः ) **त्रलादीनां चेति** । आदिशब्दस्य प्रकारवाचित्वात्तसिलपि गृह्यते ॥

( उद्द्योतः ) ननु त्रलादीनामित्युक्त्वा त्रलः प्राक् पठितस्य तसिलः कथमुदाहरणदानमत आह—**आदिशब्दस्येति** ॥

( आक्षेपबाधकभाष्यम् )

**ननु च विशेषे एते विधीयन्ते—"पञ्चम्यास्तसिल्" "सप्तम्यास्त्रल्" इति ॥**

( आक्षेपसाधकभाष्यम् )

**वक्ष्यत्येतत्—"इतराभ्योऽपि दृश्यन्ते" इति ॥**

( प्रदीपः ) **वक्ष्यत्येतदिति** । भवदादिप्रयोग एवाप्राप्तिश्चोद्यत इत्यर्थः ॥

---

( न्यासान्तरनिराकरणम् )

( न्यासान्तरभाष्यम् )

**यदि पुनरविभक्तिशब्दोऽव्ययसंज्ञो भवतीत्युच्यते ॥**

( प्रदीपः ) **यदि पुनरिति** । प्रयोगे योऽश्रूयमाणविभक्तिः सोऽव्ययमित्यर्थः । न च दधिमध्वित्यत्रातिप्रसङ्गः, दध्नीत्यादौ विभक्तिश्रवणात् ॥

( उद्द्योतः ) ननु 'विना' इत्यादावपि पदत्वाय विभक्त्युत्पत्तिरावश्यिकेत्यत आह—**प्रयोगे इति** ॥ **दध्नीत्यादाविति** । प्रयोगमात्रे विभक्त्यभावो विवक्षित इति भावः ॥

( २१० आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अविभक्ताावितरेतराश्रयत्वादप्रसिद्धिः ॥ * ॥**

( भाष्यम् )

**अविभक्ताावितरेतराश्रयत्वादप्रसिद्धिः संज्ञायाः । का इतरेतराश्रयता ? सत्यविभक्तित्वे संज्ञया भवितव्यं, संज्ञया चाविभक्तित्वं भाव्यते, तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ॥**

( प्रदीपः ) **अविभक्ताविति** । अव्ययत्वादविभक्तित्वम्, अविभक्तित्वादव्ययत्वमिति दोषः ॥

---

१ नन्वेतावतापि कथं तदुत्थितिरत आह— **एवं चेति** । प्रतिनियततदनाश्रयणे चेत्यर्थः ॥ **सर्वेति** । संख्याकारकाद्यभावेऽपि '**अव्ययाद्**' इति ज्ञापकात्ततः सर्वविभक्तिसत्त्वादिति भावः ॥छाया॥

२ ननु एकवचनान्तविग्रहे सर्ववचनानां ग्रहणं नात्र, तथाप्यसर्वविभक्तित्वमेवात आह—**बहिति** ॥ **सर्वेति** । प्रथमादिरूपाया इत्यर्थः ॥ छाया ॥

३ अन्यथा नियमेऽसंभवादाह—**इदमपीति** ॥ छाया ॥

४ **इयमेवेति** । या काचिद्विभक्तिरित्यर्थः ॥ छाया ॥ ज्ञापकाद्विभक्तिरिति पक्षे 'इयमेव' इति नियमो न स्यादिति भावः ॥

५ इतराभ्योऽपि दृश्यन्त इति सर्वविभक्तिनिमित्तत्वं त्रलादीनां मत्वा शङ्कते—**त्रलादीनामिति** । सर्वविभक्तिनिमित्तत्वात्त्रलादीनां संज्ञाया अप्राप्तिरत उपसंख्यानम् ॥

६ 'विशेषेणैते' इति क. पाठः ॥

७ वार्तिकावतरणभूतं निरुक्तदोषद्वयनिरासाय न्यासान्तरमाह— **यदि पुनरविभक्तिरिति** । अत्र तद्धितपदस्थाने शब्दपदप्रक्षेपेण सर्वपदत्यागेन सकलाव्ययसंग्रह इति लाघवं सूचितम् ॥ छाया ॥

८ मात्रं कात्स्न्र्ये ॥ छाया ॥

९ 'तराश्रयाणि कार्याणि च न प्रक' इति आ. पाठः ॥

( उद्द्योतः ) अव्ययत्वादिति । अविभक्तिकत्वस्य स्वाभाविकत्वेऽव्ययादाप्सुप इत्यस्य वैयर्थ्यप्रसङ्गादिति भावः ॥

( २११ न्यासान्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अलिङ्गमसंख्यमिति वा ॥ * ॥

( भाष्यम् )

**अथवाऽलिङ्गमसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम् ॥**

**एवमपीतरेतराश्रयमेव[1] ॥**

**का इतरेतराश्रयता ?**

**सत्यलिङ्गासंख्यत्वे[2] संज्ञया भवितव्यम् । संज्ञया चालिङ्गासंख्यत्वं भाव्यते[3], तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

( प्रदीपः ) **अलिङ्गमसङ्ख्यमिति** । **अविभक्तिरव्यय**मित्यस्य लक्षणस्य दूषितत्वात् अत्रापि तदेव दूषणमिति प्रदर्शनार्थो वाशब्दः । अलिङ्गासङ्ख्यत्वस्य[4] लौकिकत्वाच्चेतरेतराश्रयत्वमिति पूर्वपक्षः ॥ **एवमपीति** । अर्थमपि कश्चित् क्वचित् शास्त्रादेव प्रतिपद्यत इति भावः ॥

( उद्द्योतः ) ननु पूर्वलक्षणस्य दूषितत्वाद्वाशब्दोऽसङ्गतोऽत आह—**अविभक्तिरिति** ॥ **वाशब्द[5] इति** । प्रयुक्त इति शेषः ॥ एवंचाप्यर्थो वाशब्द इत्यर्थः ॥ अलिङ्गमित्यपि यद्युच्यते एवमपि अन्योन्याश्रय इत्यर्थः ॥ **शास्त्रादेवेति** । तद्द्योतकविभक्तिलुक्शास्त्रादेवेति[6] भावः ॥

( दूषणपरिहारभाष्यम् )

**नेदं वाचनिकम्—अलिङ्गता असंख्यता[7] च ।**

**किं तर्हि ?**

**स्वाभाविकमेतत्[8] । तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न । [[9] तत्र किमस्माभिः कर्तुं शक्यम् । स्वाभाविकमेतत् ॥ ]**

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्—अलिङ्गमसंख्यमिति ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् ॥**

( २१२ समाधानहेतुवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ सिद्धं तु पाठात् ॥ * ॥

( भाष्यम् )

**पाठाद्वा[10] सिद्धमेतत् ॥**

**कथं पाठः कर्तव्यः ?**

**तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । मान्तः । तसिवती । कृत्वोऽर्थः । नानाञाविति ॥**

( प्रदीपः ) **सिद्धं त्विति** । वार्तिककारस्येतरेतराश्रयदोषः[11] स्थित एवेति तुशब्दो विशेषप्रदर्शनार्थः । भाष्यकारेण त्वितरेतराश्रयदोषः परिहृत इति वाशब्दार्थः-**तु**शब्दो व्याख्यातः ॥ य एव **प्रकारवचने थाल्** स एव **प्रत्नादिभ्यो** विधीयते इति नाव्याप्तिः ॥ **मान्त इति** । अम् आम् ॥ **तसिः**—**'प्रतियोगे पञ्चम्यास्तसिः' 'तेनैकदिक् तसिश्च'** इति ॥ **कृत्वोऽर्थः**-कृत्वसुच्, सुच्[12], धा ॥

( उद्द्योतः ) **वाशब्दार्थ इति** । वाशब्दस्यार्थ इवार्थो यस्य

---

१ 'मेव भवति' इति आ. पाठः ॥

२ अत्रालिङ्गासंख्यत्वमेकं लक्षणं न तु द्वयम् । आद्यस्य क्रियायामतिप्रसक्तत्वात् । अन्त्यस्य द्रव्योपसर्जनेऽतिप्रसक्तत्वात् । प्रत्येकमुभयाभावो विवक्षित इति सूचनाय वार्तिकेऽग्रे भाष्ये च व्यस्तनिर्देशः । अन्यऽथार्थान्तरस्यापि भ्रमः स्यात् । तदेतद्ध्वनयन्नाह—**सत्यलिङ्गासंख्यत्वे इत्यादि** ॥ छाया ॥

३ 'भाव्यं, एतदितरेतरा' इति आ. पाठः ॥

४ अद्वैत्वे बीजमाह—**अलिङ्गेति** ॥ छाया ॥

५ **वाशब्द इतीति** । विकल्पबोधकशब्द इत्यर्थः ॥ वार्तिकादाविति भावः ॥ **प्रयुक्त इतीति** । उभाभ्यामिति भावः ॥ 'वा स्याद्–' इति कोशानुरोधेनाह—**एवं चेति** ॥ **इत्यर्थः**-इति तात्पर्यं कैयटस्य ॥ तथा च 'अविभक्तावितरेतराश्रयत्वादप्रसिद्धिवद् **'अलिङ्गमसंख्यम्'** इत्यपीतरेतराश्रितत्वादप्रसिद्धमिति वार्तिकार्थः । तमभिप्रेत्य भाष्ये अथ वेति पदद्वयेन **'अथ** वक्तव्यं-वक्तुमर्हम्, वा-एवमपि' इति भाष्ययोजनया भाष्यार्थमाह—**अलिङ्गमिति** । अपिर्व्युत्क्रमे । यद्यपीत्यर्थः ॥ भाष्ये इतरेतराश्रयशब्दस्य सर्वत्र कार्यपरत्वान्नपुंसकनिर्देशः । दोषपरत्वादाह—**अन्योन्याश्रय इति** ॥ छाया ॥

६ 'सदृशं त्रिष्विति शास्त्रात्' इति दण्डयुक्तेरसांगत्यायाह— तद्द्योतकेति । लिङ्गादिद्योतकेत्यर्थः ॥ अत्रेदं तत्त्वम्—**अविभक्तिरिति** अग्रिममिदम**लिङ्गमिति** च । तत्र चाद्यं दूषितं वार्तिककृतेति द्वितीयं निर्दुष्टमेवेति सूचितम् । भाष्यकृतापि व्युत्क्रमेण तद्दोषमादावुक्त्वा स दोषोऽग्रेऽपीति वार्तिकन्यूनतेत्येकदेशिभ्रमनिरासाय तथापि योजयित्वाऽग्रे तथैव समर्थितम् । अत एव प्रदीपे **'पूर्वपक्षः'** इत्युक्तम्—इति ॥ छाया ॥

७ 'असंख्यता वा' इति आ. पाठः ॥

८ **स्वाभाविकमिति** । तुल्ये प्रातिपदिकत्वे सत्त्ववाचित्वेऽपि घटाद्यर्थस्य तद्योगो न स्वराद्यर्थस्य । अव्ययादिति तु प्रत्ययलक्षणादिसिद्ध्यर्थं तस्यैवानुवादकमिति भावः ॥ छाया ॥

९ [ ] चिह्नगतः पाठः आ. पुस्तके न ॥

१० 'सिद्धमेतत् । कथं । पाठात् । पाठः कर्तव्यः' इति आ. पाठः ॥

११ **वार्तिककारस्य**–तदेकदेशिनः ॥ **विशेषेति** । पूर्वपक्षव्यावृत्तिरूपेत्यर्थः ॥ छाया ॥

१२ अर्थग्रहणफलमाह—**सुजिति** ॥ **'विभाषा बहोर्धा'** इति धा ॥ छाया ॥

इति बहुव्रीहिः ॥ [1]अयं च पाठः स्वरादिषु कार्यं इति बोध्यम् ॥ स च पचतिकल्पादिव्यावृत्तये तद्धितश्चेति सूत्रारम्भेऽप्यावश्यक इति भावः ॥ [2]प्रत्नेत्यादि थाल् न परिगणितमध्यवर्तीत्यत आह—स एवेति । प्रकारवचन इत्यत्र प्रकारः—सादृश्यं विशेषश्च । तत्र शब्दशक्तिमाहात्म्यात् प्रत्नादिभ्य उत्पन्नेन सादृश्यमुच्यते, किमादिभ्यस्थाल तु विशेषः, एवं च प्रत्नपूर्वेति सूत्रं व्यर्थमेव । लोकेऽप्रयोगस्त्वनभिधानादिति भावः ॥ अमु च छन्दसीत्यम् ॥ किमेत्तिङ्व्ययम् ॥ प्रतियोगे इति तसिः शस्प्रभृतिष्वस्तीति तद्ग्रहणं चिन्त्यम् । [3]दृष्टान्तार्थमित्यन्ये ॥ [4]भाष्ये—वतिः—तेन तुल्यमिति विहितः । न तूपसर्गाच्छन्दसीति विहितः, उद्वतो निवत इत्यादौ तस्य लिङ्गसंख्याद्यन्वयदर्शनादित्याहुः ॥

( प्रथमन्यासाङ्गीकरणभाष्यम् )

**अथवा पुनरस्तु—अविभक्तिश्शब्दोऽव्ययसंज्ञो भवतीत्येव ॥**

( प्रदीपः ) [5]**अथवेति** । वृद्धव्यवहारादेव शब्दार्थसम्बन्धावगमादेकत्वादिव्यवहारवदलिङ्गासङ्ख्यत्वमप्यव्ययार्थस्य प्रसिद्धमित्यर्थः ॥

( उद्द्योतः ) **एकत्वादिव्यवहारवदिति** । [6]पटादिपदानामिति शेषः ॥ **अलिङ्गासङ्ख्यत्वमपीति** । तथा च संख्याभावादेव विभक्त्यनुत्पत्तिरिति **अविभक्तिरिति** न्यासोऽप्यदुष्ट इति भावः ॥ [7]**अव्ययादाप्सुप** इति सूत्रं तु न्यायसिद्धाया अनुत्पत्तेरेवान्वाख्यापकं, प्रत्ययलक्षणप्रवृत्तिद्वारा पदत्वादिसंपादनार्थमिति तात्पर्यम् ॥

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः* इति ॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । इदं तावदयं प्रष्टव्यः—यद्यपि तावद्वैयाकरणा विभक्तिलोपमारभमाणा अविभक्तिकाञ्छब्दान्प्रयुञ्जते । [8]ये त्वेते वैयाकरणेभ्योऽन्ये मनुष्याः कथं तेऽविभक्तिकाञ्छब्दान्प्रयुञ्जते ?**

**अभिज्ञाश्च पुनर्लौकिका एकत्वादीनामर्थानाम् ॥**

**[9]आतश्चाभिज्ञाः । अन्येन हि वस्त्रेनैकं गां क्रीणन्ति, अन्येन द्वौ, अन्येन त्रीन् । अभिज्ञाश्च न च प्रयुञ्जते ।**

**तदेतदेवं संदृश्यताम्—अर्थरूपमेवैतदेवंजातीयकं येनात्र विभक्तिर्न भवतीति ॥**

( उद्द्योतः ) नन्ववैयाकरणैः संख्याया अज्ञानादेव तद्वाचकविभक्तिर्न प्रयुज्यत इत्यत आह—भाष्ये—**अभिज्ञाश्चेति** । घट इत्यादौ तैरपि एकवचनादिप्रयोगकरणादिति भावः ॥ युक्त्यन्तरमप्याह—**आतश्चाभिज्ञा इति** ॥ [10]वस्त्रः=मूल्यम् ॥

( उपपत्तिभाष्यम् )

**तच्चाप्येतदेवमनुगम्यमानं दृश्यताम् । किंचिदव्ययं विभक्त्यर्थप्रधानं, किंचित् क्रियाप्रधानम् । उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम् । हिरुक् पृथगिति क्रियाप्रधानम् । तद्धितश्चापि कश्चिद् विभक्त्यर्थप्रधानः, कश्चित् क्रियाप्रधानः । तत्र यत्र-इति विभक्त्यर्थप्रधानः, विना नाना-इति क्रियाप्रधानः । न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति ॥**

( प्रदीपः ) अत्रैवोपपत्तिमाह—**तच्चापीति** ॥ **किंचिदिति**[11] । अव्ययानां द्वैविध्यमेवेति प्रतिपाद्यते, अलिङ्गासङ्ख्यत्वप्रतिपादनाय ॥ **अन्ये त्वाहुः**—किंचिदव्ययं क्रियाप्रधानम्,

---

१ अत्र पाठक्रमनिरासायाह—**अयं चेति** ॥ विनिगमनाविरहं परिहरति—**स चेति** ॥ एतेन पूर्वलक्षणस्य निर्दुष्टत्वं तद्धितश्चेत्यस्यादृष्टार्थत्वं चेति सूचितम् । एवं च नात्राव्याप्त्यतिव्याप्तिदोषाविति भावः ॥ छाया ॥

२ **प्रत्नेत्येति** । नन्वित्यादिः ॥ ननु सन्नमेदे कथमिदमत आह—**प्रकारेति । तत्र**-तयोर्मध्ये ॥ **उत्पन्नेनेत्यस्यानुषङ्गोऽग्रे** ॥ नन्वेवं लोकेऽपि प्रयोगापत्तिरत आह— **लोके इति** ॥ छाया ॥

३ कैयटस्य गतिमाह—**दृष्टान्तेति** ॥ यथाऽयं शसादिष्वन्तर्भूतस्तथाऽन्योऽपि तदनन्तर्भूतोऽस्तीत्यर्थः ॥ भाष्यं तु **तेनैकदिगित्या**शयकमेवेति तात्पर्यम् ॥ छाया ॥

४ प्रदीपीयन्यूनतां परिहरति—**भाष्ये वतिरिति** । इदमुपलक्षणम् । **तत्र तस्येवेत्यस्यापि** ॥ अत एवाह—**न त्विति** ॥ **तस्य**—तदर्थस्य ॥ **आदिना** कर्मकर्तृत्वम् ॥ **आहुः** । सिद्धान्तिनः ॥छाया॥

५ अलिङ्गमसंख्यमित्यस्य निर्दुष्टत्वमेवेत्यभिप्रेत्याह—**अथवेति** ॥ छाया ॥

६ प्रकृतासंबद्धत्वादाह—**पटादीति** ॥ ननु अविभक्तित्वमपीति वाच्येऽलिङ्गेति प्रकृतानुपयुक्तमत आह—**तथा चेति** । तस्य तस्य प्रसिद्धत्वे चेत्यर्थः ॥ **अपिनाऽलिङ्गेत्यस्य** समुच्चयः ॥ प्रदीपस्थापिसमुच्चयोऽयमर्थः । तथा चोभाभ्यामुभयोरप्यदुष्टत्वं सूचितम् । एतदभिप्रायकमेव न **चैतयो**रित्यग्रिमभाष्यम् ॥ छाया ॥

७ नन्वेवमव्ययादिति सूत्रं व्यर्थमत आह—**अव्ययादिति** ॥ छा.॥

८ 'ये त्वेतेभ्यो वैयाकरणेभ्यो' इति आ. पाठः ॥

९ **आतश्चेति** । इतोऽपि वक्ष्यमाणादित्यर्थः ॥ अत एव **च** संगतिः ॥ **अन्यत्वं** परस्परसाधनापेक्षया क्रयविषयतया च वस्त्रस्यैवेति बोध्यम् ॥ एकमित्याद्युक्तमुपसंहरति— **अभिज्ञाश्चेति** ॥ **तदिति**। त्रतसादेरविभक्तिकप्रयोगकरणम् । **एवं**-वक्ष्यमाणप्रकारेण **संदृश्यतां**—ज्ञायतामित्यर्थः । तमेवाह—**अर्थेति** ॥ **एतद्**—अर्थस्वरूपम्। **एवंजातीयकं**—एवंस्वभावकं येनात्रार्थे विभक्तिर्न भवतीत्यर्थः ॥छाया॥

१० 'वस्त्रं वस्त्रे धने मूल्ये भृतौ' इति हेमचन्द्रकोशादनेकार्थत्वेनात्र ग्राह्यमर्थमाह—**वस्त्रः-मूल्यमिति** ॥

११ **किंचिदितीति** । इत्यादिनेत्यर्थः ॥ किंचित्पदस्वारस्यान्न्यूनतानिरासार्थमाह—**अन्ये त्विति** ॥ तत्त्वमुपपादयति—**तथा चेति**। द्रव्यप्रधानत्वे चेत्यर्थः ॥ **अत्र**-आद्यभिन्ने ॥ युक्तं चैतदित्याह—**पूर्वेति** । तथा च तृतीयप्रकारस्यापि तदिष्टत्वादिति भावः ॥ छाया ॥

किंचित्साधनप्रधानम् । अन्यत्तु नापि क्रियाप्रधानम्, नापि साधनप्रधानम्। यथा-'स्वः पश्य, लोहितगङ्गम्-उन्मत्तगङ्गं देशः' इति। तथा चात्र नपुंसकत्वमव्ययीभावश्चेत्यन्वाख्यायते। पूर्वं च भाष्यकारेणोक्तम्-**स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां चेति**। तस्माद्बाहुल्याभिप्रायेणाऽलिङ्गमसङ्ख्यमव्ययमित्युच्यते। उच्चैर्नीचैरिति सप्तम्यर्थे वर्तते॥ **हिरुक् पृथगिति**। क्रियाविशेषणत्वादेषां क्रियाप्राधान्यम्। क्रियापदप्रयोगमन्तरेणापि 'पृथक् देवदत्तः' इत्यादिप्रयोगः क्रियाक्षेपादुपपद्यते॥ शब्दशक्तिस्वाभाव्याच्चैकस्मिन्नर्थे विधीयमानयोः 'तेनैकदिक्' 'तसिश्च' इत्यण्तसोर्भिन्नधर्मत्वम्। तत्र 'पैलुमूलम्' इति द्रव्यं प्राधान्येनाभिधीयते। 'पीलुमूलतः' इति तु द्रव्योपसर्जनस्तृतीयार्थ इति तस्य साधनप्रधानता॥

**(उद्द्योतः) अत्रैवेति**। अलिङ्गासंख्यत्व एवेत्यर्थः॥ **उपपत्तिः**-युक्तिः क्रियाप्रधानत्वादिरूपा। **एवमनुगम्यमान**मित्यस्योपपाद्यमानमित्यर्थः॥ **नापि साधनप्रधानमिति**। किं तु द्रव्यप्रधानमिति शेषः॥ **तस्माद्बाहुल्येति**। एवं च तादृशबहुमध्यपाठेन स्वरादीनामप्यलिङ्गासंख्यत्वमनुमीयते। अनेककारकशक्तियोगमात्रेण तु सत्त्ववचनत्वमिति भावः॥ उन्मत्तगङ्गादीनां वाचनिकमव्ययत्वमव्ययीभाव इति महासंज्ञया सूच्यते॥ सत्त्वप्रधानता तु 'इदं स्वर्' इति सर्वनाम्ना परामर्शात्॥ ग्लान्याद्यर्थकं 'प्रताम्'इत्याद्यपि सत्त्ववचनमित्यन्ये॥ ननु तदर्थे कारकान्वयाभावान्न तस्य क्रियात्वमत आह—**क्रियाविशेषणत्वादिति**। क्रियायामेव विशेषणत्वादित्यर्थः॥ क्त्वान्तुमुनन्तादिवदिति भावः॥ स्वरादीनां घटादीनां च स्वःपतिर्घटोदकमित्यादौ नामार्थेऽप्यन्वयः॥ **एतेन** तेषामपि क्रियाविशेषणत्वाक्रियाप्राधान्यं दुर्वारमित्य**पास्तम्**॥ अत एवैतदर्थे न कारकाणामन्वयः। तदन्वययोग्यस्य साध्यत्वरूपक्रियात्वस्य तत्राभावात्॥ **क्रियाक्षेपादिति**। स्थित्यादिक्रियाक्षेपादित्यर्थः॥ **द्रव्यं प्राधान्येनेति**। पीलुमूलसमानदिक्स्थमिति हि तत्र बोधः॥ **द्रव्योपसर्जन इति**। तसप्रत्ययाभिधेयद्रव्योपसर्जनः प्रकृत्यभिधेयस्तृतीयार्थ इत्यर्थः॥ तृतीयार्थश्च तत्र साहित्यम्। पीलुमूलेनैकदिक्-पीलुमूलतः। एकदिक्स्थपीलुमूलसाहित्यमित्यर्थः॥ अन्ये तु—पीलुमूलेन समानदिशीत्यर्थकम्-अधिकरणशक्तिप्रधानं पीलुमूलत इतीत्याहुः॥ भाष्ये—**न चैतयोरर्थयोरिति**। यद्यपि क्रियायामेकत्वसंख्या रूपपसूत्रे भाष्ये उक्ता, पचतिरूपमित्यादिवाच्यायाश्च नपुंसकत्वयोग उक्तः, तथापि अव्ययवाच्ययोरेतयोर्लिङ्गसंख्याभ्यामयोग इत्यर्थान्न दोष इति दिक्॥

**( सूत्रसमर्थनभाष्यम् )**

**अथाऽव्ययसर्वविभक्तिरित्युच्यते। एवमपि न दोषः।**

**कथम्?**

**इदं चाऽव्ययत्वे अतिबहु क्रियते—एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति।**

**कथं तर्हि?**

**एकवचनमुत्सर्गः करिष्यते। तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः॥**

---

१ 'वर्तते इति साधनप्रधानता' इति मुद्रितपाठः॥

२ तद्वदत्रापि प्राप्तं व्यभिचारमुद्धरति-**क्रियेति**। एवं च न क्रियात्वमिति शङ्काशयः॥ **क्रियाक्षेपादिति**। स चार्थ एवेति भावः॥ छाया॥

३ **ख्यत्व एवेत्यर्थ इति**। अनेन **तच्चाप्येतदि**ति भाष्यस्यार्थ उक्तप्रायः॥ **रूपेति**। अनेन **एव**मित्यस्य भाष्यीयस्यार्थ उक्तप्रायः। अत एव द्वितीयार्थमाह—**उपपाद्येति॥ इत्यर्थः**-इति भाष्यार्थः॥ साकाङ्क्षत्वादाह—**किं त्विति**॥ एतत्तात्पर्यमाह—**एवं चेति**॥ तदभिप्रायेण तदुक्तौ चेत्यर्थः॥ **मध्येति**। तद्घटितसमुदायघटकतया पाठेनेत्यर्थः॥ अलिङ्गेत्यादेरुभयाभावादौ तात्पर्येणाव्ययीभावे एकसत्त्वेऽपि द्वयोरभावादितस्तदस्तीत्याह—**अप्यलिङ्गेति**॥ नन्वेवमुक्तभाष्यविरोधोऽत आह—**अनेकेति**॥ ननु नञ्द्वयसत्त्वेन प्रत्येकाभावो विवक्षितो नोभयाभावादिः। एवमनेकेत्यपि न युक्तम्, पच्यादिक्रियायामपि तत्त्वसत्त्वादतः सिद्धान्तमतं प्रागुक्तं तद्द्वैविध्यमेवेत्येवंरूपं समर्थयितुमाह—**उन्मत्तेति**॥ छाया॥

४ **ता तु**-ताऽपि॥ [ **सर्वनाम्नेति**। तथा चोक्तम्—

**"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।**

**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥" इति॥**

व्याख्यातं चैतत्पद्ममञ्जर्याम्—**इदं** तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमित्युच्यते॥ स्वार्थेनेति शेषः। सिद्धरूपो योऽर्थः स्वार्थेन विशेष्यतया विवक्षितस्तद् द्रव्यमित्यर्थः॥ उक्तं च—

**'स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदुच्यते॥' इति॥**

एवं च कृत्वा सीदति-निविशते यत्र जात्यादिकं शब्दप्रवृत्तिनिमित्तविशेषणभावेनेति सत्त्वं-द्रव्यम्। सदेरौणादिकस्त्वप्रत्ययः **'ताभ्यामन्यत्रोणादयः'** इत्यधिकरणसाधन इति॥ ] एवं चोक्तभाष्योपपत्त्याऽऽद्यमतमेव युक्तमिति भावः। **अन्ये**-सिद्धान्तिनः॥ छाया॥

५ अनतिप्रसङ्गायाह—**क्रियायामेवेति**॥ तस्याइष्टचरत्वं निराचष्टे—**क्त्वान्तेति**॥ तत एवाह—**स्वरादीनामिति**॥ तत्फलमाह—**एतेनेति**॥ क्रियाविशेषणत्वेऽपि नामार्थेऽप्यन्वये तत्रैवाविशेषणत्वेनेत्यर्थः। **तेषामपि**-स्वर्घटादीनामपि॥ नन्वेतदर्थस्य क्रियात्वमेव कुतो नात आह—**अत एवेति**॥ अस्यार्थमाह—**तदन्वयेति**॥ छाया॥

६ **तसिति**। तसिप्रत्ययेनाभिधेयं यद्द्रव्यमेकदिक्स्थं तदुपसर्जनः। तसेः प्रकृतिः पीलुमूलेनेति तदभिधेयः स इत्यर्थः॥ स च क इत्याशङ्कायामाह—**तृतीयेति**॥ तदुपपत्तिमाह—**पीलुविति**॥ **एकेति**। पीलुमूलैकदिक्स्थयोः साहित्यमित्यर्थः॥ अजाद्यदन्तत्वात्तस्य पूर्वनिपातः॥ छाया॥

७ तथा बोधस्याक्षरमर्यादयाऽलाभादाह—**अन्ये त्विति**॥ छाया॥

८ प्रक्रमानुरोधादाह—**तथापीति**॥ अव्ययीभावस्थले गतिरुक्तैवेत्याह—**दिगिति**॥ छाया॥

९ इदानीं सूत्रं समर्थयन्नाह—**अथापीति**॥ छाया॥ 'अथवाव्यसर्वविभक्ति' इति आ॰ पाठः॥

( प्रदीपः ) **अद्यत्व इति ।** सूत्रारम्भकाल इत्यर्थः । पूर्वं हि न्यासान्तराश्रयेण सूत्रं प्रत्याख्यातम् ॥ **अतिबह्विति ।** एकस्मिन्नित्यपनीय 'एकवचनम्' सूत्रं इति कर्तव्यम् । ततः 'द्विबह्वोर्द्विवचनबहुवचने' इत्येवं कर्तव्यम् । तेन द्वित्वबहुत्वयोर्द्विवचनबहुवचने भविष्यतः । एकवचनं त्वेकस्मिन्नपि भविष्यति, अलिङ्गसङ्ख्येभ्योऽव्ययेभ्यश्च ॥ ननु 'कर्मणि द्वितीया' इत्यादिना कर्मादिषु द्वितीयादीनां नियतत्वात्कथमेकवचनमव्ययेभ्यः स्यात् ॥ नैष दोषः । एतदर्थमेव 'एकवचनम्' इत्येतत् क्रियतेऽप्राप्तप्रापणार्थम् । तेन कर्माद्यभावेऽपि भवति । द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां वाध्यते ॥

( उद्योतः ) **सूत्रारम्भकाले इति ।** [1]यद्यपि न्यासान्तरेऽपि एकस्मिन्निति बह्वेव, तथापि एकग्रहणे सति ज्ञापकादितः सर्वविभक्त्युत्पत्तावस्य सूत्रस्याप्यानर्थक्यमिति एतत्सूत्रपाठकाले एतत्सूत्रसहितं एकस्मिन्नित्यतिबहु व्यर्थं क्रियत इति एकग्रहणं त्यक्त्वाऽस्य सार्थक्यं वक्तुं योग्यमित्यर्थ इति भावः ॥ **न्यासान्तरेति ।** पाठाश्रयेणालिङ्गासंख्यमित्यनेन वेत्यर्थः ॥ भाष्ये-**अतिबह्विति** बहुशब्दो वैपुल्यवाची । अतिबहु शास्त्रं व्यर्थं क्रियत इत्यर्थः ॥ **अलिङ्गासंख्येभ्य इति ।** [2]द्विवचनबहुवचनविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यैकत्वाभावेऽपि एकवचनप्रवृत्तिरिति भावः ॥ **कथमेकवचनमिति ।** प्रथमाऽपि **मात्रग्रहणात्** यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसंभावना तत्रैवेति भावः ॥ **अप्राप्तेति ।** द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधाने एकवचनस्यार्थात्तदभावे कर्मादौ सिद्धत्वेन सामर्थ्यादिति भावः । अप्राप्तिश्च कर्मत्वाद्यभावप्रयुक्तैव **न** तु प्रातिपदिकत्वाभावप्रयुक्ताऽपि, सुप्विध्येकवाक्यत्वात् । तेन तिङन्तादिभ्यो नापत्तिरिति बोध्यम् ॥ **किं च** सर्वथाऽप्राप्तावेवास्य विधायकत्वमिति पचतिकल्पमित्यादौ न सर्वैकवचनापत्तिरिति बोध्यम् ॥ यद्यप्यनिर्दिष्टार्थत्वात्स्वार्थे विधीयमानस्यास्य न द्वित्वादौ प्राप्तिस्तथापि पञ्चकप्रातिपदिकार्थपक्षे एकत्व इव द्वित्वादावपि प्राप्तिरित्याशयेनाह—**बाध्यत इति ।** [3]अत्र पक्षे द्व्येकयोरिति सूत्रमपि विध्यर्थमेवेति भावः ॥ यद्यपि अव्ययात्सर्वविभक्त्युत्पत्त्याऽयं न्यासो दूषितः, तथापि सामान्यापेक्षप्रत्ययनियमे एकवाक्यतया विधाने वा कस्या अप्यप्राप्त्येदं विधायकमिति तत्पक्षे सूत्रसार्थक्योपपादनमिदम् । [4]एवं चैतदेव [5]तयोरन्यतरपक्षाश्रयणस्यैकपदे[6] वाक्यार्थानन्वयित्वस्य च ज्ञापकमिति बोध्यम् । एतत्सर्वमुत्सर्गपदेन भाष्ये सूचितम् ॥

( मतान्तरभाष्यम् )

**न चाप्येवं विग्रहः करिष्यते—न सर्वाः-असर्वाः, असर्वा विभक्त[7]यो यस्मादिति ॥**

**कथं तर्हि ?**

**[8]न सर्वा असर्वा, असर्वा विभक्तिरस्मादिति । त्रिकं पुनर्विभक्तिसंज्ञम् ॥**

( प्रदीपः ) न सर्वा विभक्तय उत्पत्तौ निमित्तमस्य-इति येन वृत्तिकारेण व्याख्यातं तन्मतं दूषितम् ॥ इदानीं वृत्तिकारान्तरमतं विशेषदर्शनेन संस्क्रियते—**न चाप्येवमिति ।** [9]एवं विग्रहे सर्वशब्दस्य प्रकारकात्स्न्र्येऽपि वर्तनादेकवचनमात्रोत्पत्तावपि सर्वा विभक्तयः सप्त-अव्ययेभ्य उत्पद्यन्ते इति न स्यादसर्वविभक्तित्वम् ॥ **कथं तर्हीति ।** द्रव्यकात्स्न्र्यवृत्तिः सर्वशब्दः । [10]एकैवचनमात्रोत्पत्तौ निरवशेषा विभक्तिर्नोत्पन्ना भवतीति भवत्येवाऽसर्वविभक्तित्वम् ॥ यदा त्वयं न्यायः-प्रथमातिक्रमे कारणाभावात्प्रथमाया एवैकवचनमव्ययेभ्य उत्पद्यत इति, तदाऽसर्वा विभक्तयो यस्मादित्यपि विग्रहे आश्रिते न दोषः ॥ यदा तु खले कपोतिकान्यायेन सर्वैकवचनोत्पत्तिपक्षस्तदैतदुक्तम् । अव्ययीभावादप्ये[11]कैवचनमेवोत्पद्यते, तावतैव 'तृतीयासप्तम्योर्बहुलम्' इत्यस्योपपादनात् ॥

---

१ भाष्यीयातिशब्दसार्थक्यायाह—**यद्यपीति ॥ न्यासान्तरं**—त्रिविधम् ॥ **ज्ञापकेति ।** अव्ययादितीत्यर्थः । आदिनोक्तप्रकारग्रहः । द्वितीयेन तन्मूलत्वात्तृतीयस्यापि संग्रहः ॥ अपौनरुक्त्यायाह—**अतिबह्वितीति ॥** छाया ॥ **बह्वेव**–अतिबहु न, किन्तु बहु । एवशब्देनात्यर्थो निरस्यते । अत्यर्थं सम्पादयति—**तथापीत्यादिना ॥**

२ नन्वेवमपि महासंज्ञाबोधितान्वर्थत्वेन तत्रैव स्यात् नाव्ययेभ्योऽत आह—**द्विवचनेति ॥** नन्वनियतं प्रथमैकवचनं स्यादत आह—**प्रथमापीति ॥** नन्वप्राप्तप्रापणार्थत्वे तिङन्तेऽपि तदापत्तिरत आह—**अप्राप्तिश्चेति ॥ सर्वथेति ।** सामर्थ्यादेवेति भावः ॥ अत एव कैयटेन—**एतदर्थमेवे**त्युक्तम् ॥ एवेनानयोर्निरासः ॥ **अस्य**—एकवचनस्य ॥ छाया ॥

३ इदं सिद्धान्तेऽपि तुल्यमित्याह—**अत्रेति ॥** पञ्चकं स इति पक्षे इत्यर्थः ॥ **अव्ययादिति ।** प्रकारत्रयेणेति भावः ॥ **दूषितः ।** तत्सूत्रे ॥ अत एवावशिष्टं प्रकारद्वयमाह—**सामान्येति ॥** नन्वत्र पक्षे द्वित्वे एकवचनापत्तिरिति नायं युक्तोऽत आह—**एकेति ॥ तत्पक्षे**–अन्यतरपक्षे ॥ **सूत्रेति ।** प्रकृतसूत्रेत्यर्थः ॥ छाया ॥

४ फलितमाह—**एवं चेति ।** तं विना तदभावे चेत्यर्थः ॥ **एतदेव**–प्रकृतसूत्रमेव ॥ अदृष्टार्थमावश्यकत्वादाह—**वाक्यार्थेति ॥** एतेन प्रदीपे **'अपनीय'** इत्यस्य वाक्यार्थघटकमकृत्वेत्यर्थः सूचितः ॥ इदं समूलयति—**एतदिति ।** अन्यथा 'तन्न करिष्यते, योगविभागः करिष्यते' इत्येव ब्रूयादिति भावः ॥ छाया ॥

५ **तयोः**—सामान्यापेक्षप्रत्ययनियम–एकवाक्यतया विधानं–इति पक्षयोः ॥

६ **एकपदे**—एकस्मिन्–इत्येकपदे ॥

७ 'विभक्तयोऽस्मादिति' इति आ. पाठः ॥

८ बहुव्रीह्युत्तरपदकतत्पुरुषे सुबन्तादावतिप्रसङ्गादाह—**न सर्वेति ॥ त्रिकमिति ।** सुप्तिङोरिव त्रीणीत्यपि तत्रानुवर्तते इति भावः ॥ छाया ॥

९ **एवमिति ।** अपिना वक्ष्यमाणसमुच्चयः ॥ **एकेति ।** सर्वासामिति भावः । एवमग्रेऽपि ॥ छाया ॥

१० उत्तरग्रन्थाशयमाह—**एकेति ॥** छाया ॥

११ **एकेति ।** सर्वासामित्यादिः ॥ छाया ॥

**( उद्योतः ) तन्मतमिति ।** दाक्षिरित्यादावतिव्याप्तेरि**तरेतरा-भ्योऽपि दृश्यन्त** इत्येतद्विहितत्रलादिविषयेऽव्याप्तेश्चेति भावः ॥ **वृत्तिकारान्तरेति ।** तद्विग्रहे **यस्येति** अपादानस्यैव संबन्धत्वविवक्षया षष्ठीति ध्वनयितुं भाष्ये—**यस्मादित्युक्तम्** ॥ **विशेषेति ।** एकवचनान्तविग्रहकरणरूपो विशेषः ॥ नन्वेवं सर्वविभक्त्येकवचनोत्पत्तौ बहुवचनान्तविग्रहासङ्गतिरतो भाष्ये—**न चापीति** ॥ तद्व्याचष्टे—**प्रकारेति ।** 'सर्वा विभक्तयः' इत्यस्य सर्वप्रकारा इत्यर्थः ॥ [२]अवयवकार्त्स्न्ये तु बहुवचनं व्यर्थमिति भावः ॥ [३]एकवचनान्तविग्रहे तु अवयवकार्त्स्न्ये एव सर्वशब्द इति 'नाना' इत्यादौ नाव्याप्तिः, नापि दाक्षिरित्यादावतिव्याप्तिरिति भावः ॥ भावे पचतिकल्पमित्यादौ च क्रियायाः स्वत एवैकत्वादेकवचनमेव ॥ तच्च भावे प्रथमपुरुषस्यैव, लान्तसमानाधिकरणयुष्मदाद्यभावादिति **रूपप्सूत्रे** भाष्ये स्पष्टम् ॥ [४]अव्ययेभ्योऽपि प्रथमैकवचनमेवास्तु इत्याह—**यदा त्विति** ॥ **प्रथमेति ।** अनेकनियमबाधे गौरवाच्चेत्यपि बोध्यम् ॥ ननु भाष्योक्तपक्षेऽव्ययेभ्यो युगपत्सर्वविभक्त्येकवचनानां कर्तुमशक्यत्वम्, **पर-श्चेत्युक्तेः ।** किंतु यत्किञ्चिदेव, लुकि तस्य तावतैव पदत्वसंपादनात् विभक्त्यन्तरोत्पत्तौ मानाभावेन बहुवचनान्तविग्रहेऽपि न दोषोऽत आह—**खले कपोतेति** ॥ वाचः क्रमवृत्तित्वाद्युगपदुच्चारणासंभवेऽपि बुद्ध्या युगपत्सर्वोत्पत्तिर्वक्तुं शक्येति भावः ॥ विनि-गमनाविरहोऽत्र बीजम् । प्रक्रियादशायां च बुद्धिरेव मुख्या, असाधूच्चारणायोगात् । **यद्वा**—प्रधानानुरोधेन गुणावृत्तेस्तावत्यः प्रकृतयः स्युरिति भावः ॥ [६]**परे तु** प्राथम्यं स्वादिसूत्रे प्रथमायाः, नियमशास्त्रपर्यालोचनया द्वितीयाया इति न तन्नियामकमिति 'प्रथमातिक्रमे' इत्याद्यसङ्गतम् । तन्न्यायाश्रयणे **निजां त्रयाणामि**त्यत्र त्रयाणामित्यस्य, आद्युदात्तश्चेत्यादावादिग्रहणस्य वैयर्थ्यं चेत्याहुः ॥ **तावतै-वेति ।** टाँङ्योरिति वक्तव्ये तृतीयादिग्रहणं तु वैचित्र्यार्थमिति भावः ॥

**( लाघवभाष्यम् )**

**'एवंगते कृत्यपि तुल्यमेत-**
**न्मान्तस्य कार्यं ग्रहणं न तत्र ।**
**ततः परे चाभिमता न कार्या-**
**स्त्रयः कृदर्था ग्रहणेन योगाः' ॥ १ ॥**

**( प्रदीपः ) एवं गत इति ।** यदा असर्वा विभक्तिरस्मादिति विग्रह आश्रीयते, तदैवं[८] विज्ञाते सत्येतावल्लक्षणमस्तु—**'असर्वविभक्त्यव्ययम्'** इति । पञ्चसूत्री न कर्तव्या । **एतद्** सर्वविभक्तित्वं **कृत्यपि तुल्यम्**—[९]यस्य **कृन्मेजन्त** इत्यनेनाव्ययसंज्ञेष्यते ॥ **मान्तस्येति ।** सूत्रोपलक्षणम् ॥ **ततः पर इति । कृन्मेजन्त** इत्यस्मात् सूत्रात्परे **कृदर्थाः**—कृत्संज्ञाविषयाः **क्त्वातोसुन्कसुन** इत्यर्थः ॥ [१०]**ग्रहणेन**—उच्चारणेन,

---

१ विनेत्यादौ विशेषस्य प्राग्वदनुपादानादाह—**इतरेति** ॥ **तद्विग्रहे**—प्राक्कैयटोक्ते ॥ भाष्येऽत्र कैयटाद्यव्यवहितसंगतिर्लभ्यते सा न युक्ताऽव्यवहितसंगतिसंभवात् ॥ एतेन 'तर्हि पूर्वोक्ते विग्रहे विनेत्यादावव्याप्तिदोष इत्याशङ्क्याह—**न चापीति**।' इति कृष्णोक्तमपास्तम् । तद्भङ्गयन्त्राह—**नन्वेवमिति ।** स्वरादिभ्यः सर्वविभक्त्येकवचनार्थं तथोत्सर्गाङ्गीकारे इत्यर्थः ॥ **असंगतिरिति ।** सर्वविभक्तित्वस्यैव सत्त्वादिति भावः ॥ छाया ॥

२ द्रव्यशब्दार्थमाह—**अवयवेति ।** विभक्त्यर्थभेदाप्रतीत्या तदधिष्ठानप्रकारकार्त्स्न्यासंभवादिति भावः । तत्र तु बहुवचनेनैव तद्भेदप्रतीत्या तदधिष्ठानप्रकारकार्त्स्न्यासंभव इति बोध्यम् ॥ छाया ॥

३ **'कथं तर्हि'** इत्यादिभाष्यतत्कैयटाशयमाह—**एकेति** ॥ **आदिना** यत्रादेरपि संग्रहः ॥ नन्वेवं सर्वैकवचनातिप्रसङ्गोऽत आह—**भावे इति ।** भूयत इत्यादावित्यर्थः ॥ द्वितीये तदव्याप्तेरेवाभावादाह—**तच्चेति ।** तथा च प्राप्तप्रापणार्थमेवेदमिति नातिप्रसङ्गः ॥ छाया ॥

४ कूप्तेति न्यायेनैतद्दृष्टान्तेनाह—**अव्ययेभ्योऽपीति** ॥ तन्न्यायस्यात्रानाश्रयणादाह—**अनेकेति ।** सामान्यापेक्षानेकप्रत्ययनियमेत्यर्थः ॥ **भाष्योक्तपक्षे**—उक्तपक्षे ॥ **न दोष इति ।** एवं च तं निरस्य तदाश्रयणं व्यर्थमेव पूर्ववदिति भावः ॥

५ **युगपदिति ।** परत्वमपि बौद्धमिति भावः ॥ नन्वेवं कल्पने किं बीजमत आह—**विनीति** ॥ एतेनाद्यपक्षस्य दुष्टत्वं सूचितम् । युक्तं चैतदित्याह—**प्रक्रियेति** ॥ मन्दधीनां स्पष्टार्थमाह—**यद्वेति ।** तेषां विधेयत्वलक्षणं शाब्दं प्राधान्यमिति भावः ॥ उद्देश्यत्वलक्षणार्थप्राधान्ये तु सैव गतिरिति बोध्यम् ॥ छाया ॥

६ ननूद्द्योतोक्तहेतुपक्ष आद्यपक्षस्य दुष्टत्वेऽपि कैयटोक्तहेतुपक्षे तस्य न तत्त्वमिति तस्य तत्त्वमेवातः सिद्धान्तमाह—**परे त्विति** ॥ **नियमेति ।** **कर्मणी**त्यस्याष्टाध्याय्यां पूर्वं पाठादिति भावः ॥ **न तदिति ।** अतिप्रसक्तत्वात् ॥ ननु नियमशास्त्राणां विध्यधीनत्वेन न तत्त्वमेव तदुक्तं युक्तमत आह—**तन्न्यायेति** ॥ **तत् कपिञ्जलाधि-**करण ( पू. मी. ११।१।८ ) न्यायानाश्रयणबोधकमिति भ्रान्तं प्रत्याह—**आद्युदेति** ॥ **णस्य**—णस्य च ॥ तथा च कैयटदण्डिकृष्णादयोऽयुक्ता एवेति भाष्यं सम्यगेवेति भावः ॥ छाया ॥

७ नन्वेवं तृतीयादिग्रहणं व्यर्थमत आह—**टाङ्योरिति** ॥ तथा चायमेव पक्षो युक्तो न तु प्रथमैकवचनमेवेति प्रथमैव वेति पक्षद्वयम्, उक्तहेतोः । अत एव **अपञ्चम्या** इति निषेधोऽपि सफलः, उक्तरीत्या तस्यापि सामान्यापेक्षज्ञापकत्वात् । अन्यथोभयमपि न । तदसंगतिः स्पष्टैव । अत एवोपकुम्भं पश्येत्यादौ कर्मत्वादिबोधः पश्येत्यादिक्रियासंबन्धश्च । अन्यथोभयमपि न स्यात् । **एवम् अव्ययादि**ति ज्ञापकात्सप्त विभक्तय इत्यपि पक्षो युक्तः । एतत्सूत्रारम्भसामर्थ्यात् । तत्रेत्थं व्यवस्था—सत्त्ववचनस्थले सप्तैकवचनानि । असत्त्ववचनस्थले प्रथमैकवचनमेव । अत एव **स्वः** पश्येत्यादि भवतीति दिक् ॥ छाया ॥

८ गतार्थतामाह—**एवं विज्ञात इति ।** त्रिकस्य विभक्तित्वेन सर्वैकवचनोत्पत्तावपि निरवशेषविभक्त्यनुत्पत्त्याऽस्त्येवासर्वविभक्तित्वमिति निश्चीयमाने सतीत्यर्थः ॥ शेषेण व्याचष्टे—**एतावदित्यादिना ।** तद्धितग्रहणं मास्त्विति भावः ॥ न तदेव लाघवम्, किंतु महदित्याह—**पञ्चेति** ॥ छाया ॥

९ अनतिप्रसङ्गायाह—**यस्येति** ॥ छाया ॥

१० ग्रहणेनेति पूर्वान्वयीत्याह—**ग्रहेति ।** अनेन पूर्वस्याप्यर्थः सूचितः ॥ छाया ॥

प्रतिपदमित्यर्थः ॥ **योगाश्च**[1] न कर्तव्याः **स्वरादिनिपातमव्ययमित्येवमादयः** पञ्चेत्युपसंहारः ॥

**(उद्योतः)** इदमेव ध्वनयितुं पञ्चयोगान्प्रत्याचष्टे[2]—**एवं गते** इति–भाष्ये ॥ **प्रतिपदमितीति** । **असर्वविभक्ती**ति न्यासेनैव सिद्धत्वादित्यर्थः ॥ भाष्यश्लोके[3]—**तत्रेति** । अव्ययसंज्ञाविधावित्यर्थः ॥ **पञ्चेति** । स्वरादीत्यादिरव्ययीभावश्चेत्यन्ताः[4] ॥

**(गौरवप्रदर्शकभाष्यम्)**

**'कृत्तद्धितानां ग्रहणं तु कार्यं**
**संख्याविशेषं ह्यभिनिश्रिता[5] ये ।'**

**तेषां प्रतिषेधो भवतीति वक्तव्यम् । इह मा भूत्—एको द्वौ बहव इति ॥**

**(उपसंहारभाष्यम्)**

**'तस्मात्[6] स्वरादिग्रहणं च कार्यं**
**कृत्तद्धितानां ग्रहणं च पाठे' ॥ २ ॥**

**(प्रदीपः)** इदानीमतिव्याप्तिपरिहारार्थं तद्धितग्रहणं कर्तव्यम्, तस्मिन् कृते **कृन्मेजन्त** इत्याद्यपि कर्तव्यमिति दर्शयति—**कृत्तद्धितानामिति** ॥ **संख्याविशेषमिति** । तन्निवृत्त्यर्थमित्यर्थः ॥ **तेषामिति** । असति[7] तद्धितग्रहणे एकादीनामप्यसर्वविभक्तित्वात्[8] प्रतिषेधो वक्तव्यः स्यादिति तद्धितग्रहणं कर्तव्यम् । तस्मिन्कृते स्वरादिग्रहणं कर्तव्यं, स्वरादीनामतद्धितान्तत्वात् ॥ ननूभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वं, तथा गोदौ वरणा इति[9], तत एषामपि **तद्धितश्चासर्वविभक्तिरि**त्यव्ययसंज्ञाप्रसङ्ग[10] इत्याह—**कृत्तद्धितानामिति** । प्रतिपदं तद्धिताः पठितव्याः, येषामव्ययसंज्ञेष्यत इत्यर्थः । तस्माद्गणपाठ एवाश्रयितव्यः । प्रपञ्चार्थस्तु सूत्रारम्भः ॥

**(उद्योतः)** **'ये'**[11] इति यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वादाह—**तन्निवृत्त्यर्थमिति** । तदेवं सूत्रं स्थापितमिति वार्तिकोक्तं **सिद्धं तु पाठादि**त्यप्यनाश्रितं[12] स्यात् । एवं चोभयशब्दादौ दोष इति शङ्कोत्तरत्वेनोत्तरभाष्यमवतारयति—**ननूभयेति** । अत[13] एवोभयो**ऽन्यत्रे**त्यस्योदाहरणं—**उभये-उभयाः**[14] इति भाष्ये **सर्वादिसूत्रे** दत्तम् । गोदावित्यादौ **वरणादिभ्यश्चे**ति चातुरर्थिकलुपि युक्तवद्भावात्प्रत्ययार्थस्य द्वित्वादीति बोध्यम् ॥ **इत्याहेति** । इत्याशङ्कायामाहे[15]त्यर्थः ॥ भाष्ये—चस्त्वर्थे । **कृत्तद्धितानामि**त्यत्र कृद्ग्रहणेन कृतामव्ययसंज्ञाविधायके सूत्रेऽपि गणे पाठ्ये इति सूचितम् ॥ कृदित्युप[16]लक्षण**मव्ययीभावश्चे**त्यस्यापि । तदाह—**तस्मादिति** ॥ तदेवं गणपाठमाश्रित्य **तद्धितश्चासर्वविभक्ति**रित्यष्टाध्यायीपाठः प्रत्याख्यातः । तदाह—**प्रपञ्चार्थस्त्विति** ॥

**(आक्षेपभाष्यम्)**

**पाठेनेयमव्ययसंज्ञा[17] कृता, सेह न प्राप्नोति—परमोच्चैः परमनीचैरिति ॥**

---

१ **परे चे**ति चो व्युत्क्रमे इत्याह—**योगाश्चेति** ॥ द्विवचने कार्ये बहुवचनोपपत्तये आह—**उपेति** ॥ छाया ॥

२ **प्रत्याचष्ट इति** । तद्धितग्रहणं विहायेति भावः ॥ छाया ॥

३ भाष्यस्थ-**तत्रे**ति मध्यमणिन्यायेनाग्रेऽप्यन्वेतीति ध्वनयंस्तदग्रे व्याचष्टे—**भाष्येति** ॥ **विधाविति** । तद्विधिसमुदायमध्य इत्यर्थः ॥ छाया ॥

४ तदियत्तामाह—**स्वरादीत्यादिरिति** ॥ छाया ॥

५ 'ह्यभिनिसृता ये' इति आ. पाठः ॥

६ 'ये' **'तेषाम्'** इति बहुवचनेन तद्धितसूत्रत्रयग्रहणमेवेति भ्रमनिरासायोपसंहरति—**तस्मादिति** । तत्रानतिप्रसङ्गाय तदावश्यकत्वादित्यर्थः ॥ छाया ॥

७ चेन तस्योक्तत्रयाणां च समुच्चयः । तदाह—**असतीति** ॥ छाया ॥

८ 'कादीनामतद्धितान्तानामप्यसर्व' इति क. ख. ङ. पाठः ॥

९ **इति** । अनयोरसर्वविभक्तित्वम् ॥ छाया ॥

१० 'व्ययत्वप्रसङ्ग' इति अ. पाठः ॥

११ भाष्यश्लोके **य** इत्यस्य साकाङ्क्षत्वादाह—**तेषामिति** । अन्ययेति शेषः । अन्यथा हि येऽकृत्तद्धिताः संख्याविशेषमभिनिश्रिताः प्रतिनियतास्तदेकनिष्ठा ये एकादयस्तेषां प्रतिषेधो भवतीति वक्तव्यं स्यात् । अतस्तेषां ग्रहणं कार्यमिति योजनया फलितं कैयटोक्तमवतारयति—**ये इतीति** ॥ छाया ॥

१२ अपिनोद्द्योतस्थनिर्दिष्टन्यासान्तरद्वयसंग्रहः ॥ **दोष इति** । प्रकृतसूत्रमात्रातिव्याप्तिरित्यर्थः ॥ **रत्वेनेति** । अन्यथा पौनरुक्त्यं स्पष्टमेवेति भावः ॥ छाया ॥

१३ कैयटोक्तं समूलयति—**अत एवेति** । तथा तस्यासाधुत्वादेवेत्यर्थः ॥ छाया ॥

१४ यद्यपि पुस्तकेषु 'उभयाः' इति पाठो दृश्यते । तथापि 'द्वये द्वयाः' इतिवदत्रापि जसि सर्वनामसंज्ञाविकल्प इति संशोधकज्ञानस्य द्वयशब्दे जसि विकल्पस्य भाष्यादिसंमतत्वेऽपि उभयशब्दे विकल्पस्यासाधुत्वेन प्रमादरूपतैव । तस्माद् **'उभये देवमनुष्याः'** **'उभयो मणिः'** इत्येवं क्रमेण भाष्य उपलभ्यमानत्वाद्वचनव्युत्क्रमेणैवात्राप्युदाहरणं दत्तमिति मत्वाऽस्माभिः **'उभया'** इत्यस्य स्थाने **'उभयः'** इति शोधितम् ॥ दाधिमथाः ॥ दाधिमथवदिदानींतनैरपि दशाधिकेषु प्रामाणिकपुस्तकेषु 'उभये उभया इति भाष्ये' इत्येव पाठो दृष्टः । सर्वत्राप्येकरूप्येण दृष्टस्य संशोधनमनुचितमित्याकलय्य पुस्तकदृष्ट एवात्र स्थापितः ॥ 'उभये उभयः इति भाष्ये' इति पाठस्तु न दृष्टिगोचर इति नाश्रितः ॥ अत्रत्यं तत्वं सुधीभिरूहनीयम् ॥

१५ यथाश्रुतासंगतेराह—**इत्याशङ्केति** । तथा सति चासंगतिं निराचष्टे—**चस्त्वर्थ इति** ॥ छाया ॥

१६ न्यूनतां निराचष्टे—**कृदित्युपेति** ॥ भाष्यतात्पर्यमाह—**तदेवमिति** ॥ आद्यस्यावश्यकत्वादाह—**तद्धितेति** ॥ **तद्धित** इत्यादिसूत्रचतुष्टयेत्यर्थः ॥ छाया ॥

१७ 'संज्ञा क्रियते' इति आ. पाठः ॥

( उद्द्योतः ) शङ्कते—भाष्ये-पाठेनेयमिति । स्वरादिनिपातमितीत्यर्थः ॥

( समाधानभाष्यम् )

**तदन्तविधिना भविष्यति ॥**

( प्रदीपः ) **तदन्तविधिनेति** । ***प्रयोजनं सर्वनामाव्ययसंज्ञायाम्*** इति वचनेनेति भावः ॥

( आक्षेपभाष्यम् )

**इहापि तर्हि प्राप्नोति—अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैस इति ॥**

( प्रदीपः ) **इत्युच्चैसाविति** । शक्तिप्रधानान्यप्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति । यथा—दोषामन्यमहः, दोषाभूतमहरिति । तत उच्चैःशब्दस्य प्रक्रियायां द्वितीयान्तस्य समासः ॥

( उद्द्योतः ) नन्वत्यादयो द्वितीययेत्युक्तेः कथमुच्चैःशब्देनाधिकरणशक्तिप्रधानेनाद्वितीयान्तेन समास इत्यत आह—**शक्तीति** ॥ **द्वितीयान्तस्येति** । अतिक्रान्तार्थान्वययोग्यकर्मद्वितीयान्तस्येत्यर्थः ॥ **दोषामन्यमित्यत्र** कर्मणीत्यधिकारे आत्ममाने खश् । दिनं रात्रिं मन्यत इत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**उपसर्जनस्य नेति प्रतिषेधो भविष्यति ॥**

( आक्षेपभाष्यम् )

**स तर्हि प्रतिषेधो वक्तव्यः ॥**

( आक्षेपभाष्यम् )

**न वक्तव्यः । सर्वनामसंज्ञायां प्रकृतः प्रतिषेध इहानुवर्तिष्यते ॥**

( आक्षेपसाधकभाष्यम् )

**स वै तत्र प्रत्याख्यायते ॥**

( समाधानभाष्यम् )

**यथा स तत्र प्रत्याख्यायते, इहापि तथा शक्यः प्रत्याख्यातुम् ॥**

( अनुयोगभाष्यम् )

**कथं च स तत्र प्रत्याख्यायते ?**

( समाधानभाष्यम् )

**महतीयं संज्ञा क्रियत इति ॥ इयमपि च महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥**

**कुत एतत् ?**

**लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—न व्येतीत्यव्ययमिति ॥**

( अनुयोगभाष्यम् )

**क्व पुनर्न व्येति ?**

( प्रदीपः ) **क्व पुनरिति** । श्लोके सप्तमीनिर्देशात् प्रश्नेऽपि सप्तमी निर्दिष्टा ॥

( उद्द्योतः ) **प्रश्नेऽपीति** । 'व्येति' इत्यस्य विविधं प्रकारं गच्छतीत्यर्थः । 'क्व' इत्यस्य किंविषये-इत्यर्थ इति भावः ॥ अन्यथोत्तरानुसारेण **'कान्'**इति प्रश्न उचितः । अत एवाग्रे उक्तम्—**एतानर्थान् केचिद्वियन्तीत्यादि** । विपूर्वस्येणो रूपम् ॥

( समाधानभाष्यम् )

**स्त्रीपुन्नपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति । ये न वियन्ति तदव्ययम् ॥**

**"सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्" ॥ १ ॥**

**तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥**

( प्रदीपः ) **सदृशमिति** । लिङ्गविशेषप्रतिपादने सामर्थ्याभावात् ॥ **विभक्तिष्विति** । कारकेषु । तत्र यानि साधनप्रधानान्यव्ययानि तेषां शक्त्यन्तरानावेशात् क्रियाप्रधानानां च शक्तिसंबन्धाभावात्—**सर्वासु च विभक्तिषु**-इत्युक्तम् ॥ **वचनेष्विति** । एकत्वादिषु । अव्ययीभावस्य शक्तिलिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् । यथा—खल्वादीनां कर्मप्रवचनीयसंज्ञा । तत्र यान्यसत्त्वभूतार्थाभिधायीन्यव्ययानि तेषां लिङ्गादिभिरयोगः, तेषां द्रव्यधर्मत्वात् । सत्त्ववाचिनामपि शब्दशक्तिस्वाभाव्यात्तदयोगः । यथा—युष्मदस्मदोर्लिङ्गायोगः ॥ **केचित्तु** लिङ्गादिविशेषेणायोगात् तत्सामान्येन तु योगमव्ययाना**माहुः** ॥ तदयुक्तम् । लिङ्गादिसामान्यसद्भावे प्रमाणाभावात् ॥ **यन्न व्येतीति** । नानात्वं न गच्छति, सत्त्वधर्मान्न गृह्णातीत्यर्थः ॥ ३८ ॥

( उद्द्योतः ) **ये न वियन्ति**—एतानर्थान् येऽर्था न वियन्ति—विविधप्रकारप्रापकान्न प्राप्नुवन्ति **तत्**—तद्वाचकमव्ययमित्यर्थः । द्विरवा-

---

१ इदमोऽत्र बुद्धिस्थपरामर्शकत्वमित्याह—**स्वरादीति** । तस्यैव स्थितत्वादिति भावः ॥ छाया ॥ 'इयं' पदार्थमाह—**स्वरेति** ॥

२ विशेष्यस्याभावाद्येन विधीत्यस्याप्राप्तेराह—**प्रयोजनमिति** ॥ छाया ॥

३ दिनं कर्तृ आत्मानं रात्रिं मन्यते इत्यर्थः । कूलं पिपतिषतीतिवन्मननकर्तृत्वारोपः । ( र. ना. )

४ 'संज्ञाकारः' इति आ. पाठः ॥

५ **प्रश्नेऽपीतीति** । कर्मणोऽधिकरणत्वविवक्षयेत्यर्थः ॥ तच्च वैषयिकं तद्वदित्याह—**व्येतीति** ॥ छाया ॥

६ **अत एवेति** । कर्माकाङ्क्षाया अन्तरङ्गत्वादेवेत्यर्थः ॥ यथाश्रुतासंगतेराह—**एतानिति** ॥ छाया ॥

७ व्यवस्थामाह—**तत्रेति** । तेषां मध्य इत्यर्थः । **आदिना** संख्याकारके ॥ **तेषां**-लिङ्गादीनाम् ॥ छाया ॥

८ दृष्टान्तमाह—**यथेति** ॥ छाया ॥

९ ननु लिङ्गस्य शब्दधर्मत्वस्यापि सत्त्वेन साक्षाच्छब्दपरत्वेन कुतो न व्याख्याऽत आह—**द्विरवादेरिति** ॥ अत्रादिः प्रकारे ॥ छाया ॥

देरर्थधर्मत्वादिति बोध्यम् ॥ ननु विभक्तिवचनशब्दयोः प्रत्ययपरत्वेऽन्यतरवैयर्थ्यमत आह—**कारकेष्विति**। विषयसप्तम्य एताः ॥ सादृश्यं तत्तल्लिङ्गाद्यभावानुयोगित्वेन ॥ नन्वेवं[2] स्वरादिवाच्यानां कर्मत्वादियोगसत्त्वेन सकलकारकविषये न कारकाभावानुयोगित्वरूपं सादृश्यमत आह—**तत्र यानीति** ॥ **साधनं**–शक्तिः । तादृशान्युच्चैरादीनि ॥ तेषु च[3] कारकशक्त्यन्तरायोगात्सर्वकारकविषये कारकाभावानुयोगित्वमस्त्येवेत्यर्थः ॥ **शक्तिः**–कर्मत्वादिः ॥ **वचनादिति । अव्ययीभावश्चे**ति वचनादित्यर्थः । **सङ्ख्याभावा**दिति वाऽर्थः । 'मशकार्थः' इत्यादौ अभावस्य फलत्ववत् अत्र तदभावस्य कारणत्वमिति बोध्यम् ॥ **यथेति** । क्रियाहेतुकसंबन्धविशेषद्योतका हि अन्वर्थबलात्कर्मप्रवचनीयाः । स्वत्योस्तत्त्वाभावेऽपि क्रियापदसंनिधौ क्रियागतविशेषद्योतकयोरपि यथा संज्ञा, तथा प्रकृतेऽव्ययीभावादीनामित्यर्थः ॥ **सत्त्ववाचिनामपीति** । स्वरादीनामिति शेषः ॥ **तद्योगः**–लिङ्ग[4]सङ्ख्याऽयोग इत्यर्थः ॥ **सदृशमि**त्यत्रोक्तं सादृश्यं निरूपयितुम्—**यन्नव्येतीत्यादि** । अत्रापि[5] लिङ्गेष्वित्याद्यावृत्त्या संबध्यते ॥ **नानात्वमिति** । एतेषु[6] यन्न व्येति–एतद्विषये यन्नानात्वं न प्राप्नोति तदव्ययमित्यर्थः ॥ क्वचित्तु **नाना न गच्छती**ति पाठः, तदा एतद्विषयमनेकप्रकारं न प्राप्नोतीत्यर्थः ॥ ३८ ॥

---

**( ३५ अव्ययसंज्ञासूत्रम् ॥ १ । १ । ६ आ. ११ )**

## कृन्मेजन्तः ॥ १ । १ । ३९ ॥

**( अन्वयाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**कथमिदं विज्ञायते—कृद्यो[7] मकारान्त इति, आहोस्वित्-कृदन्तं यत् मकारान्तमिति ।**

**किं चातः ?**

**यदि विज्ञायते—कृद्यो मान्त इति, 'कारयांचकार-हारयांचकार' इत्यत्र न प्राप्नोति ॥**

**अथ विज्ञायते—कृदन्तं यन्मान्तमिति, 'प्रतामौ प्रतामः' अत्रापि प्राप्नोति ॥**

**( प्रदीपः ) कृन्मेजन्तः ॥ ३९ ॥ कथमिति** । किं मेजन्तग्रहणेन पूर्वं कृद्विशेष्यते, पश्चात्तु कृता तदन्तविधिः । आहोस्वित्पूर्वं कृता तदन्तविधिः, पश्चात्तु कृदन्तं मेजन्तग्रहणेन विशेष्यत इति **प्रश्नः** ॥ **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति चात्र तदन्तविधिः ॥ अथवाऽन्वर्थसंज्ञाश्रयणात्प्रत्ययग्रहणे संज्ञाविधावप्यत्र तदन्तविधिर्भवति । न हि केवलस्य प्रत्ययस्याप्रयोगार्हस्य नानागर्मनमगमनं[8] वा संभवति ॥ **कारयांचकारेति** । लिडत्र कृत्, स च मान्तो न भवति ॥ **प्रतामाविति** । क्विपि लुप्ते प्रत्ययलक्षणेन कृदन्तमेतद्भवति । श्रुत्या च मान्तम् ॥

**( उद्द्योतः ) कृन्मेजन्तः ॥ ३९ ॥ किं मेजन्तेति** । कृतो मेजन्तस्य प्रत्ययमात्रस्य संज्ञा, उत कृदन्तस्येति न शङ्काऽर्थः । **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति तदन्तविधेरित्याशयः ॥ **पश्चात्त्विति** । मेजन्तो यः[9] कृदन्तमव्ययमित्यर्थ इति भावः ॥ संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादाह—**प्रयोजनमिति** ॥ ननु तद्वचनमप्रत्ययांशे चरितार्थमत आह—**अथवाऽन्वर्थेति** । एवं चाव्ययत्वप्रयोजकस्य महासंज्ञालब्धार्थस्य केवलप्रत्ययेष्वभावात्तदन्तविधिरिति भावः ॥ अनयैव रीत्या सर्वादिगणे डतरडतमाभ्यां तदन्तविधिर्बोध्यः ॥ नाना[10]-

---

१ **कारकेष्वितीति** । कारकादिष्वित्यर्थः । तेन सम्बन्धपरिग्रहः ॥ प्रसिद्धत्वात्तथोक्तिः ॥ छाया ॥

२ **एवं**-उक्तरूपेण सादृश्याङ्गीकारे ॥ तत्रादिना कारकस्यापि ग्रहणात् ॥ **तत्र**-तेषां मध्ये ॥ छाया ॥

३ चस्त्वर्थः ॥ एतदर्थमपि कारकेष्वित्युक्तम् ॥ प्रथमासूत्रे वचनपदेन संख्याग्रहणादाह—**संख्याभावादिति** । तस्या अभावादित्यर्थः ॥ नन्वभावस्य न ततो लाभोऽत आह—**मशकेति** ॥ छाया ॥

४ कारकयोगसत्त्वादाह—**लिङ्गेति** ॥ छाया ॥

५ साकाङ्क्षत्वादाह—**अत्रापीति** ॥ छाया ॥

६ अत एवाह—**एतेष्विति** । लिङ्गादिष्वित्यर्थः ॥ विषयसप्तमीत्याह—**एतदिति** ॥ छाया ॥

७ **कृद्यो मकारान्त इति** । मेजन्तस्य पूर्वं कृत्यन्वयं विधाय पश्चात् प्रयोजनं सर्वनामाव्ययमित्यनेन तदन्तविधिः, उत मेजन्तस्य कृदन्त एवान्वयः । मेजन्तस्य कृत्येवान्वये आमः कृत्वाभावान्मान्तत्वेऽपि लिटः कृत्वात्प्रत्ययलक्षणेन तदन्तत्वेऽपि कारयाञ्चकारेत्यादौ कारयामित्यस्य नाव्ययसंज्ञेति दोषः । मेजन्तस्य कृदन्त एवान्वये च प्रतामावित्यादौ क्विपःप्रत्ययलक्षणेन कृदन्तत्वात् मान्तत्वस्य च श्रुतत्वादव्ययसंज्ञा प्राप्नोतीति दोषः ॥ कृद्यो मकारान्त इति भाष्यस्य मेजन्तो यः कृत्तदव्ययसंज्ञमिति नार्थः, प्रयोजनं सर्वनामाव्ययेत्यस्य जागरूकत्वात् कारयाञ्चकारेतिदोषदानानुपपत्तेश्च ॥

८ 'नानागमनमनानागमनं' इति क. ख. पाठः ॥

९ **यः कृदिति** । श्रुतत्वादिति भावः ॥ **त्ययांशे इति** । अव्ययसंज्ञाविधायकपञ्चसूत्र्युद्देश्यसमुदायघटकाप्रत्ययांश इत्यर्थः ॥ बहूनामनुरोधो न्याय्य इति न्यायादिति भावः ॥ **एवं च**-तदाश्रयणे च । तत्साहचर्यादप्यत्रेत्थमिति ध्वनयन्नाह—**अनयैवेति** ॥ नानागमनस्यैव प्रकृत उपयोगेन द्वितीयमधिकमतो वाशब्दस्येवार्थत्वेन योजयति—**नानागमनमिवेति** ॥ **संभेति** । बहुव्रीहिर्देशश्चात्र शब्दस्वरूप एव ॥ तत्रादृष्टचरत्वनिरासायाह—**संभेति** ॥ छाया ॥ 'यः कृत्तदन्त' इति घ. प. पाठः ॥

१० 'नानागमनमिवानानागमन' इति क. ख. पाठः ॥ ननु अप्रयोगार्हस्य प्रत्ययमात्रस्य नानागमनासम्भवेऽपि अगमनं नाम गत्यभावः कथं न सम्भवतीत्याह—**नानागमनेति** । यत्र नानागमनबुद्धिः सम्भवति तत्रैवागमनबुद्धिः शब्दजन्येत्यर्थः ॥ अत्र दृष्टान्तमाह—**सम्भावितप्रतियोगितावच्छेदक इति** । अब्राह्मणपदेन तस्यैव बोधो यत्र ब्राह्मणत्वस्य कथञ्चित् सम्भावना स्यात्, न तु सम्भावनामात्रेणापि ब्राह्मणत्वाभाववतो बोधः । नञ् स्वसमभिव्याहृतब्राह्मणादिपदानामारोपितप्रवृत्तिनिमित्तबोधकत्वे तात्पर्यग्राहकः, आरोपितब्राह्मणत्ववानिति बोधः । एतच्च नञ्सूत्रे भाष्ये–ब्राह्मणदृष्टगुणस्य गौरत्वादेर्दर्शनादब्राह्मणे पूर्वं ब्राह्मणोऽयमित्यध्यवस्यति तत उपलभते नायं ब्राह्मण इति, ततः 'अब्राह्मणोऽयम्' इति प्रयुङ्क्ते–इत्यादिना स्फुटमुक्तम् ॥

गमनमिवागमनमपि न संभवति, संभावितप्रतियोगिदेश एव तदभावबुद्धेः शब्देन जननात् । संभावितप्रतियोगितावच्छेदक एव 'अब्राह्मणः' इत्यादिना भेदबुद्धिवदित्याशयः ॥ **लिडत्र कृदिति** । तिङ्भावित्वाभावेनातिङिति न कृत्त्वप्रतिषेध इति भावः ॥ **प्रतामाविति** । तमेः क्विप् । **अनुनासिकस्येति** दीर्घः ॥ **श्रुत्या चेति** । तथा चाव्ययत्वाल्लुक् स्यादिति भावः ॥

( समाधानभाष्यम् )

**यथेच्छसि तथास्तु ॥ अस्तु तावत्-कृचो मान्त इति ॥**

( आक्षेपभाष्यम् )

**कथं कारयांचकार हारयांचकारेति ?**

( प्रत्याक्षेपभाष्यम् )

**किं पुनरत्राव्ययसंज्ञया प्रार्थ्यते ?**

( प्रत्याक्षेपसमाधानभाष्यम् )

**"अव्ययात्" इति लुग् यथा स्यात्[1] ॥**

( प्रदीपः ) **अव्यायादिति लुगिति** । ननु **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** इत्यादि-**लोपेन** सिद्धत्वात् किं लुका प्रयोजनम् । यदा तर्ह्यनुप्रयोगवशात् द्वित्वबहुत्वावगतिः, तदाऽस्ति द्विवचनबहुवचनोत्पत्तिरिति लुगेषितव्यः । अकच् तु न भवति, अपरिसमाप्तार्थत्वाद[2]ज्ञानादिभिर्योगाभावात् ॥

( उद्योतः ) **द्विवचनेत्यादि** । ननु[3] सङ्ख्याया अनुप्रयुज्यमानोत्तरतिङैवाभिव्यक्तत्वात्कथं द्विवचनादिप्रसङ्ग इति चेत् । उपलक्षणमिदम् । सर्वैकवचनोत्पत्तिपक्षेऽमादिलुगर्थमिदमावश्यकमिति न दोषः । **अव्ययात् सुपो लुगिति** ज्ञापकात्सर्वविभक्तिरिति पक्षे च ॥ अकजर्थं तर्ह्यामन्तस्याव्ययत्वमेष्टव्यमत आह—**अकच्त्विति** । **अपरिसमाप्तार्थत्वं** च सङ्ख्याकारकादिविषयकोत्थिताकाङ्क्षत्वम् । अत एवानुप्रयोगः प्रार्थ्यते । स्वार्थे परिपूर्णस्यैव चार्थान्तरेण संबन्ध इति भावः ॥

( समाधानबाधकभाष्यम् )

**मा भूदेवम् । "आमः" इत्येवं भविष्यति ॥**

( समाधानसाधकभाष्यम् )

**न सिध्यति । लिग्रहणं तत्रानुवर्तते ॥**

( समाधानबाधकभाष्यम् )

**लि[4]ग्रहणं निवर्तिष्यते ॥**

( समाधानसाधकभाष्यम् )

**यदि निवर्तते, प्रत्ययमात्रस्य लुक् प्राप्नोति ॥**

( समाधानबाधकभाष्यम् )

**इष्यते च प्रत्ययमात्रस्य । आतश्चेष्यते । एवं ह्याह—"कृञ्चानुप्रयुज्यते लिटि" इति । यदि च प्रत्ययमात्रस्य लुग्भवति तत ए[5]तदुपपन्नं भवति ॥**

( प्रदीपः ) **इष्यते चेति** । पूर्वोक्ताद्धेतोस्तरबाद्यनुत्पादादनुप्रयोग एव तरबाद्युत्पत्तिः, समाप्तार्थस्य प्रकर्षादियोगादित्यर्थः ॥ अत्रैवार्थे ज्ञापकमाह—**आतश्चेति** । त[6]त्र ह्युक्तं—व्यवहितनिवृत्त्यर्थं चेति ॥

( उद्योतः ) ननु तरबाद्यनुत्पत्तावामन्तार्थे प्रकर्षादिप्रतीतिः कथमत आह—**अनुप्रयोग एवेति** । त[7]दुत्पन्नतरपैवैतद्गतप्रकर्ष[8]प्रतीतिरित्यर्थः ॥ भाष्ये लु[9]क्पदमदर्शनमात्रपरमिति भावः ॥

( पक्षान्तरभाष्यम् )

**अथवा पुनरस्तु—कृदन्तं यन्मान्तमिति ॥**

( आक्षेपभाष्यम् )

**कथं प्रतामौ-प्रताम इ[10]ति ?**

( समाधानभाष्यम् )

**आचार्यप्रवृत्तिर्ज्ञापयति—'न प्रत्ययलक्षणेनाव्ययसंज्ञा भवति' इति । यदयं प्रशान्शब्दं स्वरादिषु पठति ॥**

( प्रदीपः ) **प्रशान्शब्दमिति** । त[11]स्य 'मो नो धातोः' इति नत्वस्यासिद्धत्वात्सिद्धमव्ययत्वमिति भावः ॥ **तुल्यजातीयस्य** धातोर्नियमेन व्यावृत्तिः क्रियते-इति कारयांचकारेति भवत्येव मान्तस्याव्ययसंज्ञा ॥ 'शान तेजने' इत्यस्य तु प्रशानिति रूपं न

---

१ मुद्रितपुस्तकेषु 'यथा स्यादिति' इति पाठः । प्रामाणिकपुस्तकेषु तादृशो नोपलभ्यते । अपि च भाष्यकृच्छैलीविरुद्धोऽप्ययमितिशब्दपाठः । 'कथं कारयांचकार हारयाञ्चकारेति' इत्यत्र पूर्वोक्तस्वग्रन्थस्यानुवादादितिशब्दो युज्यते । अत्र तु पूर्वोक्तादन्यएव दोष उद्भाव्यत इति नात्र 'इति'शब्दसङ्गतिः ॥

२ 'दज्ञातादि-' इति क. ख. पाठः । अज्ञानादिभिर्योगाभावे हेतुः—**अपरिसमाप्तार्थ**त्वादिति ॥

३ कैयटं दूषयति—**नन्विति** ॥ **अकजर्थमिति** । नन्वित्यादिः ॥ **तर्हि**–उक्तफलाभावे ॥ छाया ॥

४ 'लिङ्ग्रहणं' इति ख. पाठः ॥ 'लिग्रहणं तत्र निवर्तिष्यते' इति मुद्रितपाठः ॥

५ **एतत्** । अनुप्रशब्दबलेनामन्तादव्यवधानेनानुप्रयोगविधायकं कृञ्चेत्येतत् ॥ छाया ॥

६ **तत्र हीति** । चेन विपरीतनिवृत्त्यर्थत्वसमुच्चयः । यदि आमन्तात्तरबादिकं स्यात्तर्हि तदसंगतिः स्पष्टैव ॥ छाया ॥

७ अनुप्रयोग एवेत्यपादानस्याधिकरणत्वविवक्षायां सप्तमीति ध्वनयन्नाह—**तदुत्पन्नेति** ॥ **कारकादीति** । तदुत्तरप्रत्ययेनेत्यादिः ॥ छाया ॥

८ 'प्रतीतिः कारकादिवदि' इति प. पाठः ॥

९ नन्वेवं लुक्पदघटितभाष्यविरोध एवात आह—**लुक्पदमिति** ॥ एतेन—'पूर्वोक्ताद्–' इति कैयटोक्तं चिन्त्यम्, आमन्तार्थप्रकर्षविवक्षायां ततोऽपि तरबादि तस्यापि चाम इति लुगित्याशयेनैव भाष्यप्रवृत्तेः । अन्यथा प्रत्ययमात्रस्येति शङ्कायाः, तदुत्तरस्य 'इष्यत एव' इत्यादेश्च निर्विषयतापत्तेः—इति रत्नोक्तमपास्तम् ॥ छाया ॥

१० आ. पुस्तके इतिशब्दो न ॥

११ ननु नान्तत्वात्तस्य कथमव्ययत्वसिद्धिरत आह—**तस्येति** ॥ नन्वेवं कारयामित्यादेरपि तत्त्वं न स्यादत आह—**तुल्येति** ॥ छाया ॥

भवति, तस्य क्विबन्तस्य प्रयोगादर्शनात् । लावयतेलौरित्यस्यापि न भवति, अस्मादेव ज्ञापकाल्लाक्षणिकत्वाद्वौकारस्य ॥

( उद्द्योतः ) धातुत्वेन तुल्यजातीयतेत्याह—**धातोरिति** ॥ **तस्य क्विबन्तस्येति** । अत्र चेदमेव[2] भाष्यं मानम् ॥ प्रशामाविति तु शान्तिमद्वाचकस्य । शान्त्यर्थकस्यैव च गणे पाठः, तस्यैव स्वभावेन लिङ्गाद्यभावात् ॥ वस्तुतो[3] गणे मान्तपाठः । प्रयोगे एव तु नत्वम् । यथा स्वरादीनां गणे रेफान्तपाठः प्रयोगे तु विसर्गादीति[4] भाष्याशयः ॥ **अस्मादेवेति** । धातुमात्रापेक्षं ज्ञापकमिति भावः । **लाक्षणिकत्वाद्वेति** । वर्णग्रहणेऽपि तत्प्रवृत्तेरिति तात्पर्यम् ॥

---

( संनिपातपरिभाषाधिकरणम् )

( २१३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ कृन्मेजन्तश्चानिकारोकारप्रकृतिः ॥ * ॥

( भाष्यम् )

**कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम् । इह मा भूत्—आधय आधेः, चिकीर्षव चिकीर्षोरिति ॥**

( प्रदीपः ) **अनिकारोकारेति** । एच एतद्विशेषणं न मकारस्य, व्यवच्छेद्यासंभवात् ॥ **आधय इति** । गुणे कृतेऽन्तरङ्गबहिरङ्गयोरिति न्यायादव्ययसंज्ञा स्यात्, न त्वयादयः ॥ अन्तरङ्गत्वादेव च सुब्लुक् स्यात् । परिभाषान्तरप्रयोजनकथनार्थं **लक्षणप्रतिपदोक्तयोरित्येतदनाश्रितम्** । लाक्षणिकं ह्यनुमेयं, प्रतिपदोक्तं तु प्रत्यक्षमिति तस्यैव ग्रहणं न्याय्यम् ॥

( उद्द्योतः ) भाष्ये—**अनिकारोकारेति** । यस्त्वन्तग्रहणान्नित्ययोगबहुव्रीहिणा 'उपदेशे एजन्तं' इत्यर्थादत्र न दोष इति ॥ तन्न । परिभाषयैव सिद्धेऽन्तग्रहणं न कार्यमिति तदाशयात्[5] ॥ **गुणे कृत इति** । तत्र कृते सुबनपेक्षत्वेनान्तरङ्गाऽव्ययसंज्ञा, सुप्संबन्ध्यपेक्षत्वादयादयो बहिरङ्गाः ॥ **अन्तरङ्गत्वादेवेति** । ननु वर्णमात्रापेक्षयाऽयादय एवान्तरङ्गाः ॥ एवं तर्हि अन्तरङ्गत्वेन बाधकत्वं लक्ष्यते । तेनान्तरङ्गानपीति न्यायेन लुगिति बोध्यम् । तेन च लुक इव तत्प्रयोजकानामपि प्राबल्यबोधनेनानेनैव गुणेऽयादीन्बाधित्वाऽव्ययत्वं बोध्यम् ॥

( २१४ प्रकारान्तरप्रदर्शकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अनन्यप्रकृतिरिति वा ॥ * ॥

( भाष्यम् )

**अथवा—अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम् ॥**

( आक्षेपभाष्यम् )

**किं पुनरत्र[10] ज्यायः ?**

( समाधानभाष्यम् )

**'अनन्यप्रकृतिः' इति वचनमेव ज्यायः । इदमपि सिद्धं भवति—कुम्भकारेभ्यो नगरकारेभ्य इति[11] ॥**

( तृतीयाक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ?**

( २१५ सिद्धान्तिसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ न वा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति[12] ॥ * ॥

( भाष्यम् )

**न वा वक्तव्यम् ।**

---

१ कृदन्तं यन्मान्तमिति पक्षस्वीकारे कृदन्तं यदेजन्तमित्यप्यर्थः सूत्रस्य, तदा दोषमाह—**लावयतेरिति** । लौरित्यस्य प्रत्ययलक्षणेन क्विबन्तत्वं, श्रूयमाणमेजन्तत्वञ्चेत्यव्ययसंज्ञा प्राप्नोति ॥

२ **इदमेव**—ज्ञापकपरं भाष्यमेव । अन्यथा तदसंगतिः स्पष्टैव ॥ ननु प्रशानित्यस्याव्ययत्वे कथं प्रशामौ प्रशाम इत्यत आह—**प्रशामाविति** । चो ह्यर्थे ॥ सिंहावलोकनन्यायेनाह—**वस्तुत इति** । अत एव **प्रशाम्शब्द**मित्येव पाठः । एवं च तस्य संभावनैव नेति तत्सत्त्वेऽपि न दोषः ॥ छाया ॥ अत्र 'प्रशाम्शब्दमित्येव पाठः' इत्येतदुपेक्षणीयम्, प्रयोगे नत्वस्य सर्वसम्मतत्वेन भाष्योक्तप्रयोगे नत्वाभावः कथं समर्थनीय इति विचारणीयम् ॥

३ 'शान तेजने' इत्यादिप्रदीपप्रदर्शितशङ्कासमाधानयोरनावश्यकत्वं प्रदर्शयति—**वस्तुत इत्यादिना** । गणे मान्तस्यैव पाठेन शानधातोस्तद्रूपासम्भवः । भाष्ये 'प्रशान्शब्दं' इति तु गणे मान्तस्यापि प्रयोगे नत्वेन तत् सिद्ध्यतीति भावः ॥

४ **विसर्गादीति** पाठे स्वाराज्यमित्यादौ दीर्घः । स्वस्थ इत्यादौ लोपः सकारो वेति बोध्यम् ॥ छाया ॥

५ स्वरादिषु प्रशान्शब्दस्य पाठेन धातुमात्रात्प्रत्ययलक्षणेन कृदन्तत्वमुपजीव्याव्ययसंज्ञा न भवतीति ज्ञापनात् ॥ श० कौ० ॥

६ 'गौग्लौनौरित्यत्र नेदं सूत्रं प्रवर्तते, उणादीनामव्युत्पन्नत्वात् । व्युत्पत्तिपक्षेऽपि **चिरव्ययमि**त्युणादिसूत्रेण एजन्तोणादिप्रत्ययान्तश्चव्यन्त एवाव्ययसंज्ञ इति नियमस्य कृतत्वात् ॥ श० कौ० ॥

७ **अन्तरङ्गेति** । परिभाषान्तरमिदम् ॥ छाया ॥

८ **लाक्षणिकमिति** । अन्यथेत्यादि ॥ तथाच नैवातिप्रसङ्ग इति भावः ॥ छाया ॥

९ कौस्तुभोक्तिं खण्डयति—**यस्त्विति** ॥ **परीति** । वक्ष्यमाणेत्यर्थः ॥ **तदेति** । वार्तिकेत्यर्थः ॥ **लक्ष्यत इति** । एवं चादावपि सा निष्फला गौरवादित्याह—**तेन चेति** ॥ **अनेनैव**—उक्तन्यायेनैव । तत्प्रयोजकत्वस्य गुणादौ सत्त्वाद् । एवं चैतदर्थपरिभाषान्तरस्वीकारो वृथैवेति भावः ॥ छाया ॥

१० 'पुनर्ज्यायः' इति आ. पाठः ॥

११ आ. पुस्तके इतिशब्दो न ॥

१२ आ. पुस्तके 'तद्विघातस्य' इत्येव इतिशब्दरहितः पाठः ॥

**किं कारणम्?**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति। एषा परिभाषा कर्तव्या॥**

**(प्रदीपः) संनिपातलक्षण इति।** संनिपातः-संश्लेषः, तन्निमित्तो यो विधिः स तद्विघातस्यानिमित्तं, तं संनिपातं यो विहन्ति तस्येत्यर्थः॥

**(उद्द्योतः) तद्विघातस्येति** कर्मण्यणित्याह—**तमिति**। न चानया लुको बाधेऽपि संज्ञाबाधे मानाभावः। साक्षात्परम्परया वा तद्विघातकमात्रस्यानया प्रतिबन्धात्। अत एव 'उपादास्त' इत्यत्र कित्त्वं न। अन्यथाऽनया साक्षादेज्विषयसन्निपातविघातकक्ङिति चेति निषेधाप्रवृत्तिः स्यात्। कित्त्वं तु स्यादेव। तत्फलं तु सन्नियोगशिष्टेत्त्वसिद्धिरेव। एवं च 'उपादेस्त' इति रूपं स्यात्। अत्र हि किदिति न कार्यातिदेशः, इत्त्वकाले तत्कार्यासंभवात्। तस्माद्व्यपदेशातिदेश एव। तस्मात्सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशवत्संज्ञाया अप्यनेनाप्रवृत्तिः। अकजाद्यर्थसंज्ञा तु न, अन्तरङ्गायां तस्यां वहिरङ्गगुणादेरसिद्धत्वात्॥

**(आक्षेपभाष्यम्)**

**कः पुनरत्र विशेषः—एषा वा परिभाषा क्रियेत, अनन्यप्रकृतिरिति वोच्येत?**

**(समाधानभाष्यम्)**

**अवश्यमेषा परिभाषा कर्तव्या। बह्न्येतस्याः परिभाषायाः प्रयोजनानि॥**

**(प्रयोजनप्रश्नभाष्यम्)**

**कानि पुनस्तानि?**

**(प्रयोजनपरं भाष्यवार्तिकम्॥)**

***प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम्॥***

**(भाष्यम्)**

**ग्रामणिकुलं सेनानिकुलमिति। ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुक् भवतीति तुक् प्राप्नोति॥ 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति॥**

**(प्रदीपः) ग्रामणिकुलमिति। इको ह्रस्व** इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं तुको न निमित्तम्। तुकि हि सति पूर्वोत्तरपदयोरानन्तर्यविघातः। यदा तु ह्रस्वमात्रस्य तुगागमो न तदन्तस्य, अवयवावयवश्च समुदायावयवो न भवति तदैतत्प्रयोजनं न त्वन्यथा॥

**(उद्द्योतः) पूर्वोत्तरेति।** अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादिति भावः॥ **अवयवेति।** तथाऽप्रतीतेरित्यभिमानः॥ वस्तुतस्तु इगन्तपूर्वपदस्योत्तरपदसन्निपातविघातः पूर्वपदस्येगन्तत्वसंनिपातविघातश्चेति भाष्याशयः॥ एवं वृत्रहभिरित्यत्र नान्तस्य स्वादिसन्निपातविघातः। नान्तस्वादिसन्निपातनिमित्तकपदत्वनिमित्तको हि नलोप इति॥ लोके पाण्याद्यवयवाङ्गुल्यादेर्भुजपुरुषाद्यवयवत्वव्यवहारात् कैयटोक्तं **चिन्त्यम्। किं च** भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवेक्त्वेन प्राप्तस्य गुणस्य **दीधीवेटीटा**मिति निषेधो व्यर्थः स्यात्। न च ह्रस्वावयवत्वे तुको **यदागमा** इति न्यायेनेक्ग्रहणेन तुग्विशिष्टस्य ग्रहणान्न सन्निपातविघातः, **आने मुगिति** ज्ञापकेन तदनङ्गीकारात्॥ एतेनावयवावयवस्य समुदायावयवत्वे अवयवावय-

---

१ **संज्ञेति**। तस्यास्तदविघातकत्वादिति भावः॥ अत्र मानमाह—**अत एवेति**। सामान्यतः सर्वप्रतिबन्धादेवेत्यर्थः॥ **अन्यथा**—साक्षात्तद्विघातकमात्रप्रतिबन्धे॥ छाया॥

२ **ननु** प्राधान्यात्किदिति कार्यातिदेश इति कथमित्त्वसिद्धिः, तस्य तदकार्यत्वादत आह—**अत्र हीति। स्थाघ्वो**रित्यत्र। यत इत्यर्थः॥ प्रधानत्यागे बीजमाह—**इत्त्वेति**। तस्मादुक्तानिष्टं स्यादेव॥ उपसंहरति—**तस्मादिति**। विघातकक्ङिति **चेति** शास्त्रप्रवृत्तौ निमित्तभूतकित्त्वातिदेशाभाववदित्यर्थः॥ नन्वेवमप्यकजाद्यर्थं संज्ञा स्यादेव, तत्र तद्विघातकत्वस्य तस्याभावादत आह—**अकजेति**॥ छाया॥

३ **प्रयोजनमिति**। ग्रामणिकुलमित्यादौ ह्रस्वत्वं तुग्विधेरनिमित्तमिति परिभाषाप्रयोजनमित्यर्थः॥ एवमग्रेऽपि सर्वत्र॥ छाया॥ अत्र मुद्रितपुस्तकेषु कात्यायनवार्तिकमिदं प्रकल्प्य तदुत्तरं 'ह्रस्वत्वं तुग्विधेरनिमित्तं। क? ग्रामणिकुलम्।' इत्यधिकं व्याख्यानभाष्यं कल्पयन्ति। 'भाष्यग्रन्थोऽत्र त्रुटितो भवेत्, न्याय्य इति मत्वाऽस्माभिः स्थापितः' इति च टिप्पणेन बोधयन्ति। वस्तुतः क्वापि तादृशपाठस्यानुपलम्भान्नेदं कात्यायनवार्तिकमित्येव कल्पनं ज्यायः। सन्निपातपरिभाषायाः प्रयोजनकथनावसरे कात्यायनोक्तानि तदन्यप्रणीतानि स्वाकल्पितानि च सर्वविधानि वार्तिकान्यत्र प्रदर्श्यन्त इतीदमग्रिमञ्च न कात्यायनवार्तिके इत्येव निष्कर्षः। एवञ्च तादृशः कल्पितः पाठोऽप्यप्रामाणिकः॥ अथवा 'प्रयोजनं ह्रस्वत्वं तुग्विधेः' इत्यंशो भाष्यकृत्कल्पितः। भगवता कात्यायनेन प्रयोजनकथनावसरे 'ग्रामणिकुलम्' इत्येवोक्तं स्यात्। तथा तदग्रे 'वृत्रहभिः' इत्येव वार्तिकमिति॥

४ 'मिति अत्र ह्रस्वत्वे' इति आ. पाठः। यत्रोदाहरणोत्तरमितिशब्दः प्रयुज्यते तस्मिन्नेवोदाहरणे निर्भर इति भाष्यकाराणां शैलीसिद्धः सम्प्रदायः। तथा च ग्रामणिकुलम्-वृत्रहभिः-उपादास्त-इत्येतान्येव प्रयोजनानि सिद्धान्तसम्मतानि, तदुत्तरमेवेतिशब्दप्रयोगात्। तदितराणि त्वन्यथासिद्धानीति बोध्यम्॥

५ पूर्वपदस्याशाब्दत्वादाह—**अधीति॥ तथाऽप्रतीतेरि**त्यकारघटितच्छेदः॥ अग्रेऽप्येवमित्याह—**एवमिति॥ इतीत्यस्य** बोध्यमिति शेषः॥ **अभिमान** इति सूचितारुचिमाह—**लोक इति॥** एवं तस्य लोकसिद्धत्वमुक्त्वा शास्त्रसिद्धत्वमाह—**किं चेति**। तथा सतीति शेषः॥ **तदनङ्गीति**। अन्यथा मुग्विशिष्टस्य तत्राप्यक्ग्रहणेन ग्रहणे दीर्घापत्त्या तद्वैयर्थ्यं स्पष्टमेवेति। तेन तद्विशिष्टस्य न्यायप्राप्तग्रहणाभावस्य ज्ञापनमित्यर्थः॥ छाया॥

६ दण्ड्युक्तिं खण्डयति—**एतेनेति॥** अस्यार्थमाह—**भूयो वेति॥** दृष्टान्तवैषम्यमाह—**संयोगेति॥** छाया॥

वेऽपि अवयविनां समवेतत्वापत्तौ घटस्यापि परमाणुषु समवेतत्वेनाप्रत्यक्षसमवेततया वायुवृक्षसंयोगवदप्रत्यक्षत्वं स्यादिति परास्तम् । भूयोऽवयवसंनिकर्षस्यैव फलबलात् कारणत्वेनाक्षतेः । संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः, फलबलादिति दिक् ॥

( प्रयोजननिराकरणभाष्यम् )

**नैतदस्ति प्रयोजनम् । बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक् । "असिद्धं बहिरङ्गमन्तरङ्गे" ॥**

**( प्रदीपः ) बहिरङ्गमिति** । द्विपदाश्रयत्वात् । यदपि **ह्रस्वो नपुंसके प्रातिपदिकस्येति** ह्रस्वत्वम्, तदपि अर्थाश्रयत्वाद्बहिरङ्गम्, तुक् तु वर्णाश्रयत्वादन्तरङ्गः । यदि तु **सन्निपातलक्षण** इत्याश्रीयते तदा ग्रामणिच्छत्रमित्यत्रापि तुग्न स्यात् । ह्रस्वत्वतुगागमयोस्त्वत्र साम्यादन्तरङ्गत्वं बहिरङ्गत्वं नास्तीति छलक्षणस्तुक् सिद्धो भवति ॥

**( उद्द्योतः )** [१]असिद्धत्वेन समाधानं चावश्यकमित्याह—**यदपीति** ॥ **अर्थाश्रयत्वादिति** । इदं त्रयादेशे स्नन्तस्य प्रतिषेधो वक्तव्य इति स्थानिवत्सूत्रस्थेन वार्तिकेन तत्प्रत्याख्यानपरेण भाष्येण च विरुद्धम् । 'प्रातिपदिकरूपसमुदायाश्रयत्वात्' इति वक्तुं युक्तम् । तदेवाह—**वर्णाश्रयत्वादिति** । इयं च बहिरङ्गत्वेन सिद्धिर्नाजानन्तर्ये इति निषेधमनाश्रित्य ॥ 'कुलं ग्रामणि' इत्यत्र नपुंसकह्रस्वत्वे संनिपातपरिभाषयैव न तुक्, प्रातिपदिकस्याजन्तत्वसंनिपातेन जातह्रस्वस्य तदविघातकत्वात् ॥ एतेन परनिमित्तकत्वेन कृत्त्वपित्त्वज्ञानसापेक्षत्वेन च तुगपि ह्रस्वसमान इति नपुंसकह्रस्वत्वे तुक् दुर्वार इत्यपास्तमिति अनुपदमेव वक्ष्यामः ॥ तुकि संनिपातपरिभाषाश्रयणे दोषमप्याह—**यदि त्विति** । [२]अत्रापि वर्णमात्राश्रयत्वेन तुगन्तरङ्गः पूर्वपदोत्तरपदाश्रयो ह्रस्वो बहिरङ्गः, [३]तद्दोषेऽन्यस्यागणनाच्च । तस्मादत्र तुक् न भवत्येवेत्यन्ये ॥

( प्रयोजनपरं भाष्यवार्तिकम् ॥ )

## *नलोपो वृत्रहभिः ॥*

( भाष्यम् )

**वृत्रहभिर्भ्रूणहभिरिति । अत्र नलोपे कृते ह्रस्वस्य पिति कृति तुक् भवतीति तुक् प्राप्नोति ।**

**"संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति ॥**

**( उद्द्योतः )** [४]वृत्रहभिरित्यादौ पदसंज्ञाद्वारा नलोपस्य सन्निपातलक्षणत्वम् ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । असिद्धो नलोपः, तस्यासिद्धत्वान्न भविष्यति ॥**

**( प्रदीपः ) असिद्धो नलोप इति । नलोपः सुप्स्वरेति-**[५]**असिद्धं बहिरङ्गमिति** वा ॥

**( उद्द्योतः ) असिद्धमिति** । सुब्निरपेक्षतुगपेक्षया पदत्वद्वारा तदपेक्षनलोपो बहिरङ्ग इति भावः ॥

( २१६ प्रयोजनवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ उदुपधत्वमकित्त्वस्य निकुचिते ॥ * ॥

( भाष्यम् )

**उदुपधत्वमकित्त्वस्यानिमित्तम् ॥**

**क ?**

**'नि**[६]**कुचिते ।' निकुचितमित्यत्र नलोपे कृते "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" इत्यकित्त्वं प्राप्नोति ।**

**"संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति ॥**

**( प्रदीपः ) निकुचित इति** । कुचेर्भावे क्तप्रत्ययः । **अनिदितामिति** नलोपः । तत्र कित्त्वनिमित्तमुदुपधत्वं **'उदुपधात्–'** इत्यकित्त्वस्यानिमित्तमिति गुणो न भवति ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । अस्त्वत्राकित्त्वम् । "न**[७]**धातुलोप आर्धधातुके" इति प्रतिषेधो भविष्यति ॥**

( २१७ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ नाभावो यञि दीर्घत्वस्यामुना ॥ * ॥

( भाष्यम् )

**नाभावो यञि दीर्घत्वस्यानिमित्तम् ॥**

---

१ संनिपातपरिभाषया तत्रासिद्धेराह—**असिद्धेति** ॥ कैयटं दूषयति—**इदमिति** ॥ तथा सति तिस्रादेशस्य बहिरङ्गत्वेनासिद्धत्वात्प्राप्तिरेव नेति वार्तिकासंगतिः स्पष्टैव ॥ तस्याज्ञानकल्पनेऽप्याह—**तत्प्रत्येति** । परत्वात्तिस्रादेशे सकृद्गतिन्यायेन पुनः स नेत्येवमित्यर्थः ॥ अन्यथा तत्राप्युक्तरीत्यैव तदप्राप्त्या तन्न्यायेन वारणासंगतिः स्पष्टैव ॥ उपलक्षणत्वेन कैयटं योजयति—**प्रातीति** ॥ **तदेवेति** । तदेव ध्वनयन्नाहेत्यर्थः । **इयं**–भाष्याद्युक्ता । तदाश्रयणे तु संनिपातेत्येव शरणम् । तदेव ध्वनयन्निक इति ह्रस्वाभावाय व्युत्क्रमेणाह—**कुलमिति** ॥ **एतेन**–तया वारणेन ॥ छाया ॥

२ इदमपि दूषयति—**अत्रापीति** । ग्रामणिच्छत्रमित्यत्रापीत्यर्थः ॥ नन्वनित्यत्वात्तदप्रवृत्तिरत आह—**तदिति** ॥ निषेधाश्रयणे तु संनिपातेति वारणमेवेत्याह—**तस्मादिति** ॥ छाया ॥

३ 'तद्दोषेष्वस्या' इति प. पाठः ॥

४ साक्षादभावादाह—**वृत्रहभिरिति** ॥ णत्वमित्यस्य बोध्यमिति शेषः ॥ छाया ॥

५ कृति तुग्ग्रहणस्य प्रत्याख्यानादाह—**असिद्धमिति** ॥ छाया ॥

६ **निकुचित इति** । आदिकर्मबोधनार्थमत्र निरुपात्तः, अन्यथा कुचित इत्येव वदेत् ॥

७ न **धातुलोप इति** । सूत्रमतेनेदम्, सिद्धान्ते तु इदं फलमेव ॥ छाया ॥

क्व ?

'अमुना ।' नाभावे कृते "अतो दीर्घो यञि" "सुपि च" इति दीर्घत्वं प्राप्नोति ।

'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥

( प्रदीपः ) अमुनेति । न मु न इत्यस्यायमर्थः—ने कर्तव्ये मुभावः सिद्धो भवति-इति, न तु ने परतोऽपि यद्दीर्घत्वं प्राप्नोति तत्र । तथाच तत्र मुभावस्यासिद्धत्वादकारान्तत्वाद्दीर्घप्रसङ्गः । तस्मिन् कृते अदसोऽसेरिति दीर्घस्य दीर्घ ऊकारः प्राप्नोति । ततश्च 'अमूना' इति स्यात् । उकारसन्निपातनिमित्तस्तु नाभावो दीर्घत्वस्याऽनिमित्तमिति सिद्धममुनेति ॥

( उद्योतः ) यद्दीर्घत्वं प्राप्नोतीत्यस्य तत्रापि मुभावः सिद्ध इत्यर्थ इति शेषः । तत्रेत्यस्य च एवं चेत्यादिः ॥ क्वचित्तु 'प्राप्नोति तत्र । तथा च तत्र' इति पाठः ॥ असिद्धत्वादिति । शास्त्रासिद्धत्वादिति भावः ॥ कृतेऽदसोऽसेरिति । ननु मुत्वासिध्या उकारे एवाकारबुद्धौ सुपि चेत्यन्तरतमे दीर्घ आकारे मस्य स्वत एव सत्त्वाद्धातपरत्वाभावेन कथमनेन दीर्घोकारप्रवृत्तिरिति चेन्न । लोकसिद्धसंनियोगशिष्टन्यायेन मुत्वस्यापि निवृत्तेर्दातपरत्वसत्त्वात् । न चाचः परस्मिन्निति स्थानिवत्त्वाद्दीर्घस्य नान्यतरापाय इति वाच्यम् । पूर्वत्रासिद्धीये न स्थानिवदिति निषेधात् ॥ लक्ष्ये लक्षणस्येति न्यायस्तु न, लक्ष्यभेदादित्यभिमानः ॥ केचित्तु अमाना अदाना इति वाऽऽपत्तिरित्याहुः ॥ दीर्घत्वस्येति । उकारस्वरूपविनाशकस्येत्यर्थः ॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—"न मु टाऽऽदेशे" इति ॥

(प्रदीपः) न मु टाऽऽदेश इति । अनेकविभक्त्यन्तस्तत्र समास आश्रितः—टाया आदेशः, टायामादेश इति ॥

(उद्योतः) नन्वेवमपि टाऽऽदेश एव सिद्धत्वं स्यादत आह—अनेकेति । अनेकविभक्त्यन्तपूर्वपद इत्यर्थः । संबन्धसामान्यषष्ठ्या समास इति तात्पर्यम् ॥

( २१८ प्रयोजनवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ आत्वं कित्त्वस्योपादास्त ॥ * ॥

( भाष्यम् )

आत्वं कित्त्वस्यानिमित्तं स्यात् ॥

क्व ?

उपादास्तास्य स्वरः शिक्षकस्येति । आत्वे कृते "स्थाघ्वोरिच्च" इतीत्त्वं प्राप्नोति ।

'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥

( प्रदीपः ) उपादास्तेति । एज्विषय आत्त्वविधानादकित्त्वसन्निपातनिमित्तमात्त्वं स्थाघ्वोरिच्चेति कित्त्वस्यानिमित्तम् । कित्त्वसंनियुक्तं चेत्त्वमिति कित्त्वाभावे न भवति ॥

( उद्योतः ) कित्त्वस्येति । भाष्येऽपि स्थाघ्वोरिच्चेति कित्त्वं प्राप्नोतीति पाठः । इत्त्वमिति पाठे कित्त्वसहितमित्त्वमित्यर्थः ॥ कित्त्ववारणेऽपीत्त्वं स्यादत आह—कित्त्वेति ॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । उक्तमेतत्—*दीङः प्रतिषेधः स्थाघ्वोरित्त्वे* इति ॥

---

१ 'ने नाभावे नासिद्धः' इति शाब्दोऽर्थः । तत्फलितमाह—सिद्ध इति । अन्यथा मुत्वस्यासिद्धत्वान्नाभाव एव तावन्न स्यादिति भावः ॥ छाया ॥ 'सिद्धो भवति न तु ने परतो यद्दीर्घत्वं प्राप्नोति तत्र मुभावस्यासि' इति क. ख. पाठः ॥

२ 'प्राप्नोति । तत्र मुभावस्या' इति क. च. पाठः ॥

३ तत्रेतीति । दीर्घे इत्यर्थः ॥ ननु कार्यासिद्धत्वेन स्थानिनोऽनिवृत्त्या स्वाभावे सुतरां तदभावात्कथमकारान्तत्वमत आह—शास्त्रेति ॥ लोकेति । समुदायकार्ये इत्यर्थः ॥ यद्यपीयं बिल्वकादिभ्यश्छेति छग्रहणेन ज्ञापिता तथापि समुच्चयविषये न्यायसिद्धत्वमेवेति भावः ॥ छाया ॥

४ मस्यापि निवृत्तेरिति पाठः । मुत्वस्यापीति पाठे उत्ववन्मस्यापीत्यर्थः ॥ दीर्घस्य-आकारस्य ॥ नान्यतरेति । मकारोकारान्यतरेत्यर्थः ॥ तथा च न परिभाषाप्रवृत्तिरिति भावः ॥ पूर्वत्रेति । अदसोसेरित्यत्र कार्यार्थमुपस्थितायाः परिभाषायास्तत्त्वादिति भावः ॥ ननु लक्ष्ये लक्षणेति न्यायेन पुनर्नात आह—लक्ष्ये इति ॥ विकारान्यानुपूर्व्या अभेदेन लक्ष्यभेदाभाव इति न पुनः स इत्यरुचिरभिमानपदेन सूचिता । तदेवाह—केचिदित्विति ॥ उक्तन्यायाभावे आद्यम्, तदाश्रयणेऽन्त्यम् । इति-इत्यस्य ॥ छाया ॥

५ अनतिप्रसङ्गाय तत्स्वरूपमाह—टाया इति ॥ छाया ॥

६ यथाश्रुतासंगतेराह—अनेकेति ॥ ननु सकृदुच्चारितवाक्ये तत्त्वमपि बाधितमत आह—संबन्धेति ॥ छाया ॥

७ आत्वमिति । मीनातिमिनोतीत्यात्वं स्थाघ्वोरिच्चेति कित्वस्य निमित्तं न भवति । उदाहरणं—उपादास्तेति । 'दीङ् क्षये' इत्यस्मादुपपूर्वाल्लुङ्येकवचनम् । अ दी स् त—इत्यत्र मीनातीत्यात्वे दारूपत्वात् घुसंज्ञायां प्राप्तं कित्वं सन्निपातपरिभाषया वार्यते । उदाहरणेऽधिकस्योपादानं दीङ्धातोरिदं रूपमिति प्रत्यायनाय । अस्य शिक्षकस्य स्वर उपादास्त-क्षीणोऽभूदिति तदर्थः । किञ्च दाधाघ्विति सूत्रे 'दीङः प्रतिषेधः' इति वार्तिकोदाहरणस्मरणाय च । तत्र दा-दाञ्-दाण्-दाप्-दैप्-देङ्-धातुषु बहुषु सरूपेषु सत्स्वपि 'उपादास्त' इति रूपं दीङ्धातोरेवेति प्रतिपत्त्यर्थं क्षयार्थस्य स्फुटप्रतिपत्तेश्च विशिष्टमुपात्तम् । अत्रापि विशेषविषयोपस्थापनाय तथा गृहीतमिति ॥ आ. पुस्तके 'आत्वं कित्त्वस्यानिमित्तम्' इत्येव स्याच्छब्दरहितः पाठः ॥

८ एज्विषय इति । चेनेत्यर्थः ॥ छाया ॥

९ कैयटाशयमाह—भाष्येऽपीति ॥ कित्वेति । नन्वित्यादिः ॥ पीत्वमिति । तस्य तद्विघातकत्वात् ॥ छाया ॥

१० दीङ इति । इत्वयुतकित्त्वे कार्ये दीङो घुसंज्ञा नेति वार्तिकार्थः ॥ इदमपि वार्तिकरीत्या, अपूर्ववचनतोऽस्या एवौन्नित्यात् ॥ छाया ॥

( २१९ प्रयोजनवार्तिकम् ॥ १० ॥ )

॥ * ॥ तिसृचतस्रृ ङीब्विधेः ॥ * ॥

( भाष्यम् )

तिसृचतस्रृत्वं ङीब्विधेरनिमित्तम् ॥

क्व ?

तिस्रस्तिष्ठन्ति-चतस्रस्तिष्ठन्ति । तिसृचतसृभावे कृते "ऋन्नेभ्यो ङीप्" इति ङीप् प्राप्नोति ।

'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति-न तिसृचतसृभावे कृते ङीब् भवतीति । यदयं "न तिसृचतसृ" नामि दीर्घत्वस्य प्रतिषेधं शास्ति ॥

( प्रदीपः ) यदयमिति । ननु समस्तार्थमेतत्स्यात्-प्रियतिसृणां ब्राह्मणानामिति । अत्र ह्यङ्गं पुंसि वर्तत इति नास्ति ङीपः प्राप्तिरिति केचित् ॥ तदयुक्तम् । न हि ङीब्विधानेऽङ्गाधिकारोऽस्ति । तत्राऽवयवस्य स्त्रीत्ववृत्तित्वात् ङीपः प्राप्तिः केन वार्यत इति ज्ञापकमेव ॥ ज्ञापकादेव च सिद्धत्वात् स्वस्रादिष्वनयोः पाठो न कर्तव्यो भवति ॥

( उद्योतः ) नास्ति ङीप इति । येत्वन्तरङ्गत्वात्समासात्पूर्वमेव ङीबिति ॥ तन्न । अन्तरङ्गानपीति न्यायेनान्तर्वर्तिविभक्त्याश्रयतिस्रादेशस्याप्रवृत्तेः ॥ ज्ञापकमेवेति । ङ्यन्ते तु नास्य प्रवृत्तिः, विभक्तौ लिङ्गविशिष्टाग्रहणात् ॥ नन्वेवं स्वस्रादिपाठो व्यर्थः स्यादत आह—ज्ञापकादेवेति । एवं चैतज्ज्ञापकपरभाष्यप्रामाण्यात्स पाठोऽप्रामाणिक इति भावः ॥

( प्रयोजनभाष्यम् )

इमानि तर्हि प्रयोजनानि—शतानि-सहस्राणि । नुमि कृते "ष्णान्ता षट्" इति षट्संज्ञा प्राप्नोति ।

'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥

( प्रदीपः ) शतानीति । विभक्तिसन्निपातनिमित्तो नुमागमः षट्संज्ञाहेतुकस्य विभक्तिलुको न निमित्तम् । ष्णान्ता षडित्यन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थमिति अत्र न भविष्यतीति चेत्, संख्यासंप्रत्ययार्थं बहुव्रीह्यर्थं तत् स्यादित्यदोषः ॥

( उद्योतः ) विभक्तिलुक इति । तन्निमित्तसंज्ञायाश्चेत्यपि बोध्यम् ॥ अन्तग्रहणमिति । तत्सामर्थ्यादिति मन्यते ॥ सामर्थ्यमसिद्धमिति परिहारः—संख्येति । बहुव्रीहेः फलं संख्यासंप्रत्ययः ॥

( प्रयोजनभाष्यम् )

शकटौ-पद्धतौ । अत्त्वे कृते "अतः" इति टाप् प्राप्नोति ।

'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥

( प्रदीपः ) शकटाविति । विभक्तिसंनिपातकृतमत्त्वं यदि टापो निमित्तं स्यात् आनन्तर्यं विहन्येत । शास्त्रीये च कार्येऽन्तादिवद्भावः, नानन्तर्यं लौकिके । टापि च सति शकटायामिति स्यात् ॥ अच्च घेरिति तपरकरणेनाप्यत्र टाप् निवर्तयितुं शक्यते । इदुतोर्हि स्थाने मात्रिक एवाकारो भविष्यति, भाव्यमानत्वाद्वा सवर्णस्याकारो ग्राहको न भविष्यतीति लक्षणान्तरेणापि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं संपद्यते ॥

( उद्योतः ) विभक्तीति । घेः परस्य ङेरौत्, घेरन्तादेशश्चाकार इति सूत्रार्थात् ङ्यादेशौत्वसन्नियोगेन विधीयमानमत्वमङ्गप्रत्ययसन्निपातकृतमित्यर्थः ॥ नन्वेकादेशेऽन्तवद्भावान्न टाप् व्यवधायकोऽत आह—शास्त्रीये चेति ॥ ननु टापि वृद्ध्येकादेशे शकटाविति सिद्ध्येदत आह—टापि चेति । वृद्धेः परत्वादाङ्गत्वाच्च याडामाविति

१ 'तिसृचतसृत्वं ङीब्विधेस्तिस्रः' इत्येवं वार्तिकपाठः पूर्वोत्तरसंवादात् ॥ छाया ॥ 'चतसृत्वं ङीब्वि' इति आ. पाठः । बहुषु प्रामाणिकेषु पुस्तकेषु 'तिसृचतसृ ङीप्विधेः' इत्येव पाठ उपलभ्यते ॥

२ 'सृत्वमनिमित्तं, कस्य ? ङीब्विधेः' इति आ. पाठः ॥

३ तिष्ठन्तीति । अत्र सर्वविभक्त्यन्तानामुदाहरणत्वे सम्भवत्यपि प्राथम्यात्प्रथमान्तोदाहरणमित्याशयेन तिष्ठन्तिपदोपादानम् । किञ्च यद्यत्र ङीप्स्यात्तर्हि अचि र इति सूत्रे 'अचि रादेशे जस्युपसंख्यानं' इति वार्तिकमपि व्यर्थं स्यादिति बोधनाय च । 'चतस्रस्तिष्ठन्तीति' इति आ. पाठः ॥

४ न तिसृचतसृसिति । इत्यनेनेति शेषः ॥ छाया ॥ 'न तिसृचतसृभिर्नामि दीर्घत्वप्रतिषेधं' इति आ. पाठः ॥

५ दण्ड्युक्तिं खण्डयति—यत्त्विति ॥ तिस्रेति । तदादीत्यर्थः ॥ ननु प्रातिपदिकग्रहण इति परिभाषया ङ्यन्तेऽप्यस्य प्रवृत्तिरिति न ज्ञापकत्वमत आह—ङ्यन्ते त्विति ॥ एवं-ज्ञापकेन ङीपो वारणे ॥ एवं च-ज्ञापकेन सिद्धौ च ॥ छाया ॥ अस्य—न तिसृ इत्यस्य ॥

६ यद्यपि भाष्ये षट्संज्ञा आपादिता तथापि तन्मात्रकृतानिष्टाभावेन तत्रेष्टापत्तिः । किंच कार्यकालपक्षे संज्ञाशास्त्रस्य न पृथग्वाक्यार्थबोध इति कैयटेन लुक्पर्यन्तानुधावनं कृतम् । भाष्ये तावदेवोक्तिस्तु पक्षद्वयसाधारणतया, अत एव द्वितीयपक्षेणाह—तन्निमित्तेति । षष्ठीतत्पुरुषः ॥ हार इत्यस्य संख्येतीत्यत्रान्वयः ॥ संख्यासंप्रत्ययार्थं यो बहुव्रीहिस्तदर्थमिति कैयटार्थसूचनायाह—बहुव्रीहेरिति ॥ तथा सति स्त्रीलिङ्गनिर्देशात्तस्या एव ग्रहणमिति भावः ॥ छाया ॥

७ ननु तदभावे सवर्णग्रहणादाकारः स्यादत आह—इदुतोरिति । स्थानेऽन्तरेति भावः ॥ अभ्युपेत्येदम्, वस्तुतस्तदेव नेत्याह—भाव्येति ॥ लक्षणान्तरेति । टापि सति सवर्णदीर्घः स्यादिति भावः ॥ छाया ॥

८ ननु विभक्तावविधानेन कथं विभक्तिसंनिपातकृतमत्त्वमत आह—घेरिति । टापि सत्यपि वृद्धिरूपैकादेशे ॥ सिध्येदेवेति पाठः ॥ व्युत्क्रमेणाह—याडामाविति । आम्याटावित्यर्थः ॥ छाया ॥

भावः ॥ संपद्यत इति । तपरत्वाद्धि सवर्णदीर्घत्वं न स्यात् । टाप्तु स्यादेव । किं च शकटावित्यादौ वृद्धिरप्येवं न स्यादिति चिन्त्यमिदम् ॥

( प्रयोजनभाष्यम् )

**इयेष-उवोष । गुणे कृते "इजादेश्च गुरुमतोऽनृच्छः" इत्याम् प्राप्नोति ।**

**"संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति ॥**

( प्रदीपः ) **इयेषेति** । आमि सति लुक् स्यादिति प्रकृतिप्रत्ययसंनिपातस्य विघातः स्यात् । **उषविदे**ति विकल्प ओषांचक्रतुः-ऊषतुरित्यादौ सावकाश इत्युवोषेति नित्यं आम् प्रसज्येत ॥ **प्रतिपदविधेस्तु** बलवत्त्वात्परत्वाच्चात्रापि विकल्पेनैव भाव्यमित्यनुदाहरणमेतत् ॥ 'गुरुमतः' इति नित्ययोगे मतुबाश्रयणादपि शक्योऽत्रामभावः प्रतिपादयितुम् ॥

( उद्योतः ) **लुक् स्यादितीति** । लुगभावेऽपि शकटावितिवत् यत्संनिपातेन गुणो जातस्तदानन्तर्यविघातस्य सत्त्वेनैतत्कथनस्योपयोगश्चिन्त्यः ॥ ननूषविदेत्याम्विधानादुवोषेत्यसङ्गतमत आह—**उषविदेति** । तत्र न द्विर्वचनात्प्राक् गुरुमत्त्वमिति भावः ॥ **प्रतिपदविधेरिति** । कंचिद्गुणे कचिद्द्वित्वे एकादेशे गुरुमत्त्वादिजादेरित्येतन्नाप्राप्तमिति भावः ॥ **परत्वादिति** । तदुक्तस्य 'ऊषतुः' इत्यस्यावकाशत्वमभ्युपगम्येदमुच्यते ॥ **उवोखेति** कवर्गद्वितीयान्तो वा भाष्ये पाठः ॥ उषेर्विकल्पेन पक्षे आमभावेऽपि कृतद्वित्वाद् उवोषः दुर्वारत्वाम्, रूपे चास्येव विशेषः-उवोषाञ्चकारेति ॥ उषेस्त्वामि 'ओषांचकार' इति **परे** ॥ **नित्ययोगेति । इजा**देर्गुरोरित्युक्तावपि 'अनृच्छः' इति प्रतिषेधादिजादेर्गुरुमत इत्यर्थलाभे मतुब्ग्रहणादिति भावः ॥ **परे त्वेवं** सत्यनृच्छ इत्यस्यानर्थक्यापत्तिः । तुगुत्पत्तेः प्राक् गुरुमत्त्वाभावात् । उम्भादीनां गुरुमतामामनापत्तेश्च, तेषामाशीर्लिङि गुरुमत्त्वाभावादिति भाष्याशयमाहुः ॥

( परिभाषादोषाः )

( २२० दूषणवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य ॥ * ॥**

( भाष्यम् )

**तस्यैतस्य लक्षणस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात् ॥**

**क ?**

**"अत इञ्" दाक्षिः-प्लाक्षिः ॥**

( प्रदीपः ) **दाक्षिरिति** । प्रयोगे व्यवस्थितस्यैवेकारस्यान्वाख्यानमनेन क्रियत इति संनिपातलक्षणत्वं प्रत्ययस्य संभाव्यते ॥

( उद्योतः ) नन्विञ्प्रत्ययो नोभयाधिष्ठानसम्बन्धलक्षणसन्निपाताश्रय इत्यत आह—**प्रयोगे इति** ॥ **अन्वाख्यानं**-साधुत्वेन ॥ **प्रत्ययस्य**-साधुत्वावच्छिन्नस्य ॥

( दूषणबाधकभाष्यम् )

**न प्रत्ययः संनिपातलक्षणः ॥**

( प्रदीपः ) **न प्रत्यय इति** । कल्पितप्रकृतिप्रत्ययविभागेनान्वाख्यानात्प्रकृतेरविद्यमान एव प्रत्यय उत्पाद्यत इत्याशयः ॥

( उद्योतः ) **अविद्यमान एवेति** । मन्दमध्यानां तथैव प्रतीतेः । साधुत्वान्वाख्यानेऽपि साधुत्वस्य सन्निपातनिमित्तकत्वं, न प्रत्ययस्येति भावः ॥

( दूषणसाधकभाष्यम् )

**अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् ॥**

---

१ दण्डयुक्तमाह—**तपरेति** । नहि लक्षणद्वयबाध उचितः । अनुपपत्तिपरिहारस्य तावतैव संभवात् ॥ तथा च तेन तद्विघातात्तदभावार्थं परिभाषैव शरणमिति भाष्यं सम्यगेवेति भावः ॥ अभ्युपेत्यापि स्वयं युक्त्यन्तरमाह—**किं चेति** । सिद्धान्त इति भावः ॥ तथा च तन्मुखसुखार्थमेव ॥ छाया ॥

२ प्रदीप **इतीत्यस्य** इत्यतोऽपीत्यर्थः । तत्रापिना तत्समुच्चयः । तदाह—**लुगिति** ॥ **आम्विधानादिति** । आम्विकल्पविधिसामर्थ्यादित्यर्थः ॥ **उवोषेति** । उदाहरणमित्यर्थः ॥ **तत्रेति** । यदि तदुत्तरमपि स्यात्तर्हि विकल्पवैयर्थ्यमेव । अत्र तु **द्विर्वचनेऽचीत्यस्य** स्थानिवत्त्वनिषेधकत्वपक्षे द्वित्वात्पूर्वं गुणेन तत्त्वमिति तं बाधित्वा आम् स्यादिति भावः ॥ छाया ॥

३ प्रतिपदविधित्वमपवादत्वं नान्यादृशमित्याह—**कचिदिति** ॥ **तदुक्तस्येति** । उदाहरणत्ववादिनोक्तस्येत्यर्थः । तथा च तदनुरोधेनेदम् । परमार्थतस्तु पूर्वोक्तमेवेति भावः ॥ भाष्यं समर्थयते—**उवोखेतीति** ॥ छाया ॥ 'कचिद्द्वित्वैकादेशे' इति घ. पाठः ॥

४ तथापि यथाश्रुतमेव युक्तमित्याह—**उषेरिति** ॥ **द्विर्वचने**ऽचीत्यादेरनिषेधकमित्याशयेनाह—**कृतेति** ॥ तद्वैयर्थ्यं तु नेत्याह—**रूपे चेति** ॥ अग्रेऽप्योषांचक्रतुरूषांचक्रतुरिति बोध्यम् ॥ एवं च नाप्राप्तिसत्त्वेऽपि संभवे सत्यपि यौगपद्याभावात्तन्न्यायाप्रवृत्तिरिति गूढाकूतं भगवत इति दिक् ॥ छाया ॥

५ 'उवोषात् दुर्वा' इति प. पाठः ॥ **उवोष इति** । कृतद्वित्वादुषधातोः शब्दरूपपरतया पञ्चमी । उवोषशब्दादित्यर्थः ॥

६ गुर्वन्तादित्याद्यर्थान्तरनिरासायाह—**अनृच्छ इति** ॥ कैयटं दूषयति—**परे त्विति** ॥ तस्मात्तथा न युक्तम् ॥ छाया ॥

७ **गुरुमतामिति** । संबन्धित्वविवक्षया षष्ठी ॥ छाया ॥

८ **लक्षणस्य-संनिपातेति** परिभाषारूपस्य ॥ **दोषः**-अतिव्याप्तिः ॥ **विचालः**-नाशः ॥ छाया ॥ **विचालः**-स्वरूपविपर्यासः । इममप्यर्थमुपसंगृह्याग्रे दोषवारणप्रसङ्गे प्रदीपे दाक्षिरित्यत्र विधानसामर्थ्याद्वर्णविचालो भविष्यतीत्युक्त्वा कष्टायेत्यत्र निर्देशसामर्थ्याद्दोषो वारितः । अन्यथा भाष्यानुक्तस्य दोषस्य वारणे न किञ्चित् प्रयोजनम् ॥

९ आकाङ्क्षायामाह—**साधुत्वेनेति** ॥ अत एव यथाश्रुतासंगतेराह—**साधुत्वेति** ॥

१० अस्य सिद्धान्तत्वाभावादाह—**मन्देति** । व्यक्त्यभिप्रायं बहुवचनम् ॥ सिद्धान्तेनाप्यत एवाह—**साधुत्वेति** ॥ छाया ॥

**( प्रदीपः ) अङ्गसंज्ञेति** । सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः । तत्र **वर्णविचालस्यानिमित्तं स्या**दिति अङ्गसंज्ञाद्वारेणेत्यर्थः । अत्र केचित्-**वर्णाश्रय** इति व्याचक्षते । तेनात्रेयाद्यप्युदाहरणम् ॥ अन्ये **त्ववर्णाश्रय** इत्यकारप्रश्लेषमाहुः ॥

**( उद्योतः ) सत्यामिति** । [1]यस्मादित्यस्य प्रत्ययविधावुद्देश्यतावच्छेदकावच्छिन्नादित्यर्थेऽवर्णान्तादिञ्ञि तदङ्गसंज्ञमिति सूत्रार्थ इति भावः ॥ यद्यङ्गसंज्ञाऽनिमित्तम्, कथं तर्हि वार्तिके [2]प्रत्यय इत्युक्तमत आह—**तत्रेति** ॥ आत्रेये '**इतश्चानिञः**' इति ढक् ॥

**परे [3]तु** वार्तिकस्यायमाशयः—निमित्तनिमित्तिनोः संबन्धवत् विशेषणविशेष्ययोः संबन्धोऽपि सन्निपातः । एवं च प्रातिपदिकस्यादन्तत्वसंबन्धनिमित्तः प्रत्ययस्तद्विघातस्यानिमित्तमिति ॥ इममाशयमजानानः शङ्कते—**न प्रत्यय इति** (भाष्ये) ॥ एकदेश्युत्तरयति—**अङ्गसंज्ञा तर्हीति** । युक्तं चैतत् । उपजीव्यविरोधस्यान्याय्यत्वं हि एतन्न्यायमूलम् । तस्य च प्रकृतेऽपि सत्त्वात् । अतिप्रसङ्गस्तु त्वयेव मयाऽप्यनित्यत्वेन सुशकवारणः । अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे तुक् न, उपजीव्यस्य प्रातिपदिकाजन्तत्वसंबन्धस्य विघातात् ॥ बहिरङ्गपरिभाषयाऽसिद्धत्वं तु न । तस्य तत्त्वाभावात् । [4]शैवो गाङ्गेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या **वर्णाश्रय** इत्यंशस्य वार्तिके वैयर्थ्यापत्तेश्चेत्याहुः ॥

( २२१ दूषणवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ आत्वं पुग्विधेः क्नापयति ॥ * ॥

( भाष्यम् )

**आत्वं पुग्विधेरनिमित्तं स्यात् ॥**
**क ?**
**क्नापयतीति ॥**

**(प्रदीपः) क्नापयतीति** । णिचि वृद्धौ कृतायामात्वं पुको न निमित्तं स्यात् । अङ्गस्य य आकारस्तस्य पुगित्यवयवभक्तं पुकं मत्वा दोषोपन्यासः ॥

**( उद्योतः )** आत्वं-'**क्रीङ्जीनां णौ**' इति ॥ [5]स्वाङ्गस्याव्यवधायकत्वादाह—**आकार इति** । श्रुतत्वात्तस्यैव पुगिति भावः ॥

**परे [6]तु** पुकोऽङ्गभक्तत्वेऽपि न क्षतिः, याद्दशयोः सन्निपातः पुग्निमित्तं तस्य विघातसत्त्वात् । **यदागमा** इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सूत्रश्रुतसन्निपातस्याभावात् ॥ अत्र चेदमेव भाष्यं **मानम्, ह्रस्वत्वं तुग्विधेरि**त्यादि च । सिद्धान्ताशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्या**हुः** ॥

( २२२ दूषणवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ पुक् ह्रस्वत्वस्यादीदपत् ॥ * ॥

( भाष्यम् )

**पुक् ह्रस्वत्वस्यानिमित्तं स्यात् ॥**
**क ?**
**[7]अदीदपत् ॥**

**( उद्योतः )** भाष्ये—**पुक् ह्रस्वत्वस्येति** । ण्याकारसन्निपातनिमित्तः पुक्, ह्रस्वे हि तद्विघातः स्पष्ट एव । न च **ह्रस्वस्य** चङ्परणिनिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्कथमत्र परिभाषाप्राप्तिः ? [8]एतद्भाष्यप्रामाण्येनानयाऽसिद्धस्यापि निवृत्तिस्वीकारात् । **किं च** तया शास्त्रीयकार्येऽसिद्धत्वेऽपि लौकिके संनिपातेऽसिद्धत्वाभावात् ॥

( २२३ दूषणवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ त्यदाद्यकारष्टाब्विधेः ॥ * ॥

( भाष्यम् )

**त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात् ॥**
**क ?**
**या सेति ॥**

---

१ ननु सामान्यरूपेण तस्या उभयसंनिपातलक्षणत्वेऽपि न विशेषरूपेणात आह—**यस्मादिति** ॥ अस्माल्लक्ष्यसंस्कारकवाक्योपप्लव इत्याह—**अवर्णान्तादिति** ॥ छाया ॥

२ **प्रत्यय इति** । इत्येतदन्तमित्यर्थः ॥ एवं च वार्तिकासंगतमिदं भाष्योक्तमिति भावः ॥ **तत्रेतीति** । वार्तिक इत्यर्थः ॥ तथा च स तन्निमित्तकसंज्ञापर इति भाष्योक्तस्तच्छब्दार्थः । तत्फलितमुक्तं कैयटेनेति भावः ॥ छाया ॥

३ कैयटदण्डिकृष्णाद्युक्तिं खण्डयति—**परे त्वित्यादिना** ॥ उक्तं समर्थयते—**युक्तमिति** ॥ **एतदिति** । षष्ठीतत्पुरुषः ॥ नन्वेवमन्यत्रातिप्रसङ्गापत्तिरत आह—**अतीति** ॥ अस्यावश्यकत्वमाह—**अत एवेति** ॥ अस्यार्थमाह—**उपेति** ॥ कैयटाद्युक्तिं खण्डयति—**बहिरिति** ॥ **तत्त्वाभावादिति** । इदं चानुपदमेव प्रागुक्तम् । प्रातिपदिकसमुदायाश्रयत्वेन तत्त्वं तु नेष्टमिति भावः ॥ तद्भाष्योपरि दोषमाह—**शैव इति** ॥ **त्वानापत्त्या**-तदभावापत्त्या । उक्तरीत्येति भावः ॥ प्रत्यय इत्यस्यावश्यकत्वादाह—**अंशस्येति** ॥ छाया ॥

४ 'अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात्' इति भाष्यस्यैकदेश्युक्तित्वे बीजमाह—**शैवो गाङ्गेय इति** ।

५ **स्वाङ्गस्याव्यवधायकत्वात्**-अङ्गस्य पुकि सन्निपातविघाताभावादित्यर्थः ॥

६ खण्डयति—**परे त्विति** ॥ ननु यदेति न्यायेन न तद्विघातोऽत आह—**यदेति** ॥ नन्वीदृशग्रहणे किं मानमत आह—**अत्र चेदमिति** ॥ नन्विदं तथापि सुयोजमत आह—**ह्रस्वत्वमिति** । प्रागुक्तमिति भावः ॥ अङ्गभक्तत्वमत्र सिद्धान्त इति कैयटाद्याकूतं खण्डयन्नाह—**सिद्धान्तेति** । **प्रतिविधेय**मिति वक्ष्यमाणेत्यर्थः ॥ **एवेन** तद्व्यवच्छेदः ॥ छाया ॥

७ 'आदीदयदिति' इति आ. पाठः ॥

८ अभ्युपेत्यादावाह—**एतदिति** ॥ वस्तुतस्तदेव नेत्याह—**किं चेति** । तस्याशास्त्रीयत्वादिति भावः ॥ छाया ॥

( २२४ दूषणवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ इड्विधिराकारलोपस्य पपिवान् ॥ * ॥**

( भाष्यम् )

**इड्विधिराकारलोपस्यानिमित्तं स्यात् ॥**

**क ?**

**पपिवान् - तस्थिवानिति ॥**

( उद्द्योतः ) भाष्ये—इड्विधिरिति । वस्वेकाजादित्याकारान्तलक्षण इट् । नियमशास्त्राणां च[1] विधिमुखेनैव प्रवृत्तिरिति भावः ॥

( २२५ दूषणवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ मतु[2]ब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ॥ * ॥**

( भाष्यम् )

**मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्यानिमित्तं स्यात् ॥**

**क ?**

**अग्निमान्-वायुमान्, परमवाचा-परमवाचे इति॥**

( प्रदीपः ) **अग्निमानिति** । पूर्वमुदात्तमाश्रित्य मतुप उदात्तत्वं क्रियमाणं पूर्वस्य निघातं न कुर्यात् ॥ **परमवाचेति । अन्तोदात्तादुत्तरपदा**दिति विभक्त्युदात्तत्वं विधीयमानं पूर्वनिघातस्यानिमित्तं स्यात् ॥

( उद्द्योतः ) **पूर्वमिति** । ह्रस्वनुड्भ्यामित्यत्रान्तोदात्तादित्यनुवृत्तेरिति भावः ॥

( २२६ दूषणवार्तिकम् ॥ १७ ॥ )

**॥ * ॥ नदीह्रस्वत्वं संबुद्धिलोपस्य ॥ * ॥**

( भाष्यम् )

**नदीह्रस्वत्वं संबुद्धिलोपस्यानिमित्तं स्यात् ॥**

**क ?**

**नदि कुमारि ब्राह्मणि किशोरि ब्रह्मबन्धु इ[3]ति । ह्रस्वत्वे[4] कृते "एङ्ह्रस्वात्सम्बुद्धेः" इति संबुद्धिलोपो न प्राप्नोति ॥**

( उद्द्योतः ) ह्रस्वत्वं-अम्बार्थेत्यनेन ॥

( दूषणबाधकभाष्यम् )

**मा भूदेवम् । ङ्यन्तादित्येवं भविष्यति ॥**

( प्रदीपः ) **मा भूदिति । हल्ङ्यादिसूत्रे** दीर्घग्रहणम[5]दृष्टेदमुच्यते । तत्र कृतेऽपि ह्रस्वत्वे स्थानिवद्भावाद्भविष्यतीति भावः ॥ ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते, तस्याब्याबन्तत्वात् ॥

( दूषणसाधकभाष्यम् )

**न सिध्यति । [6]दीर्घादित्युच्यते, ह्रस्वान्ताच्च न प्राप्नोति ॥**

**इदमिह संप्रधार्यम्-ह्रस्वत्वं क्रियताम्, संबुद्धिलोप इति ।**

**किमत्र कर्तव्यम् ?**

**परत्वाद् ह्रस्वत्वम् ॥**

( दूषणबाधकभाष्यम् )

**नित्यः संबुद्धिलोपः । कृते ह्र[7]स्वत्वे प्राप्नोति, अकृतेऽपि ॥**

( प्रदीपः ) **नित्य इति** । का[8]र्यं तावन्नित्यं, तद्येन केनचिल्लक्षणेन भवत्विति भावः ॥ संबुद्धिलोपस्यावकाशः–हे देवदत्तेति ॥

( उद्द्योतः ) ननु ह्र[9]स्वग्रहणं निरवकाशत्वेन सन्निपातपरिभाषाबाधकं स्या[10]दत आह—**संबुद्धिलोपस्येति** ॥

( दूषणसाधकभाष्यम् )

**अनित्यः संबुद्धिलोपः । न हि कृते ह्रस्वत्वे प्राप्नोति ॥**

**किं कारणम् ?**

**संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति॥**

( आक्षेपोपसंहारभाष्यम् )

**एते दोषाः समा भूयांसो वा । तस्मान्नार्थोऽनया परिभाषया ॥**

( प्रदीपः ) **भूयांसो वेति** । दुष्टत्वप्रतिपादनाय प्रकर्षारोपः । स[11]र्वादिषु समशब्दस्य सर्वपर्यायस्य सर्वनामसंज्ञाविधानात्तुल्यवाचिनोऽत्र समा इति प्रयोगः । अस्ति समशब्दः सर्व-

---

१ **चो ह्यर्थे** ॥ छाया ॥

२ अस्मिन् वार्तिके दोषद्वयमुपात्तम् । मतुब्रुदात्तत्वं पूर्वनिधातस्य, विभक्त्युदात्तत्वम्पूर्वनिघातस्य चेति । अत एव 'एते दोषाः समा-भूयांसो वा' इति भाष्यव्याख्यावसरे 'दोषा अष्टौ' इत्युद्योत उक्तम् ॥

३ इतिशब्दो नास्ति आ. पुस्तके ॥

४ 'नदीह्रस्वत्वे' इति क. पाठः ॥

५ **अदृष्ट्वेति** । तद्विशेषणत्वेनादृष्ट्वेत्यर्थः ॥ तथा च पृथङ्निमित्तं तदित्यभिमानः ॥ **तत्र**–तथा सति ॥ छाया ॥

६ **दीर्घादिति** । न दीर्घः पृथङ्निमित्तम् । तथा सति समासेनैव निर्देशौचित्यात् । अतिप्रसङ्गापत्तेश्च ॥ छाया ॥

७ 'ह्रस्वत्वेऽपि' इति आ. पाठः ॥

८ नन्वकृते ह्रस्वत्वे हल्ङ्याबिति संबुद्धिलोपः, कृते त्वेङ्ह्रस्वादिति, तथा च लक्षणभेदात्कथं नित्यत्वमत आह—**कार्यमिति** ॥ छाया ॥

९ एङ्ह्रस्वादिति सूत्रे इति शेषः । ( र ना. )

१० **स्यादिति** । तथा च संबुद्धिलोप इति भावः ॥ छाया ॥

११ ननु सर्वनामत्वेन 'समे' इत्युचितमत आह—**सर्वादिष्विति** ॥ ननु सर्वपर्यायत्वमदृष्टचरमत आह—**अस्तीति** ॥ इदं लौकिकमिति सूचयन्नाह—**वेदेऽपीति** ॥ छाया ॥ समशब्दस्य तुल्यार्थता सर्वत्र प्रसिद्धेति तदुदाहरणमत्र नोपन्यस्तम् ॥

पर्यायः । यथा-**समराज्यं वर्तते,** सर्वेषां राज्यं वर्तते इत्यर्थः । वेदेऽपि —**मा नः समस्य दूढ्य** इति प्रयोगः, सर्वस्य दुर्धियो **मा न** इत्यर्थः । तत्र प्रयोजनानामल्पत्वात्तान्येवोपसंख्यातव्यानीत्यर्थः ॥

**( उद्योतः )** भाष्ये-**एते दोषाः समा इति ।** वार्तिककारोक्तसकलप्रयोजनापेक्षमिदम् ॥ यद्यपि प्रयोजनानि नव, दोषा अष्टौ; तथापि अल्पान्तरत्वात्समत्वोक्तिः । यद्वा-अन्यत्रापि दोषः संभाव्यत इत्यभिमानः ॥ ननूक्तदोषाणामुक्तप्रयोजनेभ्यो बहुत्वमेव न, कुतस्तदतिशयोऽत आह—**दुष्टत्वेति** ॥ [1]**अन्ये** तूक्तेषु दूषितप्रयोजनानि त्यक्त्वा स्थितप्रयोजनत्रयापेक्षया भूयस्त्वोक्तिरित्याहुः ॥ ध्यायतेर्विच्चि षष्ठ्येकवचने **आतो धातो**रिति लोपे **दुरो दाशनाशदभध्येषु**त्विति उत्वे उत्तरपदादेः ष्टुत्वे दूढ्य इति, तदाह—**दुर्धिय इति ।** सर्वस्य दुर्बुद्धेरंहतिः-उपद्रवो **नः**-अस्मान्मा वधीदित्यर्थः ॥ दुःस्थिता धीर्येषामिति विग्रहे गतिकारकपूर्वकत्वाभावाद्यण् न ॥ **तस्मान्नार्थ** इति पूर्वपक्षाशयमाह—**तत्रेति** ॥

( सिद्धान्तिसमाधानभाष्यम् )

**नहि दोषाः सन्तीति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम् । नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न[2] च मृगाः सन्तीति यवा नोप्यन्ते ॥ दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् ॥**

**कुत एतत् ?**

**नहि दोषाणां लक्षणमस्ति । तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु ॥ कृन्मेजन्तः ॥ ३९ ॥**

**( प्रदीपः ) प्रतिविधेयमिति ।** [3]तत्र विधानसामर्थ्यादाङो वर्णविचालो भविष्यति ॥ **कष्टायेति** ज्ञापकाद्यशब्दे दीर्घो भविष्यति ॥ **न यासयो**रिति लिङ्गादाप् भविष्यति ॥ **पपिवानिति । वस्वेकाजादि**त्ययं नियमः, इटो न त्वपूर्वोऽयं विधिरिति आकारस्य लोपः ॥ **क्रापयती**त्याकारान्तभक्तः पुग्न व्यवधायकः ॥ **अदीदप**दिति लिङ्गाद् ह्रस्वः । यदयं **मारणतोषणे**ति जानातेर्मित्त्वमुपधाह्रस्वार्थं शास्ति तज् ज्ञापयति—पुकि कृते उपधाह्रस्वत्वं भवतीति । न हि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति ॥ **अग्निमानि**ति **अनुदात्तं पदमेकवर्ज**मिति परिभाषा स्वरविषया संनिपातपरिभाषां बाधते ॥ **एङ्ह्रस्वादि**त्यत्रापि **गुणात्संबु**द्धेरिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषाऽभावः । **दर्वी**त्यत्र छन्दसि गुणाभावपक्षे छान्दसो लुग्भविष्यति ॥ ३९ ॥

**(उद्योतः)** सिद्धान्ती समाधत्ते—भाष्ये—**न हीति** ॥ परिभाषायाः कर्तव्यत्वे युक्त्यन्तरमप्याह सिद्धान्ती—**दोषाः खल्वपीति** ॥ **लक्षणमिति ।** उपलक्षकं रूपं नास्तीत्यर्थः ॥ **तत्र विधानेति ।** यादृशप्रकृतिप्रत्ययसन्निपातनिमित्ताङ्गसंज्ञा तादृशसन्निपातविघातं विना **यस्येति** लोपस्य चारितार्थ्याभावादिति भावः ॥ **कष्टायेति ।** [4]अकारसन्निपातनिमित्तो ङेर्यो यञादिनिमित्तदीर्घस्यानिमित्तं स्यादिति भावः ॥

१ कैयटादिकं खण्डयति—**अन्ये त्विति** ॥ **मा न** इति भिन्नं पदमित्याह—**सर्वस्येति** ॥ यणापत्तेराह—**दुःस्थितेति** ॥ **तत्रेतीति ।** दोषप्रयोजनयोर्मध्य इत्यर्थः ॥ छाया ॥

२ 'न हि' इति आ. पाठः ॥

३ **तत्रेति ।** दोषाणां मध्य इत्यर्थः ॥ छाया ॥ वार्तिकोक्ता दोषाः प्रतिविधीयन्ते—**तत्र विधानेत्यादिना** ॥

४ भाष्येऽनुक्तत्वात्तत्र पूर्वपक्षाशयमाह—**अकारेति** ॥ अन्यथेत्यादिः ॥ **एवम्**-अत्र दोषसत्त्वे ॥ **कष्टायेतीति ।** यत इत्यादिः ॥ **आहुः**-सिद्धान्तविदः ॥ **छाया** ॥ वस्तुतस्तु **'कष्टायेति यादेशो दीर्घत्वस्य'** इति ग्रन्थ इव **'गृहाणेति शानजादेशो हिलोपस्य'** इत्यपि ग्रन्थस्त्रुटितो भाष्ये । अत एव **भूयांस** इत्युक्तिः । **समा** इत्युक्तिस्तु स्वल्पान्तरत्वादित्युक्तमेवेति केचित् ॥ अस्या अनित्यत्वेनैव **हलः श्नः शानज्झा**विति सूत्रेण हिसंनिपातं निमित्तीकृत्य विधीयमानोऽपि शानच् **अतो हे**रिति लोपस्यानिमित्तं न भवति ॥ "**अतो हे**रित्यस्यारम्भसामर्थ्यात् **संनिपात**परिभाषाया अप्रवृत्तेर्हेर्लुक् । अत एव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः ॥" इति तत्त्वबोधिन्यां यदुक्तम्, तत्तु न सम्यक् ॥ **अतो हे**रिति सूत्रस्य भव दीव्य तुदेत्यादौ चारितार्थ्यसंभवेनारम्भसामर्थ्यस्य वक्तुमशक्यत्वात् ॥ जहीत्यत्रासिद्धत्वेन हिलोपवारणं तु परिभाषाया अनित्यत्वफलितामप्रवृत्तिमाश्रित्य उपायान्तरत्वेनादुष्टत्वाद्वा ॥ सार्वधातुकसंनिपातनिमित्तकत्वमाश्रित्य शबादीनां तत्त्वबोधिन्यपि समञ्जसैवेति ॥ **द्राविमथाः** ॥ वस्तुतस्तु 'कष्टायेति यादेशो दीर्घत्वस्येति ग्रन्थो भाष्यपुस्तकेषु भ्रष्टोऽतो न दोषः' इति मतं न सिद्धान्तसम्मतम् । कष्टायेत्याद्यंशभ्रंशवत् अन्यस्याप्रामाणिकस्य संग्रहशंकाया अपि सम्भवात् । अतः प्रामाणिकेषु ईदृशकल्पनयाऽप्रामाणिकत्वमेव स्यात् । कष्टायेति दोषस्तु भाष्येऽनुक्त इत्येतदपि न । वर्णाश्रयः प्रत्ययो वर्णविचालस्येति वार्तिकस्य यथा दाक्षिरित्युदाहरणं, तथैव कष्टायेत्याद्यपि । यथा त्यदाद्यकारष्टाब्विधेरित्यस्य या सेत्युदाहरणं दत्तं तत्र किं 'एषा' इत्युदाहरणं न भवति । नदीह्रस्वत्वं सम्बुद्धिलोपस्येत्यस्य 'गौरि' इत्युदाहरणं नास्ति । इड्विधिराकारलोपस्येत्यस्य पपिवान् तस्थिवानितिवत् 'ययिवान्' इत्युदाहरणं न । एवञ्च कष्टायेति दोषोऽपि भाष्योक्त एव । तत्र प्रकारान्तरस्य सम्भवात्तन्निरासः प्रदीपे वर्णाश्रयः प्रत्ययो वर्णविचारलस्येत्यस्य प्रतिविधाने एव कृतः । अन्यथा भाष्यानुक्तदोषाणां भाष्योक्तदोषप्रतिविधानानन्तरमेव निर्देश उचितः स्यात् । अत एव 'गृहाणेति शानजादेशो हिलोपस्येत्यपि ग्रन्थस्त्रुटितो भाष्ये' इत्युक्तिरसमञ्जसा । यत्रानित्यत्वादेव परिभाषाऽप्रवृत्तिरिष्यते, तान्युदाहरणानि भाष्ये प्रतिपादितानि । यत्र च निर्देशसामर्थ्यादप्रवृत्तिकल्पनं न तान्यत्रोपात्तानि । अत एव 'भूयांसो वा' इत्युक्तिः स्वारस्येन संगच्छते । भव दीव्येत्यादावपि धातुसार्वधातुकसान्निपातेन जायमानः शबादिर्न हिलोपनिमित्तमिति **अतो हे**रित्यारम्भसामर्थ्यादेव तत्र परिभाषाया अप्रवृत्तिः कल्पनीयेति तत्त्वबोधिन्युक्तिरपि नासमञ्जसा । एवञ्च 'ग्रन्थस्त्रुटितो भाष्ये' इत्याद्युक्तिर्न सिद्धान्तसम्मतेति दिक् ॥

न चैवं दोषाः साकल्येनेति भाष्यविरोधः । **कष्टायेति यादेशो** दीर्घत्वस्येति ग्रन्थो भाष्यपुस्तकेषु भ्रष्टोऽतो न दोषः । एवं च 'समाः' इत्यपि यथाश्रुतमेवेत्याहुः ॥ **लिङ्गादिति** । ईत्वनिषेधवैयर्थ्यादिति भावः ॥ **न त्वपूर्व इति** । क्रादिनियमादार्धधातुकस्येडित्येवेट् सिद्ध इति नेडाकारान्तसन्निपातनिमित्त इति भावः ॥

**परे तु** नियमशास्त्राणां विधित्वमेव, आर्थी त्वितरनिवृत्तिरित्यर्थस्य भाष्यसंमतत्वेनाकारान्तसन्निपातनिमित्त एवेडित्यनित्यत्वेनैवात्र समाधानं युक्तमित्याहुः ॥ **आकारान्तेति** । अङ्गस्येत्यनेन सामानाधिकरण्यस्योचितत्वादिति भावः ॥ अत्र यद्वक्तव्यं तत्प्रागेवोक्तम् ॥ **तज्ज्ञापयतीति** । अत एव भरज्ञपीति निर्देशः सङ्गच्छते । मितां ह्रस्वे च 'उपधायाः' इत्यनुवर्तत इति भावः ॥ **ह्रस्वभाविनीति** । अचश्चेत्युपस्थितेरिति भावः ॥ अचश्चेत्यस्य श्रुतित्वेन तद्बाधकल्पनापेक्षयाऽस्यैवानुमितस्य लोकन्यायसिद्धस्य बाधकल्पनोचितेति तात्पर्यम् ॥ **बाधते इति** । ह्रस्वनुड्भ्यामित्यत्रोपस्थितयोपस्थितिसामर्थ्यादिति भावः ॥ **गुणाभावेति** । जसादिषु छन्दसि वावचनमिति वचनादिति भावः ॥ ३९ ॥

---

( ३७ अव्ययसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १२ )

## अव्ययीभावश्च ॥ १ । १ । ४१ ॥

( २२६ प्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः ॥ * ॥

( भाष्यम् )

**अव्ययीभावस्याव्ययत्वे प्रयोजनम् ।**

**किम् ?**

**लुङ्मुखस्वरोपचाराः ॥**

**लुक्—उपाग्नि, प्रत्यग्नि । "अव्ययात्—" इति लुक् सिद्धो भवति ॥**

**मुखस्वरः-उपाग्निमुखः, प्रत्यग्निमुखः । "नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः" इत्येष[3] प्रतिषेधः सिद्धो भवति ॥**

**उपचारः—उपपयःकारः - उपपयःकाम इति । "अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य" इति प्रतिषेधः सिद्धो भवति ॥**

( प्रदीपः ) **अव्ययीभावश्च ॥ ४१ ॥ प्रयोजनमिति ।** मुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनम्, यथा मशकार्थो धूम इति॥

( उद्योतः ) **अव्ययीभावश्च ॥ ४१ ॥ उपचारो नाम** अतः कृ इति विहितविसर्गस्थानिकसत्त्वम् ॥ **यथा मशकार्थ इति ।** एतदेव निवृत्तिकारणमिति पातञ्जलैर्व्यवह्रियते ॥

( आक्षेपभाष्यम् )

**किं पुनरिदं परिगणनम्, आहोस्विदुदाहरणमात्रम् ?**

( समाधानभाष्यम् )

**परिगणनमित्याह ॥ अपि खल्वप्याहुः[4]—"यदन्यदव्ययीभावस्याव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः" इति ॥**

( प्रदीपः ) **अपि खल्विति ।** एवं[5] खल्वित्यर्थः । परिगणनमनेन दृढीक्रियते ॥

( उद्योतः ) **अनेनेति ।** ऋष्यन्तरवचनसंवादेनेत्यर्थः । तत्र[6] 'वक्तव्यः' इत्यन्तं तत् । तत्र यदन्यदित्यन्यत्वे प्रतियोगिनस्त्रय उक्ता इत्याहुः ॥

( अनुयोगभाष्यम् )

**किं पुनस्तत् ?**

( परिगणनाभावे दूषणभाष्यम् )

**पराङ्गवद्भावे[7]ऽव्ययप्रतिषेधश्चोदितः, उच्चैरधीयान-नीचैरधीयानेत्येवमर्थम्। स इहापि प्राप्नोति—उपाग्न्यधीयान - प्रत्यग्न्यधीयान - इति ॥**

( प्रदीपः ) **उपाग्न्यधीयानेति ।** अग्निसमीपे अधीयानेत्यर्थः । तत्र***षष्ठ्यामन्त्रितकारकवचनम्***इति पराङ्गवद्भावो भवति ॥

( उद्योतः ) **किं पुनस्तत्-पराङ्गवदित्यादिना** तस्यैवोदाहरणप्रदर्शनम् ॥ **षष्ठ्येति ।** अत्र च कारकत्वम् । तेन समुदायस्य षाष्ठमामन्त्रितस्य चेत्याद्युदात्तत्वम् ॥

( परिगणनाभावे दूषणभाष्यम् )

**अकच्यव्ययग्रहणं क्रियते, उच्चकैर्नीचकैरित्येवमर्थम् । स[9] इहापि प्राप्नोति—उपाग्निकं-प्रत्यग्निकम्[10] ॥**

---

१ लिङ्गान्निर्देशादिति दण्डिकृष्णाद्युक्त्यसांगत्यायाह—**इत्वेति** ॥ ननु धातोरनिद्त्वेनैकाच इति निषेधात्कथमत्रेट्सिद्धिरत आह—**क्रादीति** ॥ छाया ॥

२ कैयटदण्डिकृष्णाद्युक्तिं खण्डयति—**परे त्विति** । तत्र हेतुमाह—**उपेति** ॥ ननु लिङ्गेन तस्यैव बाधेनेष्टसिद्धिरत आह—**अचश्चेत्यस्येति** ॥ छाया ॥

३ इत्येष प्रतिषेध इति । मुखं स्वाङ्गमिति सूत्रविहितस्य मुखरूपोत्तरपदान्तोदात्तत्वस्येति शेषः ॥ 'इति प्रतिषेधः' इति आ. पाठः ॥

४ 'खल्वाहुः' इति आ. पाठः ॥

५ पूर्वोऽपिरेवमर्थ इत्याह—**एवमिति** ॥ छाया ॥

६ तत्र-संवादे ॥ तत्–वचनम् ॥ साकाङ्क्षत्वादाह—**तत्रेति** । वचन इत्यर्थः ॥ आहुः-तत्त्वविदः । प्रत्यासत्त्येति भावः ॥ छाया ॥ प्रतियोगिनस्त्रयः–लुङ्मुखस्वरोपचाराः ॥

७ 'पराङ्गवद्भावः । पराङ्ग-' इति आ. पाठः ॥

८ अयमितिशब्द आ. पुस्तके न ॥

९ 'तदिहापि' इति आ. पाठः ॥ सः–अकच् ॥

१० 'कमिति' इति आ. पाठः ॥

( परिगणनाभावे दूषणभाष्यम् )

**मुमि अव्ययप्रतिषेधश्चोद्यते, दोषामन्यमहः-दिवामन्या रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति—उपकुम्भंमन्यः - उपमणिकंमन्य इति ॥**

( परिगणनाभावे दूषणभाष्यम् )

**"अस्य च्वौ" अव्ययप्रतिषेधश्चोद्यते, दोषाभूतमहः-दिवाभूता रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति—उपकुम्भीभूतम्-उपमणिकीभूतम् ॥**

( प्रत्याख्यानभाष्यम् )

**यदि परिगणनं क्रियते, नार्थोऽव्ययीभावस्याव्ययसंज्ञया ॥**

( आक्षेपभाष्यम् )

**कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि ?**

( प्रथमप्रयोजननिरासभाष्यम् )

**नैतानि सन्ति ॥ यत्तावदुच्यते—लुगिति । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यव्ययीभावाल्लुगिति । यदयम्—"नाव्ययीभावात्" इति प्रतिषेधं शास्ति ॥**

**( उद्योतः )** भाष्ये-यदयं नाव्ययीभावादिति । स[3] ह्यनन्तरत्वादव्ययादाप्सुप इत्यस्यैव निषेधो न तु सुपो धात्वित्यस्येति उपमणिकमुख इत्यादौ तन्निषेधेन चरितार्थमिति न भ्रमितव्यम् ॥

( तृतीयप्रयोजननिरासभाष्यम् )

**उपचारः-अनुत्तरपदस्थस्येति वर्तते ॥**

( द्वितीयप्रयोजने समाधानभाष्यम् )

**तत्र मुखस्वर एकः प्रयोजयति । न चैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्—'नाव्ययाद्व्ययीभावाच्च'[4] इति ॥ अव्ययीभावश्च ॥ ४१ ॥**

**( प्रदीपः ) न चैकमिति ।** सामान्यलक्षणमेकप्रयोजनार्थं न कर्तव्यमित्यर्थः ॥ **तत्रैवायमिति ।** न चोक्तम्, तस्मान्मुखस्वरेणात्र भवितव्यमित्याहुः ॥ अन्ये तु वर्णयन्ति-अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानान्मुखस्वरनिवृत्तिर्भविष्यतीति नार्थः सूत्रेणेति ॥ केचित्तु—स्वरादिपाठात्सिद्धायामव्ययसंज्ञायां पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेन कतिपयान्येवाव्ययकार्याणि भवन्तीति नार्थः परिगणनेनेत्याहुः ॥ तेषां वचनमन्तरेण विशेषे प्रमाणाभावः ॥ ४१ ॥

**( उद्योतः ) न चोक्तमिति ।** भाष्ये 'यदि'[7] इत्यसन्दिग्धे संदिग्धवचनं वेदाः प्रमाणं चेत्-इतिवत् । तस्मात्तत्र ग्रहणं कर्तव्यम्, सूत्रं च न कार्यमिति भाष्याशय इति **वर्ण्यम्**[8] ॥ **अन्ये त्विति ।** च्विना ह्यारोपितमव्ययत्वं वास्तवमनव्ययत्वं च प्रतीयत इति यथालक्ष्यं किंचिदव्ययकार्यं भवति किंचिन्न-इतीष्टं सिद्धमिति भावः ॥ **विशेषे**-कार्यविशेषे ॥ किंच[9] **द्विर्बद्धं सुबद्धमिति** न्यायेन पुनर्विधानात् सार्वत्रिकत्वमेव स्यादित्यपि द्रष्टव्यम् । एवं चाव्ययीभावस्याव्ययत्वात्क्यज्नेति हरदत्ताद्युक्तं **चिन्त्यम्** । भाष्यविरोधात् ॥ अन्ये **तु—**मुखस्वरे नाव्ययीभावादिति[10] नोक्तम् । सूत्रं च कृतम् । तस्मादन्यदपि प्रयोजनम्—नद्या उपकूलमित्यादौ षष्ठीसमासप्रतिषेधादीत्याहुरिति मतं हरिटीकायां स्पष्टम् । तत् **'अपि खल्वप्याहुः'** इत्यादिभाष्याननुगुणम् ॥ ४१ ॥

( इत्यव्ययसंज्ञाप्रकरणम् )

( अथ सर्वनामस्थानसंज्ञासूत्रे )

( ३७ सर्वनामस्थानसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १३ )

## शि[11] सर्वनामस्थानम् ॥ १ । १ । ४२ ॥

( ३८ सर्वनामस्थानसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १४ )

## सुडनपुंसकस्य ॥ १ । १ । ४३ ॥

( २२८ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः[12] ॥ * ॥**

( भाष्यम् )

**शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि[13] शिप्रतिषेधः प्राप्नोति । कुण्डानि तिष्ठन्ति, वनानि तिष्ठन्ति ॥**

---

१ आ. पुस्तके इतिशब्दो न ॥

२ 'यदव्ययं नाव्ययीभावादत इति प्रतिषेधः शास्ति' इति आ. पाठः ॥

३ नन्वन्यनिषेधेन चारितार्थ्यात्कथं ज्ञापकत्वमत आह—**स ह्येति** । प्रतिषेधो यत इत्यर्थः ॥ **तन्निषेधेन**-सुप इत्यस्य निषेधेन ॥ **तार्थं** इति पाठः ॥ छाया ॥ **चरितार्थं**-नाव्ययीभावादित्येतत् ॥

४ **नाव्ययेति** । नेदृशः सूत्रन्यासः, किन्तु अव्ययग्रहणवदव्ययीभावस्यापि ग्रहणम्प्रदर्श्यते । न्यासस्तु 'नाव्ययाव्ययीभावदिकृशब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' इति ॥

५ **मुद्रादणित्यादेः** सत्त्वादाह—**सामान्येति** ॥ भाष्यतात्पर्यमाह—**न चोक्तमिति** । तद्धुक्तमित्यर्थः ॥ छाया ॥

६ केचिन्मतं दूषयति—**तेषामिति** ॥ छाया ॥

७ सर्वमतासांगत्यप्रदर्शनाय सिद्धान्तभूतं भाष्यार्थमाह—**यदीति** ॥ छाया ॥

८ **वर्ण्यमिति** । मुखस्वरेणात्र भवितव्यमिति कैयटेनोक्तम्, सिद्धान्ते तु अव्ययीभावग्रहणान्निषेधान्मुखस्वरो न भवतीत्येव ॥

९ दोषान्तरमाह—**किंचेति** ॥ **एवं च**-परिगणनावश्यकत्वे च ॥ छाया ॥

१० 'भावादि नोक्तं' इति प. पाठः ॥ **सूत्रं**-अव्ययीभावश्चेति ॥

११ वार्तिके उभयोरनुवादात्सूत्रद्वयप्रतीकं धृतम् ॥ छाया ॥

१२ सुटोऽनपुंसकेन संबन्धोऽन्यथा पूर्वसूत्रं व्यर्थमेव स्यादत आह—**जसि शीति** ॥ वृक्षे शाखेतिवत्सप्तम्यवयविन आधारत्वविवक्षया, जसः शेः संज्ञाप्रतिषेध इत्यर्थः ॥ छाया ॥

१३ 'जसि शेः प्रति' इति आ. पाठः ॥

(प्रदीपः) शि सर्वे० ॥ ४२ ॥ सुडनपुंसकस्येति चेदिति । अस्मिन् सूत्रन्यासे दोषः । 'सुट् स्त्रीपुंसयोः' इत्यस्मिन्न्यासे न दोष इत्यर्थः ॥

(दूषणान्तरभाष्यम्)

**असमर्थसमासश्चायं द्रष्टव्यः-अनपुंसकस्येति । न हि नञो नपुंसकेन सामर्थ्यम् ॥**

**केन तर्हि ?**

**भवतिना । न भवति नपुंसकस्येति ॥**

(प्रदीपः) प्रसज्यप्रतिषेधाश्रयेण पूर्वपक्षः, पर्युदासाश्रयेण सिद्धान्तः ॥

(उद्योतः) शि सर्वना० ॥ ४२ ॥ भाष्ये-असमर्थसमासश्चेति दूषणान्तरम् । तत्रासामर्थ्य-असंबन्धात् । चेन वाक्यभेदस्यापि संग्रहः ॥ पर्युदासेति । एवं हि समर्थसमासैकवाक्यते लभ्येते ॥ यद्यपि पर्युदासेऽपि लक्षणा, तथापि दोषद्वययुक्तप्रसज्यप्रतिषेधापेक्षया लघुरेवेति भावः ॥ वस्तुतो नञो निपातत्वेनानेकार्थत्वात्पर्युदासपक्षे लक्षणा-इति रिक्तं वचः ॥ पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्याप्राप्तौ न मानमिति तात्पर्यम् ॥

(समाधानभाष्यम्)

**यत्तावदुच्यते-*शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः*-इति ॥**

(२२९ समाधानवार्तिकम् ॥ १ ॥)

**॥ * ॥ नाप्रतिषेधात् ॥ * ॥**

(भाष्यम्)

**नायं प्रसज्यप्रतिषेधः-नपुंसकस्य नेति ॥**

**किं तर्हि ?**

**पर्युदासोऽयम्-यदन्यन्नपुंसकादिति । नपुंसके न व्यापारः । यदि केनचित्प्राप्नोति, तेन भविष्यति । पूर्वेण च प्राप्नोति ॥**

(उद्योतः) भाष्ये-नपुंसके न व्यापार इति । निषेधस्येति शेषः ॥

(२३० समाधानवार्तिकम् ॥ २ ॥)

**॥ * ॥ अप्राप्तेर्वा ॥ * ॥**

(भाष्यम्)

**अथवा-अनन्तरा या प्राप्तिः सा निषिध्यते ॥**

**कुत एतत् ?**

**'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति । पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति ॥**

(प्रदीपः) अप्राप्तेर्वेति । प्रसज्यप्रतिषेधेऽप्यदोषः । तत्र सुडित्यनेन या प्राप्तिः, सा प्रतिषिध्यते । न तु शि सर्वनामस्थानमिति प्राप्तिः । अन्यथा शि सर्वनामस्थानमिति निरवकाशं स्यात् । नपुंसकस्यैव हि शिः संभवति ॥

(उद्योतः) अप्राप्तेरिति वार्तिकस्य पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाप्राप्तेरिति अक्षरार्थः ॥ भाष्ये तु वस्त्वर्थ उच्यते ॥ अन्यथेति । सुडित्यनपेक्ष्य नपुंसकसंबन्धिमात्रस्य निषेध इत्यभिमानः ॥ सुट्संबन्धे तु इदं चिन्त्यं, शसः शौ चरितार्थत्वात् ॥

(आक्षेपभाष्यम्)

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥**

(प्रदीपः) ननु चेयमिति । परत्वादित्यर्थः । प्रतिषेधयुक्तायुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्तिः पूर्वां प्राप्तिं बाधते, तामपि प्रतिषेध इति दोषः ॥

---

१ तत्सूचितन्यासान्तरमाह-सुट् स्त्रीति ॥ छाया ॥

२ इतः प्राक् 'असमर्थसमासश्च' इति वार्तिकं केचित्कल्पयन्ति । तादृशः पाठो न दृष्टचरः । किञ्च यद्येतद्वार्तिकं स्यात् तदग्रे 'यदप्युच्यते असमर्थसमासश्चायं द्रष्टव्य इति' इत्यनुवादप्रसङ्गे 'यदप्युच्यते असमर्थसमासश्चेति' इत्येवानूदितं स्यात् । अतो नैतद्वार्तिकम् ॥

३ प्रसज्येति । एवं हि नञः प्रतिषेधो मुख्यार्थोऽनुगृहीतो भवतीति भावः ॥ छाया ॥

४ नासामर्थ्यमेकार्थीभावाभावप्रयुक्तम्, व्यपेक्षाया अप्यभावादत आह-तत्रेति । प्रसज्यप्रतिषेधे इत्यर्थः ॥ न्यूनतां निराचष्टे-चेनेति । अत्र पक्षे आद्यदोषस्य भाष्य एवोद्भृतत्वात्तदन्यदोषद्वयमुद्धरति-एवं हीति ॥ लक्षणेति । तद्योगिनीति भावः । लघुरेवेति । एकदोषकत्वात् । इदमप्यभ्युपेत्योक्तम् । वस्तुतस्तु सापि नेत्याह-वस्तुत इति ॥ तस्मात्सर्वथा लघुरेव स इति भावः ॥ छाया ॥

५ नाप्रतिषेधादिति वार्तिकं न प्रतिषेधनिषेधकम् । पर्युदासेऽप्यार्थिकनिषेधसत्त्वादत आह-नायं प्रेति ॥ छाया ॥ वार्तिकाक्षरार्थस्तु-प्रसज्यप्रतिषेधाभावात् शिप्रतिषेधो न-इत्येव । प्रतिषेधशब्दः प्रसज्यप्रतिषेधपरः ॥

६ 'नपुंसकेऽव्यापारः' इति आ. पाठः ॥

७ तदाशयमाह-पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्याप्राप्तौ न मानमिति तात्पर्यमिति पाठः । अत एवाह-निषेधेति ॥ अत एवोक्तं भाष्ये-यदि केनचिदिति ॥ छाया ॥

८ पक्षान्तरोक्तौ बीजमाह-प्रसज्येति ॥ तत्र-प्रसज्यप्रतिषेधेऽपि ॥ छाया ॥

९ वस्त्वर्थः-परमार्थः ॥ दण्डिकृष्णाद्युक्तमाह-सुडित्यनेति । बाध्यसामान्यचिन्तयेति भावः ॥ छाया ॥

१० इयं प्राप्तिः-सुडनपुंसकस्येति सूत्रेण प्राप्तिः । पूर्वां प्राप्तिं-शि सर्वनामस्थानमिति सूत्रप्राप्तिम् । कुण्डानि तिष्ठन्तीत्यत्र शि सर्वनामस्थानमित्यस्य सुडित्यनेन बाधः परत्वात्, सुडितिप्राप्तिश्चानपुंसकस्येत्यनेन बाध्यते । एवञ्च जसि शेः संज्ञाऽप्राप्तिः प्रसज्यप्रतिषेध इति भावः ॥

(उद्द्योतः) ननु संज्ञाया एकत्वेन कार्यैक्ये विरोधाभावात्कथं परत्वमत आह—**प्रतिषेधेति**। [१]शसि सावकाशत्वात्। एवं चोभयोर्यौगपद्यासंभवरूपो विरोधोऽस्तीति भावः॥ **पूर्वां प्राप्तिमिति**। एवं च **सकृद्गति**न्यायेन पुनर्न प्रवर्तत इति भावः॥

(समाधानभाष्यम्)

**नोत्सहते प्रतिषिद्धा सती पूर्वां बाधितुम्॥**

**(प्रदीपः) नोत्सहत इति**। अपवादविषयपरिहारेणास्याः प्रवर्तनादित्यर्थः॥

**(उद्द्योतः)** [२]अपवादेति। एवं च स्वयमप्रवर्तमाना कथमन्यबाधिकेति त[३]न्न्यायावसरो नेति भावः॥

(दूषणान्तरसमाधानभाष्यम्)

**यदप्युच्यते—असमर्थसमासश्चायं द्रष्टव्यः—इति। यद्यपि वक्तव्यः, अथवैतर्हि बहूनि प्रयोजनानि॥**

**कानि?**

**असूर्यंपश्यानि मुखानि, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मण इति॥ सुड०॥४३॥**

**(प्रदीपः) अथवैतर्हीति**। इदानीमित्यर्थः। [४]तत्र **स्त्रीपुंसयो**रिति वक्तव्ये **अनपुंसकस्ये**ति वचनं ज्ञापकम्—प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्तीति॥ ४३॥

**(उद्द्योतः) इदानीमित्यर्थ इति। तथापीत्यर्थ** इत्युचितम्। **यद्यपि वक्तव्य** इत्युपक्रमात्॥ **स्त्रीपुंसयोरिति**। मात्राधिक्येऽपि [५]स्पष्टप्रतिपत्त्यर्थमित्यर्थः॥ **पुंस्त्रियो**रिति तु वक्तुमशक्यम्, तस्यासाधुत्वात्—इति बोध्यम्॥ अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या [६]**शास्त्रप्रापितस्य प्रतिषेधे विकल्प** इति मीमांसकोक्तं चिन्त्यम्। सामान्यविशेषन्यायेन बाधस्यैवौचित्यात्। स्वाभावे संभावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः॥ ४३॥

(इति सर्वनामस्थानसंज्ञासूत्रे)

(३९ विभाषासंज्ञासूत्रम्॥ १।१।६ आ. १५॥)

## न वेति विभाषा॥ १। १। ४४॥

(अर्थसंज्ञाधिकरणम्)

(२३१ आक्षेपवार्तिकम्॥ १॥)

### ॥ * ॥ नवेतिविभाषायामर्थसंज्ञाकरणम्॥ * ॥

(भाष्यम्)

**नवेतिविभाषायामर्थस्य संज्ञा कर्तव्या। नवाशब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम्॥**

**(प्रदीपः) न वेति०॥४४॥ नवेतिविभाषायामिति**। समुदायस्यानुकरणत्वादनुकरणस्य चानुकार्येणार्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः। स्त्रीप्रत्यये च तदादिनियमाभावाद्याडामौ भवतः। **अथवा** नवेत्युच्चार्य या विभाषा कृता तस्यां-इति व्याख्या। [७]तत्र लोके क्रियापदसंनिधाने नवाशब्दयोर्योऽर्थो द्योत्यो विकल्पप्रतिषेधलक्षणः स संज्ञीत्यर्थः। अन्यथा विभाषाप्रदेशेषु नवाशब्दावेवादेशौ स्याताम्॥

**(उद्द्योतः) न वेति विभाषा॥ ४४॥** ननु समुदायस्य समासग्रहणनियमेनाप्रातिपदिकत्वात् **नवेतिविभाषाया**मित्यनुपपन्नमत आह—**समुदायस्येति**। [८]वार्तिकोच्चारितसमुदायस्येत्यर्थः॥ नन्वेवमपि समुदायस्यानाबन्तत्वात् कथं याडादीत्यत आह—**स्त्रीप्रत्यये चेति। स्त्रीप्रत्यये चानुपसर्जने** नेति ष्यङः संप्रेति भाष्यं संगच्छते॥ एवं च विकल्पप्राप्तिरेव न। किं चान्यथा प्रतियोगिप्रसिद्ध्या तद्बोधसंभवेन तदप्राप्तिरेव॥ **नवेतिसूत्रभाष्येऽप्येवम्**। तदाह—**इत्यादीति॥ मञ्जूषायां**—नञर्थवादे॥ छाया॥

१ कैयटस्थचसंग्राह्यमाह—**शसीति**। पूर्वस्येति शेषः॥ द्वितीयस्य त्वन्यत्र तत्स्पष्टमेवेति भावः॥ तथाच कैयटोक्तहेतुयुतसावकाशत्वं हेतुर्विरोधे। तदाह—**एवं चेति॥ उभयोस्तादृशयोः** सावकाशत्वे चेत्यर्थः॥ छाया॥

२ बाधकत्वसामान्येनापवादत्वव्यवहारादाह—**अपवादेतीति**। निषेधेऽपि॥ छाया॥

३ **तन्न्यायेति**। सकृद्गतिन्यायेत्यर्थः॥ छाया॥

४ ननु वचनान्तरे तद्रूपदोष एवेत्यविशेष इति सूत्रमते कथं दोषपरिहारोऽत आह—**तत्रेति**। सूत्रे इत्यर्थः॥ छाया॥

५ **स्पष्टेति**। तथा च ज्ञानलाघवमिति भावः॥ पुंस्त्रियोरिति वक्तव्ये इत्यादि तूचितमिति तदुक्तिमेव खण्डयति—**पुंस्त्रियोरिति**। **स्त्रीपुंसे**त्यनेन तस्य तत्त्वबोधनादित्यर्थः॥ **अत्र**—प्रकृतसूत्रे। **उक्त्वा**न्वयः। पक्षभेदकथनेनेति भावः॥ **विकल्प इति**। वचनद्वयप्रामाण्यादिति भावः॥ तुल्यार्थत्वाभावादाह—**सामान्येति॥** अत्र साधारणं बीजमाह—**स्वाभावे इति॥** वचनप्राप्तस्य निषेधासंभवादाह—**संभेति॥ चो ह्यर्थे**॥ अत एव **निषेधाश्च बलीयांस** इति भाष्यं संगच्छते॥ ...

६ **शास्त्रप्रापितस्य प्रतिषेध इति**। प्रतिषेधः—प्रसज्यप्रतिषेधः। एवं हि तत्र मीमांसकाभिप्रायः—यजतिषु ये यजामहं करोति नानुयाजेषु इत्यादौ पर्युदास एव, न प्रसज्यप्रतिषेधः। अनुयाजभिन्नेषु यजतिष्विति तदर्थः। शास्त्रीयविहितप्रतिषिद्धत्वाद्विकल्पापत्तेर्वाक्यभेदापत्तेश्चेति। अत्र भाष्यकृता पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या तद्विरुद्धो मीमांसकाभिप्रायश्चिन्त्य इत्यर्थः॥

७ नन्वर्थसंज्ञायामप्यतिप्रसङ्ग एवात आह—**तत्रेति॥ तेषां** मध्य इत्यर्थः॥ **क्रियेति**। तस्याः प्राधान्यादिष्टानुरोधाच्चेति भावः। इदं दुर्घटमेवेत्याह—**विभाषाप्रेति**॥ छाया॥

८ विभाषेति प्रकृतिप्रत्ययादिसमुदायस्य वारणाय पक्षान्तरस्य वक्ष्यमाणत्वादाह—**वार्तिकोचेति॥ एवमपि**—विभक्त्युत्पत्तावपि। **प्रत्ययग्रहण** इति नियमात्॥ छाया॥

सारणमित्यत्र भाष्यपठितवचनेनेति भावः ॥ यत्तु हल्ङ्याबिति दीर्घग्रहणादिति । तन्न । बहुश्रेयसीत्यादौ लोपार्थं प्रत्ययग्रहण इति तदन्तविधिना ङ्यन्तेत्यर्थे तस्य स्वादिप्रत्ययलब्धयस्माद्विधिस्तदादेरित्येतद्विशेषणतया ङ्यन्तान्तेत्यर्थेन निष्कौशाम्बिव्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक् ॥ अनुकरणस्यावन्तत्वं तु प्रकृतिवदनुकरणमिति न्यायात् । तस्यानित्यत्वाच्च न प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम् ॥ अथवेति । कृता—उच्चारिता । समासत्वादेव प्रातिपदिकत्वम्, असमासेऽपि लिङ्गविशिष्टपरिभाषया विभक्तिरिति भावः ॥ नामपदसन्निधाने 'नवा शाटी' इत्यादौ प्रत्ययार्थावगतेराह—क्रियापदेति ॥ अन्यथेति । प्रकरणादिवशाच्चार्थविशेषावसाय इति भावः ॥

(भाष्यम्)

**किं प्रयोजनम्?**

(२३२ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥)

**॥ * ॥ शब्दसंज्ञायां ह्यर्थासंप्रत्ययो यथाऽन्यत्र ॥ * ॥**

(भाष्यम्)

**शब्दसंज्ञायां सत्यामर्थस्यासंप्रत्ययः स्यात्। 'यथाऽन्यत्र'। अन्यत्रापि हि शब्दसंज्ञायां शब्दस्य संप्रत्ययो भवति, नार्थस्य ॥**

**क्वान्यत्र?**

**"दाधा घ्वदाप्" "तरप्तमपौ घः" इति। घुग्रहणेषु घग्रहणेषु च शब्दस्य संप्रत्ययो भवति, नार्थस्य ॥**

(प्रदीपः) **घुग्रहणेष्विति।** शब्दस्य संज्ञाकरणात्प्रदेशेषु तस्यैव संप्रत्यय इत्यर्थः ॥

(उद्द्योतः) ननु दाधा घ्वित्यादौ न घुशब्दादिना दाधादीनां प्रत्ययः, किंतु दाधाशब्दैरेवेत्यत आह—**प्रदेशेष्विति** ॥ भाष्ये घुग्रहणेष्वित्यादेः-घुप्रदेशेष्वित्यर्थः ॥

(आक्षेपभाष्यम्)

**तत्तर्हि वक्तव्यम् ॥**

(समाधानभाष्यम्)

**न वक्तव्यम् ॥**

(२३३ समाधानवार्तिकम् ॥ २ ॥)

**॥ * ॥ इतिकरणोऽर्थनिर्देशार्थः ॥ * ॥**

(भाष्यम्)

**इतिकरणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति ॥**

(प्रदीपः) **इतिकरण इति।** क्रियत इति—करणः, कर्मणि ल्युट्, इतिश्चासौ करणश्चेति विशेषणसमासः ॥ 'क्रियते' इति सामान्यविशेषभावेन निर्देशः ॥

(उद्द्योतः) करणल्युटि अर्थासङ्गतेराह—**कर्मणीति।** बाहुलकादिति भावः ॥ **सामान्येति।** पाकं पचतीतिवत् ॥

(आक्षेपभाष्यम्)

**किं गतमेतदितिना, आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्?**

(प्रदीपः) **शब्दाधिक्यादिति।** उपहासपरमेतच्चोदकस्य वचनम्। अशब्दार्थस्यालाभादिति भावः ॥

(समाधानभाष्यम्)

**गतमित्याह ॥**

**कुतः?**

(समाधाने भाष्यवार्तिकम् ॥)

***लोकतः ॥***

(भाष्यम्)

**तद्यथा—'गौरित्ययमाह' इति गोशब्दादितिकरणः प्रयुज्यमानो गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतः-याऽसावर्थपदार्थकता तस्याः-शब्दपदार्थकः संपद्यते ॥ एवमिहापि नवाशब्दादितिकरणः प्रयुज्यमानो नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतः-याऽसौ शब्दपदार्थता तस्याः-लौकिकमर्थं सम्प्रत्याययति—नवेति यद्गम्यते-नवेति यत्प्रतीयते-इति ॥**

१ दण्डिकृष्णाद्युक्तिं खण्डयति—**यत्त्विति** ॥ वचनपक्षे उपसर्जने तत्तस्त्वेनार्धपिप्पलीत्यादौ सुलोपो न स्यात् समुदायस्याङ्यन्तत्वात्। अवयवतत्त्वमादाय तु न सः, स्वादिप्रत्ययेन प्रकृत्याक्षेपे तेन तस्या विशेषणेनावयवस्यातत्त्वात्, तस्यास्तेनोपसर्जनेऽपि सामान्यतस्तदभावो ज्ञाप्यत इति भावः ॥ **ङ्यन्तेत्यर्थे**—ङ्यावन्तेत्यर्थे सति। **तस्य**—ङ्यावन्तस्य। एवमग्रेऽपि ॥ **शाम्बि**—शाम्ब्यादि ॥ सिद्धान्ते तस्य खण्डितत्वमित्यपि बोध्यम् ॥ तदाह—**दिगिति** ॥ छाया ॥

२ नन्वेवमप्यनुकरणे प्रकृतिप्रत्ययाविभागात्कथं तत्त्वमत आह—**अनुकरणेति** ॥ नन्वेवमप्रत्यय इति निषेधात्कथं प्रातिपदिकत्वमत आह—**तस्येति** ॥ प्रतिपादितमिदमधस्तात् ॥ छाया ॥

३ द्वितीयपक्षे समस्तमसमस्तं वा, तत्राद्ये आह—**समासेति** ॥ द्वितीय आह—**असमासेऽपीति** ॥ छाया ॥

४ अन्यथेतीति। तयोरेव संज्ञायाः करणे इत्यर्थः ॥ अस्यैवाशयमाह—**प्रकेति** ॥ छाया ॥

५ एतत्सूचितमाह—**घुग्रहेति** ॥ छाया ॥

६ 'विशेषण' इति पदं क. घ. पुस्तकयोर्न ॥

७ **अर्थासङ्गतेः**—करणल्युडन्तस्य कर्मप्रत्ययान्तेन क्रियत इत्यनेनानन्वयात् ॥

८ अस्य प्रसिद्धत्वायाह—**पाकमिति** ॥ छाया ॥

९ तत्र बीजमाह—**अशब्देति** ॥ छाया ॥

१० 'लोके गौरि' इति आ. पाठः ॥

११ 'करणः परः प्रयुज्य' इति आ. पाठः ॥

१२ 'पदार्थकता' इति क. ख. ग. पाठः ॥

**( प्रदीपः ) गौरित्ययमाहेति ।** यद्यपि नित्ये शब्दार्थसंबन्धे उपात्तस्यार्थस्य त्यागो नास्ति, तथापि प्रसिद्धिवशादेतदभिधीयते—**अर्थपदार्थकतायाः प्रच्युतः**—इति । तत्त्वतस्त्वादावेव स्वरूपपदार्थको गोशब्दः प्रयुक्तः, सादृश्यात्तु तमर्थमनभिव्यक्तं 'इति'शब्दो द्योतयतीति पदार्थविपर्यासकृत्—इत्युच्यते ॥ **अर्थपदार्थकतेति ।** संबन्धे भावप्रत्ययः । संबन्धात्प्रच्युतोऽतोऽर्थात् प्रच्युतो भवति ॥

**( उद्द्योतः )** भाष्ये—**स्वस्मात्पदार्थात्प्रच्युतः शब्दपदार्थकः संपद्यत** इत्यन्वयः ॥ **स्वस्मात्पदार्थादि**त्यस्य विवरणम्—**याऽसाविति ।** दार्ष्टान्तिके च **शब्दपदार्थता, 'स्वं रूपं'** इति वचनात् ॥ **तस्या** इत्यस्य प्रच्युत इति शेषः ॥ कोऽसौ लौकिकोऽर्थस्तत्राह—**नवेति यद्गम्यत इति ॥** तद्विवृणोति—**नवेति यत्प्रतीयत इति । स लौकिकोऽर्थ** इति शेषः ॥ **यद्यपीति ।** एवं च **स्वस्मात्पदार्था**दित्यनुपपन्नं, सर्वस्यापि स्वपदार्थत्वात् । प्रच्युतिश्चानुपपन्नेति भावः ॥ **त्यागो नास्ती**ति चार्थान्तरग्रहणाभावस्याप्युपलक्षणम् ॥ **प्रसिद्धिवशादिति ।** लोकप्रसिद्ध्यैव तत्र स्वपदार्थत्वव्यवहारः । तेषामेवास्मायं प्रसिद्धोऽर्थस्त्यक्तोऽप्रसिद्धश्च गृहीत इति प्रसिद्ध्या भाष्ये प्रच्युत्यङ्गीकारावुक्ताविति भावः ॥ वस्तुतो न प्रच्युत्यादिकमित्याह—**तत्त्वत इति ॥ सादृश्यादिति ।** अर्थभेदाच्छब्दभेद इति पक्षे इदम् ॥ एकशब्दत्वे त्वभेदादिति बोध्यम् ॥ वस्तुतः प्रच्युत्यङ्गीकारौ तयोरर्थयोर्बोधाविषयत्वबोधविषयत्वे एव, न तु मुख्याविति बोध्यम् ॥ **पदार्थविपर्यासकृदिति ।** लोके शब्दविशेषणकार्थप्रतीतिः, शास्त्रेऽर्थविशेषणकशब्दस्य । इतिशब्दसमभिव्याहारे विपरीतमिति विपर्यासः ॥ भाष्येऽपि—**स्वस्मात्पदार्थात् प्रच्युत** इत्यस्य विशेष्यभूतादिति शेषः ॥ अन्यथाऽर्थप्रतीतेः शब्दानालिङ्गिताया अभावेन एतदसङ्गतिः स्यादिति दिक् ॥



( समानशब्दसंज्ञानिरसनाधिकरणम् )

( २३४ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ समानशब्दप्रतिषेधः ॥ * ॥

( भाष्यम् )

**समानशब्दानां प्रतिषेधो वक्तव्यः । नवा कुण्डिका - नवा घटिकेति ॥**

**( प्रदीपः ) समानशब्दप्रतिषेध इति ।** समानः शब्दो वाचको येषामर्थानां तेषामित्यर्थः ॥

**( उद्द्योतः )** इतिकरणस्यार्थनिर्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिरत आह—**समान इति ॥**

( आक्षेपभाष्यम् )

**किंच स्यात्, यद्येतेषां विभाषा संज्ञा स्यात्?**

( समाधानभाष्यम् )

**"विभाषा दिक्समासे बहुव्रीहौ"—दक्षिणपूर्वस्यां शालायाम् । अचिरकृतायां संप्रत्ययः स्यात् ॥**

**( प्रदीपः ) विभाषा दिक्समास इति ।** विभाषाशब्देनाभिनवलक्षणोऽर्थः प्रत्याय्यते । तत्र प्रत्यग्रवाची यो दिक्समास इति संप्रत्ययः स्यात् । तत्र दिशो नित्यत्वान्नवपुराणत्वासंभवात्तन्निमित्तो यदा शालायां व्यपदेशः—दक्षिणपूर्वा शाला सा चाभिनवा, तदा संज्ञा स्यादित्यर्थः । संज्ञाकार्यव्यङ्ग्यं च प्रत्यग्रत्वं स्यात् ॥

**( उद्द्योतः ) प्रत्यग्रेति ।** यद्यपि **न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीम** इति भाष्यपर्यालोचनया सर्वादिविशेषणत्वलाभात् प्रत्यग्रत्वं समासविशेषणमयुक्तम्, तथापि दिग्वाचकसर्वादीनामर्थस्य दिशो नवपुराणत्वासंभवादुदाहरणपरभाष्याच्च तत्र **सर्वादीनी**त्यनेन तद्घटितसमासो लक्षणीय इति भावः ॥ **तन्निमित्त इति ।** लक्षणयेत्यर्थः ॥ **तदा संज्ञेति ।** न बहुव्रीहाविति निषेधे

---

१ 'अर्थपदार्थकता तस्याः' इति भाष्यफलितमिदम् ॥

२ ननु **पदार्था**दित्युक्त्वा व्याख्यानसमये **तस्या** इत्ययुक्तमत आह—**संबन्धे इति ॥** कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानमित्युक्तेः ॥

३ 'प्रच्युतोऽर्थात्' इति 'अतः'शब्दरहितः क. ग. पाठः ॥

४ यथाश्रुतासंगतेराह—**भाष्ये स्वस्मादिति ॥** स्वस्मात्पदार्थादित्यस्य विवरणं—**शब्देति ॥** उभयत्राह—**तस्या इतीति ॥ नवेतीति ॥** क्रियापदसंनिधाने इति भावः ॥ न्यूनतां निराचष्टे—**नास्तीति चेति ॥** चस्त्वर्थे ॥ छाया ॥

५ **तेषामेव**=लोकानामेव । प्रसिद्धावन्वयः ॥ बौद्धस्यैवार्थत्वमिति सिद्धान्तमतेनाह—**वस्तुत इति ॥** छाया ॥

६ उभयत्राह—**इतीति ॥** नन्वेवं स्वपदार्थप्रच्यवः कथमपि नेति भाष्यासंगतिरेवात आह—**भाष्येऽपीति ॥** उभयत्राप्याह—**अन्यथेति ॥** छाया ॥

७ **इतीति ।** नन्वित्यादिः ॥ **समानानामिति ।** वार्तिके कर्मधारय इति भावः ॥ छाया ॥

८ 'यद्येतेषामपि' इति आ. क. ख. पाठः ॥

९ **तत्र**-तेन तत्प्रतीतौ ॥ **तत्र हीति ।** यतः समासे । अग्रेऽन्वयः ॥ दक्षिणपूर्वाशब्दस्याग्नेय्यां शक्तिस्तत्र स्थितत्वाच्छालोच्यते ॥ तदाह—**तन्निमित्त इति ॥** छाया ॥

१० रत्नोक्तं दोषमुद्धरति—**यद्यपीति ॥ उदाहरणेति ।** दक्षिणपूर्वस्यामितीत्यर्थः ॥ **तत्र**-अग्रिमभाष्ये ॥ छाया ॥

११ तत्राशक्तेराह—**लक्षणयेत्यर्थ इति ॥ सर्वादीनी**त्येव सिद्धे सूत्रवैयर्थ्यं परिहरति—**न वेति ॥** उपसर्जनप्रतिषेधोऽपि बोध्यः ॥ छाया ॥

प्राप्ते इदं नित्यार्थं स्यादिति भावः ॥ भाष्ये—अचिरकृतायामिति । तस्यां बोध्यायामित्यर्थः ॥ संप्रत्ययः स्यादित्यस्य संज्ञाया इति शेषः ॥

( २३५ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा विधिपूर्वकत्वात् प्रतिषेधसंप्रत्ययो यथा लोके ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ?**

**'विधिपूर्वकत्वात् ।' विधाय[1] किंचित् न वेत्युच्यते, तेन प्रतिषेधवाचिनः संप्रत्ययो भवति । तद्यथा लोके—ग्रामो भवता गन्तव्यो न वा, नेति गम्यते ॥**

( प्रदीपः ) **न वा विधिपूर्वकत्वादिति** । प्रदेशवाक्यार्थं पर्यालोच्येयं संज्ञा व्यवस्थाप्यते । प्रदेशेषु[2] च कार्याणि विधाय विभाषाशब्द उच्चारितो नवा[3]शब्दार्थं गमयति । तत्र लोकवन्निपातार्थावगतिर्भवति, न तु प्रत्यग्रार्थावगतिरित्यर्थः ॥

( उद्द्योतः ) ननु प्रदेशे[4] विभाषादिगित्यादौ न नवाशब्द उच्चारितः, नवेति विभाषेति सूत्रे तु न किंचिद्विधायोक्तम्, पूर्वोत्तरसाहचर्येणास्य संज्ञासूत्रत्वादित्यत आह—**प्रदेशेति ॥ इयं संज्ञेति । नवेतिविभाषेत्येतत्संज्ञासूत्रार्थ** इत्यर्थः ॥ **कार्याणि**—सर्वनामसंज्ञादीनि ॥ **नवार्थं**—नवाशब्दार्थम्, विभाषाशब्दस्यार्थसंज्ञात्वात् । क्वचित्तु तथैव पाठः । भाष्ये—**न वेत्युच्यते** इत्यस्य–तदर्थबोधको विभाषाशब्द उच्यते इत्यर्थः ॥ **प्रतिषेधवाचिन इति** । प्रतिषेधवाच्ययं शब्द इति प्रत्ययो भवतीत्यर्थः ॥ **न त्विति** । एवं च प्रदेशानुगुण्येन प्रकृतसूत्रेऽपि न प्रत्यग्रवाचिनो ग्रहणमित्यर्थः ॥

( समाधानबाधकभाष्यम् )

**अस्ति कारणम्—येन नवेत्युक्ते[5] लोके प्रतिषेधवाचिनः संप्रत्ययो भवति ॥**

**किं कारणम् ?**

**विलिङ्गं हि भवान् लोके निर्देशं करोति । अङ्ग[6] हि समानलिङ्गो निर्देशः क्रियतां प्रत्यग्रवाचिनः संप्रत्ययो भविष्यति । तद्यथा—'ग्रामो भवता गन्तव्यो नवः', प्रत्यग्र इति गम्यते ॥**

( प्रदीपः ) **विलिङ्गमिति** । भिन्नलिङ्गं, व्यधिकरणमित्यर्थः ॥ विलिङ्गत्वेन वैयधिकरण्यं लक्ष्यते, न तु प्रतिषेधवाचिनो नवाशब्दस्य लिङ्गयोगोऽस्ति ॥

( उद्द्योतः ) **भिन्नेति** । अग्रे समानलिङ्ग इति दर्शनाद्विशब्दो भिन्नार्थ इति भावः ॥ **न त्विति** । अव्ययत्वादिति भावः ॥

( समाधानसाधकभाष्यम् )

**एतच्चैव न जानीमः—क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियत इति ॥**

( प्रदीपः ) **एतच्चैवेति** । नैव क्वचिद् व्याकरणे समानलिङ्गो निर्देश इत्यर्थः ॥ 'विभाषा[7] सेनासुरा–' इति यद्यपि समानलिङ्गो निर्देशः, तथापि भिन्नविभक्तित्वात्सामानाधिकरण्याभावः ॥

( उद्द्योतः ) **नैवेति** । भाष्ये—क्वचित् क्रियत इत्येतच्चैव न जानीम इत्यन्वयः ॥ **न वा विधी**त्युक्तवतोऽयं ग्रन्थः । एवं च शास्त्रे समानलिङ्गनिर्देशस्य क्वाप्यभावात् न क्वापि प्रत्यग्रार्थावगतिरित्याशयः ॥

( समाधानसाधकशेषभाष्यम् )

**अपि चात्र[8] कामचारः प्रयोक्तुः शब्दानामभिसंबन्धे । तद्यथा—'यवागूर्भवता भोक्तव्या न वा' । यदा यवागूशब्दो भुजिना संबध्यते भुजिर्नवाशब्देन, तदा प्रतिषेधवाचिनः संप्रत्ययो भवति—'यवागूर्भवता भोक्तव्या न वा', नेति गम्यते ॥ यदा[10] यवागूशब्दो नवाशब्देनाभिसंबध्यते[9] न भुजिना, तदा प्रत्यग्रवाचिनः संप्रत्ययो भवति । यथा—'यवागूर्नवा भवता भोक्तव्या', प्रत्यग्रेति गम्यते ॥**

**न[11] चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीमः—दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्तीति ॥**

---

१ **विधायेति** । अनेनाभावज्ञाने प्रतियोगिज्ञानस्य कारणता, तयोर्भिन्नौ वाक्यार्थौ इति न पदैकवाक्यता, किंतु वाक्यैकवाक्यतेति सूचितम् ॥ छाया ॥

२ तदेवाह—**प्रदेशेषु चेति ॥ तत्र**—तस्मिन्सति ॥ लक्षणायां बीजमाह—**न त्विति** । न हीत्यर्थः ॥ छाया ॥ 'तत्र प्रदेशेषु' इति ग. पाठः ॥

३ 'नवार्थं' इति क. ख. पाठः ॥

४ **प्रदेश इति** । यत्र किंचिद्विधायोक्तं तत्रेत्यादिः ॥ **नवेतीति** । यत्रोच्चारितस्तत्रेत्यादिः ॥ **उक्तमिति** ॥ नवेति शब्दस्वरूपमित्यर्थः ॥ ननु पूर्वं सर्वनामस्थानसंज्ञां विधाय तदुक्तमेवेति तत्प्रतिषेधप्रतीतिः स्यादत आह—**पूर्वोत्तरेति** । तथाच तत्रैवास्य तात्पर्यं न प्रतिषेध इति कथं प्रतिषेधवाचिनः संप्रत्यय इति भावः ॥ ननु संज्ञासूत्रत्वमुक्तरीत्या निर्णीतमत आह—**इयं संज्ञेति । नवेतीति** ॥ प्रक्रान्तत्वादाह—**सर्वेति** ॥ कर्मधारयनिरासार्थमाह—**नवेति** ॥ छाया ॥

५ 'नवेत्युक्ते' इत्यस्य आ. पुस्तके न पाठः ॥

६ अङ्ग–संबोधने ॥ छाया ॥ 'समानलिङ्गेन निर्देशः' इति ग. पाठः ॥

७ लक्षणावश्यकताभाह—**विभाषेति** ॥ छाया ॥

८ युक्त्यन्तरमाह स एव—**अपि चात्रेति** ॥ वाक्य इत्यर्थः ॥ छाया ॥ 'अपि च काम' इति आ. पाठः ॥

९ 'नाभिसंबध्यते' इति क. ख. पाठः ॥

१० 'यदा तु' इति ख. ग. पाठः ॥

११ नन्वेतावता लोके निर्णयेऽपि प्रकृते कथमत आह—**न चेहेति** ॥ छाया ॥

**किं तर्हि ?**

**भवतिरभिसंबध्यते—दिक्समासे सर्वादीनि भवन्ति विभाषेति ॥**

( प्रदीपः ) **अपि चेति** । तत्र[2] सामर्थ्याद्विशेषावगतिः ॥ यदाऽप्राप्ते यवागूभोजने वाक्यमुदीर्यते, तदा प्रत्यग्रार्थावगतिः । यदा त्वातुरं प्रति गुरुभोजननिषेधार्थमुच्यते, तदा निषेधार्थावगतिः ॥ **न चेहेति** । क्रियायाः प्राधान्यात्सैव विभाषाग्रहणेन संबध्यते, न तु तदङ्गमित्यर्थः । तदेवं स्थितमेतत्—**न वा विधिपूर्वकत्वादिति** ॥

( उद्योतः ) ननूभयविधान्वयसंभवे कथमन्यतरनिर्णय इत्यत आह—**तत्रेति** ॥ **अप्राप्ते यवागूभोजन इति** । अकर्तव्यत्वेनावगते-इत्यर्थः । प्ररोचनायेति शेषः ॥ **न तु तदङ्गमिति** । भवति-क्रियाकर्त्रुद्देश्यरूपं[3] तदङ्गमित्यर्थः ॥ भाष्ये—**विभाषा भवन्तीति** । अत्र **विभाषे**त्यग्रे **सर्वनामानी**ति शेषः ॥ **भवन्ति विभाषे**त्यस्य **सर्वनामानी**त्यादिः ॥

---

( विध्यनित्यत्वसाधनाधिकरणम् )

( २३६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् ॥ * ॥**

( भाष्यम् )

**विधेरनित्यत्वं नोपपद्यते । शुशाव - शुशुवतुः - शुशुवुः । शिश्वाय - शिश्वियतुः - शिश्वियुः ॥**

**किं कारणम् ?**

**'प्रतिषेधसंज्ञाकरणात्' । प्रतिषेधस्येयं संज्ञा क्रियते । तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव संप्रत्ययः स्यात् ॥**

( प्रदीपः ) **विध्यनित्यत्वमिति** । विकल्प इत्यर्थः । नवाशब्द एकनिपातः प्रतिषेधवाची, तस्येहोपादानादिति भावः ॥ परिहारान्तराभिधानाय तु **न बहुव्रीहा**वित्यसंबद्धं स्यात्-इति नोक्तम् ॥

( उद्योतः ) ननु दिक्समासेऽपि नित्यनिषेधे **न बहुव्रीहा**विति सामान्यसूत्रेणैव सिद्धे **विभाषा दिगि**ति सूत्रस्य वैयर्थ्यापत्तिरत आह—**परिहारान्तरेति** ॥ इति सिद्धे 'विभाषा दिक्-' इत्यसंबद्धं स्यादित्यर्थः ॥

( २३७ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु प्रसज्य प्रतिषेधात् ॥ * ॥**

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**'प्रसज्य[4] प्रतिषेधात्' । विधाय किंचिन्नवेत्युच्यते तेनोभयं भविष्यति ॥**

( प्रदीपः ) **सिद्धं त्विति** । प्रतिषेधाद्विधिरनुमास्यते, ततो विकल्पः सेत्स्यतीत्यर्थः ॥

( उद्योतः ) ननु प्रसक्तस्य[5] निषेधेऽभाव एव दृष्टो न तु विकल्पोऽत आह—**प्रतिषेधादिति** । **विभाषा श्वे**रित्यादौ पिद्विषये विधेरनुमानं करिष्यते-इत्यर्थः ॥ 'निषेधा[6]नुपपत्तिकल्पितशास्त्रेण प्रसज्य-इति वार्तिकार्थ इति भावः । एवं च षोडशिग्रहणाग्रहणवदेकविषय'[7] त्वाद्विकल्पसिद्धिरिति तात्पर्यम् ॥ **तत इति** । अन्यथा कल्पितं शास्त्रं व्यर्थं स्यात् । **प्रक्षालनाद्धी**ति न्यायविरोधान्न निषेधार्थमेव तदिति भावः ॥

( २३८ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ विप्रतिषिद्धं तु ॥ * ॥**

( भाष्यम् )

**विप्रतिषिद्धं तु भवति । अत्र न ज्ञायते—केनाभिप्रायेण प्रसजति, केन निवृत्तिं करोतीति ॥**

( प्रदीपः ) **विप्रतिषिद्धं त्विति** । एकविषययोर्विधिप्रतिषेधयोर्विरोधादित्यर्थः ॥

( उद्योतः ) ननु विकल्पो विरुद्धविषय एवेति किमुच्यते—**विप्रतिषिद्धं त्विति**, अत आह—**एकेति** । युगपदिति[8] शेषः ॥ विप्रतिषेधोपपादकं भाष्यम्-**अत्र नेति** ॥ **प्रसजति**-भावमिति शेषः ॥

( २३९ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

---

१ 'समासे बहुव्रीहौ' इति ख. पाठः ॥

२ **तत्र**-तस्मिन्सति ॥ निःसंदेहायाह— **तदेवमिति** ॥ एवं चाज्ञानेन समानशब्दानामित्युक्तस्य निरासेन प्रागुक्तार्थप्रकाशनमनेनेति भावः ॥ छाया ॥

३ साक्षात्तदङ्गत्वाभावादाह—**भवतीति** ॥ तत्कर्तृ संज्ञोद्देश्यसर्वादिरूपमित्यर्थः ॥ छाया ॥

४ 'प्रसज्य किञ्चि' इत्येव आ. पाठः ॥

५ **प्रसक्तस्य**-सामान्यतो यथाकथंचित्प्राप्तस्य ॥ ननु किति विधेः शाब्दत्वात्कथमनुमानमत आह—**पिद्विषये इति** ॥ **शास्त्रेण**-तेनापि ॥ रागतः प्राप्तेः प्रकृतेऽसंभवात् ॥

६ **निषेधेति** । निषेधानुपपत्त्या कल्पितं यद्विधिशास्त्रं तेन **प्रसज्य**-विधाय **प्रतिषेधात्**-प्रतिषेधकरणात् विध्यनित्यत्वं **सिद्ध**मिति वार्तिकार्थः ॥

७ **ग्रहणवदिति** । **तुल्यहेतुत्वादुभयं शब्दलक्षणम्** इति न्यायेनेति भावः ॥ ननु प्रतिषेधार्थमेव तत्कल्पनमत आह—**प्रक्षालनादिति** ॥ छाया ॥

८ कालभेदेन संभवादाह—**युगपदिति** ॥ छाया ॥

किं कारणम् ?

**'प्रसङ्गसामर्थ्यात्' । प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति—अन्यत्र प्रतिषेधविषयात् ॥ प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति—अन्यत्र विधिविषयात् ॥**

( प्रदीपः ) **न वा प्रसङ्गेति** । सामर्थ्याद्विधिप्रतिषेधयोः पर्यायो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) प्रसज्यते इति-**प्रसङ्गः**=विधिः ॥ **प्रतिषेधविषया**दित्यस्य कालविशेषविशिष्टात्ततोऽन्य**त्र**-तत्रै[1]व, कालान्तरविशिष्टे इत्यर्थः । निषेधसामर्थ्यलब्धोऽयमर्थः ॥ 'सामर्थ्यात्प्रतिषेधविषयादन्यत्र विधिः' इत्युक्ते यत्फलितं तदाह—**प्रतिषेधसामर्थ्याच्चेति** । इदमपि पूर्ववद्व्याख्येयम् ॥ तद्ध्वनयन्नाह—**पर्याय इति** ॥

( आक्षेपभाष्यम् )

**तदेतत् क्व सिद्धं भवति—या अप्राप्ते विभाषा । या हि प्राप्ते विभाषा, कृतसामर्थ्यस्तत्र[2] पूर्वेणैव विधिरिति कृत्वा प्रतिषेधस्यैव संप्रत्ययः स्यात् ॥**

( उद्द्योतः ) भाष्ये—**या हि प्राप्ते इति** । केव[3]लोभयत्रविभाषारूपा वेत्य[4]र्थः ॥ **कृतसामर्थ्य इति** । पूर्वे[5]णैव-क्लृप्तशास्त्रेणैव **विधिः कृतसामर्थ्यः**-विहित[5]विधिकल्पकनिषेधीयशक्तिक इत्यर्थः । एवं[6] च तत्र विधिकल्पनाभावात्प्रतिषेधमात्रप्रत्ययः स्यादिति भावः ॥ एतद्भाष्यादपि सामान्यशास्त्रप्राप्तनिषेधे विकल्पं वदन्तो मीमांसकाः परास्ताः ॥

( समाधानभाष्यम् )

**एतदपि सिद्धम् ॥**

**कथम् ?**

**विभाषेति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥**

**कुत एतत् ?**

**लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—उभयोः संज्ञा यथा स्यात्, नेति च वेति च । तत्र या तावदप्राप्ते विभाषा, तत्र प्रतिषेध्यं नास्तीति कृत्वा वेत्यनेन विकल्पो भविष्यति । या हि प्राप्ते विभाषा, तत्रोभयमुपस्थितं भवति—नेति च वेति च । तत्र नेत्यनेन प्रतिषिद्धे, वेत्यनेन विकल्पो भविष्यति ॥**

( प्रदीपः ) **महती संज्ञेति** । तेन द्वावत्र संज्ञिनौ विकल्पप्रतिषेधावित्यर्थः । यदि हि केवलः प्रतिषेधः संज्ञी स्यात्, संज्ञाकरणमनर्थकं स्यात् । विभाषाप्रदेशेषु नेत्येव ब्रूयात् । तत्र समुदायस्येयं संज्ञेति विभाषाप्रदेशेषु विकल्पप्रतिषेधावुपतिष्ठेते । अप्राप्तविभाषासु च प्राप्त्यभावात् प्रतिषेधस्याव्यापाराद्विकल्प एवोपतिष्ठते ॥

( उद्द्योतः ) **महत्याः संज्ञाया** इति भाष्येण संज्ञैव न कर्तव्येति विवक्षितम्, न तु लघ्वी कर्तव्येति-इत्याह—**यदि हीति** ॥ **समुदायस्येति** । प्र[7]त्येकधर्मावच्छिन्नस्योभयस्येत्यर्थः ॥ **विकल्पप्रतिषेधाविति** । प्राप्तविभाषाविषये इत्यर्थः ॥ **विकल्प एवोपेति** । उ[8]भयोः संज्ञाकरणेऽपि निषेधस्यान्वयायोग्यत्वाद् द्वितीयस्यैवोपस्थितिरिति भावः ॥ अत्राप्राप्तविभाषाशब्देन केवला[9]प्राप्तविभाषोच्यते ॥

( भाष्यम् )

**एवमपि—**

( २४० आक्षेपवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिः ॥ * ॥**

( भाष्यम् )

**विधिप्रतिषेधयोर्युगपद्वचनं नोपपद्यते । शुशाव, शुशुवतुः, शुशुवुः । शिश्वाय, शिश्वियतुः, शिश्वियुः ॥**

( भाष्यम् )

**किं कारणम् ?**

( २४१ आक्षेपसाधकवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ भवतीति चेन्न प्रतिषेधः ॥ * ॥**

( भाष्यम् )

**भवतीति चेत् प्रतिषेधो न प्राप्नोति ॥**

---

१ अन्यत्रेत्यस्यैव व्याख्या-**तत्रैवेति** ॥ अत्र बीजमाह—**निषेधेति** ॥ वार्तिकानुक्तत्वादाह—**सामर्थ्यादिति** ॥ **पूर्ववदिति** ॥ कालविशेषविशिष्टाद्विधिविषयादन्यत्र तत्रैव कालान्तरविशिष्ट इत्यर्थः ॥ विधिसामर्थ्यलब्धोऽयमर्थ इति भावः ॥ छाया ॥ **तत्रैव**-कालान्तरविशिष्टे प्रतिषेधविषये एव ॥

२ **तत्रेति** । महासंज्ञयोभयोः संज्ञित्वे सतीत्यर्थः ॥ छाया ॥

३ न्यूनतां परिहरति—**केवलेति** ॥ **विहतेति** पाठः ॥ छाया ॥

४ 'चेत्यर्थः' इति घ. पाठः ॥

५ इदानीन्तनोपलब्धपुस्तकेषु 'विहित' इत्येव पाठो दृश्यते । या हि प्राप्ते विभाषा तत्र विहितः-प्राप्तो यो विधिस्तत्कल्पको यो निषेधस्तदीया शक्तिर्यस्येति भावः । निषेधानुमितो यो विधिस्तस्य यादृशं सामर्थ्यं तादृशमेव प्राप्तस्य विधेः सामर्थ्यमिति विधिकल्पना नास्ति । विहतेति पाठे विहतः-अप्राप्तविधिकल्पकनिषेधीयशक्तिकेत्यर्थः ॥ 'विहतविधि' इति मुद्रितपाठः ॥

६ **एवं चेति** । तेन तत्प्रतिबन्धे चेत्यर्थः ॥ छाया ॥

७ समुदायस्येत्यनुपपन्नं व्याचष्टे—**प्रत्येकेति** ॥ छाया ॥

८ ननु संनियोगेति न्यायेन कथमिदमत आह—**उभयोरिति** ॥ छाया ॥

९ न तु प्राप्ताप्राप्तविभाषाऽपीत्यर्थः । ( र. ना. )

( २४२ आक्षेपसाधकवार्तिकम् ॥ ७ ॥ )

॥ * ॥ नेति चेन्न विधिः ॥ * ॥

( भाष्यम् )

**नेति चेद्विधिर्न सिध्यति ॥**

( प्रदीपः ) **एवमपीति** । यद्यपि विरुद्धयोरेका संज्ञा क्रियते, तथापि प्रदेशेषु युगपद्विरोधाद्भावाभावौ विधातुं न शक्येते इत्यर्थः ॥

( उद्योतः ) **युगपदिति** । [१]अनवगतसंज्ञिद्वयक्रमोपस्थानस्य चोद्यमेतदित्यभिप्रायः ॥ **भावाभावाविति** । इमावेव भाष्ये विधिप्रतिषेधशब्देनोक्तौ ॥

( २४३ समाधानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**पूर्वं विधिमुत्तरो विधिर्बाधते । इतिकरणोऽर्थनिर्देशार्थ इत्युक्तम् ॥**

( प्रदीपः ) **सिद्धं त्विति** । उभयत्रविभाषासु प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तेत इत्यर्थः ॥ यदि तु पूर्वं विकल्पः प्रवर्तते पश्चात्प्रतिषेधस्तदा विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनुपूर्वी च या संज्ञाविधावाश्रिता सैव प्रदेशवाक्येष्वाश्रीयते ॥ उभयत्रविभाषार्था चेयं संज्ञा, प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्यानुपयोगात् ॥ तथाहि—प्राप्तविभाषासु पक्षे निवृत्तिः क्रियते, पक्षे तु प्रवृत्तिः स्थितैव । अप्राप्तविभाषासु च पक्षे कार्यस्य प्रवृत्तिः क्रियते, पक्षान्तरे त्वप्रवृत्तिः स्थितैवेति नास्ति तत्र संज्ञाफलम् ॥ 'विभाषा श्वेः' इत्यत्र तु यदि विधिमुखेन विभाषाश्रुतिः प्रवर्तते—पित्स्वेव संप्रसारणं विभाषा स्यात्, कित्सु यजादित्वान्नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तदाऽपि कित्स्वेव विकल्प इति पित्सु न स्यात् । संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्ते पश्चाद्विधिमुखेन सर्वत्र पक्षे संप्रसारणप्रवर्तनादिष्टं सिध्यति । यदा तु प्रतिलक्ष्यं भेदेन **विभाषा श्वेरि**त्यस्य व्यापारः क्वचिद्विधिमुखेन क्वचित्प्रतिषेधमुखेन तदा संज्ञाकरणमन्तरेणापि सिध्यतीति अशिष्योऽयं योग इति वक्ष्यते—***अशिष्यो वा विदितत्वात्*** इति ॥

( उद्योतः ) भाष्ये—**पूर्वस्योत्तरेणेति** । **पूर्वस्य**—प्रतिषेधस्य **उत्तरेण**—विकल्पेन । बाधश्चात्र न निषेधप्रवृत्तिप्रतिबन्धः, किंतु तत्फलस्याभावनिष्ठसार्वकालिकत्वस्य प्रतिबन्ध इति बोध्यम् ॥ [२]नन्वेवमपि पूर्ववाक्येन **नशब्द** एवादेशः स्यात्, तत्रार्थपरत्वे मानाभावादत आह—**इतिकरण इति** । एवं चोभयत्रापीतिशब्दान्वय इति भावः ॥ एवं चार्थद्वयसंज्ञाकरणसामर्थ्यादेव वाक्यभेदेन क्रमेणान्वय इति भावः ॥ एवं च केवलप्राप्तविभाषायामुभयत्रविभाषायां च क्रमेण निषेधविकल्पयोरुपस्थितिः, शुद्धाप्राप्तविभाषायां तु निषेधस्यान्वयायोग्यत्वाच्छुद्धविकल्पोपस्थितिरिति तात्पर्यम् ॥ [३]पूर्वं विकल्पाप्रवृत्तौ हेत्वन्तरमाह—**आनुपूर्वी चेति** ॥ **अनुपयोगादिति** । **उभयगतिरि**हेत्युक्तेर्लोकगृहीतविकल्पशक्त्यैव सिद्धेरिति भावः ॥ **पक्षे निवृत्तिरिति** । एवं च तत्र निषेधतात्पर्यकतयैव प्रवृत्तिरिति भावः ॥ **अप्राप्तेति** । तत्र विधितात्पर्यकतयैव प्रवृत्तिरिति भावः ॥ **पित्स्वेवेति** । तत्राप्राप्तेरिति भावः ॥ **एकस्योभयत्र** तात्पर्यं तु न संभवतीत्याशयः ॥ [४]भावतात्पर्यकतालोभेन पिद्विषयतैव स्यादिति तत्त्वम् ॥ अस्योभयत्रविभाषाविषयत्वं भाष्ये **विभाषा श्वे**रित्यस्यैवोदाहरणदानेन बोधितम् । एवं च तदर्थमावश्यकेऽस्मिन् अन्यत्रापि स्वशास्त्रगृहीतसङ्केतेनैव बोधात्र "या हि प्राप्ते विभाषा तत्रोभयमुपस्थितं" इत्याद्युक्तभाष्यविरोध इति दिक् ॥

( कार्यशब्दवादनिरासः )

( २४४ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ साध्वनुशासनेऽस्मिन् [५]शास्त्रे विभाषा तस्य साधुत्वम् ॥ * ॥

( भाष्यम् )

**साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा क्रियते स विभाषा साधुः स्यात् । समासश्चैव हि विभाषा क्रियते, तेन समासस्यैव विभाषा साधुत्वं स्यात् ॥**

( प्रदीपः ) **साध्वनुशासन इति** । साधुत्वप्रतिपा[६]दनाच्छास्त्रस्य साधुत्वस्यैव प्राधान्याद्विकल्पेन संबन्धः स्यात्, न तु तदङ्गभूतानां समाससंज्ञादीनामिति भावः ॥ ततश्च **विभाषा श्वेरि**त्यस्यायमर्थः स्यात्—विभाषा श्वयतेः साधु संप्रसारणं भवति, पक्षे त्वसाध्विति ॥

१ **अनवगतेति** बहुव्रीहिः ॥ तस्यैव व्याख्यानमिदमिति सूचयन्नाह—**इमावेवेति** ॥ छाया ॥ अनवगतं संज्ञिद्वयक्रमोपस्थानं यस्येत्यर्थः ॥

२ कृष्णरत्नादिव्याख्यानायाह—**नन्वेवमपीति** ॥ छाया ॥

३ आनर्थक्यहेतोरुक्तत्वादाह—**पूर्वमिति** ॥ छाया ॥

४ कैयटोक्तिं खण्डयति—**भावेति** ॥ कैयटोक्तेर्भाष्याभिमतत्वमाह—**अस्योभेति** ॥ एवं सति मिथो भाष्ययोर्विरोधं परिहरति—**एवं चेति** ॥ **अन्यत्रापि**—प्राप्तविभाषादावपि ॥ एतेन प्रागुक्तलौकिकव्यवच्छेदः ॥ ततोऽस्य प्राबल्यात् ॥ छाया ॥

५ 'शास्त्रे यस्य विभाषा' इति क. ख. ग. पाठः । 'स्मिन् यस्य वि' इति आ. पाठः ॥

६ अ. पुस्तकातिरिक्तपुस्तकेषु 'प्रतिपादनार्थत्वाच्छास्त्रस्य' इत्येव पाठः ॥

(उद्योतः) साधुत्वप्रतिपादनाच्छास्त्रस्येति पाठः । शास्त्रस्येति कर्तुः शेषत्वे षष्ठी ॥ कचित्तु साधुत्वप्रतिपादनार्थत्वादिति पाठः ॥ प्राधान्यादिति । यदिह परिनिष्ठितं तत्साध्विति अर्थापत्तिकल्प्यवाक्यस्यैव मुख्यत्वात्तेन मुख्यतया साधुत्वस्यैव विधानादित्याशयः ॥ तदङ्गभूतानामिति । तदुद्देश्यभूतानामित्यर्थः ॥ भाष्ये—यस्य विभाषा क्रियत इति । यत्सम्बन्धेन विभाषोच्यत इत्यर्थः ॥ समासश्चैव हीति । हि—यतः समासो विभाषा क्रियते —समासो विभाषेत्युच्यते, तत्र समासोद्देशेन साधुत्वविधानात्तस्यैव विकल्पः स्यादिति भावः ॥ साधुत्वं च जातिविशेषः ॥ समासप्रकरणीयविभाषाऽधिकारस्य भाष्ये प्रत्याख्यानादाह—विभाषा श्वेरिति ॥

(आक्षेपबाधकभाष्यम्)

अस्तु । यः साधुः स प्रयोक्ष्यते । असाधुर्न प्रयोक्ष्यते ॥

(प्रदीपः) अस्तु । यः साधुरिति । यथा भक्ष्याभक्ष्यसंनिधौ भक्ष्यमेवोपादीयते ॥

(आक्षेपसाधकभाष्यम्)

न चैव हि कदाचित् राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते ॥

(प्रदीपः) न चैव हीति । सर्वदा त्वस्य साधुत्वं, नोभयरूपत्वमित्यर्थः ॥

(उद्योतः) साधुत्वविकल्पे दूषणमाह—भाष्ये—न चैवेत्यादिना । तद्व्याचष्टे—सर्वदा त्विति । सादृश्यादसाधुत्यागपुरःसरं साधूपादानं दुष्करमित्यपि बोध्यम् ॥

(भाष्यम्)

अपिच—

(२४५ आक्षेपवार्तिकम् ॥ १० ॥)

॥ * ॥ द्वैधाऽप्रतिपत्तिः ॥ * ॥

(भाष्यम्)

द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च—पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, एतच्च न सिध्यति ।

यस्य पुनः कार्याः शब्दाः, विभाषाऽसौ समासं निर्वर्तयति ॥

(प्रदीपः) द्वैधाऽप्रतिपत्तिरिति । साधुत्वविकल्पेन विभाषाग्रहणस्योपयुक्तत्वात् शिश्वियतुरित्यादि रूपं न सिध्यतीत्यर्थः ॥ यस्य पुनरिति । एवं मन्यते—व्याकरणेन शब्दा उत्पाद्यन्ते, तन्मतेन विभाषाग्रहणेनापूर्वत्वेन विधेयत्वात्संप्रसारणमेव विकल्प्यत इति द्वैधं प्रतिपत्तिः शब्दानां सिध्यतीति ॥

(उद्योतः) तत्र साध्वनुशासन इत्युक्तया शब्दनित्यत्वपक्षे एवायं दोषः, न तु कार्यत्वपक्षे—इत्युक्तम् । तदुपपादकम्—यस्य पुनरित्यादिभाष्यम् ॥

(आक्षेपबाधकभाष्यम्)

यस्यापि नित्याः शब्दास्तस्याप्येष दोषो न भवति ॥

कथम्?

न विभाषाग्रहणेन साधुत्वमभिसंबध्यते ॥

किं तर्हि?

समाससंज्ञाऽभिसंबध्यते—समास इत्येषा संज्ञा विभाषा भवति । तद्यथा—"मेध्यः पशुर्विभाषितो मेध्योऽनड्वान् विभाषितः"—इति । नैतद्विचार्यते—अनड्वाननानड्वानिति ॥

किं तर्हि?

आलब्धव्यो नालब्धव्य इति ॥

(प्रदीपः) यस्यापीति । साधुत्वस्यापौरुषेयत्वादविकल्प्यत्वात्तदङ्गानामेव विकल्पः ॥ तद्यथेति । पशुत्वानड्त्त्वयोरविकल्प्यत्वात्क्रिया विकल्प्यते ॥ नन्वन्यत्रोक्तम्—न च संज्ञाया भावाभावाविष्येते—इति । इह तूक्तम्—संज्ञाऽभिसंबध्यते—इति । ततश्च विरोधः ॥ नैष दोषः । इह वृत्तिवाक्ययोर्मुख्यार्थाभेदादभिन्नार्थत्वमाश्रित्योक्तम् । अन्यत्र तु व्यपेक्षैकार्थीभावभेदाद्भिन्नार्थत्वमाश्रित्यैकार्थीभावे एव संज्ञाया भावाभावौ नेष्येते इत्युक्तमित्यविरोधः ॥

(उद्योतः) प्राधान्यात्साधुत्वस्यैव विकल्पः स्यादिति यदुक्तम्,

---

१ शास्त्रेणेति पाठे समासो न स्यादत आह—साधुत्वेति ॥ एवं च समासोऽपि तथैवेति भावः ॥ अत एव गौरवादाह—कचिदिति ॥ अत्रोभयाप्रयोगेणोभयेत्यस्याप्राप्त्या कर्तृकर्मेति षष्ठ्यां समाससौलभ्यमिति भावः ॥ छाया ॥

२ शास्त्रेण तस्याविधानात्कथं तत्त्वमत आह—यदिहेति ॥ छाया ॥ तस्याविधानात्—साधुत्वस्याविधानात् ॥

३ वस्तुतोऽङ्गत्वाभावादाह—तदुद्देश्येति ॥ छाया ॥

४ पौनरुक्त्यं परिहरति—यत्सम्बेति ॥ छाया ॥

५ तत्र—तथा सति ॥ भाष्यदत्तोदाहरणत्यागे बीजमाह—समासेति ॥ छाया ॥

६ 'इत्यस्यामवस्थाया' इति आ. पाठः ॥

७ वोक्ते विकल्पोपपादकत्वभ्रमवारणायाह—साधुत्वेति । चस्त्वर्थे ॥ अत एव कैयटे तुः । दोषान्तरमाह—सादृश्यादिति ॥ छाया ॥ वोक्ते—वापदेनोक्ते ॥

८ 'साधुत्वविकल्पने' इति क. ख. पाठः ॥

९ 'व्याकरणेनैव' इति क. ख. ग. घ. पाठः ॥

१० यस्य पुनरित्यादेरसंबद्धत्वं निराचष्टे—तत्रेति ॥ प्रसङ्गाद् विभाषा श्वेरित्यादौ दोषदानावसरे इत्यर्थः ॥ उक्तम्—सूचितम् ॥ तदुपेति । तत्र तदभावोपेत्यर्थः ॥ छाया ॥

११ 'भवतीति' इति आ. पाठः ॥

तत्राह—**साधुत्वस्येति** ॥ संज्ञायाः श्रुतत्वेन, साधुत्वस्याश्रुतत्वेन, श्रुतस्य श्रुतेनैव संबन्धस्य न्याय्यत्वात्-प्रयोगासमवायिलडादिस्थले श्रुते विधेयत्वस्यावश्यकत्वाच्चेत्यपि बोध्यम् ॥ **पश्चुत्वेति** । साक्षाच्छ्रूयमाणेऽप्ययोग्यत्वाद्यदा न संबन्धस्तदा किं वक्तव्यं-अश्रूयमाणेऽयोग्ये संबन्धो नेतीत्यर्थः ॥ **अन्यत्रेति** । **समर्थसूत्रे** ॥ **मुख्यः**-प्रधानः ॥ **अभिन्नार्थत्वमिति** । ऐवं च तदर्थे कश्चित्साधुत्वेनान्वाख्यायमानोऽनन्वाख्यातस्य तदर्थकस्यान्यस्य निवर्तकः स्यादिति तस्यापि साधुत्वार्थं **विभाषा**ऽधिकार आवश्यक इति भावः ॥ वाक्ये व्यपेक्षा परस्पराकाङ्क्षारूपा, पदार्थानामपृथगुपस्थितिविषयत्वमेकार्थीभावो वृत्तिविषयः ॥ **एवं** च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वाक्यानुज्ञानाय विभाषाग्रहणम्, किंतु वृत्तिविषये एव संज्ञाविकल्पार्थं वाच्यम् । नै च वृत्तौ संज्ञायाः स इष्यते । तस्मादेकार्थीभावस्यैव मन्दमत्यनुग्रहाय स विशेषणमिति तत्रोक्ततात्पर्यमित्यविरोध इति भावः ॥ भाष्ये—**समाससंज्ञेत्यस्य** तद्विषयैकार्थीभाव इत्यर्थः ॥

( २४५ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ कार्येषु युगपदन्वाचययौगपद्यम् ॥ * ॥

( भाष्यम् )

**कार्येषु शब्देषु युगपदन्वाचयेन च यदुच्यते, तस्य युगपद्वचनता प्राप्नोति-"तव्यत्तव्यानीयरः" "ढक् च मण्डूकात्" इति ॥**

**यस्य पुनर्नित्याः शब्दाः, प्रयुक्तानामसौ साधुत्वमन्वाचष्टे ॥**

( प्रदीपः ) नित्यवादी कार्यपक्षे दूषणमाह—**कार्येष्विति** । युगपद्भावे युगपच्छब्दो वर्तत इति द्वन्द्वः कृतः ॥ अन्वाचयः समुच्चयोऽभिमतः, यस्य चकारेण स्वरितत्वेन वा विधानम् । यस्य कार्याः शब्दाः स प्रयोगनिरपेक्षं शब्दानन्वाचष्ट इति तव्यादीनां युगपदुत्पत्तिः प्राप्नोति ॥

( उद्द्योतः ) ननु युगपच्छब्दस्य एककाल इत्यर्थकस्य सप्तम्यर्थवृत्तेरन्वाचयशब्देनाताद्दशेन कथं द्वन्द्व इत्यत आह—**युगपद्भाव इति** ॥ कार्येषु-शब्देषु यौगपद्यान्वाचयविषये तेषां यौगपद्यं-युगपत्प्रयोगः प्राप्नोतीति वार्तिकाक्षरार्थः ॥ भाष्ये—**युगपद्वचनतेति** । बहुव्रीहेस्तल् ॥ **अन्वाचयेने**त्युक्त्वा ढक् **चे**ति समुच्चयोदाहरणमसङ्गतमित्यत आह—**समुच्चय इति** ॥ **स्वरितत्वेन वेति** । यथा **काश्यादिभ्यष्ठञ्ञिठा**विति वर्तमाने **वाहीकग्रामेभ्यश्चे**त्यत्र ॥ नित्यशब्दवादे तु प्रयोगदृष्टानामेव शास्त्रे काल्पनिकविधेयत्वेनेष्टप्रत्ययविभागसिद्धिः । रेखागवयन्यायस्याद्यन्तताविति सूत्रे भाष्य एव वक्ष्यमाणत्वात् ॥

( आक्षेपबाधकभाष्यम् )

**ननु यस्यापि कार्यास्तस्याप्येष न दोषः ॥**

**कथम्?**

**प्रत्ययः परो भवतीत्युच्यते । न चैकस्याः प्रकृतेरनेकस्य युगपत्परत्वेन संभवोऽस्ति ॥**

( प्रदीपः ) **न चैकस्या इति** । ननु व्यवहितेऽपि परशब्दः प्रवर्तते ॥ सत्यम् । अन्तरालस्थमनपेक्ष्यानन्तर्यमारोप्य तत्र परशब्दप्रयोगः । निर्दिष्टग्रहणं त्वानन्तर्यार्थमिति कुतो व्यवहितस्य प्रयोगः ॥ कथं तर्ह्युक्तम्—**एका प्रकृतिर्बह्वश्च यज्ञ** इति? तत्र यज्ञाकृतेरेकत्वात्तस्याश्च परत्वाचानन्तर्याचादोषः । तव्यदादयस्त्वेकाकृतियुक्ता न भवन्ति ॥

( उद्द्योतः ) **व्यवहितेऽपीति** । लोके तथा दर्शनादिति भावः ॥ **आनन्तर्यमारोप्येति** । अनेन परादिशब्दानामव्यवहित एव प्रवृत्तिः, अत एव **व्यवहिताश्चे**ति सूत्रं सार्थकमिति भावः ॥ शास्त्रे **तु** सर्वथा न व्यवहिते प्रवृत्तिरित्याह—**निर्दिष्टग्रहणं त्विति** । तुश्चार्थे । **छन्दसि परेऽपि परश्चे**त्यादावपि उत्तराङ्गविकलत**स्मादिति** परिभाषायाः प्रवृत्तेरिति भावः ॥ **कथं तर्हीति** । **सरूपसूत्रे** इति भावः ॥ **एकाकृतीति** । ऐकानुपूर्वी हि एकाकृतिरत्र ॥

---

१ युक्त्यन्तरद्वयमाह—**संज्ञाया इति** ॥ छाया ॥

२ दृष्टान्ततात्पर्यमाह—**साक्षादिति** ॥ छाया ॥

३ तावताप्यावश्यकत्वं कथमत आह—**एवं चेति** । तदाश्रयणे चेत्यर्थः ॥ छाया ॥

४ न च-नहि ॥ सिद्धान्तेऽसत्त्वादाह—**मन्देति** ॥ एवं सति भाष्यविरोधं परिहरति—**तदिति** ॥ छाया ॥ एकार्थीभावस्यैव विकल्पो विशेषणमित्येवं ये मन्दमतयः तेषामनुग्रहाय तत्रोक्ततात्पर्यमिति संबन्धः । ( र. ना. )

५ 'कार्ये युगपद' इति आ. पाठः ॥

६ युगपद्विधीयमानास्तव्यदादयः, अन्वाचयेन च विधीयमानावण्ढकौ । तेषामेकस्मिन् प्रयोगे यौगपद्यमप्राप्नुयादिति कार्यशब्दवादिनं प्रति दोषः ॥

७ 'कार्ये इति' इति प्रतीकं अ. क. पुस्तकयोर्दृश्यते ॥

८ 'प्रयोगनिरपेक्षः' इति ख. ग. पाठः ॥

९ **कथमिति** । सहविवक्षाया अभावात् ॥ छाया ॥

१० **उदाहरणं** । तद्दानम् ॥ छाया ॥

११ भाष्यादावनुक्तत्वादाह—**यथेति** ॥ इत्यतष्ठञ्ञिठाविती-त्यर्थः ॥ छाया ॥

१२ **यस्य पुन**रिति भाष्याशयमाह—**नित्येति** ॥ ननु तत्र न मानमत आह—**रेखेति** ॥ छाया ॥

१३ 'ननु च यस्यापि' इति क. ख. पाठः ॥ 'तस्याप्ययं न दोषः' इति ग. पाठः ॥

१४ 'परत्वादान-' इति ग. पाठः ॥

१५ युक्त्यन्तरमित्याह—**शास्त्रे त्विति** ॥ लोके यथाकथंचिदास्तामिति तुना सूचितम् । अत एवाह—**तुरिति** ॥ छाया ॥

१६ आकृतिर्नात्र जातिः, किंत्ववयवसंस्थानमित्याह—**एकेति** ॥ छाया ॥

( आक्षेपाभिप्रायभाष्यम् )

**नापि ब्रूमः—प्रत्ययमाला[1] प्राप्नोतीति ॥**

**किं तर्हि ?**

**कर्तव्यमिति प्रयोक्तव्ये युगपद्द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोतीति ॥**

( प्रदीपः ) **नापि ब्रूम इति** । एकस्याः प्रकृतेः सर्वे भवन्तीति न ब्रूमः । किं तर्हि ? प्रत्ययान्तरेण प्रकृत्यन्तरस्याक्षेपात् 'कर्तव्यं' इति प्रयुयुक्षिते करणीयादीनामपि प्रयोगः प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—**नापि ब्रूम** इत्यस्य नैवं[2] ब्रूम इत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । अर्थगत्यर्थः शब्दप्रयोगः । अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य च तृतीयस्य च प्रयोगेण न भवितव्यम्, "उक्तार्थानामप्रयोगः" इति ॥**

( प्रदीपः ) **अर्थगत्यर्थ इति** । 'तव्यत्तव्यानीयरः' इत्यस्माद्वाक्याद्वाक्यान्तराण्युपप्लवन्ते प्रतिपादकानि—धातोस्तव्यद्भवति भावकर्मणोरित्यादीनि । तत्र कर्तव्यशब्देन तस्यार्थस्य प्रतिपादितत्वात्करणीयशब्दो न प्रयुज्यते ॥

( उद्द्योतः ) अर्थोऽपि[3] समुदायस्य-इति शङ्कमानं प्रत्याह—**तव्यदिति** । प्रत्ययादिसंज्ञास्तव्यत्तव्यानीयर इति बहुवचननिर्देशात् प्रत्येकमिति प्रत्येकमेव भावाद्यर्थकत्वमिति भावः ॥

( २४६ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ आचार्यदेशशीलनेन[4] च तद्विषयत्वम् ॥ * ॥

( भाष्यम् )

**आचार्यशीलनेन देशशीलनेन च यदुच्यते[5] तस्य तद्विषयता प्राप्नोति । "इको ह्रस्वोऽङ्यो गालवस्य" "प्राचामवृद्धात् फिन् बहुलम्" इति । गालवा एव हि ह्रस्वान्प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यात् । तद्यथा—"जमदग्निर्वा[6] एतत्पञ्चममवदानमवाद्यत्, तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति" ॥**

**यस्य पुनर्नित्याः शब्दाः, गालवग्रहणं तस्य पूजार्थम्, देशग्रहणं च कीर्त्यर्थम् ॥**

( प्रदीपः ) **आचार्येति** । आचार्यस्य देशस्य च पुनः पुनः संकीर्तनमाचार्यदेशशीलनं । तत्र[7] तस्य शब्दस्य तद्विषयत्वमेव स्यात्, सर्वप्रयोक्तृप्रसङ्गे गालवस्यैव तत्प्रयोक्तृत्वमिति नियमार्थं स्यात्[8] ॥ **यस्य पुनरिति** । अनादित्वाच्छब्दव्यवहारस्य नित्यत्वपक्षे नास्ति प्रयोक्तृनियमः । केवलं गालवः स्मर्तृत्वेन निर्दिष्टोऽस्य शास्त्रस्य प्रामाण्यं प्रतिपादयितुमिति पूजार्थमाचार्यग्रहणम् । शास्त्रस्य ह्यनाद्यर्थप्रतिपादकत्वात्पूजा भवति ॥ **कीर्त्यर्थमिति** । कीर्तौ सत्यां तेषां स्वर्गव्यवस्थानं स्थिरं भवति । यथा—इन्द्रद्युम्नादीनाम् ॥

( उद्द्योतः ) **पुनः पुनः संकीर्तनमिति** । अत्र **पुनःपुनरि**त्यस्योपयोगश्चिन्त्यः । एकैकस्मिन्[9] शास्त्रे तदभावाच्च । तस्मात्संकीर्तनमात्रमेवात्र **शीलन**मिति बोध्यं, तेन यत्कार्यमुच्यते—इति वार्तिकाक्षरार्थः ॥ अत एवाग्रे भाष्ये **तत्कीर्तने चे**त्येवोक्तम् ॥ तद्विषयत्वमुपपादयति—**सर्वप्रयोक्त्रिति** । इको[10] ह्रस्वो भवति, तत्प्रयोक्तृत्वं च गालवस्येत्यादिक्रमेण सूत्रार्थः ॥ भाष्ये—**प्राक्षु चैवेति** । प्राग्देश एव फिन्प्रयोगः स्यादित्यर्थः ॥ **अनादित्वादिति** । एवं[11] च गालवातिरिक्तशिष्टैरपि प्रयुज्यमानत्वान्नियमासंभवः ॥ किंचैतत्पक्षे शास्त्रं **रेखागवयन्यायेन** कल्पितशब्दविषयमिति कल्पितशब्दे प्रयोक्तृनियमासंभव इति भावः ॥ **शास्त्रस्य प्रामाण्यमिति** । एवं च **पूजार्थ**मित्यस्य स्वशास्त्रपूजार्थमित्यर्थ इति भावः ॥ तदेवाह—**शास्त्रस्य हीति** ॥ भाष्ये—**देशग्रहणं चेति** । **चे**नाचार्यग्रहणम् । देश[12]ग्रहणस्य पूजार्थत्वं तु वक्तुमशक्यम्, देशस्य स्मर्तृत्वाद्यभावादिति भावः ॥ **स्थिरं भवतीति** । ततश्च देशकीर्तौ तद्देशीयानां स्वर्वस्थानमित्यर्थः । तेन च पाणिनेरपि तदिति भावः ॥ ननु नित्यशब्दवादे गालवादिग्रहणस्य पूजार्थत्वे ह्रस्वाभावविशिष्टस्य साधुत्वबोधनं न[13] स्यात्, तत्पक्षे सल्लघूपायेन साध्वसाधुविवेकाय शास्त्रमिति चेन्न । गालवः स्मर्ता नान्य इति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पसिद्धेः । वाग्रहणे एव कर्तव्ये गालवग्रहणं व्यर्थमिति शङ्कानिरासार्थं तु भाष्ये **पूजार्थ**मित्युक्तम् ॥

---

१ **प्रत्ययमालेति** । पूर्वोक्तदोषः—युगपदन्वाचययौगपद्यमित्यादिः प्रत्ययः परश्चेति दर्शनान्निवर्तते, तथापि एकस्मिन्वाक्ये कर्तव्यं करणीयमित्यनयोःसहैव प्रयोगः प्राप्नुयादित्याशयः ॥

२ समुच्चयाप्रकृतत्वादाह—**नैवेति** ॥ छाया ॥

३ अस्योपयोगमाह—**अर्थोऽपीति** ॥ तस्य न स इत्यत्र बीजमाह—**प्रत्ययेति** । अन्वर्थत्वान्नासाविति भावः ॥ छाया ॥ **असौ**—समुदायः ॥ **समुदायस्य**—तव्यत्तव्यानीयर इत्यस्य ॥

४ 'शीलने च' इति आ. ख. पाठः । 'तद्विषयता' इति ग. पाठः ॥

५ शेषमाह—**यदुच्यते तस्येति** ॥ छाया ॥

६ **वै**—यस्मात् ॥ **अवाद्यत्**—गृह्णीयात् । **पञ्चावत्तम्**—उपस्तरणत्रिरवदानाभिघारणानि ॥ छाया ॥

७ **तत्र**—तत्संकीर्तनविषये ॥ छाया ॥

८ 'गालवस्येतिनियमार्थं स्यात्' इत्येव क. ख. ग. पाठः ।

९ हेत्वन्तरमाह—**एकैकेति** ॥ उपसंहरति—**तस्मादिति** ॥ **इति**—इत्यादि ॥ इदं भाष्ये स्पष्टमित्याह—**अत एवेति** ॥ छाया ॥

१० तदाशयमाह—**इक इति** ॥ शेषपूरणवाक्यभेदाभ्यामिति भावः ॥ अत एव नियमार्थत्वं कैयटेनोक्तम् ॥ छाया ॥

११ कैयटतात्पर्यमाह—**एवं चेति** ॥ तत्पक्षे तस्य तत्त्वे चेत्यर्थः ॥ स्वयं युक्त्यन्तरमाह—**किंचेति** ॥ **विषयं**—विषयकम् ॥ छाया ॥

१२ भेदेनोक्तौ बीजमाह—**देशेति** ॥ **ततश्च**—देशोपादानाच्च ॥ तस्यापि तत्स्थत्वादाह—**तेन चेति** ॥ छाया ॥

१३ **न स्यादिति** । अन्यथा वैयर्थ्यं स्पष्टमेव ॥ **विकल्पेति** । तथा चोभयार्थत्वं तस्येति भावः ॥ नन्वेवं भाष्यविरोधोऽत आह—**वाग्रहेति** ॥ छाया ॥

( आक्षेपबाधकभाष्यम् )

**ननु च—यस्यापि कार्याः शब्दाः, तस्यापि गालवग्रहणं पूजार्थं स्यात्, देशग्रहणं कीर्त्यर्थम् ॥**

( प्रदीपः ) **ननु च यस्यापीति** । कार्यपक्षेऽपि पूजा शक्यते व्याख्यातुम्—यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्त्वमपि प्रयुङ्क्ष्वेति स्तुत्यर्थोऽर्थवादः स्यादित्यर्थः ॥

( २४७ आक्षेपसमर्थनवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ तत्कीर्तने च द्वैधाऽप्रतिपत्तिः ॥ * ॥**

( भाष्यम् )

**तत्कीर्तने च द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति ॥**

( प्रदीपः ) इदानीं कार्यपक्षे दूषणमाह—**तत्कीर्तन इति** । कार्यपक्षेऽयमर्थः स्यात्—यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्प्रयोक्तव्यमिति । ततश्च ह्रस्वत्वस्य विकल्पो न स्यात् । नित्यत्वपक्षे तु गालवो ह्रस्वत्वस्मर्ता, अन्यो दीर्घस्येति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पः सिध्यतीति नित्यपक्ष एव युक्तः ॥

( उद्द्योतः ) भाष्ये—**तत्कीर्तने चेति** । आचार्यदेशकीर्तने चेत्यर्थः । **यस्य कार्याः शब्दास्तस्ये**ति शेषः ॥ तदेवाह—**इदानीमिति ॥ प्रयुक्तमिति** । कृतमित्यर्थः ॥ **नित्यपक्षे त्विति** । कार्यपक्षे त्वेवं वक्तुमशक्यम्—यतो गालवेन कृतोऽतः कर्तव्यः, नान्येन कृतोऽतो न कर्तव्यः—इति । अन्येन कृतस्य पुनः करणवैयर्थ्यात् । न ह्यन्यकृतस्य पुनः करणमस्ति । नाप्यन्येनाकृतस्याकरणम् । तादृशस्यैव करणात् ॥ **एतेना**न्येन कृतस्यानुवादोऽन्याकृतत्वबोधनद्वारा विकल्पबोधक इति **परास्तम्** ॥ पाणिनिकृतानामपि **पचो व** इत्यादीनामन्याकृतत्वेन तेषामपि विकल्पापत्तेश्च । तस्मात्कार्यवादोऽसङ्गत इति दिक् ॥

**( इति कार्यशब्दवादनिरासः )**

( सूत्रप्रत्याख्यानम् )

( २४८ सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अशिष्यो वा विदितत्वात् ॥ * ॥**

( भाष्यम् )

**अशिष्यो वा पुनरयं योगः ॥**

**किं कारणम् ?**

**'विदितत्वात्' । यदनेन योगेन प्रार्थ्यते तस्यार्थस्य विदितत्वात् ॥ येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि विभाषेत्युक्तेऽनित्यत्वमवगच्छन्ति ॥**

**याज्ञिकाः खल्वपि संज्ञामनारभमाणा विभाषेत्युक्तेऽनित्यत्वमवगच्छन्ति । तद्यथा—"मेध्यः पशुर्विभाषितो मेध्योऽनड्वान्विभाषितः" इति । आलब्धव्यो नालब्धव्य इति गम्यते ॥**

**आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति—बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषाम्-इति ॥**

( प्रदीपः ) **अशिष्यो वेति** । वाशब्दो विकल्पे ॥ तेनाकृतिपक्षे उभयत्र विभाषार्थं सूत्रं कर्तव्यम् । व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात्क्वचित् किञ्चिल्लक्षणं विधिमुखेन प्रवर्तते, क्वचित्प्रतिषेधमुखेन प्रवर्तेत इतीष्टसिद्ध्या सूत्रं न कर्तव्यमित्यर्थः ॥

( उद्द्योतः ) ननु लोकतोऽनित्यत्वार्थलाभेऽपि निषेधविकल्पयोरलाभ इत्यत आह—भाष्ये—**आचार्यः खल्वपीति** । एवं च हृक्रोरित्याद्युभयत्र विभाषायां यथा तव तयोर्लाभस्तथा विभाषापदघटितेऽपि भविष्यतीति नार्थः सूत्रेणेति भावः ॥ **वाशब्दो विकल्पे इति** । यत्तु अर्थस्य संज्ञित्ववद्विभाषापदार्थस्यैव संज्ञात्वम्, तत्रापीतः संबन्धात् । न च पर्दजन्यपदार्थोपस्थित्यभावेनान्वयासंभवः, विकल्पवाचिपदस्य तदर्थे लक्षणाऽभ्युपगमात् । एवं च लक्षणातात्पर्यग्राहकमिदं सूत्रम् । अर्थे न संज्ञात्वमिति चेत्, तदर्थाक्षिप्तशब्दमात्रस्य संज्ञात्वमस्तु; इतिशब्दसंबन्धसामर्थ्यादिति । तन्न । एकस्यानेकसंज्ञायाः शास्त्रेऽदर्शनात् । **अनाकृतिः संज्ञे**ति वृद्धिसूत्रस्थभाष्यविरोधाच्च ॥ **तेनाकृतीति** । तत्पक्षे लिट्त्वजातौ विधिमुखेन प्रवृत्तौ पित्येव स्यात्, निषेधमुखेन प्रवृत्तौ कित्येव स्यात्, न तु सर्वत्रेति सूत्रं कर्तव्यम् । सति च सूत्रे लिट्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानः सर्वत्र सिध्यतीति भावः ॥ प्रत्याख्यानाशयमाह—**व्यक्तिपक्षे त्विति** । क्वचिद्विधिमुखेनेत्यन्वयः ॥ **किंचिल्लक्षणं**—उभयत्रविभाषारूपम् ॥ उत्तरत्र तु **क्वचित्प्रतिषेधमुखेनेत्येव** पाठः ॥

**परे तु**—आकृतिपक्षे किं तज्जात्याश्रयसकलव्यक्तिविषयं लक्षणम्, उत—तज्जात्याश्रययत्किंचिद्विषयम् । नाद्यः । सूत्रारम्भेऽपि

१ **यस्मादिति** । अत्र पक्षेऽनाद्यर्थाप्रतिपादकत्वेन प्रागुक्तरीत्या पूजा दुर्वचा । कीर्तिस्तु तथैव सुवचेति भावः ॥ छाया ॥

२ **दूषणं** दुष्परिहरम् ॥ छाया ॥

३ उभयमतेऽयं दोष इति भ्रमनिरासायाह—**यस्येति** ॥ छाया ॥

४ कार्यपक्षत्वादाह—**कृतमिति** ॥ नन्वेवं कार्यपक्षेऽपि सुवचमिति सोऽपि युक्तोऽत आह—**कार्येति** ॥ एवमित्युक्तस्वरूपमाह—**यत इति** ॥ अत्र दोषमाह—**अन्येनेति** ॥ एवमाद्ये दोषमुक्त्वाऽन्त्ये दोषमाह—**नापीति** ॥ छाया ॥

५ रत्नाद्युक्तिं खण्डयति—**एतेनेति** । वैयर्थ्येनेत्यर्थः ॥ ननूक्तरीत्या न वैयर्थ्यमत आह—**पाणिनीति** ॥ यतो गालवेत्याद्युक्तरीत्या यद्यप्यत्र सर्तुरनुल्लेखस्तथाप्यन्यव्याकरणेषु पक्त इत्यस्यैव प्रसिद्ध्या पाणिनेरेव सामर्थ्यात्तत्सर्तृत्वमिति भावः ॥ छाया ॥

६ कृष्णकौस्तुभाद्युक्तिं खण्डयति—**यत्त्विति ॥ तत्रापीति** । मध्यमणिन्यायेन ॥ प्रदेशेषु शङ्कते—**न चेति** ॥ तदर्थे उभयतः ॥ अन्यत्रादृष्टत्वादाह—**अर्थे इति ॥ मात्रं**—कार्त्स्न्यें ॥ छाया ॥

७ कैयटादिकं खण्डयति—**परे त्विति ॥ विषयं**—विषयकम् ॥ एवमग्रेऽपि ॥ **वाक्यस्य**—पूर्वस्य ॥ **तदिति** । सकलव्यक्तीत्यर्थः ॥ वैषम्यं निराचष्टे—**तस्येति** ॥ विनिगमकाभावादिति भावः ॥ साधारणं दोषान्तरमाह—**किंचेति ॥ तत्र**—लिट्त्वजातौ ॥ प्रागुक्तमाह—**न चेति ॥ भावेति** । तत्रापीत्यादिः ॥ छाया ॥

नपदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वात् । तस्य यत्किंचिद्विषयता, वाघटितस्य सर्वविषयतेति तु दुर्लभम् ॥ नान्त्योऽपि । **न ब्राह्मणं हन्या**दित्यादौ जातिपक्षे सर्वव्यक्तिविषयताया एव दृष्टत्वात् । **किंच** तत्र किं विधिमुखप्रवृत्त्या पिद्विषयत्वं - निषेधमुखप्रवृत्त्या किद्विषयत्वं वा-इत्यत्र विनिगमनाविरहात्सूत्रं विनाऽप्युभयमुखेन प्रवृत्ताविष्टसिद्धेः। न च भावतात्पर्यकता पिद्विषयत्वे विनिगमिका, **विभाषोपयमने** इत्यादौ त्रिसंशयत्वानुपपत्तेः । भावतात्पर्यकतालोभेनाप्राप्तविभाषात्वस्यैव संभवात् । **विप्रतिषेध**शास्त्रबलात्तेष्वभावतात्पर्यकताऽपि स्यादिति चेत्, प्रकृतेऽपि तुल्यम् । तस्मात्पक्षद्वयेऽपि सूत्रप्रत्याख्याने भाष्यतात्पर्यम् ॥ किं[1] च सूत्रे कृते त्रिसंशयाप्राप्तविभाषास्वपि तत्प्रवृत्तिः स्यादिति सोच्छि[2]ष्टैव । लक्ष्यानुसारादप्रवृत्तौ तु सूत्रं व्यर्थमेवेति भाष्याशयः ॥ एतदेव ध्वनयन् त्रिसंशयाप्राप्तविभाषां दर्शयति । त्रिसंशयास्वप्राप्तविभाषात्वमेवेति भ्रमनिरासायेतरयोरपि कथनमित्याहुः ॥

( इति सूत्रप्रत्याख्यानम् )

---

( अप्राप्तविभाषाप्रकरणम् )

( २४९ अधिकारवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अप्राप्ते त्रिसंशयाः ॥ * ॥

( भाष्यम् )

**इत उत्तरं या विभाषा अनुक्रमिष्यामः, अप्राप्ते ता द्रष्टव्याः ॥ त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) अप्राप्ते इति ।** अधिकारोऽयम् ॥ **त्रिसंशया इति ।** त्रिष्वर्थेषु संशयो यासु ताः-त्रिसंशयाः ॥

**( उद्द्योतः ) इत उत्तर**मित्यस्य लाभे युक्तिमाह—**अधिकार इति ॥** संशयत्रयस्य काप्यभावादाह—**त्रिष्विति ॥**

१ इदं द्रढयति—**किंचेति** ॥ प्राप्तविभाषायां त्वेतदिष्टत्वस्य भगवतैवोक्तत्वादाह—**अप्राप्तेति** ॥ **तदिति** । क्रियमाणसूत्रेत्यर्थः ॥ संगतिमाह—**एतदेवेति** ॥ नन्वन्ययोः किमिति कथनमत आह—**त्रीति** ॥ एवं च वाशब्दो न विकल्पे किं त्ववधारणे ॥ छाया ॥

२ त्रिसंशयाप्राप्तविभाषेत्यर्थः । संशयाभावादिति भावः । (र. ना.)

३ 'कथं च प्राप्ते' इति आ. पाठः ॥

४ **तेन वेति** । प्रथमचरमसूत्रघटकतयप्रत्यये सन्देहः । अस्मिन् सूत्रे सर्वादीनीत्यस्य सम्बन्धे सर्वादिर्येस्तयवन्तः स सर्वनामसंज्ञको वेत्यर्थः । तथा च **सर्वादी**नीति सूत्रेण नित्या प्राप्ता संज्ञा **प्रथमे**त्यनेन विकल्प्यते । तदुक्तं—**तेन वा नित्ये प्राप्त इति** ॥ यदा **प्रथम**चरमेति सूत्रे सर्वादीनीति नानुवर्तते तदा तयप्रत्ययान्तमात्रस्य सर्वादेरसर्वादेरप्यनेन विकल्पः प्राप्नोति । तस्मिंश्च पक्षे पूर्वविप्रतिषेधाश्रयणे सर्वादेरुभयशब्दस्य नित्या सर्वनामसंज्ञा, तदितरतयप्रत्ययान्तस्य च प्रथमचरमेति सूत्रेण विकल्पेन संज्ञा क्रियते । तत्र सर्वादीनीति सूत्रेण संज्ञाया अप्राप्तत्वादुच्यते—**अन्यत्र वाऽप्राप्त इति** ॥ यदा च **प्रथमे**ति सूत्रे सर्वादीनीति नानुवर्तते, पूर्वविप्रतिषेधोऽपि नाश्री-

( १ अप्राप्तविभाषोदाहरणभाष्यवार्तिकम् )

## *॥ द्वन्द्वे च-विभाषा जसि ॥*

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( आक्षेपभाष्यम् )

**कथं[3] वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?**

( संदेहसाधकभाष्यम् )

**उभयशब्दः सर्वादिषु पठ्यते । तयपश्चायजादेशः क्रियते । तेन वा[4] नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) द्वन्द्वे चेति ।** प्रकरणोपलक्षणार्थमेतदुपात्तम् । **प्रथमचरमत**येत्यत्र तयग्रहणे संशयः । तत्र तयशब्देन **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति वा - अन्वर्थसंज्ञाविज्ञानाद्वा - केवलस्य प्रयोगाभावात्तदन्तस्यैव सर्वनामत्वसंभवात् **प्रत्ययग्रहण**परिभाषया तदन्तविधिः ॥ तत्र[5] यदि सर्वादिग्रहणेन तयान्तं विशेष्यते, नेमशब्दोऽव्यभिचारात् प्रथमादयस्त्वसंभवात् न विशेष्यन्ते, तदोभयशब्दस्य जसि नित्या संज्ञा विभाष्यत इति प्राप्तविभाषा स्यात् ॥ अथ **सर्वादीनी**ति निवृत्तम्-पूर्वविप्रतिषेधश्च, तदाऽप्राप्तविभाषा ॥ अथ परविप्रतिषेधः, तदोभयत्रविभाषा ॥

**( उद्द्योतः ) द्व[6]न्द्वे च विभाषा** जसीत्युक्त्वोभयशब्दोदाहरणमसङ्गतमत आह—**उपलक्षणेति । विभाषा** जसीत्यस्य द्वन्द्वविषयतया द्वन्द्वे च संज्ञानिषेधेन सर्वनामसंज्ञीयाप्राप्तविभाषात्वनिश्चयेन-निषेधीयप्राप्तविभाषात्वनिश्चयेन-वा त्रिसंशयत्वाभावादिति भावः ॥ **'द्वन्द्वे'**इत्यस्यासंबन्धे पूर्वादीनां जसि विकल्पारम्भो व्यर्थः स्यादिति तात्पर्यम् ॥ ननु तयशब्देऽपि कथं संशयः? **प्रथमादिसूत्रेण** प्रत्ययमात्रस्य संज्ञा, **सर्वादिसूत्रेण** तु उभयशब्दस्य **समुदायस्य-इति**

यते तदाऽनेन सर्वादेरसर्वादेरपि संज्ञाविकल्पः, तदुच्यते-**उभयत्र वेतीति** ॥

५ **तत्र**-तस्मिन्सति ॥ **तयान्तं**-तदेव, संभवसंचाराभ्याम् ॥ अत एवाह—**नेमेति** । इदं च तदनुवृत्तिपक्षे ॥ अत एवाह—**अथेति** ॥ छाया ॥

६ **द्वन्द्वे चेति** । नन्वित्यादिः ॥ **उदाहरणं**-तद्दानम् ॥ ननु तावताप्यत्रापि कुतो नोक्ताऽत आह—**विभाषेति** । तदनुवृत्तेरिति भावः ॥ **द्वन्द्वे चेति** । पूर्वसूत्रेण ॥ विनिगमनाविरहादाह—**निषेधीयेति** ॥ ननु द्वन्द्वे इत्यस्यासंबन्धेन तस्यापि संभव इति तत्त्वमेवात आह—**द्वन्द्वे इत्यस्यासम्बेति** ॥ **प्रथमेति तु** नोक्तम् । तत्र विभाषाशब्दाश्रुतेः ॥ **विभाषा जसि प्रथमे**त्यपि नोक्तम्, उक्तैनैव विचारस्थलविशेषावगतेः । तथाहि—**विभाषे**त्यत्र सर्वादीनीति वर्तते, प्रथमादेः पृथग्जसि विकल्पारम्भात् । द्वन्द्वे चेति चेन नञनुकर्षकेण **चानुकृष्ट**मिति तत्रासंबन्धेन तस्य संज्ञाविधानार्थत्वं सूचितमिति ॥ **तत्रेतीति** । सूत्र इत्यर्थः ॥ **दूरत्वादाह—तयेति** ॥ अग्रिमं द्वितीयहेतूपपादकमित्याह—**अन्वेति** । नन्वित्यादि ॥ छाया ॥

भिन्नविषयत्वेनाप्राप्तविभाषात्वनिर्णयादत आह—**तत्रेति** ॥ तय-शब्देनेत्यस्य तदन्तविधिरित्यनेनान्वयः ॥ अन्वर्थत्वेन कथं तदन्त-विधिरत आह—**केवलस्येति** ॥ **सर्वनामत्वसंभवात्**–सर्वार्थ-बोधकत्वसंभवात् । तथा च तस्य सर्वार्थबोधकत्वाभावात्सामर्थ्येन संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तविधिरिति भावः ॥ **पूर्व-विप्रतिषेधश्चेति** । सर्वादित्वनिबन्धना संज्ञा जस्भिन्ने सावकाशा, द्वितयादिषु च विकल्पः, उभयशब्दे जस्युभयप्राप्तौ पूर्वविप्रतिषेधः । न[1] च नित्या संज्ञाऽन्तरङ्गा, अन्तरङ्गपरिभाषाया अप्रवृत्तेः । तथाहि—न **'अन्तरङ्गं बलीयः'** इत्यस्या अत्र विषयः, युगपत्प्राप्त्यभावात् । जसादेः सर्वनाम्नो विहितत्वसंपत्तये तस्याः पूर्वमेव प्रवृत्तिः, अस्या जसुत्पत्त्यनन्तरमिति स्पष्टमेव ॥ **नाप्यसिद्धं बहिरङ्गमन्तरङ्ग** इत्यस्याः, अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेरनया तत्प्रवृत्तेर्वारयितुमशक्य-त्वात् । बहुशस्तथा सत्त्वात् । तदुत्तरमप्येतत्प्रवृत्त्या पक्षे तदभाव-विशिष्टस्य साधुत्वबोधनं पूर्वादिष्विव । त्रिसंशयत्वस्य भाष्योक्तस्या-सङ्गत्यापत्तेश्चेति दिक् ॥ भाष्ये-**तेन वेत्यादि** । तेन नित्ये प्राप्ते वा-अन्यत्राप्राप्ते वा-इत्यन्वयः ॥

( सिद्धान्तभाष्यम् )

**अप्राप्ते[2] । अयच् प्रत्ययान्तरम् ॥**

( प्रदीपः ) **प्रत्ययान्तरमिति** । आदेशपक्षे पूर्वविप्रति-षेधो वक्तव्य इति प्रत्ययान्तरपक्ष आश्रितः ॥ 'उभादुदात्तो नित्यम्' इत्यत्र **तयस्येति** नानुवर्तते-इति प्रत्ययान्तरमयज् भवति ॥

( उद्योतः ) **प्रत्ययान्तरेति** । एवं चोभयशब्देऽस्याप्राप्तेर-प्राप्तविभाषात्वमेवेति भावः ॥

( समाधानबाधकभाष्यम् )

**यदि प्रत्ययान्तरम्, उभयीति ईकारो न प्राप्नोति ॥**

( समाधानसाधकभाष्यम् )

**मा भूदेवम्, 'मात्रचः'[3] इत्येवं भविष्यति ॥**

**कथम् ?**

**मात्रजिति नेदं प्रत्ययग्रहणम् ॥**

**किं तर्हि ?**

**प्रत्याहारग्रहणम् ॥**

**क संनिविष्टानां प्रत्याहारः ?**

**मात्रशब्दात्प्रभृति आ अयचश्चकारात् ॥**

( समाधानबाधकभाष्यम् )

**यदि प्रत्याहारग्रहणम्, 'कति तिष्ठन्ति' अत्रापि प्राप्नोति ॥**

( समाधानसाधकभाष्यम् )

**अत इति वर्तते ॥**

( समाधानबाधकभाष्यम् )

**एवमपि-'तैल[4]मात्रा-घृतमात्रा' अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **तैलमात्रेति** । प्रत्याहारे सति चकारेण मात्र-शब्दो न विशेषित इति 'हुयामाश्रुवसिभसिभ्यस्त्रन्' इति त्रन-न्तादपि मात्रशब्दान्ङीप्प्रसङ्गः ॥

( उद्योतः ) **न विशेषित इति** । न प्रत्याहारघटक इतर-व्यावर्तकः, समुदायानुबन्धस्यावयवानुबन्धत्वाभावादिति भावः ॥

( समाधानसाधकभाष्यम् )

**सदृशस्याप्यसंनिविष्टस्य न भविष्यति प्रत्याहा[5]रेण ग्रहणम् ॥**

( प्रदीपः ) **सदृशस्यापीति** । प्रमाणे वर्तमानात्प्रमेये यो मात्रज् विहितः, स प्रत्याहारेण गृह्यते-इत्यर्थः ॥

( उद्योतः ) **प्रमाणे इति** । तादृश[6]स्यैव तत्संनिवेशे सत्त्वा-दिति भावः ॥

( २ उदाहरणभाष्यवार्तिकम् ॥ )

***॥ ऊर्णोर्विभाषा ॥***

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( आक्षेपभाष्यम् )

**कथं[7] वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?**

( संदेहोपपादकभाष्यम् )

**"असंयोगाल्लिट् कित्" इति वा[8] नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

---

१ कृष्णरत्नकौस्तुभोक्तं खण्डयति—**न चेति** ॥ प्राचां मतेनै-वाह—**नान्तरङ्गमिति** ॥ **तत्प्रवृत्तेः**–विकल्पप्रवृत्तेः ॥ विकल्पप्रवृत्ते-स्तत्र हेतुरुक्तः ॥ असिद्धपरिभाषाविषयेषु तु बहिरङ्गोत्तरमन्तरङ्गप्राप्तेः प्रायः सत्त्वात् । तदाह—**बहुश इति** ॥ ननु फलाभावान्नानन्तरं विकल्पोऽत आह—**तदिति** । नित्यसंज्ञेत्यर्थः ॥ अभ्युपेत्याप्याह—**त्रीणि** ॥ ननु वाशब्दयोराद्ययोरन्यत्र पाठेनान्यद्युक्तमिति न्याया-पत्तिरत आह—**तेनेति** ॥ एवमग्रेऽपि सर्वत्र बोध्यम् ॥ छाया ॥

२ तयप्रत्यये या विभाषा तद्विषयकसिद्धान्तमाह-**अप्राप्त इति** ॥ पूर्वोक्तत्रिसंशयनिरासायाह-**अयच्प्रत्ययान्तरमिति** । अयचः प्रत्ययान्तरत्वे उभयशब्दस्य तयप्रत्ययान्तत्वाभावात् प्रथमचरमेति विकल्पो न प्राप्नोति । तथा च तयप्रत्ययान्तानामप्राप्ते विभाषा ॥

३ 'मात्रच्-इत्येवं' इति आ. पाठः ॥

४ **तैलमात्रेति** । तैलस्य मात्रा-मानविशेषो भागविशेष उक्तः ॥ छाया ॥

५ 'प्रत्याहारग्रहणम्' इति आ. पाठः ॥

६ **तादृशस्यैवेति** । लक्षणसाहचर्यपरिभाषाभ्यामिति भावः ॥ छाया ॥

७ 'कथं च प्राप्ते' इति आ. पाठः ॥

८ **इति वेति** । कार्यातिदेशपक्षे त्रिसंशयाः । तत्पक्षे ङित्वकित्वा-भ्यामूर्णोतौ गुणाभावरूपस्यैकस्यैव कार्यस्यातिदेश इति ङित्वकित्व-योरभेदः । तथा चासंयोगादित्यनेन पिद्भिन्ने लिटि गुणाभावोऽतिदि-श्यते, विभाषोर्णोरित्यनेन च विकल्प इति । तदाह-**इति वा नित्ये प्राप्त इति** ॥ विभाषोर्णोरित्यस्याननुवर्तने तु लिटि परत्वादसं-योगादित्येव प्रवर्तते, लिड्भिन्ने तेन विकल्पस्तदाह-**अन्यत्र वेति** ॥ पूर्वविप्रतिषेधे चोभयत्र विभाषेत्यर्थः ॥

( प्रदीपः ) **ऊर्णोर्विभाषेति** । 'विभाषोर्णोः' इति सूत्रं यद्यसंयोगाल्लिट् किदित्यत्रानुवर्तते, ऊर्णुश्चासंयोगान्त एवेत्यसंयोगग्रहणाद्वाक्यभेदेनोर्णोः परस्येडादेर्लिटो नित्यं कित्त्वं प्राप्तं विकल्प्यते, ततः–प्राप्तविभाषा । इडुपजीवनार्थं तु स्थानान्तरे सूत्रं पठितम् ॥ अथ तत्र सूत्रं नानुवर्तते, परविप्रतिषेधश्च, ततः–अप्राप्तविभाषा ॥ अथ पूर्वविप्रतिषेधः, तदा–उभयत्रेति संशयः ॥

( उद्द्योतः ) भाष्ये—**ऊर्णोर्विभाषेति** । ऊर्णोर्धातोः कित्त्वविषयविभाषेत्यर्थः ॥ **वाक्यभेदेने**त्यस्य विकल्प्यत इत्यनेनान्वयः । इदं सर्वं ङित्त्वकित्त्वयोरैक्याभिमानेन ॥ किमर्थं तर्हि पुरस्तात्कृतमत आह—**इडुपेति** ॥

( सिद्धान्तभाष्यम् )

**अप्राप्ते ॥**

( सन्देहाक्षेपभाष्यम् )

**अन्यद्धि कित्त्वम्, अन्यद्धि ङित्त्वम् ॥**

( प्रदीपः ) **अन्यद्धीति** । व्यपदेशातिदेशोऽयमिति कित्त्वङित्त्वयोर्भेदः ॥

( उद्द्योतः ) शङ्कते—भाष्ये–**अन्यद्धीति** ॥ तद्व्याख्या—**भेद इति** । तथा च त्रिसंशयत्वानुपपत्तिरिति भावः ॥

( २५० संदेहसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ एकं चेन्ङित्कितौ ॥ * ॥**

( भाष्यम् )

**यद्येकं ङित्किती, ततः संदेहः ॥**

( प्रदीपः ) **एकं चेदिति** । कार्यातिदेशपक्षे गुणनिषेधस्य कार्यस्यैकत्वमनयोरित्यर्थः ॥

( उद्द्योतः ) **गुणनिषेधस्येति** । यद्यपि ङित्कित्कार्याणि भिन्नानि बहूनि सन्ति, तथाप्यूर्णोतावन्यासंभव इति भावः ॥

( तृतीयाक्षेपभाष्यम् )

**अथ हि नाना, नास्ति संदेहः ॥**

( समाधानभाष्यम् )

**यद्यपि नाना, एवमपि संदेहः—प्रौर्णुविं ।**

( प्रदीपः ) **प्रौर्णुवीति** । लङ उत्तमैकवचनम् ॥

( संदेहोपपादकभाष्यम् )

**"सार्वधातुकमपित्" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( प्रदीपः ) **सार्वधातुकमपिदि**त्यत्र यदि **विभाषोर्णोरि**त्येतद्वाक्यभेदेन संबध्यते, ततः–प्राप्तविभाषा ॥ अथासंबन्धः पूर्वविप्रतिषेधः, ततः–उभयत्र विभाषा ॥ परविप्रतिषेधे तु–अप्राप्ते ॥

( उद्द्योतः ) **इत्यत्रेति** । इत्यत्रैवेत्यर्थः ॥ **वाक्यभेदेनेति** । पृथक्पाठसामर्थ्यादिति भावः ॥ **परविप्रतिषेधे त्विति** । **विज इडि**त्यतोऽर्थाधिकारादत्रेडागम एव गृह्यत इति पक्षे तु–इत्यपि बोध्यम् ॥

( सिद्धान्तभाष्यम् )

**अप्राप्ते ॥**

( ३ उदाहरणभाष्यवार्तिकम् )

***॥ विभाषोपयमने ॥***

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र चेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते? कथं वा अप्राप्ते? कथं वोभयत्र?**

( संदेहोपपादकभाष्यम् )

**गन्धन इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

---

१ **विभेति** । इदमनुवृत्तौ कर्तृभूतम् ॥ छाया ॥

२ **ननूतो वृद्धिरिति** नित्यवृद्धौ प्राप्तायां तदपवादत्वेनोर्णोतेर्विभाषेत्यस्यारम्भेण प्राप्तविभाषात्वनिर्णयादप्राप्ताधिकारे कथमुपन्यासोऽत आह—**ऊर्णोरिति** ॥ छाया ॥

३ **किमर्थमिति** । नन्वित्यादिः ॥ छाया ॥

४ एवं संशये सिद्धान्तमाह–**अप्राप्त इति** ॥

५ 'अन्यन्ङित्वं' इति आ. पाठः ॥

६ **शङ्कत इति** । त्रिसंशयत्वोक्ताविति भावः । एतेन—**'अप्राप्ते'** इति मध्येऽप्रामाणिकः पाठ इति सूचितम् ॥ छाया ॥

७ **तथा चेति** । विध्यैक्ये हि तस्य तत्त्वं युक्तमिति भावः ॥ छाया ॥

८ 'एकं चेन्ङित्कितौ' इत्यस्य यद्येकमित्यादिनाऽनुवादादेतद्वार्तिकमिति ज्ञायते । मुद्रितपुस्तकेष्वस्य वार्तिकत्वेनानिर्देशस्तु भ्रमादपि सम्भवति । अस्मिन् प्रकरणे 'द्वन्द्वे च विभाषा जसि' 'ऊर्णोर्विभाषा' इत्यादीनि वार्तिकानि नवेति संशयस्त्वाकुलयति विद्वज्जननिर्णयं यावत् ॥

९ 'ततोऽस्ति संदेहः' इति आ. पाठः ॥

१० 'प्रौर्णुवीति' इति क. ग. पाठः, 'प्रौर्णुवीत्यत्र' इति ख. पाठः ॥

११ सर्वं वाक्यमिति न्यायेनाह—**एवेति** । अनेन तद्व्यवच्छेदः ॥ छाया ॥

१२ ननु **प्रतिषेधाश्चे**ति न्यायेन परत्वबाधोऽतो बीजान्तरमाह—**विज इति** ॥ छाया ॥

१३ विभाषोर्णोरिति सूत्रे 'विज इट्' इत्यतो इडनुवर्तनादूर्णोतेः पर इडादिप्रत्ययो वा ङिद्वदिति तदर्थः । ऊर्णोतेरिडादिप्रत्ययश्च सार्वधातुको न भवतीति सार्वधातुकमपिदित्यस्य तद्विषयेऽप्राप्तिरत आह—**अप्राप्ते इति** ॥

१४ 'उभयत्र वेति' इति ग. पाठः ॥

१५ 'कथं च प्राप्ते' इति आ. पाठः ॥

(प्रदीपः) विभाषोपयमन इति । यदा गन्धनाङ्गमुपयमनं तत्र गृह्यते, तदा–प्राप्ते । पूर्वविप्रतिषेधे तु–अप्राप्ते । परविप्रतिषेधे–उभयत्रेति संदेहः ॥

(उद्द्योतः) 'यमो गन्धने' 'विभाषोपयमने' इत्येते सिचः कित्त्वविधायके ॥ यदेति । गन्धनं–सूचनम् । उपयमनं–स्वीकारः ॥ गन्धनाङ्गमिति । बहुव्रीहिः । तत्र गन्धनपूर्वके स्वीकरणे यदि कित्त्वविकल्पः, ततः प्राप्तविभाषेत्यर्थः ॥

(सिद्धान्तभाष्यम्)

अप्राप्ते । गन्धन इति निवृत्तम् ॥

(उद्द्योतः) परभूतासु दीपजनेतिभिन्नासु अप्राप्तविभाषासु पूर्वविषयनिवृत्तिः पूर्वविप्रतिषेधाङ्गीकारश्चाप्राप्तविभाषात्वे बीजमिति बोध्यम् ॥

(४ उदाहरणभाष्यवार्तिकम्)

## *॥ अनुपसर्गाद्वा ॥*

(भाष्यम्)

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

(संदेहाक्षेपभाष्यम्)

कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?

(संदेहोपपादकभाष्यम्)

"वृत्तिसर्गतायनेषु क्रमः" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

(उद्द्योतः) वृत्तिसर्गेति । आत्मनेपदविधायकम् ॥

(सिद्धान्तभाष्यम्)

अप्राप्ते । वृत्त्यादिष्विति निवृत्तम् ॥

(५ उदाहरणभाष्यवार्तिकम्)

## *॥ विभाषा वृक्षमृगादीनाम् ॥*

(भाष्यम्)

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

(संदेहाक्षेपभाष्यम्)

कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?

(संदेहोपपादकभाष्यम्)

"जातिरप्राणिनाम्" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

(प्रदीपः) जातिरिति । चर्मादिमयास्तदा मृगादयो ग्राह्याः ॥

(उद्द्योतः) ननु मृगादीनां प्राणित्वादप्राणिनामिति नित्ये प्राप्त इत्ययुक्तम्, मृगादिविषये एव च त्रिसंशयत्वात् । अत आह—चर्मादीति ॥

(सिद्धान्तभाष्यम्)

अप्राप्ते । 'जातिरप्राणिनाम्' इति निवृत्तम् ॥

(प्रदीपः) निवृत्तमिति । तन्निवृत्तौ च गौणत्वाच्चर्मादिमयानामग्रहणम् ॥

(६ उदाहरणभाष्यवार्तिकम्)

## *॥ उषविदजागृभ्योऽन्यतरस्याम् ॥*

(भाष्यम्)

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

(संदेहाक्षेपभाष्यम्)

कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?

(संदेहोपपादकभाष्यम्)

प्रत्ययान्तादिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

(प्रदीपः) प्रत्ययान्तादिति वेति । कथं पुनः प्रत्ययान्ताः शब्दा रूपान्तरयुक्ता उषादिव्यपदेशं लभन्ते ॥ उच्यते— सनाद्यन्ता धातव इत्यस्य यदाऽयमर्थो व्याख्यायते—धातवः सनाद्यवयवा भवन्ति धातूनामवयवाः सनादयो भवन्ति । यथा–समासान्ताष्टजादयः, तदा पूर्वोक्तचोद्याभावः ॥

(उद्द्योतः) प्रत्ययान्ता इति । प्रत्ययः सनादिरन्तावयवो येषामित्यर्थः ॥ उषादयश्च तदेकदेशा न प्रत्ययान्तरूपा इति भावः ॥

(सिद्धान्तभाष्यम्)

अप्राप्ते । प्रत्ययान्ता धात्वन्तराणि ॥

(प्रदीपः) प्रत्ययान्ता इति । सनाद्यन्ता धातव इत्ययं योगः संज्ञासंज्ञिसंबन्धार्थ इति भावः ॥

(उद्द्योतः) संज्ञासंज्ञिसंबन्धार्थ इति । अत एव क्यजाद्यन्तानां संज्ञासिद्धिः, आवृत्तौ तु गौरवमिति भावः ॥ केचित्तु—प्रत्ययान्तादित्यनुवृत्तौ उषादिभ्यः कर्तृकिबन्तप्रकृतिकाचारकिबन्तेभ्य एव स्यादिति प्राप्ते विभाषा, तन्निवृत्तौ पूर्वविप्रतिषेधेऽप्राप्तविभाषा, निवृत्तौ परविप्रतिषेधे उभयत्र-इति भाष्याशयः ॥ प्रत्ययान्ता धात्व-

---

१ पूर्वविप्रेति । गन्धने–इत्यस्य निवृत्तिरित्यपि बोध्यम् ॥

२ तत्र–तद्ग्रहणे सति ॥ छाया ॥

३ अप्राप्ते इत्येतदुपपादयति–गन्धन इति । तस्य निवृत्तिः पूर्वविप्रतिषेधश्चेति भावः ॥

४ 'कथं च प्रा' इति आ. पाठः ॥

५ 'अन्यत्राप्राप्ते' इति अ. पाठः ॥

६ एव चेति । प्राणिविषय एव चेत्यर्थः । अन्यथा तदनुपपत्तिरेवेति भावः ॥ छाया ॥

७ प्रत्यय इति । विपरीत उद्देश्यविधेयभावः ॥ ये ते इत्यध्याहारश्चेति भावः ॥ एतदभावप्रयुक्तलाघवादाह—संज्ञासंज्ञीति ॥ अस्यावश्यकत्वमाह—अत एवेति ॥ सनो धात्ववयवत्वेन तत्त्वसिद्धेराह—क्यजाद्यन्तेति ॥ नन्वावृत्त्येदमप्यस्त्वत आह—आवृत्तौ त्विति ॥ भ्य एवेति । अन्यत्र तद्रूपत्वासंभवात् ॥ भाष्येति । पूर्वपक्षेत्यादिः ॥ छाया ॥

८ 'यान्तानि धात्वन्तराणि' इति आ. पाठः ॥

न्तराणीति। अस्यायं भावः—हलन्तेभ्य आचारक्विपोऽनभिधानमेव, इतरप्रत्ययान्तास्तु नोपादय इत्यप्राप्तविभाषात्वमेवेति वदन्ति ॥

(७ उदाहरणभाष्यवार्तिकम्)

## *॥ दीपादीनां विभाषा ॥*

(भाष्यम्)

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

(संदेहाक्षेपभाष्यम्)

**[3]कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?**

(संदेहोपपादकभाष्यम्)

**"भावकर्मणोः" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

(प्रदीपः) **भावकर्मणोरिति।** **चिण्भावकर्मणो**रित्यत्र सूत्रे यदि **दीपजने**त्येतत्सूत्रमनुवर्त्य वाक्यभेदेन संबन्धः क्रियते पृथक्पाठसामर्थ्यात्, तदा-प्राप्तविभाषा । अथ नानुवर्तते परविप्रतिषेधश्च, तदा-अप्राप्तविभाषा । पूर्वविप्रतिषेधे तूभयत्र-इति संशयः ॥

(सिद्धान्तभाष्यम्)

**[4]अप्राप्ते । कर्तरीति हि वर्तते ॥**

(आक्षेपभाष्यम्)

**एवमपि संदेहः—न्याय्ये वा कर्तरि, कर्मकर्तरि वेति ॥**

(समाधानभाष्यम्)

**नास्ति संदेहः । सकर्मकस्य कर्ता कर्मवद्भवति ॥ अकर्मकाश्च दीपादयः ॥**

(प्रदीपः) **अकर्मकाश्चेति ।** यद्यपि बुधिः सकर्मकः, तथापि एकपरिहारोपन्यासार्थमविशेषेणैतदुक्तम् ॥

(उद्द्योतः) **एकपरिहारः**-कर्मस्थभावकत्वाभावरूपः ॥ ननु '[6]कर्तरि' इत्यनुवृत्तिर्व्यर्था, कर्मणि भावे कर्मकर्तरि च परत्वाच्चिण्-भावकर्मणोरित्यस्य प्रवृत्तेरिति चेन्न । विप्रतिषेधलब्धार्थस्यैव स्फुटत्वाय अनुवृत्त्या प्रदर्शनात् इति दिक् ॥

(समाधानबाधकभाष्यम्)

**अकर्मका अपि वै सोपसर्गाः सकर्मका भवन्ति ॥**

(प्रदीपः) **सोपसर्गा इति ।** अर्थान्तरवृत्तित्वादनुभवतिवदिति भावः ।

(समाधानसाधकभाष्यम्)

**कर्मोपदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां च भवन्ति । कर्तृस्थभावकाश्च दीपादयः ॥**

(प्रदीपः) **कर्तृस्थभावकाश्चेति ।** **अचः कर्तृयकी**त्यत्र **जायते स्वयमेवे**त्युदाहृतं, तस्य ण्यर्थवृत्तित्वात्कर्मस्थभावकत्वमिति नास्ति तेनास्य विरोधः ॥

(८ उदाहरणभाष्यवार्तिकम्)

## *॥ विभाषाऽग्रेप्रथमपूर्वेषु ॥*

(भाष्यम्)

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

(संदेहाक्षेपभाष्यम्)

**[3]कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?**

---

१ **ह्रस्वनद्याप** इत्यत्र भाष्ये स्पष्टमाह—**हलन्तेभ्य इति ॥** अत्र केचिदित्यरुचिबीजं तु उषविद्भ्यां तदसंभवेऽपि जागर्तेः संभव एवेति ॥ छाया ॥

२ **उषविदजागृभ्योऽन्यतरस्यामि**त्यत्र **'कास्प्रत्यया**दित्यतः प्रत्ययादित्यनुवर्त्य वाक्यभेदेन प्रत्ययान्तेभ्य आमिति व्यापकार्थेन नित्यमामि प्राप्त एव प्रत्ययान्तेभ्य उषादिभ्यो विकल्पेनामिति विभाषाया विधानादप्राप्तविभाषात्वमेव ॥ अननुवृत्तौ कारयांचकारेत्यादौ सावकाशस्य नित्यामः, ओषांचकारेत्यादौ सावकाशाया विभाषायाश्च प्राप्तौ प्रत्ययान्तोषादिभ्यः पूर्वविप्रतिषेधेन नित्यस्यैवेष्टत्वे त्वप्राप्तविभाषैव । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे शुद्धेभ्योऽप्राप्ते प्रत्ययान्तेभ्यः प्राप्ते विभाषाविधानादुभयत्रविभाषात्वमिति त्रिसंशये प्रत्ययान्तानां धात्वन्तरत्वेन प्रत्ययादित्यस्यासंबन्धे नित्यस्याप्राप्तावेव विभाषारभ्यते इत्यप्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

३ 'कथं च प्रा' इति आ. पाठः ॥

४ **दीपजनबुधपूरी**त्येतत्सूत्रं **चिण्भावकर्मणो**रित्यत्रानुवर्त्य वाक्यभेदेन 'भावकर्मणोश्च्लेश्चिण्' इति व्यापकार्थेन नित्यं चिणि प्राप्त एव 'भावकर्मणोर्दीपादिभ्यश्च्लेश्चिण् वा' इति व्याप्यार्थेन विधीयमाना विभाषा प्राप्तविभाषैव । अननुवृत्तावपाचीत्यादौ सावकाशस्य नित्यचिणः कर्तरि दीपादिभ्यः सावकाशस्य विकल्पस्य च भावकर्मणोर्दीपादिभ्यः प्राप्तौ परमिप्रतिषेधेन नित्यस्यैवेष्टत्वे कर्तरि कृतार्थीभवन्त्या विभाषाया अप्राप्तविभाषात्वमेव । पूर्वविप्रतिषेधेन विकल्पस्येष्टत्वे कर्तर्यप्राप्ते भावकर्मणोस्तु प्राप्ते विधीयमानाया विभाषाया उभयत्र विभाषात्वमेवेति त्रिसंशये **दीपजने**त्यत्र **णिश्रिद्रुस्रुभ्य** इत्यतः **कर्तरी**त्यस्यैव संबन्धे दीपजनसूत्रस्य भावकर्मविषयत्वाभावेनाप्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दा० ॥

५ **कर्मस्थभावेति** । अपरिस्पन्दसाधनसाध्यो **भावः** । सपरिस्पन्दसाधनसाध्या **क्रिया** ॥

**विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।**
**क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥**

इति हरिकारिकाया व्याख्या तु—यत्र कर्मभेदेन क्रियाजन्यफले विशेषदर्शनं रूपभेददर्शनं तत्र कर्मस्था यथा—पचेरोदनरोटिकादौ । अन्यत्र कर्तृस्थेत्यर्थः । यद्वा क्रियाकृतविशेषस्य यत्र कर्तरि प्रत्यक्षेणावधारणं तत्र कर्तृस्था । यत्र कर्मणि तत्र कर्मस्थेत्यर्थः ॥ इदं केषांचिन्मते ॥ अन्ये त्वेवं सति क्रियाजन्यश्रमादिकृतवैलक्षण्यं प्रायेण सर्वत्र कर्तर्यस्तीति पचादेरपि कर्तृस्थभावकतापत्तिः । तस्माद्धातुवाच्या फलांशरूपा क्रिया कर्तृगतापि संबन्धविशेषेण शब्देन बुध्यते स कर्तृस्थक्रियः । यद्धातुवाच्यः सोंऽशः कर्मस्थ एव न कथमपि कर्तृस्थः स कर्मस्थक्रियः । यथा 'पच्छिभिदादिः' इति ॥ दाधिमथाः ॥

६ **ननु कर्तरीति । णिश्री**ति सूत्रात् ॥ **प्रदर्शनादिति ।** किंच, कर्तृस्थभावकानामेवात्र ग्रहणमिति सूचनार्थं तदावश्यकत्वात् ॥ छाया ॥

( संदेहोपपादकभाष्यम् )

'आभीक्ष्ण्ये' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

अप्राप्ते । 'आभीक्ष्ण्ये' इति निवृत्तम् ॥

( प्रदीपः ) आभीक्ष्ण्य इति निवृत्तमिति । पूर्वविप्रतिषेधश्चेति भावः ॥

( ९ उदाहरणभाष्यवार्तिकम् )

**॥ तृन्नादीनां विभाषा ॥**

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?

( संदेहोपपादकभाष्यम् )

'आक्रोशे' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( प्रदीपः ) तृन्नादीनामिति । आक्रोश इत्यत्र यद्यचकौ नानुवर्तेते, ततोऽयं संशयः ॥

( उद्योतः ) तृन्नादीनामिति । 'आक्रोशे च संज्ञायाम्' विभाषा तृन्नन्नतीक्ष्णशुचिष्विति सूत्रे इत्यर्थः ॥ यद्यचकाविति । अचूकावशक्ताविल्यतः । तदनुवृत्तौ तु निःसन्देहमप्राप्तविभाषेति भावः ॥ एतद्भाष्यविरोधाच्च तत्राचूकाविल्यनुवृत्तिपरा ग्रन्था अयुक्ता एवेति तात्पर्यम् ॥

( सिद्धान्तभाष्यम् )

अप्राप्ते । 'आक्रोशे' इति निवृत्तम् ॥

( १० उदाहरणभाष्यवार्तिकम् )

**॥ एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥**

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥

( संदेहोपपादकभाष्यम् )

"उदकस्योदः संज्ञायाम्" इति वा नित्ये प्राप्ते, अन्यत्र वा अप्राप्ते, उभयत्र वेति ॥

( प्रदीपः ) एकहलादाविति । पूरयितव्यस्यास्ति संज्ञा- उदपानमिति ॥

( सिद्धान्तभाष्यम् )

अप्राप्ते । संज्ञायामिति निवृत्तम् ॥

---

१ 'विभाषाऽग्रेप्रथमपूर्वेषु' (३।४।२४) इति सूत्रे 'आभीक्ष्ण्ये णमुल् च' इति सूत्रमनुवर्तते, वाक्यभेदेन 'आभीक्ष्ण्ये णमुल्' इति व्यापकार्थेन नित्यं णमुलि प्राप्ते एव 'अग्रेप्रथमपूर्वेषूपपदेषु आभीक्ष्ण्ये विभाषा णमुल्' इति व्याख्यार्थेन विभाषा विधानात् प्राप्तविभाषात्वमेव ॥—अननुवृत्तौ आभीक्ष्ण्ये एतदुपपदहीने नित्यस्य, उक्तोपपदसत्त्वे अनाभीक्ष्ण्ये विभाषायाः, सावकाशत्वेन आभीक्ष्ण्य उक्तोपपदसत्त्वे च द्वयोः प्राप्तौ पूर्वविप्रतिषेधस्यैवाङ्गीकरणेन नित्यस्यैवेष्टत्वेन आभीक्ष्ण्यविरहे उक्तोपपदेषु एव प्रवर्तमानस्य विभाषासूत्रस्य अप्राप्तविभाषात्वमेव ॥—परविप्रतिषेधस्यैवाङ्गीकारेण विकल्पस्यैवेष्टत्वे तु आभीक्ष्ण्ये प्राप्तत्वेन आभीक्ष्ण्यविरहे त्वप्राप्तत्वेन उभयत्रविभाषात्वमिति संशये—अननुवृत्तिपूर्वविप्रतिषेधयोरेव लक्ष्यानुरोधेनाङ्गीकारादप्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥ ( दाधिमथैरत्र सूत्रे प्राप्ताप्राप्तोभयत्रविभाषाप्रदर्शनार्थं यदुपक्रान्तं तत् शिष्यबुद्धिवैशद्यार्थमुपयुज्येत कदाचिदित्युपन्यस्तम् । स्वरूमभङ्गभिया चान्यूनाक्षरमेव स्थापितम् ॥ )

२ आक्रोश इति । तदग्रिमे तत्सूत्रे पठितानामित्यर्थः ॥ नञ उत्तरपदस्यान्तोदात्तत्वविधायकं सूत्रद्वयम् ॥ छाया ॥ अकर्ता अनन्नम् अतीक्ष्णम् ॥

३ चस्त्वर्थे । ग्रन्थाः-प्राचाम् ॥ छाया ॥

४ 'विभाषा तृन्नन्नतीक्ष्णशुचिषु' ( ६।२।१६१ ) इति सूत्रे 'आक्रोशे च' इति सूत्रमनुवर्त्य वाक्यभेदेन नञः परमुत्तरपदमन्तोदात्तमाक्रोशे' इति व्यापकार्थेन उत्तरपदान्तोदात्तत्वे नित्यं प्राप्त एव 'नञः परेषामुत्तरपदानां तृन्नन्तादीनां विभाषया अन्तोदात्तत्वमाक्रोशे' इति व्याख्यार्थेन विभाषाविधानात् प्राप्तविभाषात्वमेव ॥ अननुवृत्तौ आक्रोशे तृन्नन्नादिविरहे अपचः इत्यादौ सावकाशस्य नित्यान्तोदात्तत्वस्य अनाक्रोशे 'अकर्ता' इत्यादौ तृन्नादिसत्त्वे सावकाशस्य विकल्पान्तोदात्तत्वस्य च आक्रोशतृन्नन्तादिषु 'अकर्ता'इत्यादिषु प्राप्तौ पूर्वविप्रतिषेधस्यैवाङ्गीकारेण नित्यान्तोदात्तत्वे जाते विभाषासूत्रमनाक्रोश एव प्रवर्तेत इति विभाषासूत्रमप्राप्तविभाषैव ॥—परविप्रतिषेधस्यैवाङ्गीकारेण विभाषान्तोदात्तत्वस्यैवेष्टत्वे आक्रोशे प्राप्तविभाषा, आक्रोशविरहे त्वप्राप्ता विभाषेति उभयत्रविभाषैवेति संशये—आक्रोशपदाननुवृत्तिपूर्वविप्रतिषेधयोरेवेष्टत्वेन अनाक्रोश एव विकल्पप्रवृत्तेरिष्टत्वेनाप्राप्तिविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

५ 'एकहलादौ पूरयितव्येऽन्यतरस्याम्' ( ६।३।५९ ) इति सूत्रे 'उदकस्योदः संज्ञायाम्' इति सूत्रं संज्ञापदघटितमनुवर्त्य वाक्यभेदेन 'उदकशब्दस्य पूर्वपदभूतस्य उद इत्यादेशः संज्ञायाम्' इति व्यापकार्थेन संज्ञायां नित्यं प्राप्त एव उदादेशः 'उदकस्य उदो वा एकहलादौ पूरयितव्य उत्तरपदे परे संज्ञायाम्' इति व्याख्यार्थेन 'उदपानम्' इति संज्ञायाम् विकल्पविधानेन प्राप्तविभाषात्वमेव ॥ 'संज्ञायाम्' इत्यस्याननुवृत्तौ संज्ञायां सावकाशस्य पूर्वसूत्रेण उदादेशस्य नित्यस्य उदकुम्भ इत्यादौ असंज्ञायां सावकाशस्य विकल्पस्य च 'उदपानम्' इति संज्ञायां प्राप्तौ पूर्वविप्रतिषेधस्यैवाङ्गीकारे असंज्ञायामेव विकल्पप्राप्त्यङ्गीकारे तत्र संज्ञानिमित्तकनित्यस्य प्राप्त्यभावेनाप्राप्तविभाषात्वमेव, परविप्रतिषेधस्यैवाङ्गीकारेण विकल्पप्रवृत्त्यङ्गीकृत्या संज्ञायां प्राप्तस्य असंज्ञायामप्राप्तस्य विकल्पनादुभयत्रविभाषैव इति संशये—संज्ञायामित्यस्याननुवृत्तिपूर्वप्रतिषेधयोरेव स्वीकारेण अप्राप्तविभाषात्वमेव सिद्धान्तः ॥ दाधिमथाः ॥

( ११ उदाहरणभाष्यवार्तिकम् )

***॥ श्वादेरिञि, पदान्तस्यान्यतरस्याम् ॥***

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ।**

( संदेहाक्षेपभाष्यम् )

**[1]कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?**

( संदेहोपपादकभाष्यम् )

**इञीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( सिद्धान्तभाष्यम् )

**अ[2]प्राप्ते । इञीति निवृत्तम् ॥**

( १२ उदाहरणभाष्यवार्तिकम् )

***॥ सपूर्वायाः प्रथमाया विभाषा ॥***

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**[3]कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?**

( संदेहोपपादकभाष्यम् )

**चादिभिर्योग इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( प्रदीपः ) **चादिभिरिति** । [4]प्रतिषेधस्याप्राप्तविभाषा स्थाप्यते, विधेस्तु प्राप्तविभाषैव ॥

( सिद्धान्तभाष्यम् )

**अ[5]प्राप्ते । चादिभिर्योग इति निवृत्तम् ॥**

( १३ उदाहरणभाष्यवार्तिकम् )

***॥ ग्रो यङ्यचि विभाषा ॥***

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?**

( संदेहोपपादकभाष्यम् )

**यङीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( प्रदीपः ) **यङीति वेति** । यङ्लुकि कृतेऽजादिः परः संभवति— जेगिल इति । अत्र च पचाद्यचि **यङोऽचि चेति** **यङ्लुक्** ॥

( उद्योतः ) यङ्लुकीति । अ[6]चि विभाषेत्यत्र यङीति वर्तते । तत्रोभयोर्यङजाद्योरव्यवहितपरत्वासंभवात् श्रु[7]तस्याचीत्यस्य परविशेषणत्वम्, यङीति विषयसप्तमी । अचि परे यङ्विषये रेफस्य

१ 'कथं च' इति आ. पाठः ॥

२ 'पदान्तस्यान्यतरस्याम्' ( ७।३।९ ) इति सूत्रे 'श्वादेरिञि' इति सूत्रमनुवर्त्य 'इञि तद्धिते परे श्वादेरङ्गस्याचामादेरचो वृद्धिबाधक ऐच् न' इति व्यापकार्थेन प्राप्त एव ऐच्निषेधे 'इञि परे पदशब्दान्तस्य श्वादेरङ्गस्यैज्निषेधो वा' इति व्याप्यार्थेन शौवापदिरित्यत्र विकल्पविधानात् प्राप्तविभाषात्वमेव । 'इञि' इत्यस्याननुवृत्तौ 'वृद्धिनिमित्ते तद्धिते श्वादेः पदशब्दान्तस्य ऐज्निषेधो वा' इत्येवमेवार्थकरणेन 'श्वाभस्त्रिः' इत्यत्र सावकाशस्य नित्यनिषेधस्य शौवा(श्वा)पदमित्यत्र सावकाशस्य विकल्पनिषेधस्य च 'शौवा(श्वा)पदिः' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यनिषेधस्यैवाङ्गीकारे इञ्रहितस्यैव विकल्पविषयत्वेन तत्र नित्यविधेरप्राप्त्याऽप्राप्तविभाषात्वमेव ॥ 'इञि' इत्यस्यानुवृत्तौ परविप्रतिषेधे इञि प्राप्ते अन्यत्राप्राप्ते विभाषेति उभयत्रविभाषात्वमेवेति संशये—लक्ष्यानुरोधात् अननुवृत्ति-पूर्वविप्रतिषेधयोरेव स्वीकारेण अप्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

३ 'कथं च प्रा' इति आ. पाठः ॥

४ नन्वेतन्निवृत्तावप्यादेशानां पूर्वेण प्राप्तत्वात्कथमप्राप्तविभाषाऽत आह—प्रतिषेधेति ॥ छाया ॥ तेन शौवापदमित्यत्र विकल्पः सिद्धः ॥

५ 'सपूर्वायाः प्रथमाया विभाषा' ( ८।१।२६ ) इति सूत्रे 'नचवाहाहैवयुक्ते' 'पश्यार्थैश्चानालोचने' इत्यनयोरनुवृत्तौ वाक्यभेदेन 'चादिपञ्चकपश्यार्थयोगे नैत आदेशाः' इति व्यापकार्थेन नित्यनिषेधे प्राप्त एव 'चादिपञ्चकपश्यार्थकधातुयोगे विद्यमानपूर्वप्रथमान्तात् परे एते आदेशा वा न स्युः' इति व्याप्यार्थेन निषेधविकल्पविधानात् प्राप्ते विभाषैव ॥ अननुवृत्तौ 'विद्यमानपूर्वप्रथमान्तात् परे एते आदेशा वा न स्युः' इत्यर्थस्वीकारे प्रथमान्तप्रयोगविरहे 'सदा त्वां मां च रक्षतु' इत्यादौ सावकाशस्य नित्यनिषेधस्य, 'भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्' इत्यादौ सावकाशाया निषेधविभाषायाश्च 'भक्तस्त्वमप्यहं तेन हरिस्त्वां मां च त्रायते' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यनिषेधस्यैव प्रवृत्त्यङ्गीकारे निषेधविकल्पस्य चादिपञ्चकयोगरहित एव प्रवृत्तेरङ्गीकरणीयतया तत्र नित्यनिषेधस्य प्राप्त्यभावेनाप्राप्तविभाषात्वमेव ॥ अननुवृत्तौ परविप्रतिषेधस्वीकारे निषेधविकल्पप्राप्तिस्वीकारे चादिपञ्चकादियोगे प्राप्तेविभाषा, योगराहित्येऽप्राप्तेविभाषेति उभयत्रविभाषात्वमित्येवं संशये—लक्ष्यानुरोधादननुवृत्तिपूर्वविप्रतिषेधयोरेव स्वीकारेणाप्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

६ ननु निजेगिल्यत इत्यत्र ग्रो यङीति नित्यं लत्वम्, विभाषायास्तु प्राप्तिरेव नास्ति । गिरति गिलतीत्यादौ तु विभाषा, ग्रो यङीत्यस्य प्राप्तिरेव नास्ति । तत्कुतः प्राप्तविभाषापक्ष इत्यत आह—अचीत्यादिना ॥

७ तत्रानुवृत्तौ सत्यां विनिगमकमाह—श्रुतस्येति ॥ छाया ॥

ल्त्वमित्यर्थः ॥ तत्र विभाषारम्भसामर्थ्याद् यङ्लुकः पूर्वं ग्रो यङीति न भवति । न लुमतेति निषेधानित्यत्वेन पृथगल्लोपेन स्थानिवद्भावेन वा यङ्विषय इति प्राप्तविभाषात्वोपपत्तिः ॥ यङीत्येतन्निवृत्तौ विभाषाया असिद्धत्वादेव नित्यं ल्त्वम् । समुदायलुक्यपि न लुमतेति निषेधान्न तत्प्राप्तिरित्यप्राप्तविभाषात्वोपपत्तिः ॥ उभयत्रविभाषात्वे त्वियमुपपत्तिः—ग्रो यङीत्येतत्प्रति प्रकरणे प्रकरणमसिद्धमिति विभाषाया असिद्धत्वाभावः । लुकः पूर्वं यङीत्यस्य न प्रवृत्तिः, अन्तरङ्गानपीति न्यायेन लुकस्तत्प्रयोजकाच्प्रत्ययस्य च पूर्वं प्रवृत्तेः ॥ न च लुकि न लुमतेति निषेधे यङ्परत्वाभावाद् ग्रो यङीत्यस्याप्राप्तेः कथमुभयत्रविभाषात्वमिति वाच्यम् । दत्तोत्तरत्वादिति दिक् ॥

( सिद्धान्तभाष्यम् )

अप्राप्ते । यङीति निवृत्तम् ॥

( इत्यप्राप्तविभाषा )

---

( प्राप्तविभाषाप्रकरणम् )

( २५१ अधिकारवार्तिकम् ॥ ८ ॥ )

॥ * ॥ प्राप्ते च ॥ * ॥

( भाष्यम् )

**इत उत्तरं या विभाषा अनुक्रमिष्यामः प्राप्ते ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति ॥**

( प्रदीपः ) प्राप्ते चेति । प्रकृतानुवृत्त्या प्राप्तविभाषा व्यवतिष्ठते ॥

( १ उदाहरणभाष्यवार्तिकम् )

*॥ विभाषा विप्रलापे ॥*

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?**

( संदेहोपपादकभाष्यम् )

**'व्यक्तवाचाम्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( प्रदीपः ) अन्यत्र वेति । विप्रवदन्ति शकुनय इत्यत्र पूर्वविप्रतिषेधश्च यदीति भावः ॥

( सिद्धान्तभाष्यम् )

**प्राप्ते । व्यक्तवाचामिति हि वर्तते ॥**

( २ उदाहरणभाष्यवार्तिकम् )

*॥ विभाषोपपदेन प्रतीयमाने ॥*

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं च प्राप्ते? कथं चाप्राप्ते? कथं चोभयत्र?**

---

१ तत्र-तथार्थे सति ॥ ननु तथापि यङ्विषयत्वं कथमत आह—न लुमतेति ॥ तस्य नित्यत्वेऽप्याह—पृथगिति ॥ अचः-परेत्यनेन यङ्परत्वमुक्तरीत्यैवेत्याह—नित्यमिति ॥ तथाच यङ्भिन्नविषयो विकल्प इति तस्य तत्त्वम् ॥ इदं च पृथगल्लोपपक्ष उक्तम् । पक्षान्तरेऽप्यन्यथा तत्त्वमाह—समुदायेति ॥ निषेधादिति ॥ अनित्यत्वाश्रयणे न मानं, स्थानिवद्भावस्तु नास्त्येवात्र पक्ष इति भावः ॥ तत्प्राप्तिरिति । अत्रैव ग्रो यङीत्यस्येति भावः ॥ छाया ॥

२ वक्ष्यमाणैकदेशिमतेनाह—प्रकरण इति ॥ न तु योगे योग इत्यर्थस्तदाह—विशेति ॥ छाया ॥

३ अन्यत्र चारितार्थ्येन प्रागुक्तयुक्तेरसंभवादाह—अन्तरङ्गानिति । यङीति निवृत्तमिति पक्ष एवेदमिति भावः । यङ्प्रवृत्त्यव्यवहितमेव तत्प्रवृत्तिरिति द्वित्वात्पूर्वमेवान्यथा स्यात् । तत्र च नासिद्धत्वम्, पूर्वत्रासिद्धीयमद्वित्वे इत्युक्तेः । अत एवान्तरङ्गेतिन्यायपर्यन्तधावनमिति तात्पर्यम् ॥ दत्तोत्तरेति । तदनित्यत्वात्स्थानिवत्त्वाद्वेत्यर्थः ॥ इति-उपपत्तिसमाप्तौ । अत्र तन्निवृत्तावाद्यपक्ष एव युक्तः । प्रकरणे प्रकरणमित्यस्य दूषितत्वात् । तदाह—इति दिगिति ॥ छाया ॥

४ 'अचि विभाषा' ( ८।२।२१ ) इति सूत्रे 'ग्रो यङि' इति समग्रं सूत्रमनुवर्त्य वाक्यभेदेन 'गिरते रेफस्य लत्वं यङ्विषये' इति व्यापकार्थेन प्राप्त एव नित्यलत्वे 'गिरते रेफस्य लत्वं वा अजादौ परे यङ्विषये' इति विभाषा आरभ्यते इति प्राप्तविभाषात्वे-'यङि' इत्यस्यानुवृत्तौ 'गिरते रेफस्य लत्वं वा अजादौ' इत्यर्थाङ्गीकारे 'जेगिल्यते' इत्यत्र सावकाशस्य नित्यलत्वस्य, गिलति इत्यादौ सावकाशस्य लत्वविकल्पस्य च 'निजेगिलः' इत्यत्र प्राप्तौ 'प्रकरणे प्रकरणमसिद्धं न तु योगे योगः' इति सिद्धान्तस्य 'पूर्वत्रासिद्धम्' इत्यत्राङ्गीकारेण 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इत्यस्याप्राप्तौ पूर्वविप्रतिषेधेन यङ्विषये नित्यलत्वस्यैवेष्टत्वेन विकल्पलत्वविषयत्वस्य यङ्विषयत्वविरह एव वक्तव्यतया तत्र नित्यलत्वस्याप्राप्त्या अप्राप्तविभाषात्वे, परविप्रतिषेधाङ्गीकारेण विकल्पस्यैवेष्टत्वे निजेगिल इत्यत्र प्राप्तविभाषात्वम्, गिरति गिलति इत्यत्राप्राप्तविभाषात्वमिति उभयत्र विभाषात्वे वा प्राप्ते—'यङि' इत्यस्यानुवृत्ति-पूर्वविप्रतिषेधयोरेव लक्ष्यानुरोधादङ्गीकारेणाप्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

५ कथं च प्रा' इति आ. पाठः ॥

६ 'विभाषा विप्रलापे' ( १।३।५० ) इति सूत्रे 'व्यक्तवाचां समुच्चारणे' इति सूत्रमनुवर्त्य वाक्यभेदेन 'व्यक्तवाचां संभूयोच्चारणे वदेरात्मनेपदं स्यात्' इति व्यापकार्थेन नित्यात्मनेपदप्राप्तावेव व्यक्तवाचां संभूयोच्चारणे विरुद्धोक्तिविषये विभाषा प्रारभ्यते इति प्राप्तविभाषात्वं किंवा अननुवृत्तौ—'संप्रवदन्ते ब्राह्मणा' इत्यत्र सावकाशस्य नित्यात्मनेपदस्य 'विप्रवदन्ति खगाः' इत्यत्र सावकाशस्य विकल्पस्य च व्यक्तवाग्विषये 'विप्रवदन्ते ब्राह्मणाः' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यस्यैव स्वीकारे विकल्पविषयत्वस्याव्यक्तवाग्विषय एव प्राप्तौ तत्र नित्यविधेरप्राप्त्या अप्राप्तविभाषात्वं किंवा परविप्रतिषेधेन विकल्पस्यैव स्वीकारे व्यक्तवाग्विप्रलापे प्राप्तविभाषा अव्यक्तवाग्विप्रलापे त्वप्राप्तविभाषेति उभयत्रविभाषात्वमिति संशये—लक्ष्यानुसारेणानुवृत्तेरेव स्वीकारेण प्राप्तविभाषात्वमिति सिद्धान्तः ॥ दाधिमथाः ॥

( संदेहोपपादकभाष्यम् )

"स्वरितञितः" इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

[१]प्राप्ते । 'स्वरितञितः' इति हि वर्तते ॥

( प्रदीपः ) विभाषोपपदेनेति । [२]कर्त्रभिप्राये क्रियाफले विषये आत्मनेपदं भवति—इत्येवं प्राप्तविभाषा व्यवतिष्ठते ॥ अथ तु तदर्थद्योतनायात्मनेपदं क्रियते, तदोपपदेनैव द्योतितत्वादप्राप्तविभाषा स्यात् ॥

( उद्योतः ) अथ त्विति । [३]तथा च स पक्ष एतद्भाष्यविरुद्ध इति भावः ॥ वस्तुतो द्योतकत्वपक्षेऽपि 'व्यतिलुनीते-गार्ग्यायणी' इत्यादौ द्योतकसमुच्चयस्य 'द्वौ' इत्यादौ द्योतकवाचकसमुच्चयस्य च दृष्टत्वेनात्राप्यात्मनेपदप्राप्तिरस्तीति प्राप्तविभाषा सूपपादेति चिन्त्यमेतत् ॥

( ३ उदाहरणभाष्यवार्तिकम् )

***॥ तिरोऽन्तर्धौ, विभाषा कृञि ॥***

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

[४]कथं वा प्राप्ते ? कथं वाऽप्राप्ते, ? कथं वोभयत्र ?

( संदेहोपपादकभाष्यम् )

"अन्तर्धौ" इति नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

[५]प्राप्ते । 'अन्तर्धौ' इति हि वर्तते ॥

( ४ उदाहरणभाष्यवार्तिकम् )

***॥ अधिरीश्वरे, विभाषा कृञि ॥***

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

[६]कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ।

( संदेहोपपादकभाष्यम् )

'ईश्वरे' [८] इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

[७]प्राप्ते । 'अधिरीश्वरे' इति हि वर्तते ॥

---

१ 'विभाषोपपदेन प्रतीयमाने' ( १।३।७७ ) 'स्वरितञितः' इत्यादि पञ्चसूत्र्या अनुवृत्तौ वाक्यभेदेन 'स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले' इति व्यापकार्थेन आत्मनेपदे प्राप्ते एव 'कर्तृगामित्वे क्रियाफलस्य उपपदेन समीपोच्चारितपदेन प्रतीयमाने सति स्वरितञित आत्मनेपदं विभाषा स्याद्' इति व्याख्यार्थेन विभाषा विधीयत इति प्राप्तविभाषात्वमेव, अननुवृत्तौ कर्तृगामिनि क्रियाफले यजते कुरुते इत्यादौ सावकाशस्य नित्यात्मनेपदस्य, 'स्वं पाठं पठति' इत्यादौ सावकाशाया विभाषायाश्च 'स्वं यज्ञं यजते' इत्यादौ प्राप्तौ पूर्वविप्रतिषेधेन नित्यात्मनेपदस्यैव विधानेन विभाषायाः प्रागुक्तसूत्रविषयताविरह एव प्रवृत्त्या तत्र प्रागुक्तसूत्रपञ्चकस्याप्राप्त्या अप्राप्तवितापात्वमेव, अननुवृत्तौ परविप्रतिषेधस्वीकारे कृञादिषु प्राप्तविभाषात्वम् कृञादिभिन्नेषु अप्राप्तविभाषात्वमिति उभयत्र विभाषात्वमेवेति संशये—अनुवृत्तिस्वीकारे प्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

२ वाचकतापक्षेण भाष्यं योजयति—कर्त्रभीति ॥ विपक्षे बाधकमाह—अथ त्विति ॥ छाया ॥

३ तदाशयमाह—तथा चेति ॥ स पक्षः-द्योतकतापक्षः ॥ चिन्त्यमिति । असंकोचेनैवोपपत्तौ संकोचे मानाभावात् ॥ छाया ॥

४ 'कथं च प्रा' इति आ. पाठः ॥

५ "विभाषा कृञि" ( १।४।७२ ) इति सूत्रे 'तिरोऽन्तर्धौ' इति सूत्रमनुवर्त्य वाक्यभेदेन 'तिर इति गतिसंज्ञं क्रियायोगेऽन्तर्धौ गम्यमाने' इति व्यापकार्थेन नित्यं प्राप्तायामेव गतिसंज्ञायां 'तिर इति गतिसंज्ञं वा कृधात्वर्थक्रियायोगेऽन्तर्धौ गम्यमाने' इति व्याख्यार्थेन 'तिरस्कृत्य' इत्यत्र विभाषा गतिसंज्ञा विधीयते इति प्राप्तविभाषात्वम्, 'अन्तर्धौ' इत्यस्याननुवृत्तौ 'तिरोभूय' इत्यत्रान्तर्धौ सावकाशाया नित्यगतिसंज्ञायाः 'अनन्तर्धौ तिरस्कृत्य' इत्यत्र सावकाशाया विभाषायाश्च अन्तर्धौ तिरस्कृत्येत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्याया एवाङ्गीकारेण विभाषाया अनन्तर्धावेव स्वीकारेण तत्र नित्यायाः प्राप्त्यभावेन अप्राप्तविभाषात्वम्, परविप्रतिषेधेन विभाषाया एव स्वीकारे अन्तर्धौ प्राप्तविभाषात्वम् अनन्तर्धावप्राप्तविभाषात्वमित्युभयत्रविभाषात्वम् इति संशये—अनुवृत्तिस्वीकारेण प्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

६ 'अधिरीश्वरे इति' इति आ. पाठः ॥

७ "विभाषा कृञि" ( १।४।९८ ) इति सूत्रे 'अधिरीश्वरे' इति सूत्रमनुवर्त्य वाक्यभेदेन 'स्वस्वामिभावसंबन्धेऽधिः कर्मप्रवचनीयसंज्ञः' इति व्यापकार्थेन नित्यकर्मप्रवचनीयसंज्ञायां प्राप्तायामेव 'स्वस्वामिभावसंबन्धेऽधिः कर्मप्रवचनीयसंज्ञो वा कृञो योगे' इति व्याख्यार्थेन विभाषा विधीयते इति प्राप्तविभाषात्वम् 'ईश्वरे' इत्यस्याननुवृत्तौ 'अधि भुवि भूपः' इत्यत्र सावकाशाया नित्यसंज्ञायाः, अनीश्वरे अधि भुवि घट इत्यत्र सावकाशाया विभाषायाश्च 'भूपो भुवि अधि करोति' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यसंज्ञाया एव प्रवृत्तौ विभाषायाः परिशेषाद् अनीश्वर एव प्रवर्तनीयत्वेन तत्र नित्यसंज्ञाया अप्राप्त्या अप्राप्तविभाषात्वम् । परविप्रतिषेधेन विभाषाया एव प्रवृत्तौ ईश्वरे प्राप्तविभाषा अनीश्वरे त्वप्राप्तविभाषेत्युभयत्रविभाषात्वम् इति संशये—लक्ष्यानुरोधाद् 'ईश्वरे' इत्यस्यानुवृत्तेरेव स्वीकारेण प्राप्तविभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

८ 'ईश्वरे इति' इति आ. पाठः ॥

( ५ उदाहरणभाष्यवार्तिकम् )

***॥ दिवस्तदर्थस्य, विभाषोपसर्गे ॥***

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

कथं[1] वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?

( संदेहोपपादकभाष्यम् )

तदर्थस्येति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

प्रा[2]प्ते । 'तदर्थस्य' इति हि वर्तते ॥

( इति प्राप्तविभाषा )

( उभयत्रविभाषाप्रकरणम् )

( २५२ अधिकारवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उ[3]भयत्र ॥ * ॥**

( भाष्यम् )

इत उत्तरं या विभाषा अनुक्रमिष्यामः, उभयत्र ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति ॥

( १ उदाहरणभाष्यवार्तिकम् )

***॥ हृक्रोरन्यतरस्याम् ॥***

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?

( संदेहोपपादकभाष्यम् )

"गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" इति वा नित्ये [4]प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( उद्द्योतः ) भाष्ये-गतिबुद्धीति नित्ये प्राप्ते इति । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति भावः ॥

( सिद्धान्तभाष्यम् )

उभयत्र ॥

प्राप्ते तावत्—अभ्यवहारयति सैन्धवान्, अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान्, विकारयति सैन्धवैः ॥

अप्राप्ते—हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन । करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन ॥

( प्रदीपः ) **गतिबुद्धीति** । त[5]त्र विपूर्वो हरतिर्गत्यर्थः, अभ्यवपूर्वः प्रत्यवसानार्थः । करोतिः क्वचिदकर्मकः, यथा-विकुर्वते सैन्धवा इति ॥

( उद्द्योतः ) **तत्र विपूर्व इति** । 'विहरति ग्रामं' इत्यादौ गच्छतीत्यर्थावगमादिति भावः ॥ भाष्ये-**अप्राप्ते हरति भारमिति** । ननु गत्यर्थत्वादस्यापि प्राप्तिरस्त्येवेति चेन्न । प्रापणार्थत्वेऽपि गत्यर्थत्वाभावस्य **न गती**ति सूत्रे वक्ष्यमाणत्वात् ॥

( २ उदाहरणभाष्यवार्तिकम् )

***॥ न यदि, विभाषा साकाङ्क्षे ॥***

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र चेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

क[6]थं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?

---

१ 'कथं च प्रा' इति आ. पाठः ॥

२ "**विभाषोपसर्गे**" ( २।३।५९ ) इति सूत्रे 'दिवस्तदर्थस्य' इत्यस्यानुवृत्तौ वाक्यभेदेन 'द्यूताद्यर्थस्य दिवः कर्मणि षष्ठी' इत्यनेन नित्यषष्ठीप्राप्तावेव 'द्यूताद्यर्थस्य सोपसर्गस्य दिवः कर्मणि षष्ठी' वा इति व्याख्यार्थेन 'शतस्य प्रतिदीव्यति' इत्यत्र विभाषा विधीयत इति प्राप्तविभाषात्वम्, 'तदर्थस्य' इत्यस्याननुवृत्तौ द्यूतार्थस्य दिवः प्रयोगे सावकाशाया नित्यषष्ठ्याः 'ब्राह्मणं स्तौति' इत्यर्थके 'ब्राह्मणं दीव्यति' इत्यत्र प्राप्ताया विभाषायाश्च 'शतस्य प्रतिदीव्यति' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यषष्ठ्या एव स्वीकारे विभाषाया अतदर्थ एव प्रवृत्तेर्वक्तव्यतया तत्र नित्यषष्ठ्याः प्राप्त्यभावेन अप्राप्तविभाषात्वम्, परविप्रतिषेधेन विभाषाया एव स्वीकारे तदर्थप्रयोगे प्राप्तविभाषा अतदर्थप्रयोगे अप्राप्तविभाषेति उभयत्रविभाषात्वम्, इति संशये—'तदर्थस्य' इत्यस्यानुवृत्तेरेव लक्ष्यानुरोधादङ्गीकारे तदर्थसोपसर्गप्रयोगे प्राप्तविभाषा अतदर्थसोपसर्गप्रयोगे अप्राप्तविभाषेति उभयत्र विभाषात्वमेवेति सिद्धान्तः ॥ दाधिमथाः ॥

३ 'उभयत्र च' इति आ. क. ख. ग. पाठः ॥

४ "**हृक्रोरन्यतरस्याम्**" ( १।४।५३ ) इति सूत्रे 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति सूत्रमनुवर्त्य हृक्रोः क्वचिद् गतिप्रत्यवसानार्थाकर्मकत्वेन तत्रैव नित्यकर्मत्वे प्राप्त एव विधीयमानाया विभाषायाः प्राप्तविभाषात्वम् । अननुवृत्तौ गतिप्रत्यवसानार्थाकर्मकहृक्रुभिन्नधातुप्रयोगे सावकाशाया नित्यकर्मसंज्ञायाः, गतिप्रत्यवसानार्थाकर्मकभिन्नहृक्रोः प्रयोगे सावकाशाया विभाषायाश्च गतिप्रत्यवसानार्थाकर्मकहृक्रोः प्रयोगे प्राप्तौ पूर्वविप्रतिषेधेन नित्यकर्मत्वस्यैवेष्टत्वे विभाषाया गतिप्रत्यवसानार्थाकर्मकभिन्नहृक्रोः प्रयोग एव स्वीकरणीयतया तत्र नित्यसंज्ञायाः प्राप्त्यभावेन अप्राप्तविभाषात्वम् । परविप्रतिषेधेन विभाषायाः स्वीकारे गतिप्रत्यवसानार्थाकर्मकहृक्रुप्रयोगे प्राप्तविभाषा तद्भिन्नहृक्रुप्रयोगेऽप्राप्तविभाषेति उभयत्र विभाषात्वमितिसंशयः ॥ दाधिमथाः ॥

५ तत्र-हृक्रोर्मध्ये ॥ छाया ॥

६ 'कथं च प्रा' इति आ. पाठः ॥

( संदेहोपपादकभाष्यम् )

यदीति वा नित्ये [2]प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

(प्रदीपः) यदीति वेति । प्रतिषेधे प्राप्ते इत्यर्थः । लृट्[3]तु यदि प्रतिषिद्धः ॥

( सिद्धान्तभाष्यम् )

उभयत्र ॥

प्राप्ते तावत्—अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः, यत्कश्मीरेष्ववसाम । यत्तत्रौदनं भोक्ष्यामहे, [4]यत्तत्रौदनमभुञ्ज्महि ॥

अप्राप्ते-अभिजानासि देवदत्त कश्मीरान् गमिष्यामः, कश्मीरानगच्छाम । तत्रौदनं भोक्ष्यामहे, तत्रौदनमभुञ्ज्महि ॥

( ३ उदाहरणभाष्यवार्तिकम् )

## *॥ विभाषा श्वेः ॥*

( भाष्यम् )

प्राप्ते, अप्राप्ते, उभयत्र चेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

[5]कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?

( संदेहोपपादकभाष्यम् )

कितीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

उभयत्र ॥

प्राप्ते तावत्—शुशुवतुः शुशुवुः, शिश्वियतुः शिश्वियुः ॥

अप्राप्ते-शुशाव-शुशविथ, शिश्वाय-शिश्वयिथ ॥

( ४ उदाहरणभाष्यवार्तिकम् )

## *॥ विभाषा संघुषास्वनाम् ॥*

( भाष्यम् )

संपूर्वाद्धुषेः—

प्राप्ते, अप्राप्ते, उभयत्र चेति संदेहः ॥

( संदेहाक्षेपभाष्यम् )

कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?

( संदेहोपपादकभाष्यम् )

"घुषिरविशब्दने" इति वा नित्ये [6]प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

उभयत्र ॥

प्राप्ते तावत्—संघुष्टा रज्जुः, संघुषिता रज्जुः ।

अप्राप्ते-संघुष्टं वाक्यमाह[7], संघुषितं वाक्यमाह ॥

( आस्वनोदाहरणभाष्यम् )

आङ्पूर्वात्स्वनेः-

प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥

---

१—"विभाषा साकाङ्क्षे" (३।२।११४) इति सूत्रे 'न यदि' इति सूत्रमनुवर्त्य वाक्यभेदेन 'यच्छब्दयोगे स्मृतिवाचिन्युपपदे धातोर्लृट् न' इति व्यापकार्थेन नित्यनिषेधे प्राप्त एव 'यच्छब्दयोगे स्मृतिवाचिन्युपपदे साकाङ्क्षे धातोर्लृङ्निषेधो वा' इति व्याप्यार्थेन 'स्मरसि कृष्ण यद् वने वत्स्यामः तत्र गाश्चारयिष्यामः' "इत्यत्र विभाषा विधीयते इति प्राप्तविभाषात्वम्" 'यदि' इत्यस्याननुवृत्तौ 'स्मृतिवाचिनि उपपदे साकाङ्क्षे धातोर्लृङ्निषेधो वा' इत्यर्थे 'स्मरसि कृष्ण यद् वने गा अचारयाम' इत्यत्र सावकाशस्य नित्यनिषेधस्य, 'स्मरसि कृष्ण वने अवसाम तत्र गा अचारयाम' इत्यत्र सावकाशाया निषेधविभाषायाश्च 'स्मरसि कृष्ण यद् वनेऽवसाम तत्र गा अचारयाम' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यनिषेधस्यैव स्वीकारे विभाषाया यच्छब्दयोगरहिते एव प्रवृत्तेः स्वीकरणीयत्वेन तत्र नित्यस्य प्राप्त्यभावेन अप्राप्तविभाषात्वम्, परविप्रतिषेधेन विभाषायाः प्रवृत्तिस्वीकारे यच्छब्दयोगे नित्यस्य प्राप्त्या प्राप्तविभाषा यच्छब्दयोगराहित्ये नित्यस्याप्राप्त्या अप्राप्तविभाषेति उभयत्रविभाषात्वम्—इति संदेहोपपादनम् ॥ दाधिमथाः ॥

२ निषेधीयोभयत्रविभाषेत्याह—प्रतीति ॥ कस्येत्याकाङ्क्षायामाह—लृडिति ॥ यदि—यद्योगे ॥ छाया ॥

३ तुशब्दो ह्यर्थे । (र. ना.) 'तु'शब्दपाठः अ. क. पुस्तकयोर्न ॥

४ 'यत्तत्रौदनान्' इति आ. पाठः ॥

५—"विभाषा श्वेः" (६।१।३०) इति सूत्रे 'वचिस्वपियजादीनां किति' इति सूत्रमनुवर्त्य वाक्यभेदेन 'यजादेः श्वयतेः संप्रसारणं किति' इति व्यापकार्थेन नित्यसंप्रसारणे प्राप्त एव 'यजादिश्वयतेः संप्रसारणं वा किति लिटि' इति व्याप्यार्थेन विभाषा विधीयते इति प्राप्तविभाषात्वम् । 'किति' इत्यस्याननुवृत्तौ 'शूयात्' इत्यत्र सावकाशस्य नित्यसंप्रसारणस्य 'शुशाव' इत्यत्र सावकाशाया विभाषायाश्च शुशुवतुरित्यादौ प्राप्त्या पूर्वविप्रतिषेधेन नित्यसंप्रसारणस्यैव स्वीकारे विभाषाया अकित्येव प्रवृत्तिस्वीकारेण तत्र नित्यस्याप्राप्त्या अप्राप्तविभाषात्वम् । परविप्रतिषेधेन विभाषाया एव प्रवृत्तिस्वीकारे किति प्राप्तविभाषा, अकिति अप्राप्तविभाषेति उभयत्रविभाषात्वमिति संदेहोपपादनम् ॥ दाधिमथाः ॥

६—"विभाषा" "संघुषास्वनाम्" (७।२।२८) इति सूत्रे 'घुषिरविशब्दने' इति सूत्रमनुवर्त्य वाक्यभेदेन 'घुषधातोर्निष्ठाया नेट् अविशब्दने' इति व्यापकार्थेन नित्यानिट्त्वे प्राप्त एव संघुषो विभाषा विधीयत इति प्राप्तविभाषात्वम् । 'अविशब्दने' इत्यस्याननुवृत्तौ 'अविशब्दने अनुपसृष्टे सावकाशस्य नित्यानिट्त्वस्य, विशब्दने सावकाशाया विभाषायाश्च समुपसृष्टेऽविशब्दने 'संघुष्टा रज्जुः' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यानिट्त्वस्यैव स्वीकारे विभाषाया विशब्दन एव प्रवृत्तेर्वक्तव्यतया तत्र नित्यानिट्त्वस्याप्राप्त्या अप्राप्तविभाषात्वम् । परविप्रतिषेधेन विभाषाया एव प्रवृत्तिस्वीकारे अविशब्दने 'संघुष्टा रज्जुः' इत्यत्र प्राप्तविभाषा विशब्दने 'संघुष्टः श्लोकः' इत्यत्राप्राप्तविभाषेति उभयत्रविभाषात्वमिति संदेहोपपादनम् ॥ दाधिमथाः ॥

७ आ. पुस्तके 'आह' शब्दो न ॥

( संदेहाक्षेपभाष्यम् )

कथं[1] वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?

( संदेहोपपादकभाष्यम् )

मनसीति[2] वा नित्ये प्राप्ते[3], अन्यत्र वा अप्राप्ते, उभयत्र वेति ॥

( सिद्धान्तभाष्यम् )

उभयत्र ॥

प्राप्ते तावत्—आस्वान्तं मनः, आस्वनितं[4] मनः ।

अप्राप्ते—आस्वान्तो देवदत्तः, आस्वनितो देवदत्त इति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

( प्रदीपः ) **दैवयज्ञीत्यादि** न विचारितम्, तस्मादिङ्मात्रप्रदर्शनार्थं कृतम् ॥ ४४ ॥

इत्युपाध्याय**जैयट**पुत्र**कैयट**कृते महाभाष्य**प्रदीपे** प्रथमस्याध्यायस्य प्रथमे पादे **षष्ठ**माह्निकम् ॥

( उद्योतः ) **दैवयज्ञीत्यादीति** । **अनार्षयो**रित्यनुवृत्त्यादिनाऽत्रापि[5] सन्देहसंभव इति भावः ॥ आदिना **विभाषा पुरुषे** इति ॥ ४४ ॥

इति श्री**शिवभट्ट**सुतसतीगर्भज**नागोजीभट्ट**कृते भाष्यप्रदी**पोद्योते** प्रथमाध्यायस्य प्रथमे पादे **षष्ठमाह्निकम्** ॥

# अथ प्रथमाध्यायस्य प्रथमपादे सप्तममाह्निकम् ॥

( ४० संप्रसारणसंज्ञासूत्रम् ॥ १ । १ । ७ आ. १ )

## इग्यणः संप्रसारणम् ॥ १ । १ । ४५ ॥

( उभयसंज्ञात्वस्थापनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमियं वाक्यस्य संप्रसारणसंज्ञा क्रियते – इग्यण इत्येतद्वाक्यं संप्रसारणसंज्ञं भवतीति । आहोस्विद्वर्णस्य—इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो[6] भवतीति ॥**

**कश्चात्र विशेषः ?**

( प्रदीपः ) **इग्यणः संप्रसारणम्** ॥ ४५ ॥ पक्षद्वयस्यापि लिङ्गदर्शनाद्युगपच्चोभयोः संज्ञित्वस्यैकस्मिन्वाक्येऽनुपपादादेकतरपक्षाश्रयणे सर्वकार्यासिद्धिप्रसङ्गात् **प्रश्नः—किमियमिति** । वाक्यशब्देन वाक्यार्थ उच्यते । इग्यण इत्यत्र भवतीत्यध्याहारा**दिग्यणो भवती**ति योऽयं वाक्यार्थस्तस्येयं संज्ञेत्यर्थः । अथवा वाक्यस्यैवेयं संज्ञा । तत्प्रतिपादितं च वाक्यं स्वार्थं प्रतिपादयति ॥ यणः स्थाने य इग्वर्णः स संप्रसारणसंज्ञ इति **वर्णसंज्ञापक्षः** ॥

( उद्योतः ) **इग्यणः०** ॥ ४५ ॥ **लिङ्गेति** । प्रदेशेषु प्रथमानिर्देशो वाक्यसंज्ञायाः, अन्यविभक्तिनिर्देशश्च वर्णसंज्ञाया लिङ्गमिति भावः ॥ ननु तर्हि[7] लिङ्गादुभयोरपि संज्ञित्वमस्त्वित्यत आह—**युगपच्चेति** । अनेकस्यार्थस्यैकशब्देन युगपदनुपस्थितेरिति भावः ॥ ननु वाक्यस्य संज्ञायां प्रदेशेषु तस्यैव विधानं स्यादत आह—**वाक्यार्थ इति** । पूर्वसूत्रात्[8] 'इति' इत्यनुवर्त्य **इग्यण इति संप्रसारणसंज्ञ**मित्यर्थादिति भावः ॥ **स्वं रूप**मित्युक्तेः शास्त्रे शब्दपरत्वस्यौत्सर्गिकत्वेन 'इति'समभिव्याहारं विनाऽर्थपरत्वासंभवादिति बोध्यम् ॥ ननु यण्स्थानिकत्वोपलक्षित इगेव वाक्यार्थ इति वर्णपक्षादस्य को भेद इत्यत आह—**भवतीति** । एवंचेग्भवनं वाक्यार्थ इति भावः ॥ **तत्प्रतिपादितमिति** । संज्ञयोपस्थितस्यानर्थकत्वे तदर्थानुपयोगे वा संज्ञोपस्थितस्वरूपस्यैवोपादानम् । न चैतदुभयमप्यत्रेति भावः ॥ **प्रतिपादयतीति** । ष्यङः[9] **संप्रसारण**मित्यादौ ॥ **उच्चारितस्यैव प्रत्यायकत्वमित्यणुदिदितिसूत्रस्थभाष्यविरुद्धमिदम्** ॥

( २५३ वाक्यसंज्ञापक्षदूषणवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः ॥ * ॥

( भाष्यम् )

**संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्न सिध्यति—संप्रसारणात्परः पूर्वो भवतीति, संप्रसारणस्य दीर्घो भवतीति । न हि वाक्यस्य संप्रसारण-**

---

१ 'कथं च प्रा' इति आ. पाठः ॥

२ **मनसीति** । क्षुब्धस्वान्तेत्यनेन ॥ छाया ॥

३ **"विभाषा संघुषास्वनाम्"** (७।२।२८) इति सूत्रे 'स्वान्तं मनसि' इति अनुवृत्तौ वाक्यभेदेन 'मनसि वाच्ये स्वनतेर्निष्ठाया नेट्' इति व्यापकार्थेन नित्यानिट्त्वे प्राप्त एव आङ्पूर्वात् स्वनतेरिड्निषेधविभाषा विधीयत इति प्राप्तविभाषात्वम् । अननुवृत्तौ निरुपसृष्टस्य स्वनतेः 'स्वान्तं मनः' इत्यत्र सावकाशस्य नित्यानिट्त्वस्य 'आस्वान्तो देवदत्तः' इत्यत्रामनसि सावकाशाया विभाषायाश्च आस्वान्तं मन इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यानिट्त्वस्यैव स्वीकारे विभाषाया अमनसि वक्तव्यतया तत्रानिट्त्वस्याप्राप्ततयाऽप्राप्तविभाषात्वम् । परविप्रतिषेधेन विभाषाया एव प्रवृत्तिस्वीकारे मनसि प्राप्तविभाषा अमनसि अप्राप्तविभाषेति उभयत्रविभाषात्वमिति संदेहोपपादनम् ॥ दाधिमथाः ॥

४ 'आस्वानितं' इति आ. पाठः ॥

५ आदिना **गोत्र** इत्यस्यानुवृत्तिः ॥ छाया ॥

६ 'प्रसारणसंज्ञो भवति इति वर्णे' इति ग. पाठः ॥

७ चस्त्वर्थे । **तर्हि**–पक्षद्वयलिङ्गसत्त्वे ॥ छाया ॥

८ दण्डिकृष्णाद्यनुरोधेनाह—**पूर्वसूत्रादिति** ॥ अनुवृत्तौ बीजमाह—**स्वरूपमिति** ॥ वस्तुतस्तु इग्यण इत्यनयोरर्थपरत्वमेव, **अशब्दसंज्ञे**त्युक्तेरिको **यणची**तिवत् । अत एव प्रत्याख्याने न दोष इति तस्य नोपयोग इति बोध्यम् ॥ छाया ॥

९ अनुवादेऽसंभवादाह—**ष्यङ इति** ॥ **विरुद्धमिति** । एवं चाद्यपक्ष एव युक्तः ॥ छाया ॥

संज्ञायामेष निर्देश उपपद्यते । नाप्येतयोः कार्ययोः संभवोऽस्ति ॥

( प्रदीपः ) वर्णविधिरिति । वर्णाश्रयो विधिर्दीर्घादिः ॥ न हीति । वाक्यार्थेन पौर्वापर्याभावात्, तस्य चासत्त्वभूतस्य स्थानित्वासंभवादित्यर्थः ॥

( उद्द्योतः ) वर्णविधिरित्यस्य वर्णविषयविधानमित्यर्थे असिद्धेरभावादाह—वर्णाश्रय इति । संबन्धसामान्यषष्ठ्या समासः ॥ विधिरिति कर्मणि किरिति भावः ॥ आदिना—एकादेशः ॥ वाक्यार्थेनेति । क्रियारूपेणेत्यर्थः ॥ नाप्येतयोरिति भाष्यं व्याचष्टे—तस्य चेति । चोऽसंभवादित्युत्तरं योज्यः ॥ भाष्ये—एतयोः कार्ययोरिति । पूर्वरूपदीर्घयोरित्यर्थः ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि वर्णस्य ॥

( २५४ वर्णसंज्ञापक्षदूषणवार्तिकम् ॥ २ ॥ )

॥ * ॥ वर्णसंज्ञा चेन्निर्वृत्तिः ॥ * ॥

( भाष्यम् )

वर्णसंज्ञा चेन्निर्वृत्तिर्न सिध्यति—'ष्यङः संप्रसारणम्' इति । स एव हि तावदिह दुर्लभः, यस्य संज्ञा क्रियते ॥

अथापि कथंचिल्लभ्येत, केनासौ यणः स्थाने स्यात् ?

अनेन ह्यसौ व्यवस्थाप्यते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥

( प्रदीपः ) दुर्लभ इति । कार्यपक्षे न लभ्यते, नित्यपक्षे तु लभ्यत इति दुर्लभत्वमुक्तम् ॥ केनासाविति । लोके इगेव नित्यं प्रयोगेऽस्ति, तस्य तु यण्स्थानिकत्वं शास्त्रसमधिगम्यमित्यर्थः ॥ भाविसंज्ञाविज्ञानं तु परिहारान्तराभिधानाय न तावदत्रोक्तम् ॥

( उद्द्योतः ) स एव तावन्नास्तीति वक्तव्ये दुर्लभस्त्वोक्तिरनुचितेत्यत आह—कार्यपक्षे इति । अनेन भाष्येणातीतानागतयोरविद्यमानयोरप्रत्यासत्त्या शक्तिग्रहदौर्लभ्यमुक्तम् । निरूपितं चेदं मञ्जूषायां नामार्थवादे ॥ नित्यपक्षे त्विति । अनेनाथापि कथंचिदित्यपि भाष्यं व्याख्यातम् ॥ शास्त्रेति । 'सितं' इत्यादौ यण्स्थानिकत्वाभावेन शास्त्रमात्रैकगम्यं तदित्यर्थः । शास्त्रगम्यत्वे चेतरेतराश्रयमेवेति भावः ॥ भाष्ये—केनासाविति । केन मानेन 'यणः स्थाने' इति ज्ञातः स्यात् ॥ अनेन—संप्रसारणसंज्ञाविधायकेन शास्त्रेण असौ—इक् यणः स्थाने स्थाप्यत इत्यर्थः ॥

( २५५ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य ॥ * ॥

( भाष्यम् )

यदयं विभक्तिविशेषैर्निर्देशं करोति—संप्रसारणात्परः पूर्वो भवति, संप्रसारणस्य दीर्घो भवति, ष्यङः संप्रसारणं भवति - इति । तेन ज्ञायते—उभयोः संज्ञा भवतीति ॥

यत्तावदाह—संप्रसारणात्परः पूर्वो भवति, संप्रसारणस्य दीर्घो भवति—इति । तेन ज्ञायते—वर्णस्य भवतीति ॥

यदप्याह—ष्यङः संप्रसारणमिति । तेन ज्ञायते—वाक्यस्य संज्ञा भवतीति ॥

( प्रदीपः ) उभयसंज्ञात्वस्येति । उभयोः संज्ञा—उभयसंज्ञा, तस्या भावः—उभयसंज्ञात्वम् । तत्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयेणोभयोः संज्ञा सिध्यति ॥

( उद्द्योतः ) उभयोः संज्ञात्वमित्यर्थोऽसंभवी, एकस्यैव संज्ञात्वादत आह—उभयोः संज्ञेति ॥ एकशेषश्च प्रतिपदम् । अनेकमर्थमुद्दिश्यैकस्याः संज्ञाया एकवाक्यतयैव विधातुं शक्यत्वादत्रावृत्तेः क उपयोग इति चिन्त्यम् ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्तु वाक्यस्यैव ॥

( उक्ताक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—*संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः * इति ॥

( समाधानभाष्यम् )

नैष दोषः । यथा काकाज्जातः काकः श्येनाज्जातः श्येनः, एवं संप्रसारणाज्जातं संप्रसारणमिति । यत्तत्सम्प्रसारणाज्जातं सम्प्रसारणमिति तस्मात्परः पूर्वो भवति, तस्य दीर्घो भवतीति ॥

( प्रदीपः ) यथा काकादिति । ननु काकत्वाभिसंबन्धात्काकः । अन्यत्र चोक्तम्—येनैव हेतुनैकः काकस्तेनै-

---

१ अभावादिति । अत्र पक्षे ष्यङ इत्यादाविको वर्णस्य विधिसंभवादित्यर्थः ॥ उभयोस्तयोः संग्रहायाह—संबन्धेति ॥ वर्णसंबन्धी विधीयमानः । स च प्रकृतत्वादेतन्निमित्तक एव । अत एव दीर्घपदेन संप्रसारणस्य हल इति दीर्घः । तदेतद्धनयन्नाह—एकेति । पूर्वरूपमित्यर्थः ॥ क्रमविवक्षया आह—पूर्वेति ॥ छाया ॥

२ 'तावदिक् दुर्लभः' इति ख. क. पाठः ॥

३ अपिना दुर्लभत्वम् ॥ इष्टादौ सत्त्वादाह—सितमिति ॥ छा. ॥

४ 'षोऽन्तकर्मणि' इत्यस्य निष्ठायां रूपम् । आकारस्थानिकत्वेनेत्यर्थः । ( र. ना. )

५ ननु नोत्पत्तिर्भाष्यार्थः, अत्रपक्षे बाधादत आह—केन मानेनेति ॥ छाया ॥

६ उभयोः—वर्णवाक्ययोः ॥

७ तत्र—तेषां ज्ञापकत्वे सति ॥ छाया ॥

८ उभयोरिति । नन्वित्यादिः ॥ छाया ॥

९ समुदायस्यासंभवादाह—एकेति ॥ छान्दसमेकवचनं सर्वत्रेति भावः ॥ चेन तत्रसमुच्चयः ॥ छाया ॥

वापरोऽपीति । नैष दोषः । यदाऽनुपजातजात्यभिव्यञ्जक[1]-संस्थानविशेषः काको भवति निर्ज्ञातं च तस्य काकजन्म[2] भवति, तदैतदुक्तम् । एवमिहापि संप्रसारणाज्जातत्वादुपचाराद्वर्णोऽपि ताच्छब्द्यं लभते-इति भावः ॥

( उद्योतः ) भाष्ये—**यथा काकादिति** । अज्ञात एव काकत्वे [3]तज्जातत्वमात्रेण तथा व्यवहारवदत्रापीत्यर्थः ॥ तत्र शङ्कते—**नन्विति** ॥ **अन्यत्र**-'एको गोत्रे' इत्यत्र ॥ **यदाऽनुपेति** । न उपजातो जात्यभिव्यञ्जकः संस्थानविशेषः-आकारविशेषो यस्येत्यर्थः ॥ कथं तर्हि तथा व्यवहार इत्यत आह—**निर्ज्ञातमिति** । एवं च तस्माज्जातत्वेनावगते तच्छब्दप्रयोग उभयत्रापीति दृष्टान्तत्वोपपत्तिः ॥ [4]**अन्ये** तु काकाज्जातो यथा काकत्वाभिसंबन्धात्काकः । एवं संप्रसारणाज्जातोऽपि संप्रसारणत्वारोपात् संप्रसारणमिति भाष्यार्थमाहुः ॥

( समाधानान्तरभाष्यम् )

**अथवा—दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः, पदेषु पदैकदेशान्[5] । वाक्येषु तावद्वाक्यैकदेशान्-प्रविश पिण्डीम्, प्रविश तर्पणमिति । पदेषु पदैकदेशान्—देवदत्तः - दत्तः, सत्यभामा - भामेति । एवमिहापि—'संप्रसारणनिर्वृत्तात् संप्रसारणनिर्वृत्तस्य' इत्येतस्य वाक्यस्यार्थे 'संप्रसारणात् संप्रसारणस्य' इत्येष वाक्यैकदेशः प्रयुज्यते । तेन निर्वृत्तस्य विधिं विज्ञास्यामः—संप्रसारणनिर्वृत्तात् संप्रसारणनिर्वृत्तस्येति ॥**

( प्रदीपः ) **प्रविशेति** । प्रवेशनक्रिया कर्म योग्यमाक्षिपति, तत्र पिण्ड्यां प्रवेशासंभवाद्गृहप्रतिपत्तिः । एवं पिण्डीमितिकर्म योग्यां क्रियामाक्षिपत् भक्षणक्रियां प्रकरणवशात्प्रत्याययति । एवं संप्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः । यथा च पदैकदेशप्रयोगः, तथा **सिद्धे शब्दार्थबन्धे** इत्यत्र प्रतिपादितम् ॥

( उद्योतः ) **वाक्येष्विति** । स्वार्थबोधनाय वाक्येषु प्रयोक्तृव्येष्वित्यर्थः ॥ योग्या क्रिया दर्शनादिरपीत्यत आह—**[6]प्रकरणेति** । तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्रहकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः, पदैकदेशस्य पदार्थे इव - इति शक्त्यैव बोधः ॥ [7]पूर्वपरिहारे संप्रसारणपदस्य तज्जन्यवर्णे उपचारात्प्रयोगः, अत्र त्वेकदेशेनैव शक्त्या तदर्थप्रतिपत्तिरिति भेदः । तदाह—**आक्षेप्स्यतीति** । [8]आक्षेपोऽत्र बोधनमेव ॥ भाष्ये—**इत्येतस्य वाक्यस्यार्थे इति** । अत्र वाक्यपदं पदसमुदायपरम् । **इत्येतस्य**-इत्येतदर्थकस्य । संप्रसारणादुत्पन्नो यस्तस्मादित्यस्येति संप्रसारणस्य यत्कार्यं तस्येति च वाक्यस्यार्थे - इत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**अथवा—आहायं संप्रसारणात्परः पूर्वो भवति, संप्रसारणस्य दीर्घो भवतीति । [9]न च वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपन्नः, नाप्येतयोः कार्ययोः संभवोऽस्ति । तत्र वचनाद्भविष्यति ॥**

( प्रदीपः ) **अथवेति** । यथा ब्राह्मणशतं भोज्यतामित्युक्ते सामर्थ्यात्संख्येया ब्राह्मणा भोज्यन्ते, [10]तथेहापि 'संप्रसारणात्' इत्युक्ते वाक्यार्थेन पौर्वापर्याभावात्तत्फलस्य वर्णस्य प्रतीतिः ॥

( उद्योतः ) पूर्वेभ्यः पक्षेभ्योऽस्य भेदमाह—**यथा ब्राह्मणेति** । एवं च यथा तत्र संख्याऽन्वयः संख्येयद्वारा, तथा प्रकृते [11]स्वनिर्वृत्तद्वारेति भावः । तदेवाह—**तत्फलस्येति** । यथा पितृनाम्ना सङ्कल्पितं द्रव्यं तस्यायोग्यत्वे तत्पुत्राय समर्प्यते तद्वदिति भावः ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**अथवा पुनरस्तु वर्णस्य ॥**

( उक्ताक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*वर्णसंज्ञा चेन्निर्वृत्तिः* इति ॥**

( समाधानभाष्यम् )

**नैष दोषः । इतरेतराश्रयमात्रमेतच्चोदितम्[12] । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि—*सिद्धं तु नित्यशब्दत्वात्* इति ॥**

( उद्योतः ) भाष्ये—**एकत्वेनेति** । [13]साजात्यादेकत्वेन विशिष्टानि बुद्ध्या कृत्वेत्यर्थः । सर्वेषामेकत्वेनैकजातीयत्वेनैकपरिहारेण सर्वाणि परिहृतानीति भावः ॥

---

१ 'भिन्यञ्जनसंस्था-' इति अ. पाठः ॥

२ 'काकाज्जन्म' इति ग. पाठः ॥

३ **तज्जातत्वेति** । तज्जातत्वज्ञानमात्रेणेत्यर्थः ॥ **कथमिति** । नन्वित्यादिः ॥ एवमग्रेऽपि बोध्यम् ॥ छाया ॥

४ तद्भाष्यैकवाक्यतयैवाह—**अन्ये त्विति** ॥ छाया ॥

५ **पदैकदेशानिति** । अत्र वाक्यैकदेशाश्चत्वार उदाहृता इति बहुवचनमुपपद्यते । पदैकदेशाश्च-द्वावेव प्रदर्शितौ, 'देवः सत्या' इति नोदाहृतावपि ज्ञेयाविति बहुवचनोपपत्तिः ॥

६ **प्रकरणेतीति** । इदं प्रागपि बोध्यम् ॥ **प्रविश तर्पण**मित्यस्य गङ्गायां प्रविश तर्पणं कुर्वित्यर्थः ॥ **यथा** चेति कैयटार्थमाह—**तत्तदिति** ॥ छाया ॥

७ **पूर्वपरिहारे**-'नैष दोषः । यथा काकाज्जातः' इत्यादिपरिहारे ॥

८ अत एवाक्षेपासंभवादाह—**आक्षेप इति** ॥ एवेन कैयटासंगतिः सूचिता ॥ ननु वाक्यघटकत्वे नावाक्यत्वाद्भाष्यासंगतिरत आह—**अत्रेति** ॥ ननु सोऽपि नात आह—**इत्येतस्येति** ॥ **यत्कार्यं**-पूर्वरूपम् ॥ छाया ॥

९ **न च**-नहि ॥ **तत्र**-तथा सति ॥ छाया ॥

१० **तथेहापीति** । यथा संख्याया भोजनासंभवात्तद्विशेषणस्य ब्राह्मणस्य तत्रान्वयस्तथा 'इक् यणः' इत्यस्य वाक्यस्य सम्प्रसारणसंज्ञायान्तदुपस्थितौ यणो दीर्घादिकार्यासम्भवात्तद्विधानसामर्थ्याच्च यणो विशेषणस्येक एव तत्कार्यं पर्यवस्यतीत्यर्थः ॥

११ **स्वनिर्वृत्तद्वारा**—यणः स्थाने निर्वृत्तो य इक् तद्द्वारा ॥

१२ **मात्र**पदेन तस्य बाधकत्वनिरासः ॥ छाया ॥

१३ एकत्वसंख्यायाः परिहारहेतुत्वासंभवादाह—**साजात्यादिति** ॥ व्यक्तिभेदसत्त्वादिदमुक्तम् ॥ वैशिष्ट्यं तृतीयार्थः ॥ उक्तहेतोरेवाह— **बुद्ध्येति** ॥ नन्वेवं कथं परिहारोऽत आह—**सर्वेषामिति** ॥ उक्तहेतोस्तत्त्वासंभवाद्व्याचष्टे—**एकजातीति** ॥ छाया ॥

( समाधानबाधकभाष्यम् )

नेदं तुल्यमन्यैरितरेतराश्रयैः। न हि तत्र किंचिदुच्यते—अस्य स्थाने ये आकारैकारौकारा भाव्यन्ते ते वृद्धिसंज्ञा भवन्तीति। इह हि पुनरुच्यते—इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति॥

( उद्द्योतः ) नेदं तुल्यमिति । निलॆशब्दवादेऽपि यण्स्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वादिति भावः॥

( समाधानसाधकभाष्यम् )

एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते। तद्यथा—कश्चित्कञ्चित् तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वय' इति। स पश्यति—यदि शाटकः, न वातव्यः। अथ वातव्यः, न शाटकः। शाटको वातव्यश्चेति विप्रतिषिद्धम्, भाविनी खल्वस्य संज्ञाऽभिप्रेता। स मन्ये वातव्यः—यस्मिन्नुते शाटक इत्येतद्भवति—इति। एवमिहापि स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य संप्रसारणमित्येषा संज्ञा भविष्यति॥

( प्रदीपः ) भाविनीति । ष्यङः संप्रसारणमिति विधिप्रदेशेषु भाविसंज्ञाविज्ञानमित्यर्थः॥

( उद्द्योतः ) भाविसंज्ञेति । संप्रसारणादिपदस्य तत्त्वेन व्यवहरिष्यमाणे लक्षणेति भावः॥ अयं समाधिर्वृद्ध्यादिविषयेऽपि बोध्यः॥

( समाधानान्तरभाष्यम् )

अथवा—इजादिप्रवृत्तिर्यजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते। यजाद्युपदेशात्तु इजादिनिवृत्तिः प्रसक्ता। प्रयुञ्जते च पुनर्लोकाः—'इष्टम्-उप्तम्' इति। ते मन्यामहे—अस्य यणः स्थाने इममिकं प्रयुञ्जते-इति। तत्रासाध्वभिमतस्य शास्त्रेण साधुत्वमन्वाख्यायते—किति साधुर्भवति, ङिति साधुर्भवतीति॥ इग्यणः संप्रसारणम्॥ ४५॥

( प्रदीपः ) सिद्धं तु नित्यशब्दत्वादित्येतत्समर्थनार्थमाह-अथवेति । बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः॥ असाध्वभिमतस्येति। प्राक् संप्रसारणशास्त्रादिति भावः॥ यथासंख्यसंबन्धाददुहितरामितीकारस्य संप्रसारणसंज्ञा न भवति। दिव उदित्युत्त्वे यणादेशे कृते हल इति दीर्घत्वं तपरकरणान्न भवति-द्युभ्यामिति । अक्षद्युवावित्यत्र संप्रसारणाच्चेति पूर्वैकादेशो न भवति, अचः पश्चात्सन्निधानात्। अथवा वार्णादाङ्गस्य बलीयस्त्वात्॥ ४५॥

( उद्द्योतः ) बुद्धीति । तदयं सूत्रार्थः—यणप्रयोगे प्राप्ते इक् प्रयुज्यमानः संप्रसारणसंज्ञ इति॥ तज्ज्ञानं च यज्युपदेशज्ञानमात्रेण वचिस्वपीत्येतज्ज्ञानं विनाऽपि जातमिति नान्योन्याश्रय इत्यर्थः॥ वचिस्वपीत्यादेश्चायमर्थः—एतत्संबन्धियणप्रयोगे प्राप्ते इक् प्रयुज्यमानः साधुरितीति भावः॥ असाधौ साधुत्वं ब्रह्मणाऽप्युपपादयितुमशक्यमत आह—प्रागिति। एतदेव च ध्वनयितुमभिमतस्येत्युक्तम्॥ ननु दुहेर्लुङि उत्तमपुरुषे लस्येटि तस्य संप्रसारणत्वे 'अदुहितराम्' इत्यादौ 'हलः' इति दीर्घः स्यादत आह—यथासंख्येति॥ एवं हि यथासङ्ख्यार्थं लकारोपदेशस्यावश्यकत्वे लकारोपदेशः किमर्थ इति ऋलृक्सूत्रस्थभाष्यासङ्गतिरिति चिन्त्यमिदम्। तस्माद् 'संप्रसारणस्य' इत्यादौ तद्भावितपरत्वाश्रयणान्न दोषः। ध्वनितं चेदं वाक्यसंज्ञापक्षस्थापने वाक्यैकदेशन्यायं वदता भगवता॥ एतेन 'द्युभ्यां' 'अक्षद्युवौ' इत्यपि सिद्धम्॥ अचः पश्चादिति। समानाङ्गग्रहणस्य करिष्यमाणत्वादौकारस्य चानङ्गत्वादित्यर्थः। तत्प्रत्याख्यानेऽप्याह—वार्णेति। आङ्गं-उवङ्॥ ४५॥

---

( अथ परिभाषाप्रकरणम् )

( ४१ परिभाषासूत्रम्॥ १। १। ७ आ. २ )

## आद्यन्तौ टकितौ॥ १। १। ४६॥

( अन्वयानुपपत्तिनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

समासनिर्देशोऽयम्। तत्र न ज्ञायते—क आदिः कोऽन्त इति। तद्यथा—अजाविधनौ देवदत्तयज्ञदत्तौ-इत्युक्ते तत्र न ज्ञायते—कस्याजा धनम्, कस्यावयः—इति॥

( प्रदीपः ) आद्यन्तौ० ॥४६॥ लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति, अपि तु शास्त्रेणैवेति प्रदर्शनाय पूर्वः पक्षः—समासनिर्देशोऽयमिति । अभिन्नस्यार्थस्य समासेन प्रतिपादनादित्यर्थः॥ यद्यपि 'देवदत्तस्य यज्ञदत्तस्य चाजा अवयश्च

---

१ तत्र—वृद्धिरादैजित्यादौ। अस्य-अकारादेर्वर्णस्य स्थाने॥

२ निलेति। सितमित्यादौ तदभावात्॥ छाया॥

३ पश्यति-विचारयति॥ मन्ये-निश्चिनोमि॥ छाया॥

४ 'सम्प्रसारणमित्यादिविधि' इति मुद्रितपाठः॥

५ लक्षणेतीति। संप्रसारणत्वेन व्यवह्रियमाणे इकि संप्रसारणपदस्य विधिप्रदेशेषु लक्षणेत्यर्थः॥ वृद्धिविधायके वृद्धिरेचीत्यादावपि वृद्धिशब्दस्य वृद्धिशब्देन व्यवह्रियमाणेष्वादैक्षु लक्षणा वृद्धिरादैच्सूत्रबलात्क्रियते॥

६ आचर्थमाह—अथमिति॥ छाया॥

७ 'इजादियजादिप्रवृ' इति क. ख. छ. पाठः॥

८ समर्थेति। प्रकृत इति भावः॥ छाया॥

९ यथासंख्यं—इग्यणोः। असाध्वभिमतस्य यणः स्थाने प्रयुज्यमानस्येकः संप्रसारणविधायकशास्त्रेण साधुत्वं बोध्यते। तत्र इग्यणोर्यथासङ्ख्याश्रयणाददुहितरामित्यत्र लकारस्थाने जायमानस्येकारस्य न सा संज्ञेति भावः॥

१० 'असाधोः सा' इति प. पाठः॥

११ तद्भावितेति। तेन संप्रसारणशब्देन भावितो य इक् तत्परत्वं संप्रसारणशब्दस्य॥

१२ तत्र-समासनिर्देशे॥ छाया॥

धनं' इति वाक्येऽपि क्रमव्यवस्था नास्ति, तथापि समासे सुतरां नास्तीति प्रतिपादयितुं **समासनिर्देश** इत्युक्तम् ॥

**( उद्योतः )** आद्यन्तौ० ॥ ४६ ॥ **अपि त्विति** । [1]एतदर्थमेव [2]स्थानाख्यप्रमाणेन सिद्धेऽपि यथासङ्ख्यसूत्रमावश्यकमिति भावः ॥ **अभिन्नस्य**–अपृथग्भूतस्य ॥ सुतरामिति । यत्र न साहित्यस्य नियमेन प्रतीतिः पृथगुपस्थितिश्च, तत्रापि चेन्न क्रमव्यवस्था, किमु वक्तव्यं साहित्यप्रतीतावपृथगुपस्थितौ चेत्यर्थः ॥ तथाऽन्वयबोधे तत्तत्पदार्थानां सर्वसाधारणव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितिस्तत्रमिति तात्पर्यम् ॥

**( समाधानभाष्यम् )**

**यद्यपि तावल्लोक एष दृष्टान्तः । दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति ॥**

**( प्रदीपः ) यद्यपीति** । दर्शनं–दृष्टं, तस्यान्तः–निश्चयः । यद्यपि लोके एतद्दर्शनमित्यर्थः ॥

**( उद्योतः ) अन्तो निश्चय इति** । दर्शनस्यावसानं निश्चये सत्याकाङ्क्षाऽभावाद्भवतीति दृष्टान्तशब्देन निश्चय उच्यते–इत्यर्थः ॥ **एतद्दर्शनमिति** । निश्चय इत्यर्थः । एवंच यथासंख्यान्वयाभिप्रायेणेदृशप्रयोगो लोकेऽसाधुरिति भावः ॥

**( आक्षेपभाष्यम् )**

**अस्ति वेह कश्चित्पुरुषारम्भः [3]?**

**( उद्योतः )** भाष्ये—**अस्ति वेति** । प्रश्नः । चपाठस्त्वयुक्तः, तस्य प्रश्नेऽयुक्तत्वात् ॥

**( समाधानभाष्यम् )**

**अस्तीत्याह ॥**

**कः ?**

**संख्यातानुदेशो नाम ॥**

---

**( टकितोरागमविषयत्वनिर्णयाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**कौ पुनष्टकितावाद्यन्तौ भवतः ?**

**( उद्योतः )** भाष्ये-**कौ पुनरिति** । यौ टकितावाद्यन्तौ तौ किमागमौ, उतादेशौ—इति प्रश्नः ॥

**( समाधानभाष्यम् )**

**आगमावित्याह ॥**

**( उद्योतः )** आगमावित्याहेति । [4]आद्यन्तपदसत्त्वादिति भावः ॥

**( आदेशवादिन आगमवादिनं प्रति आक्षेपभाष्यम् )**

**युक्तं पुनर्यन्नित्येषु [5]आगमशासनं स्यात् । न[6] । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामापूर्वः शब्दोपजनः ॥**

**( उद्योतः )** नित्येष्विति । [7]वर्णाः–तद्घटिताः, प्रयोगेषु श्रूयमाणाः शब्दाश्च व्याकरणाकार्या आकाशवन्नित्या इति मते–इदम् ॥

**( आगमवादिन आदेशवादिनं प्रति आक्षेपभाष्यम् )**

**[8]अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः ॥**

**( आदेशवादिनः समाधानभाष्यम् )**

**बाढं युक्तम् । शब्दान्तरैरिह[9] भवितव्यम् । तत्र शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता ॥**

**( उद्योतः )** तत्र शब्दान्तरादिति । [10]प्रसक्तां शब्दान्तरबुद्धिं विहायेत्यर्थः ॥

**( इष्टापत्तिभाष्यम् )**

**आदेशास्तर्हीमे भविष्यन्ति । अनागमकानां सागमकाः ॥**

**( आक्षेपभाष्यम् )**

**तत्कथम् ?**

**( एकदेशिसमाधानभाष्यम् )**

**संज्ञाधिकारोऽयम् । आद्यन्तौ चेह संकीर्त्येते । टकारककारावितावुदाह्रियेते । [11]तत्राद्यन्तयोष्टकारककारावितौ संज्ञे भविष्यतः । तत्र "आर्धधातुकस्येड्वलादेः" इत्युपस्थितमिदं भवति—आदिरिति । तेनेकारादिरादेशो भविष्यति ॥**

**( प्रदीपः ) संज्ञाधिकारोऽयमिति** । यद्येवं संज्ञा संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य स्वयमेव निवर्तत इति किमिद्ग्रहणेन, टकावित्येवास्तु ॥ नैष दोषः । [12]इत्संज्ञत्वेन देशविशेष उपलक्ष्यते । तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति **आलजाटचा**वित्याटच्प्रत्यये टकारः संज्ञा न भवति । तत्रेड्ग्रहणेने[13]कारादिशब्दो गृह्यते । स्थानेऽन्तरतमश्चादेशो भवति । तव्यस्य इतव्यो भवतीति सिद्धमिष्टम् ॥

---

१ **एतदर्थमेवेति** । तथा च सूत्रमपश्यतो नाशङ्का किंत्वेतदर्थमिति भावः ॥ ननु किमर्थं तत्र सा नात आह—**तथेति** ॥ संबन्धादिनिरासायाह—**सर्वेति** ॥ तात्पर्यार्थमाह—**एवं चेति** ॥ छाया ॥

२ श्रुतिलिङ्गेतिमीमांसकप्रसिद्धस्थानाख्यप्रमाणेनेति भावः ॥

३ **पुरुषारम्भे** कर्मणि घञ् ॥ छाया ॥

४ **आद्यन्तेति** । अवयवविशेषवाचीत्यादिः ॥ छाया ॥

५ 'त्येषु शब्देषु आगम' इति क. पाठः । 'त्येषु नाम शब्देषु आगम' इति छ. पाठः ॥

६ **नेति** । युक्तमित्यस्यानुषङ्गः ॥ तत्र हेतुमाह—**नित्येष्विति** ॥ चो ह्यर्थे ॥ छाया ॥

७ पारमार्थिकं न नित्यत्वमित्याह—**वर्णा इति** ॥ छाया ॥

८ अथ प्रतिबन्दीमाह—**अथेति** ॥ छाया ॥

९ **इह**–आदेशविधाने ॥ **तत्र**–शब्दान्तरभवने ॥ छाया ॥

१० ल्यब्लोपे पञ्चमीत्याह—**प्रसक्तामिति** ॥ छाया ॥

११ **तत्र**–तथा सति ॥ **तत्र**–संज्ञासंज्ञिभावे सति ॥ छाया ॥

१२ 'इत्संज्ञात्वेन' इति ख. पाठः ॥

१३ 'कारादिः शब्दो' इति ख. पाठः ॥

( उद्द्योतः ) अनागमकानामित्यादेर्यद्यपि घुसंज्ञासूत्रे आशय उक्त एव, तथापि तं विस्मृत्य तत्कथमिति प्रश्ने एकदेशी साहचर्यादस्य संज्ञासूत्रत्वेन तदुपपत्तिमाह—**संज्ञाधिकारोऽयमिति** ॥ तत्र शङ्कते—**यद्येवमिति** ॥ **उपलक्ष्यत इति** । एवंचानयोरित्त्वमेव नेति भावः ॥ **आटजिति** । यद्यपि प्रत्ययविधौ नास्य [1]प्रवृत्तिः, षष्ठीत्यपकर्षणात् । अत एव टा-टिठन्-ऐकागरिकडित्यादौ नास्य प्रवृत्तिः, तथापि उक्तः पर्यायेणाद्यन्तता स्यादिति दोष इति बोध्यम् ॥ [2]आटश्चेत्यादिभिस्तु टकारार्थादित्वोपलक्षिताकाराद्यनुवादेन वृद्ध्यादिविधानम् ॥ भाष्ये—**सङ्कीर्त्येते**—प्रथमत उच्चार्येते, **उदाह्रियेते**—पश्चादुच्चार्येते इत्यर्थः ॥ **अन्तरतम इति** । अर्थतः श्रुतितश्चेति भावः ॥

( आक्षेपभाष्यम् )

**[3]एतावदिह सूत्रम् 'इट्' इति । कथं पुनरियता सूत्रेण इकारादिरादेशो लभ्यः ?**

( समाधानभाष्यम् )

**लभ्य इत्याह ॥**

**कथम् ?**

**बहुव्रीहिनिर्देशात् । बहुव्रीहिनिर्देशोऽयम्—इकारः [4]ट्–आदिरस्येति ॥**

( आक्षेपभाष्यम् )

**यद्यपि तावदत्रैतच्छक्यते वक्तुम् । इह तु कथम्—"लुङ्लङ्लृङ्क्ष्वडुदात्तः" इति, य[5]त्राशक्यमुदात्तग्रहणेनाकारो विशेषयितुम् ॥**

( प्रत्याक्षेपभाष्यम् )

**तत्र को दोषः ?**

( प्रत्याक्षेपसमाधानभाष्यम् )

**अङ्गस्योदात्तत्वं प्रसज्येत ॥**

( प्रदीपः ) **अङ्गस्योदात्तत्वमिति** । तच्चालोऽन्त्यस्येत्यन्त्यस्य स्यात् ॥

( उद्द्योतः ) ननु [6]प्रथमातिक्रमे कारणाभावादाद्युदात्तत्वेनेष्टसिद्धिरत आह—**तच्चेति** ॥

( समाधानभाष्यम् )

**नैष दोषः । त्रिपदोऽयं बहुव्रीहिः । तत्र वाक्य एवोदात्तग्रहणेनाकारो विशेष्यते—अकार उदात्त आदिर्यस्येति ॥**

( प्रदीपः ) **त्रिपदोऽयमिति** । विशेषणस्याप्युदात्तस्य सौत्रत्वान्निर्देशस्य परनिपातः ॥

( उद्द्योतः ) भाष्ये—**तत्र वाक्य एवेति** । त्रि[7]पदे वाक्ये एवेत्यर्थः ॥ **एवः प्रसिद्धौ** । एवं च तत्समानार्थकवृत्तावप्यकारविशेषणत्वं सुलभमिति भावः ॥

( आक्षेपभाष्यम् )

**यत्र तर्ह्यनुवृत्त्यैतद्भवति—"आडजादीनाम्" इति ॥**

( प्रदीपः ) **यत्र तर्हीति** । तत्र ह्युदात्तग्रहणमेवानुवर्तेत इत्यशक्यो बहुव्रीहिराश्रयितुमिति भावः ॥

( समाधानभाष्यम् )

**वक्ष्यत्येतत्—[8]*अजादीनामटा सिद्धम्* इति ॥**

( प्रदीपः ) **वक्ष्यत्येतदिति** । सूत्रस्यैव प्रत्याख्यानाददोष इत्यर्थः ॥

( उद्द्योतः ) **प्रत्याख्यानादिति** । [9]यासुड्विधायकं च **यासुडुदात्तः परस्मैपदेष्विति** पाठ्यमिति न दोषः ॥

( सिद्धान्तिभाष्यम् )

**अथवा—यत्तावदयं सामान्येनोपदेष्टुं शक्नोति, तत्तावदुपदिशति—प्रकृतिम्, ततो वलाद्यार्धधातुकम्, ततः पश्चादिकारम् । तेनायं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते ॥ तद्यथा—खदिरबुर्बुरयोः—खदिरबुर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ । ततः पश्चादाह—कङ्कटवान् खदिर—इति । तेनाऽसौ विशेषेण द्रव्यान्तरं समुदायं प्रतिपद्यते ॥**

(प्रदीपः) **अथवेति** । परिभाषापक्षेऽपि न दोष इत्यर्थः । न हि व्यवस्थितस्य तव्यस्य पश्चादिकारोऽवयव आगच्छति, येनानित्यत्वं स्यात् । किं तर्हि, नित्यं पदमनेनोपायेनान्वाख्यायते ॥

---

१ **प्रवृत्तिरिति** । अन्यथा कैयटोक्तपक्षेऽप्यत्र दोषतादवस्थ्यमेवेति भावः ॥ **तथापीति** । तथा च कैयट उपलक्षणमिति भावः ॥ छाया ॥

२ अत्र पक्षेऽनुवादे गतिमाह—**आट इति** ॥ उद्देश्यः पूर्वोच्चारित इति न्यायेनाह—**प्रथमत इति** ॥ छाया ॥

३ शङ्कते—**एतावदिति** ॥ **इह**–अष्टाध्याय्याम् ॥ **आर्धेत्यत्र** वा ॥ **सूत्रमिति** । अवयवे समुदायारोपात् ॥ एवमग्रेऽपि ॥ छाया॥

४ संज्ञाधिकारादित् टकार आदेः संज्ञेति ट्शब्देनादेरुपस्थितिस्तदाह—**ट् आदिरिति** ॥ लभ्य इत्यस्यहेतुः—**निर्देशादिति** ॥

५ **यत्राशक्यमिति** । द्विपदबहुव्रीहिणाऽङ्गोपस्थितेः । उदात्त इति भिन्नं पदमिति भावः ॥ छाया ॥

६ **प्रथमेति** । प्राचामनुरोधेनेदम् ॥ छाया ॥

७ **तत्रेत्यस्य** व्याख्या—**त्रिपद इति** ॥ एवस्य व्यवच्छेद्याभावादाह—**एव इति** ॥ अत एवाह—**एवं चेति** । एतदर्थमेव भाष्ये व्युत्क्रमोक्तिः । विग्रहस्तु आट् आदिरुदात्तश्च यस्य स इति बोध्यः ॥ छाया ॥

८ "अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः ।
अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत् ॥
पररूपं गुणे नाटः, ओमाङोरुसि तत्समम् ।
छन्दोर्थं बहुलं दीर्घं इणस्त्योरन्तरङ्गतः ॥" इति ॥

९ नन्वेवमपि यासुड्विधौ दोष एवात आह—**यासुडिति** ॥ छाया ॥

**खदिरबुर्बुरयोरिति।** निर्धारणे षष्ठी। तयोः कङ्कटवान् खदिर इत्युक्ते द्रव्यान्तरं खदिरं प्रतिपद्यते। न तत्र कङ्कटास्तदानीमारोप्यन्ते। प्रतिपादनोपाय एवायमित्यर्थः॥

(उद्योतः) आडजादीनामिति कुर्वतः सूत्रकृतो नायं पक्षस्तात्पर्यविषयीभूत इति, अतो घुसंज्ञासूत्रोपपादितमेव पक्षं सिद्धान्त्याह—भाष्ये—**अथवेति॥ परिभाषापक्षेऽपीति।** परिभाषात्वेनागमत्वपक्षेऽपीत्यर्थः॥ भाष्ये—**तेनायं विशेषेणेति।** ततः **पश्चादिकारमित्यन्तेनेत्यर्थः॥ शब्दान्तरं**—तव्याद्यपेक्षया भिन्नं **समुदायं**—इतव्यादिरूपमित्यर्थः। **प्रतिपद्यते**—तव्यबुद्धिनिवर्तनेनेत्यर्थः॥ **नित्यं पदमिति।** व्याकरणानिष्पाद्यमित्यर्थः॥ **अन्वाख्यायत इति।** क्रमेण सिद्धतत्तदवयवप्रतिपादनेन पूर्वपूर्वनिरवयवकबुद्धिविपरिणामद्वारा प्रत्याय्यत इति आदेशस्थल इवात्रापि बुद्धिविपरिणामान्न नित्यत्वहानिः॥ तदेव दर्शयति—**न तत्र कङ्कटा इति। कङ्कटः**—सन्नाह उपरितनशुष्कत्वचः॥ भाष्ये—**खदिरबुर्बुरयोरिति।** 'सामान्यमुपदिशति' इत्यध्याहृतसामान्यापेक्षया षष्ठी॥ सामान्यमेव दर्शयति—**खदिरबुर्बुरौ गौरकाण्डाविति॥ द्रव्यान्तरं**—कङ्कटाद्भिन्नं तदवयवकम्॥ **समुदायमिति।** पतञ्जलिमते गुणसमुदायस्यैव द्रव्यत्वादिति भावः॥ तत्र यथा गौरकाण्डत्वादिना खदिरेऽपि प्रसक्तां बुर्बुरबुद्धिं कङ्कटवानित्यनेन निवर्त्य खदिरबुद्धिः स्थाप्यते तथेहापि सामान्योपदेशात्सर्वत्र तव्यबुद्धौ प्रसक्तायां इड्बोधकविशेषेणागमत्वबोधनद्वारैव इतव्यबुद्धिः स्थाप्यत इत्यर्थः॥ निरूपितं चैतद् घुसंज्ञासूत्रे। अत्र पक्षे वाचकस्यैवानया प्रनाड्या व्युत्पादनम्। उत्तरपक्षे तु कल्पितस्थानेन साक्षाद्बोधनम्, तेन च बोधकस्याखण्डस्य बोधनमिति भेदः॥

(समाधानान्तरभाष्यम्)

**अथवा—एतयाऽनुपूर्व्याऽयं शब्दान्तरमुपदिशति प्रकृतिम्, ततो वलाद्यार्धधातुकम्, ततः पश्चादिकारं, यस्मिंस्तस्यागमबुद्धिर्भवति॥**

(प्रदीपः) **अथवेति।** एतदाह—अस्ति-स्तः-एधि-इति तत्त्वतो रूपार्थान्वयाभावात्कल्पिताभ्यामन्वयव्यतिरेकाभ्यामेवार्थवत्तामाश्रित्यासत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते, रेखागवयेनेव सत्यगवयस्य॥

(उद्योतः) **रूपार्थान्वयाभावादिति।** व्याकरणेन यस्य 'अस्' इति रूपस्यार्थो दर्शितस्तेन रूपेण तस्यार्थस्य प्रयोगेष्वन्वयाभावः, स्तः-एधीत्यादौ व्यभिचारादित्यर्थः॥ **असत्येति।** शास्त्रप्रक्रिया कल्पिता, असत्या इत्यर्थः॥ यद्यपि सत्यगवयो रेखागवयवत्सावयव एव, अत्र कल्पितावयवसदृशावयवानां तत्रान्वयात्। तथापि सत्यं पदमखण्डमेव, एधीत्यादौ शास्त्रकृत्कल्पितावयवसदृशानामनुपलम्भादित्येतत्पक्षनिष्कर्षः॥ **सत्यस्य पदस्येति।** एवं च रेखागवयवत्कल्पितानित्यपदविषयकं शास्त्रम्। तत्रागमेष्वपि न क्षतिर्न च तल्लोके प्रयुज्यमानम्, किं तु तत्प्रत्याय्यमेव पदं तथेति भावः॥ **एतयेत्यादिभाष्यस्यायमर्थः**—**एतया**—वक्ष्यमाणयाऽऽनुपूर्व्याऽयं—पाणिनिः **शब्दान्तरं**—बोधकशब्दापेक्षया भिन्नं रेखागवयस्थानीयं **उपदिशति**—प्रतिपादयति। तत्रागमबुद्धावपि न शब्दनित्यताहानिरिति॥

(२५६ आक्षेपवार्तिकम्॥ १॥)

**॥ * ॥ टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः॥ * ॥**

(भाष्यम्)

**टकितोराद्यन्तविधाने प्रत्ययस्य प्रतिषेधो वक्तव्यः। प्रत्यय आदिरन्तो वा मा भूत्। "चरेष्टः" "आतोऽनुपसर्गे कः" इति॥**

(प्रदीपः) **प्रत्ययप्रतिषेध इति।** प्रत्ययपरत्वस्याप्ययमपवादः प्राप्नोतीति भावः॥

(उद्योतः) ननु टकितोराद्यन्तविधाने कस्यापि प्रत्ययस्याप्राप्तेः कस्य प्रतिषेधो वक्तव्य इत्यत आह—**प्रत्ययपरत्वस्यापीति।** अपिना स्थानेयोगत्वस्य॥

(समाधाने वार्तिकांशानुवादभाष्यम्॥)

***॥ परवचनात्सिद्धम्॥***

(भाष्यम्)

**परवचनात्प्रत्यय आदिरन्तो वा न भवति॥**

(प्रदीपः) **परवचनादिति।** पुरस्तादपवादन्यायेन स्थानेयोगत्वमेवानेन बाध्यते, न प्रत्ययपरत्वमिति भावः॥

(२५७ समाधानबाधकैकदेशिवार्तिकम्॥ २॥)

**॥ * ॥ परवचनात्सिद्धमिति चेन्नापवादत्वात्॥ * ॥**

(भाष्यम्)

**परवचनात्सिद्धमिति चेत्। तन्न।**
**किं कारणम्?**
**'अपवादत्वात्'। अपवादोऽयं योगः॥ तद्यथा—"मिदचोऽन्त्यात्परः" इत्येष योगः स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः॥**

(प्रदीपः) **नापवादत्वादिति।** बाध्यमात्रापेक्षायां पुरस्तादपवादन्यायो नास्तीति भावः॥

---

१ वस्तुतो नित्यत्वाभावादाह—**व्याकरणेति॥** यद्यपि षष्ठी व्यवहिताव्यवहितापेक्षया न भेदाभावादिति कैयटेन निर्धारणषष्ठीं समाश्रित्याग्रेऽन्वयः स्वीकृतः, तथापि न सोऽक्षरस्वरससिद्ध इत्याशयेन पक्षान्तरमाह—**सामान्यमिति॥ तत्र—दृष्टान्ते॥** छाया॥

२ 'पादनेन पूर्वनिर' इति ज. पाठः॥

३ **सन्नाहः**—कवचं। कङ्कटकंटकशब्दयोरल्पान्तरत्वेन भ्रमवारणायेदम्॥

४ 'भ्यामेवान्वयव्यतिरेकाभ्यामर्थ' इति क. पाठः॥

५ **अत्र**—रेखागवये॥ **तत्र**—सत्यगवये॥ **तत्र**—तथा सति॥ **न च**—नापि॥ छाया॥

( समाधानसाधकदृष्टान्तवैषम्यभाष्यम् )

विषम उपन्यासः । युक्तं तत्र यदनवकाशं मित्करणं स्थानेयोगत्वं प्रत्ययपरत्वं च बाधते । इह तु पुनरुभयं सावकाशम् ॥

कोऽवकाशः ?

टित्करणस्यावकाशः-'टितः' इति ईकारो यथा स्यात् । कित्करणस्यावकाशः-'किति' इत्याकारलोपो यथा स्यात् ॥

( उद्द्योतः ) भाष्ये—युक्तं तत्रेति । नुंम्श्नमादीनां मित्त्वमनवकाशम् ॥ उभयं—प्रत्ययसंबन्धि टित्त्वं कित्त्वं च । एवं चागमटित्त्वकित्त्वयोरनवकाशत्वात्प्रत्ययसंबन्धिनश्च सावकाशत्वाद्येन नाप्राप्तिन्यायेनेदं स्थानेयोगत्वस्यैवापवाद इति भावः ॥

( समाधानबाधकापवादत्वसाधकभाष्यम् )

प्रयोजनं नाम तद्वक्तव्यम्, यन्नियोगतः स्यात् । यदि चायं नियोगतः परः स्यात्तत एतत्प्रयोजनं स्यात् ॥ कुतो नु खल्वेतत्—टित्करणाच्च परो भविष्यति - इति, न पुनरादिरिति । कित्करणाच्च परो भविष्यति - इति, न पुनरन्त इति ?

( प्रदीपः ) सर्वापवादत्वायाह-प्रयोजनमिति । सति परत्वे प्रयोजनमेतत्स्यात्, परत्वमेव त्वलभ्यमित्यर्थः ॥ टित्करणादिति । ङीबर्थादित्यर्थः ॥ कित्करणादिति । आकारलोपार्थात् ॥

( उद्द्योतः ) सति परत्वे इति । टिदन्तान्ङीब्विधानात्, किति परे आलोपविधानाच्चेति भावः ॥ 'टित्परो भवति' इति वचनाभावादाह— ङीबर्थादिति । यद्यप्युभयथा टित्त्वस्य सावकाशत्वे परत्वात्परश्चेत्यस्य प्रवृत्त्या पर एव भविष्यति, तथापि मिदचोऽन्त्यादिति साहचर्याद्बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥

( किदंशेऽपवादत्वबाधकभाष्यम् )

टितः खल्वप्येष परिहारः । यत्र नास्ति संभवः-यत्परश्च स्यादादिश्च ॥ कितस्त्वपरिहारः, अस्ति संभवो यत्परश्च स्यादन्तश्च ॥

( प्रदीपः ) प्रयोजनमभ्युपगम्याप्याह—टित इति ॥ कितस्त्विति । ननु परत्वावयवत्वयोर्विरोधात्कथमुच्यते—परश्च स्यादन्तश्च-इति ॥ नैष दोषः । परस्य सतोऽन्तवत्कार्यप्राप्त्याऽन्तत्वमुच्यते, यथा समासान्तानाम् ॥

( उद्द्योतः ) अभ्युपगम्य परश्चेत्यस्य परत्वात् प्रवृत्तिमाह—टितः खल्वपीति ॥ एष परिहारः-युक्तं तत्रेत्यादिनोक्तः । टितो यथाकथंचिद्भवेदपीत्यर्थः । तत्रासंभवरूपविरोधसद्भावात् । किति तु तदभावात्समावेशः स्यादिति भावः ॥ [ अवयवत्वेति । अन्तशब्दोऽवयववाचीति भावः ॥ ]

( आक्षेपभाष्यम् )

तत्र को दोषः ?

( समाधानभाष्यम् )

"उपसर्गे घोः किः" आध्योः-प्रध्योः । "नोङ्धात्वोः" इति प्रतिषेधः प्रसज्येत ॥

( उद्द्योतः ) तत्र दोषमाह—नोङित्यादि ॥

( टिदंशेऽप्यपवादत्वबाधकभाष्यम् )

टितश्चाप्यपरिहारः । स्यादेव ह्ययं टित्करणादादिः, न पुनः परः ॥

( प्रदीपः ) टितश्चापीति । पूर्वोक्तमेव समर्थयतेऽधिकं वक्तुम् ॥

( उद्द्योतः ) पूर्वोक्तम्-कुतो नु खल्वित्यादिनोक्तम् । अधिकम्-ङीपोऽनवकाशत्वपूर्वपक्षसमाधानम् ॥ भाष्ये—स्यादेव हीति । बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥

( आक्षेपभाष्यम् )

क तर्हि इदानीमिदं स्यात्—टित ईकारो भवतीति ?

( समाधानभाष्यम् )

य उभयवान्—"गापोष्टक्" इति ॥

( प्रदीपः ) गापोष्टगित्यत्र कित्त्वात्परत्वादन्तत्वमिति टिदन्तमेतद्भवतीति ङीपोऽयमवकाशः । ततश्च चरेष्ट इत्ययमादिः स्यात् ॥

( उद्द्योतः ) परत्वादिति । शब्दपरविप्रतिषेधात् । आद्यन्ताविति सूत्रे च 'कित् अन्तः' इत्यस्य परत्वादित्यर्थः ॥ भाष्ये-गापोष्टगित्युपलक्षणं नदट्चोरडादीनाम् ॥

---

१ तत्रेत्यस्य फलितार्थमाह—नुमिति ॥ संबन्धिन इति । टित्त्वस्य कित्त्वस्य च ॥ छाया ॥

२ 'करणाच्चायं परो' इति क. पाठः । 'करणादयं' इति ख. पाठः ॥

३ 'इति'शब्दपाठो मुद्रितपुस्तकेषु न ॥

४ ननु टितो ङीबर्थताया निराकृतत्वात्कथमिदमत आह—प्रयोजनमिति ॥ छाया ॥

५ ङीबर्थादितीति । तत्र तु तथा वचनम् ॥ एतेनाग्रिममपि व्याख्यातप्रायम् ॥ तदसदिति शङ्कते—यद्यपीति ॥ छाया ॥

६ 'मभ्युपगम्याह' इति ख. पाठः । 'मभ्युपेत्याह' इति क्वचित् ॥

७ अत एवान्यथा तदवतरणमाह—अभ्युपेत्येति ॥ छाया ॥

८ अयं कोष्ठकान्तर्गतः पाठो यद्यपि प्राचीनपुस्तकेषु 'नोङित्यादि' इत्युत्तरमुपलभ्यते, तथापि खण्डशो मुद्रणेऽत्र गृहीतः ॥

९ विरोधबीजमूलमाह—अन्तेति ॥ छाया ॥

१० समाधानमिति । एतेन पौनरुक्त्यं परिहृतम् ॥ छाया ॥

११ तमेवाह—आद्यन्ताविति ॥ बाध्यसामान्यचिन्तापक्षे तदसंभवादाह—चोरडादीनामिति ॥ समुदायस्य टित्त्वमिति भावः ॥ छाया ॥

( २५८ सिद्धान्त्येकदेशिसमाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ सिद्धं तु षष्ठ्यधिकारे वचनात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ।

कथम् ?

'षष्ठ्यधिकारे वचनात्' । षष्ठ्यधिकारेऽयं योगः कर्तव्यः—"आद्यन्तौ टकितौ षष्ठीनिर्दिष्टस्य" इति ॥

( प्रदीपः ) षष्ठ्यधिकार इति । यत्र स्थानषष्ठी प्राप्ता तत्रोपस्थानमस्याः, न तु प्रत्ययपरत्वबाधनाय ॥

( उद्द्योतः ) बाध्यसामान्यचिन्ताश्रयणेऽपि दोषाभावमाह—सिद्धं त्विति ॥ षष्ठ्यधिकारे इति । तत्रानुवर्त्यैदं व्याख्येयम्, तत्रत्यषष्ठीपदं वाऽत्रापकृष्टव्यमिति भावः ॥ प्राप्तेति । एतदुपस्थितेः प्रागिति शेषः ॥ न त्विति । प्रत्ययविधौ प्रसक्तस्थानषष्ठ्यभावादित्यर्थः ॥

( २५९ सिद्धान्त्येकदेशिसमाधानान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसंप्रत्ययः ॥ * ॥

( भाष्यम् )

आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे–षष्ठ्यभावे असंप्रत्ययः–आदिरन्तो वा न भविष्यति ॥

( प्रदीपः ) आद्यन्तयोर्वेति । षष्ठ्याः प्रयोजकावाद्यन्तौ । षष्ठ्यभावाच्चाद्यन्ताभावावगतिरित्यर्थः ॥

( उद्द्योतः ) भाष्ये-षष्ठीपदासंबन्धेऽपि समाधानमाह—आद्यन्तयोर्वेति । अर्थशब्दः प्रयोजनवाची ॥ षष्ठ्यर्थत्वादिति बहुव्रीहिरित्याह—षष्ठ्याः प्रयोजकाविति । षष्ठ्यर्थस्य प्रयोजकावित्यर्थः ॥ षष्ठ्यन्तार्थस्यावयवभूताद्यन्तनिरूपकत्वेन तत्प्रयोजकत्वमेतयोर्बोध्यम् ॥ यद्यत्रावयवभूताद्यन्तरूपोऽर्थः स्यात्तदा तस्य निरूपकाकाङ्क्षत्वात् स्यादेव षष्ठ्यर्थः, तद्बोधनाय च षष्ठीप्रयोगः । न च सोऽस्ति । तस्मादाद्यन्ताभावावगतिरिति भावः । भाष्ये-षष्ठ्यभावे इत्यस्य तदर्थाभावे इत्यर्थः ॥

( आक्षेपभाष्यम् )

युक्तं पुनर्यच्छब्दनिमित्तको नामार्थः स्यात् । नार्थनिमित्तकेन नाम शब्देन भवितव्यम् ॥

( प्रदीपः ) युक्तं पुनरिति । शब्दभावाभावाभ्यामर्थभावाभावयोः शब्दनिमित्तकत्वमर्थस्य प्राप्तम्, तच्च पुनर्न युक्तम् । ज्ञापको हि शब्दोऽर्थस्य न तु कारकः, सर्वेण सर्वस्यार्थस्य क्रियाप्रसङ्गादिति भावः ॥

( उद्द्योतः ) षष्ठीरूपशब्दाभावात्तदर्थाभावस्तदभावाच्चाद्यन्ताभाव इत्यर्थं मन्वानस्य शङ्का–भाष्ये—युक्तं पुनरिति ॥ नार्थेत्यत्र काकुः ॥ शब्दभावेति । षष्ठीसत्त्वे तदर्थसत्त्वादाद्यन्तस्थितिः, षष्ठ्यभावे तदर्थाभावादाद्यन्ताभाव इत्युक्तेरिति भावः ॥ कारकत्वे बाधकमाह—सर्वेण–रत्नादिशब्देन । सर्वस्य–रत्नादिरूपस्य ॥

( समाधानभाष्यम् )

अर्थनिमित्तक एव शब्दः ॥

तत्कथम् ?

आद्यन्तौ षष्ठ्यर्थौ । न चात्र षष्ठीं पश्यामः । ते मन्यामहे—आद्यन्तावेवात्र न स्तः । तयोरभावे षष्ठ्यपि न भवतीति ॥ आद्यन्तौ टकितौ ॥ ४६ ॥

( प्रदीपः ) अर्थनिमित्तक एवेति । अर्थ एव शब्दस्य प्रयोजकः, तत्प्रतिपादनाय शब्दप्रयोगः । अप्रयोगात्त्वनुमीयते–नूनमर्थ एवात्र प्रयोजको नास्ति, शब्दप्रयोगं यः प्रयुञ्जीतेत्यर्थः ॥ चरेष्ट इत्यत्र परश्चेत्यधिकारात् पञ्चम्येव युक्ता । गापोष्टक् व्रीहिशाल्योर्ढगित्यादावप्यानन्तर्यसंबन्धे षष्ठी, न त्ववयवावयविसंबन्धे । प्रत्ययपरत्वेन प्रतियोगं संनिहितेनाकाङ्क्षाविच्छेदादनर्थित्वादस्यानुपस्थानात् । पुरस्तादपवादन्यायस्तु यथोद्देशपक्षे संभवति, न कार्यकालपक्ष इति नाश्रितः ॥ ४६ ॥

( उद्द्योतः ) भाष्ये समाधत्ते—अर्थनिमित्तक एवेति । तद्व्याचष्टे—अर्थ एवेति ॥ अनुमीयते इति । कार्याभावेन कारणाभावोऽनुमीयते । यथा नदीपूराभावेनोपरिदेशे वृष्ट्यभाव इति भावः ॥ भाष्ये—आद्यन्तौ–तावर्थौ षष्ठ्यर्थद्वारा षष्ठीप्रयोगप्रयोजकौ इत्यर्थः ॥ एवं कार्याभावात्कारणाभावानुमाने कारणाभावात्कार्यमपि नेति निगमयति—भाष्ये—तयोरभाव इति ॥ ननु प्रत्ययविधावपि क्वचित्षष्ठी दृष्टेत्यत आह—चरेष्ट इत्यादि ॥ न त्विति । एतत्सूत्रोपस्थानेनेति भावः ॥ तत्र हेतुमाह–प्रत्ययेति ॥ आकाङ्क्षेति । देशांश इत्यर्थः ॥ अनर्थित्वात्–एतदाकाङ्क्षाभावात् । अत एव धातोः प्रातिपदिकादित्यधिकारानुग्रहो भवति, धात्वादिभ्यः परो गाऽऽदिभ्योऽनन्तर इत्यर्थात् ॥ न कार्यकालेति । एतत्त-

१ अस्य क. पुस्तके न पाठः ॥

२ षष्ठ्याः प्रयोजकावाद्यन्तौ, प्रत्ययविधौ तदभावात्–षष्ठ्यर्थाभावादाद्यन्तयोरसंप्रत्यय इति वार्तिकार्थः । एवञ्च प्रत्ययविधौ षष्ठ्यर्थाभावात्परिभाषाया अनुपस्थितिरिति 'टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः' इति प्रत्ययप्रतिषेधो नवक्तव्य इत्याशयः ॥

३ 'असंप्रत्ययः स्यात्' इति क. पाठः ॥

४ सिद्धान्तमतेन वक्ष्यमाणेन व्याचष्टे—षष्ठ्यर्थस्येत्यादि ॥ इदमेव विशदयति—यद्यत्रेति ॥ छाया ॥

५ नन्वेवं कथं शङ्काऽत आह—षष्ठीरूपेति ॥ नार्थेति न सिद्धान्तोक्तिः, अग्रिमेण पौनरुक्त्यात् । किं तु पूर्वपक्षशेष एव ॥ तत्र नञोऽसंगतिं परिहरति—नार्थेत्यत्रेति ॥ छाया ॥

६ तत्कथमिति । यद्यर्थनिमित्त एव शब्दस्तर्हि आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसंप्रत्यय इति कथं युज्यत इति प्रश्नः ॥

७ अग्रिमग्रन्थस्य वैयर्थ्यं परिहरति—एवमिति ॥ तत्प्राप्तौ हेतुमाह—एतदिति ॥ तत्र–निषेधे ॥ इदं द्रढयति—अत एवेति ॥ प्रतियोगं तस्य संनिहितत्वादेवेत्यर्थः ॥ कैयटं दूषयति—वस्तुतस्त्विति ॥ छाया ॥

त्वमिको गुणवृद्धी इत्यत्र निरूपितम् । वस्तुतस्त्वाश्रित एव, परवचनात्सिद्धमित्यस्यैव सिद्धान्त्युक्तित्वात् । नापवादत्वादित्यादेः पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरुक्तित्वादिति तत्त्वम् ॥ ४६ ॥

( ४२ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ३ )

## मिदचोऽन्त्यात्परः ॥ १ । १ । ४७ ॥

( सूत्रबाध्यनिर्णयः )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ?**

( प्रदीपः ) **मिदचोऽन्त्या० ॥ ४७ ॥ किमर्थमिति ।** किमनेन व्यावर्त्यत इति **प्रश्नः** ॥

( उद्द्योतः ) **मिदचो०** ॥ ४७ ॥ [1]प्रयोजनप्रश्नेऽपवादत्वाभिधानमसङ्गतमत आह—**किमिति** । किं व्यावर्त्यत्वेन प्रयोजनमित्यर्थः । किं स्थानेयोगत्वं, उत प्रत्ययपरत्वमपीति प्रश्न इति भावः ॥

( २६० सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥ * ॥ मिदचोऽन्त्यात्पर इति स्थानपरप्रत्ययापवादः ॥ * ॥**

( भाष्यम् )

**मिदचोऽन्त्यात्पर इत्युच्यते स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः । स्थानेयोगत्वस्य तावत्—कुण्डानि-वनानि-पयांसि-यशांसि । प्रत्ययपरत्वस्य—भिनत्ति-छिनत्ति ॥**

( प्रदीपः ) **स्थानेति** । पर[2]स्य सतः प्रत्ययस्यापवादः, तेन सामर्थ्यादयमर्थः—**प्रत्ययपरत्वस्यापवाद** इति ॥ **कुण्डानीति** । 'नपुंसकस्य झलचः' इत्यत्र झलज्भ्यां नपुंसक[3]स्य तदन्तविधिरित्यस्ति स्थानेयोगत्वप्रसङ्गः । मित्त्व[4]चास्मिन्नुपस्थिते नपुंसकस्याङ्गस्येत्यवयवषष्ठी संपद्यते ॥

( उद्द्योतः ) [5]उभयापवादत्वे बीजं तु तत्र तत्र मित्त्ववैयर्थ्यरूपं पूर्वसूत्र एवोक्तम् ॥ ननु **नपुंसकस्येति** सूत्रे झलच इति पञ्चमीति क स्थानेयोगत्वप्रसङ्गोऽत आह—**नपुंसकस्येति** । पञ्चम्यां हि **तस्मादिति** परिभाषोपस्थाने 'पयांसि ज्ञानानि' इत्यु[6]भयोरप्यसिद्धिरिति षष्ठ्येवेति भावः ॥

( आक्षेपभाष्यम् )

**भवेदिदं युक्तमुदाहरणम्—कुण्डानि, वनानि—इति । यत्र नास्ति संभवो यदयमचोऽन्त्यात्परश्च स्यात् स्थाने चेति ॥**

**इदं त्वयुक्तम्—पयांसि, यशांसि-इति । अस्ति हि संभवो यदयमचोऽन्त्यात्परश्च स्यात् स्थाने च ॥**

( प्रदीपः ) **स्थाने चेति** । ततश्च सकारस्य स्थाने नुम् भवत्वित्यर्थः ॥

( समाधानभाष्यम् )

**एतदपि युक्तम् ॥**

**कथम् ?**

**नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति—असम्भवेऽपवादैरुत्सर्गा बाध्यन्तामिति ॥**

**किं तर्हि ?**

**लौकिकोऽयं दृष्टान्तः । लोके हि सत्यपि संभवे बाधनं भवति । तद्यथा—'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति, सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे अचामन्त्यात्परत्वं षष्ठीस्थानेयोगत्वं बाधिष्यते ॥**

( प्रदीपः ) **दृष्टान्त इति** । निश्चय इत्यर्थः । [8]तत्र वृद्धव्यवहारादीदृश एव वाक्यार्थे व्युत्पत्तिर्यत्सामान्यविहितो विशेषविहितेन बाध्यते, न समुच्चीयते नापि विकल्प्यते ॥

( उद्द्योतः ) भाष्ये—**नैवेश्वर इति** । **ईश्वरः**-वेदः ॥ **धर्मसूत्रम्**-धर्मशास्त्रम् ॥ भाष्ये—**अपवादैरित्यस्यासंभवे इत्यादिः** ॥ क्वचित्तथैव पाठः ॥ बाध्यन्तामिति । लोट् ॥

( सूत्राप्रवृत्तिनिरूपणम् )

( २६१ सिद्धान्ताक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम् ॥ * ॥**

( भाष्यम् )

**अन्त्यात्पूर्वो मस्जेर्मिद्वक्तव्यः ॥**

**किं प्रयोजनम् ?**

---

१ वाच्यार्थविषयकसंदेहाभावादाह—**प्रयोजनेति** ॥ उक्तमेव विशदयति—**किमिति** ॥ तथा च भाष्ये चतुर्थीसमासः ॥ छाया ॥ किमनेन व्यावर्त्यते इत्यस्य कस्यायमपवाद इत्यर्थः, स च प्रयोजनप्रश्नेऽनुपपन्न इति भावः ॥

२ वार्तिके स्थानेति तदेकदेशानुकरणम् । अग्रे कर्मधारयः । राजदन्तादित्वात्परनिपातः । तत्फलितमग्रे भाष्ये इत्याह—**परस्येति** ॥ छाया ॥

३ **नपुंसकस्येति** । विशेषणादिति शेषः ॥ छाया ॥

४ 'मित्वात्त्वस्मि' इति क. ख. पाठः ॥

५ तदाशयमाह—**उभयेति** ॥ **नन्विति** । सिद्धान्तेऽच इति पञ्चम्यङ्गीकारात् ॥ **असिद्धिरिति** । तथा सति परभक्त्याद्यौ दीर्घानुस्वाराद्यनापत्तेः ॥ छाया ॥

६ **उभयोरिति** । पयांसि ज्ञानानीति झलन्ताजन्तयोरुपलक्षणम् । झलच इत्यस्य पञ्चम्यन्तत्वे झलन्ताजन्तयोरुभयोरपि लक्ष्ययोरसिद्धिरित्यर्थः ॥

७ अयं 'इति' शब्दः छ. झ. पुस्तकयोर्न ॥

८ नन्ववबाधेनैवोपपत्तौ बाधो न न्याय्य इति विकल्पसमुच्चयावेवास्तामत आह—**तत्रेति** । लोक इत्यर्थः ॥ छाया ॥

'अनुषङ्गसंयोगादिलोपार्थम्' । अनुषङ्गलोपार्थं संयोगादिलोपार्थं च । अनुषङ्गलोपार्थं तावत्—मग्नः, मग्नवान् । संयोगादिलोपार्थम्—मङ्क्ता, मङ्क्तुम्, मङ्क्तव्यम् ॥

( उद्द्योतः ) मग्न मस्जेर्जात्पूर्वं नुमि अनिदितामिति लोपे सस्य संयोगादिलोपे कुत्वे निष्ठानत्वे रूपम् । अन्त्याचः परे तु सति अविशेषेण संयोगत्वे संयोगादिलोपसिद्धावपि तस्यासिद्धत्वान्नस्योपधात्वाभावान्नलोपो न स्यादिति भावः ॥ संयोगादिलोपस्तु बहूनां समवधाने बहूनामेव संयोगसंज्ञेति पक्षे फलत्वेन बोध्यः ॥ 'मङ्क्ता' इत्यादि त्वनुषङ्गलोपाभावेऽपि उदाहरणमुक्तं भाष्ये ॥

( २६२ आक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ भर्जिमच्योंश्च ॥ * ॥

( भाष्यम् )

भर्जिमच्योंश्चान्त्यात्पूर्वो मिद्वक्तव्यः । भरूजा, मरीचय इति ॥

( प्रदीपः ) भर्जिमच्योंश्चेति । 'भृजी भर्जने' इत्यस्यौणादिकेऽचि कृते गुणे रपरत्वे च जकारात्पूर्वं ऊमागमः । 'मर्च शब्दार्थे' इत्यस्य चौरादिकस्य णिच्यच इरिति इप्रत्यये णिलोपे चकारात् पूर्वं ईमागमः ॥

( उद्द्योतः ) ऊमीमावौणादिकौ ॥

( आक्षेपस्मारणभाष्यम् )

स तर्हि वक्तव्यः ॥

( आक्षेपनिरासभाष्यम् )

न वक्तव्यः, निपातनात् सिद्धम् ॥

किं निपातनम् ?

भरूजाशब्दोऽङ्गुल्यादिषु पठ्यते । मरीचिशब्दो बाह्वादिषु ॥

---

( पूर्वान्तत्वस्थापनम् )

( आक्षेपभाष्यम् )

किं पुनरयं पूर्वान्तः ? आहोस्वित् परादिः ? आहोस्विदभक्तः ?

( प्रत्याक्षेपभाष्यम् )

कथं वाऽयं पूर्वान्तः स्यात् ? कथं वा परादिः ? कथं वाऽभक्तः ?

( समाधानभाष्यम् )

यद्यन्त इति वर्तते, ततः पूर्वान्तः । अथादिरिति वर्तते, ततः परादिः । अथोभयं निवृत्तं, ततोऽभक्तः ॥

( प्रदीपः ) पूर्वान्त इति । संघातस्य पूर्वस्यान्तो न तदेकदेशस्य ॥ अथादिरिति । न हि संभवोऽस्ति यदचोऽन्त्यात्परश्च स्यात्, पूर्वस्य चादिः - इति सामर्थ्यात्परादित्वं विज्ञायते ॥

( उद्द्योतः ) नन्वन्त्यादचः परत्वं तस्य च वर्णान्तरावयवत्वमिति विरुद्धमत आह—सङ्घातेति । 'अन्त्यात्' इत्यनेन समुदायाक्षेपेण समुदायस्योपस्थितत्वात् समुदायावयवसन्निधौ समुदायग्रहस्य न्याय्यत्वाच्च वर्णस्य वर्णावयवत्वासम्भवाच्चेत्याशयः ॥ नन्वादिरित्यनुवृत्तौ पूर्वादित्वं कुतो नेत्यत आह—न हीति ॥ परादित्वमिति । वाचनिकमेव वर्णस्य वर्णावयवत्वं डः सीति धुडादेरिवेति भावः ॥

( भाष्यम् )

कश्चात्र विशेषः ?

( २६३ अभक्तत्वे दूषणवार्तिकम् ॥ १ ॥ )

॥ * ॥ अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः ॥ * ॥

( दीर्घोदाहरणभाष्यम् )

यद्यभक्तो दीर्घत्वं न प्राप्नोति—कुण्डानि, वनानि । "नोपधायाः, सर्वनामस्थाने चासंबुद्धौ" इति दीर्घत्वं न प्राप्नोति ॥ दीर्घ ॥

( प्रदीपः ) कुण्डानीति । नान्तमङ्गं न भवतीति दीर्घत्वाप्राप्तिः ॥ ननु * तदादिवचनं स्यादिनुमर्थमित्युक्तम् । एवं तर्हि तत् स्मर्तव्यं भवतीति गौरवापत्तिः ॥

( उद्द्योतः ) अभक्ते इति वार्तिकस्य—एते न सिध्यन्तीति शेषः ॥ नन्वभक्तत्वेऽपि नान्तमस्त्येवेत्यत आह—नान्तमङ्गमिति । दीर्घविधावङ्गाधिकारादिति भावः ॥ गौरवापत्तिरिति । प्रतिपत्तिगौरवापत्तिरित्यर्थः ॥

( नलोपोदाहरणभाष्यम् )

नलोप । नँलोपश्च न सिध्यति—'अग्ने त्री ते

---

१ जादिति । जकारादित्यर्थः ॥ अनेन वार्तिकेऽन्त्यः—अलिति सूचितम् ॥ तस्यैवाह—अनीति ॥ चोः कुरित्याह—कुत्वे इति ॥ ओदितश्चेत्याह—निष्ठेति ॥ संयोगत्वे इति । बहूनां समवधाने । तत्पक्षे इत्यर्थः ॥ छाया ॥

२ संयोगेति । सस्येत्यादिः ॥ पक्षान्तरे फलत्वादाह—संयोगादीति । ननु पूर्वत्रैव संयोगादिलोपस्यापि सत्त्वात्किमिति लक्ष्यान्तरमत आह—मङ्क्तेत्यादीति ॥ उपधानकारस्यानुषङ्ग इति पूर्वाचार्यसंज्ञा ॥ छाया ॥

३ मर्चेति । एतेन 'मृकणिभ्यामीचिः' इत्यौणादिकसूत्रं निरस्तम् । भाष्यविरोधात् ॥ छाया ॥

४ कस्यचिद्दोषमनुवदति—नन्वन्त्यादिति ॥ तद्वाभोपायमाह—अन्त्यादिति ॥ छाया ॥

५ ननु पूर्वोक्तदोषात्कथमिदमत आह—वाचेति ॥ छाया ॥

६ सर्वनामेति । अत्र नोपधाया इत्यस्य ग्रहणं नकारानुवृत्तिप्रदर्शनाय ॥

७ इत उत्तरं वार्तिकोदाहरणव्याख्याग्रन्थे 'यद्यभक्तः' इत्यस्य पूर्वमनुषङ्गः ॥ 'नलोप-स्वर-णत्व' इत्यादीनि व्याख्येयवार्तिकांशप्रतीकानि निर्विभक्तिकान्येवोपादीयन्ते । 'यद्यभक्तो दीर्घत्वं न' इति व्याख्यानं तु वार्तिकोत्तरमेवोक्तमिति न प्रतीकप्रदर्शनम् । व्याख्याने तदेव प्रतीकं व्याख्यासमाप्तिसूचकं पुनः प्रदर्श्यते । अन्तिमव्याख्यानान्ते प्रकरणस्य समाप्तत्वान्न प्रतीकोपादानमित्याचार्यशैलीसम्प्रदायः ॥ विस्तरेणैतत्प्रस्तावनायां प्रपञ्चितम् ॥

वाजिना त्री षधस्था, ता ता पिण्डानाम्' । "न लोपः प्रातिपदिकान्तस्य" इति नलोपो न प्राप्नोति ॥ नलोप ॥

(उद्योतः) त्री ते इति । शेश्छन्दसि बहुलमिति शेर्लोपः । त्रीणि-वाजिनानि, तानि तानीत्यर्थः ॥

( स्वरोदाहरणभाष्यम् )

स्वर । स्वरश्च न सिध्यति—'सर्वाणि ज्योतींषि' । "सर्वस्य सुपि" इत्याद्युदात्तत्वं न प्राप्नोति । स्वर ॥

( प्रदीपः ) सर्वाणीति । नुमा सुपो व्यवधानात् स्वरो न सिध्यति ॥

( उद्योतः ) नुमेति । व्यञ्जनाविद्यमानवद्भावस्तु हलस्वरप्राप्तौ, स्वरोद्देश्यकविधिप्राप्तौ वा, नान्यत्रेति भावः । सुपीति न तदन्तसप्तमीत्यभिमानेनेदम् ॥

( णत्वोदाहरणभाष्यम् )

णत्व । णत्वं च न सिध्यति—माषवापाणि, व्रीहिवापाणि । पूर्वान्ते प्रातिपादिकान्तनकारस्येति सिद्धम्, परादौ विभक्तिनकारस्येति । अभक्ते नुमो ग्रहणं कर्तव्यम् ॥

न कर्तव्यम् । क्रियते एतन्न्यास एव—"प्रातिपदिकान्तनुम्विभक्तिषु च" इति । णत्व ॥

( प्रदीपः ) क्रियते न्यास एवेति । उत्तरपदस्य प्रातिपदिकस्यान्तस्तत्र नकारो गृह्यते । गर्गाणां भगिनी—गर्गभगिनीत्यत्र णत्वं मा भूदित्यवश्यं कर्तव्यं नुमो ग्रहणम् । स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवति ॥

( उद्योतः ) उत्तरपदस्येति । एवं च सर्वपक्षेष्वपीदमावश्यकमिति भावः ॥ भगशब्दादिनौ तन्नकारः प्रातिपदिकान्तो भवतीति भगिनीत्यत्रानुच्यमाने उत्तरपदस्येत्यस्मिन् णत्वप्रसङ्गः । भगिनीत्यत्र च ङ्यन्तमुत्तरपदं, न नान्तम् । सूत्रं तु 'माषवापिणौ' इत्यादौ चरितार्थमिति भावः ॥ स हीति । नुम्विधावङ्गस्येत्यधिकारादित्यर्थः । एवं च 'माषवापाणि' इत्यादिसिद्ध्यर्थं नुम्ग्रहणमिति भावः ॥ समासरूपप्रातिपदिकान्तस्येत्यर्थेन 'गर्गभगिनी'इत्यस्य व्यावृत्तौ 'माषवापाणि'इत्यस्य सिद्धौ च 'प्रहिण्वन्'इत्याद्यर्थं नुम्ग्रहणमावश्यकमिति तत्त्वम् ॥

( अनुस्वारोदाहरणभाष्यम् )

अनुस्वार । अनुस्वारश्च न सिध्यति—द्विषंतपः, परंतपः । 'मोऽनुस्वारो-हलि' इत्यनुस्वारो न प्राप्नोति ॥

मा भूदेवम् । "नश्चापदान्तस्य झलि" इत्यनुस्वारो भविष्यति ॥

यस्तर्हि न झल्परः—वहंलिहो गौः, अभ्रंलिहो वायुः ॥ अनुस्वार ॥

( प्रदीपः ) द्विषंतप इति । प्रसङ्गोच्चारितमेतत् । अत्र हि तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति नुमो द्विषद्ग्रहणेन ग्रहणमस्ति ॥

( उद्योतः ) द्विषन्तपादौ द्विषत्परयोस्तापेरिति खच् । खचि ह्रस्वः । अरुर्द्विषदिति मुम् ॥ प्रसङ्गेति । द्विषद्ग्रहणेन मुम्विशिष्टस्य ग्रहणे तस्य पदत्वात्तकारस्य संयोगान्तलोपे एकदेशविकृतन्यायेन 'द्विषम्' इत्यस्य मान्तस्य पदत्वास्सिद्धोऽनुस्वार इत्यर्थः ॥ वस्तुतस्तस्य न्यायस्याप्यज्ञानास्तदनाश्रयेणेदम् । बहिरङ्गासिद्धत्वं त्रिपाद्यां नेति तत्रोक्तम् ॥ वहंलिहे—वहाभ्रे लिह इति खश् ॥

( शीभावोदाहरणभाष्यम् )

शीभाव । शीभावश्च न सिध्यति—त्रपुणी, जतुनी, तुम्बुरुणी । नपुंसकादुत्तरस्यौङः शीभावो भवतीति शीभावो न प्राप्नोति ॥

( प्रदीपः ) त्रपुणी इति । नित्यत्वात् परत्वाच्च नुमि कृते व्यवधानमिति भावः ॥

---

( परादिपक्षाभ्युपगमभाष्यम् )

एवं तर्हि परादिः करिष्यते ॥

( २६४ परादिपक्षे दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकारप्रतिषेधाः ॥ * ॥

( गुणोदाहरणभाष्यम् )

यदि परादिः, गुणः प्रतिषेध्यः—त्रपुणे, जतुने, तुम्बुरुणे । "घेर्ङिति" इति गुणः प्राप्नोति ॥ गुण ॥

( उद्योतः ) परादाविति वार्तिके शीभावेनकारप्रतिषेधा इति पाठः । शीभावे इत्यलुगार्षः । एते दोषस्थानानीति शेषः ॥

---

१ तदनाश्रित्येदमिति कृष्णोक्त्यसांगत्यायाह—व्यञ्जनेति ॥ कृष्णरत्नयोर्न्यूनतापि बोध्या ॥ इदं दूषयति—सुपीतीति ॥ छाया ॥

२ इदं दूषयितुमाह—पूर्वान्त इत्यादिना ॥ छाया ॥

३ अ. क. ख. ग. पुस्तकेषु एतादृशमेव प्रतीकं दृश्यते । भाष्ये 'क्रियते एतन्न्यास एव' इति ग्रन्थश्च दृश्यते । प्रतिकोपादाने शैलिरियमाचार्याणाम् ॥

४ ननु भाष्येऽपूर्वं न कार्यमिति यद्यप्युक्तम्, तथापि पक्षान्तरे न कार्यमत्र कार्यमिति गौरवमेवात आह—उत्तरेति ॥ छाया ॥

५ तदाशयमाह—एवं चेति ॥ तत्रावश्यकत्वाशयमाह—भगेति ॥ तदुक्तावपि तथा दोष एवात आह—भगिनीति ॥ सूत्रं

रिवति । तत्रोभयान्तत्वस्य सत्त्वात् ॥ छाया ॥

६ एवं चेति । पक्षान्तरेऽपीति भावः ॥ इदं कैयटोक्तं दूषयन्भाष्याशयमाह—समासेति ॥ छाया ॥

७ कैयटाशयमाह—द्विषदिति ॥ तन्मध्येति न्यायेन कैयटं दूषयति—वस्तुत इति ॥ तस्य-तन्मध्येति न्यायस्य ॥ असिद्धं बहिरित्यनयाऽपि न निर्वाह इत्याह—बहिरिति ॥ छाया ॥ 'द्विषद्ग्रहणेन मविशिष्टस्य' इति ज. पाठः ॥

८ प्रतिषेधा इति पाठ इति । एतेनैकवचनान्तपाठमङ्गीकृत्यान्यथा व्याख्यानं कुर्वन्तो दण्डिकृष्णादयः परास्ताः । तदेव ध्वनयन्नाह—एत इति ॥ छाया ॥

( वृद्ध्युदाहरणभाष्यम् )

वृद्धि । वृद्धिः प्रतिषेध्या—अतिसखीनि ब्राह्मणकुलानि । "सख्युरसम्बुद्धौ" इति णित्त्वे "अचो ञ्णिति" इति वृद्धिः प्राप्नोति-इति ॥ वृद्धि ॥

( प्रदीपः ) अतिसखीनीति । बहुव्रीहिः ॥

( उद्योतः ) टजभावाय नपुंसकत्वाय चाह—बहुव्रीहिरिति ॥

( औत्त्वोदाहरणभाष्यम् )

औत्त्व । औत्त्वं च प्रतिषेध्यम्—त्रपुणि, जतुनि, तुम्बुरुणि । "इदुद्भ्याम्-औत्-अच्च घेः" इत्यौत्त्वं प्राप्नोति ॥ औत्त्व ॥

( दीर्घोदाहरणभाष्यम् )

दीर्घ । दीर्घत्वं च न सिध्यति—कुण्डानि, वनानि । "नोपधायाः" "सर्वनामस्थाने-" इति दीर्घत्वं न प्राप्नोति ॥

मा भूदेवम् । "अतो दीर्घो यञि-सुपि च" इत्येवं भविष्यति ॥

इह तर्हि—अस्थीनि, दधीनि, प्रियसखीनि ब्राह्मणकुलानि ॥ दीर्घ ॥

( नलोपोदाहरणभाष्यम् )

नलोप । नलोपश्च न सिध्यति—'अग्ने त्री ते वाजिना त्री षधस्था, ता ता पिण्डानाम्' । "नलोपः प्रातिपदिकान्तस्य" इति नलोपो न प्राप्नोति ॥ नलोप ॥

( उद्योतः ) भाष्ये—अग्ने त्री ते इति । ननु परादिपक्षे नलोपः प्रातिपदिकान्तस्येत्यस्याप्राप्तावपि शेश्छन्दसि बहुलमित्यनेन नलोपः सिद्ध इति चेन्न । निर्दिश्यमानपरिभाषयाऽलोऽन्त्यपरिभाषया च इकारस्यैव लोपापत्तेरित्याशयात् ॥

( अनुस्वारोदाहरणभाष्यम् )

अनुस्वार । अनुस्वारश्च न सिध्यति—द्विषन्तपः, परन्तपः । "मोऽनुस्वारो-हलि" इत्यनुस्वारो न प्राप्नोति ॥

( प्रदीपः ) द्विषन्तप इति । परादिपक्षे तकारस्य मकारो भक्तस्तकारश्च पदान्त इति मकारोऽपि तद्भक्तत्वात् पदान्त इति सिद्धोऽनुस्वार इत्याहुः ॥ अन्ये तु तद्भक्तत्वात्तकारग्रहणेनास्य ग्रहणं भवतु न तु पदान्तत्वम् । न हि द्वयोर्मकारतकारयोः पदान्तत्वमुपपद्यत इत्याहुः ॥

( उद्योतः ) तद्भक्तत्वात्पदान्त इति । यदागमा इत्यस्य तद्ग्राहकेण शब्देनागमस्य ग्रहणमित्यर्थ इति भावः ॥ न हि द्वयोरिति । ननु संयोगान्तलोपे उक्तरीत्याऽस्त्येव मस्य पदान्तत्वमिति चेत्, उक्तमेवैतत् ॥

( उदाहरणनिरासभाष्यम् )

मा भूदेवम् । "नश्चापदान्तस्य झलि" इत्यनुस्वारो भविष्यति ॥

( उदाहरणान्तरभाष्यम् )

यस्तर्हि न झल्परः—वहंलिहो गौः, अभ्रंलिहो वायुः ॥ अनुस्वार ॥

( उदाहरणभाष्यम् )

शीभावे नकारप्रतिषेधः । शीभावे नकारप्रतिषेधो वक्तव्यः—त्रपुणी, जतुनी, तुम्बुरुणी । सनुम्कस्य शीभावः प्राप्नोति ॥

( प्रदीपः ) शीभावे नकारप्रतिषेध इति । शीभावे विधीयमाने नकारस्य स्थानित्वप्रतिषेधो वक्तव्य इत्यर्थः ॥

( उदाहरणनिरासभाष्यम् )

नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येवं न भविष्यति ॥

( प्रदीपः ) निर्दिश्यमानस्येति । यथा पादः पदिति पद्भावः पाच्छब्दस्यैव भवति, न तदन्तस्य ॥

(उद्योतः) न तदन्तस्येति । पादन्तस्यानुच्चारणादिति भावः ॥

( उदाहरणसाधकभाष्यम् )

यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति ॥

कस्मात् ?

नुमा व्यवहितत्वात् ॥

( प्रदीपः ) यस्तर्हीति । यो निर्दिश्यते तस्य न प्राप्नोति । श्रुतिसन्निपाति यद्रूपं 'औ' इति तन्नकारेण भक्तेनापि तत्त्वतो व्यवहितमित्यर्थः ॥

( उद्योतः ) श्रुतिसंनिपातीति । उच्चारितमिति यावत् ॥

---

१ वृद्धिरिति । अत्रापि पूर्ववत् 'यदि परादिः' इत्यस्य पूर्वमनुषङ्गः ॥ अग्रे च 'प्रतिषेध्या' 'न सिध्यति' इति यथायथमन्वयः ॥

२ णित्त्वे—तदतिदेशे । न त्वनेनैव कार्यमित्याह—अच इति॥छाया॥

३ 'इति'शब्दपाठः क. ख. पुस्तकयोर्न ॥

४ सर्वनामेति । 'नोपधायाः' इत्यस्य ग्रहणमनुवृत्तिप्रदर्शनाय ॥

५ शेरिति । यदागमा इति न्यायेन ॥ छाया ॥

६ मोऽनुस्वार इति । हलि सर्वेषाम् ( ८।३।२२ ) इति पूर्वसूत्रतो हलीत्यनुवृत्तिप्रदर्शनार्थमत्र 'हलि' इत्युपात्तम् ॥

७ इदं दूषयति—परादीति ॥ छाया ॥

८ अपिना विशिष्टस्य ग्रहणमित्यस्य समुच्चयः ॥ स्पष्टं चेदमन्यत्र । झरोझरीति तु न, अनुस्वारं प्रत्यसिद्धत्वात् । तदेतद् ध्वनयन्नन्यथा द्वितीयं दूषयति—ननु संयोगान्तेति ॥ पदान्तभक्तत्वादित्यर्थः ॥ छाया ॥

९ 'नकारस्य प्रति' इति ख. छ. पाठः ॥

१० नकारस्येति । घटकतयेति भावः ॥ छाया ॥

( पूर्वान्तपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि पूर्वान्तः करिष्यते ॥**

( २६५ पूर्वान्तपक्षे दूषणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ॥ * ॥**

( भाष्यम् )

**यदि पूर्वान्तः, नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति ॥**

( उदाहरणभाष्यम् )

**नपुंसकोपसर्जनह्रस्वत्वम् । आराशस्त्रिणी, धानाशष्कुलिनी, निष्कौशाम्बिनी, निर्वाराणसिनी ॥**

**द्विगुस्वर । पञ्चारत्निनी, दशारत्निनी ॥**

**नुमि कृते अनजन्तत्वादेते विधयो न प्राप्नुवन्ति ॥**

(प्रदीपः) **धानाशष्कुलिनी इति** । नित्यत्वान्नुमं पूर्वं मन्यते, तत्र कृतेऽनजन्तत्वाद्ध्रस्वाप्राप्तिः ॥ **निष्कौशाम्बिनी इति** । नपुंसकह्रस्वत्वमुपसर्जनस्य ह्रस्वत्वेन परत्वाद्बाध्यते, तदपि नुमि कृते तथैव न प्राप्नोति ॥

( उद्योतः ) **धानाशष्कुलिनी इति** । समाहारद्वन्द्वे तद्भिन्नत्वविवक्षायां द्विवचनम् ॥ तत्र पूर्वं ह्रस्वः, ततो नुमि नास्ति दोष इत्यत आह—**नित्यत्वादिति** । इदं च पदस्य विभज्यान्वाख्यानपक्षे बोध्यम् ॥ **अनजन्तत्वादिति** । अच इत्यनेन प्रातिपदिकस्य विशेषणादित्यर्थः ॥ **परत्वादिति** । यद्यपि कार्यैक्ये यौगपद्यासम्भवेन विरोधाभावेन परत्वादित्यसङ्गतम्, तथापि नुमि कृते उभयोरप्यप्राप्त्योभयोः सम्भवसत्त्वेन च न भाष्ये काचिदनुपपत्तिः । अत एव भाष्ये—**नपुंसकोपसर्जनह्रस्वत्वमिति** संक्षिप्तमेवोक्तमितिबोध्यम् ॥ **तथैवेति** । अनजन्तत्वादिति भावः ॥

( २६६ दूषणबाधकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ?**

**'बहिरङ्गलक्षणत्वात्' । बहिरङ्गो नुम्, अन्तरङ्गा एते विधयः ॥**

**'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

**द्विगुस्वरे भूयान् परिहारः-संघातभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा द्विगुस्वरो भविष्यति ॥ मिदचोऽन्त्यात्परः ॥ ४७ ॥**

( प्रदीपः ) **न वेति** । नित्यादप्यन्तरङ्गो बलीयानिति । स्वरह्रस्वौ च विभक्तिनिरपेक्षत्वादन्तरङ्गौ । तदत्र निर्दोषत्वात्पूर्वान्तपक्षः स्थितः ॥ ४७ ॥

( उद्योतः ) **अन्तरङ्गो बलीयानिति** । असिद्धं बहिरङ्गमित्येव समानकालप्राप्तिकबहिरङ्गासिद्धत्वबोधकं पूर्वजातबहिरङ्गासिद्धत्वबोधकं चेति भावः ॥ अत एव भाष्येणाविरोधः ॥ **अकृतव्यूह**परिभाषा तु नास्त्येवेति भावः । पञ्चारत्निशब्दे समाहारे द्विगुः, प्रमाणे मात्रचो लुग्वा ॥ ४७ ॥

( इत्यागमस्थितिदेशनिर्णयप्रकरणम् )

( अथादेशनियामकप्रकरणम् )

( ४३ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ४ ॥ )

# एच इग्घ्रस्वादेशे ॥ १ । १ । ४८ ॥

( सूत्रारम्भप्रयोजनम् )

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ?**

( प्रदीपः ) **एच इक्०** ॥४८॥ **किमर्थमिति** । विनाऽपि सूत्रेणेष्टसिद्धिरिति **प्रश्नः** ॥

( उद्योतः ) एच इक्० ॥ ४८ ॥ **विनाऽपीति** । वक्ष्यमाणसूत्रप्रत्याख्यानप्रकारेणेति भावः ॥

( २६७ प्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ एच इग्वचनं सवर्णाकारनिवृत्त्यर्थम् ॥ * ॥**

( भाष्यम् )

**एच इग्भवतीत्युच्यते सवर्णनिवृत्त्यर्थमकारनिवृत्त्यर्थं च ॥ सवर्णनिवृत्त्यर्थं तावत्—एङो ह्रस्वादेशशासनेषु अर्ध एकारोऽर्ध ओकारो वा मा भूदिति ॥ अकारनिवृत्त्यर्थं च—इमावैचौ समाहारवर्णौ, मात्राऽवर्णस्य मात्रेवर्णोवर्णयोः । तयोर्ह्रस्व-**

---

१ 'न्तः क्रियते' इति ख. पाठः ॥

२ **द्विगुस्वरेति** । इगन्तकालकपाल-( ६।२।२९ ) इत्यनेनेगन्तादिषु परेषु द्विगौ पूर्वम्प्रकृत्येत्यर्थकेन ॥

३ **समेति** । धानाश्च शष्कुल्यश्चेति ॥ कृतैकशेषेणेत्यर्थः ॥ अस्य संभवमाह—**इदं चेति** ॥ कैयटं दूषयन्भाष्याशयमाह—**यद्यपीति** ॥ इदमेव भाष्याभिमतमित्याह—**अत एवेति** ॥ छाया ॥

४ **एते विधय इति** । द्वौ ह्रस्वौ, एकः स्वर इति बहुवचनम् ॥ **भूयानिति** । स्वार्थे ईयसुन्, बहुशब्दोऽनेकपरः । **परिहारशब्द**स्तत्समुदायपरः ॥ छाया ॥

५ उपसंहरति—**तदत्रेति** ॥ छाया ॥

६ कैयटतात्पर्यमाह—**असिद्धमिति** ॥ विपक्षे बाधकमाह—**अत एवेति** । तत्रासिद्धमित्येवोक्तेः ॥ भाष्यासंगतिं परिहरति—**अकृतेति** ॥ छाया ॥

७ **मात्रेति** । तथा चोक्तम्—**"ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा तालव्योष्ठ्योत्तरा"** इति शुक्लयजुःप्रातिशाख्ये कात्यायनेन ॥

शासनेषु कदाचिदवर्णः स्यात्, कदाचिदिवर्णोवर्णौ। मा कदाचिदवर्णं भूदित्येवमर्थमिदमुच्यते ॥

( प्रदीपः ) **एङ इति** । एङः प्रश्लिष्टावर्णत्वात्प्रश्लिष्टावर्णावद्धेकाराद्धौकारौ प्राप्नुतः, न तु विश्लिष्टावर्णयोरैचोरिति भावः॥ **समाहारवर्णाविति** । समाह्रियमाणावयवत्वात् ॥ **मात्राऽवर्णस्येति** । [1]अष्टादशभेदभिन्नस्यावर्णस्य मात्रा–अवयव इति भेदसद्भावात् षष्ठ्या निर्देशः ॥

( उद्द्योतः ) [2]ऐच इति वक्तव्ये एङ इति अनुचितमत आह— **एङ इति** ॥ **प्रश्लिष्टेति** । पांसूदकवदित्यर्थः ॥ प्रश्लिष्टावर्णत्वादिनाऽप्यान्तरतम्यं गृह्यत इति भावः ॥ ऐचोस्तदप्राप्तौ हेतुमाह— **न त्विति** । ऐचौ त्वर्धौ न स्त एवेति भावः ॥ **सवर्णाकारनिवृत्त्यर्थ**मित्येतद्विषयभेदेन योज्यत इति बोध्यम् ॥ [3]कर्मघञन्तसमाहारशब्दस्य वर्णशब्देन न बहुव्रीहिः, वर्णैकदेशस्य वर्णत्वाभावादत आह—**समा यमाणाविति** । मध्यमपदलोपी समास इति भावः ॥ **मात्राऽवर्णस्ये**ति भाष्यस्य मात्राकालवर्णादिसदृश ऐचोरवयव इति तात्पर्यम् ॥ **मात्रा-अवयव इति** । [4]तत्सदृशी चैतयोः, अवयव इत्यर्थः ॥

( भाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**
**किं तर्हीति ?**

( अनिष्टापत्तिनिराकरणम् )

( २६८ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ दीर्घप्रसङ्गस्तु ॥ * ॥

( भाष्यम् )

**दीर्घास्त्विकः प्राप्नुवन्ति ॥**
**किं कारणम् ?**
**स्थानेऽन्तरतमो भवतीति ॥**

( प्रदीपः ) **दीर्घास्त्विति** । [5]स्वतन्त्रमिदं 'इको'निर्वर्तकमिति भावः ॥ [6]भाव्यमानस्यापि सवर्णग्रहणं दृश्यते–अमूभ्यामित्यादाविति दोषोपन्यासः ॥

( उद्द्योतः ) नन्वस्य नियमत्वेन ह्रस्वविध्येकवाक्यतया कथं दीर्घप्राप्तिरत आह—**स्वतन्त्रमिति** । [7]नियमत्वेऽनुवादादिदोषाद्विधित्वमेव न्याय्यमित्यभिमानः ॥ **भाव्यमानस्येति** । [8]सम्बन्धसामान्ये षष्ठी ॥

( आक्षेपबाधकभाष्यम् )

**ननु च 'ह्रस्वादेशे' इत्युच्यते, तेन दीर्घा न भविष्यन्ति ॥**

( प्रदीपः ) **ननु चेति** । [9]अयं हि वाक्यार्थः—एचो ह्रस्वप्रसङ्गे इगेव ह्रस्व इति ॥

( आक्षेपसाधकभाष्यम् )

**[10]विषयार्थमेतत् स्यात्—एचो ह्रस्वप्रसङ्गे इग्भवतीति ॥**

( प्रदीपः ) **विषयार्थमिति** । [11]यत्र ह्रस्वो विधीयते तत्रैवास्योपस्थानं यथा स्यात्, 'दे३वदत्त' इति प्लुतादिविधावुपस्थानं मा भूत् । अस्मिंश्चोपस्थिते वाक्यभेदेनैच इको विधीयमाना अन्तरतमा दीर्घा एव प्राप्नुवन्ति । ह्रस्वस्य बाधितत्वाद्दीर्घेषु कृतेषु पुनर्ह्रस्वाप्रसङ्गः ॥

( उद्द्योतः ) **देवेति** । [12]देवदत्तेत्येतद्विषयक**गुरोरनृत** इत्येतत् प्लुतविधावित्यर्थः । आदिनोदात्तादिस्वरसंग्रहः ॥ नन्वनेन दीर्घे पुनस्तेन लक्षणेन ह्रस्वः स्यादत आह—**ह्रस्वस्येति** । अपवादस्य प्रवृत्त्या तद्विषये उत्सर्गाप्रवृत्तेरिति भावः ॥

( २६९ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ दीर्घाप्रसङ्गस्तु निवर्तकत्वात् ॥ * ॥

( भाष्यम् )

**दीर्घाणां त्विकामप्रसङ्गः ॥**

---

१ षष्ठ्युपपत्तये वाच्यार्थमाह—**अष्टादशेति** ॥ छाया ॥

२ **एच इति** । नन्वित्यादिः ॥ **अपिना** कण्ठतालुस्थानत्वपरिग्रहः ॥ **तदिति** । अर्धैकारादीत्यर्थः ॥ तथा च **तुल्यार्थं** इति एकसाम्येऽपि नोभयसाम्यमिति भावः ॥ नन्वेवमप्यैचावेवार्धौ स्यातामत आह—**ऐचौ त्विति** । समांशवाच्यर्धशब्दस्येत एव भाष्यात्पुंस्त्वमपि ॥ भाष्यगूढतात्पर्यमाह—**सवर्णेति** ॥ एङैज्रूपविषयभेदेनेत्यर्थः ॥ छाया ॥

३ शङ्कते—**कर्मेति** ॥ **मध्यमेति** । अवयवशब्दस्य लोपात् ॥ वस्तुतस्तत्त्वाभावादाह—**मात्राकालेति** ॥ अत एव कर्मधारयेणापि न निर्वाह इति भावः ॥ प्रागुक्ततात्पर्यानुरोधेनात्रापि शेषेणाह—**तस्येति** । तथा च पदभेद एव भाष्ये ॥ छाया ॥

४ 'तत्सदृशश्चैत' इति घ. पाठः ॥

५ 'स्वतन्त्रमिदं निर्वर्त' इति क. पाठः, 'स्वतन्त्रमिदमिकां निर्वर्त' इति ख. पाठः ॥

६ ननु तावतापि विधीयमानत्वात्तदग्रहणेन कथं तत्प्रसङ्गोऽत आह—**भाव्येति** ॥ छाया ॥

७ तत्र बीजमाह—**नियमत्वे इति** ॥ आदिना निवृत्तिकल्पनाग्रहः ॥ छाया ॥

८ नन्वत्र तृतीयोचिताऽत आह—**संबन्धेति** ॥ छाया ॥

९ **ननु चेति** भाष्येण विरोधाद्दीर्घनिवृत्तिरुक्ता । इत्थं ह्यत्र पक्षे वाक्यार्थः—सूत्रे निर्धारणे सप्तमी, सौत्रमेकवचनम् । आदिश्यमानेषु ह्रस्वेषु य इक् स एचः स्थाने भवतीति । स चार्थाद्ध्रस्व एव न दीर्घः । तत्फलितमाह—**अयं हीति** ॥ **इगेवेति** । ह्रस्व एवेगित्यर्थः ॥ छाया ॥

१० विषये सेत्याह—**विषयेति** ॥ ह्रस्वप्रसञ्जके एच, इग्भवतीत्यर्थः ॥ छाया ॥

११ तदाशयमाह—**यत्रेति** ॥ छाया ॥

१२ देवदत्तेत्यस्य लक्ष्यत्वेनाविधित्वादाह—**देवेति** ॥ छाया ॥

**किं कारणम् ?**

**'निवर्तकत्वात्' । नानेनेको निवर्त्यन्ते ।**

**किं तर्हि ?**

**अनिको निवर्त्यन्ते ॥ सिद्धा ह्यत्र ह्रस्वा इकश्चानिकश्च । तत्रानेनानिको निवर्त्यन्ते ॥**

( प्रदीपः ) **निवर्तकत्वादिति** । एकवाक्यभावेनैच इगेव ह्रस्वो भवति नान्य इत्येवमनिको व्यावर्त्यन्ते ॥ यदि तर्ह्येकवाक्यता, एज्व्यतिरेकेणान्यस्य ह्रस्वो न प्राप्नोति ॥ नैष दोषः । पूर्वं ह्रस्वश्रुत्याऽच उपस्थानाद् ह्रस्वत्वं क्रियते । तत्रैचोऽप्यन्तर्भावाद् ह्रस्वे क्रियमाणे 'एच इक्' इत्यस्योपस्थानम् ॥

( उद्द्योतः ) **एकवाक्यभावेनैच इति** । एकवाक्यभावो नाम 'एच इक्' इत्यस्य ह्रस्वशेषभावः, न तु परस्परनियोगाभावः ॥ अन्वयस्तु वाक्यभेदेनैवेति ॥ एतदजानानो नोदयति—**यदीति** ॥ उक्ताभिप्रायेणैवोत्तरयति—**पूर्वं ह्रस्वेति** । एवं हि परिभाषाद्वयस्याप्यनुग्रहो भवतीति भावः ॥

( सूत्रप्रत्याख्यानम् )

( प्रथमप्रयोजनप्रत्याख्यानभाष्यम् )

**सवर्णनिवृत्त्यर्थेन तावन्नार्थः ॥**

( २७० प्रत्याख्यानसाधकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सिद्धमेङः सस्थानत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**'एङः सस्थानत्वात्' । इकारोकारौ भविष्यतः, अर्ध एकारोऽर्ध ओकारो वा न भविष्यति ॥**

( प्रदीपः ) **सिद्धमेङ इति** । एकारस्य तालव्यस्य तालव्य इकारः, ओकारस्य चौष्ठ्यस्यौष्ठ्य उकारो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) **एकारस्येति** । यत्तु कण्ठताल्वादिस्थानत्वेऽपि विप्रतिषेधेन पूर्वावयवो न स्वान्तरतमादेशप्रयोजकः, किंतु परावयव एवेति न दोष इति ॥ तन्न । लक्ष्यगतपरत्वमादाय विप्रतिषेधशास्त्राप्रवृत्तेः स्थानिवत्प्रकरणभाष्ये स्पष्टत्वात् । किन्त्वन्तरङ्गत्वेन पूर्वावयव एव तथेति बोध्यम् ॥ भाष्ये—**अर्ध एकार ओकारो वा न भविष्यतीति** । तयोरसत्त्वादिति भावः ॥

( आक्षेपभाष्यम् )

**ननु च एङः सस्थानतरावर्द्धैकारार्द्धौकारौ ॥**

( उद्द्योतः ) इतरस्तु 'सस्थानत्वाभावात्' इति हेतुरनेनोक्त इति मत्वा नोदयति—**ननु चेति** ॥ **सस्थानतराविति** । कण्ठतालुस्थानमिति पक्षेऽपि स्थानसाम्यसत्त्वमिति बोधयितुं तरनिर्देशः ॥

( समाधानभाष्यम् )

**न तौ स्तः । यदि हि तौ स्यातां तावेवायमुपदिशेत् ॥**

( उद्द्योतः ) स्वाशयं प्रकटयति—**न तौ स्त इति** ॥ **तावेवेति** । प्रत्याहारसूत्रे-इति भावः । एतच्च एओङ्सूत्रे निरूपितम् ॥

( समाधानबाधकभाष्यम् )

**ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—'सुजाते एश्व सूनृते' 'अध्वर्यो ओद्रिभिः सुतम्' 'शुक्रन्ते एन्यत्' 'यजतं ते एन्यत्' इति ॥**

( समाधानसाधकभाष्यम् )

**पार्षदकृतिरेषा तत्रभवताम् । नैव लोके नान्यस्मिन्वेदे—अर्ध एकारः-अर्ध ओकारो वाऽस्ति ॥**

( उद्द्योतः ) **पार्षदेति** । तत्रभवतां या पर्षत्—सभा तत्र भवेत्यर्थः । भाष्यप्रयोगादेव गमकत्वात्साधुत्वं बोध्यम् ॥

( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )

**अकारनिवृत्त्यर्थेनापि नार्थः ॥**

( २७१ प्रत्याख्यानसाधकवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ ऐचोश्चोत्तरभूयस्त्वात् ॥ * ॥

( भाष्यम् )

**ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति । भूयसी मात्रेवर्णोवर्णयोः, अल्पीयस्यवर्णस्य । भूयस एव**

---

१ एवं हीति । क्रमेण तत्सत्त्वे इत्यर्थः ॥ न तु कस्यचिद्बाध इति भावः ॥ छाया ॥

२ सूत्रं खण्डयति—**सवर्णेति** ॥ छाया ॥

३ "इचशेयास्तालौ" 'उवोपोपध्मा ओष्ठे' इति प्रातिशाख्यशिक्षान्तरानुरोधेन सस्थानत्वं भाष्य उक्तम् । तदाह—**एकारस्येति** ॥ पाणिनिशिक्षानुरोधेनैवैतत्कैयटतात्पर्यं दण्डिकृष्णाद्युक्तं खण्डयति—**यत्त्विति** ॥ विप्रेति । शब्दपरेत्यादिः ॥ स्व—एङ ॥ तथा—स्वान्तरतमादेशप्रयोजकः । तथा च न तत्पक्षे निर्वाह इति शिक्षान्तराश्रयणमेवाभिमतमिति भावः ॥ छाया ॥

४ अयं—शिवः ॥ छाया ॥

५ छन्दोगानामिति । निर्धारणे षष्ठी ॥ सात्येति । शाखाद्वयम् । वचनमध्येतृव्यक्त्यभिप्रायम् ॥ छाया ॥

६ सुजाते ए अश्वेत्यादावकारलेखस्तु प्रामादिक इत्येओङ्सूत्रे भाष्यप्रदीपोद्द्योते स्पष्टम् ॥ दाधिमथाः ॥

७ तत्रेति । पूज्यानां तेषामेव या सभा तत्र भवा चासौ कृतिः । अध्ययनादिक्रियेत्यर्थः ॥ छाया ॥

८ नन्वेवमसामर्थ्यात्कथं वृत्तिरत आह—**भाष्येति** ॥ वस्तुतस्तु पूर्वं पर्षच्छब्दस्यैव विशेषपरत्वेन तत् संसाध्य पश्चात्स्पष्टार्थं तत्संबन्धः । अत एवाग्रे तदुपात्तमिति न दोष एवेति बोध्यम् ॥ छाया ॥

९ भूयसी-सार्धमात्रा । अल्पीयसी-अर्धमात्रा । उभयत्र स्वार्थे ईयसुन् ॥ ननु ब्राह्मणा एव यत्र सन्ति नान्ये स एव तत्पदवाच्य इति दृष्टान्तवैषम्यमेवात आह—**तत्र चेति** ॥ एतच्छून्यो ब्राह्मणग्रामोऽप्रसिद्ध एवेति भावः ॥ छाया ॥

१० 'भूयसश्च ग्रह' इति ख. पाठः, 'भूयसाश्च ग्रह' इति पाठान्तरम् ॥

**ग्रहणानि भविष्यन्ति । तद्यथा 'ब्राह्मणग्राम आनीयताम्' इत्युच्यते । तत्र चावरतः पञ्चकारुकी भवति ॥ एच इग्घ्रस्वादेशे ॥ ४८ ॥**

( प्रदीपः ) **ऐचोश्चेति** । ऐकारः कण्ठतालव्यः, औकारः कण्ठौष्ठ्यः । न च तथाविधो ह्रस्वोऽस्तीति अवयवान्तरतमेन भाव्यम् । भूयसा चाऽवयवेन व्यपदेशो भवति । तदात्मक इव हि समुदायो लक्ष्यत इतीदुतावेव भविष्यतः ॥ **ब्राह्मणग्राम इति** । ब्राह्मणानां वास्तव्यत्वे उदाहरणम् । न तु स्वामित्वे ॥४८॥

( उद्द्योतः ) **भूयस एवेति** । भूयोंऽशस्यान्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः ॥ ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशे दृष्टान्तत्वासङ्गतेराह—**वास्तव्यत्वे इति** । वास्तव्यः-कर्तरि तव्यान्तः । कुलालकर्मारवर्धकिनापितरजकाः **पञ्चकारुकी** ॥ ४८ ॥

( ४४ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ५ )

## षष्ठी स्थानेयोगा ॥ १ । १ । ४९ ॥

( स्थानेयोगशब्दार्थनिरूपणम् )

( आक्षेपभाष्यम् )

**किमिदम्—स्थानेयोगेति ?**

( प्रदीपः ) **षष्ठी०** ॥ ४९ ॥ **किमिदमिति** । समासे विभक्तिश्रवणाप्रसङ्गः । असमासेऽपि 'युक्तिः' इति प्राप्नोति, न तु योगेति **प्रश्नः** ॥

( उद्द्योतः ) **षष्ठी स्था०** ॥ ४९ ॥ **युक्तिरिति** । षष्ठीति स्त्रीलिङ्गविशेषणत्वादिति भावः ॥

( समाधानभाष्यम् )

**स्थाने योगोऽस्याः सेयं-स्थानेयोगा । सप्तम्यलोपो निपातनात् ॥ तृतीयाया वा एत्वम् । स्थानेन योगोऽस्याः सेयं-स्थानेयोगेति ॥**

( प्रदीपः ) **स्थाने योगोऽस्या इति** । स्थाननिमित्तसम्बन्धेत्यर्थः ॥ **तृतीयाया वेति** । 'निपातनात्' इति योज्यम् । यथा देवदत्तस्य यज्ञदत्त इति पुत्रत्वादिद्वारकः संबन्धोऽवगम्यते, एवमस्तेर्भूरित्यत्राप्यस्यां परिभाषायां सत्यां स्थाननिमित्तः संबन्धोऽवसीयते ॥ स्थानं-अर्थ इति केचिदाहुः-तिष्ठन्त्यस्मिन् शब्दा इति स्थानम्, अर्थे च शब्दस्तिष्ठति । तेनास्तेरर्थे भूरित्यर्थः ॥ **अन्ये** त्वाहुः—**भ्रस्जो रोपधयोरमन्यतरस्या**मित्यादौ रोपधादीनामानर्थक्याद्भावसाधनः प्रसङ्गवाची स्थानशब्द आश्रीयते । तेनास्तेः प्रसङ्गे-अस्तेः प्राप्तौ भूः प्रयुज्यते इत्यर्थः संपद्यते ॥ स्वाभाविकोऽस्तेरप्रयोग आर्धधातुके भूशब्दस्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते ॥

( उद्द्योतः ) **निपातनादिति** । तृतीयान्तस्य समासे तृतीयाया लुक्त्रयस्यैत्वमित्यर्थः ॥ तृतीयार्थाः स्थाने एतद्विधाने तु अन्तरङ्गबाधे मानाभावादिनादेशेऽन्त्यस्य स्यात्, लुग्बाधे मानाभावाच्च । वृद्ध्यापत्तेश्च ॥ अत एवैत्वं नोक्तमिति बोध्यम् ॥ अत्र स्थानसामीप्यादयः षष्ठ्यर्थसम्बन्धनिरूपकाः, न तु षष्ठ्यर्था इति न **मतुप्**सूत्रस्थभाष्यविरोधः । अत एवात्र भगवता सप्तम्यन्तेन तृतीयान्तेन वा समासो दर्शितः, न तु समानाधिकरणबहुव्रीहिः । तद्ध्वनयतोक्तम्—**स्थाननिमित्तसंबन्धेत्यर्थ इति** ॥ नन्वादेशविधौ स्थानशब्दाभावेन कथं स्थाननिमित्तः संबन्धोऽत आह—**यथेति** । तथा च 'देवदत्तस्य यज्ञदत्तः' इत्युक्ते किमित्याकाङ्क्षावशात्पुत्र इत्यध्याहारो यथा, तथा प्रदेशेषु स्थानपदाध्याहारेण वाक्यैकदेशन्यायेन वा बोध इति भावः ॥ **अर्थे चेति** । वाचकत्वसंबन्धेनेति भावः ॥ अस्तेः प्रसङ्ग इत्यस्य व्याख्या—**अस्तेः प्राप्ताविति** ॥ **प्रयोग इति** । स्वाभाविक इत्यनुषज्यते । शब्दनित्यत्वभङ्गापत्त्या स्थानबाध इति भावः ॥ छाया ॥

१ **ऐचोश्चेति** । भाष्ये चो भिन्नक्रमः । तेन पूर्वहेतुसमुच्चयः । स्थानैक्ये पूर्वं, स्थानद्वये इदम् । तदाह—**ऐकार इति** ॥ भाष्ये बहुवचनं लक्ष्याभिप्रायम् । तदाह—**भूयसा चेति** । वस्तुतोऽतत्त्वादाह—**इवेति** ॥

२ वास्तव्यत्वं वासकर्तृत्वमित्याह—**वास्तव्य इति** । तथा च यत्र ब्राह्मणा बहवो वसन्ति अन्ये चाल्पे सोऽत्र विवक्षितः ॥ यद्यप्यत्र **सवर्णे**त्यादिना भगवता सूत्रमफलमिति प्रतिपादितम्, तथापि न सिद्धान्तभूतम्, आद्यस्यापाणिनीयानुरोधित्वात् । द्वितीयस्यानियतत्वात् । वैपरीत्यस्यापि **लुतावैच इदुतौ**विति सूत्रे विनिगमनाविरहाश्रयेण भाष्य उक्तत्वात् । तस्मात्समप्रविभागपक्ष एव भाष्यसंमत इति नियामकसूत्रसत्त्वमेव तदभिमतम् ॥ अत एव तद्रीत्यादौ नोक्तम् । अग्रे च तस्मादित्यादिना नोपसंहृतम् ॥ आदेश इति कर्मणि घञ् । ह्रस्वपदेन कर्मधारयः । निर्धारणे सप्तमी । सौत्रमेकवचनम् । नियमश्च यथाप्राप्त एवेति न यथासंख्यमिति बोध्यम् ॥ छाया ॥

३ **समासे इति** । **सुपो धात्विति** लुकेति शेषः ॥ छाया ॥

४ **षष्ठीतीति** । तथा चाकर्तरीति प्राप्तघञः स्त्रियां क्तिना

५ **निपातना**दित्यस्य भाष्ये मध्यमणिन्यायेनान्वय इति सूचयन्नाह—**निपेति** ॥ छाया ॥

६ ननु यथाश्रुतभाष्यार्थ एव कुतो नात आह—**तृतीयेति** ॥ नन्वपवादत्वादादावेव स्यादत आह—**लुगिति** ॥ तस्य सर्वापवादत्वात् ॥ **भावश्चेति** पाठः ॥ **वृद्ध्यापत्तिश्चे**त्यग्रेऽपपाठः, **अतो गुण** इत्यनेन बाधात् ॥ तस्मात्पूर्वोक्तमेव भाष्यसंमतमिति ध्वनयन्नाह—**अत एवेति** । उक्तरीत्या तत्स्थाने तस्य विधातुमशक्यत्वादेवेत्यर्थः ॥ छाया ॥ **नोक्तमिति** । तृतीयाया वा इत्वमिति भाष्ये नोक्तमित्यर्थः ॥

७ मतुप्सूत्रभाष्यविरोधं परिहरति—**अत्रेति** ॥ **अत एव**-तथाभिमतत्वादेव ॥ कैयटसंमतमपीदमित्याह—**तदिति** ॥ छाया ॥

८ **किमिति** । सामान्ये नपुंसकम् ॥ अप्रकरणस्यानेकसंबन्धसंभवात्प्रश्नः ॥ लाघवादाह—**वाक्येति** ॥ छाया ॥

९ पौनरुक्त्यं परिहरति—**अस्तेरिति** ॥ चलन्धमाह-**स्वाभेति** । ननु स्थानशब्दो निवृत्तिवाच्येव कुतो नोक्तोऽत आह—**शब्देति** ॥ द्वितीयपक्षादरमूलं खण्डयति—**रम्विधाविति** ॥ छाया ॥

शब्दो निवृत्तिवाची नोपपद्यत इति भावः । रम्विधौ रोपधघटित-स्थार्थे रम्घटित इत्यर्थे न क्षतिरित्यत्राहुचिः ॥

( सूत्रप्रयोजनम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ?**

**( प्रदीपः ) किमर्थमिति ।** विनाऽपि सूत्रेणेष्टं सिध्यति, आरब्धे चातिप्रसङ्ग इति प्रश्नः ॥

**( उद्द्योतः ) आरब्धे चेति ।** तत्रातिप्रसङ्गवारणाय व्याख्यानत इत्येतदाश्रयणे तथैव सिद्धौ परिभाषेयं व्यर्थेति भावः ॥

( २७२ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ षष्ठ्याः स्थानेयोगवचनं नियमार्थम् ॥ * ॥

( भाष्यम् )

**नियमार्थोऽयमारम्भः । एकशतं षष्ठ्यर्थाः, यावन्तो वा । ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति । इष्यते च—व्याकरणे या षष्ठी सा स्थानेयोगैव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम् । एवमर्थमिदमुच्यते ॥**

**( प्रदीपः ) एकशतमिति ।** षष्ठीदण्डकपाठाश्रयेणैतदुक्तम् ॥ **यावन्तो वेति ।** शब्दे यावतां संभव इत्यर्थः ॥

**(उद्द्योतः) षष्ठीदण्डकपाठः**—ग्रन्थविशेषः॥ भाष्ये—**षष्ठ्यर्था इति ।** षष्ठीप्रयोजनकास्तदर्थान्वयिनः शब्दाः शतमित्यर्थः ॥ यद्वा षष्ठ्यर्थानां शतत्वे तेषां शतत्वमर्थसिद्धं बोध्यम् ॥ एकशतमिति निर्णयेनाभिधाय पुनः संदिग्धाभिधानमयुक्तमत आह—**शब्द इति । वाशब्दो** वाक्यालङ्कारे ॥ भाष्ये—**प्राप्नुवन्तीति ।** तेषां सर्वेषां बोधः प्राप्नोतीत्यर्थः ॥

( भाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ?**

( अनिष्टापत्तिनिराकरणम् )

( २७३ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति ॥ * ॥

( भाष्यम् )

**अवयवषष्ठ्यादयस्तु न सिध्यन्ति ॥**

**तत्र को दोषः ?**

**"शास इदङ्हलोः" इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । "ऊदुपधाया गोहः" इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च ॥**

**( प्रदीपः ) अवयवेति ।** नियमेन संबन्धान्तराणां निवर्तनादिति भावः ॥ **उपधामात्रस्येति ।** शासिना संबन्धाभावात् पचादिसंबन्धिनोऽपीत्यर्थः । तत्र **ह्यनिदिता**मित्यत उपधाया इति वर्तते ॥

**( उद्द्योतः ) नियमेन**—प्रकृतसूत्रेण ॥ **शासिनेति ।** तस्य स्थानषष्ठीत्वेनोपधाविशेषणे सामर्थ्याभावादिति भावः ॥

( २७४ आक्षेपबाधकसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अवयवषष्ठ्यादीनां चाऽप्राप्तिर्योगस्यासंदिग्धत्वात् ॥ * ॥

( भाष्यम् )

**अवयवषष्ठ्यादीनां च नियमस्याप्राप्तिः ॥**

**किं कारणम् ?**

**'योगस्यासंदिग्धत्वात्' । संदेहे नियमः । न चावयवषष्ठ्यादिषु संदेहः ॥**

**( प्रदीपः ) असंदिग्धत्वादिति ।** अनियमप्रसङ्गे नियमः क्रियते, न तु प्रागेवावस्थिते नियमे ॥

**( उद्द्योतः )** भाष्ये—**अवयवषष्ठ्यादीनामिति ।** अवयवषष्ठ्यादीनामिष्टानां निवृत्तये नियमाप्राप्तिरिति वार्तिकार्थः ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ?**

( समाधानभाष्यम् )

**न हि ॥**

**कथमनुच्यमानं गंस्यते ?**

१ **तत्र**—अवयवषष्ठ्यादौ ॥ छाया ॥

२ 'यावन्तो वा सन्ति ते' इति क. ख. पाठः ॥

३ अर्थशब्दः प्रयोजनवाचीत्याह—**षष्ठीप्रेति** ॥ अभिधेयपर एवेत्याह—**यद्वेति** ॥ छाया ॥

४ शङ्कते—**एकेति** ॥ नन्वेवं वाऽसंगतिरत आह—**वाशब्द इति** ॥ छाया ॥

५ **अवयवषष्ठ्यादिष्वि**त्यादिना **गापोष्टक् अजायत** इत्यादिसंग्रहः ॥ छाया ॥

६ 'उपधामात्रस्य चेति' इति क. ख. पुस्तकयोः प्रतीकपाठः । शास इदङ् हलोरित्यादीनामयमर्थः—शासेः स्थाने इद्भवति, उपधायाः स्थाने चेद्भवतीति । तथाच सर्वत्राप्युपधामात्रस्येद्भविष्यतीत्यनिष्टमापद्येतेति भावः । तदाह—**पचादिसम्बन्धिनोऽपीति** ॥

७ 'प्रसङ्गे हि निय' इति ख. पाठः ॥

८ यथाश्रुतानुपपत्तेराह—**अवयवेति** ॥ छाया ॥

९ **किं वक्तव्येति ।** अवयवषष्ठ्यादिष्वस्योपस्थानवारणाय 'अवयवषष्ठ्यादीनाञ्चाप्राप्तिर्योगस्यासन्दिग्धत्वात्' इत्येतदर्थकमपूर्वं कर्तव्यं किमित्यर्थः ॥

लौकिकोऽयं दृष्टान्तः । तद्यथा लोके—कश्चित् कंचित् पृच्छति—ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति । स तस्मायाचष्टे—अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः, अमुष्मिन्नवकाशे हस्तवाम इति । यस्तत्र तिर्यक्पथो भवति, न तस्मिन् संदेह इति कृत्वा नासावुपदिश्यते । एवमिहापि संदेहे नियमः । न चावयवषष्ठ्यादिषु संदेहः ॥

( प्रदीपः ) **हस्तदक्षिण इति** । हस्तो दक्षिणो यस्येति बहुव्रीहिः । भाष्यकारवचनात्सर्वनाम्नोऽपि परनिपातः ॥

( उद्योतः ) **दक्षिणो यस्येति** । दक्षिणो[1] हस्तो यस्य सन्निहित इत्यर्थः ॥ **तिर्यक्पथः**—अनृजुमार्ग इत्यर्थः । पूर्वपश्चिमान्यतरदिशि गच्छतो दक्षिणोत्तरमार्ग इति यावत् ॥

( समाधानान्तरभाष्यम् )

अथवा—स्थाने अयोगा[2]-स्थानेयोगा ॥

किमिदमयोगेति ?

अव्यक्तयोगा—अयोगा ॥

( प्रदीपः ) **अयोगेति** । योग[3]मन्तरेण षष्ठ्या एवाऽभावाद्विशिष्टो योगो यस्या नास्तीति सामर्थ्यात्प्रतीयते ॥

( उद्योतः ) **विशिष्ट इति** । निर्णय[4]विशिष्ट इत्यर्थः । अयमेव भाष्ये व्यक्तशब्दस्यार्थः । अत्र पक्षे योगशब्दः कर्मव्युत्पत्त्या संबन्धिपरः । योगवतीति पक्षेऽप्येवमेव, स्थान[5]रूपसंबन्धिनियमार्थत्वादस्य ॥

( समाधानान्तरभाष्यम् )

अथवा—योग[6]वती-योगा ॥

का पुनर्योगवती ?

यस्या बहवो योगाः ॥

कुत एतत् ?

भूम्नि हि मतुब् भवति ॥

( प्रदीपः ) **योगवतीति** । षष्ठ्या अवश्यंभावी योग इति[7] भूम्नि सामर्थ्याद् मत्वर्थीयोऽकारः ॥

१ मार्गानवयवत्वादाह—**दक्षिण इति** ॥ तत्र तत्त्वारोप इति भावः ॥ छाया ॥

२ **अयोगेति** । अयोगा षष्ठी स्थानपदार्थानुयोगिनीति सूत्रार्थः । अयोगा-निर्णयविशिष्टा नेत्यर्थः । तथा च गोहशासादौ निर्णीतविषया षष्ठीति नास्या उपस्थानम् । इको यणचीत्यादौ निर्णीतविषया नेत्यस्या उपस्थानमिति सर्वमुपपन्नम् ॥

३ यद्यपि शाकपार्थिवादित्वाव्यक्तशब्दस्य लोपः सुवचः, तथापि तत्प्रत्याख्यानेऽन्यत एवात्रेष्टार्थलाभे तदाश्रयगौरवे वाऽऽह—**योगमिति** ॥ छाया ॥

४ अन्यवैशिष्ट्यासंभवादाह—**निर्णयेति** ॥ छाया ॥

५ उभयत्र तथाश्रयणे बीजमाह—**स्थानेति** ॥ छाया ॥

६ **योगवतीति** । अस्मिन् पक्षे योगा षष्ठी स्थानपदार्थानुयोगिनीति सूत्रार्थः । यस्या बहवो योगाः-सम्बन्धाः सन्ति सा षष्ठी योगा । अवयवषष्ठीस्थले बहवो योगा न संभवन्तीति न तत्रास्या उपस्थानमिति भावः ॥

( २७५ आक्षेपबाधकवार्तिकम् ॥ ४ ॥ )

## ॥*॥ विशिष्टा वा षष्ठी स्थानेयोगा ॥*॥

( भाष्यम् )

अथवा किंचिल्लिङ्गमासज्य वक्ष्यामि—इत्थंलिङ्गा षष्ठी स्थानेयोगा भवतीति ॥ न च तल्लिङ्गमवयवषष्ठ्यादिषु करिष्यते ॥

( प्रदीपः ) **किंचिल्लिङ्गमिति** । कलादिकम् ॥

( उद्योतः ) **विशिष्टा** वेति वार्तिकं व्याचष्टे—**अथवा किंचिदिति** ॥

( आक्षेपभाष्यम् )

यद्येवं, "शास इदङ्हलोः" "शा[8] हौ" शासिग्रहणं कर्तव्यम्—स्थानेयोगार्थं लिङ्गमासङ्क्ष्यामीति ॥

( आक्षेपबाधकभाष्यम् )

न[9] कर्तव्यम् । यदेवादः पुरस्तादवयवषष्ठ्यर्थं प्रकृतम्, एतदुत्तरत्रानुवृत्तं सत् स्थानेयोगार्थं भविष्यति ॥

कथम् ?

अधिकारो नाम त्रिप्रकारः ।

कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति ॥

अपरोऽधिकारः—यथा रज्ज्वा अयसा[10] वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण ॥

अपरोऽधिकारः—प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठते ॥

तद्यदैष[11] पक्षः—अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति, तदा हि यदेवादः पुरस्तादवयवषष्ठ्यर्थम्, एतदुत्तरत्रानुवृत्तं सत् स्थानेयोगार्थं भविष्यति ॥

७ 'इति सामर्थ्यात् भूम्निमत्व' इति ख. पाठः ॥ भाष्ये मतुबित्यस्य तदादिरित्यर्थः ॥ तथोक्तिर्विग्रहाभिप्राया प्राथम्यमूलिका वा । तद्ध्वनयन्नाह—**योऽकार इति** ॥ छाया ॥

८ **शाहाविति** । शास इदिति सूत्रादनुवर्तमानं शास इत्यवयवषष्ठ्यन्तं, अत्र स्थानषष्ठीबोधनाय लिङ्गासञ्जनार्थं पुनर्ग्रहणं कर्तव्यमित्यस्मिन् पक्षे दोषः ॥

९ **न कर्तव्यमिति** । शाहाविति सूत्रे 'शासः' इति ग्रहणं न कर्तव्यमित्यर्थः ॥ अकर्तव्यत्वे बीजमुपन्यस्यति—**यदेवाद** इत्यादिना ॥

१० 'अयसा च विद्धं' इति त्रुटितपुस्तकपाठः ॥

११ **तद्यदैषेति** । अत्र 'तदा हि यदेवादः' इत्यादिः पूर्वोक्त एव ग्रन्थ उक्तेषु पक्षेषु केन पक्षेणास्य समर्थनं स्यादित्येतद्बोधयितुमिति न द्विरुक्तिदोषः ॥

( प्रदीपः ) **अधिकारो नामेति** । पारार्थ्यसाम्यात्परिभाषाऽप्यधिकार उच्यते ॥ **कश्चिदिति** । परिभाषारूप इत्यर्थः ॥ **चकारेणेति** । यथा **सहस्य स** इत्यविशेषेणं **ग्रन्थान्ताधिके चे**त्यादावनुकृष्यते ॥

( उद्द्योतः ) भाष्ये–**कश्चिदेकदेशस्थ इति** । इदं च यथोद्देशपक्षे स्पष्टमेव । कार्यकालेऽपि स्वविषयसर्वशास्त्रैकवाक्यत्वादेवमुक्तिः, पठितदेशस्थेनैव तत्र तत्र तद्बुद्धिजननात् । दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकम् । न तु तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशे गमनमस्तीति बोध्यम् ॥ पठितदेशस्थत्वमेव सर्वथा बोधयितु**मेकदेशस्थ** इत्युक्तम् ॥ **तस्यानिर्देशार्थ इति** । अधिक्रियमाणस्यानुच्चारणार्थ इत्यर्थः ॥ **यदेवाद इति** । शब्दाधिकार आश्रयिष्यत इत्यर्थः ॥

( आक्षेपभाष्यम् )

**संप्रत्ययमात्रमेतद्भवति । न ह्यनुचार्य शब्दं लिङ्गं शक्यमासङ्क्तुम् ॥**

( प्रदीपः ) **संप्रत्ययमात्रमिति** । स्वरितत्वप्रतिज्ञानादुत्तरेषु योगेषु तस्य शब्दस्याऽनुमानं भवतु, लिङ्गासङ्गस्त्वनुच्चारितस्य कथं स्यादित्यर्थः ॥

( उद्द्योतः ) **अनुमानमिति** । उच्चारित एव प्रत्यायक इत्यणुदित्सूत्रस्थभाष्यविरुद्धमिदम् । तस्माद्बोद्धुरनुमानपूर्वकमुच्चारणं, न त्वाचार्यस्येत्यर्थः । शास्त्रप्रणयनकालिकतत्कृतलिङ्गासङ्ग एवैतच्छास्त्रप्रवृत्त्युपयोगी नान्यकृतः, अतिप्रसङ्गात् । पाणिनिना त्वनुच्चारणाच्छास्त्रप्रणयनकाले लिङ्गासङ्गः कर्तुमशक्य इति भावः ॥ भाष्ये–**संप्रत्ययमात्रमिति** । स्वरितत्वबलात्स एवोत्तरत्र - इति ज्ञानमात्रमाचार्यकृतमित्यर्थः ॥ **आसङ्क्तुमि**त्यस्याचार्येणेति शेषः ॥

( आक्षेपबाधकभाष्यम् )

**एवं तर्ह्यादेशे तल्लिङ्गं करिष्यते, तत्प्रकृतिमास्कन्त्स्यति ॥**

( प्रदीपः ) **एवं तर्हीति** । आदेशलिङ्गासङ्गात्तस्य च षष्ठ्यभावात्तत्संम्बद्धस्थानिनो लिङ्गकार्यं फलिष्यतीत्यर्थः ॥

( प्रत्याख्यानभाष्यम् )

**यदि नियमः क्रियते, यत्रैका षष्ठी अनेकं च विशेष्यं तत्र न सिध्यति । अङ्गस्य-हलः-अणः-संप्रसारणस्येति हलपि विशेष्यः, अणपि विशेष्यः, संप्रसारणमपि विशेष्यम् ॥ असति पुनर्नियमे कामचारः—एकया षष्ठ्या अनेकं विशेषयितुम् । तद्यथा—देवदत्तस्य पुत्रः पाणिः कम्बल इति । तस्मान्नार्थो नियमेन ॥**

( प्रदीपः ) **यदीति** । 'अङ्गस्य' इति स्थानषष्ठीत्वाद्विशेषणविशेष्यभावो न प्रकल्पत इत्यर्थः ॥ **देवदत्तस्येति** । संबन्धसामान्यमुपक्रम्यते पश्चात्पदान्तरसन्निधानाद्विशेषावसायः ॥

(उद्द्योतः) (भाष्ये) **यदि नियम इति** । स्थाननिमित्तसंबन्धार्थकत्वनियम इत्यर्थः ॥ **अनेकं विशेष्यं**–प्रसङ्गरूपमवयवरूपं च । तत्राद्यं–**शा हौ** इत्यादौ । अन्त्यं तु भाष्ये एव वक्ष्यति ॥ **तत्र न सिध्यतीति** । अवयवादिनिमित्तसंबन्धार्थकत्वं न सिध्यतीत्यर्थः ॥ **अणपीति** । हलः ( ६।४।२ ) इति सूत्रे तृतीये दीर्घव्यावृत्त्यर्थमणग्रहणस्यापि संबन्धादिति भावः ॥ तत्राङ्गस्येत्यस्यैकवाक्यतयाऽङ्गावयवाद्धलः परं यदङ्गान्त्यावयवाण्रूपं संप्रसारणं तस्य दीर्घ इति सूत्रार्थः । तत्राङ्गस्येत्यस्य **शा हौ** इत्यादौ स्थानषष्ठीत्वे हलादिनिरूपितमवयवषष्ठीत्वं न सिध्येदित्यर्थः ॥ **स्थानेति** । तस्वाद्धल इत्यादिनाऽवयववाचकेन विशेषणविशेष्यभावो न स्यादित्यर्थः ॥ **विशेषावसाय इति** । तत्तदन्वय्यर्थकपदकल्पनयेति भावः ॥

( उक्ताक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—एकशतं षष्ठ्यर्थाः, यावन्तो वा । ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति ॥**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । यद्यपि लोके बहवोऽभिसंबन्धाः—आर्था यौना मौखाः स्रौवाश्च । शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति—अन्यदतः स्थानात् ॥**

---

१ 'प्यधिकार इत्युच्यते' इति ख. पाठः ॥

२ **अविशेषेणेति** । स्वरितत्वप्रतिज्ञां विनापि चेन पदविशेषाभावेनेत्यर्थः ॥ छाया ॥

३ प्राचां दण्डिकृष्णादीनामसांगत्यं ध्वनयितुमाह—**इदं चेति** ॥ नन्वेवं कथं तस्वमत आह—**पठितेति** ॥ दृष्टान्तोऽप्येवमेवेत्याह—**दीप इति** ॥ तन्मतं खण्डयति—**न त्विति** ॥ **तत्पक्षे**–कार्यकालपक्षे ॥ तात्पर्यार्थमाह—**पठितेति** ॥ छाया ॥

४ नन्वनुच्चारितस्य शब्दस्य संप्रत्ययायोगात्संप्रत्ययमङ्गीकृत्यानुच्चारितत्वोक्तिर्भाष्येऽयुक्ताऽत आह—**स्वरितत्वेति** ॥ छाया ॥

५ इदं दूषयति—**उच्चारित इति** ॥ अतो भाष्यमन्यथा व्याचष्टे—**तस्मादिति** ॥ ननु लिङ्गासङ्गः कुतो नात आह—**शास्त्रेति** ॥ **तत्कृतः**–पाणिनिकृतः ॥ **एतत्**–प्रकृतसूत्रम् ॥ एवं भाष्यतात्पर्यार्थमुक्त्वा भाष्याक्षरार्थमाह—**भाष्ये समिति** ॥ छाया ॥

६ नन्वन्यत्र कृतलिङ्गासङ्गकार्यस्यान्यत्र स्वीकारेऽतिप्रसङ्गादाह—**तत्संबेति** ॥ भाष्यस्थप्रकृत्यर्थमाह—**स्थानिन इति** ॥ छाया ॥

७ ननु तत्राणनुवृत्तौ न फलमिति भाष्यमयुक्तमत आह—**हल इतीति** ॥ **तृतीये**–त्रेः **संप्रसारणं चे**ति व्युत्पन्ने तच्छब्दे ॥ इदमपि **हल** इत्यत्रत्योपक्रमभाष्यानुरोधेन निपातनाङ्गीकारे, तत्र सति तु तदफलमेवेति तत्रैव भाष्ये उपसंहारे स्पष्टमिति न विरोधो भाष्ययोरिति बोध्यम् ॥ नन्वेवमपि अङ्गावयवाद्धलः परं संप्रसारणमण्रूपं तदन्ताङ्गस्येति सूत्रार्थेनाणसंप्रसारणयोर्विशेषणत्वाद्भाष्यासंगतिरेवात आह—**तत्रेति** । तत्संबन्धे सतीत्यर्थः ॥ **तत्र**–हल इति सूत्रे ॥

८ **अभिसंबन्धाः**–तन्निरूपकाः ॥ प्रक्रमस्वारस्यात् ॥ एवमग्रेऽपि ॥ छाया ॥

९ 'स्रौवाश्चेति' इति ख. छ. पाठः ॥

( उद्द्योतः ) आर्थाः–स्वस्वामित्वादयः । यौनाः–पितृत्वादयः । मौखः–गुरुशिष्यभावः । स्रौवाः–ऋत्विक्त्वादयः ॥

( आक्षेपसाधकभाष्यम् )

**शब्दस्यापि शब्देनानन्तरादयोऽभिसंबन्धाः । अस्तेर्भूर्भवतीति संदेहः—स्थाने-अनन्तरे-समीपे-इति ॥**

(उद्द्योतः) स्थानेऽनन्तरे इत्यादि । स्थानादिरूपसंबन्धि[1]सन्देह इत्यर्थः ॥ आनन्तर्यं–अव्यवधानम् ॥ सामीप्यं–साधारणम्[2] ॥

( आक्षेपबाधकभाष्यम् )

**संदेहमात्रमेतद्भवति । सर्वसंदेहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति । स्थाने इति व्याख्यास्यामः ॥**

( प्रदीपः ) **स्थान इति** । अन्तरङ्गत्वाल्लक्ष्यापेक्षणाद्वेति[3] भावः ॥

( उद्द्योतः ) **अन्तरङ्गत्वादिति** । स्थान[4]शब्दोऽर्थवाची प्रसङ्गवाची वा, उभयथाऽप्यन्तरङ्गत्वम् । **स्थानिवदादेश** इति ज्ञापकमप्यत्र बोध्यम् ॥

—•—

( निर्दिश्यमानपरिभाषाधिकरणम् )

( आक्षेपभाष्यम् )

**न तर्हीदानीमयं योगो वक्तव्यः ॥**

( समाधानभाष्यम् )

**वक्तव्यश्च ॥**

**किं प्रयोजनम् ?**

**षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चरिता ॥**

**किं कृतं भवति ?**

**'निर्दिश्यमानस्यादेशा भवन्ति' इत्येषा परिभाषा न कर्तव्या भवति ॥ षष्ठी स्थानेयोगा ॥ ४९ ॥**

( प्रदीपः ) **यतः षष्ठीति** । तेन **पादः पदि**त्यस्यायमर्थः—पादन्तस्याङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य पच्छब्द आदेशो भवति, न तु प्रतीयमानस्य पादन्तस्य । अस्यैव सूत्रस्य **निर्दिश्यमानस्यादेशा भवन्ती**त्ययमर्थः । षष्ठीति षष्ठ्यन्तं[5] गृह्यते[6] । तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते, न तु प्रतीयमानमित्यर्थः । **अलोऽन्त्यस्यादेः परस्येत्ये**तत्तु [7]वचनसामर्थ्यान्न बाध्यते ॥ ४९ ॥

( उद्द्योतः ) **निर्दिश्यमानमिति** । उच्चार्यमाणमित्यर्थः । निर्दिश्यमानं षष्ठ्यन्तमेवेत्यन्वयः । निर्दिश्यमानपदस्य चाध्याहार इति भावः ॥ **न बाध्यते इति** । किंतु[8] स्वव्यवस्थापकत्वेनाश्रीयत इत्यर्थः । [9]एवम**नेकाल्सूत्रे** सर्वोऽप्येतत्परिभाषाबोधित एव गृह्यते । [10]**पद्दन्न** इत्यादावपि आदेशैः पाणिनिकृतस्थान्युच्चारणानुमानाद्व्यवस्थार्थत्वाद्वा न दोषः ॥ [11]यत्त्व**लोऽन्त्यस्यादेः परस्ये**त्यमू एतद्बाध-

१ **संबन्धि**-संबन्धनिरूपकम् ॥ पौनरुक्त्यं निराचष्टे—**आनन्तर्यमिति** ॥ छाया ॥

२ **साधारणम्**—व्यवहिताव्यवहितसाधारणमित्यर्थः ॥

३ 'पेक्षणाच्चेति' इति त्रुटितपुस्तके पाठः ॥

४ दोषाभावस्योक्तत्वादाह—**स्थानेति** । आद्येऽभिधेयस्य शब्दप्रयोगहेतुत्वेनादौ बुद्धिसंनिधानात्, अन्त्ये प्रसक्तस्यैवानन्तर्यादिसंभवेन तस्यादौ तदारूढत्वमित्यर्थः ॥ अन्यथा सूत्रवैयर्थ्यमपीत्याह—**स्थानीति** ॥ छाया ॥

५ **षष्ठ्यन्तमिति** । तदित्यादिः ॥ **नेति** । अपूर्वा नेत्यर्थः ॥ छाया ॥

६ **गृह्यत इति** । भाष्ये तथैवोक्तेः ॥ छाया ॥

७ **वचनसामर्थ्यादिति** । तयोर्निर्विषयत्वे दोषप्रसङ्गादित्यर्थः ॥ क्वचिदनया बाधेऽत्र सिद्धेः क्वचिदनिष्टापत्तेः क्वचिदन्त्याद्योरनिर्दिश्यमानविषयत्वाभावाच्च । एवंचैतद्विषये विरोधाभावेनालोन्त्यादिप्रवृत्तावप्यबाधिततद्विषये **राज्ञः क चे**त्यादौ नैतत्प्रवृत्तिरुभयाविषयत्वात् । एवं च **समस्सुटि तासस्त्यो**रित्यादौ **येने**ति विषये एतत्प्रवृत्त्या तत्प्रवृत्तिः सुवचेति न दोषः ॥ **सः स्यार्धे**त्यतः सीतिवत्स इत्यनुवृत्तिरप्यन्त्ये सुवचेति भावः ॥ **ति विंशतेरि**ति सूत्रेऽपि कैयटे स्पष्टमिदम् ॥ **बाध्यत इति** । अन्तरङ्गत्वादिति भावः ॥ छाया ॥

८ कैयटशेषमाह—**किंत्विति** ॥ **स्व**-निर्दिश्येति ॥ **आश्रीयते**—तदुभयम् ॥ स्वस्वनिमित्तसंनिधापितयोरनया सह समावेश एव । "**त्यदादीनामः**" "**एरनेकाचः**" इत्यादौ अधिकृताङ्गादि—उपात्तत्यदाद्यनेकाजादिव्यवच्छेदद्वारा एतद्व्यवस्थापकत्वस्यापि तयोः संभवात् न बाध्यबाधकभावः ॥ क्वचिन्निष्फलत्वेऽप्येतत्प्रवृत्तौ दोषाभावेन क्वचित्साध्यफलस्यैवानया साध्यत्वेन धर्मद्वयाक्रान्तत्वस्य चैकत्र संभवेन च विरोधाभावात् । अन्यथा परत्वात्तयोरेतद्बाधकतापत्तेः । नाप्यङ्गाङ्गिभावः, उभयोरपि विध्युपकारकत्वेन **'गुणानाम्'** इति न्यायादित्यर्थः ॥ छाया ॥

९ नन्वेवमपि **'येनविधि—यदागमा'** इत्युभयबोधितस्थानिनोरनेकाल्त्यत्र सर्वपदेन ग्रहणादस्याश्च तदुभयबोधितस्थानित्वाभावबोधकत्वादनया सह तस्य विरोधेन बाध्यबाधकभावापत्त्या परत्वा**दनेकाल्**त्यस्याप्रवृत्त्या सुपदो निर्जरसावित्याद्यसिद्धिरेवात आह—**एवमिति** । तद्वदित्यर्थः ॥ **एवेन** तदुभयबोधितव्यावृत्तिः । तथाच तेनापि समावेश एवेति भावः ॥ छाया ॥

१० नन्वयं **पद्दन्न** इत्यादौ दोषः, अत्र स्थान्यभावेनैतदप्रवृत्त्या तेषां सर्वपदेनाग्रहणेनान्त्यादेशत्वापत्तेरत आह—**पद्दन्न इत्यादाविति** ॥ अत्र गौरवम्, तथासति तथैव वदेद्वाऽत आह—**व्यवेति** । प्रयोगेत्यादिः ॥ द्वयोरपि लोके सत्त्वादिति भावः ॥ छाया ॥

११ कौस्तुभोक्तिं खण्डयति—**यत्त्विति** । परत्वात् ॥ सर्वादेशविषयेऽस्याश्चारितार्थ्यम् । तेनैव हि समावेशः, तथा भाष्ये उदाहरणदानात् ॥ तयोस्तु कृते चारितार्थ्यमिति भावः ॥ छाया ॥

काविति, तत्तु उदस्था इति पादःपदिति सूत्रस्थभाष्यविरुद्धम् । व्यवस्थापकत्वे संभवति बाधकत्वकल्पनाऽनौचित्यग्रस्तं च ॥ ४९ ॥

( ४५ अन्तरतमपरिभाषासूत्रम् ॥ १ । १ । ७ आ. ६ )

## स्थानेऽन्तरतमः ॥ १ । १ । ५० ॥

( सूत्रोदाहरणाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ?**

( प्रदीपः ) **स्थाने०** ॥ ५० ॥ **किमुदाहरणमिति** । कचिल्लक्षणान्तरेणेष्टं सिद्धमिति **प्रश्नः** ॥

( उद्द्योतः ) **स्थानेऽन्त०** ॥५०॥ इति प्रश्न इति । एवंच परोक्तोदाहरणदूषणायायं प्रश्नः, न तूदाहरणासंभवकृत इति भावः ॥

( समाधानभाष्यम् )

**"इको यणचि" । दध्यत्र, मध्वत्र । तालुस्थानस्य तालुस्थानः, ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यादिति ॥**

( प्रदीपः ) **इको यणचि दध्यत्रेति** । अस्य सूत्रस्य लक्षणमप्युदाहरणं, प्रयोगोऽपि-इत्युभयोपन्यासः ॥ इको ह्रस्वादिभेदात् षट्षष्टिः, यणस्तु सप्त-इति वैषम्यात्संख्यातानुदेशो न सिद्ध्यतीत्यर्थः ॥

( उद्द्योतः ) उदाहरणप्रश्ने **इको इणची**त्यस्योल्लेखो व्यर्थोऽत आह—**अस्य सूत्रस्येति** । सामान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिस्तदुदाहरणमिति भावः ॥ **षट्षष्टिरिति** । लृवर्णस्य दीर्घाभावात् । दीर्घप्लुतऋकारस्य प्लुतलृकारस्य चानुनासिकस्यादर्शनादिदं **चिन्त्यम्** ॥ **सप्तेति** । रेफस्य सानुनासिकस्याभावादिति भावः ॥ इदं चिन्त्यम् । **अणुदित्**सूत्रेऽण्ग्रहणसामर्थ्येन यणंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात् । तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलभेदाय भेदकत्वस्यैवाश्रयणेन तेषामग्रहणम् । अत एव मतोर्मस्य नानुनासिको वकार इति ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । संख्यातानुदेशेनाप्येतत्सिद्धम् ॥**

( प्रदीपः ) **नैतदस्तीति** । प्रत्याहारपाठे शब्दतः साम्यमस्तीति भावः ॥ घस्लादेश इत्यादौ लकारोऽपि लृकारस्यादेशो दृश्यत इति लृकारस्य स्थानित्वाभावो नाशङ्कनीयः ॥

( उद्द्योतः ) **सङ्ख्यातानुदेशः**-क्रमेणान्वयः ॥ **शब्दत इति** । अयं भावः—यथा **स्यतासी लृलुटो**रित्यत्रार्थवैषम्येऽपि बोधकशब्दसाम्याद्यथासङ्ख्यम्, तथा इक्पदयण्पदाभ्यामनेकोपस्थितावपि बोधकशब्दसाम्यमस्त्येवेति न दोष इति ॥ न च ऋकारे लकारस्य लकारे रेफस्य चापत्तिः । ऋदित्छृदितोर्भेदेन निर्देशात् सावर्ण्यानित्यत्वेनात्र ऋलृभ्यां न लृकारर्कारयोर्ग्रहणमिति नोक्तदोष इति तदाशयात् ॥ ननु लृकारोदाहरणाभावात्कथं यथासङ्ख्यमत आह—**घस्लेति** । वस्तुतः प्रतिपत्तिकालिकं सङ्ख्यासाम्यमेव यथासङ्ख्यप्रवृत्तौ नियामकम्, न तु लक्ष्यसंस्कारकालिकमपीति प्रत्याहाराह्निके भाष्ये स्पष्टत्वान्नायं दोष इति बोध्यम् ॥ अनुनासिकस्थाने सानुनासिकार्थमपि न तत्रैतदुपयोगः, विधेयेऽणि गुणभेदकपक्षस्यैव सत्त्वेन तत्र तदप्राप्तेः ॥

( उदाहरणप्रदर्शकभाष्यम् )

**इदं तर्हि—"तस्थस्थमिपां तांतंतामः" इति । एकार्थस्यैकार्थः, द्व्यर्थस्य द्व्यर्थः, बह्वर्थस्य बह्वर्थो यथा स्यादिति ॥**

( प्रदीपः ) **एकार्थस्येति** । सादृश्यहेतुधर्मोपलक्षणमेतत् । तेन प्रत्यक्त्वादयोऽपि धर्मा गृह्यन्ते ॥

( उद्द्योतः ) आदेशानां तत्स्थानापन्नत्वेन न तदर्थत्वम्, किंतु स्वभावत एव, शब्दार्थसंबन्धानां नित्यत्वात्-इत्याशयेन भाष्ये—**एकार्थ इति** ॥ तावन्मात्रोक्तौ तसस्तमपि प्राप्नोति थसस्तामपीत्यत

१ इदानीमुपलभ्यमानेषु प्रामाणिकपुस्तकेषु 'उदस्था इति' इत्येव पाठ उपलभ्यते । तस्य च उदःस्था इत्यादि यत् पादःपत्सूत्रस्थं भाष्यं तद्विरुद्धं तदित्यर्थः । तत्र हि सूत्रे 'उदःस्थास्तम्भोः पूर्वत्वे प्रयोजनम् उदस्थात्' इत्यादिभाष्यग्रन्थः । मुद्रितपुस्तकेषु 'उदःस्थादिति' इति पाठः । परिभाषेन्दुशेखरसंवादयुतोऽयं पाठः कल्प्यत इति टिप्पण्या समर्थितश्च । अस्मादर्शपुस्तकेष्वनुपालम्भान्नात्र गृहीतः ॥

२ दोषान्तरमाह—**व्यवेति** ॥ वस्तुतस्तु अनया **येनविधि—यदागमा** इत्युभयबोधितस्थानित्वाभावबोधनवत् स्थलविशेषे-**ऽलोन्त्यस्येति** लब्धस्यापि तस्याभावबोधनं **ति विंशतेरिति** सूत्रभाष्यप्रामाण्यात् । तत्र हि—**यस्येति चे**त्यनेनैवान्त्यलोपे सिद्धे सूत्रारम्भसामर्थ्यात्सर्वस्य निर्दिष्टत्वात्प्राप्तादेशवारणाय तिग्रहणे कृतेऽपि अन्त्यस्य कुतो नेति प्रश्ने **निर्दिश्यमाने**ति परिभाषया वारणं कृतम् । तस्यायं भावः—इयं तयोर्विषय इव प्रकारान्तरेण बाधितालोऽन्त्यविषयेऽपि तत्त्वस्य बाधिका । नैतावता तयोर्निर्विषयत्वप्रसङ्गः, सामर्थ्यसहकारस्थल एव तथाङ्गीकारात् ॥ छाया ॥

३ **एवं च**-कचिदन्यथेष्टसिद्धौ च ॥ छाया ॥

४ शङ्कते—**उदेति** ॥ तल्लक्षणमाह—**सामान्येति** ॥ एवं च यत्र यत्रैतत्संभवस्तत्र सर्वत्रैवमेव ॥ तत्त्वे बीजमाह—**लृवर्णेति** ॥ कैयटं दूषयति—**दीर्घेति** । समाहारद्वन्द्वः ॥ **इदम्**—इदमपि ॥ सूत्रमतेनाह—**अणुदिदिति** ॥ **प्रकृताशयेना**ह—**यणंश इति** ॥ सिद्धान्तमतेनाप्याह—**तदिति** ॥ **अत एव**—सर्वथा तेषामग्रहादेव ॥ किं च गुणाभेदकत्वात्प्राप्तस्याप्य**प्रत्यय** इति निषेधादग्रहणमित्यपि बोध्यम् ॥

५ **बोधकेति** ॥ एतदुभयवाच्यवर्णबोधकेत्यर्थः ॥ शक्यार्थबोधकमादायेति भावः ॥ अत एवाह—**न चेति** ॥ **निर्देशात्**-ज्ञापितेनेति शेषः ॥ छाया ॥

६ नन्वादेशानां तत्संबन्धात्पूर्वं न तदर्थत्वमिति भाष्यासंगतिरेवात आह—**आदेशानामिति** ॥ द्वितीये हेतुमाह—**शब्दार्थेति** ॥ शङ्कते—**तावन्मात्रोक्ताविति** ॥ अत एव कैयटेऽपि ॥ तत्रत्यादिसंग्राह्यमाह—**मध्यमे इति** ॥ छाया ॥

आह—साहश्येति । उत्तमे–प्रत्यक्स्वरूपोऽहंकारास्पदचेतनधर्मः, मध्यमे–अहंकारानास्पदचेतनधर्मः पराक्त्वम्, प्रथमे त्वनियतम् ॥

( उदाहरणबाधकभाष्यम् )

**ननु च एतदपि संख्यातानुदेशेनैव सिद्धम् ॥**

( उदाहरणान्तरभाष्यम् )

**इदं तर्हि–"अकः सवर्णे दीर्घः" इति । दण्डाग्रम्, कूपाग्रम्, दधीन्द्रः, मधूष्ट्रः । कण्ठस्थानयोः कण्ठस्थानः, तालुस्थानयोस्तालुस्थानः, ओष्ठस्थानयोरोष्ठस्थानो यथा स्यात् ॥**

( यत्रानेकविधपरिभाषासाधनम् )

( आक्षेपभाष्यम् )

**अथ स्थान इति वर्तमाने पुनः स्थानग्रहणं किमर्थम् ॥**

( समाधानभाष्यम् )

**यत्रानेकमान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात् ॥**

**किं पुनस्तत् ?**

**चेता, स्तोता । प्रमाणतोऽकारो गुणः प्राप्नोति, स्थानत एकारौकारौ । पुनः स्थानग्रहणादेकारौकारौ भवतः ॥**

( प्रदीपः ) **यत्रानेकमिति** । स्थानग्रहणेऽनुवर्तमाने वाक्यभेदः क्रियते–स्थानेऽन्तरतमो भवति, यत्र चानेकमान्तर्यमस्ति तत्र स्थानकृतमेवान्तर्यमाश्रीयत इति । वाक्यभेदस्य च तमग्रहणमेव लिङ्गम् । स्थानकृत एव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात्तमग्रहणमनर्थकं स्यात् ॥

( उद्योतः ) भाष्ये—**अनुवर्तमाने इति** । एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः ॥ **वाक्यभेद इति** । अनुवृत्तप्रसङ्गवाचिस्थानशब्देनैकं वाक्यम्, ताल्वादिवाचीहत्यस्थानशब्देनापरम् । अत्र च **स्थाने** इति तृतीयार्थे सप्तमीति भावः । **तमग्रहणमनर्थकमिति** । 'प्रसङ्गे स्थानकृतान्तर्यवान्' इत्यर्थेनैव सिद्धे स्थानेग्रहणं न वाक्यभेदे मानमितीदमुक्तम् । तथैकवाक्यतायां तु स्थानकृतान्तर्याभावे 'तद्धसति'इत्यादावव्यवस्थैव स्यात् । वाक्यभेदे तु सादृश्यान्तरमादाय तत्र व्यवस्थेति भावः ॥

( तमग्रहणप्रयोजनम् )

( आक्षेपभाष्यम् )

**अथ तमग्रहणं किमर्थम् ?**

( समाधानभाष्यम् )

**"झयो होऽन्यतरस्याम्"इत्यत्र 'सोष्मणः सोष्माणः' इति द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्तः' इति तृतीयाः प्रसक्ताः ॥ तमग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः—वाग्घसति, त्रिष्टुब्भसति—इति ॥**

( प्रदीपः ) **सोष्मण इति** । ऊष्मत्वगुणयुक्तस्येत्यर्थः ॥ **तमग्रहणादिति** । ईषत्सदृशेऽपि लोके सदृशव्यवहारदर्शनादिह तमग्रहणं कृतम् ॥

( उद्योतः ) ऊष्मत्वेति । सदृशशब्दप्रयोगोपपत्तये धर्मपर ऊष्मशब्द इति भावः ॥

( सूत्रप्रयोजनम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ?**

( प्रदीपः ) **किमर्थमिति** । यदीदं नोच्येत किं स्यादिति प्रश्नः ॥

( उद्योतः ) नन्वनन्यथासिद्धोदाहरणरूपप्रयोजनोक्तेः पुनः प्रश्नानुपपत्तिरत आह—**यदीति** । सूत्राभावे किमनिष्टमिति प्रश्नतात्पर्यमिति भावः ॥

( २७६ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गस्तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम् ॥ * ॥

( भाष्यम् )

**स्थान्येकत्वेन निर्दिश्यते—अक इति । अनेकश्च पुनरादेशः प्रतिनिर्दिश्यते—दीर्घ इति । 'स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गः' । सर्वे सर्वत्र प्राप्नुवन्ति । इष्यते चान्तरतमा एव स्युरिति । तच्चान्तरेण यत्नं न सिध्यति । 'तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम्' । एवमर्थमिदमुच्यते ॥**

( प्रदीपः ) **स्थानिन इति** । यद्यपि 'अकः' इत्यनेन

---

१ **इक इति** । अत्र पूर्ववत् लक्षणमप्युदाहरणम्, प्रयोगोऽपि—इत्युभयोरुपासनम् ॥

२ **अनुवर्तेति** । इदानीमुपलब्धभाष्यपुस्तकेषु 'इति वर्तमाने' इत्येव पाठः । एतदुद्द्योतप्रतीकदर्शनेन तथा पाठोऽनुमेयः स्यात् ॥

३ कैयटोक्तक्रमेणाह—**अनुवृत्तेति** ॥ **एकम्**–आद्यम् ॥ **अपरं**–द्वितीयम् ॥ ननु स्थान इति सत्वेन स्थानकृतमित्यर्थः कथमत आह—**अत्र चेति** । द्वितीय इत्यर्थः ॥ यथाश्रुतभाष्यतस्तस्य तत्त्वालाभात् कैयटासंगतिं परिहरति—**प्रसङ्गे इति** । एकवाक्यतेति भावः ॥ नन्वेवं किमर्थो वाक्यभेदोऽत आह—**तथैकेति** । उक्तेत्यर्थः ॥ छाया ॥

४ 'च्येत तदा किं' इति ख. पाठः ॥

५ **तात्पर्यमिति** । तथा चार्थशब्दः साध्यप्रयोजनपरो न, किंतु व्यावर्त्यप्रयोजनपर इति भावः ॥ छाया ॥

स्थानिनो बहव उपात्तास्तथापि प्रयोगे एकैकः स्थानी, तस्य पर्यायेण बहवो दीर्घा आदेशाः प्राप्नुवन्तीत्यर्थः ॥

( उद्द्योतः ) **बहव इति** । एवं च 'एकत्वनिर्देशात्' इत्यनुपपन्नमिति भावः ॥ **प्रयोग इति** । अक इत्येतद्बोध्यः स्थानी प्रयोगे एकत्वविशिष्ट उच्चार्यत इति भाष्याक्षरार्थः ॥ यद्यपि **पूर्वपरयोरि**-त्युक्तेरेकः स्थानीत्ययुक्तम्, तथापि तत्समुदायाभिप्रायेणेदम् ॥ युगपदेककर्तृकं सर्वोच्चारणमशक्यमत आह—**पर्यायेणेति** ॥

( काकुभाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ?**

---

( अथ प्रथमान्तपाठनिर्णयः )

( आक्षेपभाष्यम् )

**यथा पुनरियमन्तरतमनिर्वृत्तिः, सा किं प्रकृतितो भवति—स्थानिन्यन्तरतमे षष्ठीति । आहोस्विदादेशतः—स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति ॥**

**कुतः पुनरियं विचारणा ?**

**उभयथा हि तुल्या संहिता "स्थानेऽन्तरतम उरण् रपरः" इति ॥**

( प्रदीपः ) **यथा पुनरिति** । येन प्रकारेण संहितापाठलक्षणेनेत्यर्थः ॥ प्रतिसूत्रं तु विच्छिद्य पाठे संशयाभावः । **पदप्रकृतिः संहितेति** संहिताया एव नित्यत्वात्ततः पदापोद्धारे क्रियमाणेऽन्तरतमशब्दः किं सप्तम्यन्तोऽपोद्ध्रियते, अथ प्रथमान्त इति **प्रश्नः** ॥ तत्र सप्तम्यन्तपक्षे **षष्ठीति** वर्तते । अन्तरतमो य आदेशस्य स्थानी तत्रैव षष्ठी, यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते । प्रथमान्तपक्षे तु अन्तरतम आदेशो भवतीत्यादेशो नियम्यते ॥

( उद्द्योतः ) 'येन प्रकारेण संहितापाठलक्षणेन' इति पाठः । अनेन संहितापाठ एव पूर्वं स्थित इत्युक्तम् ॥ अस्तु[3] तर्हि विच्छिद्य पाठोऽत आह—**पदप्रकृतिरिति** । षष्ठीतत्पुरुषः ॥ बहुव्रीहिरित्यन्ये । तत्प्रकृतग्रन्थाननुगुणम् ॥ भाष्ये—**सा किं प्रकृतित इति** । **'सा'** इति 'इयं' इत्यस्य प्रतिनिर्देशः । ईदंशब्दोऽपि यच्छब्दार्थः क्वचित् । केचित्तु 'यथापुनर्'इति 'या'इत्यर्थेऽव्ययसमुदाय इत्याहुः ॥ अन्तरतमशब्दार्थस्य विशेषणत्वेन या प्रतिपत्तिः सा किं सौत्रस्थानशब्दस्य 'तिष्ठन्त्यस्मिन्नादेशाः' इत्यधिकरणव्युत्पत्त्याऽन्तरतमे स्थानिनीत्यर्थात् स्थानिनं प्रति, उतादेशं प्रतीत्यर्थः ॥ **षष्ठीति वर्तत इति** । अन्तरतमे—अर्थादादेशस्य स्थानिनि षष्ठी उपसंहर्तव्येत्यर्थः ॥ यत्रैव षष्ठीत्यादि तु पर्यवसितार्थकथनम् ॥

( भाष्यम् )

**किं चातः ?**

( सप्तम्यन्तपाठदूषणभाष्यम् )

**यदि प्रकृतितः-इति, "इको यणचि" इति यणां येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति इहैव स्यात्—दध्यत्र, मध्वत्र । कुमार्यर्थम्, ब्रह्मबन्ध्वर्थमित्यत्र न स्यात् ॥**

**आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवति ॥**

( प्रदीपः ) **इहैवेति** । यणामर्धमात्रिकाणां सदृशा इको मात्रिकाः, न तु दूरविप्रकृष्टा दीर्घा इति भावः ॥ आदेशनियमपक्षे चैतदुदाहरणत्वेन दूषितम् । प्रकृतिनियमपक्षे तु भवत्येतदुदाहरणम् ॥

( उद्द्योतः ) ननु भाष्ये सङ्ख्यातानुदेशेनैतदुदाहरणस्य दूषितत्वात् पुनरुपन्यासोऽयुक्तोऽत आह—**आदेशेति** ॥ **भवत्येतदिति** । दीर्घव्यावृत्तये इत्यर्थः ॥

( सप्तम्यन्तपाठदूषणान्तरभाष्यम् )

**तथा—"इको गुणवृद्धी" गुणवृद्ध्योर्येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति इहैव स्यात्—नेता, लविता, नायकः, लावकः । चेता, स्तोता, चायकः, स्तावक इत्यत्र न स्यात् ॥**

**आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवति ॥**

( प्रदीपः ) **चायक इति । अचोऽञ्णितीत्यत्रापि** अयमेव दोष इत्युपन्यासः ॥

( उद्द्योतः ) भाष्ये—**इको गुणवृद्धी इति** । विध्येकवाक्यतापन्नस्य खण्ड इति बोध्यम् ॥ ननु 'इको गुणवृद्धी' इत्युक्त्वा 'चायकः' इत्युदाहरणमसङ्गतमत आह—**अच इति** । केचित्तु—इको यत्र गुणवृद्धी इष्टे तत्र—इति भाष्यार्थान्न दोष इत्याहुः ॥

( सप्तम्यन्तपाठदूषणान्तरभाष्यम् )

**तथा—ऋवर्णस्य गुणवृद्धिप्रसङ्गे गुणवृद्ध्योर्यदन्तरतममृवर्णं तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भव-**

---

१ एतत्सूचितमाह—**अक इति** ॥ शङ्कते—**युगपदिति** ॥ छाया ॥

२ नायं दृष्टान्त इत्याह—**येनेति** ॥ छाया ॥

३ शङ्कते—**अस्त्विवति** । संशयाभावादिति भावः ॥ प्रकृतानुरोधेनाह—**षष्ठीति** ॥ अत एव मतान्तरं खण्डयितुमाह—**बहिति** ॥ यास्कादय इत्यर्थः ॥ ननु यच्छब्दे प्रतिनिर्देशत्वं तत्र तत्र प्रसिद्धमत आह—**इदमिति** ॥ **केचिदिति** । अक्षरास्वारस्यमत्रारुचिः ॥ एतद्भाष्यतात्पर्यार्थमाह—**अन्तरेति** ॥ शब्दार्थमाह—**अन्तरेति** ॥ छाया ॥

४ यत्तदोर्नित्यसम्बन्धादाह—**इदं शब्दोऽपीति** ॥

५ इतिशब्दपाठः क. ख. च. छ. पुस्तकेषु न ॥

६ **चायक इति** । निर्दिष्टस्थानिकत्वेनेक्परिभाषायास्तत्रानुपस्थितेरिति भावः ॥ तदुक्तमेवाह—**केचित्त्विति** । अध्याहार एवात्रारुचिबीजम् ॥

न्तीति इहैव स्यात्—कर्ता, हर्ता, आस्तारकः, निपारक इति। आस्तरिता, निपरिता, कारकः, हारक इत्यत्र न स्यात् ॥

आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवति ॥

(प्रदीपः) ऋवर्णस्येति। ऋकारस्य ह्रस्वस्यैव गुणः स्यात् दीर्घस्यैव च वृद्धिरिति विशेषप्रदर्शनाय ऋवर्णस्य पृथगुपन्यासः ॥

(उद्योतः) ननु ऋकारस्येगचोरन्तर्भावात्पुनरुपन्यासो वृथेत्यत आह—ऋकारस्येति। ऐवं च सप्तम्यन्तच्छेदो लक्ष्यासिद्ध्या दुष्ट इति भावः ॥

(प्रथमान्तपाठदूषणभाष्यम्)

अथादेशतोऽन्तरतमनिर्वृत्तौ सत्यामयं दोषः—"वान्तो यि प्रत्यये" स्थानिनिर्देशः कर्तव्यः—ओकारौकारयोरिति वक्तव्यम्, एकारैकारयोर्मा भूदिति ॥

प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां वान्तादेशस्य एक्षु याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति अन्तरेण स्थानिनिर्देशं सिद्धं भवति ॥

(प्रदीपः) वान्तो यीति। एच इत्यनुवर्तनात् सर्वेषां वान्तादेशप्रसङ्गः ॥ यदा त्वेवं व्याख्यायते—यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति। ओकारस्थानिकोऽवादेशो दृष्ट औकारस्थानिकश्चावादेश इति, तदा न दोषः ॥

(उद्योतः) यादृश इति। अचीत्यनुवर्त्याचि परतो यस्य यो वान्तो दृष्टस्तस्य यि प्रत्यये स इति व्याख्येयमित्यर्थः ॥ अन्ये तु वाच्यवृत्त्येदृशार्थस्यालाभात् 'यि प्रत्यये' इति द्वाभ्याऽचीत्यस्यासंबन्धाच्च भाष्योक्तं वचनमेव ज्याय इत्याहुः ॥

(दूषणोद्धारभाष्यम्)

आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः ॥

कथम्?

वान्तग्रहणं न करिष्यते—"यि प्रत्यये" एचोऽयादयो भवन्तीत्येव ॥

(आक्षेपभाष्यम्)

यदि न क्रियते, चेयं - जेयमित्यत्रापि प्राप्नोति ॥

(आक्षेपबाधकभाष्यम्)

"क्षय्यजय्यौ शक्यार्थे" इत्येतन्नियमार्थं भविष्यति—क्षिज्योरेवैच इति ॥

(उद्योतः) भाष्ये—क्षिज्योरेवेति। ह्रस्वनिर्देशात् 'क्षी' इति दीर्घान्तस्य 'जै जये' इत्यस्य च नेदं निपातनमिति बोध्यम् ॥

(आक्षेपसाधकभाष्यम्)

तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति—क्षेयं पापं, जेयो वृषलः ॥

(आक्षेपबाधकभाष्यम्)

उभयतो नियमो विज्ञास्यते—क्षिज्योरेवैचः- इति, तयोश्च शक्यार्थ एव - इति ॥

(प्रदीपः) उभयत इति। योगविभागेनेति भावः ॥

(उद्योतः) योगविभागेनेति। विनिर्गमनाविरहाद्ब्रह्मभ्रूणेत्यादाविवोभयतो नियम इत्यन्ये ॥

(इष्टानुपपत्तिभाष्यम्)

इहापि तर्हि नियमान्न प्राप्नोति—लव्यं - पव्यम्, अवश्यलाव्यम्-अवश्यपाव्यमिति ॥

(प्रदीपः) इहापीति। सामान्येन नियम इति प्रश्नः ॥

(इष्टानुपपत्तिभाष्यम्)

तुल्यजातीयस्य नियमः ॥

कश्च तुल्यजातीयः?

यथाजातीयकः क्षिज्योरेच् ॥

कथंजातीयकः क्षिज्योरेच्?

एकारः ॥

(प्रदीपः) तुल्यजातीयस्येति। कण्ठ्यतालव्यस्येत्यर्थः ॥

(उद्योतः) भाष्ये—तुल्यजातीयस्येति। अन्यथा 'यि प्रत्यय इति विधिवैयर्थ्यं स्यादिति भावः ॥ तत्त्वं च यथेत्वेन, तर्हि ऐकारे आयादेशः स्यादत आह—कण्ठ्येति। भाष्ये एकारग्रहणमुपलक्षणमिति भावः ॥

(अनिष्टापत्तिभाष्यम्)

एवमपि रायमिच्छति-रैयतीत्यत्र प्राप्नोति ॥

(प्रदीपः) रायमिच्छतीति। एकारस्यैव नियमेन व्यावृत्तिः कृता, न त्वैकारस्येति प्रश्नः ॥

(उद्योतः) ऐतदनभिज्ञः शङ्कते—भाष्ये—रायमिच्छतीति ॥ तदाह—एकारस्यैवेति। एकारस्य तालव्यत्वमेवेति भाष्याशयः ॥

---

१ विपक्षे बाधकमाह—एवेति ॥ छाया ॥

२ सर्वभाष्यतात्पर्यमाह—एवं चेति। दोषगणसत्त्वे चेत्यर्थः ॥ छाया ॥

३ इदं दूषयति—अन्ये त्विति ॥ छाया ॥

४ श्लोक्तमेवाह—विनीति ॥ छाया ॥ ब्रह्मभ्रूणेति। योगविभागाभावेऽपि तत्र सूत्रे भाष्ये 'उभयतो नियमात्। उभयतो नियमोऽयम्। ब्रह्मादिष्वेव हन्तेर्भूते क्विब्भवति, क्विबेव हन्तेर्भूते ब्रह्मादिष्विति' इति द्विविधो नियमो दर्शितः ॥

५ वाऽन्तपदासत्त्वादाह—यीति ॥ शङ्कते—तत्त्वं चेति। तत्त्वमपीत्यर्थः। रैयतीत्यत्रेति भावः ॥ भाष्यासंगतिं परिहरति—भाष्ये इति ॥ छाया ॥

६ 'एकारे आया' इति ज. पाठः ॥

७ एवं सत्यग्रिमभाष्यासंगतिं परिहरति—एतदिति ॥ छाया ॥

( अनिष्टापत्तिवारणभाष्यम् )

**रा यि छान्दसः । दृष्टानुविधिश्छन्दसि भवति ॥**

( प्रदीपः ) **छान्दस इति** । क्यजन्तस्य रैशब्दस्य भाषायां नास्ति प्रयोगः, अन्यत्र तु विद्यत एवेति व्याचक्षते । [ क्यच् त्वैकारान्तान्नास्ति, **"गोसमानाक्षरनान्तात्"** इति वचनात् । ] **अन्ये** तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहुः ॥

( उद्द्योतः ) **क्यजन्तेति** । राः—रैशब्दो यि—यकारादिप्रत्यये इति भाष्यार्थ इति भावः । भाष्ये विसर्गरहित एव पाठः ॥ एतेन रायिरित्ययुक्तं, आत्वस्य दुर्लभत्वात् । रैशब्दात्क्विक् दुर्लभ इत्यपास्तम् ॥ **नास्ति प्रयोग इति** । अनभिधानादिति भावः ॥ **क्यच्** त्वित्यादिर्वचनादित्यन्तोऽग्रन्थः, तस्यैकीयमतत्वात् । अत एव **'नः क्ये'** इति सूत्रे वाच्यतीति भाष्ये प्रयुक्तम् ॥ **अन्ये त्विति** । अत्रारुचिबीजं तु **रायमिच्छतीति** भाष्यप्रयोगविरोधः । न हि विग्रहश्छन्द इति बोध्यम् । भाष्ये **यीत्यस्य** वैयर्थ्याच्च ॥

( प्रथमान्तपाठे दूषणान्तरभाष्यम् )

**"ऊदुपधाया गोहः" आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामुपधाग्रहणं कर्तव्यम् ॥ प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यामूकारस्य गोहो याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति अन्तरेणोपधाग्रहणं सिद्धं भवति ॥**

( प्रदीपः ) **गोह इति** । एतत्परिभाषोपस्थाने सति **गोह** इति षष्ठी अन्तरतमे स्थानिन्युपसंह्रियते ॥

( उद्द्योतः ) भाष्ये—**गोहः** संबन्धिन ऊकारस्य याऽन्तरतमा प्रकृतिरित्यन्वयः ॥ **स्थानिन्युपसंह्रियत इति** । एवं च 'गोहः' इति गोहवयवे लाक्षणिकम्—ऊकारान्तरतमस्य गोहवयवस्योदित्यर्थ इति भावः ॥

( दूषणोद्धारभाष्यम् )

**आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियते एतन्न्यास एव ॥**

( प्रदीपः ) **क्रियते न्यास एवेति** । अन्यथा परत्वादलोऽन्त्यस्येत्यनेन गोह इति षष्ठी अन्तेऽल्युपसंह्रियेतेति भावः ॥

( उद्द्योतः ) ननूपधाग्रहणाकरणलाघवे दर्शिते **क्रियत** इत्युत्तरमसङ्गतमत आह—**अन्यथेति** । परत्वादलोऽन्त्यस्येत्येव व्यवस्थापकं स्यादित्यर्थः ॥ एवं च पक्षद्वयेऽप्यावश्यकं तदिति भावः ॥

( प्रथमान्तपाठे दूषणान्तरभाष्यम् )

**"रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इति । आदेशतोऽन्तरतमनिर्वृत्तौ सत्यां तकारग्रहणं कर्तव्यम् ॥ प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां नकारस्य निष्ठायां याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीति अन्तरेणापि तकारग्रहणं सिद्धं भवति ॥**

( प्रदीपः ) **रदाभ्यामिति** । चरितमित्यादौ व्यवधानान्न भवति, **'निष्ठायाः'** इति षष्ठ्यास्तकार एवोपसंहारात्तस्यैवानन्तर्येण नत्वविधानात् ॥

( उद्द्योतः ) ननु तग्रहणाभावे चरितमित्यादावपि रेफानन्तरा निष्ठेति नत्वं स्यादत आह—**चरितमिति** । **रदाभ्यामित्यस्य** प्रधानविशेषणताया न्याय्यतया परिभाषासंस्कृते लक्ष्यसंस्कारके वाक्ये रेफदकाराभ्यां परस्य निष्ठासंबन्धिनोऽन्तरतमस्य नकारादेश इत्यर्थ इति भावः ॥ **आदेः परस्य स्थानेऽन्तरतम** इत्याभ्यामादेरन्तरतमस्य द इत्यर्थे इकारस्यान्तरतमत्वाभावेन तकारस्य चादित्वाभावेनाप्राप्तिरिति **परे** ॥

( दूषणपरिहारभाष्यम् )

**आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियत एतन्न्यास एव ॥**

( प्रदीपः ) **क्रियत एतन्न्यास एवेति** । अन्यथा भिन्नवद्भ्यामित्यत्र दकारस्य नत्वं स्यात् । स हि नकारस्य सुसदृशः, **यथा तृतीयास्तथा पञ्चमा** इति वचनात् ॥

( उद्द्योतः ) पक्षान्तरेऽपि तुल्यत्वान्न गौरवमित्याह—**अन्यथेति** ॥ **दकारस्य नत्वं स्यादिति** । अनया परिभाषयेति भावः ॥ वस्तुतस्तु **आदेः परस्येत्यनेनान्त्यस्याप्राप्तिः** । सूत्रे तु उभयाविरो-

१ 'रायिश्छान्दसः' इति मुद्रितपाठः ॥

२ 'रायिरिति' पाठः ॥ उच्चारणार्थेकारेण तदुपपत्तिरिति मतेनाह—**अन्ये त्विति** ॥ छाया ॥

३ 'रा यि छान्दसः' इति इत्येवं 'यि' सप्तम्यन्तपाठमाश्रित्य व्याख्यातवतां मते भिन्नं पदमित्याह—**रा इति** ॥ तदुपपादयति—**भाष्ये इति** ॥ **आत्वस्येति** । क्यचि परत इति भावः ॥ स्वमतेनाह—**यीत्यस्येति** ॥ रा इत्येव वदेदिति तात्पर्यम् ॥ **वैयर्थ्य** चेति पाठः । पञ्चम्यन्तपाठे 'नेदं युक्तम्' इति शेषः ॥ छाया ॥

४ **अग्रन्थ इति** । तद्धि न वार्तिकम्, भाष्यकृता एकीयमतत्वेन तस्योपन्यासात् । 'गोसमानाक्षरनान्तादित्येके इति वक्तव्यमित्याहुः' इति हि तत्रोक्तम् । गोशब्दात् समानाक्षरान्तात् नकारान्ताच्च क्यच् भवति । समानाक्षराणि च—अ आ इ ई उ ऊ ऋ ॠ ल ॡ—इति दश । अस्य वाच्यतीत्यादिभाष्यप्रयोगविरोधात् 'एके' इत्युपन्यासाच्च न सिद्धान्तसम्मतत्वमिति अग्रन्थत्वमस्य । **अग्रन्थत्वं**—समाधानासमर्थत्वम् ॥

५ असंबद्धत्वादाह—**भाष्येति** ॥ छाया ॥

६ 'इति'शब्दपाठः क. च. पुस्तकयोर्न ॥ सूत्रे तग्रहणाभावे निष्ठाया इत्येव वक्तव्यं, आदेः परस्येति सहकारेण रदाभ्यां परस्य निष्ठादेर्न इति कैयटाभिप्रायः ॥

७ **रेफानन्तरेति** । इटः स्वाङ्गत्वेनाव्यवधायकत्वादिति भावः ॥ कैयटं दूषयति—**आदेरिति** ॥ छाया ॥

८ 'अन्यथा हि' इति ख. पाठः ॥

९ इदमपि दूषयति—**वस्तुत इति** ॥ सूत्रवैयर्थ्यात्तथा नेत्याह—**सूत्रं त्विति** ॥ **उभयेति** । **आदेः परस्य—स्थानेऽन्तरेत्युभयेत्यर्थः** ॥ एवं च कैयटोक्तं चिन्त्यमेव ॥ छाया ॥

धेन भिन्न इत्यादौ चरितार्थमिति अत्र प्रयोगे न स्यादेव नत्वमिति उभाभ्यामपि तग्रहणं कर्तव्यमिति भाष्यतात्पर्यम् ॥ **एवं च प्रथमान्तच्छेदो निर्दोषः । सप्तम्यन्तच्छेदस्तु दुष्ट एव** ॥ अत एव **न भूसुधियोरित्यादि** चरितार्थम् ॥ **नृनरयोर्वृद्धिश्चेति** शार्ङ्गरवाद्यन्तर्गणसूत्रे यद्यपि तदा 'नरः–अः' इति व्याख्यानादाद्याकारस्यैव वृद्धिरिति न तत्र दोषः । तत्र नृनरयोरित्यावर्तते, एकत्र पञ्चम्यर्थे षष्ठी । पृथगपि वा तौ गणे पठ्येते इति बोध्यम् ॥

( इति प्रथमान्तपाठनिर्णयः )

( अथ स्वतन्त्रविधित्वनिराकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरिदं निर्वर्तकम्—अन्तरतमा अनेन निर्वर्त्यन्ते । आहोस्वित् प्रतिपादकम्—अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ?**

( प्रदीपः ) **किं पुनरिति** । किं स्वतन्त्रमिदं लक्षणम्, आहोस्विल्लक्षणान्तरेणाभिनिर्वृत्तानामनेन नियमः क्रियते, अथ लक्षणान्तरशेषभूतमिति **प्रश्नः** ॥

( उद्द्योतः ) **अथेति** । वाक्यभेदाभेदाभ्यां पक्षद्वयभेद इति बोध्यम् । तत्र तृतीयः सिद्धान्तो भविष्यति ॥

( भाष्यम् )

**कश्चात्र विशेषः ?**

( २७७ प्रथमपक्षदूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ स्थानेऽन्तरतमे निर्वर्तके स्थानिनिवृत्तिः ॥ * ॥**

( भाष्यम् )

**स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति—दधि, मधु ॥**

( प्रदीपः ) **स्थानिनिवृत्तिरिति** । दधिशब्दस्य यदि दधिशब्द आदेशः क्रियते, तदा प्रयोजनाभावः । भिन्नरूपस्त्वादेशस्तदर्थस्याप्रत्यायक इति शब्दव्यवहारोत्साद एवेति भावः ॥

( उद्द्योतः ) **भिन्नरूप इति** । पर्यायो यद्यपि भिन्नरूपस्तदर्थप्रत्यायकश्च, तथापि विनिगमकाभावादुभयोः स्थानित्वमादेशत्वं च वाच्यम् । तथा च सूत्रमनारम्भसमं स्यादिति भावः ॥

( आक्षेपबाधकभाष्यम् )

**अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्रान्तर्यतो दधिशब्दस्य दधिशब्द एव, मधुशब्दस्य मधुशब्द एवादेशो भविष्यति ॥**

( प्रदीपः ) **अस्त्विति** । वचनसामर्थ्याच्छब्दव्यवहारस्य चानादित्वादिति भावः ॥

( उद्द्योतः ) शास्त्रप्रवृत्तौ हेतुः—**वचनसामर्थ्यम्** । सदृशादेशे हेतुः—**शब्देति** ॥

( आक्षेपसाधकभाष्यम् )

**यदि चैवम्, क्वचिद्वैरूप्यं तत्र दोषः स्यात्—विसं मुसलं "इण्कोः" इति षत्वं प्राप्नोति ॥**

( प्रदीपः ) **क्वचिद्वैरूप्यमिति** । यदि बिसशब्दस्य बिसशब्द आदेशस्तदा षत्वं नास्ति, न हि तदा सकार आदेशः । यदा तु सकारस्य सकार आदेशस्तदा षत्वप्रसङ्ग इति वैरूप्यप्राप्तिः । **अस्तेर्भूरित्यादयस्तु** विशेषविहितत्वादस्य बाधकाः ॥

( उद्द्योतः ) भाष्ये—**यदि चैवमिति** । स्थान्यपेक्षयाऽऽदेशे यत्र वैरूप्यं प्रसक्तं तत्र दोष इत्यर्थः ॥ **न हि तदेति** । आदेशरूपसस्यैव तेन षत्वविधानादिति भावः ॥ **यदा त्विति** । तद्भनयन् संसाध्य प्रत्याख्यातं भाष्ये । नित्यानां शब्दानां यथाकथंचिदन्वाख्यानं कार्यमिति कैयटः ॥ रूढ्या सर्वदोषपरिहार इति तदाशय इति ॥

---

१ **अत्र प्रयोगे**–भिन्नवद्भ्यामिति प्रयोगे ॥

२ अत्र ज्ञापकमप्याह—**अत एवेति** ॥ छाया ॥

३ नन्वेवं ङीन्संनियोगेन विधीयमाना नरशब्दस्य वृद्धिरलोन्त्यस्येत्यन्त्यस्य स्यात् । ततो **यस्येति चेति** लोपे नारीति न स्यादत आह—**नृनरयोरिति** । नर इति रान्तानुकरणम् । तस्य अः–नरः । नुश्च नरस्य चेति द्वन्द्व इति भावः ॥ नन्वेवं कथं ततो ङीनत आह—**तत्रेति** ॥ आवृत्त्यभावमाह—**पृथगपीति** । तथा च ताभ्यां ङीन्, नुर्नरशब्दाकारस्य च वृद्धिरित्यर्थः ॥ अत एव वानरशब्देऽतिप्रसङ्गो न, यतो नरशब्दान्ङीन् तदीयरेफान्तसंबन्ध्यकारस्यैव वृद्धिविधानाद् वानरे नरस्यानर्थक्यात्ततो न ङीनिति भावः ॥ छाया ॥

४ 'न्तर्गणसूत्रं यद्या' इति प. च. घ. पाठः ॥ **यद्यपीति** । यदि पदेन सूचितारुचिः शब्देन्दुशेखरे स्पष्टीकृता ॥ तथाहि—वस्तुत इदं गणसूत्रमनार्षम् । नुर्नरस्य च धर्म्यां नारीति **ऋतोऽञिति** सूत्रेण **नरस्य चेति वक्तव्यमिति** वार्तिकेन चाद्युदात्तनार्याः सिद्धेः । रूढ्या योग्यतया तद्धर्म्या नरत्वजातिविशिष्टैव बुध्यते । अत एव **वसेस्तव्यत्कर्तरि णिच्चेति** वचनं वास्तुनि भवो वास्तव्य इति दिगादित्वाद्यति

५ **ननु** द्वितीयतृतीययोर्यत्र षष्ठी तत्रोपस्थानस्य तुल्यत्वेन कथं भेदोऽत आह—**वाक्यभेदेति** ॥ **तत्र**—द्वितीयतृतीययोर्मध्ये ॥ **ष्यतीति**। **उक्तं** वेलनेन । एवं च भाष्यमुपलक्षणमिति भावः ॥ छाया ॥

६ **'स्थानेऽन्तरतमः'** इति सूत्रं यदि आदेशस्य निर्वर्तकं–सर्वेषां शब्दानां स्थानेऽन्तरतम आदेशोऽनेनापूर्वो विधीयत इत्यर्थाश्रयणे शब्दमात्रस्य निवृत्तिः प्राप्नोतीति वार्तिकार्थः ॥ 'न्तरतमनिर्वर्तके' इति क., 'निर्वर्तके सर्वस्थानि' इति च. पाठः ॥

७ **विनीति** । अयं स्थानी, अयमादेश इत्यत्रेत्यादिः ॥ छाया ॥

८ **यदि चैवं**–यद्यपि तत्रैवं निर्वाहस्तथापि ॥ छाया ॥

९ **'मुसलं-इति'** इति ख. पाठः ॥

१० क्वचित्सूचितमाह—**यदेति** ॥ छाया ॥

११ अग्रिमार्थमाह—**स्थान्यपेक्षेति** ॥ अत्र मानान्तरमप्याह—**तदिति** ॥ अन्यथा तदुक्तिरसंगतेति स्पष्टमेव ॥ नन्विदमुक्तप्रायमत आह—**किं चेति** ॥ द्वितीयदोषं परिहरति—**विद्यतीति** ॥

भाष्यकृद्वक्ष्यति—'इमे वर्णाः' इत्यादि ॥ नन्वस्य[1] निर्वर्तकत्वे आर्धधातुकेऽप्यस्त्यादीनामस्त्याद्यादेशाः स्युरिति कुतो नोक्तम्? किं चानेन सिद्धे तद्[2]व्यर्थं चेत्यत आह—**अस्तेरिति** । विद्यतिनिवृत्तिस्तत्फलमिति भावः ॥

(आक्षेपान्तरभाष्यम्)

**अपि च—इष्टा व्यवस्था न प्रकल्पेत । तद्यथा—तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते । एवमिमे वर्णा[3] मुहूर्तमपि नावतिष्ठेरन् ॥**

**(प्रदीपः) अपि चेति** । पुनरन्येनान्येनाऽऽदेशेन भवितव्यमिति भावः ॥ प्रयोजनमन्तरेण प्रवृत्तौ सत्यामसकृदपि प्रवृत्तिः स्यात् । ततश्च सर्वस्य निवृत्त्यभिमुखत्वात्साधुत्व[4]स्य व्यवस्था नोपपद्यते ॥

**(उद्द्योतः)** सदृशादेशविषयेऽपि दोषमाह—भाष्ये—**अपि चेति** ॥ ननु सदृशादेशे कथमिष्टव्यवस्थाऽसिद्धिरत आह—**पुनरिति** ॥ ननु लक्ष्ये लक्षणस्येति न्यायविरोधोऽत आह—**प्रयोजनमिति** । स[5]प्रयोजनशास्त्रप्रवृत्तौ हि प्रथमप्रवृत्त्यैव प्रयोजननिष्पत्तेर्न द्वितीयादिप्रवृत्तिरिति तद्बीजम् ॥ न चेदं प्रकृते—इति भावः ॥ भाष्ये—**व्यवस्थे**त्यस्य सापेक्षत्वादाह—**साधुत्वस्येति** ॥ परिनिष्ठितत्वव्याप्यत्वात्साधुत्वस्येति भावः ॥ एवंच दोषान्तमेव शास्त्रं स्यादिति तात्पर्यम् ॥

(द्वितीयपक्षाभ्युपगमभाष्यम्)

**अस्तु तर्हि प्रतिपादकम्। अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ॥**

**(प्रदीपः) अस्तु तर्हीति** । निर्वृत्तेषु लक्षणान्तरेणादेशेषु नियमोऽनेन क्रियते । तत्रान्तरतमः साधुर्नान्य इत्यर्थः ॥

**(उद्द्योतः) निर्वृत्तेष्विति** । अन्येन निर्वृत्तानां मध्येऽनेनान्तरतमस्यैव साधुत्वप्रतिपत्तिरिति भाष्यार्थ इति भावः ॥

(२७८ आक्षेपवार्तिकम् ॥ २ ॥)

**॥ * ॥ निर्वृत्त[6]प्रतिपत्तौ निर्वृत्तिः ॥ * ॥**

(भाष्यम्)

**निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिध्यति । सर्वे सर्वत्र प्राप्नुवन्ति ॥**

**(प्रदीपः) निर्वृत्तिरिति** । अभिमतस्य शब्दस्येत्यर्थः ॥

**(उद्द्योतः) अभिमतस्येति** । शास्त्रप्रामाण्यादुभयोरपि पाक्षिकसाधुत्वापत्त्येति भावः ॥

(आक्षेपतात्पर्यप्रश्नभाष्यम्)

**किं तद्युच्यते—निर्वृत्तिर्न सिध्यतीति?**

**न साधीयो निर्वृत्तिः सिद्धा भवति ॥**

(आक्षेपतात्पर्यवर्णनभाष्यम्)

**न ब्रूमः—निर्वृत्तिर्न सिध्यतीति ॥**

**किं तर्हि?**

**इष्टा व्यवस्था न प्रकल्पेत । न सर्वे सर्वत्रेष्यन्ते ॥**

**(प्रदीपः) इष्टा व्यवस्थेति । अकः सवर्णे दीर्घ** इत्यनेन लक्षणेन यदा सर्वे दीर्घाः कृतास्तदा तेषां साधुत्वं विज्ञातम् । न चानेन तेषामेवासाधुत्वं शक्यं प्रतिपादयितुमिति भावः ॥

**(उद्द्योतः)** दीर्घादेरिष्टा व्यवस्थाऽनेन भविष्यतीत्यत आह—**अक इति** । ए[7]कप्रमाणबोधितस्य सामान्यविशेषभावाभावे न प्रमाणान्तरेण आत्यन्तिको निरासः शक्यः कर्तुमिति भावः ॥

(प्रत्याक्षेपभाष्यम्)

**इदमिदानीं किमर्थं स्यात्?**

**(उद्द्योतः)** ननु शास्त्रप्रामाण्यादुभयोरपि साधुत्वे इदं व्यर्थं स्यादिति पृच्छति—**इदमिदानीमिति** ॥

(२७९ प्रत्याक्षेपसमाधानवार्तिकम् ॥ ३ ॥)

**॥ * ॥ अनर्थकं च ॥ * ॥**

(भाष्यम्)

**अनर्थकमेतत्स्यात् । यो हि भुक्तवन्तं ब्रूयात् 'मा भुक्थाः' इति, किं तेन कृतं स्यात् ॥**

**(उद्द्योतः)** उत्तरयति—**अनर्थकमिति** । 'भुङ्क्थाः' इति निरनुस्वारः पाठः ॥

(आनर्थक्यपरिहारेण समाधानभाष्यम्)

***॥ उ[8]क्तं वा ॥***

**किमुक्तम्?**

***सिद्धं तु षष्ठ्यधिकारे वचनात्* इति । षष्ठ्य[9]-**

---

१ 'स्य निवर्तकत्वे' इति ज. प. पाठः । अस्य स्थानिनिवर्तकत्वं बोध्यमिति तत्पाठाशयः ॥

२ **तत्**—अस्तेर्भूरिति ॥ **तत्फलं**—अस्तेर्भूरित्यस्य फलम् ॥

३ 'वर्णा अपि' इति क. पाठः ॥

४ 'साधुत्वव्य' इति अ. पाठः ॥

५ **सप्रयोजनत्वं** शास्त्रप्रवृत्तेर्विशेषणम् ॥ **तद्बीजं**—'लक्ष्ये' इति न्यायबीजम् ॥ ननु कुतो नात आह—**परीति** ॥ इदानीं तु तदाक्रान्तत्वेन तत्त्वाभावादिति भावः ॥ पर्यवसितमाह—**एवं चेति** । पुनःपुनः प्रवृत्तौ चेत्यर्थः ॥

६ **निर्वृत्तेति** । अन्यशास्त्रैर्निर्वृत्तस्यादेशस्यानेन प्रतिपत्तिरित्याश्रयणे—'दैत्यारिः' इत्यादौ 'अकः सवर्णे दीर्घः' इत्यनेन सर्वे दीर्घाः प्राप्नुवन्ति, ततश्चेष्टस्य निर्वृत्तिर्न सिद्ध्यति—अनिष्टानामप्यादेशानां 'ई ऊ' इत्यादीनां तत्र प्राप्तिः स्यादिति तदर्थः ॥

७ **एकेति** । **अक** इत्येतद्बोधितसाधुत्वस्येत्यर्थः ॥ **प्रमाणान्तेति** । अनेनेत्यर्थः ॥ प्रामाणिकत्वादिति भावः ॥ छाया ॥

८ 'उक्तं च' इति आ. पाठः ॥

९ **षष्ठ्यधीति** । तत्र वर्तमानोऽयं योगो वक्ष्यमाणप्रकारेण व्याख्येय इत्यर्थः ॥ तमेवाह—**स्थाने इति** । तस्य प्रसङ्गे विहितानामन्तरतम एवेत्यर्थः ॥ छाया ॥

धिकारेऽयं योगः कर्तव्यः,—"स्थानेऽन्तरतमः" 'षष्ठीनिर्दिष्टस्य' इति ॥

( प्रदीपः ) उक्तं वेति । 'इको गुणवृद्धी' इत्यत्र । यत्र षष्ठी तत्रेदमुपतिष्ठते । तेनैकवाक्यताऽनेन सूत्रेण विधिवाक्यानामिति विधानकाल एवान्तरतम आदेशो विधीयते ॥

( उद्योतः ) आनर्थक्यं परिहरति—उक्तं वेति ॥ द्वितीयपक्षाद्भेदमुपपादयति-एकवाक्यतेति । एवं चेतरस्याविधानमेवेति इष्टव्यवस्थासिद्धिरिति भावः ॥

परे तु[1]—उत्पन्नानामनेन निवृत्तिर्लिंगादिनेवेति भावः ॥ एतदाशयमजानान आह—'निवृत्तिर्न[2] सिध्यति' इति । तदभ्युपेत्य समाधत्ते—उक्तं वेति । भुक्तवतो भोजनफलतृप्तेर्जातत्वान्निषेधस्य वैयर्थ्येऽपि शास्त्रे वृद्धिरादैच्सूत्रभाष्योक्तशास्त्रप्रामाण्याल्लिंगादिनेव जातनिवृत्तिरिति वाशब्देन सूचितमित्याहुः ॥

( अनिष्टनिराकरणम् )

( आक्षेपे वार्तिकांशानुवादः ॥ )

*॥ प्रत्यात्मवचनं च ॥*

( भाष्यम् )

प्रत्यात्ममिति च वक्तव्यम् ॥

किं प्रयोजनम् ?

यो यस्यान्तरतमः स तस्य स्थाने यथा स्यात् । अन्यस्यान्तरतमोऽन्यस्य स्थाने मा भूदिति ॥

( प्रदीपः ) प्रत्यात्ममिति । आत्मानमात्मानं प्रतीति समासः । स्थान्यात्मनोऽन्तरतम इत्यर्थः ॥

( उद्योतः ) आत्मानमिति । अनश्चेति टच् ॥ स्थान्यात्मन इति । स्थानिपदार्थस्येत्यर्थः ॥

( २८० समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् ॥ * ॥

( भाष्यम् )

प्रत्यात्मवचनमशिष्यम् ॥

किं कारणम् ?

'स्वभावसिद्धत्वात्' । स्वभावत एतत्सिद्धम् । तद्यथा—समाजेषु-समाशेषु-समवायेषु चाऽऽस्यतामित्युक्ते न चोच्यते—प्रत्यात्ममिति, प्रत्यात्मं चासते ॥

( प्रदीपः ) स्वभावसिद्धत्वादिति । तुल्यन्यायतया सूत्रप्रत्याख्यानायैतदुक्तं[3] न तु संबन्धिशब्दत्वादिति ॥ समाजेष्विति । समाजः-उत्सवेषु संघातः । समाशः-सहभोजनम् । समवायः-कस्यांचित् क्रियायां मेलनम् ॥

( उद्योतः ) नन्वन्तरतमशब्दस्य सदृशार्थकत्वेन तुल्यास्यप्रयत्नमित्यत्रैव संबन्धिशब्दत्वादिति कुतो नोक्तमत आह—तुल्येति ॥ ( भाष्ये ) प्रत्यात्मं चासत इति । स्वस्वसमाजेष्वेवासत[4] इत्यर्थः ॥ कस्यांचिदिति । धर्मनिर्णयादिक्रियायामित्यर्थः ॥

( सूत्रप्रत्याख्यानाधिकरणम् )

( २८१ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ अन्तरतमवचनं च ॥ * ॥

( भाष्यम् )

अन्तरतमवचनं चाशिष्यम् । योगश्चाप्ययमशिष्यः[5] ॥

कुतः ?

स्वभावसिद्धत्वादेव । तद्यथा—समाजेषु-समाशेषु-समवायेषु चास्यतामित्युक्ते नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः । येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते ॥

तथा—गावो दिवसं चरितवत्यो यो यस्याः प्रसवो भवति तेन सह शेरते ॥

तथा—यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति ॥

( प्रदीपः ) नैव कृशा इति । गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः । एवमिहापि यदीयमर्थं यः शक्नोति वक्तुं तस्य स्थाने स एव भवति ॥ गाव इति । तिरश्चामप्ययं[6] व्यवहारः संकीर्णानामसंकरलक्षणः । एवं चोदनायां संकीर्णा अप्यादेशा असंकरेण प्रवर्त्स्यन्ति ॥ तथा यानीति । यथा तत्र सादृश्याद्वर्गीभवनं विच्छिन्नसाहचर्याणामपि भवति, तथा स्थान्यादेशानां स्थानादिना सादृश्येन वर्गीभवनमित्यर्थः ॥

( उद्योतः ) अर्थकृतान्तर्ये सति[7] तदेव प्रयोजकमित्याह—गुणेत्यादि । पाण्डुत्वं-गुणः । कृशत्वादि-प्रमाणम् ॥ विद्यादीति । आदिनोत्सवाशनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसङ्ग्रहः । एवंच अन्तरतमो भवतीति यत्रानेकविधमिति च न्यायसिद्धमिति

१ वाशब्दस्यासमर्थितत्वादाह—परे त्विति ॥ शास्त्रे इति निवृत्तावन्वेति ॥ क्वेति । दर्भपवित्रपाणिरित्यादिना ॥ छाया ॥

२ ज. पुस्तके 'निवृत्तिर्न सिध्यति' इति पाठः । तेनानुमीयते निर्वृत्तप्रतिपत्तावितिवार्तिके 'निवृत्तिर्न सिध्यति' इति भाष्यपाठोऽनेन दृष्टः ॥

३ प्रत्याख्यानाय-प्रत्याख्यानमध्ये प्रतिपादयितुम् ॥ छाया ॥

४ स्वस्वसमाजेष्वेवेति । तदादिष्वेवेत्यर्थः ॥ छाया ॥

५ अन्तरतम इति पदमात्राभ्रमाय व्याचष्टे—योगश्चापीति ॥ छाया ॥

६ तथेत्यस्य स्वारस्यमाह—तिरश्चामपीति ॥ छाया ॥

७ सतीति । अनेन—असति अन्यस्यापि परिग्रह इति न गुणवृद्ध्यादिषु दोष इति सूचितम् ॥ तदेतद् ध्वनयन्नाह—एवं चेति ॥ छाया ॥

भावः ॥ दृष्टान्ते विवक्षितार्थमाह—**सङ्कीर्णानामिति** ॥ भाष्ये **प्रसवः**-वत्सः ॥ **तेन सह**—स्वस्वप्रसवेन सह ॥ **शेरत इति** । शेतिः स्थितौ ॥ **एवं चोदनायामिति** । अनया रीत्या विधिशास्त्रेऽपीत्यर्थः ॥ **युक्तक**शब्दो युग्मवाची । **संघुष्टक**शब्दस्तत्तद्युगवहनादिनाऽत्यन्तपरिचितवाची ॥ अनेनापि ग्रन्थेन **यत्रानेकविध**मित्यर्थः साधित इत्याहुः ॥ **सादृश्यादिति** । तत्तद्युगवहनाद्यत्र सादृश्यम् ॥

( दृष्टान्तबाधकभाष्यम् )

**एवं तावच्चेतनावत्सु ॥**

( दृष्टान्तान्तरभाष्यम् )

**अचेतनेष्वपि—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति, नोर्ध्वमारोहति । पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः ॥**

**तथा—या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः । स धूम आकाशे निवाते नैव तिर्यग्गच्छति, नार्वागवरोहति । अब्विकारोऽप एव गच्छत्यान्तर्यतः ॥**

**तथा—ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग्गच्छति, नार्वागवरोहति । ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः ॥**

( प्रदीपः ) **अचेतनेष्वपीति** । न्यायस्य व्याप्तिप्रतिपादनपरमेतत् ॥ **अब्विकार इति** । अन्तरिक्षे सूक्ष्मः समुद्रोऽस्तीति तद्विकारः सर्वा आप इति काष्ठादिस्थानामपामग्निसंयोगात् धूमो विकारः ॥ सूर्यविकारोऽर्चिः सूर्यमेव गच्छति ॥

( उद्द्योतः ) **अन्तरिक्षे इति** । अन्तरिक्षे भवा आन्तरिक्ष्यः ॥ अत एव निदाघे निशि निरावरणे शयानानां शैत्योपलम्भः ॥ तस्यैव च रविकिरणसंपर्केण मेघरूपतया वायुयोगाद्वृष्टिः ॥ आन्तरिक्ष्याणामपां परम्परया धूमो विकार इति दर्शयति—**तद्विकारः सर्वा इति** । **सूर्यविकार इति** । अत एव दावाग्नेर्मध्याह्नादौ सूर्यकरसंपर्कात् क्रौर्यातिशयो दृश्यते ॥

( सूत्रसत्ताप्राप्तदूषणनिराकरणम् )

( २८२ दूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः ॥ * ॥**

( भाष्यम् )

**व्यञ्जनव्यतिक्रमे स्वरव्यतिक्रमे च तत्कालता प्राप्नोति ॥ 'व्यञ्जनव्यतिक्रमे'-इष्टम्, उप्तम् । आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्याऽर्धमात्रिक इक् प्राप्नोति ॥**

( प्रदीपः ) लोकव्यवहाराश्रयणेन प्रत्याख्याते सूत्रे तदनाश्रयणेन योगारम्भे दोषमाह—**व्यञ्जनेति** । व्यतिक्रमः-स्थानित्वेन निवृत्तिः । इदमेव शास्त्रं निर्वर्तकमिति भावः ॥

( उद्द्योतः ) **तदनाश्रयणेनेति** । मन्दमध्यबुद्ध्यर्थमित्यर्थः ॥ ननु नाऽर्धमात्रिक इगित्यत आह—**इदमेवेति** ॥ 'कार्याः शब्दाः' इति दर्शने प्रमाणादिना तत्तदन्तरतमवर्णनिर्वर्तकमित्यर्थः ॥ एवं च लोकवेदयोरभावेऽपि एतच्छास्त्रसिद्ध एव स इति भावः ॥

( दूषणबाधकभाष्यम् )

**नैव लोके नैव वेदेऽर्धमात्रिक इगस्ति ॥**

**कस्तर्हि ?**

**मात्रिकः । योऽस्ति स भविष्यति ॥**

( प्रदीपः ) **नैव लोक इति** । नित्याः शब्दा अन्वाख्यायन्ते, निवृत्तिपक्षेऽप्युच्चारणस्याशक्यत्वादिति भावः ॥

( उद्द्योतः ) यदुक्तं—'इदमेव' इति तत्राह—**नित्या इति** ॥ **निवृत्तिपक्षेऽपीति** । 'शास्त्रकार्याः शब्दाः' इति दर्शनेऽपीत्यर्थः ॥ **उच्चारणस्येति** । तस्य लोकाधीनत्वादिति भावः ॥

( द्वितीयदूषणभाष्यम् )

**'स्वरव्यतिक्रमे-दध्यत्र, मध्वत्र, कुमार्यत्र, ब्रह्मबन्ध्वर्थम् । आन्तर्यतो मात्रिकस्य द्विमात्रिकस्येको मात्रिको द्विमात्रिको यण् प्राप्नोति ॥**

( दूषणबाधकभाष्यम् )

**नैव लोके नैव वेदे मात्रिको द्विमात्रिको वा यणस्ति ॥**

**कस्तर्हि ?**

**अर्धमात्रिकः । योऽस्ति स भविष्यति ॥**

( प्रदीपः ) **नैव लोक इति** । कुक्कुटादिषु द्वे व्यञ्जने, न त्वेकमात्रिकमिति ॥

( २८३ दूषणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अक्षु चानेकवर्णादेशेषु ॥ * ॥**

( भाष्यम् )

**अक्षु चानेकवर्णादेशेषु तत्कालता प्राप्नोति ॥ "इदम इश्" । आन्तर्यतोऽर्धतृतीयमात्रिकस्येदमोऽर्धतृतीयमात्रमिवर्णं प्राप्नोति ॥**

---

१ तस्य वैयर्थ्यं परिहरति—**अनेनापीति** ॥ अपिना पूर्वसमुच्चयः ॥ छाया ॥

२ 'ष्वपि । तद्यथा लोष्ट–' इति ख. पाठः ॥

३ सवाते तिर्यग्गमनादिदर्शनादाह—**निवात इति** ॥ एवमग्रेऽपि ॥ छाया ॥

४ ज्योतिरर्थमाह—**सूर्येति** ॥ छाया ॥

५ अत एव प्रागुपयुक्तं भाष्यार्थमाह—**अन्तरिक्षे इति** ॥ तत्र तत्सत्त्वे प्रमाणमाह—**अत एवेति** ॥ **तस्यैव च**-सूक्ष्मसमुद्रस्यैव च ॥ भाष्यात् साक्षात्त्वप्रतीतेराह—**परम्परेति** ॥ छाया ॥

६ अत्र प्रमाणमाह—**अत एवेति** ॥ छाया ॥

७ **व्यञ्जनेति** । उच्चारणक्रमविवक्षया पूर्वनिपातः ॥ छाया ॥ द्वयोकयोर्लक्षणहेत्वोरजाद्यतः क्रोडादिबह्वच इत्यादिनिर्देशैः सिद्धस्य पूर्वनिपातप्रकरणानित्यत्वस्यैव स्वाभिमतीकरणायेदमिति तत्त्वम् ॥ दाधिमथाः ॥

( प्रदीपः ) **अर्धतृतीयमात्रमिति** । अत्वैकादेशयोः कृतयोरिश्भाव इति यदा प्रक्रियेति भावः ॥

( उद्योतः ) ईदमस्त्रिमात्रिकत्वेन 'अर्धतृतीयमात्रिकः' इत्ययुक्तमत आह—**अत्वेति** । परत्वादत्वेऽन्तरङ्गत्वादेकादेशे - इति भावः ॥

( दूषणबाधकभाष्यम् )

**नैष दोषः । 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येवं न भविष्यति ॥**

( प्रदीपः ) **भाव्यमानेनेति** । 'नैव लोके' इत्ययं परिहारो नोक्तः । यदा विशेषविहितत्वादत्वमिश्भावेन बाध्यते - इति न्यायस्तदा त्रिमात्रस्य त्रिमात्रः संभवात्स्यादेव । प्लुताप्लुतप्रसङ्गे च **प्लुतश्च विषये स्मृत** इत्युच्यते । अत्र तु प्लुतस्यैव प्राप्तिः ॥

( उद्योतः ) **प्लुताप्लुतेति** । तादृशस्थले हि सपादसप्ताध्यायीस्थेन प्लुतविधौ त्रिपादीस्थप्लुतस्यासिद्धत्वात्तद्विषयेऽप्यनेनैव प्लुतविधौ तदंशेऽनुवादत्वं - अन्यांशे विधित्वं - इति शास्त्रस्य वैरूप्यापत्तिस्तद्बीजम् । शास्त्रं त्वप्लुतविधानेन चरितार्थमिति । प्लुतमात्रविधाने तु तद्विषयकलक्षणवैयर्थ्यापत्त्यांऽशेऽनुवादत्वकल्पना सोढव्यैव । **सामर्थ्येनान्तरतम**परिभाषाबाधकल्पनाऽपेक्षयाऽनुवादत्वस्य युक्तत्वाचेति भावः ॥

( २८४ दूषणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ गुणवृद्ध्येज्भावेषु च ॥ * ॥**

( भाष्यम् )

**गुणवृद्ध्येज्भावेषु च तत्कालता प्राप्नोति ॥ खट्वा+इन्द्रः-खट्वेन्द्रः, खट्वा+उदकम्-खट्वोदकम्, खट्वा+ईषा-खट्वेषा, खट्वा+ऊढा-खट्वोढा, खट्वा+एलका-खट्वैलका, खट्वा+ओदनः-खट्वौदनः, खट्वा+ऐतिकायनः-खट्वैतिकायनः, खट्वा+औपगवः-खट्वौपगव इति । आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशाः प्राप्नुवन्ति ॥**

( प्रदीपः ) **खट्वेन्द्र इति** । संज्ञयाऽत्र गुणवृद्ध्योर्भावनम् । संज्ञा च भिन्नकालानामपि स्यादिति 'भाव्यमानेन-' इति परिहारस्यात्रासंभवः ॥

( उद्योतः ) **संज्ञा चेति** । कार्यकालपक्षेऽपि यथा भाव्यमानत्वाभावस्तथोपपादितं वृद्धिसंज्ञासूत्रे ॥

( दूषणबाधकभाष्यम् )

**नैष दोषः । तपरे गुणवृद्धी ॥**

( दूषणसाधकभाष्यम् )

**ननु च तः परो यस्मात्सोऽयं तपरः ॥**

( दूषणबाधकभाष्यम् )

**नेत्याह । तादपि परस्तपर इति ॥**

( आक्षेपभाष्यम् )

**यदि तादपि परस्तपरः, "ऋदोरप्" इहैव स्यात्—यवः, स्तवः । लवः, पव इत्यत्र न स्यात् ॥**

( आक्षेपबाधकभाष्यम् )

**नैष तकारः ॥**

**कस्तर्हि ?**

**दकारः ॥**

( आक्षेपसाधकभाष्यम् )

**किं दकारे प्रयोजनम् ?**

( प्रतिबन्दीभूतं समाधानभाष्यम् )

**अथ किं तकारे ?**

**यद्यसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपि ॥**

( दूषणवार्तिकशेषभाष्यम् )

**'एज्भावे'—कुर्वाते, कुर्वाथे । आन्तर्यतोऽर्धतृतीयमात्रस्य टिसंज्ञकस्यार्धतृतीयमात्र एच् प्राप्नोति ॥**

( प्रदीपः ) **एज्भाव इति** । प्रत्याहारः "पूतक्रतोरै च" "मनोरौ वा" इत्यादिसंग्रहार्थः । तत्र हि मात्रिक एवैकार औकारश्च स्यात् ॥

( उद्योतः ) **प्रत्याहार इति** । वार्तिके गुणवृद्ध्येज्भावेषु इति द्वन्द्वः, न तु कर्मधारयः । भाष्यविरोधादिति भावः ॥ **तत्र हीति** । प्रमाणत आन्तर्यादिति भावः ॥

( दूषणोद्धारभाष्यम् )

**नैव लोके न च वेदेऽर्धतृतीयमात्र एजस्ति ॥**

( २८५ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् ॥ * ॥**

( भाष्यम् )

**ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गः । सर्वे गुणवृद्धिसंज्ञका ऋवर्णस्य स्थाने प्राप्नुवन्ति ॥**

**किं कारणम् ?**

**'अविशेषात्' । न हि कश्चिद्विशेष उपादीयते—एवंजातीयको गुणवृद्धिसंज्ञ ऋवर्णस्य स्थाने भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ॥**

---

१ शङ्कते—**इदम इति** ॥ छाया ॥

२ 'त्रिमात्रसम्भवात्स्यादेव प्लुतः' इति ख. च. पाठः ॥

३ अत्र बीजमाह—**तादृशेति** ॥ इतीत्यस्य भाव इत्यत्रान्वयः ॥ एवं प्लुताप्लुतेत्यस्याशयमुक्त्वा अत्र त्वित्यस्याशयमाह—**प्लुतेति** ॥ **अंश** इति । पूर्वोक्तरीत्योक्तम् ॥ **चेति** । इति च ॥ छाया ॥

४ 'इदं यथोद्देशपक्षे' इति भ्रमनिरासायाह—**कार्येति** ॥ अपिना यथोद्देशसमुच्चयः ॥ वाक्यभेदादिति भावः ॥ छाया ॥ 'कार्यकालपक्षे यथा' इति ज. पाठः ॥

**( प्रदीपः ) ऋवर्णस्येति ।** अत्र ह्रस्वस्याकार एव गुणः स्यात्, स चेष्यत एव। दीर्घस्य त्वेङौ स्याताम्, तुल्यप्रमाणत्वात्। तथा ह्रस्वस्य दीर्घस्य च सर्वे वृद्धिसंज्ञकाः प्राप्नुवन्ति । समुदायापेक्षया तु सर्वप्रसङ्ग इत्युच्यते ॥

**( उद्द्योतः )** नन्वेवं ह्रस्वे सर्वगुणप्रसङ्गस्यानुपपादनाद्वर्णमात्रे सर्वप्रसङ्ग इत्यनुपपन्नमत आह—**समुदायापेक्षयेति ।** ऋवर्णीयह्रस्वादिसमुदायापेक्षयेत्यर्थः ॥

( २८६ समाधानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ न वा ऋवर्णस्य स्थाने रपरप्रसङ्गाद्वर्णस्यान्तर्यम् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं काणरम् ?**

**'ऋवर्णस्य स्थाने रपरप्रसङ्गात्' । उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते । तत्र ऋवर्णस्यान्तर्यतो रेफवतो रेफवानकार एवान्तरतमो भवति ॥**

**( प्रदीपः ) नवेति ।** 'उरण् रपरः' इत्यनेन गुणवृद्धिशास्त्रस्यैकवाक्यतायां विधीयमान एवाण् रपरो भवतीति रश्रुतेः स्थानेऽरारौ गुणवृद्धी भवत इत्यर्थः ॥

**( उद्द्योतः ) गुणवृद्धिशास्त्रस्येति ।** प्रतिलक्ष्यं लक्षणभेदाद्वर्णविषयगुणादिशास्त्रस्येत्यर्थः ॥ अङ्गान्तस्येको ऋवर्णस्य रपरोऽण्रूपो गुण इति वाक्यार्थ इति भावः ॥ **रश्रुतेरित्यनेनैकदेशद्वारा** स्थानत आन्तर्यमुक्तम् ॥

( २८७ आक्षेपवार्तिकम् ॥ ६ ॥ )

**॥*॥ सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् ॥*॥**

( भाष्यम् )

**सर्वादेशस्तु गुणवृद्धिसंज्ञक ऋवर्णस्य प्राप्नोति ॥**

**किं कारणम् ?**

**'अनेकाल्त्वात्' । "अनेकाल्शित्सर्वस्य" इति ॥**

**( प्रदीपः ) सर्वादेश इति ।** ऋवर्णस्य स्थानेऽरारौ क्रियमाणाव**लोऽन्त्यस्ये**त्येतद्बाधेनानेकाल्त्वात्सर्वादेशौ प्राप्नुतः ॥

**( उद्द्योतः ) ऋवर्णस्येति ।** ऋवर्णान्ताङ्गस्येत्यर्थः ॥ **सर्वादेशाविति ।** तत्त्वेऽपि समुदायान्तर्वर्तित्वाद्वर्णस्य तदादेशत्वमपि खट्वर्श्य इत्यादाविव वक्तुं शक्यमिति भावः ॥

( २८८ समाधानवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ न वाऽनेकाल्त्वस्य तदाश्रयत्वाद्वर्णादेशस्याविघातः ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ?**

**'अनेकाल्त्वस्य तदाश्रयत्वात्' । यदाऽयमुः स्थाने, तदाऽयमनेकाल् । अनेकाल्त्वस्य तदाश्रयत्वाद्वर्णादेशस्य विघातो न भविष्यति ॥**

**( प्रदीपः ) नवेति ।** 'अङ्गस्य' इति षष्ठी पूर्वमेवान्त्यमिकमुपसंह्रियते । ततश्च ऋवर्णस्य स्थानित्वे विज्ञाते रपरत्वमानुपूर्व्या सिद्धत्वात् पूर्वप्रवृत्त**मलोऽन्त्यस्ये**त्युपसंहारं न बाधत इत्यर्थः॥

**( उद्द्योतः ) पूर्वमेवेति ।** अन्यथा ऋवर्णस्थानिकत्वाभावाद्रपरत्वमेव न स्यात् । न च समुदायान्तःपातिऋकाराश्रयेण रपरत्वम् । प्रत्यक्षे ऋवर्णस्थानित्वे चरितार्थस्यानुमानिके प्रवृत्त्ययोगात् । खट्वर्श्य इत्यादौ तु **पूर्वपरयो**रित्यधिकारात् प्रत्यक्षमेव स्थानित्वमिति भावः ॥ **पूर्वप्रवृत्तमिति ।** उपजीव्यं चेत्यपि बोध्यम् ॥ **न बाधते**-इत्यत्रानेकाल्शित्सर्वस्येति सूत्रं कार्यं ॥

( समाधानान्तरभाष्यम् )

**अथवा—अनान्तर्यमेवैतयोरान्तर्यम् । एकस्यान्तरतमा प्रकृतिर्नास्ति, अपरस्याप्यन्तरतम आदेशो नास्ति । एतदेवैतयोरान्तर्यम् ॥**

**( प्रदीपः ) अथवेति ।** निर्वृत्तस्याणो रपरत्वविधानेऽपि न दोष इत्यर्थः ॥ **अनान्तर्यमेवेति ।** न हि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितम्, रूपान्तरेणापि सादृश्यसंभवात्परिग्रहाच्चेति भावः ॥ ऋवर्णस्य मात्रिकस्य मात्रिकोऽकारो गुणोऽन्तरतमोऽस्त्येवेति चेत् । तदर्थस्य यत्नस्याकरणाददोष एव । दीर्घस्य तुल्यप्रमाणत्वादेकारौकारावन्तरतमौ स्त इति चेत् । भवेदेतद् यदा भेदापेक्षा क्रियते । ऋवर्णमात्रस्य ह्रस्वाद्यवान्तरभेदानपेक्षायां स्थानकृतमान्तर्यं न केनचिदस्तीति 'अनान्तर्यमेव-' इत्याद्युक्तम् ॥

**( उद्द्योतः )** रेफवतो रेफवानन्तरतम एवेति **अथवे**त्ययुक्तमत आह—**निर्वृत्तस्येति ॥ परिग्रहाच्चेति । पाददन्तेत्यादौ** स्थान्यादेशभावमते वर्णसाम्यकृतस्येति भावः ॥ सदृशसंबन्ध्यभाववत्त्वमुभयोः साधारणधर्मरूपं सादृश्यमिति तात्पर्यम् ॥ **यत्नस्येति ।**

१ **अत्र**-एषां मध्ये ॥ छाया ॥

२ यथाश्रुतेऽन्यत्रानिष्टापत्तेराह—**प्रतीति** ॥ तत्स्वरूपमाह—**अङ्गान्त्येति** ॥ **रश्रुतेरिति ।** बहुव्रीहिः ॥ छाया ॥

३ नन्वेवं रपरत्वमेव कथमत आह—**तत्त्वेऽपीति ।** सर्वादेशत्वेऽपीत्यर्थः ॥ **तदिति ।** ऋवर्णेत्यर्थः ॥ एवमन्यत्र दृष्टमित्याह—**खट्वर्श्येति** ॥ छाया ॥

४ विपक्षे बाधकमाह—**अन्यथेति** ॥ पूर्वोक्तयुक्तिं खण्डयति—**न चेति** ॥ दृष्टान्तासंगतिं परिहरति—**खट्वर्श्य इति** ॥ कर्तुरनुपादानादाह—**अनेकालिति** ॥ छाया ॥

५ शङ्कते—**ऋवर्णस्येति** ॥ एतत्सूचितमाह—**अनान्तर्यमिति** ॥ छाया ॥

६ शङ्कते—**रेफेति** ॥ **कृतस्येतीति ।** आन्तरतम्यस्येत्यर्थः ॥ नन्वेवं प्रकृते किम्, अतः प्राचां मतेनान्तर्यपदार्थमाह—**सदृशेति** ॥ छाया ॥

परिहारान्तराभिधानरूपस्येत्यर्थः ॥ स्थानकृतमिति । अनान्तर्यमिति भाष्यस्य स्थानकृतान्तरतमाभाव इत्यर्थः ॥

( २८९ समाधानान्तरवार्तिकम् ॥ ८ ॥ )

**॥*॥ संप्रयोगो वा नष्टाश्वदग्धरथवत्॥*॥**

( भाष्यम् )

अथवा नष्टाश्वदग्धरथवत्सह संप्रयोगो भवति । तद्यथा—'तवाश्वो नष्टो ममापि रथो दग्धः, उभौ संप्रयुज्यावहै' इति । एवमिहापि—'तवाप्यन्तरतमा प्रकृतिर्नास्ति, ममाप्यन्तरतम आदेशो नास्ति, अस्तु नौ संप्रयोगः' इति ॥

( प्रदीपः ) **सम्प्रयोगो वेति** । यदा 'स्थानेऽन्तरतमः' इत्येतत्प्रत्याख्यातमित्यर्थः ॥

( उद्द्योतः ) **नष्टाश्वदग्धरथवदिति** । बहुव्रीहिगर्भद्वन्द्वाद्वतिः ॥ पूर्वोक्तेनाथवेत्यनेन पौनरुक्त्यं परिहरति—**यदेति** ॥ केचित्तु तत्प्रत्याख्यानेऽपि लोकन्यायेन सदृश एवादेश इत्यर्थः साधितो भगवता - इति प्रत्याख्यानाप्रत्याख्यानयोः को विशेषः? तस्मादनान्तर्यस्याभावरूपस्य सादृश्यत्वानङ्गीकारेऽप्याह—**नष्टाश्वेति** ॥ ऋवर्णस्य स्थानित्वेनावर्णस्यादेशत्वेन ग्रहणसामर्थ्यादसादृश्येऽपि स्थान्यादेशभावः । यथा नष्टाश्वदग्धरथयोरत्यन्तभिन्नयोरपि असदृशयोरपि संप्रयोग इति तात्पर्यमित्याहुः ॥

( समाधानबाधकभाष्यम् )

विषम उपन्यासः ॥ चेतनावत्सु आर्थात्प्रकरणाद्वा लोके संप्रयोगो भवति । वर्णाश्च पुनरचेतनाः, तत्र किंकृतः संप्रयोगः ?

( समाधानसाधकभाष्यम् )

यद्यपि वर्णा अचेतनाः । यस्त्वसौ प्रयुङ्क्ते स चेतनावान् ॥

( एकादेशे दूषणनिराकरणम् )

( २९० आक्षेपवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ एजवर्णयोरादेशोऽवर्णं स्थानिनोऽवर्णप्रधानत्वात् ॥ * ॥**

( भाष्यम् )

एजवर्णयोरादेशोऽवर्णं प्राप्नोति । खट्वैलका, मालौपगवः ॥

किं कारणम् ?

'स्थानिनोऽवर्णप्रधानत्वात्' । स्थानी ह्यत्रावर्णप्रधानः ॥

( प्रदीपः ) **अवर्णप्रधानत्वादिति** । इममेव हि न्याय[१]माश्रित्योक्तम् – ऐचोश्चोत्तरभूयस्त्वादिति ॥

( उद्द्योतः ) [२]प्रधानत्वं - भूयस्त्वेन ॥

( २९१ समाधानवार्तिकम् ॥ १० ॥ )

**॥ * ॥ सिद्धं तूभयान्तर्यात् ॥ * ॥**

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ?

'उभयान्तर्यात्' । उभयोर्योऽन्तरतमस्तेन भवितव्यम् । न चावर्णमुभयोरन्तरतमम् ॥ स्थानेऽन्तरतमः ॥ ५० ॥

( प्रदीपः ) **उभयान्तर्यादिति** । ह्रस्वशासने ह्यैचः समुदायान्तरतमाभावाद[४]चोश्चेत्युक्तम् । इह तु संभवत्येव स्थानेन समुदायान्तरतम इत्यर्थः ॥ ५० ॥

( उद्द्योतः ) [३]भूयस्त्वन्यायस्तर्हि केत्यत आह—**ह्रस्वेति** ॥५०॥

( ४६ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ७ ॥ )

# उरण् रपरः ॥ १ । १ । ५१ ॥

( सूत्रस्य रपरत्वमात्रविधायकत्वम् )

( पक्षद्वयोपस्थापकभाष्यम् )

किमिदमुरण्रपरवचनमन्यनिवृत्त्यर्थम्-'उः स्थाने अणेव भवति रपरश्च' इति । आहोस्विद्रपरत्वमात्रमनेन विधीयते—'उः स्थाने अण् च अनण् च । अण् रपरः' इति ?

कश्चात्र विशेषः ?

( प्रदीपः ) **उरण्०** ॥ ५१ ॥ **किमिदमिति** । षष्ठीप्रकरणाद्यत्र षष्ठी तत्रेदमुपतिष्ठते । तत्र किमादेशान्तराणां बाधकमणं निर्वर्तयति, [४]तस्य च वाक्यभेदेन रपरत्वम् । आहोस्विद्रपरत्व[५]मात्रमनेन क्रियते, उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण् स रपर इति **प्रश्नः** ॥ तत्र केषांचित्पाठः—**अण् भवति रपरश्चेति** । [६]तत्रापूर्वोऽण् विधीयमान आदेशान्तराणां बाधकः । अन्येषां तु पाठः—**अणेव भवतीति** । तत्र [७]सामर्थ्याद्याऽन्यनिवृत्तिः सैवैवकारेण प्रदर्श्यते ॥

( उद्द्योतः ) उरण् र० ॥ ५१ ॥ भाष्ये—**उरण्रपरवचनमिति** । सूत्र[८]स्थविसर्गप्राग्भागानुकरणेन षष्ठीसमासः ॥ नन्वन्यशब्देन न स्थानी, आदेशस्य स्थानिनिवर्तकत्व[९]स्वभावत्वात् । न उःस्थान इति ॥ छाया ॥

१ न्यायं—दृष्टान्तम् ॥ छाया ॥

२ तत्राह—**प्रधानत्वमिति** ॥ इदमष्टमे ( 'प्लुतावैचः' इति सूत्रे ) स्पष्टम् ॥ छाया ॥

३ सिद्धान्तोपरि शङ्कते—**भूयस्त्वेति** ॥ छाया ॥

४ एकत्र विधेयद्वयासंभवादाह—**तस्य चेति** ॥ छाया ॥

५ रपरत्वस्य पूर्वत्रापि विधेराह—**मात्रमिति** ॥ तदाऽर्थमाह—

६ तत्र-आद्ये ॥ छाया ॥

७ 'सामर्थ्याचान्य' इति क. ग. पाठः ॥

८ ननु सविसर्गानुकरणेन षष्ठीसमासेऽप्युरितिवत्तच्छ्रवणापत्तिरत आह—**सूत्रस्थेति** ॥ छाया ॥

९ **स्वभेति** । तथा तस्यावक्तव्यत्वेन व्यर्थमिदमिति भावः ॥ छा. ॥

स्थानिव्यतिरिक्तः, उरणित्येतावतः स्थानिव्यतिरिक्तनिवर्तने सामर्थ्याभावादत आह—षष्ठीति । यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिस्तत्रेत्यर्थः । स्वातन्त्र्येणास्य विधायकत्वं तु 'इको गुणवृद्धी' इत्यत्र भाष्ये एव निराकृतम् । तत्र यद्यन्यनिवृत्त्यर्थत्वं नियामकत्वेन, तदा अथ मतमेतदिति वक्ष्यमाणस्य विशेषो न स्यादत आनुषङ्गिकं तदित्याह—तत्रेति ॥ अपूर्व इति । वाक्यभेदेन—ञ्नित्यादिरुदात्तो भवति, ऋवर्णस्य त्वण् भवति स च रपरः—इत्यर्थ इति भावः ॥ तत्र सामर्थ्यादिति । विशेषविधेः सामान्यविधिबाधकत्वेनेत्यर्थः । न तु वाच्यवृत्त्याऽस्य नियमपरत्वमिति भावः ॥

( २९२ प्रथमपक्षाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः ॥ * ॥**

( भाष्यम् )

**उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषो भवति ॥**

**के पुनरुदात्तादयः ?**

**उदात्तानुदात्तस्वरितानुनासिकाः । कृतिः-हृतिः, कृतं-हृतम्, प्रकृतं-प्रहृतम्, नॄँः पाहि ॥**

( प्रदीपः ) **उदात्तादिष्विति** । अन्तरतमस्य बाधकोऽण् प्रसज्यत इति भावः । स तूदात्तादिगुणो न चेति सर्वथा दोषः ॥ **नॄँः पाहीति** । यद्यप्यस्मिन् पक्षे पूर्वसवर्ण ऋकारो न लभ्यते, तथापि 'नॄन् पे' इति निपातनाद्भवति । नकारस्य तु रुत्वे कृतेऽनुनासिको विधीयमानोऽणेव स्यान्न तु ऋकार इति दोषः ॥ प्रतिपदविहितैरित्वोत्वादिभिरयं बाध्यत इति तेषां रपरत्वं न स्यात् ॥

( उद्योतः ) **स चोदात्तादिगुण इति** । अत्र पक्षेऽनन्तरस्येति न्यायेनान्तरतमपरिभाषायाँ अनेन बाध इति भावः ॥ **न चेति** । यत्रोपस्थितिस्तद्विधेयस्य बाध इत्यभिमानः । भाष्ये—**कृतिः**—नित्स्वरेणाद्युदात्तः । **कृतं**—इत्यत्र प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेन ऋकारोऽनुदात्तः । **प्रकृते**—**गतिरनन्तर** इति पूर्वपदप्रकृतिस्वरे शेषनिघाते **उदात्तादनुदात्तस्येति** स्वरितत्वम् । उच्चैरुदात्त इत्यादिषु षष्ठ्यन्तमच इत्यनुवर्तत इति पक्षे ञ्नित्यादिरित्यादावच इत्युपस्थितेः षष्ठीसद्भावादुरणित्यस्योपस्थानमिति द्रष्टव्यम् ॥ नियमपक्षे वक्ष्यमाणं दोषमत्राप्याकृष्य दर्शयति—**प्रतिपदेति** ॥ **तेषामिति** । प्रत्यासत्त्योरणित्यनेन विधीयमानस्याणो विधीयमानमिति शेषः ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्ह्युः स्थानेऽण् चानण् च । अण् रपर इति ॥**

( २९३ द्वितीयपक्षदूषणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ य उः स्थानेऽण् स रपर इति चेत् गुणवृद्ध्योरवर्णाप्रतिपत्तिः ॥ * ॥**

( भाष्यम् )

**य उः स्थाने अण् स रपर इति चेद् गुणवृद्ध्योरवर्णस्याप्रतिपत्तिः । कर्ता-हर्ता-वार्षगण्यः ॥**

( प्रदीपः ) **गुणवृद्ध्योरिति** । भूतस्य चेदणो रपरत्वं क्रियते, तदा गुणवृद्धिविधावणेव दुर्लभ इति दोषः ॥

( उद्योतः ) **दुर्लभ इति** । ह्रस्वस्य गुणाकारलाभेऽपि दीर्घस्याकारगुणालाभः, वृद्धिस्तु नियमेन अण् न लभ्यते इत्यर्थः ॥ कर्तेत्याद्युदाहरणं भाष्ये दीर्घान्तस्याप्युपलक्षणम् ॥

( द्वितीयपक्षदूषणशेषाक्षेपभाष्यम् )

**किं हि साधीयः—ऋवर्णस्यासवर्णे यदवर्णं स्यात्, न पुनरेङैचौ ?**

( प्रदीपः ) **किं हि साधीय इति** । किं साधुतरं कारणमित्यर्थः ॥ **न पुनरिति** । ततश्चावर्णस्यैव नियमेनाप्रतिपत्तिरिति व्याख्येयम् ॥

( उद्योतः ) 'किं' इत्यस्य विशेष्यमाह—**कारणमिति** । भाष्ये-**असवर्णे**—सदृशाभावे इत्यर्थः ॥ ननु नियामकाभावे कदाचिदवर्णस्यापि प्रतिपत्तौ कथमवर्णाप्रतिपत्तिरत आह—**ततश्चेति** ॥

( द्वितीयपक्षवादिभाष्यम् )

**पूर्वस्मिन्नपि पक्षे एष दोषः । किं हि साधीयः—तत्रापि ऋवर्णस्यासवर्णे यदवर्णं स्यात्, न पुनरिवर्णोवर्णौ ॥**

---

१ भावादिति । एवमपि व्यर्थमेवेति भावः ॥ अनतिप्रसङ्गायाह—यत्रेति ॥ छाया ॥

२ स्वातन्त्र्येति । अणंशे इति भावः ॥ तत्र—तथा सति ॥ तत्रेतीति । तत्रोपस्थितौ सत्यामित्यर्थः ॥ छाया ॥

३ शेषमाह—वाक्येति ॥ तमेवाह—ञ्नित्येति ॥ तात्पर्यार्थमाह—न त्विति ॥ छाया ॥

४ 'स चोदात्ता' इति ग. पाठः ॥

५ ऋकारो नेति । उःस्थानेऽणेव भवतीति पक्षे 'नॄ शसू' इत्यवस्थायां प्रथमयोः पूर्वसवर्णो ऋकारो न स्यात्तस्याण्त्वाभावात् । तथाच नॄनिति रूपमेव न स्यादत आह—तथापीति ॥

६ 'रयं हि बाध्य' इति क. ग. पाठः ॥ ननु भाष्ये प्रकृत इद्धातोरित्यादिषु दोषः कथं नोक्तस्तदाह—प्रतिपदविहितैरिति ॥

७ भाषाया इति । तथा च विधिविधेयोदात्तत्वमस्त्येवेति भावः ॥ अत एवाह—यत्रोपेति ॥ यस्य—यस्यापि ॥ छाया ॥

८ ननु प्रागुक्तरीत्या तत्रोपस्थितिरेव कथमत आह—उच्चैरिति ॥ छाया ॥

९ ननु तेषामणत्वस्य सत्त्वेन कुतस्तदभावोऽत आह—प्रत्येति ॥ छाया ॥

१० वार्षेति । वृषगणस्यापत्यम् । गर्गादित्वाद्यञ् ॥ छाया ॥

११ 'तदा तु गुण' इति क. ग. पाठः ॥

१२ दुर्लभत्वमुपपादयति—ह्रस्वस्येति ॥ नन्वेवं भाष्ये न्यूनताऽत आह—कर्तेत्येति ॥ छाया ॥

( प्रथमपक्षवादिभाष्यम् )

अथ मतमेतत्—उः स्थाने अणश्चानणश्च प्रसङ्गे अणेव भवति रपरश्चेति । सिद्धा पूर्वस्मिन् पक्षे अवर्णस्य प्रतिपत्तिः ॥

( प्रदीपः ) अथ मतमिति । स[1] एव पक्षाक्षेपवाद्याह—नानेनान्येषां बाधकोऽपूर्वोऽण् विधीयते । किं त्वणनणोः प्रसङ्गेऽणेव भवतीति नियमः क्रियते, स च रपरः । न च गुणवृद्धिप्रसङ्गे इकारोकारयोः प्राप्तिः ॥

( उद्योतः ) दोषपरिहारायाक्षेपवाद्येवान्यनिवृत्त्यर्थमित्यस्य नियमपरतया व्याख्यानमाशङ्क्य दूषयति—भाष्ये—अथ मतमिति । एतत्–वक्ष्यमाणं नियमरूपत्वमन्यनिवृत्त्यर्थमिति वदतो मतं–संमतं विवक्षितमित्यर्थः ॥ सिद्धा पूर्वस्मिन्निति । अन्यनिवृत्त्यर्थमिति पक्षे[4] इत्यर्थः ॥ स चेति । वाक्यभेदेनेत्यर्थः ॥ नन्वेवमिकारोकारावपि स्यातामत आह—न च गुणेति ॥

( आक्षेपभाष्यम् )

यत्तु तदुक्तम्[5]—'उदात्तादिषु दोषः' इति । स इह दोषो जायते, न जायते ?

( प्रदीपः ) यत्तु तदुक्तमिति । किं भवान्मन्यते–इति विचारयति ॥

( उद्योतः ) भवानिति । नियमपक्षवादीत्यर्थः ॥

( समाधानभाष्यम् )

जायते स दोषः ॥

कथम् ?

उदात्त इत्यनेनाणोऽपि प्रतिनिर्दिश्यन्ते, अनणोऽपि ॥

( प्रदीपः ) स एव युक्तियुक्तं पक्षं गृह्णाति—जायत इति ॥

( उद्योतः ) स एवेति । विचारक एवेत्यर्थः ॥

( समाधानबाधकभाष्यम् )

यद्यपि—अणोऽपि प्रतिनिर्दिश्यन्ते । न तु प्राप्नुवन्ति ॥

किं कारणम् ?

स्थानेऽन्तरतमो भवतीति ॥

( उद्योतः ) शङ्कते—भाष्ये—यद्यप्यणोऽपीति ॥

( समाधानसाधकभाष्यम् )

कुतो नु खल्वेतत्—द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः—"स्थानेऽन्तरतमः" इति "उरण् रपरः" इति च, 'स्थानेऽन्तर–' इत्यनया व्यवस्था भविष्यति, न पुनः "उरण् रपरः" इति ?

अतः किम् ?

अत एष दोषो जायते '—उदात्तादिषु दोषः' इति ॥

( प्रदीपः ) कुतो नु खल्विति । अन्तरतमपरिभाषाया अयमवकाशः—अकः सवर्णे दीर्घः, झयो होऽन्यतरस्यामिति । उरण् रपर इत्यस्यावकाशः–कर्ता - हर्तेति । इहोभयं प्राप्नोति—कृतिरिति । परत्वादियमेव प्राप्नोतीति दोषः ॥

( उद्योतः ) परिहरति—कुतो न्विति । त[6]मेवग्रहणसहितस्याप्यवकाशप्रदर्शनाय झयो ह इत्युक्तम् ॥ उरणरपर इत्यस्यावकाश इति । गुणविधौ स्थानेऽन्तरतमपरिभाषाऽनुपस्थितिः, ऋवर्णसमुदायान्तरतमगुणाभावादिति भावः ॥ यद्यपि भाष्याद्विनिगमनाभावो लभ्यते, तथापि एष दोषो जायत इत्युत्तरग्रन्थासङ्गतेर्विनिगमकं प्रदर्श्यान्तरतमपरिभाषाऽप्रवृत्तिमुपपादयति—परत्वादिति ॥

( आक्षेपभाष्यम् )

ये चा[7]प्येते ऋवर्णस्य स्थाने प्रतिपदमादेशा उच्यन्ते, तेषु रपरत्वं न प्राप्नोति—"ऋत इद्धातोः" "उदोष्ठ्यपूर्वस्य" इति ॥

( प्रदीपः ) ये चाप्येत इति । यत्र ह्यनियमप्रसङ्गेऽनेन नियमः क्रियते तत्र तच्छेषभूतं रपरत्वं भवति, न त्वन्यत्र प्रतिपदविधाविति दोष[8]ः ॥

( उद्योतः ) ननु प्रतिपदविहिता अप्यण एवेति कुतो रपरत्वाप्राप्तिरत आह—यत्र हीति । ग्रो[9] यङीति लत्वविधानादावृत्त्या तेषामपि रपरत्वमिति चेत्, ऋकारान्तर्गतरेफस्य लत्वार्थं तत्स्यादिति न दोषः ॥ भाष्ये—ये चाप्येत इति । बहुवचनेनापृच्छ्यपृधामिति ईत्वसंग्रहः ॥

( २९४ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ सिद्धं तु प्रसङ्गे रपरत्वात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ?

१ ननु पूर्वपक्षवादिना नियमवादिनं प्रति पृष्टे नियमवादिनः स्वपक्षे स्वयमेव दोषोद्भावनमयुक्तमत आह—स एवेति ॥ छाया ॥

२ 'अणोऽनणश्च' इति अ. पाठः ॥

३ इत्यस्य—आद्यवार्तिकोक्तस्य ॥ छाया ॥

४ इति पक्षे—इत्यभिमतनियमपक्षे ॥ छाया ॥

५ तदुक्तमिति । तस्मिन्पक्ष उक्तमित्यर्थः ॥ छाया ॥ ननु 'अथ मतमेतत्' इत्यादिना योऽभिप्रायः प्रथमपक्षस्य भवता समर्थितः स न सम्भवति । तस्मिन् पक्षे समाश्रीयमाणे उदात्तादिषु दोषस्तद्वादिना प्रतिपादितः स भवदभिप्राये न घटत इत्यत आह—यत्तु तदुक्तमित्यादिना । एवञ्च पराशयाविष्करणतत्परैः परप्रकटितदोषेष्वप्यवधातव्यमिति भाष्याभिप्रायः ॥

६ आधिक्यं निराचष्टे—तमेवेति ॥ छाया ॥

७ दोषान्तरमाह—ये चाप्येते इति ॥ छाया ॥

८ दोषः–रपरत्वादिप्राप्तिरूपः ॥ छाया ॥

९ शङ्कते—ग्रो यङीति ॥ न दोषः–न भाष्यासंगतिः ॥ छाया ॥

'प्रसङ्गे रपरत्वात्' । उः स्थाने अण् प्रसज्यमान एव रपरो भवति ॥

**( प्रदीपः ) सिद्धं त्विति** । विधिवाक्यैरस्यैकवाक्यतायां विधानकाल एवाणो रपरत्वं क्रियत इत्यर्थः ॥

**( उद्द्योतः ) विधीति** । ऋवर्णस्थानिकाण्विधिवाक्यैरित्यर्थः[2] ॥ **एकवाक्यतायामिति** । वाक्यैकवाक्यतायामित्यर्थः ॥

( आक्षेपभाष्यम् )

किं वक्तव्यमेतत् ?

( समाधानभाष्यम् )

न हि ॥

कथमनुच्यमानं गंस्यते ?

'स्थाने' इति वर्तते । स्थानशब्दश्च प्रसङ्गवाची ॥

( आक्षेपभाष्यम् )

यद्येवमादेशोऽविशेषितो भवति ॥

**( प्रदीपः ) यद्येवमिति** । न ह्यनेनोः स्थानेऽण् विधीयते, अपि तु लक्षणान्तरेण । तत्र[3] विध्यङ्गभूता **षष्ठी स्थानेयोगे**ति परिभाषा नोपतिष्ठते । तथा च **'उदीचामातः स्थाने यकपूर्वायाः'** इत्यत्र स्थानग्रहणं कृतम् । तत[4] उः समीपे योऽण् तस्यापि रपरत्वप्रसङ्ग इति स्थानग्रहणानुवृत्त्या[5] स्थाने य आदेशोऽणित्येतावल्लभ्यते, न तु प्रसज्यमान इति ॥ **आदेश इति** । प्रसज्यमानत्वेनेत्यर्थः । **अथवा**-स्थानग्रहणानुवृत्त्या 'प्रसज्यमानः' इत्येषोऽर्थो लभ्यते, न तु-उः स्थान इति । ततश्चाण आदेशरूपता नियमेन न लभ्यते इति सामीप्यलक्षणोऽपि संबन्धोऽवगम्येतेत्यर्थः ॥

**( उद्द्योतः )** ननु 'उः' इति षष्ठ्या स्थानेयोगत्वस्य लाभः स्यादत आह—**न हीति** । एवंचायमनुवाद इति भावः ॥ **विध्यङ्गेति** । विधेयेन[6] साक्षाद्यत्र संबन्धस्तत्र सा परिभाषेत्यर्थः ॥ **उदात्तस्वरितयोर्यणो लः परस्मैपद**मित्यादावनुवादेऽप्यस्याः प्रवृत्तेर्यद्येवमित्यादिभाष्यमेकदेशिनोरुक्तिरिति बोध्यम् ॥ **उःसमीप इति** । तथा च 'तृतीयः' इत्यादावप्यणो रपरत्वप्राप्तिरित्यर्थः ॥ सामीप्यं[7] चेषद्व्यवहितेऽपीति भावः ॥ **स्थाने य आदेशोऽणिति** । अनुवर्तमानस्थानेग्रहणं 'उः' इत्यस्य संबन्धिशब्दत्वात्तत्रैव संबध्येतेत्यर्थः ॥ नन्वेवमादेशः स्थानेन विशेषित एवेति **आदेशोऽविशेषित** इति भाष्यासङ्गतिरित्यत आह—**प्रसज्यमानत्वेनेति** ॥ **अथवा स्थानेति** । स्थानशब्दस्य प्राधान्याद् रपरइत्यनेन संबन्ध इति भावः[8] ॥ **तत इति** । अणः स्थानेपदार्थेनाविशेषणादित्यर्थः ॥ एवंचं नादेशान्तराणां बाधकोऽण्विधीयते, नापि नियमः, नापि विहितस्य रपरत्वम्, प्रसज्यमानत्वेन विशेषणात् । किं तु तत्तद्विधिभिर्वाक्यैकवाक्यतैवास्येति बोध्यत इति बोध्यम् ॥

( समाधानभाष्यम् )

आदेशश्च विशेषितः ॥

कथम् ?

द्वितीयं स्थानग्रहणं प्रकृतमनुवर्तते । तत्रैवमभिसंबन्धः करिष्यते—'उः स्थाने अण् स्थाने' इति । उः प्रसङ्गे अण् प्रसज्यमान एव रपरो भवति ॥

**( प्रदीपः ) द्वितीयमिति** । तच्चार्थात् प्रथमान्तं संपद्यते, **अथवा** सप्तम्यन्त एव तस्मिन्नयमर्थो भवति—प्रसङ्ग एवात्राण् रपरो भवतीति । इदानीमुदात्तादिषु दोषो नास्ति, **स्थानेन्तरतम** इत्यनया परिभाषया कृतिरित्यादावृकारस्य ऋकार एव प्रवर्तत इत्यणः प्रसङ्ग एव नास्ति । गुणवृद्धी च ऋकारस्य विधीयमाने अरारावेवान्तरतम्याद्भवत इत्यवर्णप्रतिपत्तिरप्यस्ति ॥

**( उद्द्योतः ) अथवेति** । स्थानपदेन प्रसङ्गकालो लक्ष्यत इति भावः ॥ **ऋकार एवेति** । स्थानतः प्रमाणतः स्वरूपतश्च सदृशत्वादिति भावः ॥

( अणूग्रहणप्रयोजनम् )

( आक्षेपभाष्यम् )

अथाणग्रहणं किमर्थम्, न ऊः रपरो भवतीत्येवोच्येत ?

( प्रत्याक्षेपभाष्यम् )

'ऊः रपरः' इतीयत्युच्यमाने क इदानीं रपरः स्यात् ?

( प्रत्याक्षेपसमाधानभाष्यम् )

य उः स्थाने भवति ?

कश्च उः स्थाने भवति ?

आदेशः ॥

---

१ **रपरत्वं**-तन्मात्रम् ॥ छाया ॥

२ अनतिप्रसङ्गायाह—**ऋवर्णेति** ॥ प्रतिलक्ष्यं लक्षणभेद इति भावः ॥ पदैकवाक्यताया असंभवादाह—**वाक्यैकेति** ॥ छाया ॥

३ नन्वनुवादत्वेऽपि तल्लाभः कुतो नात आह—**तत्रेति** ॥ अनुवादे इत्यर्थः । **विधाविति** न्यायादिति भावः ॥ छाया ॥

४ ननु किमेतावताऽत आह—**तत इति** ॥ तदनुपस्थितेरित्यर्थः ॥ छाया ॥

५ 'वृत्त्या उःस्थाने' इति क. ग. पाठः ॥

६ साक्षाद्विधौ तदभावादाह—**विधेयेनेति** ॥ इदं दूषयति-**उदात्तेति** ॥ सिद्धान्तिनोऽपि संग्रहाय द्विवचनमेकेति ॥ छाया ॥

७ ननु तत्र व्यवधानान्नेत्यत आह—**सामीप्यमिति** ॥ छाया ॥

८ भाष्यतात्पर्यमाह—**एवं चेति** । तथार्थलाभे चेत्यर्थः ॥ द्वितीयैतल्लाभस्तु परिभाषयैव । एवं च द्वितीयानुवृत्तिर्निष्फलेति तथा व्याचक्षाणा दण्डिकृष्णरत्नाद्यश्चिन्त्या एवेति भावः ॥ छाया ॥

( २९५ आक्षेपबाधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः ॥ * ॥

( भाष्यम् )

आदेशो रपर इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः ॥

के पुना रीरिविधयः ?

अकङ्लोपाऽऽनङनङ्रीङ्रिङादेशाः ॥

अकङ्—सौधातकिः । अकङ् ॥

लोप—पैतृष्वसेयः । लोप ॥

आनङ्—होतापोतारौ । आनङ् ॥

अनङ्—कर्ता-हर्ता । अनङ् ॥

रीङ्—मात्रीयति-पित्रीयति । रीङ् ॥

रिङ्—क्रियते-ह्रियते । रिङ् ॥

( प्रदीपः ) रीरिविधिष्विति बहुवचननिर्देशात् रीरिशब्दाद्युपलक्षणमिति पृच्छति—के पुनरिति ॥ पैतृष्वसेय इति । लोपवचनं तु सर्वादेशार्थं स्यात् ॥ होतापोताराविति । रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यात् ॥

( उद्द्योतः ) ननु वार्तिकोक्तरीरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रमाणाभावात् के पुनरिति प्रश्नानुपपत्तिरत आह—बहुवचनेति ॥ सौधातकौ 'सुधातुरकङ् च' इति इञ् ॥ पैतृष्वसेये ढकि लोपः, तत[1] एव ढक् च ॥ ननु लोपस्य रपरत्वे तं विनाऽपि यणादेशेन तत्साध्यरूप[2]सिद्धिरत आह—लोपेति । रपरत्वाभिधानमुखेन सर्वादेशत्वमेवं[3] लोपस्याभिधित्सितमिति भावः ॥ यदि[4] सर्वादेशो लोपस्तदा उः स्थाने नेति कथं रपरत्वमितीदं चिन्त्यम् । तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम् ॥ आनङनङौ 'आनङृतो द्वन्द्वे' 'ऋदुशन–' इति विहितौ ॥ रेफस्येति । झलग्रहणापकर्षाच्चणः प्रतिषेधारम्भाच्च चिन्त्यमिदम् । तस्माद्रेफश्रवणमेव दोषोऽत्रेति बोध्यम् ॥

( आक्षेपबाधकं भाष्यवार्तिकम् )

*॥ उदात्तादिषु च ॥*

( भाष्यम् )

किम् ?

रपरत्वस्य प्रतिषेधो वक्तव्यः । कृतिः, हृतिः । कृतं, हृतम् । प्रकृतम्, प्रहृतम् । नॄँः पाहि ॥ तस्मादणग्रहणं कर्तव्यम् ॥

( एकादेशे रपरत्वसाधनम् )

( २९६ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ एकादेशस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

एकादेशस्योपसंख्यानं कर्तव्यम् । खट्वर्श्यः, मालर्श्यः ॥

किं पुनः कारणं न सिध्यति ?

उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते । न चायमुरेव स्थानेऽण् शिष्यते ॥

किं तर्हि ?

उश्चान्यस्य च ॥

( प्रदीपः ) एकादेशस्येति । 'पूर्वपरयोः' इति समुदायस्य स्थानित्वेन चोदितत्वात्तस्य च ऋवर्णरूपत्वाभावादिति भावः ॥

( उद्द्योतः ) समुदायस्येति । द्वन्द्वस्य सत्त्वादिति भावः ॥

( समाधाने वार्तिकांशानुवादः )

*॥ अवयवग्रहणात्सिद्धम् ॥*

( भाष्यम् )

यदत्र ऋवर्णं तदाश्रयं रपरत्वं भविष्यति । तद्यथा—'माषा न भोक्तव्याः' इत्युक्ते मिश्रा अपि न भुज्यन्ते ॥

( प्रदीपः ) अवयवग्रहणादिति । पूर्वपरयोरित्यनेनोद्भूतावयवभेदः समुदायो निर्दिश्यते । अवयवावेव चापेक्षितपरस्परौ समुदाय इति भवत्ययमृवर्णस्य स्थान इति भावः ॥

( उद्द्योतः ) उद्भूतेति । अत एव द्विवचननिर्देशः । तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरिति भावः ॥ नन्ववयवभेदस्योद्भूतत्वविवक्षा नाम तद्गतसङ्ख्यायाः समुदाये आरोपः, नैतावता प्रत्येकं स्थानित्वलाभोऽत आह—अवयवावेव चेति । इतरेतर[5]योग इति शेषः ॥ एवंच तत्र समुदायस्यावयवाभेदेन बोधनाद् द्विवचनेन प्रत्येकं तयोः स्थानित्वलाभः ॥ अयमेव चोद्भूतावयवभेदः समुदाय इत्यस्यार्थ इति भावः ॥

१ विधायकाभावादाह—तत एवेति ॥ छाया ॥

२ रूपसिद्धिरिति । न चात्र पक्षे यणादेशेऽपि रपरत्वे रेफद्वयं लोपस्य तत्त्वे तु एक एव रेफ इति वैषम्यात्कथं तेन तत्सिद्धिरिति वाच्यम् । रोरीति लोपात् । न चान्तरङ्गं तं प्रति यणोऽसिद्धत्वेन तदप्रवृत्त्या वैषम्यमेवेति वाच्यम् । पक्षद्वयेऽपि त्रिपाद्यां तदप्रवृत्तेर्भाष्यसिद्धान्तितत्वात् ॥ छाया ॥

३ एवेन रपरत्वव्यवच्छेदः ॥ छाया ॥

४ नन्वेवं भाष्यासंगतिरेव तद्विना तस्य सर्वादेशत्वस्य दुर्लभत्वादत आह—यदीति ॥ छाया ॥

५ एवं कैयटे दूषिते भाष्यतात्पर्यमाह—तस्मादिति ॥ छाया॥

६ नेदं भाष्यवार्तिकम्, किन्तु कात्यायनस्येति मुद्रितपुस्तकतो दृश्यते । तदर्थं च व्याख्याभाष्यमपि कैश्चित्कल्प्यते । तादृशादर्शपुस्तकेषु न दृश्यते ॥

७ अ. पुस्तकेऽस्योदाहरणस्य पाठो न ॥

८ समाहारद्वन्द्वे तदभावादाह—इतरेतरेति ॥ छाया ॥

( २९७ समाधाननिरासवार्तिकम् ॥ २ ॥ )

॥ * ॥ अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः ॥ * ॥

( भाष्यम् )

अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः । होतापोतारौ । यथैव-उश्चान्यस्य च स्थानेऽण् रपरो भवति, एवं य उः स्थानेऽण् चानण् च सोऽपि रपरः स्यात् ॥

( प्रदीपः ) रान्तप्रतिषेध इति । आनङि विधीयमाने आकारस्याणो भावादित्यर्थः ॥ तस्मादवयवग्रहणादित्यस्यातिव्यापकत्वाद्यत्र साक्षादवर्णस्याण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसंख्यानं कर्तव्यमेव ॥

( उद्योतः ) भाष्येऽगृहीताभिप्रायः समुदायस्यातिरिक्तस्य स्थानित्वेऽपि तदन्तर्गतावयवस्यापि स्थानित्वमादाय ऋस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह—अवयवग्रहणात्सिद्धमिति चेदिति ॥ रान्तस्येति । रान्तत्वस्येत्यर्थः ॥

( व्याख्यान्तरे दूषणभाष्यम् )

यदि पुनः-ऋवर्णान्तस्य स्थानिनो रपरत्वमुच्येत । खट्वर्श्यः, मालर्श्यः ॥

नैवं शक्यम् । इह न प्रसज्येत—कर्ता-हर्ता, किरति-गिरति । ऋवर्णान्तस्येत्युच्यते, न चैतदृवर्णान्तम् ॥

( प्रदीपः ) यदि पुनरिति । उरिति वर्णग्रहणाद्वर्णग्रहणं च सर्वत्र तदन्तविधिं प्रयोजयतीति न्यायादृवर्णान्तग्रहणम् । खट्वर्श्य इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम् ॥ कर्तेति । अङ्गस्येति षष्ठी अन्त्यमलमुपसंहृतेति ऋवर्णस्य गुणेन भाव्यम् । न च ऋवर्णः-ऋवर्णान्तो भवतीति दोषः ॥ न चेह तदन्तविधिरस्ति, उरणिति भूतानुवादात् । न च प्रदेशेषु तदन्तस्य कार्यम्, अन्त्यस्यैवानुसंहारेण स्थानित्वप्रतिपादनादिति भावः ॥

( उद्योतः ) ऋवर्णान्तेति । शब्दशास्त्रप्रस्तावात् शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥ नन्विकाऽङ्गे विशेष्यमाणे तदन्तविधेर्ऋवर्णान्तस्य गुणेन भाव्यमत आह—अङ्गस्येति ॥ षष्ठीति । इगन्ताङ्गान्त्यस्य गुण इति वाक्यार्थ इति भावः ॥ भाष्ये लक्ष्यासिद्धिदोषो ऋवर्णान्तस्येत्यर्थे उक्तः ॥ स्वयं तदर्थासम्भवमप्याह—न चेहेति ॥ भूतानुवादादिति । एवंचानुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः ॥ यद्वा समानविभक्त्यन्तविशेष्यरहितभूतानुवादादित्यर्थः ॥ यत्र हि साक्षादर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः । गमकं विना शब्दरूपं विशेष्यमादाय तु न तदन्तविधिरिति भावः ॥ न च प्रदेशेष्विति । इह तदन्तविध्यभावेऽपि यदि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात्ततस्तदनुरोधेनानुवादेऽपि एकदेशद्वारा ऋवर्णान्तं ग्राह्यं, तदपि नास्तीति भावः ॥ इदं चिन्त्यम् । वृद्धिर्यस्येत्यादावीदूदेद्द्विवचनमित्यादौ चानुवादेऽपि संज्ञाप्रवृत्तेः । सर्वत्रेति च शब्दरूपविशेष्यमादाय तदन्तविधौ गमकम् । अतो भाष्योक्त एव दोषः ॥

( दूषणबाधकभाष्यम् )

ननु चैतदपि व्यपदेशिवद्भावेन ऋवर्णान्तम् ॥

( दूषणसाधकभाष्यम् )

अर्थवता व्यपदेशिवद्भावः, न चैषोऽर्थवान् । तस्मान्नैवं शक्यम् ॥

न चेदेवम्, उपसंख्यानं कर्तव्यम् ॥ इह च रपरत्वस्य प्रतिषेधो वक्तव्यः—मातुः-पितुरिति ॥

( प्रदीपः ) अर्थवतेति । यथैव 'इयाय' इत्यत्रैकाच्त्वम्, अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातुरूपता च व्यवस्थाप्यते ॥ इह चेति ॥ उपसंख्यानस्यातिव्याप्त्येत्यर्थः ॥ मातुरिति । रपरत्वे कृते विभक्तिसकारस्य रुत्वम्, पूर्वस्य रोरीति लोपः । ढ्रलोप इति दीर्घत्वम् । तत्र मातूरिति प्राप्नोतीति भावः ॥

( उद्योतः ) भाष्ये—अर्थवतेति । इदमसहायत्वोपलक्षणम् । अत एव 'कुरुते' इत्यादावनर्थकेनापि सः । तत्र हि स टिसंज्ञोपयोगिसहायरहित एवेति दिक् ॥ भाष्ये—इह चेति । एकादेशस्योपसङ्ख्यानमित्यौपसङ्ख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः । मातुरित्यादौ तदुपसङ्ख्यानातिव्याप्तेरिति भावः ॥ मातूरितीति । छाया ॥

१ भाष्यतात्पर्यमाह—तस्मादिति ॥ छाया ॥

२ नन्वेवमुत्तरग्रन्थासंगतिरत आह—भाष्येऽगृहीतेति ॥ तर्हि किमाशयेनोक्तमत आह—समुदायेति ॥ धर्मिपरत्वे भेदानुपपत्तेराह—रान्तत्वेति ॥ छाया ॥

३ तदन्तविधिरिति । स्वीक्रियत इति शेषः ॥ छाया ॥

४ भाव्यमिति । तथा च भाष्यासंगतिरिति भावः ॥ छाया ॥

५ वक्ष्यमाणोपयोगित्वेन भेदेनाह—भाष्ये लक्ष्येति ॥ छाया ॥

६ ननु किमेतावतापीत्यत आह—एवं चेति ॥

७ ननु दृष्टान्तस्यैवायुक्तत्वेन बीजत्वेनाशयवर्णनमयुक्तमत आह—यद्वेति ॥ कृष्णानुरोधेनेह स्वोक्त्युक्तिं निराचष्टे—गमकमिति ॥

८ इदम्-आधिक्येन कैयटोक्तम् ॥ तत्राद्ये दूषणमाह—वृद्धिरिति ॥ प्रकृतसजातीयमेवाह—ईदूदेदिति ॥ छाया ॥

९ द्वितीये तदाह—सर्वत्रेतीति ॥ विधौ-स्वीक्रियमाणे । उपसंहरति—अत इति ॥ 'वर्णग्रहणाच्च सर्वत्रेति' इति मुद्रितपाठः ॥

१० अर्थवतेत्यस्य अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यते इत्यर्थेन प्रायोऽसहाय एवार्थवत्त्वसत्त्वेनाह—इदमिति ॥ अत एव स्वार्थमात्रान्यसहायत्वमेवात आह—तत्र हीति ॥ छाया ॥

११ विवरणासांगत्यायाह—एकेति ॥ कैयटोक्तमेवाह—मातुरिति ॥ छाया ॥

ऊ रपर इति पूर्वोक्तभाष्यप्रयोगविरोधाद् 'ऋत उदिति तपरत्वान्मातूरित्यादौ न दीर्घः' इत्यपास्तं वेदितव्यम् ॥

( समाधानभाष्यम् )

**उभयं न वक्तव्यम् ॥**

**कथम् ?**

**इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति, लभतेऽसावन्यतरतो व्यपदेशम् । तद्यथा—देवदत्तस्य पुत्रः-देवदत्तायाः पुत्र इति ॥**

( प्रदीपः ) **द्वयोरिति** । अवयवावेवात्रापेक्षितपरस्परौ स्थानिनौ । अत एवैकग्रहणं स्थानिभेदादादेशभेदनिवृत्त्यर्थं कृतम् ॥ **अन्यतरत इति** । तृतीयान्तादाद्यादित्वात्तसिः ॥ **तद्यथेति** । एकः पुत्र उभाभ्यामपि यथा व्यपदिश्यते, तथेहापि पूर्वपराभ्यां तत्स्थानिकत्वेनादेशस्य व्यपदेशः । अकङादेस्तु समुदायस्यादेशत्वं, नाण इति-रपरत्वाभावः ॥

( उद्द्योतः ) उक्तेऽर्थे गमकमाह—**अत एवेति** ॥ पञ्चम्यन्तात्तसिल्यर्थासङ्गतेराह—**तृतीयान्तादिति** ॥ **समुदायस्येति** । प्रत्येकमादेशत्वे प्रमाणाभावादित्यर्थः ॥

( आक्षेपभाष्यम् )

**कथं मातुः-पितुरिति ?**

( आक्षेपबाधकभाष्यम् )

**अस्त्वत्र रपरत्वम् ॥**

( आक्षेपसाधकभाष्यम् )

**का रूपसिद्धिः ?**

( आक्षेपबाधकभाष्यम् )

**"रात्सस्य" इति सकारस्य लोपः, रेफस्य विसर्जनीयः ॥**

( उद्द्योतः ) भाष्ये—**रात्सस्येति** । सलोपे रुत्वस्यासिद्धत्वादिति भावः ॥

( आक्षेपसाधकभाष्यम् )

**नैवं शक्यम् । इह हि—मातुः करोति-पितुः करोतीति, 'अप्रत्ययविसर्जनीयस्य' इति षत्वं प्राप्नोति ॥**

( प्रदीपः ) **अप्रत्ययेति** । 'अस्'इत्ययं समुदायः प्रत्ययो न त्वकार इति तदादेशोऽप्यप्रत्यय इति भावः ॥

( उद्द्योतः ) **असित्ययमिति** । प्रत्ययरूपविसर्गभिन्नस्येत्यर्थ इति भावः ॥

( आक्षेपबाधकभाष्यम् )

**अप्रत्ययविसर्जनीयस्येत्युच्यते । प्रत्ययविसर्जनीयश्चायम् ॥**

( प्रदीपः ) **प्रत्ययेति** । प्रत्ययावयवत्वादकारोऽपि प्रत्ययः । अतस्तदादेशोऽपि प्रत्यय इति भावः ॥

( उद्द्योतः ) **अकारोऽपीति** । सूत्रस्थप्रत्ययशब्दस्तदवयवे लाक्षणिक इति भावः ॥

( आक्षेपसाधकभाष्यम् )

**लुप्यतेऽत्र प्रत्ययः "रात्सस्य" इति ॥**

( प्रदीपः ) **लुप्यत इति** । सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा, समुदायसन्निवेशिनीत्वात् तस्याः-इति कुतस्तदादेशस्तां[3] लप्स्यते । उत्वे च कृतेऽवशिष्टः सकार एव प्रत्ययसंज्ञः स च लुप्त इति भावः ॥

( उद्द्योतः ) **उत्वे च कृत इति** । न[4] चैकादेशस्य परादिवत्त्वेन 'उर्स्' इत्यस्य प्रत्ययतया लोपे **एकदेशविकृतन्यायेन** 'उर्' इत्यस्य प्रत्ययतया विसर्गस्य प्रत्ययावयवत्वमस्त्वेवेति वाच्यम् । त्रिपाद्या असिद्धत्वेन तत्रा[5]न्तादिवद्भावाप्रवृत्तेः । स्थानिवत्त्वेन तु न निर्वाहः, उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वा[6]भावात् । **सर्वे सर्वपदादेशा** इत्यनेन तु 'मातृ ङस्' इत्यस्य स्थानित्वेऽपि असित्यस्य स्थानित्वालाभात् ॥ भाष्ये **लु[7]प्यतेऽत्र प्रत्ययविसर्जनीय** इति पाठे योऽत्र प्रत्ययस्थानिकत्वेन तवाभिमतो विसर्जनीयः स लुप्यते-न दृश्यते, स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः ॥

( समाधानवार्तिकशेषभाष्यम् )

**एवं तर्हि—**

---

१ अपास्तत्वे हेतुमाह—**ऊ रपर** इति ॥ अदीर्घत्वे हेतुमाह—**ऋत उदिति** ॥ छाया ॥ ऋत उदिति तपरकरणाद्दीर्घो नेति ये वदन्ति तान् प्रत्याह—**ऊ रपर इति** ॥

२ **सूत्रस्थेति** । प्रत्ययावयवभिन्नविसर्गस्येत्यर्थः ॥ अत एव कविभिः कृतमित्यादौ न षत्वम् । अग्निः करोतीत्यादौ तु व्यपदेशिवद्भावेन तत्त्वम् ॥ छाया ॥

३ **तदादेशः**—उत् । तथा च विसर्गस्य तत्संबन्धित्वाभावात्षत्वं स्यादेवेति भावः ॥ छाया ॥

४ कैयटेऽपि नारायणोक्तं दोषमुद्धरति—**न चैकेति** ॥ तस्य पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये—व्यवहाराः प्रत्ययत्वादयस्ते कृतैकादेशस्यापीत्यर्थादिति भावः ॥ **लोप इति** । रुत्वासिद्ध्या **रात्सस्येति** सलोपे इत्यर्थः ॥ **अस्त्येवेति** । तथा च न षत्वापत्तिरिति ज्ञापकाश्रयणमयुक्तमिति भावः ॥ छाया ॥

५ **तत्र** । कर्तव्य इति शेषः ॥ सूत्राप्रवृत्तेरित्यर्थः ॥ तदुक्तमेव खण्डयति—**स्थानीति** ॥ अस्य तत्रापि प्रवृत्तेरिति भावः ॥ छाया ॥

६ **भावादिति** । प्रत्ययसंबन्धित्वं तु न स्थानिवत्त्वलभ्यमशास्त्रीयत्वात् ॥ उपात्तस्येत्युक्तिफलमाह—**सर्वे सर्वेति** ॥ इत्यस्येत्येकवचनेन समुदायस्य स्थानिता सूचिता । तदाह—**असित्यस्येति** ॥ तथाचोसित्यस्य प्रत्ययत्वं न लभ्यमेवेति भावः ॥ छाया ॥

७ नन्वस्य भाष्यस्यैवंतात्पर्यकत्वेऽपि पाठान्तरे तदवयवस्तद्रूपो वेत्यर्थद्वयस्य संभवेऽपि श्रूयमाणविसर्जनीयस्योक्तरीत्या तदनवयवत्वाल्लोपाप्राप्तेश्च लुप्तस्याविसर्जनीयत्वात्तदसंगतिरेवात आह—**लुप्यतेऽत्रेति** ॥ **प्रत्ययस्यैव** । अत एव पाठान्तरेणैकवाक्यतेति भावः ॥ छाया ॥

( समाधाने भाष्यवार्तिकम् )

***॥ भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य ॥***

( भाष्यम् )

**यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति, तज्ज्ञापयत्याचार्यः—नैकादेशनिमित्तात् षत्वं भवतीति ॥**

( प्रदीपः ) **एकादेशनिमित्तादिति** । एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्येत्यर्थः ॥

( उद्द्योतः ) **एवं तर्हि भ्रातुष्पुत्रेति** । त्रिपाद्यामप्यन्तादिवद्भावप्रवृत्तिज्ञापनद्वारेति गूढोऽभिसन्धिः ॥ कर्मधारये निमित्तपदवैयर्थ्यमिति बहुव्रीहिम्, एकादेशपदे लक्षणां च दर्शयति—**एकादेशशास्त्रमिति** ॥

( पूर्वान्तत्वसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयं पूर्वान्तः, आहोस्वित्परादिः, आहोस्विदभक्तः?**

( प्रत्याक्षेपभाष्यम् )

**कथं वाऽयं पूर्वान्तः स्यात्? कथं वा परादिः? कथं वा अभक्तः?**

( प्रत्याक्षेपसमाधानभाष्यम् )

**यद्यन्त इति वर्तते, ततः पूर्वान्तः । अथादिरिति वर्तते, ततः परादिः । अथोभयं निवृत्तम्, ततोऽभक्तः ॥**

( प्रदीपः ) **यद्यन्त इति** । यद्यपि 'रपरः' इत्यत्रान्यपदार्थस्य प्राधान्यम्, तथापि रेफस्य विधेयतया प्राधान्यात्तस्यैवान्तत्वं विशेषणमिति भावः ॥ यद्यपि प्रसज्यमान एवाण् रपरो विधीयते, तथाप्यानङिव साक्षादत्र 'अर्-आर्' इत्येवमविधानात्तात्पर्यपर्यालोचनन्यायेन केवलावस्थानात्पक्षत्रयविमर्शः ॥

( उद्द्योतः ) **यद्यपीति** । तथा च तस्यैव विशेषणं स्यादिति भावः ॥ **प्राधान्यादिति** ॥ रपरशब्दतात्पर्यविषयत्वादित्यर्थः । एवं च पूर्वान्तावयवभूतरेफपरोऽणित्यर्थः ॥ सूत्रे **रपर** इति समासश्च सौत्रत्वात्साधुः ॥ [ रः परो यस्येति बहुव्रीहिः । अवयवत्वमेव षष्ठ्यर्थः । वर्णस्य वर्णान्तरावयवत्वं तु गौणम् । यथा ह्रस्वस्य छे तुगित्यादाविति तात्पर्यम् ॥ ] नन्वरारादिरूपेण विधानात्कथमभक्तत्वादिशङ्केत्यत आह—**यद्यपीति** ॥ **अविधानादिति** । अनुच्चारणादित्यर्थः ॥ **तात्पर्येति** । प्राप्ताप्राप्तविवेकन्यायेनेत्यर्थः ॥ **केवलेति** । रेफमात्रविधौ सूत्रतात्पर्यादिति भावः ॥ यत्तु—अयमपि विचारो भूतस्याणो रपरत्वमिति पक्षे **नष्टाश्वरथन्यायेनानान्तर्यमेवान्तर्यमिति** ऋकारस्याकाराकारावेव गुणवृद्धी भविष्यतः । अरारादिरूपेण विधानमिति पक्षे तु आनङादौ नकारविषयो यथा न विचारस्तथाऽत्रापीति तत्त्वम्-**इति** ॥ तत्तु प्रकृतसूत्रे तस्य पक्षस्यास्थितत्वादयुक्तम् ॥

( भाष्यम् )

**कश्चात्र विशेषः?**

( २९८ अभक्तपक्षे दूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिशेषविसर्जनीयप्रतिषेधः प्रत्ययाव्यवस्था च ॥ * ॥**

( भाष्यम् )

**यद्यभक्तः, दीर्घत्वं न प्राप्नोति—गीः, पूः । रेफवकारान्तस्य धातोरिति दीर्घत्वं न प्राप्नोति ॥**

( उद्द्योतः ) वार्तिके प्रतिषेधः—अभावो निर्वर्तनं च । आद्ये स्यादिति शेषः, द्वितीये वक्तव्यमिति ॥ गॄप्रोः क्विपि **गीः पूः** । ऋत इत्, उदोष्ठ्येतीत्त्वोत्त्वे ॥

( दूषणानुपपत्तिभाष्यम् )

**किं पुनः कारणं रेफवकाराभ्यां धातुर्विशेष्यते, न पुनः पदं विशेष्येत—रेफवकारान्तस्य पदस्येति?**

( उद्द्योतः ) भाष्ये—**पदमिति** । पदस्येत्यनुवर्तमानमित्यर्थः ॥

( दूषणोपपत्तिभाष्यम् )

**नैवं शक्यम् । इहापि प्रसज्येत—अग्निः, वायुरिति ॥**

( दूषणानुपपत्तिभाष्यम् )

**एवं तर्हि रेफवकाराभ्यां पदं विशेषयिष्यामः, धातुनैकम्—रेफवकारान्तस्य पदस्यैको धातोरिति ॥**

१ **गूढ इति** । अत एवामी क्षीरपेणेत्यादौ मीत्वणत्वे सिध्यतः । अत्रोभयत्र—एकारस्यादस्संबन्धित्वं पेइत्यस्य द्वितीयस्यैकाच्त्वमुत्तरपदत्वं समासत्वं चान्तवद्भावाधीनम् । शास्त्रीयसान्तनिष्ठादसत्वस्यैकेति न्यायेनाकारान्तद्वयनिष्ठस्यान्तवत्त्वेनैकारान्त आनयनेन तत्र नुरसंबन्धित्वमर्थात्सिद्धम् ॥ छाया ॥

२ 'अन्-आन्' इति अ. पाठः, यथा आनङि च अन् आन् इत्येवं रूपेण विधानं तथाऽत्राविधानादिति तदभिप्रायः । 'अन्त्येवम' इति क. पाठः ॥

३ नन्वेवं कथं समासोऽत आह—**सूत्रे इति** ॥ छाया ॥

४ कोष्ठकान्तर्गतः पाठः प. घ. पुस्तकयोर्न ।

५ **प्राप्तेति** । दध्ना जुहोतीत्यादिवत् ॥ छाया ॥

६ कृष्णाद्युक्तिं खण्डयति—**यत्त्विति** ॥ **न्यायेनेति** पूर्वान्वयी ॥ तत्रोपपादयति—**अनान्तर्यमिति** । तदाहीत्यादिः ॥ सिद्धान्तिमतेनाह—**अरारादीति** ॥ छाया ॥

७ व्युत्क्रमेण दोषमाह—**अभक्ते इति** ॥ छाया ॥

८ **निवर्तनं चेति** । अत एव तेन षष्ठीसमास उपपन्नः, द्वन्द्वान्ते श्रवणात्प्रत्येकं संबन्धात् ॥ छाया ॥

( दूषणोपपत्तिभाष्यम् )

एवमपि–प्रियं ग्रामणि कुलमस्य–प्रियग्रामणिः, प्रियसेनानिः-अत्रापि प्राप्नोति । तस्माद्धातुरेव विशेष्यते, धातौ च विशेष्यमाणे इह न प्राप्नोति–गीः, पूः ॥ दीर्घ ॥

( लत्वोदाहरणभाष्यम् )

लत्व । लत्वं च न सिध्यति—निजेगिल्यते । "ग्रो यङि" इति लत्वं न प्राप्नोति ॥

( प्रदीपः ) लत्वं चेति । 'ग्रः' इत्यवयवषष्ठीति चोद्यम् ॥

( दोषबाधकभाष्यम् )

नैष दोषः । 'ग्रः' इत्यनन्तरयोगैषा षष्ठी ॥

( उद्द्योतः ) अनन्तरयोगेति । अनन्तरशब्दोऽव्यवहितवाची ॥

( दोषसाधकभाष्यम् )

एवमपि स्वर्जेगिल्यत इत्यत्रापि प्राप्नोति ॥

( दोषबाधकभाष्यम् )

एवं तर्हि यङा आनन्तर्यं विशेषयिष्यामः ॥ अथवा 'ग्रः' इति पञ्चमी ॥ लत्व ॥

( यक्स्वरोदाहरणभाष्यम् )

यक्स्वर । यक्स्वरश्च न सिध्यति—गीर्यते स्वयमेव, पूर्यते स्वयमेव । "अचः कर्तृयकि" इत्येष स्वरो न प्राप्नोति, रेफेण व्यवहितत्वात् ॥

( दोषोद्धारभाष्यम् )

नैष दोषः । 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम् ॥ यक्स्वर ॥

( उद्द्योतः ) स्वरविधाविति । यद्यपि हल्स्वरप्राप्तौ स्वरोद्देश्यकविधौ चेदम् । अत एवाचः कर्तृ-इति सूत्रेऽच इति चरितार्थम् । तथापि तदनाश्रयेणैकदेश्युक्तिर्भाष्यमिति तत्त्वम् ॥

( अभ्यस्तस्वरोदाहरणभाष्यम् )

अभ्यस्तस्वर । अभ्यस्तस्वरश्च न सिध्यति—मा हि स्म ते पिपरुः, मा हि स्म ते बिभरुः । 'अभ्यस्तानामादिरुदात्तो भवतीति अजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति, रेफेण व्यवहितत्वात् ॥

( प्रदीपः ) पिपरुरिति । पृ-लङ्-शप्-श्लुः-द्विर्वचनम् । अर्तिपिपर्त्योश्चेतीत्त्वम् । सिजभ्यस्तेति जुस् । जुसि चेति गुणः ॥

( उद्द्योतः ) भाष्ये माङ्प्रयोगोऽडभावाय, तस्मिन् हि अट्स्वरः स्यात् । हिप्रयोगो हि चेति निघातनिषेधाय, स्मशब्दो लङ्सिद्धये ॥

( दोषोद्धारकभाष्यम् )

नैष दोषः । 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम् ॥ अभ्यस्तस्वर ॥

( हलादिशेषोदाहरणभाष्यम् )

हलादिशेष । हलादिशेषश्च न सिध्यति—ववृते, ववृधे । अभ्यासस्येति हलादिशेषो न प्राप्नोति ॥ हलादिशेष ॥

( प्रदीपः ) ववृत इति । अभ्यासावयवस्यानादेर्हलो निवृत्त्या भाव्यमिति रेफस्य निवृत्त्यसिद्धिः ॥

( उद्द्योतः ) अभ्यासावयवस्येति । गर्भवदनवयवस्यापि तद्ग्रहणेन ग्रहणं तन्मध्यपतितन्यायेन । न त्वेतावताऽवयवत्वमिति भ्रमितव्यमिति भावः ॥ यद्वा 'ऋवर्णान्ताभ्यासस्य' इत्यर्थे पूर्वं तकारस्य हलादिशेषेण निवृत्तावुरदत्वम् । ततः पुनर्हलादिः शेषो न स्यात्, अनवयवत्वादिति भावः । न चैवं लक्ष्ये लक्षणस्येति न्यायेन पुनर्हलादिःशेषानापत्तिरिति वाच्यम् । लक्ष्यभेदात् ॥

( विसर्जनीयप्रतिषेधोदाहरणभाष्यम् )

विसर्जनीयः । विसर्जनीयस्य प्रतिषेधो वक्तव्यः—नार्कुटः, नार्पत्यः । "खरवसानयोर्विसर्जनीयः" इति विसर्जनीयः प्राप्नोति ॥ विसर्जनीय ॥

( प्रदीपः ) नार्कुट इति । यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं च–इति रेफान्तस्य पदत्वाद्विसर्जनीयप्रसङ्गः ॥

( उद्द्योतः ) नृकुटीशब्दाद् भवादावण् । नृपतेर्दित्यदित्येति ण्यः ॥ ननु रेफान्तान्न सुब्विधिरिति कथं तदन्तस्य प्रत्ययलक्षणेन पदत्वमत आह—यस्मादिति । यस्माद्विधिस्तद्वृत्तिनृशब्दत्वं नाशब्दस्य स्थानिवद्भावेन । तदादित्वं च रेफान्तस्य मुख्यम्, सुबन्तत्वं च प्रत्ययलक्षणेनेति भावः ॥

( प्रत्ययाव्यवस्थोदाहरणभाष्यम् )

प्रत्ययाव्यवस्था च । प्रत्यये व्यवस्था न प्रकल्प्येत—किरतः, गिरतः । रेफोऽप्यभक्तः, प्रत्ययोऽपि । तत्र व्यवस्था न प्रकल्पते ॥

( प्रदीपः ) किरत इति । एकवचने किरतीति नित्यत्वात् पूर्वं विकरणः । आङ्गं तु कार्यमनित्यम् । अकृते हि विकरणे गुणः प्राप्नोति, कृते त्वित्त्वमिति । द्विवचने तु द्वयोरपि नित्यत्वात्परत्वादित्त्वम्, तत्र रेफोऽभक्तत्वान्न धात्ववयव इति विकरणो न स्यात् । स हि धातोः परो विधीयते । अथ विकरणात्परो रेफस्तदाऽप्यणः परो न स्यादिति व्यवस्था द्वयोर्न प्रकल्पते । अथ व्यवहितेऽपि परशब्दस्य प्रवृत्तिस्तथापि समीहिता व्यवस्था न प्रकल्पत इति प्रत्ययाव्यवस्थोक्ता ॥

---

१ 'लत्वं' इति अ. क. पाठः ॥

२ 'भवति अजा' इति क. पाठः । अभ्यस्तानामादिरुदात्तो भवतीत्येष स्वरः अजादौलसार्वधातुक इत्युक्तत्वान्न भवतीत्यर्थः । आद्य इति शब्दः प्रकारार्थः, द्वितीयश्च हेत्वर्थः ॥

३ 'हलादिशेषः' इति अ. क. पाठः ॥

४ 'हलादिःशेषश्च' इति क. पाठः ॥

५ ननु तेन ग्रहणम्, अथ च नावयवत्वमिति विरुद्धमित्यत आह—यद्वेति ॥ छाया ॥

६ 'विसर्जनीयः' इति अ. च. पाठः ॥

७ 'प्रकल्पते' इति क. पाठः ।

( उद्द्योतः ) एकवचनान्तानुदाहरणे बीजमाह—**एकेति** ॥ **नित्यत्वादिति** । विकरणविधौ 'सार्वधातुके'इति विषयसप्तमी । अन्यथाऽभक्तत्वेऽनन्तरसार्वधातुकाभावेन विकरणाप्राप्तेर्नित्यत्वं व्याहतं स्यादिति भावः ॥ **नित्यत्वादिति** । तसो ङित्त्वादिरवस्यैव प्रवृत्तेः ॥ **न प्रकल्पत इति** । नियमेन विकरणस्यैव व्यवहितपरत्वं न सिध्येदिति भावः ॥

( पूर्वान्तपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि पूर्वान्तः करिष्यते ।**

( २९९ पूर्वान्तपक्षे दूषणाक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ पूर्वान्ते र्ववधारणं विसर्जनीयप्रतिषेधो यकूस्वरश्च ॥ * ॥

( भाष्यम् )

**यदि पूर्वान्तः, रोरवधारणं कर्तव्यम्—"रोः सुपि" रोरेव सुपि नान्यस्य । सर्पिष्षु, धनुष्षु । इह मा भूत्—गीर्षु, पूर्षु ॥**

( प्रदीपः ) **गीर्ष्विति** । परादौ सुब्ग्रहणेन गृह्यत इति न पदान्तत्वमिति भावः ॥ अभक्तपक्षेऽपि तदादिवचनात्प्राप्तिरिति कर्तव्यं र्ववधारणम् ॥

( इतरपक्षेऽपि लाघवाभावभाष्यम् )

**परादावपि सत्यवधारणं कर्तव्यम्—चतुर्ष्वित्येवमर्थम् ॥**

( विसर्जनीयप्रतिषेधोदाहरणभाष्यम् )

**'विसर्जनीयप्रतिषेधः' । विसर्जनीयस्य च प्रतिषेधो वक्तव्यः-नार्कुटः, नार्पत्यः । खरवसानयोर्विसर्जनीयः प्राप्नोति ॥**

( इतरपक्षेऽपि लाघवाभावभाष्यम् )

**परादावपि विसर्जनीयस्य प्रतिषेधो वक्तव्यः, नार्कलिपरित्येवमर्थम् । कलिपपदसंघातभक्तोऽसौ नोत्सहतेऽवयवस्य पदान्ततां विहन्तुमिति विसर्जनीयः प्राप्नोति ॥**

( प्रदीपः ) **कलिपपदेति** । नृकल्पशब्दादिञि वृद्धौ च रेफः प्रत्ययसमुदायस्य कलिपशब्दस्य भक्तत्वादवयवः, न तु कल्पशब्दस्य । ततश्च कल्पशब्दे परतः पदसंज्ञा विधीयमाना तदादीत्यधिकारात् रेफान्तस्य भवतीति विसर्जनीयप्रसङ्गः । पदशब्देन पद्यतेऽनेनार्थ इति-प्रत्यय उच्यते । तेन प्रत्ययसमुदायभक्तो रेफः कल्पशब्दे परतो व्यवस्थितो न कल्पावयव इति तयोः पौर्वापर्यमस्त्येवेत्यवयवस्यात्मन एव पदान्ततां विहन्तुं नोत्सहत इत्यर्थः । क्वचित्तु **कल्पपदसंघात** इति पाठः । तत्रायमर्थः—कल्पशब्दस्य संबन्धि यत्पदं नार्कलिपरिति तस्य पदस्य योऽवयवः प्रत्ययसंघातः कलिपशब्दस्तद्भक्त इत्यर्थः ॥

( उद्द्योतः ) **नृकल्पेति** । नृशब्दात्कल्पः प्रत्ययः ॥ **पदसंज्ञेति** । **स्वादिष्वित्यनेन** । यद्यसौ कल्पशब्दावयवः स्यात् तदा स्वावयवभूतरेफान्तस्य 'नार्' इत्यस्य न स प्रत्ययः परः स्यादिति भावः ॥ परादिरित्यत्र परशब्देन परत्वपर्याप्त्यधिकरणो यावान् स सर्वोऽपि गृह्यते, न तदवयवोऽपीति तात्पर्यम् ॥ ननु प्रत्ययस्य कथं पदत्वमत आह—**पदशब्देनेति** । कलिपरूपः पदसङ्घातः पदसमुदाय इति भाष्यार्थः । तस्मात्पक्षत्रयेऽपि विसर्जनीयप्रतिषेधस्य वक्तव्यतया नायं दोष इति भावः ॥ वृद्धेर्बहिरङ्गासिद्धत्वं तु नोक्तम्, त्रिपादीस्थेऽन्तरङ्गे तत्परिभाषाया अप्रवृत्तेः ॥

( यकूस्वरोदाहरणभाष्यम् )

**'यकूस्वरश्च' । यकूस्वरश्च न सिध्यति—गीर्यते स्वयमेव, पूर्यते स्वयमेव । "अचः कर्तृयकि" इत्येष स्वरो न प्राप्नोति ॥**

( दूषणबाधकभाष्यम् )

**नैष दोषः । उपदेश इति वर्तते ॥**

( उद्द्योतः ) भाष्ये—**उपदेश इति वर्तत इति** । **अचः कर्त्रिलत्र** तास्यनुदात्तेदित्यत इत्यर्थः ॥

( परादिपक्षाभ्युपगमभाष्यम् )

**अथवा पुनरस्तु परादिः ॥**

---

१ सद्धरस्वरूपदोषप्रसङ्गेनादौ पूर्वान्तपक्षमाह—**एवं तर्हीति** ॥ छाया ॥

२ 'नान्यस्य रेफस्य' इति छ. पाठः ॥

३ 'र्जनीय इति विसर्जनीयः प्राप्नोति' इति क. पाठः ॥

४ **परादावपीति** । एवं च पक्षत्रयमपि समानमित्यदोष एवेति भावः ॥ छाया ॥

५ 'प्राप्नोति । विसर्जनीयप्रतिषेधः ॥' इति मुद्रितपाठः । एतादृशः पाठः क्वापि नोपलभ्यते । यत्र समासगतनिर्विभक्तिकानामुपादानं तत्रैवान्ते तादृशो निर्देशः, यथा पूर्ववार्तिके । अत्र सविभक्तिकस्यैवोपादानान्नान्ते तथा निर्देश इति व्यवहारः । एवमग्रेऽपि ॥

६ 'कल्पपदसंघातभक्त इति' इति क. पाठः ॥

७ 'प्रत्ययकलिपश' इति ग. पाठः ॥

८ **यद्यसाविति** । परशब्देन तस्यैव ग्रहणादिति भावः ॥ छाया ॥

९ **स इति** । तथा च पदसंज्ञैव नेति भाष्यासंगतिरेव स्यादिति भावः ॥ छाया ॥

१० **यावान्**-संभवति पदप्रत्ययः ॥ छाया ॥

११ एतत्तात्पर्यमाह—**तस्मादिति** ॥ छाया ॥

१२ दण्डिकृष्णरत्नाद्युक्तिं खण्डयति—**वृद्धेरिति** ॥ **अप्रेति** । सर्वथेति भावः ॥ छाया ॥

१३ **अचः कर्त्रिति** । उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वेति सूत्रार्थः ॥ अत्रोपदेशपदानुवृत्तिमनाश्रित्य दोषः । तदाश्रयेण च परिहारः ॥

( ३०० परादिपक्षे दूषणाक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ परादावकार[1]लोपौत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटो [2]ऽव्यवस्थाऽभ्यासलोपोऽभ्यस्ततादिस्वरो दीर्घत्वं च ॥ * ॥

( भाष्यम् )

यदि परादिः, अकारलोपः प्रतिषेध्यः–कर्ता, हर्ता। "अतो लोपः" 'आर्द्धधातुके' इत्यकारलोपः प्राप्नोति ॥

( उद्योतः ) भाष्ये—अथवा पुनरस्तु परादिरिति । वेवधारणविसर्जनीयप्रतिषेधयोः कर्तव्यतायाः पूर्वान्तपरादिपक्षयोः समत्वात् परादिपक्षो वा वक्तव्यः पूर्वान्तो वेत्यत्र न विशेष इति चेत् कश्चिद् ब्रूयात् तत्राह वार्तिककारः—परादावितीत्यर्थः ॥ परादाविति । वार्तिके पुगन्तद्वन्द्वस्य प्रतिषेधपदेन षष्ठीत[3]त्पुरुषः। वक्तव्य इति शेषः । चङ्युपधाह्रस्वत्वं वक्तव्यम् । अग्रे सर्वत्रायमेव शेषो बोध्यः ॥

( दूषणबाधकभाष्यम् )

नैष दोषः। उपदेश इति वर्तते ॥

( उद्योतः ) उपदेश इति वर्तत इति । अतो लोप इत्यत्रानुदात्तोपदेश इत्यत इत्यर्थः ॥

( दूषणसाधकभाष्यम् )

यद्युपदेश इति वर्तते, 'धिनुतः, कृणुतः' अत्र न प्राप्नोति ॥

( प्रदीपः ) धिनुत इति । एकवचनेऽसत्यप्यकारलोपे आद्गुणेन वा, विकरणस्य वा गुणे पररूपेण धिनोतीति सिद्ध्यतीति द्विवचनमुदाहृतम् ॥

( उद्योतः ) पररूपेण—अतो गुण इत्यनेन ॥

( दूषणबाधकभाष्यम् )

नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते ॥

किं तर्हि ?

आर्धधातुकमभिसंबध्यते—आर्धधातुकोपदेशे यदकारान्तमिति ॥ अकारलोप ॥

( प्रदीपः ) आर्धधातुकोपदेश इति । [4]संनियोगेन चाकारस्य विधानादार्धधातुकप्रतिपत्तिकालेऽकारान्तप्रतिपत्त्या सिद्धो लोपः ॥

( औत्त्वोदाहरणभाष्यम् )

औत्व । औत्वं च प्रतिषेध्यम् । चकार, जहार। "आत औ णलः" इत्यौत्वं प्राप्नोति ॥

( दोषोद्धारभाष्यम् )

नैष दोषः। 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येवं न भविष्यति ॥

( प्रदीपः ) निर्दिश्यमानस्येति । नन्वादेः परस्येति रेफस्यौत्वेन भाव्यम् ॥ नैष दोषः । णल इत्यनेन यत्प्रत्यायितं प्रयोगविषयमकारमात्रं तस्याकारान्तादङ्गादुत्तरस्यादेशः प्रवर्तते, सरेफस्य त्वनुमीयमानत्वादादेशाभावः । प्रत्याय्यप्रत्यायकाभेदविवक्षया षष्ठीनिर्दिष्टस्यादेशा इत्युच्यते ॥

( उद्योतः ) नन्विति । आदेः परस्येति निर्दिश्यमानपरिभाषाबाधकमित्यभिमानः ॥ तस्यैवायमनुसंहार इत्युत्तरम् ॥ ननु सूत्रे उच्चारितस्य णलो नादेशः, किंतु तत्प्रत्यायिताकारस्येति 'षष्ठीनिर्दिष्टस्यादेशाः' इत्युक्तं स्यादत आह—प्रत्याय्येति । [5]निर्दिश्यमानस्येत्यस्य प्रतिपादितस्येत्यर्थे तु पादन्तस्यापि पदादेशापत्तिरिति बोध्यम् ॥

( आक्षेपभाष्यम् )

यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ?

( समाधानभाष्यम् )

रेफेण व्यवहितत्वात् ॥ औत्व ॥

( प्रदीपः ) रेफेणेति । यद्रूपं षष्ठीनिर्दिष्टमकारमात्रं तद्व्यवहितमित्यर्थः । यदि तु प्रत्ययस्येत्युच्यते लिट्, इति च तदा व्यवधानाभावात् स्यादेवादेशः ॥

( उद्योतः ) यदि त्विति । तथा तु [6]वक्तुमशक्यं, सर्वत्रादेशापत्तेरिति भावः ॥

( उदाहरणभाष्यम् )

पुक्प्रतिषेध । पुक् च प्रतिषेध्यः-कारयति, हारयति । 'आतां पुक्' इति पुक् प्राप्नोति ॥

( उदाहरणभाष्यम् )

चङ्युपधाह्रस्वत्वम् । चङ्युपधाह्रस्वत्वं च न सिध्यति—[7]अचीकरत्, अजीहरत् । "णौ चङ्युपधाया ह्रस्वः" इति ह्रस्वत्वं न प्राप्नोति ॥

( उदाहरणभाष्यम् )

इटो [8]व्यवस्था । इटश्च व्यवस्था न कल्पते–आस्त-

---

१ 'कारलोपऔत्व' इति अ. क. ख. पाठः ॥

२ 'मिटोऽव्यवस्था' इति छ. पाठः ॥

३ तत्पुरुष इति । तथाचासमस्तपाठो न तत्र ॥ छाया ॥

४ संनियोगेनेति । अकारस्य संनियोगेनार्धधातुकस्य विधानादित्यर्थः ॥ छाया ॥

५ इदमपि निर्दिश्येत्यस्योच्चारितस्येत्यर्थे उक्तम् । यदा तु प्रतिपादितस्येत्यर्थस्तदा न काचिदनुपपत्तिरिति दण्डिकृष्णाद्युक्तिं खण्डयति—निर्दिश्येति ॥ छाया ॥

६ वक्तुं–वक्तुमेव ॥ छाया ॥

७ अचीकरदिति । अत्र णिनिमित्तायां वृद्धावाकारस्यानुपधात्वात् णौ चङीति ह्रस्वत्वं न स्यात् ॥ छाया ॥

८ 'इटोऽव्यवस्था' इति छ. पाठः । नाय मुद्योतानुकूलः पाठः। 'वक्तव्य इति शेषः । अग्रे सर्वत्रायमेव शेषो बोध्यः' इत्युद्योतानुसारेण 'इटो व्यवस्था वक्तव्या' इत्येव तदर्थः । तत्राकारच्छेदे अव्यवस्थाया विधेयत्वमापद्येतेति अकारप्रश्लेषो निर्मूलः ॥

**रिता, निपरिता । इडपि परादिः, रेफोऽपि । तत्र व्यवस्था न प्रकल्पते ॥ इटो व्यवस्था ॥**

**( प्रदीपः ) आस्तरितेति** । नित्यत्वाद् गुणे रपरत्वे च कृते **नेड्वशि कृती**ति प्रतिषेधादप्रवृत्तिलक्षणेटोऽव्यवस्था । प्रवृत्तौ वा रेफात् पूर्वं इडित्यनिष्टा व्यवस्था प्राप्नोति ॥

**( उद्द्योतः )** कथं तर्हीडपीत्यादिभाष्यमत आह—**प्रवृत्तौ वेति** । **नेड्वशी**त्यत्र 'उ[1]पदेशे' इत्यपकृष्योपदेशे वशादेरेव निषेध इति भावः ॥

## ( उदाहरणभाष्यम् )

**अभ्यासलोपः। अभ्यासलोपश्च वक्तव्यः—ववृते, ववृधे। 'अभ्या[2]सस्य' इति हलादिशेषो न प्राप्नोति॥ अभ्यासलोप ॥**

**( उद्द्योतः )** भाष्ये—**ववृत इति** । ऋवर्णान्ताभ्यासस्यादित्यर्थे पूर्वं तलोपे पश्चाद्रेफस्तस्य लोप इति पक्षे इदम् ॥ 'व[3]व्रे' इत्यप्युदाहार्यम् ॥

## ( उदाहरणभाष्यम् )

**अभ्यस्तस्वर । अभ्यस्तस्वरश्च न सिध्यति—मा हि स्म ते पिपरुः, मा हि स्म ते बिभरुः । 'अभ्यस्तानामादिरुदात्तो भवतीति अजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति ॥ अभ्यस्तस्वर ॥**

## ( उदाहरणभाष्यम् )

**तादिस्वर । तादिस्वरश्च न सिध्यति—प्रकर्ता, प्रकर्तु[4]म्। "ता[5]दौ च निति कृत्यतौ" (६।२।५०) इत्येष स्वरो न प्राप्नोति ॥**

**( उद्द्योतः ) प्रकर्ते**ति । तृ[6]न् ॥ **एषस्वरः**–पूर्वपदप्रकृतिस्वरः ॥

## ( दूषणबाधकभाष्यम् )

**नैष दोषः । उक्तमेतत्—*कृदुपदेशे वा ताद्यर्थमि[7]डर्थम् * इति ॥**

**( उद्द्योतः )** कृदुपदेशकालिकतादिप्रत्ययप्रतीत्य[8]र्थं **तादा**विति सूत्रे कृद्ग्रहणमिति भाष्योदाहृतवार्त्तिकार्थः । **तादा**वितिसूत्रेण गतेः स्वरो विधीयते । क्रियायोगे च गतित्वम् । क्रियावाची च धातुः । तत्र तिङन्ते पूर्वपदाभावेन कृदन्त एव सिद्धमिति कृद्ग्रहणमुक्तार्थम् । **न च** कृद्ग्रहणाभावे तादित्वमुत्तर[9]पदस्य विशेषणं स्यात्, तथा च 'प्रतरिता' इत्यादावेव स्यादिति तस्य कृद्विशेषणत्वाय तदिति **वाच्यम्** । श्रु[10]तनितप्रत्ययविशेषणताया एव न्याय्यत्वादिति दिक् ॥

## ( उदाहरणभाष्यम् )

**'दीर्घत्वं च' न सिध्यति । गीः, पूः । 'रेफवकारान्तस्य धातोः' इति दीर्घत्वं न प्राप्नोति ॥ उरण् रपरः ॥ ५१ ॥**

**( प्रदीपः ) गीरिति** । अन्तरङ्गत्वाद्विलोपे कृते इत्त्वे रपरत्वे च सुपोऽयमादी रेफ इति कल्पनायां **रात्सस्ये**ति सुलोपे कृते दीर्घत्वं न स्यादिति **पूर्वान्तपक्षो**ऽत्र स्थितः ॥ ५१ ॥

**( उद्द्योतः )** ननु रेफस्य परादित्वेऽपृक्तत्वाभावाद्विलोपो न प्राप्नोतीति कुतो नोक्तम्? अत आह—**अन्तरङ्ग[11]त्वादिति** ॥ तदानीं सुपोऽभावादाह—**कल्पनायामिति** । पदस्य विभज्यान्वाख्यानमिति भावः ॥ **पूर्वान्तेति** । ना[12]र्कुटादौ वचनेनैव निर्वाह इति भाष्ये उक्त इति बोध्यम् ॥ [13]एवं च **रपर** इति अवयववाचिपरशब्देन षष्ठ्यर्थे बहुव्रीहिरिति ध्वनितम् । अवयवत्वं चावयवसादृश्ये पर्यवस्यति । [14]न हि वर्णस्य वर्णान्तरमवयवो भवति । अ[15]त एव प्रसङ्गावस्थायां रपरत्वेऽपि गुणादिशब्देन विधानम्, **यदागमा** इति न्यायेन विशिष्टस्य गुणादित्वात् । [16]एवं ऋवर्णादच्चि पूर्वपरयोरन्तरतमो

---

१ **उपदेश इति । 'एकाच उपदेशेऽनुदात्तात्'** इत्यतः सिंहावलोकनन्यायेनेति भावः ॥ छाया ॥ पूर्वं रेफप्रवृत्त्या वशादित्वेऽपीटः प्रवृत्तिमुपपादयति—**नेड्वशीत्यत्रेति** ॥

२ **अभ्यासस्येति** । हलादिः शेष इत्यत्राभ्यासस्येत्यनुवर्तते । रेफस्य परादित्वे तस्याभ्याससम्बन्धित्वाभावान्नानेन लोपः प्राप्नुयादित्यर्थः ॥

३ तदभावेऽसंगतेराह—**वव्रे इति** ॥ छाया ॥ दीर्घोऽकितः ( ७।४।८३ ) इति सूत्रे 'ऋवर्णान्ताभ्यासस्य-अभ्याससम्बन्धिऋवर्णस्य वा' इति पक्षद्वयमुपपादितम् ॥

४ 'तुंम्, प्रहर्ता, प्रहर्तुम्' इति ग. पाठः ॥

५ **तादाविति** । तुशब्दवर्जिते निति तकारादौ कृति परेऽनन्तरो गतिः प्रकृत्येति हि सूत्रार्थः ॥

६ नित्त्वार्थमाह—**तृन्निति** ॥ छाया ॥

७ **इडर्थमिति** । तेन प्रलपितेत्यादाविष्टसिद्धिः । तथा चात्र रस्य परादित्वेऽप्युपदेशे तादित्वसत्त्वाददोष इति भावः ॥ छाया ॥ तादौ च निति कृत्यतौ ( ६।२।५० ) इति सूत्रे भाष्ये वार्तिकमिदम् ॥

८ ननु कृद्ग्रहणस्य तिङ्व्यावृत्त्या साफल्येन कथं ततस्तल्लाभस्ते-नोक्तोऽत आह—**तादावितीति** ॥ **धातुरिति** । तस्मात्प्रत्ययद्वयम्—तिङःकृतश्चेति शेषः ॥ **तत्र**–तयोर्मध्ये ॥ छाया ॥

९ **उत्तरपदेति** । नितीत्यनेन प्रत्ययग्रहणे यस्मादिति तदन्तोपस्थितेरिति भावः ॥ छाया ॥

१० **श्रुतानुमितयो**रिति न्यायेनाह—**श्रुतेति** ॥ छाया ॥

११ **अन्तरङ्गत्वादिति** । अनैमित्तिकत्वादिति भावः ॥ छाया ॥

१२ कृष्णरत्नाद्युक्तेरसांगत्यस्य प्रागुक्तत्वादाह—**नार्कुटादाविति** ॥ छाया ॥

१३ भाष्यादितात्पर्यमाह—**एवं चेति** ॥ वास्तवतत्त्वासंभवाद्रत्नाद्युक्तेरसांगत्यादाह—**अवयवत्वमिति** । वाचनिकमित्यादिः ॥ छाया ॥

१४ **न हीति । हलन्ताच्चे**ति सूत्रे भाष्ये तथोक्तेः ॥ छाया ॥

१५ प्रागुक्तभाष्योक्तं द्रढयति—**अत एवेति** ॥ अस्यार्थमाह—**यदेति** । तेनारोपितत्वेनागमत्वपर्यवसानात् ॥ खट्वर्श्यादावत्र पक्षेऽदोषाय प्रकृतसूत्रार्थमेकवाक्यतयाऽऽह—**एवं चेति** । विशिष्टे तत्त्वे चेत्यर्थः ॥ **अवर्णादच्ची**ति पाठः ॥ छाया ॥

१६ 'एवं च ऋवर्णा' इति घ. प. पाठः । 'एवञ्चावर्णादच्चि' इति मुद्रितपाठः ॥

रैपरोऽण् भवतीत्यर्थ इति बोध्यम् ॥ गुणादिशब्देनारारोग्रहणाभावे तु 'ऋकारस्य गुणवृद्धी अरारावेव' इति नियमो न स्यात्, यतो गुणादिशब्देन अकारादे रेफः परो यस्मात्तादृशस्य विधानम् । गुणत्वादिकं चाकारादिनिष्ठमेव । तेन च नान्तर्यम् । एतदेवाभिप्रेत्य **रदाभ्यामिति** सूत्रे भाष्ये **गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तत** इति वक्ष्यति[2] ॥ अत एव '**यद्यन्त इति वर्तते ततः पूर्वान्तः**' इत्युपक्रमस्थं भाष्यमेकदेश्युक्तिः । तथा हि सति यथा परादिपक्षे नार्कलिपिरित्यादौ रेफस्य कल्पीति समुदायावयवत्वोपपत्तये परत्वपर्यायव्यधिकरणादिरित्यर्थस्तथा पूर्वान्त इत्यस्य पूर्वत्वपर्यायव्यधिकरणान्त इत्यर्थापत्तौ उक्तदोषो[3] **रदाभ्यामिति** सूत्रस्थभाष्यविरोधश्चेत्याहुः ॥ ५१ ॥

---

( ४७ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ८ )

# अलोऽन्त्यस्य ॥ १ । १ । ५२ ॥

( अल्ग्रहणविशेषणताविचारः )

( आक्षेपभाष्यम् )

**किमिदमल्ग्रहणं[4]—अन्त्यविशेषणम्, आहोस्वित्—आदेशविशेषणम्?**

( **प्रदीपः** ) **अलोऽन्त्यस्य** ॥ ५२ ॥ **किमिदमिति** । षष्ठीप्रथमयोर्निर्देशस्य साम्यात् **प्रश्नः** ॥

( भाष्यम् )

**किं चातः?**

( अन्त्यविशेषणत्वे दूषणभाष्यम् )

**यद्यन्त्यविशेषणम्, आदेशोऽविशेषितो भवति ॥**
**तत्र को दोषः?**
**अनेकाल्प्यादेशोऽन्त्यस्य प्रसज्येत ॥**

( **उद्योतः** ) **अलोन्त्य०** ॥ ५२ ॥ भाष्ये—**प्रसज्येतेत्यनन्तरं** तन्निवृत्तयेऽनेकाल् सर्वस्येति वाच्यं स्यादिति शेषः ॥

( आदेशविशेषणपक्षे लाघवभाष्यम् )

**यदि पुनः[6] "अलन्त्यस्य" इत्युच्येत, तत्रायमप्यर्थः—"अनेकाल्शित्सर्वस्य" इत्येतन्न[7] वक्तव्यं भवति । इदं नियमार्थं भविष्यति—अलेवान्त्यस्य भवति, नान्य इति ॥**

( **प्रदीपः** ) **यदि पुनरिति** । प्रथमाबहुवचनम्—अल इति यदि व्याख्यायेतेत्यर्थः । अस्मिंश्च पक्षे—**रहोरजसां लोपश्चेति** लोपः सर्वादेशः प्राप्नोति—विरजीकरोतीति ॥ **इदं नियमार्थमिति** । अन्त्यस्यादेशा भवन्तीत्यलोऽप्याक्षेपादल्ग्रहणमनल्व्यावृत्त्यर्थमिति भावः ॥

( **उद्योतः** ) नन्वलन्त्यस्येत्युच्यमाने सूत्रभेदः स्यादत आह—**प्रथमेति** । बहुत्वस्याविवक्षितत्वं दर्शयितुमेवमुक्तमिति भावः ॥ **प्राप्नोतीति** । लोपस्याभावरूपत्वेनालरूपत्वाभावादिति भावः । एवं चायं पक्षो दुष्ट एव[8] ॥ **क्सस्याचीति** लोपे प्रकृते **लुग्वा दुहेति** लुग्ग्रहणस्य—प्रथमान्तपक्षेऽल्ग्रहणमनेकाल्भिन्नलक्षकमित्यर्थज्ञापकत्वमिति नायं दोष इति भाष्याशयमन्ये ॥ भाष्ये—**इदं नियमार्थमिति**—इदमा सूत्रं तु न परामृश्यते, अप्राप्तान्त्यादेशविध्यर्थत्वात्तस्य । किंतु अलपदं - इति तस्य नियमार्थत्वमुपपादयति—**अन्त्यस्येति** ॥ **अलोऽपीति** । अलात्मकादेशस्यापीत्यर्थः[9] ॥ **अपिना**—अनेकालोऽपि ॥

( आदेशविशेषणत्वपक्षे आक्षेपभाष्यम् )

**एवमप्यन्त्योऽविशेषितो भवति[10] ॥**
**तत्र को दोषः?**
**वाक्यस्यापि पदस्याप्यन्त्यस्य प्रसज्येत ॥**

( **प्रदीपः** ) **वाक्यस्याऽपीति** । दोषपरत्वादेवमुक्तम्, न तु वाक्यं षष्ठीनिर्दिष्टमस्ति ॥ पदस्य तु परमानड्डुह्यामित्यत्रानडुच्छब्दस्यान्त्यस्य सर्वस्य दत्वं प्राप्नोति ॥

( **उद्योतः** ) **न त्विति** । 'षष्ठी स्थाने' इत्यनुवर्त्य स्थानषष्ठीबोधितान्त्यस्येति व्याख्यानादित्यर्थः ॥ यत्तु **यथातथायथापुरयो**-

---

१ **रपर इति** । गुण इत्यपि बोध्यम् ॥ पञ्चम्यर्थबहुव्रीहिणाऽनवयवत्वे आह—**गुणादीति** ॥ तदेवाह—**यत इति** । एतदेकवाक्यतयेति भावः ॥ छाया ॥

२ **वक्ष्यतीति** । उः स्थानेऽण् प्रसज्यमान एव रपरो भवति पूर्वभक्तश्च रेफ इत्ययं गुण इति तत्र कैयटः ॥ **अत एव**—उक्तार्थस्यावश्यकत्वादेव ॥ छाया ॥

३ **उक्तेति** । तन्नियमासिद्धिरूप इत्यर्थः ॥ अनेन उः स्थाने इति परिभाषालब्धम् । **उदात्तस्वरितयो**रितिवत् **स्थानेऽन्तरे**त्यतस्तदनुवृत्त्या लक्षणया प्रसङ्गावस्थायामित्यर्थः । तथा च द्वितीयमित्याद्यपि भाष्यमेकदेश्युक्तिरेवेति सूचितम् ॥ छाया ॥

४ **अल्ग्रहणमिति** । अन्त्यस्याल आदेशः, अन्त्यस्यादेशोऽल इति वाऽर्थः ॥ अन्त्यस्य विशेषणं षष्ठ्यन्तं, अन्यत्र प्रथमान्तम् ॥

५ आदेशेनाल्पदानन्वयेऽन्त्यवर्णस्य स्थानेऽनेकाल्प्यादेशः प्रसज्येत ॥ अस्मिन् पक्षे 'अलः' इति षष्ठ्यन्तम् ॥

६ आदेशविशेषण पक्षे अनेकाल्सर्वस्येत्यकरणरूपं लाघवं भाष्ये दर्शयति—**यदि पुनरिति** ॥ **अलन्त्यस्येति** । यथान्यासे षष्ठीप्रथमयोः संशयः, संशयनिवारणायैवं न्यासः क्रियते । तथा च न सूत्रभेदः ॥

७ **इत्येतदिति** । तद्घटितं न कार्यमेवेति भावः ॥ छाया ॥

८ **दुष्ट एवेति** । एवं च नायं पक्षो विवक्षित इति सूचयितुं प्रागेव दोषोपन्यास इति कैयटतात्पर्यम् ॥ तं दूषयन्भाष्यमन्यथा योजयति—**क्सस्याचीति** । इत्यत्रैवेत्यर्थः ॥ (छाया)

९ तदन्यस्य तेनाक्षेपासंभवादाह—**अलात्मकेति** ॥ छाया ॥

१० **एवमपि**—आदेशविशेषणपक्षे लाघवेऽपि ॥ नियमस्वीकारेऽपि आदेशविशेषणपक्षे दोषं दर्शयति—**वाक्यस्यापीति** । अन्त्यस्य वाक्यस्य पदस्य वेत्यर्थः ॥

रिति सूत्रे न यथातथा-अयथातथा, अयथातथाभावोऽयाथातथ्यमिति भाष्यदर्शनात्तत्प्रामाण्येन निपातसमुदायात् प्रत्ययः, निपातसमुदायेन नञ्समास इत्यङ्गीकार्यम् । तत्रायथातथाशब्दात् ष्यञि यस्येति लोपोऽवर्णान्ताङ्गस्य भसंज्ञकस्य जायमानस्तदन्त्यस्य यथातथेति पदसमुदायस्य स्यादिति ॥ तन्न, निर्दिश्यमानपरिभाषया सिद्धेः । तदनाश्रयेण वा तदुक्तिः ॥ पदस्य त्विति । अधिकृतपदस्येत्यस्य वस्वादिभिर्विशेषणादित्यर्थः ॥

( अन्त्यविशेषणत्वेऽपि गौरवनिरासभाष्यम् )

**यदि खल्वप्येषोऽभिप्रायः-तन्न क्रियेतेति, अन्त्यविशेषणेऽपि सति तन्न करिष्यते ॥**

**कथम्?**

**ङिच्चालोऽन्त्यस्येत्येतन्नियमार्थं भविष्यति—ङिदेवानेकालन्त्यस्य भवति नान्य इति ॥**

( प्रदीपः ) **यदि खल्वपीति** । अवश्यकर्तव्योऽसौ योगोऽपवादविप्रतिषेधार्थः ॥ अथ लाघवमात्रे आदरस्तत्राप्युच्यते-**अन्त्यविशेषणेऽपीति** ॥

(उद्द्योतः) 'यदि खलु' इति पराभिप्रायं वदता सूचितमन्यादृशं स्वाभिप्रायं प्रकटयति-**अवश्येति** ॥ **असौ योगः**-'अनेकाल्शित्' इति योगः । **अतो भिस** इत्यादावादेः **परस्ये**त्यादिबाधनार्थं इति भावः ॥ नन्वस्यावश्यकत्वेऽन्त्य**विशेषणे**ऽपीत्यादिग्रन्थोऽसङ्गतोऽत आह—**अथेति** । अलिति प्रथमान्तं मण्डूकानुवृत्त्याऽऽदेः **परस्ये**त्यत्र संबध्यत इति ऐसादौ न दोषः । तातङ्यपि ज्ञापकात्सर्वादेशत्वं भविष्यतीति भावः ॥ भाष्ये—**ङिदेवानेकालन्त्येति** । अल्रूपङ्इत्यस्य फलाभावादनेकालिति लब्धम् ॥ एवं चास्य सूत्रस्यानेकालादेशेऽप्रवृत्त्यैतत्साहचर्यादादेः **परस्ये**त्यस्याप्यनेकाल्यादेशेऽप्रवृत्तिरिति दिक् ॥

( स्थानषष्ठीविषयत्वस्थापनम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते?**

(उद्द्योतः) **किमर्थं पुनरिति** । किं स्थानषष्ठीनिर्देशविषयम्, उत षष्ठीमात्रविषयमिति प्रश्नः ॥

( ३०१ समाधानवार्तिकप्रथमखण्डम् ॥ १ ॥ )

## ॥ * ॥ अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः ॥ * ॥

( भाष्यम् )

**अलोऽन्त्यस्येत्युच्यते स्थाने विज्ञातस्यानुसंहारः क्रियते । स्थाने प्रसक्तस्य ॥**

( प्रदीपः ) **स्थाने विज्ञातस्येति** । 'षष्ठी स्थानेयोगा' इत्यनुवर्तते । तेन या षष्ठी स्थानेयोगत्वेन विज्ञाता साऽन्त्यमलमनुसंह्रियते । आदेशो वा यो निश्चितः सोऽन्त्यस्यालः स्थाने-इत्यनुसंह्रियते ॥

( उद्द्योतः ) स्थाने विज्ञातस्य कस्येत्यपेक्षायामाह—**षष्ठीति** । स्थाननिरूपितसंबन्धार्थकत्वेन ज्ञातस्य षष्ठीरूपप्रत्ययस्येत्यर्थः ॥ नन्वेवं 'विज्ञातायाः' इति वक्तुं युक्तमत आह—**आदेश इति** । स्थानषष्ठीसंबन्धादादेशत्वेन यो विज्ञात इत्यर्थः ॥ अन्ये तु-**अलोऽन्त्यस्येति** यदुच्यते तेन **स्थाने विज्ञातस्य**—समुदायस्थाने प्रसक्तस्यान्त्येऽप्यनु**संहारः**—उपसंहारः-तत्स्थानिकत्वमात्रं **क्रियते**—बोध्यत इति भाष्याक्षरार्थः ॥ **स्थाने विज्ञातस्ये**त्यस्य व्याख्या—**स्थाने प्रसक्तस्ये**ति । कैयटव्याख्याने पतद्वैयर्थ्यं भातीत्याहुः ॥

( ३०२ समाधानसाधकवार्तिकद्वितीयखण्डम् ॥ २ ॥ )

## ॥ * ॥ इतरथा ह्यनिष्टप्रसङ्गः ॥ * ॥

( भाष्यम् )

**इतरथा ह्यनिष्टं प्रसज्येत । टित्किन्मितोऽप्यन्त्यस्य स्युः ॥**

( प्रदीपः ) **इतरथेति** । यदि षष्ठीमात्रमनुसंह्रियेतेत्यर्थः । तत्र 'लविता' इति तृच ऋकारात्पूर्वमिट् प्राप्नोतीति दोषः । 'दापयति' इति पुगाकारस्य स्यात् । ततो यदुक्त**मर्थवतो ह्यागम** इति, तन्न युज्यते ॥

( उद्द्योतः ) **षष्ठीमात्रमिति** । उपलक्षणमेतत्, षष्ठीमात्रोच्चारणेन विधीयमानं वेत्यपि बोध्यम् ॥ **ततो यदुक्तमिति** । आकारावयवत्वे 'प्रणिदापयति' इत्यादौ णत्वं न स्यादित्यर्थः ॥ न चावयवावयवः समुदायावयव इति निर्वाहः, यैस्यावयवस्तद्विशिष्टे यत्र तदवयववृत्तिधर्मबुद्धिस्तादृशस्यावयवावयवस्य समुदायावयवत्वबुद्धिर्हि लोकसिद्धा, यथा भुजावयवाङ्गुल्यादिविशिष्टे भुजत्वबुद्धिसत्त्वात्तदवयवकशरीरावयवत्वबुद्धिरङ्गुल्यादौ । न चैवमत्राकारावयवपकारादिविशिष्टेऽवर्णत्वादिबुद्धिः । अर्थवत आगमे तु तद्विशिष्टे तदर्थवत्त्वबुद्धया

---

१ एवं कैयटाशयं प्रदर्श्य भाष्याशयमाह—**तदनेति** ॥ छाया ॥

२ **विशेषणादिति** । तथा च केवलेऽन्त्यथेष्टसिद्धावप्यन्त्रानिष्टापत्तिः ॥ छाया ॥

३ आदेशविशेषणेऽलि अनेकाल्शिदितिसूत्रं न कर्तव्यं भवतीति लाघवमित्याशयस्तर्हि पक्षान्तरेऽपि तन्न करिष्यत इत्यर्थः ॥

४ **ङिच्चेति** । अन्त्यविशेषणपक्षे ङिच्चेत्यत्रालोऽन्त्यस्येत्यनुवर्तते । षष्ठीनिर्दिष्टस्य ङिदादेशोऽन्त्यस्यालः स्थान इति तदर्थः । पूर्वेण सिद्धे नियमार्थमेतत् ॥ अनुवृत्तिप्रदर्शनाय 'अलोऽन्त्यस' इत्युपादानम् ॥

५ प्रक्रान्ताभ्रमायाह—**अनेकालिति** ॥ छाया ॥

६ मध्येऽसंबन्धायाह—**मण्डूकेति** ॥ छाया ॥ आदेशविशेषणपक्षे प्रथमान्तालपदस्यान्वयासम्भवात् ङिच्चेत्यत्र नानुवृत्तिरिति भावः ॥

७ **अस्य**-प्रकृतस्य ॥ छाया ॥

८ **अन्ये त्विति** । भाष्यतत्त्वविद इत्यर्थः ॥ छाया ॥

९ द्वितीयपक्षाशयेनाह—**उपेति** ॥ छाया ॥

१० अत्र हेतुमाह—**यस्येति** ॥ हि-यतः ॥ छाया ॥

तद्बुद्धिसत्त्वेन भवत्येव समुदायावयवत्वमिति 'भविता' इत्यादावङ्गावयवत्वं सम्भवतीति - इटो गुणनिषेधचारितार्थ्यमपि । वर्णस्य वर्णावयवत्वं तु वाचनिकं गौणम् । तत्र **यावद्वचनं वाचनिक**मिति न्यायेन समुदायावयवत्वे मानाभाव इत्याशयः ॥

**( दूषणाप्राप्तिसंभावनाभाष्यम् )**

**यदि पुनरयं योगशेषो विज्ञायेत ॥**

**( प्रदीपः ) यदि पुनरिति ।** 'षष्ठी स्थानेयोगा' इत्यनेनास्यैकवाक्यता । अत्र तु प्रदेशे करणं **ङिच्चे**त्यादेः सम्बन्धार्थम् । तत्रायमर्थो भवति—शास्त्रे या षष्ठी साऽन्त्येऽलि, सा च स्थानेयोगैवेति । न तु स्थाने विज्ञातस्य पश्चादनुसंहारः, प्रतिपत्तिगौरवप्रसङ्गादिति भावः ॥

**( उद्योतः ) संबन्धार्थमिति ।** अन्त्यस्येत्यनेनेति भावः । **शास्त्रे येति ।** या षष्ठी सा स्थानेयोगैव सा चान्त्येऽलीति तु नार्थः, स्थानेयोगेति पदावृत्त्यापत्तेः । इदमेव प्रतिपत्तिगौरवम् । तस्माच्छास्त्रे या षष्ठी सा स्थानेयोगैवान्त्येऽल्येव चेति वाक्यार्थ इति भावः ॥ **सा चेति ।** सा षष्ठी स्थानेयोगैव चेत्यन्वयः ॥

**( समाधानसाधकभाष्यवार्तिकम् )**

***॥ योगशेषे च ॥***

**( भाष्यम् )**

**किम्?**

**अनिष्टं प्रसज्येत—टित्किन्मितोऽप्यन्तस्य स्युः । तस्मात्सुष्ठूच्यते-* अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः *इतरथा ह्यनिष्टप्रसङ्ग* इति ॥ अलोऽन्त्यस्य ॥ ५२ ॥**

**( प्रदीपः ) अनिष्टमिति ।** 'आद्यन्तौ टकितौ, मिदचोऽन्त्यात्परः' इत्येताभ्यां स्थानेयोगत्वमेव बाध्यते, तुल्यजातीयत्वात्सम्बन्धस्य सम्बन्धान्तरेण बाधोपपत्त्या । षष्ठ्यास्तु यद्रूपं तदन्त्य एवाल्यवस्थितमिति पूर्ववद्दोषप्रसङ्गः ॥ अनुसंहारः पुनरनुसंहारान्तरेण **'आदेः परस्यानेकाल्शित्सर्वस्य'** इत्यनेन बाध्यते ॥ ५२ ॥

**( उद्योतः ) स्थानेयोगत्वमेव बाध्यत इति ।** अत्र हेतुः—**तुल्येत्यादिरुपपत्त्येत्यन्तः ॥ संबन्धस्येत्यादि ।** संबन्धनिरूपकस्य संबन्धनिरूपकान्तरेणेत्यर्थः । **सन्नियोगशिष्टन्यायस्तु** न परिभाषाविषये, **तस्मिन्नि**त्यादेरुत्तराङ्गविकलायास्तत्र तत्रोपस्थितिस्वीकारादित्याशयः ॥ **त्वनेन बाध्यत इति ।** न त्वाद्यन्तौ टकितावित्यनेनेति भावः ॥ ५२ ॥

---

**( ४८ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ९ )**

# ङिच्च ॥ १ । १ । ५३ ॥

**( तातङि सर्वादेशत्वसाधनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**तातङ् अन्त्यस्य स्थाने कस्मान्न भवति? 'ङिच्चालोऽन्त्यस्य' इति प्राप्नोति ॥**

**( उद्योतः )** ङिच्च ॥ ५३ ॥ भाष्ये—**कस्मान्न भवतीति । येन नाप्राप्तिन्याये**नास्यानेकालित्यपवादत्वादिति भावः ॥ उत्तरस्य त्वयं भावः—नेदमपूर्वविधायकम्, किंतु तत्र तत्र ङित्करणसामर्थ्यसिद्धानेकालित्येतद्बाधानुवादकम् । अनुवादफलं तु ङित्त्वसामर्थ्यादर्थान्तरकल्पनानिवृत्तिः । एवं च प्रकृते नास्य **प्रवृत्तिः ।** प्रवृत्तौ हि शास्त्रस्यापूर्वविधायकतापत्त्या गौरवापत्तिः । एवं च **यत्र** सर्वादेशे ङित्वस्य वैयर्थ्यं तत्र तद्बाधः । यत्र तु न, **तत्र न** तद्बाध इति भावः ॥

**( ३०३ समाधानवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः ॥ * ॥**

**( भाष्यम् )**

**तातङि ङित्करणं सावकाशम् ॥**

---

१ अत्र ज्ञापकमाह—**इटो गुणेति ॥ तत्र**—गौणत्वे सति ॥ छाया ॥

२ **योगशेषत्वम्—सार्वधातुकेत्या**दिविधिशेषत्वम् ॥ छाया ॥

३ "कैयटोक्तं तु चिन्त्यम्, प्रागपि तेन तदनुवर्त्य व्याख्यातत्वेनास्मिन्नपि पक्षे सुज्ञानत्वेन, अत्रापि पक्षे 'शास्त्रे या षष्ठी सा स्थानेयोगा सान्त्येऽल्येव' इति व्याख्यातुं शक्यत्वेन पक्षद्वये भेदाभावात् ॥ एतेन—"आद्यन्तावित्या**द्यपि निरस्तम् । भेदाज्ञानमूलकत्वात्" इति रत्नोक्तमपास्तम् ॥ तद्ध्वनयन्नाह—**या षष्ठीति ॥ छा. ॥

४ एतत्कात्यायनवार्तिकमिति प्रकल्प्य तदुत्तरं 'योगशेषे च' इति व्याख्यानभाष्यं कल्पयन्ति । तादृशपाठादर्शनान्नात्र तथोपन्यस्तम् । व्याख्यानादर्शनाच्चैतद्भाष्यवार्तिकमेव ॥

५ 'तोऽप्यन्त्यस्य' इति क. पाठः ॥

६ ततश्चार्धधातुकस्येड्वलादेरित्यस्याप्यन्त्येऽल्यनुसंहारादार्धधातुकान्त्यस्यैवेट् स्यात् । स च भवन्नाद्यन्तौ टकितावित्यन्त्यात्प्रागेव स्यात् । आद्यन्तौ टकितावित्यनेन हि स्थानेयोगत्वमेव षष्ठ्या बाध्यते, न तु पुनरन्त्येऽल्यनुसंहारोऽपीति भावः ॥

७ सिद्धान्तरीत्याह—**संबन्धनिरूपकेति ॥** नन्वत्र पक्षे तद्बाधे संनियोगेत्यस्या अपि बाधोऽत आह—**संनियोगेति ॥ न त्विति ।** अतुल्यजातीयत्वात् ॥ छाया ॥ **निरूपकस्येति ।** स्थानषष्ठ्याः स्थाननिरूपितसंबन्धार्थकत्वात् संबन्धनिरूपकस्य स्थानपदार्थस्यावयवावयविभावरूपसंबन्धनिरूपकान्तरेणावयविना इत्यर्थः । अयं भावः । निरूप्यत्वात्प्रधानीभूतसंबन्धबाधापेक्षया तद्विशेषणीभूतस्थानपदार्थबाध एव समुचितः । गुणे त्वन्याय्यकल्पनेति न्यायात् । स्थानपदार्थबाधे च तन्निरूप्यसंबन्धस्यापि बाधोऽर्थादापतितः । ( र. ना. )

८ नन्वेवं वैयर्थ्यमत आह—**अनुवादेति ॥** छाया ॥

९ **एवं च**—अनुवादकत्वे च ॥ विपक्षे बाधकमाह—**प्रवृत्ताविति । हि**—यतः ॥ छाया ॥

१० शास्त्रस्य पर्यवसितमाह—**एवं चेति ॥** गौरवापत्त्या तस्याभावे चेत्यर्थः ॥ **तद्बाधः**—अनेकालित्यस्य बाधः ॥ छाया ॥

कोऽवकाशः?

**गुणवृद्धिप्रतिषेधार्थो ङकारः। तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशो भविष्यति॥**

( प्रदीपः) **ङिच्च ॥ ५३ ॥ विप्रतिषेधादिति** । नन्वयमपवादः, 'अनेकाल् शित्-' इत्युत्सर्गः । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः । नैतदस्ति । ङित्त्वस्यान्यार्थत्वसंभवे सति दौर्बल्यात् सन्दिग्धोपस्थानोऽयं योग इत्यपवादत्वमेवात्र विषयेऽस्य नास्ति ॥

( उद्द्योतः ) ( भाष्ये ) **विप्रतिषेधादिति** । परिभाषात्वविरोधादित्यर्थः । यदि सावकाशङित्त्वेऽपि प्रवृत्तिः स्यात्तदाऽनुवादत्वासंभवेन परिभाषाप्रकरणविरोध इति भावः ॥ यथा चैतत्तथाऽनुपदमेव स्पष्टीभविष्यति ॥ **विप्रतिषेधे पर**मिति शास्त्रपरत्वे तु ङित्त्वस्य सावकाशत्वोक्तिरसङ्गता स्यात्, सूत्रसावकाशत्वमेव हि विप्रतिषेधे बीजम् । न ह्यस्य सूत्रस्य सर्वादेशाप्राप्तिविषये कचिच्चारितार्थ्यम् । अवश्यप्राप्तिरेव च बाध्यत्वे बीजं **दृष्टम्** ॥ किंच **विप्रतिषेध**शास्त्रपरवार्तिकव्याख्यानपरभाष्ये शास्त्रद्वयावकाशप्रदर्शनशैली भाष्यकारस्य दृश्यते, न चात्र तथोक्तं भगवता ॥ [3]यद्यप्यन्यत्रानुवादत्वं शास्त्रस्य दोष उक्तः, तथापि परिभाषाणां नियमरूपत्वेन तासु गुण एव । तत्र हि प्राप्तानुवादादेवेतरनिवृत्तिरर्थात् । यथा **व्रीहीनवहन्तील्यादौ** प्राप्तावघातानुवादेन नखविदलनादिनिवृत्तिः । [4]यथा च **तस्मिन्नित्यादौ** प्राप्तपूर्वस्येत्याद्यनुवादेन परादिनिवृत्तिः । [5]किंच कप्-यप्-अबादिष्वन्यार्थपित्त्वेषु चरितार्थस्यानुदात्तौ **सुप्पिता**विलस्य जित्वरील्यादौ तुक्संपादनेन चरितार्थपित्त्वे क्वरपि अन्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिः, तदाह—**दौर्बल्यादिति** । परि[6]भाषात्वभङ्गकृतं तदिति भावः ॥ **सन्दिग्धेति** । आपाततः सन्देहः, पर्यालोचने त्वनुपस्थितिरेवेति भावः । तदाह—**अपवादत्वमेवेत्यादि** । ङित्त्वसामर्थ्यकृतं हि तत्त्वमिति भावः ॥

( समाधानबाधकभाष्यम् )

**प्रयोजनं नाम तद्वक्तव्यं, यन्नियोगतः स्यात् । यदि चायं नियोगतः सर्वादेशः स्यात्, तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत्-ङित्करणादयं सर्वादेशो भविष्यति, न पुनरन्त्यस्य स्यादिति ॥**

( प्रदीपः ) **प्रयोजनं नामेति** । सति सर्वादेशत्वे ङित्करणं गुणवृद्धिप्रतिषेधार्थं स्यात् । तदेव तु सर्वादेशत्वमलभ्यं, ङित्त्वादन्त्यस्यैव प्रसङ्गात्-इति भावः ॥ **ङित्करणादिति** । गुणवृद्धिप्रतिषेधार्थादिति भावः ॥

( उद्द्योतः ) ननु ङित्त्वं सर्वादेशत्वद्वारा गुणबाधनार्थं वा, उतान्यत्र क्लृप्तसर्वादेशत्वबाधफलकं वेति शङ्कते-भाष्ये-**प्रयोजनं नामेति ॥ सति सर्वादेशत्वे इति** । अन्त्यादेशत्वे तु तत्संपादनेनैवावयवे ङित्त्वस्य चारितार्थेन समुदायोपकारकत्वे मानाभावात् प्रत्ययस्य ङित्त्वाभावेन न गुणादिप्रतिषेधप्राप्तिरित्यर्थः ॥ **ङित्त्वादिति** । गुणवृद्धिप्रतिषेधार्थत्वे सिद्धे सर्वादेशत्वम्, तस्मिंश्च तत्त्वम्, इत्यन्योन्याश्रयेण सर्वादेशत्वालाभेऽन्त्यस्यैव स्यादिति भावः ॥

( समाधानसाधकभाष्यम् )

**एवंतर्ह्येतदेव ज्ञापयति-न तातङन्त्यस्य स्थाने भवतीति । यदेतं ङितं करोति । इतरथा हि लोट एरुप्रकरण एव ब्रूयात्—"तिह्योस्तादाशिष्यन्यतरस्याम्" इति ॥ ङिच्च ॥ ५३ ॥**

( प्रदीपः ) **एवंतर्हीति** । अन्तरेणापि ङित्त्व**मेरु**रित्यत्र प्रकरणे ताति विधीयमानेऽन्त्यादेशत्वं सिद्धमिति ङित्त्वादेव गुणवृद्धिप्रतिषेधार्थं ङित्त्वमि[7]ति ज्ञायते ॥ ५३ ॥

( उद्द्योतः ) **अन्तरेणापीति** । तथा च तत्सामर्थ्यात् सर्वादेशत्वद्वारा गुणवृद्धिबाधनार्थत्वमेवास्येति भावः ॥ ५३ ॥

---

( ४९ परिभाषासूत्रम् ॥ १ । १ । ७ आ. १० ॥ )

## आदेः परस्य ॥ १ । १ । ५४ ॥

( आदिनियमतःसर्वादेशबलीयस्त्वाधिकरणम् )

( ३०४ सिद्धान्तवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अलोऽन्त्यस्यादेः परस्यानेकाल् शित्सर्वस्येत्यपवादविप्रतिषेधात्सर्वादेशः ॥ * ॥

( भाष्यम् )

**"अलोऽन्त्यस्य" इत्युत्सर्गः । तस्य "आदेःपरस्य"**

---

१ भाष्यार्थमाह—**परीति** ॥ तदेवाह—**यदीति** ॥ **सावकाशेति** । बहुव्रीहिः ॥ छाया ॥ भाष्ये 'विप्रतिषेधात्' इत्युक्तं तत् न विप्रतिषेधशास्त्रपरम्, किन्तु विप्रतिषेधशब्दो विरोधवाचीति भावः ॥

२ कैयटदण्डिकृष्णरत्नाद्युक्तिं खण्डयन्नाह—**विप्रतीति** । भाष्यादिस्थविप्रतिषेधशब्दस्येत्यर्थः ॥ **स्वोक्तिः**—भाष्यीया ॥ तत्र हेतुमाह—**सूत्रेति** ॥ अप्रदर्शितमपि तत्रास्तीत्याह—**न हीति** ॥ बाध्यत्वबीजं पूर्वपक्षयुक्तमपि नास्तीत्याह—**अवश्येति** ॥ **एतेन** विरोधव्यवच्छेदः ॥ छाया ॥

३ **यथा** चैतदित्युक्तमाह—**यद्यपीति** ॥ तत्त्वमुपपादयति—**तत्र हीति** ॥ छाया ॥

४ एतच्छास्त्रीयसजातीयदृष्टान्तमाह—**यथा चेति** ॥ छाया ॥

५ अभ्युपेत्य दोषमाह—**किं चेति** ॥ तस्मात्तथा नेति भावः ॥ मन्मते तु नायं दोषः । तद्वदस्य पित्त्वसामर्थ्यसिद्धत्वाभावात् ॥ **तदाह**—तदेतत्सर्वमभिप्रेत्याह ॥ छाया ॥

६ स्वरील्याह—**परीति** ॥ अस्यायुक्तत्वमाह—**आपेति** ॥ इदमेव कैयटतात्पर्यभूतमित्याह—**तदाहेति** ॥ स्वरीत्यैवाह—**ङित्त्वेति** ॥ **तत्त्वम्**—अपवादत्वम् ॥ छाया ॥

७ 'ति विज्ञाय' इति क. पाठः ॥

८ एकोत्सर्गनिरूपितं द्वयोरपवादत्वमित्याह—**अलोऽन्त्यस्येत्युत्सर्ग इति ॥ अपवादाविति** । अस्याशयः पूर्वत्रावश्यकर्तव्योऽसावित्यादिनोक्त एव कैयटेन ॥ छाया ॥

"अनेकाल् शित्सर्वस्य" इत्यपवादौ । अपवादविप्रतिषेधात् सर्वादेशो भविष्यति ॥

"आदेः परस्य" इत्यस्यावकाशः-"द्व्यन्तरुपसर्गेभ्योऽप ईत्" द्वीपम्, अन्तरीपम्, समीपम्। "अनेकाल् शित्सर्वस्य" इत्यस्याऽवकाशः-"अस्तेर्भूः" भविता, भवितुम् । इहोभयं प्राप्नोति-"अतो भिस ऐस्" । "अनेकाल्[१] शित्सर्वस्य" इत्येतद्भवति विप्रतिषेधेन ॥

'शित्सर्वस्य' इत्यस्यावकाशः-"इदम इश्" इतः, इह । "आदेः परस्य" इत्यस्यावकाशः-स एव । इहोभयं प्राप्नोति-"अष्टाभ्य औश्" । "शित्सर्वस्य" इत्येतद्भवति विप्रतिषेधेन ॥ आदेः परस्य ॥ ५४ ॥

( ५० परिभाषासूत्रम् ॥ १ । १ । ७ आ. ११ )

## अनेकाल् शित्सर्वस्य ॥ १ । १ । ५५ ॥

( शिद्ग्रहणप्रयोजनप्रत्याख्यानम् )

( आक्षेपभाष्यम् )

शित्सर्वस्येति किमुदाहरणम् ?

( प्रयोजनभाष्यम् )

"इदम इश्" इतः, इह ॥

( प्रयोजनबाधकभाष्यम् )

नैतदस्ति । शित्करणादेवात्र सर्वादेशो भविष्यति ॥

( प्रदीपः ) अनेकाल्० ॥ ५५ ॥ शित्करणादेवेति । सति शकारेऽनेकाल्त्वादिति भावः ॥ अनेकाल्त्वसंपादनेन च कृतार्थः शकार इति-इत्संज्ञकत्वा[२]ल्लुप्यते ।

(उद्द्योतः) अनेकाल शित्० ॥५५॥ ननु शित्पदाभावे कथं 'शित्करणादेव' इति भाष्यमत आह—सतीति । शकारोच्चारणसामर्थ्यात् भूतपूर्वानेकाल्त्वमादाय शास्त्रप्रवृत्तिरिति भावः ॥ य[३]त्त्वेतत्सामर्थ्यात् फलप्रत्यासत्तेश्च विधानोत्तरमेवेत्संज्ञादिशास्त्रप्रवृत्तिर्लक्ष्ये इति भाव इति ॥ तन्न । अणुदित्सूत्रे इशि सवर्णग्रहणापत्तिपरभाष्येण सूत्रे एवेत्संज्ञालोपप्रवृ[४]त्तेः सूचनात् ॥ न[५]न्वेवं 'शकारात्' इत्येव वक्तुं युक्तं, किमित्पदेनेति चेत् । न, फलान्तराभावेऽपि शकारोच्चारणस्य सप्रयोजनत्वाल्लोप एवेत्कार्यमिति शास्येत्त्वं प्रवर्तत इति सूचयितुं तथोक्तेः । तदाह—अनेकाल्त्वेति ॥

( प्रयोजनान्तरभाष्यम् )

इदं तर्हि-"अष्टाभ्य औश्" ॥

( प्रदीपः ) अष्टाभ्य औशिति । आदेः परस्येत्यादेः प्राप्त इति भावः ॥

( प्रयोजनबाधकस्मारणभाष्यम् )

ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति ॥

( उद्द्योतः ) भाष्ये—ननु चात्रापीति । अ[६]पवादविप्रतिषेधादिति भावः ॥

( प्रयोजनान्तरभाष्यम् )

इदं तर्हि-"जसः शी" "जश्शसोः शिः" ॥

( प्रयोजनबाधकस्मारणभाष्यम् )

ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति ॥

( प्रयोजनसाधकभाष्यम् )

अस्त्यन्यच्छित्करणे प्रयोजनम् ॥

किम् ?

विशेषणार्थः शकारः ॥

क्व विशेषणार्थेनार्थः ?

"शि सर्वनामस्थानम्" "विभाषा ङिश्योः" इति ॥

( उद्द्योतः ) ( भाष्ये ) अस्त्यन्यदिति । एवंच तस्य प्र[७]योजनत्वेन भूतपूर्वगत्याश्रयणे मानाभावेन नानेकाल्त्वात् सर्वादेशत्वम्, अपि तु शित्वादेव-इति शिद्ग्रहणं सूत्रे कार्यमिति भावः ॥

( 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषासाधनाधिकरणम् )

( वचनवैयर्थ्योपपादनभाष्यम् )

'शित्सर्वस्य'इति शक्यमकर्तुम् ॥

कथम् ?

अन्त्यस्यायं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यात् । असत्यामित्संज्ञायां लोपो न स्यात् । असति लोपे अनेकाल् । यदा अनेकाल्, तदा सर्वादेशः ।

यदा सर्वादेशः, तदा प्रत्ययः । यदा प्रत्ययः, तदेत्संज्ञा । यदेत्संज्ञा, तदा लोपः ॥

१ मुद्रितपुस्तकेषु 'अनेकाल सर्वस्य' इत्येव पाठः । प्राचीनपुस्तकेषु तादृशो न दृश्यते ॥

२ 'लुप्यत एव' इति क. पाठः ॥

३ कौस्तुभाद्युक्तिं खण्डयति—यत्त्विति ॥ एतत्—शोच्चारणम् ॥ फलं—लोपः ॥ अनेन आदौ लोपो मा भूत् । इत्संज्ञा तु स्यादेवेति समाहितम् ॥

४ प्रवृत्तेरिति । तयोः प्रवृत्तेरित्यर्थः ॥ अन्यथा तदसंगतिः स्पष्टैवेति भावः ॥ छाया ॥

५ एवम्—अनेकाल्त्वस्येष्टत्वे ॥ सप्रेति । अकार्यं लोप इति भाष्यं तु लोपमात्रस्य तत्त्वाभावपरमिति न विरोधः ॥ छाया ॥

६ सिद्धान्त उभयत्रापि युक्तिमाह—अपेति ॥ छाया ॥

७ 'सप्रयोज' इति घ. प. पाठः ॥

( नानुबन्धकृतमनेकाल्त्वपरिभाषाज्ञापनभाष्यम् )

**एवं तर्हि सिद्धे सति यत् 'शित्सर्वस्य' इत्याह तज्ज्ञापयत्याचार्यः—अस्त्येषा परिभाषा—"नानुबन्धकृतमनेकाल्त्वं भवति" इति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

***तत्रासरूपसर्वादेशदाप्प्रतिषेधेषु पृथक्त्वनिर्देशोऽनाकारान्तत्वात्* इत्युक्तम्, तन्न वक्तव्यं भवति ॥ अनेकाल्० ॥ ५५ ॥**

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे सप्तममाह्निकम् ॥

**( प्रदीपः ) अन्त्यस्यायमिति ।** ननु सर्वनाम्नो नपुंसकादिति च पञ्चमीनिर्देशा**दादेः परस्ये**त्यादेर्भाव्यं तत्किमुच्यतेऽन्त्यस्यायं भवन्निति । एवं तर्हि **सर्वनाम्न** इति षष्ठीं मन्यते **नपुंसकादि**ति च विहितविशेषणमिति ज्ञापकत्वमेव शित्करणस्य । **अथवा**-असत्यपीह शिद्ग्रहणे अनेकाल्त्वा**दादेः परस्ये**ति बाधित्वा सर्वादेशो भविष्यति किं शिद्ग्रहणेनेति पुनरपि ज्ञापकमेव शिद्ग्रहणम् ॥ अनेकान्तेषु चानुबन्धेषु नास्त्येव[2]-**अनुबन्धकृतमनेकाल्त्वं**-इति । एकान्तेषु च ज्ञापकेन प्रयोजनम् ॥ ५५ ॥

इत्युपाध्याय**जैयट**पुत्र**कैयट**कृते महाभाष्य**प्रदीपे** प्रथमस्याध्यायस्य प्रथमे पादे **सप्तम**माह्निकम् ॥

**( उद्योतः )** सर्वादेशात्प्राक् प्रत्ययादित्वाभावेन नेत्त्वमिति प्रतिपादयितुं[3] **अन्त्यस्याय**मित्यादि भाष्यम्, तदाक्षिपति—**नन्विति ।** ततश्च[4] सर्वादेशत्वं विनाऽपि प्रत्ययादित्वाल्लभ्यत एवेत्त्वमिति भावः ॥ **षष्ठीमिति ।** सर्वनामसंबन्धिनो[5] जसः शी, नपुंसकाद्विहितयोर्जश्शसोः शिरिति चार्थः । एवं[6] च परशब्देन परस्य विधानाभावान्न तत्प्रवृत्तिरिति भावः ॥ तयोः परशब्दयोगे[7] पञ्चमीत्वेऽप्याह—**अथवेति ।** असत्यपि सूत्रे[8] शिद्ग्रहण इति अर्थः । इयादयो यावन्नादेशास्तावन्नेत्त्वलोपौ । आदेशाश्च परत्वात्सर्वस्यैवेति भावः ॥ ( भाष्ये ) **नानुबन्धकृतमिति ।** एवं[9] च शीप्रभृतीनामपि शित्त्वादेव सर्वादेशत्वं, तस्याप्यनुबन्धत्वात् । न च विधानकाले उक्तरीत्या तस्य तत्त्वज्ञानाभावः, तद्योग्यतयैव तत्त्वात् । अन्यथा कप्रत्ययादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्संज्ञालोपाविति विधानकाले कस्यानुबन्धत्वज्ञानाभावेन **नानुबन्धकृतमसारूप्य**मित्यस्याप्राप्तौ विकल्पापत्तेः । शिदित्यस्यापीत्संज्ञायोग्यशकारवान्सर्वस्येत्यर्थ इति न दोष इति भाति ॥ **अस्त्येषा परिभाषेति ।** अनुबन्धानामल्व्यवहाराभावस्य[10] ज्ञापनादिति भावः ॥ अत एवानुबन्धकार्येष्व**नल्विधा**विति स्थानिवत्त्वनिषेधो न । अन्यथा क्त्वो ल्यपः कित्त्वं न[11] स्यात् ॥ न च पूर्वमनुबन्धलोपे तद्रहितस्यैव स्थानित्वात्तस्य न स्थान्यवयवत्वम् । सूत्रे स्थानषष्ठ्या निर्दिष्टस्यैव स्थानिपदवाच्यतया तदवयवत्वस्य ककारे सत्त्वात् । अन्यथाऽग्रहीदित्यादा**विट ईटी**ति दीर्घो न स्यादिति **स्थानिव**त्सूत्रे निरूपयिष्यामः ॥ भाष्ये—**तत्रासरूपेति**[12] । असरूपे कविषये णप्राप्तिर्दोषः । सर्वादेशे **दिव औदि**ति सर्वादेशः स्यादिति दोषः । प्रतिषेधे दैपो भेदेन निर्देशः कार्यः । तृतीये हेतु**रनाकारान्तत्वा**दितीत्यर्थः ॥ ज्ञापकमनावश्यकमित्याह—**अनेकान्तेष्विति ॥ एकान्तेषु चेति ।** अयमेव मुख्यः पक्ष इति **तस्य लोप** इत्यत्र भाष्ये स्पष्टम् ॥ ५५ ॥

इति श्री**शिवभट्ट**सुत**सती**गर्भज**नागोजीभट्ट**कृते भाष्यप्रदी**पोद्योते** प्रथमाध्यायस्य प्रथमे पादे **सप्तम**माह्निकम् ॥

---

# अथ प्रथमाध्यायस्य प्रथमपादे अष्टममाह्निकम् ॥

## ( अतिदेशप्रकरणम् )

---

( ५१ अतिदेशसूत्रम् ॥ १ । १ । ८ आ. १ )

## स्थानिवदादेशोऽनल्विधौ ॥ १।१।५६ ॥

( पदकृत्याधिकरणम् )

( आक्षेपभाष्यम् )

**वत्करणं किमर्थम् ?**

---

१ पूर्वतो वैलक्षण्यस्याग्रे भाष्याभिमतत्वेनाह—**आदेरिति** ॥ यथाक्रममाह—**सर्वेति** ॥ छाया ॥

२ 'नास्त्येव नानुबन्धकृत' इति मुद्रित पाठः । स प्रमादिकः ॥

३ **प्रतीति** । न त्वन्त्यादेशत्वप्रतिपादने तात्पर्यमिति भावः ॥ छाया ॥

४ तदुभयतात्पर्यमाह—**ततश्चेति** । पञ्चमीनिर्देशे**नादेरि**त्यस्य प्रवृत्तेरित्यर्थः ॥ छाया ॥

५ उभयार्थमाह—**सर्वेति** ॥ इतः प्रागपि संबन्धः ॥ अत एव चसंगतिः ॥ छाया ॥

६ नन्वेवमपि वस्तुतः परस्यैव विधानमत आह—**एवं चेति** ॥ उक्तार्थाश्रयणे चेत्यर्थः ॥ छाया ॥

७ **नित्यं ङित** इत्यादौ तदभावायावश्यकमाह—**परेति** ॥ छाया ॥ 'तयोः परशब्दयोः परशब्दयोगे' इति ज. पाठः । **तयोः**—सर्वनाम्नो नपुंसकादिति शब्दयोः ॥

८ इहेति न प्रकृतपरमित्याह—**सूत्र इति** ॥ छाया ॥

९ **एवं च**-तत्कृततदभावे च ॥ **तस्यापि**-तदीयशस्यापि ॥ **उक्तेति** । भाष्योक्तेत्यर्थः ॥ **तत्त्वदिति** । अत एव काणोर्विषये **नानुबन्धकृतमसारूप्य**मिति विकल्पाभाव इति शेषः ॥ विपक्षे बाधकमाह—**अन्यथेति** । तदनङ्गीकारे इत्यर्थः ॥ छाया ॥

१० लाघवादाह—**अनुबन्धानामिति** ॥ तत्फलमाह—**अत एवेति** । तेषां तदभावज्ञापनादेवेत्यर्थः ॥ छाया ॥

११ **न स्यादिति** । **न ल्यपी**ति ज्ञापकाश्रयणे तु गौरवमिति भावः ॥ छाया ॥

१२ **तत्र**-एकान्तपक्षे ॥ **अयमेवेति** । तथा च तदावश्यकमेव ॥ छाया ॥

( प्रदीपः ) **स्थानिवत्०** ॥ ५६ ॥ **वत्करणमिति** । विनाऽपि वतिना तदर्थलाभः, यथा ङित्किदिति भावः । न च 'स्थान्यादेशः' इत्युच्यमाने स्थानिरूपमादेशः प्रतिपद्यते-इति कल्पनाऽऽश्रयितुं युक्ता, **अस्ते**र्भूरित्यादेशविधानवैयर्थ्यप्रसङ्गात् । न च वचनद्वयप्रामाण्याद्विकल्पः, **वा लिटी**ति विकल्पारम्भात् ॥

( उद्योतः ) **स्थानिवदादेशो०** ॥ ५६ ॥ **स्थानिरूपमिति** । न[1] च **सिद्धं धर्मिण**मित्यादिन्यायेन पूर्वोच्चारितस्योद्देश्यत्वबोधकेन स्थान्यादेशरूपं प्रतिपद्यत इत्येवार्थो युक्त इति वाच्यम् । प्रसिद्ध-स्थानिनां प्रसिद्धादेशविधाने वैयर्थ्यापत्तेः । अन्यत्र विधाने तु **स्थानेऽन्तरतम** इति सूत्रोक्तन्यायेनाव्यवस्थापत्तेः, तस्य[2] न्यायस्य सूत्रकृताऽप्यत्र त्यागाच्च । अत[3] एव भाष्यकृता 'स्थानी संज्ञा' इत्येवोक्तं न तु 'आदेशः संज्ञा' इतीति बोध्यम् ॥ **वा लिटीति** । न च **चक्षिङः ख्याञि**त्यनेनानेन च सर्वत्रार्धधातुके ख्याञो विकल्पे सिद्धे 'लिट्येव वा' इति नियमार्थं स्यादिति वाच्यम् । दोषदुष्टनियमापेक्षयैतत्सूत्रे एतदतिरिक्तार्थकत्वज्ञापकताया एवौचित्यात् ॥

( समाधानभाष्यम् )

**'स्थान्यादेशोऽनल्विधौ' इतीयत्युच्यमाने संज्ञाऽधिकारोऽयम्, तत्र स्थानी आदेशस्य संज्ञा स्यात् ॥**

**तत्र को दोषः ?**

**"आङो यमहनः" आत्मनेपदं भवतीति वधेरेव स्यात्, हन्तेर्न स्यात् । वत्करणे पुनः क्रियमाणे न दोषो भवति । स्थानिकार्यमादेशे अतिदिश्यते 'गुरुवद्गुरुपुत्रे' इति यथा ॥**

( प्रदीपः ) **संज्ञाधिकार इति** । संज्ञाप्रस्ताव इत्यर्थः ॥ **तत्र को दोष इति** । आदेशे कार्यसिद्ध्यर्थोऽतिदेशः । तच्चादेशे कार्यं संज्ञासंज्ञिसंबन्धेऽपि सिध्यतीति **प्रश्नः** ॥ **वधेरेवेति** । संज्ञा हि प्रदेशेषु संज्ञिप्रत्ययनार्था संज्ञिनं प्रत्याय्य निवर्तते, न तु स्वतः कार्यं प्रतिपद्यत इति भावः ॥ **बहुगणे**त्यत्र तु 'संख्या' इत्यन्वर्थताश्रयणाल्लौकिकार्थग्रहणात् विनाऽपि वतिनाऽतिदेशपक्ष उपन्यस्तः । वत्करणात्त्विहातिदेशे स्थानिकार्याण्यादेशे[4] क्रियन्ते न तु स्थानिनि निवर्त्यन्ते-इत्यदोषः ॥ ङित्किदिति तु संज्ञा न भवन्ति[5], **न क्त्वा सेडि**ति प्रतिषेधात् । न हि क्त्वः कित्संज्ञा विहिता, या प्रतिषिध्येत । **किकिनौ लिट् चे**त्यत्र तु संज्ञा[6]प्रकरणाभावात् तद्वदतिदेशः ॥ **स्थानिकार्य**मित्यनेन कार्यातिदेशोऽयमिति दर्शयति । शास्त्राद्यतिदेशापेक्षया कार्यातिदेशस्य प्राधान्यात्, इतरेषां कार्यार्थत्वादिति भावः ॥

( उद्योतः ) भाष्ये-**स्थानी आदेशस्येति** । **नवेती**त्यतः 'इति' शब्दानुवृत्तेः **स्थानिशब्दार्था** हनादय **आदेशपदार्थस्य** वधादेः संज्ञेत्यर्थः । स्थानि[7]शब्दस्यादेशशब्दसंज्ञात्वे वैयर्थ्यमिति भावः ॥ ननु स्वरितलिङ्गकानुवृत्तिरूपाधिकारस्य संज्ञाविषयस्य शास्त्रेऽभावादाह—**प्रस्ताव इति** । प्रस्तावः–प्रकरणं, बुद्धिसंनिधिरिति यावत् । पूर्वोत्तरत्र प्रायेण संज्ञाया दर्शनादिति भावः ॥ परिभाषात्वं त्वनुक्तिसंभवग्रस्तमिति तन्नोक्तम् ॥ भाष्ये—**वधेरेवेति** । न चैव**माङो वधयम** इत्येवाकारविवक्षणेन स्वतन्त्रवधिव्यावृत्तौ हन्ग्रहणं व्यर्थं स्यादिति वाच्यम् । 'आजघ्ने'[9] इत्यादिसकलहन्त्यादेशसंग्रहार्थं तस्य सत्वात् ॥ **हन्तेर्न स्यादिति** । आहनिष्यत इत्यादौ ॥ नन्वत्र[10] पादे वतिं विनाऽतिदेशानवगतौ कथं **बहुगणे**त्यत्रातिदेशपक्ष उक्तोऽत आह—**बह्विति** ॥ **सङ्ख्येतीति** । सङ्ख्यापदस्येत्यर्थः ॥ **लौकिकार्थग्रहणादिति** । सङ्ख्यानकरणरूपेत्यर्थः । एवं च तद्बाधापत्त्या संज्ञात्वासंभवादतिदेश इति भावः ॥ इदं च तत्रैव सूत्रे कैयटे स्पष्टम् ॥ **संज्ञा नेति** । उभय[11]गतेरिह शास्त्रे सत्त्वेन संज्ञात्वेऽपि ङिदादिग्रहणेन चङादीनामपि ग्रहणम् ॥ **न हीति** । अनुवृत्तकित्ग्रहणस्य संज्ञापरत्वेन सैव प्रतिषेध्या, न च सा क्त्वो विहि-

---

१ **न चेति** । '**सिद्धं धर्मिणं पूर्वं कृत्वाऽसिद्धस्य परस्य प्रतिपादनम्**' इति न्यायशरीरम् । धर्मिणं पदार्थं सिद्धं पूर्वं कृत्वा पूर्वोच्चारितत्वेनोद्दिश्यासिद्धस्य परस्य पश्चादुच्चारितत्वेन विधेयत्वप्रतिपादनमिति तदर्थः ॥ **अन्यत्र**–अन्यस्य **विधाने**–विधीयमाने ॥ **न्यायेन**–तस्यापूर्वविधित्वपक्षे उक्तेन । स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनिवृत्तिरिति न्यायेन ॥ **अत्र**–प्रकृतसूत्रे । **स्थानिवदादेश** इति वदता ॥ तस्मादन्यत्र तथासत्त्वेऽप्यनित्योऽयमिति भावः ॥ भाष्यसंमतमपीदमित्याह—**अत एवेति** । तदनित्यत्वादेवेत्यर्थः ॥ छाया ॥

२ **तस्य न्यायस्य**—सिद्धं धर्मिणमिति न्यायस्य । तस्य न्यायस्य त्यागे प्रमाणमाह—**अत एवेति** ॥ **अत एव**–सिद्धं धर्मिणमिति न्यायस्यात्रानाश्रयणादेव ॥

३ **न चेति** । इदमिति शेषः ॥ **अनेन**—आदेशः स्थानीति वचनेन ॥ छाया ॥

४ **आदेशे**–सतीति शेषः ॥ **अदोषः**–वधेरेव स्याद्धन्तेर्न स्यादिति दोषो न ॥ अत्रोक्तदोषं दृष्टान्तेऽपि प्रसक्तं परिहरति–**ङिदिति** ॥छाया॥

५ 'भवति' इति क॰ ग॰ पाठः ॥

६ 'अथ संज्ञा' इत्याधिकाराभावाद्भाष्यानुपपत्तिं निराकरोति—**संज्ञाप्रेति** ॥

७ **नवेती**ति शङ्कोक्ते सिद्धान्ते कथमिति न शङ्कनीयम् । अन्यथा स्वं रूपमित्यस्य प्रवृत्त्या दोष एवेत्याह—**स्थानीति** ॥छाया॥

८ **अभावादिति** । वार्तिकोक्तस्य प्रत्याख्यानादिति भावः ॥ तदर्थमाह—**बुद्धीति** । तदाशयमाह—**पूर्वोत्तरेति** ॥ नन्वेवं प्रकरणात्परिभाषात्वमेवाव्यवधानानुरोधेन कुतो नोक्तमत आह—**परीति** ॥ छाया ॥

९ **आजघ्ने इति** । हन्तेर्लिटि लसामान्यापेक्षत्वेनान्तरङ्गत्वात्तिबादिषु कृतेषु परत्वान्नित्यत्वाच्च **शेषा**दिति बाधित्वा **लिटि धातो**रिति द्विःप्रयोगेऽभ्यासस्य चुत्वेऽभ्यासात्परस्य घत्वे एकदेशविकारासंभवेन समुदायस्य समुदायादेशत्वाद्धन्त्यादेशत्वमिति भावः ॥ छाया ॥

१० दृष्टान्ताप्रसारायाह—**अत्र पाद इति** ॥ अभेदान्वयासंभवादाह—**संख्यापदेति** ॥

११ ननु संज्ञात्वे कृत्रिमन्यायेन विधिषु चङाद्यग्रहणापत्तिरत आह—**उभयेति** ॥ लक्ष्यानुसारिव्याख्यानेनेति भावः ॥ छाया ॥

तेत्यर्थः ॥ किंचे किदित्यादेः संज्ञात्वे क्निति चेत्यत्रास्य ग्रहणं न स्यात्, संज्ञास्वरूपानुच्चारणादिति बोध्यम्। तथा निष्ठा शीङि-त्यादिनिषेधोऽप्यसंबद्धः स्यात्। कित्साहचर्यात् ङिदित्यप्यतिदेशः॥ कार्यातिदेशोऽयमिति । एवं चानपेक्षितशास्त्रमनपेक्षितनिमित्तं च प्रत्ययत्वादिरूपं कार्यमनेनैव क्रियते इति भावः॥

( आक्षेपभाष्यम् )

**अथादेशग्रहणं किमर्थम्?**

**( प्रदीपः ) आदेशग्रहणमिति** । स्थानिशब्दस्य संबन्धिशब्दत्वादादेशो लभ्यत एव । यथा-पितृवदधीत इत्युक्ते पुत्र इति भावः॥

**( उद्द्योतः )** भाष्ये—**यः स्थाने** इति स्थानशब्दप्रयोगात् तदनुवृत्त्याऽऽदेशो लभ्यत इति भ्रमं व्युदस्यति—**स्थानीति** ॥

( प्रत्याक्षेपभाष्यम् )

**'स्थानिवदनल्विधौ' इतीयत्युच्यमाने क इदानीं स्थानिवत्स्यात्?**

**यः स्थाने भवति ॥**

**कश्च स्थाने भवति?**

**आदेशः ॥**

**( प्रदीपः ) क इदानीमिति** । द्विविध आदेशः—प्रत्यक्षश्चास्तेर्भूरित्यादिः, आनुमानिकश्चैरुरित्यादिः । अत्र हि—इकारेणेकारान्तः स्थान्यनुमीयते, उकारेणोकारान्त आदेशः । ततस्तेस्तुरिति संपद्यते । तत्र प्रत्यक्षस्यैव ग्रहणं स्यात्, नानुमानिकस्येति भावः॥

**( उद्द्योतः )** नन्वादेशलब्धौ 'कः' इति प्रश्नानुपपत्तिरित्यत आह—**द्विविध इति** ॥ केचित्तु स्थानिशब्दस्य संबन्धिशब्दत्वमजानतः प्रश्नः—**क इति** ॥ संबन्धिशब्दत्वाभिप्रायमुत्तरं—**यः स्थाने इति** ॥

( समाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यात् । एकदेशविकृतस्योपसंख्यानं चोदयिष्यति, तन्न वक्तव्यं भवति ॥**

**( प्रदीपः ) आदेशमात्रमिति** । प्रत्यक्षमनुमितं चेत्यर्थः । एत्वरित्यत्र प्रत्यक्षमुकारस्यादेशत्वमिकारस्य च स्थानित्वम् । न च किंचिदिकारस्य कार्यमस्ति यदुकारेऽतिदिश्येत । तिशब्दकार्यं तु तुशब्दस्यातिदिश्यत इति पदत्वसिद्धिः॥

**( उद्द्योतः )** समाधत्ते—**आदेशमात्रमिति** । अस्याशयः कैयटोक्त एव ॥ कैयटोक्तव्याख्यानेऽपि 'यः स्थाने' इत्यादिग्रन्थस्याशयानभिज्ञवक्तृकतयैव योज्यमानत्वादित्याहुः ॥ नन्वत्रापि प्रत्यक्षस्यैव स्थानिवत्त्वमस्त्वित्यत आह—**न चेति** ॥ **पदत्वेति** । अत एव 'देवदत्तः पचतु' इत्यत्र पदस्येत्यधिकृत्य विधीयमानो निघातः सिध्यति । 'पचतु ते ओदनं' इत्यत्र पदादित्यधिकृत्य विधीयमानस्तेमयादिश्च सिध्यति ॥

( आक्षेपभाष्यम् )

**अथ विधिग्रहणं किमर्थम्?**

**( उद्द्योतः )** भाष्ये—**विधिग्रहणं किमर्थमिति** । 'विधौ' इत्यध्याहाराल्लप्स्यत इति **प्रश्नः** ॥

( विधिग्रहणप्रयोजनभाष्यम् )

**सर्वविभक्त्यन्तः समासो यथा विज्ञायेत—अलः परस्य विधिः—अल्विधिः, अलो विधिः—अल्विधिः, अलि विधिः—अल्विधिः, अला विधिः—अल्विधिरिति ॥**

**( प्रदीपः ) सर्वविभक्त्यन्त इति** । सर्वविभक्त्यन्तोऽवयवोऽस्यास्तीति मत्वर्थीयोऽकारः । बहुत्वप्रतिपादनपरमेतत् । न ह्यत्र सप्त विभक्तयः संभवन्ति । तत्र संबन्धमात्रे षष्ठ्युपादानेऽनेकविभक्त्यर्थान्तर्भावात् फलतः सर्वविभक्त्यन्तता संभवति । **अथवा**—अल्विधिशब्दवाच्योऽल्विधिरिति विशिष्टप्रवृत्तिनिमित्तानाश्रयणात् सर्वविभक्त्यन्तत्वम् । सति च विधिशब्दे समासभावादेतद्वस्तुलाभः । केवलस्त्वल्शब्द उपादीयमानो यद्विभक्तिरुच्चार्येत तदर्थोपक्षय एव स्यात् । तत्रालः परस्य विधिः—द्यौः-पन्थाः-सः-इति, सुलोपो न भवति ॥ अलि परतो विधिः—क इष्टः-स इष्टः-इति, **हशि चे**त्युत्वं न भवति ॥ अलो विधिः—द्युकाम इति, **लोपो व्योर्वलीति** लोपो न भवति ॥ उत्वं त्ववलि सावकाशं स्यात्—अहर्विमलद्यु इति ॥ अला विधिः—महोरस्केनेति । **अयोगवाहानामट्**सूपदेशाण्णत्वं न भवतीति ॥

**( उद्द्योतः )** ननु समासोत्तरं सप्तम्या एव श्रवणेन सर्वविभक्त्यन्तत्वं समासस्यानुपपन्नमत आह—**अवयव इति** । पूर्वपदरूप इत्यर्थः ॥ ननु विभक्तिचतुष्टयेनैव विग्रहस्याग्रे प्रदर्शनेन सर्वेत्य-

१ स्वयं दोषान्तरमाह—**किं चेति** ॥ तथा च कुटादिग्रहणानर्थक्यापत्तिरिति भावः ॥ दोषान्तरमाह—**तथेति** ॥ न हि शीङादिभ्यो निष्ठायाः केनचित्कित्संज्ञा विहिता तस्मात्किदित्यतिदेशः॥ अत एव ङिति युक्त्यन्तरमाह—**किदिति** । तस्मादपीत्यर्थः॥ छाया ॥

२ कार्यशब्देनात्र न प्रधानं, भाष्यान्तरविरोधात् । किं तु तत्प्रवृत्तिनिमित्तरूपमित्याह—**एवं चेति** । कार्यातिदेशत्वे चेत्यर्थः॥ छा.॥

३ श्लोक्तिं खण्डयति—**भाष्ये यः स्थाने इति स्थानेति** ॥ छाया ॥

४ अन्यथा भाष्यार्थमाह—**केचित्त्विति** । भाष्यतत्त्वविद इत्यर्थः ॥ छाया ॥

५ **यः स्थान इति** । इकारस्य स्थाने उकारो भवतीति उकारस्यैव स्थानिवद्भावः स्यान्न तुशब्दस्य । एवञ्चादेशग्रहणाभावे आनुमानिकस्थान्यादेशभावस्य ग्रहणं न स्यादित्यपि भाष्याभिप्रायः॥

६ इदं कैयटमतेऽप्यावश्यकं यद्यपि तथाप्यत्र व्याख्याने स्वारस्यं न तत्रेति तत्त्वविदामेव स्पष्टमित्याह—**कैयटोक्तेति** ॥ **निघातः**—तिङ्ङतिङ इत्यनेन ॥ छाया ॥

७ अनतिप्रसङ्गायाह—**पूर्वपदेति** ॥ छाया ॥

नुपपन्नमत आह—**बहुत्वेति** । द्वितीयाचतुर्थीप्रथमाभिः स्थान्यलः सूत्रेऽनिर्देशादिति भावः ॥ ननु सकृच्छ्रुतेऽल्विधिपदे कथमल्पदस्यानेकविभक्त्यन्ततेत्यत आह—**तत्रेति** । विधिशब्दः कर्मसाधनः । तेनाल्संबन्धिकार्ये-इत्यर्थः ॥ प्रौढ्या पक्षान्तरमाह—**अथवेति** । अल्शब्दात्परो विधिशब्दः-अल्विधिशब्दः, तेन च तद्वाच्योऽर्थो लक्ष्यत इति भावः ॥ एवं च तद्वाच्यत्वेन रूपेण सर्वार्थाश्रयणात्सर्वविभक्त्यन्तत्वे यत्फलं तत्फलसिद्धिरिति तात्पर्यम् ॥ **समासभावादिति** । उपदर्शितपक्षद्वयोक्तसमाससत्त्वादित्यर्थः ॥ **यद्विभक्तिरिति** । षष्ठ्युपादानेऽपि स्थानसंबन्ध एव बुध्येतेति भावः ॥ **तदर्थोपक्षय एव स्यादिति** । तदर्थमात्रान्वितार्थक एव स्यादित्यर्थः ॥ **इष्ट इति** । यजेः क्तः । यद्यपि 'क इष्टः' इति रूपमुत्वेऽपि सिध्यति, तथापि 'कविष्टः' इति पक्षे स्यात् 'कयिष्टः' इति न स्यादिति बोध्यम् । 'स इष्टः' इत्यत्र एतत्तदोरिति नित्यो लोपः स्यादिति च बोध्यम् ॥ दिवि कामोऽस्य-**द्युकामः** । 'दिव उत्' । यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथापि एतद्वाक्योपप्लुतवकारवदुकार इति वाक्योपात्तधर्मापेक्षया न तत्त्वम् । सूत्रकृत्प्तस्थान्यादेशभावमादायैव हि एतत्कृतवाक्योपप्लव इति दिक् ॥ **उपदेशादिति** । सस्य स्थानिवत्त्वेन विसर्गत्वाद्विसर्गस्य चाट्सूपदेशेनाट्त्वादिति भावः ॥

**( विधिग्रहणप्रयोजननिरासभाष्यम् )**

**नैतदस्ति प्रयोजनम् । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या ॥**

( **प्रदीपः** ) **प्रातिपदिकनिर्देशाश्चेति** । 'अनल्' इत्येतावदेवोच्यताम् । अत्र शब्दसंस्काराय केवलं प्रथमाविभक्तिरुपादीयते । न तु तदर्थो विवक्ष्यते । यथा 'भावे' इत्यत्र लिङ्गसंख्ये इति भावः ॥

( **उद्द्योतः** ) केवलप्रकृतेः प्रयोगाभावादाह—**अत्रेति** ॥ **विवक्ष्यते इति** । तत्समभिव्याहारे प्रतीयमानो विधेयत्वरूपोऽर्थो न विवक्ष्यत इत्यर्थः ॥ अन्वयायोग्यत्वादिति भावः ॥ **लिङ्गेति** ॥ अत एव 'भूतिः' इत्यादिसिद्धिः ॥ सप्तम्यर्थस्तु तत्र विवक्षित एवेति लिङ्गसंख्ये इत्येवोक्तम् ॥ भाष्ये—**अर्थतन्त्रा इति** । स्वार्थमात्रबोधकविभक्त्यधीना इत्यर्थः ॥ **प्राधान्येन विभक्तिं**—विशिष्य प्रकृतान्वययोग्यविभक्त्यर्थं नाश्रयन्ति ॥ **निर्दिष्टे**—बोधिते । पश्चादन्वययोग्यविभक्त्यर्थाकाङ्क्षायां यद्विभक्त्यर्थमन्वयित्वेनाश्रयितुं लक्ष्यानुसाराद्बुद्धिरुपजायते सा सा विभक्तिरध्याहार्या । साधुत्वार्थमुत्पन्नविभक्तेस्तु लुगिति भावः ॥ एतेन प्रत्ययाध्याहारो न क्वापि दृष्ट इत्यपास्तम् । **मा भेर्मा संविक्था** इति पुरोडाशावदानमन्त्रस्य धानासूहे **मा भैष्ट मा संविग्ध्वमि**त्यादौ दर्शनाच्च । तत्तद्विषयकलक्षणभेदात्तत्र तत्र सा आश्रयितव्येति तात्पर्यम् ॥ न चानलिति प्रथमानिर्देशेऽनलात्मक आदेश इत्यर्थे ल्यपोऽनलात्मकत्वेन 'प्रपठ्य' इत्यादाविट् स्यात् । उत्तमपुरुषैकवचने टेरेत्वस्य स्थानिवत्त्वाभावात्पदत्वं न स्यादिति चेन्न । **अदो जग्धि**रिति सूत्रे ल्यप्ग्रहणेनादेशविशेषणत्वाभावज्ञापनादित्यदोषः ॥

**( विधिग्रहणप्रयोजनान्तरभाष्यम् )**

**इदं तर्हि प्रयोजनम्—उत्तरपदलोपो यथा विज्ञायेत । अलमाश्रयते अलाश्रयः, अलाश्रयो विधिः—**

---

१ **तत्रेतीति** । अल् इत्यत्रेत्यर्थः ॥ क्लेशादाह—**प्रौढ्येति** ॥ छाया ॥

२ ननु यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशप्रवृत्तिस्तस्य कार्यवच्छास्त्रीयस्यैव प्रत्यासत्त्या ग्रहणेन वत्वस्य **स्वं रूप**मित्यनेन तत्त्वेऽपि हल्त्वाद्यपेक्षया विशेषधर्मत्वेन **'सामान्यातिदेशे'** इति न्यायेनानतिदेशाद्वस्य लोपाप्राप्तिरिति प्रदीपश्चिन्त्यः । अत एव **ब्राह्मणवदि**त्यनेन ब्राह्मण्यप्रयुक्ताग्रासनादीन्यतिदिश्यन्ते न माठरत्वादिविशेषकार्याणीत्याशयेन शङ्कते—**यद्यपि वत्वमिति** ॥ **आदिना** वत्वादि ॥ **उपेति** । कल्पितेत्यर्थः, आविर्भूतेति वा ॥ छाया ॥

३ नन्वेवमपि तथावाक्योपप्लव एव मानाभावः, 'धातुवद्वधिः' इत्यादिवद् 'हल्त्ववदुकारः' इत्यादेः सुकल्पत्वात् । तथा च विशेषधर्मत्वेन हल्त्वादेरिव वत्वस्यातिदेशो न स्यादत आह—**सूत्रेति** ॥ आदेशविधिसूत्रेषु येन रूपेण क्लृप्तः स्थान्यादेशभावस्तमादायैवेत्यर्थः । तथा च हन्त्वेन हन इव **अलो**ऽन्त्येतिसहकृतदिवउत्सूत्रे वत्वेनैव वस्य स्थानितेति तथैव वाक्योपप्लव इति भावः ॥ इदं च संभवाभिप्रायम् ॥ वस्तुतो विधिग्रहणसामर्थ्यात् **न ल्यपी**ति लिङ्गाच्चेह सूत्रे विशेषातिदेशोऽपीति तत्त्वम् ॥ तदाह—**दिगिति** ॥ छाया ॥

४ **तदिति** । प्रथमेत्यर्थः ॥ तस्या विधेयविभक्तित्वस्यासति बाधके सत्त्वादिति भावः ॥ छाया ॥

५ **आदिना**—पाकौ पाका इति ॥ तत्रापि प्रथमानिर्देश एवास्त्विति शङ्कां निराचष्टे—**सप्तेति** ॥ छाया ॥

६ ननु प्रथमासत्त्वे कथं तदध्याहारोऽत आह—**साधुत्वार्थमिति** ॥ लिङ्गसर्वनामनपुंसकत्वेनेति भावः ॥ **एतेन**—पूर्वोक्तभाष्येण ॥ तन्त्रान्तरसंमतमपीदमित्याह—**मा भेरिति** । तस्येत्यादिः ॥ छाया ॥

७ प्रत्ययाध्याहारोऽपि ऊहादौ प्रसिद्धस्तमाह—**मा भेरिति** ॥

८ ननु तस्य सकृच्छ्रुतेः कथमनेकाध्याहारोऽत आह—**तत्तदिति** ॥ छाया ॥ **सा**—विभक्तिः ॥

९ **न चेति** । तदभावे इति शेषः ॥ संभवतीति न्यायेन—**अनलेति** ॥ विशेषातिदेशस्योक्तत्वेन 'प्रदीव्येत्यादौ गुणनिषेधोऽपि न स्यादिति' दण्डिकृष्णाद्युक्तेरसांगत्यादाह—**तथेति** ॥ छाया ॥ प्रामाणिकेषु बहुषु पुस्तकेषु 'न चानलिति' इत्येव पाठो दृश्यते । 'नन्वनलिति' पाठः क्वापि न दृष्ट इति दृष्टस्यैवात्रोल्लेखः । 'न चानल्' इति पाठोऽग्रे 'इति चेन्न' इत्युक्तत्वान्न स्वारसिकः प्रतीयते । विधिग्रहणाभावे 'अनल्' इति प्रथमान्तमप्रथमान्तेनादेशपदार्थेन सम्बध्येत । ततश्च प्रपठ्येत्यादौ स्थानिवद्भावः स्यात् । अधिजग इत्यादाविटो न स्यादित्याशयः ॥

१० **ल्यबिति** । अन्यथोक्तरीत्या तिकितीत्येव सिद्धे तदानर्थक्यं स्पष्टमेवेति भावः ॥ छाया ॥

अल्विधिरिति । यत्र प्राधान्येनालाश्रीयते तत्रैव प्रतिषेधः स्यात् । यत्र विशेषणत्वेनालाश्रीयते तत्र प्रतिषेधो न स्यात् ॥

किं प्रयोजनम् ?
प्रदीव्य-प्रसीव्येति वलादिलक्षण इट् मा भूदिति ॥

( प्रदीपः ) उत्तरपदलोप इति । 'अनल्' इत्युच्यमाने यत्र कार्ये स्वातन्त्र्येणालाश्रीयते, तत्रैव निषेधः स्यात्—क इष्टः-स इष्ट इत्यादौ । प्रदीव्येत्यादौ इटः प्रतिषेधो न स्यात् । न हीड्विधौ वलः स्वातन्त्र्येणाश्रयणम्, वलादेरित्यन्यपदार्थस्य प्राधान्याद्गुणभावाद्वलः । उत्तरपदलोपे त्वलाश्रयत्वादिड्विधेः प्रतिषेधसिद्धिः ॥ अलमाश्रयत इति । अर्थप्रदर्शनमेतत् । एवं हि 'अलाश्रायः' इति स्यात् । तस्मात्–आश्रीयत इत्याश्रयः, एरच् । अलाश्रयो विधिरल्विधिः । अलाश्रयत्वाद्विधिरेवालित्युच्यत इति गतार्थत्वादप्रयोग एव उत्तरपदस्य लोपः ॥

( उद्योतः ) स्वातन्त्र्येण—प्राधान्येन । सैकलविधिपरिग्रहार्थंविधिशब्देन प्रधानन्यायो बाध्यत इति भावः ॥ एवं हीति । कर्मण्यणा पचाद्यचो बाधादिति भावः ॥ शब्दानित्यत्ववारणाय वार्तिकप्रत्याख्यानाय चाह—अप्रयोग एवेति ॥ भाष्ये—यत्र-प्राधान्येनेत्यस्य विधिग्रहणाभावे इत्यादिः । प्रतिषेधो न स्यादित्यस्य तदर्थं विधिग्रहणमिति शेषः ॥

---

( लौकिकन्यायेन सूत्रार्थसाधनम् )

( सूत्राक्षेपभाष्यम् )

किमर्थं पुनरिदमुच्यते ?

( प्रदीपः ) किमर्थमिति । तत्स्थानापत्त्या तद्धर्मलाभात् स्थानिकार्याण्यादेशः प्राप्स्यतीति भावः ॥

( ३०५ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ स्थान्यादेशपृथक्त्वादादेशो स्थानिवदनुदेशो गुरुवद् गुरुपुत्र इति यथा ॥ * ॥**

( भाष्यम् )

अन्यः स्थानी, अन्य आदेशः । स्थान्यादेशपृथक्त्वादेतस्मात्कारणात् स्थानिकार्यमादेशो न प्राप्नोति ॥

तत्र को दोषः ?

"आङो यमहनः" आत्मनेपदं भवतीति हन्तेरेव स्यात्, वधेर्न स्यात् । इष्यते च—वधेरपि स्यादिति । तच्चान्तरेण यत्नं न सिध्यति । तस्मात्स्थानिवदनुदेशः । एवमर्थमिदमुच्यते ॥

'गुरुवद् गुरुपुत्र इति यथा' । तद्यथा—गुरुवदस्मिन् गुरुपुत्रे वर्तितव्यम्–इति । गुरौ यत्कार्यं तद् गुरुपुत्रेऽतिदिश्यते । एवमिहापि स्थानिकार्यमादेशेऽतिदिश्यते ॥

( प्रदीपः ) स्थान्यादेशपृथक्त्वादिति । स्थानिस्वरूपाश्रयं यत्कार्यं तद्भिन्नरूपत्वादादेशे न सिद्ध्यतीति भावः ॥

( उद्योतः ) ननु पृथक्त्वमङ्गीकृत्यैव तत्स्थानापत्त्या तद्धर्मलाभेऽभिहिते स्थान्यादेशपृथक्त्वादिति हेतुरसङ्गतोऽत आह—स्थानिस्वरूपेति । स्वं रूपमित्युक्तेर्न तत्स्थानापत्त्या शास्त्रे तत्कार्यलाभ इति भावः ॥

( सूत्रारम्भप्रयोजनबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । लोकत एतत् सिद्धम् । तद्यथा—लोके यो यस्य प्रसङ्गे भवति, लभतेऽसौ तत्कार्याणि । तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते ॥

( प्रदीपः ) लोकत इति । लोके हि वचनमन्तरेणापि तत्स्थानापत्त्या तद्धर्मलाभो दृष्टः ॥ उपाध्यायस्येति । प्रसङ्गापेक्षेयं षष्ठी । न तु शिष्यस्य विशेषणमेतत्, व्यभिचाराभावात् ॥

( उद्योतः ) व्यभिचाराभावादिति । तैस्स्थानापत्त्या तद्धर्मलाभे दृष्टान्तोऽसङ्गतः स्यादिति च बोध्यम् ॥ यद्यप्युपनीय सर्ववेदाध्यापकरूपाचार्यशिष्यव्यावृत्तये उपाध्यायस्येति तद्विशेषणमावश्यकम्, वेदैकदेशाद्यध्यापको ह्युपाध्यायः । तथापि तद्व्यावृत्तौ प्रयोजनाभाव इत्यभिप्रायेणेदमिति बोध्यम् ॥ अत्र भाष्ये लोकत एतत्सिद्धमित्युक्त्वा स्वंरूपमिति शास्त्रादादेशे न स्यादिति सूत्रं कार्यमित्युक्तम् । तेन स्वं रूपमिति शास्त्रविषये लोकन्यायेन सिद्धमिति सूचितम् ॥ अनल्विधाविति निषेधोऽपि शास्त्रीयस्थानिवद्भाव एव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परि-

---

१ 'इदं तर्हि प्रयोजनम्' इत्यनेन विधिग्रहणप्रयोजनं प्रतिपाद्यते । 'किंप्रयोजनम्' इत्यनेन विधिग्रहणलब्धार्थस्यालाश्रयो विधिरित्यर्थस्य प्रयोजनं पृच्छ्यते ॥

२ तात्पर्यमाह—सकलेति । इति भाव इति सूचितारुचिस्तु विशिष्टस्य तत्र पाठेनाजेव नाणिति यथाश्रुतभाष्यसामञ्जस्येन कैयटदण्डिकृष्णरत्नाद्युक्तं चिन्त्यमेवेति ॥ छाया ॥

३ बुद्धिविपरिणामेन तस्य सुपरिहरत्वादाह—वार्तिकेति ॥ एवं चेदमपि कैयटादिरीत्यैवेति बोध्यम् ॥ छाया ॥ वार्तिकं–'अल्विधौ प्रतिषेधेऽसत्यपि विशेषणे-' इत्याद्यग्रिमम् ॥

४ यथाश्रुतेऽसंबद्धत्वादाह—भाष्ये यत्रेति ॥ छाया ॥

५ युक्त्यन्तरमाह—तत्स्थानेति ॥ छाया ॥

६ कौस्तुभादिमतमाह—अत्रेत्यादि केचिदित्यन्तेन ॥ एवेति । प्रत्यासत्तेः । एवं चाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव ॥ छाया ॥

७ नन्वेवमतिप्रसङ्गोऽत आह—अतीति ॥ नपदान्तसूत्रे ब्राह्मणकण्डूतिरिति यलोपोदाहरणात्तदनाश्रयणं क्वचित् । तत्र हि कण्डूयतेः क्तिचि अल्लोपे तन्निषेधेन यलोपे च तस्य स्थानिवत्त्वादुवङि यणि वाऽनादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यात् ॥ छाया ॥

हरणीयः । ऐवं च 'लोलुवः' इत्यादावनादिष्टादचः पूर्वत्वं लोकन्यायेन भवत्येवेति केचित् ॥

( सूत्रारम्भप्रयोजनसाधकभाष्यम् )

**यद्यपि तावल्लोक एष दृष्टान्तः । दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति ॥**

( आक्षेपभाष्यम् )

**अस्ति चेह कश्चित्पुरुषारम्भः ?**

( समाधानभाष्यम् )

**अस्तीत्याह ॥**

**कः ?**

**स्वरूपविधिर्नाम । हन्तेरात्मनेपदमुच्यमानं हन्तेरेव स्यात्, वधेर्न स्यात् ॥**

( सूत्रारम्भप्रयोजननिराकरणभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-स्थानिवदादेशो भवतीति । यदयं "युष्मदस्मदोरनादेशे" इत्यादेशे प्रतिषेधं शास्ति ॥**

**कथं कृत्वा ज्ञापकम् ?**

**युष्मदस्मदोर्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गो यदादेशे स्यात् । पश्यति त्वाचार्यः—स्थानिवदादेशो भवति । अत आदेशे प्रतिषेधं शास्ति ॥**

( सूत्रारम्भप्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—अनल्विधाविति प्रतिषेधं वक्ष्यामीति । इह मा भूत्—द्यौः-पन्थाः-सः-इति ॥**

( प्रदीपः ) **प्रतिषेधं वक्ष्यामीति ।** न ह्यप्रदर्शितविषयः प्रतिषेधः शक्यो विधातुमिति भावः ॥

( उद्योतः ) **अप्रदर्शितविषयः**—अप्रदर्शितप्रतिषेध्यः ॥ ननु युष्मदस्मदोरनादेश इत्यत्र विभक्तिविषये **स्वं रूपमित्यस्य** लोकन्यायबाधकस्याप्राप्त्या तत्र लोकन्यायेन प्राप्ततद्धर्मलाभप्रयुक्तकार्यनिवारणेन चरितार्थस्य अनादेशग्रहणस्य ज्ञापकत्वासंभवात् **हनो वधे**त्यादौ दोषवारणायेदं सूत्रमावश्यकमिति चेत्, न । स्वादिसूत्रे **स्वं रूपमित्यस्य** प्रवृत्त्या तत्स्वरूपाणामेव सुप्संज्ञकत्वेन तेषामेव विभक्तिसंज्ञकत्वेन तत्र 'तत्स्थानापत्त्या तद्धर्मलाभः' इति लौकिकन्यायाप्रवृत्तेरित्याशयात् ॥

( सूत्रारम्भप्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—अल्विधौ स्थानिवद्भावो न भवतीति, यदयम्—"अदो जग्धिर्ल्यप्ति किति" इति 'ति किति' इत्येव सिद्धे ल्यब्ग्रहणं करोति । तस्मान्नार्थोऽनेन योगेन ॥**

( प्रदीपः ) एवं तावल्लिङ्गेनाभिमतोऽर्थः सिद्ध इति प्रदर्शितम् ॥

---

( सूत्रसत्त्वेऽनल्विधिग्रहणवैयर्थ्यनिराकरणम् )

( वार्तिकोपक्रमभाष्यम् )

**आरभ्यमाणेऽप्येतस्मिन् योगे—**

( ३०६ वैयर्थ्याक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अल्विधौ प्रतिषेधेऽविशेषणेऽप्राप्तिस्तस्यादर्शनात् ॥ * ॥**

( भाष्यम् )

**अल्विधौ प्रतिषेधेऽसत्यपि, विशेषणे समाश्रीयमाणे, असति तस्मिन् विशेषणे अप्राप्तिर्विधेः । प्रसीव्य, प्रदीव्य ॥**

**किं कारणम् ?**

**'तस्यादर्शनात्' । वलादेरित्युच्यते । न चात्र वलादिं पश्यामः ॥**

( प्रदीपः ) इदानीं क्रियमाणेऽपि सूत्रेऽनल्विधाविति न कर्तव्यमित्याह—**अल्विधौ प्रतिषेध इति ।** 'प्रपद्य' इतीट् न भवति । इड्विधौ वलादेरिति विशेषणमाश्रितम् । तच्च 'क्त्वो ल्यप्' इति वस्तुस्थित्या संनिहितमपि वलादित्वं स्थानिन्यविवक्षितत्वादनाश्रितम् । **तथाहि**—इडादिरपि क्त्वा भवत्येव, केवलोऽपि, आकारान्तोऽपि, स्नात्वीतीकारान्तोऽपि, दत्त्वायेति च यगन्तोऽपि, इष्ट्वीनमिति मान्तोऽपि । तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्वप्रत्ययत्वादि तदादेशेऽतिदिश्यताम्, न तु वलादित्वमिति ल्यपो न स्वतो नापि स्थानितो वलादित्वमितीडभावः सिद्ध एवेति भावः ॥

( उद्योतः ) **क्रियमाणेऽपीति ।** मन्दमत्यनुग्रहायेत्याशयः ॥ **न पदान्ते**त्यत्र निषेध्यसमर्पणाय चावश्यकं तदिति बोध्यम् ॥

---

१ क्वचिदित्यस्य फलमाह—**एवं चेति ।** अनतिप्रसक्ते तत्सत्त्वे च ॥ केचिदित्यरुचिबीजं तु स्वंरूपमित्यस्य प्रत्याख्यातत्वेन तथा दुर्वचम् । तदतिदेशे **नपदान्ते**ति सूत्रातिरिक्ते फलाभावश्च । तस्य तन्मात्रविषयकत्वेनासार्वत्रिकत्वं च । अत एवान्यत्रातिप्रसक्तिरपीति ॥ छाया ॥

२ 'रनादेशे प्रतिषेधं' इति क. पाठः ॥

३ 'भवतीति' इति ग. पाठः ॥

४ **समाश्रीयमाण इति ।** आर्द्धधातुकस्येड्वलादेरिति विधिसूत्रे वलादेरिति विशेषणे समाश्रीयमाणे लक्ष्ये प्रदीव्येत्यादौ तस्मिन् वलादेरिति विशेषणेऽसति आर्द्धधातुकस्येति विधेरप्राप्तिरित्यर्थः ॥

५ 'प्रपद्य' इति क. ग. पाठः । अल्विधौ स्थानिवत्त्वप्रतिषेधात्प्रपद्येत्यादाविण्नेत्याशयः । 'विशेषणे समाश्रीयमाणे' इत्यादि भाष्यं व्युत्पादयति—**इड्विधावित्यादिना ॥**

६ तत्र—तेषां मध्ये ॥ छाया ॥

७ 'प्रत्ययत्वाव्ययत्वादि' इति क. पाठः ॥

८ **शेष इति ।** तथाचेष्टपदाध्याहारेण वार्तिकयोजनेति बोध्यम् ॥ छाया ॥

अनल्विधाविति न कर्त्तव्यमित्यस्य विधिपदघटितं न कर्त्तव्यमित्यर्थः ॥ असत्यपि - इति भाष्ये छेदः । अल्विधौ प्रतिषेधे इत्यस्य चैतद्विशेषणम् । अप्राधान्येनालाश्रयणेऽपि निषेधार्थं क्रियमाणे विधिग्रहणेऽसत्यपीत्यर्थः ॥ वार्त्तिके—अविशेषणे-इति च्छेदः, लक्ष्ये विशेषणाभावे - इति तदर्थः । तदाह—विशेषणे समाश्रीयमाण इति । विधाविति शेषः ॥ असतीत्यादेः-प्रयोग इति शेषः ॥ सामान्यातिदेशे विशेषानतिदेश इति हेतुं व्याचक्षाणो वलादित्वस्य विशेषत्वं दर्शयति—तच्चेति ॥ अविवक्षितत्वादिति । विवक्षाकारणयत्नविशेषविषयीकृतत्वाभावादित्यर्थः ॥ उपात्तरूपव्याप्यरूपविवक्षा हि यत्ने सत्येव भवति । अत एव सनि मीत्यत्र सः सीत्यतः सीत्यनुवर्तितम् । न च तथा कश्चिद्यत्नः प्रकृते । एवं च 'वलादेरादेशो वलादिवत्' इत्येवं वाक्यकल्पनाऽत्र नेति भावः ॥ तत्र वलादित्वस्य क्त्वाव्याप्यत्वं दर्शयितुमाह—तथाहीति । आकारान्तोऽपीत्यादि दृष्टान्तार्थम् ॥ यत्कार्यमिति । यो धर्म इत्यर्थः । 'क्त्वावत् ल्यप्' इत्येव वाक्यकल्पनेति भावः ॥

( वार्तिकावतरणभाष्यम् )

**ननु चैवमर्थ एवायं यत्नः क्रियते—अन्यस्य कार्यमुच्यमानमन्यस्य यथा स्यादिति ॥**

**सत्यम् । एवमर्थो यत्नः क्रियते, न तु प्राप्नोति ॥ किं कारणम् ?**

( उद्योतः ) 'सामान्यातिदेशे' इत्यादिवार्तिकखण्डमवतारयति—ननु चेति ॥ भाष्ये-एवमर्थशब्दं व्याचष्टे—अन्यस्येति ॥

( ३०७ वैयर्थ्याक्षेपसाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सामान्यातिदेशे हि विशेषानतिदेशः ॥ * ॥

( भाष्यम् )

**सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा—'ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यम्' इति । सामान्यं यद् ब्राह्मणकार्यं, तत् क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा, न तदतिदिश्यते । एवमिहापि सामान्यं यत्प्रत्ययकार्यं तदतिदिश्यते, यद्विशिष्टं वलादेरिति न तदतिदिश्यते ॥**

( प्रदीपः ) ब्राह्मणवदिति । सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते, तत्र विशेषस्याशब्दार्थत्वाद्विशेषाश्रयकार्यानतिदेशः । यत्र तु विशेषशब्दोपादानेनातिदेशस्तत्र विशेषातिदेशो भवत्येव ॥

( उद्योतः ) अशब्दार्थत्वादिति । यद्यपि 'क्त्वावत्' इत्युक्तेऽशब्दार्थप्रत्ययत्वादेरप्यतिदेशो भवति तथापि व्याप्येन व्यापकानुमानात्तदुपस्थितिवद्व्याप्योपस्थितौ मानाभाव इति भावः ॥ यत्र त्विति । गोतो णिदित्यादौ ॥

( वैयर्थ्यबाधकसिद्धान्तिभाष्यम् )

**यद्येवं—अग्रहीत्, "इट ईटि" इति सिचो लोपो न प्राप्नोति ॥**

**अनल्विधाविति पुनरुच्यमाने इहापि प्रतिषेधो भविष्यति—प्रदीव्य-प्रसीव्येति, विशिष्टं ह्येषोऽलमाश्रयते वलं नाम । इह च प्रतिषेधो न भविष्यति अग्रहीदिति, विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम ॥**

( प्रदीपः ) अग्रहीदिति । 'ग्रहोऽलिटि दीर्घः' इति दीर्घे कृत इति भावः ॥ दीर्घविधौ ह्यच्परिभाषोपस्थानादच एव स्थानित्वम् । इट् त्वजन्तराणां व्यावर्तक इतीट्कार्यं विशेषकार्यत्वान्न प्राप्नोति ॥ तथा प्रदीव्येति गुणप्रतिषेधो न प्राप्नोति । देवित्वेत्यादावकितोऽपि क्त्वाप्रत्ययस्य संभवात् कित्त्वस्यापि वलादित्ववन्न स्यादतिदेशः ॥ तस्माद्विशेषकार्यातिदेशज्ञापनार्थमनल्विधाविति कर्तव्यमिति भावः । अनुबन्धकार्येषु चानल्विधाविति प्रतिषेधो न प्रवर्तते, स्थानिन्यनुबन्धस्यासंनिधानात् । असन्त एवानुबन्धाः कार्यस्य विशेषका इति सिद्धान्तव्यवस्थापनात् ॥ विशिष्टं ह्येषोऽनलमिति । 'इट ईटि' इति सलोपे समुदायरूपेणाश्रयणात् 'ग्रहोऽलिटि दीर्घः' इत्यत्रापि इट एव स्थानित्वं नाचः । अनियमाप्रसङ्गान्नियमफलाया अच्परिभाषाया अनुपस्थानात् ॥

( उद्योतः ) अथ सिद्धान्ती विशेषानतिदेशे दूषणं वदन् तज्ज्ञापनार्थमेवानल्विधावित्यावश्यकमित्याह–भाष्ये–यद्येवमिति । यदि विशेषानतिदेश इत्यर्थः ॥ दीर्घे कृते इति । दीर्घदृष्ट्या सिज्लोपस्यासिद्धत्वादिति भावः ॥ ननु दीर्घस्य 'इट्' इति समुदायस्थानिकत्वेन तद्वृत्तीट्त्वाश्रयो लोपः स्थानिवत्त्वेन स्यादेव, स्थानी चादेशविधावुपात्त एवेत्यत आह—दीर्घेति ॥ नन्वच एव स्थानित्वे 'ग्रहणं' इत्यादावपि दीर्घः स्यादत आह—इट् त्विति ॥ ( भाष्ये ) सिचो लोपो न प्राप्नोतीत्यस्य तस्मादनल्विधाविति वक्तव्यमिति शेषः ॥ विशेषानतिदेशे दूषणान्तरमाह—तथेति ॥ अकितोऽपीति । न क्त्वा सेडिति कित्त्वनिषेधादिति भावः ॥ तस्मादिति । नं च 'क इष्टः' 'बुस्याम्' इत्यादिव्यावृत्त्या तस्य चारितार्थ्यात्कथं

१ तत्र बीजमाह—विवक्षेति ॥ हि-यतः ॥ छाया ॥

२ न च-नहि ॥ छाया ॥

३ तत्र-अप्रपठ्येत्यादौ ॥ छाया ॥

४ प्रकृतानुपयोगादाह—आकारान्तोऽपीति ॥ छाया ॥

५ प्रदीव्येत्यादाविटः प्राप्तिरेव नेत्युक्ते भाष्ये आक्षिपति—ननु चैवेति । त्वा प्रत्ययस्य कार्यमिट्रूपं ल्यपोऽपि भवतु इत्येवमर्थं अल्विधौ प्रतिषेध उच्यत इत्याशयः ॥ तदेव विवृणोति—अन्यस्येति ॥

६ विशेषानतिदेशे दोषमाह—यद्येवमिति ॥

७ ननु प्रयोगे न तस्य स्थानिताऽत आह—स्थानी चेति ॥ छाया ॥

८ कृष्णाद्युक्तिं खण्डयति—न चेति ॥ तस्य-विधिग्रहणस्य ॥ छाया ॥

ज्ञापकत्वमिति वाच्यम् । अप्राधान्येनाप्यलाश्रयणे आर्धधातुकस्येडि-त्यादौ निषेधप्रवृत्तये क्रियमाणं विधिग्रहणं प्रकृतार्थज्ञापकम् । विशेषानतिदेशे तेषामसंग्रहेण तद्वैयर्थ्यस्य स्पष्टत्वात् ॥ वार्तिकेऽपि विधिपदघटिते प्रतिषेधेऽसत्यपीत्यर्थः ॥ ज्ञापिते विशेषातिदेशेऽनल्विधावित्यस्य चारितार्थ्यं दर्शयति--- भाष्ये-**इहापि प्रतिषेधेत्यादि** ॥ ननु क्त्वस्याल्विधित्वेन **क्ङिति चेति** निषेधे स्थानिवत्त्वाभावात् 'प्रतिदीव्य' इत्यादौ गुणः स्यादत आह—**अनुबन्धेति** ॥ **स्थानिनीति** । स्थान्यलाश्रये विधौ स्थानिवत्त्वनिषेधादिति भावः ॥ **न ल्यपीति** लिङ्गमप्यत्र बोध्यम् ॥ नन्वेवमैप्यग्रहीदिति दीर्घस्थानिभूताज्रूपेकाराश्रय एव सिज्लोपः, अनुबन्धस्तु उपदेश एव लुप्त इति तत्रापि स्थानिवत्त्वनिषेधः स्यादतो भाष्ये-**विशिष्टं ह्येष इति** । ऐवं च 'दीर्घ इङ्वत्' इत्येवातिदेशकल्पना, स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेव । तच्च नाल्रूपमिति इट इत्यादि न स्थान्यलवृत्तिधर्माश्रयम् । ऐवं च **यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतो योऽल् तत्स्थानिसंबन्धी** वा **योऽल् तन्मात्रवृत्तिधर्माश्रयणं तादृशे विधौ हि निषेधः** । अत्र च शब्दतो विशिष्टमनलमाश्रयते । **वलादेरि**त्यत्र च शब्दतो विशिष्टमलमिति भावः ॥ **सिद्धान्तव्यवस्थापनादिति** । इदं निरनुबन्धकानुवादेन विहितादेशविषयम् । **क्त्वो ल्यबि**त्यादौ सानुबन्धकानुवादेनादेशविधौ तु यथाऽनुबन्धकार्यस्याल्विधित्वाभावस्तथाऽनेकाल्शिदित्यत्र निरूपितम् ॥ **अत्रापीट एव स्थानित्वमिति** । अन्यथा स्थान्यलवृत्तीट्त्वाश्रयस्य लोपस्याल्विधित्वात्तत्र स्थानिवत्त्वानापत्तिर्विशेषातिदेशेऽपीति भावः ॥ एवं च तदुदाहरणे विशेषानतिदेशेऽपि न दोषः । एतदेवाभिप्रेत्य स्वयं 'प्रदीव्य' इति **गुणापत्तिर्विशेषानतिदेशे** दूषण**मुक्तम्** । वस्तुतो भाष्योक्तदोषोऽपि दृढ एव । तथाहि—**अनल्विधावित्यस्याभावे** प्रायोगिकस्थानिनमादायैव वाक्योपप्लवः स्यात् । तद्बुद्धिं निवर्त्यैवादेशबुद्धेर्जायमानत्वेन तस्यैव मुख्यस्थानित्वात् । **यद्येवमित्यस्य** विशेषानतिदेशमाश्रित्य विधिग्रहणाकरणे-इत्यर्थः । एवं च दीर्घस्थान्यलपरस्य कार्यं लोप इति स्थानिवद्भावेन तदप्राप्तिरिति **पूर्वपक्षः** ॥ **'विधौ'** इत्युक्तौ तु न दोषः, शास्त्रस्योपस्थित्या शास्त्रोपात्तस्थान्यादेशभावस्य निमित्तस्य च ग्रहणमिति न दीर्घोऽल्विधिरित्**युत्तरम्** ॥ तदेतद्**दोषोऽनलमित्यनेन** दीर्घादिविधिरित्यर्थकेन ध्वनितमिति बोध्यम् । अत **एव भोभगोअघो** इति सूत्रे भाष्ये रेफस्थानिकविसर्गस्य स्थान्यलवृत्तिधर्मरुत्वाश्रयं कार्यं न, अल्विधित्वादित्युक्तम् ॥

१ अत्रेति । यत इत्यादिः ॥ छाया ॥
२ वार्तिकविरोधं परिहरति—**वार्तिकेऽपीति** ॥ छाया ॥
३ **एवमपि**—प्रदीव्येत्यादिसिद्धावपि ॥ छाया ॥
४ भाष्यतात्पर्यमाह—**एवं चेति** ॥ तत्र ज्ञापिते च ॥ छाया ॥
५ एवं सति निषेधवाक्यार्थमाह—**एवं चेति** ॥ छाया ॥
६ **अत्र च**—**इट ईटी**त्यत्र च ॥ छाया ॥
७ कैयटाद्यसांगत्यमाह—**इदमिति** ॥ छाया ॥

( आक्षेपवार्तिकादिशेषभाष्यम् )

**यदि तर्हि सामान्यमप्यतिदिश्यते, विशेषश्च ॥**

( ३०८ आक्षेपसाधकं वार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सत्याश्रये विधिरिष्टः ॥ * ॥

( भाष्यम् )

**सति च वलादित्वे इटा भवितव्यम् । अरुदिताम् । अरुदितम् । अरुदित ॥**

( उक्ताशयानभिज्ञभाष्यम् )

**किमतो यत्सति भवितव्यम् ?**

( ३०९ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥*॥ प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात् ॥*॥

( भाष्यम् )

**प्रतिषेधस्तु प्राप्नोति ॥**

**किं कारणम् ?**

**'अल्विधित्वात्' । अल्विधिरयं भवति । तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) **सत्याश्रय इति** । आश्रीयत इत्याश्रयः । यथा वलादित्वमिड्विधौ । तत्रेडागमस्याल्विधित्वादनल्विधौ च स्थानिवद्भावविधानादरुदितामिति स्थानिकार्यमिडागमो न प्राप्नोति ॥

( उद्योतः ) भाष्ये-**यदि तर्हि सामान्यमिति** । अनल्विधाविति ज्ञापकात् । तज्ज्ञापनार्थं चान**ल्विधा**विति यदि क्रियत इत्यर्थः ॥ **आश्रय**शब्दस्य भावसाधनत्वे 'वलादित्वे'इति तद्विवरणमसंगतं स्यादत आह—**आश्रीयत इति** ॥ **स्थानिकार्यमिति** । सार्वधातुकत्वाभावादिति भावः ॥ भाष्ये—**प्रतिषेधस्त्विति** । आदेशः स्थानिवत्, अलाश्रये विधौ तु न-इति सूत्रार्थ इति भावः ॥

( ३१० सिद्धान्तिसमाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ न वाऽऽनुदेशिकस्य निषेधादितरेण भावः ॥ * ॥

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ?**

**आनुदेशिकस्य प्रतिषेधात् । अस्त्वत्रानुदेशिकस्य**

८ **तथेति** । शिद्ग्रहणेनानुबन्धस्याल्व्यवहाराभावज्ञापनादित्यर्थः ॥ छाया ॥
९ **तदिति** । अग्रहीदित्यत्र ॥ छाया ॥
१० **एतदिति** । इमामेवारुचिमित्यर्थः ॥ छाया ॥
११ कैयटादिकं दूषयति—**वस्तुत इति** ॥ छाया ॥
१२ **अत एव**—अस्याङ्गीकारादेव ॥ छाया ॥
१३ भाष्यतात्पर्यमाह—**तज्ज्ञापनार्थं चेति** ॥ छाया ॥
१४ अलि स्थानिसंबन्धो नेष्ट इत्याह—**अलाश्रय इति** ॥ छाया ॥

वलादित्वस्य प्रतिषेधः । स्वाश्रयमत्र वलादित्वं भविष्यति । नैतद्विवदामहे-वलादिर्न वलादिरिति ॥

किं तर्हि ?

स्थानिवद्भावात् सार्वधातुकत्वमेषितव्यम् ॥

( प्रदीपः ) न वेति । अतिदेश एवानुदेशः, स प्रयोजनं यस्य तदानुदेशिकम् । तत्र स्वाश्रयं वलादित्वमाश्रित्य स्थान्याश्रयं च सार्वधातुकत्वमिड्विधास्यते ॥

( उद्योतः ) समाधत्ते—न वेति । स[1] प्रयोजनं-प्रयोजको यस्य वलादित्वस्येत्यर्थः । करणे ल्युट् । प[2]दसंस्कारपक्षाश्रयेण तु अतिदेशः प्रयोजनमिति प्रयुक्तम् ॥ शङ्किताऽऽह-नैतद्विवदामह इति ॥

( आक्षेपोपसंहारभाष्यम् )

तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) तत्रानल्वि[3]धाविति । इडागमार्थमत्र स्थानिवद्भावः प्रार्थ्यते । इट् चाल्विधिरिति अनल्विधाविति प्रतिषेधात् सार्वधातुकत्वस्यापीडर्थत्वादिड् न प्राप्नोतीति ॥

( उद्योतः ) ननु सार्वधातुकत्वस्याल्धर्मत्वाभावात् कथं प्रतिषेधप्राप्तिरत आह—इडागमेति ॥

( स्थान्यलाश्रयविधौ प्रतिषेधसाधनम् )

( आक्षेपभाष्यम् )

किं पुनरादेशिन्यल्याश्रीयमाणे प्रतिषेधो भवति, आहोस्विदविशेषेण-आदेशे, आदेशिनि च ?

कश्चात्र विशेषः ?

( प्रदीपः ) इदानीं यथाऽत्र प्रतिषेधो न प्रवर्तते तथा विचारपूर्वकं प्रतिपादयितुमाह—किं पुनरिति । आदेशोऽस्यास्तीत्यादेशी-स्थानी । किं स्थान्यलाश्रये कार्ये स्थानिवत्त्वनिषेधः, अथाल्मात्राश्रय इति विचारः । किं प्रत्यासत्तिराश्रीयते, अथवा व्याप्तिरिति भावः ॥

( उद्योतः ) उक्तदोषमपरिहृत्य विचारान्तरारम्भोऽनुपपन्न इत्यत आह—इदानीमिति ॥ प्रतिपादयितुमिति । वादिमुखेनैव प्रतिपादयितुमित्यर्थः ॥ आदेशोऽस्येति । आ[4]देशिनीति अलीत्यनेन व्यधिकरणं, स्थानिसम्बन्ध्यलाश्रय इत्यर्थः । स[5]म्बन्धिन एवाधिकरणत्वविवक्षया सप्तमी । अत एव स्थानित्वे तु व्यपदेशिवद्भावेन तत्त्वमिति बोध्यम् ॥ सन्देहबीजं दर्शयति—किमिति ॥

( ३११ प्रथमपक्षाक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः ॥ * ॥

( भाष्यम् )

आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः ॥

कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम् । तत्र लघूपधगुणः प्राप्नोति ॥

वधक इत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं चादुपधत्वम् । तत्र वृद्धिः प्राप्नोति ॥

पिबेत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम् । तत्र गुणः प्राप्नोति ॥

( प्रदीपः ) वधक इति । हन्तेर्ण्वुलि 'ब[6]हुलं संज्ञाछन्दसोरिति वक्तव्यम्, अन्नवधकगात्रविचक्षणाजिराद्यर्थम्' इति वधादेशः । स च हलन्त इति दोषोपन्यासः । अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः ॥

( उद्योतः ) स्थानिवद्भावादिति । अचः परस्मिन्नित्यनेन । एवं चोपधात्वाभावो ञ्णित्परत्वाभावश्चेति भावः ॥

( द्वितीयपक्षाङ्गीकारभाष्यम् )

अस्तु तर्ह्यविशेषेण-आदेश[7] आदेशिनि च ॥

( ३१२ द्वितीयपक्षाक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ आदेश्यादेश इति चेत् सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् ॥ * ॥

( भाष्यम् )

आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानं कर्तव्यम् ॥

सुप् । वृक्षाय, प्लक्षाय । स्थानिवद्भावात्सुप्संज्ञा, स्वाश्रयं च यञादित्वम् । तत्र प्रतिषेधः प्रा[8]प्नोति ॥

अरुदिताम्, अरुदितम्, अरुदित । स्थानिवद्भावात्सार्वधातुकसंज्ञा, स्वाश्रयं च वलादित्वं । तत्र प्रतिषेधः प्राप्नोति । तिङ् ॥

कृदतिदिष्ट । भुवनं, सुवनं, धुवनम् । स्थानिवद्भावात्प्रत्ययसंज्ञा, स्वाश्रयं चाजादित्वम् । तत्र प्रतिषेधः प्राप्नोति ॥

१ प्रदीपार्थमाह—स इति ॥ छाया ॥

२ ननु तथैव कुतो नोक्तमत आह—पदेति ॥ छाया ॥

३ 'ल्विधावितीति' इतीतिशब्दान्तः प्रतीकपाठः क. ग. पुस्तकयोः ॥

४ सर्वसंग्रहाय व्याप्तिन्यायानादरेणाह—आदेशिनीति ॥ छाया ॥

५ नन्वेवं षष्ठ्युचिताऽत आह—संबन्धिन एवेति ॥ पक्षान्तरे तु नोभयसंग्रह इति स्पष्टमेव ॥ छाया ॥

६ बहुलं तणीति वक्तव्यम् । किमिदं तणीति । संज्ञाछन्दसोर्ग्रहणमिति भाष्यफलितपाठोऽयम् ॥ दाधिमथाः ॥

७ भाष्ये अविशेषेणेत्यस्य व्याख्या-आदेश इत्यादि ॥ सप्तम्युभयत्र प्रायुज्यत ॥ छाया ॥

८ प्राप्नोतीत्यस्याग्रे 'सुप् । तिङ्—' इति क. पाठः ॥

( प्रदीपः ) **सुप्तिङ्कृदतिदिष्टेष्विति** । आदिष्ट एवातिदिष्टो विवक्षितः ॥ उपलक्षणं चैतत् । तद्धितादेशेष्वपि न प्राप्नोति—लैगवायन इति । अत्र हि स्वाश्रयमजादित्वं स्थानिवद्भावात्तद्धितत्वम् ॥

( उद्द्योतः ) अतिदेशः—अतिदिष्टं चेदर्थासङ्गतिरत आह— **आदिष्ट एवेति** । सुबादीनामादेशेष्वित्यर्थः । तेषु दीर्घत्वे इटि उवङि च स्थानिवत्त्वप्रतिषेधः प्राप्नोति ॥ **तद्धितत्वमिति** । भस्य तद्धिते ओर्गुणविधानादिति भावः ॥

( तटस्थाक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ?**

( प्रदीपः ) **किं पुनरिति** । न्यायापेक्षः प्रकर्षः । कः पक्षो न्यायोपपन्न इत्यर्थः ॥

( उद्द्योतः ) ननु पक्षद्वयेऽपि दोषोक्तेः कस्यापि प्रशस्यत्वाभावात् आतिशयिकोऽनुपपन्न इत्यत आह—**न्यायेति** । युक्तीत्यर्थः ॥ का युक्तिः प्रकृष्टा—इत्यत्र प्रश्नतात्पर्यमिति भावः ॥

( समाधानभाष्यम् )

**'आदेशिन्यल्याश्रीयमाणे प्रतिषेधः' इत्येतदेव ज्यायः ॥**

**कुत एतत् ?**

**तथा ह्ययं विशिष्टं स्थानिकार्यमादेशेऽतिदिशति—'गुरुवद् गुरुपुत्रे' इति यथा । तद्यथा—'गुरुवदस्मिन्गुरुपुत्रे वर्तितव्यम्, अन्यत्रोच्छिष्टभोजनात्पादोपसंग्रहणाच्च' इति । यदि च गुरुपुत्रोऽपि गुरुर्भवति । तदपि कर्तव्यं भवति ॥**

( प्रदीपः ) **आदेशिनीति** । प्रत्यासत्त्येति भावः ॥ यत्कार्यमादेशः स्वतो न प्रतिपद्यते तत्र स्यादतिदेशाकाङ्क्षा । तच्छेषश्च प्रतिषेधस्तद्द्वारक एवाल्कार्ये युक्तः ॥ अरुदितामित्यत्र त्वादेशस्य स्वतो वलादित्वान्न तत्रातिदेशं प्रत्याकाङ्क्षा । सार्वधातुकत्वं तस्य स्वतो नास्तीति तदेवातिदेशेन प्राप्यते । यथा गुरुपुत्रो गुरुत्वे सति नातिदेशमपेक्षते, तथा वलादित्वं प्रत्यादेशस्य नास्त्यतिदेशापेक्षेत्येतावता दृष्टान्तः । सार्वधातुकत्वं प्रत्ययस्त्वेवातिदेशापेक्षा ॥

( उद्द्योतः ) **प्रत्यासत्त्येति** । अत एव कष्टायेत्यादिनिर्देशाः सङ्गच्छन्ते । एवं च प्रत्यासत्त्याश्रयणमेव न्याय्यमिति भावः ॥ भाष्ये-**विशिष्टं स्थानिकार्यमिति** । स्वरूपेणालभ्यमानमित्यर्थः ॥ तदाह—**यत्कार्यमिति** ॥ **तच्छेषः**—अतिदेशशेषः ॥ **तद्द्वारके**—अतिदेशद्वारके ॥ **यथेति** । एवं च यथा तत्रातिदेशप्राप्तोच्छिष्टभोजनस्यैव वर्जनं, न तु स्वाश्रयगुरुत्वप्राप्तस्य, एवमलंशेऽतिदेशप्राप्ताल्विधेरेव वर्जनमिति भावः ॥

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि-आदेशिन्यल्याश्रीयमाणे प्रतिषेधः ॥**

( उक्ताक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः* इति ॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । 'करोतौ तपरनिर्देशात् सिद्धम्' । पिबिरदन्तः । वधक इति नायं ण्वुल् । अन्योऽयमकशब्दः किदौणादिकः, रुचक इति यथा ॥**

( प्रदीपः ) **करोताविति** । अकारस्य ह्युकारो मात्रिक एव न्याय्य इति शास्त्रान्तरेणापि प्राप्तस्य भिन्नकालस्य निवृत्त्यर्थं तपरत्वमित्यर्थः ॥ **अन्योऽयमिति । हनो वध चेति** कुन्प्रत्ययः ॥

( उद्द्योतः ) भाव्यमानस्य सवर्णग्राहकत्वस्वीकारेऽपि तपरत्वं व्यर्थमित्याह—**अकारस्येति** । अन्तरतमत्वादिति भावः ॥ ऋका-

---

१ आदिष्टा एवातिदिष्टा विवक्षिताः' इति क. ग. पाठः ॥

२ यथासंख्येन तात्पर्यार्थमाह—**तेष्विति** ॥ तथा च वार्तिके षष्ठीतत्पुरुष इति भावः ॥ छाया ॥

३ 'प्रतिपद्यते तस्य तत्र' इति ग. पाठः ॥

४ 'तत्रातिदेशाकांक्षा' इति ग. पाठः ॥

५ ननु प्रत्यासत्तितो व्यासिन्यायस्य प्राबल्यमत आह—**अत एवेति** ॥ तदाश्रयणादेवेत्यर्थः ॥ एवं च तत्रेदं ज्ञापकमिति तदनाश्रयणम् । तदाह—**एवं चेति** । ज्ञापकसत्त्वे चेत्यर्थः ॥ छाया ॥

६ भाष्यादितात्पर्यमाह—**एवं चेति** । तदुक्त्या तथा बोधिते चेत्यर्थः ॥ छाया ॥

७ **भिन्नेति** । न चैवं कुर्वे इत्यादावपि दीर्घप्रसङ्गेन **न भेति** कुरो निषेधो व्यर्थ इति वाच्यम् । 'यन्निमित्तक उकारस्तन्निमित्तक एव भिन्नकालस्तेन वार्य इति तात्पर्यात्' इति **छाया** तु दीर्घस्योकारसमाननिमित्तकत्वेन वार्यत्वापत्तेर्गुणस्योकारनिमित्तसार्वधातुकभिन्नार्धधातुकनिमित्तकत्वेन वार्यत्वानुपपत्तेश्च चिन्त्यैव ॥ तस्माद्दीर्घस्यासिद्धत्वान्न तपरकरणेन वार्यता, गुणस्य तु सपादसप्ताध्यायीस्थत्वेन सिद्धत्वाद् वार्यतेति बोध्यम् ॥ दाधिमथाः ॥ दाधिमथाशयोऽयं प्रौढोऽपि भाष्यानवगाहनमूलः । तथाहि—अत उत्सूत्रे भाष्ये 'सार्वधातुके इति किमर्थं' इत्याक्षिप्य 'यद्येवं नार्थः सार्वधातुकग्रहणेन । उत इति वर्तते' इत्युक्तम् । तेनोकारान्ताङ्गावयवकरोतेरत उदित्यर्थात्सिद्धान्ते सार्वधातुकपदाभावात् नायमुकारः सार्वधातुकनिमित्तः किन्तूकारान्ताङ्गनिमित्त एवेति उकारनिमित्तो यो भिन्नकालः स एव तेन वार्यते । 'कुर्वः' इति वस्प्रत्ययनिमित्तो न वार्यत इति न भकुर्छुरे कुर्ग्रहणं युक्तमित्यभिप्रायेण छायोक्तं सम्यगेव । तदुक्तमत उत्सूत्रे शेखरे—'सार्वधातुके इत्यस्याभावेऽपि उकारान्ताङ्गावयवकरोतेरत उदित्यर्थात् । सूत्रशेषस्त्विदं तर्हीत्यादिभाष्यं तु एकदेश्युक्तिरिति बोध्यम्' इति । एवञ्च छायाक्षेपबद्धपरिकरैर्गले पतितो दोषः सोढव्यः ॥

८ **व्यर्थमिति** । तथा च चारितार्थ्याज्ज्ञापकत्वासंभव इति भावः ॥ छाया ॥

९ ननु विकारान्यानुपूर्व्यैक्येन लक्ष्ये लक्षणेति न्यायेन न पुनर्गुणोऽत आह—**ऋकारेति** ॥ ऋकारस्थानिको य उर् तदवयवो य उकारस्तद्विकारः पुनर्गुण इत्यर्थः ॥ छाया ॥

रस्थानिकावयवविकारोऽत्र इति लक्ष्यभेदान्न 'उदवोढाम्' इतिवल्लक्ष्ये लक्षणस्येति न्यायेनात्र निर्वाह इत्याहुः । कुनू–औणादिकः ॥

( एकदेशविकृतन्यायाधिकरणम् )

( ३१३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥*॥ एकदेशविकृतस्योपसंख्यानम् ॥*॥

( भाष्यम् )

**एकदेशविकृतस्योपसंख्यानं कर्तव्यम् ॥**

**किं प्रयोजनम् ?**

**पचतु, पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ॥**

( प्रदीपः ) **एकदेशविकृतस्येति** । एकदेशेन विकृत इति तृतीयासमासः ॥

( उद्योतः ) बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातः स्यादत आह—**तृतीयेति** । आनुमानिकेऽपि स्थानिवत्त्वप्रवृत्तिर्वक्तव्येत्येतद्वार्तिकतात्पर्यम् ॥

( समाधाने भाष्यवार्तिकम् ॥ )

## *॥एकदेशविकृतस्यानन्यत्वात्सिद्धम् ॥*

( भाष्यम् )

**'एकदेशविकृतमनन्यवद्भवति' इति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा—श्वा कर्णे वा पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभ इति ॥**

( प्रदीपः ) **तद्यथेति** । छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जकः । एवं पचत्वित्यत्रेकारस्य विकारेऽपि तकारस्तिङ्त्वस्य व्यञ्जकः । तथा चेकारलोपेऽप्यपचदिति तकारमात्रस्य तिङ्त्वमर्थप्रतीतिहेतुत्वं चास्ति ॥ **नाश्व इति** । अवयवापगमेऽपि न तस्य जात्यन्तरेण योगः, किं तर्हि श्वत्वेनैवेत्यर्थः ।

( उद्योतः ) लोकन्यायाश्रयेणैतत्प्रत्याचष्टे—**अनन्यत्वात् सिद्धमिति**—भाष्ये ॥ नन्ववयवविगमे जात्यभिव्यञ्जकाभावात्कथं 'श्वा' इति व्यवहारोऽत आह—**छिन्नेऽपीति** । **तथाचेति** । लोपस्य विकारत्वाभावेनैकदेशविकृतोपसङ्ख्यानेऽपि तत्रोक्तरीतिरेवावश्यकीति भावः ॥ अर्थेत्यादि दृष्टान्तार्थः । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानाद्बोधो न स्यात् । एतदर्थं च तन्न्यायाङ्गीकार आवश्यक इति भावः ॥

( ३१४ एकदेश्याक्षेपसाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अनित्यविज्ञानं तु तस्मादुपसंख्यानम् ॥ * ॥

( भाष्यम् )

**अनित्यविज्ञानं तु भवति । नित्याः शब्दाः । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । तत्र स एवायं, विकृतश्च-इत्येतन्नित्येषु नोपपद्यते । तस्मादुपसंख्यानं कर्तव्यम् ॥**

( प्रदीपः ) **अनित्यविज्ञानमिति** । अवस्थिते तकारे इकारस्य उकार इत्यनित्यत्वं शुन इव प्राप्नोतीति भावः ॥ उपसंख्याने तु क्रियमाणे नास्त्यनित्यत्वम् , **एरुरिति** स्थान्यादेशाभ्यां तिशब्दतुशब्दयोरनुमीयमानत्वात्तेः प्रसङ्गे तोर्विधानात् । तत्रादेशग्रहणाद्वा उपसंख्यानाद्वा आनुमानिकस्याप्यादेशस्य स्थानिवद्भावः सिद्धः ॥

( उद्योतः ) **अवस्थिते इति** । न च इप्रसङ्गे उरिति वाच्यमिति नानित्यत्वम्, अनर्थकत्वेनार्थबोधाय प्रसङ्गस्य वक्तुमशक्यत्वात् । अवयवत्वेन प्रसङ्गे त्ववयवान्तरप्रादुर्भावपूर्वावयवापगमाभ्यामनित्यत्वं स्यादित्यर्थः ॥ **स एवायमिति** प्रत्यभिज्ञया भाष्ये नित्यत्वमुपलक्षितम् । अत एव **विकृत** इत्यनेन विरोधः । अनित्यत्वाभावे हेतुः—**तेः प्रसङ्गे** इत्यादि । अस्य ह्यर्थवत्त्वात् **तेः प्रसङ्गे** इत्युक्तिर्नासमञ्जसेत्यर्थः ॥ तदुपपादकम्—**एरुरित्यादि** । एवं च कार्यशब्दवादे न्यायेन सिद्धम्, नित्यशब्दवादे तु नेति

---

१ **आहुः**–भाष्यतत्त्वविदः ॥ कुनित्यस्य शेषमाह—**औणादिक इति** ॥

२ अ. प. पुस्तकयोर्वार्तिकस्यास्य न पाठः ॥

३ शङ्कते—**बहुव्रीहाविति** । भावक्तान्तेन बहुव्रीहावित्यर्थः । कर्मक्तान्तेन बहुव्रीहौ त्वर्थासंगतिरपीति भावः । **तृतीयेतीति** । अत्र कर्मण्येव क्तः । समुदायस्य विकृतत्वे एकदेशस्य विकारद्वारा करणमिति **कर्तृकरणे** इति समासः । धान्येन धनवानितिवत्तृतीयायां तु सुप्सुपेति समासः ॥ आहिताग्न्यादित्वेन तथा बहुव्रीहिरपि सुवच इति **गदायां** निरूपितम् ॥ छाया ॥

४ यथाश्रुतार्थबाधादाह—**आनुमानीति** ॥ छाया ॥

५ इदं भाष्यवार्तिकमेव, सिद्धशब्दान्तं कात्यायनवार्तिकं न दृश्यते ॥

६ 'कर्णे वा पुच्छे छिन्ने' इति ग. पाठः ॥

७ अत्र मानमाह—**तथा चेति** ॥ छाया ॥

८ **अवयवापगमे** इति पाठः ॥ अस्याशयमाह—**लोपस्येति** ॥ **सङ्ख्यानेऽपीति** । तस्य तत्त्वोपसंख्यानेऽपीत्यर्थः ॥ **तत्र**–अपचदित्यादौ ॥ **उक्तेति** । लोकन्यायाश्रयणरूपेत्यर्थः ॥ छाया ॥

९ अनुपयोगादाह—**अर्थेत्यादीति** ॥ अस्य तात्पर्यमाह—**अन्यथेति** । लोकन्यायानाश्रयण इत्यर्थः ॥ चोऽप्यर्थे ॥ छाया ॥ मुद्रितपुस्तकेषु 'अर्थेत्यादि दृष्टान्तार्थम्' इति पाठो दृश्यते । भाष्योक्तश्वादिदृष्टान्तस्यायमर्थ इत्युद्योताभिप्रायः, न प्रदीपप्रतिपादितस्य 'तिङ्त्वं' इत्यस्य दृष्टान्तार्थमेतत्, अनुपयोगात् । अतो 'दृष्टान्तार्थः' इति पाठः सुसम्बद्धः ॥

१० **तत्र**–तस्मिन् सति । नित्यो विकृतश्चेत्येतन्नोपपद्यते नित्येषु विरोधादिति भाष्यार्थ इत्याह—**स एवेति** ॥ छाया ॥

वचनारम्भवादितात्पर्यम् ॥ वस्तुतो वचनारम्भेऽपि विकृतत्वबुद्धिमात्रेण तत्संगतिरित्यवश्यं वाच्यम् । अन्यथा विकृतस्येत्यसंगतं स्यात् । तदा तथैव रीत्या लोकन्यायप्रवृत्तिरपि सूपपादेति ॥ अनित्यविज्ञानं त्वित्याद्येकदेश्युक्तिः ॥

( ऋष्यन्तरसंवादभाष्यम् )

भारद्वाजीयाः पठन्ति—

( भारद्वाजीयवार्तिकम् )

**॥*॥ एकदेशविकृतेषूपसंख्यानम् ॥*॥**

( भाष्यम् )

**एकदेशविकृतेषूपसंख्यानं कर्तव्यम् । पचतु, पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ॥**

**किंच कारणं न स्यात् ?**

( भारद्वाजीयवार्तिकम् )

**॥ * ॥ अनादेशत्वात् ॥ * ॥**

( भाष्यम् )

**आदेशः स्थानिवदित्युच्यते । न चेमे आदेशाः ॥**

( भारद्वाजीयवार्तिकम् )

***॥ रूपान्यत्वाच्च ॥***

( भाष्यम् )

**अन्यत्खल्वपि रूपं पचतीति, अन्यत्पचत्विति ॥**

( प्रदीपः ) **न चेम इति** । तुशब्दादयः, **एरुरि**त्यत्र साक्षात्समुदायानुपादानात् ॥ **रूपान्यत्वाच्चेति** । यद्ययमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम् । यतस्तु भेदको रूपस्य तस्मान्नास्ति तिङ्त्वमिति भावः ॥

( उद्योतः ) कात्यायनीयात् भारद्वाजीयपाठे हेत्वभिधानं बहुवचनं च विशेषः ॥ **एरुरित्यत्रेति** । प्रत्यक्षादेशत्वं चेह निषेध्यमिति भावः ॥ लोकन्यायेन सिद्धिखण्डनाय—**रूपान्यत्वाच्चेति** ॥ तद्व्याचष्टे—**यदीति । इदमो म** इत्यादिवदिति भावः । अर्थस्यान्यथाभावेन जात्यभिव्यञ्जकाभाव इति तात्पर्यम् । **एकदेशविकृतेष्विति** बहुवचनेन लोपस्यापि सङ्ग्रहात् 'अपचत्' इत्यादावपि स्थानिवत्त्वमिति बोध्यम् ॥

( आक्षेपनिराकरणभाष्यम् )

**इमेऽप्यादेशाः ॥**

**कथम् ?**

**आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते ॥**

( उद्योतः ) भाष्ये वचनं खण्डयति—**इमेऽपीति** । आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भावः ॥ इममाशयमजानानः पृच्छति—**कथमिति** । उक्तेनैवाभिप्रायेणाह—**आदिश्यत इति** ॥ **इमे चेति** । तुशब्दादयः ॥

( ३१५ आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ आदेशः स्थानिवदिति चेन्नानाश्रितत्वात् ॥ * ॥**

( भाष्यम् )

**आदेशः स्थानिवदिति चेत् । न ॥**

**किं कारणम् ?**

**'अनाश्रितत्वात्' । योऽत्रादेशो नासावाश्रीयते । यश्चाश्रीयते नासावादेशः ॥**

( प्रदीपः ) **योऽत्रादेश इति** । इकारस्य उकारः । **नासावाश्रीयते**—पदसंज्ञायाम् । सा हि तिशब्दनिबन्धना, नावयवनिबन्धना ॥ **यश्चेति** । तुशब्दः । साक्षाद्विधानान्नादेशः । पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः ॥

( उद्योतः ) आदेशपदसामर्थ्यमजानान आह—**आदेश इत्यादि** । प्रत्यक्षादेशस्यैव ग्रहणं न्याय्यमित्यभिमानः ॥ तदाह—**योऽत्रेति** । ननु तामादेः पदसंज्ञायामनाश्रयणेऽपि यथा स्थानिवत्त्वात्पदत्वमेवमुकारस्यापीत्यत आह—**सा हीति** । तेश्च नायमादेश इति भावः ॥ तिङ्त्वं समुदायपर्याप्तमिति तात्पर्यम् । स्थानिवत्त्वद्वाराऽपि नायमुकारः पदत्वहेतुतयाऽऽश्रीयत इति भाष्यार्थः ॥ **आश्रीयते इत्यर्थ इति** । आश्रयितुमिष्यत इत्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**नैतन्मन्तव्यम्—'समुदाय आश्रीयमाणेऽवयवो नाश्रीयते' इति । अभ्यन्तरो हि समुदायेऽवयवः । तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलति ॥**

( प्रदीपः ) तत्रोत्तरमाह—**नैतदिति** । 'तिप्-तस्-झि' इति सन्निवेशे इकारतकारावपि सन्निविष्टावितीकारस्य तिङ्त्वात्तदादेशस्याप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा ॥

( उद्योतः ) **तत्रोत्तरमाहेति** । एकदेशीति शेषः ॥ भाष्ये—**समुदाये इत्यादि । सुप्तिङन्तमि**त्यादौ 'ति' इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरिक्तसमुदायाभावात् तकारेकारान्तं पदमित्यर्थः । एवं चेकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात्पदत्वं सिद्धमिति भावः ॥ **तिङ्त्वात्**—तदवच्छिन्नावयवत्वात् । **तिङ्त्वं**—तदवच्छिन्नावयवेकारत्वमित्यर्थः । यथाश्रुते हि पचतीत्यादौ तान्तस्यापि पदत्वापत्तौ जश्त्वापत्तिरिति बोध्यम् ॥

---

१ भाष्यं दूषयति—**वस्तुत इति** ॥ एवं च कैयटादिकं चिन्त्यमेवेति भावः ॥ छाया ॥

२ एतदग्रे 'किं प्रयोजनम्' इत्यधिकः क. ग. पुस्तकपाठः ॥

३ दण्ड्याद्यनुक्तमाह—**बहिति** ॥ तत्फलं वक्ष्यति ॥ छाया ॥

४ तत्फलमाह—**एकेति** ॥ छाया ॥

५ अत्र 'तत्र' इति ग. पाठः ॥

६ **नान आह**—नान एवाह ॥ आनुमानिकतत्त्वसत्त्वादाह—**प्रत्यक्षेति** ॥ छाया ॥

७ भाष्यतात्पर्यमाह—**स्थानिवत्त्वेति** ॥ छाया ॥

८ 'समुदायस्यावयवः' इति क. ग. पाठः ॥

९ वर्णितभाष्याशयेन किमिति कैयटान्यथायोजना, कैयटोक्त एव भाष्यार्थः कुतो नेत आह—**यथाश्रुते हीति** ॥ छाया ॥

( ३१६ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥*॥ आश्रय इति चेदल्विधिप्रसङ्गः ॥*॥**

( भाष्यम् )

**आश्रय इति चेदल्विधिरयं भवति । तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) **अल्विधिप्रसङ्ग इति ।** इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादित्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । नैवं सति कश्चिदनल्विधिः स्यात् । उच्यते चेदं–अनल्विधाविति । तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो योऽल्विधिरिति ॥**

**कश्च साधीयः ?**

**यत्र प्राधान्येनालाश्रीयते । यत्र नान्तरीयकोऽलाश्रीयते नासावल्विधिरिति ॥**

( प्रदीपः ) **यत्र प्राधान्येनेति ।** यत्र साक्षादल् निर्दिष्टः, तत्र प्रतिषेधः, नानुमीयमाने सम्भवमात्रेणालीत्यर्थः । प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम् ॥

( उद्योतः ) ननु प्राधान्येनेत्युक्तौ 'प्रदीव्य' इति न सिध्येदत आह—**यत्रेति** ॥ **प्रत्यक्षेति** । [1]अनान्तरीयकेत्यर्थः ॥

( सिद्धान्तिसमाधानभाष्यम् )

**अथवोक्तमादेशग्रहणस्य प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यादिति ॥**

( प्रदीपः ) **आदेशमात्रमिति ।** आनुमानिकमपीत्यर्थः ॥

( उद्योतः ) इदानीं सिद्धान्ती एकदेश्युक्त[2]मनुमन्यमान इव पक्षान्तरत्वेन स्वाशयं प्रकाशयति—भाष्ये—**अथवेति** ॥

( शब्दनित्यत्वेऽप्यनुपपत्तिपरिहारः )

( ३१७ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् ॥ * ॥**

( भाष्यम् )

**स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते ॥**

**किं कारणम् ?**

**'नित्यत्वात्' । स्थानी हि नाम—यो भूत्वा न भवति । आदेशो हि नाम—योऽभूत्वा भवति । एतच्च नित्येषु शब्देषु नोपपद्यते—यत्सतो नाम विनाशः स्यात्, असतो वा प्रादुर्भाव इति ॥**

( प्रदीपः ) **अनुपपन्नमिति ।** एकदेशविकारेऽपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे कुतो नित्यत्वम् । यत्रान्वयोऽपि कस्यचिन्नास्तीत्यर्थः ॥

( उद्योतः ) **सर्वविकार इति** । अस्तेर्भूरित्यादौ ॥ **यो भूत्वे**त्यादिभाष्यस्य–प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं नित्यत्वमिति तात्पर्यम् ॥

( ३१८ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानप्रयोगात् ॥ * ॥**

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**यथा लौकिकवैदिकेषु कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दप्रयोगो वर्तते । लोके तावत्—'उपाध्यायस्य स्थाने शिष्यः' इत्युच्यते, न च तत्र उपाध्यायो भूतपूर्वोऽपि भवति ॥ वेदेऽपि—'सोमस्य स्थाने पूती[3]कतृणान्यभिषुणुयात्' इत्युच्यते । न च तत्र सोमो भूतपूर्वो भवति ॥**

( प्रदीपः ) **सोमस्येति ।** सोमस्तृणविशेषः ॥ तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते ॥

( उद्योतः ) **स्थानशब्दः**–प्रसङ्गवाचीत्युत्तरम् ॥ **तदसंनिधाविति** । नित्यस्यावश्यकर्तव्यत्वादार[4]ब्धस्य चावश्यसमापनीयत्वादिति भावः ॥

( समाधानान्तरभाष्यवार्तिकम् ॥ )

***॥ कार्यविपरिणामाद्वा सिद्धम् ॥***

( भाष्यम् )

**अथवा कार्यविपरिणामाद्वा सिद्धमेतत् ॥**

**किमिदं कार्यविपरिणामादिति ?**

**कार्या-बुद्धिः, सा विपरिणस्यते ॥**

( प्रदीपः ) **कार्या बुद्धिरिति ।** अन्यस्यात्र विपरिणामासम्भवात्सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते न तु कार्यशब्दो बुद्धिपर्यायः ॥

( प्रयोगासिद्धिभाष्यम् )

**ननु च कार्याविपरिणामादिति भवितव्यम् ॥**

( प्रयोगसाधकभाष्यम् )

**सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि ॥**

( प्रदीपः ) **सन्तीति ।** ङ्यापोरित्यत्र बहुलग्रहणात् ॥

( उद्योतः ) संज्ञाछन्दस्त्वयोरभावादाह—**बहुलेति** ॥

( प्रयोगसाधकयुक्त्यन्तरभाष्यम् )

**[5]अपि च 'बुद्धिः-संप्रत्ययः' इत्यनर्थान्तरम् ।**

---

१ तत्त्वमप्यविवक्षितमित्याह—**अनान्तरीयेति** ॥ छाया ॥

२ **अन्विति** । तस्याखण्डनात् । इवेन वस्तुतोऽतत्त्वं सूचितम् ॥ छाया ॥

३ **पूतीकतृणानि**–पर्णकण्टकशून्यानि स्नुहीसदृशानि ॥ छाया ॥

४ काम्येऽपि तदुपयोगमाह—**आरब्धेति** ॥ छाया ॥

५ बाहुलकानाश्रयणेऽप्याह—**अपि चेति** ॥ छाया ॥

कार्या - बुद्धिः कार्यः - संप्रत्ययः । कार्यस्य - संप्रत्ययस्य विपरिणामः । कार्यविपरिणामादिति ॥[1]

( समाधानान्तरबाधकभाष्यम् )

परिहारान्तरमेवेदं मत्वा पठितम् ॥[2]

( उपपत्तिप्रश्नभाष्यम् )

कथं चेदं परिहारान्तरं स्यात्?[3]

( समाधानान्तरबाधकभाष्यम् )

यदि भूतपूर्वे स्थानशब्दो वर्तते ॥[4]

( उद्द्योतः ) भूतपूर्वे स्थानशब्दप्रयोगमभ्युपेत्येदं परिहारान्तरम् । अन्यथाऽनर्थक्यप्रसङ्गात् ॥ न च तत्र स्थानशब्दो दृश्यते, सोमस्थाने इत्यादावभूतपूर्वे एव प्रयोगदर्शनादिति यदि भूतपूर्वे इत्यादिभाष्यतात्पर्यम् ॥[5]

( समाधानान्तरसाधकभाष्यम् )

भूतपूर्वे चापि स्थानशब्दो वर्तते ॥

कथम्?

बुद्ध्या । तद्यथा कश्चित्कस्मैचिदुपदिशति—'प्राचीनं ग्रामादाम्राः' इति । तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । ततः पश्चादाह—'ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः' इति । स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । स ततः पश्यति-बुद्ध्या आम्राँश्चापकृष्यमाणान्,न्यग्रोधांश्चोपाधीयमानान्।[6] नित्या एव च स्वस्मिन्विषये आम्राः, नित्याश्च न्यग्रोधाः । बुद्धिस्त्वस्य विपरिणम्यते । एवमिहापि अस्तिरस्थायविशेषेणोपदिष्टः, तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता । सः "अस्तेर्भूः" इत्यनेनास्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते । स ततः पश्यति—बुद्ध्या अस्तिं चापकृष्यमाणं, भवतिं चोपाधीयमानम्, नित्य एव च स्वस्मिन्विषयेऽस्तिर्नित्यो भवतिश्च । बुद्धिस्त्वस्य विपरिणम्यते ॥

( प्रदीपः ) भूतपूर्वे चापीति । न च नित्यत्वविरोधः । बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते, न तु तद्वशादर्थानां तथाऽवस्थानम् ॥ प्राचीनमिति । प्राचि देशे-प्राक् । ततो विभाषाञ्चेरदिक्स्त्रियामिति स्वार्थे खः । तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वात् प्रथमैव कृता ॥ आम्रबुद्ध्या इति । तस्या अनन्तरमित्यर्थः ॥

( उद्द्योतः ) न चेति । भूतपूर्वे हि स्थानशब्दो निवृत्तिवचनः स्यादिति भावः ॥ तत्पक्षे नित्यत्वं कथमिति पृच्छति—भाष्ये-कथमिति ॥ उत्तरमाह—बुद्ध्येति ॥[9] प्रतिपत्तृवशादिति । प्रतिपत्तृशब्देन तदीया प्रतिपत्तिर्लक्ष्यते, तद्वशात् प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते, स्वतस्तद्वत्त्वस्य तत्र बाधादिति भावः ॥ क्वचित्तु प्रतिपत्तिवशादिति पाठः[10] ॥ तदाह—न त्विति । आरोपितभूतपूर्वत्वव्यवहारान्न नित्यत्वहानिरिति भावः ॥ ननु 'प्राचीनं' इत्यस्या[11]धिकरणप्रतिपादकत्वात् सप्तमी स्यादत आह—प्राचीति । सप्तम्यन्तादुत्पन्नास्तातेरञ्चेर्लुगिति लुक् ॥ भाष्ये—तस्य सर्वत्रेति । प्राग्देशवृक्षत्वावच्छिन्न इत्यर्थः ॥ स[12] तत्र—न्यग्रोधेषु ॥ नन्वाम्रबुद्ध्या इति न तृतीया, अर्थासंगतेः[13] । नापि षष्ठी, संबन्धिनोऽनुपस्थितेरत आह—तस्या अनन्तरमिति । अनन्तरपदाध्याहारेण षष्ठीति भावः ॥ केचित्तु[14] 'आम्रबुद्ध्या' इत्यस्य 'तां विहाय' इत्यर्थ इत्याहुः ॥ भाष्ये-अपकृष्यमाणानिति[15] । तत्र यथा बुद्धेरेवापकर्ष उपधानं च आम्रेषु न्यग्रोधेषु चारोप्यते, तथाऽत्रापि बुद्धिगतोत्पादविनाशयोः स्थान्यादेशभावस्य च शब्देष्वारोप इति भावः ॥ उपधानं-उत्पत्तिः ॥

---

( उत्सर्गकार्यनिराकरणम् )

( ३१९ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥*॥ अपवादप्रसङ्गस्तु स्थानिवत्त्वात् ॥*॥

( भाष्यम् )

अपवादे तु उत्सर्गकृतं च प्राप्नोति ॥ "कर्मण्यण्" "आतोऽनुपसर्गे कः" इति केऽपि अणि कृतं प्राप्नोति॥

किं कारणम्?

'स्थानिवत्त्वात् ॥

( प्रदीपः ) अपवादप्रसङ्गस्त्विति । बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भावः ॥ 'कर्मण्यण्' इति सर्वत्राणबुद्धिः प्रसक्ता 'आतोऽनुपसर्गे कः' इति कबुद्ध्या निवर्तते इति केऽप्यण्कृतप्रसङ्गः ॥

---

१ 'णामः कार्यविपरिणामः कार्यवि' इति क. ख. च. झ. पाठः ॥

२ नानेन पूर्वत्रैवोपाय उक्तः किंतूपायान्तरमित्याह— परीति ॥ छाया ॥

३ कथमिति । तस्योभयत्राविशिष्टत्वादिति भावः ॥ छाया ॥

४ तदुत्तरमाह—यदिति ॥ छाया ॥

५ यदिपदघटिताशयमाह—भूतपूर्वे इति ॥ अन्यथेति । तेनैव सिद्धत्वात् ॥ छाया ॥

६ 'चोपधीय' इति मुद्रितपाठः ॥

७ 'भूतत्वाच्च' इति क. ग. पाठः ॥

८ कथमिति प्रश्नो न तस्य तद्वृत्तित्वविषयः, उत्तरग्रन्थासंगतेरत आह—तत्पक्ष इति ॥ छाया ॥

९ यथाश्रुतासंगतेराह—प्रतीति ॥ तद्वशादित्यस्य व्याख्या—प्रतीति ॥ छाया ॥

१० पाठः—पाठ एव ॥ तत्तात्पर्यार्थमाह—आरोपीति ॥ छाया ॥

११ अत्रेति । प्राचीने देश इत्यर्थः ॥ छाया ॥

१२ स तत्रेत्यस्य व्याख्या—न्यग्रोधेष्विति ॥ छाया ॥

१३ अर्थासंगतिरिति । आम्रबुद्ध्या अनुसंहृतामनुगतां न्यग्रोधबुद्धिमिति कृष्णोक्तं तु न स्वरससिद्धमिति भावः ॥ छाया ॥

१४ शास्त्रसत्त्वात्तदयुक्तमित्याह—केचित्त्विति ॥ छाया ॥

१५ 'अप्रकृष्यमाणानिति' इति प्रतीकपाठो ज. पुस्तके ॥

( उद्द्योतः ) ननु उत्सर्गापवादयोः स्थान्यादेशभावाभावात् कथं स्थानिवत्त्वमत आह—बुद्धीति ॥ अण्कृतेति । ङीप् इत्यर्थः ॥

( आक्षेपबाधकभाष्यवार्तिकम् )

***॥ उक्तं वा ॥***

( भाष्यम् )

**किमुक्तम् ?**

***विषयेण तु नानालिङ्गकरणात् सिद्धम्*इति ॥**

( प्रदीपः ) **विषयेण त्विति** । तुशब्दः पुनरर्थे । यदयं **गापोष्टगिति** कापवादस्य टकः कित्त्वं शास्ति तज्ज्ञापयति—नोत्सर्गकृतमपवादे भवति - इति ॥

( उद्द्योतः ) भाष्ये–उक्तं वेति वार्तिकस्य**मुक्तमि**त्यंशं व्याचष्टे—**विषयेण त्वित्यादि** । अइउण्सूत्रे एकोऽकार इति पक्षे अनुबन्धसङ्करः प्राप्नोति केऽप्यण्कृतं प्राप्नोतीति पूर्वपक्षे **विषयेण तु नानालिङ्गकरणात्सिद्धम्**–इत्युक्तम् । विषयेऽण्कादौ भिन्नभिन्नलिङ्गकरणात् 'इह मुण्डो भव, इह जटी भव' इति लोकव्यवहारे यथा–यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति तथा–यल्लिङ्गो यत्रोच्यते तत्र तल्लिङ्गकार्यमेव नान्यानुबन्धकार्यमिति तदर्थश्चोक्तः ॥ एवं च सामान्यापेक्षत्वान्नियमस्य[1] स्थानिवत्त्वप्रयुक्तस्यापि व्यावृत्तिरिति भावः ॥ वार्तिके[2]ऽधिकरणस्यैव करणत्वविवक्षया तृतीया ॥ कैयटोक्ति[3]-व्याख्याने तु अथवा यदयं श्यन्नादीनिति वक्ष्यमाणपक्षे एतत्पक्षाद्वैलक्षण्यं दुर्लभम् । शब्दमर्यादया वार्तिकात्तदर्थालाभश्च । तुशब्दस्य पुनरर्थत्वेऽपि नानापदानन्वयस्तदवस्थश्च । किंच कैयटोक्तार्थकं **विषयेण तु पुनर्लिङ्गकरणात्सिद्धमिति** भाष्ये तत्र पठितं, न त्वेवमिति दिक् ॥

( पक्षान्तरोपक्रमभाष्यम् )

**॥ अथवा—**

**( ३२० समाधानवार्तिकम् ॥ २ ॥ )**

**॥ * ॥ सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् ॥ * ॥**

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम् ॥**

( प्रदीपः ) **षष्ठीनिर्दिष्टस्येति** । न चापवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते ॥ **नाभि नभं चे**त्यादौ षष्ठ्याः स्थाने प्रथमाया विधानादस्ति षष्ठी ॥ विश्रवणरवणेति तु शब्दान्तरं प्रत्ययविषयं विज्ञेयम् । यथोक्तम्—***बालवायो विदूरं च प्रकृत्यन्तरमेव वा*** इति । विश्रवःशब्दात्त्वनभिधानात् प्रत्ययाभावः ॥

( उद्द्योतः ) तत्र[4]त्यं वेत्यंशं व्याचष्टे—**अथवा सिद्धं त्विति** ॥ अनुवर्तमानं षष्ठीतिपदं षष्ठीनिर्दिष्टलाक्षणिकं[5] षष्ठ्या विपरिणम्यत इत्याशयेनाह—**षष्ठीनिर्दिष्टस्येति** ॥ नन्वेवं **नाभि नभमि**त्यादौ षष्ठीनिर्देशाभावात्स्थानिवत्त्वाभावेन यत्प्रत्ययसंनियुक्तनभस्य भत्वाङ्गत्वयोरभावाद्यस्येति लोपो न स्यादत आह—**नाभीति** । **विधानात्**–करणात् ॥ यत्र तर्हि स्थान्यनुमानं तत्र कथमत आह—**विश्रवणेति** । **प्रत्ययविषयम्**–शिवा[6]द्यण्विषयम् ॥ **बालवेति** । वैदूर्यस्य विदूरान्न प्रभवः किंतु बालवायात्–इति **विदूराञ्ञ्य** इत्यस्यासङ्गतौ इदं वार्तिकम् । बालवायो विदूरमापद्यते, अथासात्प्रत्ययः । यद्वा बालवायार्थवाचको विदूरोऽन्य एव ञ्यप्रत्ययविषय इति तदर्थः ॥ ननु विश्रवणादेरनादेशत्वे विश्रवःशब्दादपि प्रत्ययः स्यादत आह—**विश्रव इति** ॥

( आक्षेपभाष्यम् )

**तत्तर्हि षष्ठीनिर्दिष्टग्रहणं कर्तव्यम् ॥**

( समाधानभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥**

**क्व प्रकृतम् ?**

**"षष्ठी स्थानेयोगा" इति ॥**

( समाधानान्तरभाष्यम् )

**अथवा—आचार्यप्रवृत्तिर्ज्ञापयति—नापवादे उत्सर्गकृतं भवतीति । यदयं श्यन्नादीन् कांश्चिच्छितः करोति–श्यन्, श्नम्, श्ना, शः, श्नुरिति ॥**

( प्रदीपः ) **यदयमिति** । न च पित्त्वनिवृत्त्यर्थं नियमार्थं शित्त्वम् । श्यनो नित्त्वात् ज्ञापकात् पित्त्वनिवृत्तेः सिद्धत्वात् ॥ न ह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषोऽस्तीति केचिदाहुः ॥ तदयुक्तम् । ताच्छील्यादौ विषये चानशि[7] नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात् । तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्त्वमाश्रीयते—अपवादे उत्सर्गकृतं न भवतीति ॥

( उद्द्योतः ) **विशेषोऽस्तीति** । नित्त्वं हि प्रत्ययाद्युदात्तत्वबाधेनाद्युदात्त[8]त्वाय । स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्याप्युदुपदेशादित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति भावः ॥ **आद्युदात्तार्थमिति** । इष्टमपि चित्त्वप्रयुक्तान्तोदात्तत्वं बाधित्वे-

---

१ **नियमस्य**–उक्तरूपस्य । अन्यथैतदसंगतिः स्पष्टैव ॥ छाया ॥

२ व्याख्यानस्य व्याख्येयविरोधं परिहरति—**वार्तिके इति** ॥ छाया ॥

३ कैयटं दूषयति—**कैयटोक्तेति** ॥ छाया ॥

४ तस्य विशेषापेक्षत्वे आह—**तत्रत्यमिति** ॥ छाया ॥

५ **षष्ठीति** । षष्ठ्यन्तेन निर्दिष्टो योऽर्थस्तदर्थे लाक्षणिकं षष्ठीपदं षष्ठ्यन्तेन विपरिणम्यत इत्यर्थः ॥

६ प्रकृतत्वादाह—**शिवादीति** ॥ छाया ॥

७ **चानशीति** । बुध्यमान इत्यादावित्यर्थः ॥ अस्य स्वतन्त्रत्वेन लसार्वधातुकत्वाभावादिति भावः ॥ छाया ॥ **'चानशि श्यनो नित्त्वं'** इति क. पाठः ॥

८ **आद्युदात्तत्वायेति** । समुदितस्येति भावः ॥ छाया ॥

त्यर्थः ॥ 'अन्यत्र विकरणेभ्यः' इत्यपि नित्त्वसामर्थ्याद्बाध्यत इति भावः ॥ किंचे वावृतु इत्यस्यानेकाचो दिवादौ सत्त्वेन तत्रापि नित्त्वपित्त्वयोर्विशेषः ॥ कैयटस्वरसस्तु तस्य धातोर्दिवादावभाव एवेति बोध्यम् ॥ इष्टसिद्ध्ये इति । वैयर्थ्यान्नियमत्वं वा ज्ञापकत्वं वेत्यत्र विनिगमकाभावान्नित्त्वसामर्थ्यादन्यत्र विकरणेभ्य इत्युपदेशबाधककल्पनाऽपेक्षया स्थानिवदित्यतिदेशबाधककल्पनस्यैवौचित्याच्चेति भावः ॥ सामान्येनेति । न विकरणविषयमेव, नापि पित्त्वविषयमेवेत्यर्थः ॥ भाष्ये-श्यन्नादीनिति । उत्सर्गसजातीयानुबन्धवदपवादानामुपलक्षणम् ॥

( स्थानिवत्त्वप्राप्तदूषणनिराकरणम् )

( ३२१ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ तस्य दोषस्तयादेश उभयप्रतिषेधः ॥ * ॥

( भाष्यम् )

तस्यैतस्य लक्षणस्य दोषः-तयादेश उभयप्रतिषेधो वक्तव्यः । उभये देवमनुष्याः । तयपो ग्रहणेन ग्रहणाद् जसि विभाषा प्राप्नोति ॥

( आक्षेपनिराकरणसिद्धान्तिभाष्यम् )

नैष दोषः । अयच् प्रत्ययान्तरम् ॥

( आक्षेपसाधकभाष्यम् )

यदि प्रत्ययान्तरम्, उभयीति ईकारो न प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

मा भूदेवम् । मात्रच् - इत्येवं भविष्यति ॥

कथम् ?

मात्रजिति नेदं प्रत्ययग्रहणम् ॥

किं तर्हि ?

प्रत्याहारग्रहणम् ॥

क्व सन्निविष्टानां प्रत्याहारः ?

मात्रशब्दात्प्रभृति आ अयचश्चकारात् ॥

( आक्षेपसाधकभाष्यम् )

यदि प्रत्याहारग्रहणम्, 'कति तिष्ठन्ति' अत्रापि प्राप्नोति ॥

( प्रदीपः ) कति तिष्ठन्तीति । परिहारान्तरसद्भावात् न षट्स्वस्रादिभ्य इति प्रतिषेधो नोक्तः ॥

( आक्षेपबाधकभाष्यम् )

अत इति वर्तते ॥

( आक्षेपसाधकभाष्यम् )

एवमपि 'तैलमात्रा-घृतमात्रा' अत्रापि प्राप्नोति ॥

( प्रदीपः ) तैलमात्रेति । चकारस्य प्रत्याहारार्थस्योपादानात्तस्याऽविशेषत्वान्मात्रशब्दमात्रग्रहणप्रसङ्गः ॥

( आक्षेपबाधकभाष्यम् )

सदृशस्याप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम् ॥

( प्रदीपः ) सदृशस्येति । प्रत्ययानुकरणं मात्रशब्द इति प्रातिपदिकस्याग्रहणमित्यर्थः ॥

( उद्योतः ) प्रत्ययानुकरणमिति । टिड्ढाणञ्सूत्रे साहचर्यादिति भावः ॥

( ३२२ आक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ जात्याख्यायां वचनादेशे स्थानिवद्भावप्रतिषेधः ॥ * ॥

( भाष्यम् )

जात्याख्यायां वचनादेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः । व्रीहिभ्य आगत इत्यत्र "घेर्ङिति" इति गुणः प्राप्नोति ॥

( प्रदीपः ) जात्याख्यायामिति । एकस्मिन् यत् प्राप्तमेकवचनं तस्य प्रसङ्गे बहुवचनमादेश इति कल्पनाऽऽश्रयेण दोषोपन्यासः ॥

( उद्योतः ) ननु 'एकस्मिन् बहुवचनं' इत्युक्त्या षष्ठ्यभावात्कथमादेशत्वमत आह—एकस्मिन्निति ॥

( आक्षेपनिरासभाष्यम् )

नैष दोषः । उक्तमेतत्- * अर्थातिदेशात्सिद्धम् * इति ॥

( उद्योतः ) भाष्ये—अर्थातीति । बहुवचनशब्दो न प्रत्ययपरः, किं त्वर्थपर इति भावः ॥

---

१ नन्वन्यत्र विकरणेभ्य इत्युक्तेः कथमिदमत आह—अन्यत्रेति ॥ छाया ॥

२ स्वयं दोषान्तरमाह— किंचेति ॥ तर्हीदं कैयटेन कुतो नोक्तमत आह— कैयटेति ॥ छाया ॥

३ अत एव निःसंदिग्धं ज्ञापकं प्राक्कैयटोक्तमेवाह—भाष्ये श्यन्नादीनितीति ॥ छाया ॥

४ नन्वेवं ततो वावृत्यमाना सा रामशालां न्यविक्षत इति भट्टिप्रयोगानुपपत्तिरिति चेन्न । तत्र वाशब्दस्येवार्थकतया कामयमानेव न तु तथा, किं तु छलनार्थमागतेत्यर्थात् ॥ श० कौ० ॥

५ दोष इति । अतिव्याप्तिरित्यर्थः ॥ जातावेकवचनम् । तानेवाह—तयादेश इत्यादिना ॥ छाया ॥

६ एवं—तयबन्ततया ॥ छाया ॥

७ 'प्रतिषेधोऽत्र नोक्तः' इति ग. पाठः ॥

८ 'विशेषकत्वात्' इति ग. पाठः ॥

९ मात्रं—कार्त्स्न्ये ॥ छाया ॥

१० एकशब्दस्त्वर्थपरः स्थित एवेत्याह—बह्विति ॥ छाया ॥

( ३२३ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ ङ्याब्ग्रहणेऽदीर्घः ॥ * ॥

( भाष्यम् )

**ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति वक्तव्यम् ॥**

**किंप्रयोजनम् ?**

**निष्कौशाम्बिः । अतिखट्वः । ङ्याब्ग्रहणेन ग्रहणात्सुलोपो मा भूदिति ॥**

**( उद्योतः )** ङ्याब्ग्रहणे **अदीर्घ इति**–भाष्ये । नन्[1] गङ्गाया इः–गङ्गिः, गङ्गीयतेः क्विपि–गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात् । **न च** तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु सुलोपश्चास्तु इति **वाच्यम् ।** आकारेकारप्रश्लेषमादायैतत्[2]प्रत्याख्यानपरभाष्यविरोधात् । सूत्रमतेऽपि नात्र लोपः, प्रत्यासत्त्या ङ्याप्पदोपस्थित-ईकाराकारयोरेव दीर्घग्रहणेन ग्रहणादिति चेन्न । तेषा[3]मनभिधानात् । **न चेदं** विशेषणं व्यर्थम्, 'खट्वा' इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाभावादिति **वाच्यम् ।** न[4] **स्थानिवदित्यस्य** स्थानिकार्यं न लभते–इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घेऽप्याप्त्वप्रयुक्तकार्याभावशङ्कावारणार्थं तत् ॥ 'ह्रस्वः' इति नोक्तम्, चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि टापो लुक्यपि प्रत्यय[5]लक्षणेन हल्ङ्यादिलोपापत्तेः ॥ मम तु लुकोऽपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति दिक् ॥ [6]**अतिखट्व इति ।** न चात्र ह्रस्व आकारस्येति तद्गतमात्वमल्विधिरिति वाच्यम् । [7]**गोस्त्रियो**-रित्यस्य स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्तस्य ह्रस्व इत्यर्थः । **अचश्चेति** तु नोपतिष्ठते, अनियमाप्रसक्तेः । स्त्रीप्रत्ययत्वं च टाङीत्यादिविशिष्टनिष्ठमिति न दोषः । सू[8]त्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव **गोटाङ्ग्रहणं कर्तव्य**मिति वार्तिककृतोक्तम् । स्वरितत्वबलात् **स्त्रिया**मिति प्रकृत्य ये विहितास्तेषां ग्रहणमिति भाष्यकृतोक्तम् । विधानं चानुबन्धविशिष्टस्यैवेति स्पष्टमेवेति दिक् ॥

( आक्षेपबाधकभाष्यम् )

**ननु च दीर्घादित्युच्यते ॥**

( आक्षेपसाधकलाघवभाष्यम् )

**तन्न वक्तव्यं भवति ॥**

( तटस्थाक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ?**

( तटस्थाक्षेपसमाधानभाष्यम् )

**स्था[10]निवत्त्वप्रतिषेध एव ज्यायान् । इदमपि सिद्धं भवति—अतिखट्वाय, अतिमालाय । "याडापः" इति याड् न भवति ॥**

**( उद्योतः ) अतिखट्वायेति ।** न[11] च आबन्तादङ्गात्परस्य याडिति तदर्थः, उपसर्जनस्त्रीप्रत्यये च तदादिनियमात् नैतदङ्गमाबन्तमिति स्थानिवत्त्वेऽपि न याट्प्रवृत्तिरिति **वाच्यम् ।** प्रत्यय[12]ग्रहणपरिभाषयाऽऽबन्तग्रहणे तेन चाङ्गविशेषणे 'आबन्तान्तं यदङ्गं' इत्यर्थान्न दोषः । अत एवार्धखट्वायामित्यादौ याट्सिद्धिरिति भावः ॥

( आक्षेपभाष्यम् )

**अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते[13] पिच्चासौ भूतपूर्व इति कृत्वा "याडापः" इति याट् कस्मान्न भवति ?**

**( प्रदीपः ) भूतपूर्व इति ।** अनुबन्धकार्ये सर्वत्र भूतपूर्वगत्याश्रयणात् । 'आ' इति च रूपसद्भावात् ॥

( समाधानभाष्यम् )

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

**( प्रदीपः ) लक्षणेति ।** अत्र चान्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः ॥

**( उद्योतः )** नन्वेवम[14]पि दीर्घे कृते स्थानिवद्भावेनाप्त्वं स्यादेव, चेत्यर्थः ॥ छाया ॥

---

१ **अदीर्घ** इत्यंशे शङ्कते—**नन्विति** ॥ इः-कामः ॥ छाया ॥

२ **एतदिति** । वार्तिकेत्यर्थः ॥ ननु भाष्यमते तथा सत्त्वेऽपि सूत्रमते इष्टापत्तिरेवात आह—**सूत्रेति** ॥ **अत्र**-गङ्गिरित्यादौ ॥ प्रत्याख्यानानुरोधेनाह—**प्रत्येति** ॥ अन्यथा तयोः फलभेदापत्तिः स्पष्टैवेति भावः ॥ छाया ॥

३ **तेषामिति** । एवं च वार्तिकमतेऽपि न दोष इति भावः ॥ इदं–अदीर्घ इति ॥ छाया ॥

४ सिद्धस्य गतिश्चिन्तनीयेति न्यायेनाह—**न स्थानीति** ॥ यत इत्यादिः ॥ **येनेति** । परादिवत्त्वेनापीत्यर्थः ॥ तस्येष्टत्वादाह—**शङ्केति** ॥ छाया ॥

५ **प्रत्ययेति** । नियामकेनेति भावः । ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदिति वार्तिकार्थः ॥ छाया ॥

६ एतत्प्रतीकादि दिगन्तो ग्रन्थो ज. पुस्तके न ॥

७ **गोस्त्रियोरिति** । यत इत्यादिः ॥ **'प्रत्ययग्रहणे-' 'येन विधिः-'** इति क्रमेण तदन्तविधिद्वयेनालोऽन्त्यपरिभाषया चेत्यर्थः ॥ छाया ॥

८ तत्र हेतुमाह—**सूत्रोपात्तेति** ॥ **हि**-यतः ॥ अत्र वार्तिकसंमतिमाह—**अत एवेति** । तस्य तत्त्वादेवेत्यर्थः ॥ **गोस्त्रियोरि**त्यत्रत्यभाष्यसंमतिमप्याह—**स्वरितत्वेति** । तेन कृत्क्तिन्नादेर्न ग्रहणमिति भावः ॥ **भाष्येति** । **गोटाङ्ग्रहण**मिति वार्तिकप्रत्याख्यानायेति शेषः ॥ नन्वेतावता प्रकृते किमत आह—**विधानं चेति** ॥ छाया ॥

९ टाङिति प्रत्याहारः, टापः प्रभृत्याष्यङो ङकारात् । (र.ना.) ।

१० 'स्थानिवत्प्रतिषेध' इति क. ग. पाठः ॥

११ **न चेति । प्रत्ययग्रहण** इत्यनयाऽतिखट्वस्य नाबन्तत्वम् । यच्चाबन्तं खट्वेति न तदङ्गमिति भावः ॥ छाया ॥

१२ **प्रत्ययेति** । यत इत्यादिः ॥ छाया ॥

१३ **कृत इति** । अतिखट्वायेत्यत्र सुपि चेति दीर्घे स्वत आकारः, पिच्च भूतपूर्व इति आप् भवतीति याडाप इत्यस्य प्राप्तिः ॥

१४ **एवमपि** । उक्तरीत्या प्राप्तस्य लक्षणेति वारणेऽपि ॥ छाया ॥

अयं निषेधस्तु न, दीर्घत्वात् । अत आह—**अत्र चेति** । एवं च स्थानिवद्भावेन तदलाभः, तत्स्थानिन्[1]यसत्त्वादिति भावः ॥

( आक्षेपभाष्यम् )

**ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमिहोपस्थातुम् ॥**

( उद्योतः ) भाष्ये-ननु चेदानीमिति । वार्तिकाकरणे-इत्यर्थः ॥ **सत्यपीति** । निष्कौशाम्बिरित्यादौ ॥

( समाधानभाष्यम् )

**नेत्याह । न तर्हीदानीं क्वचिदपि स्थानिवद्भावः स्यात् ॥**

( तृतीयाक्षेपभाष्यम् )

**त[2]त्तर्हि वक्तव्यम् ॥**

**न वक्तव्यम् ॥**

( समाधानभाष्यवार्तिकम् )

***॥ प्रश्लिष्टनिर्देशात्सिद्धम् ॥***

( भाष्यम् )

**प्रश्लिष्टनिर्देशोऽयम्—ङी ई ईकारान्तात्, आ [3]आप् आकारान्तादिति ॥**

( उद्योतः ) **प्रश्लिष्टनिर्देशादिति** । [4]अतिखट्वायेत्यादौ आकारस्य लाक्षणिकत्वादेव न दोषः । 'ख[5]ट्वायै' इत्यादौ तु न दोषो यतो लक्षणप्रवृत्तिं विना यद्रूपासंभवस्तदेव लाक्षणिकं [6]परिभाषया निषेधविषयः । न[7] चेदं तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादित्याहुः ॥ [8]अयं च प्रश्लेषो **'याडापः' 'आङि चापः' 'औङ आपः' 'ङेराम्नद्याम्' 'हल्ङ्याब्'** इत्येतेषु ॥ [9]**ह्रस्वनद्याप** इत्य[10]त्र प्रश्लेषे न मानमिति दिक्[11] ॥ ननु भाष्यमते सूत्रमते च 'अतिखट्वस्य अः-अतिखट्वा' इत्यत्र सुलोपो भवति । वार्तिकमते तु न, अतिखट्वे आबन्तत्वस्य विच्छेदा[12]दग्रे प्ररोहासंभवादिति चेन्न । अनभिधानेनैषां प्रयोगाणामभावात् । यद्वा[13] स्थानिवद्भावस्य कार्यार्थत्वेनातिखट्वशब्दे आकारप्रश्लेषे फलाभावात्तदप्रवृत्तौ स्थानिन्यापत्वबुद्धेरभावात्तदादेशे तदारोहः सूत्रमते भाष्यमते च दुर्लभः, परम्परया कार्यमादाया[14]र्धस्थानिवत्त्वप्रवृत्तौ मानाभावात् ॥ य[15]त्तु वार्तिकमते लोपाप्राप्त्या भाष्यादिमतेऽपि ईकारादिप्रश्लेषान्तरेण लोपाभाव एव वाच्यः । एकप्रश्लेषेणैवातिखट्वव्यावृत्तौ सिद्धायां दीर्घग्रहणं सूत्रमते, भाष्यमते तत्प्रत्याख्यानाय कृतप्रश्लेषान्तरं च नियमार्थम्-न कदाचिद् रूपान्तरं प्राप्तौ यौ ङ्यापाविति, एवं च न दोष इति ॥ तन्न । मानाभावात् । [16]अतिखट्वायेत्येव वार्तिकप्रयोजनं प्रदर्श्याकारप्रश्लेषेण तत्प्र[17]त्याख्यातम् ॥

( ३२४ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ [18]आहिभुवोरीट्प्रतिषेधः ॥ * ॥**

( भाष्यम् )

**आहिभुवोरीट्प्रतिषेधो वक्तव्यः । आत्थ, अभूत् । अस्ति[19]ब्रूग्रहणे ग्रहणादीट् प्राप्नोति[20] ॥**

---

१ **असत्त्वादिति** । तत्र तत्प्रवृत्तौ मानाभावात्फलाभावाच्चेति भावः ॥

२ **तदिति** । ङ्याब्ग्रहणेऽदीर्घ इत्येतत् ॥

३ 'आप' इति अ. आ. पाठः ॥

४ भाष्यतात्पर्यमाह—**अतीति** । वर्णग्रहणेऽपि तत्प्रवृत्तेरोदित्यादौ भाष्ये स्पष्टत्वात् ॥ छाया ॥

५ नन्वेवं खट्वायै इत्यादावपि याट् न स्यात् सूत्रं तु निशायै इत्यादौ चरितार्थमत आह—**खट्वायै इति** ॥ **आहुः**-भाष्यतत्त्वविदः ॥ छाया ॥

६ 'परिभाषाया निषेध' इति मुद्रितपुस्तकपाठः । स प्रामादिकः, लक्षणप्रतिपदोक्तपरिभाषाया निषेधकत्वासम्भवात् । किन्तु परिभाषया तदेव लाक्षणिकं ङ्याब्ग्रहणेऽदीर्घ इति निषेधविषय इत्यर्थः ॥

७ 'न चेद तथा' इति ध. प. पाठः ॥

८ यदि प्रकृतसूत्र-**याडाप** इति सूत्रभाष्याभ्यां द्वयोरेव प्रश्लेषो लभ्यते तथापि भाष्यमुपलक्षणमित्याह—**अयं चेति** ॥ छाया ॥

९ ह्रस्वे जातेऽपि ह्रस्वग्रहणेनैव नुट्प्राप्तेरिष्टत्वात्प्रयोजनाभाव इत्यभिमानः ॥ छाया ॥

१० 'त्यत्र तु प्रश्ले' इति ध. प. पाठः ॥

११ किं च **पदाङ्गे**ति वार्तिकादङ्गस्य विशेष्यत्वमेवोचितम् । किं च तस्य विशेषणत्वे वार्तिकस्य तत्प्रत्याख्यानार्थाकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव स्यात् । तस्मादेतदभिप्रायेणैव वार्तिकादि तत्प्रत्याख्यानान्तप्रकृतभाष्यं तत्र तथैवेष्टमित्येतत्परिहारायोपायान्तरकथनमिति बोध्यम् । तदाह—**दिगिति** ॥ छाया ॥

१२ **विच्छेदादिति** । प्रागुक्तरीत्येति भावः ॥ **अनभीति** । तथा च यत्रोदाहरणे सूत्रभाष्यवार्तिकानां फलभेदस्तेषां सर्वेषामनभिधानमिति तात्पर्यम् ॥ छाया ॥

१३ इदं फलभेदमभ्युपेत्य, वस्तुतः स एव नेत्याह—**यद्वेति** ॥ छाया ॥

१४ **आद्यस्थानिवत्त्वं**-ह्रस्वाकारस्य स्थानिवद्भावेनाप्त्वम् ॥

१५ कौस्तुभाद्युक्तिं खण्डयति—**यत्त्विति** ॥ भाष्यानुक्तत्वमप्याह—**किंचेति** ॥ **भाष्ये** इत्युभयान्वयि ॥ छाया ॥

१६ 'किंच-अतिखट्वायेत्येव' इति छायानुसन्धानेन मुद्रितपाठः । बहुषु पुस्तकेषु तादृशपाठस्यानुपलम्भः ॥

१७ 'तत्प्रत्याख्यातं भाष्ये' इति छायानुकूलः पाठो मुद्रितपुस्तकेषु । अयमपि प्रामाणिकपुस्तकेषु इदानीं नोपलभ्यते ॥

१८ आहिभुवोरीट्प्रतिबन्धार्थं स्थानिवत्त्वप्रतिषेधो वक्तव्य इति वार्तिकाभिप्रायः ॥

१९ 'ब्रूग्रहणेन ग्रह' इति क. ग. पाठः ॥

२० एवं च वेदाङ्गप्रकाशे—स्वतन्त्रे भूधातावनेन वार्तिकेनेटं वारयन्तो दयानन्दस्वामिनस्तु स्वयमधिगतभाष्यार्था एव । **अस्तिग्रहणेने**ति भाष्येणादादिकास्तेरादेशभूत एव भूधातौ प्राप्तिवारणस्य प्रतीतेः ॥ यदि च सिचः परस्वादीटि प्राप्तेऽनेन निषेध इत्युच्यते तदा ह्यगादस्थादपादित्यादावपि सिचः परत्वात्प्राप्तस्येटो वारणाय यत्नान्तरस्य कर्तव्यत्वे तेनैव यत्नेनाभूदित्यत्रापि वारणे वार्तिकोपन्यासस्य वैयर्थ्यापत्तेरिति प्राचीनानुयायिनो विकृतबुद्धयः ॥ दाधि० ॥

( उद्द्योतः ) भाष्ये—आहिभुवोरिति । 'ब्रुव ईट्' 'अस्तिसिचोऽपृक्ते' इत्याभ्यां प्राप्तः ॥

( आह्यंशे आक्षेपनिराकरणभाष्यम् )

आहेस्तावन्न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—नाहेरीड् भवतीति । यदयम्—"आहस्थः" इति झलादिप्रकरणे थत्वं शास्ति ॥

( ज्ञापकबाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥

किम् ?

भूतपूर्वगतिर्यथा विज्ञायेत । झलादिर्यो भूतपूर्व इति ॥

( प्रदीपः ) झलादिरिति । णलादिषु थलेव भूतपूर्वो झलादिरिति भावः ॥

( ज्ञापकसमाधानभाष्यम् )

यद्येवं थवचनमनर्थकं स्यात् । आथिमेवायमुच्चारयेत्—"ब्रुवः पञ्चानामादित आथो ब्रुवः" इति ॥

( प्रदीपः ) आथिमिति । तिबादयो हि सर्वे झलादय इति णलादयो भूतपूर्वा झलादय इति भावः ॥

( भ्वंशेऽप्याक्षेपनिराकरणभाष्यम् )

भवतेश्चापि न वक्तव्यः । "अस्तिसिचोऽपृक्ते" इति द्विसकारको निर्देशः । अस्तेः सकारान्तादिति ॥

( उद्द्योतः ) द्विसकारको निर्देश इति । अस्तिस्सिच इति सूत्रपाठ इति भावः ॥ प्रकारान्तरे तु आदेशैरपहारात् सद्वयोच्चारणाभावेन 'निर्देशः' इति भाष्यास्वारस्यम् । अत एव वार्तिककृता सिज्लुकः स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्धः सकारस्य सिज्विशेषणत्वमित्याशयेन । तद्विशेषणं सामर्थ्यात् श्रूयमाणसान्तपरमिति प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेऽपि न दोषः । भाष्यकृता तु मध्यमणिन्यायेनोभयसंबन्धमङ्गीकृत्य भुवः स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम् ॥

( ३२५ आक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ वध्यादेशे वृद्धितत्त्वप्रतिषेधः ॥ * ॥

( भाष्यम् )

वध्यादेशे वृद्धितत्त्वयोः प्रतिषेधो वक्तव्यः । वधकं पुष्करमिति । स्थानिवद्भावाद् वृद्धितत्त्वे प्राप्नुतः ॥

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः । उक्तमेतत्—'नायं ण्वुल्, किंतु अन्योऽयमकशब्दः किदौणादिको रुचक इति यथा' ॥

( उद्द्योतः ) नायं ण्वुलिति । यद्यपि वृद्धिर्वधस्यादन्तत्वेनापि वारयितुं शक्या, तथापि तत्त्वांशप्रत्याख्यानायेदमावश्यकमिति भावः ॥

( ३२६ आक्षेपवार्तिकम् ॥ ६ ॥ )

॥ * ॥ इड्विधिश्च ॥ * ॥

( भाष्यम् )

इड्विधेयः । आवधिषीष्ट । "एकाच उपदेशेऽनुदात्तात्" इति प्रतिषेधः प्राप्नोति ॥

( उद्द्योतः ) इड्विधिश्चेति । यथेड्विधिः सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः । इड्विधेय इत्यस्य तन्निषेधे

---

१ अनतिप्रसङ्गायाह—णलादिष्विति ॥ छाया ॥

२ अस्तीति । अस्तिसिचोऽपृक्त इति सूत्रे द्विसकारको निर्देशः क्रियते—इति तदर्थः । अत्र विद्यमानास्सिच इत्यर्थकरणाय तादृशनिर्देशस्यावश्यकत्वेन तेनैवात्रापि सिद्धिरिति भवतेश्चापीट्प्रतिषेधो न वक्तव्य इति भाष्याशयः ॥

३ नन्वस्तीति सात्पूर्वमग्रे वा सपाठे विशिष्टस्याधातुकत्वात् श्तिव् न स्यात्, भिन्नपदत्वेऽप्येवम् । पदान्तर्गतस्य तस्य सिजविशेषणत्वात्तत्प्रयुक्तदोषापत्तिश्चात आह—अस्तिस्सिच इति ॥ छाया ॥

४ ननु सिच इत्यग्रे स इति लुप्तविभक्तिकमुभयविशेषणम् । तस्य च संयोगान्तलोप इति दण्डिकृष्णकौस्तुभरत्नाद्युक्तमेव कुतो नोक्तमत आह—प्रकारान्तरे त्विति ॥ छाया ॥

दाधिमथास्तु—नागेशदर्शितसूत्रपाठे वेदसंहितायामिव गुरुसंप्रदायावगते तत्र सकारद्वये द्वित्वादिजन्यत्वासंभवेन सकारे विशेषणतामन्तरेण विवक्षाया अप्रतीतेः द्विसकारको निर्देश इति भाष्यमेव व्यर्थं स्यात् । तथाहि—द्विसकारको निर्देश इत्यत्र किं कृत इत्यध्याहार्यम्, उत करणीय इति । नाद्यः, तथा सति समाधानस्य पूर्वमेव ज्ञातत्वेनाक्षेपवार्तिकोत्थानानुपपत्तिः । नान्त्यः । तथा सति पाणिनिकृतौ न्यूनतापत्तिः ॥ तस्मात्—न श्रूयमाणद्विसकारक इत्यर्थः । किं तु व्याख्यानगम्यद्विसकारक इत्येवार्थः ॥ तथा च व्याख्यानात् प्रागनवगतत्वेन शङ्काया व्याख्यानोत्तरमवगतत्वेन समाधानस्य चोपपत्तिः ॥ एवं च संयोगान्तलोपोत्तरं रोरुत्वसाधकपक्षस्य नासमञ्जसत्वमिति वदन्ति । तदेतद्दाधिमथोक्तमसमञ्जसम् । 'सिचस्' शब्दानन्तरं सकारविवक्षायां सकारप्रश्लेषः स्यान्न निर्देशः । निर्देशपदस्वारस्यात् सद्वयस्यापि श्रवणमित्यर्थः सम्पद्यते । तथा चोद्द्योतप्रदर्शितः 'अस्तिस्सिच' इत्येवन्यासो भाष्यसम्मत इत्येव युक्तम् ॥

५ इदं द्रढयति—अत एवेति ॥ अस्यार्थमाह—सकारस्येति ॥ ननु प्रत्ययलक्षणसूत्रस्य नियमार्थत्वे निर्वाहेऽपि वार्तिकमते दोष एवात आह—तदिति ॥ एवं च सिजंशे तस्यावश्यकत्वम् । अत एवाह—भाष्येति ॥ छाया ॥

६ वध्यादेशे कृते वृद्धितत्त्वयोः प्राप्तौ स्थानिवत्त्वप्रतिषेधो वक्तव्य इति वार्तिकार्थः ॥

७ निषेधप्रकरणे 'इड्विधिश्च' इत्ययुक्तमत आह—यथेतीति ॥ छाया ॥

स्थानिवत्त्वप्रतिषेधद्वारेति शेषः ॥ **आवधिषीष्टेति ।** आङो यमहन इत्यात्मनेपदम् ॥ **प्रतिषेधः प्राप्नोतीति ।** तत्रे वधेः स्थानिवत्त्वेनाङ्गतया निषेधः प्राप्त इण्निषेधरूपे कार्ये स्थानिवत्त्वप्रतिषेधेनाङ्गत्वाभावान्नेत्यर्थः ॥ वधेरपि सूत्रे स्थान्यनुरूपानुदात्तस्यैवोच्चारणेन अनुदात्तत्वं बोध्यम् ॥

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ॥**

( उद्द्योतः ) **प्रकृतिस्वरस्य**—प्रकृतितः स्थान्यनुरूपतया प्राप्तस्यानुदात्तत्वस्य ॥

( प्रत्याक्षेपभाष्यम् )

**एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधते, एवं प्रत्ययस्वरमपि बाधेत—आवधिषीष्ट-इति ॥**

( प्रदीपः ) **आवधिषीष्टेति ।** यदा यच्छन्दप्रयोगः—'यदावधिषीष्ट' इति **तिङ्ङतिङ** इति निघातः प्राप्तो **निपातैर्यद्यदी**ति प्रतिषिद्धः, तदैतदुदाहरणम् । क्वचित्तु 'यदावधिषीष्ट' इति पाठः ॥

( उद्द्योतः ) **प्रत्ययस्वरं**—तत्प्रयुक्तनिघातम्[४] ॥ नन्वत्रोदाहरणे तिङ्ङतिङ इति निघातेन भाव्यमत आह—**यदा यदिति ।** 'यदा' इत्यस्य 'तदैतदुदाहरणं' इत्यनेनान्वयः ॥ मध्ये **भवती**ति तदेत्यपाठः ॥

( आक्षेपपरिहारभाष्यम् )

**नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्ति, अनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये वधिभावे कृते, सति शिष्टत्वात् प्रत्ययस्वरो भविष्यति ॥**

( उद्द्योतः ) भाष्ये—**आर्धधातुकसामान्ये इति ।** 'आर्धधातुके' इतिवल्लिङीत्याद्यपि विषयसप्तम्येवेति भावः ॥ एवं चाद्युदात्तनिपातने उपदेशिवद्भावारम्भगौरवाभावेन उपदेशत्वावच्छेदेनानुदात्तत्वाभावात् स्थानिवद्भावेनाङ्गत्वे सत्यपि निषेधाप्राप्त्या तन्निषेधो न कार्य इति तात्पर्यम् ॥

( ३२७ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ आकारान्तान्नुक्पुक्प्रतिषेधः ॥ * ॥

( भाष्यम् )

**आकारान्तान्नुक्पुकोः प्रतिषेधो वक्तव्यः । विलापयति । भापयते । लीभीग्रहणेन ग्रहणान्नुक्पुकौ प्राप्नुतः ॥**

( उद्द्योतः ) आकारान्तादिति । **विभाषा लीयतेः**—**बिभेतेर्हेतुभये** इत्यात्वम् । **लीलोर्नुग्लुकाविति भियो हेतुभये** इति च नुक्पुकौ ॥

( आक्षेपपरिहारभाष्यवार्तिकम् )

## *॥ लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम् ॥*

( भाष्यम् )

**लीभियोः प्रश्लिष्टनिर्देशोऽयम्—ली ई ईकारान्तस्य, भी ई ईकारान्तस्य चेति ॥**

( उद्द्योतः ) **प्रश्लिष्टनिर्देशादिति ।** यद्यपि **भिय** इत्यत्र प्रश्लेषे एकादेशस्य क्ङिति तिङ्सूत्रभाष्योक्तरीत्या पूर्वधर्मावच्छिन्नोद्देश्यके इयङ्विधौ **अचः परस्मिन्नि**ति स्थानिवत्त्वेनेयङ् दुर्लभः, तथापि सौत्रत्वात्स इति बोध्यम् । 'क्षियो निष्ठायाम्' इति दीर्घविधाविवेति दिक् ॥

---

१ अस्य तात्पर्यार्थमाह—**तत्रेति** ॥ आवधिषीष्टेत्यत्रेत्यर्थः ॥ छाया ॥

२ नन्वङ्गत्वाभाववदनुदात्तत्वाभावोऽपि तच्छब्दः कुतो नोक्तोऽत आह—**वधेरपीति ॥ सूत्रे—हनो वधेति** सूत्रे ॥ छाया ॥

३ 'भवति, तदा तिङ्' इति ग. पाठः ॥

४ **निघातं**—शेषनिघातम् ॥ **भाव्यमिति ।** तथा च नात्र शेषनिघात इति भावः ॥ छाया ॥

५ **भवतीति ।** षीष्टेतीत्यग्रे इति बोध्यम् ॥ छाया ॥

६ तावताऽप्यनिर्वाहादाह—**आर्धेति ॥** इदं च प्रकृतसूत्रवद् **एकाच उपदेशे** इति सूत्रेऽपि भाष्ये उक्तम् ॥ '**वधिभावात्सीयुटि**' इति वार्तिकं तु परसप्तम्याशयेनेत्यन्यत्र स्पष्टम् ॥ **एवं च**—पूर्वमादेशे च ॥ **उपदेशत्वेति ।** स्थान्युपदेशे तत्त्वेऽप्यादेशे उक्तरीत्याऽतत्त्वादित्यर्थः ॥ छाया ॥

७ आकारान्तान्नुक्पुक्प्रतिषेधार्थं स्थानिवत्त्वप्रतिषेधो वक्तव्यः ॥

८ "**नैष दोषः**" इति भाष्ये पाठस्त्रुटितो भवेत् ॥ पूर्वोत्तरसंवादात् ॥ दाधिमथिः ॥ लीभियोरित्यतः प्राक् 'नैष दोषः' इत्यधिकं पठन्ति । तदुपरि चैतट्टीकयन्ति । तदेतत्सर्वं दाधिमथिगुरुप्रसादानां भाष्यानवबोधमूलम् । यत्र परत्वपूर्वत्वादिविचारेण दोषपरिहारस्तत्र 'नैष दोषः' इत्युच्यते । यत्र चान्योपकारार्थं कृतेन वचनेनात्र दोषपरिहारस्तत्रापि युज्यत एतद्वक्तुम् । परं यत्रापूर्वेण व्याख्यानविशेषेण दोषपरिहारस्तत्र नैतदुच्यत इति व्यवहारः । अत एव 'आहिभुवोरीट्प्रतिषेधः' इति वार्तिकव्याख्याने 'आहेस्तावन्न वक्तव्यः' इत्येवोक्तम्, 'नैष दोषः' इति नोक्तम् ॥

९ ननु पूर्वत्वेन दृष्टस्य नात्र विधिरत आह—**कृदतिङिति ॥** तमेवाह—**पूर्वेति ॥** तत्र हि अतिङ्पदाभावे पचतीत्यादौ तुकमापाद्य धातोरित्यनुवृत्त्या संखण्ड्य चिकीर्षतीत्यत्रापाद्य शपा व्यवधानमुक्त्वा **एकादेशः पूर्वविधौ स्थानिवदिति व्यवधानमेवे**त्युक्तं भाष्ये ॥ तत्त्वादियङ्मात्रांशे दृष्टान्तमाह—**क्षिय इति ॥** अन्यथा क्षिधातोर्हस्वान्तत्वेन घिसंज्ञायां गुणे क्षेरिति रूपं प्राप्नोति ॥ छाया ॥ किंच धातुत्वे प्रातिपदिकत्वाप्राप्तौ प्रकृतिवदित्यनाश्रयणमिति **क्षियो दीर्घा**दिति सूत्रभाष्ये स्पष्टम् ॥

१० सूत्रान्तराभ्रमायाह—**निष्ठायामिति ।** सूत्रान्तरमिदम् । **अण्यदर्थे** इति शेषः ॥ नत्वविधौ निर्देशादेव दीर्घान्तग्रहणमत आह—**दीर्घेति ॥** वस्तुतस्तु उभयत्रापि चिक्षियतुरित्यादावजादौ यद्रूपं तस्यानुकरणमिति नत्वविधौ भाष्य एव स्फुटम् । अत एव तत्र दीर्घादिति, दीर्घविधायकवृत्तावपि क्षिय इति चोक्तमिति बोध्यम् । तदाह—**दिगिति ॥** छाया ॥

( ३२८ आक्षेपवार्तिकम् ॥ ८ ॥ )

॥ * ॥ लोडादेशे शाभावजभावधित्वहिलोपैत्त्वप्रतिषेधः ॥ * ॥

( भाष्यम् )

लोडादेशे एषां प्रतिषेधो वक्तव्यः ॥ शिष्टात् । हतात् । भिन्तात् । कुरुतात् । स्तात् । लोडादेशे कृते शाभावो जभावो धित्वं हिलोप एत्त्वमित्येते विधयः प्राप्नुवन्ति ॥

( उद्द्योतः ) शाभावेत्यादि । शा हौ, हन्तेर्जः, हुझल्भ्यो हेर्धिः, उतश्च प्रत्ययाद्, घ्वसोरेद्धावित्येतैः[2] ॥

( आक्षेपपरिहारभाष्यम् )

नैष दोषः । इदमिह संप्रधार्यम्—लोडादेशः क्रियताम्, एते विधय इति । किमत्र कर्तव्यम्?

परत्वाल्लोडादेशः ॥

( उद्द्योतः ) परत्वादिति । युगपत्प्रवृत्तौ[3] स्वस्वनिमित्तानन्तर्याभावरूपासंभवस्य सत्त्वात् । तादृशासंभव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी । स्थानिवद्भावस्तु[4] कार्यप्रवृत्त्युत्तरम्, न प्रवृत्तिकाले इति युगपदसंभवः स्पष्ट एवेति भावः ॥ एवमग्रेऽपि ॥

( आक्षेपभाष्यम् )

अथेदानीं लोडादेशे कृते पुनःप्रसङ्गविज्ञानात् कस्मादेते विधयो न भवन्ति?

( आक्षेपबाधकभाष्यम् )

"सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति कृत्वा ॥

( ३२९ आक्षेपवार्तिकम् ॥ ९ ॥ )

॥ * ॥ त्रयादेशे[5] स्रन्तप्रतिषेधः ॥ * ॥

( भाष्यम् )

त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः । तिसृणाम् । तिसृभावे कृते "त्रेस्त्रयः" इति त्रयादेशः प्राप्नोति ॥

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः । इदमिह संप्रधार्यम्-तिसृभावः क्रियताम्, त्रयादेश इति । किमत्र कर्तव्यम्?

परत्वात्तिसृभावः ॥

( उद्द्योतः ) परत्वात्तिसृभाव इति । न च लिङ्गविशेषविभक्तिसंज्ञापेक्षतिस्रपेक्षया[6] प्रत्ययविशेषापेक्षस्याप्यन्तरङ्गत्वात्त्रयादेशापत्तिः । किंच स्वरूपेणोपादाने विशेषापेक्षत्वकृतबहिरङ्गत्वं नेत्यर्थस्य पादःपदिति सूत्रे भाष्ये ध्वनितत्वेन सर्वथा त्रयादेशस्यान्तरङ्गत्वमिति वाच्यम् । अर्थसंज्ञाकृतबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणात् । एतेन चतस्र इत्यपि व्याख्यातमिति दिक् ॥

( आक्षेपभाष्यम् )

अथेदानीं तिसृभावे कृते पुनःप्रसङ्गविज्ञानात् त्रयादेशः कस्मान्न भवति?

( समाधानभाष्यम् )

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ॥

( ३३० आक्षेपवार्तिकम् ॥ १० ॥ )

॥ * ॥ आम्विधौ[8] च ॥ * ॥

( भाष्यम् )

आम्विधौ च स्रन्तस्य प्रतिषेधो वक्तव्यः । चतस्रस्तिष्ठन्ति । चतसृभावे कृते "चतुरनडुहोरामुदात्तः" इत्याम् प्राप्नोति ॥

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः । इदमिह संप्रधार्यम्—चतसृभावः क्रियताम्, "चतुरनडुहोरामुदात्तः" इत्यामिति । किमत्र कर्तव्यम्?

परत्वाच्चतसृभावः ॥

( आक्षेपभाष्यम् )

अथेदानीं चतसृभावे कृते पुनःप्रसङ्गविज्ञानाद् आम् कस्मान्न भवति?

( समाधानभाष्यम् )

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ॥

---

१ शाभावजभावधित्वहिलोपैत्त्वकार्याणां प्रतिषेधसिद्ध्यर्थं लोडादेशे स्थानिवद्भावप्रतिषेधो वक्तव्य इति वार्तिकार्थः ॥

२ एतैः–प्राप्तानामिति शेषः ॥ छाया ॥

३ प्राचां ग्रन्थासंगतिं ध्वनयन्नाह—युगपदिति ॥ तादृशेति । द्वयोः कार्ययोर्यौगपद्येनासंभव एवेत्यर्थः ॥ एवेन एकस्य द्विकार्ययोगत्वव्यवच्छेदः ॥

४ ननु तातङादेः स्थानिवत्त्वेनास्त्येव तत्तदानन्तर्यमत आह—स्थानीति ॥ स्पष्टं चेदं परिभाषेन्दुशेखरे [सकृद्गतिन्यायव्याख्यायाम्] ॥ छाया ॥

५ त्रयादेशे प्राप्ते तत्प्रतिबन्धार्थं स्रन्तस्य स्थानिवद्भावप्रतिषेधो वक्तव्य इति वार्तिकार्थः ॥

६ पेक्षेति । तदुभयापेक्षेत्यर्थः ॥ परनिमित्तकत्वं तूभयोस्तुल्यमिति भावः ॥ विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमित्यस्य खण्डितत्वादाह—प्रत्ययेति ॥ युक्त्यन्तरमाह—किं चेति ॥ सूत्रे इति । तत्र निर्दिश्येति परिभाषाफलकथनावसरेऽरुदितामित्यादौ तत्त्वखण्डनायेद्तामाद्योर्विचारे परत्वादिडित्युक्त्वाऽन्तरङ्गास्तांततामि इत्युक्तम् ॥ छाया ॥

७ कृतेति । उभयकृतेत्यर्थः ॥ अत एव न तिसृचतसृ इति निषेधः कृति तुग्ग्रहणं चरितार्थमित्यन्यत्र स्पष्टम् । तदाह—दिगिति ॥ छाया ॥

८ आम्विधिप्रतिबन्धार्थं स्रन्तस्य स्थानिवद्भावप्रतिषेधः ॥ उदाहरणे तिष्ठन्तिपदोपादानं प्रथमाबहुवचनप्रसिद्ध्यर्थम् ॥

( ३३१ आक्षेपवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ [1]स्वरे च वस्वादेशे ॥ * ॥**

( भाष्यम् )

**स्वरे च वस्वादेशे प्रतिषेधो वक्तव्यः । विदुषः पश्य । "शतुरनुमो नद्यजादी" 'अन्तोदात्तात्' इत्येष स्वरः प्राप्नोति ॥**

( उद्द्योतः ) **विदुष** इत्यत्र विदेः शतुर्वसुरिति शत्रादेशो वसुः ॥ **शतुरनुम इत्यादि** । अनुम्यः शता तदन्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्तेत्यर्थः ॥

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । 'अनुमः' इति [2]प्रतिषेधो भविष्यति ॥**

( अनुपपत्तिभाष्यम् )

**अनुम इत्युच्यते, न चात्र नुमं पश्यामः ॥**

( अनुपपत्तिपरिहारभाष्यम् )

**अनुम इति नेदमागमग्रहणम् ॥**

**किं तर्हि ?**

**प्रत्याहारग्रहणम् ॥**

**क सन्निविष्टानां प्रत्याहारः ?**

**उकारात्प्रभृत्या नुमो [3]मकारात् ॥**

( प्रदीपः ) **उकारात् प्रभृतीति । तनादिकृञ्भ्य उ**रित्यतः । तत्र च वसुरन्तर्भूतः ॥

( अनिष्टापत्तिभाष्यम् )

**यदि प्रत्याहारग्रहणं 'लुनता - पुनता' अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **यदीति** । श्नाप्रत्ययस्य प्रत्याहारेऽन्तर्भावात् ॥

( उद्द्योतः ) (भाष्ये) **यदि प्रत्याहारेति** । उम्रहितशत्रन्तेत्यर्थ इत्यभिमानः ॥

( अनिष्टापत्तिवारणभाष्यम् )

**अनुम्ग्रहणेन न शत्रन्तं विशेष्यते ॥**

**किं तर्हि ?**

**शतैव विशेष्यते—शता यो[4]ऽनुम्क इति ॥**

**अवश्यं चैतदेवं विज्ञेयम् । आगमग्रहणे हि सतीह प्रसज्येत—मुञ्चता, मुञ्चतः-इति ॥**

( प्रदीपः ) **शता य इति** । न चात्र श्ना शतुः कृत इत्यनुमेव शता ॥ **मुञ्चतेति** । शत्रन्तस्य सनुम्कत्वादिति भावः ॥ तस्मादागमग्रहणेऽपि शतैव विशेषणीय इति प्रत्याहारग्रहणेऽपि स एव विशेष्यत इत्यदोषः ॥

( उद्द्योतः ) ( भाष्ये ) **अनुम्क इति** । वसो[5]रपि व्यपदेशिवद्भावेनोम्वत्त्वम् ॥ **आगमग्रहणे हीति** । हिरप्यर्थे । तद्ग्रहणेऽपीत्यर्थः ॥ कैयटे—**अनुमेव शतेति** । यद्यपि शताऽपि प्रत्याहारान्तर्गतः, तथापि [6]सामर्थ्यात्तद्भिन्नस्यैव प्रत्याहारान्तर्गतस्य ग्रहणमिति भावः ॥ [7]व्यापकत्वात्प्राथम्याच्च **तनादी**त्युकारेण प्रत्याहार इति तात्पर्यम् ॥

( ३३२ आक्षेपवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ गोः [8]पूर्वणित्त्वात्वस्वरेषु ॥ * ॥**

( भाष्यम् )

**गोः पूर्वणित्त्वात्वस्वरेषु प्रतिषेधो वक्तव्यः । चित्रग्वग्रं, शबलग्वग्रम् । "सर्वत्र विभाषा गोः" इति विभाषा पूर्वत्वं प्राप्नोति ॥**

( प्रदीपः ) **सर्वत्रेति** । प्र[9]कृतिभावोऽनेन विधीयते, न तु पूर्वत्वम् । तस्मा**देङः पदान्तादती**ति पूर्वत्वं प्राप्नोतीति वाच्यम् ॥ यदा त्वप्रकृतिभावः, तदाऽयं प्रसङ्ग उक्तः ॥ उत्तरं त्वल्विधित्वात्स्थानिवत्त्वाभावः ॥ ५६ ॥

( उद्द्योतः ) भाष्ये–**विभाषा पूर्वत्वं प्राप्नोतीति** । [10]अत्र वार्तिके भाष्ये च पूर्वशब्देन तदपवा[11]दो लक्ष्यते ॥ भाष्ये—**सर्वत्रेति** चा**वङि**तिसूत्रस्याप्युपलक्षणम् । ध्वनितं चेद**मवङ्**सूत्रे भाष्ये–इति षष्ठे निरूपयिष्यामः ॥ [12]**अनन्तरस्ये**ति न्यायेन तदपवादोऽपि

---

१ वस्वादेशे स्वरप्रतिषेधार्थं स्थानिवद्भावप्रतिषेधो वक्तव्यः । उदाहरणे पश्यपदोपादानं विदुष इत्यस्य कर्मद्वितीयान्तबोधनाय ॥

२ **प्रतिषेध इति** । वक्ष्यमाणाभिप्रायेण प्रतिषेधाशङ्का ॥

३ **मकारादिति** । एवञ्च नञ उम्शब्देन समासे 'अनुम्' इति, तस्मात् पञ्चमी ॥

४ **अनुम्क इति** । बहुव्रीहिः । तद्बोधनाय च कप्रत्ययः ॥

५ ननु वसोःस्थानिवत्त्वेन शतृत्वे उम्वत्वाभावादनुम इति निषेधो न प्राप्नुयादत आह—**वसोरपीति** । व्यपदेशिवद्भावेन शतृत्वं प्राप्तस्य वसोरुम्वत्वमिति भावः ॥

६ **सामर्थ्यादिति** । एतेन 'तनादीति, श्नाप्रत्ययेति, न चात्रेति च चिन्त्यम् । शतुरपि तदन्तर्गतत्वेन सूत्रस्य निर्विषयतापत्तेः' इति रत्नोक्तमपास्तम् ॥ छाया ॥

७ ननु **सनाशंसे**त्युकारेणैव रत्नोक्तः, स कुतो नोक्तोऽतः कैयटतात्पर्यमाह—**व्यापकत्वादिति** ॥ **प्राथम्यादिति** । प्रथमोपस्थितत्वरूपान्तरङ्गत्वाच्चेत्यर्थः ॥ छाया ॥

८ गोः स्थानिवत्त्वप्रतिषेधः पूर्वणित्त्वात्वेषु प्राप्तेषु, तथा गोः स्वरनिषेधे कर्तव्ये स्थानिवत्त्वप्रतिषेध इति वार्तिकार्थः ॥

९ यद्यपि **नान्तः पाद**मिति पाठस्थेको **गुणवृद्धी** इति सूत्रे पाष्ठे च भाष्ये स्थितत्वेन तद्रीत्या **सर्वत्रेति** सूत्रस्यापि पूर्वरूपविधायकत्वमेव । तथापि **शाकलसूत्रे चकारेण प्रकृत्येत्यनुकृष्यते** इति भाष्यदर्शनेन **प्रकृत्यान्तःपाद**मिति पाठमनुसृत्याह—**प्रकृतीति** ॥

१० भाष्यासंगतिमन्यभाष्यसंगत्यैव परिहरति—**अत्रेत्यादि** ॥ छाया ॥

११ **वादः**—प्रकृतिभावः ॥ न्यूनतां निराचष्टे—**सर्वत्रेतीति** ॥ तत्र बीजमाह–**ध्वनितमिति** ॥ छाया ॥

१२ नन्वेवमुत्**सर्गसमाने**ति न्यायेन कथमत्र प्राप्तिरत आह—**अनन्तरेति** ॥ **भाष्योक्ते तु**–सूत्रे ॥ छाया ॥

परत्वादायणमपि बाधित्वा स्यादित्याशयः ॥ यत्तु कैयटेन—तस्मादेङ इत्यादि प्रसङ्ग उक्त इत्यन्तमुक्तम् । तत्तु चिन्त्यमेव । एङः पदान्तादिति सूत्रे एङ्पदोच्चारणसत्त्वेन शङ्काया असंभवदुक्तिकत्वात् । भाष्योक्ते तु एङ्पदाभावादनुवृत्तिमजानतः शङ्केत्युक्तिसंभवात् ॥

( दूषणप्रथमाक्षेपनिराकरणभाष्यम् )

**नैष दोषः । एङ इति वर्तते । तत्रानल्विधाविति प्रतिषेधो भविष्यति ॥**

( समाधाननिरासभाष्यम् )

**एवमपि 'हे चित्रगोऽग्रभ्' अत्र प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये—एवमपीति । लाक्षणिकत्वादस्य गोशब्दस्य स्वतः प्रकृतिभावाप्राप्तावपि स्थानिवत्त्वेन प्राप्नोतीति तत्प्रतिषेधो वक्तव्य इत्यर्थः ॥ यदि तु ओत्सूत्रभाष्योक्तरीत्या वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते, तदेदं वचनं न कार्यम् । एङो लाक्षणिकत्वात् । तदंशे स्थानिवत्त्वानपेक्षणेनातिदेशविषये तदप्रवृत्तिरित्यपि नेत्याहुः ॥

( द्वितीयतृतीयाक्षेपभाष्यम् )

**णित्त्वम् । चित्रगुः, चित्रगू, चित्रगवः । "गोतो णित्" इति णित्त्वं प्राप्नोति ॥**

**आत्वम् । चित्रगुं पश्य, शबलगुं पश्य । "आ ओतः—" इत्यात्वं प्राप्नोति ॥**

**नैष दोषः ॥**

( द्वितीयतृतीयाक्षेपवारणभाष्यवार्तिकम् ॥ )

***॥ तपरकरणात्सिद्धम् ॥***

( भाष्यम् )

**तपरकरणसामर्थ्यात् णित्त्वात्वे न भविष्यतः ॥**

( उद्द्योतः ) भाष्ये—तपरकरणसामर्थ्यादिति । एवं च गस्याविवक्षितत्वेनाल्विधित्वात्स्थानिवत्त्वाभाव इति भावः ॥ ५६ ॥

( आक्षेपभाष्यम् )

**स्वर । बहुगुमान् । "न गोश्वन्साववर्ण—" इति प्रतिषेधः प्राप्नोति ॥**

( ३३३ आक्षेपवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ करोतिपिबत्योः प्रतिषेधः ॥ * ॥**

( भाष्यम् )

**करोतिपिबत्योः प्रतिषेधो वक्तव्यः । कुरु - पिबेति । स्थानिवद्भावाल्लघूपधगुणः प्राप्नोति ॥**

( आक्षेपनिराकरणे भाष्यवार्तिकम् )

***॥ उक्तं वा ॥***

( भाष्यम् )

**किमुक्तम् ?**

**"करोतौ तपरकरणनिर्देशात्सिद्धम्" ॥ "पिबिरदन्तः" इति ॥**

**स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥**

---

१ न ह्यत्र स्थान्यल आश्रयणम् । स्वत एवैङन्तत्वात् ॥ श० कौ० ॥

२ ननु स्वतो गोशब्दत्वमादायापादनस्य लक्षणेति करणेऽपि प्रकृतासंबद्धत्वमेवास्य ग्रन्थस्य स्यादत आह—लाक्षेति ॥ दाधि. ॥

३ नन्वतिदेशविषये लक्षणेति प्रवृत्तावतिदेशवैयर्थ्यापत्तिरत आह—तदंशे इति । एङंशे इत्यर्थः ॥ छाया ॥

४ "आ गोतः" इति षष्ठे औतोम्शसोरित्यत्रत्यवार्तिकन्यासमनुसृत्यैवेदं भाष्यम् ॥ श० कौ० ॥ तथाचोक्तम् "औतोम्शसोः" इति सूत्रे भाष्यकृता—चित्रगुं पश्य शबलगुं पश्येत्यत्र "आ गोतः" इत्युच्यमानेऽपि समासात्प्रतिषेधो न वक्तव्यः । कथम् ? । "ह्रस्वत्वे कृते न भविष्यति ।" इति वार्तिकानुयायिना प्रोक्ते—'स्थानिवद्भावात्प्राप्नोति' इति सूत्रानुयायिकथनोत्तरम् ननु च "औतः" इत्युच्यमानेऽपि "स्थानिवद्भावात्प्राप्नोति" इति वार्तिकानुयायिना प्रोक्ते सूत्रानुयायिना प्रोक्तम्—नेत्याह । 'अनल्विधौ स्थानिवद्भावः" इति ॥ ततो वार्तिकानुयायिना प्रोक्तम्—"आ गोतः" इत्युच्यमानेऽपि न दोषः । प्रतिषिध्यतेऽत्र स्थानिवद्भावः "गोः पूर्वणित्त्वात्वस्वरेषु स्थानिवन्न भवतीति" इति ॥ एतदजानानैराधुनिकभाष्यशोधकैः "आ ओत" इति पाठः स्थापितः सोऽपपाठः । गकाररहितपाठे अल्विधित्वेन स्थानिवत्त्वाप्रसक्तेः ॥ दाधिमथाः ॥ इदानीन्तनोपलब्धभाष्यपुस्तकेषु दाधिमथापेक्षया प्राचीनतमेषु 'आ ओतः' इत्येव पाठ उपलभ्यते । स एव प्रदर्शनीय इत्यत्र न शङ्कालेशः । 'आ गोतः' इति पाठस्तु न क्वापि दृष्टचरः । एवञ्चाधुनिकैरयं पाठ उपक्षिप्त इत्याक्षेपो विलयं गतः । 'आ ओतः' इति पाठे स्थानिवत्त्वाप्रसक्तेर्नात्र दोष इति नास्यप्रदर्शनं युक्तमित्यंशोऽवशिष्यते । तत्रेत्थमभिप्रायः—'आ गोतः' इति न्यासस्य पूर्वपक्षीयत्वेन नात्र भाष्यकृता स गृहीतः । पूर्वपक्षीयत्वञ्चास्य 'गोग्रहणे योरुपसंख्यानम् । सूत्रञ्चभिद्यते । यथान्यासमेवास्तु' इत्यग्रिमग्रन्थेन स्फुटीकृतम् । अल्विधित्वेन स्थानिवत्त्वाप्रसक्तिस्तु सर्वेषां 'तपरकरणात्सिद्धम्' इत्येकविधमुत्तरं प्रकल्पयता नोपलक्षितं भाष्यकृता । स एवाभिप्राय उद्द्योते 'एवञ्च गस्या—' इत्यादिना स्फुटमुक्तः । स्वमत्यनुसारेण पाठकल्पनापेक्षया दृष्टपाठस्यैव सङ्गतिः करणीयेति दाधिमथैर्नावधारितम् ॥

५ दोषद्वयमुद्धरति—नैष इति । जातावेकवचनम् ॥ छाया ॥

६ बहवो गावो यस्य स बहुगुः । सोऽस्त्यत्रेति बहुगुमान् ॥

७ 'ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः' इत्यर्थकेन "ह्रस्वनुड्भ्यां मतुप्" इति सूत्रेण प्राप्तस्य मतुप उदात्तत्वस्य गोत्वस्याल्धर्मत्वाभावेनानल्विधाविति प्रतिषेधाप्रवृत्त्या 'गोस्त्रियोः' इति जातह्रस्वस्य स्थानिवद्भावेन "न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः" इति सूत्रेण प्रतिषेधः प्राप्नोतीत्यर्थः ॥

८ तस्मात् स्वरार्थमेव निषेध इति स्थितम् ॥ छाया ॥

( ५२ अतिदेशसूत्रम् ॥ १ । १ । ८ आ. २ ॥ )

## अचः परस्मिन् पूर्वविधौ ॥ १।१।५७ ॥

( प्रदीपः ) अचः परस्मिन्० ॥ ५७ ॥ अलिविध्यर्थमिदम् । तथा हि–वव्रश्चेति उरदत्त्वे कृते 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणनिषेधः स्थान्यलाश्रयः । एवमचितीकः, शुचितीकः, बहुचितीक इति 'चितेः कपि' इति दीर्घत्वे कृते 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति स्थान्यलाश्रयः स्वरोऽस्माद्वचनाद्भवति ॥

( उद्योतः ) अचः पर० ॥५७॥ पूर्वेणैव सिद्धे इदं किमर्थमत आह—अलिति ॥ उरदत्त्वे इति । अङ्गाक्षिप्तप्रत्ययपरत्वनिमित्तके–इति शेषः । लिट्यभ्यासस्येत्युभयेषांग्रहणाद् हलादिशेषात्प्राक् संप्रसारणे वस्य संप्रसारणात्तन्निषेधाच्च प्राक् नित्यत्वात्परत्वाच्चोरदत्वमिति भावः ॥ एवमचितीति । उत्तरपदस्याधिकृतस्य ह्रस्वेन विशेषणात्तदन्तग्रहणे लब्धे ह्रस्वान्ते इत्यत्रान्तग्रहणेन भूतपूर्वगतेराश्रयणेनेदं साधयितुं शक्यमिति कश्चित् ॥ तन्न । तदभावे ह्रस्वादावित्यर्थापत्तेः । ह्रस्वान्ते इत्यत्र नञ्सुभ्यामित्यनुवृत्तावपि बहोर्नञ्वदिति वचनात् 'बहुचितीकः' इत्युदाहृतम् ॥

( पदकृत्याधिकरणम् )

( अच्पदप्रयोजनम् )

( आक्षेपभाष्यम् )

**अच इति किमर्थम् ?**

( प्रदीपः ) वार्तानि प्रत्युदाहरणानि कानिचिच्छक्यप्रतिविधानानीति प्रश्नः–अच इति किमर्थमिति ॥

( उद्योतः ) प्रत्युदाहरणादिचिन्ता वृत्तिकाराणामुचिता, न तु भाष्यकृतोऽत आह—वार्त्तानीति । वृत्त्युदाहृतानि ॥

( प्रयोजनदर्शनभाष्यम् )

**विश्नः, प्रश्नः । द्यूत्वा, स्यूत्वा । अक्राष्टाम् । आगत्य ॥**

**प्रश्नो विश्न इत्यत्र छकारस्य शकारः परनिमित्तकः, तस्य स्थानिवद्भावात् "छे च" इति तुक् प्राप्नोति । अच इति वचनान्न भवति ॥**

( उद्योतः ) भाष्ये—शकारः–च्छ्वोः शूडिति विहितः ॥

( दोषवारणभाष्यम् )

**नैतदस्ति प्रयोजनम् । क्रियमाणेऽपि वाऽज्ग्रहणेऽवश्यमत्र तुगभावे यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति ॥**

( प्रदीपः ) अन्तरङ्गत्वादिति । अत एव युगपत्प्राप्त्यभावाद्वार्णादाङ्गं बलीय इत्येतदत्र नास्ति । यत्र हि युगपदाङ्गवार्णयोः प्राप्तिर्यथा कारकमिति वृद्धियणादेशयोः, यथा च किरतः–किरन्तीति यणित्त्वयोः, तत्रैतदुपतिष्ठते ॥ तत्रायं यत्नः–च्छ्वोः शूडिति तकारछकारयोः समुदायनिर्देशात्सतुक् छकारः स्थानी । समुदायनिर्देशसामर्थ्याच्चालोऽन्त्यस्येत्यस्यानुपस्थानम्, अनर्थकत्वाद्वा । एवं च नञो ङित्करणं 'विश्नः' इत्यत्र गुणनिषेधार्थमर्थवद्भवति ॥

( उद्योतः ) अत एवेति । प्रत्ययनिरपेक्षतयाऽन्तरङ्गत्वेन तुकः शादेशात् प्राक् प्रवर्तनादेवेत्यर्थः ॥ अत्रान्तरङ्गत्वं प्रथमप्रवृत्तिकत्वरूपम् ॥ युगपदिति । बलाबलविचारस्य प्रतियोगिसापेक्षत्वेन तत्रैव संभवादिति भावः ॥ यथेति । 'कीरकः' 'किरति' इत्यादौ अन्तरङ्गत्वात्पूर्वमकादेशविकरणाविति भावः ॥ सतुगिति । यद्यप्यकृतव्यूहपरिभाषया तुग्व्यावृत्तिः कर्तुं शक्या, तथापि तदभावस्यापि सतुङ्निर्देशो ज्ञापकः । न च वाञ्छतेः क्विपि 'वाञ्छौ' इत्यादौ शाभावाय सतुक्निर्देश इति वाच्यम् । शादेशयोग्यप्रत्ययपरस्य वाञ्छतेः प्रयोगाभावात् । अत एव सतुक्निर्देशसामर्थ्यात्सर्वादेशः श इति षाष्ठभाष्योक्तं सङ्गच्छते ॥ ननु सतुङ्निर्देशेऽपि तेनाङ्गविशेषणात्तदन्तविधौ अलोन्त्यस्येत्यन्त्यस्यैव स्यादत आह—समुदायेति ॥ अनर्थकत्वादिति । नानर्थक इति निषेधादिति भावः ॥ सतुक्छनिर्देशे लिङ्गमाह—एवं चेति[14]॥

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**इदं तर्हि–द्यूत्वा, स्यूत्वा । वकारस्य ऊठ् परनिमित्तकः । तस्य स्थानिवद्भावादचीति यणादेशो न प्राप्नोति । अच इति वचनाद्भवति ॥**

( दोषवारणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्राच्त्वं भविष्यति ॥**

१ ननु संप्रसारणभाविनीति व्याख्याने नेदं प्रयोजनमत आह—एवमिति ॥ छाया ॥

२ 'ह्रस्वान्त उत्तरपदेऽन्त्यात्पूर्वमुदात्तं कपि नञ्सुभ्यां परं बहुव्रीहौ' इति हि तस्यार्थः ॥

३ प्रक्रियामनुक्त्वाह—लिट्येति ॥ यथासंख्यमाह—नित्यत्वादिति ॥ छाया ॥

४ संप्रसारणं तदाश्रयं च कार्यं बलवदिति परिभाषयेत्यर्थः । ( र. ना. )

५ प्राचोक्तं खण्डयति—उत्तरपदेति ॥ छाया

६ ननु तत्र नञ्सुभ्यामित्यनुवृत्त्या कथं बहुचितीक इत्युदाहृतमत आह—ह्रस्वान्ते इति ॥ छाया ॥

७ प्रत्युदेति । नन्वित्यादिः ॥ छाया ॥

८ 'आक्राष्टाम्' इति क. ग. पाठः ॥

९ तुगभाव इति । विषयसप्तमी ॥ छाया ॥

१० तत्र–तुगभावे ॥ छाया ॥

११ ननु तत्रापि अकादेशविकरणाभ्यां प्रागेव वृद्धीत्त्वयोः प्राप्तिरिति कथं यौगपद्यमत आह—कारक इति ॥ छाया ॥

१२ परिभाषाज्ञापकत्वं विघटयति—न चेति ॥ छाया ॥

१३ तत्र मानमाह—अत एवेति । तदभावादेवेत्यर्थः ॥ अन्यथा तत्राभावाय साफल्ये तदसंगतिः स्पष्टैवेति भावः ॥ छाया ॥

१४ एवं चेतीति । यदि छमात्रस्य शस्तदा विश्न इत्यत्रालघूपधत्वाद्गुणाप्राप्तौ तन्निषेधार्थं ङित्त्वं व्यर्थमेव स्यादिति भावः ॥ छाया ॥

[1]अथवा-योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नासावादेशः ॥

(प्रदीपः) **स्वाश्रयमिति।** न ह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते, यथा **ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्य**मिति क्षत्रियस्य क्षत्रियधर्माः। वाय्वोरित्यादौ तु सत्यपि स्वाश्रये वत्वे बहिरङ्गत्वाद्यणोऽसिद्धत्वाद्वलिलोपाभावः। [2]द्यूत्वेत्यत्र तु **नाजानन्तर्य** इति असिद्धत्वनिषेधात् यण् प्रवर्तते। ऊठः स्थानिवत्त्वाद्यलोपः कथं नाशङ्कित इति चेत्। **योऽनादिष्टादच** इत्येवमर्थस्याऽज्ग्रहणस्य स्थापयिष्यमाणत्वात्॥ **योऽत्रादेश इति।** समुदायरूप ऊठ्॥ **यश्चाश्रीयत इति।** यण्विधावच्॥ **नासावादेश इति।** समुदायस्यादेशत्वात्। न चादेशस्यावयव आदेशो गृह्यते। मुख्यसंभवे गौणग्रहणस्यायुक्तत्वात्॥ [3]ख्याञादीनां तर्ह्यनुबन्धवियुक्तानां धातुसंज्ञा आदेशावयवत्वान्न प्राप्नोति। घस्[4]लादेशस्य लृदित्त्वादङर्थात् ज्ञापकाद्धातुकार्याणि भविष्यन्तीत्यदोषः॥

(उद्द्योतः) **न हीति।** [5]अयोगवाहेषु हल्त्वाच्त्वयोः समावेशदर्शनेन तयोरविरोध इति भावः॥ ननु स्वाश्रयानिवृत्तौ 'वाय्वोः' इत्यत्र दोषोऽत[6] आह-**वाय्वोरितीति॥ असिद्धत्वनिषेधादिति।** ऊठ इति शेषः॥ [7]बहिरङ्गपरिभाषाऽनित्यत्वादित्यन्ये॥ **योऽनादिष्टादच इति।** [8]अज्ग्रहणस्य सिद्धान्तरीत्या स्थान्यपेक्षया पूर्वत्वमाश्रीयत इत्यत्र तात्पर्यम्॥ **स्थापयिष्यमाणत्वादिति।** [9]व्याख्यास्यमानत्वादित्यर्थः॥ अत्र स्वाश्रयकार्याभावातिदेशस्यापि सिद्धान्तयिष्यमाणत्वाद्भाष्ये परिहारान्तरं—**अथवा योऽत्रेति॥** [10]अयं भावः—अभावातिदेशेऽपि स्थानिप्रयुक्तं भवति, आदेशप्रयुक्तं नेत्यर्थ इति। [11]तदाह—**समुदायेति।** यथा सूत्रे सानुबन्धकग्रहणे तस्यानल्विधित्वम्, स्थानित्वं च नालः, तथा आदेशत्वमपि सूत्रोपात्तस्यैवेति भावः॥ एवं च यण् नादेशप्रयुक्तः, किंतु तदवयवप्रयुक्त इति नासौ वार्यत इति तात्पर्यम्॥ **आदेशो गृह्यत इति।** आदेश इति गृह्यते-इत्यर्थः॥ **न प्राप्नोतीति।** स्थानिवत्त्वेनेति शेषः॥

(तृतीयप्रयोजनोपपादनभाष्यम्)

इदं तर्हि प्रयोजनम्—[12]अक्राष्टाम्। सिचो लोपः परनिमित्तकः। तस्य स्थानिवद्भावात् "षढोः कः सि" (८।२।४१) इति कत्वं प्राप्नोति। अच इति वचनान्न भवति॥

(दूषणनिराकरणभाष्यम्)

एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्-*पूर्वत्रासिद्धे न स्थानिवत्* इति॥

(अखण्डितप्रयोजनभाष्यम्)

इदं तर्हि प्रयोजनम्—आगत्य, अभिगत्य। अनुनासिकलोपः परनिमित्तकः, तस्य स्थानिवद्भावात् 'ह्रस्वस्य' इति तुक् न प्राप्नोति॥ अच इति वचनाद्भवति॥

(उद्द्योतः) भाष्ये—**आगत्येति।** [13]मलोपस्यापि ह्रस्वस्य पित्प्रत्ययपरत्वसंपादकतया तुग्विधावाश्रयणमित्यर्थः॥ [14]अभावातिदेशे चैतत्फलम्। [15]अत एवाभावातिदेशे 'पटयति' इत्यादौ वृद्धिर्नेत्यग्रे भाष्यं संगच्छते॥

---

(परस्मिन्नित्येतत्प्रयोजनम्)—

(आक्षेपभाष्यम्)

अथ परस्मिन्निति किमर्थम्?

(प्रयोजनभाष्यम्)

[16]युवजानिः। द्विपदिका। वैयाघ्रपद्यः। आदीध्ये॥

(प्रथमप्रयोजनोपपादनभाष्यम्)

युवजानिः, वधूजानिरिति "जायाया निङ्" (५।४।१३४) अप[17]रनिमित्तकः। तस्य स्थानिवद्भा-

---

१ अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वमित्यतः पक्षान्तरमाह—**अथवेति।** (र. ना.)

२ ननु द्यूत्वेत्यादावपि यण् न स्याद्बहिरङ्गतयोठोऽप्यसिद्धत्वादत आह—**द्यूत्वेत्यत्रेति॥** छाया॥

३ गौणत्वोपरि पूर्वसूत्रविषये शङ्कते—**ख्याञादीनामिति॥** छाया॥

४ **घस्लादेशेति।** तस्य लृदित्त्वं च्लेरङर्थम्। स न धातोर्विहित इति भावः॥ अनुबन्धानामेकान्तत्वमेवेत्यावश्यकमिदम्॥ छाया॥

५ निवृत्तौ विरोधो हेतुः। स चात्र नेत्याह-**अयोगेति॥** छाया॥

६ **दोष इति।** स्वाश्रयं वत्वमादाय यलोपापत्तिरित्यर्थः॥ छाया॥

७ सा नास्तीति मतेनाह—**बहिरङ्गेति।** अकारप्रश्लेषः॥ छा.॥

८ नन्वच्पदार्थसिद्धिरिति प्रत्युदाहरणं संगतमेवात आह—**अजिति॥** छाया॥

९ तथा भाष्याभावादाह—**व्याख्येति।** अत्र सूत्रे विधिग्रहणफलत्वेनेति भावः॥ छाया॥

१० नन्वभावातिदेशे स्थानिप्रयुक्तं न स्यादत आह—**अयमिति॥** छाया॥

११ **तदाह**—तद्ध्वनयन्नाह॥ नन्वनुबन्धानामुच्चरितप्रध्वंसित्वात्कथं समुदायस्य तत्त्वमत आह—**यथेति।** पूर्वसूत्रविषयेऽपीति भावः॥ छाया॥

१२ 'आक्राष्टाम्' इति क. छ. पाठः। कृषधातुर्भ्वादिस्तुदादिश्चानुदात्तः। तस्माल्लुङि 'अनुदात्तस्य चर्दु-' (६।१।५९) इत्यमागमे 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति सिचि वृद्धौ च रूपम्॥

१३ ननु यश्चेति प्रागुक्तरीत्याऽत्र वारणमेवात आह—**मलोपस्यापीति॥** छाया॥

१४ ननु नात्र भावातिदेशेनेष्टसिद्धिरत आह—**अभावेति॥** छाया॥

१५ तं द्रढयति—**अत एवेति।** तदतिदेशफलसत्त्वादेवेत्यर्थः॥ छाया॥

१६ 'युवजानिः-वधूजानिः' इति क. ग. पाठः॥

१७ 'न परनि' इति क. ग. पाठः॥

वात् 'वलि' इति यलोपो न प्राप्नोति ॥ परस्मिन्निति वचनाद्भवति ॥

( प्रदीपः ) युवजानिरिति । अव्युत्पन्नत्वादुणादीनां जाशब्दस्याकारलोपो न भवति । अन्यथाऽऽकारस्य निङि कृते यलोपे च निङः स्थानिवद्भावात्प्रत्ययत्वादाकारलोपः स्यात् । न चासिद्धवदत्राभादित्याकारलोपे कर्तव्येऽसिद्धत्वमात्वस्य, व्याश्रयत्वात् ॥

( उद्योतः ) ननु स्वाश्रयवल्त्वादिना यलोपसिद्धावपि आलोपः स्थानिवत्त्वेन स्यादिति तद्वारणाय परग्रहणमावश्यकमेवेत्यत आह— अव्युत्पन्नत्वादिति ॥ आकारलोप इति । आतो लोप इत्यनेन । जनेरौणादिके यकि ये विभाषेत्यात्वे टापि तेनैकादेशे तस्य पूर्वान्तवद्भावादार्धधातुकत्वेन युवतिशब्देन बहुव्रीहौ निङादेशे यलोपेऽवशिष्टस्य स्थानिवत्त्वेनार्धधातुकत्वादिसत्वात् 'धातिः' इतिवदिति भावः ॥ ननु आभीयत्वेनात्वस्यासिद्धत्वाल्लोपो नेत्यत आह—न चेति ॥ व्याश्रयत्वादिति । ये आत्वम्, आस्थानिके निङि लोपः - इत्यात्वनिमित्तापेक्षया न्यूननिमित्तकत्वात् व्याश्रयता ॥

( प्रथमप्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम् । स्वाश्रयमत्र वल्त्वं भविष्यति ॥

अथवा—योऽत्रादेशो नासावाश्रीयते । यश्चाश्रीयते नासावादेशः ॥

( द्वितीयप्रयोजनोपपादनभाष्यम् )

इदं तर्हि प्रयोजनम्-द्विपदिका, त्रिपदिका । पादस्य लोपोऽपरनिमित्तकः, तस्य स्थानिवद्भावात्पद्भावो न प्राप्नोति ॥ परस्मिन्निति वचनाद्भवति ॥

( उद्योतः ) भाष्ये-द्विपदिकेति । द्वौ पादौ-इति तद्धितार्थेति समासे पादशतस्येति वुन्लोपौ ॥ परस्मिन्नितीति । सहविधाने परनिमित्तकत्वव्यवहाराभावादित्यर्थः ॥

( द्वितीयप्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात् स्थानिवद्भावो न भविष्यति ॥

( प्रदीपः ) पुनरिति । यस्येति लोपे सिद्धे पादशतस्येत्यत्र पुनर्लोपवचनं स्थानिवत्त्वनिषेधार्थम् । पुनर्लोपवचने सति लुप्यत एवाकारः, कार्ये नाऽऽश्रीयत इत्यर्थः ॥

( उद्योतः ) पुनर्लोपवचनेन यथा स्थानिवत्त्वाभावस्तथाऽभिनयति—पुनर्लोपेति ।

( तृतीयप्रयोजनोपपादनभाष्यम् )

इदं तर्हि प्रयोजनम्—वैयाघ्रपद्यः ॥

( उद्योतः ) ( भाष्ये ) वैयाघ्रपद्ये व्याघ्रस्येव पादावस्येति बहुव्रीहौ पादस्य लोप इति लोपे गर्गादित्वाद्यञि पादः पदिति पद्भावे न य्वाभ्यामित्यैच् ॥

( प्रयोजनबाधकाक्षेपभाष्यम् )

ननु चात्रापि पुनर्वचनसामर्थ्यादेव न भविष्यति ॥

( प्रदीपः ) ननु चात्रापीति । यस्येति लोपे सिद्धे पादस्य लोप इति पुनर्लोपवचनादित्यर्थः ॥

( प्रयोजनसाधकभाष्यम् )

अस्ति ह्यन्यत्पुनर्लोपवचने प्रयोजनम् ॥

किम् ?

यत्र भसंज्ञा न—व्याघ्रपात्, श्येनपादिति ॥

( चतुर्थप्रयोजनोपपादनभाष्यम् )

इदं चाप्युदाहरणम्—आदीध्ये, आवेव्ये । इकारस्य एकारोऽपरनिमित्तकः । तस्य स्थानिवद्भावात् "यीवर्णयोर्दीधीवेव्योः" ( ७।४।५३ ) इति लोपः प्राप्नोति । परस्मिन्निति वचनान्न भवति ॥

( प्रदीपः ) आदीध्य इति । इट एत्वे कृते लोपः प्राप्नोति, विकरणश्च । तत्र नित्यत्वाद्विकरणः, तस्य लुक् ॥ एरनेकाच इति यण् न प्रवर्तते । क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति स्थानिवत्त्वनिषेधात् ॥

( उद्योतः ) ननु 'तस्य स्थानिवत्त्वात्' इत्ययुक्तम्, तेन विनाऽपि टित एत्वात् प्राक् यीवर्णयोरित्यस्य परत्वात्प्राप्तेरत आह—इट इति । अन्तरङ्गत्वादिति भावः ॥ नित्यत्वादिति । लोपस्तु विकरणे कृते तेन व्यवधानान्न प्राप्नोतीति भावः ॥ यद्यपि लुकि इलोपप्राप्तिः सोऽपि नित्यः, तथापि विकरणसंप्रधारणामात्राभिप्रायेणेदम् ॥ ननु परस्मिन्नित्यस्याभावे शब्लुकः स्थानिवत्त्वेन एरनेकाच इति यण् स्यात् । तत्र च कृते यलोपे स्थानिवत्त्वनिषेधेन ईकारपरत्वाभावाद् न लोपप्राप्तिः, यलोपे[९] लोपाजादेश एवेति नियमस्तु निमि-

---

१ आवश्यकमेवेति । तथा च भाष्यासंगतिरेवेति भावः ॥ छाया ॥

२ अव्युत्पन्नत्वादितीति । अस्यैव सिद्धान्तत्वादिति भावः ॥ छाया ॥

३ नन्वनिमित्तपरत्वेन कथं लोपोऽत आह—जनेरिति ॥ आत्वे—सवर्णदीर्घे इति शेषः ॥ अवशिष्टस्य—निङः ॥ आदिना अजादित्वादि ॥ छाया ॥

४ ननु यसत्त्वे अकारे नैव ते धर्मा इति कथं तेन तल्लाभोऽत आह—यातिरिति । संभावनामात्रेणेति भावः ॥ छाया ॥

५ भवतीति । स्थानिवद्भावाभावेन पादः पदिति पद्भाव इत्यादि ॥

६ 'द्वौ द्वौ पादौ ददातीति' इति मुद्रितपाठः, एतादृशः प्रामाणिकपुस्तकेषु नोपलभ्यते ॥

७ 'पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च' इति सूत्रेण युगपदेव विहिताविल्यपरनिमित्तको लोप इति भावः ॥

८ लुकि—विकरणस्येत्यादिः ॥ छाया ॥

९ 'लोपरूपाजादेश एव नेति' इति ध. प. पाठः ॥

[1]तभूताजादेशविषय एवास्तु । [2]परस्मिन्निति च न कार्यमत आह—एरनेकाच इति ॥ एतेन[3] शब्लुकः स्थानिवत्त्वेन व्यवधानात् यीवर्णयोरित्यस्य न प्राप्तिरित्यपास्तम् ॥

( इति परस्मिन्नित्येतत्प्रयोजननिरूपम् )

( पूर्वविधिग्रहणप्रयोजनम् )

( आक्षेपभाष्यम् )

**अथ पूर्वविधाविति किमर्थम् ?**

( समाधानभाष्यम् )

**हे गौः । बाभ्रवीयाः । नैधेयः ॥**

( प्रथमप्रयोजनोपपादनभाष्यम् )

**हे गौरिति औकारः परनिमित्तकः । तस्य स्थानिवद्भावात् "एङ्ह्रस्वात्संबुद्धेः" ( ६।१।६९ ) इति लोपः प्राप्नोति । 'पूर्वविधौ' इति वचनान्न भवति ॥**

( प्रयोजननिराकरणभाष्यम् )

**नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति —'न संबुद्धिलोपे स्थानिवद्भावो भवति' इति । यदयं "एङ्ह्रस्वात्संबुद्धेः" इत्येङ्ग्रहणं करोति ॥**

( प्रदीपः ) **यदयमिति** । अग्ने-वायो-इति स्थानिवत्त्वात् ह्रस्वादित्येव लोपः सिद्धः । खट्वे-माले-इत्यादौ हल्ङ्याब्भ्य इति ॥ नयत्यादीनां विजन्तानां ने-लो-इति [4]कथं संबुद्धिलोप इति चेत् । नैतेभ्यो विच् दृश्यते ॥

( उद्द्योतः ) **ह्रस्वादित्येवेति** । सेरस्मृतोशब्दादावप्येवम् ॥ यत्र स्थानिवत्त्वेऽपि न ह्रस्वान्तता तत्राह—**खट्वे इति** ॥ 'लोपः सिद्धः' इत्यनुषज्यते । [5]स्थानिवत्त्वादेवेकाराकारप्रश्लेषेऽपि न दोषः ॥ **नैतेभ्य इति** । [6]एवं दीर्घेकारान्तप्रकृतिक'से'इत्यादीनामेकाक्षरकोशबोधितस्य 'ए'इत्यस्य च संबुद्धावभिधानाभावो बोध्यः ॥ [11]अत्रेदं चिन्त्यम्—ओग्रहणस्य भाष्ये कृतत्वेन दीर्घोकारान्तप्रकृतिकओकारान्तानभिधाने मानाभावः[12] । गोर्थमिति[13] भाष्यं तु धोशब्दस्य सर्वसंमतया ओकारान्तोपलक्षणतया व्याख्येयमेव सर्वैः ॥ किंच[14] संबुद्धावनभिधानेनोपपत्तौ **सर्वथा** विजभावकल्पना कुत इति ॥

[15]अपरे तु पूर्वविधावित्यस्याभावेऽयं विचारः । तत्र दीर्घान्तप्रकृ[16]तिक-एकारान्ते स्थानिवत्त्वेनैङोऽभावात् विनाऽतिदेशबाधं प्रत्याहारग्रहणचारितार्थ्यस्य वक्तुमशक्यत्वादनभिधानकल्पने न मानम् । [17]न चेदं भाष्यमभावातिदेशानङ्गीकारेणैव प्रवृत्तमिति वाच्यम् । **अथ वा योऽत्रादेश** इति भाष्येण तदाश्रयणात् । 'आगत्य' 'वैयाघ्रपद्यः' इत्यच [18]ईलादेः प्रत्युदाहरणेन तदाश्रयणाच्चेत्याहुः ॥

( प्रयोजनसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम् । गोऽर्थमेतत् स्यात् ॥**

( उद्द्योतः ) भाष्ये—**गोर्थमेतदिति** । [19]अनिष्टलोपसिद्ध्यर्थमेव तत्, स्थानिवद्भावेनैङ्त्वादिति भावः ॥

( प्रयोजनबाधकज्ञापकाशयान्तरभाष्यम् )

**यत्तर्हि प्रत्याहारग्रहणं करोति । इतरथा हि 'ओह्रस्वात्' इत्येव ब्रूयात् ॥**

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**इदं तर्हि प्रयोजनम्—बाभ्रवीयाः, माधवीयाः । वान्तादेशः परनिमित्तकः, तस्य स्थानिवद्भावात् "हलस्तद्धितस्य" ( ६।४।१५० ) इति यलोपो न प्राप्नोति ॥ पूर्वविधाविति वचनाद्भवति ॥**

( प्रदीपः ) **बाभ्रवीया इति** । सन्निपातपरिभाषाया अनित्यत्वायशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यते ॥

( उद्द्योतः ) **बाभ्रवीया इति** । **मधुबभ्र्वोरिति** यञि वृद्धावोर्गुणे[20]ऽवि वृद्धाच्छे यस्येति लोपे **हलस्तद्धितस्येति** सूत्राद्धलदित्यर्थः ॥ छाया ॥

१ अत्र चैकारस्य न यलोपनिमित्तत्वमिति भावः । ( र. ना. )

२ पर्यवसितमाह—**परस्मिन्निति** । तथा च लाघवमिति भावः ॥ छाया ॥

३ प्राचोक्तं खण्डयति—**एतेनेति** । **क्लिलुगिति** निषेधेनेत्यर्थः ॥ छाया ॥

४ 'न्तानां विचि गुणे ने' इति क. पाठः ॥

५ **कथमिति** । स्थानिवत्त्वेऽपि दीर्घत्वादिति भावः ॥ छाया ॥

६ विचश्छन्दोविषयत्वाच्छन्दसि दृष्टानुविधित्वादापाद्यमानरूपाभाव इति भावः ॥ एवं च विना वैदिकप्रयोगं विचं कल्पयित्वा गणयत्यादीनां प्रयोगदर्शनमप्रमाणमेवेति बोध्यम् ॥ दाधिमथाः ॥

७ न्यूनतां निराचष्टे—**से इति** ॥ छाया ॥

८ साकाङ्क्षत्वादाह—**लोप इति** ॥ छाया ॥

९ ननु तथापि प्रश्लेषेण तद्रूपत्वाभावोऽत आह—**स्थानीति** ॥ तद्वत्तदप्यनेनैवेति भावः ॥ छाया ॥

१० इदमप्युपलक्षणमिति न न्यूनतेत्याह—**एवमिति** ॥ तद्व

११ प्रदीपं सज्ञापकपरभाष्यं खण्डयति—**अत्रेदमिति** ॥ छाया ॥

१२ **मानाभाव इति** । एवं च तत्र दोषाभावाय तदावश्यकत्वेन न ज्ञापकत्वमिति भावः ॥ छाया ॥

१३ नन्वेवमुत्तरभाष्यासंगतिरत आह—**गोऽर्थमिति** ॥ छाया ॥

१४ प्रदीप एवाभ्युपेत्य दोषमाह—**किं चेति** ॥ छाया ॥

१५ प्रकारान्तरेण प्रदीपमात्रं खण्डयति—**अपरे त्विति** ॥ छाया ॥

१६ **दीर्घान्तेति** । गोऽर्थमित्यस्योपलक्षणत्वावश्यकत्वात् ॥ छाया ॥

१७ ननु तत्र नैव तत्त्वं भावमात्रातिदेशादित्यत आह—**नचेदमिति** ॥ छाया ॥

१८ **आदिना** परस्मिन्निति च ॥ **तत्**—प्रागुक्तमेव ॥ छाया ॥

१९ इष्टं फलं नेदमत आह—**अनिष्टेति** ॥ छाया ॥

२० **अवि**—अवादेशे ॥ छाया ॥

इत्यनुवर्तमाने आपत्यस्येति सूत्रेण यलोपः ॥ ननु तत्र सिद्धान्तेऽपि यनिमित्तो वान्तादेशः कथं यलोपनिमित्तं स्यादत आह—संनिपातेति ॥

(प्रयोजननिराकरणभाष्यम्)

**एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्र हल्त्वं भविष्यति ॥**

**अथवा—योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नाऽसावादेशः ॥**

(प्रदीपः) **योऽत्रादेश इति ।** वान्तः समुदायः ॥ **यश्चेति ।** लोपं प्रति निमित्तत्वेन वकारः ॥

(तृतीयप्रयोजनोपपादनभाष्यम्)

**इदं तर्हि प्रयोजनम्—नैधेयः । आकारलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद् द्व्यज्लक्षणो ढक् न प्राप्नोति ॥ पूर्वविधाविति वचनाद्भवति ॥**

(प्रदीपः) **नैधेय इति ।** स्थानिवद्भावात् त्र्यच्कत्वव्यपदेशे सति विरोधात् स्वाश्रयं द्व्यच्त्वं न लभ्यते । यदविरुद्धं स्वाश्रयं तदतिदेशेन न बाध्यते, विरुद्धं तु बाध्यत एव । संख्याकृतस्तु व्यपदेशः परस्परपरिहारेण लोके स्थितः । न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते ॥

(उद्द्योतः) (भाष्ये) **नैधेय इति ।** निपूर्वाद्धाञः किप्रत्यये आतो लोपे गतिसमासे द्व्यच इतश्चानिञ इति ढक् ॥

(इति पूर्वविधिग्रहणप्रयोजननिरूपणम्)

(अथ विधिग्रहणप्रयोजननिरूपणम्)

(आक्षेपभाष्यम्)

**अथ विधिग्रहणं किमर्थम् ?**

(प्रदीपः) **अथेति ।** 'अचः परस्मिन् पूर्वस्य' इत्येव षष्ठ्या विध्यर्थ आक्षिप्तः – पूर्वस्य कार्ये कर्तव्य इति । कार्यं च विधिरिति प्रश्नः ।

(समाधानभाष्यम्)

**सर्वविभक्त्यन्तः समासो यथा विज्ञायेत—पूर्वस्य विधिः पूर्वविधिः, पूर्वस्माद्विधिः पूर्वविधिरिति ॥**

(अथ पञ्चमीसमासप्रयोजननिरूपणम्)

(आक्षेपभाष्यम्)

**कानि पुनः पूर्वस्माद्विधौ स्थानिवत्त्वस्य प्रयोजनानि ?**

(प्रयोजनोद्देशभाष्यम्)

**बेभिदिता, चेच्छिदिता । माथितिकः । अपीपचन् ॥**

(प्रथमप्रयोजनोपपादनभाष्यम्)

**बेभिदिता चेच्छिदितेति । अकारलोपे कृते यलोपे च एकाज्लक्षण इट्प्रतिषेधः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

(प्रदीपः) **बेभिदितेति ।** बेभिद्यशब्दात्तृच् । नित्यत्वादल्लोपयलोपौ । ततः 'एकाच–' इतीट्प्रतिषेधः प्राप्नोति । **उपदेश**ग्रहणं द्वयोरपि विशेषणम्–उपदेशे एकाचः, उपदेशेऽनुदात्तादिति । द्विष्प्रयोगश्च द्विर्वचनम् । अल्लोपस्य तु स्थानिवत्त्वे व्यवधानादिट्प्रतिषेधाभावः ॥

(उद्द्योतः) ननु च बेभिदितेत्यत्राल्लोपयलोपाभ्यां प्रागेव परत्वादिट्, न च तदा प्रतिषेधप्राप्तिरत आह—**नित्यत्वादिति । तत** इत्यनेनेटोऽनित्यत्वमुक्तम् ॥ ननु कृतद्विर्वचनं नैकाजत आह—**उपदेशेति** ॥ ननु भिद् भिद् इति द्विर्वचनरूपादेशस्य न भिद्युपदेश उपदेश इति कथमुपदेशे एकाच्त्वमत आह—**द्विःप्रयोगश्चेति** । लोपेऽवशिष्टस्य 'बेभिद्' इत्यस्य सः उपदेश इति भावः ॥ परे तु एकाच उपदेश इत्यत्र एकाचो द्वे इति सूत्रस्थभाष्यरीत्या विहितविशेषणाश्रयणादङ्गसंज्ञायामल्लोपस्य [पङ्क्तिके भसंज्ञायामल्लोपस्येव] स्थानिवत्त्वेन तृजादिनिरूपिताङ्गत्वस्य बेभिदिति समुदायेऽभावाच्च पञ्चमीसमासं विनाऽपि नात्रानुपपत्तिरित्याहुः ॥

(द्वितीयप्रयोजनोपपादनभाष्यम्)

**माथितिक इति । अकारलोपे कृते 'तान्तात्कः' (७।३।५१) इति कादेशः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

(प्रदीपः) **माथितिक इति ।** यदा 'ठस्येकः' इति संघातग्रहणम्, तदा स्थानिवद्भावादिकस्य कादेशः प्राप्नोति । वर्णनिर्देशे त्वल्विधित्वात् कादेशस्याप्रसङ्गः । **सन्निपातपरि**भाषां चानाश्रित्यैतदुक्तम् ॥

---

१ तत्र–बाभ्रवीया इत्यादौ ॥ छाया ॥

२ ननु स्वाश्रयमप्यत्रोक्तमत आह—**यदिति** ॥ छाया ॥

३ अनुवृत्त्यर्थमाह—**द्व्यच इति** ॥ **ढगिति** । तस्यैयादेशः ॥ छाया ॥

४ **न च**–न हि ॥ छाया ॥

५ **भिद्युपेति** । स्वरूपभेदात् ॥ छाया ॥

६ 'यलोपेऽव' इति घ. पाठः ॥

७ **सः**–भिद्युपदेशः ॥ छाया ॥

८ भाष्यकैयटादिकं दूषयति—**परे त्विति** ॥ छाया ॥

९ **रीत्येति** । तत्र हि यङन्तात्तृचि इडिनषेधमाशङ्क्यैकाचोऽङ्गादिति व्याख्यानेन परिहृतम् । तद्भाष्यस्य यथाश्रुतत्वे बिभित्सतीत्यादावदोषायोपदेशपदस्यैकाजंशेऽपि संबन्धे बेभिदितेत्यादावपि परिहारसंभवेन तस्य विहितविशेषणत्वे तात्पर्यमावश्यकम् । प्रत्ययविधानावधेरेव प्रायेणाङ्गत्वादङ्गादित्यनेनेदं सूचितम् । विहितविशेषणे च बिभित्सतीत्यादावदोषेणैकाजंशे उपदेशपदासंबन्ध इति तदाशयः ॥ छाया ॥

१० हेत्वन्तरमाह—**अङ्गेति** ॥ **आदिना** तव्यादि ॥ **इति**–इत्यादि ॥ **अपि**–तत्समुच्चये ॥ **अत्र**–बेभीत्यादौ ॥ छाया ॥

११ इतः प्राक् 'स्थान्यादेशयोः' इति दाधिमथैः कल्पितः पाठ आसीत्, क्वापि न दृष्ट इति न संगृहीतः । **वर्णनिर्देश इति** । ठस्येक इत्यत्र ठपदेनेत्यर्थः । पक्षद्वयमप्येतद्भाष्य उक्तम् ॥

( उद्योतः ) वर्णनिर्देशे त्विति । [1]स्थानिन्यकारो न विवक्षित इति वर्ण एव तत्र स्थानी, ठगादिप्रत्ययेष्वप्यकारस्तथैव । [2]आदेशे च विवक्षित इति ठत्वाभावात्प्राप्तिरेव नेति भावः ॥ संनिपातेति । [3]इदं च ठक्छसोश्चेति वार्तिकभाष्ये स्पष्टम् ॥

( तृतीयप्रयोजनोपपादनभाष्यम् )

**अपीपचन्निति । एकादेशे कृते 'अभ्यस्ताज्झेर्जुस् भवति' इति जुस्भावः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

( प्रदीपः ) अपीपचन्निति । झेः 'इतश्च' इतीकारलोपे कृते एकदेशविकृतमनन्यवदिति झिरेवायम्, तत्रान्तादेशे कृते चङकारस्य पररूपे कृते तस्यादिवद्भावाज्जुस् प्राप्नोति ॥ स्थानिवद्भावे तु णिलोपस्य पररूपस्य वा व्यवधानात् न भवति ॥ ननु पूर्वस्माद्विधौ स्थानिवद्भावे कथं द्वे गौरित्यादि सिध्यति ॥ उच्यते—अचो यः पूर्वस्तस्मान्निमित्तत्वेनाश्रितादित्याश्रयणात् ॥ तथाहि—गोशब्दे ओकारात् पूर्वो गकारः, न च तस्मादत्र विधिरस्ति ॥

( उद्योतः ) न भवतीति । न च 'अपीपचन्' इत्यत्र न पदान्तेति निषेधात्स्थानिवद्भावो दुर्लभ इति वाच्यम् । पदचरमावयवे कर्तव्ये आदेशस्य [4]पदान्तरस्यस्यैव ग्रहणादत्र तदप्राप्तेः । [5]पदेऽन्त इत्यर्थस्य भाष्ये वक्ष्यमाणत्वेनैतदर्थलाभः ॥ केचि[6]त्तु पूर्वोत्तरसाहचर्येणाभ्यस्तस्य भावरूपादेशानपहृतविकरणकस्य ग्रहणादत्र, प्रत्यैषिषन्नित्यादौ च न दोष इत्याहुः ॥ [7]वस्तुत ईदृशसाहचर्याश्रयणापेक्षया पञ्चमीसमासाश्रयणे गौरवाभाव इत्यपीपचन्निति तदुदाहरणमेव[8] बोध्यम् ॥ न च तस्मादिति । निमित्तत्वेनाश्रितादिति शेषः ॥ वस्तु[9]तो निमित्तत्वेनाश्रितादित्यव्यवधानोपलक्षणम् ॥ न च तस्मादिति । ओकारेण व्यवधानादित्यर्थः ॥ [10]तदंशे निर्दिष्टपरिभाषाबाधे मानाभावादिदमेव युक्तम् । निमित्तत्वेनेत्यादेः शब्दमर्यादयाऽलाभाच्च । [11]अत एव तथाहि गोशब्द - इत्यादि सार्थकम् । अन्यथोक्तार्थस्योपपादनानपेक्षत्वेन तद्वैयर्थ्यम् । निमित्तत्वेनाश्रितादित्येतद्रहितस्यायुक्तत्वं चेत्यन्ये ॥

( उक्तप्रयोजननिराकरणभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशास्त्वर्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते, सा साऽऽश्रयितव्या ॥**

( विधिग्रहणप्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—विधि[13]मात्रे स्थानिवत् यथा स्यात् । अनाश्रीयमाणायाम[14]पि प्रकृतौ । वाय्वोः, अध्वर्य्वोः । "लोपो व्योर्वलि" ( ६।१।६६ ) इति यलोपो मा भूदिति ॥**

( प्रदीपः ) विधिमात्र इति । अचः परस्मिन् पूर्वस्येत्यनेन स्थानिवद्भावे विहिते पुनर्विधाविति वचनं नियमार्थं स्थानिवदेव यथा स्यात्, मा भूत् स्वाश्रयमित्यर्थः ॥ अनाश्रीयमाणायामिति । [15]कार्ये निमित्तत्वेनेत्यर्थः ॥

( उद्योतः ) ननु विधि[16]ग्रहणे कृतेऽपि कथं स्थानिवत्त्वेन स्वाश्रयनिवृत्तिरत आह—अच इति । अचः परस्मिन्पूर्व - इत्येको योगः । पूर्वेति लुप्तविभक्तिकम् । विधौ - इति द्वितीयः । तेन स्थानिवदेवेति नियमाश्रयणमिति भावः ॥ भाष्ये—विधिमात्रे - इत्यस्य

---

१ आदेशे स विवक्षित इति सूचयितुमाह—स्थानीति ॥ स्थान्यादेशयोरित्यस्यार्थं सूचयन्नाह—ठगादीति ॥ छाया ॥

२ आदेशे चेति । अत एव नैषादकर्तृक इत्यस्य सिद्धिरित्यन्यत्र स्पष्टम् ॥ छाया ॥

३ इदं चेति । तत्र हीके कृते भस्याढे इत्येव सिद्धे ठक्पदं न कार्यमित्याशङ्क्य माथितिकादिवत्कादेशो न स्यादित्युक्तम् । वर्णपक्षेऽल्विधित्वादस्थानिवत्त्वात् ॥ संघातपक्षे संनिपातेति नेति कैयटः ॥ तथा चेदमपि न फलमिति भावः ॥ छाया ॥

४ पदान्तरेति । प्रत्यासत्त्या परपदस्यस्यैवेत्यर्थः ॥ छाया ॥

५ अत्र बीजमाह—पदेऽन्त इति । अत एव वेतस्वानित्यादिसिद्धिः ॥ छाया ॥

६ दीक्षिताद्युक्तिमाह—केचित्त्विति ॥ छाया ॥

७ इदं खण्डयति—वस्तुत इति ॥ विगणय्येत्यादि तु तदनित्यत्वेन सिद्धमिति भावः ॥ छाया ॥

८ ननु वेत्तेर्हि लङ्येवानन्तरो झिः संभवति, तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानान्नात्रापत्तिः । न च सिचा साहचर्याल्लुङोऽपि ग्रहणमस्त्विति वाच्यम् । विप्रतिषेधे परमिति परसाहचर्यस्य बलीयस्त्वादिति चेत् ॥ न, पञ्चमीसमासप्रयोजनतयाऽपीपचन्नित्युदाहृतवतो भाष्यकारस्येह साहचर्यस्य नियामकताया असंमतत्वात् । साहचर्यं सर्वत्र नाश्रीयत इत्यर्थस्य क्त्वोर्थग्रहणेन ज्ञापितत्वाच्च । अत एव दीधीवेवीटामिति सूत्रे धातोरिटो न ग्रहणम् ॥ श० कौ० ॥

९ कैयटरीत्याह—निमीति ॥ छाया ॥

१० यथाश्रुतकैयटं खण्डयति—वस्तुत इति ॥ छाया ॥

११ अत्र बीजं कथयन्ननयोस्तारतम्यमाह—तदंश इति ॥ परत्वांश इत्यर्थः ॥ छाया ॥

१२ कैयटसंमतमपीदमित्याह—अत एवेति ॥ तथैव—तस्येष्टत्वादेवेत्यर्थः ॥ तस्य—न च तस्मादित्यस्य ॥ छाया ॥

१३ मात्रे—कार्त्स्न्ये ॥ छाया ॥

१४ अपिना आश्रयणसमुच्चयः ॥ छाया ॥

१५ नन्वादेशे प्रकृतेराश्रयणमेवात आह—कार्ये इति ॥ छाया ॥

१६ विधीति । स्थानिन आश्रयणानाश्रयणयोः स्थानिवत्त्वार्थमित्यादिः ॥ छाया ॥

विवरणमनाश्रीयमाणायामपि प्रकृताविति । स्थानिनीत्यर्थः ॥ **वाय्वोरिति** । अत्र न बहिरङ्गासिद्धत्वं, उभयोर्वर्णनिमित्तत्त्वेन समत्वात् । पूर्वं पूर्वमन्तरङ्गमित्यपि युगपत्प्राप्तौ पूर्वमन्तरङ्गप्राप्तिनियामकं, न तु जातस्यासिद्धत्वे - इति भावः ॥

( भाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ॥**

---

( स्वविधौ स्थानिवद्भावनिरूपणम् )

( आक्षेपबाधकं भाष्यवार्तिकम् )

***॥ अपरविधाविति तु वक्तव्यम् ॥***

( भाष्यम् )

**किं प्रयोजनम् ?**

**स्वविधावपि स्थानिवद्भावो यथा स्यात् ॥**

( उद्योतः ) भाष्ये **स्व**शब्देन स्थान्यादेशश्चोच्यते । **अपरविधाविति तु वक्तव्यमि**त्यारभ्य कथं **यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानी**त्यन्ता एकदेश्युक्तिः, आयन्नासन्नित्यनयोरसिद्धवत्सूत्रेण सिद्धेः ॥ धिन्वन्तीत्यादावुकारवृत्त्यार्धधातुकत्वस्यालधर्मत्वेन वस्य दुर्लभत्वादिटोऽप्राप्तेः । सिद्धान्तिनाऽपि भावसाधनविधिशब्दस्याप्युपादानमत्रेति सिद्धान्तं बोधयितुं तन्नोक्तम् ॥

( आक्षेपभाष्यम् )

**कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोजनानि ?**

( प्रयोजनोद्देशभाष्यम् )

**आयन्, आसन् । धिन्वन्ति, कृण्वन्ति । दध्यत्र, मध्वत्र । चक्रतुः, चक्रुः ॥**

( प्रथमप्रयोजनोपपादनभाष्यम् )

**इह तावत्—आयन् आसन्निति । इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वात् "आडजादीनाम्" ( ६।४।७२ ) इत्याट् न प्राप्नोति ॥ स्थानिवद्भावाद् भवति ॥**

(प्रदीपः) **आयन्निति** । अजादेरेवाड्विधानात्स्वविधिराट् ॥

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**धिन्वन्ति कृण्वन्तीति । यणादेशे कृते वलादिलक्षण इट् प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

( उद्योतः ) भाष्ये—**धिन्वन्तीत्यादि** । यद्यप्यङ्गात्परस्य वलादेरिडित्यर्थात्पूर्वविधावित्युक्तावपि पञ्चमीसमासेनेदं सिध्यति, तथापि अङ्गसंज्ञानिमित्तस्येत्यर्थ इत्यभिप्रायेणेदमित्याहुः ॥

( तृतीयप्रयोजनोपपादनभाष्यम् )

**दध्यत्र मध्वत्रेति । यणादेशे कृते संयोगान्तलोपः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

( प्रदीपः ) **दध्यत्रेति । पूर्वत्रासिद्धे न स्थानिवदि**त्येतदत्र नास्ति, **तस्य दोषः संयोगादिलोपलत्वणत्वे**ष्वित्यत्र संयोगादिलोपस्य संयोगोपलक्षितलोपोपलक्षणार्थत्वात् । पदान्तविधिं प्रति नेत्ययमपि प्रतिषेधोऽत्र नास्ति । पदान्ते विधातव्ये स प्रतिषेधः । न च लोपोऽभावात्मकत्वात्पदान्तः ॥

( उद्योतः ) **उपलक्षणार्थत्वादिति** । इदमत्रत्यग्रन्थयोजनमात्रम्, न त्वयं सिद्धान्त इति बोध्यम् । अत एवादिपदं चरितार्थम् । यणः **प्रतिषेधो वाच्य** इतिवदिदमनाश्रित्येदमिति तत्त्वम् ॥ **पदान्ते विधातव्ये इति** । पदचरमावयवे कर्तव्ये - इत्यर्थः ॥

( चतुर्थप्रयोजनोपपादनभाष्यम् )

**चक्रतुः चक्रुः । यणादेशे कृते अनच्कत्वात् द्विर्वचनं न प्राप्नोति ॥ स्थानिवद्भावाद् भवति ॥**

( प्रदीपः ) **चक्रतुरिति** । अत्र साच्कस्य द्विर्वचनमिति स्वविधिर्भवति । ततश्च **द्विर्वचनेऽची**त्येतन्न वक्तव्यं भवति ॥ नन्वपरविधावित्युच्यमाने कथं बेभिदितेत्यादयः संगृह्यन्ते । उच्यते—निमित्तापेक्षया परत्वविज्ञानात् । तथाहि—**बेभिदिते**त्यत्राकारलोपस्य निमित्तमार्धधातुकम् । न च तस्मात्परस्य विधिः । किं तर्हि ? तस्यैवेति सिद्धः स्थानिवद्भावः । एवं **माथितिकः**-**अपीपचन्नि**त्यत्र बोद्धव्यम् । **हे गौरि**त्यत्र तु स्थानिवद्भावः प्राप्तः, एङिति प्रत्याहारग्रहणान्न भवति । **बाभ्रवीया** इत्यत्र **योऽत्रादेशो नासावाश्रीयते** इति परिहारः ॥ **नैधेय** इत्यत्र तु निमित्तात्परस्य ढको विधिरिति स्थानिवत्त्वाभावः ॥

( उद्योतः ) **ततश्चेति** । एवं च तत्सूत्राकरणलाघवानुरोधेनापरविधावित्येव वक्तव्यमिति भावः ॥ निन्यतुरित्यादिसिद्धये

---

१ प्रकृताविस्यस्यार्थमाह—**स्थानिनीति** ॥ छाया ॥

२ एतद्भाष्यलब्धमेवाह—**पूर्वमिति** ॥ **असिद्धत्वे** नियामकमित्यनुषज्यते ॥ छाया ॥

३ विनिगमनाविरहादाह—**स्थान्यादेशश्चेति** ॥ छाया ॥

४ भाष्यं दूषयति—**अपरेति** ॥ छाया ॥

५ 'धेधातुकस्यालधर्मे' इति ज. पाठः ॥

६ नन्वेतदज्ञानेन पूर्वपक्षेऽपि सिद्धान्तिनेदं कुतो नोक्तमत आह—**सिद्धान्तीति** ॥ अपिना कर्मसाधनपरिग्रहः ॥ छाया ॥

७ अपिनैतत्समुच्चयः ॥ **पञ्चमीति** । पूर्वविधावित्यत्र तस्यावश्यकत्वस्य फल्गुत्वादिति भावः ॥ छाया ॥

८ सिद्धान्तमाह—**निमित्तस्येति** ॥ छाया ॥

९ तत्र बीजमाह—**अत एवेति** । तस्यासिद्धान्तत्वादेवेत्यर्थः ॥ वार्तिके इति भावः ॥ छाया ॥

१० नन्वेवं का गतिर्भाष्यस्यात आह—**यण इति** ॥ छाया ॥

११ कार्यातिदेश इति सिद्धान्तेनाह—**निन्यतुरिति** ॥ अत्रेयङ्विशिष्टस्यैव द्वित्वं स्यादिति भावः ॥ छाया ॥

तस्यावश्यकत्वाच्चिन्त्यमिदम् । भाष्ये तु संभवमात्रेणेदमुदाहृतम् । उरदत्वमपि स्थानिवद्भावेनैव सुलभं लक्ष्यविशेषे । लक्ष्यानुरोधादयमपि रूपातिदेश इति वा कैयटाशयः ॥ स्थान्यादेशयोरन्यतरापेक्षया परस्वमाश्रित्य शङ्कते—नन्विति ॥ निमित्तेति । निमित्तं च यस्य स्थानिवत्त्वं तदीयं ग्राह्यम् । किंत्विदमयुक्तम् । एतन्न्यासखण्डनायाग्रे भगवता निमित्तस्यावधिताया वक्ष्यमाणतया तदनाश्रयणेनैवैतद्भाष्यप्रवृत्तेः । अपरविधाविति न्यासेऽपि पञ्चमीसमासस्य वक्तुं शक्यत्वे तत्संग्रह इत्युचितम् ॥ वार्तिकं तु स्वविधिसंग्रहार्थमिति स्पष्टमेव ॥ न चात्र पञ्चमीसमासे हे गौरित्यत्र स्वस्मात्परस्य विधावपि स्थानिवत्त्वं स्यादिति वाच्यम् । पञ्चमीसमासानित्यत्वेनादोषात् ॥ प्रत्याहारग्रहणादिति । से स्मृतो-इत्यादीनामनभिधानाश्रयेणैतदुक्तम् ॥ ननु वाभ्रवीया इत्यत्रापत्यस्येति लोपेऽवादेशस्य स्थानिवत्त्वं स्यात् । अवादेशनिमित्तयादिप्रत्ययसंबन्धिन एव विधेः सत्त्वात् । न च नपदान्तेति निषेधः, स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेधादत आह—बाभ्रवीया इति ॥ ढको विधिरिति । विधिशब्दो भावसाधनः, संबन्धसामान्यषष्ठ्या समास इति भावः ॥

( अनिष्टापत्तिभाष्यम् )

**यदि तर्हि स्वविधावपि स्थानिवद्भावो भवति । 'द्वाभ्याम्, देयम्, लवनम्' अत्रापि प्राप्नोति ॥**

**द्वाभ्यामिति । अत्रात्वस्य स्थानिवद्भावाद् दीर्घत्वं न प्राप्नोति ॥**

**देयमिति । ईत्वस्य स्थानिवद्भावाद् गुणो न प्राप्नोति ॥**

**लवनमिति । अत्र गुणस्य स्थानिवद्भावादवादेशो न प्राप्नोति ।**

( अनिष्टापत्तिवारणभाष्यम् )

**नैष दोषः । स्वाश्रया एते विधयो भविष्यन्ति ॥**

( प्रदीपः ) **स्वाश्रया इति** । विधिग्रहणं स्वाश्रयनिवृत्त्यर्थं व्याख्यातमिति स्वाश्रया इत्यन्यथा व्याख्यायते—शब्दानां स्वं-आत्मीयं लक्षणम् । तेन ज्ञापकाश्रया इत्यर्थः । **"द्वयोरेकस्य डतरच्" "देयमृणे" "क्रितौ लवने"** इत्यादिज्ञापकमादेशाश्रयकार्यभावस्य ॥

( उद्द्योतः ) द्वयोरेकस्येत्यादिनिर्देशात् स्वविधौ स्थानिवत्त्वमनित्यमिति वाभ्रवीयनैधेययोर्न दोष इति परे ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम्—अपरविधाविति ।**

( समाधानभाष्यम् )

**न वक्तव्यम् । पूर्वविधावित्येव सिद्धम् ॥**

**कथम् ?**

**न पूर्वग्रहणेनादेशोऽभिसंबध्यते—'अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद् भवति ।**

**कुतः पूर्वस्य ? आदेशात्' इति ॥**

**किं तर्हि ?**

**निमित्तमभिसंबध्यते-'अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद् भवति ।**

**कुतः पूर्वस्य ? निमित्तात्' इति ॥**

( प्रदीपः ) **निमित्तमिति** । आयन्नित्यादिषु च निमित्तात् पूर्वस्य विधिरिति सिद्धः स्थानिवद्भावः ॥

( आक्षेपभाष्यम् )

**अथ निमित्तेऽभिसंबध्यमाने यत्तदस्य योगस्य मूर्द्धाभिषिक्तमुदाहरणं तदपि संगृहीतं भवति ॥**

**किं पुनस्तत् ?**

**पट्व्या-मृद्व्येति ॥**

( प्रदीपः ) **मूर्द्धाभिषिक्तमिति** । सर्ववृत्तिषूदाहृतत्वात् । पटु-ई-आ-इति स्थिते परयणादेशेनाकारस्य व्यवधानात्प्रश्नः ॥

---

१ नन्वेवं सत्सत्त्वे कथं भाष्ये चक्रुरित्याद्युक्तिः, तेनैव सिद्धत्वादित्यत आह—**भाष्ये त्विति** ॥ छाया ॥

२ एवमुपपादनं कृत्वोदाहरणमन्यथापि योजयति—**उरदत्वमिति** ॥ द्वित्वे कर्तव्ये इति तत्रोक्तेस्तेनासिद्धिः ॥ छाया ॥

३ कैयटमपि योजयति—**लक्ष्येति** । निन्युतुरित्यादौ, न तु सर्वत्रेत्यर्थः ॥ तत्र बीजं—**लक्ष्येति** ॥ छाया ॥

४ यत्किंचिन्निमित्तग्रहणेन दोषतादवस्थ्यादाह—**निमित्तं चेति** ॥ छाया ॥

५ कैयटं दूषयति—**किंत्विति** ॥ छाया ॥

६ नन्वेवं कथं दोषनिरासोऽत आह—**अपरेति** ॥ छाया ॥

७ नन्वेवं वार्तिकवैयर्थ्यमत आह—**वार्तिकं त्विति** ॥ छाया ॥

८ एवं सत्यतिप्रसङ्गमाह—**न चेति** ॥ छाया ॥

९ स्यादेतत्—पञ्चमीसमासाङ्गीकारे दूषणमपि । तथाहि—विगणय्येत्यादि न सिध्यति । ल्यपि लघुपूर्वादित्ययादेशे कर्तव्ये अल्लोपस्य स्थानिवद्भावात् । न चारम्भसामर्थ्यम्, अनुगमय्येत्यादौ मिति चरितार्थत्वात् ॥ अत्रोच्यते—पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यम्, **निष्ठायां सेटीति** ज्ञापकात् । तथाहि—तत्र सेटीति पदं न तावदनिड्व्यावृत्त्यर्थं, णिजन्तात्तदसंभवात् । न च संज्ञपितः पशुरित्यत्र **यस्य विभाषेति**ण्निषेधः संभवत्येव । **सनीवन्तर्धे**ति विकल्पितेट्कत्वादिति वाच्यम् । **यस्य विभाषे**ति सूत्रे **एकाच** इत्यनुवृत्तेः । अन्यथा दरिद्रित इतीण् न स्यात् । तस्मात्कालावधारणार्थं सेड्ग्रहणम् । इति कृते णिलोपः, ननु ततः प्रागिति । अन्यथा कारितमित्यादौ णिलोपोत्तर**मेकाच उपदेश** इतीण्निषेधः स्यादिति सेटीति वदतो भावः । पूर्वस्माद्विधौ स्थानिवत्त्वे तु न प्राप्नोति निषेधः, णिचा व्यवधानात् । तस्मात्सेड्ग्रहणमनित्यतां ज्ञापयतीति स्थितम् ॥ श० कौ० ॥

१० ननु से इत्याद्यर्थं प्रत्याहारग्रहणमावश्यकमत आह—**से इति** ॥ छाया ॥

११ तदनभिधाने मानाभावात्कर्मसाधने दोषाच्च कैयटासंगतेराह—**द्वयोरेकस्येति** ॥ छाया ॥

(उद्द्योतः) भाष्ये—अथेत्यादिना संगृहीतमित्यन्तेन काका प्रश्नः। तदेवाह—व्यवधानात्प्रश्न इति ॥

(समाधानभाष्यम्)

बाढं संगृहीतम् ॥

(समाधानबाधकभाष्यम्)

ननु च ईकारयणा व्यवहितत्वान्नासौ निमित्तात् पूर्वो भवति ॥

(समाधानसाधकभाष्यम्)

व्यवहितेऽपि पूर्वशब्दो वर्तते । तद्यथा—पूर्वं मथुरायाः पाटलिपुत्रमिति ॥

(प्रदीपः) व्यवहितेऽपीति । 'पूर्वस्य' इति साक्षान्निर्देशात्तस्मिन्निति निर्दिष्ट इत्यस्यानुपस्थानादिति भावः ॥

(उद्द्योतः) साक्षादिति । एवं च उत्तरस्येत्यस्यानुपस्थाने तदङ्गं निर्दिष्टग्रहणमपि नोपतिष्ठत इति भावः ॥ तस्मादिति सूत्रे तस्मिन्नित्यतोऽनुवर्तमानस्य निर्दिष्टस्येत्यर्थः ॥ स्वरेग्रहणाच्च लिङ्गादत्र सूत्रे तदनुपस्थितिर्बोध्या ॥

(पक्षान्तराभ्युपगमभाष्यम्)

अथवा—पुनरस्तु आदेश एवाभिसंबध्यते ॥

(आक्षेपभाष्यम्)

कथं यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानि ?

(इत्येकदेशिभाष्यम्)

(अथ सिद्धान्तिभाष्यम्)

नैतानि सन्ति । इह तावत्—आयन्-आसन्-धिन्वन्ति-कृण्वन्तीति ।

अयं विधिशब्दोऽस्त्येवकर्मसाधनः—विधीयते-विधिरिति ।

अस्ति च भावसाधनः—विधानं-विधिरिति ।

तत्र कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति कृत्वा भावसाधनस्य विधिशब्दस्योपादानं विज्ञास्यते—पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवद्भवतीति ॥ एवमादृ भविष्यति । इट्ट च न भविष्यति ॥

(प्रदीपः) भावसाधनस्येति । भावसाधन एव विधिशब्दो व्यापकत्वादाश्रीयते । 'पूर्वस्य' इति च षष्ठी संबन्धसामान्ये विज्ञायते ॥ इट्ट च नेति । विधिग्रहणं स्वाश्रयनिवारणार्थमितीडभावः ॥

(उद्द्योतः) संबन्धसामान्ये इति । न तु कर्मणीत्यर्थः । तेन सर्वलक्ष्यसिद्धिरिति भावः ॥ भाष्ये—पूर्वः स्यादिति । पूर्वो न स्यादित्यस्याप्युपलक्षणम् । तदाह—स्वाश्रयनिवारणार्थमिति । एवं च प्रकृतसूत्रे उभयोरपि ग्रहणं बोध्यम् ॥ कैयटे—भावसाधन एवेति । एवशब्दोऽप्यर्थ इति केचित् ॥ न पदान्तसूत्रे एतत्स्फुटं वक्ष्यते ॥

(सिद्धान्तिशेषभाष्यम्)

दध्यत्र चक्रतुः चक्रुरिति परिहारं वक्ष्यति ॥

(उद्द्योतः) भाष्ये—परिहारं वक्ष्यतीति । दध्यत्रेत्यत्र—यणः प्रतिषेधारम्भः । चक्रतुरित्यादौ—द्विर्वचनेऽचीति ॥

(सूत्रप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

कानि पुनरस्य योगस्य प्रयोजनानि ?

(प्रयोजनश्लोकभाष्यम्)

॥ * ॥ स्तोष्याम्यहं पादिकमौदवाहिं
ततः श्वोभूते शातनीं पातनीं च ।
नेताराावागच्छतं धारणिं रावणिं च
ततः पश्चात्स्रंस्यते ध्वंस्यते च ॥ १ ॥*॥

(उपपादनभाष्यम्)

इह तावत्—पादिकं-औदवाहिं-शातनीं-पातनीं-धारणिं-रावणिमिति । अकारलोपे कृते पद्भावः-ऊठ्-अल्लोपः-टिलोप इत्येते विधयः प्राप्नुवन्ति ॥ स्थानिवद्भावान्न भवन्ति ॥

स्रंस्यते-ध्वंस्यते । णिलोपे कृते "अनिदितां हल उपधायाः क्ङिति" इति नलोपः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥

(प्रदीपः) स्तोष्यामीति । कथयिष्यामीत्यर्थः ॥ पादिकमिति । पादोऽस्यास्तीति ठन् । दीव्यत्यादिषु वाऽर्थेषु ठक् ॥ चरत्यर्थे तु पदिक इत्येव भवति । पर्पादित्वात् ॥ उदकं

१ प्रश्नबोधकाभावादाह—भाष्येऽथेत्येति ॥ छाया ॥

२ एवं च-साक्षान्निर्देशे च ॥ छाया ॥

३ ननु तस्मिन्नित्यस्यैवायं विषयोऽत आह—तस्मादितीति ॥ छाया ॥ तस्मादित्यतः प्राक् 'तस्मिन्नितीति' इति प्रतीकपाठो मुद्रितेषु ॥

४ नन्वङ्गस्याप्यनुवृत्तिरन्यत्रेष्टैवात आह—स्वरग्रहेति ॥ छाया ॥

५ न पदान्तसूत्रे इति भावः । (र. ना.)

६ तावतापि तत्संग्रहापत्तेराह—न त्विति ॥ छाया ॥

७ न्यूनतां मिथोविरोधं च परिहरति—पूर्वो नेति ॥ छाया ॥

८ भाष्यकैयटतात्पर्यमाह—एवं चेति । उभयातिदेशे चेत्यर्थः ॥ छाया ॥

९ भावसाधनकर्मसाधनयोरित्यर्थः । (र. ना.)

१० नन्वेवं प्रागुक्तकैयटासंगतिरत आह—कैयट इति ॥ केचित्-भाष्यतत्त्वविदः ॥ छाया ॥

११ अत एवाह—न पदान्तेति ॥ छाया ॥

१२ इत्यत्र-इत्यादौ ॥ छाया ॥

१३ 'भवति पर्पादिभ्यष्ठन्नित्यत्र पादः पच्चेति पद्भावविधानात्' इति ग. पाठः । क. पुस्तके 'भवति पद्भाव इके चरतावुपसंख्यानमिति पद्भावः' इति पाठः ॥

वहतीत्यण् । संज्ञायामुदभावः, अपत्ये इञ् ॥ श्वोभूतिर्नाम शिष्यः, तस्यामन्त्रणम् ॥ शातनपातनशब्दाभ्यां गौरादित्वात् ङीष् ॥ नेताराविति शिष्ययोरामन्त्रणम् । नयेते गुरुमुखात् शास्त्रार्थं— नेतारौ ॥ धारणरावणशब्दाभ्यामिञ् ॥

( उद्द्योतः ) चरत्यर्थे इति । पद्भाव इकेचरतावित्यु-पसङ्ख्यानादिति भावः ॥ गौरादित्वादिति । शदेर्ण्यन्ताद्युजिति-भावः ॥ टित्वान्ङीबिति सप्तमे आकरः ॥ शातनीमित्यादावल्लो-पोऽन इत्यल्लोपप्राप्तिः ॥ धारणिमित्यादि । धृरुभ्यां ण्यन्ताभ्यां ल्युटि णत्वस्यासिद्धत्वान्नस्तद्धित इत्यस्य प्राप्तिः ॥

( प्रयोजननिराकरणभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । "असिद्धवदत्राभात्" इत्यनेनाप्येतानि सिद्धानि ॥**

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—याज्यते-वाप्यते । णिलोपे कृते '—यजादीनां किति' इति संप्रसारणं प्राप्नोति॥ स्थानिवद्भावान्न भवति ॥**

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । यजादिभिरत्र कितं विशेषयिष्यामः—यजादीनां यः किदिति ॥**

**कश्च यजादीनां कित् ?**

**यजादिभ्यो यो विहित इति । न चाऽयं यजादिभ्यो विहितः ॥**

( उद्द्योतः ) भाष्ये—**यजादिभ्यो विहित इति** । एवं च वच्यादिभ्यो ण्यन्तेभ्यः किपि संप्रसारणं न भवत्येव । किब्भाव एवेत्यन्ये ॥

( मूर्धाभिषिक्तप्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—पट्व्या मृद्व्येति । परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति, ईकारयणा व्यवहितत्वात् ॥ स्थानिवद्भावाद्भवति ॥**

( आक्षेपभाष्यम् )

**किं पुनः कारणं परस्य तावद्भवति, न पुनः पूर्वस्य ?**

( आक्षेपनिराकरणभाष्यम् )

**नित्यत्वात् । नित्यः परयणादेशः । कृतेऽपि पूर्वयणादेशे प्राप्नोति, अकृतेऽपि प्राप्नोति । नित्यत्वात्परयणादेशे कृते पूर्वस्य न प्राप्नोति ॥ स्थानिवद्भावाद्भवति ॥**

( असिद्धपरिभाषया सूत्रप्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । 'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति । असिद्धत्वाद्बहिरङ्गलक्षणस्य परयणादेशस्यान्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति ॥**

**अवश्यं चैषा परिभाषा आश्रयितव्या स्वरार्थम् । कर्त्र्या - हर्त्र्येति "उदात्तयणो हल्पूर्वात्" इत्येष स्वरो यथा स्यात् ॥**

( प्रदीपः ) **असिद्धं बहिरङ्गेति । नित्यादप्यन्तरङ्गं बलीय** इति न्यायात् प्रथमं पूर्वस्य यण् इति भावः ॥ **अवश्यं चेति** । स्थानिवद्भावाश्रयणेऽपीत्यर्थः ॥ **कर्त्र्येति** । कर्तृ-ई-आ-इति स्थिते यदि नित्यत्वात् पूर्वं परयणादेशः स्यात्तस्य च स्थानिवद्भावात् पूर्वस्य यण्, तत्र उदात्तयणोऽनन्तर आकारो न भवतीत्युदात्तत्वं न स्यात् । यदा त्वन्तरङ्गत्वात् पूर्वं पूर्वयणादेशस्तदा ङीपः 'उदात्तयणो-' इति उदात्तत्वं, तस्यापि यणि कृते आकारस्योदात्तत्वमिति सिद्धमिष्टम् ॥

( उद्द्योतः ) **नित्यादपीति । नाजानन्तर्ये** इति निषेधस्तु अनित्यो नास्त्येव वेति भाष्याशयः ॥ पूर्वनिमित्तकार्यत्वमात्रान्तरङ्गत्वं विवक्षितम् ॥

( सूत्रप्रयोजनवादिभाष्यम् )

**अनेनापि सिद्धः स्वरः ॥**

**कथम् ?**

( सिद्ध्युपायश्लोकवार्तिकम् )

## *॥ आरभ्यमाणे नित्योऽसौ ॥*

( व्याख्याभाष्यम् )

**आरभ्यमाणे त्वस्मिन् योगे नित्यः पूर्वयणादेशः । कृतेऽपि परयणादेशे प्राप्नोति, अकृतेऽपि ॥**

( प्रदीपः ) **अनेनापीति** । सति स्थानिवत्त्वे पूर्वयणादेशस्यापि नित्यत्वं स्यादित्यर्थः ॥

( उद्द्योतः ) उदाहरणत्ववादी आह—भाष्ये—**अनेनापीति ॥ सति स्थानिवत्त्वे इति** । एवं च द्वयोरपि नित्यत्वेनोच्चारणक्रमे प्राथम्यात्पूर्वं पूर्वयणादेश एवेति भावः ॥

( प्रयोजननिराकर्तृभाष्यम् )

**परयणादेशोऽपि नित्यः । कृतेऽपि पूर्वयणादेशे प्राप्नोति, अकृतेऽपि ॥**

( प्रदीपः ) इतर आह—**परयणादेशोऽपीति** ॥

( उद्द्योतः ) **इतरः**—उदाहरणत्वखण्डनवादी ॥

१ 'खात् शास्त्रार्थमिति नेतारौ' इति क. ग. पाठः ॥

२ कैयटादेर्विरोधमाह—**टित्वादिति** । ल्युडिति भावः ॥ छाया ॥

३ 'धृरूभ्यां' इति ज. पाठः ॥

४ व्याख्याभेदेन फलभेदनिरासायाह—**किब्भेति** ॥ छाया ॥

५ 'तस्य स्थानिव' इति क. ग. पाठः ॥

६ प्राचां मतेनाह—**अनित्य इति** ॥ सिद्धान्तमतेनाह—**ना**-स्त्येव वेति ॥ **भाष्येति** । **असिद्धं बहिरङ्गेति** कार्ये इत्यर्थः ॥ छाया ॥

७ अपरनिमित्तकत्वरूपान्तरङ्गत्वाभावादाह—**पूर्वेति** । पूर्वस्थितनिमित्तककार्यत्वमित्यर्थः ॥ छाया ॥ 'पूर्वनिमित्तकार्यत्वमत्र' इति घ. प. पाठः ॥

८ नन्वेतावतापि कथमिष्टसिद्धिरत आह—**एवं चेति** । तस्यापि नित्यत्वं चेत्यर्थः ॥ छाया ॥

( सिद्ध्युपायबाधकश्लोकवार्तिकम् )

*॥ परश्चासौ व्यवस्थया ॥*

( व्याख्याभाष्यम् )

व्यवस्थया चासौ परः ॥

( सिद्ध्युपायबाधकश्लोकवार्तिकम् )

*॥ युगपत्संभवो नास्ति ॥*

( व्याख्याभाष्यम् )

न चास्ति यौगपद्येन संभवः[1] ॥

( प्रदीपः ) स[2] एवाह—परश्चासाविति । शब्दपरविप्रतिषेधात् स एव प्राप्नोति । एकमपि यणलक्षणं पूर्वपरविषयभेदाद्भिद्यते । एकस्य च कार्यित्वनिमित्तत्वयोर्विरोधात् परत्वेन व्यवस्था ॥

( उद्द्योतः ) शब्दपरेति । उ[3]च्चारणक्रमीयप्राथम्यस्य शास्त्रेण बाध इति भावः ॥ तत्सूत्रे व्याप्तिन्यायेन सूत्रपाठतः शब्दतश्चोभयविधमपि परत्वं गृह्यत इति तात्पर्यम् ॥ न[4]न्वेवं परं कार्यमित्युच्यते, तत्कथमभेदे स्यादत आह—एकमपीति । व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदादिति भावः ॥ विषयगतं पौर्वापर्यं तदवच्छिन्ने लक्षणे आरोप्यत इत्यत्र तात्पर्यम् ॥ विप्रतिषेधशास्त्रप्रवृत्तियोग्यं—न चास्ति यौगपद्येन—इति भाष्यबोधितं विरोधमुपपादयति—एकस्य चेति । प्रसङ्गे आदेशविधानादादेशसमये स्थानिनोऽसत्त्वम्, निमित्तत्वं च सत्त्वे । सत्त्वासत्वे चैकत्र युगपद्विरुद्धे । एवं च द्वयोर्यणोर्यौगपद्यासंभव इति भावः ॥

( सिद्ध्युपायसाधकश्लोकवार्तिकम् )

*॥ बहिरङ्गेण सिध्यति ॥*

( भाष्यम् )

'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इत्यनेन सिध्यति ॥

( उद्द्योतः ) भाष्ये—बहिरङ्गेण सिध्यतीति । तेनैव 'क[5]र्त्र्या' इति सिध्यति, न सूत्रेणेत्यर्थः ॥ एवं च शब्दतः परत्वमादाय विप्रतिषेधसूत्रस्य नैव प्रवृत्तिरिति तात्पर्यम् ॥

( सूत्रप्रयोजनवादिभाष्यम् )

एवं तर्हि योऽत्रोदात्तयण् तदाश्रयः स्वरो भविष्यति ॥

( उद्द्योतः ) उदाहरणवादी अन्तरङ्गपरिभाषाऽऽश्रयणं विनाऽपि स्वरं साधयति—भाष्ये - एवं तर्हीति ॥

( इष्टानुपपत्तिभाष्यम् )

ईकारयणा व्यवहितत्वान्न प्राप्नोति ॥

( इष्टोपपत्तिभाष्यम् )

'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम् ॥

( उद्द्योतः ) स्वरविधाविति । अस्य स्वरोद्देश्यकविधित्वादिति भावः ॥

( असिद्धपरिभाषावादिभाष्यम् )

सा तर्हि एषा परिभाषा कर्तव्या ॥

( स्थानिवद्भाववादिभाष्यम् )

ननु चेयमपि कर्तव्या—'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति ॥

( असिद्धपरिभाषावादिभाष्यम् )

बहुप्रयोजनैषा परिभाषा । अवश्यमेषा कर्तव्या ॥

( उद्द्योतः ) अवश्यमेवेति । एवं च त[6]यैव सिद्धत्वान्नै[7]तदस्योदाहरणमिति भावः ॥

( असिद्धपरिभाषावादिनो लाघवभाष्यम् )

सा चाप्येषा लोकतः सिद्धा ॥

कथम् ?

प्रत्यङ्गवर्ती लोको लक्ष्यते । तद्यथा—पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रतिशरीरं कार्याणि तानि तावत्करोति, ततः सुहृदाम्, ततः संबन्धिनाम् ॥ प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते । सामान्ये वर्तमानस्य व्यक्तिरुपजायते । व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति । यथैव चाऽऽनुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि । तद्वत्कार्यैरपि भवितव्यम् ॥

( प्रदीपः ) प्रत्यङ्गवर्तीति । प्रत्यासन्नवाची प्रत्यङ्गशब्दः । अङ्गशब्देन प्रत्यासत्तिर्लक्ष्यते, अङ्गानां प्रत्यासन्नत्वात् । अङ्गमङ्गं प्रति—प्रत्यङ्गमित्यव्ययीभावः ॥ प्रतिशरीरमिति । श[8]रीरस्य भोगायतनत्वात् ॥ ततः सुहृदामिति । सौहार्दस्यासत्तिहेतुत्वात् ॥ ततः संबन्धिनामिति । अवश्यकर्तव्यत्वात् ॥ सामान्यभूत इति । नित्येऽपि शब्दार्थसंबन्धे अक्रमेऽप्यर्थप्रतिपादने उपायभावेना[9]सन्तमपि क्रमं प्रकल्प्यायर्थं चाश्रित्योपेयव्यवस्थापनात् । त[10]त्र नागृहीतविशेषणा विशेष्ये बुद्धिः—

१ इतः परं 'कथञ्च सिद्ध्यति' इत्यधिको भाष्यपाठो मुद्रितपुस्तकेषु दृश्यते । प्रामाणिकेष्वदर्शनान्नात्र गृहीतः ॥

२ स एव—इतर एव ॥ छाया ॥

३ तदुक्तयुक्तिं खण्डयति—उच्चारणेति ॥ तत्र बीजमाह—तत्सूत्रे इति । विप्रतिषेधसूत्रे इत्यर्थः ॥ छाया ॥

४ एवं—शब्दपरविप्रतिषेधे ॥ तत्—परकार्यत्वम् ॥ अभेदे—असति शास्त्रभेदे ॥ छाया ॥

५ कर्त्र्येति । तदादि ॥ छाया ॥

६ तयैव—असिद्धमित्यनयैव ॥ अस्याः—स्वरविधावित्यस्याः ॥ छाया ॥

७ 'नैतदस्या उदाहरणं' इति घ. प. पाठः । 'अस्योदाहरणं' इति पाठे-अस्य—स्वरविधाविति वचनस्य नैतदुदाहरणमित्यर्थः ॥

८ नन्वात्मनो व्यापकत्वात्स्वशरीरवत्सुहृदादिशरीरेऽपि संबन्धात्कथं स्वशरीरकार्यं प्रागत आह—शरीरेति ॥ छाया ॥

९ 'नासत्यमपि' इति क. पाठः ॥

१० तदेवोपपादयति—तत्रेति ॥ तेषां मध्य इत्यर्थः ॥ छाया ॥

इत्यादौ सामान्यमभिधीयते । ततस्तदनुरक्ता द्रव्ये प्रतीतिः । लिङ्गसंख्याशक्तीनां चाश्रयो द्रव्यमिति तत्पूर्वमभिधातव्यम् । ततः संख्याऽपेक्षया लिङ्गं समासन्नमिति तदभिधीयते । द्व्यादिसंख्या हि वस्त्वन्तरापेक्षोपजायते । एकत्वसंख्याऽपि वस्त्वन्तरापेक्षद्वित्वादिव्यवच्छेदं करोतीति बहिरङ्गा । सा[1]ऽपि सजातीयपदार्थापेक्षत्वादन्तरङ्गा । कर्मादीनि तु विजातीयक्रियापेक्षणाद्बहिरङ्गाणीति न्यायप्राप्तः क्रमः ॥ **बाह्येनेति** । कर्मत्वादिना । तद्धि क्रियापेक्षणात् बाह्यम् ॥

**( उद्द्योतः ) सा चाप्येषेति** । [2]प्रकृतोदाहरणविषयः पूर्वनिमित्तकमन्तरङ्गमित्यंशो न्यायसिद्ध इति तदनाश्रयणमशक्यमिति भावः ॥ ननु [3]प्रत्यवयववर्ती लोकरूपोऽवयवी लक्ष्यत इति नार्थः, प्रकृतानुपयोगादित्यत आह—**प्रत्यासन्नेति** ॥ **अङ्गानामिति** । अङ्गिनं प्रतीति शेषः ॥ **अङ्गमङ्गमिति** । प्रत्यासन्नप्रत्यासन्नवर्ती [4]तत्कार्याभिनिविष्टो लोको दृश्यत इति भावः ॥ **प्रत्यासन्नत्वं** च [5]प्रथमोपस्थितत्वरूपम् ॥ [6]भाष्ये—**शरीरं प्रतीत्यन्वयः** । प्रतियोगे द्वितीया । **भोगः**–सुखादि[7]साक्षात्कारः ॥ **आसत्तिः**–प्रथमोपस्थितिः । युगपदुपस्थिताविदम् ॥ क्रमेणोपस्थितावपि आसत्तिवशादेव पूर्वं सुहृदामुपस्थितिरिति बोध्यम् ॥ **ननु अन्वितस्य बाह्यार्थेन योगो भवती**त्ययुक्तं, शब्दार्थसंबन्धस्य नित्यत्वात्; [8]शब्दस्य विरम्यव्यापाराभावात् युगपदेव सकलार्थप्रतीतेः क्रमाभिधानमप्यसङ्गतमित्यत आह—**नित्येऽपीति** ॥ **असन्तमपीति** । **असत्यमपी**ति पाठान्तरम् । शब्दजन्यबोधे वस्तुगत्याऽसत्त्वादित्यर्थः ॥ किंतु शास्त्रवासनाकल्पितोऽयं प्रक्रियादशायां क्रमः, [9]अर्थवदुद्देश्यकप्रातिपदिकसंज्ञोद्देश्यकङीबाद्युद्देशेन शास्त्रे स्वादिविधानादिति बोध्यम् ॥ [10]वस्तुतः प्रकृतितदर्थाद्यप्यसत्यमेव कुतस्तत्क्रमस्य सत्यतेत्याह—**प्रकृत्याद्यर्थं चेति** । **असत्यमपी**त्यनुकृष्यते ॥ भाष्ये—**सामान्यभूतेर्थे वर्तत इति** । **वर्तनं** नाम सामान्याभिधानम् ॥ **विशेष्ये**–विशेषणविशिष्टे, तदैव विशेष्यत्वात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादिति भावः ॥ **तदनुरक्तेति** । सामान्यस्य कार्यानर्हत्वाद्व्यक्तिस्त[11]दाश्रयतया शब्दार्थत्वेन कल्प्यत इति भावः ॥ भाष्ये–**उपजायत** इत्यस्य बोधविषयो[12] भवतीत्यर्थः ॥ **व्यक्तस्येति** । द्रव्यस्य सतो बुद्ध्यारूढस्येत्यर्थः ॥ **तत्पूर्वमिति** । आश्रयप्रतीत्युत्तरमेव तदाकाङ्क्षणादिति भावः ॥ **वस्त्वन्तरेति** । स्वसमवायिकारणनानावस्त्वपेक्षयेत्यर्थः ॥ एकत्वस्य तत्त्वाभावादाह—**एकत्वेति** । एवं च प्रयोजनापेक्षया साऽपि बहिरङ्गेत्यर्थः ॥ **सजातीयेति** । द्रव्य[13]त्वेन स्वाश्रयत्वेन वा सजातीयत्वम् ॥ ननु लिङ्गादिभिरेकार्थसमवायाविशेषात्कथं शक्तेर्बाह्यत्वमत आह—**कर्मादीनि त्विति** ॥ **न्यायप्राप्तः क्रम इति** । शास्त्रकृत्कल्पितन्यायप्राप्तः प्रक्रियादशायामित्यर्थः ॥ अनेन विशिष्टबुद्धौ विशेषणज्ञानकारणत्वाद्यपि तान्त्रिककल्पितमिति सूचितम् ॥ भाष्ये–**यथैवेति** । **अर्थानां**–लिङ्गसङ्ख्याकारकाणाम् । **प्रादुर्भावः**–ज्ञानम् ॥ **शब्दानामपि**–तद्बोधकस्त्रीप्रत्ययविभक्तीनामपि । अस्य **प्रादुर्भाव** इति शेषः । **तद्वत्कार्यैरपी**त्यस्य तयैवानुपूर्व्येत्यर्थः । येन [14]क्रमेण शब्दोपस्थितिस्तेनैव क्रमेण कार्यमिति पूर्वमीकारनिमित्तको यणिति भावः ॥ [15]तत्र **पदस्यैव विभज्यान्वाख्याने सर्वेषां युगपत्प्राप्तावनया[16] व्यवस्था** । क्रमेणान्वाख्याने तु **पूर्वप्रवृत्तिकत्वरूपमन्तरङ्गत्वं पूर्वयणादेशस्य** बोध्यम् । **असिद्धत्वं** परयणादेशस्य निमित्ताभावादप्राप्तत्वरूपं बोध्यम् । अत एव वाय्वोरित्यत्र नासिद्धत्वम् । एवंविधा[17]न्तरङ्गत्वस्य दृष्टान्तादिबलेन युगपत्प्राप्तिविषयत्वात् । स्पष्टं चेदं **वाह** ऊठ्सूत्रे कैयटे ॥ यत्त्व[18]नया रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति । तदयुक्तम् । अन्तरङ्गशब्दार्थाभावात् । अङ्गशब्दस्य तत्र निमित्तपरत्वात् ॥

**( सूत्रारम्भवादिभाष्यम् )**

**इमानि तर्हि प्रयोजनानि—प[19]टयति, अवधीत्, बहुखट्वकः ॥**

**( प्रयोजनोपपादकभाष्यम् )**

**पटयति, ल[20]घयति । णिचि टिलोपे कृते "अत उपधायाः" इति वृ[21]द्धिः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

१ **सापि**–संख्यापि ॥ छाया ॥

२ तदर्थान्तरस्य लोकतोऽसिद्धत्वादाह—**प्रकृतोदेति** ॥ अत **एवैषे**ति सफलं तत्र ॥ अत एवाह—**अंश इति** ॥ छाया ॥

३ प्रसङ्गेत्यत्र वीप्सायामव्ययीभाव इत्याह—**प्रत्यवयवेति** ॥ 'अङ्गं प्रतीकोऽवयवः' इति कोशात् ॥ छाया ॥

४ तदर्थमाह—**तदिति** । तत्तदित्यर्थः ॥ छाया ॥

५ तत्स्वरूपं प्रकृतोपयोगि आह—**प्रथमोपेति** ॥ छाया ॥

६ तद्वद्वीप्साऽभ्रमायाह—**भाष्ये शरीरं प्रतीति** ॥ छाया ॥

७ **आदिना** दुःखम् । एवं च तस्य स्वशरीर एवोत्पादाद्भाष्यादौ शरीरपदेन स्वशरीरमिति भावः ॥ छाया ॥

८ **शब्दस्ये**त्यादि मध्यमणिन्यायेनोभयान्वयि ॥ छाया ॥

९ तत्र हेतुमाह—**अर्थवदिति** ॥ छाया ॥

१० इदमभ्युपेत्योक्तमित्याह—**वस्तुत इति** ॥ छाया ॥

११ तत्पदार्थः सामान्यम् । ( र. ना. )

१२ ततस्तदनुपपत्तेराह—**बोधविषेति** ॥ छाया ॥

१३ ननु तस्या विजातीयापेक्षत्वेनापि दृष्टत्वमत आह—**द्रव्यत्वेनेति** ॥ अस्यापि न्यूनत्वादाह—**स्वाश्रयेति** । स्वसंख्यादिभिः सहेति शेषः ॥ छाया ॥

१४ भाष्यतात्पर्यमाह—**येन क्रमेति** ॥ छाया ॥

१५ पक्षभेदेनेदमुपपादयति—**तत्रेति** । प्रागुक्तविषये इत्यर्थः ॥ छाया ॥

१६ **अनया**—लौकिक्या ॥ छाया ॥

१७ अत एवेत्यस्यार्थमाह—**एवं विधेति** ॥ **आदिना** ज्ञापकसंग्रहः ॥ छाया ॥

१८ दीक्षिताद्युक्तिं खण्डयति—**यत्त्विति** ॥ छाया ॥

१९ पटयतीत्युत्तरं 'लघयति' इत्यधिकः ग. पुस्तकपाठः ॥

२० 'लघयतीति' इति ग. पाठः ॥

२१ 'इति विभाषावृद्धिः' इति ग. पाठः ॥

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**अवधीदिति। अकारलोपे कृते "अतो हलादेर्लघोः" इति वृद्धिः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

( उद्योतः ) अवधीदिति । यद्यप्यतो लोप इत्यत्रार्धधातुक इति विषयसप्तमीत्यचो यदिति सूत्रस्थभाष्यात्प्रतीयत इत्यपरनिमित्तकत्वात् कथं स्थानिवत्त्वम्, तथापि विषयसप्तमीत्वेऽपि परबुद्धिनिमित्तकत्वेन परनिमित्तत्वमस्त्येवेत्याशयः ॥ स्वंतन्त्रवधधातुस्तु नास्त्येव । अदन्तत्वे जनिवध्योश्चेति वधिग्रहणमपि न कर्तव्यमेवेति वोध्यम् ॥

( तृतीयप्रयोजनोपपादनभाष्यम् )

**बहुखट्वक। इति "आपोऽन्यतरस्याम्" इति ह्रस्वत्वे कृते "ह्रस्वान्तेऽन्त्यात्पूर्वम्" इत्येष स्वरः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

( उद्योतः ) बहुखट्वक इति—भाष्ये । बहोर्नञ्वदुत्तरपदभूम्नीत्युक्तेरिति भावः ॥

---

( स्थानिवद्भावप्राप्तानिष्टनिराकरणम् )

( आक्षेपभाष्यम् )

**इह—वैयाकरणः सौवश्व इति य्वोः स्थानिवद्भावादायावौ प्राप्नुतस्तयोः प्रतिषेधो वक्तव्यः ॥**

( समाधाने भाष्यवार्तिकम् ॥ )

***॥ अचः पूर्वविज्ञानादैचोः सिद्धम् ॥***

( भाष्यम् )

**योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः। आदिष्टाच्चैषोऽचः पूर्वः ॥**

**किं वक्तव्यमेतत् ?**

**न हि**

**कथमनुच्यमानं गंस्यते ?**

**अच इति पञ्चमी। अचः पूर्वस्य ॥**

( प्रदीपः ) **योऽनादिष्टादिति**। अकृत एवादेशे अचो यः पूर्व इत्यर्थः ॥ अजपेक्षया पूर्वत्वस्येहाश्रयणात् । आदेशनं-आदिष्टं, तत् यस्य नास्ति सोऽनादिष्टः ॥

( उद्योतः ) नन्वादेशस्य सत्त्वात् 'अनादिष्टात्' इत्यनुचितमत आह-**अकृत एवेति**। उपलक्षणमेतदिति भावः ॥ ननु सूत्रे 'अनादिष्टात्' इत्येतदनुपादानात्कथमेतल्लाभोऽत आह—**अजपेक्षयेति**। लक्ष्यानुरोधादिति भावः ॥ कर्मणि क्त अनादिश्यमानादित्यर्थः स्यादत आह—**आदेशनमिति**। बहुव्रीहौ निष्ठेति पूर्वनिपातस्तु न, तत्प्रकरणानित्यत्वात् ॥

( आक्षेपभाष्यम् )

**यद्येवमादेशोऽविशेषितो भवति ॥**

( प्रदीपः ) **आदेश इति**। ततश्च हलादेशोऽपि स्थानिवत् स्यात् ॥

( आक्षेपबाधकभाष्यम् )

**आदेशश्च विशेषितः ॥**

**कथम् ?**

**न ब्रूमः-यत् षष्ठीनिर्दिष्टमज्ग्रहणं तत्पञ्चमीनिर्दिष्टं कर्तव्यम्—इति ॥**

**किं तर्हि अन्यत्कर्तव्यम् ?**

**अन्यच्च न कर्तव्यम्। यदेवादः षष्ठीनिर्दिष्टमज्ग्रहणम्, तस्य दिक्शब्दैर्योगे पञ्चमी भवति-अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति।**

**कुतः पूर्वस्य ?**

**अच इति ॥ तद्यथा—आदेशः प्रथमानिर्दिष्टः, तस्य दिक्छब्दैर्योगे पञ्चमी भवति—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति।**

**कुतः पूर्वस्य ?**

**आदेशादिति ॥**

( प्रदीपः ) **यदेवाद इति**। सादृश्यादेवमुक्तं, शब्दान्तरमेव तु पञ्चम्यन्तमपेक्ष्यते ॥ **तद्यथेति** । यथाऽऽदेशापेक्षया पूर्वत्वे आश्रीयमाणे विभक्तिविपरिणामस्तथाऽजपेक्षयाऽपीत्यर्थः ॥ धिन्वन्तीत्यत्र तु उकारात् पूर्वं यदङ्गं तस्मान्निमित्तत्वेनाश्रिताद्विधिरिति सिद्धः स्थानिवद्भावः ॥ वैयाकरण इत्यत्र तु तन्न भवति। न हीकारात् पूर्वो यो वकारः स कञ्चिन्निमित्तत्वेनाश्रितः ॥

( उद्योतः ) नन्वचः पूर्वत्वविज्ञाने आदेशेन पूर्वत्वस्याविशेषणात् 'तद्यथा' इत्ययुक्तमत आह-**यथेति**। परमतेन दृष्टान्त इति भावः ॥ पूर्वविध्यभावादाह—**धिन्वन्तीति** । अन्यथेडापत्तिरिति भावः ॥ अत्र यद्वक्तव्यम् तदुक्तम् ॥ पञ्चमीसमासाश्रयेण वैयाकरणे

---

१ भाष्यादिति । तत्र ह्यच्ग्रहणं भूतपूर्वाजन्तप्रतिपत्त्यर्थमित्युक्तम् ॥ छाया ॥

२ एतद्भाष्याशयमाह—**परबुद्धीति** ॥ **आशयः—अस्य** भाष्यस्य ॥ छाया ॥

३ ननु स्वतन्त्रस्यैवेदमास्तामिति जनीति निषेधान्नैव दोषोऽत आह—**स्वतन्त्रेति** ॥ लाघवमप्यत्रेत्याह—**अदन्तत्वे इति** ॥छा.॥

४ 'पूर्वत्वविशे' इति ग. पाठः ॥

५ 'अजपेक्षस्य पूर्वं' इति क. पाठः ॥

६ **कर्मणीति** । वर्तमान इति भावः ॥ तदाह—**मानादिति** ॥ छाया ॥

७ 'तथा स्थान्यजपे' इति क. ग. पाठः ॥

८ 'त्यत्रोक्ता' इति क. ग. पाठः ॥

९ कैयटोक्तप्रकारस्य दूषितत्वादाह—**अत्रेति** ॥ आरम्भ इति भावः ॥ छाया ॥

दोषमाशङ्क्याह—वैयाकरणेति । ऐज्विधानसामर्थ्यात्तत्र न भवति स्थानिवत्त्वमिति परे ॥

( भावाभावातिदेशसाधनम् )

( ३३५ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तत्रादेशलक्षणप्रतिषेधः ॥ * ॥

( भाष्यम् )

तत्रादेशलक्षणं कार्यं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः । वाय्वोः । अध्वर्य्वोः । "लोपो व्योर्वलि" इति यलोपः प्राप्नोति ॥

( प्रदीपः ) तत्रेति । अतिदेशेन पराश्रयं कार्यं प्राप्यते, न तु स्वाश्रयं निवर्त्यते । भाष्यकारेण तु विधिग्रहणात् स्वाश्रयकार्याभावः साधितः ॥

( उद्द्योतः ) विधिग्रहणं स्वाश्रयनिवृत्त्यर्थमित्युक्तत्वात्तत्रादेशलक्षणेत्यसङ्गतमत आह—भाष्यकारेण त्विति । इदं वार्तिकमिति न विरोध इति भावः ॥

( वार्तिकैकदेशेन समाधानम् । )

## *॥ असिद्धवचनात्सिद्धम् ॥*

( भाष्यम् )

अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति असिद्धो भवतीति वक्तव्यम् ॥

( ३३६ समाधानबाधकाक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः ॥ * ॥

( भाष्यम् )

असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः कर्तव्यः । पट्व्या - मृद्व्येति ॥

( प्रदीपः ) उत्सर्गेति । उत्सर्गः—स्थानी, स ह्यादेशेनापवादेनेव निवर्त्यते ॥ नन्वीकारयणोऽसिद्धत्वात् विभक्तावेव यण् भविष्यति ॥ नैतदस्ति । पूर्वविधावसिद्धत्वमुच्यते, न त्वानन्तर्ये लौकिके यथा प्रयोग इति नास्ति विभक्तेरानन्तर्यम् ॥ अनुदेश इति । अतिदेश इत्यर्थः ॥

( उद्द्योतः ) निवर्त्येत इति । उत्सृज्यते=निवर्त्यते—इत्युत्सर्ग इति भावः ॥ न त्वानन्तर्ये इति ॥ पूर्वविधावित्युक्तेः शास्त्रीये कार्येऽतिदेशप्रवृत्तिरिति भावः ॥ प्रयोगे इति । उच्चारणे - इत्यर्थः ॥

( समाधानसाधकभाष्यम् )

ननु चैतदप्यसिद्धवचनात्सिद्धम् ॥

( प्रदीपः ) ननु चैतदपीति । शास्त्रासिद्धत्वाश्रयणात् ॥

( ३३७ समाधानबाधकाक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः ॥ * ॥

( भाष्यम् )

असिद्धवचनात्सिद्धमिति चेत् । तन्न ॥

किं कारणम् ?

'नान्यस्यासिद्धवचनादन्यस्य भावः' । न ह्यन्यस्यासिद्धत्वादन्यस्य प्रादुर्भावो भवति । तद्यथा—न हि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति ॥

( प्रदीपः ) नान्यस्येति । कार्यासिद्धत्वाश्रयमेतत् ॥

( उद्द्योतः ) भाष्ये—नहि देवदत्तस्येति । हतेऽपि न जीवनं चेत्, किं वक्तव्यं तदारोपे—इत्यर्थः ॥

( ३३८ आक्षेपोपसंहारवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तस्मात्स्थानिवद्वचनम् ॥ * ॥

( भाष्यम् )

तस्मात्स्थानिवद्भावो वक्तव्यः, असिद्धत्वं च । पट्व्या मृद्व्येत्यत्र स्थानिवद्भावो वक्तव्यः । वाय्वोरध्वर्य्वोरित्यत्रासिद्धत्वम् ॥

( परिहारवार्तिकस्मारकभाष्यम् )

## *॥ उक्तं वा ॥*

किमुक्तम् ?

*स्थानिवद्वचनानर्थक्यं शास्त्राऽसिद्धत्वात्* इति

( प्रदीपः ) उक्तं वेति । शास्त्रासिद्धत्वमाश्रयणीयमित्यर्थः ॥

( उद्द्योतः ) उक्तं वेति । षत्वतुकोरित्यत्र ॥ वचनद्वयकरणापेक्षो विकल्पः ॥

---

१ दोषमिति । अनादिष्टादच इकारात्पूर्वत्वेन वृष्टवकारादेरव्यवहितपरस्यैकारादेरुक्तरीत्यायादेशाद्यप्रसक्तिमित्यर्थः ॥ तथैवाह—ऐज्विधीति ॥ न च तस्याग्रे सामर्थ्यमिति वाच्यम् । द्वारादीनां श्वादेरित्युभयविषये साफल्येऽपि न स्वाभ्यामित्यादिसूत्रचतुष्टयविषयेष्वश्रवणेन वैयर्थ्यमेवेत्याद्युदाहरणप्रदानाशयात् । भूयसा व्यपदेश इति न्यायात् । किंचावध्यवधिमतोः साजात्येन पञ्चमीसमासस्य वेभिदितेत्याद्युदाहरणपरभाष्यप्रामाण्येन च ततः पूर्वत्वेन वृष्टस्य साचकस्यैव ग्रहणेन तत्रादोषः । अत्र च लावयतेर्लौरित्यादेः क्वौ लुप्तमिति लक्ष्यत्वस्य 'अकृत्वा वृद्ध्यावादेशौ णिलोपः कार्यः । ततः प्रत्ययलक्षणेन वृद्धिः' इति खण्डनपरभाष्यमपि मानम् । षत्वतुकोरिति ज्ञापकादन्तरङ्गत्वमनित्यम् । एवं च नित्यत्वाण्णिलोपः । वृद्धिस्तु अकृते णिलोपे उपदेशेन, कृते त्वतिदेशेनेत्यनित्या । वार्तिकप्राप्तिस्तु वक्ष्यमाणरीत्या नेति तस्याशयः । अन्यथोक्तरीत्या ततः पूर्वस्मात्लशब्दादव्यवहितपरौकारस्यावादेशरूपकार्यसत्त्वेन तदावश्यकत्वेन तदसंगतिः स्पष्टैवेत्यन्यत्र विस्तरः ॥ छाया ॥

२ तत्र—वाय्वोरित्यादौ ॥ छाया ॥

३ अस्याशयमाह—अतिदेशेनेति ॥ छाया ॥

४ शङ्कते—विधीति ॥ छाया ॥

( समाधानबाधकभाष्यम् )

**विषम उपन्यासः । युक्तं तत्र यदेकादेशशास्त्रं तुक्शास्त्रे असिद्धं स्यात्, अन्यदन्यस्मिन् ॥ इह पुनरयुक्तम् । कथं हि तदेव नाम तस्मिन्नसिद्धं स्यात् ?**

( प्रदीपः ) **तदेवेति** । सकृत्पाठापेक्षयैतदुच्यते । विषयभेदात्तु भेदाश्रयणादसिद्धत्वमाश्रीयते ॥

( उद्योतः ) तदेव नामेति । इको यणचीत्येतदेव इको यणचीत्यस्मिन्नित्यर्थः ॥

( समाधानसाधकभाष्यम् )

**तदेव चापि तस्मिन्नसिद्धं भवति ॥ वक्ष्यति ह्याचार्यः-*चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वात्* इति । चिणो लुक् चिणो लुक्येवासिद्धो भवति ॥**

( उद्योतः ) चिणो लुकि तग्रहणाभावे किं[1] ततरामृशब्दस्य लुगुच्यते, उत तेषां क्रमेण । नाद्यः, सङ्घातस्याप्रत्ययत्वात् । नान्त्य इत्याह—भाष्ये—तलोपस्य चेति ॥

( समाधानश्लोकवार्तिकम् ॥ )

**॥ * ॥ काममतिदिश्यतां वा**
**सच्चासच्चापि नेह भारोऽस्ति ॥**
**कल्प्यो हि वाक्यशेषो**
**वाक्यं वक्त्रधीनं हि ॥ * ॥**

( भाष्यम् )

**अथवा वतिनिर्देशोऽयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा—"उशीनरवन्मद्रेषु यवाः" सन्ति, न सन्तीति ॥ "मातृवदस्याः कलाः" सन्ति, न सन्तीति ॥ एवमिहापि स्थानिवद्भवति, स्थानिवन्न भवति-इति वाक्यशेषं समर्थयिष्यामहे ।**

**इह तावत्पट्व्या-मृद्व्येति । यथा स्थानिनि यणादेशो भवति, एवमादेशेऽपि भवतीति ॥**

**इहेदानीं वाय्वोरध्वर्य्वोरिति । यथा स्थानिनि यलोपो न भवति, एवमादेशेऽपि न भवतीति ॥**

( प्रदीपः ) **नेह भारोऽस्तीति** । न ह्यभावातिदेशेऽधिकं सूत्रं पठनीयं, विधिशब्दं चान्तरेण सिध्यति ॥ **अधीनमिति** । अध्युत्तरपदात् खविधानाद[2]व्युत्पन्न आयत्तार्थवृत्तिरधीनशब्दः ॥ **तद्यथेति** । येनोपमाने यवानां सत्ताऽवगता, सः 'सन्ति' इति वाक्यशेषं कल्पयति । असत्ताऽवगतौ तु 'न सन्ति' इति ॥ एवमस्यापि लक्षणस्य प्रतिलक्ष्यं भेदात् क्वचिद्भावोऽतिदिश्यते, क्वचिदभावः ॥

( उद्योतः ) एवमसिद्धवचनमात्रेण निर्वाहमुक्त्वा सूत्रकृतं स्थानिवत्त्वं समर्थयति—**काममिति । न ह्यभावेति । इहेत्यस्य** सूत्रे-इत्यर्थ इति भावः ॥[3] ननु पूर्वमस्यार्थस्य विधिशब्देन साधितत्वात् कथं तत्करणरूपो न भार इत्यत आह—**विधिशब्दं चेति** ॥ [4]अध्याहारमात्रेणेति भावः ॥ भाष्ये—**एवमादेशेपि न भवतीति** । आदेशनिमित्तकोऽपीत्यर्थः ॥

---

( पूर्वशब्दार्थनिर्णयः )

( आक्षेपभाष्यम् )

**किं पुनरनन्तरस्य विधिं प्रति स्थानिवद्भावः, आहोस्वित्पूर्वमात्रस्य ?**

( प्रदीपः ) **किं पुनरिति** । 'अमीषां ब्राह्मणानामन्त्यात्पूर्वमानय' इत्यत्रानन्तरे पूर्वशब्दो दृष्टः, 'मथुरायाः पूर्वं पाटलिपुत्रम्' इति व्यवहिते-इति **प्रश्नः** ॥ तत्र[5] यदा विषयभेदाल्लक्षणं भिद्यते तदा यादृशं यत्र पूर्वत्वं संभवति तादृशं तत्राश्रीयते-इति व्यवहितस्यापि ग्रहणम् । यदा त्वेकमेव लक्षणं, तदा किमित्यव्यवहितसंभवे व्यवहितमाश्रीयत इति अनन्तरस्यैव ग्रहणेन भाव्यम् ॥

( उद्योतः ) यद्यपि **व्यवहितेऽपि पूर्वशब्दो वर्तत** इति भाष्यकृता पूर्वमेवोक्तम्, तथापि तदर्थप्रतिपादकवार्तिकमवतारयितुं पृच्छति—भाष्ये—किं **पुनरिति** ॥ **अव्यवहितसंभवे इति** । [6]छन्दसि परेऽपि-**व्यवहिताश्च**त्यनेन पूर्वपरशब्दयोरव्यवहितार्थे मुख्यत्वबोधनादिति भावः ॥ [7]**तस्मिन्नि**ति सूत्रे निर्दिष्टग्रहणाद्व्यवहिताव्यवहितसाधारणे पूर्वशब्दस्य शक्तिः । [8]**अन्त्यात्पूर्वमानये**त्यादौ तु तात्पर्यानुपपत्त्या विशेषे लक्षणा, [9]छन्दसि **परे**ऽपीत्यादौ तु पराङ्गविकलायास्तस्मादिति परिभाषाया उपस्थितेरव्यवधानांशलाभः । [10]इहे तु स्वरग्रहणाल्लिङ्गात्तदनुपस्थितिरिति तत्त्वम् ॥

---

१ किमिति । अकारितरामित्यादौ ॥ छाया ॥

२ विधानादिति । अस्य चाव्युत्पन्नत्वात् । अन्यथा वक्त्रधीनमित्यौचित्यादिति भावः ॥ छाया ॥

३ नन्वधिकं सूत्रमिति कस्यार्थोऽत आह—**इहेत्येति** ॥ भाष्यस्येत्यर्थः ॥ छाया ॥

४ अध्याहारेति । तथा च लाघवमेवेति भावः ॥ छाया ॥

५ तत्र—उभयदर्शने सति ॥

६ नन्वत्राप्युक्तरीत्यैवेष्टसिद्धिरत आह—**छन्दसीति** ॥ छाया ॥

७ कैयटं दूषयन्भाष्यमन्यथा योजयति—**तस्मिन्नितीति** ॥ छाया ॥

८ नन्वेवं कथमन्त्यात्पूर्वमिति दृष्टान्तोऽत आह—**अन्त्यात्पूर्वेति** ॥ छाया ॥

९ नन्वेवमपि **व्यवहिताश्चे**ति व्यर्थमेवात आह—**छन्दसीति** ॥ आदिना परश्चेत्यादिसंग्रहः ॥ छाया ॥

१० नन्वेवमनेकविधत्वे प्रकृते कथं निश्चयोऽत आह—**इहे त्विति** ॥ **तत्-तस्मादितीति** ॥ छाया ॥

( भाष्यम् )

कश्चात्र विशेषः ?

( ३३९ अनन्तरग्रहणदूषणवार्तिकम् ॥ १ ॥ )

॥*॥ अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम् ॥ * ॥

( भाष्यम् )

अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानं कर्तव्यम् ॥

एकाननुदात्त । लुनीह्यत्र, पुनीह्यत्र - इति । "अनुदात्तं पदमेकवर्जम्" इत्येष स्वरो न प्राप्नोति ॥

( प्रदीपः ) लुनीह्यत्रेति । हेरपित्त्वादुदात्तत्वम्, तत्र यणादेशे कृते उदात्तस्याभावाद्वर्ज्यमानस्वरो न स्यात् । स्थानिवद्भावात्तु यथा स्थानिनि स्वरो भवति एवमादेशेऽपि सिद्धः स्वरः॥

( उद्द्योतः ) भाष्ये—एकाननुदात्तशब्देन तत्प्रयुक्तः शेषनिघातः ॥ उदात्तत्वमिति । प्रत्ययस्वरेण ॥

( उदाहरणभाष्यम् )

द्विगुस्वर । पञ्चारत्न्यः, दशारत्न्यः । "इगन्तकाल—" इत्येष स्वरो न प्राप्नोति ॥

( प्रदीपः ) पञ्चारत्न्य, इति । जसादिषु छन्दो वा वचनं प्राङ् णौ चङ्युपधायाः-इति जसि चेति गुणश्छन्दसि विकल्पितत्वान्न भवति । यणि कृते इगन्तत्वाभावात् पूर्वपदप्रकृतिस्वराप्रसङ्गः ॥

( उदाहरणभाष्यम् )

गतिनिघातः । यत्प्रलुनीह्यत्र, यत्प्रपुनीह्यत्र-इति ॥ "तिङि चोदात्तवति" इत्येष स्वरो न प्राप्नोति ॥

( प्रदीपः ) यत्प्रलुनीह्यत्रेति । यच्छब्दप्रयोगो निघातप्रतिषेधार्थः । तत्र यणि कृते उदात्तवत्त्वाभावाद्गतिनिघाताप्रसङ्गः । एतच्च सर्वमनाश्रित्यान्तरङ्गबहिरङ्गभावमुक्तम् ॥

( उद्द्योतः ) निघातप्रतिषेधेति । निपातैर्यद्यदीत्यनेनेति भावः ॥ अनाश्रित्येति । पदसंस्कारे वाक्यसंस्कारे वा यणो वर्णाश्रयत्वेनान्तरङ्गत्वमित्यन्ये ॥

( द्वितीयपक्षाङ्गीकारभाष्यम् )

अस्तु तर्हि पूर्वमात्रस्य ॥

( पूर्वमात्रग्रहणदूषणभाष्यवार्तिकम् )

*॥ पूर्वमात्रस्येति चेदुपधाह्रस्वत्वं वक्तव्यम् ॥*

( भाष्यम् )

वादितवन्तं प्रयोजितवान्—अवीवदद्वीणां परिवादकेन ॥

किं पुनः कारणं न सिध्यति ?

योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावात् ह्रस्वत्वं न प्राप्नोति ॥

( ३४० दूषणान्तरवार्तिकम् ॥ २ ॥ )

॥ * ॥ गुरुसंज्ञा च ॥ * ॥

( भाष्यम् )

गुरुसंज्ञा च न सिध्यति । श्लेष्मा३घ्न । पित्ता३घ्न । दा३ध्यश्व । मा३ध्वश्व । "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुरु" इति गुरुसंज्ञा, "गुरोरनृतः" इति प्लुतो न प्राप्नोति ॥

( प्रदीपः ) श्लेष्मा ३ घ्नेति । कार्यार्थित्वात्संयोगसंज्ञाया व्यवहितस्यात्र प्लुतविधिरिति पूर्वः पक्षः ॥

( उद्द्योतः ) श्लेष्मघ्ने 'अमनुष्यकर्तृके च' इति टक् ॥ ननु संयोगत्वस्य समुदायगतत्वेन पूर्वविधित्वाभावात् कथं स्थानिवत्त्वम् ॥ किं च न संयोगसंज्ञा व्यवहितस्य विधिः । अव्यवहितस्य सत्त्वादत आह—कार्यार्थत्वादिति । ततश्च प्लुतद्वारा व्यवहितपूर्वविधित्वं संज्ञाया इति भावः ॥

( पूर्वमात्रवादिभाष्यम् )

ननु च यस्याप्यनन्तरस्य विधिं प्रति स्थानिवद्भावः, तस्याप्यनन्तरलक्षणो विधिः संयोगसंज्ञा विधेया ॥

( प्रदीपः ) ननु चेति । यथोद्देशपक्षे प्रत्येकं च संयोगसंज्ञेति पक्षे आनन्तर्याश्रयेऽपि दोष इत्यर्थः ॥

( उद्द्योतः ) ननु च उक्तहेतुना व्यवहितपूर्वविधित्वात्कथमनन्तरग्रहणे संयोगसंज्ञाया विधेयत्वमत आह— यथोद्देशेति । तदा कार्यपर्यालोचनं विनाऽपि 'भविष्यति किंचित्' इत्यभिसन्धिमात्रात्तत्प्रवृत्तेरित्यर्थः ॥ ननु एवमपि पूर्वपरविधित्वान्न स्थानिवत्त्वप्राप्तिरत आह—प्रत्येकं चेति ॥

( ३४१ समाधानवार्तिकम् ॥ १ ॥ )

॥*॥ न वा संयोगस्यापूर्वविधित्वात् ॥*॥

( भाष्यम् )

न वा एष दोषः ॥

किं कारणम् ?

'संयोगस्यापूर्वविधित्वात्'। न पूर्वविधिः संयोगः ॥

किं तर्हि ?

पूर्वपरविधिः संयोगः ॥

( प्रदीपः ) नवेति । समुदायः संज्ञीति भावः ॥ 'पूर्वमात्रस्य' इति पक्षोऽत्र स्थितः ॥ अवीवददिति तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो वक्ष्यते ॥

---

१ 'न्तरस्य चेत्' इति क. पाठः ॥

२ न ह्यत्र स्थानिभूताचोऽनन्तरस्यैवानुदात्तत्वमिति भावः । (र.ना.)

३ कैयटं दूषयन्भाष्यं योजयति—पदेति ॥ छाया ॥

४ इतः पूर्वं 'पूर्वमात्रस्येति चेदुपधाह्रस्वत्वं' इत्यधिकः पाठः ग. च. पुस्तकयोः ॥

५ प्लुतेति । तथा च तत्र पद्दीत्यादिशेषो बोध्यः ॥ छाया ॥

६ उक्तेति । प्लुतद्वारेत्यर्थः ॥ अत एव भाष्ये प्लुतपर्यन्तधावनम् ॥ छाया ॥

७ एवमपि-तदनालोचनेनैतत्प्रवृत्तावपि ॥ छाया ॥

(उद्योतः) समुदाय इति । एवं चानन्तर्याश्रयणे यथोद्देशपक्षेऽपि न दोष इति भावः ॥ एवं च पूर्वमात्रग्रहणेऽपि 'श्लेष्मघ्ने' न दोषः, यथोद्देशाश्रयणादेव । कार्यकालपक्षेऽपि यत्प्रतिबन्धद्वारा स्थानिवत्त्वस्य संज्ञाकार्यप्रतिबन्धकत्वं तस्य पूर्वमात्रवृत्तित्व एव स्थानिवत्त्वमिति गूढतात्पर्यम् ॥ भाष्ये—किं तर्हि पूर्वपरविधिरिति । पूर्वपरविधौ स्थानिवत्त्वाभावादेव च 'आरतुः' इत्यादौ ऋच्छत्यॄतामिति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वमिति बोध्यम् ॥ विधिग्रहणसामर्थ्याच्चैतदर्थलाभ इत्याहुः ॥ पूर्वमात्रेति । दीर्घादिग्रहणाल्लिङ्गादिति भावः ॥

---

(एकादेशे स्थानिवद्भावसाधनम्)

(३४२ आक्षेपवार्तिकम् ॥ १ ॥)

## ॥ * ॥ एकादेशस्योपसंख्यानम् ॥ * ॥

(भाष्यम्)

**एकादेशस्योपसंख्यानं कर्तव्यम् । आयसौ, गौमतौ, चातुरौ, आनडुहौ, पादे, उदवाहे । एकादेशे कृते नुमामौ पद्भाव ऊडित्येते विधयः प्राप्नुवन्ति ॥**

(प्रदीपः) एकादेशस्येति । परस्मिन्नित्येतदवधारणार्थमुपात्तम् । तथा ह्यनुपादीयमानेऽपि परस्मिन्नित्यस्मिन् परनिमित्तकस्य स्थानिवद्भावो लभ्यत एव । तत्रानेन यथा - अपरनिमित्तकस्य स्थानिवद्भावो निवार्यते - वैयाघ्रपद्यः - आदीध्ये - इति, एवं परस्मिन्नेव य आदेश इत्यवधारणादुभयनिमित्तस्याप्राप्तिरिति भावः ॥ आयसादिभ्योऽणन्तेभ्य औप्रत्यये कृते एकादेशे च तस्यादिवद्भावान्नुमामौ प्राप्नुतः । पादे - उदवाहे - इत्यत्र ङावेकादेशे कृते आदिवत्त्वात् भसंज्ञायां सत्यां पद्भाव ऊठ् च प्राप्नुतः ॥

(उद्योतः) ननूभयनिमित्तत्वेऽपि परनिमित्तत्वमस्त्येवेत्यत आह—परस्मिन्नितीति ॥ अवधारणार्थमिति । पूर्वविधिशब्दे पूर्वशब्दस्येवास्यापि विशेषणस्यान्ययोगव्यवच्छेदफलकत्वादिति भावः ॥ लभ्यत एवेति । अविशेषात्सर्वत्र प्रवृत्त्येति भावः ॥ आयसावित्यत्र देविकाशिंशपेत्यात्वम् ॥ तस्यादिवद्भावादिति । ननु आदिवद्भावेन 'औ' इत्यस्य सर्वनामस्थानत्वेऽपि आयसित्यस्याङ्गत्वाभावात्कथं नुम् । 'औ' इत्यस्य सान्तादविहितत्वात् आयसित्यस्य षष्ठीनिर्दिष्टादेशत्वाभावान्न स्थानिवत्त्वेन तस्याङ्गत्वमिति चेन्न । छिन्नपुच्छश्ववदेकदेशविकृतानन्यत्वेनाङ्गत्वप्रतीत्यव्याघातात् । भूयोऽवयवसाम्यात् । लोकन्यायसिद्धस्यानाश्रयणे बीजाभावात् । सूत्रमपि वस्तुसाध्यर्थमावश्यकमिति दिक् ॥

(प्रत्याक्षेपभाष्यम्)

**किं पुनः कारणं न सिध्यन्ति ?**

(उद्योतः) भाष्ये—न सिध्यन्तीति । निवर्त्यन्तेनेत्यर्थः ॥

(प्रत्याक्षेपबाधकभाष्यवार्तिकम्)

## *॥ उभयनिमित्तत्वात् ॥*

(भाष्यम्)

**अजादेशः परनिमित्तक इत्युच्यते । उभयनिमित्तश्चायम् ॥**

(प्रत्याक्षेपबाधकभाष्यवार्तिकम्)

## *॥ उभयादेशत्वाच्च ॥*

(भाष्यम्)

**अच आदेश इत्युच्यते । अचोश्चायमादेशः ॥**

(प्रदीपः) अचोश्चेति । अच इति गुणत्वादेकत्वसंख्यायाः पशुना यजेतेतिवद्विवक्षितत्वात् ॥

(उद्योतः) नन्वच इत्यस्य विशेषणस्यान्ययोगव्यवच्छेदकत्वेऽपि हलां व्यावृत्तिः स्यान्नाजन्तरस्येत्यत आह—गुणत्वादिति । आदेशविशेषणत्वेनेति शेषः ॥ वस्तुतोऽचोरादेशस्यान्यत्वपर्याप्त्यधिकरणादेशत्वाभाव इति भाष्याशयः ॥

---

१ सिद्धान्ततात्पर्यमाह—एवंचेति । समुदायस्य संज्ञित्वे चेत्यर्थः ॥ अपिना कार्यकालसमुच्चयः ॥ छाया ॥

२ प्रकृततात्पर्यमाह—एवं चेति ॥ अस्यार्थमाह—यथोद्देशेति ॥ छाया ॥

३ कैयटस्यायुक्तत्वात् सिद्धान्तमाह—कार्येति ॥ अपिना यथोद्देशसमुच्चयः ॥ छाया ॥

४ प्रकृते च संयोगसंज्ञागुरुसंज्ञाप्रतिबन्धद्वारा स्थानिवत्त्वस्य प्रुतप्रतिबन्धकत्वं न च संयोगसंज्ञाया गुरुसंज्ञाया वा पूर्वमात्रवृत्तित्वमिति भावः । (र. ना.)

५ अस्य फलान्तरमप्याह—पूर्वपरेति ॥ छाया ॥

६ ननु फलसत्त्वेऽपि मानाभावोऽत्रात आह—विधीति ॥ फलान्तरस्य प्रागनिरस्तत्वेन तत्सामर्थ्यादेवगर्भसमासादिति भावः ॥ छाया ॥

७ अनङ्गत्वे हेतुमाह—औ इत्यस्येति ॥ छाया ॥

८ ननु स्थानिवत्त्वेन तत्त्वमत आह—आयसिति ॥ आनुमानिकादेशेनाप्यत्रानिर्वाह इति बोध्यम् ॥ छाया ॥

९ नन्वेवं पूर्वसूत्रं व्यर्थमत आह—सूत्रमिति ॥ नन्वेवमपि तत्रादेशग्रहणं व्यर्थमेव, स्थानिवदित्युक्त्या संबन्धिशब्दमहिम्नैव तल्लाभात् । आनुमानिकादेशसंग्रहार्थमपि न, तौ तित्वस्यानेनैव सिद्धेरत आह—अपीति ॥ अनेनादेशसमुच्चयः ॥ आदिना पचत्वित्यादि ॥ अर्थस्यान्यथात्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तौ तित्वप्रतीतेरनेनानुपपादनात् । प्रकृते तन्निर्वाहार्थं तु सोऽप्यावश्यकः । अन्यथाङ्गत्वमेव दुर्लभम् । अत एवान्तादिवत्सूत्रे भाष्यकैयटयोरपि गुडोदकमित्यादावेकादेशे कृते दकशब्दस्यानेनोदकशब्दत्वमाश्रित्य 'उदके केवले' इति पूर्वपदान्तोदात्तत्वमुक्तम् । शब्दानां नित्यत्वं तु रेखागवयन्यायेन समाधेयम्, तदाह—दिगिति ॥ छाया ॥

१० 'सिध्यति' इति क. पाठः ॥

११ नाजन्तरेति । तस्यान्यत्वाभावात् ॥ छाया ॥

१२ नन्वेवं ग्रहैकत्ववदविवक्षवोचितेत्यत आह—वस्तुत इति ॥ छाया ॥

( आक्षेपसाधकप्रथमहेतुनिरासभाष्यम् )

**नैष दोषः ॥ यत्तावदुच्यते—'उभयनिमित्तत्वात्' इति । इह यस्य ग्रामे नगरे वा अनेकं कार्यं भवति, शक्नोत्यसौ तत्रान्यतरत् व्यपदेष्टुम् । तद्यथा-'गुरुनिमित्तं वसामः' इति, 'अध्ययननिमित्तं वसामः' इति ॥**

( प्रदीपः ) **इह यस्येति** । अन्वयव्यतिरेकाभ्यां निमित्तत्वावधारणाद्भवत्येव परस्य निमित्तता । अयोगव्यवच्छेदेन परस्मिन् य आदेश इति विशेषणात् ॥

( उद्द्योतः ) उभयनिमित्तत्वे[1] किं परनिमित्तत्वमेव नास्तीत्युच्यते, उत परमेव निमित्तं नेति । नाद्य इत्याह—**अन्वयेति** ॥ नान्त्य इत्याह—**अयोगेति** । विशेष्यसङ्गत एवायोगव्यवच्छेदबोध इति नियमे न मानमिति भावः ॥

( आक्षेपसाधकद्वितीयहेतुनिरासभाष्यम् )

**यदप्युच्यते—'उभयादेशत्वाच्च' इति । इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति, लभतेऽसावन्यतरतो व्यपदेशम् । तद्यथा—देवदत्तस्य पुत्रः, देवदत्तायाः पुत्र इति ॥**

( प्रदीपः ) **द्वयोरिति** । वर्णनिर्देशे तावज्जातिग्रहणान्नास्ति संख्याविवक्षा, भवतु वा, तथापि न दोष इति भावः ॥

( अथ हलच्समुदायादेशस्थानिवत्त्वाभावनिर्णयः )

( आक्षेपभाष्यम् )

**अथ हलचोरादेशः स्थानिवद् भवति, उताहो न॥**

( प्रदीपः ) **अथ हलचोरिति** । उभयथा शास्त्रे व्यवहारदर्शनात्**प्रश्नः । उरण् रपर** इत्यत्राणनणसमुदायोऽकङादिरादेशो रपरो न भवति । **नाग्लोपी**त्यत्र[2] त्वरराजदित्यत्र हलकोर्लोपेऽग्लोपित्वाश्रयणादुपधाह्रस्वत्वनिषेधो भवति । अस्ति ह्यत्राकोऽदर्शनमिति ॥

( उद्द्योतः ) भाष्ये-**अथ हलचोरिति** । अच[3] इत्यपि परस्मिन्निति-वदयोगव्यवच्छेदकम्, उतान्ययोगव्यवच्छेदकमिति प्रश्नः ॥

अत्वरराजदिति । राजानमतिक्रान्तवानित्यर्थे **प्रातिपदिकाद्धात्वर्थ** इति णिजिष्ठवद्भावाट्टिलोपश्चेति बोध्यम् ॥ **पूर्वस्यैव** विधावित्यनाश्रित्येदम् ॥

( भाष्यम् )

कश्चात्र विशेषः ?

( ३४३ समुदायादेशस्थानिवत्त्वे दूषणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः ॥ * ॥**

( भाष्यम् )

**हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोपे एकादेशो वक्तव्यः । विंशकः । विंशं शतम् ॥**[5]

( प्रदीपः ) **विंशक इति । विंशतित्रिंशद्भ्यामि**ति ड्वुन् ॥ **विंशमिति । शदन्तविंशतेश्चे**ति डः ॥[6]

( उद्द्योतः ) भाष्ये-**एकादेश इति** । **अतो गुण** इति पररूपमित्यर्थः । **यस्येति** चेति तु न, तिलोपस्याभीयत्वेनासिद्धत्वादिति भावः ॥ **विंशं शतमि**त्यस्य विंशतिरधिकाऽस्मिन्नित्यर्थः ॥ **विंश** इति तु प्रक्षिप्तं, शतसहस्रयोरेव डस्येष्टत्वात् ॥

( ३४४ दूषणान्तरवार्तिकम् ॥ २ ॥ )

**॥*॥स्थूलादीनां यणादिलोपेऽवादेशः॥*॥**

( भाष्यम् )

**स्थूलादीनां यणादिलोपे अवादेशो वक्तव्यः । स्थवीयान्, दवीयान् ॥**[7]

( प्रदीपः ) **स्थवीयानिति** । गुणलोपयोस्तुल्यकालत्वाद् गुणस्य कथमनादिष्टादचः पूर्वत्वमिति चेत् । स्थानिनोऽनादिष्टादचः पूर्वत्वात् तद्द्वारेण गुणस्यापि भविष्यतीत्यदोषः ॥ तत्र स्थानिवद्भावे सति लशब्देन व्यवधानादवादेशाप्रसङ्गः ॥

( उद्द्योतः ) **स्थानिनोऽनादिष्टादिति** । अत्र[8] यद्वक्तव्यं तद् **न धात्विति** सूत्रे **स्थानिवत्**सूत्रे चोक्तम् ॥

( ३४५ दूषणान्तरवार्तिकम् ॥ ३ ॥ )

**॥*॥ केकयमित्रय्वोरियादेश एत्वम् ॥*॥**[9]

( भाष्यम् )

**केकयमित्रय्वोरियादेशे एत्वं न सिध्यति । कैके-**

१ उभयेति । नन्वित्यादिः ॥ छाया ॥

२ 'त्यत्र अत्वररा' इति क. ग. पाठः । 'त्यत्र त्वत्वरराजदिति हल' इति क. पाठः ॥

३ संगतिमाह—**अच इति** ॥ छाया ॥

४ ननु विंशकमित्यादावुभयविधेः सत्त्वात्कथं तत्त्वमत आह—**पूर्वस्यैवेति ॥ इदं**-हलचोरादेश इत्यादि भाष्यम् ॥ छाया ॥

५ 'शतम् । विंशः ॥' इति मुद्रितपाठः ॥

६ अतः परं '**विंश इति** । तस्य पूरणे डट्' इत्यधिकः पाठो मुद्रितेषु ॥

७ 'लोपे कृते' इति क. ग. पाठः ॥

८ कैयटं दूषयति—**अत्रेति** ॥ छाया ॥

९ वार्तिके भाष्ये च षष्ठ्यन्तं सूत्रोच्चारितस्य प्रत्ययस्याप्युपलक्षणम् । सप्तम्यन्तं तु स्वापवादस्यापि । तथा च केकयशब्दात् '**जनपदशब्दात्क्षत्रियादञ्**' इति सूत्रेणाञि, प्रत्ययशब्दात् '**तत आगतः**' इत्यणि यादिभागस्येयादेशे तस्य स्थानिवत्त्वेन कैकेयः प्रालेय इत्यत्र गुणैकादेशो न सिध्यति । मित्रयोरपत्यम् इत्यर्थे '**गृष्ट्यादिभ्यश्च**' इति ढञि '**केकयमित्रयु**' इत्यनेन यादिभागस्य प्राप्तमियादेशं बाधित्वा '**दाण्डिनायन–**' इति सूत्रे मैत्रेयेति निपातनेन युशब्दस्य लोपे जाते तस्य स्थानिवद्भावेन पररूपेणैकारो न सिध्यतीति नागेशोक्तौ 'आद्गुणः' इत्यपि पररूपस्योपलक्षणमिति बोध्यम् ॥ विदादिगणे मित्रयुशब्दपाठमाश्रित्य युलोपनिपातनप्रत्याख्यानं '**तस्येदम्**' इत्यणं वा समाश्रित्येदमिति बोध्यम् ॥ दाधिमथाः ॥

यः । मैत्रेयः । अचीत्येत्वं न सिध्यति ॥

( प्रदीपः ) कैकेय इति । नन्वत्राज्मात्रे गुणो विधीयते न त्वजादौ । तेन योऽत्राश्रीयते नासावादेशः, यश्चादेशः समुदायो नासावाश्रीयत इति न्यायान्नास्ति दोषः ॥ नैतदस्ति । स्थानिवन्न भवतीत्यभावातिदेशाश्रयणपक्षे दोषः स्यादेव । परिहारान्तरस्याभिधास्यमानत्वाद्वैतन्नाश्रितम् ॥

( उद्योतः ) कैकेयादौ केकयमित्रयुविलादिना इयादेशे आद्गुणः ॥ अत्रापि पक्षे स एवार्थ इत्यत आह—परिहारान्तरस्येति । पक्षान्तरस्येत्यर्थः ॥ एतत्–पूर्वोक्तम् ॥

( ३४६ दूषणान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ उत्तरपदलोपे च ॥ * ॥

( भाष्यम् )

उत्तरपदलोपे च दोषो भवति ॥ दध्युपसिक्ताः सक्तवो दधिसक्तवः । अचीति यणादेशः प्राप्नोति ॥

( प्रदीपः ) दधिसक्तव इति । समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्चेति लोपस्य परनिमित्तता ॥ यद्यप्यत्र 'पदान्तविधौ न' इति सिध्यति, तथापि परिहारान्तरस्याभिधास्यमानत्वादेतन्नोक्तम् ॥

( उद्योतः ) लोपस्येति । समानाधिकरणेन सुपेत्यधिकारात् परसन्निधाने जायमानत्वेन परनिमित्तत्वमित्यभिमानः ॥ वस्तुत एतावता परनिमित्तत्वे पादशतस्येति लोपस्य परसन्नियोगेन विधीयमानस्य परनिमित्तत्वापत्तिरितीदमपि चिन्त्यम् । परिहारान्तरस्येत्येवात्रापि समाधिरिति तत्त्वम् ॥

( ३४७ आक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ यङ्लोपे यणियङुवङः ॥ * ॥

( भाष्यम् )

यङ्लोपे यणियङुवङो न सिध्यन्ति । चेच्यः, नेन्यः । चेक्षियः, चेक्रियः । लोलुवः, पोपुवः । अचीति यणियङुवङो न सिध्यन्ति ॥

( प्रदीपः ) चेच्य इति । ऊतोऽचीत्येतदनाश्रयणादुपन्यासः ॥

( पक्षान्तराश्रयणभाष्यम् )

अस्तु तर्हि न स्थानिवत् ॥

( प्रदीपः ) अस्तु तर्हीति । अच इत्युपादानात् साक्षादेव यस्याच् स्थानित्वेनोपात्तस्तस्यैव स्थानिवद्भावः, न तु हलजादेशस्येत्यर्थः ॥

( उद्योतः ) उपादानादिति । यद्यपि 'आगत्य'इति पतद्वारणार्थमावश्यकं तत्, तत्र हि केवलहलो लोपस्तथापि व्याख्यानादच एवादेश इत्यन्ययोगव्यवच्छेदलाभ इति बोध्यम् ॥ साक्षादेवेति । अचो यत्र स्थानषष्ठीनिर्दिष्टत्वमित्यर्थः ॥ एवं हि णिलोपस्य स्थानिवत्त्वं न स्यात् । तस्मादच एवादेशः प्रयोगे यत्रेत्यर्थेन तद्वारणमुचितम् ॥

( ३४८ आक्षेपवार्तिकम् ॥ ६ ॥ )

॥ * ॥ अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः ॥ * ॥

( भाष्यम् )

अस्थानिवत्त्वे यङ्लोपे गुणवृद्ध्योः प्रतिषेधो वक्तव्यः । लोलुवः, पोपुवः, सरीसृपः, मरीमृज इति ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः ॥ "न धातुलोप आर्धधातुके" इति प्रतिषेधो भविष्यति ॥

( इति हलच्समुदायस्य स्थानिवत्त्वाभावनिरूपणम् )

( अथ स्थान्याश्रयणानाश्रयणम् )

( आक्षेपभाष्यम् )

किं पुनराश्रीयमाणायां प्रकृतौ स्थानिवद्भवति, आहोस्विदविशेषेण ?

( प्रदीपः ) किं पुनरिति । यत्र कार्ये स्थान्याश्रितः किं तत्रैव स्थानिवद्भावः, उत यत्राप्यनाश्रित इति प्रश्नः ॥

( उद्योतः ) किं पुनरिति । आश्रितस्थानिककार्यमेव स्थानिवद्भावेन प्राप्यते, उत अनाश्रितस्थानिकं प्रतिबध्यतेऽपीति प्रश्नः ॥ यद्यप्ययं विचारः प्राक् कृत एव, भावाभावातिदेश इति सिद्धान्तश्च कृतः, तथापि अन्यवार्तिककारकृतवार्त्तिकव्याख्यानमिदमिति बोध्यम् ॥

( भाष्यम् )

कश्चात्र विशेषः ?

( ३४९ द्वितीयपक्षे दूषणवार्तिकम् ॥ १ ॥ )

॥ * ॥ अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः ॥ * ॥

( भाष्यम् )

अविशेषेण स्थानिवदिति चेल्लोपयणादेशयोर्गुरुविधिर्न सिध्यति । श्लेष्मा ३ घ्न । पित्ता ३ घ्न । दा ३-

---

१ अत्रापीति । नन्वित्यादिः ॥ छाया ॥

२ पूर्वोक्तम्–योऽत्रेति ॥ छाया ॥

३ समानाधिकरणाधिकारे तृतीयान्तपूर्वपदकं क्तान्तोत्तरपदकञ्च सुबन्तं सुबन्तेन समर्थेन समस्यते उत्तरपदलोपश्च वक्तव्य इति वार्तिकार्थः । ( र. ना. )

४ अपिना पूर्वसमुच्चयः ॥ भाष्यासंगतिं परिहरति—परीति ॥ वक्ष्यमाणेत्यर्थः ॥

५ ऊतोचीति । ऊतोऽचि परे यङ्लुग् भवतीत्यर्थः ॥ लोलुव इत्यादि । एतस्य सिद्धान्तत्वेनानाश्रयणादित्यर्थः ॥ छाया ॥

६ कैयटं दूषयति—यद्यपीति ॥ तत्–अच्पदम् ॥ छाया ॥

७ साक्षात्पदार्थमाह—अच इति ॥ छाया ॥

८ इदमपि दूषयति—एवं हीति ॥ तद्वारणं–हलजादेशवारणम् ॥ छाया ॥

९ सूत्रमतेनाह—न धात्विति ॥ छाया ॥

ध्यश्च । मा ३ ध्वश्च । "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुरु" इति गुरुसंज्ञा, "गुरोः—"इति प्लुतो न प्राप्नोति ॥

**( प्रदीपः ) गुरुविधिरिति** । कार्यार्थत्वात् संयोगसंज्ञाया गुरुविधिरित्युच्यते । लोपयणादेशयोः स्थानी संयोगसंज्ञायां नाश्रीयते ॥

**( उद्द्योतः )** [1]ननु संयोगसंज्ञेति वक्तव्ये किमुच्यते **गुरुविधिरिति**, अत आह—**कार्येति** ॥

( ३५० दूषणान्तरवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ द्विर्वचनादयश्च प्रतिषेधे ॥ * ॥

( भाष्यम् )

**द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः । 'द्विर्वचनवरेयलोप' इति ॥**

**( प्रदीपः ) द्विर्वचनादयश्चेति** । द्विर्वचनादावपि स्थानी नाश्रीयते । **अनचीति** पर्युदासाश्रयणात्तत्सदृशस्य हलो द्विर्वचनादावाश्रयणं न त्वचः । एवं यलोपेऽपि । वरे त्वाकारलोपे विधीयमाने प्रकृतिराश्रितैव—अचि क्विपीति । भाष्ये तु वरेशब्दोऽपि पठितः । तत्रायं भावः—यङ एव समुदायस्य प्रत्ययत्वं न तदवयवस्याकारस्येत्यजादौ प्रत्यय आकारलोपस्य विधानादत्राप्रसङ्ग एवेति ॥

**( उद्द्योतः )** ननु 'अचि न' इत्यर्थाद्द्विर्वचननिषेधेऽस्त्येव स्थान्याश्रयणमत आह—**पर्युदासेति** । चिन्त्यमेतत् । वाक् वाक् इत्यादाववसाने द्वित्वानापत्तेः । हलीत्येव वक्तुं युक्तत्वाच्चेत्याहुः ॥ [2]तस्मादेजभिन्नस्याश्रयणम्, न त्वच इति वक्तुं युक्तं, वागित्यादावज्भिन्नो वर्णाभाव एवेति न दोषः ॥ **यङ एवेति** । एवं सति पक्षद्वयेऽपि वरेग्रहणं न कार्यमित्यत्र तत्करणकथनं चिन्त्यमेव स्यात् । किं च तार्किकप्रत्ययत्वमादायापि प्रवृत्तिज्ञापनाय तदावश्यकमिति चिन्त्यम् ॥ [3]वरेयलोपेत्येकमेव निमित्तमित्यभिमानेन भाष्यमित्यन्ये ॥

( ३५१ दूषणान्तरवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ क्सलोपे लुग्वचनम् ॥ * ॥

( भाष्यम् )

**क्सलोपे लुग्वक्तव्यः । अदुग्ध, अदुग्धाः । "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति ॥**

**( प्रदीपः ) अदुग्धेति** । क्सस्य 'अलोऽन्त्यस्य' इति लोपे कृते [4]तस्य स्थानिवद्भावात् 'झलो झलि' इति लोपो न स्यादिति लुग्वचनम् ॥ अदुह्वहीत्येवमर्थस्त्ववश्यवक्तव्यः, वकारस्याझल्त्वात् ॥

**( उद्द्योतः ) क्सस्येति** । **क्सस्याचीति** क्सलोपे प्रकृतेऽपि लुग्वक्तव्य इति वार्तिकार्थः ॥ पक्षान्तरे तु क्सलोपेनैव सिद्धमित्यभिमानः ॥ तत्राप्यवश्यं लुग्वक्तव्य इत्याह—**अदुह्वहीति** ॥

( ३५२ दूषणान्तरवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ हन्तेर्घत्वम् ॥ * ॥

( भाष्यम् )

**हन्तेश्च घत्वं वक्तव्यम् । घ्नन्ति - घ्नन्तु - अघ्नन् ॥**

**( प्रदीपः ) घ्नन्तीति** । अलोपस्य स्थानिवत्त्वादनन्तरो नकारो न भवतीति घत्वाप्रसङ्गः । वचनसामर्थ्यात् व्यवधानाश्रयणे तु हननादिष्वतिप्रसङ्गः ॥

**( उद्द्योतः )** ( भाष्ये ) **घ्नन्तीत्यादि** । **गमहनेत्यनेना**लोपः ॥ **घत्वं—हो हन्तेरित्यनेन** ॥

( प्रथमपक्षाश्रयणभाष्यम् )

**अस्तु तर्हि—आश्रीयमाणायां प्रकृतौ - इति ॥**

( ३५३ प्रथमपक्षे दूषणवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ ग्रहणेषु स्थानिवदिति चेत् जग्ध्यादिष्वादेशप्रतिषेधः ॥ * ॥

( भाष्यम् )

**[5]ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिषु आदेशस्य प्रतिषेधो वक्तव्यः । निराद्य, समाद्य । "अदो जग्धिर्ल्यप् ति किति" इति जग्धिभावः प्राप्नोति ॥**

**( प्रदीपः ) निराद्येति** । आदयतेर्णिलोपे कृते एकदेशविकृतस्यानन्यत्वाददिरेवायमिति जग्धिः प्राप्नोति । न च [6]जग्धौ णिराश्रितः । आदिग्रहणात् 'घात्यात्' इति वधादेशप्रसङ्गः ॥

**( उद्द्योतः )** भाष्ये—**जग्ध्यादिष्वादेशस्येति** । जग्ध्यादिषु विषयेषु आदेशस्य—अर्थात्तद्रूपस्येत्यर्थः ॥ **एकदेशविकृतस्येति** । [7]अन्तरङ्गत्वाद्वृद्धौ कृतायां णिलोप इति 'आत्' इत्यस्यानादिष्टादचः पूर्वत्वमस्त्येव । [8]ण्यल्लोपाविति तु णिच्स्थानिकवृद्ध्यादेर्बाधकम् । उक्तरीत्या वा तस्य तत्त्वम् ॥

---

१ **ननु संयोगेति** । लोपयणादेशयोः स्थानिनोऽचः संयोगसंज्ञायामनाश्रयणात्तयोः स्थानिवत्त्वेन संयोगसंज्ञा न प्राप्नोतीति वार्तिके वक्तव्येत्यर्थः ॥ तथा च संज्ञाफलप्रतिपत्त्यर्थं तथोक्तम् ॥ छाया ॥

२ भाष्याशयमाह—**तस्मादिति** ॥ **अत्र**—असिन्पक्षे ॥ **तार्किकेति** । संभावितेत्यर्थः ॥ अत एव यातीत्यादिसिद्धिः ॥ **चिन्त्यमिति** । इदमिति शेषः ॥ छाया ॥

३ नन्वेवं का गतिर्भाष्यस्यात आह—**वरे इति** ॥ तथाप्युक्तवक्ष्यमाणदोष एवात आह—**इत्यभीति** ॥ छाया ॥

४ **तस्य**—अन्त्याकारलोपस्य ॥

५ **ग्रहणेषु**—गृह्यमाणेषु स्थानिषु । बाहुलकात् कर्मणि ल्युट् ॥ छाया ॥

६ एवं च स्थानिनो णेर्जग्धिविधावनाश्रयणाण्णिलोपस्य स्थानिवत्त्वाभावे ल्यपोऽव्यवहितपूर्वस्यादेर्जग्ध्यादेशापत्तिरिति भावः ॥

७ ननु वार्तिकेनादौ णिलोपात्ततो वृद्धिरित्यादिष्टादचः पूर्वत्वात्कथं तत्त्वमत आह—**अन्तरङ्गेति** ॥ छाया ॥

८ वार्तिकाप्राप्तिमाह—**ण्यल्लोपाविति** ॥ प्राचां मतेनाह—**उक्तेति** । स्थानिद्वारेत्यर्थः ॥ **तत्त्वम्**—अनादिष्टाचः पूर्वत्वम् ॥ छाया ॥

( ३५४ दूषणान्तरवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ यणादेशे युलोपेत्वानुनासिकात्वप्रतिषेधः ॥ * ॥

( भाष्यम् )

यणादेशे युलोपेत्वानुनासिकात्वानां प्रतिषेधो वक्तव्यः ॥

[1]वाय्वोः, अध्वर्य्वोः । "लोपो व्योर्वलि" इति यणादेशे लोपः प्राप्नोति ॥

उलोप । अकुर्वि - आशाम् - अकुर्व्याशाम् । "नित्यं करोतेः" "ये च" इत्युकारलोपः प्राप्नोति ॥

ईत्व । अलुनि - आशाम् - अलुन्याशाम् । "ई हल्यघोः" इतीत्वं प्राप्नोति ॥

अनुनासिकात्व । अजज्ञि - आशाम् — अजज्ञ्याशाम् । "ये विभाषा" इत्यनुनासिकात्वं प्राप्नोति ॥

( प्रदीपः ) **यणादेश इति** । बहिरङ्गपरिभाषानाश्रयेणैतदुच्यते ॥ **अजज्ञीति** । 'जन जनने' इत्यस्माद् व्यत्ययेनाऽऽत्मनेपदम् । 'जनी प्रादुर्भावे' इत्यस्माद्वा श्यनश्छान्दसत्वात् श्लुः ॥

( उद्द्योतः ) वार्तिके—**युलोपेति** । यकारोकारयोर्लोप इत्यर्थः । **अकुर्व्याशा**मित्यादौ वाक्यसंस्कारपक्षे परस्य यणादेशे [2]तत्कार्यप्राप्तिरिति बोध्यम् ॥ **बहिरङ्गेति** । वाय्वोरित्यत्र यथाऽस्य न प्राप्तिस्तथोक्तम् । एवमन्यत्रापि बोध्यम् ॥ **आत्मनेपदमिति** । [3]इडिति शेषः ॥

( ३५५ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ रायात्वप्रतिषेधश्च ॥ * ॥

( भाष्यम् )

राय आत्वस्य च प्रतिषेधो वक्तव्यः । रायि-आशाम् - राय्याशाम् । "रायो हलि" इत्यात्वं प्राप्नोति ॥

( ३५६ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ दीर्घे यलोपप्रतिषेधः ॥ * ॥

( भाष्यम् )

दीर्घे यलोपस्य प्रतिषेधो वक्तव्यः । सौर्ये नाम हिमवतः शृङ्गे, तद्वान्-सौर्यी हिमवानिति । सौ इन्नाश्रये दीर्घत्वे कृते ईति यलोपः प्राप्नोति ॥

( प्रदीपः ) **सौर्यीति** । 'तेनैकदिक्' इत्यण् । ततो मत्वर्थीय इनिः । 'सौर्ये' इत्यत्र तु यलोपो न प्राप्नोति, 'यस्येति च' इत्यादौ औङः श्यां प्रतिषेध इति वचनात् । **सूर्यमत्स्ययोर्ङ्याम्**मिति परिगणनानाश्रयेणैतदुच्यते ॥

( उद्द्योतः ) नन्वणन्तं 'सौर्ये' इत्येवोदाह्रियतामत आह— **सौर्ये इत्यत्रेति** ॥ **यस्येत्यादाविति** । आदिना सूर्यतिष्येति यलोपः ॥ **श्यां**–शीप्रत्यये । अल्लोपस्यासिद्ध[4]त्वं तु न, व्याश्रयत्वात् ॥

( ३५७ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अतो दीर्घे यलोपवचनम् ॥ * ॥

( भाष्यम् )

अतो दीर्घे यलोपो वक्तव्यः । गार्गाभ्यां, वात्साभ्याम् । दीर्घे कृते "आपत्यस्य च तद्धितेऽनाति" इति प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) **गार्गाभ्यामिति** । 'गोत्रस्त्रियाः–' इति णः । सङ्घाङ्कलक्षणेष्वित्यण् वा । 'अनाति' इति प्रसज्यप्रतिषेधाश्रयेण चोद्यम् ॥

( उद्द्योतः ) गार्गाभ्यामित्यत्र 'गार्ग्य अ भ्यां' इति स्थिते पूर्वं सुपि चेति दीर्घे यलोपाप्राप्तिरिति बोध्यम् ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः । आश्रीयते तत्र प्रकृतिस्तद्धित इति ॥

( प्रदीपः ) पर्युदासाश्रयेण तु सदृशतद्धिताश्रयेण परिहारः ॥

( उद्द्योतः ) **पर्युदासाश्रयेण त्विति** । आद्विन्नत्वेन प्रकृत्याश्रयणात्स्थानिवत्त्वप्रवृत्त्या आद्विन्नत्वसत्त्वेन यलोप इति भावः ॥

( सर्वाक्षेपपरिहारभाष्यम् )

सर्वेषामेष परिहारः । उक्तं विधिग्रहणस्य प्रयोजनम्—विधिमात्रे स्थानिवद्यथा स्यात्, अनाश्रीयमाणायां प्रकृताविति ॥

( प्रदीपः ) **सर्वेषामिति** । आश्रीयमाणायां प्रकृताविल्यस्मिन्नेव पक्षे आश्रीयमाणे विधिग्रहणादधिकाद् यत्नात्स्वाश्रयनिवृत्त्यर्थात् सिध्यतीति भावः ॥ [5]अत एव पक्षान्तरोपन्यासः— **अथवेति** ॥

( द्वितीयपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्त्वविशेषेण स्थानिवदिति ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्-*अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिर्द्विर्वचनादयश्च क्सलोपे लुग्वचनम् * हन्तेर्घत्वम् * इति ॥

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः । यत्तावदुच्यते—अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः–इति ॥ उक्तमेतत्–* न वा संयोगस्यापूर्वविधित्वात् * इति ॥

---

१ 'यलोप–वाय्वोः' इति क. ग. पाठः ॥

२ 'तत्तत्कार्य' इति घ. प. पाठः ॥

३ अन्याश्रमायाह—इडितीति ॥ छाया ॥

४ असिद्धत्वम्–असिद्धवदत्रेत्यनेन ॥

५ अत एवेति । प्रागाश्रयणे विधाविति स्वाश्रयनिवृत्तौ किमाश्रीयमाणायामेवेत्यनेन कृतस्यादित्यपरितोषादेवेत्यर्थः ॥ अत्रापि विधिग्रहणात्स्वाश्रयनिवृत्तिरिति भावः ॥ छाया ॥

**यदप्युच्यते—द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः इति ॥ उच्यन्ते न्यास एव ॥**

*** क्सलोपे लुग्वचनम् * इति ॥ क्रियते न्यास एव ॥**

*** हन्तेर्घत्वम् * इति ॥ सप्तमे परिहारं वक्ष्यति ॥ अचः परस्मिन्पूर्वविधौ ॥ ५७ ॥**

( प्रदीपः ) **न वा संयोगस्येति** । संयोगसंज्ञायाः समुदायाश्रयत्वादपूर्वविधित्वम् ॥ **उच्यन्त इति** । अत एव लिङ्गादविशेषेण स्थानिवद्भावः ॥ **क्रियत इति** । अदुह्वद्यर्थमवश्यंकर्तव्यमिति भावः ॥ **सप्तम इति** । श्रुतिकृतमानन्तर्यमाश्रीयते, स्थानिवद्भावकृतं तु व्यवधानं वचनसामर्थ्यादविघातकम् ॥ ५७ ॥

( उद्द्योतः ) **संयोगसंज्ञाया इति** । अस्याशय उक्तः । वस्तुतः श्नुतस्य त्रैपादिकत्वात् **पूर्वत्रासिद्धे न स्थानिवदित्यने**नापि इदं सुसाधम् ॥ **अत एव लिङ्गादिति** । **न च** पुत्रमासमन्तादत्तुं शीलं यस्याः–पुत्रादिनीत्यादौ स्थानिवत्त्वान्नादिनीत्यस्याप्रवृत्तौ द्वित्वं प्राप्नोति तद्वारणाय द्विर्वचनग्रहणं कथमभावातिदेशे ज्ञापकमिति **वाच्यम्** । एतद्भाष्यप्रामाण्येन तस्यानभिधानात्, शीघ्रोपस्थितिकत्वेनाङ्गरहितादिनीशब्दस्यैव तत्र ग्रहणाच्चेति दिक् ॥ ५७ ॥

( ५३ स्थानिवद्भावनिषेधसूत्रम् ॥ १ । १ । ८ आ. ३ ॥ )

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥ १ । १ । ५८ ॥

( अथ पदान्तपदार्थनिरूपणम् )

( आक्षेपभाष्यम् )

**पदान्तविधिं प्रति न स्थानिवदित्युच्यते । तत्र वेतस्वानिति रुः प्राप्नोति ॥**

( प्रदीपः ) **न पदान्त०** ॥ ५८ ॥ **वेतस्वानिति** । भावसाधनविधिशब्दाश्रयेणोच्यते । वेतसशब्दात् **कुमुदनडवेतसेभ्यो ड्मतुबिति** ड्मतुपि टिलोपे कृते स्वादौ पूर्वं पदमिति पदसंज्ञायां सकारः पदान्तत्वं प्रतिपद्यत इति पदान्तताया विधीयमानत्वात् स्थानिवत्त्वनिषेधात् रुत्वप्रसङ्गः ॥

( उद्द्योतः ) **न पदान्तद्वि०** ॥ ५८ ॥ ननु स्थानिवत्त्वनिषेधं विना सस्य पदान्तत्वेनासिद्धेस्तस्य रुत्वसंपादके पदत्वे स्थानिवत्त्वस्य दुर्वारत्वात् सान्तस्य पदत्वाभावेन कथमत्र रुत्वप्राप्तिरत आह—**भावेति** । **पदान्तेति** च भावप्रधानो निर्देश इत्यपि बोध्यम् ॥ **इदं** चिन्त्यम्, द्विर्वचनादिसाहचर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणौचित्यात् ॥ भाष्यं त्वेवं व्याख्येयम्—रुत्वस्य पदचरमावयवत्वेन तत्र कर्तव्ये तन्निष्पादकपदत्वे च कर्तव्ये भावसाधनविधिशब्दाश्रयणे टिलोपस्य स्थानिवत्त्वनिषेधाद्रुत्वं प्राप्नोतीत्यर्थः ॥ यद्यपि पदसंज्ञा न पदचरमावयवो नापि पदान्तस्थाने विधिः, तथापि तस्याः कार्यार्थत्वात् कार्यस्य च रुत्वस्य तत्त्वान्न दोषः । पदचरमावयवसाधकस्यापि तत्त्वेन ग्रहणमित्याशयः ॥

( समाधानभाष्यम् )

**नैष दोषः । भसंज्ञाऽत्र बाधिका भविष्यति—"तसौ मत्वर्थे" इति ॥**

( प्रदीपः ) **तसौ मत्वर्थ इति** । 'तदस्मिन्नस्ति' इत्यत्रैवार्थे ड्मतुप् । न निर्वृत्तादिषु, अनभिधानादित्याश्रित्यैतदुच्यते ॥

( उद्द्योतः ) सिद्धान्त्येकदेश्याह—**भसंज्ञात्रेति** । भत्वे प्राप्तस्थानिवद्भावस्यापि सान्तनिष्ठपदत्वाप्रतिबन्धद्वारा रुत्वसंपादकत्वेन भत्वस्यापि पदान्तग्रहणेन ग्रहणात्तत्रापि स्थानिवत्त्वनिषेध इति सान्तनिष्ठभत्वेन तन्निष्ठपदत्वबाध इति भावः ॥ **न** पदान्तसूत्रदृष्ट्या त्रिपादी तु नासिद्धा, जशादिग्रहणात् ॥ कैयटोक्तरीत्या पूर्वपक्षयोजनेऽस्यायं भावः—भत्वे स्थानिवद्भावस्य सकारनिष्ठपदान्तत्वसंपादकतया परम्परया भसंज्ञाया अपि पदान्तत्वसंपादकत्वेन पदान्तत्वमिति तस्यापि निषेध इति समानावधिकत्वाद्भत्वेन पदत्वबाध इति ॥ एवं च परम्परया पदान्तत्वसंपादकस्यापि पदान्तविधिशब्देन ग्रहणे मदुक्तरीत्यैव पूर्वपक्षयोजनाऽप्युचिता ॥ नतु ड्मतुपोऽर्थान्तरेऽपि विधानात्कथं सर्वत्र भत्वमत आह—**अनभिधानादिति** । मतुशब्देन प्रसिद्धत्वात् मतुप एव ग्रहणमिति भावः ॥

( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**अकारान्तमेतद्भसंज्ञां प्रति, पदसंज्ञां प्रति सकारान्तम् ॥**

---

१ 'वकार ओष्ठसंभूतो दन्ताग्रकरणः स्मृतः ।' इति सकलर्षिसिद्धान्तमजानतोऽयं ग्रन्थ इति ॥ दाधिमथाः ॥

२ भाष्योक्तान्यप्रकारमप्याह—वस्तुत इति ॥ ग्रहणाच्चेति । **पूर्वत्रासिद्धे** इति निषेधसंभवाच्चेत्यपि बोध्यम् ॥

३ पदचरमावयवरुत्वसाधकपदसंज्ञायाः पदचरमावयवत्वेन विधिशब्दस्य भावसाधनत्वपक्षे प्राप्तिरित्युद्द्योतानुसारिणी व्याख्या । ( र. ना. )

४ भत्वे प्राप्तस्थानिवद्भावस्यापि सान्तनिष्ठपदत्वाप्रतिबन्धद्वारा रुत्वसंपादकत्वेन भत्वस्य पदान्तग्रहणेन ग्रहणमिति सिद्धान्त्येकदेशी । ( र. ना. )

५ ननु निषेधदृष्ट्या रुत्वासिद्धया कथं तत्संपादकपदत्वे तत्रापि निषेधोऽत आह—**न पदान्तेति** ॥ छाया ॥

६ **अस्य**—भसंज्ञेति ग्रन्थस्य ॥ **तस्यापि**–भत्वे स्थानिवत्त्वस्यापि ॥ छाया ॥

७ **एवं च**—परम्पराश्रयणावश्यकत्वे च ॥ **ग्रहणे**–अत्रेति शेषः ॥ **अपिनैतत्संग्रहः** ॥ उक्तदोषाभाव औचित्ये हेतुः ॥ छाया ॥

८ **सर्वत्र**—अन्येषाममत्वर्थत्वात् ॥ छाया ॥

९ ननु तत्र ड्मतुप एव ग्रहणमास्तामत आह—**मतुशब्देनेति** ॥ छाया ॥

१० 'प्रति तु' इति ग. पाठः ॥

( प्रदीपः ) **अकारान्तमिति** । भसंज्ञां प्रति स्थानिवत्त्वनिषेधाभावात् सकारान्तत्वाभावान्नास्ति भसंज्ञा ॥ पदान्तत्वे[1] विधीयमाने स्थानिवत्त्वनिषेधात् सकारान्तस्य पदत्वाद्रुत्वप्रसङ्गः ॥

( उद्द्योतः ) तत्र पूर्वपक्ष्याह—**अकारान्तमेतदिति** । साक्षात्परम्परया वा पदान्तकार्यप्रतिबन्धकस्य प्रापकस्य वा निषेधे परम्परा पदान्तपदे उपस्थितपदत्वद्वारिकैव नान्यद्वारिकेति भत्वे न निषेध इति सान्तत्वाभावात्तदप्राप्तिरिति भावः ॥

( सिद्धान्त्येकदेशिसमाधानभाष्यम् )

**ननु चैवं विज्ञायते—यः संप्रतिपदान्त इति ॥**

( प्रदीपः ) **ननु चेति** । स्थानिवत्त्वनिषेधाद्विना यः सिद्धपदान्तः[2], तस्य विधौ स्थानिवत्त्वनिषेधः । यथा—कौ स्तः, कानि सन्तीति । इह तु सकारः स्थानिवत्त्वनिषेधाद्विना पदान्तत्वेनासिद्ध इति भवत्येव स्थानिवद्भाव इत्यपदान्तत्वात्सकारस्य रुत्वाभावः ॥

( उद्द्योतः ) सिद्धान्त्येकदेश्याह—**ननु चेति** । अत्र पदस्योद्देश्यतयैतत्साध्यपदत्ववत्समुदायान्त्यकार्ये नायं निषेध इति पदत्वेऽपि स्थानिवत्त्वात् सान्तस्य पदत्वाभावेन रुत्वाभावः सिद्ध इति भावः ॥ तत्र किमपेक्षया संप्रति - इत्यत आह—**स्थानिवत्त्वनिषेधादिति** । एतत्साध्यपदत्ववतोऽत्रोद्देश्यत्वासंभवः[3] । भावसाधनेऽपि विधेयस्य पदचरमावयवत्वं स्थानिद्वारैव वाच्यमिति स्थानिनः स्थानिवद्भावेन तत्त्वाभावे विधेयस्य सुतरां तदभाव इति भावः ॥ स्थानिवत्त्वनिषेधं[4] विना यः पदत्वेन सिद्धस्तस्य चरमावयवे कर्तव्य इत्यक्षरार्थः ॥ संप्रतिपदशब्देन[5] समस्तेनान्तशब्दस्य षष्ठीतत्पुरुष इति बोध्यम् ॥ यद्यपि[6] **तस्य भाव** इत्यादौ तत्साध्य-त्वप्रत्ययान्तादेरप्युद्देश्यता, तथाप्यत्र लक्ष्यानुरोधादेवमर्थकत्वमिति तात्पर्यम् ॥

( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**कर्मसाधनस्य[7] विधिशब्दस्योपादाने एतदेवं स्यात्[8] ॥**

( उद्द्योतः ) पूर्वपक्षी उक्तमाशयमजानानः **संप्रतीति** पदान्तस्य विशेषणं मन्यमान आह—भाष्ये—**कर्मसाधनस्येति** । संप्रति पदान्तस्य स्थाने विधाविति हि तदाऽर्थः ॥

( सिद्धान्त्येकदेशिभाष्यम् )

**अयं च विधिशब्दोऽस्त्येव कर्मसाधनः—विधीयते-विधिरिति ॥**

( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**अस्ति च भावसाधनः—विधानं-विधिरिति । तत्र[9] भावसाधनस्य विधिशब्दस्योपादाने एष दोषो भवति ॥ इह च—ब्रह्मबन्ध्वा, ब्रह्मबन्ध्वै । धकारस्य जश्त्वं प्राप्नोति ॥**

( प्रदीपः ) **ब्रह्मबन्ध्वेति** । ब्रह्मबन्धुशब्दादूङ्, ऊङ्नूङोरेकादेश आदिवद्भावादूङ्ग्रहणेन[10] गृह्यत इति तस्मिन् **स्वादिष्विति** पदसंज्ञायां धकारस्य पदान्तता विधेयेति स्थानिवत्त्वनिषेधाज्जश्त्वं स्यात् । भसंज्ञां तु प्रति एकादेशस्य स्थानिवत्त्वादुकारान्तमेतदिति भिन्नावधिकत्वाद्भपदसंज्ञयोर्नास्ति बाध्यबाधकभावः । यणादेशोच्चारणं चातन्त्रम्, एकादेशस्यैवोदाहरणत्वात् ॥

( उद्द्योतः ) ( भाष्ये ) **तत्र भावसाधनस्येति** । कर्मसाधनत्वे[11] हि द्विर्वचनादिभिः सामानाधिकरण्यं - पदान्तेन वैयधिकरण्यं च स्यात् । भावसाधने–पदचरमावयवद्विर्वचनादिकर्मविधाने इत्यर्थः । तत्र हि पदचरमावयवत्वेन सिद्धकर्मके विधाने इति वक्तुमशक्यम्, सिद्धत्वे विधानवैयर्थ्यात् । एवं[12] चाकारान्तमेतदितिप्रतीकोक्तयुक्त्या पदत्व एव स्थानिवत्त्वनिषेधात्सान्तमेव पदत्वं प्रति, भत्वे तु निषेधाभावात् अकारान्तं भत्वं प्रति - इति स्यादेव रुत्वमिति भावः ॥ ( भाष्ये ) **जश्त्वं प्राप्नोतीति** । झलां जशोऽन्त इत्यस्य पदचरमावयवविधायकत्वात् । जशिग्रहणं[13] तु **झलां जशि**ति जश्त्वे तन्निषेधार्थम् ॥ **एकादेशस्यैवेति** । अत **एवोभयत आश्रये ने**त्यनेन वक्ष्यमाणं समाधानं सङ्गच्छते ॥

---

१ 'न्तत्वे तु विधौ' इति क. पाठः ॥

२ 'सिद्धः पदान्तः' इति सविसर्गपाठः क. ग. पुस्तकयोः ॥

३ अत्र–निषेधे ॥ **त्वासंभव इति** । असिद्धत्वात् ॥ छाया ॥

४ समस्तपाठेन कथं सोर्थोऽत आह—**स्थानिवत्त्वेति** ॥ छाया ॥

५ नन्वेवमपि भाष्यात्कथमिदं लब्धमत आह—**संप्रतीति** । सुप्सुपेति समासः ॥ छाया ॥

६ अस्य व्यभिचारमाह—**यद्यपीति** ॥ छाया ॥

७ संप्रतिपदस्य पदान्तशब्देन समासं मत्वाऽऽह—**कर्मेत्यादि** । अयं भावः । संप्रतिशब्दस्य पदान्तशब्देन समासे विधिशब्दस्य भावसाधनत्वपक्षे उक्तिसंभव एव नास्ति । पदचरमावयवस्य सिद्धत्वे तत्कर्मकविधानवैयर्थ्यात् । तस्य कर्मसाधनत्वपक्षे 'एतत्साध्यपदत्ववत्समुदायान्त्यकार्ये नायं निषेधः' इत्युद्द्योतोक्तरीत्या, इह तु सकार इत्यादिकैयटोक्तरीत्या वा रुत्वाभावः सिद्धः । संप्रतिशब्दस्य पदशब्देन समासे तस्यान्तशब्देन षष्ठीतत्पुरुषे यद्यपि भावसाधनत्वपक्षेऽपि रुत्वाभावः 'भावसाधनेऽपि' इत्यादिनोद्द्योतोक्तरीत्या सिद्ध्यति तथापि तदज्ञानेन **कर्मसाधनस्ये**त्यादि भाष्ये पूर्वपक्ष्युक्तिरिति ध्येयम् । ( रघुनाथाः )

८ **एतदेवं स्यादिति** । उक्तदोषः परिहृतः स्यादित्यर्थः ॥ न तु भावसाधने इति भावः ॥ छाया ॥

९ **तत्र**–तयोर्मध्ये ॥

१० 'दूङ्ग्रहणेन' इति ग. पाठः ॥

११ तत्र बीजमाह—**कर्मेति** ॥ ननु प्राग्वदत्रापि निर्वाहोऽत आह—**तत्र हीति** । संप्रतीत्यस्य पदान्तविशेषणत्वे हीत्यर्थः ॥ छाया ॥

१२ **एवं च**–भावसाधनपक्षाङ्गीकारे च ॥ **उक्तेति** । पदत्वद्वारिकैव परम्परा नान्यद्वारिकेतीत्यर्थः ॥ कानि सन्तीत्यादौ वाक्यसंस्कारपक्षो बोध्यः ॥ छाया ॥

१३ नन्वेवं जश्पदं व्यर्थमत आह—**जशीति** ॥ **अत एव**–तस्यैवोदाहरणत्वादेव ॥ छाया ॥

( सिद्धान्त्येकदेशिप्रश्नभाष्यम् )

**अस्ति पुनः किंचिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्, आहोस्विद्दोषान्तमेव?**

**( उद्द्योतः )** सिद्धान्त्येकदेश्याह—**अस्ति पुनरिति** ॥

( पूर्वपक्षिप्रतिवाक्यभाष्यम् )

**अस्तीत्याह ॥ इह—कानि सन्ति, यानि सन्ति, कौ स्तः, यौ स्त इति । योऽसौ पदान्तो यकारो वकारो वा श्रूयेत, स न श्रूयते ॥**

**षडिकश्चाऽपि सिद्धो भवति ॥**

**( प्रदीपः ) कानि सन्तीति ।** पक्षद्वयसाधारणमिदं प्रयोजनम् । भावसाधनपक्षेऽपि सिध्यत्येवेति तूपन्यस्तम् ॥ **यकार इति ।** यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्ततायाः विधानम् ॥

इदानीमसाधारणं प्रयोजनमाह—**षडिक इति ।** षडङ्गुलिशब्दात् 'बह्वचो मनुष्यनाम्नष्ठच्—' इति ठचि कृते **ठाजादावूर्ध्वमिति** ङ्गुलिशब्दस्य लोपे **यस्येति** लोपे च षषित्ययं शब्दोऽन्तर्वर्तिन्या विभक्त्या सिद्धः पदत्वेनेति पदान्ततायाः अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकारलोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा । पदसंज्ञा त्वन्तर्वर्तिविभक्त्याश्रयेण षकारान्तस्येति सिद्धं जश्त्वम् ॥ कर्मसाधने तु षषः षकारः पदान्तत्वेन सिद्ध इति स्थानिवत्त्वनिषेधात् षकारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया एकसंज्ञाधिकारात् बाधनाजश्त्वासिद्धिः ॥

**( उद्द्योतः )** पूर्वपक्ष्याह—**इह कानीति ।** इह पदान्त एव यकारादिर्विधेय इति भावसाधनेऽपि सिध्यतीति भावः ॥

**असाधारणमिति ।** भावसाधनपक्षमात्रसाध्यमित्यर्थः ॥

भाष्ये—**षडिकश्चापीति ।** अत्रैकादेशा[1]ल्लोपान्तसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतयाऽसिद्धत्वेन जश्त्वाप्रवृत्तिः, तदनन्तरं त्वल्लोपस्य स्थानिवत्त्वप्रसक्तिः । तत्र कर्मसाधने **यस्येति** लोपे इकनिमित्तभत्वेन समासान्तर्वर्तिविभक्तिनिमित्तकपदत्वस्यापि निवृत्तेः षडिकासिद्धिः ॥ **न च** भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरिति **वाच्यम् ।** साक्षात्परम्परया वा पदान्तस्थानिकविधिप्रापकप्रतिबन्धकस्थानिवत्त्वस्य निषेधेन भत्वेऽपि तन्निषेधात् । [2]पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्द्वारकपरम्पराया वक्तुमशक्यत्वेनान्यद्वारिकाया अपि ग्रहणात् ॥ भावसाधनत्वे तूपस्थितपदत्वद्वारिकैव परम्परा गृह्यते - इति भत्वे निषेधाभावेन स्थानिवत्त्वादकारान्ते भत्वेऽपि षान्ते पदत्वस्याव्याघातेन न दोष इत्याशयः ॥ कैयटे - **पदान्ततायाः अविधानादिति ।** पदत्वस्याविधानेन धर्मविशिष्टत्वेनाऽपि पदान्तस्यास्याविधानादिति भावः ॥ **सिद्ध इति ।** [3]जश्त्वे कार्ये - इति शेषः ॥

( सिद्धान्त्येकदेशिन आक्षेपभाष्यम् )

**वाचिकस्तु न सिध्यति ॥**

**( प्रदीपः ) वाचिकस्त्विति ।** चकारस्य पदान्तत्वात्कुत्वप्रसङ्गात् ॥ कथं पुनः षडिकस्य सिद्धिः । यावतोक्तं - **योऽसौ पदान्तो यकार** इति, तद्वदिहापि डकारस्य पदान्तस्य विधेयत्वात् पदान्ततायाः विधिरिति स्थानिवत्त्वनिषेधप्रसङ्गः ॥ नैष दोषः । पूर्वमेव जश्त्वेन डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति भावसाधने षडिकसिद्धिः ॥ कर्मसाधने तु डकारस्य पदान्तत्वेन प्रसिद्धस्य भत्वात्पदत्वनिवृत्तौ षकाररूपापत्तिर्विधेयेति स्थानिवत्त्वनिषेधात् तुल्यावधिकया भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वनिवृत्तौ षडिकासिद्धिः ॥ न च भावसाधने षकारापत्तिर्भाव्येति शक्यते वक्तुम्, तस्याः अपदान्तरूपत्वात् । पदान्तत्वे हि जश्त्वं स्यात् । न च जश्त्वविधिनिमित्तः स्थानिवत्त्वनिषेधः । यत्र स्थानिवत्त्वनिषेधाज्जश्त्वं विधीयते 'सग्धिः' 'बब्धाम्' इति, सोऽस्य विषयः । इह तु पूर्वमेव जश्त्वं कृतं, स्थानिवत्त्वनिषेधात्तु तन्निवृत्तिराशङ्क्यते । **पूर्वत्रासिद्धे न स्थानिव**दित्यस्याप्ययमविषयः । न ह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेयम् ॥

**( उद्द्योतः )** सिद्धान्त्येकदेश्याह—**वाचिकस्त्विति ॥ चकारस्येति ।** वाचिके[4]ऽपि वागाशीर्दत्तशब्दात् ठचि **ठाजादा**विति शीर्दत्तशब्दलोपे **यस्येति** लोपे पूर्वोदाहरणे उक्तवदत्रापि कुत्वापत्तिरिति भावः ॥ एवं मदुक्तरीत्या भाष्यस्य सामञ्जस्ये **कथं पुनरि**त्यादि - **न ह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेय**मित्यन्तः कैयटश्चिन्त्यः । स्फुटार्थत्वाच्च न व्याख्यातः । त[5]र्हि—**पूर्वमेव डस्य निष्पन्नत्वा**दित्यसङ्गतं, सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्राप्तेः । किंच षकाररूपापत्तिर्न शास्त्रीया । पदचरमावयवस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वाद् इत्याद्यूह्यम् ॥

( तटस्थभाष्यम् )

**अस्तु तर्हि कर्मसाधनः ॥**

( सिद्धान्त्येकदेशिभाष्यम् )

**यदि कर्मसाधनः, षडिको न सिध्यति ॥**

( तटस्थभाष्यम् )

**अस्तु तर्हि भावसाधनः ॥**

( सिद्धान्त्येकदेशिभाष्यम् )

**वाचिको न सिध्यति ॥**

( तटस्थभाष्यम् )

**वाचिकषडिकौ न[6] संवदेते ॥**

( सिद्धान्तिभाष्यम् )

**कर्तव्योऽत्र यत्नः ॥**

---

१ 'देशाल्लोपान्तं' इति ज. प. पाठः ॥

२ ननूक्तरीत्या वारणमत आह—**पदान्तत्वेनेति** ॥ स्वरीत्या व्याचष्टे—**पदत्वस्येति** ॥ छाया ॥

३ सर्वदा तदभावादाह—**जश्त्वे इति** ॥ छाया ॥

४ स्थानिवत्त्वनिषेधादिति शेषः । ( र. ना. )

५ **अपिः** षडिकसमुच्चये ॥ छाया ॥

६ चिन्त्यत्वमुपपादयति—**तथापीत्यादिना** ॥ छाया ॥

७ **न संवदेते**—नैकपक्षेण सिध्यतः ॥ छाया ॥

**( प्रदीपः ) कर्तव्योऽत्रेति । एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य** इति वाचिकः सिद्धः । षडिकस्तु[1] **ठाजादा**विति लोपे **यस्येति**लोपे च सिद्धः ॥

**( उद्योतः )** सिद्धान्त्याह—**कर्तव्योऽत्रेति** । पञ्चमे वक्ष्यमाणं यत्नं दर्शयति—**एकेति** । तथा चाज्झलादेशत्वाद्वाचिके भत्वेऽपि न स्थानिवत्त्वमिति भावः ॥ एवं च भावसाधनपक्षोऽत्र स्थितः ॥

**( आक्षेपभाष्यम् )**

**कथं—ब्रह्मबन्ध्वा - ब्रह्मबन्ध्वै ?**

**( उद्योतः )** पूर्वपक्ष्याह—**कथं ब्रह्मबन्ध्वेति** ॥

**( समाधानभाष्यम् )**

**उभयत आश्रयणे नान्तादिवदिति ॥**

**( प्रदीपः ) उभयत इति** । यस्मात् स्वादिविधिस्तत्स्वादौ पदमिति पूर्वपरोभयाश्रयणम् ॥

**( उद्योतः )** सिद्धान्त्येकदेशी उक्तमपि **यः संप्रतिपदान्त** इत्येवंरूपं सिद्धान्तं परेणागृहीतत्वाद्यक्षानुरूपबलिन्यायेनाह—**उभयत इति** ॥ तद्याचष्टे—**यस्मात्स्वादिविधिरिति** । अत[3] एवात्र नैकदेशविकृतन्यायेन धान्तस्य पदत्वसंभावना, उकारान्ताद्रूङ्विधानेनाक्तपरिमाणसंज्ञात्वेन दुर्लभत्वात् । **उभयत आश्रयणे** इत्यस्यैकदेशिमतत्वाच ॥ एतच्चा[4]न्तादिवत्सूत्रे वक्ष्यते ॥

**( आक्षेपभाष्यम् )**

**कथं वेतस्वान् ?**

**( उद्योतः )** पूर्वपक्ष्याह—**कथं वेतस्वानिति** ॥

**( समाधानभाष्यम् )**

**नैवं विज्ञायते—पदस्यान्तः-पदान्तः, पदान्तविधिं प्रतीति ॥**

**कथं तर्हि ?**

**पदे अन्तः-पदान्तः, पदान्तविधिं प्रतीति ॥**

**( प्रदीपः ) पदे अन्त इति** । न च ड्मतुप्प्रत्ययः पदम् । एवं षडिके-इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः ॥

**( उद्योतः )** अथ 'वेतस्वान्' इत्येवंजातीयकानामेतदनुदाहरणत्वमेवेति बोधयितुं वास्तवं सिद्धान्तमाह—**नैवमिति**[5] ॥ तद्याचष्टे—**न च ड्मतुविति** । एवं[2] ब्रह्मबन्धूशब्दे ऊकारो न पदमिति बोध्यम् ॥ नन्वि[6]दमयुक्तं गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासे असुबन्तत्वेन, सुबन्तेन[7] समासे-**उत्तरपदत्वे** चेति प्रत्ययलक्षणनिषेधेन चोत्तरस्यापदत्वात् 'गोचा' इत्यादावल्लोपस्य स्थानिवत्त्वेनावञापत्तेरिति चेत् न; उत्तरपदस्य[8] कार्यित्वे एव प्रत्यासत्त्या तन्निषेधप्रवृत्तेः । अत्र चेदं भाष्यमपि मानम् । सुबुत्पत्तेः[9] पूर्वं समासस्य चैतद्विषयेऽनित्यत्वान्न प्रवृत्तिरिति भावः ॥ एवं च विग्रहद्वयप्रदर्शनेन **पदचरमावयवे कर्तव्ये परपदस्याजादेश एव न स्थानिवदिति** भाष्ये ध्वनितम् । कानि सन्तीत्याद्येवोदाहरणम् । एवं च पूर्वसूत्रे **अपरविधाविति** प्रघट्टकस्थकैयटग्रन्थो **भोभगो** इति सूत्रस्थकैयटग्रन्थश्च चिन्त्य एव ॥ एवं[10] 'षडिके' इत्याद्यपि चिन्त्यम्, इकस्य पदत्वाभावेऽपि अङ्गुलि[11]शब्दाकारयोर्लोपे तस्य स्थानिवद्भावेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेनादोषादिति दिक् ॥

**( समाधानान्तरभाष्यम् )**

**अथवा यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते-रुत्वं जश्त्वं च । एवमिदमपि पदकार्यमुपप्लोष्यते ॥**

**किम् ?**

**भसंज्ञा नाम ॥**

**( प्रदीपः ) यथैवेति । यचि भ**मित्यत्र **तसौ मत्वर्थ** इत्यत्र च 'पदं' इति वर्तते । तेन पदं सत् भसंज्ञं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्था भसंज्ञा तद्विषयत्वात् पदान्तविधिरिति स्थानिवत्त्वनिषेधात् भत्वाद्रुत्वाभावः सिद्धः ॥

**( उद्योतः )** भाष्ये—**पदस्यान्त** इति[12] पक्षे पूर्वपक्ष्यभिमते 'एकपदस्थाजादेशस्य स्थानिवत्त्वनिषेधेऽपि न दोषः' इति प्रौढ्या प्रतिपादयितुं **भसंज्ञाऽत्र बाधिका भविष्यतीति** स्वोक्तेरेकदेशी आशयमाह—**अथवेति** । यः[13] **संप्रति पदान्त** इत्येतत्तु न शब्दमर्यादालभ्यमिति भावः ॥ अस्य पक्षस्य कैयटोक्तव्याख्या चिन्त्या,

---

१ 'कस्तु पषष्ठाजादिवचनासिद्धमित्युत्तरपदलोपाभावे ठाजा' इति क. पाठः ॥

२ अपिना पदत्वम् ॥ पर्यवसितमाह—**एवं चेति** ॥ निर्दुष्टत्वे चेत्यर्थः ॥ छाया ॥

३ **अत एव**-अस्यासिद्धान्तत्वादेव ॥ छाया ॥

४ ननु कथमिदमत आह—**एतच्चेति** ॥ छाया ॥

५ अस्मिन्पक्षे आह—**एवमिति** ॥ भाष्यसिद्धान्ते ॥ छाया ॥

६ शङ्कते—**नन्विदमिति** ॥ सप्तमीसमासेन व्याख्यानमित्यर्थः ॥ छाया ॥

७ प्रकारान्तरमाह—**सुबन्तेनेति** ॥

८ द्वितीये तावदाह—**उत्तरेति** ॥ अपिना भाष्यान्तरसमुच्चयः ॥ तच्चान्यत्र स्पष्टम् ॥

९ आद्ये आह—**सुबुत्पत्तेरिति** ॥ **एवं च**-उक्तार्थस्य ध्वनने च ॥

१० अत्रत्याभिमतदसंगतिमाह—**एवमिति** ॥

११ **अङ्गुलिशब्दाकारयोरिति** । अत्र **ठाजादावूर्ध्वं**मिति सूत्रेण प्राप्तो लोपः 'लोपः पूर्वपदस्य च' इत्यादिवार्तिकात् पदस्यैव भवन् सूत्रे **द्वितीयादच** इत्युक्तत्वात् 'ङ्गुलि' शब्दस्य भवति । अतोऽत्र 'अङ्गुलिशब्दाकारयोः' इत्युक्तम्, तस्यैव पदत्वात् । अङ्गुलिशब्द-अकार-इत्यनयोर्द्वन्द्वे अल्पाच्तरत्वादकारपदस्य प्राप्तः पूर्वनिपातः 'अङ्गुलि'शब्दावयवस्य लोपः पूर्वं भवतीति तस्यैव पूर्वनिपातः । अत्र 'ङ्गुलिशब्दाकारयोः' इति पाठः प्रामादिकः, तस्य प्रामाणिकपुस्तकेष्वदर्शनात ॥ तथा तदग्रे 'विधिसत्वेन दोषात्' इत्यपि पाठः प्रामादिकः । प्रदीपे 'षडिके इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः' इत्युक्तो दोषोऽप्यस्मिन् पक्षे नास्ति । अत एव 'विधिसत्वेनादोषात्' इत्येव पाठः ॥

१२ मुद्रितपुस्तकेषु 'इति पूर्वपक्षे' इति पाठः । प्रामाणिकपुस्तकेषु तथा नोपलभ्यते ॥

१३ ननु प्रागुक्तरीत्या निर्वाहोऽत आह—**यः संप्रेति** ॥छाया॥

तावताऽपि भसंज्ञायाः पदान्तविधित्वानुपपादनात् । किंच यथा कारकाधिकारे 'कारकं सत्कर्म' इति व्याख्यानेन तयोः संज्ञयोः समावेश उक्तस्तथाऽत्रापि स्यात् । न हि भत्वपदत्वयोः समावेश इष्टः । [1]तस्मादेवं व्याख्येयम्–यथा रुत्वजश्त्वादीनां साक्षात्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः प्रतिबध्यते, तथा भसंज्ञाविषयातिदेशस्यापि परम्परया तत्त्वाद् निषेधः–इति ॥ [2]**यथैवान्यानि पदकार्याणि**–पदचरमावयवकार्याणि रुत्वजश्त्वादीनि तत्प्रापकपदसंज्ञारूपं चात्र सूत्रे **उपप्लवन्ते**–पदान्तविधिशब्देन गृह्यन्ते, पदचरमावयवप्रापकाद्यपि तत्त्वेन गृह्यते । **एवमिदमपि**–भसंज्ञारूपमपि **पदकार्यं**–परम्परया पदचरमावयवप्रापकं प्रतिबन्धकं वा पदचरमावयवत्वेन गृह्यते इत्यर्थः ॥ [3]अयं भावः—यथा पदान्तपदे उपस्थितत्वात्पदत्वद्वारिका परम्परा गृह्यते तथा पदत्वबाधकतया भत्वस्यापि प्रत्यासन्नत्वेन तद्द्वाराऽपि पदचरमावयवविषयस्थानिवत्त्वप्रतिषेध इति ॥ [4]षडिके तु **षषष्ठाजादिवचनात्सिद्धमिति** द्वितीयादच ऊर्ध्वं लोपविधायकवचनप्रामाण्यात्तद्विषये न भत्वद्वारा पदचरमावयवसंपादनस्थानिवत्त्वप्रतिषेध इति न दोषः । [5]वाच्चिके त्वेवं न दोषः, उत्तरपदलोपविधानात् । [6]पञ्चमे चेदमुपपादयिष्यते ॥ [7]एवं चामलकी तटी सारसीत्यादौ जश्त्वादिप्रसक्तिरेव नेति बोध्यम् ॥ [8]यद्यपि **पूर्वत्रासिद्धे न स्थानिवदिति** निषेधोऽत्र प्राप्नोति, तथापि विधिशब्दो भावसाधनोऽन्तशब्दश्चरमावयववाचीत्यादिसिद्धान्तान्बोधयितुं, **पूर्वत्रासिद्धे** इत्यादावपि साक्षात्परम्परया प्रापकप्रतिबन्धकस्य निषेध इत्यादि बोधयितुं, **पदेऽन्त** इति सप्तमीसमासेन वेतस्वानित्यादौ **न पदान्ते**ति निषेधवारणेन **पूर्वत्रासिद्धे ने**त्यत्र पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणम् । एवं जश्पदेन–इति बोधयितुं चायमुपक्षेप इति बोध्यम् ॥

## ( वरे यलोपपदार्थनिरूपणम् )

### ( आक्षेपभाष्यम् )

**वरे यलोपविधिं प्रति न स्थानिवद्भवतीत्युच्यते । तत्र ते "अप्सु यायावरः प्रवपेत पिण्डान्" अवर्णलोपविधिं प्रति स्थानिवत्स्यात् ॥**

( उद्द्योतः )[9] भाष्ये—**अवर्णलोपविधिमिति** । **आतो लोप इटि चे**त्येतं प्रतीत्यर्थः । एवं च वरेयलोपग्रहणे कृतेऽपि 'यायावरः' इत्यस्यासिद्धिरिति शङ्का ॥

### ( समाधानभाष्यम् )

**नैष दोषः । नैवं विज्ञायते—वरे यलोपविधिं [10]प्रति-इति ॥**

**कथं तर्हि ?**

**वरे अयलोपविधिं प्रतीति ॥**

**किमिदं—अयलोपविधिं प्रतीति ?**

**अवर्णलोपविधिं प्रति, यलोपविधिं च प्रतीति ॥**

### ( समाधानान्तरभाष्यम् )

**अथवा योग[11]विभागः करिष्यते—'[12]वरे लुप्तं न स्थानिवत्' । ततः—'यलोपविधिं प्रति न स्थानिवत्' इति ॥**

( उद्द्योतः ) 'यातिः' इत्यस्यात्र[13]सिद्धेः सिद्धान्तमाह—**अथवेति** ॥

### ( आक्षेपभाष्यम् )

**यलोपे किमुदाहरणम् ?**

( उद्द्योतः ) **यलोपे किमिति** । यायावरे यलोपस्य **वरे** इत्यनेनैव सिद्धत्वात्प्रश्नः ॥

### ( समाधानभाष्यम् )

**कण्डूयतेरप्रत्ययः – कण्डूरिति ॥**

( प्रदीपः ) **कण्डूयतेरिति** । क्यजन्तात् क्विप् । यगन्तात्तु क्विप् न भवति । उक्तं हि भाष्ये—**नैतेभ्यः क्विप् दृश्यत** इति ॥

( उद्द्योतः ) कैयटे—**उक्तं हीति** । **कण्ड्वादिभ्यो यगि**त्यत्र भाष्ये ॥

### ( समाधानबाधकभाष्यम् )

**नैतदस्ति ॥ क्वौ लुप्तं न स्थानिवत् ॥**

( उद्द्योतः ) **क्वौ लुप्तमिति** । यद्यप्यप्रत्ययशब्देन विजप्यु-

---

१ नन्वेवं का गतिर्भाष्यस्यात आह—**तस्मादिति** ॥ **तत्त्वात्**–तत्प्रापकत्वात् प्रतिबन्धकत्वाद्वा ॥ छाया ॥

२ ननु कथमिदं भाष्याक्षरतो लब्धमत आह—**यथैवेति** ॥ छाया ॥

३ ननु प्रागुक्तविरुद्धमिदमत आह—**अयं भाव** इति ॥ छाया ॥

४ नन्वेवमतिप्रसङ्गोऽत आह–**षडिके त्विति** । **इति**–इत्युक्तेः ॥ **वचनं**–सूत्रम् ॥ छाया ॥

५ नन्वेवं वाच्चिके दोषोऽत आह—**वाच्चिके त्विति** । **एवं**–षडिके उक्तेन प्रकारेण ॥ **उत्तरेति** । वार्तिकेन ॥ छाया ॥

६ ननु कथमिदं वैषम्यमत आह—**पञ्चमे चेदमिति** । वैषम्यमित्यर्थः ॥ छाया ॥

७ **एवं** च–उक्तरीत्या तस्य निषेधे च ॥

८ सिद्धान्ते तु प्रकारान्तरेण वारणीयेत्येव तात्पर्यम् । तदेव ध्वनयन्नाह—**यद्यपीति** ॥

९ अतो **लोप** इत्यस्य प्रकृतेऽप्राप्तेराह—**आतो लोप इति** ॥ **एवं च**–एकदेशिना तथा समाध्युक्तौ च ॥ **वरे इति** । अल्लोपे तस्य स्थानिवत्त्वेन यलोपे प्राप्ते तत्र तन्निषेधार्थमिति भावः ॥ छाया ॥

१० 'प्रति न स्थानिवद्भवतीति' इति क. ग. पाठः ॥

११ योगशब्दो योगावयवे लाक्षणिकः ॥ **वरे इति** । निपातनादलुक् द्वन्द्वश्च ॥ छाया ॥

१२ नन्वा**र्धधातुक** इत्यस्य विषयसप्तमीत्वाभ्युपगमात् परनिमित्तकत्वाभावेनाकारलोपस्य न स्थानिवत्त्वप्राप्तिः । अत एव हि **अचो यदि**ति सूत्रेऽज् ग्रहणं चरितार्थम् । अन्यथा हलन्तेभ्यो ण्यतो विशेषविहितत्वेन परिशेषादजन्तादेव यतः प्राप्तेः किं तेन । विषयसप्तम्यां तु सत्यां दित्स्यं धित्स्यमित्यादावजन्तभूतपूर्वादपि यत्सिद्धयेऽज्ग्रहणमिति चेत् ॥ सत्यम् । वरेग्रहणेन परसप्तमीपक्षोऽपि ज्ञाप्यते ॥श० कौ०॥

१३ **अत्र**–पक्षे ॥ छाया ॥

[1]च्यते, तथापि तस्य क्वाचित्कत्वान्न दोषः ॥ किग्रहणं विचोऽप्युपलक्षणमित्यन्ये ॥

(समाधानान्तरभाष्यम्)

**इदं तर्हि—सौरी बलाका ॥**

(प्रदीपः) **सौरीति** । एकोऽणि अकारलोपो द्वितीय ईकारे, तयोः स्थानिवत्त्वाद्यकारस्योपधात्वं न स्यात् । स्थानिवत्त्वनिषेधे द्वितीयलोपस्य स[2]मानाश्रयत्वादसिद्धत्वादणि लोपस्य व्याश्रयत्वात्सिद्धत्वात् यकारस्य उपधात्वाल्लोपः सिध्यति ॥

(बाधकभाष्यम्)

**नैतदस्ति । उपधात्वविधिं प्रति न स्थानिवत् ॥**

(उद्योतः) उपधात्वविधिं प्रतीति । [3]प्रत्ययविधावित्यनाश्रित्येदम् ॥

(समाधानान्तरभाष्यम्)

**इदं तर्हि प्रयोजनम्—आदित्यः ॥**

(प्रदीपः) **आदित्य इति** । अदितेः **सास्य देवते**त्यत्रार्थे ण्यः, ततो भवादावर्थे द्वितीयो ण्यः । **हलो यमां यमी**ति लोप इष्यते, स च स्थानिवत्त्वनिषेधात् सिध्यति ॥

(उद्योतः) **तत इति** । [4]आदित्यशब्दादित्यर्थः । अदितेरपत्यण्यान्ताद्देवतार्थे ण्य इति तु नोक्तं, **आपत्यस्ये**त्यस्य प्राप्त्या **पूर्वत्रासिद्ध** इत्युत्तरग्रन्थासङ्गतेः । तस्मादेतत्खण्डनमेतदज्ञानेनैवेति बोध्यम् ॥

(बाधकभाष्यम्)

**नैतदस्ति । पूर्वत्रासिद्धे न स्थानिवत् ॥**

(प्रयोजनभाष्यम्)

**इदं तर्हि—कण्डूतिः, वल्गूतिः ॥**

(बाधकभाष्यम्)

**नैतदस्ति प्रयोजनम् । कण्डूया, वल्गूया-इति [5]भवितव्यम् ॥**

(समाधानान्तरभाष्यम्)

**इदं तर्हि—कण्डूयतेः क्तिच् । ब्राह्मणकण्डूतिः, क्षत्रियकण्डूतिः ॥**

(प्रदीपः) **ब्राह्मणकण्डूतिरिति**—षष्ठीसमासः । [6]कर्मधारये कण्डूतिशब्दस्य पूर्वनिपातप्रसङ्गः ॥

(उद्योतः) **कण्डूतिशब्दस्येति** । विशे[7]षणत्वादित्यर्थः ॥ न चात्राल्लोपस्य स्थानिवत्त्वादुवङ् यण्वा स्यादिति वाच्यम् । जाते तत्रे[8]ठा सिद्धेः । ऊठि तु न स्थानिवत्त्वम्, अनादिष्टादचः पूर्वत्वाभावात् । [9]अस्मादेव भाष्यप्रयोगात्स्थानिद्वारकं त[10]दाश्रयणं क्वाचित्कमित्याहुः ॥

(३५८ नियमाक्षेपवार्तिकम् ॥ १ ॥)

## ॥ * ॥ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ॥ * ॥

(आक्षेपभाष्यम्)

**प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न [11]स्थानिवद्भवतीति वक्तव्यम् ॥**

(स्वरोदाहरणोपपादनभाष्यम्)

**स्वर—आकर्षिकः[12] । जिहीर्षकः ॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—प[13]ञ्चारत्न्यः, दशारत्न्यः ॥ स्वर ॥**

(प्रदीपः) **आकर्षिक इति** । चरत्यर्थे **आकर्षात् ष्ठलि**ति ष्ठल् । **यस्ये**ति लोपस्य स्थानिवत्त्वात् ककाराकारस्योदात्तत्वं न स्यात् । कारक इत्यादौ च **स्वरविधौ व्यञ्जनमविद्यमानव**दिति व्यञ्जनस्याविद्यमानत्वादनन्तरस्य स्वरभाजः संभवादन्यव्यवधाने न स्यात् । यत्र तु व्यवहितेऽपि पूर्वशब्दो वर्तते, तत्राप्यवध्यवधिमतोरानन्तर्यासंभवादन्तरालस्थान् सतोऽप्यर्थाननादृत्य व्यवहारः ॥ यत्र त्वानन्तर्यसंभवस्तत्र व्यवहितं नैवाश्रीयते ॥ ष्ठलो लित्करणात् व्यवधानेऽपि भविष्यतीति चेत् । आकारस्यापि पक्षे स्यादिति स्थानिवत्त्वनिषेधः कर्तव्यः ॥

(उद्योतः) ननु **लिती**ति वचनसामर्थ्यात्स्यादेवेत्यत आह—**कारक इतीति** । [14]अत्र वचनं सावकाशमिति भावः ॥ **स्वरविधाविति** । हल्स्वरप्राप्तेः सत्त्वादिति भावः ॥ **अन्यव्यवधाने इति** । अज्व्यवधाने इत्यर्थः ॥ '[15]अत्र व्यव-' इति वा पाठः । लुप्ततया तदनुच्चारणेन त[16]दाश्रयस्यापादयितुमशक्यत्वात् 'तस्य स्यात्' इति

---

१ **उच्यत इति** । एवं च तदर्थमावश्यकमिति भावः ॥ खण्डनाशयमाह—**तथापीति** ॥ ननु तत्रैव तदावश्यकमत आह—**किग्रेति** ॥ निषेधवार्तिके इति भावः ॥ छाया ॥

२ 'समानानाश्रयत्वात्' इति अ. पाठः ॥

३ विरोधं परिहरति—**प्रत्ययेति** ॥ छाया ॥ क्विलुगुपधात्वेत्यादिना उपधात्वे स्थानिवद्भावो निषिध्यते, तत्र च भाष्ये प्रत्ययविधावित्यप्युक्तम्, तदनाश्रयणेनैतदुच्यत इत्यर्थः ॥

४ ण्यमात्रपरामर्शाभ्रमायाह—**आदित्येति** ॥ छाया ॥

५ **भवीति** । **अ प्रत्ययादि**ति क्तिनो बाधात् ॥ इत एव भाष्यान्नावादित्वकल्पनाऽपि ॥ छाया ॥

६ **कर्मेति** । कर्मणि क्तिन् ॥ छाया ॥

७ अत एवाह—**विशेषणेति** ॥ छाया ॥

८ धातुत्व आह—**उवङिति** ॥ अधातुत्व आह—**यणिति** ॥ **इको यणित्यनेन** ॥ छाया ॥

९ ननु स्थानिद्वारकं तदित्यत आह—**अस्मादेवेति** ॥ **आहुः**—सिद्धान्तिनः ॥ छाया ॥

१० अनादिष्टादचः पूर्वत्वं तत्पदार्थः । (र. ना.)

११ 'स्थानिवदिति' इति क. ग. पाठः ॥

१२ 'कर्षिकः चिकीर्षकः—जि' इति क. पाठः ॥

१३ इगन्तेति **पूर्वपदप्रकृतिस्वरेण त्रः संख्याया** इति पूर्वपदमाद्युदात्तम् । (र. ना.)

१४ **अत्र**—आकर्षिक इत्यादौ ॥ छाया ॥

१५ **अत्र**—आकर्षिक इत्यत्र व्यवधाने न स्यादित्यर्थः । 'अउव्यव' इति मुद्रितपाठः स प्रामादिकः ॥

१६ ननु स्थानिवत्त्वे तस्यैव स्यादिति कुतो नोक्तमत आह—**लुप्तेति** ॥ **अयस्य**—स्वरस्य ॥ छाया ॥

नापादितम्, स्वविधौ स्थानिवत्त्वाभावाच्च ॥ ननु **लितीत्यत्र प्रत्ययात्पूर्व**मित्यनुवृत्तेः पूर्वग्रहणस्य सत्त्वा**न्निर्दिष्ट**परिभाषाऽनुपस्थितिः, पूर्वशब्दश्च व्यवहितेऽपीति न दोषोऽत आह—**यत्र त्विति** । तत्राप्यव्यवधानारोपेणैव प्रयोगः, पूर्वादीनां चाव्यवहिते एव शक्तिरिति भावः ॥ **यत्र त्विति** । मुख्ये संभवति आरोपितग्रहणे मानाभाव इति भावः ॥ परं त्विदं **चिन्त्यम्, तस्मिन्निति** सूत्रे निर्दिष्टग्रहणात् । तस्माद् उत्तरांशविकल्पपरिभाषोपस्थितेः **प्रत्ययः परश्चे**त्यादौ दृष्टत्वादत्राप्युपस्थितिरिति तत्त्वम् ॥ **पक्षे स्यादिति** । **अनुदात्तं पद**मिति वचनात् 'पक्षे'इत्युक्तम् । चिकीर्षक[1] इत्याद्यर्थमावश्यकेन निषेधेनैव[2] सिद्धेर्लित्त्वसामर्थ्यमेव कथमिति **चिन्त्यम्** ॥ भाष्ये—**पञ्चारत्न्य इति** । अन्तरङ्गत्वेनापीदं सिद्धम् । बहुखट्वक इत्युदाहरणम्[3] । अत्र कपि **आपोऽन्यतरस्या**मिति ह्रस्वत्वे तस्य स्थानिवत्त्वाद् **ह्रस्वान्तेऽन्त्यादि**ति स्वरो न भवति ॥

( दीर्घोदाहरणोपपादनभाष्यम् )

**दीर्घ—प्रतिदीव्ना, प्रतिदीव्ने ॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—किर्योः-गिर्योः । दीर्घ ॥**

( प्रदीपः ) **प्रतिदीव्नेति** । रेफवकारान्तस्य भस्य **न भकुर्छुरा**मिति दीर्घत्वनिषेध इति अत्र न प्रवर्तते ॥

( उद्द्योतः ) **प्रतिदीव्ने**त्यत्र बहिरङ्गत्वेनासिद्धत्वमल्लोपस्येति न शङ्क्यं, त्रिपाद्यां तदप्रवृत्तेः ॥ वाय्वोरित्यत्रापि यथा न सा तथोक्तम् ॥ **रेफेति** । अत्र तु नान्तं भमिति भावः ॥

( यलोपोदाहरणोपपादनभाष्यम् )

**यलोप—ब्राह्मणकण्डूतिः, क्षत्रियकण्डूतिः ॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—वाय्वोः, अध्वर्य्वोरिति ॥**

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

( समाधानभाष्यम् )

**न वक्तव्यम् । इह हि लोपोऽपि प्रकृतः, आदेशोऽपि । विधिग्रहणमपि प्रकृतमनुवर्तते, दीर्घादयोऽपि प्रतिनिर्दिश्यन्ते । केवलं तत्राभिसंबन्धमात्रं कर्तव्यम्—स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति ॥**

( प्रदीपः ) **इह हि लोपोऽपीति** । **प्रकृतः**–प्रस्तुतः ॥

( उद्द्योतः ) न सूत्रान्तरवृत्तित्वं प्रकृतत्वमित्याह—**प्रस्तुत इति** ॥

( आक्षेपभाष्यम् )

**आनुपूर्व्येण सन्निविष्टानां यथेष्टं संबन्धः शक्यते कर्तुम् । न चैतान्यानुपूर्व्येण सन्निविष्टानि ॥**

( प्रदीपः ) **आनुपूर्व्येणेति** । तत्र[5] पदार्थानां समन्वयावगमात् । इह तु लोपो यशब्देन संबद्धः सकृच्च श्रुतः, द्विधा चास्योपयोग इष्यते । स्वरदीर्घयलोपाश्च विक्षिप्तास्ते कथं समुच्चीयन्तामिति भावः ॥

( उद्द्योतः ) पदान्तरेणाव्यवधानरूपासत्तिः[6]–**आनुपूर्व्यम्** । **विक्षिप्ताः**–विभिन्नदेशस्थाः ॥ भाष्ये-**यथेष्टं संबन्धः**–इष्टवाक्यार्थबोधजनकत्वरूपः ॥

( समाधानभाष्यम् )

**अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसंबन्धो भवति । तद्यथा—अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं, भगिनि साचीनमभिधावन्तमद्राक्षीरिति । तस्य यथेष्टमभिसंबन्धो भवति—उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति ॥**

(प्रदीपः) **अनानुपूर्व्येणापीति** । लोपशब्द[7] आवर्त्यते[8] ॥ तत्र लोपाजादेश इति विज्ञायते । तत्र[9] द्विर्वचनविधौ लोपाजादेशस्यासंभवात्सवर्णादिविधौ तु तस्यैव संभवान्न तत्रादेशस्य लोपो विशेषणम् । पदान्ते तु यद्यपि संभवव्यभिचारौ स्तः—तानि सन्ति, कानि यन्ति इति, तथापि **न पदान्ते**ति योगविभागात् तद्विधौ लोपो न विशेषणमिति पारिशेष्यात् **स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदि**ति विज्ञायते । स्मृतिशास्त्रत्वाच्चास्य[10] एतावन्तोऽर्थाः संनिहिता इत्येतावत्प्रतीयते । ग्रहणकवाक्यात्तु[11] लक्ष्यसंस्कारकं प्रक्रियावाक्यं उपप्लवत इति सिद्धमिष्टम् ॥ **अनड्वाहमिति** । पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसंबन्धः ॥

( उद्द्योतः ) **असंभवादिति** । चख्नतुः-जग्मतुरित्यादौ संभवाच्चिन्त्यमिदम् ॥ **पारिशेष्यादिति** । व्याख्यानाच्चेत्यपि[12] बोध्यम् ॥

---

१ **चिकीर्षक इति** । ण्वुलो लित्त्वस्य कारक इत्यादौ साफल्यस्योक्तत्वात् ॥ **सिद्धेः**–छलो लित्त्वसाफल्यसिद्धेः ॥ छाया ॥

२ **निषेधेनैव**–स्वरे स्थानिवत्त्वनिषेधेनैव ॥

३ तत्र पञ्चेत्युपलक्षणमित्याह—**बह्विति** ॥

४ स्थानिवत्त्वनिषेधसामर्थ्यादसिद्धत्वाप्रवृत्तिरिति दण्डिकृष्णाद्यसांगत्यायाह—**प्रतीति** ॥ छाया ॥

५ **तत्र**–आनुपूर्व्येण संनिवेशस्थले ॥ छाया ॥

६ भाष्यार्थमाह—**पदान्तरेणेति** ॥ छाया ॥

७ प्रागुक्तदोषमुद्धरति—**लोपशब्द इति** ॥ **तत्र**–आवृत्तौ सत्याम् ॥ छाया ॥

८ 'आवर्तते' इति ग. च. पाठः ॥

९ नन्वेवं लोपाजादेशस्य सर्वान्वयः कुतो नात आह—**तत्रेति** । सूत्रोपात्तानां मध्ये इत्यर्थः ॥ **आदिना**ऽनुस्वारादि ॥ छाया ॥

१० ननु योगविभागादौ किं मानमत आह—**स्मृतीति** ॥ प्रयोगमूलत्वाच्च तत्त्वस्येति भावः ॥ छाया ॥

११ **ग्रहणकवाक्यं**–संग्राहकवाक्यं न पदान्तेत्यादि यथाश्रुतपाठरूपम् । ( र. ना. )

१२ कैयटोक्तयुक्तेः शिथिलत्वादाह—**व्याख्येति** ॥

एतावदिति । पूर्वोक्तो[1] नियमोऽपीत्यर्थः ॥ ननु सूत्रस्यैकत्वात्ताव[2]न्मात्रविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह—ग्रहणकवाक्याश्चिति ॥ पाठ[3]क्रमादिति । [[4]अर्थक्रमो नाम राजपुरप्रवेशन्यायेन स्वस्वाकाङ्क्षितार्थान्वयक्रमः । ] एवं[5] च कल्पितासन्नवाक्याद्बोधः, तत्र च तात्पर्यं नियामकमिति भावः ॥ भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशाद्व्युत्पत्त्यनुसारेणान्वयबोध इति लभ्यते ॥ साचीनमित्यस्य तिर्यग्गच्छन्तमित्यर्थः ॥

( ३५८ न्यूनताक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ॥ * ॥

( भाष्यम )

**क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं कर्तव्यम् ॥**

( उद्योतः ) क्विलुगिति । वार्तिके क्वावित्यत्र विधावित्येतदध्याह्रियते, तेन क्विनिमित्तविधावित्यर्थः । आवृत्त्या क्वावित्यादेशेनापि संबध्यते, क्विनिमित्तादेश इत्यर्थः । तदेत[6]दर्थतः पठ्यते—क्वौ लुप्तमिति । इदं च काचित्कमिति वक्ष्यते ॥ एवं लुग्रूपे आदेशे, उपधात्वप्रयुक्ते कार्ये, चङ्परह्रस्वे, कुत्वे च स्थानिवत्त्वं नेत्यर्थः ॥

( क्विग्रहणोदाहरणम् )

( आक्षेपभाष्यम् )

**क्वौ किमुदाहरणम् ?**

( उद्योतः ) भाष्ये— क्वावित्यस्य- क्वौ लुप्तमित्यर्थे उदाहरणम् ॥

( समाधानभाष्यम् )

**कण्डूयतेरप्रत्ययः-कण्डूरिति ॥**

( उद्योतः ) कण्डूरिति क्यजन्तात् क्विप् । अत्र यण् न, यलोपश्च भवतीति भावः ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ॥**

( उद्योतः ) तत्रा[7]न्त्यं खण्डयति—यलोपेति ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पिपठिषतेरप्रत्ययः । पिपठीः ॥**

( बाधकभाष्यम् )

**नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् ॥**

( उद्योतः ) पिपठीरिति । अल्लोपस्य स्थानिवत्त्वेन रेफान्तस्यापदत्वाद्दीर्घो न स्यादिति भावः ॥ अत्र रुत्वमप्ये[8]तदधीनमेव ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—लावयतेः-लौः । पावयतेः-पौः ॥**

( प्रदीपः ) लौरिति । णिलोपस्य स्थानिवत्त्वादूठ् न स्यात् ॥

( उद्योतः ) लावयतेरिति । ण्यन्तलूधातोरित्यर्थः ॥ ऊठ्नेति । क्वौ वान्तस्यानङ्गत्वादिति भावः ॥ ऊठि एत्येधतीति वृद्धिः ॥

( बाधकभाष्यम् )

**नैतदस्ति । अकृत्वा वृद्ध्यावादेशौ णिलोपः । प्रत्ययलक्षणेन वृद्धिर्भविष्यति ॥**

( प्रदीपः ) अकृत्वेति । ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धमिति णिलोपस्ततो वृद्धिः । आवादेशो वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति । यथा-गोहितमित्यवादेशः । एतच्चान्त[9]रङ्गत्वमनाश्रित्योक्तम् । तत्र त्वाश्रितेऽन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाभावः ॥

( उद्योतः ) वर्णाश्रयत्वादिति । अचः परस्मिन्निति स्थानिवत्त्वं तु न, वृद्धे[10]रनादिष्टादचः पूर्वत्वाभावात् ॥ तत्र त्विति । कारक[11] इत्यादौ णिस्थानिकवृद्धिविषये स चरितार्थः । तथैव[12] चातो लोप इति सूत्रे भाष्ये स व्याख्यात इति भावः ॥ परे तु षत्वतुकोरिति शापकादनित्यत्वेनान्तरङ्गत्वमनाश्रित्य क्वौ लुप्तमिति न कार्यम्, नित्यत्वाच्च पूर्वं णिलोपः । वृद्धिस्त्वकृते णिलोपे उपदेशेन, कृते तु अतिदेशे[13]नेत्यनित्या- इति पूर्वपक्ष्याशयमाहुः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि— लवमाचष्टे लवयति । लवयतेरप्रत्यये- लौः, पौः । स्थानिवद्भावात् णेरूठ् न प्राप्नोति ॥ क्वौ लुप्तं न स्थानिवदिति भवति ॥**

( प्रदीपः ) लवमाचष्ट इति । 'क्वौ विधिं प्रति न स्थानिवत्' इत्यस्यार्थस्य प्रदर्शनायेद[14]मुक्तम् ॥ इदं तु क्वौ लुप्तस्योदाहरणं—देवयतेः-द्यूरिति ॥

( उद्योतः ) देवयतेरिति । ण्यन्तदिवेरित्यर्थः ॥ नन्वत्रोठ् क्वौ विधिमित्येव सिद्धः । न चोकारस्य वृद्धिः स्यात्, णेः स्थानि-

---

१ न्यूनतां निराचष्टे— पूर्वोक्त इति । वार्तिकोक्तो लोपाजादेश एवेतीत्यर्थः ॥ छाया ॥

२ तावदिति । विषयत्रितय एवेत्यर्थः ॥ छाया ॥

३ नन्वेवमपि स्वरादीनां पदानां क्रमेणानुच्चारितानां कथमुक्तोऽन्वयोऽत आह— पाठेति ॥ छाया ॥

४ ज. पुस्तके [ ] नायं पाठः ॥

५ एवं च-तस्य बलवत्त्वे च ॥ छाया ॥

६ अर्थतः-न तु शब्दतः ॥ छाया ॥

७ तत्र-तयोर्मध्ये ॥ छाया ॥

८ एतदिति । निषेधेत्यर्थः ॥ स च वार्तिकोक्तः । पूर्वत्रासिद्धे इति वा ॥ छाया ॥

९ वृद्ध्यावादेशयोरिति शेषः । ( र. ना. )

१० वृद्धेरिति । स्थानिद्वारकं तु तत्काचित्कमिति भावः ॥ छाया ॥

११ नन्वेवं वार्तिकवैफल्यमत आह— कारक इति ॥ सः-पूर्वविप्रतिषेधः ॥ छाया ॥

१२ तत्र मानं वैपरीत्यशङ्कानिरासायाह— तथैव चेति ॥ छाया ॥

१३ प्रत्ययलक्षणसूत्रेण स्थानिवत्सूत्रेण वा इत्यर्थः । ( र. ना. )

१४ 'येदमुदाहृतम्' इति ग. पाठः ॥

वत्त्वादिति वाच्यम् । ऊठ[1] आदिष्टादचः पूर्वत्वादिति नेदमसाधारणमुदाहरणमिति चेन्न । सखीयतेः–सख्युरिति ख्यत्यात्सूत्रभाष्योक्तं, गोमत्यतेः-गोमानिति उगिदचामिति सूत्रभाष्योक्तं, ण्यन्तपदेः-पात्[2] पद इति येन विधिरिति सूत्रभाष्योक्तं, कण्डूः पिपठीरित्यादौ यणभावरुत्वयोः सिद्धिश्च तस्यासाधारणमुदाहरणम् ॥ स्थानि[3]द्वारकेऽनादिष्टादचः पूर्वत्वे तु इदमप्युदाहरणमिति बोध्यम् ॥

( समाधानबाधकभाष्यम् )

**एवमपि न सिध्यति ॥**

**कथम् ?**

**कौ णिलोपः, णावकारलोपः, तस्य स्थानिवद्भावादूठ् न प्राप्नोति ॥**

( समाधानसाधकभाष्यम् )

**नैष दोषः । नैवं विज्ञायते—क्वौ लुप्तं न स्थानिवदिति ॥**

**कथं तर्हि ?**

**क्वौ विधिं प्रति न स्थानिवदिति ॥**

( उद्द्योतः ) **नैवं विज्ञायते क्वौलुप्तमिति** । नैवमेव[4] विज्ञायते, किं त्विदमपि काचित्कं लक्ष्यसिद्धये आश्रयणीयमिति भावः ॥

( इति क्विग्रहणोदाहरणनिरूपणम् )

( अथ लुग्ग्रहणोदाहरणम् )

( आक्षेपभाष्यम् )

**लुकि किमुदाहरणम् ?**

( समाधानभाष्यम् )

**बिम्बं, बदरम् ॥**

( प्रदीपः ) **बिम्बमिति** । बिम्बीबदरीशब्दाभ्यां ङीषन्ता[5]भ्यामनुदात्तादेश्चेत्यञ्, तस्य फले लुक्, लुक् तद्धितलुकीति ङीषो लुक्[6] । तस्य स्थानिवत्त्वाद्यस्येति लोपः प्राप्नोतीति प्रतिषेध उच्यते । तद्धितस्य स्थानिनः[7] परत्वात्तल्लुकोऽपि परत्वाश्रयणात् परनिमित्तकत्वं स्त्रीप्रत्ययलुक आश्रीयते । अन्यथा–अभावेन पौर्वापर्याभावात् कुतः परनिमित्तकत्वम् । अथवा बुद्धिपरिकल्पितमभावेनापि पौर्वापर्यं भवति ॥

( समाधानबाधकभाष्यम् )

**नैतदस्ति । पुंवद्भावेनाप्येतत्सिद्धम् ॥**

( प्रदीपः ) **पुंवद्भावेनेति । भस्याढे तद्धित** इति पुंवद्भावः ॥ अत्र च भाषितपुंस्कत्वं नाश्रीयते इत्येतदुक्तम् । तदाश्रये तु नास्ति पुंवद्भावः ॥

( उद्द्योतः ) **तदाश्रये इति** । 'वृक्षजातिः स्त्रियां' इति लिङ्गानुशासनाद् वृक्षे स्त्रीलिङ्गत्वं फले च नपुंसकत्वमिति भावः ॥ वस्तु[8]त आम्र इत्यादौ लिङ्गानुशासनस्य व्यभिचारादेतद्भाष्यप्रामाण्याच्च बिम्बबदरामलका वृक्षेऽपि त्रिलिङ्गा इत्याहुः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—आमलकम् ॥**

( प्रदीपः ) **आमलकमिति** । वृद्धत्वान्मयटो विधानाद्भत्वाभावः ॥

( समाधानबाधकभाष्यम् )

**एतदपि नास्ति । वक्ष्यत्येतत्—*फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात्* इति ॥**

( प्रदीपः ) **प्रकृत्यन्तरत्वादिति** । बिम्बबदरामलकादयो न यौगिकाः शब्दाः । किं तर्हि ? विशिष्टफलजातिवाचिन इत्यर्थः ॥

( उद्द्योतः ) **किंतर्हीति** । यौगि[10]कत्वे हि वृक्षसंबन्धात् फले, न पुनः फलसंबन्धाद्वृक्षे-इत्यत्र विनिगमनाऽसंभवादिति भावः ॥ **विशिष्टेति** । विजा[11]तीयेत्यर्थः ॥

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पञ्चभिः पट्वीभिः क्रीतः-पञ्चपटुः, दशपटुरिति ॥**

( प्रदीपः ) **पञ्चभिरिति । आर्हा**दिति ठक्, तस्याध्यर्धपूर्वेति लुक् । **लुक् तद्धितलुकी**ति ङीषो लुक् । **अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत** इति यणादेशः पूर्वं न प्रवर्तते । कृते तु लुकि तस्य स्थानिवत्त्वाद्यणः प्रसङ्ग इति स्थानिवत्त्वनिषेध उच्यते । अव्यविकन्यायेन पटुशब्दान्तादेव ठग् भविष्यति न तु पट्वीशब्दान्तादिति चेत्, प्रतिपत्तिगौरवप्रसङ्गः ॥

( उद्द्योतः ) **अन्तरङ्गानपीति** । अस्य[12] न्यायस्यान्तरङ्गनिमि-

१ **ऊठ इति** । तत्त्वं तु काचित्कमित्युक्तमेव ॥ छाया ॥

२ मुद्रितपुस्तकेषु 'पात् पाद् इति' इति पाठः स प्रामादिकः, येन विधिरिति सूत्रे भाष्ये 'अयमस्ति पादयतेरप्रत्ययः पात् पदः पदा पदे' इत्येव पाठात् ॥

३ अत एवाह—**स्थानीति** ॥ छाया ॥ **इदमपि**–दयूरित्यपि ॥

४ यथाश्रुतार्थासंगतेराह—**नैवमेवेति** ॥ छाया ॥

५ **ङीषन्ताभ्यां**–गौरादित्वात् ॥ छाया ॥

६ 'ङीषो लुकि तस्य' इति क. पाठः ॥

७ ङीषः परत्वादित्यर्थः । लुकोऽपि–तद्धितलुकोऽपीत्यर्थः ।

८ कैयटादिकं दूषयन्भाष्याशयमाह—**वस्तुत इति** ॥ छाया ॥

९ ततः किं प्रकृतेऽत आह—**एतदिति** ॥ **अपिना फलम्** ॥ छाया ॥

१० तत्त्यागे बीजमाह—**यौगिकेति** ॥ **फले**-वृत्तिः ॥ **पुन**स्त्वर्थे ॥ छाया ॥

११ वृक्षसंबन्धविशिष्टेत्यर्थे दोषोक्तेराह—**विजातीति** ॥ छाया ॥

१२ नन्वन्तरङ्गानित्यस्य न पूर्वं तदप्रवृत्तिबोधकत्वं किं तु तस्य तद्बाधकताबोधकत्वमिति बाधादेव कृतेऽपि तदप्रसङ्ग एवेति न निषेधोपयोगोऽत आह—**अस्येति** ॥ छाया ॥

त्तविनाशकलुक एव तदन्तरङ्गबाधकताबोधकत्वे तु [1]तत्परिभाषाप्रवृत्त्यभावसंपादकस्थानिवत्त्वनिषेधायेदमिति बोध्यम् ॥ **अन्यविकेति** । **वोतो गुणेति** ङीषो वैकल्पिकत्वादिति भावः ॥ **प्रतिपत्तिगौरवेति** । [2]ज्ञानगौरवेत्यर्थः ॥

( समाधानबाधकभाष्यम् )

**ननु चैतदपि पुंवद्भावेनैव सिद्धम् ॥**

**कथं पुंवद्भावः ?**

***भस्याढे तद्धिते* पुंवद्भवतीति ॥**

( समाधानसाधकभाष्यम् )

**भस्येत्युच्यते । यजादौ च भसंज्ञा भवति । न चात्र यजादिं पश्यामः ॥**

( समाधानबाधकभाष्यम् )

**प्रत्ययलक्षणेन यजादिः ॥**

( समाधानसाधकभाष्यम् )

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥**

( प्रदीपः ) **वर्णाश्रय इति** । यद्यपि **पुंवद्[3]भावे सिद्धश्च प्रत्ययविधा**वित्यस्ति तथापि यत्र भावि भत्वं तत्र पुंवद्भावः । इह तु लुकि भत्वाभावात्कुतः पुंवद्भावः ?

( उद्योतः ) ननु भसंज्ञकस्य न पुंवत्त्वम्, येन वर्णाश्रयतया भत्वाभावेन पुंवत्त्वं न स्यात्, किंतु तत्प्र[4]त्ययविषये पूर्वमेव पुंवत्त्वप्रतिपत्तिरत आह—**यद्यपीति** ॥ **इह तु लुकीति** । अनेन **न लुमतेति** निषेधान्न प्रत्ययलक्षणम् । किंच ढभिन्नतद्धितविषयाभावादपि न तत्प्रवृत्तिरित्यपि ध्वनितम् । **किंचान्तरङ्गानपीति** न्यायेनेकादेशात्पूर्वमेव लुकि प्रत्ययलक्षणसत्त्वेऽपि यजादित्वाभावान्न भत्वम् । **न च** वर्णप्राधान्याभावात्कथं **वर्णाश्रये नास्ती**त्युक्तिर्भगवत इति **वाच्यम्** । **प्रत्ययलक्षणसूत्रस्य** नि[5]यमार्थत्वमिति पक्षेऽदोषात् ॥

( समाधानबाधकभाष्यम् )

**एवं तर्हि—"ठकूछसोश्च" इत्येवं भविष्यति ॥**

( समाधानसाधकभाष्यम् )

**ठकूछसोश्चेत्युच्यते । न चात्र ठकूछसौ पश्यामः ॥**

( बाधकभाष्यम् )

**प्रत्ययलक्षणेन ॥**

( समाधानसाधकभाष्यम् )

**"न लुमता तस्मिन्" इति प्रत्ययलक्षणस्य प्रतिषेधः ॥**

**न खल्वप्यवश्यं ठगेव क्रीतप्रत्ययः, क्रीताद्यर्था एव वा तद्धिताः ॥**

**किं तर्हि ?**

**अन्येऽपि तद्धिता ये लुकं प्रयोजयन्ति । पञ्चेन्द्राण्यो देवता अस्येति-पञ्चे[6]न्द्रः, पञ्चाग्निः, दशाग्निः ॥**

( प्रदीपः ) **किंतर्ह्यन्येऽपीति** । यत्र पुंवद्भावो नास्ति ॥ **पञ्चेन्द्र इति । साऽस्य देवतेत्यण्, द्विगोर्लुगनपत्य** इति लुक्, ततो ङीषो लुकि तस्य स्थानिवत्त्वात् ङीषा सन्नियुक्त आनुक् श्रूयेत, यथेन्द्राणीति । तथा पञ्चाग्नाय्यो देवता अस्य-पञ्चाग्निरिति ऐकारः श्रूयेत । समानायामाकृतौ भाषितपुंस्कत्वाभावाद्वर्णाश्रयत्वाद्भत्वाभावाच पुंवद्भावो नास्ति । अथवा **यस्येति** लोपप्रसङ्गः । लुँकि च स्थानिवत्त्वनिषेधात् 'आदीध्ये' इति **परस्मिन्नि**त्यस्य पूर्वसूत्रे प्रत्युदाहरणमुपपद्यते । शब्लुकि कृते टेरेत्वस्य स्थानिवद्भावादव्यवधानाच्च लोपप्रसङ्गात् ॥

( उद्योतः ) **न लुमताङ्गस्येति** यथाश्रुतेऽभ्युपेत्याऽपि **ठकूछसोश्चेति** पुंवत्त्वं-भाष्ये आह—**न खल्वपीति** ॥ नन्वानुक् न ङीषीत्युच्यते, येन स्थानिवत्त्वेन तदापत्तिरत आह—**संनियुक्त इति** । [7]एवं च संनियोगशिष्टपरिभाषाप्राप्तानुनिवृत्तिप्रतिबन्धद्वारा आनुं[8]ग्रक्षणमेव पूर्वविधिरिति भावः ॥ [9]अत एव 'ऐनेयः' इत्यादौ **यस्येति** लोपे नस्य श्रवणम् । अत **एवाचः परस्मिन्नि**ति सूत्रे विधिशब्दस्य भावसाधनत्वे पूर्वस्य विधानं प्रति-पूर्वस्य भावं प्रति पूर्वः स्यादिति **स्थानिवदि**त्यर्थ उक्तः । पूर्वः स्यादित्यस्य 'पूर्वः स्थितः स्यात्' इत्यप्यर्थो बोध्यः । एवं च पूर्वसूत्रे तन्त्रेणोभयसाधनविधिशब्दघटितग्रहणम् ॥ यत्तु कैयटादिभिः **संनियोगशिष्ट**परिभाषाऽनि-

---

१ **तत्**-अन्तरङ्गमिति । **संपादकत्वं**-स्थानिवत्त्वविशेषणम् ॥ छाया ॥

२ प्रक्रियागौरवाभावादाह—**ज्ञानेति** । तस्यानभिधानमूलकत्वेनागतिकगतित्वात् ॥ छाया ॥

३ **'भिक्षादिभ्योऽण्'** इत्यत्रत्यमिदं वार्तिकम् ॥

४ **तत्प्रत्ययेति** । भसंज्ञानिमित्तप्रत्ययेत्यर्थः ॥ **तत्**-पुंवत्त्वम् ॥ **किंचान्तरेति** । तस्य सर्वलुग्विषयत्वात् ॥ **इकादेशात्**-ठस्येक इति ॥ **प्रत्ययेति** । आङ्गस्यैव निषेध इति भावः ॥ **पक्षे इति** । तथा च तद्वार्तिकमतमिति न विरोधः सिद्धान्त्युक्ताविति भावः ॥ छाया ॥

५ अयं भावः । प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैव प्रत्ययलक्षणं भवति । अत्र यजादित्वमाश्रीयते तत्तु प्रत्ययाप्रत्ययसाधारणमिति । यद्वा तस्य नियमार्थत्वे नियमसूत्राणां निषेधमुखेन प्रवृत्तिस्वीकारे स्थानिवत्त्वेनैव प्रत्ययलक्षणकार्यसिद्धिः । तत्र चानल्विधाविति निषेधः । वर्णाश्रये इति परिभाषा तु तत्र पक्षे नास्त्येव । यद्यपि नागेशस्य नियमसूत्राणां विधिमुखेन प्रवृत्तिरेवाभिप्रेता तथापि परमतेन भाष्ययोजना । ( र. ना. )

६ 'न्द्रः-दशेन्द्रः-पञ्चा' इति ग. पाठः ॥

७ फलान्तरमाह—**लुकि चेति** ॥ छाया ॥

८ **एवं च**-संनियुक्तत्वे च ॥ **प्रतिबन्धेति** । स्थानिवत्त्वेन छाया ॥

९ 'आनुग्लक्षणमेव' इति प. पाठः । 'आनुग्रहणमेव' इति ज. पाठः ॥

१० **अत एव**-एवंरीत्या स्थानिवद्भावाङ्गीकारादेव ॥ एवमग्रेऽपि ॥ ननु तावता कथमेतल्लाभोऽत आह—**पूर्वः स्यादित्यस्येति** । **एवं च**—तथाप्यर्थे च ॥

त्वत्वेनेदं[1] साधितम्, तद्वदैव ॥ नन्वत्रापि **भस्याढ** इति पुंवत्त्वं स्यादत आह—**समानायामिति** । पुंसि इन्द्रत्वादि प्रवृत्तिनिमित्तं, स्त्रियां तु तत्संबन्ध इति भावः ॥ नन्वेवमग्नायी देवता अस्य—आग्नेयं हविरिति उदाहरणासिद्धिः, तस्मादारोपितेन्द्रत्वाद्येव स्त्रियामपि प्रवृत्तिनिमित्तमित्यत आह—**वर्णाश्रयत्वादिति** । अणो[3] लुकि **न लुमतेति** निषेधात् ढभिन्नतद्धितविषयाभावाच्चेत्यपि बोध्यम् ॥ **अथ वेति** । ङीलुकः स्थानिवत्त्वेन भत्वादीकारपरत्वाच्चेति भावः ॥ **शब्लुकीति** । अन्यथा[4] शब्लुकः स्थानिवत्त्वेन व्यवधानात्प्राप्तिरेव नेति भावः ॥ वस्तुतः[5] शब्लुकः परनिमित्तकत्वाभावादेव न स्थानिवत्त्वप्रसक्तिः । अत एव 'जुहुतः' इत्यादौ श्लोः स्थानिवत्त्वान्न गुणः ॥

( इति लुग्ग्रहणोदाहरणम् )

( अथोपधात्वोदाहरणनिरूपणम् )

( आक्षेपभाष्यम् )

**उपधात्वे किमुदाहरणम् ?**

( समाधानभाष्यम् )

**पिपठिषतेरप्रत्ययः पिपठीरिति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि—सौरी बलाका ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ॥**

( समाधानान्तरभाष्यम् )

**इदं तर्हि—पारिखीयः ॥**

**( प्रदीपः ) पारिखीय इति** । परिखाशब्दाचातुरर्थिकेऽणि कृते आकारलोपस्य स्थानिवत्त्वात् पारिखे भव इति **वृद्धादकेकान्तखोपधादिति** छो न स्यात् ॥

( इत्युपधात्वोदाहरणनिरूपणम् )

( अथ चङ्परनिर्ह्रासोदाहरणनिरूपणे भाष्यवार्तिकम् )

***॥ चङ्परनिर्ह्रासे चोपसंख्यानं कर्तव्यम् ॥***[6]

( भाष्यम् )

**वादितवन्तं प्रयोजितवान्-अवीवदद्वीणां परिवादकेन ॥**

**किं पुनः कारणं न सिध्यति ?**

**योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये—**योऽसौ णाविति** । **णेर्णिच्युपसङ्ख्यानमिति** सिद्धमेतत् ॥ वक्तृ[7]भेदान्न दोष इति तत्त्वम् ॥ अत एव ज्ञापकात् प्रायोगिकमचःस्थानिकादेशत्वमेवाचः **परस्मिन्नित्येतत्प्रवृ**[8]त्त्युपयोगीति बोध्यम् ॥

( बाधकभाष्यम् )

**ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येव सिद्धम् ॥**

( साधकभाष्यम् )

**विशेषत**[9] **एतद्वक्तव्यम् ।**

**क ?**

**प्रत्यये**[10]**विधाविति । इह मा भूत्—पटयति, लघ**[11]**यति ॥**

**( उद्द्योतः ) प्रत्ययविधाविति** । अत[12] **एव** चङ्परह्रस्वे

---

१ **इदम्**-एनेय इत्यादि ॥ **तद्वदैवेति** । उक्तरीत्या तदुपपत्तेः ॥ छाया ॥

२ **अत्रापि**-पञ्चेन्द्रादावपि ॥ **एवं**-प्रवृत्तिनिमित्तभेदे ॥ **णासिद्धिरिति** । निषेधस्य **स्त्रीभ्य** इति ढग्मात्रविषयत्वेनात्राग्नेर्ढगिति विषये इष्टपुंवत्त्वाभावादित्यर्थः ॥ छाया ॥

३ प्रागुक्तमेवात्राप्याह—**अण इति** ॥

४ **अन्यथा**-लुकि निषेधाभावे ॥ **नेतीति** । तथा च न तत् प्रत्युदाहरणं स्यात् ॥ छाया ॥

५ इदमपि तदभावे, तत्सत्त्वे तु नेत्याह—**वस्तुत इति** ॥ **अत एव**-अपरनिमित्तकत्वादेव ॥ **गुणः-इति** बोध्यमिति शेषः ॥ छाया ॥

६ **द्वन्द्वान्ते श्रूयमाण**मित्याश्रित्य **'चङ्परनिर्ह्रास'** इत्यंशं व्याचष्टे—**चोपसंख्यानमित्यादि** ॥ एतत्संवादात् **"कौ किमुदाहरणम्"** इत्येतत्स्थानेऽपि **"कौ प्रतिषेधस्योपसंख्यानम्"** इति **"लुकि किमुदाहरणम्"** इत्येतत्स्थानेऽपि **"लुकि चोपसंख्यानम्"** इति, **"उपधात्वे किमुदाहरणम्"** इत्येतत्स्थाने **"उपधात्वे चोपसंख्यानम्"** इत्येव पाठो भवेत् ॥ एकस्य वार्तिकस्यांशभेदेन व्याख्याभेदे तु कारणं नैव व्यक्तमवलोकयामः ॥ तथैव पदमञ्जरीशब्दकौस्तुभरहस्यम् ॥ वस्तुतस्तु पूर्वं वार्तिकादनुपदमेवोपसंख्यानं कर्तव्यमिति व्याख्यातत्वादत्रैव पूर्वसंवादात् 'किमुदाहरणम्' इत्युचितम् । एवमग्रेपि ॥ दाधिमथाः ॥

७ नन्वेवं पौनरुक्त्यमत आह—**वक्तृभेदादिति** । वार्तिकक्तामनेकत्वात् ॥ **अत एव**-अस्मादेव ॥ **एवेन** सौत्रव्यवच्छेदः ॥ छाया ॥

८ अन्यथा णेरितिसूत्रे षष्ठीनिर्देशान्नास्ति सौत्रमचःस्थानिकादेशत्वं लोपस्येति स्थानिवत्त्वाप्रसक्तौ निषेधो व्यर्थः स्यादिति भावः । (र.ना.)

९ **विशेषतः**-विशेषे ॥ छाया ॥

१० उपधात्वनिमित्तकप्रत्ययविधौ न स्थानिवत् । पटयतीत्यत्र तु प्रत्ययकर्मकविधानाभावान्न निषेधः । ( र. ना. )

११ 'लघयतीति' इति क. ग. पाठः ॥

१२ अत्र मानमाह—**अत एवेति** । तस्य तद्विषयत्वादेवेत्यर्थः ॥ यथाश्रुतार्थाशयेन निमित्तं चोपधाविशेषणम् । अत एव तत्र निषेधसार्थक्यमित्याशयेन चाह—**ननूपधात्वे इति** ॥ **निषेधेऽपि**-तेन तत्त्वेऽपि ॥ ह्रस्वे आह—**णीति** ॥ **तस्य**-स्थानिवत्त्वस्य ॥ **एवं च** प्रत्ययविधाविति व्यर्थमिति भावः ॥ **औचित्यादिति** । तथा चाङ्गस्य तत्परत्वस्य सत्त्वेन तत्र निषेधेन च तदापत्तिरेव ॥ छाया ॥

निषेधः सार्थकः ॥ ननूपधात्वे स्थानिवत्त्वनिषेधेऽपि ञ्णित्परत्वांशे णिपरत्वांशे च तस्य दुर्वारत्वेन न पटयतीत्यादौ वृद्धिर्नापि ह्रस्वनिषेधो व्यर्थ इति चेत्, न । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन ञ्णिति णावित्यादेरङ्गविशेषणत्वस्यैवौचित्यात् । [1]उपधात्वप्रयुक्तकार्ये एव तन्निषेधेन णित्परत्वाद्यंशेऽपि स्थानिवत्त्वनिषेधाच्च ॥

( इति चङ्परनिर्ह्रासोदाहरणम् )

—०॰॰०—

( अथ कुत्वोदाहरणनिरूपणम् )

**कुत्वे चोपसंख्यानं कर्तव्यम् । अर्चयतेरर्कः, मर्चयते[2]र्मर्कः ॥**

**( उद्योतः ) अर्क इति** । कर्मणि घञ् । [3]चजोरिति कुत्वमिति भावः ॥

( उपसंख्यानबाधकभाष्यम् )

**नैतद् घञन्तम् । औणादिक एष कशब्दः, तस्मिन्नाष्टमिकं कुत्वम् ॥**

**( उद्योतः ) नैतद् घञन्तमिति** । एरचः प्रसङ्गादित्यर्थः ॥

( उपसंख्यानसाधकभाष्यम् )

**एतदपि णिचा व्यवहितत्वान्न प्राप्नोति ॥**

**( उद्योतः ) एतद[4]पीति** । एवं च 'कुत्वे' इत्यावश्यकमिति भावः ॥

( ३५९ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ पूर्वत्रासिद्धे च ॥ * ॥**

( भाष्यम् )

**पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम् ॥**

**( उद्योतः )** वस्तुतस्तदनावश्यकमित्याह–**पूर्वत्रासिद्धे इति । अचः परस्मिन्नि**त्येतद्दृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानाम**न्तादिव**दित्यादीनां त्रिपाद्यां प्रवृत्तिबोधनम् । तेन 'अमी' 'क्षीरपेण' इत्यादौ तत्सि[5]द्धिरिति दिक् ॥

( भाष्यम् )

**किं प्रयोजनम् ?**

( ३६० प्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रयोजनं क्सलोपः सलोपे ॥ * ॥**

( भाष्यम् )

**क्सलोपः सलोपे प्रयोजनम् । अदुग्ध, अदुग्धाः । "लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति लु[6]ग्ग्रहणं न कर्तव्यं भवति ॥**

**( प्रदीपः ) क्सलोप इति** । अदु[7]ह्यर्थं लुग्वचनं कर्त-

---

१ अभ्युपेत्यापि विधावित्यध्याहारेणाह—**उपधेति** ॥ छाया ॥

२ मर्को वानरः । ( र. ना. )

३ **चजोरितीति । निष्ठायामनिट** इत्येतदनाश्रित्येदमिति भावः ॥

४ **एतदपीति । चोः कुरि**त्याष्टमिकमपीत्यर्थः ॥ **एवञ्चेति ।** क्विलुगुपधात्वेति वार्तिकोक्तानि प्रयोजनान्तराण्यन्यथाभूतान्यपि 'कुत्वे स्थानिवत्त्वप्रतिषेधः' इतीदानीं वक्तव्यमेति भावः ॥

५ **तत्सिद्धिः**–प्रगृह्यसंज्ञाणत्वादिसिद्धिः ॥ अन्तवत्त्वांशे ज्ञापकान्तरमपि। अन्यथा तन्न स्यादित्युक्तम् । तदाह—**दिगिति** छाया ॥

६ वा दुहदिहेत्यादिकमेव कर्तव्यं, पूर्वसूत्रात्क्सपदानुवृत्त्याऽन्तलोपे सकारस्य झलो झलीति लोप इति भावः । ( र. ना. )

७ **अदुह्यर्थमिति** ॥ इदं सर्वं तदैव संभवति यदा वकारस्य दन्त्यत्वं भवेत् । परंतु तदेव न, अन्तस्थावकारस्याप्युच्चारणे दन्तव्यापारस्याप्रतीतेः केवलमोष्ठसंयोगरूपव्यापारस्यैवानुभवसिद्धत्वेन दन्तस्थानकत्वस्य कैरपि प्रातिशाख्यकृद्भिरनुक्तत्वाच्च ॥ तथाहि "**ओष्ठे व-ओ ⨯-प-प ऊ**" इति ऋक्तन्त्रे शाकटायनः । तथैव शुक्लयजुः प्रातिशाख्ये कात्यायनः—'**उवोपोपध्माः ओष्ठे**' इति सप्तम्या निर्दिष्टस्यैव स्थानत्वमङ्गीचकार । एवं तैत्तिरीयप्रातिशाख्यकृदपि 'रेफे जिह्वामूलेन प्रत्यादन्तमूलेभ्यः' इति सूत्रे तृतीयया करणत्वम्, पञ्चम्या स्थानत्वमिव '**ओष्ठान्ताभ्यां दन्तैर्वकारे**' इति सूत्रेऽपि तृतीयया दन्तानां करणत्वं पञ्चम्यौष्ठान्तयोरेव स्थानत्वं दर्शितवान् ॥ कात्यायनस्तु स्थानप्रकरणे "**उवोपोपध्मा ओष्ठे**" ( १।७० ) इति सूत्रं, करणप्रकरणे '**वो दन्ताग्रैः**' ( १।८१ ) इति सूत्रं रचयन् स्फुटमेव दन्तानां करणत्वमेव सूचितवान् । यदि च तृतीयानिर्दिष्टानां करणानामपि स्थानत्वमङ्गीक्रियेत तदा "तालुस्थाना मध्येन" ( १।७९ ) इत्यादिसूत्रेषु तृतीयादर्शितसंसर्गमात्राणां जिह्वामध्यादीनामपि स्थानत्वापत्तिर्दुर्वारैव स्यादिति तैत्तिरीयप्रातिशाख्ये पञ्चमीसप्तम्यन्यतरनिर्दिष्टानामेव कात्यायनप्रातिशाख्ये सप्तमीनिर्दिष्टानामेव स्थानत्वम् । तृतीयानिर्दिष्टानां तु संसर्गमात्रसहायकरणत्वमेव मन्तव्यमिति न दन्तस्थानत्वं वकारस्य ॥ अत एव **याज्ञवल्क्य**शिक्षायामपि "**अष्टावोष्ठ्या उवर्णवकारोपध्मानीयपवर्गा इति**" इति उवर्णसमानस्थानत्वमेव वकारस्य दर्शितम्, न तु "**अष्टौ दन्त्या ऌवर्णलकारसकारतवर्गा इति**" इति सूत्रे वकारस्य दन्तस्थानत्वम् ॥ अत एव "उवर्णोऽथ पवर्गश्च ओ औकारौ तथा च वः । ओष्ठ्या एते स्मृता वर्णा उपध्मानीय एव च ॥ "**वकार ओष्ठसंभूतो दन्ताग्रकरणः स्मृतः**" इति वर्णरत्नप्रदीपिकाशिक्षायां वकारस्य दन्ताग्रकरणकत्वमोष्ठमात्रस्थानकत्वमेवोक्तम् । अत एव संप्रसारणेषु वकारस्थाने लकारवारणाय भगवता कोऽपि यत्नो न कृतः । वकारस्य दन्तस्थानत्वे तु दन्तस्थानसाम्येन वकारस्य स्थाने ऌकारापत्तिर्दुर्वारा स्यात् । तद्वारणाय कण्ठस्थानसाम्येन प्राप्तस्याकारस्य वारणाय 'एच इग् ह्रस्वादेशे' इति सूत्रकरणयत्नमिव यत्नं कुर्यादेवेति तदकरणेन स्फुटमेव प्रतीयते—'न वकारस्य दन्ताः स्थानानि' इति ॥ प्राचीनतरवङ्गपुस्तकेषूपलभ्यमानः '**दन्तोष्ठ्यो वः स्मृतो बुधैः**' इति शिक्षापाठस्तु 'दन्तसंनिकृष्टे ओष्ठे भवः' इति विग्रहे 'अयःशूल—' इति सूत्रभाष्यप्रयुक्तस्य 'शिवभागवतः' इत्यस्य 'शिवो भगवान् भक्तिरस्य' इति विग्रहे कर्मधारयोत्तरमपि भगवच्छब्दात्प्रत्यय इव ओष्ठशब्दादेः शरीरावयवत्वाद् इति सिद्धो दन्तानां स्थानत्वं नैव दर्शयति ॥ 'अनुपसर्जनात्' इति सूत्रभाष्ये 'विशिष्टैकार्थीभावेऽवयवेनापि सोऽस्त्येव' इत्येतदाशयकस्य 'अवयवादुत्पत्तिः प्राप्नोति' इति भाष्यस्य प्रामाण्येन 'दन्तसंनिकृष्टावोष्ठौ दन्तोष्ठौ तयोर्भवो दन्तोष्ठ्यः'

व्यमेव । तदर्थं-**लुग्ग्रहणं नेति** छेदं कुर्वन्ति । **कर्तव्यं भवती**त्युत्तरम् । अवश्यकार्यमित्यर्थः ॥

( **उद्द्योतः** ) **अदुग्धेति** । क्सस्यान्त्यलोपे **झलो झली**ति सलोपे तदीयाल्लोपस्य स्थानिवत्त्वं न ॥

( प्रयोजने भाष्यवार्तिकम् )

## *॥ दध आकारलोप आदिचतुर्थत्वे प्रयोजनम् ॥*

( भाष्यम् )

**धत्से - धद्ध्वे - धद्ध्वमिति । "दधस्तथोश्च" इति चकारो न कर्तव्यो भवति ॥**

( **प्रदीपः** ) **चकारो न कर्तव्य इति** । झषन्तत्वात् पूर्वेणैव सिद्धत्वात् ॥

( **उद्द्योतः** ) ( भाष्ये ) **चतुर्थत्वे इति** । भष्भावे - इत्यर्थः ॥ **चकार इति** । स्ध्वोरित्यनुकर्षणार्थ इत्यर्थः ॥ **पूर्वेणैवेति** । **एकाचो बश** इत्यनेनेत्यर्थः ॥

( प्रयोजने भाष्यवार्तिकम् )

## *॥ हलो यमां यमि लोपे प्रयोजनम् ॥*

( भाष्यम् )

**आदित्यः । "हलो यमां यमि लोपः" सिद्धो भवति ॥**

( प्रयोजने भाष्यवार्तिकम् )

## *॥ अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम् ॥*

( भाष्यम् )

**पापच्यतेः—पापक्तिः । यायज्यतेः—यायष्टिः । पाचयतेः—पाक्तिः । याजयतेः—याष्टिः ॥**

( **प्रदीपः** ) **पापक्तिरिति** । क्तिच् । संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्त्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः । स्कन्दयतेः स्कन्, काष्ठं तक्षयतीति काष्ठतक् । **संयोगादिलोपलत्वणत्वेष्वि**ति वचनात्संयोगादिलोपे स्थानिवत्त्वात्तदभावादत्र संयोगान्तलोपः । दोहयतेः-धोक् । लेहयतेः-लेट् । उणादीनाम[3]व्युत्पन्नत्वात् किर्योः-गिर्योः-इत्यत्र दीर्घाभावः ॥

( **उद्द्योतः** ) ननु 'संयोगान्तलोपप्रभृतिषु' इत्युक्त्वा तं विहाय कुत्वा[4]द्युदाहरणदाने बीजाभावोऽत आह—**संयोगान्तेति** ॥ **पदान्तेति** । चिन्त्यमेतत् । पदचरमावयव एव तन्निषेधात् परपदस्यादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति ॥ तदुदाहरणानि दर्शयति—**स्कन्दयतेरित्यादिना** ॥ **काष्ठतगिति** । न च **काष्ठशगेव नास्ति, कुतः काष्ठशक्स्याते**ति **परेश्चे**ति सूत्रस्थभाष्याद् एषामनभिधानमिति वाच्यम् । यत्र संयोगा[5]दिलोपप्रसक्तिस्तद्विषयत्वेनान[6]भिधानस्यादोषात् ॥ न[7]न्वत्र संयोगादिलोपः प्राप्नोति । न च तत्र पदान्तविधित्वमिति न तेन सिद्धिरत आह—**संयोगादिलोपेति** ॥ केचित्तु ए[8]तद्भाष्यप्रामाण्यादेषां प्रयोगाणामन[9]भिधानमेवेत्याहुः ॥

( ३६१ प्रयोजनवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ द्विर्वचनादीनि च ॥ * ॥

( भाष्यम् )

**द्विर्वचनादीनि च न पठितव्यानि भवन्ति । पूर्वत्रा[10]सिद्धेनैव सिद्धानि भवन्ति ॥**

**किमविशेषेण ?**

**नेत्याह ॥**

---

इति सिद्धे दन्तसंनिकृष्टपदोपादानं पवर्णोच्चारण इव वकारोच्चारणे नैव बहिर्देशावच्छेदेनौष्ठयोः स्थानत्वम्, किंतु दन्तसंनिकृष्टयोराभ्यन्तरयोरेवेति दर्शयितुमेवेति न दन्तस्थानत्वं वकारस्येति सिद्धम् ॥ एवं च वहिप्रत्यये क्सस्य लुग् नैव ऋषीणां संमत इति वहिप्रत्यये क्सस्य लुकं साधयन् प्रदीपकारस्तु पाश्चात्यानां धीमतां बुद्धिपरीक्षणायैव प्रवृत्तः 'स्वरूपव्याक्रियैव पराक्रिया' इति दर्शयन् प्राचां ग्रन्थमनुसृतवानिति न तस्यात्राग्रहः । अत एव स्थानत्रयेऽपि असाधारणम् 'अगुह्वहि' इति प्रयोजनमपहाय 'अदुह्वहि' इति लङ्साध्यार्थकमेव प्रयोजनत्वेन दर्शितवान् ॥ एवं भाष्ययोजनं तु सर्वत्रत्यभाष्यशैलीविरुद्धम् ॥ तथाहि भाष्यकारस्य शैली—प्रत्याख्यानोत्तरम् '**न तर्हीदानीमयं योगो वक्तव्यः**' इत्यनुयोगोत्तरमेव '**वक्तव्यश्च**' इत्युत्तरस्य '**किं प्रयोजनम्**' इत्यादिका सर्वत्र समुपलभ्यते ॥ एवं च अदुह्वहि अदिह्वहि अलिह्वहि इति रूपाणि तु लङि साधनीयानि ॥ अगुह्वहि इति रूपं वेदे चेद् वैदिकत्वात् 'अदिप्रभृतिभ्यः शपः' 'बहुलं छन्दसि' इति साधनीयम् ॥ लोके प्रामाणिकप्रयोगश्चेत् 'छन्दोवत् कवयः कुर्वन्ति' इति साधनीयम् ॥ इति दाधिमथाः ॥

१ **लोपे**—कृते, **सलोपे**—कार्ये ॥ **तदीयेति** । क्ससंबन्धीत्यर्थः ॥



एतेन '**क्सलोपः सलोपे**' इति भाष्ये पाठो न तु विपरीत इत्युक्तम् ॥ छाया ॥

२ **भषिति** । तस्यादेर्दस्य भष्भाव इत्यर्थः ॥ छाया ॥

३ ननु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारे किर्योर्गिर्योरित्यत्र हलि चेति दीर्घापत्तिरत आह—**उणादीनामिति** । तथा च रेफान्तधातुत्वाभावाद् दीर्घाभाव इति भावः । ( र. ना. )

४ **आदिना** कुत्वषत्वे ॥ छाया ॥

५ काष्ठतगित्यत्र त्वल्लोपस्य स्थानिवत्त्वेन न संयोगादिलोपप्रसक्तिः । ( र. ना. )

६ **अनभीति** । पूर्वान्वयि ॥ छाया ॥

७ **अत्र**—काष्ठतगित्यत्र ॥ **नच**—नहि ॥ **तत्र**—संयोगादिलोपे ॥ **तेन**—पदान्तविधावित्यनेन ॥ छाया ॥

८ **एतदिति** । तदुक्तोदाहरणकथनपरभाष्येत्यर्थः ॥ उक्तरीत्या सिद्धिरत्रारुचिबीजम् ॥ छाया ॥

९ अनभिधानस्य संयोगादिलोपप्रसक्तिविषयत्वेन संकोचकल्पने मानाभावादिति भावः । ( र. ना. )

१० **सिद्धेनैव**—**पूर्वत्रासिद्ध**मिति वचनेनैव ॥ छाया ॥

( ३६२ शेषवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ वरेयलोपस्वरवर्जम् ॥ * ॥

( भाष्यम् )

**वरेयलोपं स्वरं च वर्जयित्वा ॥**

( उद्योतः ) भाष्ये—**वरेयलोपस्वरवर्जमिति** । सवर्णानुस्वारदीर्घादयः साहचर्यात् त्रैपादिका एव गृह्यन्ते इति भावः ॥ नन्वेवं यङन्ताण्णिजन्तप्रकृतिकण्यन्ताद्वा चिणि 'अशंशामि' 'अशामि' इत्यादौ दीर्घो न स्यात्, णिलोपाल्लोपयोः स्थानिवत्त्वादिति चेत्; **न । णेर्णिच्युपसङ्ख्यानात्** 'अशामि' इत्यस्य सिद्धेः ॥ अशंशामीति तु यङ्लुगन्ताण्णिचि भविष्यति । न[2] हि यङ्यङ्लुकोः स्वरे रूपे वा विशेषः । 'ग्राहितम्' इत्यादौ विहितविशेषणाश्रयणान्न दीर्घ इति दिक्[3] ॥ अन्ये तु तृतीयषष्ठाध्यायस्थभाष्यप्रामाण्यादत्र[4] दीर्घमप्युपलक्ष्यन्ति । एतच्च तत्रैव निरूपयिष्यामः ॥

( ३६३ प्रतिप्रसववार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ तस्य दोषः संयोगादिलोपलत्वणत्वेषु ॥ * ॥

( भाष्यम् )

**तस्यैतस्य लक्षणस्य दोषः[5] संयोगादिलोपलत्वणत्वेषु ॥**

( उदाहरणभाष्यम् )

**संयोगादिलोप—काक्यर्थम्, वास्यर्थम् । "स्कोः संयोगाद्योरन्ते च" इति लोपः प्राप्नोति ॥**

( उद्योतः ) भाष्ये-**काक्यर्थमिति** । न च स्कोरिति सूत्रे झल्ग्रहणापकर्षेण झलन्तसंयोगस्यैव ग्रहणात् प्रकृते न दोष इति वाच्यम् । **झलो लोपः संयोगान्तलोपः** - इत्याष्टमिकभाष्येण संयोगा[6]दिलोपे तदसंबन्धबोधनात् । त्रिपा[7]द्यां बहिरङ्गासिद्धत्वाप्रवृत्तेश्चेति भाष्याभिप्रायः ॥

( उदाहरणभाष्यम् )

**लत्व—निगार्यते, निगाल्यते । "अचि विभाषा" इति लत्वं न प्राप्नोति ॥**

( उद्योतः ) **निगाल्यत इति** । नन्वत्रान्तरङ्गत्वादेव लत्वं सिध्यतीति वाच्यम् । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्र[8]वृत्तेः । त्रिपाद्यां तत्परिभाषाऽप्रवृत्तेश्च । न च प्रत्ययलक्षणम्, अ[9]ल्विधित्वात् । प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसंमतत्वा[10][11]त् ॥

( उदाहरणभाष्यम् )

**णत्व—माषवपनी-व्रीहिवपनी । 'प्रातिपदिकान्तस्य' इति णत्वं प्राप्नोति ॥ न पदान्तद्विर्वचन० ५८**

( प्रदीपः ) **माषवपनीति** । समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्त्वनिषेधात् ङीबुत्पत्तेः प्राक् समासविधानात् प्राप्नोति - इति ॥ ५८ ॥

( उद्योतः ) ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे समासान्तो नकारो नेति णत्वं न स्यादत आह—**ङीबुत्पत्तेरिति** । **ग[12]तिकारकोपपदानां कृद्भिरिति** वचनादिति भावः । न च बहिरङ्गासिद्धत्वेनेदं सिद्धम् । त्रिपाद्यां तदप्र[13]वृत्तेरिति दिक् ॥ ५८ ॥

---

१ चिणीति पाठो भाति । न च यङन्ताच्चिणि अशंशामीति प्रयोगापत्तिरिति वाच्यम् । तस्य दीर्घविकल्पेनेष्टत्वात् । ( र. ना. ) 'चिणीति पाठो भाति' इति कथनं रघुनाथस्य प्रामादिकमेव । यङन्ताण्णिजन्तप्रकृतिकण्यन्ताद्वा अशंशामि अशामीत्यादौ दीर्घोपपादनं कुर्वता णेर्णिच्युपसंख्यानमित्यनेन अशामीत्युपपादितम् । अशंशामीत्यत्र यङ्लुगन्ताच्चिण्यपि णिजभावे दीर्घो न स्यात् । अशंशामीति च्चिणन्तस्योपक्रमात् 'चिणि' इति कथनमनावश्यकमेवेति ॥

२ नन्वेवमपि यङन्ते दोष एवात आह—**नहीति** ॥ छाया ॥

३ अहिडि अहीडि इति रूपार्थं **चिण्णमुलोरित्यत्र** दीर्घग्रहणम् । ह्रस्वविकल्पे त्वहेडीति स्यात् । तदाह—**दिगिति** ॥ छाया ॥

४ **अत्र**-वर्ज्यकोटौ ॥ छाया ॥

५ **दोषः**-अतिप्रसक्तिः । तस्मात्तत्र स्थानिवद्भावस्य प्रतिप्रसवः कर्तव्य इत्यर्थः । श० कौ० ॥

६ **संयोगादिलोपे च यणः प्रतिषेधो वाच्यः** इत्युक्त्युत्तरं **नवा झलो लोपादिति** कथनेन संयोगान्तलोप इव संयोगादिलोपेऽपि तदङ्गीकारः । यणः प्रतिषेधस्य संयोगान्तसंयोगादिलोपविषयकत्वेन **नवा झलो लोपादिति** वार्तिकस्याप्युभयविषयकत्वमेव वाच्यम् । भाष्यं तूपलक्षणतया नेतुं शक्यम् ॥ इत्थं च प्रतिप्रसववार्तिके संयोगादिलोपपदमनाश्रित्याष्टमिकं **"संयोगादिलोपे च"** इति वार्तिकमिति बोध्यम् ॥ दाधिमथाः ॥ वस्तुतस्तु झलो लोपः संयोगान्तलोप इति भाष्यं नोपलक्षणं मानाभावात् । न वा झलो लोपादिति कथनमपि संयोगान्तलोपाभिप्रायेणैव । उक्तभाष्यसंवादात् । संयोगादिलोपस्थले च प्रतिप्रसववार्तिकेनैव निर्वाहः इति वयम् । ( र. ना. )

७ दण्डिकृष्णाद्युक्तिं खण्डयति—**त्रिपाद्यामिति** ॥ छाया ॥

८ **अन्तरङ्गत्वादिति** । णिलोपात्पूर्वमिति भावः ॥ छाया ॥

९ पूर्वत्रासिद्धमिति शास्त्रबलादिति भावः । ( र. ना. )

१० **अलिति** । अत एव स्थानिवत्त्वमपि न ॥ छाया ॥

११ तथा च नियमसूत्राणां निषेधमुखेनैव प्रवृत्त्या स्थानिवत्सूत्रेणैव निर्वाहो वक्तव्यः । स च नाल्विधित्वादिति भावः । इयं योजना परमतेन । ( र. ना. )

१२ **'सुबुत्पत्तेः'** इति तत्रोपलक्षणमावश्यकमित्याह—**गतीति** ॥ तथा च ङीबुत्पत्तेः प्राक्समासे ङीपिअ लोपे समासरूपप्रातिपदिकान्तत्वाण्णत्वप्राप्तिः ॥ छाया ॥

१३ **अप्रवृत्तेरिति** । पूर्वपदाक्षिप्तसमासरूपप्रातिपदिकान्तस्य णत्वविधानेन तस्यापि पूर्वपरोभयसापेक्षत्वेन समासज्ञानसापेक्षत्वेन च समत्वाच्चेत्यपि बोध्यम् । तदाह—**दिगिति** ॥ छाया ॥

( ५४ अतिदेशसूत्रम् ॥ १ । १ । ८ आ. ४ )

## द्विर्वचनेऽचि ॥ १ । १ । ५९ ॥

( प्रदीपः ) **द्विर्वचने०** ॥ ५९ ॥ [1]**अचः परस्मिन्नि**त्यत्र योऽनादिष्टादचः पूर्व इति स्थितम्, साच्कस्य द्विर्वचनमिति [2]पूर्वविधित्वाभावादप्राप्तं स्थानिवत्त्वं विधीयते ॥ अथापि निमित्तात् पूर्व इत्यस्मिन् पक्षे प्राप्तिः स्यात्, तथापि **न पदान्तद्विर्वचने**ति प्रतिषेधप्रसङ्गादिदं वचनम् ॥

( उद्द्योतः ) **द्विर्वचनेऽचि** ॥ ५९ ॥ **अथापीति** । प्रौढिवादोऽयम्, तत्पक्षस्यास्थितत्वात् । **नपदान्त**सूत्रे आष्टमिकद्वित्वस्यैव ग्रहणाच्च ॥

---

( इष्टानुपपत्तिपरिहारः )

( ३६४ आक्षेपसाधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आदेशो स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् ॥ * ॥

( भाष्यम् )

**आदेशो स्थानिवदनुदेशात् तद्वतः ।**

**किंवतः ?**

**आदेशवतो द्विर्वचनं प्राप्नोति ॥**

( प्रत्याक्षेपभाष्यम् )

**तत्र को दोषः ?**

( ३६५ आक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तत्राभ्यासरूपम् ॥ * ॥

( भाष्यम् )

**तत्राभ्यासरूपं न सिद्ध्यति । चक्रतुः, चक्रुरिति ॥**

( प्रदीपः ) **आदेश इति** । कार्यातिदेश इति पूर्वः पक्षः ॥ चक्रतुरित्यत्र यणादेशे कृते एकाचो विधीयमानं द्विर्वचनमनच्कत्वादप्राप्तमिति स्थानिवत्त्वात् यण्युक्तस्यैव प्राप्नोति ॥

( उद्द्योतः ) **यण्युक्तस्यैवेति** । यद्यपि स्थानिवत्त्वे द्विर्वचनं नित्यं तथापि यणपि नित्य इति परत्वात्स स्यादिति भावः । इदमेवाभिप्रेत्य भाष्ये-**अभ्यासरूपं न सिध्यती**त्येतावदेवोक्तम्, [3]न तु निन्यतुरित्यादावियङ उत्तरखण्डे श्रवणं स्यादित्यापादितम्; [4]तस्यानित्यत्वेन ततः पूर्वं द्वित्वस्यैव प्रवृत्तेरिति ॥

( ३६६ समाधानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य ॥ * ॥

( भाष्यम् )

**यदयमज्ग्रहणं करोति तज् ज्ञापयत्याचार्यः—रूपं स्थानिवद्भवतीति ॥**

**कथं कृत्वा ज्ञापकम् ?**

**अज्ग्रहणस्यैतत्प्रयोजनम्—इह मा भूत्—[5]जेघ्नीयते, देध्मीयते । यदि च रूपं स्थानिवद्भवति, ततोऽज्ग्रहणमर्थवद्भवति । अथ हि कार्यम्, नाऽर्थोऽज्ग्रहणेन । भवत्येवाऽत्र द्विर्वचनम् ॥**

( प्रदीपः ) **अथ हीति** । कार्यातिदेशे हि घ्रीध्मीति भाव्यमेव द्विर्वचनेनेति किमज्ग्रहणेन ॥ नन्वन्यदज्ग्रहणस्य प्रयोजनं-भसेः क्सौ **घसिभसोर्हली**त्युपधालोपे कृते द्विर्वचनं मा भूदिति । नैतदस्ति । सत्यसति वा द्विर्वचने 'प्स्वान्' इति [6]श्रुतौ विशेषाभावात् । छान्दसश्चैवोपधालोपः, छन्दसि च दृष्टानुविधिः । रूपस्थानिवत्त्वे च निन्यतुरित्यत्र पूर्वमियङादेशे कृते स्थानिरूपातिदेशात् 'नी-नी' इति द्विर्वचने **एरनेकाच** इति यणा बाधितत्वात्पुनरियङ् न प्रवर्तते ॥

( उद्द्योतः ) [7]दुर्लक्ष्योऽपि विशेषः सूक्ष्मदृशं प्रति दुर्वारोऽत आह—**छान्दसश्चैवेति** । एवं च **दातिप्रियाणी**तिवद्द्वित्वाभाव इति भावः । अत्रोपधालोपस्य छान्दसत्वं वदता क्सोर्लौकिकत्वमभ्युपेतम् ॥ ननु सिद्धान्ते द्वित्वनिमित्तेऽचीत्यर्थः, तदाऽचीति किमर्थम् ? [8]अरिरिषतीत्यादिसिद्धये कार्यमनुभवतः कार्यिणो निमित्तत्वानाश्रयणेनात्रापि **नटभार्याबद्वयञ्जनानि** इति षाष्ठभाष्यरीत्या द्वितीयाजवधिकस्य 'घ्नीय्' इत्यस्यैव द्वित्वप्राप्त्या यङः कार्यित्वेन द्वित्वनिमित्तत्वाभावात् [9]कथं तन्निमित्तादेशे स्थानिवत्त्वप्रसक्तिरिति चेन्न । द्वितीयह-

---

१ अचः परस्मिन्नित्यनेनासिद्धिमाह—**अचः परस्मिन्निति** । तत्र हि स्थानिभूतादचः पूर्वस्य कार्ये स्थानिवद्भावः । द्विर्वचनञ्च स्थानिभूतस्यापि भवतीति नैतदनादिष्टादचः पूर्वस्य कार्यमिति अचः परस्मिन्नित्यस्याप्राप्तेरनेन स्थानिवद्भावो विधीयत इति भावः ॥

२ पूर्वमात्रविधित्वाभावादिति भावः । ( र. ना. )

३ एवञ्यावर्त्यमुपलक्षणत्वेन दण्डिकृष्णाद्युक्तमाह—**नत्विति** ॥ **तस्य** -इयङः । **ततः**-इयङः ॥ **इति**–बोध्यमिति शेषः ॥ छाया ॥

४ द्वित्वे कृतेऽनेकाच्त्वसंपत्त्या यणाबाधेनेयङोऽप्राप्त्येति शेषः । ( र. ना. )

५ यद्यपि भाष्यप्रदीपोद्द्योतेषु घ्नी इति नकारविशिष्टः पाठ उपलभ्यते, संभवति च **हन्तेर्हिंसायां घ्नीभाव** इति वार्तिकेन हन्धातो रूपम् । तथापि देध्मीयते इत्युपादानेन तत्साहचर्याद्**दीघ्राध्मो**रिति सूत्रविहितादेशस्यैवाजादेशत्वमिति अजादेशस्यैवानेन स्थानिवत्त्वातिदेशविचारस्य सत्त्वेन रेफविशिष्टपाठ एव समीचीन इति मत्वा नकारविशिष्टपाठो नाङ्गीकृतः ॥ काशीकलिकाताप्रभृतिनगरमुद्रितपुस्तकेषु नकारविशिष्टपाठस्तु शोधकाज्ञानज एवेति बोध्यम् ॥ ( दा. म. ) 'जेघ्रीयते' इत्येवेदानीमादर्शपुस्तकेषु पाठ उपलभ्यते ॥

६ पकारद्वयस्य श्रवणे इत्यर्थः । ( र. ना. )

७ **दुरिति** । नन्वित्यादिः ॥ **वदता**–कैयटेन ॥ **तनिपत्योरि**त्यतश्छन्दसीत्यनुवृत्तेः ॥ छाया ॥

८ कैमर्थ्ये हेतुमाह—**अरीत्यादिभावादित्यन्तेन** ॥ **अत्रापि**—जेघ्नीयत इत्यादावपि ॥ छाया ॥

९ **कथमिति** । एवं चेत्यादिः ॥ अत्र मानमाह—**अत एवेति** । तन्मतसत्त्वादेवेत्यर्थः ॥ तदसत्त्वे तु पूर्वस्यैवेति भावः ॥ छाया ॥

त्पर्यन्तस्यैव द्वित्वमिति मते तत्सत्त्वात् । अत एव प्रातिशाख्ये उक्तम्—**स्वरान्तरे व्यञ्जनान्युत्तरस्येति** ॥ अरिरिषतीत्यादौ 'रि' इत्यस्य द्वित्वेऽपि इकारस्य सनवयवतया सनो द्वित्वानुभवेन तन्निमित्तत्वाभावादिति दिक् ॥ षाष्ठभाष्यरीत्या तु 'अधिजगे' इति व्यावर्त्यं बोध्यम् ॥

( ३६७ समाधानबाधकाक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तत्र गाङः प्रतिषेधः ॥ * ॥

( भाष्यम् )

**तत्र गाङः प्रतिषेधो वक्तव्यः । अधिजगे । इवर्णाभ्यासता प्राप्नोति ॥**

( प्रदीपः ) **अधिजग इति** । कृते एशादेशे गाङ् - इति प्रक्रियाश्रयेण चोद्यम् । ङकारस्यानुबन्धत्वादिकारस्य गाङ् भवत्यजादेशः ॥

( **उद्द्योतः** ) ननु लिटि विधीयमानस्य गाङः कथमच्त्यादेशत्वमत आह—**कृते इति ॥ ङकारस्येति** । प्रकृतसूत्रे प्रयोगे निवर्त्यस्यैव स्थानित्वेन ग्रहणं 'अचः परस्मिन्–' इतिवदिति भावः ॥

( समाधानसाधकभाष्यम् )

**न वक्तव्यः । "गाङ्लिटि" इति द्विलकारको[3] निर्देशः । लिटि लकारादाविति ॥**

( **उद्द्योतः** ) **द्विलकारक इति**–भाष्ये । एवं[4] चाचि नायमिति भावः ॥ एवं च 'इदमज्ग्रहणव्यावर्त्यं' इति स्पष्टमेवोक्तमिति बोध्यम् ॥ **न च** सिद्धान्ते **आर्धधातुके लिटीत्यादीनां** तत्र विषयसप्तमीत्वेनानैमित्तिकत्वान्न तत्र दोष इति **वाच्यम्** । विषयसप्तमीत्वेऽपि बुद्धिकृत[5]निमित्तत्वस्य दुर्वारत्वेन सनैमित्तिकत्वमस्त्येवेति भाष्याशयात् ॥

( ३६८ आक्षेपान्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम् ॥ * ॥

( भाष्यम् )

**कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिध्यति ॥**

**कृति—अचिकीर्तत्-कृति ॥**

**एजन्त-जग्ले, मम्ले-एजन्त ॥**

**दिवादि—दुद्यूषति, सुस्यूषति-दिवादि ॥**

**नामधातु—भवनमिच्छति भवनीयति, भवनीयतेः सन्-बिभवनीयिषति ॥**

( प्रदीपः ) **कृत्येजन्तेति** । 'अचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवत्' इति सूत्रार्थमाश्रित्यैतदुच्यते ॥ **जग्ल इति** । शित्सदृशे आत्वमित्यत्र पक्षेऽयं दोषः ॥

( **उद्द्योतः** ) अत्र पञ्च पक्षाः—अचि योऽजादेशः स द्वित्वे कार्ये स्थानिवदित्येकः, अजादौ प्रत्यये योऽ[6]जादेशः स द्वित्वे स्थानिवदिति **द्वितीयः**, द्विर्वचनशब्दस्याधिकरणल्युडन्तत्वादर्श[7]आद्यजन्तत्वाद्वा द्वित्वनिमित्तेऽचीत्यादीति **तृतीयः**, द्वित्वनिमित्तेऽचि आदेशनिषेध इति **चतुर्थः**, द्वित्वनिमित्तेऽचि योऽजादेशः स स्था[8]निवत् -न भवति वा द्वित्वे कार्ये इति **पञ्चमः** ॥ तत्राद्ये दोषोद्भावनमित्याह—**अचीति** । कृते**रुपधायाश्चे**तीत्त्वम् । तस्य च णिनिमित्ततयाऽच्यादेशता, अङ्गा[10]क्षिप्ते प्रत्यये तद्विधानात् ॥ ननु आत्वं कथमच्यादेशः, अनैमित्तिकत्वादत आह—**शित्सदृश इति** । **शिदि[11]ति** तत्पुरुषः । इत्संज्ञकशकारादिप्रत्ययभिन्नप्रत्यय इत्यर्थः ॥ अन्तरङ्गत्वात्तिबादिषु एशित्वाभावः । सर्वत्रैव चात्र शास्त्रे बुद्धिकृतमेव निमित्तत्वादि । इदमेवाचीतीदृशनिमित्तत्वाश्रयणे लिङ्गमिति भावः ॥ छाया ॥

---

१ अत्र मते आह—**अरीति ॥ तदिति** । तस्य निमित्तत्वानाश्रयणादित्यर्थः ॥ अत्र यथाकथंचिद् द्वित्वप्रयोजकत्वेन द्वित्वनिमित्तत्वमित्याद्यन्यत्र स्पष्टम् । तदाह—**दिगिति** ॥ ननु षाष्ठमते किं प्रत्युदाहरणमत आह—**षाष्ठेति** ॥ छाया ॥

२ **अच्येति** । तन्निमित्तादेशत्वमित्यर्थः ॥ छाया ॥

३ **"गाङ्लिटि"** इति पाणिनीयपाठे **"यणो मयो द्वे वा वाच्ये"** इति द्वित्वकृतं लकारद्वित्वमिति पूर्वपक्षिणो भ्रमं निरस्यति—**द्विलकारक इति** ॥ नात्र द्वित्वकृतं लकारद्वयश्रवणम् । किंतु लिटीत्येतद्विशेषणं लुप्तसप्तम्यन्तं 'ल' इति पृथक् पदमिति भावः ॥ दाधिमथाः ॥ वस्तुतस्तु द्विलकारको निर्देश इति न भाष्यकृत्सिद्धान्तः । तादृशनिर्देशाभावात् । इदमज्ग्रहणव्यावर्त्यमिति स्पष्टमेवोक्तमित्याद्युद्द्योतग्रन्थेन तादृशनिर्देशो नेत्येव प्रतीयते । एवञ्च मुद्रितपुस्तकेषु 'गाङ्ल्लिटि' इत्युल्लेखः प्रामादिक एव ॥

४ **एवं च**–लावस्थायां गाङादेशे च ॥ **एवं च**–तस्यानिमित्तत्वान्निमित्तत्वाभावे च ॥ **तत्र**–गाङ्लिटीत्यत्र ॥ **दोषः**–स्थानिवत्त्वप्रसक्तिः ॥ छाया ॥

५ **बुद्धिकृतेति** ॥ तद्भावभावित्वेनेव तद्बुद्धिभावभावितामात्रकृतेत्यर्थः ॥ अत्र सूत्रोपात्तलिड्बुद्धिभाव एव निमित्तमित्यजनिमित्त-

६ अनुवृत्तेराह—**अजादेश इति** ॥ छाया ॥

७ तस्य द्वित्वे प्रसिद्धेराह—**अर्श इति** ॥ **आदिना** योऽजादेश इत्यादि ॥ छाया ॥

८ प्रागुक्तमेवोभयातिदेशमाह—**स्थानीति** ॥ छाया ॥

९ 'प्रागुक्तमुभयातिदेशमाह–स्थानीति' इति छायादर्शनेन अयं पाठः कल्पितः । वस्तुतस्तु द्वित्वनिमित्ताजादिप्रत्ययनिमित्तोऽजादेशः स्थानिवद् द्वित्वे कर्तव्ये इत्युद्द्योते पञ्चमार्थस्याग्रे स्पष्टमुक्तेरयं पाठोऽयुक्तः । ( र. ना. ) 'न भवति वा' इति पाठस्य काल्पनिकत्वं भाषमाणो र. ना. पण्डितो भ्रान्त एव । तादृशपाठस्य प्रामाणिकपुस्तकेषु सर्वत्राप्युपलम्भात् । द्विर्वचनेऽचीति सूत्रेण स्थानिवद्भावो वा विधीयते आदेशनिषेधो वा क्रियते इति विचारश्चाग्रे भाष्ये कृत इतीदानीमुभयविधपाठः सङ्गत एवेति ॥

१० ननु कथं णिनिमित्तत्वमनुपादानादत आह—**अङ्गेति** ॥ छाया ॥

११ ननु एश् शिदेवात आह—**शिदितीति** ॥ **तत्पुरुषः**–कर्मधारयः ॥ छाया ॥

च कृते आत्वमिति भावः ॥ दिवेः सनि **सनीवन्तेतीड**भावपक्षे हलन्ताच्चेति किच्चे **च्छ्वोरि**त्यूठि यणि **सन्यङोरिति** द्वित्वे रूपम् ॥

( पक्षान्तरेण समाधानभाष्यम् )

**एवं तर्हि प्रत्यय इति वक्ष्यामि ॥**

( ३६९ द्वितीयपक्षदूषणवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम् ॥ * ॥**

( भाष्यम् )

**प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपं न सिध्यति । दिवादय एके परिहृताः ॥**

( उद्द्योतः ) द्वितीयं निराकरोति—भाष्ये—**प्रत्यय इति चेदिति** ॥

( तृतीयपक्षाङ्गीकारे समाधानभाष्यम् )

**एवं तर्हि—द्विर्वचननिमित्ते अचि अजादेशः स्थानिवत् इति वक्ष्यामि ॥**

( प्रदीपः ) **द्विर्वचननिमित्त इति** । अस्मिन् पक्षे 'जग्ले' इत्यपरिहृतम्[1] । उत्तरत्र परिहरिष्यते ॥

( तृतीयपक्षे दूषणभाष्यम् )

**स तर्हि निमित्तशब्द उपादेयः । न ह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते ॥**

( समाधानभाष्यम् )

**अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते । तद्यथा—"दधित्रपुसं प्रत्यक्षो ज्वरः" ज्वरनिमित्तमिति गम्यते ॥ "नड्वलोदकं पादरोगः" पादरोगनिमित्तमिति गम्यते ॥ "आयुर्घृतम्" आयुषो निमित्तमिति गम्यते ॥**

( प्रदीपः ) **दधित्रपुसमिति** । समाहारद्वन्द्वः, कर्मधारयो वा । दध्येव विशिष्टावस्थायुक्तं **त्रपुसमुच्यते** । तत्र[2] द्विर्वचननिमित्तत्वात्तद्रूपारोपेणाजेव द्विर्वचनमुच्यते । अथवा अधिकरणे ल्युट् । द्विरुच्यते तस्मिन्निति द्विर्वचनम् ॥

(उद्द्योतः) **त्रपुसमिति** । तृपसमितिपाठान्तरम्, तृपुसमिति च ॥ कर्मधारयमुमपादयति—**दध्येवेति** ॥ **विशिष्टावस्थेति** । रूपरसगन्धान्तरयुक्तमित्यर्थः । आद्ये त्रपुसं—फले[3]विशेषः । द्वितीये समासाभावेऽपि न क्षतिरिति बोध्यम् ॥ **तद्रूपारोपेणेति** । दृष्टा[4]न्तबलेन तथैव लाभात् ॥

( समाधानान्तरभाष्यम् )

**अथवा—अकारो मत्वर्थीयः । द्विर्वचनमस्मिन्नस्ति सोऽयं द्विर्वचनः, द्विर्वचने—इति ॥**

( प्रदीपः ) एतदप्रतिपद्यमानं प्रति परिहारान्तरमाह—**अथवा अकार इति ।**

( उद्द्योतः ) ननु दृष्टान्ते लक्षणायामव्यभिचारेण कार्यजननप्रतीतिः प्रयोजनम्, प्रकृते च[5] न किंचित्तथा—इति लक्षणा दुरुपपादेत्यत आह—**अथवेति** ॥

( आक्षेपभाष्यम् )

**एवमपि न ज्ञायते—कियन्तमसौ कालं स्थानिवद्भवतीति ॥**

( प्रदीपः ) **एवमपीति** । एकत्वाद्द्विर्वचनशब्दस्य, तस्य चाज्विशेषणे उपयुक्तत्वात् कालावधारणाभावः ॥

( उद्द्योतः ) **कालेति** । द्विर्वचनविधानसमय एवेत्यवधारणाभाव इत्यर्थः । ए[6]वं च चक्रतुरित्याद्यसिद्धिः, पुनर्यणादेशानापत्तेरिति भावः ॥

( समाधानभाष्यम् )

**यः पुनराह 'द्विर्वचने कर्तव्ये' इति, कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति ॥**

( आदेशनिषेधरूपचतुर्थपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि—प्रतिषेधः प्रकृतः सोऽनुवर्तिष्यते ॥ क्व प्रकृतः ? "न पदान्तद्विर्वचन—" इति ॥ द्विर्वचननिमित्ते अचि अजादेशो न भवतीति ॥**

( प्रदीपः ) **एवं तर्हीति** । स्थानिवदिति नानुवर्तते इति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि न ज्ञायते—कियन्तमसौ कालमादेशो न भवतीति ॥**

( समाधानभाष्यम् )

**यः पुनराह—द्विर्वचने कर्तव्य इति, कृते तस्य द्विर्वचने अजादेशो भविष्यति ॥**

( पञ्चमपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि—उभयमनेन क्रियते—प्रत्ययश्च विशेष्यते, द्विर्वचनं च ॥**

( प्रदीपः ) **प्रत्ययश्चेति** । द्विर्वचनेन प्रत्ययस्याक्षिप्तत्वात्तद्विशेषणं द्विर्वचनम् । अचीत्येतच्च । तस्य तदादिविधिर्भवति—अजादाविति ॥

(उद्द्योतः) **प्रत्ययश्च विशेष्यते, द्विर्वचनं च** इत्यस्य 'चिकी[7]र्षितत्वेन निर्दिश्यते' इति शेषः ॥ तत्राश्रुतस्य प्रत्ययस्य कथं विशेष्य-

१ अचिकीर्तदित्यत्रेत्वं तु णिज्निमित्तकं णिच् तु न द्वित्वनिमित्तमिति भावः । ( र. ना. )

२ तात्पर्यमाह—**तत्रेति** । अचीत्यर्थः ॥ छाया ॥

३ **फलेति** । 'फूठ्' इति भाषायां प्रसिद्धः ॥ छाया ॥

४ **दृष्टान्तेति** । यथा ज्वरनिमित्ते ज्वरत्वारोपस्तथा तन्निमित्तेऽचि द्विर्वचनत्वारोप इति भावः ॥ छाया ॥

५ **च**स्त्वर्थे ॥ छाया ॥

६ इष्टापत्तावाह—**एवं चेति** । अवधारणाभावे चेत्यर्थः ॥ छाया ॥

७ मध्यमणिन्यायेन विशेष्यत इत्यस्यासंबन्धायाह—**चिकीति** ॥ **तत्र**—सूत्रे ॥ **ष्यत्वम्**—अज्निरूपितम् ॥ छाया ॥

त्वमत आह—**द्विर्वचनेनेति** । अचीत्युपादानात्षाष्ठमिह द्विर्वचनं । तच्च प्रत्यये-इति । तेन तद्वाचकप्रत्ययपदाक्षेप इत्यर्थः ॥ तद्भावभावितामात्रेण निमित्ततया आश्रयणात्सन्यङन्तस्य द्वित्वेऽपि तदाक्षेपः । स च 'अचि' इत्यस्य श्रवणात्सप्तम्यन्तस्यैवेति भावः ॥ **अचीत्येतच्च तस्येति** । विशेषणमित्याकृष्यते ॥ **तदादिविधिरित्यस्य** तेनेत्यादिः ॥ तदयमर्थः—द्वित्वनिमित्ताजादिप्रत्ययनिमित्तोऽजादेशः स्थानिवद् द्वित्वे कर्तव्ये इति ॥

( आक्षेपभाष्यम् )

**कथं पुनरेकेन यत्नेनोभयं लभ्यम् ?**

( प्रदीपः ) **कथं पुनरिति** । विरुद्धत्वादनयोरर्थयोरेकेन 'द्विर्वचने' इत्यनेन पदेनानुपादानादिति भावः ॥

( उद्योतः ) **विरुद्धत्वादिति** । एवं च सहविवक्षाभावान्नैकशेषो वक्तुं शक्य इति भावः ॥

( समाधानभाष्यम् )

**लभ्यमित्याह ॥**

**कथम् ?**

**एकशेषनिर्देशात् ॥ एकशेषनिर्देशोऽयम्—द्विर्वचनं च द्विर्वचनश्च-द्विर्वचनम् । द्विर्वचने कर्तव्ये, द्विर्वचनेऽचि प्रत्यय इति ॥**

( प्रदीपः ) **एकशेषनिर्देश इति** । सहविवक्षाभावेऽपि **सरूपाणा**मित्येकशेषः संज्ञापरिभाषावल्लक्षणाङ्गत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयोश्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विवचनाभावः । अथवा-एकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लक्ष्यते ॥

( उद्योतः ) **प्रागेव— सर्वादीनीत्यत्र** ॥ नन्वेकशेषे द्विवचनापत्तिरत आह—**विभक्त्यन्तयोरिति** । परिभाषावच्छास्त्रमात्रोपयोगित्वादिति भावः ॥ प्रातिपदिकानामेवैकशेषेऽप्याह—**अथवेति** । **नीलोत्पलस्पर्धिनी नेत्रे तनुर्वे**तिवदिति भावः । क्रमेण बोधादत्रावृत्तिर्बोद्धारं प्रति, उच्चारयितुस्तन्त्रम् । इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकम्, न तु साक्षादेवेत्याग्रहः, तद्भावभावितामात्रेण निमित्तत्वस्येहाङ्गीकारात् । अत एव 'चक्रतुः' इत्युदाहरणसङ्गतिः ॥

( ३७० पञ्चमदूषणवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् ॥ * ॥**

( भाष्यम् )

**द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्भावो वक्तव्यः । अवनुनावयिषति, अवचुक्षावयिषति ॥**

( समाधानभाष्यम् )

**न वक्तव्यः ॥**

( ३७१ समाधानसाधकवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ॥ * ॥**

( भाष्यम् )

**यदयम्—"ओः पुयण्ज्यपरे" इत्याह, तत् ज्ञापयत्याचार्यः—भवति णौ स्थानिवत्-इति ॥**

( प्रदीपः ) **ओः पुयण्जिष्विति** । न हि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तोऽभ्यासः संभवति । यियविषति - पिपविषते - इत्यत्रैवानेन स्थानिवद्भावात् । पु इति वर्गग्रहणात् - यणिति प्रत्याहारग्रहणात् - जग्रहणाच्च ज्ञापकाण्णौ कृतस्य स्थानिवद्भावोऽनुमीयते ॥ ननु तत्र णाविति नास्ति तत्कथं तत्रैव स्थानिवत्त्वानुमानं न तु निनवनीयिषति दिदवनीयिषतीत्यादावपि ॥ नैतदस्ति । **येन नाव्यवधान**मित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव केवलस्य व्यवधायकस्य संभवात् ॥

(उद्योतः) स्वोक्त**सर्वेष्वि**त्यस्य - **पुयण्जिष्विति** भाष्ये निर्धारणसप्तमीनिर्देशस्य च फलमाह—**पिपविषत इति** ॥ **अनेन-द्विर्वचनेऽचीत्यनेन** ॥ **न** चात्रोत्तरखण्डे जातयोरचो**रचः परस्मिन्निति** स्थानिवत्त्वेनावर्णपरत्वाभावात्कथमो**ः पुयणि**त्यस्य प्राप्तिरिति **वाच्यम्।** एतत्सूत्रारम्भसामर्थ्येनैव तदप्रवृत्तेः । **सनीवन्तेति स्रिपूङिति** चोभयत्रेट् ॥ नन्ववर्णपरपुयण्जयो णौ - प्रत्ययान्तरे च संभवन्ति तत्कथं 'णौ' इत्युक्तमित्याशङ्कते—**नन्विति ॥ येन नेति ।**

१ ननु आष्टमिकद्वित्वयोः प्रत्ययानिमित्तकत्वात्कथं तेन तदाक्षेपोऽत आह—**अचीति** ॥ छाया ॥

२ ननु सन्यङोरिति षष्ठीति तदपि न नियमेन तन्निमित्तकमत आह—**तद्भावेति** ॥ छाया ॥

३ नन्वेवमपि अन्यविभक्त्यन्ततदाक्षेपे विशेषणविशेष्ययोर्विभिन्नविभक्तित्वात्तदादिविधिर्न स्यादत आह—**स चेति** । आक्षेपश्चेत्यर्थः ॥ छाया ॥

४ **एवं च**-विरुद्धत्वे च ॥ छाया ॥

५ मुद्रितपुस्तके 'द्विर्वचनश्च' इति पाठः ॥

६ चरत्वर्थे । ( र. ना. )

७ अत्र बीजमाह—**परीति** ॥ छाया ॥

८ अस्यादृष्टचरत्वनिरासायाह—**नीलोत्पलेति** ॥ छाया ॥

९ प्रदीपस्थो **वा** व्यवस्थितविकल्पे इत्याह — **क्रमेणेति** ॥ छाया ॥

१० अत्र च लक्ष्यानुरोधो बीजमित्याह—**अत एवेति** । तादृशतत्त्वाङ्गीकारादेवेत्यर्थः ॥ छाया ॥

११ अत्राजादिप्रत्ययस्य यण्निमित्तत्वाभावः स्पष्ट एव । (र. ना.)

१२ 'तत्र पु' इति क. ग. पाठः ॥

१३ **अत्र**-यियविषतीत्यादौ ॥ छाया ॥

प्रकृतसूत्रे **परस्मिन्निति** वर्तते, तेन[1] द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्यान्तरेणाव्यवहिते परे सति योऽजादेशः स स्थानिवदिति सूत्रार्थः ॥ तत्र[2]ानेन ज्ञापनेन व्यवाये प्रवृत्तिर्ज्ञाप्यते । तत्र प्रत्ययव्यवधानं विना वर्गादीनामुदाहरणासंभवेन **येन नाव्यवधानन्यायेनैकव्यवधाने एव** प्रवृत्तिः । स[3] च णिरेव संभवतीति भावः ॥ **न चोरु-ऋजु-अम्बु-**शब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभावे उरुरविषतीत्यादावित्यर्थं वर्गादिग्रहणं चरितार्थम् । **किंच** श्वादिभ्यो विजन्तेभ्य आचारक्विपि सनि बिभविषतीत्यादौ चरितार्थमिति कथं ज्ञापकत्वमिति **वाच्यम्** ॥ **सनिग्रहेत्य**त्रोपदेशाधिकाराभावस्य **एकाच उपदेश** इति सूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधेनेटो दुर्लभत्वादेषा[4]मनभिधानाच्च । विचोऽसार्वत्रिकत्वाच्च ॥ एतेन दवादिभ्य आचारक्विपि सनि दिदविषतीत्यादावेकव्यवधानस्यैवं सत्त्वेन दोष इत्यपास्तम् ॥ भाष्ये—**णौ स्थानिवदिति** । अत्र णाविति प्रत्ययग्रहणेन **यस्माद्विहितस्तदादे**रित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश[6] इत्यर्थः ॥ यदि त्वनियमप्रसक्त्यभावेन नियमफलायास्तस्या नोपस्थितिः, अत एव **ह्रस्वस्य पितीत्यादौ न** तदुपस्थितिरित्युच्यते । तर्हि मास्तु । णौ प[5]र इत्यर्थे रेफेण[7] व्यवधानात्पुस्फारयिषतीत्याद्यसिद्धिरिति बोध्यम् ॥ ज्ञा[8]पनफलं तुतावयिषतीत्यादि ॥

(आक्षेपभाष्यम्)

**यद्येतत् ज्ञाप्यते 'अचिकीर्तत्' अत्रापि प्राप्नोति ॥**

(समाधानभाष्यम्)

**तुल्यजातीयस्य ज्ञापकम् ॥**

(उद्योतः) **तुल्यजातीयस्येति** । प्वादिघटितधात्वच् तुल्यस्याच आदेश इत्यर्थः । [ षष्ठ्यन्तस्य[9] षष्ठ्यन्ताच इत्यनेनैवान्वययोग्यत्वादिति बोध्यम् ॥ ]

(आक्षेपभाष्यम्)

**कश्च तुल्यजातीयः ?**

(उद्योतः) अच्त्वेन तुल्यत्वं कृतोऽपीति पृच्छति — **कश्चेति** ॥

(समाधानभाष्यम्)

**यथाजातीयकाः पुयणज्यः ॥**

(उद्योतः) उत्तरयति—**यथाजातीयका इति** । प्वादिघटितधात्वच इत्यर्थः । प्वादिभिरचस्तुल्यत्वासंभवात् ॥

(आक्षेपभाष्यम्)

**कथंजातीयकाश्चैते ?**

(समाधानभाष्यम्)

**अवर्णपराः ॥**

(उद्योतः) **अवर्णपरा इति** । अवर्णपरत्वसंपादकादेशस्थानिन इत्यर्थः ॥ एवं चावर्णपरत्वसंपादकादेशस्थानित्वेन तुल्यतेति भावः ॥ [10]एवं च 'औननत्' 'औजढत्' इत्यादि चिन्त्य[11]मेव ॥ किंच यत्र द्विरुक्तौ परभागस्याचोऽजवर्णस्तत्रेदमिति **द्विर्वचनेऽचीत्यादौ** भाष्यकैयटयोः स्थितमिति माधवोक्तं कथं भाष्यारूढमित्यपि चिन्त्यमेवेत्याहुः ॥

(आक्षेपभाष्यम्)

**कथं जग्ले-मम्ले ? ॥**

(समाधानभाष्यम्)

**अनैमित्तिकमात्वम्, शिति तु प्रतिषेधः ॥**

(उद्योतः) **अनैमित्तिकमात्वमिति** । अत एव ह्वावामश्चेति ह्वे[12]ञः कवाधनार्थं पुनरण्विधानं चरितार्थमिति पर्युदासपक्षेऽप्यदोषमादेच इत्यत्र भाष्यकारो वक्ष्यति ॥

---

(सूत्रप्रयोजननिरूपणम्)

(आक्षेपभाष्यम्)

**कानि पुनरस्य योगस्य प्रयोजनानि ?**

(प्रदीपः) **कानि पुनरिति** । अन्यथासिद्धत्वात्प्रश्नः ॥

(समाधानभाष्यम्)

**पपतुः, पपुः । तस्थतुः, तस्थुः । जग्मतुः, जग्मुः । आटिटत्, आशिशत् । चक्रतुः, चक्रुरिति । आल्लोपोपधालोपणिलोपयणादेशेषु कृतेष्वनच्कत्वात् द्विर्वचनं न प्राप्नोति ॥ स्थानिवद्भावाद्भवति ॥**

(उद्योतः) **अनच्कत्वादिति** । आ[13]टिटदित्यत्र णिलोपे धातोर्द्वितीयस्याज्रहितत्वादित्यर्थो बोध्यः ॥

(समाधानबाधकभाष्यम्)

**नैतानि सन्ति प्रयोजनानि । पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि ॥**

**कथम् ?**

**वक्ष्यति ह्याचार्यः—*द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः* इति ॥**

(प्रदीपः) **पूर्वविप्रतिषेधेनापीति** । अपूर्वो वाचनिकः पूर्वविप्रतिषेधः । न हि नित्या[14]नामनित्येन द्विर्वचनेन न्याय्यो विप्रति-

---

१ तत्सामर्थ्यलभ्यमर्थमाह—**तेनेति** ॥ छाया ॥

२ **तत्र**-तस्मिन्सूत्रार्थे सति ॥ **अनेन**-पुयणजीत्यनेन ॥ **तत्र**-व्यवाये प्रवृत्तिज्ञापने ॥ छाया ॥

३ **स च**-प्रत्ययश्च ॥ छाया ॥

४ प्रकृतभाष्यप्रामाण्यादाह—**एषामनभीति** ॥ द्वितीये दोषान्तरमाह—**विच इति** ॥ **एतेन**-अनभिधानेन ॥ छाया ॥

५ इदं सप्तम्यन्तम् । (र. ना.)

६ णिनिमित्तकादेशे इत्यर्थं विहायेति शेषः । (र. ना.)

७ कौस्तुभाद्युक्तं खण्डयति—**रेफेणेति** ॥ छाया ॥

८ नन्वेवं कथं ज्ञापकं फलाभावादत आह—**ज्ञापनेति** ॥ छाया ॥

९ कुण्डलनान्तर्गतस्य ज. पुस्तके न पाठः ॥

१० कौस्तुभाद्युक्तिद्वयं खण्डयति—**एवं चेत्यादिना** ॥**आहुः**-सिद्धान्तिनः ॥ छाया ॥

११ औनिनद् औजिढदित्यादिकमेवोचितमिति भावः । (र.ना.)

१२ **ह्वेञः**-वेञोऽपि ॥ छाया ॥

१३ तत्र धातोः साच्कत्वेन कथमनच्कत्वमत आह—**आटिटदिति** ॥ छाया ॥

१४ 'नित्यानामाल्लोपादीनामनि' इति ग. पाठः ॥

षेधः ॥ अथ निन्युतुरिति कथं नह्यत्रेयङ् परिगणितः ॥ एवं तर्हि **प्रकल्प्य चापवादविषयमिति** न्यायात् यणाऽत्र भवितव्यमितीयङ् न प्रवर्तत इति द्विर्वचने कृते **एरनेकाच** इति यणा सिद्धम् ॥

**( उद्द्योतः ) पूर्वविप्रतिषेधेनाप्येतानीति । द्विर्वचनेऽचीति** सूत्रसाध्यानि, **णौ स्थानिवदिति** ज्ञापकसाध्यानि चेत्यर्थः ॥ **न हि नित्यानामिति ।** आल्लोपादीनामित्यर्थः ॥ **द्विर्वचनेऽची**त्यादेरभावे द्विर्वचनमनित्यम् ॥ भाष्ये—**वक्ष्यति हीति । दाश्वान्साह्वानिति** सूत्रे ॥ **यणाऽत्र भाव्यमिति ।** यदीयङ् स्यात् तर्हि स स्यादिति तत्सम्भावनासत्त्वादित्यर्थः ॥ जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः ॥ वस्तुतोऽत्र यणादिग्रहणं अचूस्थानिकस्य द्विर्वचनात्परस्य विधेरुपलक्षणं बोध्यम् ॥

**( समाधानसाधकभाष्यम् )**

**स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥**

**( उद्द्योतः )** सूत्रारम्भवादी आह—**सपूर्वविप्रतिषेध इति ॥**

**( आक्षेपभाष्यम् )**

**किं पुनरत्र ज्यायः ?**

**( उद्द्योतः )** उभयोः समतया तृतीयः पृच्छति—**किं पुनरिति ॥**

**( समाधानभाष्यम् )**

**स्थानिवद्भाव एव ज्यायान् । पूर्वविप्रतिषेधे हि सतीदं वक्तव्यं स्यात्—*औदोदादेशस्य उद्भवति चुटुतुशरादेरभ्यासस्य * इति ॥**

**( प्रदीपः ) औदोदादेशस्येति ।** औदोतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासः—चुटुतुशरादिः, तस्य योऽकारस्तस्योकारादेशो भवतीत्यर्थः । यथा—चुक्षावयिषति, ऊर्णुनावयिषति[२], शुश्रावयिषति, पुस्फारयिषति । अत्र **चिस्फुरोर्णा**वित्योकारस्यात्वम् । अत्र च यद्यपि खयूशेषे[३] कृतेऽभ्यासस्य शरादित्वं नास्ति, तथाप्यभ्याससंज्ञाप्रवृत्तिकालेऽस्ति ॥ एतेष्वन्तरङ्गत्वात्प्रागेव द्विर्वचनाद्वृद्ध्यावादेशयोः प्रवर्तनादिवर्णान्ततायामभ्यासस्य प्राप्तायामुत्त्वं विधीयते ॥

**( उद्द्योतः ) स्थानिवद्भाव एव ज्यायानिति ।** अयं भावः—अयं[४] पूर्वविप्रतिषेधोऽन्तरङ्गाणां बाधको न वा । नाद्यः, बिभवनीयिषतीत्याद्यसिद्ध्यापत्तेः[५] । किंचेष्टानिष्टविवेकस्य लक्ष्यैकचक्षुष्कैर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधे वचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क सूत्रमतापेक्षया लाघवमिति ॥ अन्त्ये दूषणमाह—**औदोदादेशस्येति ।** अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुक्षावयिषतीत्यादौ[६] दोषः ॥ स्थानिवत्त्वं[७] त्वल्विधित्वान्नेत्यत आह—**औदोतोरादेशो यस्मिन्निति ।** इदमेव[८] ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न बिभवनीयिषतीत्यादौ दोषः ॥ अत्र[९] सनीत्यंशोऽपि पूरणीयः । अन्यथा दिदवनीयिषतीत्यादौ अनेनोत्वापत्तिः । तत्र कृते तु निर्दिष्टपरिभाषयाऽनेकव्यवधानान्न तत्र दोषः । एकणिज्व्यवधानं तु **येन नाव्यवधानन्या**येन सह्यत एव ॥ नन्विदं[१०] वचनं जोः सौत्राण्णिचि चङि सनि च 'अजीजवत् - जिजावयिषति' इत्यादौ अतिव्याप्तम् । न च चकार एव पाठ्यः । गुङ्घुङ्भ्यां णिचि चङि सनि वा 'अजूगवत्' इत्यादौ दोषापत्तेरिति चेन्न । *जोर्न*इत्यस्यापि वाच्यत्वात् ॥ औदोतोः किम् ? चिखादयिषति ॥ च्विर्त्यादि किम् ? बिभावयिषतीत्यादि ॥ यद्यपि **'छो छेदने-चिच्छासति'**इत्यत्रैतदतिप्रसक्तम्, तथापि औत्साहचर्यादोकारोऽपि लाक्षणिक एव गृह्यते, तदाऽऽदेशो[११] वा औदादेशसाहचर्याद् अत्रैव गृह्यत इति न दोषः ॥ **ऊर्णुनावयिषतीति ।** यद्यपि **पूर्वत्रासिद्धीयमद्वित्वे** इत्यस्यानित्यतया नुशब्दस्यैव द्वित्वेनाभ्याससंज्ञाप्रवृत्तिकाले द्वादित्वाभावः[१२], तथाऽपि द्वित्वे कृतेऽपि द्वित्वनिष्पन्नस्य कार्ये कर्तव्ये पूर्वत्रासिद्धीयस्यासिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाभावाचैतत्प्रवृत्तिकाले द्वादित्वमस्त्येवेति बोध्यम् ॥ **अभ्याससंज्ञाप्रवृत्तिसमय इति ।** एवं[१३] चाभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र चुटुतुशरादित्वं तत्रास्य प्रवृत्तिरिति भावः ॥ तत्रान्त्योदाहरणं-चुक्षावयिषतीत्यादि । नहि तत्राद्यकाले तत्वं, 'क्षु' इति कवर्गादित्वात्-इत्याहुः ॥

**( उत्ववादिन आक्षेपभाष्यम् )**

**ननु च त्वयाऽपि इत्वं वक्तव्यम् ॥**

**( प्रदीपः ) ननु च त्वयापीति । ओः पुयण्जिष्विति** ज्ञापनार्थमवश्यं वाच्यमित्यर्थः । उत्ववादी तु **ओः पुयण्जी**ति न पठति, **सन्यत** इतीत्वस्य सिद्धत्वात् ॥

**( उद्द्योतः )** ननु णेर्द्वित्वनिमित्तात्त्वाभावेन स्थानिवत्त्वाभावाद् बिभावयिषतीत्यादि सिद्धमिति 'त्वयाऽपि' इत्ययुक्तमत आह—**ओः ष्विति ।** चुक्षावयिषतीत्यादिसिद्ध्यर्थमित्यर्थः ॥

**( इत्ववादिनो लाघवभाष्यम् )**

**परार्थं मम भविष्यति-"सन्यतः" इद्भवतीति ॥**

---

१ परकालिकस्येत्यर्थः । ( र. ना. )

२ ग. पुस्तके 'नुनावयिषति-तुतावयिषति' इति द्वयोरधिकः पाठः, क. पुस्तके 'नुनावयिषति' इत्यस्यैवाधिकः ॥

३ 'खयः शेषे' इति क. पाठः ॥

४ **अयं**-वाचनिकः ॥ छाया ॥

५ **असिद्ध्येति ।** अभ्यासे उकारश्रवणापत्तेरित्यर्थः ॥ छाया ॥

६ ओदौद्रूपादेशाभावादित्यर्थः । ( र. ना. )

७ ननु स्थानिवत्त्वेन तत्त्वमत आह—**स्थानिवत्त्वमिति ।** (र.ना.)

८ **इदमेव**-उत्वविधायकमेव ॥ **इदं**-पूर्वविप्रतिषेधवचनम् ॥ छाया ॥

९ **अत्र**-उत्वविधायके ॥ **तत्र कृते**-सनीति कृते ॥ छाया ॥

१० चवर्गांशे शङ्कते —**नन्विदमिति ।** उत्वविधायकमित्यर्थः ॥ छाया ॥

११ विनिगमनाविरहादाह—**तदादेशो वेति ॥** छाया ॥

१२ टवर्गोदाहरणमिदमित्याह—**द्वादित्वेति ॥ ननुने** इतिवत्तस्यार्थान्तरमपीत्याह— **द्वित्वे इति ॥** छाया ॥

१३ पर्यवसितमावश्यकमाह—**एवं चेति ।** अत्र तथा सत्त्वे चेत्यर्थः ॥ छाया ॥

( प्रदीपः ) **परार्थमिति** । इत्त्वार्थम् । प्रसङ्गात्तु ज्ञापकम् । त्वया त्वपूर्वमुत्वं वक्तव्यमित्यर्थः ॥

( उद्द्योतः ) **परार्थ**मित्यत्र परशब्देन ज्ञापकापेक्षया परमित्वं विवक्षितमित्याह—**इत्वार्थमिति** । **द्विर्वचनेऽचीति** स्थानिवत्त्वात् पिपविषते यियविषतीत्यर्थमित्यर्थः ॥ **प्रसङ्गादिति** । वर्गप्रत्याहारजग्रहादित्यर्थः ॥ [1]**सन्यत इत्त्वती**ति विहितमित्वमिहानुवर्तमानं परार्थं भविष्यतीति भाष्येऽन्वयः ॥ तत्र **सन्यत** इत्यभिधानं स्वरूपेणेत्वमपूर्वं न भवतीति प्रदर्शनार्थं, तद् ध्वनयन्नाह—**अपूर्वमुत्वमिति** ॥

( उत्ववादिनो गौरवपरिहारभाष्यम् )

**ममापि तर्ह्युत्वं परार्थं भविष्यति–"उत्परस्यातः, ति च" इति ॥**

( प्रदीपः ) **ममापीति** । उत्वमप्यन्यार्थं वक्तव्यम् । तदेवाधिकविषये उपजीव्यत इत्यर्थः । तत्रायं न्यासः–'**उत्परस्यातः**' '**ति च**' '**औदोदादेशस्य चुट्टुतुशरादेः**' इति । अभ्यासस्येति वर्तते ॥

( उद्द्योतः ) अपूर्वत्वतदभावमात्रेण वैषम्यमस्याभिप्रेतमिति मन्वानस्तद्विघटयितुमाह परः—**ममापि तर्ह्युत्वमिति** ॥ तद्व्याचष्टे—**उत्वमपीति** ॥

( इत्ववादिभाष्यम् )

**इत्वमपि त्वया वक्तव्यम् । यत्समानाश्रयं तदर्थम्—उतिपपविषते, संयियविषतीत्येवमर्थम् ॥ तस्मात्स्था[2]निवदित्येष एव पक्षो ज्यायान् ॥ द्विर्वचनेऽचि ॥ ५९ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे अष्टममाह्निकम् ॥**

( प्रदीपः ) **इत्वमपीति** । यत्रान्तरङ्गत्वं नास्ति समानाश्रयत्वात् । पवतेर्यौतेश्च सनि '**स्रिवुश्रुपृद्रुप्लुच्युवां सनि**' '**सनीवन्तर्ध–**' इति चेटि कृते परत्वाद्गुणः । पूर्वविप्रतिषेधादवादेशात् पूर्वं द्विर्वचनमितीत्त्वं वक्तव्यम् । तथा जिजावयिषतीत्यत्रेत्वविधानार्थं वक्तव्यम् ॥ **तस्मादिति** । नन्वसत्यस्मिन् सूत्रे **ओः पुयण्**जीति ज्ञापकमेवं समर्थयिष्यते—अन्तरङ्गो नित्यश्च विधिर्द्विर्वचनेन प्रतिबध्यत इति तत्र द्विर्वचने कृते यथाप्राप्तं भविष्यति ॥ तदयुक्तम् । यदि सामान्येन ज्ञापकमाश्रीयते, अचिकीर्तदित्यत्रापि पूर्वं द्विर्वचनप्रसङ्गादनिष्टरूपप्राप्तिः ॥ अथ तुल्यजातीयापेक्षं ज्ञापकं व्याख्यायते, यथोक्तं भाष्यकारेण, तथा सति च[3]कतुरित्यादि न सिध्यतीति सूत्रमेव कर्तव्यम् । यत्तु तेन न सिध्यति तदर्थं ज्ञापकमाश्रयणीयं तुल्यजातीयापेक्षमिति सर्वेष्टलक्ष्यसिद्धिः ॥ ५९ ॥

इत्युपाध्याय**जैयट**पुत्र**कैयट**कृते महाभाष्य**प्रदीपे** प्रथमस्याध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥

( उद्द्योतः ) नापूर्वत्व-तदभावमात्रेण वैषम्यमभिप्रेतम्, किंतु गौरवतदभावाभ्यामिति दर्शयितुं भाष्ये—**इत्वमपीति** ॥ तदुपपादयति—**यत्रेति** । गुणावादेशयोरिति शेषः ॥ **वक्तव्यमिति** । 'जोर्न' इति वक्तव्यमित्यर्थः ॥ **नन्वसतीति** । असत्यपीत्यर्थः ॥ **यदीति** । लघुपरत्वाभावेन सन्वत्त्वाभावोऽचिकीर्तदित्यत्र दोषः, दिदवनीयिषतीत्यादावपि दोषो बोध्यः ॥ **अथ तुल्येति** । अवर्णपरत्वं यत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा, तत्र द्विर्वचनेनान्तरङ्गनित्ये बाध्येते इत्यर्थः ॥ **चक्रतुरिति** । दिदवनीयिषतीत्याद्यसिद्धिरित्यपि बोध्यम् ॥ ५९ ॥

इति श्री**शिवभट्ट**सुत**सती**गर्भज**नागोजीभट्ट**कृते भाष्यप्रदी**पोद्द्योते** प्रथमाध्यायस्य प्रथमे पादे **अष्टम**माह्निकम् ॥

# अथ प्रथमाध्यायस्य प्रथमपादे नवममाह्निकम् ॥

( ५५ लोपसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १ ॥ )

## अदर्शनं लोपः ॥ १ । १ । ६० ॥

( अनिष्टापत्तिनिराकरणम् )

( आक्षेपभाष्यम् )

**अर्थ[4]स्य संज्ञा कर्तव्या । शब्दस्य माभूदिति ॥**

( प्रदीपः ) **अदर्शनं लोपः** ॥ ६० ॥ **अर्थस्येति** । **स्वं रूप**मिति वचनाच्छब्दस्यैव संज्ञा प्राप्नोतीति भावः ॥

( उद्द्योतः ) **अदर्शनं लोपः** ॥ ६० ॥ नन्वपत्यादिवदर्थपरोऽदर्शनशब्द इति सिद्धैवार्थस्य संज्ञेत्यत आह—**स्वमिति** ॥

( आक्षेपभाष्यम् )

**[5]इतरेतराश्रयं च भवति ॥**

**का इतरेतराश्रयता ?**

**सतोऽदर्शनस्य संज्ञया भवितव्यम्, संज्ञया**

---

१ नन्वेवं भाष्ये कथं सन्यत इत्युक्तिरत आह—**सन्यत इति** ॥ **इह–ओः पुयण्जी**त्यत्र ॥ छाया ॥

२ 'कानि पुनरस्य योगस्य प्रयोजनानि' इत्याक्षिप्य 'पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि' इत्युत्तरितम् । पूर्वविप्रतिषेधाश्रयणे च चुक्षावयिषतीत्यादौ दोषवारणार्थं वचनान्तराश्रयणापेक्षयाऽनेन स्थानिवद्भावाश्रयणमेव वरमित्याशयः ॥

३ निरुक्तनियमानाक्रान्तत्वेन द्विर्वचनेन यणः प्रतिषेधाभावेऽनच्कत्वाद् द्विर्वचनं न स्यादिति भावः । ( र. ना )

४ **अर्थस्य–स्वरूपातिरिक्तस्य** ॥ छाया ॥ इतः प्राक् 'लोपसंज्ञायामर्थसंज्ञाकरणम् ॥ लोपसंज्ञायां' इति वार्तिकतद्व्याख्याभाष्यपाठोऽधिको मुद्रितपुस्तकेषु दृश्यते । आदर्शपुस्तकेषु तदनुपलम्भात्स निर्मूलः ॥

५ इतः प्राक् 'इतरेतराश्रयं च' इति वार्तिकमधिकं पठ्यते मुद्रितेषु, तन्निर्मूलम् ॥

चादर्शनं भाव्यते, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि कार्याणि च न प्रकल्पन्ते ॥

( प्रदीपः ) इतरेतराश्रयमिति । विधिप्रदेशेष्वेतच्चोद्यम्, नानुवादे—चादिलोपे विभाषेत्यादौ ॥

( उद्द्योतः ) नानुवादे इति । तत्र हि न संज्ञाकृतोऽभाव इत्यर्थः ॥

( समाधाने भाष्यवार्तिकम् )

*** ॥ लोपसंज्ञायामर्थसतोरुक्तम् ॥ ***

किमुक्तम् ?

अर्थस्य तावदुक्तम्-* इतिकरणोऽर्थनिर्देशार्थः* इति ॥

सतोऽप्युक्तम्—* सिद्धं तु नित्यशब्दत्वात्* इति । नित्याः शब्दाः । नित्येषु शब्देषु सतोऽदर्शनस्य संज्ञा क्रियते, न संज्ञयाऽदर्शनं भाव्यते ॥

( प्रदीपः ) इतिकरण इति । इहापि स एवानुवर्तते ॥ 'लोपः' इत्यन्वर्थसंज्ञाविज्ञानाद्वाऽर्थस्य संज्ञा, न शब्दस्य ॥

( उद्द्योतः ) भाष्ये—उक्तमिति । नवेति विभाषेत्यत्रेत्यर्थः ॥ असंबद्धपदव्यवायान्नानुवृत्तिरत आह—लोप इतीति । तदर्थान्वययोग्यताया अर्थे एव सत्त्वात् अदर्शनशब्दस्य तादृशान्वर्थसंज्ञाकरणे फलाभाव इति भावः ॥ 'प्रसक्तादर्शनस्य' इत्यर्थलाभार्थं स्थानेपदस्येवास्याप्यनुवृत्तिः सुलभा, 'लुप्लृ छेदने' इति धात्वर्थानुसारेणान्वर्थत्वासंभवादिति तु भाष्यतात्पर्यम् ॥ अभावो लोप इत्यवसानसंज्ञासूत्रभाष्योक्तिरदर्शनशब्देन तत्समनियतो वर्णाभाव एवात्रेति बोध्यम् ॥ स्वरूपमित्यस्य प्रत्याख्याने तदनुवृत्तिं विनाऽपि सिद्धिरिति बोध्यम् ॥

( ३७२ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सर्वप्रसङ्गस्तु सर्वस्यान्यत्रादृष्टत्वात् ॥ * ॥**

( भाष्यम् )

सर्वप्रसङ्गस्तु भवति । सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति ॥

किं कारणम् ?

'सर्वस्यान्यत्रादृष्टत्वात्' । सर्वो हि शब्दो यो यस्य प्रयोगविषयः, स ततोऽन्यत्र न दृश्यते । त्रपु-जतु-इत्यत्राणः "अदर्शनं लोपः" इति लोपसंज्ञा प्राप्नोति ॥

( प्रदीपः ) सर्वप्रसङ्गस्त्विति । यदि स्वभावतोऽप्रयुक्तस्यान्वाख्यानमात्रं क्रियते, तदा सर्वस्य स्वविषयादन्यत्राप्रयोगादस्त्यदर्शनमिति लोपसंज्ञाप्रसङ्गः ॥

( उद्द्योतः ) नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्ययं दोष इत्याह—यदीति ॥

( भाष्यम् )

तत्र को दोषः ?

( ३७३ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्र प्रत्ययलक्षणप्रतिषेधः ॥ * ॥**

( भाष्यम् )

तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः । "अचो ञ्णिति" इति वृद्धिः प्राप्नोति ॥

( आक्षेपबाधकभाष्यम् )

नैष दोषः । ञ्णित्यङ्गस्याचो वृद्धिरुच्यते । यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गं भवति । यस्माच्चात्र प्रत्ययविधिः, न तत् प्रत्यये परतः । यच्च प्रत्यये परतः, न तस्मात्प्रत्ययविधिः ॥

( प्रदीपः ) ञ्णित्यङ्गस्येति । अङ्गसंज्ञा च विधानप्रतिबद्धा । न चात्र प्रत्ययस्य ञ्णितो विधानम् ॥ यस्माच्चेति । त्रपुशब्दात्सोर्विधानम् ॥ न तत्प्रत्यय इति । ञ्णिति वृद्धिनिमित्त इत्यर्थः ॥ यच्चेति । सुशब्दे ॥ न तस्मादिति । तस्मात्त्रपुशब्दात्सोरन्यस्याणो विधानं नास्तीत्यर्थः ॥

( उद्द्योतः ) अत्र प्रत्ययो नाणित्याह—सोरिति ॥ ञ्णिति वृद्धिनिमित्ते इति । अङ्गसंज्ञासूत्रे प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणाद् वृद्धिविधौ ञ्णित्प्रत्ययनिरूपिताङ्गग्रहणाच्चेति भावः ॥

( आक्षेपसाधकभाष्यम् )

क्विपस्तर्ह्यदर्शनम् । तत्र "अदर्शनं लोपः" इति लोपसंज्ञा प्राप्नोति ॥

तत्र को दोषः ?

'तत्र प्रत्ययलक्षणप्रतिषेधः' । तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः । ह्रस्वस्य पिति कृति तुग्भवति-इति तुक् प्राप्नोति ॥

( प्रदीपः ) अनाङ्गं कार्यं चोदयति—क्विप इति । 'त्रपु' इत्यत्र क्विपोऽदर्शनमस्ति स च कृदिति तुक्प्रसङ्गः ॥

( ३७४ समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात् ॥ * ॥**

( भाष्यम् )

सिद्धमेतत् ॥

१ कैयटं दूषयन्भाष्याशयमाह—प्रसक्तेति ॥ छाया ॥

२ अनतिप्रसङ्गायाह—अभाव इति ॥ छाया ॥

३ लाघवमाह—स्वमिति ॥ छाया ॥

४ 'त्यत्राणोऽदर्शनं लोपसंज्ञा' इति क. पाठः, 'त्यत्राणोऽदर्शनम् । तत्रादर्शनं लोप इति लोप' इति ग. पाठः ॥

५ अयं-वार्तिकोक्तः ॥ छाया ॥

६ ननु तदविधानेऽपि सोर्विधिरस्तीत्यत आह—भाष्ये-यस्माचेति ॥ छाया ॥

७ तदाशयमाह—प्रदीपे-त्रप्वित्यादि ॥ छाया ॥

८ तदाशयमाह—अत्रेत्यादि ॥ छाया ॥

कथम् ?

**प्रसक्तादर्शनं लोपसंज्ञं भवतीति वक्तव्यम् ॥**

(प्रदीपः) **सिद्धं त्विति ।** शास्त्रादर्थाद्वा प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति ॥ स्थानेग्रहणमिहाप्यनुवर्तते । स्थानं च प्रसङ्गः । तेन प्रसङ्गे यददर्शनमिति लभ्यते ॥

(उद्योतः) 'चादिलोपे' इति संग्रहायाह—**अर्थाद्वेति ।** **एकवचनमुत्सर्गत** इत्यादिशास्त्रमर्थनिरपेक्षं विभक्तिप्रसञ्जकम् । अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इति बोध्यम् ॥ ननु कथं 'प्रसक्तस्य' इति लभ्यतेऽत आह—**स्थाने इति**[1] । न च पित्कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्यः । आक्षेपे-आक्षिप्तस्य शाब्देऽन्वये च मानाभावात् । अत्र चेदमेव भाष्यं मानम् । किं[2]चानुपपद्यमानेन स्वोपपादकमाक्षिप्यते, यथा–पीनत्वेन रात्रिभोजनम् ॥ न चैवं प्रकृते । न हि त[3]त्सूत्रे आक्षेपं विना पित्कृतप्रत्ययानुपपत्तिरस्ति । नापि तदाक्षेपेण तदुपपत्तिः । ना[4]पि **प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरि**त्युपस्थितिः । अनियमप्रसक्त्यभावेन नियमफलायास्तस्या अनुपस्थितेरित्यावेदितम् । किं[5]चात्रैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासंभव इति दिक् ॥ यत्[6]तु ग्रामाधिकरणिका स्थितिरित्यर्थके 'ग्रामे तिष्ठति' इति वाक्ये **ल्यब्लोप** इति पञ्चम्यापत्तिवारणाय **प्रसक्तस्ये**त्यावश्यकमिति ॥ तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेनात्राप्राप्तेः । तत्त्वे त्विष्टापत्तिः पञ्चम्या इ[7]त्यलम् ॥

(आक्षेपभाष्यम्)

**यदि [8]प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यते, ग्रामणीः-सेनानीः, अत्र वृद्धिः प्राप्नोति ॥**

(प्रदीपः) **ग्रामणीरिति ।** अर्थोपपदधातुसंनिधानादर्थाच्छास्त्राच्चाणः प्रसङ्गोऽस्तीति भावः ॥

(उद्योतः) **अर्थादिति ।** कर्तृलक्षणादित्यर्थः ॥ **शास्त्रात्**–कर्मण्यणित्यतः ॥ **अणः प्रसङ्ग इति ।** य[9]स्मात्प्रत्ययविधिरित्यत्र विधिः-प्रसङ्ग एव निविष्ट इत्यङ्गत्वमस्तीत्यभिमानः ॥

(समाधानभाष्यम्)

**प्रसक्तादर्शनं लोपसंज्ञं भवति षष्ठीनिर्दिष्टस्य ॥**

(प्रदीपः) **षष्ठीनिर्दिष्टस्येति ।** षष्ठीग्रहणमप्यनुवर्तते ॥

(उद्योतः) **षष्ठीग्रहणमिति ।** त[10]च्च षष्ठ्यन्तं वैयधिकरण्येनादर्शनान्वयीति बोध्यम् ॥

(प्रसक्तादर्शनवादिन आक्षेपभाष्यम्)

**यदि षष्ठीनिर्दिष्टस्येत्युच्यते "चाह[11]लोप एवेत्यवधारणम्" "चा[12]दिलोपे विभाषा" अत्र लोपसंज्ञा न प्राप्नोति ॥**

(प्रदीपः) **चादिलोप इति ।** ततश्च **शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्तीति** निघातविकल्पो न स्यात् ॥

(षष्ठीनिर्दिष्टवादिन आक्षेपभाष्यम्)

**अथ प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यमाने कथमेवैतत् सिध्यति ?**

(प्रदीपः) **अथेति ।** अत्राऽपि चादीनां शास्त्रान्नास्ति प्रसङ्गः ॥

(उद्योतः) **अत्रापीति ।** शास्त्रतः प्रसक्तिरेवाभिमतेति चोद्यमिति भावः ॥

(प्रसक्तादर्शनवादिनः समाधानभाष्यम्)

**को हि शब्दस्य प्रसङ्गः ?**

**यत्र गम्यते चार्थः, न च प्रयुज्यते ॥**

(उद्योतः) अर्थतोऽपि प्रसक्तिर्गृह्यत इत्युत्तरम् ॥

(उपसंहारभाष्यम्)

**अस्तु तर्हि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्येव ॥**

(आक्षेपस्मारणभाष्यम्)

**कथं ग्रामणीः-सेनानीः ?**

(समाधानभाष्यम्)

**योऽत्राऽणः प्रसङ्गः क्विपाऽसौ बाध्यते ॥ अदर्शनं लोपः ॥ ६० ॥**

(प्रदीपः) **क्विपाऽसौ बाध्यत इति ।** 'सत्सूद्विष–' इति क्विपो विधानादणोऽत्र प्रसङ्गाभावः ॥ ६० ॥

(उद्योतः) अणोऽत्रेति । **परिहृत्य चापवादविषय**मिति न्यायेन प्रसङ्ग एव नास्तीति भावः ॥ ६० ॥

---

१ **इति**–इत्यादि ॥ **अपिः**-उक्तसमुच्चये ॥ छाया ॥

२ नन्विदमुपायान्तरपरमस्त्वत आह—**किं चेति** ॥ छाया ॥

३ **तत्सूत्रे**–**ह्रस्वस्ये**ति सूत्रे ॥ छाया ॥

४ वारणप्रकारान्तरमत्र स एव तत्पदार्थो···न्यत्रेत्याशयप्राप्तं निराचष्टे—**नापि प्रत्ययेति** ॥ छाया ॥

५ दोषान्तरमाह—**किं चेति** ॥ **अत्रैव**-**ह्रस्वस्ये**ति सूत्र एव ॥ उत्पत्तेरभावादाह—**विनेति** ॥ किं च शाब्दी ह्याकाङ्क्षेति न्यायविरोधो गौरवं च । तदाह—**दिगिति** ॥ छाया ॥

६ कौस्तुभाद्युक्तिं खण्डयति—**यत्त्विति** ॥ छाया ॥

७ एवं **चादिलोप** इत्यादावपि बोध्यम् । तदाह—**इत्यलमिति** ॥ छाया ॥

८ **प्रसक्तादर्शनमिति ।** तन्मात्रमित्यर्थः ॥ छाया ॥

९ ननु प्रसङ्गसत्त्वेऽपि विधानप्रतिबद्धाङ्गत्वाभावे कथं वृद्धिरत आह—**यस्मादिति** ॥ छाया ॥

१० **तच्चेति ।** षष्ठ्यन्तस्य प्रसक्तस्यादर्शनमित्यर्थः ॥ छाया ॥

११ **चाहलोप इति ।** 'च अह एतयोर्लोपे प्रथमवाक्योच्चारितं तिङन्तं नानुदात्तम्, अवधारणार्थैवशब्दप्रयोगे सति' । देव एव ग्रामं गच्छतु । देव एवारण्यं गच्छतु । ग्राममरण्यं च गच्छत्वित्यर्थः ॥ इति सूत्रार्थोदाहरणे ॥

१२ **चादिलोप इति ।** चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता इति सूत्रार्थः ॥

( ५६ लुक्श्लुलुप्संज्ञासूत्रम् ॥ १ । १ । ९ आ. २ )

# प्रत्ययस्य लुक्श्लुलुपः ॥ १ । १ । ६१ ॥

( प्रत्ययपदप्रयोजनम् )

( आक्षेपभाष्यम् )

**प्रत्ययग्रहणं किमर्थम् ?**

( प्रदीपः ) **प्रत्ययस्य०** ॥ ६१ ॥ **प्रत्ययग्रहणमिति** । लुगादिविधौ क्वचित्प्रत्ययः साक्षान्निर्दिश्यते, क्वचिदनुवर्तते, क्वचित्सामर्थ्यात्प्रतीयत इति **प्रश्नः** ॥

(उद्द्योतः) प्रत्ययस्य० ॥ ६१ ॥ ननु लुगादिविधौ प्रत्ययादर्शनविधिर्यथा स्यादित्यर्थं प्रत्ययस्येतीत्यत आह—**लुगादीति** ॥ **साक्षादिति** । **लुगणिञोरित्यादौ** ॥ **क्वचिदिति** । यथा लुग्वा दुहेत्यादौ 'क्सस्य' इति ॥ **क्वचिदिति** । वक्ष्यमाणसूत्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थः ॥

( समाधाने भाष्यवार्तिकम् ॥ )

## *॥ लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् ॥*

( भाष्यम् )

**लुमति प्रत्ययग्रहणं क्रियते, अप्रत्ययस्यैताः संज्ञा मा भूवन्निति ॥**

( प्रदीपः ) **अप्रत्ययस्येति** । अविद्यमानः प्रत्ययो यस्मिन्नदर्शने इति तदप्रत्ययम् ॥

( उद्द्योतः ) नन्वदर्शनस्येमाः संज्ञा इति **अप्रत्ययस्यैता** इत्यनुपपन्नमत आह—**अविद्यमान इति** । प्रतियोगिविशेषणत्वेनेति[1] शेषः ॥ वस्तुतोऽवसानसंज्ञासूत्रे वक्ष्यमाणरीत्या प्रत्ययाभावस्यैवेमाः संज्ञा इति भाष्याभिप्रायः ॥

( भाष्यम् )

**किं प्रयोजनम् ?**

( प्रयोजने भाष्यवार्तिकम् )

## *॥ प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् ॥*

( भाष्यम् )

**तद्धितलुकि गोनिवृत्त्यर्थम् । कंसीयपरशव्ययोश्च लुकि प्रकृतिनिवृत्त्यर्थम् । "लुक्तद्धितलुकि" इति गोरपि लुक् प्राप्नोति, प्रत्ययग्रहणान्न भवति ॥ "कंसीयपरशव्ययोर्यञञौ लुक् च" इति प्रकृतेरपि लुक् प्राप्नोति, प्रत्ययग्रहणान्न भवति ॥**

( प्रदीपः ) **गोरपीति** । पञ्चेन्द्र इत्यादौ तु **निर्दिश्यमानस्यादेशा भवन्तीति** वचनात् स्त्रीप्रत्ययस्यैव लुक् भविष्यति, न तदन्तस्य । **गोरतद्धितलुकी**त्यत्र[2] गोर्लुकि कृते पञ्चगुरित्यादौ गोशब्दान्तत्वाभावात्समासान्ताप्राप्ता**वतद्धितलुकी**ति प्रतिषेधोऽनर्थकः स्यादिति चेत् ॥ कृते समासान्ते लुक् स्यादित्यर्थवानेव प्रतिषेधः ॥ ननु स्वभावतोऽप्रवृत्तस्यादर्शनं लुक्संज्ञम् । न च तत्र गोशब्दस्य स्वभावतोऽप्रवृत्तिः ॥ नैष दोषः । शास्त्रानुसारिभिरस्यार्थस्य दुर्ज्ञानत्वात् ॥ **प्रकृतेरपीति** । समुदायस्य षष्ठीनिर्देशात् ॥

( उद्द्योतः ) भाष्ये—**गोरपीति** । **गोस्त्रियोरि**ति समुदायानुवृत्तेरिति भावः ॥ ननु **गोस्त्रियोरि**त्यत्र 'स्त्री' इति स्वरितगुणयुक्तमिति **स्त्रिया**मित्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात् प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्यर्थत्वमपि[3] कुतो नोक्तम् ? अत आह—**पञ्चेन्द्र इति** ॥ गोनिवृत्तिः प्रत्ययग्रहणं विनाऽपि सिध्यतीति शङ्कते—**गोरिति** । पञ्चगुरित्यत्र क्रीतार्थठकोऽध्यर्धेति लुक् ॥ **कृते इति** । परत्वादिति भावः । **अन्तरङ्गानपीति**[4] न्यायस्तु अन्तरङ्गनिमित्तविनाशकप्रत्ययलुग्विषय[5] इति तात्पर्यम् ॥ न च समासान्ते तेन व्यवधानात्कथं लुक्, गोरित्यनुवृत्तिसामर्थ्येन[6] लुक्प्राप्तेरिति बोध्यम् ॥ नित्यशब्दान्वाख्यानाभिप्रायेण शङ्कते—**नन्विति** ॥ **समुदायस्येति** । यस्येति[7] चेत्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वादेशः स्यादित्यर्थः ॥

( प्रत्याख्यानभाष्यम् )

**गोनिवृत्त्यर्थेन तावन्नार्थः ॥**

( प्रत्याख्यानसाधकं भाष्यवार्तिकम् )

## *॥ योगविभागात् सिद्धम् ॥*

( भाष्यम् )

**योगविभागः करिष्यते—"गोरुपसर्जनस्य" गोऽन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति ॥ ततः "स्त्रियाः" स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति ॥ ततो "लुक्तद्धितलुकि" इति । स्त्रिया इति वर्तते । गोरिति निवृत्तम् ॥**

( प्रदीपः ) **योगविभागादिति** । एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिरित्येतत् प्रकारान्तरेण प्रतिपाद्यते ॥

( उद्द्योतः ) ननु योगविभागे सूत्रभेदः कृतः स्यादत आह—**एकयोगेति** ॥ प्रकारान्तरम्–योगविभागरूपम् ॥

---

१ प्रतियोगित्वेन तत्त्वे उक्तदोष एवात आह—**प्रतीति** ॥ छाया ॥

२ इत्यत्रेति । अतद्धितेत्यत्रान्वयः ॥ छाया ॥

३ तदिति । प्रकृतोऽर्थः ॥ अपिना गोसमुच्चयः ॥ छाया ॥

४ नन्विदमन्तरङ्गानपीति न्यायविरुद्धमत आह—**अन्तरङ्गेति** ॥ छाया ॥

५ विनाशकान्तं लुको विशेषणम् । ( र. ना. )

६ अभावेनापि बुद्धिकृतपौर्वापर्यसंभवेन सतिसप्तमीत्वे मानाभावादाह—**गोरिति** ॥ छाया ॥

७ ननु समुदायस्य तथा निर्देशेऽलोऽन्त्यस्येति न दोषोऽत आह—**यस्येतीति** ॥ छाया ॥

( प्रत्याख्यानसाधकं भाष्यवार्तिकम् )

***॥ कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम् ॥***

( भाष्यम् )

**कंसीयपरशव्ययोरपि विशिष्टनिर्देशः कर्तव्यः । कंसीयपरशव्ययोर्यञञौ भवतः, छयतोश्च लुग्भवतीति ॥**

( प्रदीपः ) **विशिष्टनिर्देशादिति** । छयतावेवात्र निर्देष्टव्याविल्यर्थः ॥

( उद्द्योतः ) छयताविति । कंसाद्-प्राक्क्रीताच्छः । परशोः-उगवादिभ्यो यत् ॥

( विशिष्टनिर्देशावश्यकताभाष्यम् )

**स चावश्यं विशिष्टनिर्देशः कर्तव्यः । क्रियमाणेऽपि वै प्रत्ययग्रहणे उकारसशब्दयोर्मा भूदिति । 'कमेः सः' कंसः, परान् शृणातीति परशुरिति ॥**

( उद्द्योतः ) कंसे - कमेः सः । परशौ—आङ्परयोः खनिशृभ्यां डिच्चेत्युप्रत्ययः ॥

( विशिष्टनिर्देशावश्यकताबाधकभाष्यम् )

**नैष दोषः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि॥**

( प्रदीपः ) **उणादय इति । अतः कृकमिकंसकुम्भेति** कंसशब्दस्य भेदेनोपादानात् क्वचिदुणादयो व्युत्पत्तिकार्यं न लभन्त इत्यर्थः । यञञोस्तु विधानसामर्थ्याल्लुगभावः ॥

( उद्द्योतः ) **अतः कृ इति** । धातौ[1] सप्तमीनिर्दिष्टे तदादिग्रहणात् कमिग्रहणेनैव सिद्धे-इति शेषः ॥ कंसेस्तु[3] 'कंसः' इति न रूपम्, अनभिधानादिति भावः ॥ अत एव **कमेः सः कंस** इति भाष्ये उक्तम् ॥ नन्वेवमपि[4] विशिष्टनिर्देशाभावे यञञोरपि लुक् स्यादत आह—**यञञोरिति** । विकारावयवार्थप्रतीतये औत्सर्गिकाण एव लुकं विदध्यात् ॥ न च यञञ्लुकां सामर्थ्याद्विकल्पोऽस्तु । वेल्यनुक्तिस्तु[5] यञञ्भ्यां मुक्ते औत्सर्गिकाणः श्रवणाभावायेति वाच्यम् ॥ यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावासंभवात् ॥ व्युब्युलौ[6] तुट् चेत्यादौ तु अनद्यतन इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः । किं च **कंसीयपरशव्ययोरि**ति षष्ठीनिर्देशादपि न यञञोर्लुक्, अन्यथा पञ्चम्यैव निर्दिशेदिति भावः ॥

( उपसंहारभाष्यम् )

**स[7] एषोऽनन्यार्थो विशिष्टनिर्देशः कर्तव्यः, प्रत्ययग्रहणं वा कर्तव्यम् ॥**

( प्रदीपः ) **स एषोऽनन्यार्थ इति** । प्रकृतिनिवृत्त्यर्थ एव, न तु प्रत्ययान्तरनिवृत्त्यर्थोऽपीत्यर्थः ॥

( उद्द्योतः ) **प्रकृतीति** । प्रकृतिव्यतिरिक्तप्रत्ययान्तरवाची अन्यशब्दः । तेन नञः समासे प्रकृतिरुच्यत इत्याशयः ॥

( प्रत्याख्याने भाष्यवार्तिकम् )

***॥ उक्तं[9] वा ॥***

( भाष्यम् )

**किमुक्तम् ?**

*** ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यत्छयोश्च लुगर्थम् * इति ॥**

( उद्द्योतः ) भाष्ये—**ङ्याबिति** । 'प्रातिपदिकात्परस्य लुक्' इत्यर्थे यञञोर्विधानसामर्थ्याल्लुगभावे उसयोः[10] प्रातिपदिकात्परत्वाभावेन परिशेषात् कंसीयाद्यवयवप्रातिपदिकात्परयोः छयतोरेव लुगित्यर्थः ॥

( ३७५ प्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ षष्ठीनिर्देशार्थं तु ॥ * ॥**

( भाष्यम् )

**षष्ठीनिर्देशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । षष्ठीनिर्देशो यथा प्रकल्पेत ॥**

( ३७६ प्रयोजनसाधकं वार्तिकम् ॥ २ ॥ )

**॥*॥ अनिर्देशो हि षष्ठ्यर्थाप्रसिद्धिः ॥*॥**

( भाष्यम् )

**अक्रियमाणे हि प्रत्ययग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात् ॥**

**कस्य ?**

**स्थानेयोगत्वस्य ॥**

( प्रदीपः ) **षष्ठीनिर्देशार्थं त्विति** । विशिष्टस्य षष्ठ्यर्थस्य[11] स्थानेयोगत्वनिर्देशार्थमित्यर्थः ॥ असति प्रत्ययस्येत्येतस्मिन् यः कश्चिदानन्तर्यादिः संबन्धः स्यात् । ततश्च **जनपदे लुबिति**

---

१ ननु स्वरूपभेदात्कथं तेन सिद्धिरत आह—**धाताविति** ॥ छाया ॥

२ विष्वग्देवयोश्चेति सूत्रेऽप्रत्ययग्रहणरूपाज्ज्ञापकादिति भावः । ( र. ना. )

३ नन्वन्यार्थं तदत आह—**कंसेरिति ॥ अत एव**–अनभिधानादेव ॥ छाया ॥

४ **एवमपि**–उकारसकारयोर्वारणेऽपि ॥ ननु विधानं तदर्थप्रतीत्या सफलमत आह—**विकारेति** ॥ छाया ॥

५ नन्वेवं लुग्वेत्युचितमाह—**वेत्येति** ॥ छाया ॥

६ नन्वेवमन्यत्र दोषोऽत आह—**व्युब्युलाविति** ॥ युक्त्यन्तरमप्याह—**किं चेति ॥ अपिस्तत्समुच्चये** ॥ छाया ॥

७ **स एष इति** । अनेन मात्रालाघवस्यासार्वत्रिकत्वं सूचितम् ॥ छाया ॥

८ यञञोस्तु विधानसामर्थ्याल्लुगभाव इत्युक्तेरिति भावः । (र.ना.)

९ **उक्तं वेति** । ङ्याप्प्रातिपदिकेति सूत्रे ॥ छाया ॥

१० **उसयोः**–उकारसकारयोः ॥ छाया ॥

११ षष्ठीपदं तदर्थपरमित्याह—**षष्ठ्यर्थेति** ॥ तमेवाह—**स्थान इति** ॥ तस्मिन्सति स्थानपदानुवृत्त्या सा स्थानषष्ठीति भावः ॥ छाया ॥

पञ्चालाः शोभना इत्यादौ जनपदवाचिनोऽनन्तरस्य शोभनादेरपि लुप् स्यात् ॥

(उद्द्योतः) विशिष्टेति । जनपदार्थकप्रत्ययसंबन्धिन इत्यर्थः ॥ शोभनाः पञ्चाला इत्यादौ इति पाठ उचितः ॥ अनन्तरस्येति । अव्यवहितस्येत्यर्थः । जनपदार्थवाचके शब्दे सति तदनन्तरस्य लुबित्यर्थ इति भावः ॥

( प्रत्याख्यानसाधकमाक्षेपभाष्यम् )

**क्व पुनरिह षष्ठीनिर्देशार्थेनार्थः प्रत्ययग्रहणेन । यावता सर्वत्रैव षष्ठ्युच्चार्यते—अणिञोः, तद्राजस्य, यञञोः, शप इति ?**

( समाधानभाष्यम् )

**इह न काचित् षष्ठी—"जनपदे लुप्" इति ॥**

( समाधानबाधकभाष्यम् )

**अत्रापि प्रकृतं प्रत्ययग्रहणमनुवर्तते ॥**
**क्व प्रकृतम् ?**
**"प्रत्ययः, परश्च" इति ॥**

( उद्द्योतः ) भाष्ये—प्रकृतमिति । अत एव लवणाल्लुगित्यत्र प्रकृतठक एव लुगिति बोध्यम् ॥

( समाधानसाधकभाष्यम् )

**तद्वै प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः ॥**

( समाधानबाधकभाष्यम् )

**"ङ्याप्प्रातिपदिकात्" इत्येषा पञ्चमी प्रत्यय इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति "तस्मादित्युत्तरस्य" इति ॥**

( समाधानसाधकभाष्यम् )

**प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥**

( समाधानबाधकभाष्यम् )

**नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥**

( ३७७ प्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सर्वादेशार्थं वा वचनप्रामाण्यात् ॥ * ॥**

( भाष्यम् )

**सर्वादेशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । लुक्श्लुलुपः सर्वादेशा यथा स्युः ॥**

**अथ क्रियमाणेऽपि प्रत्ययग्रहणे कथमिव लुक्श्लुलुपः सर्वादेशा लभ्याः ?**

**'वचनप्रामाण्यात् ।' प्रत्ययग्रहणसामर्थ्यात् ॥**

( प्रदीपः ) सर्वादेशार्थं वेति । षष्ठीनिर्देशार्थत्वं स्थितमेवेति वार्तिककारेण विकल्पार्थो वाशब्दः प्रयुक्तः ॥ आगस्त्यकौण्डिन्ययोरित्यत्र हि यदि लुगनुवर्तते, तदैकैकस्य त्रय आदेशाः । अथ नानुवर्तते, द्वावेवादेशौ विधीयेते । तदाऽगस्त्यादेशेन सर्वत्र भाव्यमिति 'आगस्तीयाश्छात्राः' इति न सिध्यति, अवृद्धत्वात् प्रकृतेः । 'प्रत्ययस्य' इति तूच्यमाने गोत्रेऽलुगचीति लुकि प्रतिषिद्धे संनियोगशिष्टत्वात् लुगभावादगस्त्यादेशाभावादागस्तीया इति सिध्यतीति षष्ठीनिर्देशार्थं प्रत्ययग्रहणम् ॥ भाष्यकारस्तु तदर्थं वाशब्दं व्याचक्षाणः षष्ठीनिर्देशार्थत्वं नेच्छति । स ह्येवं मन्यते—आगस्त्यकौण्डिन्ययोरित्यत्र यस्कादिभ्यो गोत्र इत्यतो गोत्रग्रहणमनुवर्तते, लुगिति च । तेनागस्त्यकौण्डिन्ययोर्यो गोत्रे विहितस्तस्य लुक् । परिशिष्टस्य तु प्रकृतिभागस्य यथासंख्यमगस्तिकुण्डिनचावादेशाविति सूत्रार्थः ॥ अथक्रियमाणेऽपीति । अलोऽन्त्यस्येति वचनात् प्रत्ययस्य योऽन्त्यस्तस्यैव प्राप्नुवन्तीति भावः ॥ वचनप्रामाण्यादिति । प्रत्ययस्येति वचनसामर्थ्यादलोऽन्त्यस्येति बाध्यते । वचनप्रामाण्यादिति ब्रुवतो वार्तिककारस्यापि षष्ठीनिर्देशार्थत्वमनवस्थितम् । तदर्थत्वे हि प्रत्ययस्येत्यस्य चरितार्थत्वात्कथमलोऽन्त्यविधिर्बाध्यते ॥

( उद्द्योतः ) वार्तिककृदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति—आगस्त्येति ॥ त्रय इति । एवं च वैषम्याद्यथासङ्ख्याप्राप्तेरगस्तयोऽपि कुण्डिनाः, कुण्डिनाश्चागस्तयः स्युः, लुक्च ज्ञापकात्सर्वादेश इति विभक्तिमात्रं श्रूयेतेति भावः ॥ द्वावेवेति । तेन नोक्तापत्तिरिति भावः ॥ सर्वत्रेति । अजादिप्राग्दीव्यतीयविषयेऽपीति भावः ॥ अवृद्धत्वादिति । यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिध्यति, तथाप्यवृद्धत्वात्प्रकृतेः छस्य वृद्ध्यनिमित्तत्वाच्च आकारश्रवणं न स्यादिति भावः ॥ संनियोगशिष्टत्वादगस्त्यादेशाभावे प्रतिषेधप्रयुक्तलुगभावो हेतुः ॥ गोत्रे विहित इति । नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहणम्, न त्वनन्तरापत्यप्रत्ययान्तस्येत्येतदर्थं तदनुवृत्तिः स्यात् । शिवादिभ्य इत्यत्रैव गोत्र इति निवृत्ते ऋष्यणसाधारणः अगस्त्यप्रकृतिप्रकृतिकऋष्यणन्त एवात्रागस्त्यः, न त्वगस्तिप्रकृतिकग-

१ आधिक्यादाह—जनपदेति ॥ छाया ॥

२ प्रदीपे आह—शोभना इति ॥ एवं च लक्षणया परसप्तम्यामपि न दोषः ॥ छाया ॥

३ अत एव–प्रकृतत्वस्यानुवृत्तिसाधकत्वादेव ॥ एवं भाष्ये तद्धेतुगर्भं विशेषणमिति भावः ॥ छाया ॥

४ वचनं न सूत्रम् । तस्य संज्ञाविधानेन सफलत्वादित्यतो वचनप्रामाण्यादित्यस्यैवार्थो भाष्ये 'प्रत्ययग्रहणसामर्थ्यात्' इति सूचयन्नाह—प्रत्ययस्येतीति ॥ छाया ॥

५ एवं च–तदनुवृत्तौ च ॥ ज्ञापकादिति । वक्ष्यमाणेत्यादिः ॥ छाया ॥

६ न सिध्यतीत्यस्य छो न सिध्यतीति नार्थ इत्याह—यद्यपीति ॥ छाया ॥

७ विपरीतपाठादाह—संनीति ॥ छाया ॥

८ स्यादिति । एवं च कथं तत उक्तार्थलाभ इति भावः ॥ छाया ॥

९ 'निवृत्तेः' इति घ. प. पाठः ॥

१० अत्र–आगस्त्येति सूत्रे ॥ छाया ॥

र्गादियञन्तः, यञञोश्चेति लुका सिद्धत्वादिति चेन्न । कौण्डिन्यसाहचर्येणागस्त्यस्यापि गोत्रप्रत्ययान्तस्यैव ग्रहणात् । भाष्यमते **गोत्रसंज्ञासूत्रपर्यन्तं** गोत्राधिकारेण ऋष्यणन्तस्यापि तत्त्वाच ॥ वस्तुतो वार्तिककारस्यापीत्थमेव संमतमित्याह—**प्रत्ययस्येति वचनेति** ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् ॥ आचार्यप्रवृत्तिर्ज्ञापयति—लुकश्लुलुपः सर्वादेशा भवन्तीति । यदयं—"लुग्वा दुहदिहलिहगुहात्मनेपदे दन्त्ये" इति लोपे प्रकृते लुकं शास्ति ॥**

( प्रदीपः ) **यदयमिति** । विपर्ययस्तु न प्रकल्प्यते । अनुपसंजातविरोधत्वाल्लोपस्तावदन्त्यादेशः स्थितः, ततो लुगारभ्यमाणो यद्यन्त्यस्य स्याल्लोपानुवृत्त्यैव सिद्धत्वाल्लुकं न विदध्यात्॥ विहितस्तु सर्वादेशत्वस्य ज्ञापकः संपद्यते ॥

( उद्द्योतः ) सामर्थ्याल्लोपस्यैव सर्वादेशत्वं कुतो न कल्प्यत इत्यत आह—**विपर्यय इति** । न उपसंजातो विरोधो वैयर्थ्यशङ्कोद्भवो यस्य तत्त्वादित्यर्थः ॥

( ३०८ प्रयोजनवार्तिकम् ॥ ४ ॥ )

॥ * ॥ **उत्तरार्थं तु** ॥ * ॥

( भाष्यम् )

**उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् ॥**

( प्रयोजनबाधकभाष्यम् )

**क्रियते तत्रैव—"प्रत्ययलोपे प्रत्ययलक्षणम्" इति ॥**

( प्रयोजनसाधकभाष्यम् )

**द्वितीयं कर्तव्यम् । कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात्, एकदेशलोपे मा भूदिति 'आघ्नीत' 'सं रायस्पोषेण ग्मीय' इति ॥ प्रत्ययस्य० ॥ ६१ ॥**

( प्रदीपः ) **द्वितीयमिति** । लोपविशेषणापेक्षया द्वितीयं, पाठापेक्षया तु तृतीयं भवति ॥ **एकदेशलोप इति** । अवयवक्रिया समुदायेऽपि व्यपदिश्यते—यथा पटो दग्ध इति । अवयवे हि पटाख्योऽवयवी समवेत इति तस्याप्यसौ दाहः । न त्वयं गौणो व्यपदेशः । गौणत्वे हि सति मुख्यस्यैव संप्रत्ययान्न कर्तव्यमेव प्रत्ययग्रहणं स्यात् ॥ **आघ्नीतेति** । परत्वादुपधालोपे कृते पुनःप्रसङ्गविज्ञानादनुनासिकलोपः स्यात् ॥ ६१ ॥

( उद्द्योतः ) **न त्वयमिति** । **अयम्**—अवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न, किंतु मुख्य एव; अवयवलोपे समुदायस्यापि लोपादित्यर्थः ॥ **अनुनासिकेति । अनुदात्तोपदेशेत्यनेन ॥ आघ्नीत**–इत्यत्र **आङो यमहन** इत्यात्मनेपदैकवचनम् ॥ **संग्मीयेति** । गमेर्विधिलिङि **समो गम्यृच्छी**त्यात्मनेपदे इटि शपो **बहुलं छन्दसी**ति लुकि लिङः सलोपे इटोऽति उपधालोपे रूपम् । तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोपः स्यात् । इदं च प्रयोजनं 'अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रम्' इति वार्तिकमते बोध्यम् ॥ ६१ ॥

—⟶•⟵—

( ५७ प्रत्ययलक्षणातिदेशसूत्रम् ॥ १ । १ । ९ आ. ३ )

## प्रत्ययलोपे प्रत्ययलक्षणम् ॥ १।१।६२ ॥

( प्रथमप्रत्ययग्रहणप्रयोजनम् )

( आक्षेपभाष्यम् )

**प्रत्ययग्रहणं किमर्थम् ?**

( प्रदीपः ) **प्रत्यय०** ॥ ६२ ॥ **प्रत्ययग्रहणमिति** । प्रत्ययनिमित्तं कार्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञास्यत इति भावः ॥

( उद्द्योतः ) **प्रत्ययलोपे०** ॥ ६२ ॥ लक्षणशब्दार्थमाह—**निमित्तमिति** ॥ **कार्यमिति** । बहुव्रीहिलभ्यम् ॥ **प्रत्यासत्त्येति** । क्रियमाणेऽपि प्रत्ययग्रहणेऽन्यप्रत्ययलोपेऽन्यप्रत्ययनिमित्तकार्यवारणाय प्रत्यासत्तिराश्रयणीयेति भावः ॥

( समाधानभाष्यम् )

**"लोपे प्रत्ययलक्षणम्" इतीयत्युच्यमाने—सौरथी वैहतीति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत ॥**

( प्रदीपः ) **सौरथीति** । प्रत्ययस्य लक्षणं=दर्शनं=प्रादुर्भाव इत्यर्थं परिकल्प्यैतदुच्यते । सुरथस्य विहतस्य चापत्यं गोत्रं स्त्रीति अत इञि कृते मकारनकारयोर्भावे यथा गुरूपोत्तमत्वात् ष्यङ् भवति, एवं लोपेऽपि स्यात् । प्रत्ययग्रहणे तु सति विरुद्धत्वान्नायमर्थो भवति—प्रत्ययलोपे तस्यैव पुनः प्रादुर्भाव इति ॥ एवं हि लोपविधानमनर्थकं स्यात् । तस्मात्—प्रत्ययनिमित्तं कार्यं प्रत्ययलोपे भवतीति वाक्यार्थ आश्रीयते ॥

( उद्द्योतः ) ननु प्रत्ययलक्षणमित्यस्य बहुव्रीहितयाऽनेन स्थान्यभावेऽप्राप्तकार्यप्रापणायातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्यातिदेशेनात आह—**प्रत्ययस्य लक्षणमिति** । यस्य लोपस्तस्मिन्सति यः प्रत्ययो भवति, तस्य तल्लोपेऽपि प्रादुर्भाव इत्यर्थः ॥ लाघवात्षष्ठीतत्पुरुष एव स्यादिति तात्पर्यम् ॥ **रमेः** क्थनि हन्तेश्च क्ते **अनुदात्ते**त्यनुनासिकलोपेऽगुरूपोत्तमत्वादप्राप्तः ष्यङिति-

१ **लोपे**—घोर्लोपो लेटि वेत्यतः ॥

२ गौणमुख्यपरिभाषयेति भावः । ( र. ना. )

३ **तत्र**—उभयत्र ॥ **मते इति** । तेन सिद्धान्ते व्यर्थमेवेति भावः ॥ छाया ॥

४ **अत्र**—सौरथीत्यादौ ॥ छाया ॥

५ **तस्य**—प्रत्ययस्य ॥ छाया ॥

६ **लाघवादिति** । भावसाधनप्रादुर्भावार्थकेन लक्षणशब्देन ॥ छाया ॥

७ अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया वर्तिपदार्थप्रधानत्वरूपं लाघवं षष्ठीतत्पुरुषे इति भावः । ( र. ना. )

देशतः स्यादित्यर्थः ॥ एवं हि लोपेति । ननु णेरनिटीत्यादि-सामर्थ्यात् मा भूत्तत्र प्रवृत्तिः । यस्तु सामान्येन लोपो णाविष्ठ-वदिति, सोऽप्रत्ययविषये चरितार्थ इति भिक्षुमाचष्टे भिक्षयतीत्यत्र पुनः प्रादुर्भावार्थमिदं स्यादिति चेन्न । एवं हि तत्रैव **प्रत्ययस्य न लोप** इति वदेत् । एवं च गुरुतरन्यासो ज्ञापक इति बोध्यम् ॥

( समाधाननिराकरणभाष्यम् )

**नैष दोषः । नैवं विज्ञायते—लोपे प्रत्ययलक्षणं भवति=प्रत्ययस्य प्रादुर्भाव इति ॥**

**कथं तर्हि ?**

**प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवति—इति ॥**

( प्रदीपः ) **नैवमिति** । संदेहेऽपि व्याख्यानात्करणसाधनो लक्षणशब्द आश्रयिष्यते । अन्यथा क्रियमाणेऽपि प्रत्ययग्रहणे भावसाधनाशङ्का न निवर्तते—प्रत्ययलोपे प्रत्ययान्तरस्य प्रादुर्भाव इति । यथा[१]—ग्रामणीरिति क्विलोपे स्वाद्युत्पत्तिः । ततश्चाधोगित्यत्र पदसंज्ञा न स्यादिति करणसाधनत्वे व्याख्यानमेव शरणमिति भावः । लक्षणशब्दोपादानसामर्थ्याद्वा करणसाधनो लक्षणशब्दः । अन्यथा **'लोपे प्रत्ययः'** इत्येवं वक्तव्यं स्यात् ॥

( उद्योतः ) **अन्यथा**—व्याख्यानस्य शरणत्वाभावे ॥ **पदसंज्ञा न स्यादिति** । तिङन्तत्वाभावादिति भावः ॥ **लोपे प्रत्यय इति** । अस्य प्रादुर्भवतीति शेषः ॥

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणेन यथा स्यात्, लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणेन मा भूदिति ॥**

**किं प्रयोजनम् ?**

**ग्रामणिकुलं, सेनानिकुलम् । औत्तरपदिके ह्रस्वत्वे कृते "ह्रस्वस्य पिति कृति तुक्" इति तुक् प्राप्नोति, स मा भूदिति ॥**

( प्रदीपः ) **सति प्रत्यय इति** । प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते । तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपेऽपि भवति । न च ग्रामणीरित्यत्र क्विपि सति तुक् दृष्टः, ह्रस्वाभावात् । कृते क्विलोपे ह्रस्वत्वे च तुक्प्राप्तिः ॥

( उद्योतः ) ननु 'प्रत्ययलोपे' इत्युक्ते कथं 'सति प्रत्यये' इति लभ्यतेऽत आह—**प्रत्ययशब्द इति** ॥ **यत्कार्यमिति** । प्रत्ययलक्षणं[२] यत्कार्यं दृष्टमित्यर्थः ॥

( प्रयोजननिराकरणभाष्यम् )

**यदि तर्हि-यत्सति प्रत्यये प्राप्नोति, तत्प्रत्ययलक्षणेन भवति । लोपोत्तरकालं यत् प्राप्नोति, तन्न भवति । जगत्-जनगत्-इत्यत्र तुक् न प्राप्नोति लोपोत्तरकालं ह्यत्र तुगागमः । तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन ॥**

( प्रदीपः ) **जगदिति** । **द्युतिगमिजुहोत्यादीनां द्वे चेति** गमेः क्विप् । अत्रान्तरङ्गत्वात्पूर्वं विलोपः । **गमः क्वावि**त्ययं हि लोपोऽङ्गविशेषापेक्षत्वाद्बहिरङ्गः । भिन्नविषयत्वाच्च **येन नाप्राप्त** इति न्यायो न भवति । सति त्वस्मिन्न्याये नैव विलोपः स्यात् । तस्मात्सति क्विपि नाऽत्र तुकः प्राप्तिः, अपि तु विलोपे कृते ॥

( उद्योतः ) ननु जगदित्यादौ विलोपात्परत्वात्पूर्वं **गमःक्वा**वित्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तेराह—**अत्रेति** ॥ **भिन्नविषयत्वादिति** । वार्तिकमते एतत् । अचिरादेशे नुडपवादत्वपरभाष्यरीत्या विषयभेदेऽपि तत्त्वे तु लोपेनानुत्पत्तेरेवान्वाख्यानेनापवादत्वं नेति बोध्यम् ॥ वैयात्यान्न्यायाङ्गीकारे[३] दोषमाह—**सति त्विति** ॥

( आक्षेपभाष्यम् )

**कस्मान्न भवति—ग्रामणिकुलं, सेनानिकुलम् ?**

( समाधानभाष्यम् )

**बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक् । "असिद्धं बहिरङ्गमन्तरङ्गे" ॥**

( प्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात्, एकदेशलोपे मा भूदिति । 'आघ्नीत' 'सं रायस्पोषेण ग्मीय'—इति ॥**

( आक्षेपभाष्यम् )

**पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम् ॥**

( समाधानभाष्यम् )

**अन्यतरच्छक्यमकर्तुम् ॥**

( प्रदीपः ) **अन्यतरदिति** । एकमेव प्रत्ययग्रहणं सामर्थ्यात् कृत्स्नप्रत्ययलोपप्रतिपादने समर्थम् ॥

( उद्योतः ) **एकमेवेति** । अवयवस्य प्रत्ययत्वपर्याप्त्यधिकरणत्वाभावादिति भावः । एवञ्चानयोः[४] फलान्तराभिनिवेशो भाष्यविरुद्ध इति बोध्यम् ॥

( द्वितीयप्रत्ययग्रहणप्रयोजनम् )

( आक्षेपभाष्यम् )

**अथ द्वितीयं प्रत्ययग्रहणं किमर्थम् ?**

---

१ कुत्रेदं दृष्टमत आह—**यथेति** ॥ छाया ॥

२ कार्यपदाभावादाह—**प्रत्ययेति** ॥ छाया ॥

३ नन्वेवं कथं **सति त्विति**ग्रन्थोऽत आह—**वैयात्यादिति** । विरुद्धत्वादित्यर्थः ॥ छाया ॥

४ प्राचोक्तं खण्डयति—**एवं चेति** । तथा भाष्योक्तौ च ॥ छाया ॥

( समाधानभाष्यम् )

**प्रत्ययलक्षणं यथा स्यात्, वर्णलक्षणं मा भूदिति। गवे हितं—गोहितम्, रायः कुलं—रैकुलमिति ॥**

**( प्रदीपः ) वर्णलक्षणमिति** । 'प्रत्ययलोपे तल्लक्षणं' इत्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययस्वरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत्सर्वं स्यात्, सर्वनाम्नो वस्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति, न वर्णरूपतानिमित्तम् ॥ **रैकुलमिति ।** अवयवद्वारेणात्र प्रत्ययस्याप्यायादेशं प्रति निमित्तत्वमस्त्येव । प्रत्ययाश्रयस्त्वायादेशो न भवति-इति न प्रवर्तते । अनेनैव न्यायेन **न धातुलोप आर्धधातुक** इति धिन्विकृण्व्योर्विचि **लोपो व्योर्वली**ति वलोपस्य वल्निमित्तत्वादार्धधातुकनिमित्तत्वाभावाद्गुणनिषेधो न भवति । तेन-'सुधे' 'सुकर्' इति, न तु सुधी सुधिनौ सुकीरिति ॥

**( उद्द्योतः )** ननु द्वितीयप्रत्ययग्रहणाभावे बहुव्रीह्यलाभात्तल्लभ्यकार्यातिदेशो न सिध्येदत आह—**तल्लक्षणमिति** ॥ **वस्तुमात्रेति** । प्रत्ययमात्रेत्यर्थः ॥ **प्रत्ययनिमित्तमेवेति** । प्रत्ययत्वेन प्रत्ययनिमित्तमित्यर्थः ॥ **न वर्णेति** । प्राधान्येन वर्णनिमित्तमित्यर्थः ॥ ननु रैकुलमित्यत्रायादेशो न प्रत्ययाश्रयः, किंतु तदवयवाश्रयोऽत आह—**अवयवद्वारेणेति** ॥ केचित्तु **प्रत्ययग्रहणमित्यस्य** द्वितीयप्रत्ययपदघटितं प्रत्ययलक्षणग्रहणमित्यर्थः ॥ **प्रत्ययलोपे**ऽपीत्येव सूत्रं कार्यम् । अस्य 'तद्भवति यत् प्रत्यये सति'इति शेषः । स्थानिवदित्यनुवृत्तिर्वा ॥ **प्रत्ययलक्षणमिति** । प्रत्ययत्व-तद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणमित्यर्थः ॥ **वर्णलक्षणं**-वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तम् ॥ प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेऽपि स्यादिति भावः ॥ कैयटव्याख्या तु चिन्त्या । प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्यायुक्तत्वापत्तेरित्याहुः ॥ **अनेनैवेति** । अत्र प्रत्ययग्रहणसामर्थ्यात्तथाऽर्थलाभेऽपि तत्र तादृशार्थग्रहे न मानम् ॥ **आर्धधातुक** इत्यस्य कैयटरीत्या तोतोर्तीत्यादिव्यावृत्त्या चरितार्थत्वात् ॥ **पूर्वसूत्रे आर्धधातुकग्रहणमनवकाशमिति क्ङिति चेति** सूत्रस्थभाष्यविरोधाच्च । आवृत्त्यादिना तथाऽर्थकल्पने तु न मानम् ॥ किंच तथाऽर्थकल्पने **यङ्यक्क्यवलोपे** इति वार्तिकं तदुदाहरणपरं **जीरदानु**रिति भाष्यं चासङ्गतं स्यादिति चिन्त्यमेतत् ॥ **सुधे इत्यादि** । धिविकृण्व्योर्नुमि विचि वलोपेऽपृक्तलोपे गुणे सुना समासे सौ हल्ङ्यादिलोपनलोपयोरिमे रूपे ॥ गुणनिषेधे तु सुधिन्शब्दे **इन्हन्निति** दीर्घः । सुकृणः **सर्वनामस्थाने चेति** दीर्घ **उपधाया**श्चेतीत्त्वे रपरत्वे सुनलोपयोर्वोरिति दीर्घः स्यादिति भावः ॥

---

( सूत्रप्रणयने युक्तिप्रदर्शनम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ?**

**( प्रदीपः ) किमर्थमिति** । स्थानिवद्भावेन सिद्धमिति भावः ॥

**( उद्द्योतः ) स्थानिवद्भावेनेति** । वर्णाश्रयस्य तत्राप्यनिष्टत्वादित्यर्थः ॥

( ३७९ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य ॥ * ॥**

( भाष्यम् )

**"प्रत्ययलोपे प्रत्ययलक्षणम्" इत्युच्यते 'सदन्वाख्यानाच्छास्त्रस्य' । सत् शास्त्रेणान्वाख्यायते, सतो वा शास्त्रमन्वाख्यायकं भवति । सदन्वाख्या-**

---

१ **प्रत्ययाश्रयः**-प्रत्ययत्वेन प्रत्ययाश्रयः ॥ छाया ॥ 'तेन सुधे सुधेनौ सुधेनः । सुकः सुकर्णौ सुकर्ण इत्यादि भवति' इति शब्दकौ० ॥

२ अनतिप्रसङ्गायाह—**प्रत्ययमात्रेति** ॥ छाया ॥

३ वार्तिकमते विशेषणतया तदाश्रयणे प्रवृत्तेरिष्टत्वादाह—**प्राधान्येति** ॥ सिद्धान्ते तु किमपि वर्णनिमित्तं न भवतीति बोध्यम् ॥ अत्र तु भाष्योदाहरणबलात्तथैव लभ्यत इति तथोक्तम् ॥ छाया ॥

४ **किंत्विति** । एवं च तत्र नैवातिप्रसङ्ग इति भावः ॥ छाया ॥

५ अन्यथा भाष्याशयमाह—**केचित्त्विति** । क्लेशोऽत्रारुचिबीजम् ॥ सूत्रनिरासायाह—**प्रत्ययेति** ॥ छाया ॥

६ **तद्व्याप्येति** । सुप्त्वादीत्यर्थः ॥ अत्र सामान्यनिमित्तकस्याभावादाह—**वर्णत्वव्याप्येति** ॥ छाया ॥

७ सामान्यतः पर्यायत्वस्य श्लोकस्यासांगत्यादाह—**प्रकृत इति** ॥ छाया ॥

८ **अनेनैवेतीति** । बहुव्रीहिणैवार्धधातुकलाभे पुनस्तच्छ्रुतिसामर्थ्यात्तत्त्वेन निमित्तत्वावगमेनेत्यर्थः ॥ इदं खण्डयति वैषम्यादिना—**अत्रेति** ॥ **कैयटेति** । भाषायामपि तेन यङ्लुकः स्वीकारात्तद्रीत्येत्यर्थः ॥ एवं च मिथोविरोधस्तस्य ॥ छाया ॥

९ ननु सिद्धान्ते तस्य छान्दसत्वम्, भाषायां तु काचित्कः प्रयोग इति तदचारितार्थ्यमेवात आह—**पूर्वेति** ॥ छाया ॥

१० नन्वार्धधातुकग्रहणमावर्त्य सामर्थ्यं कल्प्यमिति तदाशयोऽत आह—**आवृत्त्येति** । आदिनैकशेषः ॥ छाया ॥

११ दोषान्तरमाह—**किं चेति** ॥ **तदुदेति** । वलोपोदेत्यर्थः ॥ **भाष्यं च-न धात्विति** सूत्रस्थम् ॥ छाया ॥

१२ कैयटरीत्याह—**धिवीति** ॥ **गुण इति** । उक्तरीत्या निषेधाप्रवृत्तेरिति भावः ॥ **इन्निति** । तदनुवृत्त्या **सौ** चेतीत्यर्थः ॥ तथा च सुधी सुधिनौ सुधिन इत्यादिरूपाणि ॥ **दीर्घ इति** । तथा च सुकीः सुकीर्णौ सुकीर्ण इत्यादिरूपाणि ॥ इदमपि विचि । कौ तु ऊठा वलोपबाधः । तेन सुधिन्वः सुधिन्वौ सुधिन्वः सुकृणूः सुकृण्वौ सुकृण्व इत्यादि रूपाणि बोध्यानि ॥ न च क्ङितीति भाष्योक्त्या विजादिरेव नेष्टः, तत्त्वेनानिमित्ततात्कल्पनयैव तदुपपत्तौ तदभावकल्पने मानाभावात् ॥ छाया ॥

१३ सूत्रमेव किमर्थमित्याक्षिप्यते । ( र. ना. )

१४ **तत्रापि**-एतत्सूत्रकृतोऽपि सिद्धान्ते ॥ छाया ॥

नाच्छास्त्रस्य "उगिदचां सर्वनामस्थानेऽधातोः" इतीहैव स्यात्—गोमन्तौ, यवमन्तौ । गोमान्, यवमानित्यत्र न स्यात् । इष्यते च स्यादिति । तच्चान्तरेण यत्नं न सिध्यति । अतः प्रत्ययलोपे प्रत्ययलक्षणवचनम् । एवमर्थमिदमुच्यते ॥

( प्रदीपः ) **सदन्वाख्यानादिति** । शास्त्रं कर्तृ करणं वा शेषत्वेन विवक्षितमिति षष्ठी कृता ॥ **सत् शास्त्रेणेति** । शास्त्रेण करणेनाचार्यः - स्मर्ता सत् - विद्यमानं वस्तु निमित्तत्वेनान्वाचष्टे ॥ **सतो वेति** । शास्त्रस्यैवाविच्छेदेन प्रवर्तमानस्य स्वतन्त्रत्वमन्वाख्याने - इति पूर्वस्माद्व्याख्यानादस्य विशेषः ॥ न च स्थानिवद्भावेन सिध्यति । अतृणेडित्यादावल्विधित्वात् ॥

( उद्द्योतः ) ननु शास्त्रस्य कर्तृत्वे सतः कर्मत्वे**नोभयप्राप्ता**विति[1] नियमाच्छास्त्रस्य - इति षष्ठ्यनुपपन्ना, **कर्मणि चे**ति समासनिषेधापत्तिश्च । करणत्वे तु षष्ठ्यनुपपन्नेत्यत आह—**शास्त्रमिति** । शेषत्वे चो**भयप्राप्ता**वित्यस्याप्राप्तेः षष्ठीसमासौ नानुपपन्नौ - इति भावः ॥ **आचार्यः स्मर्ता** इति फलितार्थकथनम् ॥ स्मर्त्राचार्येणेति[2] तु 'अन्वाख्यायते'इत्यन्वययोग्यम् ॥ **स्वतन्त्रत्वमिति** । करणस्य कर्तृत्वविवक्षेति भावः ॥ **अल्विधित्वादिति** । इमादेरिति शेषः । **वर्णाश्रये**ति[3] तु वर्णप्राधान्यविषयकम् । एवं चे[4]प्राधान्येनालाश्रयणे विध्यर्थं सूत्रमिति भावः ॥

( आक्षेपभाष्यम् )

अस्ति प्रयोजनमेतत् ॥

( उद्द्योतः ) भाष्ये—**अस्तिप्रयोजनमेतदिति** । उक्त[5]प्रयोजनविशिष्टं सूत्रं निर्दोषं वा - इति काका प्रश्न इति बोध्यम् ॥

( समाधानभाष्यम् )

किं तर्हीति ?

( उद्द्योतः ) **किं तर्हीति** । मम तु निर्दोषमेव, तव कश्चिद्दोषप्रतिभासोऽस्ति चेद्वद - इति प्रश्नगर्भमुत्तरम् ॥

---

( लुकि प्रत्ययलक्षणसाधनम् )

( ३८० आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ **लुक्युपसंख्यानम्**[6] ॥ * ॥

( भाष्यम् )

लुकि उपसंख्यानं कर्तव्यम् । पञ्च, सप्त ॥

( प्रत्याक्षेपभाष्यम् )

किं पुनः कारणं न सिध्यति ?

( ३८१ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ **लोपे हि विधानम्** ॥ * ॥

( भाष्यम् )

लोपे हि प्रत्ययलक्षणं विधीयते । तेन लुकि न प्राप्नोति ॥

( प्रदीपः ) **लुक्युपसंख्यानमिति** । तक्रकौण्डिन्यन्यायेन लोपसंज्ञाया लुगादिसंज्ञाभिर्बाधनादिति भावः ॥ लुग्रहणस्योपलक्षणार्थत्वात् श्लुलुपावपि गृह्येते ॥

( उद्द्योतः ) **बाधनादिति** । एवं[7] च 'पञ्च' इत्यादौ पदत्वं न स्यादिति भावः ॥ **उपलक्षणार्थत्वादिति** । तयोरपि पूर्वपक्षबीजस्य समत्वादिति भावः ॥ तत्र[8] श्लुलुपोः प्रत्ययलक्षणस्य फलं चिन्त्यम्, लुकि तु पञ्चेत्यादौ पदत्वं फलमस्ति ॥

( ३८२ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ **न वाऽदर्शनस्य लोपसंज्ञित्वात्** ॥ * ॥

( भाष्यम् )

न वा कर्तव्यम् ॥

किं कारणम् ?

'अदर्शनस्य लोपसंज्ञित्वात्' । अदर्शनं लोपसंज्ञं भवतीत्युच्यते । लुमत्संज्ञाश्चाप्यदर्शनस्य क्रियन्ते । तेन लुक्यपि भविष्यति ॥

( प्रदीपः ) **न वाऽदर्शनस्येति** । अदर्शनमात्रस्य लोपसंज्ञा विधीयमाना लुगादिसंज्ञाविषयमप्यवगाहते । न च संज्ञानां बाध्यबाधकभावः, समावेशदर्शनात्तासामिति **आकडारसूत्रे**[9] वक्ष्यते । लोपस्य संज्ञि—लोपसंज्ञि, तस्य भावो लोपसंज्ञित्वं, तस्मादित्यर्थः ॥

( उद्द्योतः ) **समावेशदर्शनादिति** । कृत्कृत्यादिष्विति भावः ॥ लोपः संज्ञा यस्येति बहुव्रीहौ मत्वर्थीयानुपपत्तिः, त्वान्तेन षष्ठीसमासेऽर्थासङ्गतिः, अत इन्नन्तेन षष्ठीसमास इत्याह- **लोपस्येति** ॥

---

( सांकर्यपरिहारः )

( संगतिभाष्यम् )

यद्येवम्—

---

१ इति—इत्यादि ॥ छाया ॥

२ शाब्दमाह—**स्मर्त्रेति** ॥ छाया ॥

३ ननु तत्रेदमपि वचनान्नेष्टमत आह—**वर्णेति** ॥ छाया ॥

४ कैयटतात्पर्यमाह—**एवं चेति** । तस्य तद्विषयकत्वे चेत्यर्थः ॥ छाया ॥

५ **उक्तेति** । इमादिसिद्धिरूपेत्यर्थः ॥ छाया ॥

६ तमेवाह—**लुकीति** ॥ छाया ॥

७ इष्टापत्तावाह—**एवं चेति** । ताभिस्तदभावे चेत्यर्थः ॥ छाया ॥

८ लुग्लोपयोर्न्यायस्तयोरपि तुल्य इति प्रतिपादयितुमेवेदमुक्तम्, न तु तत्र किंचित्प्रत्ययलक्षणफलं विधातुम् । तदाह—**तत्रेति** ॥ तेषां मध्ये इत्यर्थः ॥ **न च** श्वावभावेऽपि लुप्यस्ति फलम्—हरीतकीमाचष्टे हरीतकयति टिलोपस्य प्रातिपदिकायत्तत्त्वम्, अस्य च प्रत्ययान्तत्वम्, तद्धितस्य **हरीतक्यादी**ति लुपा लुप्तत्वात्कृत्तद्धितेत्यपि न, लुपो लोपत्वे प्रत्ययलक्षणेन तत्त्वात्तत्सिद्धिरिति **वाच्यम्** । **लिङ्गविशिष्टे**ति तत्सिद्धेः ॥ छाया ॥

९ 'कडारसूत्रे वक्ष्यामः' इति क. पाठः ॥

( ३८३ सांकर्याक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रत्ययादर्शनं तु लुमत्संज्ञम् ॥ * ॥**

( भाष्यम् )

**प्रत्ययादर्शनं तु लुमत्संज्ञमपि प्राप्नोति ॥**

( प्रदीपः ) **प्रत्ययादर्शनं त्विति** । लुक्श्लुलुप्संज्ञानां संकरः प्राप्नोतीत्यर्थः ॥

( उद्योतः ) **सङ्कर इति** । परस्परं, लोपशब्दभावितप्रत्ययादर्शनविषये लोपसंज्ञया चेत्यर्थः ॥ प्रत्ययादर्शनमात्रं सकललुमत्संज्ञं प्राप्नोतीति भाष्याक्षरार्थः ॥

( आक्षेपभाष्यम् )

**तत्र को दोषः ?**

( ३८४ दोषदर्शनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्र लुकि श्लुविधिप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**तत्र लुकि श्लुविधिरपि प्राप्नोति, स प्रतिषेध्यः । अस्ति-हन्ति "श्लौ" इति द्विर्वचनं प्राप्नोति ॥**

( प्रदीपः ) **तत्र लुकि श्लुविधिरिति** । उपलक्षणं चैतत् । तेन श्लावपि लुग्विधिः प्राप्नोति—जुहोतीति, **उतो वृद्धिर्लुकि हलीति** ॥ लुप्यपि लुग्विधिप्रसङ्गः—हरीतकीति । तथा लुकि लुप्विधिः–लवणः सूप इति, युक्तवद्भावः स्यात् ॥

( उद्योतः ) **उतो वृद्धिरिति** । न च तत्र नाभ्यस्तस्येति वर्तनाददोषः, अत्र पक्षे तदनुवृत्तेर्वक्तुमशक्यत्वात् ॥ **हरीतकीति** । नन्वत्र सत्यपि ङीषो लुकि युक्तवद्भावात् पुनर्ङीष् स्यादिति चेन्न । **लक्ष्ये लक्षणस्येति** न्यायादित्याहुः ॥ **हरीतक्यां हरीतक्यादिभ्यश्चेत्यणो लुप्** । यद्वा हरितकीवेयं प्रतिकृतिरिति कनो लुप् ॥ **लवण इति** । अत्र लवणाल्लुक् ॥

( ३८५ सांकर्यवारणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ न वा पृथक्संज्ञाकरणात् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ?**

**'पृथक्संज्ञाकरणात्' । पृथक्संज्ञाकरणसामर्थ्याल्लुकि श्लुविधिर्न भविष्यति ॥**

( प्रदीपः ) **न वा पृथगिति** । एकयैव संज्ञया प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधानसामर्थ्यात्तद्भावितग्रहणं विज्ञायते । तत्राश्रितस्वरूपव्यापारा वा लुगादय आश्रीयन्ते, आवृत्तिर्वा लुगादिशब्दानामाश्रीयत इति तद्भावितग्रहणं सिध्यति ॥ विधिप्रदेशेषु चेतरेतराश्रयदोषानवतारः, नित्यशब्दाश्रयणाद्भाविसंज्ञाविज्ञानाद्वा ॥

( उद्योतः ) तद्भावितग्रहणे युक्तिमाह—**तत्राश्रितेति** । आश्रितः स्वरूपस्य व्यापारोऽदर्शनविषयो यैस्ते, तथोक्ता इत्यर्थः ॥ 'अदर्शनबोधका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञाः' इत्युक्ते प्रत्यासत्त्या यया संज्ञया यददर्शनं भाव्यते तस्यैव सा संज्ञा - इति लभ्यत इति भावः ॥ प्रत्यासत्तिः सर्वैर्दुर्ज्ञेयेत्यत आह—**आवृत्तिर्वेति** । तेन लुगादिशब्दभावितमदर्शनं क्रमेण तत्तत्संज्ञमित्यर्थः ॥ अदर्शनस्य नित्यत्वेऽपि तद्भावितत्वस्य शास्त्रायत्तत्वादितरेतराश्रयत्वं तदवस्थमेवेत्यत आह—**भाविसंज्ञेति** ॥

( लोपसंज्ञाया व्यापकत्वोपसंहारभाष्यम् )

**तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते ॥**

( सांकर्यसाधकभाष्यम् )

**यथैव तर्हि-अदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते, एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन् ॥**

**तत्र को दोषः ?**

**अगोमती गोमती सम्पन्ना—गोमतीभूता "लुक् तद्धितलुकि" इति ङीपो लुक् प्रसज्येत ॥**

( प्रदीपः ) **यथैवेति** । तिसृणां संज्ञानां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां मा भूत्, लोपसंज्ञाविषये तु ताः प्रवर्तेरन् ॥ **गोमतीभूतेति** । च्वेर्लोपे कृते लुक्संज्ञायां सत्यां **लुक् तद्धितलुकी**ति लुक् प्राप्नोति । पुंवद्भावस्त्वत्र न भवति, वैयधिकरण्यात् । महद्भूता ब्राह्मणीत्यत्र तु भवति, सामानाधिकरण्यात् । नित्यत्वाद्धि शब्दानां क्वचिद्विकारस्य जनिकर्तृत्वं, क्वचित्प्रकृतेः ॥

( उद्योतः ) तद्भावितग्रहणपक्षे **यथैवे**त्यादिग्रन्थोऽनुपपन्न इत्यत आह—**तिसृणामिति** । इतरेतराश्रयपरिहाराय भाविसंज्ञाविज्ञानगौरवापत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितः, न तु तद्भावितपक्षाश्रयेणेत्यभिमानः ॥ **वैयधिकरण्यादिति** । भवनक्रियायां प्रकृतेः कर्तृत्वादिति भावः ॥ **क्वचिद्विकारस्येति** । वस्तुतो

१ न्यूनतां निराचष्टे—**लोपेति** ॥ छाया ॥

२ ननु कथमस्य भाष्याल्लाभोऽत आह—**प्रत्ययेति** ॥ **मात्रं** कार्त्स्न्ये ॥ छाया ॥ 'सकलं लुमत्संज्ञं' इति च. पाठः ॥

३ 'तकीति लुक्तद्धितलुकीति' इति क. पाठः ॥

४ सर्वत्रैव लुकि श्लुविधिसत्त्वेनाभ्यस्तसत्त्वादिति भावः । (र.ना.)

५ **आहुः** । लक्ष्यभेदोऽत्रेत्यरुचिबीजम् ॥ छाया ॥

६ **तत्र**–सूत्रे ॥ छाया ॥

७ **युक्ति**–प्रकारम् ॥ छाया ॥

८ प्रागुक्तमभिमसंगत्यर्थमुपसंहरति—**तस्मादिति** । ततश्चोपसंख्यानं कार्यमिति भावः ॥ छाया ॥

९ अस्याशयमाह—**इतरेतरेति** । तत्पक्ष इत्यादि ॥ छाया ॥

१० **प्रतिपादितः**–भगवता ॥ प्रकारं विना तदलाभादाह—**अभिमान इति** ॥ छाया ॥

११ कैयटादिकं दूषयति—**वस्तुत इति** ॥ उभयेष्टत्वादाह—**वृत्ताविति** ॥ **वाक्ये**–तदन्यत्र ॥ **अत एव**–तया तद्वृत्तित्वादेव ॥ छाया ॥

वृत्तौ तद्वाक्ये च सर्वत्र प्रकृतेरेव कर्तृत्वम् । विकृतिशब्दस्यापि गौण्या प्रकृतिप्रवृत्तित्वात्सामानाधिकरण्यम् । अत एव गौणत्वान्महच्छब्दे आत्वाभावः । गोमतीशब्दे तु गोमतीनदीभिन्ना गोमतीनदीभूतेत्यर्थेनाभाषितपुंस्कत्वात् पुंवत्त्वाभाव इति बोध्यम् ॥

( सांकर्यबाधकभाष्यम् )

**ननु चात्रापि *न वा पृथक्संज्ञाकरणात्* इत्येव सिद्धम् ॥**

( प्रदीपः ) **ननु चात्रापीति** । लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थः ॥

( आक्षेपभाष्यम् )

**यथैवं तर्हि—पृथक्संज्ञाकरणसामर्थ्यात् लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते, एवं लोपसंज्ञाऽपि लुमत्संज्ञा नावगाहेत । तत्र स एव दोषः—*लुक्युपसंख्यानम्* इति ॥**

( उद्योतः ) भाष्ये—**एवं लोपेति** । लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानस्य चोद्यमेतत् ॥

( समाधानभाष्यम् )

**अस्त्यन्यल्लोपसंज्ञायाः पृथक्संज्ञाकरणे प्रयोजनम् ॥**

**किम् ?**

**लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे मा भूदिति ॥**

( प्रदीपः ) **अस्त्यन्यदिति** । प्रत्ययाप्रत्ययादर्शनस्य लोपसंज्ञा यथा स्यादिति ॥ **लोपमात्रे मा भूदिति** । यथा गोमतीभूतेति च्वेर्लोपे कृते **लुक्तद्धितलुकी**ति न भवति । तस्माल्लोपसंज्ञायां नास्ति तद्भावितग्रहणम् ॥

( उद्योतः ) अत्र सामर्थ्यात्तद्भावितग्रहणेऽपि लोपसंज्ञायां तद्ग्रहणे मानाभावः । न च लुगादिभ्यो लोपसंज्ञायाः पृथक्करणं मानम्, तस्याः प्रयोजनान्तरसत्त्वादित्याह—**अस्त्यन्यदिति** ॥ तद्दर्शयति—**तल्लोपमात्र इति**-भाष्ये ॥ स्वयं प्रयोजनान्तरमप्याह—**प्रत्ययाप्रत्ययेति** ॥

( समाधानान्तरभाष्यवार्तिकम् )

***॥ लुमति प्रतिषेधाद्वा ॥***

( भाष्यम् )

**अथवा यदयं—"न लुमताङ्गस्य" इति प्रत्ययलक्षणप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः—भवति लुकि प्रत्ययलक्षणमिति ॥**

( उद्योतः ) भाष्ये—**लुमतिप्रतिषेधाद्वेति** । भवतु लोपसंज्ञायामपि तद्भावितग्रहणं, **न लुमते**ति निषेधेन तत्र लोपत्वनिमित्तकार्यप्रवृत्तिर्ज्ञाप्यत इत्यदोष इति भावः ॥

( इष्टानुपपत्तिपरिहारः )

( ३८६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥*॥ सतो निमित्ताभावात्पदसंज्ञाऽभावः ॥*॥**

( भाष्यम् )

**सन् प्रत्ययो येषां कार्याणां न निमित्तं 'राज्ञः पुरुषः' इति, स लुप्तोऽप्यनिमित्तं स्यात्—राजपुरुष इति ॥**

( प्रदीपः ) **सतो निमित्ताभावादिति** । निमित्तशब्देन निमित्तत्वमुच्यते । तेन यस्य सतः कार्यं प्रति निमित्तत्वं नाभूत्, स लुप्तोऽप्यनिमित्तं स्यादित्यर्थः ॥ **राज्ञ इति** । सति ङसि भसंज्ञायां **स्वादिष्विति** पदसंज्ञा बाधितेति नलोपो नाभूत्, अल्लोपश्चाभूदिति लुप्तेऽपि तस्मिन्नलोपो न स्यात्, अल्लोपश्च स्यात् ॥

( उद्योतः ) **लुक्युपसङ्ख्यान**मिति दोषे परिहृते, दोषान्तरमाशङ्कते—**सतो निमित्तेति** । वार्तिकतद्व्याख्यानयोर्विरोधं परिहरति—**निमित्तशब्देनेति** ॥

( समाधानभाष्यम् )

**अस्तु तस्या अनिमित्तम्—या स्वादौ पदमिति पदसंज्ञा । या तु 'सुबन्तं पदम्' इति पदसंज्ञा सा भविष्यति ॥**

( प्रदीपः ) **अस्तु तस्या इति** । द्वे चात्र पदसंज्ञे । एका **स्वादिष्विति** अवयवस्य, सा च भसंज्ञया बाधिता । द्वितीया सुबन्तत्वेन समुदायस्य, सा च लुप्तेऽपि स्थितैव । अल्लोपस्तु **न लुमताङ्गस्ये**ति प्रतिषेधान्न भवति ॥

( उद्योतः ) नन्वेवं पदत्वेऽपि भत्वस्यापि सत्त्वादल्लोपः स्यादत आह—**अल्लोपस्त्विति** ॥

( आक्षेपसाधकभाष्यम् )

**सत्येतत् प्रत्यय आसीत्—अनया भविष्यत्यनया न भविष्यतीति । लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा तावत एव सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन यजादिपरतेति कृत्वा भसंज्ञा प्राप्नोति ॥**

---

१ सिद्धिमेव सदृष्टान्तामाह—**यथैवेति** ॥ छाया ॥

२ **चोद्यमिति** । एतेन '**लुगादि-**' इति चिन्त्यं व्यर्थासंबद्धोक्तेः, इति रत्नोक्तमपास्तम् ॥ छाया ॥

३ **अत्र**-लुगादिसंज्ञासु ॥ नन्वित्यादिः ॥ छाया ॥

४ **स्वयं**-कैयटः ॥ छाया ॥

५ **भवत्विति** । तुष्यतु दुर्जनन्यायेनेति भावः ॥ **तत्र**-लुगादिसंज्ञासु ॥ **लोपत्वं**-लोपसंज्ञा ॥ छाया ॥

६ **पदसंज्ञाऽभाव इति** । अत्राकारप्रश्लेषः ॥ छाया ॥

७ संगतिमाह—**लुक्युपेति** ॥ छाया ॥

८ **अल्लोपस्त्विति** । तथा च तत्र न भत्वमिति भावः ॥ छाया ॥

९ प्रत्ययलक्षणस्यानिवत्सूत्रयोः स्थाने '**स्थानिसंज्ञान्यभूतस्यानल्विधौ**' इति न्यासान्तरमाश्रयितुं '**सतो निमित्ताभावात्**' इति वार्तिकोक्तमाक्षेपमुपसंहरति—**लुप्त इति** ॥

( प्रदीपः ) **सत्येतदिति** । कालविप्रकर्षप्रतिपादनाया-नद्यतनप्रत्ययप्रयोगः । राज्ञ इत्यत्रावधिभेदाद्भसंज्ञयाऽवयवस्यैव पदसंज्ञा बाध्यते, न समुदायस्य सुबन्तत्वनिमित्ता । लुप्ते तु प्रत्ययेऽवधिभेदाभावात्प्रत्ययलक्षणेन प्राप्तया भसंज्ञया द्वे अपि पदसंज्ञे बाधितव्ये । एकाऽपवादत्वेन, द्वितीया परत्वेनेति भावः ॥ **अनयेति** । पदसंज्ञाद्वयमनेन दर्शितम् । भसंज्ञा प्रत्ययलक्षणेन वर्णाश्रयाऽपि भवति । यथा—अतृणेडितीमागमः ॥

( उद्योतः ) **कालविप्रकर्षेति** । अस्य चोत्तरस्य नायमवसर इत्यर्थः ॥ भाष्ये—एतत्-वक्ष्यमाणवाक्यार्थरूपम् ॥ **पदसंज्ञाद्वयमिति** । अनया पदसंज्ञया नलोपो भविष्यतीत्यादिर्भाष्यार्थः ॥ **यथेति** । वर्णप्राधान्यविषय एव स निषेध इति भावः ॥

( ३८७ आक्षेपान्तरवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति ॥ * ॥**

( भाष्यम् )

**तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते ॥**

**क ?**

**परिवीरिति ॥**

**किं कारणम् ?**

**'एकयोगलक्षणत्वात्' । एकयोगलक्षणे हि तुग्दीर्घत्वे ॥ इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नानि । तान्येतेन प्रत्युत्थाप्यन्ते । अनेनैव तुक् अनेनैव च दीर्घत्वमिति, तदेकयोगलक्षणं भवति । एकयोगलक्षणानि च न प्रकल्पन्ते ॥**

( प्रदीपः ) **तुग्दीर्घत्वयोश्चेति** । अनेनैव प्रत्ययनिमित्तानि कार्याणि लुप्तेऽपि प्रत्यये विधीयन्ते-इति क्रमाभावात्पौर्वापर्यं न प्रकल्प्यते । कार्यस्य प्राधान्याच्चानेन शास्त्रव्यपदेशौ विधीयेते ॥

( उद्योतः ) भाष्ये—**पर्यवपन्नानि**-मृतानि । अप्राप्तानीति यावत् ॥ नन्वेतत् कार्यातिदेशे स्यात्, स एव कुतः ? शास्त्रनिमित्तातिदेशयोरपि संभवात् । अत आह—**कार्यस्येति** । **व्यपदेशः**-निमित्तम् ॥ **विधीयेते इति** । 'इत्यभिमानः' इति शेषः ॥ वस्तुतः कार्यशास्त्रातिदेशयोरभेद एवेत्युक्तम् ॥ भाष्ये—**एकयोगलक्षणानि चेति** । तादृशानि विप्रतिषेधविषयत्वेन न कल्प्यन्त इत्यर्थः ॥

( ३८८ न्यासान्तरेण समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य ॥ * ॥**

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**स्थानिसंज्ञाऽन्यभूतस्य भवतीति वक्तव्यम् ॥**

**किं कृतं भवति ?**

**सत्तामात्रमनेन क्रियते । यथाप्राप्ते तुग्दीर्घत्वे भविष्यतः ॥**

( प्रदीपः ) **सिद्धं त्विति** । अन्यो भावः-अन्यद्वस्तु स्थान्यपेक्षयाऽऽदेशः, अन्यभाव एवान्यभाव्यमिति स्वार्थे ष्यञ् । तत्र परिवीरिति स्थानिनः क्विपो या संज्ञा=यो व्यपदेशः-पित् कृत्प्रत्यय इत्यादिः, स लोपस्यानेन विधीयते । ततस्तन्निबन्धनं शास्त्रं प्रवर्तत इति सिद्धो विप्रतिषेधः ॥ **सत्तामात्रमिति** । कृदादिव्यपदेशस्येत्यर्थः ॥

( उद्योतः ) **नन्वन्यभाव** इति षष्ठीतत्पुरुषः कर्मधारयो वा, उभयथापि ष्यञनुपपन्नः । भावस्य भावान्तरेणायोगात्, समाससंज्ञया गुणवचनसंज्ञाया बाधाच, अर्थासङ्गतेश्च, इत्यत आह—**अन्यो भाव इति** । भाष्येऽन्यरूपं प्राप्तस्येत्यर्थक**मन्यभूतस्ये**त्येतत्तु फलितार्थो बोध्यः ॥ **स्वार्थे इति** । चातुर्वर्ण्यादित्वात् ॥ ननु सत्ता स्थानिनश्चेद्विरुद्धम्, अतिदेशसहस्रेण सत्ताया अशक्यत्वाच्च, अत आह—**कृदादिव्यपदेशस्येति** । एतदर्थमेव **स्थानिसंज्ञानुदेशादि**त्युक्तम्,

१ भपदसंज्ञे प्रदर्श्येते इत्यभ्रमायाह—**पदसंज्ञाद्वयमिति** ॥ उपक्रमानुरोधादिति भावः ॥ छाया ॥

२ प्राधान्येन वर्णाश्रयत्वाभावात्प्रत्ययलक्षणनिषेधो नेति भावः । ( र. ना. )

३ **नायमिति** । किंतु कालान्तरमिति प्रतिपादनाय **'आसीद्'** इति प्रयोग इत्यर्थः ॥ छाया ॥

४ संज्ञापरामर्शे नपुंसकत्वानुपपत्तिरसंबद्धत्वं चात आह—**वक्ष्यमेति** ॥ छाया ॥

५ **आदिना**-अनया पदसंज्ञया नलोपो न भविष्यतीति ॥ छाया ॥

६ **सः-वर्णाश्रये ना**स्तीति ॥ छाया ॥

७ दोषान्तरमाह—**तुगिति** ॥ अत एव **चः** ॥ छाया ॥

८ 'पन्नानि भवन्ति' इति ग पाठः ॥

९ व्यपदेशो न व्यवहारोऽत्रेत्याह—**निमीति** ॥ शेषसूचितामरुचिमाह—**वस्तुत इति** ॥ अत एव शेषः । **उक्तम्**-स्थानिवदित्यत्र ॥ छाया ॥

१० दण्डिकृष्णाद्युक्त्यसांगत्यायाह—**उभेति** ॥ छाया ॥

११ ननु तस्यापि तद्योगोऽन्यत्र दृष्टोऽत आह—**समासेति** ॥ दोषान्तरमाह—**अर्थासमिति** ॥ छाया ॥

१२ **अन्यो भाव इतीति** । बहुव्रीहेरस्य लाघवात् ॥ **भावः**-स्वरूपम् । अत एवाह—**अन्यरूपमिति** ॥ छाया ॥

१३ स्थानिन आदेशश्चेति विरुद्धमिति पाठो भाति । ( र. ना. ) अखिलेष्वपि पुस्तकेषु 'सत्ता स्थानिनश्चेद्विरुद्धम्' इत्येव पाठः । र. ना. पण्डितकल्पितपाठः काप्यदृष्टचरः । अन्यच्च 'आदेशस्थितिकाले स्थानिनः सत्ता-इत्येतद्विरुद्धम्' इत्यर्थकस्यास्य पाठस्य कासामञ्जस्यमिति प्रष्टव्या र. ना. महाशयाः ॥

१४ **विरुद्धमिति** । तन्निवर्त्यत्वस्यैव स्थानित्वात् ॥ अप्रयोगादाह—**अतीति** ॥ छाया ॥

१५ भाष्यसंमतमेवेदमित्याह—**एतदर्थमिति** ॥ छाया ॥

न तु 'स्थान्यनुदेशात्' इति । तथा सति स्थानिकार्यातिदेश एव स्यादिति बोध्यम् ॥

( आक्षेपभाष्यम् )

तद्वक्तव्यं भवति ॥

( उद्द्योतः ) भाष्ये शङ्किता आह— तद्वक्तव्यमिति । वचनान्तरेण सूत्राक्षेपपरिहारो न युक्त इति भावः ॥

( न्यासान्तरसाधकसमाधानभाष्यम् )

यद्यप्येतदुच्यते, अथवैतर्हि स्थानिवद्भावो नारभ्यते । "स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ" इति वक्ष्यामि ॥

( उद्द्योतः ) परिहरति—यद्यपीति ॥ अथवैतर्हीति । तथापीत्यर्थः । एवं च लघुतरत्वाद्वचनान्तरेणापि परिहारो युक्त इति भावः ॥

( आक्षेपभाष्यम् )

यद्येवम् "आङो यमहनः" आत्मनेपदं भवतीति हन्तेरेव स्यात्, वधेर्न स्यात् । न हि काचिद्धन्तेः संज्ञाऽस्ति, या वधेरतिदिश्येत ॥

( प्रदीपः ) यद्येवमिति । हन्तिं स्वरूपेणोपादायात्मनेपदं विधीयते । न तु कांचित्संज्ञामाश्रित्येति भावः ॥ न हीति । यद्यपि धातुसंज्ञाऽस्ति, तथापि न तदुपादानेनात्मनेपदं विधीयते ॥

( उद्द्योतः ) संज्ञामिति । निमित्त[1]भूतव्यपदेशमित्यर्थः ॥

( समाधानभाष्यम् )

हन्तेरपि संज्ञाऽस्ति ॥
का ?
हन्तिरेव ॥
कथम् ?
"स्वं रूपं शब्दस्याशब्दसंज्ञा" इति वचनात्स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा भविष्यति ॥

( प्रदीपः ) हन्तेरपीति । आङो यमहन इति सूत्रोपात्तो हन्तिः संज्ञा, प्रयोगस्थस्तु संज्ञीति वधेर्हन्तिसंज्ञाऽतिदेक्ष्यते ॥

( उद्द्योतः ) ननु संज्ञासंज्ञिनोर्भेदाद्धन्तेर्हन्तिः संज्ञेत्ययुक्तमत आह—सूत्रोपात्त इति ॥

( ३८९ न्यासान्तरप्रयोजनान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम् ॥ * ॥

( भाष्यम् )

भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धं भवति ॥

( उद्द्योतः ) फलान्तरमपि वचनान्तरारम्भे दर्शयति भाष्ये—भेत्यादि ॥ सिद्धमिति । इष्टमिति शेषः । वक्ष्य[2]माणान्यल्विधित्वाद्वार्ति[3]कमते नातिदेशेन भविष्यन्ति ॥ सूत्रारम्भे तु वर्णाश्रये इत्यस्य वर्णप्राधान्यविषयत्वादतिदेशेन स्युरेवेति भावः ॥

( उदाहरणोपपादनभाष्यम् )

भसंज्ञा—राज्ञः पुरुषः-राजपुरुषः । प्रत्ययलक्षणेन "यचि भम्" इति भसंज्ञा प्राप्नोति, "स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ" इति वचनान्न भवति ॥

( उदाहरणोपपादनभाष्यम् )

ङीप्—चित्रायां जाता-चित्रा । प्रत्ययलक्षणेनाणन्तादिति ङीकारः प्राप्नोति । "स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ" इति वचनान्न भवति ॥

( प्रदीपः ) चित्रायां जातेति । चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानमित्यणो लुक् ॥ टिड्ढाणञित्यत्रात इत्यधिकारात् ङीपोऽल्विधित्वम् ॥

( उद्द्योतः ) चित्रेति । नक्षत्रेण युक्त इत्यणो लुबविशेष इति लुप् । युक्तवद्भावात्स्त्रीत्वं, ततो जातेऽर्थे सन्धिवेलादीत्यणो वार्तिकेन लुक् इति भावः । न चाणो लुकि लुक्तद्धितेति टापो लुकि पुनष्टाप् दुर्लभः, लक्ष्ये लक्षणस्येति न्यायात्—इति वाच्यम् । जातगतस्त्रीत्वबोधनरूपफलस्यासिद्धतया प्रवृत्तेः ॥ अत इत्यधीति । अ[4]कारान्तादण इत्यर्थः ॥

( उदाहरणोपपादनभाष्यम् )

ष्फ—वतण्डी । प्रत्ययलक्षणेन 'यञन्तात्' इति ष्फः प्राप्नोति । "स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ" इति वचनान्न भवति ॥

( प्रदीपः ) वतण्डीति । यथा-आवट्यायनीति चापं बाधित्वा सर्वत्रग्रहणापकर्षात् ष्फो भवति, एवं शार्ङ्गरवादिपाठात् प्राप्तं ङीनं बाधित्वा प्राचां ष्फः स्यात् ॥ अत इत्यधिकारादल्विधिः ष्फः ॥

( उद्द्योतः ) ननु वतण्डात् स्त्र्यपत्ये यञो लुक् स्त्रियामिति लुकि प्रत्ययलक्षणेन प्राचामिति प्राप्तष्फं बाधित्वा परत्वात् ङीन् स्यात्, शार्ङ्गरवादिपाठादत आह—यथेति । तत्र[5] हि सूत्रे यञ इति वर्तते ॥ सर्वत्र[6]ग्रहणेति । तद्धि पूर्व[7]सूत्रेऽपकृष्यते ॥

( उदाहरणोपपादनभाष्यम् )

गोरात्वम्—गामिच्छति—गव्यति । प्रत्ययलक्षणेनामि "औतोऽम्शसोः" इत्यात्वं प्राप्नोति ।

---

१ तस्यैव प्रक्रान्तत्वादाह—निमित्तेति ॥ छाया ॥

२ सर्वाशयमाह—वक्ष्येति ॥ वार्तिके पूर्वनिपातप्रकरणानित्यत्वात्प्रयोगसाधुता ॥ गोरित्यत्रालुक् निपातनात् ॥ छाया ॥

३ वार्तिकेति । 'स्थानिसंज्ञान्यभूतस्यानल्विधौ' इति न्यासान्तरपरवार्तिकमत इति भावः । तत्र हि अनल्विधावित्युक्तत्वादतिदेशो न भविष्यतीति ॥

४ अण् योऽकार इति व्याख्याने सूत्रमतेऽप्यदोषादाह—अकारान्तादिति ॥ छाया ॥

५ तत्र हि-प्राचामित्यत्र हि ॥ छाया ॥

६ 'सर्वत्रग्रहणादिति' इति प्रतीकपाठः प्रायः सर्वपुस्तकेष्विदानीं दृश्यते, तेनानुमीयते तादृशः प्रदीपपाठ आसीदिति ॥

७ पूर्वसूत्रे-प्राचामित्यत्र ॥ कचित्तथा पाठ एव ॥ छाया ॥

"स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ" इति वचनान्न भवति ॥

( प्रदीपः ) गव्यतीति । औतोऽम्शसोरित्यत्राचीत्यनुवर्तनादल्विधिरात्त्वम् ॥

( उद्योतः ) औतोमिति । एकादेशविधायकं हि तत् ॥ अचीति । अजाद्योरित्यर्थः । अत एव तद्धितशसो निवृत्तिः ॥

(३९० न्यासान्तरदूषणवार्तिकम् ॥ ५ ॥)

॥*॥ तस्य दोषो ङौनकारलोपेत्त्वेम्विधयः ॥*॥

( भाष्यम् )

तस्यैतस्य लक्षणस्य दोषः ॥

( उद्योतः ) भाष्ये सूत्रारम्भवादी वचनान्तरवादिनं प्रति दूषणमाह—तस्य दोष इति । 'स्थानिसंज्ञानुदेशात्' इत्यस्येत्यर्थः ॥

( उदाहरणोपपादनभाष्यम् )

ङौ नकारलोपः—आर्द्रे चर्मन्, लोहिते चर्मन् । प्रत्ययलक्षणेन "यचि भम्" इति भसंज्ञा सिद्धा भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥

( प्रदीपः ) चर्मन्निति । सुपां सुलुगिति ङेर्लुक् । अत्र भसंज्ञाया अभावान्नलोपः प्राप्नोतीति न ङिसंबुद्ध्योरिति वक्तव्यं जायते ॥

( उदाहरणोपपादनभाष्यम् )

इत्त्वम्—आशीः । प्रत्ययलक्षणेन 'हलि' इतीत्त्वं सिद्धं भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥

( उद्योतः ) इत्वम्-शास इदङ्हलोरिति ॥

( उदाहरणोपपादनभाष्यम् )

इम्—अतृणेट् । प्रत्ययलक्षणेन 'हलि' इति इम् सिद्धो भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥

( उद्योतः ) इम्-तृणह इत्यनेन ॥

( तटस्थभाष्यम् )

सूत्रं च भिद्यते ॥

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—*सतो निमित्ताभावात्पदसंज्ञाऽभावः * तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीः * इति ॥

( प्रथमदूषणपरिहारभाष्यम् )

नैष दोषः । वक्ष्यत्यत्र परिहारम् ॥

( उद्योतः ) भाष्ये—वक्ष्यत्यत्रेति । नङीति ङौ नलोपप्रतिषेधाज्ज्ञापकात्प्रत्ययलक्षणेन भसंज्ञा नेत्येवं रूपमनुपदमेतत्सूत्र एव-इत्यर्थः ॥

( द्वितीयदूषणपरिहारभाष्यम् )

इहापि परिवीरिति । शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति ॥

( प्रदीपः ) परत्वाद्दीर्घत्वमिति । सति प्रत्यये यत्कार्यं दृष्टं तल्लुप्तेऽपि भवतीति सूत्रार्थः । परिवीयेत्यादौ च सति प्रत्यये दीर्घो दृष्टः, न तुगिति परिवीरित्यत्रापि दीर्घ एव भवति ॥

( उद्योतः ) (भाष्ये) शास्त्रपरेति । उपदेशशास्त्रपरेत्यर्थः । अतिदिश्यमानकार्याणामुत्पत्तिदेश एव विप्रतिषेधशास्त्रोपयोगीति भावः । तदाह—सति प्रत्यये इति । इदं सूत्रं तत्तच्छास्त्रनिमित्तसंपादनद्वारा तत्तच्छास्त्रप्रवृत्तिसंपादकमिति भावः ॥ अत एव पूर्वं

१ आ इति छेदायाह—एकेति ॥ छाया ॥

२ अम्शसोरचीति व्याख्याने तथैवात आह—अजाद्योरिति ॥ छाया ॥

३ वार्तिके निपातनात्समासः । पूर्वनिपातः प्राग्वत् ॥ छाया ॥

४ [ 'तस्य दोषो ङौ नकारलोप-' इति वार्तिकोक्तदोषसमुच्चितं ] दोषान्तरमाह—सूत्रं चेति ॥ छाया ॥

५ अत्र-अनयोराद्ये * सतो निमित्ताभावात् * इत्यत्र ॥ छाया ॥

६ दृष्टं-न तु प्रसक्तमात्रम् ॥ छाया ॥

७ इति भाव इति । कैयटाशयो हि 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रेणैव तानि तानि कार्याणि क्रियन्ते, न त्वनेन शास्त्रमतिदिश्यते-इति । अत एव 'अनेनैव प्रत्ययनिमित्तानि कार्याणि क्रियन्ते' इति तैः पूर्वं व्याख्यातम् । एवञ्च 'शास्त्रपरविप्रतिषेधेन परत्वात्' इत्यादि भाष्यमनुपपद्येत, अतः 'सति प्रत्यये यत्कार्यं दृष्टं तल्लुप्तेऽपि भवति इति प्रदीपो भट्टैः 'तत्तच्छास्त्रनिमित्तसम्पादनद्वारा' इत्येवं व्याख्यातः । पूर्वापरभाष्यतश्च प्रत्ययलोप इति सूत्रेण शास्त्रातिदेश एव न कार्यातिदेश इति भट्टाशयः । ततश्च शास्त्रपरविप्रतिषेधेनेत्यादि भाष्यमुपपद्यते । अत एव-शास्त्रातिदेश एव भाष्यकृदभीष्ट इत्यत एव, तानि-शास्त्राणि, अनेन-प्रत्ययलोप इति सूत्रेण प्रत्युत्थाप्यन्ते-इति पूर्वं भाष्यकृतोक्तम् । यदि प्रदीपाभिमतः कार्यातिदेश एव भाष्याभिमतः स्यात्तदा 'तानि कार्याणि क्रियन्ते' इत्येव तत्रोक्तं स्यात् । अतो भाष्यकाराणां शास्त्रातिदेश एवानेनाभीष्ट इति सिद्धम् । कैयटस्यायमप्यर्थोऽभिप्रेत इति प्रदर्शयति-अत एव टित इत्यादिग्रन्थेन । अत एव-तानीत्यस्य शास्त्राणीत्यर्थकरणादेव, पर्यवपादौ—पर्यवपूर्वकपदधातुप्रयोगावसरे 'रूपान्तरापत्तिः' इति तदर्थः । तादृश एवार्थो यत्र पर्यवपूर्वकपदधातुप्रयोगस्तत्रापीष्ट इति 'पर्यवपन्नानि' इति भाष्यस्यापि स एवार्थः । एवञ्च रूपान्तरापत्तिग्रस्तानि तानि शास्त्राणीत्यर्थः पर्यवपन्नानीत्यस्य । तथा च भाष्योक्त'तानि'पदेन शास्त्राण्येव ग्रहीतुमुचितं न तु कार्याणि । एवञ्च 'पर्यवपादौ रूपान्तरापत्तिरित्युक्तं कैयटेन' इत्येवोद्योतपाठः स्वारसिकः, न तु गुरुप्रसादिमुद्रितपुस्तकेषु दृश्यमानः 'पर्यवपादो रूपान्तरा' इति । यद्यपि टित इति सूत्रे 'पर्यवपादौ रूपा-' इत्येव कैयटस्तथाप्युद्द्योते 'रूपान्तरापत्तिः' इत्यंशस्यैवात्र प्रदर्शनम्, न तु 'पर्यवपादो रूपान्तरापत्तिः' इत्यस्यानुकरणम् । टित इति सूत्रे तादृशकैयटदर्शनेन स्वारसिकपाठविलोपो मुद्रितेषु-इति विभाव्यं सूरिभिः ॥

८ इदमेव भाष्यसंमतमित्याह—अत एवेति ॥ अस्य तत्संपादकत्वादेवेत्यर्थः ॥ छाया ॥

**तान्यनेन प्रत्युत्थाप्यन्त** इत्युक्तम् । **तानि**-तत्कार्यबोधकानि शास्त्राणि-इति तदर्थ उचितः, न तु 'कार्याणि क्रियन्ते' इत्यर्थः । [2] [ क्रियन्ते इत्यस्यैव वक्तुमुचितत्वात् । ] [3] **अत एव टित आत्मनेपदानामिति** सूत्रे **पर्यवपादौ**-रूपान्तरापत्तिरित्युक्तं कैयटेन । विद्यमानस्य हि रूपान्तरापत्तिर्भवति । शास्त्रमेव च विद्यमानं न तु कार्यम् । तस्य च रूपान्तरं-एतद्विषये कार्याप्रवर्तकत्वम् । [4] [5] एवं च पर्यवपन्नत्वमपि शास्त्रस्यैवेत्यन्ये ॥

---

( सूत्रप्रयोजनम् )

( आक्षेपभाष्यम् )

**कानि पुनरस्य योगस्य प्रयोजनानि ?**

**( उद्द्योतः )** भाष्ये—**कानि पुनरिति** । [6] पूर्वमेतत्सूत्रकरणे का युक्तिरिति युक्तिप्रश्नः । इदानीं तु प्रयोजनप्रश्न इति न पौनरुक्त्यम् । अत एव **सदन्वाख्यानादिति** प्रागुक्तरितम् ॥

**( ३९१ यथान्याससूत्रे प्रयोजनवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ [7] प्रयोजनमपृक्तशिलोपे नुममामौ गुणवृद्धिदीर्घत्वमिडाट्श्नम्विधयः ॥ * ॥**

( भाष्यम् )

**अपृक्तलोपे शिलोपे च कृते नुम्-अमामौ-गुण-वृद्धी-दीर्घत्वं इम्-अडाटौ-श्नम्विधिरिति प्रयोजनानि ॥**

**(प्रदीपः) प्रयोजनमिति** । [8] यद्यप्यल्विध्यर्थमतृणेडित्यादौ, तथापि विशेषविहितत्वान्नुमादयोऽप्यस्यैवोदाहरणानीति भावः ॥

**(उद्द्योतः) यद्यप्यल्विध्यर्थमिति** । इदमिति शेषः ॥ **विशेषविहितत्वादिति** । प्रत्ययविषये शीघ्रोपस्थितिकत्वादित्यर्थः ॥

**( उदाहरणोपपादनभाष्यम् )**

**नुम्—अग्ने त्री ते वाजिना त्री षधस्था । ता ता पिण्डानाम् ॥** [9]

**अमामौ—हे अनड्वन्, अनड्वान् ॥**

**गुणः—अधोक्, अलेट् ॥**

**वृद्धिः—न्यमार्ट् ॥**

**दीर्घत्वम्—अग्ने त्री ते वाजिना त्री षधस्था, ता ता पिण्डानाम् ॥**

**इम्—अतृणेट् ॥**

**अडाटौ—अधोक्, अलेट्, ऐयः, औनः ॥**

**श्नम्विधिः—अभिनोऽत्र, अच्छिनोऽत्र ॥**

**अपृक्तशिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति । प्रत्ययलक्षणेन भवन्ति ॥**

( प्रदीपः ) **अनड्वन्निति** । पूर्वं संबुद्धिलोपमाश्रित्यैतदुक्तम् ॥ यदि तु विशेषविहितत्वात् **'अम् संबुद्धौ'** इति पूर्वमम् प्रवर्तते, तदा संबुद्धिलोपो न स्यात् ॥

**ऐय इति** । इयर्तेर्लङ्-तिप्-शपः श्लुः-द्विर्वचनम् । **अर्तिपिपर्त्योश्चे**तीत्वम्, **अभ्यासस्यासवर्णे** इतीयङ् ॥

**औन इति** । उन्देर्लङ्-सिप्-श्नम्-**श्नान्नलोपः**-**दश्चे**ति रुत्वम् ॥

**( उद्द्योतः ) त्री ते** इत्यादौ **शेश्छन्दसी**ति लोपः । नुम्फलं दीर्घः ॥

**आश्रित्येति** । अपवादबाधकवाचनिकपूर्वविप्रतिषेधाश्रयेणेति [10] भावः । न्यायेन पूर्वं लोपप्राप्तेरल्पविषयत्वात् ॥ **विशेषविहितत्वादिति** । **येन नाप्राप्तिन्यायेनापवादत्वादित्यर्थः** ॥ **तदेति** । **अपवादविषयं परित्यज्येति** न्यायेनापवादविषये उत्सर्गाप्रवृत्तेरिति भावः ॥ [11] **यदीत्यनेन** विषयभेदादपवादत्वमेव नास्तीति **सूचितम्** । [12] यदि तु **नुड्विषये रप्रतिषेधो वक्तव्य** इत्यादिसाप्तमिकभाष्येण विषयभेदेऽप्यपवादत्वं तर्हि **प्रत्ययलोपस्थलेऽनुत्पत्तिरेवान्वाख्यायते** इति **सरूपसूत्रस्थभाष्ये** उक्तत्वेनापवादत्वसंभावनैव नेत्याहुः ॥

**इतीयङिति** । ततो गुणेऽपृक्तलोपेऽडाटाविति भावः ॥ [13] **आडागमे** रूपान्तरेण तत्तच्छास्त्रनिमित्तविघातात् केनापि कार्येणानयोर्न यौगपद्यमिति भावः ॥ [14] **लावस्थायामडिति** पक्षेऽपि **बहुलं छन्दस्यमाङ्योगेऽपीति** बाहुलकादत्रैवमेव प्रक्रिया बोध्या ॥ अभिनोऽत्रेत्यत्रैवेति भावः ॥ छाया ॥

---

१ **कार्याणीति** प्रक्रमात्कथमिदमत आह—**तानीति** ॥ छाया ॥

२ [ ] अयं पाठो ज. पुस्तके न ॥

३ पूर्वत्रापि कार्यपदं तत्परमेवेति **न** लक्षणा तत्पदे इत्याह—**अत एवेति** । तस्य तत्परत्वादेवेत्यर्थः ॥ छाया ॥ नेत्यधिकं भाति । ( र. ना. ) साहसमात्रमेतत् र. ना. पण्डितस्य । **पूर्वत्रापी**त्यादिछायाया अयमर्थः—**पूर्वत्रापि**—'इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नानि' इति भाष्यग्रन्थे, **कार्यपदं**—कार्याणीतिभाष्यपदं, **तत्परमेव**—शास्त्रपरमेव, **इति**—अतः, **न लक्षणा तत्पदे**—'तानि प्रत्युत्थाप्यन्ते' इतितत्पदे **न लक्षणा**, 'कार्यबोधकशास्त्र-' इत्येवंरूपा लक्षणा नेत्युपपादयति—**अत एवे**त्यादिना । एवमर्थपरेऽस्मिन् ग्रन्थे 'नेत्यधिकं भाति' इति प्रलपन् र. ना. उपेक्ष्य एव ॥

४ 'वर्तकत्वमित्यन्ये' इत्येव ज. पुस्तके पाठः ॥

५ **एवं चेति** । तथात्वइयकत्वे चेत्यर्थः ॥ एतदनुरोधेन सोऽपि तथैवेति भावः ॥ छाया ॥

६ **पूर्वं-किमर्थ**मित्यत्र ॥ छाया ॥

७ वार्तिके प्रयोगसाधुता प्राग्वत् ॥ **नुम् अमामाविति** पृथक्पदे । अपृक्तशिलोपयोर्यथासंभवमन्वयः ॥ छाया ॥

८ वार्तिकमतेनाह—**यद्यपीति** ॥ छाया ॥

९ 'ण्डानाम् ॥ नुम् ॥' इति अ. पाठः ॥

१० 'श्रयणेति भावः' इति ज. पाठः ॥

११ कैयटतात्पर्यमाह—**यदीत्येति** ॥ छाया ॥

१२ सिद्धान्तमाह—**यदि त्विति** । असंदिग्धे संदिग्धोक्तिः । तथा च भाष्यं सम्यगेवेति भावः ॥ छाया ॥

१३ अत्र प्रक्रियायां बीजमाह—**आडागम इति** ॥ **अनयोः**—अटाडोः । छाया ॥

१४ ननु पक्षान्तरे कथमुक्तप्रक्रियाऽत आह—**लावस्थायामिति** ॥ छाया ॥

त्रापीकारलोपापृक्तलोपाभ्यां श्रमो यौगेपद्यासम्भवेन परत्वाल्लोपे तस्य प्रवृत्तिरिति बोध्यम् ॥

( प्रत्याख्यानभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । स्थानिवद्भावेनाप्येतानि सिद्धानि ॥**

( सूत्रावश्यकताभाष्यम् )

**न सिध्यन्ति । आदेशः स्थानिवदित्युच्यते । न च लोप आदेशः ॥**

( प्रदीपः ) **न च लोप इति ।** दिशिरुच्चारणक्रियः । न च लोप उच्चार्यते, अभावरूपत्वात् ॥

( प्रत्याख्यानसाधकभाष्यम् )

**लोपोऽप्यादेशः ॥**

**कथम् ?**

**आदिश्यते यः स आदेशः, लोपश्चाप्यादिश्यते ॥**

( प्रदीपः ) **लोपोऽपीति ।** प्रतिपादनक्रियोऽत्र दिशिरिति भावः ॥

( लोपेऽप्यादेशत्वसाधकभाष्यम् )

**दोषः खल्वपि स्यात् यदि लोपो नादेशः स्यात् । इह "अचः परस्मिन् पूर्वविधौ" इत्येतस्य योगस्य भूयिष्ठानि लोप उदाहरणानि, तानि न स्युः ॥**

( सूत्रारम्भावश्यकताभाष्यम् )

**यत्र तर्हि स्थानिवद्भावो नास्ति, तदर्थमयं योगो वक्तव्यः ॥**

**क च स्थानिवद्भावो नास्ति ?**

**योऽल्विधिः ॥**

( आक्षेपभाष्यम् )

**किं प्रयोजनम् ?**

( प्रयोजनभाष्यम् )

**प्रयोजनं[2] ङौनकारलोपेत्त्वेम्विधयः[3] ॥**

( उद्द्योतः ) भाष्ये—**प्रयोजनं ङाविति ।** सूत्रारम्भवादी ॥

( सूत्रारम्भदूषणभाष्यम् )

**भसंज्ञा[4]ङीप्ष्फगोरात्वेषु च दोषो भवति ॥**

( उद्द्योतः ) प्रत्याख्यानवाद्याह—**भसंज्ञेत्यादि ॥**

( सूत्रारम्भवादिभाष्यम् )

**भसंज्ञायां तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—न प्रत्ययलक्षणेन भसंज्ञा भवतीति । यदयम्—"न ङिसंबुद्ध्योः" इति ङौ प्रतिषेधं शास्ति ॥**

**ङीप्यपि[5] । नैवं विज्ञायते—अणन्तादकारान्तादिति ।**

**कथं तर्हि ?**

**अण्योऽकार इति ॥**

**ष्फेऽपि । नैवं विज्ञायते—यञन्तादकारान्तादिति ।**

**कथं तर्हि ?**

**यञ् योऽकार इति ॥**

**गोरात्वेऽपि । नैवं विज्ञायते—अमि अचीति ।**

**कथं तर्हि ?**

**अच्यमीति ॥**

( प्रदीपः ) **अण्योऽकार इति ।** अकारेणाणन्तं न विशेष्यते, किं तर्ह्यणेव, सर्वश्चाण् अकार एवेति विशेषणसामर्थ्यात् 'श्रूयमाणाकाररूपादणः' इति विज्ञायते ॥ अथवा-अण्योऽकार इति अणाऽकारो विशेष्यत इति वर्णनिमित्तो ङीप्, न तु प्रत्ययनिमित्त इति प्रत्ययलक्षणाभावः ॥ **यञ् योऽकार इति ।** अकारावयव इत्यर्थः । अथवा—यञवयवे यञ्शब्दोऽत्र वर्तते, यञवयवो योऽकार इत्यर्थः ॥ पूर्ववदेतदपि व्याख्येयम् ॥ **अच्यमीति ।** अच् प्रधानं तद्विशेषणममिति तदादिविध्यभावः । तत्र वर्णनिमित्तमात्वम् , न प्रत्ययनिमित्तमिति दोषाभावः ॥

( उद्द्योतः ) सूत्रारम्भवाद्याह—**भसंज्ञायां तावदिति ॥ यदयं-न ङीति ।** अङ्गाधिकारप्रतिनिर्देशपक्षेऽयं ज्ञापकोपन्यासः ॥ **अकारेणाणन्तमिति ।** तद्धि[6] **जातेरस्त्रीत्यादेः** 'आखुः' इत्यादौ

---

१ सार्वधातुकपरत्वाभावादिति भावः । ( र. ना. )

२ तत्र नकारलोपोऽभावेन, इत्वेमौ भावेन प्रयोजनम् ॥

३ इत उत्तरं "ङौनकारलोपेत्त्वेम्विधयः प्रयोजयन्ति ॥ ङौनकारलोपस्तावत्—'आर्द्रे चर्मन्' 'लोहिते चर्मन्' । स्थानिवद्भावः "अनल्विधौ" इतिवचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु यचीति भसंज्ञा सिद्धा भवति ॥ इत्त्वम्—आशीः । स्थानिवद्भावः "अनल्विधौ" इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु हलीतीत्त्वं सिद्धं भवति ॥ इम्—अतृणेट् । स्थानिवद्भावः "अनल्विधौ" इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु हलीतीम् सिद्धो भवति ।" इति मुद्रितपाठः । एतादृशः पाठः प्रामाणिकपुस्तकेषु नोपलभ्यते । 'तस्य दोषो ङौनकारलोपेत्त्वेम्' इति वार्तिकविवरण उक्तोऽयं विषय इति पुनः पाठोऽनुचितो न तथा स्वारस्यं भजते ॥

४ अत्र 'भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः॥ भसंज्ञाङीप्ष्फगोरात्वेषु च दोषो भवति ॥ भसंज्ञा—राज्ञः पुरुषो राजपुरुषः । प्रत्ययलक्षणेन तु यचीति भसंज्ञायां 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो न प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ॥ ङीप्—त्चित्रायां जाता त्चित्रा । प्रत्ययलक्षणेन त्वणन्तादितीकारः प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ॥ ष्फ—वतण्डी । प्रत्ययलक्षणेन तु यञन्तादकारान्तादिति ष्फः प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ॥ गोरात्वम्—गामिच्छति गव्यति । प्रत्ययलक्षणेन "औतोम्शसोः" इत्यात्वं प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ।' इति मुद्रितपुस्तकेषु पाठः ॥

५ अत्र पूर्ववत् 'न दोषः' इत्यनुषज्यते । ङीप्यपि तावन्न दोष इति । एवमग्रे–ष्फेऽपि तावन्न दोषः, गोरात्वेऽपि तावन्न दोष इत्यपि ॥

६ नन्वव्यभिचारात्तदनुवृत्तिरेव वृथाऽत आह—**तद्धीति ॥** मण्डूकप्लुतिर्गुरुभूतेति भावः ॥ छाया ॥

व्यावृत्तये आवश्यकम् ॥ ननु प्रत्ययग्रहणसामर्थ्येन प्रधानतया प्रत्यत्वेन प्रत्ययस्य यत्र निमित्तता तत्रैवाल्विध्यर्थमिदम्, एवं चाकाररूपो योऽणित्यर्थेऽपि प्रत्ययलक्षणं दुर्वारमत आह—**विशेषणेति** ॥ वस्तुतोऽकार एव विशेष्य इत्याह—**अणेति** ॥ **न तु प्रत्ययनिमित्त इति** । [1]प्राधान्येन प्रत्ययनिमित्त इत्यर्थः ॥ अज्झलात्मकयञः-अकारेण सामानाधिकरण्यासंभवादाह—**अकारावयवेति** । बहुव्रीहिः । अस्य विशेषणत्वे इदम्, **[2]गुणे त्वन्याय्यकल्पनेति** न्यायादिति भावः ॥ नन्वेवं सति मत्यादिष्वतिप्रसङ्गवारणायाजाद्यत इत्यत्र[3] मुख्यार्थस्योत्तरत्र लक्षणायां वैरूप्यं स्यादतो व्याख्यानान्तरमाह—**अथवेति** ॥ **तद्विशेषणमिति** । [4]अमोऽवयवेऽचीत्यर्थ इति भावः ॥

( प्रत्याख्यानभाष्यम् )

**प्रयोजनान्यपि[5] तर्हि नैतानि सन्ति ॥**

**( उद्योतः )** एवं प्रत्याख्यानवाद्युक्तदोषेषु परिहृतेषु प्रत्याख्यानवाद्याह—**प्रयोजनान्यपीत्यादि** ॥

( दूषणोद्धारभाष्यम् )

**यत्तावदुच्यते—ङौ नकारलोप इति ॥**

**क्रियत एतन्न्यास एव—"न ङिसंबुद्ध्योः" इति ॥**

**( प्रदीपः ) क्रियत एतदिति** । त्वया ज्ञापनार्थमवश्यं वक्तव्यमिति भावः ॥

**( उद्योतः ) ज्ञापनार्थमिति** । प्रत्ययलक्षणेन भत्वं नेत्यस्येति शेषः ॥ **न लुमता तस्मिन्नित्यनाश्रित्येदम्** ॥

( दूषणोद्धारभाष्यम् )

**इत्त्वमपि । वक्ष्यत्येतत्*शास इत्त्वे आशासः क्वौ* इति ॥**

**( प्रदीपः ) शास इत्त्व इति** । कृतेऽप्यस्मिन्[6] सूत्रे नियमार्थमेतद्वक्तव्यं 'अशास्त' इत्यादौ मा भूत् । अकृते तु विध्यर्थम् । 'आशास्ते' इत्यादौ तु न भवति, **शासु अनुशिष्टा**वित्यस्यैव तत्र ग्रहणात् ॥

**( उद्योतः ) अकृते त्विति** । परस्मैपदिविहिताङ्साहचर्यात् शासुधातोरेव ग्रहणं तत्र—इति पक्षे विध्यर्थम् ॥ नन्वेवमपि 'आर्यशीः' इत्याद्यसिद्धिरिति चेत् । अत्राहुः—**शास** इति सामान्यसूत्रम्, ततः—**अङि**, अजादौ चेदङ्येव—इति नियमार्थमिदम् । एवं च सूत्रे हल्ग्रहणं मास्त्विति मित्रशीरित्यादिसिद्धिः ॥ **आशासः क्वा**विति तु अत्र[7] शासोरेव ग्रहणे विध्यर्थम्, अन्यथा नियमार्थ-इति 'आशास्ते' इत्यादौ न दोष इति ॥

( दूषणोद्धारभाष्यम् )

**इग्विधिरपि । हलीति निवृत्तम् ॥**

( आक्षेपभाष्यम् )

**यदि हलीति निवृत्तं, तृणहानि-अत्रापि प्राप्नोति ॥**

( समाधानभाष्यम् )

**एवं तर्हि—'अचि न' इत्यनुवर्तिष्यते ॥**

( तटस्थाक्षेपभाष्यम् )

**न तर्हीदानीमयं योगो वक्तव्यः ॥**

**( उद्योतः )** अथ वार्तिकोक्तविध्यर्थत्वे दूषिते भाष्यकृत् नियमार्थं सूत्रमिति प्रश्नपूर्वकमाह—**न तर्हीत्यादि** ॥

( सिद्धान्तिसमाधानभाष्यम् )

**वक्तव्यश्च ॥**

**किं प्रयोजनम् ?**

**प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात् । शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूदिति ॥**

**किं प्रयोजनम् ?**

**शोभना दृषदोऽस्य सुदृषद् ब्राह्मणः, "सोर्मनसी अलोमोषसी" इत्येष स्वरो माभूदिति ॥ प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥**

**( प्रदीपः ) प्रत्ययं गृहीत्वेति** । स्थानिवद्भावेन सिद्धे सत्ययं योगो नियमार्थः । प्रत्यय एव यस्य लक्षणं तत्प्रत्ययलोपे यथा स्यात् ॥ 'सोर्मनसी' इत्यत्र तु **अनिनस्मन्ग्रहणानि** चेति वचनादस् प्रत्ययश्चाप्रत्ययश्च गृह्यते इति सुदृषदित्यत्र स्थानिवद्भावाभावादुत्तरपदाद्युदात्तत्वाभावे **नञ्सुभ्या**मित्यन्तोदात्तत्वं भवति । तत्र **चोत्तरपदादि**रित्यधिकारादसन्तमुत्तरपदं गृह्यते इति सुदृषदित्यत्र स्थानिवद्भावादसन्तत्वमुत्तरपदस्य स्यात् ॥६२॥

**( उद्योतः ) प्रत्ययं गृहीत्वेति** । प्रत्ययत्वतद्व्याप्यधर्मपुरस्कारेण यदुच्यत इत्यर्थः ॥ **शब्दं गृहीत्वेति** । उक्तधर्मातिरिक्तपुरस्कारेण यदुच्यत इत्यर्थः ॥ ननु शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूत्, स्थानिवत्त्वेन तु स्यादत आह—**स्थानिवदिति** ॥ **प्रत्यय एवेति** । [8]उक्तोऽर्थः । एतदर्थमेव द्वितीयं प्रत्ययपदम् ॥ न

---

१ तत्त्वस्यापि सत्त्वादाह—**प्राधेति** ॥ इदमुक्तव्याख्याने ॥ छाया ॥

२ ननु वैपरीत्यं कुतो न, तावतापि निर्वाहादत आह—**गुणे त्विति** ॥ छाया ॥

३ **इत्यत्र**—उपात्तस्य तस्येति शेषः ॥ छाया ॥

४ अम्शसोरिति षष्ठीत्याह—**अमोऽवेति** ॥ छाया ॥

५ **प्रयोजनान्यपीति** । प्रयोजनं ङौनकारलोप इत्यादिनोक्तानि प्रयोजनानि न सतीत्यर्थः ॥

६ **अस्मिन्निति** । प्रत्ययलोप इति सूत्रे कृतेऽपि 'आशासः क्वौ' इत्येतन्नियमार्थं वक्तव्यम् । कृतेऽपि सूत्रे शास इदित्यत्र यदि आङ्-साहचर्यात् शासुधातोरेव ग्रहणमिति विज्ञायते तदा 'आशासः क्वौ' इत्येतद्विध्यर्थमेव, अन्यथा नियमार्थम् । नियमश्चैवम्—'शासु इच्छायां' इत्यस्येत्वं स्याच्चेत्तर्हि आङ्पूर्वस्यैव, तेन 'अशास्त' इत्यत्र न भवति । अत्र मुद्रितपुस्तकेषु 'आशास्ते' इति प्रामादिकः पाठः ॥

७ **अत्र**—शास इदिति सूत्रे, साहचर्यात्परस्मैपदिनः शासोरेव ग्रहणे विध्यर्थमेतदित्याशयः । साहचर्यानाश्रयणे आङ्पूर्वस्य शासः स्याच्चेत्क्वावेवेति नियमाश्रयणे च 'आशास्ते' इत्यत्र न दोषः ॥

८ **प्रत्ययमिति** । अनेन ग्रन्थेन प्रत्ययत्वतद्व्याप्यधर्मेण यदुच्यते तत्प्रत्ययलक्षणेन स्यात्, तदितरत् न स्यादित्युच्यते ॥

९ **उक्तोऽर्थः**—प्रत्ययत्वतद्व्याप्यान्तरधर्माक्रान्त इत्यर्थः ॥ छाया ॥

चालोमोषसीति पर्युदासेन श्रूयमाणासन्तस्यैव ग्रहणमिति नियमोऽपि व्यर्थ इति वाच्यम् । पर्युदासेन प्रत्ययासन्तस्यैव ग्रहणापत्तौ सुव इत्यादौ स्वरानापत्तेरिति भाष्याशयात् ॥ ननु स्थानिनिमित्तं यदन्यस्य कार्यं तत्स्थानिवत्त्वेन लोपेऽपि, न तु तस्यैव । असतो वचनशतेनापि कार्यित्वाप्रतिपादनात् । इह चा[1]स एव कार्यित्वमत आह—**तत्र चेति** । **सोर्मनसीति** सूत्रे[2] इत्यर्थः ॥ ६२ ॥

---

( ५८ प्रत्ययलक्षणनिषेधसूत्रम् ॥ १।१।९ आ. ४ सू. )

# न लुमताऽङ्गस्य ॥ १ । १ । ६३ ॥

( न्यूनतापरिहारः )

( ३९२ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

**लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानं कर्तव्यम् ॥ एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षणं नेति वक्तव्यम् ॥**

**( प्रदीपः ) न लुमताऽङ्गस्य ॥ ६३ ॥ लुमतीति ।** लुमत्संज्ञया प्रतिपादितमदर्शनं - लुमत् । तत्र यः प्रतिषेधः, तस्मिन्नित्यर्थः ॥ **एकपदस्वरस्येति** । एकपदाश्रयो यः स्वरः, तस्येत्यर्थः ॥ यस्तु **पदस्य पदादि**ति पदद्वयाश्रयः स्वरः, तत्र प्रत्ययलक्षणं भवत्येव । दधि तिष्ठति - इति **तिङ्ङतिङ** इति निघातः ॥ **अङ्गस्ये**त्यङ्गाधिकारनिर्देशात् ञ्निति कित्स्वरस्य चानाङ्गत्वात्प्रतिषेधस्याप्राप्तिरिति भावः ॥

**( उद्द्योतः ) न लुमता० ॥ ६३ ॥** लोप[3]क्रियानिरूपिता करणे तृतीया । यद्यपि लुशब्दयोगात्संज्ञा लुमद्वाच्या । न[4] च तत्रायं प्रतिषेधः, किंतु तत्प्रतिपादितादर्शने । एवं च **लुमति प्रतिषेध** इत्यनुपपन्नम्, तथापि वाचकध[5]र्मस्य वाच्य उपचार इत्याह—**लुमदिति** ॥ ननु सर्वोऽपि स्वरः कार्यित्वेनैकमेव पदं गृह्णातीत्यत आह—**एकेति** । **सर्वामन्त्रिते**त्यत्रामन्त्रितपदेनाष्टमिकमपि[6] ग्रहीतुं शक्यमिति **पदस्य पदा**दित्यधिकारेऽनन्तरमप्या**मन्त्रितस्ये**त्युल्लङ्घ्य व्यवहितमुदाहरति—**दधीति** ॥ **अङ्गस्येत्यधिकारेति** । वस्तुतस्तदनिर्देशेऽप्यावश्यकमेतत् । तथाहि—सौवरीणां सप्तमीनां **भीह्री···मदे**ति सूत्रे **प्रत्ययात्पूर्व**मिति पूर्वग्रहणेन तदन्तसप्तमीत्वस्य षाष्ठभाष्ये तत्सूत्रे[7] एवोक्तत्वेन स्वराणां प्रत्यये परतः पूर्वकार्यत्वाभावात्, कित्स्वरे[8] षष्ठ्या एव सत्वाच्च ॥ न[9]नु **संज्ञायामुपमान**मिति 'उपमानशब्दः संज्ञायामाद्युदात्तः' इत्यर्थकं कनो लुपि चञ्चेव - चञ्चेत्यादावाद्युदात्तसाधकं **ञ्नित्यादिरि**त्येव सिद्धे व्यर्थं सदनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाभावज्ञापकमिति तत्सूत्रे[10] भाष्ये स्पष्टम्, तेनेदं विरुध्येतेति चेन्न । प्रकृतसूत्रे वार्तिकव्याख्यानमात्रं, षष्ठे तु प्रत्याख्यातानीमानीत्यविरोधात् । अ[11]त एव तत्र भाष्ये **पथिमथिस्वरार्थं वचनं कर्तव्य**मित्युक्तम् । ए[12]वं च तदर्थस्यात्रत्यवचनस्य कर्तव्यत्वं वदताऽन्येषामकर्त्तव्यत्वमर्थादुक्तमेव ॥ एतेन[13] **भीह्री**ति ज्ञापकं विशेषापेक्षं - स[14]प्तम्यर्थग्रहणे तदन्तग्रहणे च यत्र फलभेदस्तद्विषयम् । एवं चोपोत्तमं **रिती**त्या[15]दावेव तत्प्रवृत्तिरिति न **ञ्नित्यादि**रित्यादौ तत्प्रवृत्तिरिति कैयटाशय इति परास्तम् । **संज्ञा**[16]**यामुपमान**मिति सूत्रस्थभाष्यविरोधात् । तस्माद् ज्ञापकस्य सामान्यापेक्षत्वमेवोचितम् । त[17]त्र सप्तम्या यथाश्रुतत्वे हि **न लुमते**ति निषेधात्तदप्राप्तौ **ञ्नितीति प्रयोजन**मिति भाष्यासङ्गतिः स्पष्टैव । न चाङ्गाधिकारप्रतिनिर्देशपक्षे तद्भाष्यं, सि[18]द्धान्तपक्षे योजयितुं शक्यत्वादिति दिक् ॥

---

१ मुद्रितपुस्तकेषु 'चासत' इति पाठः, अप्रामाणिकः सः । **इह च**—सोर्मनसीत्यत्र । नञ्सुभ्याम् ६।२।१७२ इत्यत्रोत्तरपदस्यैव कार्यित्वम् । बहुव्रीहौ नञ्सुभ्याम्परमुत्तरपदमाद्युदात्तमिति तदर्थात् ॥

२ सोः परं मन्नन्तमसन्तं चाद्युदात्तं लोमोषसी वर्जयित्वेति तदर्थः ॥

३ **लोपेति** । अनेन स्वरितत्वादेकदेशानुवृत्तिः सूचिता ॥ छाया ॥

४ **न च**—नहि ॥ छाया ॥

५ **धर्मस्य**—लुशब्दयोगस्य ॥ छाया ॥

६ **अपिना** षाष्ठम् ॥ छाया ॥

७ **तत्सूत्रे एव**—भीह्रीति सूत्र एव ॥ छाया ॥

८ नलुमताऽङ्गस्येत्यस्य न प्राप्तिरिति भावः । ( र. ना. )

९ कित्फलं तु ज्ञापकेनापि सिध्यतीति न तदर्थमिदम् । किंतु तृतीयार्थमेवेत्याह—**ननु संज्ञायामिति** ॥ छाया ॥

१० **तत्सूत्रे-संज्ञाया**मिति सूत्रे ॥ छाया ॥

११ **अत एव**—उक्तरीत्याऽविरोधादेव ॥ **तत्र**—संज्ञायामित्यत्र ॥ छाया ॥

१२ **एवं च**—तथोक्तौ च ॥ छाया ॥

१३ कौस्तुभाद्युक्तिं खण्डयति—**एतेनेति** ॥ छाया ॥

१४ विशेषापेक्षत्वमेवाह—**सप्तम्यर्थेति** ॥ **फलभेदः**—परस्पराश्रयकार्यभेदः ॥ अस्तिच **भीह्री**त्यत्र पूर्वग्रहणाभावे तदन्तग्रहणेन प्रत्ययान्तानां तेषामलोऽन्त्यस्य भवन्नुदात्तः प्रत्ययान्तस्य स्यात्, सप्तम्यर्थपुरस्कारे तु पितमपहाय श्वादीनामेवोदात्तः स्यादिति तद्भेदः ॥ छाया ॥

१५ **रितीति** । दरिद्राधातुविषये फलभेदः ॥ **त्यादिरिति** । उभयथापि प्रकृते रादेरेवोदात्तत्वात् ॥ छाया ॥

१६ एतेनेत्यस्यार्थमाह—**संज्ञायामिति** ॥ छाया ॥

१७ तस्य तत्त्वमुपपादयति—**तत्रेति** ॥ **भीह्री**त्यत्रेत्यर्थः ॥ छाया ॥

१८ **सिद्धान्तेति** । प्रत्यये परतः पूर्वकार्यमात्रे प्रतिषेध इति पक्ष इत्यर्थः ॥ सौवरीणां सप्तमीनां तदन्तसप्तमीत्वाद् **उत्तरपदत्वे चापदादिविधा**वितिवत्, कैयटस्तूपलक्षणम् । एवमग्रिमभाष्यकैयटादिकमिति न तद्विरोध इति बोध्यम् । तदाह—**दिगिति** ॥ छाया ॥

( प्रत्याक्षेपभाष्यम् )

किमविशेषेण ?

( प्रत्याक्षेपसमाधानभाष्यम् )

नेत्याह-॥

( ३९४ आक्षेपशेषवार्तिकम् ॥ २ ॥ )

॥*॥ सर्वामन्त्रितसिज्लुक्स्वरवर्जम् ॥*॥

( भाष्यम् )

सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा ॥

( उदाहरणोपपादनभाष्यम् )

सर्वस्वर । सर्वस्तोमः[१] । "सर्वस्य सुपि" इत्याद्युदात्तत्वं यथा स्यात् ॥

( प्रदीपः ) सर्वस्तोम इति । सर्वस्य सुपीति यदाद्युदात्तत्वं तदेव च बहुव्रीहौ प्रकृत्येति विधीयत इत्येकपदस्वरो भवत्येव ॥

( उद्योतः ) षष्ठीसमासादौ परत्वात्सतिशिष्टत्वाच्च समासान्तोदात्तत्वस्यैव प्राप्तेर्भाष्ये सर्वस्तोम इति बहुव्रीहिरुदाहृतः । तत्र बहुव्रीहिस्वरस्य द्विपदाश्रयत्वात्प्रतिषेधस्यैवाप्राप्तेः कथं तदपवादे इदमुदाहरणमत आह—सर्वस्येति ॥ विधीयत इति ।[२] अपवादनिवर्तनेन व्यवस्थाप्यत इत्यर्थः ॥

( उदाहरणोपपादनभाष्यम् )

आमन्त्रितस्वर । सर्पिरागच्छ, सप्तागच्छत । "आमन्त्रितस्य च" इत्याद्युदात्तत्वं यथा स्यात् ॥

( प्रदीपः ) सर्पिरिति । सर्पिःशब्दोऽन्तोदात्तः प्रत्ययस्वरेण, घृतादित्वाद्वा । सप्तशब्दोऽपि घृतादित्वादन्तोदात्तः[३] । नित्स्वरेण त्वाद्युदात्तत्वे विशेषो न स्यात् ॥

( उद्योतः ) प्रत्ययस्वरेणेति । इसिप्रत्ययान्तत्वादिति भावः ॥ नब्विषयस्येत्यस्य तु न प्राप्तिः, अनिसन्तस्येति पर्युदासात् ॥ घृतादित्वकल्पनं तु किमर्थमिति चिन्त्यम् ॥ निस्स्वरेणेति । सप्तन्शब्दो हि सप्यशूभ्यां तुट्चेति कनिनन्तः ॥ त्रेः[४] सङ्ख्याया इत्यप्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम् ॥

( उदाहरणोपपादनभाष्यम्)

सिज्लुक्स्वर । मा हि दाताम्, मा हि धाताम् । "आदिः[५] सिचोऽन्यतरस्याम्" इत्येष स्वरो यथा स्यात् ॥

( प्रदीपः ) मा हि दातामिति । गातिस्थाघ्विति सिचो लुक्, लेरेव लुकि विधातव्ये सिचो लुग्विधानं प्रत्ययलक्षणार्थम् ॥

( उद्योतः ) मा हि दातामित्यत्राद्प्रतिषेधाय माङ् । हिशब्दो हि चेति निघातप्रतिषेधार्थः ॥ सिज्लुक्स्वरवर्जनं न कार्यमित्याह—लेरिति । गातीत्यनेन च्लेरेव[६] लुकि मन्त्रे घसेत्यत्र पुनर्लिग्रहणं न कार्यम् । जुस्विधावात इत्येतच्च विध्यर्थं स्यादिति लाघवमिति भावः ॥ प्रत्ययलक्षणार्थमिति । प्रत्ययलक्षणेन[७] सिज्निमित्तकार्यार्थमित्यर्थः ॥

( भाष्यम् )

किं प्रयोजनम् ?

( ३९५ प्रयोजनवार्तिकम् ॥ ३ ॥ )

॥*॥ प्रयोजनं ञ्निकिल्लुकि स्वराः ॥*॥

( भाष्यम् )

ञ्नित्किस्वरा लुकि प्रयोजयन्ति । गर्गाः-वत्साः-बिदाः-उर्वाः-उष्ट्रग्रीवा वामरज्जुः । "ञ्नित्यादिर्नित्यम्" इत्याद्युदात्तत्वं मा भूदिति ॥ इह च-अत्रयः । "कितः" इत्यन्तोदात्तत्वं मा भूदिति ॥

( प्रदीपः ) ञ्निकिल्लुकीति । इकार उच्चारणार्थः । ञ्नित्किताां प्रत्ययानां लुकि कृते स्वरा निवर्त्यमानतया प्रयोजनमिति पदानां संबन्धः ॥ भाष्यकारस्तु वस्त्वर्थं व्याचष्टे—ञ्नित्किस्वरा इति । प्रतिषेधमित्यध्याहारः ॥ उष्ट्रग्रीवा वामरज्जुरिति । देवपथादित्वात्कनो लुप् । असंज्ञायां चेदमुदाहरणम् । संज्ञायां तु संज्ञायामुपमानमिति भवितव्यमाद्युदात्तत्वेन ॥ अत्रय इति । राशदिभ्यां त्रिप्, 'अदेस्त्रिनिश्च' इति त्रिबन्तोऽत्रिशब्द आद्युदात्तः ॥

( उद्योतः ) ननु ञ्निकित्स्वरा इति भाष्यदर्शनाद् ञ्निकिताां स्वरविशेषणत्वेन लुका समासोऽनुपपन्न[८] इत्यत आह—ञ्नित्किताामिति ॥ प्रयोजयन्तीत्यस्य कर्माकाङ्क्षायामाह—प्रतिषेधमिति ॥ लुकिति । वार्तिके लुकीत्युपलक्षणमिति भावः ॥ भाष्ये—आद्युदात्तत्वं माभूदिति । एवं च प्रातिपदिकादिस्वरेणान्तोदात्तत्वमेवेति भावः ॥ अत्रिशब्दादितश्चानिञ इति ढकोऽत्रिभृगिवति लुक् ॥ नन्वत्रय इत्यत्र कित्त्वप्रयुक्तान्तोदात्तत्वाभावेऽपि प्रातिपदिकस्वरेण तत्त्वं दुर्वारमत आह—राशदीति ॥ त्रिबन्त इति । नान्तस्त्वन्तोदात्त इति भावः ॥ इदं प्रयोजनं कित्तद्धितान्तस्यान्त उदात्त इत्यर्थे बोध्यम् । कितः[१०] प्रत्ययस्यैवान्तोदात्तत्वे तु प्रत्ययलक्षणेन कार्यिणोऽसंपादनान्न दोषः ॥ अत[११] एव नखनिर्भिन्न इत्यैलेत्याहुः ॥

---

१ 'स्तोमः, सर्वपृष्ठः' इति क. ग. पाठः ॥

२ अपूर्वविध्यभावादाह—अपवादेति ॥ छाया ॥

३ प्रदीपं दूषयति—घृतादीति ॥ छाया ॥

४ अव्युत्पत्तावाह—त्रः इति ॥ छाया ॥

५ सिजन्तस्यादिरुदात्तो भवति वेति सूत्रार्थः ॥

६ 'स्वीकृते' इति शेषः ॥

७ प्रत्ययेति । तत्सामर्थ्यादिति भावः ॥ छाया ॥

८ ञ्निकिदिति । ञकारनकारयोरिकार उच्चारणार्थः सुदृतिथोरितिवत् ॥

९ समासः–वार्तिके ञ्निकिताां समासः ॥ छाया ॥

१० इदं दूषयति—कित इत्यादि । प्रत्ययलक्षणेन तन्निमित्तमन्यस्य कार्यमतिदिश्यते न तस्यैव स्थानित्वं प्रतिपाद्यते, असतस्तत्प्रसङ्गाभावेन स्थानित्वबाधादिति भावः ॥ छाया ॥

११ अत एव–तस्य तदभावादेव ॥ इति–इत्यादौ ॥ छाया ॥

( ३९६ प्रयोजनान्तरवार्तिकम् ॥ ४ ॥ )

## ॥*॥ पथिमथोः सर्व[1]नामस्थाने लुकि ॥*॥

( भाष्यम् )

**पथिमथोः सर्वनामस्थाने लुकि प्रयोजनम् ॥ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । पथिप्रियः, मथिप्रियः । "पथिमथोः सर्वनामस्थाने" इत्येष स्वरो मा भूदिति ॥**

( प्रदीपः ) **पथिप्रियः, मथिप्रिय इति ।** पूर्वपदप्रकृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ भवतः ॥

( उद्द्योतः ) **पथिमथिश**ब्दौ इनिप्रत्ययान्ततया प्रत्ययस्वरेण, **फिषोऽन्त** इति वाऽन्तोदात्तौ । तयोः सर्वनामस्थाननिमित्तमाद्युदात्तत्वमत्रापि स्यादित्यर्थः ॥

( ३९७ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अ[2]ह्नो रविधौ ॥ * ॥

( भाष्यम् )

**अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ॥ अहर्ददाति, अहर्भुङ्क्ते । "रोऽसुपि" इति प्रत्ययलक्षणेन प्रतिषेधो मा भूदिति ॥**

( प्रदीपः ) **अहर्ददातीति । असुपी**ति प्रसज्यप्रतिषेधः । पर्युदासे तु दीर्घाहा निदाघ इत्यत्रापि सुप्सदृशे निदाघशब्दे परतो रत्वं स्यात् । रुत्वं चेष्यते । लोपशब्देन सोर्लुप्तत्वात्प्रत्ययलक्षणेन सुपि नेति रत्वप्रतिषेधाद्रुत्वे यत्वे तस्य च लोपे दीर्घाहा निदाघ इति सिध्यति ॥ लुकि तु प्रत्ययलक्षणप्रतिषेधात् रत्वे सति उत्वाभावादहर्ददातीत्यादि सिध्यति ॥

( उद्द्योतः ) भाष्ये-**प्रतिषेधो मा भूदिति ।** ते[3]नापर्युदासत्वं सूचितम् ॥ तदुपपादयति-**पर्युदासे तु इति ।** प्रत्ययत्वेन सुप्सादृश्ये तु अहर्ददातीत्यत्रापि रत्वं न स्यादित्यर्थः ॥ नन्विष्यमाणमपि रुत्वं न प्राप्नोति, प्रत्ययलक्षणनिषेधेन रत्वस्यैव प्राप्तेरत आह—**लोपशब्देनेति ।** हल्ङ्यादिसूत्रेणेति भावः । लुमता लुप्त एव स[4] निषेध इति तात्पर्यम् ॥ न[5] **लुमता तस्मिन्नि**ति पक्षे तु नेदमावश्यकम् ॥

( ३९८ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥*॥ उत्तरपदत्वे चापदादिविधौ ॥*॥

( भाष्यम् )

**उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । परमवाचा, परमवाचे, परमगोदुहा, परमगोदुहे, परमश्वलिहा, परमश्वलिहे । पदस्येति प्रत्ययलक्षणेन कुत्वादीनि मा भूवन्निति ॥**

**अपदादिविधाविति किमर्थम् ?**

**दधिसेचौ, दधिसेचः । "सात्पदाद्योः" इति प्रतिषेधो यथा स्यात् ॥**

( प्रदीपः ) **उत्तरपदत्वे चेति ।** उत्तरपदम्-उत्तरशब्देनोच्यते, पदैकदेशलोपात् । तेनोत्तरपदस्य पदत्वे=पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः ॥ **परमवाचेति ।** समासार्था या विभक्तिः कृता, तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि प्राप्नुवन्ति । भसंज्ञा तु **यस्माद् यजादिविधिरि**ति समुदायस्यैव, न त्ववयवस्य ॥ **दधिसेचाविति ।** दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात् । अनभिधानात् सोपपदाद्विजभावाद्दधिषेचावित्यादिप्रयोगाभावात् ॥

( उद्द्योतः ) **उत्तरपदत्वे च**-इति सर्वथा कार्यम् ॥ ननु सामान्यत 'उत्तरस्य पदत्वे' इत्यर्थे 'परमं चर्म' इत्यत्रापि निषेधापत्तौ नलोपो न स्यात्, अत आह—**उत्तरपदमिति ।** अ[6]त एव **बहुच्पूर्वस्य ने**ति वचनमर्थवदिति भावः । उ[7]त्तरपदशब्दश्च समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इति बोध्यम् ॥ **समासार्थेति ।** त[8]त्र **सुप्सुपे**त्यधिकारादिति भावः ॥ **तां-सुपोधात्वि**ति लुप्ताम् ॥ **कुत्वादीनि**-कुत्वघत्वढत्वानि ॥ ननु भत्वेन पदत्वबाधोऽत आह—**यस्मादिति ।** तथा च भिन्नावधित्वान्न बाध्यबाधकभाव इति भावः ॥ भाष्ये-**पदस्येतीति ।** प[9]**दस्ये**त्यधिकृत्य यानि विहितानीत्यर्थः ॥ ननु सोपपदात्सिचेर्विंच्वि 'दधिषेचौ' इति स्यादेव । न चेष्टापत्तिः, **पदादादिरि**ति पक्षे दुर्लभत्वात्, अत आह—**अनभिधानादिति ।** त[10]स्य छान्दसत्वादिति भावः ॥

( आक्षेपभाष्यम् )

**यद्यपदादिविधावित्युच्यते, उत्तरपदाधिकारो न प्रकल्प्येत ॥**

**तत्र को दोषः ?**

**"कर्णो वर्णलक्षणात्" इत्येवमादिविधिर्न सिध्यति ॥**

( प्रदीपः ) **कर्णो वर्णलक्षणादिति ।** नन्वपदादिविधावित्युच्यते, स्वरश्चाऽयं पदादिविधिः । ककारोऽत्रादिः, न त्वकार

१ प्राग्वदाह—**फिष इति** ॥ छाया ॥

२ दोषान्तरमाह—**अह्न इति** ॥ एवमग्रेऽपि ॥ छाया ॥

३ **तेन**-प्रतिषेधपदेन ॥ छाया ॥

४ **सः**-वार्तिकोक्तः ॥ छाया ॥ ज. पुस्तके 'स' पाठो नास्ति ।

५ इदं खण्डयति—**न लुमतेति** ॥ छाया ॥

६ अत्र मानमाह—**अत एवेति** ॥ तस्य तदर्थत्वादेवेत्यर्थः ॥ छाया ॥

७ तच्च वार्तिके लुप्तषष्ठ्यन्तम् । कथं तत्रैवं सति वारणमत आह—**उत्तरेति** ॥ छाया ॥

८ **तत्र**-**विशेषण**मिति सूत्रे ॥ छाया ॥

९ यथाश्रुतासंगतेराह—**पदस्येत्येति** ॥ अग्रे तत्र तानीति शेषः ॥ छाया ॥

१० **तस्य**-विचः ॥ छाया ॥

इत्यदोषः । स्वरविधौ व्यञ्जनमविद्यमानवत्, न त्वादिव्यपदेशे । सूत्रं चासमासार्थं स्यात् । कर्णशब्दादर्शआदित्वादचि कृते 'शुक्रः कर्णः' इत्याद्युदात्तत्वं यथा स्यात् ॥

( उद्योतः ) भाष्ये-यद्यपदादीति । एकदेशेन संपूर्णं वार्तिकमुपलक्ष्यते । यतः प्रतिषेधस्यातिव्याप्तिः, न प्रतिषेधापवादस्येति बोध्यम् ॥ स्वरश्चेति । उत्तरपदादिरित्यधिकारादिति भावः ॥ नन्वसमासे स्वाङ्गशिटामिति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह—कर्णशब्दादिति ॥ एवमादिविधिर्न सिध्यतीति भाष्यादुत्तरपदादिरित्यधिकारस्थसूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके ॥

( आक्षेपबाधकन्यासान्तरभाष्यम् )

**यदि पुनः * नलोपादिविधौ लुत्यन्ते * लुमता लुप्ते प्रत्ययलक्षणं न भवतीत्युच्येत ॥**

( प्रदीपः ) यदि पुनरिति । तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम् ॥

( न्यासान्तरनिराकरणभाष्यम् )

**नैवं शक्यम् । इह हि-राजकुमार्यौ-राजकुमार्य इति शाकलं प्रसज्येत ॥**

( प्रदीपः ) राजकुमार्याविति । इकोऽसवर्ण इत्यत्रैङः पदान्तादतीत्यतः पदान्तग्रहणमनुवर्तते । तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकलप्रसङ्गः ॥

( न्यासान्तरसाधकभाष्यम् )

**नैष दोषः । यदेतत्—*सिति शाकलं न* इति, एतत्—*प्रत्यये शाकलं न*इति वक्ष्यामि ॥**

( आक्षेपभाष्यम् )

**यदि "प्रत्यये शाकलं न" इत्युच्यते, 'दधि अधुना-मधु अधुना' अत्राऽपि न प्रसज्येत ॥**

( प्रदीपः ) दधि अधुनेति । अधुनाप्रत्यय इदमो विधीयते । तत इदम इश् । यस्येति चेति लोपः ॥

( निराकरणभाष्यम् )

**प्रत्यये शाकलं न भवति ।**

**कतरस्मिन् ?**

**यस्माद्यः प्रत्ययो विहित इति ॥**

( प्रदीपः ) यस्माद्य इति । प्रत्यासत्त्येति भावः ॥ राजकुमार्याविलत्र यद्यपि समुदायाद्विहितः, तथाप्यवयवादप्यसौ विहित इति बुद्धिर्भवत्येव । समुदायद्विर्वचनेऽवयवद्विर्वचनबुद्धिवत् ॥

( उद्योतः ) प्रत्यासत्त्येति । प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरित्युपस्थित्येति भावः ॥ तथापीति । वस्तुतो राजकुमार्याविलत्रापि दोषः, समुदायादसौ विहितो नावयवात् । अन्यथा 'कौरुचरेयः' इत्यादौ चकाराकारस्यापि वृद्धिः स्यात् ॥ इह तर्हीत्यादिभाष्यं तु अभ्युपेत्यवादेन । लुतेरग्रे तु न उत्तरपदत्वेचेत्यस्य प्रवृत्तिः । अत एव पूर्वत्रैव दोषेणेदं दूषितं भगवतेति बोध्यम् ॥ ङमो ह्रस्वादिति सूत्रस्थभाष्यं त्वेकदेश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः ॥

( आक्षेपभाष्यम् )

**इह तर्हि-परमदिवा, परमदिवे । "दिव उत्" इत्युत्त्वं प्राप्नोति ॥**

( प्रदीपः ) उत्त्वमिति । उत्त्वविधावेङः पदान्तादिति पदाधिकारः ॥

( विशेषानभ्युपगमभाष्यम् )

**अस्तु तर्ह्यविशेषेण ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—उत्तरपदाधिकारो न प्रकल्पेतेति ॥**

( परिहारभाष्यम् )

**वचनादुत्तरपदाधिकारो भविष्यति ॥**

( प्रदीपः ) वचनादिति । समासे सति उत्तरपदं भवति । न च कर्णशब्दोऽचूप्रत्ययान्तोऽस्ति, अर्शआदिषु हि स्वाङ्गाद्धीनादिति पठ्यते । तेन खञ्जादिभ्य एव हीनस्वाङ्गवाचिभ्यो भवति । न च कर्णशब्दो हीनस्वाङ्गवाची ॥

( उद्योतः ) समासचरमावयवे उत्तरपदशब्दो रूढ इत्यभिप्रेत्याह—समासे हीति । न तु पदत्वमपि तद्व्यवहारे प्रयोजकमित्यर्थः ॥ केवलरूढत्वे मानमुक्तम्, तुष्यतुदुर्जनन्यायेन केवलयोगेऽप्याह—न च कर्णेति । राजवाचककर्णशब्दस्य तु अभिव्यक्तपदार्था ये इति न्यायान्न तत्र ग्रहणमिति भावः ॥ काश्यपिनाविलादौ छन्दोब्राह्मणानीति तद्विषयताबोधकशास्त्रबलात् सुबुत्पत्तेः प्रागेव तद्धित इति न दोषः ॥

---

१ अर्श इति । तथाचात्रास्वाङ्गवाचित्वमिति तेनासिद्धिः ॥ छाया ॥

२ कैयटं दूषयन्नन्यथा भाष्याशयमाह—एवमादीति ॥ छाया ॥

३ लुत्यन्ते बहुव्रीहिर्विधेर्विशेषणम् ॥ छाया ॥

४ पूर्वस्मिन्—उत्तरपदाद्युदात्तत्वे ॥ छाया ॥ परत्र च—परत्वप्रतिषेधे ॥ कुत्वादिकं तु तदन्तःपात्येवेति न दोषः ॥

५ प्रत्यासत्तौ बीजमाह—प्रत्ययेति ॥ छाया ॥

६ कैयटं दूषयति—वस्तुत इति ॥ छाया ॥

७ तथोक्तौ दोषमाह—अन्यथेति ॥ तथाङ्गीकारे इत्यर्थः ॥ छाया ॥

८ स्यादिति । इति बोध्यमिति शेषः । नन्वेवमग्रिमभाष्यासंगतिरत आह—इहेति ॥ छाया ॥

९ भाष्यगूढाकूतमाह—लुतेरिति ॥ छाया ॥

१० नन्वेवं ङम इत्यत्रानया ङमुड्वारणं भाष्योक्तमयुक्तमत आह—ङम इति ॥

११ 'समासे ह्युत्तर' इति छ. पाठः ॥

१२ 'भ्योऽच्प्रत्ययो भव' इति च. छ. पाठः ॥

१३ अन्यत्र चारितार्थ्यं निराचष्टे—राजेति ॥ छाया ॥

१४ सुबुत्पत्त्युत्तरं तु वैरूप्येण तद्विषयत्वमेव न स्यादिति भावः । न दोषः—अन्तर्वर्तिविभक्त्या पदत्वमाश्रित्य नलोपापत्तिरूपो दोषो नेत्यर्थः । ( र. ना. )

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

( प्रदीपः ) **तत्तर्हीति । उत्तरपदत्वे चापदादिविधा**वित्येतत् ॥

( समाधानभाष्यम् )

**न वक्तव्यम् । अनुवृत्तिः करिष्यते । इदमस्ति— "यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्", "सुप्तिङन्तं पदम्", यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं च ॥ "नः क्ये" नान्तं क्ये पदसंज्ञं भवति, यस्मात् क्यविधिस्तदादि सुबन्तं च ॥ "सिति च", सिति पूर्वं पदसंज्ञं भवति, यस्मात्सिद्विधिस्तदादि सुबन्तं च ॥ "स्वादिष्वसर्वनामस्थाने", स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति, यस्मात्स्वादिविधिस्तदादि सुबन्तं च ॥ "यचि भम्", यजादिप्रत्यये पूर्वं भं भवति, यस्माद्यजादिविधिस्तदादि सुबन्तं च ॥**

( प्रदीपः ) **यचि भमिति ।** ततश्च परमवाचेत्यत्र वाक्शब्दस्य भत्वात्पदत्वाभावः ॥

( उद्योतः ) भाष्ये—**नः क्ये** इत्यादि-**तदादिसुबन्तं चेति । यस्मात्प्रत्ययविधि**रिति अवश्यमुत्तरत्र[1]ानुवर्त्यम्, परमैश्चतुर्भिरित्यादौ परमघटितसमुदायस्य पदत्ववारणाय । तत्त्वे[2] हि **झल्युपोत्तम**मिति परमैरित्यस्यापि निघातापत्तिः । एवं च[3] तस्य **नः क्ये** इत्यत्रापि संबन्धे यस्मात् क्यविधिस्तदादि । यदि क्ये तन्निमित्तान्तर्वर्तिसुपा पदं तदा नान्तमेवेति नियमः स्यात् । तथा च 'परमवाच्यति' इत्यादावयववाक्शब्दस्य पदत्वेन कुत्वं स्यात् । सूत्रं तु 'समिध्यति' इत्येतद्व्यावृत्त्यर्थं स्वादिति सुबन्तमित्यपि संबध्यत इति भावः । तस्य च मध्ये चेत् सुबन्तं तदा तदपि नान्तमेव पदमित्यर्थः ॥ अन्वाचयशिष्टं[4] च सुबन्तमिति सर्वत्र । संनियोगशिष्टत्वे 'षड्भ्यः' इत्याद्यसिद्धिः ॥ **सिति चे**त्यत्र यद्यपि नास्योपयोगः, अवयवसुबन्ताप्रसिद्धेः; तथापि उत्तरत्रानुवृत्तिं दर्शयितुं तत्रापि तत्संबन्धो दर्शितः । व्यपदेशिवद्भावेन[5] कथंचिदन्वयः संपाद्यः । एवं **स्वादिष्विति** सूत्रेऽपि तदनुवृत्तिकरणमुत्तरार्थमेव । **यचि भ**मित्यत्रापि[6] पदसंज्ञया तुल्यावधिकत्वसिद्ध्यर्थं **यस्मा**दित्याद्यनुवर्त्यमिति बोध्यम् ॥

( आक्षेपभाष्यम् )

**इह तर्हि-परमवाक् । 'असर्वनामस्थाने' इति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) **इह तर्हीति ।** 'असर्वनामस्थाने' इति प्रसज्यप्रतिषेधं मन्यते । ततश्च सर्वनामस्थाने परतो यस्मात् स्वादिविधिस्तदादि सुबन्तं च पदसंज्ञं न भवतीति प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् पदत्वप्रतिषेधात् कुत्वाप्राप्तिः ॥

( समाधानभाष्यम् )

**अस्तु तस्याः प्रतिषेधः—या स्वादौ पदमिति पदसंज्ञा । या तु सुबन्तं पदमिति पदसंज्ञा सा भविष्यति ॥**

( आक्षेपभाष्यम् )

**सत्येतत्प्रत्यय आसीत्—अनया भविष्यत्यनया न भविष्यतीति ॥ लुप्त इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा, तावत एवावधेः सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन सर्वनामस्थानपरतेति कृत्वा 'प्रतिषेधाश्च बलीयांसो भवन्ति' इति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) **सत्येतदिति ।** अवधिभेदात्संज्ञिनां भेदात् ॥ **बलीयांस इति ।** विध्युन्मूलनरूपत्वात् ॥

( उद्योतः ) **संज्ञिनां भेदादिति ।** सति सौ तदन्तस्य **सुबन्त**मिति पदत्वम्, तत्प्राग्भागस्य **स्वादिष्वि**तीति भावः ॥ ननु अपरनिमित्तकत्वेनान्तरङ्गतया सुबन्तमिति पदत्वं स्यादत आह भाष्ये—**प्रतिषेधाश्चेति । विध्युन्मूलनम्**—प्राप्तस्य विधेर्निवर्तनम् ॥ एवं चापवादन्यायेनात्रान्तरङ्गासंभव इति भावः ॥ अत्रानुवर्तमानं[7] **सुबन्त**मित्यपि **स्वादिष्विति** सूत्रेण तदनुवृत्त्या[8] मध्यस्य सुबन्तस्य यत्प्राप्तं तन्निषेधकम्, न तु **सुबन्त**मितिसूत्रप्राप्तस्येति बोध्यम् ॥

( समाधाने भाष्यवार्तिकम् )

***॥ नाप्रतिषेधात् ॥***

( भाष्यम् )

**नायं प्रसज्यप्रतिषेधः—सर्वनामस्थाने नेति । किं तर्हि ? पर्युदासोऽयम्—यदन्यत्सर्वनामस्थानादिति । सर्वनामस्थाने अव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति ॥**

( समाधाने भाष्यवार्तिकम् )

***॥ अप्राप्तेर्वा ॥***

( भाष्यम् )

**अथवा—अनन्तरा या प्राप्तिः सा प्रतिषिध्यते ।**

---

१ **उत्तरत्र**—सुप्तिङन्तमित्यत्र ॥ छाया ॥

२ **तत्त्वे हि**—पदत्वे हि ॥ छाया ॥

३ **एवं च**—तत्रानुवृत्तौ च ॥ छाया ॥

४ **अन्वाचयेति ।** समुदायस्य संज्ञा सर्वत्र मुख्या, अवयवस्य त्वन्वाचयशिष्टा, **कर्तुः क्यङि**ति क्यङ्सलोपाविव । तेन केवलेऽपि भवति तत्सत्त्वे उभयोरपीति भावः । अन्यथा केवले न स्यादित्याह—**संनियोगेति** ॥ छाया ॥

५ ननु दर्शितोऽपि दुर्वचोऽत आह—**व्यपेति** ॥ छाया ॥

६ **अत्र**—यचिभमित्यत्र ॥ छाया ॥

७ **तदेति ।** सुबन्तमित्यनुवृत्त्येत्यर्थः ॥ छाया ॥

८ इत आरभ्य **'वाक्यपदयोरन्त्यस्येत्येवं तत्'** इत्यन्तः पाठोऽग्रे **'स्वादिष्वसर्वनामस्थाने'** इति सूत्रेऽप्यायास्यतीति तत्रत्या प्रदीपादिव्याख्या यथासंभवमत्र समन्वेया ॥ ( दा॰ म॰ )

कुत एतत् ?

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति ॥**

( आक्षेपभाष्यम् )

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥**

( समाधानभाष्यम् )

**नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥**

( उद्द्योतः ) भाष्ये—**नोत्सहत इति** । स्वयमप्रवर्तमाना कथमन्यं बाधेतेति भावः ॥

( आक्षेपभाष्यम् )

**यद्येवं, परमवाचौ-परमवाच इति "सुप्तिङन्तं पदम्" इति पदसंज्ञा प्राप्नोति ॥**

( समाधानभाष्यम् )

**एवं तर्हि योगविभागः करिष्यते—"स्वादिषु" पूर्वं पदसंज्ञं भवति ॥ ततः—"सर्वनामस्थाने अयचि" पूर्वं पदसंज्ञं भवति ॥ ततो—"भम्" संज्ञं[1] भवति यजादावसर्वनामस्थान इति ॥**

( प्रदीपः ) **एवं तर्हीति** । योगविभागे सति सर्वा प्राप्तिः प्रतिषिद्ध्यत इति दोषाभावः ॥ 'असर्वनामस्थाने'[2] इति नञः क्रियापदेन सम्बन्धादुत्तरपदेनासम्बन्धः, यचीत्येतच्च सर्वनामस्थानविशेषणम् । तेनायमर्थो भवति—यजादौ सर्वनामस्थाने परतः पदसंज्ञा न भवतीति । हलादौ तु सुशब्दे भवत्येव । भाष्ये तु वस्तुमात्रमुपन्यस्तम्—**सर्वनामस्थाने अयचीति** । यजादौ सर्वनामस्थाने पदसंज्ञाया निषेधात्सामर्थ्यादयमर्थः संपद्यते—अयजादौ सर्वनामस्थाने पदसंज्ञा भवतीति ॥

( उद्द्योतः ) ननु **सर्वनामस्थानेऽयचीति** न्यासस्य पदत्वनिषेधकत्वेऽनन्तरस्येति न्यायेन **स्वादिष्वि**त्यस्यैव निषेधे परमवाचावित्यादौ **सुबन्तमिति** पदत्वं स्यादत आह—**योगविभागे इति** । एवं[3] च तत्सामर्थ्यादनन्तरस्येति न्यायबाध इति भावः ॥ **यचीत्यस्य** पुरस्तादपकर्षे फलमाह—**हलादाविति** । **वस्तुमात्रम्**—अर्थसिद्धोऽर्थः । तत्फलं नञः सर्वनामस्थानपदेनासंबन्धप्रदर्शनम् ॥

( आक्षेपभाष्यम् )

**यदि तर्हि—सावपि पदं भवति, एचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति, इह मा भूत्—भद्रं करोषि गौरिति । तस्मिन् क्रियमाणेऽपि प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये—**प्लुतविकारे इति** । प्लुतसहितविकारे इत्यर्थः । एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुताविल्यत्रेति भावः ॥

( समाधानभाष्यम् )

**वाक्यपदयोरन्त्यस्येत्येवं तत् ॥**

( प्रदीपः ) **वाक्यपदयोरिति** । गौरित्यौकारो वाक्यान्तो[4] न भवतीत्यदुतौ[5] न भवतः ॥

( आक्षेपभाष्यम् )

**इह तर्हि—दधिसेचौ-दधिसेचः-इति "सात्पदाद्योः" इति पदादिलक्षणः षत्वप्रतिषेधो न प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये—**इह तर्हीति**[6] । वार्तिकारम्भे तु अपदादिविधावित्युक्तेर्न दोषः ॥ प्रत्याख्याने तु दोषः । कुत्वाभावाय पदत्वनिषेधप्रवृत्तेरावश्यकत्वात् । एतेन योगविभागसिद्धस्य काचित्कत्वान्न दोष इत्यपास्तमिति भावः ॥

( समाधानभाष्यम् )

**मा भूदेवम्—पदस्यादिः - पदादिः, पदादेर्नेति ॥**

**कथं तर्हि ?**

**पदादादिः-पदादिः, पदादेर्नेत्येवं भविष्यति ॥**

( प्रदीपः ) **पदादादिरिति** । **पञ्चमी**ति योगविभागात्समासः ॥

( उद्द्योतः ) **पञ्चमीति योगविभागादिति** । पदादित्यस्य[7] परशब्दान्वयेनासामर्थ्यादत्र समासशास्त्राप्राप्तेः सौत्रः समास इति वक्तुमुचितम् ॥

( आक्षेपभाष्यम् )

**नैवं शक्यम् । इहापि प्रसज्येत—ऋक्षु - वाक्षु - त्वक्षु-कुमारीषु-किशोरीष्विति ॥**[8]

( समाधानभाष्यम् )

**सात्प्रतिषेधो ज्ञापकः—स्वादिषु पदत्वेन येषां पदसंज्ञा, न तेभ्यः प्रतिषेधो भवतीति ॥**

( उद्द्योतः ) भाष्ये—**न तेभ्यः प्रतिषेध इति** । तेभ्यः परस्य **सुबन्तं पद**मिति पदत्वमाश्रित्यापि न प्रतिषेध इत्यर्थः ॥ अत[9] एव परमवाक्षु इत्यादावपि न दोषः ॥

१ 'भम्' भसंज्ञं' इति क. ग. छ. पाठः ॥

२ ननु '**असर्वनामस्थाने यचि**' इत्यस्य सत्त्वेन कथं नञो व्युत्क्रमोऽत आह—**असर्वेति** ॥ अत एवोत्कृष्यान्यत्र निवेशिताः ॥ छाया ॥

३ **एवं च**–योगविभागे च । **तत्सामर्थ्यात्**–योगविभागसामर्थ्यात् ॥ छाया ॥

४ **वाक्यान्त इति** । पदान्तत्वेऽपीत्यादि । तथा च वाक्यपदावश्यकत्वात्पदपदमकिंचित्करमिति भावः ॥ छाया ॥

५ 'भवतीत्यादुतौ' इति क. ग. च. पाठः ॥

६ योगविभागेऽपि दोषमाह—**इह तर्हीति** ॥ छाया ॥

७ कैयटादिकं दूषयति—**पदादिति** ॥ योगविभागस्य भाष्यानारूढत्वमौचित्ये हेतुः ॥ छाया ॥

८ **अपि**ना स्वादिष्विति पदत्वम् ॥ छाया ॥

९ एवमर्थस्य फलमाह—**अत एवेति** । ईदृशार्थदेवेत्यर्थः ॥ **अपि**ना केवलसमुच्चयः ॥ छाया ॥

( आक्षेपभाष्यम् )

इह तर्हि—'बहुसेचौ, बहुसेचः' बहुजयं प्रत्ययः। अत्र पदादादिः-पदादिः, पदादेर्नेत्युच्यमानेऽपि न सिध्यति ॥

( उद्द्योतः ) भाष्ये—पदादादेर्नेत्युच्यमानेऽपीति । षष्ठीतत्पुरुषेऽपि न सिध्यति, कुत्वाभावाय पदत्वाभावस्यावश्यकत्वात्—इति अपेरर्थः । अयं बहुसेचि दोषो वार्तिकारम्भेऽपि, उत्तरपदत्वाभावेन निषेधाप्राप्त्या पदत्वसत्त्वेन षष्ठीतत्पुरुषेण षत्वनिषेधसाम्राज्येऽपि कुत्वप्राप्तेः ॥

( वार्तिकन्यासान्तरेण समाधानभाष्यम् )

एवं तर्हि—

( वार्तिकन्यासभाष्यम् )

*॥ "उत्तरपदत्वे च पदादिविधौ ॥*

( भाष्यम् )

लुमता लुप्ते प्रत्ययलक्षणं भवति" इति वक्ष्यामि, तन्नियमार्थं भविष्यति—पदादिविधावेव, न पदान्तविधाविति ॥

( उद्द्योतः ) इदानीं प्रत्याख्यानप्रकारस्य गौरवदुर्ज्ञेयत्वाभ्यामयुक्तत्वं मनसि निधाय लाघवाय नञ्रहितवचनपाठमाह—एवं तर्हीति ॥ न पदान्तविधाविति । पदान्तस्थानिके विधावित्यर्थः ॥ नञ्घटितवार्तिकस्याप्यत्रैव प्रवृत्तिर्व्याख्यानादेतदेकफलत्वायेति बोध्यम् ॥

( आक्षेपभाष्यम् )

कथं—बहुसेचौ - बहुसेचः - इति ?

( प्रदीपः ) कथं बहुसेचाविति । समासाभावान्नोत्तरस्य पदत्वम्, नापि पूर्वस्य पदत्वम् ॥

( उद्द्योतः ) एतावताऽपि बहुसेचावित्यस्यासिद्धिरिति शङ्कते—कथं बहुसेचाविति ॥ तदुपपादयति—समासेति । एवं च नियमाप्राप्तौ प्रत्ययलक्षणेन पदत्वात् षत्वनिषेधवत् चोः कुः पदान्तस्येति कुत्वं स्यादिति भावः ॥ पञ्चमीसमासेऽपि षत्वापत्तिरित्याह—नापि पूर्वस्येति ॥

( ३९९ समाधानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ बहुच्पूर्वस्य च ॥ * ॥

( भाष्यम् )

बहुच्पूर्वस्य[1] च पदादिविधावेव, न पदान्तविधाविति ॥

( उद्द्योतः ) भाष्ये—बहुच्पूर्वस्य चेति । आद्यवार्तिकारम्भे तत्प्रत्याख्याने च सात्पदाद्योरित्यत्रेदं कार्यमिति गूढ आशयः ॥

न पदान्तविधाविति प्रतिनिर्देशादुत्तरपदत्वेचेत्यस्य वार्तिकस्य ङमुडादिविधौ णत्वादिविधौ चाप्रवृत्तिरिति बोध्यम् । ङमुट्सूत्रस्थभाष्यं त्वेतद्विरोधाद् उञि च पद इति सूत्रभाष्यविरोधाच्च नलोपादि - लुप्यन्त इति वार्तिकस्थभाष्यविरोधाच्चैकदेश्युक्तिरिति बोध्यम् । एवं च प्रत्याख्यानप्रकारोऽपि योगविभागस्य क्वाचित्कत्वेन ङमुडादिविषये न । इदमेव ध्वनयितुं प्रत्याख्यातमपि वार्तिकं पुनरक्षरान्तरै रुपात्तमित्याहुः ॥

( ४०० आक्षेपवार्तिकम् ॥ ९ ॥ )

॥ * ॥ द्वन्द्वेऽन्त्यस्य[3] ॥ * ॥

( भाष्यम् )

द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । वाक्स्रक्त्वचम्[4] ॥

( प्रदीपः ) द्वन्द्वेऽन्त्यस्येति । उत्तरपदत्वे चेत्यनेनैव सिद्धे नियमार्थमिदम्—अन्त्यस्यैव - इति, मध्यमपदस्यापि पूर्वपदापेक्षयोत्तरपदत्वसंभवात्प्रत्ययलक्षणप्रतिषेधप्रसङ्गात् । मुख्ये तूत्तरपदे संभवति कथं मध्यमस्य ग्रहणं स्यादिति चिन्त्यमेतत् ॥

( उद्द्योतः ) मुख्ये त्विति । उत्तरपदशब्दस्य समासचरमावयवे रूढेरिति भावः ॥ रूढस्यैव[5] ग्रहणमित्येतदन्वाख्यापकं द्वन्द्वे चेति इति तत्त्वम् । प्रत्याख्यानेऽपि[6] न मध्यमस्य प्राप्तिः, मध्यसुबन्तस्यापि स्वादिपरत्वेन विशेषणात् - इति बोध्यम् ॥

( आक्षेपभाष्यम् )

इह—अभूवन्निति प्रत्ययलक्षणेन जुस्भावः[7] प्राप्नोति ॥

( ४०१ समाधानवार्तिकम् ॥ १० ॥ )

॥ * ॥ सिचि जुसोऽप्रसङ्ग आकारप्रकरणात् ॥ * ॥

( भाष्यम् )

सिचि सिज्निमित्तस्य जुसोऽप्रसङ्गः ॥

किं कारणम् ?

'आकारप्रकरणात्' । 'आतः' इत्येतन्नियमार्थं भविष्यति—आत एव च सिज्लुगन्तात्, नान्यस्मात्सिज्लुगन्तादिति ॥

---

१ अयं दोषो न प्राग्वदित्याह—अयमिति ॥ छाया ॥

२ इयं व्याख्या न्यासान्तरव्याख्यावेशेन । वस्तुतस्तु बहुच्पूर्वस्यापदादिविधौ प्रत्ययलक्षणं नेत्येवार्थः ॥ दाधिमथाः । वस्तुतस्तु उद्योतप्रकटितगूढाशयानुसारेण सात्पदाद्योरितिसूत्रविषये एतद्वार्तिककरणादियमेव व्याख्या न्याय्या ॥

३ उत्तरपदत्वे चापदादिविधाविति वार्तिकस्वीकारेऽपि वाक्त्वक्स्रजमित्यादौ त्वक्शब्दस्य पूर्वापेक्षयोत्तरत्वात्तत्र प्रत्ययलक्षणप्रतिषेधः प्राप्नोति, तद्वारणायाह—द्वन्द्वेऽन्त्यस्येति ॥ प्रत्याख्याने तु नायं दोष, इत्याहोद्योते—प्रत्याख्यानेऽपीति ॥

४ 'वाक् च स्रक् च त्वक् च—वाक्स्रक्त्वचम्' इति मुद्रितपाठः ॥

५ कैयटादिकं दूषयन्भाष्याशयमाह—रूढस्यैवेति ॥ 'अन्वाख्यापकं द्वन्द्वे चेतीति तत्त्वम्' इत्यत्र 'अन्वाख्यापकं द्वन्द्वे इति चेतितत्त्वम्' इत्यन्वयः । चकारः पूर्वापेक्षया समुच्चायकः ॥

६ विरोधमारम्भप्रत्याख्यानयोः परिहरति—प्रत्येति ॥ छाया ॥

७ जुस्भाव इति । अस्याङ्गाधिकारस्थत्वाभावेन अङ्गस्थानिकत्वाभावेन च प्रत्ययलक्षणनिषेधाप्राप्त्येति भावः ॥

( प्रदीपः ) **आकारप्रकरणादिति** । आकारस्य नियमार्थत्वेन प्रस्तावादित्यर्थः । अथवाऽऽकारे प्रकरणात्—**आत** इत्यत्र सिचः प्रकृतत्वादित्यर्थः ॥

( उद्द्योतः ) प्रस्तावादिति । आत इत्यस्यारम्भादित्यर्थः ॥ **सिच इति** । अनेन विधित्वासंभवो दर्शितः ॥

( आक्षेपभाष्यम् )

**इह—इति युष्मत्पुत्रो ददाति-इत्यस्मत्पुत्रो ददातीत्यत्र प्रत्ययलक्षणेन युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावादयः प्राप्नुवन्ति ॥**

( प्रदीपः ) **इति युष्मत्पुत्र इति** । पदादुत्तरयोर्युष्मदस्मदोरादेशविधानादितिशब्दप्रयोगः ॥

( समाधाने भाष्यवार्तिकम् )

***॥ युष्मदस्मदोः स्थग्रहणात् ॥***

( भाष्यम् )

**स्थग्रहणं तत्र क्रियते, तत् श्रूयमाणविभक्तिविशेषणं विज्ञास्यते ॥**

( प्रदीपः ) **श्रूयमाणविभक्तिविशेषणमिति । षष्ठीचतुर्थीद्वितीयास्वित्येव** सिद्धे स्थग्रहणे सत्ययमर्थो भवति—तासु ये त्ववस्थिते युष्मदस्मदी इति । श्रूयमाणासु चावस्थानं सम्भवति । न तु लुप्तासु, लुप्तस्याधारत्वासंभवात्[1] ॥

( उद्द्योतः ) भाष्ये—**श्रूयमाणेति** । श्रूयमाणत्वार्थकं विभक्तिविशेषणमित्यर्थः ॥ तल्लाभायोपायं दर्शयति—**षष्ठीत्यादि** ॥

( समाधानबाधकभाष्यम् )

**अस्त्यन्यत्स्थग्रहणस्य प्रयोजनम् ॥**

**किम् ?**

**सविभक्तिकस्य वान्नावादयो यथा स्युरिति ॥**

( प्रदीपः ) **अस्त्यन्यदिति** । तिष्ठतिरहानावपि वर्तते ॥ यथा—तपसि स्थितः, तपो न जहातीत्यर्थः । तथाच—समये तिष्ठ सुग्रीव[2], समयं मा हासीरित्यर्थः । तेन सति स्थग्रहणे तत्सहितयोः कार्यं विज्ञायते ॥ अथवा यथा रथस्थ आनीयतामिति सरथ आनीयते, तथा षष्ठ्यादिसहितयोर्युष्मदस्मदोः कार्यं भवतीति विज्ञायते ॥

( उद्द्योतः ) **अथवा यथा रथस्थेति** । स्थशब्दः साहित्यवाचीति भावः ॥

( समाधानसाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । पदस्येति वर्तते । विभक्त्यन्तं च पदम् । तत्राऽन्तरेणापि स्थग्रहणं सविभक्तिकस्यैव भविष्यन्ति ॥**

( प्रदीपः ) **पदस्येति वर्तत इति** । केवलयोः पदत्वाभावात्तदवयवं पदं गृह्यत इति भावः ॥

( उद्द्योतः ) तदवयवमिति । बहुव्रीहिः । युष्मदस्मदोरिति[3] तद्धटितसमुदाये लाक्षणिकमिति भावः ॥

( समाधानबाधकभाष्यम् )

**भवेत्सिद्धम्—यत्र विभक्त्यन्तं पदम् । यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति—ग्रामो वां[4] दीयते, जनपदो वां दीयते, ग्रामो नौ दीयते, जनपदो नौ दीयते ॥**

( प्रदीपः ) **यत्र त्विति** । अत्र हि ते एव[5] पदे इति तयोरेवादेशप्रसङ्गः ॥

( उद्द्योतः ) मुख्येऽर्थ एव पदसामानाधिकरण्ये संभवति किं लक्षणयेत्याह—**अत्र हीति** ॥

( समाधानसाधकभाष्यम् )

**सर्वग्रहणमपि प्रकृतमनुवर्तते । तेन सविभक्तिकस्यैव भविष्यति ॥**

( प्रदीपः ) **सर्वग्रहणमपीति** । अनेकाल्त्वात्सर्वादेशत्वे लब्धे सर्वग्रहणमनुवृत्तं षष्ठ्यन्तं विपरिणम्यमानं सर्वस्य प्रयोगार्हस्य विभक्त्यन्तस्य स्थानित्वमवगमयतीत्यर्थः ॥

( उद्द्योतः ) यद्यपि द्वितीयायां षष्ठ्यां च तयोः पदत्वासंभवेन तत्र लक्षणाया आवश्यकत्वेनान्यत्राप्येकरूपत्वाय[6] लक्षणा युक्ता, तथापि **पदस्ये**त्यस्य **मादुपधाया** इत्यादाववयवषष्ठीत्वस्य क्लृप्ततया पदावयवयोरित्यर्थ एव स्यादत ईदृशलक्षणालाभः सर्वग्रहणसाध्य एवेत्याह—**सर्वग्रहणमिति** । अनुदात्तं सर्वमित्यतः[7] ॥

( आक्षेपभाष्यम् )

**इह—चक्षुष्कामं याजयांचकार[8]—इति "तिङ्ङतिङः" इति तस्य च निघातः, तस्माच्चानिघातः प्राप्नोति ॥**

( प्रदीपः ) **याजयांचकारेति** । परत्वात्तिबादिषु कृतेषु **आम** इति लुकि प्रत्ययलक्षणेन याजयामित्यस्य तिङन्तत्वमिति पूर्वः पक्षः ॥

( उद्द्योतः ) ननु लावस्थायामेव **अन्तरङ्गानपी**ति न्यायेन लुकि प्रत्ययलक्षणेनापि न तिङन्तत्वमत आह—**परत्वादिति** ॥

---

१ **आधारत्वेति** । सामीपिकाधारत्वेत्यर्थः ॥ छाया ॥

२ 'सुग्रीवेति' इति क. ग. पाठः ॥

३ ननु तथापि कथमुक्तार्थलाभोऽत आह—**युष्मदिति** ॥ छाया ॥

४ **ग्रामोवामिति** । अत्र वामिति चतुर्थीद्विवचनम्, तस्मिन् भ्यामि परतः पूर्वस्य पदत्वसत्वात्तत्र विभक्त्यन्तस्यादेशा न भविष्यन्तीति दोषः ॥

५ **ते एव**—युष्मदस्मच्छब्दौ प्रकृतिभागावेव ॥

६ **अन्यत्रापि**—चतुर्थ्यामपि ॥ छाया ॥

७ **सर्वस्ये**ति तु द्वे इत्यनेनैव संबद्धमत आह—**अनुदात्तमिति** ॥ छाया ॥

८ **याजयामिति** । आमन्तस्य प्रत्ययलक्षणेन तिङन्तत्वात् तस्य निघातः प्राप्नोति । ततः परस्य चकारेत्यस्य तिङन्तापेक्षया परत्वात् निघातो न प्राप्नुयादिति भावः । अन्तरङ्गानपि विधीन्बहिरङ्गो लुक् बाधत इति तिबादेशात्प्रागेव लेर्लुगिति न प्रत्ययलक्षणेनापि तिङन्तत्वमिति समाधानवार्तिकाशयः ॥

( ४०२ समाधानवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ आमि लिलोपात्तस्य चानिघातस्तस्माच निघातः ॥ * ॥**

( भाष्यम् )

**आमि लिलोपात्तस्य चानिघातः, तस्माच्च निघातः सिद्धो भविष्यति ॥**

( प्रदीपः ) **आमि लिलोपादिति** । नाप्राप्तेषु तिबादिषु लुगारभ्यमाणस्तेषां बाधकः ॥

( उद्द्योतः ) नाप्राप्तेष्विति । अन्तरङ्गानपीति न्यायादित्यपि बोध्यम् ॥

( अङ्गशब्दवाच्यार्थनिरूपणम् )

( ४०३ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥*॥ अङ्गाधिकार इटो विधिप्रतिषेधौ ॥*॥**

( भाष्यम् )

**अङ्गाधिकारे इटो विधिप्रतिषेधौ न सिध्यतः ॥ जिगमिष, संविवृत्स । अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः ॥**

( प्रदीपः ) **अङ्गाधिकार इति** । अङ्गस्येति स्वर्यते, तेनाङ्गाधिकारविहितं यत् कार्यं तल्लुमता लुप्ते प्रत्यये न भवतीति सूत्रार्थे दोषोपन्यासः ॥ **जिगमिषेति** । अतो हेरिति लुकि कृते **गमेरिट् परस्मैपदेष्वितीट्** न प्राप्नोति ॥ **संविवृत्सेति । न वृद्भ्यश्चतुर्भ्य** इतीट्प्रतिषेधः ॥

(उद्द्योतः) **इट्प्रतिषेध इति** । अत्र 'न प्राप्नोति' इत्यनुषङ्गः ॥

( आक्षेपे भाष्यवार्तिकम् )

**॥*॥ क्रमेर्दीर्घत्वं च ॥*॥**

( उद्द्योतः ) दीर्घत्वं—**क्रमः परस्मैपदेष्विति** ॥

( प्रश्नभाष्यम् )

**किं च ?**

(प्रदीपः) **क्रमेरिति** कार्यसमीपे श्रूयमाणश्चकारः कार्यमेव समुच्चिनुयादित्यभिप्रायेणाह—**किं चेति** ॥

( उद्द्योतः ) **समुच्चिनुयादिति** । तच्चासंभवीति शेषः ॥ **इत्यभिप्रायेणेति** । प्रश्न इत्यर्थः ॥

( एकदेशिसमाधानभाष्यम् )

**इटश्च विधिप्रतिषेधौ ॥**

( उद्द्योतः ) भाष्ये तटस्थः-अभिप्रायानभिज्ञ उत्तरयति—**इटश्चेति** ॥

( सिद्धान्तिभाष्यम् )

**नेत्याह । अदेशोऽयं चः पठितः । क्रमेश्च[1] दीर्घत्वम् । उत्क्राम - संक्रामेति ॥**

( प्रदीपः ) **अदेश इति** । कार्यस्य समुच्चेतव्यस्याभावात्सामर्थ्यात्प्रकृतिसमुच्चय इत्यर्थः ॥

( उद्द्योतः ) आचार्य आह—**नेत्याहेति** । गम इड्विधिः, वृतेस्तत्प्रतिषेधः, क्रमेश्च दीर्घत्वं न सिध्यतीत्यर्थ इति भावः ॥

( अङ्गाधिकारपरत्वदूषणोपसंहारभाष्यम् )

**इह किंचिद[2]ङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणे भवति, किंचिच्चान्यत्र न भवति ॥**

( प्रदीपः ) **किंचिच्चेति** । जिनिकित्स्वराः ॥

( उद्द्योतः ) अनन्तरोक्तातिव्याप्तेरुपक्रमोक्ताव्याप्तेश्चाङ्गाधिकारपरत्वं[3] न युज्यत इत्युपसंहरति-भाष्ये—**इहेति** ॥ **जिनिकित्स्वरा इति** । इदमुपलक्षणं[4]-अहर्ददातीत्यत्रासुपीति प्रतिषेधस्यापि । वस्तुतः[5] **किंचिच्चेत्यत्र** किंचित्पदेन **रोऽसुपीत्येव** । ञ्नित्स्वरविषये सौवरीणां सप्तमीनां तदन्तसप्तमीत्वेन **न लुमता तस्मिन्निति** न्यासेऽपि वचनस्यावश्यकत्वादिति[6] बोध्यम् ॥

( न्यासान्तरेण दूषणोद्धारः )

( न्यासान्तरसाधकभाष्यम् )

**यदि पुनः—**

**॥*॥ 'न लुमता तस्मिन्' ॥*॥**

**इत्युच्येत ॥**

( प्रदीपः ) **न लुमता तस्मिन्निति** । लुमता यो लुप्तः प्रत्ययस्तस्मिन्यत्कार्यमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः । अत्रय इत्यत्र स्वरो न भवति, तद्धितस्यैव कितोऽन्तोदात्तत्वविधानात् । लुकि कृते कार्यिणोऽसत्त्वात् । प्रत्ययलक्षणं हि यदन्यस्य कार्यं तत्प्रत्ययलोपेऽपि भवति, न तु यत्प्रत्ययस्यैव कार्यं तदपि । न हि वचनेनासतः कार्यित्वं शक्यते प्रतिपादयितुम् ॥

( उद्द्योतः ) **तस्मिन् यत्कार्यमिति** । तस्मिन्परतस्तन्निमित्तकं तत्प्रकृतिभूतस्य यत्कार्यमित्यर्थः ॥ **कित** इत्युदाहरणभूतात्त्रय इत्यस्योभयपक्षेऽप्यसिद्धे[7]स्तत् परिहरति—**अत्रय इत्यत्रेति** ॥ **यदन्यस्येति** । 'प्रत्ययजं' इत्येव सिद्धे लक्षणग्रहणसामर्थ्येन प्रत्ययनिमित्तकमेव, न तु प्रत्ययस्यानिकमित्यर्थादिति भावः ॥ युक्त्यन्तरमप्याह—**न हीति** । षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वादिति भावः ॥ अत एव नखनिभिन्न इत्यादावैसादिकं न । एवमसतः[8] सत्ताऽपि न वचनेन शक्येति बोध्यम् ॥

१ **क्रमेश्चेति** । तथा च भिन्नक्रमः इति भावः ॥ छाया ॥

२ **किंचिदिति** । इटो विधिप्रतिषेधौ क्रमेर्दीर्घत्वं च ॥ छाया ॥

३ **परत्वम्**—अङ्गस्येत्यस्य ॥ छाया ॥

४ न्यूनतां निराचष्टे—**इदमिति** ॥ छाया ॥

५ कैयटादिकं दूषयति—**वस्तुत इति** ॥ छाया ॥

६ लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमिति वचनेत्यर्थः । ( र. ना. )

७ **असिद्धेरिति** । तन्निमित्तकप्रकृत्यकार्यत्वादनाङ्गत्वाच्चेति भावः ॥ **तत्**—तत्र दूषणम् ॥ छाया ॥

८ न्यूनतां निराचष्टे—**एवमिति** ॥ छाया ॥

( आक्षेपभाष्यम् )

अथ "न लुमता तस्मिन्" इत्युच्यमाने किं सिद्धमेतद्भवति—इटो विधिप्रतिषेधौ ऋमेर्दीर्घत्वं च ॥

( समाधानभाष्यम् )

बाढं सिद्धम्। न इटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्यते ॥

कथं तर्हि?

सकारादाविति। तद्विशेषणं परस्मैपदग्रहणम् ॥

न खल्वपि ऋमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते ॥

कथं तर्हि?

शितीति। तद्विशेषणं परस्मैपदग्रहणम् ॥

( प्रदीपः ) तद्विशेषणमिति। विशेषण एवोपक्षीणत्वात्कार्यं प्रति निमित्तभावो नास्तीत्यर्थः ॥

( उद्योतः ) 'परस्मैपदपरसादेरङ्गत्वनिमित्तस्येट्' इत्याद्यर्थे न दोष इत्याह—विशेषण एवेति। एवं च लुप्तप्रत्ययनिमित्तकं तत्प्रकृतेस्तन्न कार्यमिति भावः ॥

( ४०४ आक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे ॥ * ॥

( भाष्यम् )

न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे न सिध्यन्ति ॥ अवधि भवता दस्युः। अगायि भवता ग्रामः। अध्यगायि भवताऽनुवाकः। तलोपे कृते 'लुङि' इति हनिणिङादेशा न प्राप्नुवन्ति ॥

( प्रदीपः ) हनिणिङादेशा इति। लुका लुङो विषयत्वापहारात् विषयसप्तम्याश्रयणेऽप्यसिद्धिः ॥

( उद्योतः ) नन्वार्धधातुक इत्यादीनां विषयसप्तमीत्वात् पूर्वमेव तेषां प्रवृत्तेर्न प्रत्ययलक्षणापेक्षेत्यत आह—लुकेति। एवं च विषयत्वज्ञानायावश्यं प्रत्ययलक्षणमाश्रयणीयम् ॥ तच्च न लुमता तस्मिन्निति न्यासे न प्राप्नोतीति भावः ॥

( समाधानभाष्यम् )

नैष दोषः। न लुङीति हनिणिङादेशा उच्यन्ते ॥

किं तर्हि?

आर्धधातुक इति। तद्विशेषणं लुङ्ग्रहणम् ॥

( प्रदीपः ) तद्विशेषणं लुङ्ग्रहणमिति। तेन लुङ्परे चिणि आदेशविधानम् ॥

( उद्योतः ) लुङ्परे चिणीति। लुङ्परार्धधातुकविषये इत्यर्थ इति भावः ॥

( आक्षेपभाष्यम् )

इह च—सर्वस्तोमः, सर्वपृष्ठः, "सर्वस्य सुपि" इत्याद्युदात्तत्वं न प्राप्नोति ॥

( एकदेशिसमाधानभाष्यम् )

तच्चापि वक्तव्यम् ॥

( उद्योतः ) भाष्ये-तच्चापीति। न लुमता तस्मिन्नित्येतदित्यर्थः ॥

( सिद्धान्तिसमाधानभाष्यम् )

न वक्तव्यम्। "न लुमताऽङ्गस्य" इत्येव सिद्धम् ॥

कथम्?

न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते ॥

किं तर्हि?

योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवति ॥

( प्रदीपः ) न लुमतेति। अङ्गस्येत्यस्य स्वरितत्वाप्रतिज्ञानात्तत्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययाश्रयमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः ॥

( उद्योतः ) लुप्ते प्रत्यये यदङ्गमिति। लुप्तप्रत्ययनिरूपिताङ्गसंज्ञकस्य यत्कार्यमित्यर्थः। उत्क्रामेत्यादौ तु परस्मैपदनिमित्ताङ्गसंज्ञकस्य न कार्यम्। किंतु शिदादिनिमित्ताङ्गसंज्ञकस्येति न दोषः ॥ संजिगमिषेत्यादौ सनः कार्यं नाङ्गसंज्ञकस्येति न दोषः ॥ किंच परस्मैपदग्रहणस्य तङानाभावोपलक्षणत्वादपि न दोषः ॥ अगायीत्यादौ तु न दोषः, लुङ्निमित्ताङ्गत्ववतश्चिणन्तस्य कार्याभावादिति बोध्यम् ॥

( आक्षेपभाष्यम् )

एवमपि—सर्वस्वरो न सिध्यति ॥

( उद्योतः ) भाष्ये—एवमपीति। अङ्गाधिकारप्रतिनिर्देशाभावेऽपीत्यर्थः ॥

( समाधानभाष्यम् )

कर्तव्योऽत्र यत्नः ॥ न लुमताङ्गस्य ॥ ६३ ॥

( प्रदीपः ) कर्तव्योऽत्रेति। सर्वशब्दार्थं वचनं कर्तव्यम् ॥ ६३ ॥

( उद्योतः ) वचनं कर्तव्यमिति। 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इत्येतत् ॥ ६३ ॥

---

१ सकारादाविति। सेऽसिचीत्यतोऽनुवृत्तस्यार्धधातुकविशेषणत्वात्तदादिविधिः ॥ छाया ॥

२ शितीति। ष्ठिवुक्लमीत्यतोऽनुवृत्तम् ॥ छाया ॥

३ एवं च-अदुष्टोक्तार्थोक्तौ च ॥ छाया ॥

४ हनो वध लिङि, लुङि च ॥२।४।४२,४३ इति हनो वधादेशः। इणो गा लुङि ॥२।४।४५ इति इणो गादेशः। विभाषा लुङ्लृङोः ॥२।४।५० इति इङो गाङादेशः ॥

५ एवं च-तेन तदपहारे ॥ छाया ॥

६ सिद्धौ हेतुमाह—अङ्गस्येति ॥ छाया ॥

७ तावतापि कथं सिद्धिरत आह— तत्रेति। तस्मिन्सतीत्यर्थः ॥ छाया ॥

८ अङ्गपदसत्त्वादाह—लुप्तेति ॥ छाया ॥

९ सर्वस्वर इति। अगादित्यादौ सिज्निमित्तकस्यास्तिसिच इतीटोऽप्रवृत्तेरप्युपलक्षणम् ॥ दाधिमथाः ॥

( ५९ उपधासंज्ञासूत्रम् ॥ १ । १ । ९ आ. ५ सू. ॥ )

## अलोऽन्त्यात्पूर्व उपधा ॥ १।१।६५ ॥

( अल इत्यस्य पञ्चम्यन्तत्वनिर्णयः )

( आक्षेपभाष्यम् )

**किमिदमल्ग्रहणमन्त्यविशेषणम् ?**

( प्रदीपः ) अलोऽन्त्यात्० ॥ ६५ ॥ **किमिदमिति** । प्रथमा पञ्चमी वेति सन्देहात्**प्रश्नः** ॥

( इष्टापत्तिभाष्यम् )

**एवं भवितुमर्हति ॥**

( प्रदीपः ) **एवमिति** । प्रथमायामभिप्रेतायामसंदेहार्थमलित्येकवचनं वक्तव्यं स्यात् । अन्त्यादिति पञ्चमीसाहचर्याच्चाल इत्यपि पञ्चम्यन्तमिति भावः ॥

( उद्द्योतः ) अलोऽन्त्यात्० ॥ ६५ ॥ **असन्देहार्थमिति** । अन्त्यात् पूर्वोऽलित्येव वदेदिति भावः ॥

( ४०५ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातस्य प्रतिषेधो वक्तव्यः ॥ संघातस्योपधासंज्ञा प्राप्नोति ॥**

**तत्र को दोषः ?**

**"शास इदङ्हलोः" शिष्टः, शिष्टवान् । संघातस्येत्त्वं प्राप्नोति ॥**

( प्रदीपः ) **अल्ग्रहणमिति** । निर्दिश्यते=अभिधीयतेऽनेनेति–निर्देशः । यदन्त्यः प्रत्याय्यत इत्यर्थः ॥ **सङ्घातप्रतिषेध इति** । पूर्वस्याविशेषितत्वात् समुदायावयवसन्निधौ समुदायस्यैव कार्यित्वादेकाज्द्विर्वचन इवेति भावः ॥ अन्त्यविशेषणत्वे वर्णनिर्देशे जातिग्रहणेऽप्यल इत्युपादानसामर्थ्यात् संख्या विवक्ष्यते ॥

( उद्द्योतः ) **अल्ग्रहणं-अन्त्यनिर्देश** इत्यनयोः सामानाधिकरण्यमनुपपन्नमत आह—**अभिधीयतेऽनेनेति** । अल्ग्रहणमन्त्यप्रत्यायकं चेदित्यर्थः । घञजपः पुंसीति निर्देशशब्दस्य पुंस्त्वम् ॥ प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्राप्तिमाह—**पूर्वस्येति ॥ एकाजिति ।** यद्यप्यत्र समुदायसंज्ञया नावयवानामनुग्रहः, तथापि कदाचिदविशेषात्सङ्घातस्यापि स्यादित्यनिष्टमात्रापादने भाष्यतात्पर्यमिति बोध्यम् ॥ ननु संज्ञिवदवधिरपि कस्मात् जातिग्रहणप्राप्तसमुदायो न निषिध्यतेऽत आह—**अन्त्येति ॥ संख्या विवक्ष्यत इति ।** ज्ञापकसिद्धस्यासार्वत्रिकत्वादत्रानेका व्यक्तिर्न गृह्यत इति भावः ॥ सङ्ख्याविवक्षा तु उद्देश्यगतत्वादयुक्ता ॥

( प्रथमान्तपक्षाभ्युपगमभाष्यम् )

**यदि पुनः 'अलन्त्यात्' इत्युच्यते ॥**

( प्रदीपः ) **यदि पुनरिति** । अत्राप्यल्ग्रहणसामर्थ्यात् संख्या विवक्ष्यते, पिबेरदन्तत्वप्रतिज्ञानाच्च लिङ्गात् । अल्समुदायस्य संज्ञित्वे गुणस्य प्राप्तिरेव नास्ति, किमदन्तत्वप्रतिज्ञानेन ॥

( उद्द्योतः ) पिबेरदन्तत्वेति । अल्समुदायस्य लघुत्वाभावादिति भावः ॥ सूत्रं तु उखादौ चरितार्थम् । कदाचिदिकारस्याप्युपधात्वेन चिन्त्यमिदम् ॥

( प्रथमान्तपक्षे दूषणभाष्यम् )

**एवमप्यन्त्योऽविशेषितो भवति ॥**

**तत्र को दोषः ?**

**संघातादपि पूर्वस्योपधासंज्ञा प्रसज्येत ॥**

**तत्र को दोषः ?**

**"शास इदङ्हलोः" शिष्टः, शिष्टवान् । शकारस्येत्त्वं प्रसज्येत ॥**

**सूत्रं च भिद्यते ॥**

( प्रदीपः ) **सूत्रं चेति** । **अलन्त्या**दिति पञ्चमान इत्यर्थः ॥

( सिद्धान्तभाष्यम् )

**यथान्यासमेवास्तु ॥**

---

१ अलन्त्यादित्युक्तेऽपि संदेहादाह—**अन्त्यादिति** ॥ छाया ॥

२ **अनुपेति** । भिन्नार्थत्वात् ॥ छाया ॥

३ कैयटेन फलितमुक्तमिति शाब्दमाह—**अल्ग्रहणमिति** ॥छा.॥

४ शक्यं क्षुदितिवत्प्रयोग इति दण्डिकृष्णाद्युक्तयसांगत्यायाह—**घञजेति** ॥ छाया ॥

५ दृष्टान्तवैषम्येण कैयटादिकं दूषयति—**यद्यपीति** ॥ छाया ॥

६ **अविशेषात्**–विनिगमनाविरहात् ॥ छाया ॥

७ **संज्ञिवदिति** । यथाऽत्र पक्षेऽविशेषात्प्राप्तसमुदायसंज्ञिनिषेधो वार्तिककृतोच्यते एवं तथाप्राप्ततन्निषेधोऽपि कुतो नोच्यत इत्यर्थः ॥ छाया ॥

८ **सिद्धस्य**–वर्णग्रहणे जातिग्रहणस्य ॥ छाया ॥

९ कैयटादिकं दूषयति—**संख्येति** ॥ एवमग्रेऽपि ॥ छाया ॥

१० अत एवारुचेराह—**पिबेरिति** ॥ गुणाप्राप्तौ हेतुमाह—**अलिति** ॥ छाया ॥

११ नन्वेवं पुगन्तेति सूत्रवैयर्थ्यापत्तिरत आह—**सूत्रमिति** ॥ यत्र पूर्वः केवल एवेति भावः ॥ छाया ॥

१२ **कदाचिदिति** । अविशेषादित्यर्थः ॥ **अपिना** संघातः ॥ तस्माज्ज्ञापकसिद्धेति प्रागुक्तैव गतिरत्रापि ॥ छाया ॥

१३ **एवमप्यन्त इति** । न च तत्रेणोभयविशेषणता, विशेष्यस्य प्रथमान्तत्वात्पञ्चम्यन्तत्वाच्चैकरूपेणान्वयाभावादिति भावः ॥ छाया ॥

१४ नन्वत एवोभयवृत्त्योभयविशेषणत्वमस्त्वत आह—**सूत्रं चेति** । वाक्यभेदलक्षणः सूत्रभेदः स्यादित्यर्थः ॥ **अलन्त्या**दिति कैयटोक्तं तु न युक्तम् । अस्य भाष्यस्य **'अलोन्त्यस्य'** इति सूत्रभाष्यतुल्यत्वात् ॥ छाया ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् * उपधासंज्ञायामलग्रहणमन्त्यनिर्देशश्चेत् संघातप्रतिषेधः * इति ॥

( परिहारभाष्यम् )

नैष दोषः ॥

( समाधाने भाष्यवार्तिकम् )

*॥ [१]अन्त्यविज्ञानात्सिद्धम् ॥*

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ?

अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति॥

( प्रदीपः ) अन्त्यविज्ञानादिति । उपधाया इति षष्ठ्यन्त्यमलं नीयत इत्यर्थः ॥

( परिभाषोपक्रमभाष्यम् )

[२]अन्त्यविज्ञानात् सिद्धमिति चेत् । तन्न ॥

किं कारणम् ?

'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' ॥

अनर्थकेऽलोऽन्त्यविधिर्नेत्येषा परिभाषा कर्तव्या॥

किमविशेषेण ?

नेत्याह । अनभ्यासविकारे—अभ्यासविकारान् वर्जयित्वा । "भृञामित्" "अर्तिपिपर्त्योश्च" इति ॥

(प्रदीपः) अनभ्यासविकार इति । अभ्यासोऽनर्थकः । शब्दस्य ह्यावृत्तिर्नार्थस्य ॥

( उद्योतः ) शब्दस्य हीति । एकाज्धातुविषयमिदम् । अनेकाच्सु प्रथमस्यैकाचो द्वित्वेनार्थवत्त्वशङ्कैव नेति बोध्यम् ॥ एवं चोत्तरखण्ड एवार्थवानिति भावः ॥

( प्रयोजनजिज्ञासाभाष्यम् )

कान्येतस्याः परिभाषायाः प्रयोजनानि ?

( परिभाषाप्रयोजने भाष्यवार्तिकम्)

*॥ [३]प्रयोजनमव्यक्तानुकरणस्यात इतौ ॥*

( भाष्यम् )

अन्त्यस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्न भवति-इति न दोषो भवति ॥

( प्रदीपः ) अव्यक्तानुकरणस्येति । अव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूपमिति सूत्रार्थः ॥

( उद्योतः ) अव्यक्तानुकरणस्येति । [४]अच्छब्दान्तस्याव्यक्तानुकरणस्येत्यर्थे संपूर्णस्याच्छब्दस्य पररूपानापत्तिरित्यतो वैयधिकरण्यमुक्तम् ॥ [५]अव्यक्तानुकरणं योऽच्छब्द इति तु नार्थः । एकाचो नेति निषेधारम्भादित्यलम् ॥

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—नान्त्यस्य पररूपं भवतीति । यदयम्—"नाम्रेडितस्यान्त्यस्य तु वा" इत्याह ॥

( प्रदीपः ) यदयमिति । वाऽऽम्रेडितस्येत्येव वक्तव्यं स्यात् ॥

( उद्योतः ) ननु विकल्पार्थं तदावश्यकमत आह—वाऽऽम्रेडितस्येति । अन्त्यस्य पूर्वेण नित्ये पररूपे प्राप्ते इति शेषः ॥

( ४०६ प्रयोजनवार्तिकम् ॥ २ ॥ )

॥ * ॥ घ्वसोरेद्धावभ्यासलोपश्च ॥ * ॥

( भाष्यम् )

घ्वसोरेद्धावभ्यासलोपश्चेत्यन्त्यस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ॥

( प्रदीपः ) घ्वसोरिति । [६]अनभ्यासविकार इति प्रतिषेधो रूपवत्यादेशे । लोपस्तु नीरूपः । तथा च परस्पशायां लोपागमवर्णविकारज्ञ इति लोपविकारौ भेदेन निर्दिष्टौ ॥

( उद्योतः ) भेदेन निर्दिष्टाविति । यद्यप्येकदेशविकृतस्येत्यादौ लोपोऽपि विकारपदेनोच्यते, तथापि व्याख्यानादेवात्रेदृशार्थावगतिरिति बोध्यम् ॥

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात्सर्वस्य भविष्यति ॥

( प्रदीपः ) पुनर्लोपेति । लोपो यीत्यतो लोपग्रहणेऽनुवर्तमान इति भावः ॥ तत्र [९]घ्वसोरेद्धावभ्यासस्य चेति

१ अन्त्यविज्ञानादिति । अनुवृत्तस्योपधाया इत्यस्येदानीं स्थानषष्ठीसत्त्वादलोऽन्त्यस्येत्यनुसंहारादित्यर्थः ॥ छाया ॥

२ इतःप्राक् 'अन्त्यविज्ञानात्सिद्धमिति चेन्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे' इति वार्तिकं मुद्रितपुस्तकेषु. च. छ. झ. संज्ञकेषु दृश्यते ॥

३ इतःप्राक् 'अव्यक्तानुकरणस्यात इतौ' इति वार्तिकं मुद्रितेषु पठन्ति ॥

४ तस्येताविति । अत इति षष्ठी, इताविल्युक्त्याऽति ततः पूर्वत्वस्येवेतौ ततः परत्वस्यापि लाभेन पञ्चम्ययोगात् । अत एवाम्रेऽन्त्यस्येति षष्ठ्यन्तमेवोक्तम् । इत्यवयवेऽचीत्यर्थः स्पष्टत्वान्नोक्तः ॥ छाया ॥

५ संभवतीति न्यायेनाह—अच्छब्दान्तेति ॥ छाया ॥

६ तेनैव वैपरीत्येनाह—अव्यक्तेति ॥ छाया ॥

७ नन्वनभ्यासविकार इति तन्निषेधः स्यादत आह—अनभ्यासेति ॥ छाया ॥

८ कैयटं दूषयति—यद्यपीति ॥ छाया ॥

९ तत्र—तदनुवृत्तौ सत्याम् ॥ छाया ॥

वक्तव्यम् । तत्र[1] व्याख्यानादभ्यासस्य लोप एव भविष्यति, न त्वेत्त्वम् । योगविभागो वा करिष्यते-**ध्वसोरेद्धौ** । ततः- **अभ्यासस्ये**ति । अत्र च लोपोऽनुवर्तिष्यते । तत्र[2] पुनर्लोपवचनात् सर्वापहारार्था**दलोऽन्त्यस्ये**ति बाध्यते ॥

**( उद्द्योतः )** ननु लोपग्रहणाभावे **ध्वसोरेद्धावभ्यासस्ये**त्युक्ते चकाराभावादन्यवचनाच्च प्रकृतासंबन्धे एत्व[3]मेव स्यादत आह—**तत्र ध्वसोरित्यादि** ॥ ननु चेनानुवृत्तावपि **लोपोऽभ्यासस्यैवे**त्यत्र नियामकाभावात्पर्यायेण त्र[4]याणामप्येत्वलोपौ स्यातामत आह—**तत्र व्याख्यानादिति** । आगन्तूनामन्ते निवेशेनाभ्यासस्य लोप[5]संनिहितत्वादिति भावः ॥ नन्वभ्यासपदोत्तरश्चकारः स्यान्यन्तरमेव समुच्चिनुयात्, न विधेयान्तरं-इति एत्वमभ्यासस्यापि स्यादतः परिहारान्तरमाह—**योगविभागवेति** ॥ अ[6]त्रेति । न त्वेत्वमित्यर्थः । योगविभागसामर्थ्यादिति भावः ॥ **सर्वापहारेति** । लोप[7] एव, नावशेषः कस्यचित्-इत्यर्थादिति भावः ॥

**( निराकरणयुक्त्यन्तरैकदेशिभाष्यम् )**

**अथवा—शिल्लोपः करिष्यते । स 'शित्सर्वस्य' इति सर्वादेशो भविष्यति ॥**

**( आक्षेपभाष्यम् )**

**स तर्हि शकारः कर्तव्यः ॥**

**( समाधानभाष्यम् )**

**न कर्तव्यः । क्रियते न्यास एव द्विशकारको निर्देशः-"ध्वसोरेद्धावभ्[8]यासलोपश्श्च" इति ॥**

**( प्रदीपः ) द्विशकारको निर्देश इति ।** लोपशब्दात् कृदन्तात्संज्ञिनाऽर्थेनार्थवत्त्वाद्विभक्तौ कृतायां श[9]कारः प्रतिनिर्दिश्यते । तस्य चेत्संज्ञा[10]यां सर्वादेशो लोपो भवति । इत्संज्ञोपदेशे ए[11]व प्रवर्तते । तत्कार्यं तु प्रयोग इत्येष सिद्धान्तः ॥

**( उद्द्योतः )** ननु लोपश्शब्दस्यासंज्ञा[12]त्वेनानर्थक्यात्स्रुरेव न स्यात्, उत्प[13]त्तौ वा **हल्ङ्यादिलोपाद् द्विशकारक** इत्यनुपपन्नमत आह—**लोपशब्दादिति** । प[14]दस्य संयोगान्तत्वाभावादसन्देहाय च **झलां जशित्य**त्र जश्त्ववत्संयोगान्तलोपसंयोगादिलोपौ नेति बोध्यम् ॥ **इत्संज्ञेति** । धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां **हलन्त्य**मितीत्संज्ञायामपि न दोषः । शस्य स्वरूपेणार्थवत्तया प्रातिपदिकत्वात्, कुण्डिनच इव । उ[15]**पदेश** इति तु तत्र नानुवर्तेत इति तत्र भाष्ये स्पष्टम् ॥ **उपदेश एवेति** । अन्तरङ्गत्वादिति भावः ॥ एतेन लोपविधानकाले शित्त्वाभावात्कथं सर्वादेश इत्यपास्तम् ॥ **कार्यं त्विति** । अ[16]**नेकाल्शिदित्या**दौ समीपेऽप्यवयवत्वारोपेण न दोष इति भावः । ए[17]**कान्ता अनुबन्धा** इति मुख्यपक्षे तु आद्यमेव समाधानमिति बोध्यम् ॥

**( प्रयोजने भाष्यवार्तिकम् )**

***॥ आ[18]पि लोपोऽकोऽनचि ॥***

**( न्यासान्तरत्वशङ्कानिराकरणभाष्यम् )**

**तिष्ठति सूत्रम्, अ[19]न्यथा व्याख्यायते ॥**

**( प्रदीपः ) तिष्ठति सूत्रमिति ।** ल[20]क्ष्यलक्षणभावस्याविवक्षितत्वात्तिष्ठत् सूत्रमिति न कृतम् । त[21]त्रायमर्थः—तिष्ठति सूत्रम्-न प्रत्याख्यायते, तत्तु अन्यथा व्याख्यायते । तत्रा[22]नचीत्यनेन हलीत्यस्यार्थ आख्यातः । आप्यक इत्यनुवृत्तिर्दर्शिता ॥

---

१ **तत्र**-चेन तदनुवृत्तौ ॥ छाया ॥

२ **तत्र**-तथानिर्वाहे सति ॥ छाया ॥

३ **एत्वमेवेति । एवेन** प्रकृतलोपव्यवच्छेदः ॥ छाया ॥

४ **त्रयाणामिति** । ध्वसभ्यासानाम् ॥ छाया ॥

५ **संनीति** । अनेन ध्वसोरेत्वसंबन्धित्वं सूचितम् ॥ छाया ॥

६ **अत्रेतीति** । द्वितीय इत्यर्थः ॥ व्युत्क्रमे वार्थचलभ्यमाह—**नत्वेत्वमिति** ॥ छाया ॥

७ प्रदीपेऽर्थः-फलमिति तल्लाभोपायं तदभिधेयमाह—**लोप एवेति** ॥ छाया ॥

८ 'भ्यासलोपश्श्च' इति मुद्रितेषु पाठः । प्राचीनादर्शपुस्तकेषु तादृशः पाठः क्वापि नोपलभ्यते । अपि च उपदेशे-सूत्रे एवेत्संज्ञायां लोपे चैकशकारकसूत्रश्रवणे बाधकाभावात् ॥

९ **शकार इति** । स च भिन्नं पदम् ॥ छाया ॥

१० 'शायां सत्यां' इति क. ग. पाठः ॥

११ 'एव' इत्यस्य अ. पुस्तके पाठो न ॥

१२ **आनर्थक्यात्**-अप्राप्तप्रतिपादकत्वात् ॥ छाया ॥

१३ स्वरूपेणार्थवत्त्वादाह—**उत्पत्तौ वेति** ॥ **अनुपेति** । सौत्रत्वादिना तद्वारणे त्वाद्य एव दोषः ॥ छाया ॥

१४ **पदस्येति** । अर्थान्तरस्य खण्डितत्वादिति भावः ॥ नन्वेवमपि स्कोरिति स्यात् झलि संयोगादत आह—**असंदेहाय चेति** ॥ न च व्याख्यानेन निर्णयः, तथापि **द्विशकारे**ति भाष्यविरोधात् । अन्यथा **लुप्तनिर्दिष्ट** इत्येवं वदेत् ॥ ननु तत्र सङीत्युक्त्याऽत्र न प्राप्तिः, सनः सकारमारभ्य महिङो ङकारेण प्रत्याहारः । तत्प्रत्याख्याने तु निमित्तनिमित्तिनोरैकपद्ये एव प्रवृत्तेः । एवं च राजमार्गेणैव निर्वाहेऽगतिकगत्यसंदेहाश्रयणमयुक्तमत आह—**झलामिति** । झश्परकझल्त्वेऽपीत्यादिः । एवं च तत्र तदप्रवृत्तौ हेत्वन्तराभावेन तदाश्रयणमावश्यकमिति भावः ॥ छाया ॥

१५ नन्वेवमप्युपदेशाभावात्कथमित्वमत आह—**उपेति** ॥ **तत्र-हलन्त्य**मित्यत्र ॥ छाया ॥

१६ इदं चानेकान्तत्व इत्याह—**अनेकालिति** ॥ छाया ॥

१७ अत एवाह—**एकान्ता इति** ॥ छाया ॥

१८ हलि लोप इति सूत्रविषये प्रयोजनमुच्यते-**आपीति** ॥

१९ **'तिष्ठति सूत्रमन्यथा'** इत्यस्याक्षेपत्वं **'व्याख्यायते'** इत्यस्य समाधानत्वं वरम् ॥ दाधिमथाः ॥ वस्तुतस्तु न्यासान्तरत्वमाशङ्क्य तिष्ठति सूत्रमन्यथा व्याख्यायते—इत्येकमेव वाक्यमिति वयम् । ( र. ना. )

२० ननु लक्षणहेत्वोरिति शता स्यादत आह—**लक्ष्येति** ॥ छाया ॥

२१ **तत्र**-तदभावे ॥ छाया ॥

२२ **तत्र**-तेषां मध्ये ॥ छाया ॥

( उद्द्योतः ) भाष्ये—अन्यथाऽव्याख्यायत इति । न तु तत्प्रत्याख्याय तत्स्थाने वचनान्तरं पठितमिति भ्रमितव्यमिति भावः ॥

( वार्तिकव्याख्याभाष्यम् )

**आपि हलि लोप इत्यन्तस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ॥**

( उद्द्योतः ) इत्यन्तस्येति । एवं च तेन दलोपे 'आभ्यां' इत्यसिद्धिरिति भावः ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । अन एव लोपं वक्ष्यामि ॥**

( प्रदीपः ) अन एवेति । अनाप्यक इति सामान्येनानादेशं विधाय हलादौ तु तस्यैव लोपो विधास्यत इत्यर्थः ॥ येन नाव्यवधानमिति त्यदाद्यत्वे न व्यवधानमाश्रीयते ॥

( उद्द्योतः ) ननु मस्थानिकत्यदाद्यत्वेन व्यवधानान्नानो हलादिविभक्तिपरतेत्यत आह—येन नेति । आप्परत्वेनेदमो विशेषणाचेत्यपि बोध्यम् ॥ इदं 'इदो लोपः' इत्यर्थेऽप्यावश्यकम् । एवं च नलोपे द्वयोरकारयोः पररूपे सुपि चेति दीर्घे सिद्धं—आभ्यामिति ।

( गौरवाक्षेपभाष्यम् )

**तदनो ग्रहणं कर्तव्यम् ॥**

( गौरवनिराकरणभाष्यम् )

**प्रकृतमनुवर्तते ॥**

**क प्रकृतम् ?**

**"अनाप्यकः" इति ॥**

( अनुवृत्तिबाधकभाष्यम् )

**तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ॥**

( अनुवृत्तिसाधकभाष्यम् )

**'हलि' इत्येषा सप्तमी 'अन्' इति प्रथमायां षष्ठीं प्रकल्पयिष्यति—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति ॥**

( प्रयोजने भाष्यवार्तिकम् )

***॥ अत्र लोपोऽभ्यासस्य ॥***

( भाष्यम् )

**अन्त्यस्य प्राप्नोति । 'नानर्थकेऽलोऽन्त्यविधिः' इति न दोषो भवति ॥**

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । 'अत्र' ग्रहणसामर्थ्यात्सर्वस्य भविष्यति ॥**

( प्रदीपः ) अत्रग्रहणसामर्थ्यादिति । मीमादीनामधिकारादेव सिद्धेऽत्रग्रहणादयमर्थ आश्रीयते—योऽभ्यासत्वेन निर्ज्ञातस्तस्य समग्रस्य लोपो न त्वलोऽन्त्यस्येति ॥

( उद्द्योतः ) अत्रग्रहणादिति । अत्रशब्देन पुनः सनः परामर्शात्सनि योऽभ्यासत्वाक्रान्तस्तस्य सर्वस्य लोप इत्यर्थ इति भावः ॥

( प्रयोजनसाधकभाष्यम् )

**अस्त्यन्यदत्रग्रहणस्य प्रयोजनम् ॥**

**किम् ?**

**सन्नधिकारोऽपेक्ष्यते । इह मा भूत्—दधौ, ददौ ॥**

( प्रयोजनबाधकभाष्यम् )

**अन्तरेणाप्यत्रग्रहणं सन्नधिकारमपेक्षिष्यामहे ॥**

( प्रयोजनसाधकभाष्यम् )

**संस्तर्हि सकारादिरपेक्ष्यते—सनि सकारादाविति । इह मा भूत्—जिज्ञापयिषतीति ॥**

( प्रयोजनबाधकभाष्यम् )

**अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे ॥**

( प्रयोजनसाधकभाष्यम् )

**प्रकृतयस्तर्ह्यपेक्ष्यन्ते—एतासां प्रकृतीनां लोपो यथा स्यात् । इह मा भूत्—यियक्षति, पिपक्षति ॥**

( प्रयोजनबाधकभाष्यम् )

**अन्तरेणाप्यत्रग्रहणमेताः प्रकृतीरपेक्षिष्यामहे ॥**

( प्रयोजनसाधकभाष्यम् )

**विषयस्तर्ह्यपेक्ष्यते—"मुचोऽकर्मकस्य गुणो वा" इति । इह मा भूत्—मुमुक्षति गामिति ॥**

( प्रयोजनबाधकभाष्यम् )

**अन्तरेणाप्यत्रग्रहणमेतं विषयमपेक्षिष्यामहे ॥**

**कथम् ?**

**अकर्मकस्येत्युच्यते, तेन यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति ॥ तस्मान्नार्थोऽनया परिभाषया—'नानर्थकेऽलोऽन्त्यविधिः' इति ॥**

---

१ ननु अनो लोपे विधीयमाने आभ्यामिति रूपं न स्यादत आह—सामान्येनेति । अस्मिन् पक्षे 'अनाप्यकः' इत्यनेन सर्वादेशोऽन् विधीयत इत्यर्थः ॥

२ मूलस्य चिन्त्यत्वादाह—आप्परेति ॥ छाया ॥

३ इतः प्राक् 'न कर्तव्यम्' इत्यधिकः पाठः क. ग. च. छ. पुस्तकेषु ॥

४ अ इति प्रथमायां नान्तस्य नपुंसकनिर्देशः इति सप्तमे भाष्यम् ॥ दाधिमथाः ॥

५ प्रथमायाः' इति क. ग. पाठः ॥

६ सनोऽधिकार इत्यर्थः ॥

७ सकारादिमिति । यथा सनिमीमेति सूत्रे सस्यार्धधातुक इत्यतः सीत्यनुवर्त्य सकारादौ सनीत्यर्थस्तथाऽत्रापि सीत्यनुवर्त्य तथाव्याख्यानं सुशकमित्याशयः ॥

८ आपेक्षिष्यामह इति । सनिमीमेति सूत्रचतुष्टयमत्रानुवर्तिष्यत इत्याशयः ॥

( उद्द्योतः ) भाष्ये—**विषयमपेक्षिष्यामह इति** । मुचोऽकर्मकस्य गुण इत्यनुवर्तनीयम् । यत्र मुचोऽकर्मकस्य गुणस्तत्राभ्यासस्य लोप इत्यर्थः । अकर्मकग्रहणमात्रानुवृत्तौ तु मुमुक्षते वत्सः स्वयमेवेत्यत्रापि स्यादिति भावः ॥ **विभाषा भवदिति** वार्तिकेऽपि 'वस्य' इत्येव सिद्धे 'अवस्य' इत्युच्चारणसामर्थ्याद् **अलोऽन्त्यस्येति** न प्रवर्तते इति प्रत्याख्याता परिभाषा ॥

( न्यासान्तरे भाष्यवार्तिकम् ॥ )

*** ॥ अलोऽन्त्यात् पूर्वोऽलुपधेति वा ॥ ***

( भाष्यम् )

**अथवा व्यक्तमेवैतत् पठितव्यम्—अलोऽन्त्यात्पूर्वोऽलुपधासंज्ञो भवतीति ॥**

( उद्द्योतः ) एवं च अन्त्यविज्ञानात्सिद्धमित्यस्य स्थितत्वाद्वार्तिके वाशब्दप्रयोगस्तदाह—**अथवा व्यक्तमेवेति** ॥

( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ?**

( परिहारभाष्यम् )

**न वक्तव्यम् ॥**

( समाधाने भाष्यवार्तिकम् ॥ )

*** ॥ अवचनाल्लोकविज्ञानात् सिद्धम् ॥ ***

( भाष्यम् )

**अन्तरेणापि वचनं लोकविज्ञानात् सिद्धमेतत् । तद्यथा—लोके—अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयतामित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते ॥ अलोऽन्त्यात्पूर्व उपधा ॥ ६५ ॥**

( प्रदीपः ) **यथाजातीयकोऽन्त्य इति** । एतच्च ब्रुवता पञ्चमीपक्ष एवाश्रितः । षष्ठीप्रथमयोरपि न दोषः । षष्ठीपक्षे निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्य भवतीति अलां[2] मध्ये योऽन्त्योऽल् तस्मात् पूर्व उपधासंज्ञ इत्यलेवोक्तान्यायात्प्रतीयते ॥ प्रथमाबहुवचनपक्षेऽप्ययमर्थः-अन्त्यात् पूर्वोऽलुपधासंज्ञ इति । अल इति जातौ बहुवचनम्, अवधिमत्तुल्यजातीयकश्चावधिरिति अलोऽन्त्यादिति विज्ञायते ॥ ६५ ॥

( उद्द्योतः ) **एतच्चेति** । अवधिनाऽवधिमतो निर्णयं ब्रुवता -इत्यर्थः । संयोगोपधेत्यादिव्यवहारास्तु गौणा[3] इति भावः ॥ **षष्ठीप्रथमयोरपीति** । दृष्टान्तेऽमीषां ब्राह्मणानामित्युपाददता भगवता सूचितमिदम् ॥ **उक्तान्यायादिति** । भाष्योक्तादित्यर्थः ॥ जातौ बहुवचनमिति । भाष्यकृता जात्याख्यायामिति सूत्रप्रत्याख्यानादिदं चिन्त्यम् ॥ ६५ ॥

---

( ६०–६१ परिभाषासूत्रे ॥ १ । १ । ९ आ. ६–७ सू० )

# तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ १।१।६६ ॥

# तस्मादित्युत्तरस्य ॥ १ । १ । ६७ ॥

( उदाहरणनिरूपणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ?**

( प्रदीपः ) तस्मिन्निति० ॥६६-६७॥ **किमुदाहरणमिति** । इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात्**प्रश्नः** ॥

( उद्द्योतः ) तस्मिन्निति० ॥ ६६-६७ ॥ **स्वरूपपदार्थकत्वेनेति** । स्वरूपस्य तत्र विशेष्यत्वादिति भावः ॥ **प्रश्न इति** । तस्मिन्नणि चेत्यत्रैव वा-उतान्यत्रापीति प्रश्न इति भावः ॥

( समाधानभाष्यम् )

**इह तावत्—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति "इको यणचि", दध्यत्र-मध्वत्र ॥**

**इह—"तस्मादित्युत्तरस्य" इति "द्व्यन्तरुपसर्गेभ्योऽप ईत्", द्वीपम्-अन्तरीपम्-समीपम् ॥**

( प्रदीपः ) **दध्यत्रेति** । यदि **तस्मिन्नणि चेति तस्माच्छस** इति चात्रैवैते परिभाषे उपास्थास्येतां तदा तत्रैव पूर्वग्रहणमुत्तरग्रहणं चाऽकरिष्येतामिति[4] भावः ॥ अत्र[5] व्यवच्छेद्यमस्ति–'यौष्माकीण अस्मभ्यं देहि' 'आस्माकीन युष्मभ्यं दीयताम्' इति खञः परयोर्युष्मदस्मदोरादेशौ न भवतः ॥ 'वृक्षान्' इत्यत्र च पूर्वसवर्णदीर्घभूताच्छसः पूर्वस्य षकारस्य नत्वं न भवति ॥ अथ शस ईति[6] षष्ठीति व्याख्यानात् षकारस्य न भवतीत्युच्यते । एवमपि 'उच्चरत आनुपलभते' इत्यादौ पूर्वसवर्णदीर्घात्पूर्वस्य शसो नत्वं व्यवच्छेद्यमेव ॥

( उद्द्योतः ) **तत्रैव पूर्वेति** । ननु **तस्मान्नुडचि तस्मान्नुड्द्विहलः तस्माच्छस** इति सूत्रत्रये उत्तरग्रहणे विपरीतं गौरवमिति चेन्न । यतो द्विहलो नुड्विधायके नास्योपयोगः, तत्राङ्गाधिकारेण लिङ्निमित्ताङ्गसंबन्धिदीर्घात्पूर्वस्य प्रत्यासत्त्या तदङ्गसंबन्धिनोऽसंभवेन फलाभावात् ॥ एवं **तस्मान् नुडचीत्यत्रापि** न दोषः, उत्तरपदाधिकारेण प्रत्यासत्त्या नञ्रूपपूर्वपदनिरूपितोत्तरपदस्यैव तेन नुड्विधानात् इति भावः ॥ **तस्मिन्निति** परामृष्टखञ्व्यवधानाय संबुद्ध्यन्तमुदाहरति—**यौष्माकीणेति** ॥ **षकारस्येति** । **तस्मादित्येतत्साहच**-

---

१ न्यूनतां परिहरति—**विभाषेति** ॥ छाया ॥

२ सौत्रमेकवचनमित्याह—**अलामिति** ॥ छाया ॥

३ **गौणा इति** । अवयवधर्मस्य समुदाये आरोपात् ॥ छाया ॥

४ 'चाकरि' इति क. ग. पाठः ॥

५ ननु तस्मिन्नणि च तस्माच्छस इत्यादावनयोः परिभाषयोरुपस्थितौ किम्फलन्तदाह-**अत्र व्यवेति** ॥

६ 'इति स्थानषष्ठी' इति अ. पाठः । 'इति षष्ठी' इति व्याख्यानेनैव शासः पूर्वस्य षकारस्य नत्ववारणं सुशकमिति स्थानषष्ठीत्यपाठ इत्युच्यत उद्योते ॥

र्याच्छस इति पञ्चमी । शसा च सामानाधिकरण्यं शसवयवे लक्षणयेति भावः ॥ मुख्यार्थे सामानाधिकरण्यासंभवात् स्थान्याकाङ्क्षत्वाच्च-अवयवषष्ठीत्याशङ्कते—अथेति ॥ शस इति स्थानषष्ठीत्यपाठः । इति षष्ठीत्येव पाठः ॥ आन् इति अशब्दस्य शसि रूपम् ॥

**( समाधानबाधकभाष्यम् )**

**अन्यथाजातीयकेन शब्देन निर्देशः क्रियते, अन्यथाजातीयक उदाह्रियते ॥**

**(प्रदीपः) अन्यथाजातीयकेनेति** । इतिकरणात् स्वरूपग्रहणेनैव भाव्यमिति भावः ॥ थाला प्रकारमात्रमभिधीयत इति तद्वतोऽभिधानाय जातीयर् प्रत्ययः ॥ लौकिके प्रयोगे लाघवानादरप्रदर्शनाय प्रत्ययद्वयप्रयोगः, केवलेनापि जातीयरा प्रकारवान् गम्यत एव ॥

**( उद्योतः ) इतिकरणादिति** । लोकेऽर्थप्रधानस्य पदार्थविपर्यासकेतिना शब्दप्रधानत्वदर्शनादिति भावः ॥ नन्वेकार्थकप्रत्ययद्वयोपादानं व्यर्थमत आह—**थालेति** । [२]एवं च **शब्देने**त्यनेन सामानाधिकरण्यानुपपत्तिः, जातीयरस्तु तद्वति स्वभावादिति भावः ॥ नन्वेवं जातीय एव प्रयुज्यतां किं थालेत्यत आह—**लौकिके इति** । [३]उभयोः प्रकारवद्वृत्तित्वेऽप्येवं वक्तुं शक्यमिति उक्तयत्नो वृथा । [४]अत एव कस्य प्रयोगः - इति **चिन्त्यम्** ॥

**( प्रत्याक्षेपभाष्यम् )**

**किं तर्ह्युदाहरणम् ?**

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**इह तावत्—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति "तसिन्नणि च युष्माकास्माकौ" इति ॥ "तस्मादित्युत्तरस्य" इति "तस्माच्छसो नः पुंसि" इति ॥**

**( सिद्धान्तिभाष्यम् )**

**इदं चाप्युदाहरणम्—"इको यणचि", "द्व्यन्तरुपसर्गेभ्योऽप ईत्" इति ॥**

**कथम् ?**

**सर्वनाम्नाऽयं निर्देशः क्रियते । सर्वनाम च सामान्यवाची । तत्र सामान्ये निर्दिष्टे विशेषा अप्युदाहरणानि भवन्ति ॥**

**( प्रदीपः ) इदं चाऽपीति** । सिद्धान्तवादी ॥ इतिकरणोऽत्रार्थनिर्देशार्थ एव, **स्वं रूप**मिति वचनात्स्वरूपग्रहणे प्राप्ते ॥ **सर्वनाम्नाऽयमिति** । सूत्रान्तरोपात्तस्य **तस्मिन्नि**त्यस्य **तस्मादि**त्यस्य च नैतदनुकरणम् । किं तर्हि ? सर्वनाम्ना निर्देश इत्यर्थः । तेन यत्र सप्तम्यर्थनिर्देशः पञ्चम्यर्थनिर्देशश्च तत्रोभयोरुपस्थानम् ॥ **विशेषा अपीति** । अपिः संभावनायाम्, न समुच्चये । न हि विशेषपरित्यागेनेह शास्त्रे सामान्यमस्ति, यदुदाहरणं स्यात् । तस्मात्सर्वे विशेषा इहोदाहरणमित्यर्थः, सामान्यस्य सर्वविशेषेषु भावात् ॥

**( उद्योतः )** ननु दूषितस्य कथमुदाहरणत्वेन दानमत आह—**सिद्धान्तेति** ॥ **अर्थनिर्देशार्थ एवेति** । अन्यथा तस्मिन्निति शब्दे, अचीत्यादिशब्देषु वाऽव्यवहितेषु इत्यर्थः स्यादिति भावः ॥ **नैतदनुकरणमिति** । [५]प्राग्युक्तयुक्तेरिति भावः ॥ **सर्वनाम्नेति** । सप्तम्यन्तार्थकसर्वनाम्नेत्यर्थः ॥ सप्तमी त्वस्य सप्तम्यन्तार्थकत्वबो[६]धनायानुवादिकेति भावः ॥ [७]इतिशब्दलभ्यमर्थमाह—**यत्र सप्तम्यर्थेति** । सप्तम्यर्थबोध इत्याद्यर्थः ॥ अत एव **तस्मान्नुडचीत्यादौ** न प्रवृत्तिः, अचि इत्यस्य षष्ठ्यर्थत्वादिति भावः । **सप्तमीपञ्चम्यर्थौ** अधिकरणावधी ॥ अयं पदोपस्थितिपक्षेऽर्थो दर्शितः । पक्षान्तरेऽपि सप्तम्यन्तार्थेऽव्यवहिते सतीत्यर्थो बोध्यः ॥ भाष्ये-**सामान्यवाचीति** । बुद्धिस्थत्वेनैव तदादीनां बोधकतेति भावः ॥ **सामान्यम्**-अनिर्धारितविशेषम् । **तस्मिन्नणि**चेत्यादेरपि सप्तमीपञ्चमीविशेषत्वादित्याशयः ॥ [८]सामान्यस्य-बुद्धिस्थत्वस्य **सर्वविशेषेषु भावात्**-सत्त्वादित्यर्थः ॥

**( आक्षेपभाष्यम् )**

**किं पुनः सामान्यम्, को विशेषः ?**

**( प्रदीपः ) किं पुनरिति** । सामान्यविशेषभावस्यानवस्थानात्**प्रश्नः** । कदाचिद्दूराद्गोत्वमात्रग्रहणं पश्चात् कृष्णादिविशेषावगमः, [९]कदाचित् पूर्वं कृष्णादेर्ग्रहणं पश्चाद्गोत्वादेः ॥

**( उद्योतः )** उक्तमर्थमजानानस्य चोद्यमित्यभिप्रायेणाह—**सामान्येति**। [१०]तस्मिन्नितीत्यस्य **तस्मिन्नणि** चेत्यादिः कथं विशेषः? तस्यापि खञादिनिरूपितसामान्यत्वादिति, **अची**त्यस्याप्यकाराद्यपेक्षया सामान्यत्वादिति च प्रश्न इत्यपि बोध्यम् ॥ ननु कथमनवस्थितिः ? पूर्वावगतं **सामान्यम्**, पश्चादवगतो **विशेषः**-इति व्यवस्थासंभवादत आह—**कदाचिदिति** । परिच्छेद्यपरिच्छेदकभावोऽनियत इत्यर्थः ॥ [११]एवं प्रकृतेऽप्यचीत्यादीनां बुद्धिस्थत्वेन परिच्छेदाद् बुद्धिस्थस्यापि तैः परिच्छेदादनिर्णय इति भावः ॥

---

१ **अन्यथेति** । अन्येन प्रकारेण प्रकारोऽस्येति विग्रहः । सर्वनामत्वेन प्रकारेण सात्सिनौ प्रकारावस्य तस्मात्तस्मिन्नित्यस्य निर्देशस्येत्यर्थः ॥ एवमग्रेऽपि ॥ छाया ॥

२ **एवं च**-प्रकारमात्रोक्तौ च ॥ छाया ॥

३ कैयटादिकं दूषयति—**उभयोरिति** ॥ छाया ॥

४ **अत एव**-तत्र तदनादरादेव ॥ **कस्य**-कप्रत्ययस्य ॥ छाया ॥

५ **प्रागुक्तेति** । तत्रैव तत्कुर्यादितीत्यर्थः ॥ छाया ॥

६ **बोधनायेति** । तद्बोध्यार्थस्य निर्दिष्ट इत्यनेन सामानाधिकरण्याय चेत्यपि बोध्यम् ॥ छाया ॥

७ इति पुनस्तस्य तदर्थपरत्वं बोधयतीत्याह—**इतीति** ॥ **इत्याद्यर्थः**-सप्तमीत्यादि तदन्तेत्यर्थः ॥ छाया ॥

८ सामान्यस्येत्यादिकैयटार्थमाह—**सामेति** ॥ छाया ॥ 'उक्तबुद्धिस्थत्वस्य' इति च. पाठः ॥

९ 'कदाचित्तु' इति क. ग. पाठः ॥

१० प्रश्नाशयान्तरमाह—**तस्मिन्नित्यादि** ॥ छाया ॥

११ कैयटेन दृष्टान्ते एवोक्तमतो दार्ष्टान्तिके आह—**एवमिति** ॥ एवमग्रेऽपि ॥ छाया ॥

( समाधानभाष्यम् )

**गौः सामान्यम् । कृष्णो विशेषः ॥**

**( प्रदीपः ) गौः सामान्यमिति ।** यद्विशेष्यं प्रधानं तत्सामान्यम् । यत्तु विशेषणत्वेन परोपकारितया निर्दिश्यते स विशेष इति तात्पर्यम्[1] । इहापि **तस्मिन्नित्यनेन** सप्तम्यर्थमात्रं सामान्यं निर्दिष्टम् । अचि-हलीत्यादयस्तु विशेषाः ॥

**( उद्द्योतः ) विशेष्यं प्रधानमिति ।** परिच्छेद्यमित्यर्थः ॥ **परोपकारितया**-परिच्छेदकत्वेन । एवं प्रकृतेऽपि **तस्मिन्नित्यर्थस्य** परिच्छेद्यत्वेन विवक्षणात्सामान्यत्वम् , अचीत्यादीनां परिच्छेदकत्व-विवक्षणाद्विशेषत्वमिति भावः ॥ तदाह—**इहापीति ।** अयं भावः—सप्तम्यन्तार्थे इत्युक्ते कस्मिन्नित्याकाङ्क्षोदयात् 'अचि' इत्याद्यर्थस्य परिच्छेदकत्वाद्विशेषत्वमेवेति ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीं कृष्णः सामान्यम्, गौर्विशेषो भवति ?**

( समाधानभाष्यम् )

**भवति च ॥**

( आक्षेपभाष्यम् )

**यदि तर्हि सामान्यमपि विशेषः, विशेषोऽपि सामान्यम्, सामान्यविशेषौ न प्रकल्पेते ॥**

( समाधानभाष्यम् )

**प्रकल्पेते च ॥**

**कथम् ?**

**विवक्षातः ।**

**यदाऽस्य गौः सामान्येन विवक्षितो भवति कृष्णो विशेषत्वेन, तदा गौः सामान्यम्, कृष्णो विशेषः ॥ यदाऽस्य कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन विवक्षितः, तदा कृष्णः सामान्यम्, गौर्विशेषः ॥**

( दृष्टान्तान्तरभाष्यम् )

**अपर आह—'प्रकल्पेते च' ॥**

**कथम् ?**

**पितापुत्रवत् । तद्यथा—स एव कंचित्प्रति पिता भवति, कंचित्प्रति पुत्रो भवति । एवमिहापि स एव कंचित्प्रति सामान्यं, कंचित्प्रति विशेषः ॥**

**एते खल्वपि नैर्देशिकानां वार्त्ततरका भवन्ति, ये सर्वनाम्ना निर्देशाः क्रियन्ते । एतर्हि बहुतरकं व्याप्यते ॥**

**( प्रदीपः ) पितापुत्रवदिति ।** जन्यजनकशक्तिद्वययोगवदेकस्यैव विशेषणविशेष्यशक्तिद्वययोगात्कदाचित्कचित्काचिच्छक्तिराश्रीयते ॥ 'सप्तमीनिर्दिष्टे[2] पूर्वस्य' इत्येव कस्मान्नोच्यत इत्याह—**एते खल्वपीति । नैर्देशिकानां**=निर्देशप्रयोजनानां मध्ये । **वार्त्ततरकाः**=युक्ततरका इत्यर्थः । भाष्यकारवचनप्रामाण्यादत्र तरप्प्रत्ययः । तमपा ह्यत्र भाव्यम् ॥ **एतर्हीति ।** यदि हि **सप्तमीनिर्दिष्ट** इत्युच्यते, तदा सप्तमीशब्देन यो निर्दिष्ट इति प्रतीयेतेति भावः ॥

**( उद्द्योतः )** तदेवं पर्यायेण सामान्यविशेषभावमुपपाद्य द्वितीयविधया[3] कृतं प्रश्नं समाधातुं यौगपद्येनापि तमुपपादयितुमाह—भाष्ये-**पितेत्यादि ।** यथा[4] **'पराशरात्मजं वन्दे शुकतातं तपोनिधिम्'** इत्यत्र, तथा[5] राजपुरुषाश्व इत्यत्र पुरुषो राजापेक्षया विशेष्यः, अश्वापेक्षया विशेषणम् । एवं प्रकृते खन्नादिनिरूपितसामान्यस्यापि **तस्मिन्नणिचेत्यस्य तस्मिन्नितीत्येतत्**[6]प्रति विशेषत्वमिति भावः ॥ **इत्याहेति ।** इत्यत आहेत्यर्थः ॥ **निर्देशप्रयोजनानामिति ॥** बोधप्रयोजनकानां[7] शब्दानां मध्ये-इत्यर्थः ॥ बहुवचनविभज्योपपदत्वादाह[8]—**भाष्यकारेति ॥** परे[9] तु नैर्देशिकानां मध्येऽन्येभ्यः[10] शब्देभ्य इत्यध्याहृत्य विभज्योपपदेऽत्र तरप् । अत[11] एव **न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यमिति तरप्सूत्रस्थभाष्येणाविरोध** इत्याहुः ॥ **सप्तमीशब्देनेति ।** तथा च **सप्तम्यां जनेर्ड** इत्यादावेवेदमुपतिष्ठेतेति भावः ॥ किंच यत्र सप्तम्यन्तनिर्देश इत्यर्थे **नेड्** वशि कृतीत्यादौ दोषः, तत्र कृतीति सप्तमीनिर्देशसत्त्वात्; परंतु 'सप्तमीति[12] निर्दिष्टे' इति सूत्रकरणेऽपि तदर्थे षष्ठ्यर्थे स इति भावः ॥ थेङ्यादिनिर्देश इत्यर्थे स एव दोषः ॥

( आक्षेपभाष्यम् )

**अथ किमर्थमुपसर्गेण निर्देशः क्रियते ?**

**(प्रदीपः ) किमर्थमिति ।** किमर्थमुपसर्गयुक्तस्य[13] धातोर्निर्देशः क्रियते, 'तस्मिन्निति पूर्वस्य' इति कस्मान्नोच्यत इति **प्रश्नः ।** न पुनः 'दिष्टे' इत्येवोच्यतामिति **प्रश्नः**, केवलस्य दिशेर्दानार्थत्वादिहानुपयोगात् ॥

---

१ तथा चोक्तं कणभुजा—**'सामान्यं विशेष इति बुद्ध्यपेक्षम्'** इति ॥

२ **सप्तमीति ।** स्पष्टार्थमित्यादिः । **निर्देशो** बोधः ॥ छाया ॥

३ **विधया**-स्वोक्तया ॥ छा.॥ 'पूर्वावगतं सामान्यं' इति स्वोक्तया ॥

४ **यथेति ।** एकत्रैव व्यासे तत्तदपेक्षया युगपद्व्यपदेशः ॥ छाया ॥

५ दृष्टान्तान्तरमाह—**तथेति ॥** छाया ॥

६ **तस्मिन्नितीति ।** प्रकृतसूत्रोपात्तम् ॥ छाया ॥

७ बहुव्रीहिरित्याह—**बोधेति ।** सर्वविषयव्यापितेति भावः । कन् स्वार्थे ॥

८ 'द्विवचनविभज्योपपदत्वाभावादाह' इति घ. प. पाठः ॥

९ कैयटादिकं दूषयति—**परे त्विति ॥** छाया ॥

१० **अन्येभ्यः**-असर्वनामभ्यः ॥ छाया ॥

११ अन्यथा मिथो भाष्ययोर्विरोध इत्याह—**अत एवेति ॥** तदनङ्गीकारादेवेत्यर्थः ॥ छाया ॥

१२ स्वयं प्रकारान्तरमपि खण्डयति—**सप्तमीति ॥** इतिना तस्यार्थपरत्वादाह—**तदर्थेति ।** सप्तमीपदार्थेत्यर्थः ॥ **दोष इति ।** इति बोध्यमिति शेषः ॥ छाया ॥

१३ उपसर्गेणेति वैशिष्ट्ये तृतीयेत्याह—**युक्तस्येति ॥** छाया ॥

(उद्योतः) यथाश्रुतमेव कस्मान्न गृह्यत इत्यत आह—न पुनरिति । अत एव किमर्थमुपसर्गनिर्देशो न दिष्ट इत्येवोच्येतेति नोक्तम् ॥

(समाधानभाष्यम्)

**शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात् । अर्थे मा भूत्—जनपदे अतिशायने-इति ॥**

(प्रदीपः) शब्द इति । अन्तरेणाऽपि निर्दिष्टग्रहणं 'तस्मिन्निति पूर्वस्य' इति निर्दिष्टत्वे लब्धे पुनर्निर्दिष्टशब्द उपादीयमानो बहिर्भावं गमयति । शब्दाच्च बहिर्भूतः शब्द एव भवतीति ॥ जनपद इति । तत्रायमर्थः स्यात्— जनपदवाचिनि शब्दे परतश्चातुरर्थिकस्य लुप् भवतीति ॥

(उद्योतः) अन्तरेणापीति । साकाङ्क्षतया 'उच्चारिते' इति पदाध्याहारादिति भावः ॥ पुनर्निर्दिष्टेति । एवं च सप्तम्यन्तार्थे बहिर्भूते उपश्लिष्टस्य पूर्वस्येत्यर्थः ॥ बहिर्भावस्य चावध्यपेक्षत्वादवधेश्च सूत्रोपात्तस्यैव ग्रहीतुमुचितत्वेन तस्य च शब्दात्मकत्वादवधिमानपि शब्द एवेति शब्दे सप्तमीनिर्दिष्टे पूर्वस्येति लभ्यत इति भावः ॥ ननु प्रत्ययस्य अर्थेन पौर्वापर्यासंभवात् कथं जनपदे इत्यत्रास्योपस्थानमत आह—तत्रायमर्थः स्यादिति । लक्षणा स्यादिति भावः ॥ निर्दिष्टग्रहणे तु यत्र मुख्यया वृत्त्या शब्दतात्पर्यको निर्देशस्तत्रास्योपस्थानमिति न दोष इति तात्पर्यम् ॥

(आक्षेपभाष्यम्)

**किं गतमेतदुपसर्गेण, आहोस्विच्छब्दाधिक्यादर्थाधिक्यम् ॥**

(समाधानभाष्यम्)

**गतमित्याह ॥**

**कथम्?**

**निरयं बहिर्भावे वर्तते । तद्यथा—निष्क्रान्तो देशात्-निर्देशः, बहिर्देश इति गम्यते । शब्दश्च शब्दाद्बहिर्भूतः । अर्थः-अबहिर्भूतः ॥**

(आक्षेपभाष्यम्)

**अथ निर्दिष्टग्रहणं किमर्थम्?**

(प्रदीपः) अथेति । ननु प्रयोजनस्योक्तत्वात् पुनः प्रश्नानुपपत्तिः । अयं भावः—जनपदे लुबित्यत्रार्थेन पौर्वापर्यासम्भवात् 'जनपदे य उत्पन्नः प्रत्ययस्तस्य लुप् भवति, तथा अतिशायने वर्तमानात्तमबादयः' इति अर्थनिर्देशेषूपस्थानं न भविष्यति । यदि चैतत्प्रयोजनम्, तदा तस्मिन्निति शब्दे पूर्वस्येति वक्तव्यम् ॥

(उद्योतः) अर्थेन पौर्वेति । तद्वाचकशब्दलक्षणायां च न मानमिति भावः ॥ तत्रार्थनिर्देशे च व्याख्यानमेव शरणम् । एवञ्च अथ किमर्थमित्यादिपूर्वपक्षसिद्धान्तावेकदेशिनोरिति बोध्यम् ॥ किं चार्थनिर्देशे 'जनपदे यः प्रत्यय इत्यन्वये नियमप्रसङ्गाभावान्नियमफला परिभाषा नोपतिष्ठते' इत्यपि बोध्यम् ॥

(३७५ समाधानवार्तिकम् ॥ १ ॥)

## ॥ * ॥ निर्दिष्टग्रहणमानन्तर्यार्थम् ॥ * ॥

(भाष्यम्)

**निर्दिष्टग्रहणं क्रियते । आनन्तर्यमात्रे कार्यं यथा स्यात्—"इको यणचि", दध्यत्र-मध्वत्र । इह मा भूत्—समिधौ-समिधः, दृषदौ-दृषदः ॥**

(प्रदीपः) निर्दिष्टग्रहणमिति । पूर्वोक्तप्रयोजनाभावादिति भावः । निःशब्दो नैरन्तर्ये वर्तते, दिशिश्चोच्चारणक्रियः । तेन निरन्तरोच्चारिते कार्यं-इति लभ्यते ॥ समिधाविति । ननु संहितायामित्युच्यते । न च व्यवहितयोः संहिताऽस्ति । अचीति चाधिकरणमौपश्लेषिकं निर्दिष्टम् । न च व्यवहित उपश्लिष्टो भवति ॥ नैष दोषः । वर्णानां परः संनिकर्षः संहिता । सा चात्रास्ति । अचीति सत्सप्तमी विज्ञायेत । व्यवहितेऽपि पूर्वशब्दो वर्तते-इति यत्र विषये यथाभूत इक् संभवति अनन्तरो व्यवहितो वा तत्र तथाभूतस्यैव यणादेशः स्यात् ॥

(उद्योतः) भाष्ये—आनन्तर्यमात्रे इति । न तु व्यवधाने इत्यर्थः ॥ ननु संहितायामिति । निमित्तस्थानिनोरन्येनाव्यवधानं-संहितेति भावः ॥ उपश्लिष्ट इति । उप-समीपे श्लिष्टः, अत्यन्तसमीप इति हि तदर्थः ॥ नैष दोष इति । वर्णशून्यकालाभावः-संहितेति भावः ॥ सत्सप्तमीति । औपश्लेषिकाधिकरणत्वस्य व्यवहिते बाधात्, सत्ता तु व्यवहितेऽपीति भावः । एवं च निर्दिष्टग्रहणमौपश्लेषिकाधिकरणसप्तम्यां तात्पर्यग्राहकमिति तात्पर्यम् ॥ वस्तुत उपश्लेषोऽप्यल्पव्यवहितेऽस्त्येव, किंचिद्दूरस्थितेऽपि वृक्षमूले तिष्ठतीति कटव्यवधानेऽपि भूमौ शेत इति च व्यवहारात् ॥ ननु व्यवहिते इकोऽचः पूर्वत्वाभावेनाप्राप्ते निर्दिष्टग्रहणं व्यर्थमत आह—व्यवहितेऽपीति । मथुरायाः पूर्वं पाटलिपुत्रमित्यादिव्यवहारादिति भावः ॥

---

१ यथाश्रुतमिति । धान्येन धनीतिवत्तृतीया ॥ छाया ॥

२ अत्र बीजान्तरमाह—अत एवेति ॥ छाया ॥

३ 'पूर्वस्येत्येव' इति क. ग. पाठः ॥

४ शब्द एवेति । पूर्वत्वेन परत्वेन वा बहिर्भावः शब्दाच्छब्दस्यैव संभवति न त्वर्थस्येति भावः ॥ छाया ॥

५ तत्र-तत्रैतदुपस्थितौ ॥ छाया ॥

६ तस्य च-सप्तम्यन्तार्थस्य च ॥ छाया ॥

७ अभ्युपेत्याह—यदि चेति ॥ छाया ॥

८ ननु शब्दनिर्देश एवास्तामत आह—अत्रेति । जनपदे इत्यादावित्यर्थः ॥ एतत्तात्पर्यमाह—एवं चेति । उक्तरीत्या तत्रानुपस्थितौ चेत्यर्थः ॥ छाया ॥ 'अत्रार्थे' इति घ. प. पाठः ॥

९ स्वयं युक्त्यन्तरमाह—किं चेति ॥ छाया ॥

१० पूर्वतः परिगणने प्रमादात् भ्रष्टा वार्तिकाङ्काः पुनः प्रत्यवस्थाप्यन्ते ॥

११ युक्त्यन्तरमाह—अचीति चेति ॥ छाया ॥

१२ मात्रमवधारण इत्याह—न त्विति ॥ अन्येन-वर्णेन ॥ छा. ॥

१३ कैयटादिकं दूषयति—वस्तुत इति ॥ अपिनाऽऽसन्नस्थितेऽपि पुरुषे ॥ छाया ॥

यत्र विषये इति । लक्ष्यभेदेन लक्षणभेद इति भावः ॥ वस्तुतः[1] संहिताधिकारो न कर्तव्य इत्यभिप्रायमिदं भाष्यम् ॥ संहिताधिकारप्रत्याख्यानं च तत्सूत्रे भाष्ये स्पष्टम् ॥

( सूत्रस्य नियमार्थत्वम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ?**

( प्रदीपः ) **किमर्थमिति** । किं नियमार्थमथ षष्ठीप्रक्लृप्त्यर्थमिति **प्रश्नः** ॥

( उद्द्योतः ) **किमुदाहरण**मित्यादिना सूत्रप्रयोजनस्योक्तत्वात्प्रश्नानुपपत्तिरत आह—**किंनियमार्थमित्यादि** ॥

( ३७६ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तस्मिँस्तस्मादिति पूर्वोत्तरयोर्योगाविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनम् ॥ * ॥**

( भाष्यम् )

**तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थोऽयमारम्भः । ग्रामे देवदत्तः, पूर्वः पर इति संदेहः । ग्रामाद्देवदत्तः, पूर्वः पर इति संदेहः । एवमिहापि—"इको यणचि", दध्युदकम् - पचत्योदनम् । उभाविकौ, उभावचौ । अचि पूर्वस्य - अचि परस्येति संदेहः ॥ "तिङ्ङतिङः" इति । अतिङः पूर्वस्य[2], परस्येति संदेहः ॥**

**इष्यते चात्राचि पूर्वस्य स्यात्, अतिङः परस्येति । तच्चान्तरेण यत्नं न सिध्यतीति नियमार्थं वचनम् ॥ एवमर्थमिदमुच्यते ॥**

( प्रदीपः ) **पूर्वोत्तरयोः**-इति कर्मणि षष्ठी । योगः= संबन्धः । तदयमर्थः—अच्युपश्लिष्टस्येको यणा भाव्यम् । यथाऽचि परस्मिन् पूर्व उपश्लिष्टः, एवं पूर्वस्मिन्नपि परः ॥ **तिङ्ङतिङ** इत्यत्रापि यथाऽतिङन्तात्परं तिङन्तं भवति, एवं पूर्वमपि । तत्र[3] षष्ठीप्रक्लृप्तिपक्षे षष्ठ्यनुवर्तयितव्या - इति गौरवप्रसङ्गान्नियमार्थमित्युक्तम् ॥ **योगयोरिति** । युज्येते इति - योगौ, कर्मणि घञ् । अचीति सत्सप्तमीपक्षे[4]ऽप्यनियमप्रसङ्गः ॥ **अचि पूर्वस्येति । उपपदविभक्तेः कारकविभक्तिर्बलीयसी**ति न्यायादधिकरणसप्तमी कृता, न तु दिग्योगलक्षणा पञ्चमी । तत्र[5] दध्युदकमित्यादौ पर्यायप्रसङ्गः । न हि युगपदेकस्य स्थानित्वं निमित्तत्वं चोपपद्यत इति नियमार्थं वचनं-पूर्वस्यैवाऽनन्तरस्यैव भवतीति ॥ द्वयं चानेन क्रियते-परनिवृत्तिर्व्यवहितनिवृत्तिश्च । संदेहस्तूपक्रममात्रतयोपन्यस्तः । **न हि संदेहादलक्षण**मिति न्यायात् पर्यायप्रसङ्गात् ॥

( उद्द्योतः ) ननु **पूर्वोत्तरयोर्योगयो**रिति भाष्यदर्शनेन पूर्वोत्तरयोरित्यस्य योगसमानाधिकरणत्वात्सापेक्षस्यासमर्थत्वेन **योगाविशेष** इति[6] समासो न स्यादत आह—**कर्मणि षष्ठीति** । तथाच[7] क्रियायाः कारकांशे नित्यसापेक्षत्वेनाविरुद्धः समास इति भावः ॥ **पूर्वोत्तरयोर्योगयो**रिति तु फलितार्थकथनम् ॥ **अच्युपश्लिष्टस्येति** । औपश्लेषिके[8]ऽधिकरणे सप्तमीति भावः ॥ आद्यसूत्रोदाहरणम्—**दध्युदेति** ॥ द्वितीयसूत्रोदाहरणम्—**पचत्यविति**[10] ॥ ननु नियमपक्षात्षष्ठीप्रक्लृप्तिपक्षः प्रशस्तोऽनुवाददोषाभावादत आह—**तत्र षष्ठीति** ॥ भाष्ये - **योगयो**रिति द्विवचनोपपत्तये आह—**कर्मणीति** । युज्यमानयोः पूर्वपरयोरविशेषात्—संबन्धाविशेषादित्यर्थः ॥ वस्तुतस्तु[11] व्यधिकरणे षष्ठ्यौ, प्रतियोगिद्वित्वेन संबन्धद्वित्वाच्च द्विवचननिर्देश इति बोध्यम् ॥ **सत्सप्तमीपक्षेऽपीति । यस्य च भावेने**ति सप्तमीति भावः ॥ इदं चिन्त्यमित्याह—**उपपदविभक्तेरिति । कारकविभक्तित्वं** च कारकाधिकारपठितसंज्ञानिमित्तकविभक्तित्वम् । एतच्च **तत्र च दीयत** इति सूत्रे कैयटे स्पष्टम् ॥ **न तु दिग्योगेति** । सत्सप्तम्या अप्युपलक्षणमिदम् । एतच्च **श्नान्नलोप** इत्यत्र निरूपयिष्यामः ॥ पर्यायस्यैवापादने बीजमाह—**न हि युगपदिति** । स्थानित्वे हि कार्यित्वेन प्राधान्यं निवर्त्यत्वं च, निमित्तत्वे च पारार्थ्येन गुणत्वं सत्त्वं च । तच्चोभयमेकदा एकस्य विरुद्धमिति भावः ॥ ननु **सन्देह** इति भाष्योक्त्या शास्त्रस्य मूकत्वमित्याभाति, अत आह—**सन्देहस्त्विति** ॥

( काकुभाष्यम् )

**अस्ति प्रयोजनमेतत् ?**

( समाधानभाष्यम् )

**किं तर्हीति ?**

( उभयनिर्देशे पञ्चमीनिर्देशबलीयस्त्वबोधनम् )

( आक्षेपभाष्यम् )

**अथ यत्रोभयं निर्दिश्यते, किं तत्र पूर्वस्य कार्यं भवति । आहोस्वित् परस्येति ?**

---

१ कैयटादिकं दूषयति—**वस्तुत इति** ॥ नन्वकरणमेवासिद्धमत आह—**संहितेति** ॥ छाया ॥ द्रुतायामपि पदादिपाठे व्याहृत्यर्थं संहिताधिकार आवश्यक एवेति ॥ दाधिमथाः ॥ स्वरसन्धिषु तदधिकारस्य प्रयोजनं नास्तीति प्रत्याख्यानभाष्याशय इति **वयम्** । ( र. ना. )

२ 'स्य, अतिङः पर' इति ग. पाठः ॥

३ **तत्र**—तयोर्मध्ये ॥ छाया ॥

४ न्यूनतां निराचष्टे—**सत्सप्तेति** ॥ छाया ॥

५ **तत्र**—तस्यां सत्याम् ॥ छाया ॥

६ **इति**—इत्यत्र वार्तिके ॥ छाया ॥

७ शङ्कां समाधत्ते—**तथा चेति** ॥ छाया ॥ तथा चेत्यस्य प्रायो बहुषु पुस्तकेषु पाठो न दृश्यते ॥

८ नन्वेवं तद्भाष्यासंगतिरत आह—**पूर्वोत्तरेति** ॥ छाया ॥

९ उपश्लिष्टपदाध्याहारेणाह—**औपेति** । इदमेव बोधयितुं सप्तम्युपादानमिति भावः ॥ छाया ॥

१० **पचत्यवितीति** । इदमुपलक्षणमोदनं पचतीत्यस्यापि ॥ छा.॥

११ प्रागुक्तैकवाक्यतया आह—**वस्तुत इति** ॥ छाया ॥

( प्रदीपः ) अथ यत्रेति । यथा बहोर्लोप इत्यत्र । युगपच्चैकस्य कार्यित्वनिमित्तत्वासंभवात् प्रश्नः ॥

( ३७७ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशः ॥ * ॥

( भाष्यम् )

उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशो भविष्यति ॥

( प्रदीपः ) विप्रतिषेधादिति । सूत्रपाठापेक्षया परस्य व्यवस्थापकत्वमित्यर्थः ॥

( उद्द्योतः ) ननु कार्यकालत्वात्परिभाषयोः पौर्वापर्याभावात्कथं विप्रतिषेधोऽत आह—सूत्रपाठेति । अत एवाग्रे ङमो ह्रस्वादिति त्रैपादिकमुदाहरणं सङ्गच्छते । तत्र हि कार्यकालपक्षाश्रयेणैव परिभाषाप्रवृत्तिरिति बोध्यम् ॥

( भाष्यम् )

किं प्रयोजनम् ?

( प्रदीपः ) किं प्रयोजनमिति । विभक्तिविशेषनिर्देशानवकाशत्वात्-इति वक्ष्यमाणोऽभिप्रायः ॥

( उद्द्योतः ) विभक्तिविशेषनिर्देशस्यानवकाशत्वादिति । इदमुदाहरिष्यमाणोदाहरणविशेषापेक्षम् । अत एव ङः सि धुडित्यत्र द्वयोरनवकाशत्वेऽपि न क्षतिः ॥

( प्रयोजने भाष्यवार्तिकम् )

*॥ प्रयोजनमँतो लसार्वधातुकानुदात्तत्वे ॥*

( भाष्यम् )

वक्ष्यति—*तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः * इति । तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य, लसार्वधातुके परतस्तास्यादीनामिति संदेहः ॥ तास्यादिभ्यः परस्य लसार्वधातुकस्य ॥

( प्रदीपः ) संदेह इति । संदेहाच्च पर्यायप्रसङ्गः ॥

( उद्द्योतः ) भाष्ये—वक्ष्यति तास्यादिभ्य इति । तास्युदात्तेदिति सूत्रे ॥ अभ्यस्तसिजर्थ इति । अभ्यस्तानामादिः आदिः सिच इति सूत्रयोर्लसार्वधातुक इति सप्तम्यन्तानुवृत्तिसिद्ध्ये इत्यर्थः ॥

( प्रयोजने भाष्यवार्तिकम् )

*॥ बहोरिष्ठादीनामादिलोपे ॥*

( भाष्यम् )

बहोरुत्तरेषामिष्ठेमेयसाम्, इष्ठेमेयःसु परतो बहोरिति संदेहः ॥ बहोरुत्तरेषामिष्ठेमेयसाम् ॥

( प्रदीपः ) इष्ठेमेयःस्विति । तदा च बहुशब्दस्य लोपभूभावौ पर्यायेण स्याताम् ॥

( प्रयोजने भाष्यवार्तिकम् )

*॥ गोतो णित् ॥*

( भाष्यम् )

गोतः परस्य सर्वनामस्थानस्य, सर्वनामस्थाने परतो गोत इति संदेहः ॥ गोतः परस्य सर्वनामस्थानस्य ॥

( प्रदीपः ) गोतो णिदिति । यदि गोशब्दस्य णित्त्वं स्यात्तदा 'तिष्ठति गौः' इत्यत्र वचनसामर्थ्यादनङ्गस्यापि वृद्धिः स्यात् ॥

( उद्द्योतः ) ननु भाष्ये सर्वनामस्थानस्य गोत इति षष्ठीदर्शनात् णिदित्यनेनान्वयो न स्यादत आह—णित्त्वमिति । भावप्रधानो निर्देश इति भावः ॥ गोतो णित्त्वे को दोषस्तत्राह—तिष्ठतीत्यादि ॥

( प्रयोजने भाष्यवार्तिकम् )

*॥ रुदादिभ्यः सार्वधातुके ॥*

( भाष्यम् )

रुदादिभ्यः परस्य सार्वधातुकस्य, सार्वधातुके परतो रुदादीनामिति संदेहः ॥ रुदादिभ्यः परस्य सार्वधातुकस्य ॥

( प्रयोजने भाष्यवार्तिकम् )

*॥ आने मुगीदासः ॥*

( भाष्यम् )

आस उत्तरस्यानस्य, आने परत आस इति संदेहः ॥ आस उत्तरस्यानस्य ॥

( प्रयोजने भाष्यवार्तिकम् )

*॥ आमि सर्वनाम्नः सुट् ॥*

( भाष्यम् )

सर्वनाम्न उत्तरस्यामः, आमि परतः सर्वनाम्न इति संदेहः ॥ सर्वनाम्न उत्तरस्यामः ॥

( प्रयोजने भाष्यवार्तिकम् )

*॥ घेर्ङित्याण् नद्याः ॥*

( भाष्यम् )

नद्याः परेषां ङिताम्, ङित्सु परतो नद्या इति संदेहः ॥ नद्या उत्तरेषां ङिताम् ॥

---

१ उदाहरणम्—अग्रे वक्ष्यमाणम् ॥ छाया ॥

२ अस्याव्यापकत्वादाह—इदमिति ॥ छाया ॥

३ आङ्गिकमिदं फलमित्याह—अत इति ॥ छाया ॥ एतदादीनि ङमो ह्रस्वादित्यन्तानि भाष्यवार्तिकानीति व्याख्याभाष्यदर्शनादनुमीयते ॥

४ लसार्वधातुके इति सप्तमीनिर्देशः कर्तव्य इत्यर्थः । ( र. ना. )

५ इति—उभयत्र ॥ छाया ॥ अभ्यस्तानामादिरित्युत्तरमपि ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ याडापः ॥***

( भाष्यम् )

**आप उत्तरस्य ङितः, ङिति परस्य आप इति संदेहः ॥ आप उत्तरस्य ङितः ॥**

( प्रयोजने भाष्यवार्तिकम् )

***॥ ङमो ह्रस्वादचि ङमुट् नित्यम् ॥***

( भाष्यम् )

**ङम उत्तरस्याऽचः, अचि परतो ङमः इति संदेहः ॥ ङम उत्तरस्याचः ॥**

( प्रदीपः ) **ङमो ह्रस्वादिति ।** ङमो ङमुडागमे सति 'कुर्वन्नास्ते' इत्यत्र णत्वप्रसङ्गः । पदस्य चैको नकारोऽन्तो न तु द्वावपि-इति 'पदान्तस्य' इति णत्वप्रतिषेधो नास्ति ॥

( उद्द्योतः ) **पदस्य चैक इति ।** व्यक्तिपक्षे इदम् । व्यक्तिपक्षेऽप्येवंविधप्रयोगसाधनायैवं व्याख्यानमिति भावः ॥ यद्वाऽन्तशब्दस्यावयववाचित्वेनेदृशे विषये जातिग्रहणासंभव एवेत्याहुः ॥

( ३७८ समाधानहेत्वनुपपत्तिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तोऽयं विप्रतिषेधः । सर्वत्रैवात्र कृतसामर्थ्या सप्तमी - अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति ॥**

( प्रदीपः ) **विभक्तीति ।** पूर्वोपात्तेषु सूत्रेषु सप्तमीनिर्देशस्य क्वचित् पूर्वार्थत्वात् क्वचिदुत्तरार्थत्वात् सावकाशत्वम् । पञ्चमी तु निरवकाशेति परस्य कार्थित्वं बोधयिष्यतीति भावः ॥

( उद्द्योतः ) ङःसिधुडित्यादावुभयोरप्यनवकाशत्वादाह—**पूर्वोपात्तेष्विति ।** **बहोरिति** पञ्चमी अचरितार्था । अत एवेष्ठादिषु षष्ठी । अत एव **भू च बहोरिति** पृथङ्निर्देशश्चरितार्थः । **गोत** इत्यादौ **सर्वनामस्थाने** इति सप्तमी पूर्वत्र चरितार्था । गोशब्दस्य णित्त्ववैयर्थ्यं च । तिष्ठति गौरित्यत्र गोशब्दं प्रति तिष्ठतेरनङ्गत्वान्न दोषः । **रुदादिभ्यः सार्वधातुक** इति **लिङः सलोप** इत्यादौ चरितार्थम् । तत्र हि सार्वधातुके विद्यमानस्य सस्य लोप इत्यर्थः ॥ **आमि सर्वनाम्न** इत्यामीति **त्रेस्त्रय** इत्यत्र सावकाशम् । **ङम** इति सूत्रेऽचीति **मय उञ** इति सूत्रे चरितार्थम् ॥ भाष्ये—**पञ्चमीनिर्देशो भविष्यतीत्यस्य** बलवान्त्वार्थे एव भविष्यतीत्यर्थः । सप्तमी तु षष्ठ्यर्थे इति भावः ॥

( ३७९ एकदेशिसमाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ यथार्थं वा षष्ठीनिर्देशः ॥ * ॥**

( भाष्यम् )

**यथार्थं वा षष्ठीनिर्देशः कर्तव्यः । यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्तव्या । यत्र परस्य कार्यमिष्यते तत्र परषष्ठी कर्तव्या ॥**

( प्रदीपः ) **यथार्थं वेति ।** यथाविषयमित्यर्थः । प्रदेशेषु कार्यिणः षष्ठ्यैव निर्देष्टव्याः ॥

( उद्द्योतः ) भाष्ये एकदेशी प्रौढ्याऽऽह—**यथार्थं वेति ।** तत्र अर्थशब्दो न प्रयोजनादिवाचीत्याह—**यथाविषयमिति ॥** **प्रदेशेष्विति ।** प्रागुक्तेष्वित्यर्थः ॥ भाष्ये—**पूर्वस्य षष्ठीति ।** पूर्वबोधकपदस्य षष्ठ्यन्तस्योच्चारणं कार्यमित्यर्थः ॥ एवं चोभयोच्चारणे गौरवमित्येकदेश्युक्तिरियम् ॥

( आक्षेपभाष्यम् )

**स तर्हि तथा निर्देशः कर्तव्यः ॥**

( उद्द्योतः ) तत्र तत्र सप्तम्यन्तषष्ठ्यन्तयोर्द्वयोः पाठे गौरवं मत्वेतर एकदेशी आह—**स तर्हीति ।**

( आक्षेपनिरासैकदेशिभाष्यम् )

**न कर्तव्यः । अनेनैव प्रक्लृप्तिर्भविष्यति—तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी, तस्मादित्युत्तरस्य षष्ठीति ॥**

( उद्द्योतः ) एकदेशी प्रौढ्यैवाह—**न कर्तव्यः । अनेनैवेति ।** षष्ठीपदानुवृत्तिगौरवादयमेकदेशी । उभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वे चावश्यके इति च ॥ **निर्दिष्टे पूर्वस्य षष्ठीति ।** पूर्वस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवतीत्यर्थः ॥ एवमुत्तरस्येत्यपि ॥

( आक्षेपभाष्यम् )

**तत्तर्हि षष्ठीग्रहणं कर्तव्यम् ॥**

( समाधानभाष्यम् )

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥**

**क्व प्रकृतम् ?**

**"षष्ठी स्थानेयोगा" इति ॥**

---

१ ङम उत्तरस्याच इति व्याख्यानमित्यर्थः । ( र. ना. )

२ प्रागुक्तदोषं खण्डयति—**गोशब्देति** ॥ छाया ॥

३ तदाशयमाह—**सप्तमी त्विति** ॥ छाया ॥

४ 'परस्य षष्ठी' इति क. ग. पाठः ॥

५ **तत्र**–वार्तिके ॥ **आदिना**ऽभिधेयादि ॥ **यथाविषयमितीति ।** तमनतिक्रम्येत्यर्थः ॥ छाया ॥

६ उक्तहेतोरेवाह—**प्रागुक्तेष्विति** ॥ छाया ॥

७ सप्तम्यन्तषष्ठ्यन्तोभयेत्यर्थः । पञ्चम्यन्तषष्ठ्यन्तोभयेत्यर्थश्च । ( र. ना. )

८ 'स एकदेशी' इति मुद्रितपाठः ॥

९ स्वयं गौरवान्तरमाह—**उभयोरिति** । परिभाषयोरेकत्रेत्यर्थः ॥ छाया ॥

( ३८० प्रकल्पकपक्षे दूषणवार्तिकम् ॥ ४ ॥ )

॥*॥ प्रकल्पकमिति चेन्नियमाभावः ॥*॥

( भाष्यम् )

प्रकल्पकमिति चेन्नियमस्याभावः । उक्तं चैतत्—नियमार्थोऽयमारम्भ इति ॥

( प्रदीपः ) प्रकल्पकमिति । यत्र षष्ठी नास्ति तत्र तस्याः क्लृप्तिः क्रियते । यत्र तु षष्ठ्यस्ति—इको यणचीत्यादौ, तत्रानेन न नियमः क्रियते । न हि व्यापारद्वयमुपपद्यते । येन षष्ठीप्रक्लृप्तिस्तस्याश्च नियम इति भावः ॥

( उद्द्योतः ) न हीति । आवृत्तिप्रसङ्गादिति भावः ॥

( दूषणान्तरभाष्यम् )

प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्युः ॥

तत्र को दोषः ?

"गुप्तिज्किद्भ्यः सन्" । गुप्तिज्किद्भ्य इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मादित्युत्तरस्य' इति ॥

( दूषणान्तरबाधकभाष्यम् )

अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्राऽऽन्तर्यतः सनः सन्नेव भविष्यति ॥

( दूषणान्तरसाधकभाष्यम् )

नैवं शक्यम् । इत्संज्ञा न प्रकल्पेत । उपदेश इत्संज्ञोच्यते ॥

( प्रदीपः ) इत्संज्ञेति । आदेशस्योपदेशाभावात्तस्येत्संज्ञा न सिध्यतीत्यर्थः । स्थानी चोत्पत्तिकाल एव निवृत्त्यभिमुखतया प्रतिपन्न इति स्थानिन्यपीत्संज्ञा नास्ति ॥

( उद्द्योतः ) इतर एकदेशी 'उपदेशे' इति हलन्त्यमित्यत्रानुवर्तत इति मत्वाऽऽह—इत्संज्ञेति ॥ तद्व्याचष्टे—उपदेशाभावादिति । स्थानेऽन्तरतमपरिभाषयाऽनुमीयमानत्वेनादेशस्योच्चारणाभावादित्यर्थः ॥ ननु स्थानिन्येव तस्याः प्रवृत्तेरनुमीयमानादेशो निरनुबन्धक एवेत्यत आह—स्थानी चेति । यदा धातोः प्रत्ययस्तदानीमेवादेशो भवेदिति नेत्संज्ञादि प्रतीक्षते । यत्र कार्यं तत्रेत्संज्ञेति प्रयोग एवेत्संज्ञेत्यभिमानः । एकदेशयुक्तित्वादत्र नात्यन्तं निर्भरः कार्य इति बोध्यम् ॥

( ३८१ प्रकल्पकपक्षे आक्षेपान्तरवार्तिकम् ॥ ५ ॥ )

॥ * ॥ प्रकृतिविकाराव्यवस्था च ॥ * ॥

( भाष्यम् )

प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते । "इको यणचि" अचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत्—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति ॥

( प्रदीपः ) यणिति प्रथमाया इति । ततश्चेकः स्थाने यण् न लभ्यते । इकोऽप्यन्य आदेशः स्याद्यणोऽप्यन्य इत्यभिमता स्थान्यादेशभावव्यवस्था न स्यात् ॥

( उद्द्योतः ) ततश्चेति । पूर्वस्य जायमानो यणपि पूर्व एवेति तत्रापि षष्ठीकल्पनमिति भावः ॥

( ३८२ प्रकल्पकपक्षे आक्षेपान्तरवार्तिकम् ॥ ६ ॥ )

॥ * ॥ सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः ॥ * ॥

( भाष्यम् )

सप्तमीपञ्चम्योश्च भावादुभयत्रैव षष्ठी प्राप्नोति । 'तास्यादिभ्यः' एषा पञ्चमी लसार्वधातुक इत्यस्याः सप्तम्याः षष्ठीं प्रकल्पयेत्—"तस्मादित्युत्तरस्य" इति ॥ तथा 'लसार्वधातुके' इत्येषा सप्तमी 'तास्यादिभ्यः' इति पञ्चम्याः षष्ठीं प्रकल्पयेत्—"तस्मिन्निति निर्दिष्टे पूर्वस्य" इति ॥

तत्र को दोषः ?

'तत्रोभयकार्यप्रसङ्गः' । तत्रोभयोः कार्यं प्राप्नोति ॥

( प्रदीपः ) उभयकार्यप्रसङ्ग इति । विरोधाभावाद्यौगपद्येनोभयोः कार्यं प्राप्नोति ॥

( उद्द्योतः ) विरोधाभावादिति । स्थानिभेदादित्यर्थः । अत एव विप्रतिषेधाप्रवृत्तिः । यद्यपि कार्यित्वनिमित्तत्वे युगपद्विरुद्धे, तथाप्येकदेशयुक्तित्वान्नात्यन्तं निर्भरः कार्य इति बोध्यम् ॥ एवमग्रेऽपि बोध्यम् ॥

( प्रकल्पकपक्षे दूषणोद्धारभाष्यम् )

नैष दोषः । यत्तावदुच्यते—* प्रकल्पकमिति चेन्नियमाभावः* इति । माभून्नियमः । सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते, पञ्चमीनिर्दिष्टे परस्य । यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते, पञ्चमीनिर्दिष्टे परस्य । नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुं, नापि पञ्चमीनिर्दिष्टे पूर्वस्य ॥

( प्रदीपः ) मा भून्नियम इति । षष्ठीप्रक्लृप्त्यैव तत्फलस्य सम्पन्नत्वादिति भावः ॥ यत्र षष्ठी नास्ति तत्रासौ प्रकल्प्यते । यत्र त्वस्ति इको यणचीति, तत्रापि पूर्वस्यैव षष्ठी, न परस्येति प्रकल्प्यते ॥

१ 'प्रकल्पकमिति चेदिति' इति पाठः क. ग. पुस्तकयोः ॥
२ 'प्रक्लृप्तिः' इति क. ग. पाठः ॥
३ 'तत्रानेन नियमो न क्रि' इति क. ग. पाठः ॥
४ 'तस्या नियमश्चेति' इति क. ग. पाठः ॥
५ दोषान्तरमाह—प्रत्येति ॥ छाया ॥
६ ननु सिद्धान्तविरोधोऽत आह—एकेति ॥ छाया ॥
७ तृतीयदोषमाह—प्रकृतीति ॥ छाया ॥
८ ननु यणोऽसिद्धत्वेन न पूर्वत्वमत आह—पूर्वस्येति ॥ छाया ॥
९ 'दिभ्यः—इत्येषा' इति क. ग. पाठः ॥
१० 'माभूदयं नियमः' इति ग. पाठः ॥
११ तत्रासाविति । सा चानियतयोगत्वात्स्थानषष्ठी, यस्य च स्थानषष्ठी तस्यैव कार्यनियम इति सोऽप्यर्थात्सिद्ध इति भावः ॥ छाया ॥

( उद्योतः ) यत्र त्वस्तीति । तस्मिन्नितीत्यस्य बहुविषयत्वलाभाय विषयभेदेन भेदात् केचित्पूर्वस्य षष्ठीति विधिपरम्, केचिन्नियमपरमित्यर्थः ॥

( आक्षेपबाधकभाष्यम् )

यदप्युच्यते—'प्रत्ययविधौ पञ्चम्यः प्रकल्पिकाः स्युः' इति ॥ सन्तु प्रकल्पिकाः ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—'गुप्तिज्किद्भ्यः सन्' इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मादित्युत्तरस्य'—इति ॥

( परिहारस्मारणभाष्यम् )

परिहृतमेतत्—न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्रान्तर्यात्[3] सनः सन्नेव भविष्यति—इति ॥

( परिहारबाधकस्मारणभाष्यम् )

ननु चोक्तम्—'नैवं शक्यमित्संज्ञा न प्रकल्पेत । उपदेश इति इत्संज्ञोच्यते'—इति ॥

( परिहारबाधानुपपत्तिभाष्यम् )

स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत । तत्र खलु कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यति । उपदेश इति हीत्संज्ञोच्यते ॥

( प्रदीपः ) कृतायामित्संज्ञायामिति । सूत्र एवोच्चारितस्य इत्संज्ञा-इति प्रयोगे 'स'शब्द एव 'सन्'कार्यं लभत इत्यर्थः ॥

( उद्योतः ) सूत्र एवेति । षष्ठीप्रक्लृप्तेः प्रागेव परत्वादन्तरङ्गत्वाच्च उपदेशोत्तरकालसूत्र[4] एवेत्संज्ञा । कार्यं तु प्रयोग एवेति भावः । एवं च[5] निरनुबन्धस्यैव प्रत्ययत्वेन विधानात्तदादेशस्य कुतः सानुबन्धकतेति तात्पर्यम् ॥ भाष्ये-उपदेश इति हीत्संज्ञोच्यत इति । एवं च[6] त्वदुक्तिर्व्याहतेति भावः ॥

( परिहारान्तरभाष्यम् )

अथवा-नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम् । यदा चोत्पन्नः सन्, तदा कृतसामर्थ्या पञ्चमीति कृत्वा प्रक्लृप्तिर्न भविष्यति ॥

( प्रदीपः ) अथवेति । परत्वविशिष्टस्य सन उत्पादेन उपक्षयात् प्रवृत्त्यन्तराभावाच्चास्ति पञ्चम्याः प्रकल्पकत्वमित्यर्थः ॥

( उद्योतः ) हलन्त्यसूत्रे उपदेशपदासंबन्ध एव-इति तत्सूत्रवक्ष्यमाणपक्षेऽप्याह—अथवेति ॥ परत्वविशिष्टस्येति । अनुत्पत्तौ धातोः परस्येति वक्तुमशक्यत्वादिति भावः ॥ उपक्षयादिति । पञ्चम्या इति शेषः ॥ प्रवृत्त्यन्तराभावादिति । पुनः प्रवृत्तौ मानाभावादिति भावः ॥

( आक्षेपान्तरबाधकभाष्यम् )

यदप्युच्यते—* प्रकृतिविकाराव्यवस्था च *—इति ॥

तत्रापि[7] कृता प्रकृतौ षष्ठी—'इकः' इति, विकृतौ प्रथमा-'यण्' इति । यत्र च नाम सौत्री षष्ठी नास्ति, तत्र प्रक्लृप्त्या भवितव्यम् ॥

( प्रदीपः ) प्रकृतौ षष्ठीति । इको यणचीति श्रुतयोरेव स्थान्यादेशभावोपादानान्नास्ति[8] षष्ठीप्रकल्पनम्, अपेक्षाया अभावादित्यर्थः ॥

( उद्योतः ) अपेक्षाया इति । श्रुतयोः संबन्धाभावे हि तस्मिन्नित्यनेन षष्ठीप्रक्लृप्त्यपेक्षा । न च प्रकृते तथा । लिङ्गाच्छ्रुतेर्बलीयस्त्वादित्यर्थः ॥

( भाष्यम् )

अथवा—अस्तु तावदिको यणिति यत्र नाम सौत्री षष्ठी ॥ यदि चेदानीमचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति ॥

अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्राऽऽन्तर्यतो यणो यणेव भविष्यति ॥

( उद्योतः ) भाष्ये—अथवाऽस्तु तावदिति । प्रथमाषष्ठीनिर्देशसामर्थ्यात्[9] प्रथमत इग्यणोः स्थान्यादेशभावोऽस्तु । तत एतत्सूत्रबलाद्यणः स्थानित्वेऽपि न क्षतिरित्यर्थः ॥ यत्र नाम सौत्री षष्ठी । यदि चेदानीमिति । यत्र सौत्री षष्ठ्यस्ति तत्रापीदानीं यदि प्रकल्पयेत्तर्हि अस्तु-प्रकल्पयत्वित्यर्थः ॥ परं त्विदं प्रौढ्या, अथवा नानुत्पन्ने सनीति प्रागुक्तन्यायात् ॥ गाङ्कुटादिभ्य[10] इत्यादौ षष्ठीप्रक्लृप्तावपि न दोषः, ङित्पदस्य धर्मपरत्वादिति बोध्यम् ॥

( आक्षेपान्तरबाधकभाष्यम् )

यदप्युच्यते—*सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः *—इति[11] ॥ आचार्यप्रवृत्तिर्ज्ञापयति—'नोभे युगपत्प्रकल्पिके भवतः' इति । यदयम् "एकः पूर्वपरयोः" इति पूर्वपरग्रहणं करोति ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥ तस्मादित्युत्तरस्य ॥ ६७ ॥

( प्रदीपः ) यदयमिति । यद्युभयनिर्देशात्परस्परषष्ठी-

---

१ यत्र षष्ठी नास्ति । ( र. ना. )

२ यत्र षष्ठ्यस्ति । ( र. ना. )

३ 'तत्रान्तर्यतः' इति मुद्रितपाठः ॥

४ 'त्तरकालं सूत्र' इति घ. प. पाठः ॥

५ एवं च-तत्रैवेत्संज्ञायां च ॥ छाया ॥

६ एवं च-तत्र तदनुवृत्तौ च ॥ त्वदुक्तिः-इत्संज्ञा न स्यादिति ॥ छाया ॥

७ 'तत्रास्तिप्रक्लृ' इति क. पाठः ॥

८ 'भावोपपादनान्नास्ति' इति क. ग. पाठः ॥

९ विभक्तिक्रमेणाह—प्रथमाषष्ठीति ॥ छाया ॥

१० न्यूनतां निराचष्टे—गाङिति ॥ धर्मेति । तेभ्यः परस्माञ्ञितो ङित्त्वं भवतीति सूत्रार्थः ॥ छाया ॥

११ इतिशब्दोत्तरं 'नैष दोषः । आचा' इति मुद्रितपुस्तकपाठः ।

प्रकल्पने सति ग्रहणकवाक्याद्वाक्यान्तरमनुमीयते–तास्यादिभ्यो लसार्वधातुकस्य लसार्वधातुके तास्यादीनामनुदात्तत्वं भवतीति तदा 'आद्गुणः' इत्यादावपि तथैव प्रक्लृप्तिर्भविष्यतीति किं **पूर्वपरयो**रित्यनेनेत्यर्थः । तत्र परत्वानवकाशत्वाभ्यां नियमपक्षवत् षष्ठीप्रकल्पनपक्षे व्यवस्था । दीर्घाच्छे तुक् भवतीत्यत्र षष्ठीस्थाने व्यत्ययेन पञ्चमीति व्याख्यानात् **सुराछाये**त्यादेर्वा ज्ञापकात् दीर्घस्यैव तुग् भवति, न तु छस्य ॥ ६६ ॥ ६७ ॥

( उद्योतः ) यद्यपि युगपत् प्रक्लृप्तिर्विरोधान्न संभवति, तथाप्येकदेशित्वादेव ज्ञापकेन परिहरति—**नोभे इत्यादिना** ॥ **तथैव प्रक्लृप्तिरिति** । अवर्णादचि अवर्णस्याचश्चैको गुणो भवतीत्यर्थ इति भावः ॥ ननूभयोः प्रक्लृप्तकत्वाभावेऽपि एकस्य कस्य प्रकल्पकत्वमत आह—**तत्र परत्वेति** ॥ ङः **सिधुडि**त्यादौ परत्वमुक्तेष्वनवकाशत्वमिति भावः ॥ ननु **दीर्घादि**ति सूत्रे पञ्चम्या अनवकाशत्वेन परत्वेन च छकारे षष्ठीप्रकल्पनं स्यादत आह—**दीर्घाच्छे इति** ॥ **सुराछायेति** । पदान्ते तुको वैकल्पिकत्वाच्चिन्त्यमिदम् । तुक्सहितं पाणिनिपाठमभिप्रेत्य तु ज्ञापकोपन्यासः । युक्तश्च तथा पाठः, वैकल्पिकेषु भावानुष्ठानस्य धर्माधिक्यफलकत्वात् ॥ ६६ ॥ ६७ ॥



( ६२ संज्ञासूत्रम् ॥ १ । १ । ९ आ. ८ सू. )

## स्वं रूपं शब्दस्याशब्दसंज्ञा ॥१।१।६८॥

( प्रदीपः ) **स्वंरूपं शब्द०** ॥ ६८ ॥ स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्था परिभाषेयमिति **केचिदाहुः** ॥ **अन्ये तु** लिङ्गाभावात् विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा, अपि तु संज्ञासूत्रमिदमिति प्रतिपन्नाः । देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्तः । 'सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः' 'सर्वशब्दप्रत्याय्यशक्तियुक्तश्चार्थः' इति व्यवहाराय नियमः क्रियते । रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषोदीरितभिन्नशब्दव्यक्तिसमवेतं सामान्यमभिधीयते । तत्र 'व्यक्तेः सामान्यं संज्ञा' 'सामान्यस्य वा व्यक्तिः' इति व्याख्याने कामचारः । व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते, सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यते इति फले न कश्चिद्भेदः ॥

( उद्योतः ) **स्वं रूपं०** ॥ ६८ ॥ **स्वरूपस्येति** । शब्देनार्थप्रतीतावर्थे केषांचित्कार्याणामसंभवात्तद्वाचकशब्दमात्रग्रहणादिति भावः ॥ **अन्ये त्विति** । शब्दस्य स्वरूपमिह ग्राह्यत्वेन विधित्सितमिति नेह प्रदेशविशेषसमर्पकं लिङ्गमस्तीति भावः ॥ ननु 'शब्दस्य' इत्येव लिङ्गम्, यत्र शब्दग्रहणं तत्र स्वरूपमेव ग्राह्यं न तु पर्यायादीत्यर्थः । तेन 'जनपदे' 'अपत्यं' इत्यादौ नास्याः प्रवृत्तिरत आह—**विध्यन्तरेति** । न हि **स्वं रूप**मित्यस्याग्नेर्ढगित्यादौ पञ्चम्यन्तेन सामानाधिकरण्येन वैयधिकरण्येन वा संबन्धः संभवतीति भावः ॥ भाष्यकारोऽप्याह—**रूपं शब्दस्य संज्ञे**ति - इत्ययमेव पक्षो युक्तः ॥ ननु संज्ञापक्षे **उभयगति**न्यायाद् एकस्यानेकार्थसंभवाच्चार्थस्यापि प्रतीतौ तत्र कार्यासंभवे ढगादयः पर्यायादिभ्योऽपि दुर्वारा इत्यत आह–**देवदत्तादयश्चेति** ॥ नियमार्थत्वमुपपादयति—**सर्वार्थेति** ॥ एकस्य सकलशब्दार्थात्मकस्फोटस्यैव सर्वबोधकत्वादिति भावः ॥ **शक्तियुक्त इति** । शक्त्याश्रय इत्यर्थः ॥ **सर्वशब्दप्रत्याय्यशक्तिरिति** । प्रत्याय्यत्वशक्तियुक्त इत्यर्थः ॥ अनेन नियमद्वयं दर्शितम्—अनेन शब्देनायमेवार्थो ग्राह्यः, अयमर्थोऽनेनैव शब्देन बोधनीय इति चेति ॥ वस्तुतस्तु सर्वेषां सर्वार्थवाचकत्वेऽपि तज्ज्ञानस्यादादिज्ञानविषयः, सर्वार्थशब्दानामस्माकं विशिष्याज्ञानात् । किंतु योगिनामेव तज्ज्ञानम् । एवंच शास्त्राधिकारिणोऽस्मदादीन्प्रति नियमार्थत्वं शास्त्रस्यासंभव्येव। [11]इयं कथा तु सर्वस्य ब्रह्मरूपत्वकथावन्न व्यवहारोपयोगिनी । तस्मात् प्रकरणादस्यैवार्थस्य शास्त्रे उपस्थितौ अर्थान्नियमः फलित इति बोध्यम् ॥ [12]तत्र द्वितीयो नियमश्चिन्त्यः, आकारादीनां वृद्धिशब्दातिरिक्तैराकारादिशब्दैर्व्यवहारानापत्तेरिति केचित्[13] ॥ [14]ननु रूपरूपिणोरत्र भेदाभावाच्छब्दस्येति षष्ठ्यनुपपन्ना, संज्ञासंज्ञिसंबन्धश्चानुपपन्न इत्यत आह—**रूपेति** ॥ सामान्यलक्षणघटकानेकसमवेतत्वसिद्धये आह—**शुकेति** । न च [15]तत्रोच्चारणक्रियैव भिद्यते न शब्द इति वाच्यम् । ताल्वादिव्यापाररूपस्योच्चारणस्याश्रौतत्वेन शब्दश्रवणानन्तरं जायमानवक्तृविशेषानुमानानापत्तेः, [16]उदात्तत्वादिविरुद्धधर्माध्यासाच्च भेद-

१ संग्राहकवाक्यादित्यर्थः । ( र. ना. )

२ **तत्र**–तेषां मध्ये ॥ तदेवाह—**ङः सीत्यादि** ॥ छाया ॥

३ कैयटं संदूष्य योजयति—**तुक्सहितमिति** ॥ तदेवं षष्ठीप्रक्लृप्तिपक्षोऽपि स्थापितः । परंतु गौरवात् दुष्ट इति प्रागुक्तमेवेति बोध्यम् ॥ छाया ॥

४ त्रयाणां तत्प्राप्तौ हेतुमाह—**शब्देनेति** ॥ विनिगमकाभावादिति भावः छाया ॥

५ आद्यहेत्वाशयमाह—**शब्दस्येति** ॥ छाया ॥

६ **आदिना** विशेषः ॥ छाया ॥

७ गमकान्तरमाह—**भाष्येति** ॥ **अयमेव**–संज्ञापक्ष एव ॥छा.॥

८ अर्थेऽनतिप्रसङ्गायाह—**शक्त्याश्रय इति** । तथाचानुयोगितासंबन्धेन तद्युक्तत्वं विवक्षितमिति भावः ॥ छाया ॥

९ यथाश्रुतासंगतेराह—**प्रत्याय्यत्वेति**। तद्रूपशक्तीत्यर्थः ॥छा.॥

१० कैयटादिकं दूषयति—**वस्तुतस्त्विति** ॥ **सर्वार्थेति** । सर्वेषामर्थानां सर्वशब्दानां चेत्यर्थः ॥ प्रमेयत्वादिना ज्ञानसत्त्वेऽपि तस्य बोधाद्यनुपयोगित्वादाह—**विशिष्येति** ॥ छाया ॥

११ **इयं**–'सर्वे सर्वार्थवाचकाः' इति ॥ छाया ॥

१२ तत्पक्षेऽपि दोषमाह—**तत्रेति** । तयोर्मध्य इत्यर्थः ॥ छाया ॥

१३ केचिदित्यरुचिबीजं तु साजात्याद्विजातीयशब्दस्यैव व्यावृत्तिर्न तु सजातीयस्येति न दोष इति ॥ छाया ॥

१४ सूत्रे शङ्कते—**नन्विति** ॥ **अत्र**–न तु सर्वत्र ॥ छाया ॥

१५ **तत्र**–तत्तदुच्चारितशब्दविषये ॥ छाया ॥

१६ ननु भेद एव किं मानं, तस्य नित्यत्वात् । स त्वभिव्यञ्जकोऽत आह—**उदात्तत्वेति** ॥ वस्तुतस्तत्रासत्त्वादाह—**अध्यासादिति** ॥ छाया ॥

सिद्धेः, वर्णैनिष्ठतया प्रतीयमानानां ध्वनिनिष्ठत्वकल्पने मानाभावात्—इति भावः ॥ ननु प्रायेण सामानाधिकरण्यं संज्ञासंज्ञिनोर्दृष्टम्, न चेह तदित्यत आह—तत्रेति ॥ स्वशब्दो व्यक्तिबोधक आत्मीयत्वेन । एवंच शब्दस्य तत्तज्जातिविशिष्टस्य स्वं-व्यक्तिः रूपं-सामान्यसंज्ञक मित्याद्यः पक्षः । शब्दस्य रूपमित्युद्दिश्य स्वमित्यनेन व्यक्तिसंज्ञकत्वं विधीयत इति द्वितीयपक्षसंभवः, सामानाधिकरण्यस्य चोपपत्तिः । न चानयोः पक्षयोः फले कश्चिद्विशेष इत्याह—व्यक्तिरिति ॥ व्यक्तिद्वारेणेति । सामान्यस्य ढगादिभिः साक्षात्पौर्वापर्यासंभवादिति भावः ॥

(अर्थवत्परिभाषासाधनम्)

(आक्षेपभाष्यम्)

**रूपग्रहणं किमर्थम् । न 'स्वं शब्दस्याशब्दसंज्ञा' भवति-इत्येव रूपं शब्दस्य संज्ञा भविष्यति । न ह्यन्यत् स्वं शब्दस्यास्ति अन्यदतो रूपात् ?**

(प्रदीपः) **रूपग्रहणमिति** । प्रतीतावुपदेशानपेक्षत्वादन्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपमेव ग्रहीष्यते । अर्थो हि सम्बन्धग्रहणमपेक्षते । अनुकरणशब्देषु नार्थः प्रतीयते । साधारणश्च पर्यायैरपि प्रत्यायनात् । न चार्थः संज्ञा शक्यते वक्तुं, संज्ञित्वे चार्थस्य सूत्रमनर्थकमिति **प्रश्नः** ॥

(उद्द्योतः) **रूपग्रहणं किमर्थ**मिति भाष्यस्य—स्वशब्देनैव जातिर्ग्राह्या व्यक्तिर्वा । शब्दस्य **स्वं**—स्वीया जातिर्व्यक्तिर्वा बोध्येत्यर्थो भविष्यति । सामानाधिकरण्यमेव संज्ञासंज्ञिनोरिति तु न नियमः, उञ इत्यादौ व्यभिचारादित्याशयः । शब्दस्य सूत्रोच्चारितस्य **स्वं**—स्वीयं रूपं प्रयोगस्थं संज्ञीत्यर्थ इति केचित् ॥ भाष्ये—**रूपं शब्दस्य संज्ञेति** । अत्र संज्ञाशब्दो बोध्यपरः, कर्मण्युत्पत्तेः । अन्यथा स्वशब्देनार्थग्रहणाय रूपग्रहणमित्युत्तरभाष्यासङ्गतेः । न ह्यर्थः शब्दस्य संज्ञा, किंतु बोध्य एवेति बोध्यम् ॥ तत्रात्मीयवाचिना स्वशब्देन रूपस्यैव कथं परिग्रह इत्यत आह—**प्रतीताविति** ॥ **उपदेशः**—संबन्धग्रहणम् ॥ **अन्तरङ्गत्वं**—प्रथमतः श्रोत्रेणोपस्थित्या ॥ अहेयत्वमुपपादयति—**अनुकरणेति** । शब्दमात्रतात्पर्यकोच्चारणस्यैवानुकरणत्वात् ॥ अर्थस्य रूपतुल्यत्वमभ्युपेत्याप्याह—**न चार्थ इति** । शब्दात्मिकानामेवार्वातिनीत्वेन संज्ञात्वात्, तादृशसंज्ञया व्यवहाराचेति भावः ॥ ननु स्वंशब्दस्याभिधेयमित्येवार्थोऽस्त्वित्यत आह—**संज्ञित्वे चेति** । लोकत एव सिद्धेरिति भावः ॥

(समाधानभाष्यम्)

**एवं तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः—अस्त्यन्यद्रूपात्स्वं शब्दस्येति ॥**

**किं पुनस्तत् ?**

**अर्थः ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**'अर्थवद्ग्रहणे नानर्थकस्य' इत्येषा परिभाषा न कर्तव्या भवति ॥**

(प्रदीपः) **एवं तर्हीति** । यदि एवेह रूपग्रहणस्य व्यावर्त्यं नास्ति तत एव ज्ञापकम् । सति तु व्यावर्त्ये तत्रैवोपक्षयान्न ज्ञापकं स्यात् ॥ **अर्थवद्ग्रहण इति** । अर्थयुक्तं रूपं गृह्यत इत्यर्थः । तेन काशे-कुशे-इत्यत्र **'शे'** इति प्रगृह्यसंज्ञा न भवति । यत्र चार्थवता रूपेण शब्दो नाश्रीयते तत्रेदं नोपतिष्ठते । यथा—वर्णग्रहणेषु, टेरेत्वे च-इति 'पचेते' इत्यत्रानर्थकस्यापि टेरेत्वं भवति ॥

(उद्द्योतः) **ज्ञापकमिति** । स्वशब्देन बहिरङ्गस्याप्यर्थस्य ग्रहणे-इत्यर्थः ॥ नन्वन्यस्य स्वीयस्य सत्त्वे तद्व्यावृत्त्यर्थं रूपग्रहणमित्यर्थो भाष्याल्लभ्यते । एवं च शास्त्रेऽर्थस्याग्रहणे कथमर्थवत्परिभाषासिद्धिरिति चेन्न । अन्यस्वीयमस्ति यतोऽतस्तस्यापि शब्दबोध्यत्वबोधनार्थमुभयोपादानमिति भाष्याशयात् । एवं चाधिकसङ्ग्रहार्थं

१ नन्वेवं तत्कृतो न भेदस्तेषामन्यनिष्ठत्वेनैव प्रतीतेः संभवादत आह—**वर्णेति** ॥ छाया ॥

२ **उञ** इत्यादौ तदभावादाह—**प्रायेणेति** ॥ **न च**—न तु ॥ छाया ॥

३ **तत्र**—रूपशब्दस्य तदर्थकत्वे ॥ छाया ॥

४ **एवं च**—द्वयोर्भिन्नार्थत्वे च ॥ अस्योभयत्रान्वयः ॥ छाया ॥

५ **चोपपत्तिः**—उपपत्तिश्च ॥ **न च**—नापि ॥ छाया ॥

६ **उपदेशानेति** । शब्दोच्चारणोत्तरं शब्दस्वरूपप्रतीतौ नोपदेशापेक्षा, अर्थप्रतीतौ तु शक्तिग्रहणापेक्षणाद्रूपमेव ग्रहीष्यत इति भावः ॥

७ शब्देनार्थस्याविनाभूतत्वमपि नेति दर्शयति-**अनुकरणेति** ॥

८ नन्वेवमग्रिमभाष्यासंगतिरत आह—**रूपेति** ॥ अस्याशयेऽन्वयः ॥ **अर्थः**—सूत्रस्य ॥ छाया ॥

९ उक्तदोषमुद्धरति—**सामेति** ॥ छाया ॥

१० अनेनैवाशयेन तत्सत्त्वेऽपि रत्नाद्युक्तमत आह—**शब्दस्येति** ॥ **स्वीयं**—आत्मीयम् ॥ **रूपं**—सदृशम् ॥ केचिदित्यरुचिबीजं तु एवमप्यन्यतरवैयर्थ्यमेवेति ॥ छाया ॥ 'उदित्सवर्णस्य' 'तपरस्तत्कालस्य' इति प्रकरणविरोध एवात्रारुचिरिति ॥ दाधिमथाः ॥

११ **तत्र**—रूपग्रहणाभावे ॥ छाया ॥

१२ अर्थस्य हेयत्वोपपादनद्वारा शब्दस्येति शेषः । (र. ना.)

१३ **मात्रं**—अवधारणे ॥ छाया ॥

१४ पुनः पुनः प्रयुज्यमानत्वेनेत्यर्थः । (र. ना.)

१५ 'संज्ञयाऽव्यवहा' इति घ. प. पाठः । **तादृशसंज्ञया**—शब्दात्मिकया संज्ञया व्यवहारादित्यर्थः । अव्यवहाराचेति पाठे-**तादृशसंज्ञया**-अर्थसंज्ञयेत्यर्थः ॥

१६ सिद्धे सतीत्यस्यार्थमाह—**यत इति** ॥ छाया ॥

१७ 'अन्यत् स्वीयं' इति घ. प. पाठः ॥

रूपग्रहणम् । रूपग्रहणेन चान्तरङ्गत्वादिन्यायबाधपूर्वकं स्वशब्देनार्थस्य शब्दबोध्यत्वं बोध्यत इति तात्पर्यम् ॥ तत्रोभयानुग्रहाय सति संभवेऽर्थवतो रूपस्य ग्रहणम् । असति तु केवलार्थस्य शुद्धस्य वा रूपस्य ग्रहणम् । तदाह—यत्र चार्थवतेत्यादि । अर्थोपस्थापकेन रूपेणेत्यर्थः । अत एव भिन्नविभक्तिनिर्देशश्चरितार्थः ॥

—•—

( सूत्रप्रयोजनम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ?**

( प्रदीपः ) **किमर्थमिति** । वक्ष्यमाणोऽभिप्रायः ॥

( ३८३ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ शब्देनार्थगतेरर्थस्यासंभवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् ॥ * ॥**

( भाष्यम् )

**शब्देनोच्चारितेनार्थो गम्यते—गामानय, दध्यशान—इति । अर्थ आनीयते, अर्थश्च भुज्यते ।**

**'अर्थस्यासंभवात्' । इह च व्याकरणे अर्थे कार्यस्यासंभवः—"अग्नेर्ढक्" इति, न शक्यतेऽङ्गारेभ्यः परो ढक् कर्तुम् । शब्देनार्थगतेरर्थस्यासंभवात् यावन्तस्तद्वाचिनः शब्दास्तावद्भ्यः सर्वेभ्य उत्पत्तिः प्राप्नोति । इष्यते च—तस्मादेव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वरूपवचनम् ॥ एवमर्थमिदमुच्यते ॥**

( प्रदीपः ) **शब्देनार्थगतेरिति** । कात्यायनवचनप्रामाण्यात् 'अस्त्रियाम्' इति प्रतिषेधस्यानित्यत्वात् विभाषा गुणे स्त्रियां पञ्चमी । इह योग्यतालक्षणेन संबन्धेन शब्दोऽर्थं लोके प्रत्याययति । व्याकरणेऽपि पशुः-अपत्यं-देवता-प्राञ्चः-उदञ्चः-भरताः-इत्यर्थ एव गृह्यते । अग्नेर्ढगित्यादौ त्वर्थस्य प्रत्ययेन पौर्वापर्यासंभवात् साहचर्यात् सर्वस्य तद्वाचिनः संप्रत्ययः स्यादिति सूत्रारम्भः ॥ **संज्ञाप्रतिषेधार्थमिति । संज्ञा**—सम्प्रत्यय उच्यते ॥

( उद्योतः ) इह योग्यतेति । योग्यता—बोधजनकतारूपा तया लक्ष्यते=कल्प्यत इति योग्यतालक्षणः—शक्तिः, तस्या उभयाश्रयकत्वेन उभयाधीनत्वलक्षणगुणयोगाद् गौण्या वृत्त्या वा संबन्धपदव्यवहार्यत्वमिति बोध्यम् ॥ इत्यर्थ एवेति ॥ अर्थे कार्यस्य संभवादिति भावः ॥ ननु संज्ञाविधायकस्य तत्प्रतिषेधार्थकत्वमयुक्तमत आह—संप्रत्यय इति । भावेऽजिति भावः ॥

( ३८४ समाधाननिराकरणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः ॥ * ॥**

( भाष्यम् )

**न वा एतत्प्रयोजनमस्ति ॥**

**किं कारणम् ?**

**'शब्दपूर्वको ह्यर्थे संप्रत्ययः' । आतश्च शब्दपूर्वकः । योऽपि ह्यसावाहूयते नाम्ना । नाम च यदाऽनेन नोपलब्धं भवति, तदा पृच्छति—'किं भवानाह' इति, शब्दपूर्वकश्चार्थस्य प्रत्ययः ॥ इह च व्याकरणे शब्दे कार्यस्य संभवः ॥ 'तस्मादर्थनिवृत्तिः ।' तस्मादर्थनिवृत्तिर्भविष्यति ॥**

( प्रदीपः ) **न वेति** । शब्द उपलब्धोऽर्थं प्रत्याययति, न सत्तामात्रेण । चक्षुरादीनि तु सत्तामात्रेण विषयमवगमयन्ति । अर्थस्य शास्त्रीये कार्ये क्वचिदयोग्यत्वात् प्रत्यासत्त्या स एवोपात्तः शब्दो ग्रहीष्यते, न विप्रकृष्टं शब्दान्तरमिति भावः ॥ **शब्दपूर्वक इति** । अस्योपलब्धुः शब्दपूर्वक इत्यर्थः ॥

( उद्योतः ) नन्वर्थप्रत्ययस्य शब्दपूर्वकत्वेऽपि कथं स्वरूपस्यैव ग्रहणमत आह—**शब्द इति** । तथा च प्रथमप्रतीतस्वरूपकारणादुच्चारितशब्दस्यैव ग्रहणं युक्तमिति भावः ॥ **शब्दपूर्वक इत्यस्य** शब्दज्ञानपूर्वक इत्यर्थः ॥ **प्रत्यासत्त्येति** । अर्थबोधानुकूलत्वेन ज्ञाते प्रथमप्रतीते शब्द एवार्थेऽसंभवे कार्यम्, न तु तत्पर्यायादिष्विति भावः ॥ अर्थे कार्यसंभवे तु तस्यैव । एवं चोपस्थितस्यार्थस्य सर्वथा त्यागे मानाभावाद् अर्थवत्परिभाषाऽपि सूत्रं विना सिद्धेति तात्पर्यम् ॥ एवं चैतन्न्यायानुवादकमिदं सूत्रं मन्दमत्यनुग्रहायेति बोध्यम् ॥

१ प्रागुक्तदोषमुद्धरति—**रूपेति** ॥ छाया ॥

२ तत्र—तयोर्मध्ये ॥ **उभयेति** । सूत्रप्राप्तरूपज्ञापकप्राप्तार्थरूपोभयेत्यर्थः ॥ छाया ॥

३ अत्र मानमप्याह—**अत एवेति** ॥ उक्तार्थस्येष्टत्वादेवेत्यर्थः ॥ सूत्रे इति भावः ॥ छाया ॥

४ 'रर्थे कार्यस्या' इति क. ग. पाठः ॥

५ 'अर्थे कार्यस्या' इति क. ग. पाठः ॥

६ 'गुणेऽस्त्रियामिति' इति च. छ. पाठः ॥

७ **संज्ञेति** । भावाङन्तेन संज्ञापदेन संप्रत्य उच्यत इत्यर्थः । तेन संज्ञाप्रतिषेधार्थमिति भाष्यस्य सम्प्रत्ययप्रतिषेधार्थमित्यर्थः ॥

८ बोधजनकत्वमेव शक्तिरिति मतस्य दूषितत्वाद्यथाश्रुतार्थं विहायान्यथा व्याचष्टे—**योग्यतेति** ॥ छाया ॥

९—**कस्य**—प्रकृतसूत्रस्य ॥ छाया ॥

१० 'सम्प्रत्ययः' इति क. ग. पाठः ॥

११ **इह च**—इह तु ॥ छाया ॥

१२ 'भवः, अर्थेऽसम्भवः' इति च. छ. पाठः ॥

१३ नन्वेवं भाष्यविरोधोऽत आह—**शब्देति** । भाष्यस्येत्यर्थः ॥ छाया ॥

१४ **एतत्**—**अर्थवदिति** ॥ छाया ॥

ननु अर्थज्ञानोत्तरं परं प्रति तद्बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीतेरत आह—**अस्योपलब्धुरिति** । श्रोतुरित्यर्थः ॥ भाष्ये—**शब्दपूर्वको हीति** । हिः प्रसिद्ध्यर्थः । श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इति लोकप्रसिद्धमित्यर्थः ॥ युक्त्यन्तरमप्याह—**आतश्चेति** । एवं च शब्दस्यार्थप्रतीतौ कारणत्वादर्थे कार्यासंभवे तद्बोधकारणत्वेनोपस्थिते शब्दे कार्यमिति भावः ॥ इदानीं तत्तच्छब्दजन्यार्थबोधे प्रकारतया भासमानशब्द एव कार्यमर्थेऽसंभवे इत्याह—**शब्दपूर्वकश्चेति** । शब्दविशेषणकश्चार्थविशेष्यकः प्रत्यय इत्यर्थः ॥ **न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते** इति भावः ॥ चकारेण चास्य युक्त्यन्तरत्वं सूचितम् ॥ भाष्ये—**तस्मादर्थनिवृत्तिरिति** । अर्थवाचकशब्दान्तरनिवृत्तिरित्यर्थः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—'अशब्दसंज्ञा' इति वक्ष्यामीति । इह मा भूत्—"दाधा घ्वदाप्" "तरप्तमपौ घः" इति ॥**

( प्रदीपः ) **अशब्दसंज्ञेति** । न्यायात् स्वरूपग्रहणे सिद्धे शब्दसंज्ञायां स्वरूपग्रहणं मा भूदित्येवमर्थमिदमित्यर्थः । अन्यथोपसर्गे **घोः किरिति** किः प्रत्ययो घोर्धातोः शब्दार्थात् स्यात्, न तु दाधाभ्यः । 'कुमारीघः' इत्यत्र **घरूपकल्पेति** ह्रस्वः प्रसज्येत ॥ **ई हल्यघोरि**त्यत्र तु घुशब्दस्याकारान्तत्वाभावाद्दाधामेव ग्रहणं सिद्धमिति ॥

( उद्योतः ) फलान्तरं शङ्कते—**इदं तर्हीति** ॥ **एवमर्थमिति** । निषेधप्रतियोगिज्ञानार्थं न्यायसिद्धस्यापि विध्यंशस्यानुवाद इत्यर्थः ॥ **किर्प्रत्यय इति** । **न चैवं पेषंवासवाहनधिषु चेति** धिग्रहणं व्यर्थं स्याद् । न हि धाधातोः किं विना उदकस्य ध्युत्तरपदत्वं संभवति । तत्र हि **कर्मण्यधिकरणे** चेति तदुत्तरसूत्रेण किरिति **वाच्यम्** । उपलक्षणमिदं, **सनि मीमाघु-नेर्गदे**त्यादौ घुधातोर्ग्रहणं स्यादिति बोध्यम् ॥ **कुमारीघ इति** । ननु अयं षष्ठीतत्पुरुषः कर्मधारयो वा, उभयथाऽपि नात्र प्राप्तिः, तत्र **स्त्रियां समानाधिकरण** इत्यनुवृत्तेरिति चेत्, घोऽस्त्यस्याः सा घा, कुमारी घा अस्य इति बहुव्रीहौ कुमारीघ इत्यर्थात् । **घादिषु ह्रस्वत्वं पुंवद्भावाद्विप्रतिषेधेने**त्युक्तेः पुंवत्त्वं बाधित्वा ह्रस्वप्राप्तिरित्याशयात् ॥ घुसंज्ञाविधानस्य तर्हि कोऽवकाश इत्यत आह—**ई हलीति** ॥ घसंज्ञाऽपि **किमेत्तिङव्ययघा**दित्यादौ चरितार्था, तत्र हि तिङन्तात्परान्यघान्तप्रातिपदिकासंभवादिति बोध्यम् ॥

( ३८५ प्रयोजननिराकरणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ शब्दसंज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् ॥ * ॥**

( भाष्यम् )

**शब्दसंज्ञाप्रतिषेधोऽनर्थकः ॥**

**शब्दसंज्ञायां स्वरूपविधिः कस्मान्न भवति ? 'वचनप्रामाण्यात्' । शब्दसंज्ञावचनसामर्थ्यात् ॥**

( प्रदीपः ) **वचनप्रामाण्यादिति** । प्रदेशेषु संज्ञिप्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति ॥

( उद्योतः ) **प्रदेशेष्विति** । सर्वप्रदेशेष्वित्यर्थः । संज्ञावचनसामर्थ्यगम्यप्रकरणात् प्रत्यासत्तिन्यायो बाध्यत इत्यभिप्रायः । न च **'ईहल्यघोः' 'किमेत्तिङव्ययघ'** इत्यत्र तयोश्चारितार्थ्यम् । तावन्मात्रफलकत्वे तत्रैव दाधाग्रहणं तरप्तमब्ग्रहणं च कुर्याद् इति बोध्यम् ॥

( प्रयोजनसाधकभाष्यम् )

**ननु च वचनप्रामाण्यात् संज्ञिनां संप्रत्ययः स्यात्, स्वरूपग्रहणाच्च संज्ञायाः ॥**

( प्रदीपः ) **ननु चेति** । उभयगतिरिह शास्त्रे दृष्टा—सङ्ख्याकर्मीकरणादिषु-इति इहापि स्वरूपस्य संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात् ॥

( उद्योतः ) **उभयगतिरिति** । संज्ञावचनस्य प्रत्यासत्तेश्चानुग्रहायोभयगतिरिति भावः । सूत्रारम्भमभ्युपेत्येदम् ॥

( प्रयोजनबाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—शब्दसंज्ञायां न स्वरूपविधिर्भवतीति । यदयम्—"ष्णान्ता षट्" इति षकारान्तायाः संख्यायाः षट्संज्ञां शास्ति । इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः संख्यायाः स्यात्, स्वरूपग्रहणाच्च षकारान्तायाः ॥**

( प्रयोजनसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम् । न हि षकारान्ता संज्ञा ॥**

**का तर्हि ?**

**डकारान्ता ॥**

( प्रदीपः ) **न हीति** । षड्भ्यो लुगित्यादावुचारितेति

---

१—**पस्थिते**—मूलोपस्थिते, न तु सर्वत्र ॥ छाया ॥

२ पौनरुक्त्यं परिहरति—**इदानीमिति** । यद्युक्तिकथनानन्तरमित्यर्थः ॥ छाया ॥

३ **प्रत्ययः**—ज्ञानम्, **अनुगमो**ऽपि ॥ छाया ॥

४ ननु पूर्वोपसंहार एवायं कुतो नात आह—**चकारेणेति** ॥ छाया ॥

५ 'सिध्यति' इति क. च. पाठः ॥

६ प्रदीपे 'किः प्रत्यय' इति सविसर्गः पाठः, प्रतीकश्च निर्विसर्गं दृश्यते ॥

७ **उपेति** । यत इत्यादिः ॥ छाया ॥

८ **घेति** । अर्श आदित्वादच् ॥ छाया ॥

९ नन्वेवं पुंवत्त्वापत्तिरत आह—**घादिष्विति** ॥ छाया ॥

१० न्यूनतां परिहरति—**घसंज्ञापीति** ॥ छाया ॥

११ 'संज्ञायाः प्रति' इति क. पाठः ॥

१२ ननूभयगतिरित्यस्य कृत्रिमाकृत्रिमन्यायविषयत्वात्सूत्राभावे कथमत्र सेत्याह—**सूत्रारम्भमिति** ॥ छाया ॥

१३ 'ख्यायाः सम्प्रत्ययः स्यात्' इति च. पाठः ॥

१४ 'संज्ञाऽस्ति' इति च. पाठः ॥

भावः ॥ **का तर्हीति** । अत्र डकारान्तः शब्द उच्चारितः, जश्शसोश्च षकारान्ताल्लुक् कर्तव्यः । षण्णामिति च नुट् ॥

**( उद्द्योतः ) षड्भ्य इति** । भाष्ये संज्ञाशब्दो बोधकपरः । न हि षकारान्तो बोधकशब्दस्तत्रोच्चारित इत्यर्थ इति भावः ॥ **षकारान्तादिति** । जश्शसोर्लुकः प्राक् जश्त्वाभावात् । एवंच तदर्थं तस्य षट्संज्ञा विधीयत इति न ज्ञापकत्वमिति भावः ॥

**( प्रयोजनबाधकभाष्यम् )**

**असिद्धं जश्त्वम्, तस्यासिद्धत्वात् षकारान्ता ॥**

**( प्रदीपः ) असिद्धमिति** । डकारान्तः श्रूयमाणोऽपि डत्वस्यासिद्धत्वात् षकारान्तस्य स्वरूपस्य ग्राहको भविष्यतीत्यर्थः ॥

**( उद्द्योतः ) डकारान्त इति** । षष उत्तरयोर्जश्शसोरिति स्वरूपग्रहणेन लुकि कार्ये जश्त्वमसिद्धमिति भावः ॥ तत्रापि संज्ञासूत्रे टान्तोच्चारणात्षड्भ्य इत्यादौ चर्त्वासिद्धत्वेनैव निर्वाहः । संहितापाठेन डान्तस्य संज्ञात्वे षट्चतुर्भ्यं इत्यत्र चर्त्वासिद्धत्वमावश्यकमिति तात्पर्यम् ॥

**( प्रयोजनभाष्यम् )**

**मन्त्राद्यर्थं तर्हीदं वक्तव्यम् । मन्त्रे-ऋचि-यजुषीति यदुच्यते, तन्मन्त्रशब्दे-ऋक्शब्दे-यजुःशब्दे च मा भूत् ॥**

**( प्रदीपः ) मन्त्राद्यर्थमिति** । मन्त्रादयः शब्दस्य संज्ञाः ॥

**( उद्द्योतः )** ष्णान्तेत्यादिज्ञापकं शास्त्रीयशब्दसंज्ञायां न स्वरूपग्रहणमित्यर्थं बोधयितुं न तु शब्दपदार्थके- इत्याशयेनाह— भाष्ये—**मन्त्राद्यर्थमिति** ॥

**( प्रयोजननिराकरणे भाष्यवार्तिकम् ॥ )**

***॥ मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् ॥***

**( भाष्यम् )**

**मन्त्राद्यर्थमिति चेत् । तन्न ।**

**किं कारणम् ?**

**शास्त्रस्य सामर्थ्यादर्थस्य गतिर्भविष्यति । मन्त्रे-ऋचि-यजुषीति यदुच्यते, मन्त्रशब्दे ऋक्शब्दे यजुष्शब्दे च तस्य कार्यस्य संभवो नास्तीति कृत्वा मन्त्रादिसहचरितो योऽर्थस्तस्य गतिर्भविष्यति, साहचर्यात् ॥**

**( प्रदीपः ) शास्त्रसामर्थ्यादिति । देवसुम्नयोरि**त्यादौ क्यजादीनां निमित्तत्वेनोपादानायजुषि ऋचि मन्त्र इति च स्वरूपं न ग्रहीष्यते । न हि तथाविधलक्ष्यमस्तीति भावः ॥ **मन्त्रादिसहचरित इति** । साहचर्यं च शब्दानुविद्धस्यैवार्थस्यावगमकम् ॥

**( उद्द्योतः ) शब्दानुविद्धस्यैवेति । न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते**-इति हर्युक्तेरिति भावः ॥ तद्बोध्यत्वेन संहचरितत्वमित्यन्ये ॥

—→०←—

**( न्यूनतानिराकरणम् )**

**( ३८६ आक्षेपवार्तिकम् ॥ ५ ॥ )**

**॥ * ॥ सित्तद्विशेषाणां वृक्षाद्यर्थम् ॥ * ॥**

**( भाष्यम् )**

**सिन्निर्देशः कर्तव्यः । ततो वक्तव्यम्—'तद्विशेषाणां' ग्रहणं भवति—इति ॥**

**किं प्रयोजनम् ?**

**'वृक्षाद्यर्थम् ।' "विभाषा वृक्षमृग—" इति । प्लक्षन्यग्रोधं, प्लक्षन्यग्रोधाः ॥**

**( प्रदीपः ) सित्तद्विशेषाणामिति** । 'वृक्षमृगस्' इत्येवं निर्देशः कर्तव्यः । एतदपि न्यायसिद्धं, तुल्यजातीयानां द्वन्द्व एकवद्भवतीति वक्ष्यते । पर्यायाणां च युगपत्प्रयोगाभावात् सामान्यविशेषाणां च चार्थाभावात् सामान्यशब्देन सर्वविशेषाणामाक्षेपात् 'धववृक्षं' इति द्वन्द्वाभावाद्विशेषाणामेव प्लक्षन्यग्रोधादीनां ग्रहणं सिद्धम् ॥

**( उद्द्योतः )** चार्थाभावमुपपादयति—**सामान्यशब्देनेति** । एवंच पदार्थभेदाभावात्साहित्यरूपचार्थासंभव इति भावः ॥

**( ३८७ आक्षेपवार्तिकम् ॥ ६ ॥ )**

**॥*॥ पित्पर्यायवचनस्य च स्वाद्यर्थम् ॥*॥**

**( भाष्यम् )**

**पिन्निर्देशः कर्तव्यः । ततो वक्तव्यम्—'पर्यायवचनस्य ।' तद्विशेषाणां च ग्रहणं भवति स्वस्य च रूपस्येति ॥**

**किं प्रयोजनम् ?**

**'स्वाद्यर्थम् ।' "स्वे पुषः"—स्वपोषं पुष्यति, रैपोषम्, धनपोषम्, विद्यापोषम्, अश्वपोषम्, गोपोषम् ॥**

**( प्रदीपः ) पित्पर्यायवचनस्य चेति** । चशब्दात् स्वरूपस्य विशेषाणां च ग्रहणम् । इदं वाचनिकमेव ॥

---

१ संज्ञाविधायकशास्त्रदृष्ट्येति भावः । ( र. ना. )

२ असिद्धत्वमावश्यकमित्याह—**तत्रापीति** । आरम्भवादिनोऽपीत्यर्थः ॥ छाया ॥

३ शब्दस्य संज्ञा शब्दसंज्ञेति समासमभिप्रेत्येदम् । ( र. ना. )

४ 'न च तथाविधं' इति क. ग. पाठः ॥

५ 'वगमात्' इति क. ग. पाठः ॥

६ स्वं रूपमिति सूत्रार्थवर्णनानन्तरं विभाषावृक्षमृगेत्यत्र वृक्षादिशब्दानामेव ग्रहणं स्यात्, न तद्विशेषाणाम् । तथा स्वे पुष इत्यादावपि तद्विशेषाणामेव ग्रहणम्प्राप्नोतीति तद्वारणायाह-**सित्तद्विशेषाणामिति** । एवञ्च यत्र तद्विशेषाणामपि ग्रहणमिष्यते तत्र तत्र प्रयत्नः कर्तव्य इत्याशयः ॥

७ 'वृक्षस् मृगस्' इति क. ग. च. पाठः ॥

( ३८८ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥*॥ जित्पर्यायवचनस्यैव राजाद्यर्थम्॥*॥

( भाष्यम् )

जिन्निर्देशः कर्तव्यः । ततो वक्तव्यम्—'पर्यायवचनस्यैव' ग्रहणं भवति ॥

किं प्रयोजनम् ?

'राजाद्यर्थं ।' "सभा राजाऽमनुष्यपूर्वा"-इनसभम्, ईश्वरसभम् ॥ तस्यैव न भवति—राजसभा॥ तद्विशेषाणां च न भवति—पुष्पमित्रसभा[1], चन्द्रगुप्तसभा ॥

( प्रदीपः ) **जित्पर्यायेति** । इदं न्यायसिद्धमित्याहुः[2] । 'अराजा' इति पर्युदास आश्रीयते । तेन राजशब्दसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यति ॥

( उद्द्योतः ) **पर्युदास इति** । कैश्चित्तु[3] **अराजेति** छेदाभावात् । किंच राजशब्दः शब्दपरः, मनुष्यशब्दश्चार्थपर इति दुर्लभं स्यात् । किंच एवं अमनुष्यशब्देनापि मनुष्यपर्यायाणामेव ग्रहणं स्यादितीदं **वाचनिकमेवे**त्याह ॥

( ३८९ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् ॥ * ॥

( भाष्यम् )

झिन्निर्देशः कर्तव्यः । ततो वक्तव्यम्—'तस्य च तद्विशेषाणां च' ग्रहणं भवति—इति ॥

किं प्रयोजनम् ?

'मत्स्याद्यर्थम्' । "पक्षिमत्स्यमृगान् हन्ति"—मात्स्यिकः । तद्विशेषाणाम्—शाफरिकः, शाकुलिकः । पर्यायवचनानां न भवति—अजिह्मान् हन्ति, अनिमिषान् हन्ति ॥

( भाष्येष्टिः )

**अस्यैकस्य पर्यायवचनस्येष्यते ।**

**मीनान् हन्ति-मैनिकः ॥**

**स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥**

( प्रदीपः ) **झित्तस्य चेति** । इदं वाचनिकमेव ॥ **मत्स्याद्यर्थमिति** । मृगपक्षिणोस्तु पिन्निर्देशस्तत्फललाभार्थं कर्तव्यः ॥ **अस्यैकस्येति** । इयमिष्टिरेव ॥ ६८ ॥

( उद्द्योतः ) आद्यन्तौ विहाय मध्योपादानेऽभिप्रायमाह—**मृगेति** । एवंच **मत्स्याद्यर्थ**मित्यादिशब्दप्रयोजनं **चिन्त्यम्** ॥६८॥

( ६३ ग्रहणकशास्त्रम् ॥ १ । १ । ९ आ. ९ सू. ॥ )

# अणुदित्सवर्णस्य[4] चाप्रत्ययः ॥ १ । १ । ६९ ॥

( भाव्यमानेनेतिपरिभाषाज्ञापनम् )

( जिज्ञासाभाष्यम् )

अप्रत्यय इति किमर्थम् ?

---

१ अयं भाष्यकारसमये चन्द्रगुप्तवंश्यबृहद्रथोत्तरमासीदिति नव्याः ॥ दाधिमथाः ॥

२ न्यायसिद्धत्वमेवोपपादयति । ( र. ना. )

३ कौस्तुभोक्तिमाह—**कश्चित्त्विति** ॥ **किं चेति**। यत इति शेषः ॥ एवमग्रेऽपि ॥ अत्रारुचिबीजं त्विष्टानुरोधेन व्यवस्थयाऽन्यत्रेवात्रापि सिद्धिरिति ॥ छाया ॥ 'कश्चित्तु' इत्यस्य 'आह' इत्यनेनान्वयः ॥

४ अत्र संहितापाठे सर्वेष्वपि पुस्तकेषु ङमुडागमो न दृश्यते । तत्र किं लेखकप्रमादः, उत आर्ष एव तथा प्रयोग इति संदेहः । तत्रार्ष एव प्रयोगस्तथेति प्राञ्चो गतानुगतिकाः ॥

लक्षणैकचक्षुष्का नवीनास्तु ङमुड्रहितप्रयोगो लेखकप्रमादजः । न च सौत्रत्वान्न ङमुडिति वाच्यम् । यत्र यत्र सौत्रत्वाल्लक्षणबाधस्तत्र तत्र "**अयुक्तोऽयं निर्देशः । तिरश्चीति भवितव्यम् ॥ सौत्रोऽयं निर्देशः ।**" इति **तिर्यच्यपवर्गे** इति सूत्रे, '**अयुक्तोऽयं निर्देशः । अनूचीति भवितव्यम् । सौत्रोऽयं निर्देशः**' इति **अन्वच्यानुलोम्ये** इति सूत्रे, '**तपरस्तत्कालस्ये**ति **दकारोपि चर्त्वभूतो निर्दिश्यते ॥ यद्येवं चर्त्वस्यासिद्धत्वाद्धशिचेत्युत्वं प्राप्नोति ॥ सौत्रो निर्देशः**' इति **तित्स्वरित**मित्यादिसूत्रेषु भाष्यकृता तथोक्तत्वेनात्र तथा भाष्यकृताऽनुक्तत्वेन ङमुडभावे सौत्रत्वकल्पनाया अन्याय्यत्वात् । न चा**ल्पाच्तर**मिति सूत्रे कुत्वाभावाय सौत्रोऽयं निर्देश इत्यनुक्तावपि सौत्रत्वं मन्यते तथात्राप्यङ्गीकारे को दोष इति वाच्यम् । प्रत्याहारेषु कुत्वाभावाय **वृद्धिरादैच्** सूत्रे भाष्ये अयस्मयादित्वकल्पनाया उक्तत्वेन तथात्रापि कल्पनयाऽ**ल्पाच्तर**मिति सौत्रस्य **सिद्धमनच्त्वा**दिति वार्तिकीयस्य कुत्वाभावस्योपपत्तेः । '**तत्कालेष्वक्षु**' इति वार्तिककृता '**अचोऽक्षु**' इति भाष्यकृता च सुपि तु कुत्वमङ्गीकृतम् ॥ इति वदन्ति ॥

वयं तु ब्रूमः—नित्यशब्दस्य प्रायिकसमानार्थबहुलपर्यायताया **नित्यवीप्सयो**रिति सूत्रादौ सर्वसंमतत्वेन '**तिङ्ङतिङः**' '**तस्मिन्नणिच**' '**तस्मिन्निति**' इत्यादौ ङमुटं कृत्वापि '**सुप्तिङन्तं पदम्**' '**सनाद्यन्ता धातवः**' **तनादिभ्यस्तथासो**रित्यादावकरणेन '**सन्नन्तान्न सनिष्यते**' इति वार्तिके ङमुटो भावाभावदर्शनेन ङमुडागमस्य प्रायिकत्वान्ङमुडभावेऽपि न सूत्रसंकोच इति ङमुड्रहितप्रयोगः पाणिनिकृत एव ॥ एवं राजमार्गेण ङमुड्रहितप्रयोगसिद्धौ **इकोयणची**त्यादौ ङमुडभावायागतिकगतिसौत्रत्वकल्पना **नागेशस्य** चिन्त्यैव ।

सूत्रवार्तिकभाष्येषु यत्र तत्र ङकारनकारयोरेव ङमुडुपलब्ध्या णकारस्य ह्रस्वादचः परस्य कष्टसाध्यत्वेन '**अभिव्यक्ते**'ति न्यायेनासुलभत्वसूचनायैवात्र ङमुड् न कृत इति बोध्यम् ॥ वस्तुतस्तु ह्रस्वात्परस्य पदान्तणकारस्य वेदलोकयोरनभिधानमेव सूचयितुं णकारस्य ङमुड् क्वापि न कृतः । विचमन्तरा तदनुपपत्त्या विचश्छन्दोविषयत्वाच्छन्दसो दृष्टानुविधित्वात् ।

( प्रदीपः ) अणुदित्० ॥६९॥ **अप्रत्यय इति किमर्थमिति** । किं यस्य प्रत्ययसंज्ञा विहिता तस्य प्रतिषेधः, उत यः प्रतीयते=विधीयत इति यौगिकः प्रत्ययस्तस्यापीति **प्रश्नः** ॥

( उद्द्योतः ) अणुदित्० ॥ ६९ ॥ **किं यस्येति** । नाक्षेपोऽयम्, किंतु विशेषजिज्ञासेत्यर्थः । उत यौगिक इत्यन्वयः । **किमर्थमि**त्यत्रार्थशब्दोऽभिधेयपर इति तात्पर्यम् ॥

( समाधानभाष्यम् )

**"सनाशंसभिक्ष उः" "अ सांप्रतिके"** ॥

( आक्षेपभाष्यम् )

**अत्यल्पमिदमुच्यते—अप्रत्यय इति । "अप्रत्ययादेशटितिकिन्मितः" इति वक्तव्यम् ॥ प्रत्यये—उदाहृतम् ॥ आदेशे—"इदम इश्" इतः, इह ॥ टिति—लविता, लवितुम् ॥ किति—बभूव ॥ मिति—हे अनड्वन् ॥**

( प्रदीपः ) **इत इति** । विशेषविहितत्वात् त्यदाद्यत्वं बाधित्वा त्रिमात्र आदेशः प्राप्नोति ॥ **बभूवेति** । अनुनासिकः प्राप्नोति ॥ **अनड्वन्निति** । आमपि पक्षे प्राप्नोति ॥

( उद्द्योतः ) नन्विदमः परत्वात् त्यदाद्यत्वेऽन्तरङ्गत्वाच्च पररूपेऽर्धतृतीयमात्रस्य सवर्णग्रहणेऽपि नान्तरतम आदेशः संभवतीति श्रुत एव भविष्यति । **न च** श्रुतापेक्षया दीर्घप्लुतयोरन्तरतमत्वात्ते एव भविष्यतः, ह्रस्वोच्चारणं तु लाघवार्थं स्याद् इति **वाच्यम्** । एवं तर्हि परत्वाद्धलि लोपे मात्रिकत्वान्मात्रिक एव भविष्यति । तत्र न 'आपि' इति वर्तते, फलाभावादत आह—**विशेषेति** । येन नाप्राप्तिन्यायादिति भावः । शादीनां चोपदेशे एवेत्संज्ञालोपयोरणत्वेन सवर्णग्रहणप्रसक्तिः ॥ **अनुनासिक इति** । पक्षे-इति शेषः ॥

( टिद्ग्रहणवैयर्थ्यसाधकभाष्यम् )

**टितः परिहारः—आचार्यप्रवृत्तिर्ज्ञापयति—'न टिता सवर्णानां ग्रहणं भवति' इति । यदयम्—ग्रहोऽलिटि दीर्घत्वं शास्ति ॥**

( प्रदीपः ) **यदयमिति** । ग्रहेरेव दीर्घो नान्येभ्य इति नियमाभावादिति भावः ॥

( उद्द्योतः ) नियमार्थं तत् स्यात्, अत आह—**ग्रहेरेवेति** । **वृतो** वेत्यनेन विरोधादिति भाव इति केचित् ॥ वस्तुतस्तु यथा **दिक्सङ्ख्ये** इति नियमादप्राप्तसमासविधायकं **तद्धितार्थेति**, एवं ग्रहेरेवेति नियमादप्राप्तदीर्घविध्यर्थं **वृतो वेति** स्यादिति चिन्त्यैषा व्याख्या । तस्माद्विधेयसङ्कोचस्यान्याय्यत्वान्न तथा नियम इति भावः ॥

( ज्ञापकत्वनिराकरणभाष्यम् )

**नैतदस्तिज्ञापकम् । नियमार्थमेतत् स्यात्—ग्रहः अलिटि दीर्घ एवेति ॥**

( प्रदीपः ) **नियमार्थमिति** । ग्रहेर्दीर्घ एव, न ह्रस्व इत्येवमर्थं स्यादित्यर्थः ॥

( ज्ञापकान्तरभाष्यम् )

**यत्तर्हि "वृतो वा" इति विभाषां शास्ति ॥**

( प्रदीपः ) **वृतो वेति** । ननु ववरिथेति लिटि दीर्घो मा भूदित्येवमर्थमेतत् स्यादिति कथं ज्ञापकम् ॥ एवं तर्हि 'वृतः-' इत्यत्रापि अलिटीत्यनुवर्तनाल्लिटि दीर्घनिषेधादन्यत्र उभयस्मिन् सिद्धे वाग्रहणं ज्ञापकम्—ईट इटा ग्रहणाभावस्य ॥

( उद्द्योतः ) **ववरिथेति** । 'ववर्थ' इति छन्दसि इडभावनिपातनाद् भाषायां **क्रसृभृवृस्त्विति** इट्प्रतिषेधो न । अलिटीत्येव **वृतो वेत्यर्थाद्** लिटि ह्रस्व एवेति भावः ॥ **वाग्रहणमिति** । अत एव भाष्ये—**यद्विभाषां शास्तीत्युक्तम्** ॥

( यौगिकत्वे पर्युदासवैयर्थ्यभाष्यम् )

**सर्वेषामेष परिहारः—**

**'भाव्यमानेन सवर्णानां ग्रहणं न'**

**इत्येवं न भविष्यति ॥**

( उद्द्योतः ) भाष्ये—**भाव्यमानेनेति** । इयं च जातिग्रहणप्राप्तं गुणाभेदकत्वप्राप्तं चाणणसाधारण्येन प्राप्तं सवर्णग्रहणं वारयितुमावश्यकीति भावः ॥

---

अत एव ङौ चेद्ध्रस्वपूर्वौ स्वरे पदान्तौ" इति ( ४।१०६ ) यजुःप्रातिशाख्यसूत्रे कात्यायनेन **'पदान्तीयो ह्रस्वपूर्वो ङकारो नकारश्च क्रामत उत्तरे स्वरे'** इति ( ६।१५ ) ऋक्प्रातिशाख्ये शौनकेन च णकारो नोपात्तः । ये तु वदन्ति—उक्तप्रातिशाख्यसंवादात्पाणिनिनापि **"ङमो ह्रस्वादचि ङमुण्नित्यम्"** इत्येव पठितम् । ततो लेखकप्रमादान्नकारस्य स्थाने मकारो जात इति ॥ तन्मन्दम्, **ञमङणनमि**ति सूत्रभाष्यविरोधात् । अत एव प्रत्याहारसूत्रे वा **'ञमणङनम्'** इत्येवमेव पाठ आसीदिति कल्पनापि निरस्ता । **ञय आगमिन इति** भाष्यविरोधात् ॥ पाणिनिना तु स्वतन्त्रतया स्वरूपनिर्देशे ज्ञानलाघवेऽपि **'बहुवचने झल्येद्'** इत्येव सिद्धावपि झल्प्रत्याहारेणैवोपादानवदत्रापि प्रत्याहारेणोक्तम् । तत्र यथा **'बशो भष्'** इत्यत्र डकारस्यासंभवेन न क्षतिः । एवं प्रत्याहारेऽन्तर्गतत्वेऽपि लोकवेदयोर्झकारभकारयोरिव णकारस्याप्यसंभवेन न ङमुडिति बोध्यम् ॥

पतधातोर्निष्ठायां प्राप्तस्यापि **यस्य विभाषेति** निषेधस्य पतितेति-निर्देशेनाप्रवृत्तिरिव **'अणिनुणः' 'अणिञोरनार्षयोः' 'इणजादिभ्यः' 'उणादय'** इत्यादिभिर्निर्देशैर्णकारनिमित्तकङमुडागमस्य सर्वत्रैवाप्रवृत्तिरेव सूच्यते ॥ दाधिमथाः ॥

१ **अनुनासिक इति** । वुगागमस्य कित्वात्सवर्णग्रहणे वकारस्य सवर्णोऽनुनासिक वकारोऽपि गृह्येतेति अनुनासिकोऽपि स्यादित्याशयः ॥

२ **केचित्**–दण्डिनारायणादयः ॥ एतत्सूचितामरुचिमाह—**वस्तुतस्त्विति** ॥ तथा सति कैयटाशयमाह—**तस्मादिति** ॥ छाया ॥

३ **नियमार्थमिति** । टिता सवर्णग्रहणे आर्धधातुकस्येड्वलादेरित्यत्रेट्पदेन सवर्णानां ग्रहणं स्यात् । तथा च ह्रस्वेकारस्य दीर्घेकारस्य वा विधानं सम्भवति । ह्रस्वेकारवारणायायं नियमइत्याशयः ।

४ **शास्तीति** । टिता सवर्णग्रहणे ह्रस्वदीर्घयोः पर्यायेण सर्वत्र प्राप्तौ विकल्पविधानं ज्ञापकमित्याशयः ॥

५ इदमेव भाष्याभिमतमित्याह—**अत एवेति** ॥ छाया ॥

६ 'इत्येवं भविष्यति' इति क. च. पाठः ॥

७ **इयं च**–परिभाषा ॥ छाया ॥

( संज्ञापरत्वेऽपि पर्युदासवैयर्थ्यभाष्यम् )

**प्रत्यये भूयान् परिहारः—अनभिधानात्प्रत्ययः सवर्णान् न ग्रहीष्यति । यान्[१] हि प्रत्ययः सवर्णग्रहणेन गृह्णीयात्[२] न तैरर्थस्याभिधानं स्यात् । अनभिधानान्न भविष्यति ॥**

( प्रदीपः ) **प्रत्यये भूयानिति** । साधारणश्चासाधारणश्चेत्यर्थः । 'प्रत्ययः' इत्यन्वर्थसंज्ञा कृता-येनार्थं प्रतियन्ति स प्रत्ययः । न च दीर्घप्लुतयोरर्थस्याभिधानमस्ति ॥

( उद्योतः ) **साधारणश्चेति** । भूयानित्युक्तिर्नापूर्वाऽनेकसमाधानाभिप्राया, किंतु सूत्रोक्ताप्रत्ययग्रहणमपेक्ष्य-इति 'भूयान्' इति प्रतिज्ञायैकपरिहारोपन्यासेऽपि न विरोध इति भावः ॥ नन्वस्य च्वावित्यादाविवार्थाभिधानासमर्थस्यापि सवर्णस्य ग्रहणं स्यादत आह—**प्रत्यय इतीति** । प्रत्ययविधौ[३] सवर्णग्रहणे हि तेषामपि प्रत्ययत्वमेष्टव्यम् । तच्चान्वर्थत्वादसंभवीति न तत्र सवर्णग्रहणमिति भावः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—इह केचित्प्रतीयन्ते, केचित्प्रत्याय्यन्ते । ह्रस्वाः प्रतीयन्ते, दीर्घाः प्रत्याय्यन्ते । यावच्च[४] ब्रूयात्—प्रत्याय्यमानेन सवर्णानां ग्रहणं नेति, तावदप्रत्यय इति ॥**

( प्रदीपः ) **ह्रस्वा इति** । श्रूयन्ते[५]–उच्चार्यन्ते अगादिचोदनाखित्यर्थः ॥ **दीर्घा इति** । ह्रस्वैर्गृहीतैरणत्वाद्दीर्घाणां ग्रहणात् । तत्राष्टन आ विभक्तावित्यत्राकारो ग्राहको मा भूदित्यर्थः । यथैव हि अणत्वादाकारो रपरत्वादिकार्यं प्रतिपद्यते, तथा ग्राहकत्वमपि प्रतिपद्येतेति भावः ॥ कथं पुनरप्रत्यय इत्यस्याप्रत्याय्यमान इत्यर्थः ? अन्तर्भावितण्यर्थादेतेः कर्मण्यज्विधानात् ॥

( उद्योतः ) **उच्चार्यन्त इति** । उच्चारणं[६] चात्र साक्षाच्छब्देन बोधनं विवक्षितम् । अतोऽणादिशब्दप्रतीयमानेकारादिभिः सवर्णानां ग्रहणं सिद्धम् ॥ **ह्रस्वैर्गृहीतैरिति** । प्रकृतसूत्रस्थाण्पदेनेति शेषः ॥ ननु प्रत्याहारसूत्रोपदिष्टा एवाण इति कथमाकारो ग्राहक इत्यत आह—**यथैवेति** । न चाक्षरसमाम्नायिकविषयकः प्रतिषेधः, प्रत्याय्यमानविषयं तु सवर्णग्रहणमिति वैपरीत्यं किं न स्यादिति वाच्यम् । तथा[७] सत्यको विधीयमानस्य पूर्वसवर्णदीर्घस्य कुमार्यावित्यादावप्राप्तेः 'दीर्घाज्जसि च' इति प्रतिषेधोऽनर्थकः स्यादिति भावः ॥ एवं च वर्णसमाम्नायपठितानामेव ग्राहकत्वबोधनार्थमप्रत्ययपदमिति तात्पर्यम् ॥

( आक्षेपभाष्यम् )

**कं पुनर्दीर्घः सवर्णग्रहणेन गृह्णीयात् ?**

( प्रयोजनसाधकभाष्यम् )

**ह्रस्वम् ॥**

( प्रयोजननिराकरणभाष्यम् )

**यत्नाधिक्यान्न ग्रहीष्यति ॥**

( प्रदीपः ) **यत्नाधिक्यादिति** । ननु च ह्रस्वोच्चारणे अर्धमात्रिकस्य मात्रिक एव स्यादिति दीर्घोच्चारणमुभयार्थं स्यात् । एतत्तु न निरूपितम् ॥ न्याय्य एवात्र परिहारो विधास्यते ॥

( उद्योतः ) **उभयार्थम्**–ह्रस्वदीर्घोभयविध्यर्थम् । एवंच यत्नाधिक्यमेवासिद्धमिति भावः ॥ **न्याय्य एवेति** । 'अनणत्वाद्' इत्ययमित्यर्थः ॥

( प्रयोजनसाधकभाष्यम् )

**प्लुतं तर्हि गृह्णीयात् ॥**

( प्रयोजननिराकरणभाष्यम् )

**अनणत्वान्न ग्रहीष्यति ॥**

( प्रदीपः ) **अनणत्वादिति** । अत्र हि सूत्रे प्रत्याहारसन्निविष्टा एव गृह्यन्ते, स्वात्मनि क्रियाविरोधात्, अनिष्पादात्, ग्रहणकशास्त्रान्तराभावाच्च । अत्र सूत्रे अकारादिभिराकारादीनां ग्रहणासम्भवः । अन्येषु तु प्रदेशेषु अनेन सूत्रेणाकारादिभिराकारादयो गृह्यमाणा अणादिकार्याणि लभन्ते ॥

( उद्योतः ) यदुक्तं[९]-**यथैवेति**, तत्राह—**अत्र हीति** । **स्वात्मनि क्रिया**–स्वस्मिन्प्रवृत्तिः ॥ विरोधे हेतुमाह—**अनिष्पादादिति** । अर्थाबोधादित्यर्थः[१०] ॥

( सिद्धान्तप्रयोजनभाष्यम् )

**एवं तर्हि सिद्धे सति यत् 'अप्रत्ययः' इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः—भवत्येषा परिभाषा—**

## 'भाव्यमानेन सवर्णानां ग्रहणं न'

**इति ॥**

( प्रदीपः ) **भाव्यमानेनेति** । प्रतीयते=विधीयत इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमिति भावः ॥

( उद्योतः ) नन्वल्पविषयेणाप्रत्यय इत्यनेन कथं बहुविषयपरिभाषार्थः शक्यते प्रतिपादयितुमत आह—**प्रतीयत इति** । भाष्ये—**ज्ञापयतीत्यस्य** योगेन बोधयतीत्यर्थः ॥ **अप्रत्यय** इति च वाक्यभेदेन निषेधार्थम् । अणित्यस्य च नात्र संबन्धः । तेनोक्तसर्वार्थलाभ[११] इति भावः ॥ वस्तुत एकदेशानुमतिद्वारा तां परिभाषां ज्ञापयतीति भाष्याक्षरार्थः ॥ 'विधीयते' इत्यर्थे 'प्रतीयते' इत्यस्य प्रयोगाद्दृष्ट्या कैयटोक्तं चिन्त्यम् ॥

---

१ **यान्**–दीर्घादीन् **तैः**-प्रत्ययगृहीतदीर्घादिभिः ॥

२ 'सवर्णान् गृह्णीयात्' इति क. ग. च. पाठः ॥

३ दृष्टान्तवैषम्यमाह—**प्रत्ययेति** ॥ छाया ॥

४ 'यावत् ब्रूयात्' इति क. ख. पाठः ॥

५ 'प्रतीयन्ते श्रूयन्ते' इति च. झ. पाठः ॥

६ यथाश्रुते दोषादाह—**उच्चारणं चेति** ॥ छाया ॥

७ **तथेति** । यत इत्यादिः ॥ छाया ॥

८ **न्याय्य एवेति** । यत इत्यादिः ॥ छाया ॥

९ **यदुक्तमिति** । प्रदीपे 'यथैव हि अणत्वादाकारो रपरत्वादिकार्यं प्रतिपद्यते' इत्यादि ॥

१० सूत्रस्य सत्त्वादाह—**अर्थेति** ॥ छाया ॥

११ गुणाभेदकत्वादिप्राप्तस्यापि निषेध इत्यर्थः । ( र. ना. )

( अण्ग्रहणप्रयोजनम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ?**

( प्रदीपः ) **किमर्थं पुनरिति** । **आकृतिनिर्देशात् सिद्धमिति** प्रश्नः ॥

( उद्योतः ) आकृतीति । प्रत्याहारसूत्रेषु, अस्यच्वावित्यादिषु चेत्यर्थः ॥

( ३९० समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अण् सवर्णस्येति स्वरानुनासिक्यकालभेदात् ॥ * ॥**

( भाष्यम् )

**अण् सवर्णस्येत्युच्यते । स्वरभेदादानुनासिक्यभेदात् कालभेदाच्चाण् सवर्णान्न गृह्णीयात् । इष्यते च—सवर्ण ग्रहणं स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति ॥ एवमर्थमिदमुच्यते ॥**

( प्रदीपः ) **अण् सवर्णस्येति** । उदिद्ग्रहणस्याविचारयिष्यमाणत्वादेवमुक्तम् । व्यक्तिनिर्देशे कालादिभिन्नस्य ग्रहणं न प्राप्नोतीति भावः ॥

( उद्योतः ) नेयमुदिद्विषया शङ्का, चुत्वादिजातौ मानाभावेन तस्यावश्यकत्वादित्याशयेनाह—**उदिदिति** ॥ **कालादिभिन्नस्येति** । एकोऽवर्णः, उदात्तत्वादिकं ध्वनिगतमिति **पक्षे**ऽपि उपाधिभेदभिन्नत्वाद् ग्रहणं न सिध्यतीति भावः ॥ अनन्ता अवर्णव्यक्तय इति **पक्षे** तु अग्रहणं स्पष्टमेवेति बोध्यम् ॥

( भाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ?**

( ३९१ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् ॥ * ॥**

( भाष्यम् )

**तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोति—"अकः सवर्णे दीर्घः" इति ॥**

**किं कारणम् ?**

**'अनुपदेशात् ।' यथाजातीयकानां संज्ञा कृता तथाजातीयकानां संप्रत्यायिका स्यात् । ह्रस्वानां च क्रियते । ह्रस्वानामेव संप्रत्यायिका स्यात्, दीर्घाणां न स्यात् ॥**

( प्रदीपः ) **प्रत्याहारग्रहण इति** । अकोऽचीति यत्र संज्ञया प्रत्यायनमिकारादीनां तत्र तैरन्येषां ग्रहणं न स्यात् । यत्र स्वरूपेणोच्चार्यते—**'अस्य च्वौ' 'यस्येति च'** इति, तत्रैवैषां ग्राहकत्वं स्यात् ॥ **अनुपदेशादिति** । अनुच्चारणादित्यर्थः । न हि प्रत्याहारे दीर्घा उच्चारिताः, यतोऽगादिचोदनाभिर्गृह्येरन् ॥ अथवा—अकोऽचीत्यादावनुच्चारिता इकारादयो दीर्घाणां प्रत्यायका न स्युरित्यर्थः ॥

( उद्योतः ) नन्वेतत्प्रयोजनं—**अस्य च्वा**वित्यादौ वा, अगादिप्रत्याहारेषु वा । तत्राद्यं **तत्रानुवृत्तिनिर्देशे** इत्यादिना दूषयिष्यति । नान्त्य इत्याह — **प्रत्याहारग्रहणे इत्यादि** । **प्रत्याहारग्रहणे सवर्णाग्रहणमिति** वार्तिकस्य द्वेधाऽर्थः—अक इत्यादौ ईकारादीनामगादिसंज्ञाभिर्ग्रहणं न प्राप्नोति, अनुपदेशात्-अक्षरसमाम्नाये तेषामनुच्चारणादित्यर्थः । तदाह—**यत्र संज्ञयेति** । एकस्यैव युगपत्प्रत्याय्यत्वप्रत्यायकत्वयोर्विरोधादित्यर्थः ॥ **यत्र स्वरूपेणेति** । इदं चिन्त्यम्, व्यक्त्यानन्त्ये तस्याण्त्वाभावात् । तस्माद्यः स्वरूपेणोच्चार्यते **अक** इत्यादावकारादिस्तस्यैव ग्राहकत्वं स्यादिति वक्तुमुचितम् ॥ **प्रत्याहारे**-अइउणित्यादौ ॥ भाष्ये—**यथाजातीयकानामिति** । वर्णसमाम्नायपठितानामित्यर्थः ॥ **संज्ञेति** । **आदिरन्त्येनेति** कृतागादिसंज्ञेत्यर्थः ॥ यद्वा—अगादौ इकारादिभिर्ह्रस्वैर्दीर्घाणामग्रहणम् । कुतः ? अनुपदेशात्-अकोऽचीत्यादाविकारादीनामनुच्चारणादित्यर्थः, तदाह—**अथवेति** । भाष्यस्वारस्यं त्वाद्यव्याख्यायामेव ॥

( आक्षेपबाधकभाष्यम् )

**ननु च ह्रस्वाः प्रतीयमाना दीर्घान् संप्रत्याययिष्यन्ति ॥**

( प्रदीपः ) **ननु चेति** । उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति । सन्निहितास्तु प्रत्यायकाः । तच्च सन्निधानं यथायोगमस्त्येवेत्यर्थः ॥

( उद्योतः ) **उच्चार्यमाणैरेवेति** । पुस्तकदर्शनादौ व्यभिचारादित्यर्थः ॥ **सन्निहिता इति** । बुद्धिसंनिहिता इत्यर्थः ॥ अयं भावः—शब्दा उपस्थिता बोधं जनयन्ति । उपस्थितिस्तु-स्मृतिरूपा प्रत्यक्षरूपा च । न खल्वेवेति नियमः, लिपिस्मारितपदैर्बोधानापत्तेरिति ॥ **संनिधानमिति** । प्रतीतिरित्यर्थः ॥ **यथायोगम्**—उच्चारणेन संज्ञया चेत्यर्थः ॥

( ३९२ आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणशब्दसंप्रत्यायकत्वाच्छब्दस्यावचनम् ॥ * ॥**

( भाष्यम् )

**ह्रस्वसंप्रत्ययादिति चेत् । तन्न ।**

---

१ 'च ग्रहणं' इति ग. च. पाठः, 'च स्यादिति' इति क. पाठः ॥

२ तत्र—तयोर्मध्ये तदर्थमस्मिन् सति ॥ छाया ॥

३ अनुबन्धसन्निधानेन प्रत्याहारस्थोऽयमिति प्रत्यभिज्ञानादिति भावः । ( र. ना. )

४ द्वितीयं वार्तिकार्थमाह—**यद्वेति** ॥ छाया ॥

५ यथाश्रुते दोषादाह—**बुद्धीति** ॥ एतदाशयमाह—**अयमिति** ॥ छाया ॥

६ सांनिध्यमविवक्षितमित्याह—**प्रतीतिरिति** ॥ छाया ॥

७ 'इति चेदुच्चार्य' इत्येव पाठः क. ग. च. पुस्तकेषु ॥

किं कारणम् ?

**उच्चार्यमाणः शब्दः संप्रत्यायको भवति, न संप्रतीयमानः । तद्यथा—ऋगित्युक्ते संपाठमात्रं गम्यते, नास्या अर्थो गम्यते ॥**

( प्रदीपः ) **उच्चार्यमाणेति** । प्रतीयमानो हि प्रधानं कथमन्यप्रत्यायनेऽङ्गभावं तदैव गच्छेदित्यर्थः ॥ **शब्दस्यावचनमिति** । प्रतीयमानेन शब्देनान्यस्याप्रत्यायनमित्यर्थः ॥ **ऋगित्युक्त इति** । यद्यपि प्रकरणवशाद्विशिष्टसन्निवेशोऽपि ऋक्शब्देन ऋक् प्रत्याय्यते, तथापि सा स्वार्थं न प्रत्याययतीत्यर्थः ॥

( उद्योतः ) **प्रतीयमानो हीति** । यद्यप्युच्चारणे प्रधानमपि अर्थप्रतीतावङ्गभावं प्रतिपद्यते, तथाप्युच्चारणकृतायास्तत्तत्प्रतिबिम्बविशिष्टस्फोटाभिव्यक्तेश्चिरस्थायितयोपपद्यते तत्त्वम् । शब्दज्ञानमात्रस्य तु न तदभिव्यञ्जकत्वं, वक्ष्यमाणहेतोरिति भावः ॥ **अन्यस्येति** । दीर्घादिरूपशब्दस्येत्यर्थः ॥ भाष्ये—**ह्रस्वसंप्रत्ययादिति** । तृतीयातत्पुरुषः ॥ **ऋगित्युक्ते संपाठमात्रं गम्यते इति** । एतेनोच्चारितानामेव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तेर्वाचकज्ञानसामान्यस्यैव बोधे तन्त्रत्वेनेदमयुक्तमित्यपास्तम् । मानसजपस्थल इव तत्रापि स्वीयसूक्ष्मोच्चारणाद्बोधेनाक्षतेः । जपे हि मन्त्राणां त्रैस्वर्यमेव, तत्तत्स्थानेषु उच्चादिदेशोपलभ्यमानत्वरूपोदात्तत्वादेर्मात्राकालिकत्वादिरूपह्रस्वत्वादेश्च विनोच्चारणमनभिव्यक्तेः । **यद्वा**—लिपेरेव चेष्टादिवत्सङ्केतेन बोधकत्वम् । अत एव लिपौ शब्दत्वभ्रमो बालानाम् । **यद्वा**—लिपावनादेः शब्दतादात्म्याध्यासाद्बोधकत्वम् । लिपौ शब्दत्वबाधज्ञानवतां पण्डितानामपि अन्तःकरणादावात्मत्वप्रत्यये भ्रमत्वं जानतामनादिसिद्धारोपेणैव व्यवहारवत् बोधोऽपि ॥ ननु ऋगित्युक्ते तद्विशेषाप्रतीतेरर्थप्रतीतिसंभावनाया अप्यभावः, ऋक्त्वस्य वेदत्वस्य चार्थप्रतीतिजनकतानवच्छेदकत्वात् - अत आह—**यद्यपीति**। ऋक्शब्देन विशिष्टसंनिवेशोऽपि ऋक् प्रत्याय्यत इत्यन्वयः । यत्र सङ्केतादिवशाद् ऋगित्युक्ते **अग्निमीले पुरोहित**मित्याद्यानुपूर्वीप्रकारेण बोधस्तत्रापि सा स्वार्थं वेदनादिक्रियाकर्मत्वेन न प्रत्याययतीति भावः ॥

( समाधानभाष्यम् )

**एवं तर्हि वर्णपाठ एवोपदेशः करिष्यते ॥**

( प्रदीपः ) एवं तर्हीति । 'अइँउ' इति प्रत्याहार एवाकारादिभिराकारादीनां ग्रहणात् तेषामप्यर्गादिभिः संज्ञाभिर्ग्रहणं भविष्यतीत्यर्थः ॥ **उपदेश इति** । प्रत्यायनमित्यर्थः ॥ **करिष्यत इति** । व्याख्यास्यते ॥

( उद्योतः ) प्रत्यायनमिति । तच्चैतत्सूत्रेणैवेति बोध्यम् ॥

( ३९३ समाधानबाधकवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ वर्णपाठ उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः ॥ * ॥

( भाष्यम् )

**वर्णपाठक्रम उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः ॥**

( प्रदीपः ) **अवरकालत्वादिति** । निष्पन्नेष्वङ्गेष्वनयाऽन्यत्रास्य **च्वा**वित्यादौ सवर्णानां ग्रहणं भवति, नाङ्गेषु नापि स्वात्मनि, अनिष्पन्नत्वादिति भावः ॥

( उद्योतः ) अनेन तत्प्रत्यायनमशक्यमित्याह—भाष्ये—अवरकालत्वादिति ॥

( आक्षेपभाष्यम् )

**किं परा सूत्रात् क्रियत इत्यतोऽवरकाला ?**

( उद्योतः ) **परा सूत्रादिति** । **सूत्रात्**-प्रत्याहारसूत्रात्**परा**-परकाला क्रियत इत्यर्थः ॥ तेषामनादित्वात्, एषां पाणिनिकृतत्वादिति भावः ॥

( समाधानभाष्यम् )

**नेत्याह । सर्वथाऽवरकालैव । वर्णानामुपदेशस्तावत् । उपदेशोत्तरकाला-इत्संज्ञा । इत्संज्ञोत्तरकालः-"आदिरन्त्येन सहेता" इति प्रत्याहारः । प्रत्याहारोत्तरकाला-सवर्णसंज्ञा ॥ सवर्णसंज्ञोत्तरकालम्—"अणुदित्सवर्णस्य चाप्रत्ययः" इति । सैषा उपदेशोत्तरकाला-अवरकाला सती वर्णानामुत्पत्तौ निमित्तत्वाय प्रकल्पयिष्यत इत्येतन्न ॥**

---

१ **तत्तदिति** । वर्णादीत्यर्थः ॥ वेदान्तिमतेनाह—**प्रतीति** ॥ **तत्त्वम्**-तत्राङ्गत्वम् ॥ छाया ॥

२ **वक्ष्यमाणेति** । ऋगिति भाष्योक्तेत्यर्थः ॥ छाया ॥

३ हरदत्तादिमतं खण्डयति—**एतेनेति** ॥ छाया ॥

४ तस्यार्थमाह—**मानसेति** ॥ छाया ॥

५ ननु तत्रैव तत्सत्त्वे किं मानमत आह —**जपे हीति** ॥ छाया ॥

६ इदं चिन्त्यम् । लिपौ शब्दाध्यासेऽपि उच्चार्यत्वासंभवात् । (र. ना.) ॥ वस्तुतस्तु 'चिन्त्यं' इत्युक्तिस्तदभिप्रायानवबोधमूलिका । तथाहि—'लिपेरेव चेष्टादिवत्संकेतेन बोधकत्वम्' इत्यस्य हि अयमाशयः—रहसि पुस्तकमीक्षभाणस्य सूक्ष्मोच्चारणेनैव बोध इति येषामनुभवविरुद्धं तेषां चेष्टादिवल्लिपेरेव बोधकत्वमित्युपपाद्यते । लिपेरेव बोधकत्वाच्च न तत्रोच्चारणापेक्षेति । ननु चेष्टादीनां बोधकत्वं सहृदयहृदयावनद्धम्, लिपेस्तु बोधकता सार्वजनीनेति 'चेष्टावत्' इति नोपपद्यतेऽत आह-**यद्वालिपावनादेरित्यादिना** । लिपेर्बोधकत्वं न चेष्टावत्संकेतेन, किन्तु शब्दतादात्म्याध्यासाल्लिपेर्बोधकत्वम् । एवञ्च यथा शब्दोच्चारणानन्तरमर्थोपस्थितिस्तथा लिपिज्ञानानन्तरमपि तादात्म्याध्यासादुच्चारणाभावेऽपि अर्थोपस्थितिर्नियतेति न तत्रोच्चारणापेक्षा । एवञ्च रहसि पुस्तकेक्षणस्थले सूक्ष्मोच्चारणमपि नानुभवसिद्धमिति येषामाग्रहस्तेषां लिपेरेव बोध इति न किञ्चिदनुपपन्नम् । वस्तुत उद्योतश्चिन्त्य इत्याद्युक्तिर्यत्र तत्र परिदृश्यमाना न प्रतिविधानार्हा, स्वरूपव्याक्रियैव तस्याः प्रतिविधानात् । परन्तु यत्र बालानां विपरीतग्रहसम्भवस्तत्रैव प्रतिविधास्यत इत्यलं परदोषाविष्करणेन ॥

७ 'अइउणिति' इति क. ग. च. पाठः ॥

८ 'गादिसंज्ञाभिः' इति क. ग. च. पाठः ॥

९ **परिभाषायाः**-संज्ञायाः ॥ सामान्यात्प्रयोगोऽयम् ॥ छाया ॥

१० 'सैषाऽवरकाला । उपदेशो' इति च. झ. पाठः ॥

( प्रदीपः ) सर्वथेति । आर्थक्रमेणापि, न शब्दक्रमेणैवेत्यर्थः ॥ वर्णानामुत्पत्ताविति । अइउणित्यत्र इयमेव वर्णानाकारादीनुत्पादयतीत्येतन्नास्ति ॥

( उद्द्योतः ) अवरकालैवेति । वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादिति भावः ॥ शाब्दक्रमः-अष्टाध्यायीक्रमः ॥ प्रत्याहारोत्तरकाला सवर्णसंज्ञेति । नाज्झलाविलेतद्विषयनिर्णयोत्तरं तत्परिहारेण सवर्णपदशक्तिग्रहस्यैव व्यवहारोपयोगित्वादिति भावः ॥ वर्णानामुत्पत्ताविति । प्रतीताविल्यर्थः ॥ अक इत्यादावाद्यवर्णस्यैव प्रत्यायकत्वादध्याहारेण व्याचष्टे—अइउणिति ॥ उत्पादयतीति । प्रत्याययतीत्यर्थः ॥

( ३९४ समाधानबाधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ तस्मादुपदेशः ॥ * ॥

( भाष्यम् )

तस्मादुपदेशः कर्तव्यः ॥

( प्रदीपः ) तस्मादिति । प्रत्याहार एव दीर्घप्लुता अपि पठनीया इत्यर्थः ॥

( उद्द्योतः ) प्रत्याहारे-अइउणित्यादौ ॥ [१] न च प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाऽङ्गीकारान्न दोषः । उक्तभाष्यरीत्या तद्वाच्यानां प्रत्यायकत्वाभावेन तेषामशक्तत्वेन लक्ष्यतावच्छेदकलक्षणामूलसंबन्धज्ञानयोर्दुरुपपादत्वात् ॥

( अणग्रहणप्रत्याख्यानम् )

( ३९५ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनणत्वात् ॥ * ॥

( भाष्यम् )

तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति—"अस्य च्वौ" "यस्येति च" ॥

किं कारणम् ?

'अनण्त्वात्' । न ह्येतेऽणः, येऽनुवृत्तिनिर्देशे ॥

के तर्हि ?

येऽक्षरसमाम्नाय उपदिश्यन्ते ॥

( प्रदीपः ) तत्रानुवृत्तीति । व्यक्तिपक्षे सत्यपि सूत्रारम्भेऽवान्तरभेदसंभवात् ग्रहणं न सिद्ध्यतीत्यर्थः ॥

( उद्द्योतः ) एवं प्रत्याहारेषु सूत्रप्रयोजनाभावमुक्त्वा अस्य च्वावित्यादावपि तमाह—तत्रानुवृत्तिनिर्देश इति । भाष्ये—वृत्ति-वर्णसमाम्नायमनुगतस्तत्सदृशोऽनुवृत्तिरकारादिस्तस्य निर्देशः—स्वरूपेणोच्चारणमित्यर्थः ॥ [३] तत्र सवर्णाग्रहणे हेतुमाह—व्यक्तीति । अनन्ता व्यक्तय इति पक्षे इत्यर्थः ॥ तदाह—अवान्तरभेदेति । जात्येकत्वेऽपि व्यक्तीनां परस्परं भेदसंभवादित्यर्थः ॥ एका अवर्णव्यक्तिरिति पक्षे तु यद्यपि सिध्यति, तथापि सोऽसङ्गतः, उदात्तादिविरुद्धधर्माध्यासात् । यदि तु ध्वनिनिष्ठास्ते, तदा कत्वखत्वादिकमपि तन्निष्ठमस्तु; किं वर्णैः ? नो चेदनन्ता एवेति भावः ॥

( आक्षेपबाधकभाष्यम् )

एवं तर्हि-अनण्त्वादनुवृत्तौ न, अनुपदेशाच्च प्रत्याहारे न । उच्यते चेदम्—अण् सवर्णान् गृह्णाति—[४] इति वचनाद्भविष्यति ॥

( प्रदीपः ) वचनादिति । अण्सदृशोऽणिति ग्रहीष्यत इत्यर्थः ॥

( उद्द्योतः ) अनणो वचनादपि कथं ग्राहकत्वमत आह—अणूसदृश इति ॥

( आक्षेपसाधकं श्लोकवार्तिकम् )

*॥ वचनाद्यत्र तन्नास्ति ॥*

( भाष्यम् )

नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥

किम् ?

य एते प्रत्याहाराणामादितो वर्णास्तैः सवर्णानां ग्रहणं यथा स्यात् ॥

( प्रदीपः ) यत्रेति । अनन्तरोक्तमुभयं यत्र नास्ति - अकोऽचीत्यादौ । अत्र ह्यनुबन्धेन चिह्नेन प्रत्याहारस्य एव निर्दिष्ट इत्यण्त्वमुच्चारणं चास्ति । तत्राकार उच्चारित आदिरन्त्येन सहेतेति मध्यपातितानां स्वरूपस्य च ग्राहकः, अस्माच्च वचनात्सवर्णानामपीत्यर्थः । एवं व्यक्तिपक्षे सत्यपि सूत्रारम्भे नास्तीष्टसिद्धिः ॥

( उद्द्योतः ) उभयम्-अनण्त्वमनुच्चारणं च ॥ मध्यपातितानामिति । दृष्टान्तार्थम् ॥

( समाधानान्तरभाष्यम् )

एवं तर्हि—

( ३९६ सिद्धान्तसमाधानअणप्रत्याख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् ॥ * ॥

( भाष्यम् )

सवर्णेऽण्ग्रहणमपरिभाष्यम् ॥

कुतः ?

'आकृतिग्रहणात्' । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथा-इवर्णाकृतिः, तथा-उवर्णाकृतिः ॥

१ अस्याः—परिभाषायाः ॥ छाया ॥
२ दीक्षिताद्युक्तिं खण्डयति—न चेति ॥ छाया ॥
३ तत्र—अस्य च्वावित्यादौ ॥ छाया ॥
४ 'इति । तत्र वच' इति च, झ. पाठः ॥

( प्रदीपः ) आकृतिपक्षे सूत्रं न कर्तव्यमित्याह—**सवर्ण इति** । प्रत्याहारे अनुवृत्तिनिर्देशे च सर्वत्र जातिरुपदिश्यते, नान्तरीयकं व्यक्त्युच्चारणम् । अत्वं च ह्रस्वदीर्घप्लुतेषु विद्यते, यथा—गोत्वं कृशे गोपिण्डे स्थूले शुक्ले चेति भावः ॥

( उद्योतः ) **नास्तीष्टेति** । यदि त्वइउणित्यादावत्वादि-जातिनिर्देशादेषामणत्वम्, प्रत्याहारग्रहणेषु च न दोषः, त्वादय इत्यादिनिर्देशाश्चात्रैवार्थे लिङ्गमित्युच्यते, तदा सूत्रमेव व्यर्थमित्याह—**आकृतीति** ॥ **प्रत्याहारे** - अइउणित्यादिसूत्रे । **अनुवृत्तिनिर्देशे**-अस्य च्वावित्यादौ । **उपदिश्यते** - उच्चार्यते प्रत्याय्यते वा ॥ **नान्तरीयकमिति** । जातेः साक्षादुच्चारणासंभवात्तदुच्चारणम् । किंच जातौ कार्यान्वयस्य व्यक्तिं विना साक्षादसंभवात्तदुच्चारणं-तद्बोधनमित्यर्थः ॥ तत्र दीर्घादिव्यक्त्याक्षेपे बीजमाह—**अत्वं चेति** ॥ प्रमाणकृतभेदे दृष्टान्तमभिधाय गुणकृतभेदेऽप्याह—**शुक्ल इति** ॥

( आक्षेपभाष्यम् )

**ननु चान्याऽऽकृतिरकारस्य, अन्याऽऽकारस्य च॥**

( प्रदीपः ) **ननु चान्येति** । श्रुतिभेदाद्भेदं मन्यमानस्य **प्रश्नः** ॥

( उद्योतः ) **श्रुतिः**—श्रवणोपलब्धिः ॥ **भेदाद्भेदमिति** । जातेरिति शेषः ॥

( ३९७ समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अनन्यत्वाच्च ॥ * ॥**

( भाष्यम् )

**अनन्याऽऽकृतिरकारस्य, आकारस्य च ॥**[3]

( प्रदीपः ) **अनन्यत्वाच्चेति** । सत्यपि श्रुतिभेदे एकाकृतियोगोऽस्त्येव । यथा—कृशे स्थूलेऽपि च गोपिण्डे गोत्वयोगः ॥

( उद्योतः ) **सत्यपीति** । श्रुतिभेदो हि व्यक्तिभेदसाधको नाकृतिभेदसाधक इति भावः ॥ अत एव ह्रस्वोऽयमकारो दीर्घोऽयमकार इति अत्वेन सामानाधिकरण्यानुभवः ॥ इकारादिष्वत्त्वमननुभवान्न । अत एवोदात्तादयो न जात्यन्तरप्रयोजका इति तात्पर्यम् ॥ न च आकारोऽयं न अकार इति प्रतीत्यनापत्तिः, तस्या व्यक्तिभेदविषयकत्वात् ॥

( ३९८ समाधानसाधकं वार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अनेकान्तो ह्यनन्यत्वकरः ॥ * ॥**

( भाष्यम् )

**यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा—न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति । यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति ॥**

( प्रदीपः ) **यो हीति** । अभेदस्यापि प्रत्यभिज्ञानात्सद्भाव इत्यर्थः ॥ **यस्त्विति** । अत्रापि यदा **प्राणी न हन्तव्य** इति प्राणित्वेनाश्रयणं तदा—अभेद एव, गवाश्वरूपाश्रयेण तु भेद इति भावः ॥ 'अष्टन आ विभक्तौ' इत्यत्र तु यत्नाधिक्याद्दीर्घव्यक्तिसमवेतं सामान्यं गृह्यते । यथा—**पूर्ववया ब्राह्मणः प्रत्युत्थेय** इति विशिष्टव्यक्तिस्थं ब्राह्मण्यमाश्रीयते ॥

( उद्योतः ) भाष्ये—**अनेकान्तेनेति** । अनियमेनेत्यर्थः ॥ अभेदेन समानाधिकरण इति भावः । तदाह—**अभेदस्यापीति** ॥ **प्रत्यभिज्ञानादिति** । स एवायमिति प्रत्यभिज्ञानादित्यर्थः ॥ [4]अकारोऽकार इत्येकाकारप्रत्ययाच्चेत्यपि बोध्यम् ॥ **नासावन्यत्वमिति** । भेदप्रतीतिमेवेत्यर्थः ॥ **प्राणीति** । यद्यपि प्राणित्वं न जातिस्तथापि साधारणधर्मत्वाभिप्रायेणोक्तम् ॥ **गवाश्वरूपेति** । गोत्वाश्वत्वेत्यर्थः ॥

**परे** [5]तु ह्रस्वषड्भेदवृत्त्येव - अत्वं, दीर्घषड्भेदवृत्त्येव - आत्वमित्यादिर्नैनु चेति भाष्याशयः । सकलव्यापकमत्वमप्यस्तीत्युत्तरम् । ननु व्यापकजात्यैक्येऽपि व्याप्यजात्या भेदोऽप्यस्तीत्यत आह—**अनेकान्तो हीति** । [6]व्यापकधर्मेण समानाधिकरणव्याप्यधर्मकृतो भेदः केवलभेदबुद्धिं न करोतीत्यर्थ इत्याहुः ॥

ननु जातिनिर्देशेऽष्टन आ इत्यादावपि तन्निर्देशात् अकारादयः स्युः । यत्नाधिक्यं तूभयार्थं स्यात् । ह्रस्वोच्चारणे तु अर्धमात्रिकनस्यान्तरतम्याद् ह्रस्व एव स्यादत आह—**अष्टन इति** ॥ **दीर्घव्यक्तीति** । व्यक्तेरुपलक्षणत्वे आन्तरतम्याद्ध्रस्व एव स्यादिति यत्नाधिक्यानर्थक्यं तदव[7]स्थमिति विशेषणत्वमेव तस्या इति भावः । अत्वातिरिक्तमात्वादि नास्त्येवेति तात्पर्यम् ॥

**केचित्तु** दीर्घषड्भेदवृत्त्यात्वजातेरेवात्वव्याप्यायास्तत्र निर्देश इति **वदन्ति** ॥

( मतान्तरनिदर्शकं भाष्यम् )

**अपर आह—**

( जातिपक्षोपस्थापकमन्यदीयवार्तिकम् )

**॥ * ॥ सवर्णेऽणग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम् ॥ * ॥**

( भाष्यम् )

**सवर्णेऽणग्रहणमपरिभाष्यम्, आकृतिग्रहणादनन्यत्वं भविष्यति ॥ अनन्याऽऽकृतिरकारस्य, आकारस्य च ॥**

( अन्यदीयं वार्तिकम् )

**॥ * ॥ अनेकान्तो ह्यनन्यत्वकरः ॥ * ॥**

( भाष्यम् )

**यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति ।**

---

१ 'पक्षे तु' इति क. ग. च. पाठः ॥
२ 'शुक्ले कृष्णे चे' इति क. ग. पाठः ॥
३ 'अनन्याऽऽकारस्य च' इति मुद्रित पाठः ॥
४ स्वयं युक्त्यन्तरमाह—**अकारोऽकार इति** ॥ छाया ॥
५ सिद्धान्तमाह—**परे त्विति** ॥ छाया ॥

६ अयं केवलभेदबुद्धिकरणाभावे हेतुः । ( र. ना. )
७ **तदवस्थमिति** । एतेन—**अष्टन आविति** चिन्त्यम्, पर्यायशब्दानां लाघवगौरवाभावस्य सूत्रकृतैव ज्ञापितत्वेन प्रयत्नाधिक्योक्तेरानर्थक्यात् । दीर्घोच्चारणमुभयार्थमिति पूर्वस्वग्रन्थविरोधाच्चेति रत्नोक्तमपास्तम् ॥ छाया ॥

तद्यथा—न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति। यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति ॥

( प्रदीपः ) अपर आहेति । व्यक्तिरेव शब्दार्थः । जातिस्त्वशब्दार्थोऽपि अभेदप्रत्ययहेतुरस्तीति सर्वव्यक्तीनामभेदेनाश्रयणादेकव्यक्तिनिर्देशेऽपि ग्रहणं सर्वव्यक्तीनां सिध्यतीत्यर्थः ॥ अत्र पक्षे-आकृतिग्रहणमाकृतेरेकाकारप्रत्ययनिमित्तत्वेन प्रतिपत्तिरुच्यते ॥

( उद्योतः ) अशब्दार्थ इति । शब्दजन्यप्रतीतिविशेष्यत्वाभाववानित्यर्थः । यद्वा शक्यतावच्छेदकत्वेऽप्यशक्य इत्यर्थः ॥ सर्वव्यक्तीनामिति । जातिवैशिष्ट्येन प्रत्येकवृत्तिपरस्परभेदत्यागपूर्वकमभेदेनैकरूपेणाश्रयणात्तज्जात्याक्रान्तसर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः ॥ पूर्ववार्तिकेऽण्ग्रहणाकरणे - आकृतिग्रहणं हेतुः, आकृतेरपि भेदाशङ्कायामनन्यत्वाच्चेति वार्तिकखण्डः । अपरमतेऽण्ग्रहणाकरणे - सर्वव्यक्तीनामनन्यत्वं हेतुः, अनन्यत्वे - आकृतिग्रहणम्। आकृतेर्ग्रहणं - विशेषणत्वेनाश्रयणम् ॥ रूपसामान्यादित्ययमाकृतिग्रहणादित्यस्यार्थोऽपरमत इत्येके ॥

( सिद्धान्तसाधकं भाष्यवार्तिकम् )

***॥ तद्वच्च हल्ग्रहणेषु ॥***

( भाष्यम् )

एवं च कृत्वा हल्ग्रहणेषु सिद्धं भवति । "झलो झलि"-अवात्ताम्, अवात्तम्, अवात्त । यत्रैतन्नास्ति- अण् सवर्णान् गृह्णातीति ॥

( प्रदीपः ) तद्वच्चेति । यथा-आकृतिग्रहणादण्सु कार्यं सिध्यति, तथा हल्ष्वपि आकृतिग्रहणादेव सिध्यति । व्यक्तिपक्षे तु एकैव तकारव्यक्तिर्झल्व्यपदेशमासादयेत् पूर्वा परा वा - इति 'अवात्ताम्' इति लोपो न स्यात् । 'अबुद्ध' इत्यादावेव तु स्यात् ॥

( उद्योतः ) जात्याश्रयणमावश्यकमित्याह—तद्वच्चेति ॥ पूर्वा परा वेति । उभयोरपि झल्त्वं न स्यात्, अन्यतरस्य प्रत्याहारसूत्रोपात्तादन्यत्वादिति भावः ॥ अवात्तामिति । वसेर्लुङि तसस्तामि वृद्धौ सःसीति तत्वे झलो झलीति सिज्लोपे रूपम् ॥ ननु झल इति सूत्रं क चरितार्थमत आह—अबुद्धेति । बुधेर्लुङि रूपम् ॥

( सिद्धान्तसाधकं भाष्यवार्तिकम् ॥ )

***॥ अनेकान्तो ह्यनन्यत्वकरः ॥***

( भाष्यम् )

इत्युक्तार्थम् ॥

( प्रदीपः ) धातुप्रत्ययावयवयोस्तकारयोर्भेद एवेति चेत्, तत्राह—अनेकान्त इति ॥

( उद्योतः ) भेद एवेति । व्यक्त्योः परस्परं भेद एवेति भावः ॥ भाष्ये—अनेकान्त इति । उपात्ताभेदकधर्मसमानाधिकरणो भेदकधर्म इत्यर्थः । प्रकृते भेदकधर्मस्तत्त्वम् ॥

( सिद्धान्तसाधकं भाष्यवार्तिकम् ॥ )

***॥ द्रुतविलम्बितयोश्चानुपदेशात् ॥***

( भाष्यम् )

द्रुतविलम्बितयोश्चानुपदेशान्मन्यामहे—'आकृतिग्रहणात् सिद्धम्' इति । यदयं कस्यांचिद् वृत्तौ वर्णाननुपदिश्य सर्वत्र कृती भवति ॥

( प्रदीपः ) द्रुतेति । हल्ग्रहणेष्वेवेदमुच्यते, यत्रैतन्नास्ति अण् सवर्णान् गृह्णातीति । अण्सु तु व्यक्तिनिर्देशेऽपि ग्रहणकशास्त्रेण स्यादेव वृत्तिभिन्नस्य ग्रहणम् ॥

( उद्योतः ) प्रयोगार्थे तु मध्यमा - इत्युक्तेर्द्रुतविलम्बितयोरित्युक्तम् ॥

( काकुभाष्यम् )

अस्ति प्रयोजनमेतत् ॥
किं तर्हीति ?

( वृत्तिपृथक्त्वबोधनम् )

( ३९९ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वृत्तिपृथक्त्वं तु नोपपद्यते ॥ * ॥**

( भाष्यम् )

वृत्तेस्तु पृथक्त्वं नोपपद्यते ॥

( प्रदीपः ) वृत्तिपृथक्त्वमिति । ह्रस्वदीर्घादिप्रमाणलक्षणाऽपि वृत्तिर्न भेदिका स्यादिति खट्वाभिरित्यैस् प्रसज्येतेति भावः ॥

---

१ 'मभेदाश्रय' इति क. ग. पाठः ॥

२ सिध्यतीति । एतेन व्यक्तिरेवेति चिन्त्यम्, व्यक्तिपक्षे पूर्वमिदं वेति विनिगन्तुमशक्यत्वात् । तस्याः सर्वसंग्राहकत्वे रकारादेरपि बोधापत्तेश्चेति रत्नोक्तमपास्तम् ॥ छाया ॥

३ द्वितीयमते अइउण् सूत्रभाष्यविरोधं परिहरति—रूपेति ॥ एक इत्यरुचिबीजं वाघटितस्य तस्य वैयर्थ्यमिति पूर्वमतमेव समीचीनमिति ॥ छाया ॥

४ तद्वच्चेति । एतदादीनि निर्देशात्सिद्धमित्यन्तानि वृत्तिपृथक्त्वं विहाय भाष्यवार्तिकानि, न कात्यायनस्येति प्रदर्श्यते । 'तद्वच्च हल्ग्रहणेषु' इत्यस्य समानानुपूर्वीकैः शब्दैः सम्पुटीकरणाभावात् । अनेकान्तो ह्यनन्यत्वकर इति चात्रानूदितं भाष्ये इति तद्व्याख्यानादवगम्यते । द्रुतविलम्बितयोरित्येतच्च 'मन्यामहे' इत्युत्तमपदप्रयोगाद्भाष्यवार्तिकमेव । मध्ये 'वृत्तिपृथक्त्वं तु नोपपद्यते' इति कात्यायनस्य । तस्मात्तत्रेति चान्ते सिद्धशब्दप्रयोगात् समुचितसम्पुटीकरणाभावाच्च भाष्यवार्तिकमेवेति ॥

५ 'व्यक्तिनिर्देशपक्षे' इति क. ग. पाठः ॥

६ किन्त्वेकस्यैव स्यादिति भावः । ( र. ना. )

७ उक्तार्थं—प्राग्व्याख्यातम् ॥ छाया ॥

८ तत्त्वं—प्रत्यभिज्ञाविषयत्वम् ॥ भेदकधर्मः—अवान्तरः ॥ छा. ॥

९ द्रुतेति । वार्तिकवचनप्रामाण्याद् ह्रस्वः ॥ छाया ॥

( उद्योतः ) ह्रस्वदीर्घादीति । वृत्त्या=कालप्रमाणेन पृथक्त्वमिति तृतीयासमास[1] इति भावः । भाष्ये तु शेषत्वविवक्षया षष्ठी । हेतौ[2] पञ्चमी वा ॥

( समाधाने भाष्यवार्तिकम् ॥ )

*॥ तस्मात्तत्र तपरनिर्देशात्सिद्धम् ॥*

( भाष्यम् )

तस्मात्तत्र तपरनिर्देशः कर्तव्यः ॥

( समाधानभाष्यम् )

न कर्तव्यः । क्रियते न्यास एव—"अतो भिस ऐस्" इति ॥ अणुदित्सवर्णस्य चाप्रत्ययः ॥ ६९ ॥

( प्रदीपः ) क्रियत इति । अवश्यकर्तव्यतां दर्शयति । व्यक्तिपक्षेऽण् सवर्णान् गृह्णातीति प्रसङ्गः । सूत्रप्रत्याख्याने त्वाकृतिग्रहणात् ॥ उदिद्ग्रहणं कर्तव्यमेव । न हि वर्ग्याणामेकाकृतियोगोऽस्ति । स्थिते तु सूत्रे कुहोश्चुरित्यादौ भाव्यमानस्य उदित्त्वसामर्थ्याद्प्रत्यय इति निषेधो नावतरतीत्यण्स्वेवायं निषेधः । प्रत्याख्यानपक्षे भाव्यमानेषु यथाश्रुतं रूपमुपेयत[3] इत्याकृतिग्रहणेऽपि भिन्नकालानां ग्रहणं न भवति । यथा पशुना यजेत पशुमालभेतेत्युत्पत्तिवाक्यत्वात् संख्या विवक्ष्यते । उदात्तादयस्त्वभेदका इत्युक्तम् । अनुवादे तु नान्तरीयकत्वादेकव्यक्त्युच्चारणेऽपि सकलव्यक्तिग्रहणम् । यथा ग्रहं संमार्ष्टीति सर्वेषां ग्रहाणां 'प्राजापत्या नव ग्रहाः' इत्यादिभ्यो वाक्येभ्यो ज्ञातानां संमार्जनम् ॥ ६९ ॥

( उद्योतः ) आकृतिग्रहणादिति । तदुक्तमइउण्सूत्रे भाष्ये—*तद्वच्च तपरकरणम्* एवंच कृत्वा तपराः क्रियन्ते आकृतिग्रहणेनातिप्रसक्तमिति कृत्वेति ॥ एकाकृतियोग इति । तन्मात्रनिष्ठेत्यादिः ॥ उदिदिति च कुचुटुतुपूनां प्राचां संज्ञा, तयेहापि व्यवहारः ॥ न[4] तु सर्वत्रेत्संज्ञा प्राप्नोति, अनुवादे तदप्राप्तेरिति बोध्यम् ॥ नन्वण्ग्रहणप्रत्याख्यानेऽनुवादेष्विव विधावपि जातिनिर्देशात्सर्वग्रहणप्रसङ्ग इत्यत आह—भाव्यमानेष्विति ॥ यथाश्रुतमिति । जातिविशेषावच्छिन्नव्यक्तिविशेषरूपमित्यर्थः ॥ उत्पत्तिवाक्यत्वादिति । विधिवाक्यत्वादित्यर्थः । विधौ हि प्रमित्सितत्वाद्विशिष्टोपादाने न वाक्यभेदः[6] । अनुवादे तु तस्य सिद्धत्वेनाप्रमित्सितत्वात्तद्विशेषणोपादानं न वाक्यभेदमन्तरेण भवति, स चान्याय्य इति भावः । यत्तु[5] क्वचिद्विधावपि व्यक्त्यन्तरस्योपादानम्, तद्विव उदित्यादौ तपरत्वाछिङ्गादिति द्रष्टव्यमित्याहुः ॥ नान्तरीयकत्वादिति । अनेन नान्तरीयकविशेषणविषय एव विवक्षाऽविवक्षाविचार इति ध्वनयति । अत एव न 'श्रेयांसं प्रबोधयेत्' इत्यादौ अनुवाद्यविशेषणश्रेयस्त्वादेर्विवक्षायामपि दोषः ॥ वस्तुतोऽत्र[7] व्याख्यानमेव शरणं, नान्तरीयकसङ्ख्यालिङ्गविषयन्यायस्य प्रधानव्यक्तिविषयत्वानौचित्यात् । उपेयिवानित्यादौ[8][9] उपेत्यविवक्षाया नञो विवक्षायाश्च दर्शनात् ॥ ऋकारेण[10] ऌग्रहणाय तु ऌवर्णस्य ऋवर्णवद्भावो वाच्य इति तात्पर्यम् ॥

परे[11] तु जातिपक्षेऽपि तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियमार्थत्ववत्तत्प्रयुक्तसवर्णग्रहणनिषेधायाप्रत्यय इति पृथक् कार्यमेव ।

---

१ इदं चिन्त्यम् । तृतीया तत्कृतार्थेन गुणवचनेनेत्यत्र वचनग्रहणेन गुणोपसर्जनद्रव्यवचनस्यैव गुणवचनत्वात् । अतः तृतीयान्तेन पञ्चम्यन्तेन वा सुप्सुपेति समासः । शेषत्वविवक्षया षष्ठीत्यपि चिन्त्यम् । पृथग्विनेत्यादिसूत्रस्य षष्ठ्यपवादत्वादिति । ( र. ना. ) साहसमात्रमेतत् र. ना. पण्डितस्य । तथाहि—गुणोपसर्जनद्रव्यवचनस्यैव गुणवचनपदेन ग्रहणमित्यत्र नो विवादः । अत्र पृथक्त्वमित्यस्य गुणवचनेभ्यो मतुपो लुगिष्ट इति गुणोपसर्जनद्रव्यवचनत्वं सूपपादम् । वृत्त्या कृताः पृथक्त्वगुणवन्तो वर्णा इति नोपपद्यत इति हि तदर्थात् । शङ्कुलया खण्ड इत्यत्र क्रियावचनस्यापि खण्डशब्दस्य मतुब्लोपेनार्शआद्यचा वा क्रियावद्द्रव्यवाचकस्य ग्रहणं तथाऽत्रापि स्वीकारे न काचिद्धानिः । सर्वसम्मतत्वाचास्यार्थस्य स्पष्टत्वान्नेदं विवृतमुद्योते । एवञ्च सुप्सुपेति समास इत्यस्य नोपयोगः ॥ षष्ठीत्यपि चिन्त्यमित्यवशिष्यते । अत्र र. ना. महाशयस्यायमाशयः—पृथग्विनेति तृतीयाविधायकस्य षष्ठ्यपवादत्वात्तद्विषये षष्ठ्यप्राप्तेः 'भाष्ये शेषत्वविवक्षया षष्ठी' इत्युद्योतः प्रामादिक इति । तदपि तुच्छम् । पृथग्विनेत्यनेन भिन्नार्थकपृथगव्यययोगे तृतीया विधीयते, न तु गुणवाचिना पृथक्त्वशब्देन योगे इति तस्या अत्र प्राप्तिरेव नेति पांशुलपादा अपि जानन्ति । अत एव 'हेतौ पञ्चमी वा' इत्येवोक्तमुद्योते, न पृथग्विनेति पञ्चमीत्युक्तमिति सुधियो विदांकुर्वन्तु ॥

२ हेताविति । वृत्तिहेतुकं पृथक्त्वमित्यर्थः ॥ छाया ॥

३ उत्पत्तिवाक्ये विवक्ष्यते इत्यर्थः । क्वचित्तूह्यते इति पाठः तस्याप्यत्रैव तात्पर्यम् । ( र. ना. )

४ ननु यौगिक एव कुतो नात आह—न त्विति ॥ छाया ॥

५ यत्तु—प्रत्याख्यान—इत्यादि चिन्त्यम्, अन्यमतलोकविरुद्धन्यायाभ्यां शास्त्रव्यवस्थाया अयोगात्—इति रत्नकृत् ॥ तन्नेति ध्वनयन्व्याचष्टे—विधीति ॥ छाया ॥

६ 'वाक्यार्थभेदः' इति मुद्रितपुस्तकपाठः, स च निर्मूलः ॥

७ क्वचित्–अदसोऽसेरित्यादौ ॥ छाया ॥

८ कैयटादिकं दूषयति—वस्तुत इति ॥ छाया ॥

९ हेत्वन्तरमाह—उपेयीति ॥ वा–व्युत्क्रमे ॥ छाया ॥ 'विवक्षाया वा' इति क्वचित्पाठः ॥

१० ननु जातिपक्षे ऋकारेण ऌकारग्रहणमिष्टं कथमत आह—ऋकारेणेति ॥ छाया ॥

११ अत्र पक्षे निषेधासत्त्वं कैयटाद्युक्तं दूषयति—परे त्विति ॥ छाया ॥

ध्वनितं चेदं ज्यादादीयस इति सूत्रे भाष्ये ॥ किंच तत्र व्यक्तिविवक्षायां यत्र क्वचित् प्रयोगे एकाऽकारव्यक्तिः साध्वी स्यात्र प्रयोगान्तरे इति व्यक्तिविवक्षया समाधानं दुर्घटमित्याहुः ॥ ६९ ॥

—०:०:०—

( ६४ तपरसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १० सू. ॥ )

## तपरस्तत्कालस्य ॥ १ । १ । ७० ॥

( तत्कालपदसाधनम् )

( आक्षेपभाष्यम् )

**अयुक्तोऽयं निर्देशः । 'तत्' इत्यनेन कालः प्रतिनिर्दिश्यते, तदित्ययं च वर्णः । तत्रायुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम् ॥**

( प्रदीपः ) तपरः० ॥ ७० ॥ **अयुक्त इति** । न्यायेनासंबद्ध इत्यर्थः । न्यायशब्दस्य तु प्रयोगः प्रसिद्धत्वान्न कृतः । कदाचित्तु प्रसिद्धार्थस्यापि प्रयोगो दृश्यते—न्यायेनायुक्तमिति । धात्वर्थेऽन्तर्भूतस्य प्रयोगाभावः, न हि भवति—जीवति प्राणानिति ॥ **तदित्यनेनेति** । स कालो यस्येति कालसामानाधिकरण्येन तच्छब्दोपादानात् ॥ **तदित्ययं च वर्ण इति** । परामृष्ट इत्यर्थः, तपरशब्दवाच्यस्यार्थस्य तच्छब्देन परामर्शात् ॥ **वर्णस्येति** । वर्णवाचिनस्तच्छब्दस्येत्यर्थः ॥ **कालेनेति** । कालवाचिनेत्यर्थः । कालो हि प्रसिद्धपरिमाणा क्रियाऽप्रसिद्धपरिमाणस्य क्रियाऽन्तरस्य परिच्छेदिका, यथा—दिवसमधीत इति । दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते । स चाध्ययनस्य परिच्छेदकत्वात्कालः । वर्णस्तु क्रियात्मको न भवति ॥

( उद्योतः ) तपरस्तत्का० ॥ ७० ॥ युजेः संबन्धवाचकत्वेन संबन्धस्योभयनिरूप्यत्वेन संबन्ध्यन्तराकाङ्क्षायामाह—**न्यायेनेति** ॥ **प्रसिद्धत्वादिति** । निष्ठान्तयुजेः प्रायो न्यायसंबन्धिन्येव प्रयोगादित्यर्थः ॥ नन्वेवं युज्यर्थेऽन्तर्भूतत्वादप्रयोग इति कुतो नोच्यत इत्यत आह—**धात्वर्थे इति** । यद्ययमन्तर्भूतः स्यात्तदा न्यायेनायुक्त इति प्रयोगो न स्यादिति भावः ॥ **दण्डेनायुक्त** इत्यादि च न स्यादित्यपि बोध्यम् ॥ एतेन मेघो वर्षतीत्यादौ प्रसिद्ध्या जलमित्यादेरप्रयोगादकर्मकतेति नव्योक्तिः परास्ता ॥ भाष्ये—**प्रतिनिर्दिश्यत इति** । सामानाधिकरण्येन विशेष्यते इत्यर्थः ॥ **तदित्ययं च वर्ण** इत्यस्य साकाङ्क्षत्वादाह—**परामृष्ट इति** ॥ वर्णस्यैव परामर्शे हेतुमाह—**तपरेति** । तः परो यस्मादिति विग्रहेऽव्ययवधिमतोः साजात्यात्सवर्णत्वस्य वर्णनिष्ठत्वाच्च तेन वर्ण एवोच्यते इति भावः ॥ एकार्थवृत्तित्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वात् कथं

---

१ अत्र मानमाह—**ध्वनितमिति** ॥ एवं च सूत्रमतेऽपि योगविभागेनाण एव निषेधकं नोदित इति बोध्यम् ॥ छाया ॥

२ तथा निर्वाहे दोषमप्याह—**किं चेति** ॥ छाया ॥

३ यद्यप्याधुनिकाष्टाध्यायीभाष्यपुस्तकेष्वेकतकार एव पाठ उपलभ्यते । तथापि **तित्स्वरित**मिति सूत्रे भाष्ये **तिति प्रत्ययग्रहण**मिति वार्तिकं **दिव उदि**त्यादेशभूतमिति स्वरितत्ववारणाय कृत्वा तत्प्रत्याख्यानाय आदेशभूतेषु **नैष तकारः । कस्तर्हि । दकार** इति ग्रन्थेन दित्त्वमाश्रित्य तित्त्वाभावेन न स्वरितत्वापत्तिरित्युपपाद्य **'यदि दकारो न ज्ञापकं भवति'** इति ग्रन्थेन **भाव्यमानोप्युकारः सवर्णान्गृह्णातीत्यत्र** ज्ञापकत्वानुपपत्तिमापाद्य **'एवं तर्हि त्तपरस्तत्कालस्येति दकारोपि चर्त्वभूतो निर्दिश्यते'** इति सिद्धान्तितम् । ततः **"यद्येवं चर्त्वस्यासिद्धत्वाद्धशिचेत्युत्त्वं प्राप्नोति"** इत्यापत्तेः **सौत्रोऽयं निर्देशः । अथवा असंहितया निर्देशः करिष्यते—'अणुदित्सवर्णस्य चाप्रत्ययः । त्तपरस्तत्कालस्येति'** इति समाधानं कृतम् । एवं च **अणुदित् सवर्णस्य चाप्रत्ययस्तपरस्तत्कालस्ये**ति संहितापाठे **झरो झरि सवर्णे** इति लोपेनैकतकारप्रयोगसंभवेऽप्यसंहितया व्यस्तप्रयोगे **तकारद्वयवानेव सूत्रपाठः** समवगन्तव्यः, एकतकारनिवृत्तेरशक्यत्वात् ॥

अत्र केचित्—**दिवउदि**त्यादौ **तित्स्वरित**मित्यस्य प्राप्तेरेव विरहेण दकारप्रश्लेषादेर्निर्बीजत्वम् । तथा हि—उदित्येषा उकारस्य संज्ञा । तया प्रत्यायित उकारस्तु विधीयते । संज्ञा हि तान्ता न तु तित् । तकारस्योच्चारणार्थत्वेनोच्चारणार्थानामित्संज्ञालोपावन्तरेणापि निवृत्तेः । **तपर** इति हि सूत्रितम्, न तु तिदिति । एवं च दकारप्रश्लेषाभावे **नैकतकार एव सूत्रपाठः** इति वदन्ति ॥

अत्र नव्याः—**इच्च कस्य तकारेत्त्व**मिति वार्तिकस्य व्याख्यायां **'कस्यहेतोरिकारस्तपरः क्रियते'** इति भाष्यकृतोक्तत्वेन तित्त्वतपरत्वयोर्भेदाभावात्, **तस्य लोप** इति सूत्रभाष्ये—अनुबन्धानामेकान्तत्वपक्षे **"सर्वादेशे च दोषो भवति "दिव औत्" सर्वादेशः प्राप्नोति"** इति ग्रन्थेनोच्चारितस्येत्संज्ञालोपावन्तरेण निवृत्तेर्दुरुपपादकत्वेनोच्चारणार्थानामपीत्त्वस्य बोधनाच्च तित्त्वस्यादेशेषु दुष्परिहरत्वेन स्वरितवारणायादेशेषु दान्तत्वमावश्यकम् । **भाव्यमानोऽप्युकार** इति ज्ञापिते स्वांशे चारितार्थ्याय **तपर**सूत्रे दकारप्रश्लेषोऽप्यावश्यक एव । **प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहण**मिति न्यायस्त्वेकदेश्युक्तत्वान्नाद्रियते ॥ इति समादधति ॥ दाधिमथाः ॥ यथाऽसंहितया निर्देशः क्रियत इति न संहितयोच्चारणं निषिध्यते तथा दकारोऽपि चर्त्वभूतो निर्दिश्यत इति भाष्यस्य द्वितकारमेव सूत्रमुच्चारणीयमिति नाग्रहः, किन्तु दकारोऽपि तत्र ज्ञेय इत्येव भाष्याशय इति दाधिमथाभिप्रायः ॥

४ **काल इति** । तत्कालस्येतिपदघटकतत्पदेन कालः सामानाधिकरण्येन विशेष्यते, तत्सामानाधिकरण्यं न स्यात् । यतस्तच्छब्दस्य पूर्वपरामर्शित्वेन स तपरं ग्राहयति । तपरपदवाच्यश्च वर्ण इति **तत्पदेन** वर्ण एव ग्रहीष्यते । वर्णकालयोश्च सामानाधिकरण्यं न युज्यत इत्याशयः ॥

५ **युक्तश्छन्दांस्यधीयीते**त्यादौ व्यभिचारादाह—**प्राय इति ॥** छाया ॥

६ एवं प्रसिद्धार्थत्वे स्वयं प्रायःपदं सफलयन् युक्त्यन्तरमप्याह—**दण्डेनेति** ॥ छाया ॥

७ दीक्षितोक्तिं खण्डयति—**एतेनेति** । कदाचित्प्रयोगदर्शनेनेत्यर्थः ॥ छाया ॥

८ ननु स समुदायपर एवात आह—**तः पर इति ॥** छाया ॥

९ एकार्थबोधकत्वरूपेत्यर्थः । शब्दधर्मत्वादित्यस्यान्ते "कालवर्णयोरभावेने"ति शेषः । ( र. ना. )

वर्णस्य कालेनेति भाष्यमत आह—वर्णवाचिनि इति ॥ सामानाधिकरण्यानुपपत्तिप्रदर्शनाय कालस्वरूपमाह—कालो हीति ॥ अपरिच्छिन्नस्य विभोः कालस्य व्यवहारानुपयोगित्वादाह—प्रसिद्धेति ॥ वर्णस्त्विति । गुणरूपत्वाद् द्रव्यरूपत्वाद्वेत्यर्थः ॥ जन्यमात्रं कालोपाधिरिति तु न युक्तम् । दिवसादिव्यवहारस्य सूर्यक्रियादिभिरेव दर्शनाद् इति भावः । एतत्कालस्वरूपकथनं कालाः परिमाणिनेति सूत्रस्थभाष्यविरुद्धमिति तत्रैवोपपादयिष्यते ॥

( प्रत्याक्षेपभाष्यम् )

कथं तर्हि निर्देशः कर्तव्यः ?

( प्रत्याक्षेपसमाधानभाष्यम् )

तत्कालकालस्येति ॥

( आक्षेपभाष्यम् )

किमिदं तत्कालकालस्येति ?

( समाधानभाष्यम् )

तस्य कालः—तत्कालः, तत्कालः कालो यस्येति सोऽयं-तत्कालकालः, तत्कालकालस्येति ॥

( प्रदीपः ) तस्य काल इति । यैव एकस्य वर्णस्य परिच्छेदिका क्रिया निमेषादिः सैव यस्य परस्य, सः-तत्कालकालः ॥

( उद्द्योतः ) सैवेति । तज्जातीयेत्यर्थः ॥

( तटस्थाक्षेपभाष्यम् )

स तर्हि तथा निर्देशः कर्तव्यः ॥

( सिद्धान्तिसमाधानभाष्यम् )

न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखं यस्य सोऽयमुष्ट्रमुखः । खरमुखः । एवं तत्कालकालः—तत्कालः, तत्कालस्येति ॥

( प्रदीपः ) उष्ट्रमुख इति । गम्यमानार्थत्वात् द्वितीयमुखशब्दाप्रयोगः । उष्ट्रो मुखमस्योष्ट्रमुखः । न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात्सादृश्यप्रतीतिः । समग्रेण चोष्ट्रेण मुखस्य सादृश्याभावादुष्ट्रशब्दोऽवयवे वर्तते । मुखेनैव मुखस्य सादृश्यं प्रसिद्धमिति सामर्थ्यात्—उष्ट्रमुखमिव मुखमस्येत्यर्थो गम्यते । एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रिया क्रियान्तरपरिच्छिन्ना सती क्रियान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक उच्यते ॥

( उद्द्योतः ) तदीया क्रियेति । उच्चारणरूपेत्यर्थः ॥ क्रियान्तरस्य-वर्णान्तरोच्चारणस्य ॥ वर्ण एवेति । वर्णाश्रितक्रियागतपरिच्छेदकत्वस्याश्रये उपचाराद्वर्णपरामर्शिनस्तच्छब्दस्य मुख्यवृत्तेरेव कालशब्देन सामानाधिकरण्यमित्यर्थः ॥

( समाधानान्तरभाष्यम् )

अथवा—साहचर्यात्ताच्छब्द्यं भविष्यति । कालसहचरितो वर्णः, वर्णोऽपि काल एव ॥

( प्रदीपः ) अथवेति । वर्णसहचरितायां क्रियायां तच्छब्दो वर्तते, स कालो यस्येति तद्वर्णसमवेता क्रिया परिच्छेदिकाऽस्येत्यर्थः । यथा—अश्मादि द्रव्यं द्रव्यान्तरपरिच्छिन्नं सुवर्णादीनां परिच्छेदकं, तद्वत् क्रियाऽपीत्यर्थः ॥

( उद्द्योतः ) पूर्वव्याख्यातो विशेषमाह—वर्णसहेति । अनेन लक्षणाबीजं संबन्धो दर्शितः ॥ क्रियायाः परिच्छेदकत्वं सापेक्षं, न स्वत इति दृष्टान्तेनाह—यथेति ॥

---

( विध्यर्थत्वनिर्णयः )

( आक्षेपभाष्यम् )

किं पुनरिदं नियमार्थम्, आहोस्वित् प्रापकम् ?

( उद्द्योतः ) भाष्ये-प्रापकमिति । स्वतन्त्रविधायकमित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

कथं च नियमार्थं स्यात् ? कथं वा प्रापकम् ?

( प्रत्याक्षेपसमाधानभाष्यम् )

यद्यत्राण्ग्रहणमनुवर्तते, ततो नियमार्थम् । अथ निवृत्तम्, ततः प्रापकम् ॥

( विशेषजिज्ञासाभाष्यम् )

कश्चात्र विशेषः ?

( ४०० नियमपक्षे दूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम् ॥ * ॥

( भाष्यम् )

"तपरस्तत्कालस्य" इति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति ॥

केषाम् ?

उदात्तानुदात्तस्वरितानाम् ॥

( प्रदीपः ) दीर्घग्रहण इति । भेदका उदात्तादय इति भावः ॥ तत्र वृद्धिरादैजिति षण्णामाकाराणां वृद्धिसंज्ञेष्यते, एकस्यैव तु दीर्घस्य स्यात् ॥ तपरकरणं त्वैजर्थमेव स्यात् ॥

---

१-न इति ।—न इत्यादि ॥ अनुपयुक्तत्वशङ्कां वारयति—सामेति ॥ छाया ॥

२ परमतेनाह—गुणेति ॥ सिद्धान्तमतेनाह—द्रव्येति ॥ छाया ॥

३ परमतं दूषयति—जन्येति ॥ छाया ॥

४ कैयटादिकं दूषयति—एतदिति ॥ छाया ॥

५ स्वकृततत्प्रत्याख्यानानुरोधेनाह—गम्येति ॥ छाया ॥

६ 'सहरितो वर्णोऽपि काल एव' इत्येव क. ग. च. पुस्तकेषु पाठः ॥

७ लक्षणेति । उत्तरपदलोपापेक्षया लक्षणाश्रयणं लघ्विति भावः ॥ छाया ॥

८ निरस्तस्यापि शिष्यबुद्ध्यर्थं चिन्तादर्शनादाह—अण्ग्रहणमिति ॥ छाया ॥

९ 'स्वरितानुनासिकानाम्' इति पाठः क. ग. च. पुस्तकेषु ॥

१० तत्र-तथा सति ॥ छाया ॥

**( उद्द्योतः )** षण्णामिति । अनुनासिकाकारस्य वृद्धिसंज्ञायां फलाभावादवसाने तदभावाच्चेदं चिन्त्यम् । अत एव वार्तिके—**स्वरभिन्नेत्येवोक्तम्**, न तु गुणभिन्नेति । भाष्येऽप्युदात्तानुदात्तस्वरितानामित्येव[1] पाठः ॥ ननु तत्र[2] तपरत्वसामर्थ्यादस्य सूत्रस्यावृत्तिमङ्गीकृत्यावृत्तस्याण्ग्रहणाननुवृत्त्या विध्यर्थत्वान्न दोष इत्यत—आह—**तपरकरणमिति** ॥

**( प्रापकपक्षाभ्युपगमभाष्यम् )**

**अस्तु तर्हि प्रापकम् ॥**

( ४०१ प्रापकपक्षे दूषणवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः ॥ * ॥

**( भाष्यम् )**

**प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतयोस्तु प्रतिषेधो वक्तव्यः ॥**

**( प्रदीपः ) ह्रस्वग्रहण इति** । 'अतो भिस ऐस्' इत्यकारग्रहणे पूर्वसूत्रेण दीर्घप्लुतयोर्ग्रहणं प्राप्नोति । इदं हि सूत्रमनण्ग्रहणे चरितार्थम् ॥

**( समाधानभाष्यम् )**

**न वक्तव्यः ॥**

**( समाधाने भाष्यवार्तिकम् )**

## *॥ विप्रतिषेधात् सिद्धम् ॥*

**( भाष्यम् )**

**अण् सवर्णान् गृह्णातीत्येतदस्तु, "तपरस्तत्कालस्य" इति वा । "तपरस्तत्कालस्य" एतद्भवति विप्रतिषेधेन ॥ अण् सवर्णान् गृह्णातीत्यस्यावकाशः—ह्रस्वा अतपरा अणः । 'तपरस्तत्कालस्य' इत्यस्याव काशः—दीर्घास्तपराः । ह्रस्वेषु तपरेषूभयं प्राप्नोति । "तपरस्तत्कालस्य" इत्येतद्भवति विप्रतिषेधेन ॥**

**( प्रदीपः ) विप्रतिषेधादिति** । विरोधो ह्यत्र[3] विद्यते । यदि पूर्वसूत्रेणाकारः सवर्णानां ग्राहकस्तदाऽष्टादशानां ग्रहणप्रसङ्गः, अनेन तु षण्णाम् । तत्र परत्वादनेनैव तपरोऽण् सवर्णानां तत्कालानां स्वरूपस्य च ग्राहकः ॥ ननु 'अतः' इति तकारोच्चारणसामर्थ्यादनेनैव ग्रहणं भविष्यति, किं विप्रतिषेधाश्रयेण ॥ नैतदस्ति । मुखसुखार्थस्यापि तकारस्य दर्शनात्, **ऋत इद्धातोरि**ति यथा ॥

**( उद्द्योतः )** नन्वाकडारादन्यत्र संज्ञासमावेशदर्शनाद्विप्रतिषेधादित्ययुक्तमत आह—**विरोधो हीति** । न हि संज्ञासमावेशे संज्ञात्वं प्रयोजकं, किंतु विरोधाभाव इति भावः ॥ सङ्ख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वादत्र युगपदसंभवरूपो विरोध इति तात्पर्यम् ॥ तपरत्वसामर्थ्यात् प्रतिलक्ष्यं लक्षणभेदाच्च **अतो भिस** इत्येतद्विषयं **तपर** इति लक्षणमनवकाशमित्ययुक्तो विप्रतिषेध इति शङ्कते[4]—**अत इतीति** ॥ तपरत्वस्य संदिग्धत्वाद्[5] विप्रतिषेधोपपत्तिरित्युत्तरयति—**नैतदिति** ॥ **ऋत इदिति** । अत्र[6] भाव्यमानत्वेन सवर्णाग्राहकत्वाद्यथा तपरत्वं मुखसुखार्थं तथेत्यर्थः ॥ **ऋत** इति तपरत्वं तु[7] गुणान्तरयुक्तसङ्ग्रहार्थम् । अन्यथोदात्तोच्चारणे 'तीर्णः' इत्यत्र क्ते प्रत्ययसंनियुक्ताद्युदात्तत्वे शेषनिघाते चोदात्तत्वाभावान्न स्यात् । अनुदात्तोच्चारणे जीर्यतीत्यत्र न स्यादिति भावः ॥

—•—

**( स्फोटस्यैकत्वनिरूपणम् )**

**( भाष्यम् )**

**यद्येवम्—**

( ४०२ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् ॥ * ॥

**( भाष्यम् )**

**द्रुतायां तपरकरणे मध्यमविलम्बितयोरुप-**

१ **पाठ इति** । एतेन स्वरग्रहणं गुणोपलक्षणम् । अग्रेऽनुनासिकस्यापि निर्देशादिति दण्डिकृष्णाद्युक्तमपास्तम् ॥ **छाया** ॥ **पाठ इतीति** । संस्कर्ता इत्यादिष्ववसान आकारस्य सुलभत्वाच्चिन्त्यत्वोक्तिरेव चिन्त्या ॥ वार्तिके स्वरपदोक्तिर्गुणोपलक्षणार्थेति **'भेदकत्वात्स्वरस्य'** इति वार्तिकव्याख्यायां भाष्यकृता वर्णितत्वादेवात्र **'उदात्तानुदात्तस्वरितानुनासिकानाम्'** इत्येव पाठः समुपलभ्यते । क्वचिल्लेखकप्रमादत्रुटिघटिते तदनुपलम्भो न सार्वत्रिकपाठव्याघातकः ॥ इति । **दाधिमथाः** ॥ अत्र छायामन्तराकृत्य 'तदभावाच्चेदं चिन्त्यम्' इत्युद्योतस्याक्षेपो निरर्थकः । **अवसाने दुर्लभत्वादित्यादेः**—अवसाने आकारस्य दुर्लभत्वादिति नार्थः, किन्तु अवसाने **तदभावात्**—वृद्धेरभावात् षण्णामित्युक्तिश्चिन्त्येत्येव । संस्कर्तेत्यादाववसाने आकारस्य सुलभत्वेऽपि न तत्र वृद्धेः कथञ्चिदपि सम्भवः । सन्निहितपूर्वपरामर्शिना तत्पदेनाकारग्रहणापेक्षया वृद्धिग्रहणस्यैवोचितत्वात् ॥ 'स्वरितानामित्येव पाठः' इत्युद्योतस्य **वार्तिके स्वरेत्यादिना**ऽधिक्षेपोऽपि अयुक्तः । भेदकत्वात्स्वरस्येति वार्तिकव्याख्यायां भेदकत्वाद्गुणस्येति वक्तव्यमित्युक्त्वा 'अभेदका गुणा इत्येव न्याय्यम्' इत्यादिना भेदकत्वात्स्वरस्येत्येव सिद्धान्तितम् । एवञ्च चिन्त्योक्तिरेव चिन्त्येति दाधिमथाक्रोशो निर्मूलः ॥

२ **तत्र**—वृद्धिसंज्ञासूत्रे ॥ छाया ॥ 'आवृत्तस्याण्ग्रहणानुवृत्त्या' इति पाठो गुरुप्रसादादिमुद्रितपुस्तकेषु, स प्रामादिकः । **'ग्रहणाननुवृत्त्या'** इत्येव पाठः ॥

३ **तत्र**—विरोधे ॥ छाया ॥

४ **शङ्कते—अत इतीति** । एवं च नन्वित्यपाठो मूले ( प्रदीपे ) ॥ छाया ॥

५ **संदिग्धत्वादिति** । तस्यैतदर्थत्वस्य संदिग्धत्वादित्यर्थः ॥ उच्चारणार्थत्वस्यापि संभवादिति भावः ॥ छाया ॥

६ विधेयांश इदमित्याह—**अत्रेति** ॥ छाया ॥

७ उद्देश्यांशे तु नैवमित्याह—**ऋत इतीति** ॥ छाया ॥

संख्यानं कर्तव्यम् । तथा मध्यमायां द्रुतविलम्बितयोः । तथा विलम्बितायां द्रुतमध्यमयोः ॥

किं पुनः कारणं न सिध्यति ?

'कालभेदात्' । ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम् । ये च मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ॥

( प्रदीपः ) **यद्येवमिति** । यद्ययं योगस्तत्कालान् प्रतिपादयन् भिन्नकालान् निवर्तयतीत्यर्थः ॥ **त्रिभागाधिका इति** । द्रुतं श्लोकं ऋचं वोच्चारयति वक्तरि नाडिकाया यस्या नव पानीयपलानि स्रवन्ति तस्या एव मध्यमायां वृत्तौ द्वादश पलानि स्रवन्ति । नवानां त्रिभागास्त्रीणि पलानि, तदधिकानि नव द्वादश सम्पद्यन्ते । विलम्बितायां वृत्तौ षोडश पलानि स्रवन्ति ॥

( उद्योतः ) **भिन्नकालानिति** । परत्वेन पूर्वसूत्रबाधादिति भावः ॥ अप्राप्तिरेवात्र[1] निवृत्तिः ॥ भाष्ये—**यद्येवमित्यस्य** एतद्विषये पूर्वसूत्राप्रवृत्तावित्यर्थः । यस्यां वृत्तौ तपरकरणं तदन्यत्र वृत्तौ प्रयोगे ऐसादीनामुपसङ्ख्यानं कार्यमिति तात्पर्यम् ॥

अभ्यासार्थे[2] द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा ।

शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता ॥ इति—

वृत्तिषु उपलब्धय एव भिन्नकालाः । वर्णास्तु तत्काला एवेत्यभिसन्धाय भाष्ये—**किंपुनरिति** प्रश्नः ॥ तत्तत्कालावच्छिन्नताल्वोष्ठपुटव्यापारजन्या भिन्नकाला एवेत्याशयेन **कालभेदादित्युत्तरम्** ॥ **त्रिभागाधिका इति** । तृतीयभागाधिका[3] इत्यर्थः, कैयटात्तथा प्रतीतेः ॥ त्रयो[4] भागा अधिका इत्यर्थस्तु उचितः । केवलसङ्ख्यावाचकानां पूरणप्रत्ययान्तार्थकत्वे मानाभावात्तत्रासाधुत्वाच्चेति **परे** ॥ **यस्या नाडिकाया इति** । सुषुम्नाया इत्यर्थः । **पलानि**—बिन्दवः । ब्रह्माण्डसंबद्धा साऽमृतबिन्दुस्राविणीति प्रसिद्धिर्योगिनाम् ॥

( ४०३ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते ॥*॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ?

अवस्थिता वर्णा द्रुतमध्यमविलम्बितासु ॥

किं कृतस्तर्हि वृत्तिविशेषः ?

'वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते ।' वक्तैव कश्चिदाश्वभिधायी भवति, आशु वर्णानभिधत्ते । कश्चिच्चिरेण । कश्चिच्चिरतरेण[5] ॥ तद्यथा-तमेवाध्वानं कश्चिच्चिरेण गच्छति, कश्चिदाशु गच्छति, कश्चिच्चिरतरेण गच्छति[6] । रथिक आशु गच्छति, आश्विकश्चिरेण, पदातिश्चिरतरेण[7] ॥

( प्रदीपः ) **सिद्धं त्विति** । सर्वासु वृत्तिषु न वर्णानामुपचयापचयौ, यथा—गन्तॄणामालस्यादिभेदाद् गतिभेदेऽपि न मार्गभेद इत्यर्थः ॥

( उद्योतः ) भाष्ये—**सिद्धं त्विति** । उत्पत्तिपक्षेऽपि[8] उपलब्धीनामेव कालभेदाद्वृत्तित्रैविध्यम् । वर्णास्तु वृत्तिभेदेऽप्येकरूपा एवेत्यभिमानः ॥ **अवस्थिताः**—नियतकालाः ॥ **चिराचिरवचनात्**—चिराचिरकालोच्चारणजनकयत्नात् । जायमानवैकृतध्वनेरुपलब्धीनामेव भेद इति भावः ॥ **उपचयापचयौ**—कालवृद्धिह्रासौ ॥ **आलस्यादिभेदादिति** । आलस्यादिना गतिक्रियाया भेदेऽपि यथा न मार्गभेदस्तथाऽऽलस्यादिनोच्चारणक्रियातो वैकृतध्वनिभेदेऽपि न वर्णस्वरूपभेद इति भावः ॥

( समाधानबाधकभाष्यम् )

विषम उपन्यासः । अधिकरणमत्राध्वा व्रजतिक्रियायाः । तत्रायुक्तं यदधिकरणस्य वृद्धिह्रासौ स्याताम् ॥

( प्रदीपः ) **विषम इति** । वर्णाः यत्नजन्याः, तद्भेदे वृत्तिभेदाद्भिन्नकाला एव । अध्वा तु व्यवस्थित एव, न गन्तृक्रियाजन्यः ॥

( उद्योतः ) **तद्भेदे**-प्रयत्नभेदे ॥ तद्भेदेनेति तृतीयान्तः क्वचित्पाठः ॥ **वृत्तिभेदात्**—द्रुतादिवृत्तिभेदात् ॥ **भिन्नकाला एवेति** । चिराचिरोपलब्ध्युपयोगिवृद्धिह्रासयुक्ता एवेत्यर्थः ॥ अयं[11] भावः—उत्पत्तिवादिनो वर्णोत्पत्तिं प्रति उच्चारणव्यापारस्य कारणत्वात्तावत्तावत्कालावच्छिन्नोच्चारणेन ह्रस्वदीर्घादेरिव द्रुतादेरपि तावत्कालस्यैवोत्पत्तिः स्यात् । न चानुनिष्पादी ध्वनिरेव तत्कालो न तु वर्ण इति वाच्यम् । विनिगमनाविरहादिति ॥

( समाधानसाधकभाष्यम् )

एवं तर्हि—स्फोटः शब्दः । ध्वनिः शब्दगुणः ॥

( आक्षेपभाष्यम् )

कथम् ?

१ नन्वेवं कथं निवृत्तिरत आह—**अप्राप्तिरिति** ॥ छाया ॥

२ त्रयोपयोगमाह—**अभ्यासेति** ॥ अस्मादेव निपातनाद्वार्तिके ह्रस्वो बोध्यः ॥ छाया ॥

३ **तृतीयेति** । दण्डिकृष्णरत्नादयोऽप्येवम् ॥ छाया ॥

४ कैयटादिकं दूषयन्सिद्धान्तमाह—**त्रय इति** । सुषुम्नायाः ॥ छाया ॥

५ एतदग्रे 'कश्चिच्चिरतमेव' इत्यधिकः पाठो मुद्रितेषु ॥

६ एतदग्रे 'कश्चिच्चिरतमेव' इत्यधिकः पाठो मुद्रितेषु ॥

७ एतदग्रे 'शिशुश्चिरतमेव' इत्यधिकः पाठो मुद्रितेषु ॥

८ **अपिना** नित्यत्वपक्षः ॥ छाया ॥

९ असिद्धान्तत्वस्यास्य वक्ष्यमाणत्वादाह—**अभीति** ॥ छाया ॥

१० तात्पर्यमाह—**जायेति** ॥ छाया ॥

११ ननु तस्योपलब्धीनामेव भेदो न वर्णानामित्युक्तत्वात्कथमिदमित्यतस्तत्राभिमानपदसूचितामरुचिं ध्वनयन्नाह—**अयं भाव इति** ॥ छाया ॥

( ४०४ समाधाने दृष्टान्तवार्तिकम् ॥ ५ ॥ )

॥ * ॥ भेर्याघातवत् ॥ * ॥

( भाष्यम् )

**तद्यथा—भेर्याघातो भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित्त्रिंशत्, कश्चिच्चत्वारिंशत् । स्फोटस्तावानेव भवति । ध्वनिकृता वृद्धिः ॥**

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते । अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥ १ ॥**

**तपरस्तत्कालस्य ॥ ७० ॥**

**( प्रदीपः ) एवं तर्हीति** । व्यक्तिस्फोटोऽत्र विवक्षितः । स च नित्यः । एतच्च **येनोच्चारितेने**त्यत्र पस्पशायां विचारितमिति तत एव बोद्धव्यम् ॥ **शब्दगुण इति** । शब्दस्य[1] गुणः—उपरञ्जकः, व्यञ्जकत्वेनेत्यर्थः । तद्यथा—घटः पुनः पुनर्दृश्यमानोऽपि न भेदमवलम्बते, तथा विलम्बितायां वृत्तावकार एव पुनः पुनरुपलभ्यत इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यत इति सर्ववृत्तिषु तत्कालत्वम् ॥ ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना भिन्नैर्ध्वनिभिर्व्यज्यन्त इति तेषां कालभेदः ॥ **भेर्याघात इति** । भेरीमाहन्तीति—भेर्याघातः । उपलब्धिसामान्ये दृष्टान्तः । यथा—प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते, कश्चिच्चिरं, कश्चिच्चिरतरं । एवं वृत्तिषूपलब्धीनां कालभेदः, विषयस्य त्वभेद एव ॥ **स्फोटस्तावानेवेति** । दार्ष्टान्तिकोपन्यासः ॥ **ध्वनिः स्फोटश्चेति** । व्यञ्जको व्यङ्ग्यश्चेत्यर्थः । शब्दानां व्यङ्ग्यानां संबन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते । व्यङ्ग्यस्त्वभिन्नकाल एवेत्यर्थः ॥ **उभयमिति** । व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन[2] स्वभावतः स्वरूपेण सिद्धावित्यर्थः ॥ **केषांचिदिति** । व्यक्तानामुभयं गृह्यते, अव्यक्तानां तु ध्वनिरेव ॥ ७० ॥

**( उद्द्योतः )** अतो नित्यमतिरिक्तं स्फोटमादाय समाधत्ते भाष्ये—**एवं तर्हीति** ॥ **अत्रेति** । भाष्ये इत्यर्थः ॥ **स च नित्य इति** । आकाशादिवदिति भावः ॥ ननु स्फोटोऽसिद्धस्[3]तन्नित्यत्वं चेत्यत आह—**एतच्चेति** । स एवायमकार इति प्रत्यभिज्ञानात्, एकं पदमिति प्रत्ययाच्च तत्सिद्धिरित्यन्यत्र[4] विस्तरः ॥ ननु ध्वनिरपि शब्दविशेष[5] एव स कथं शब्दगुणोऽत आह—**शब्दस्येति** । **व्यञ्जकत्वेन**—स्फोटोपलब्धिप्रतिबन्धकस्तिमितवाय्वपसरणद्वारा स्वधर्मेरूषिततदुपलब्धिहेतुत्वेनेत्यर्थः ॥ तद्विषयायाः पुनः पुनरुपलब्धेर्नैरन्तर्येऽपि न वर्णभेद इति दृष्टान्तेनोपपादयति—**तद्यथेति** ॥ **पुनः पुनरुपलम्भः**—अविच्छेदेन दर्शनम् ॥ **ह्रस्वदीर्घेत्यादि** । तमेवायं विलम्बितमुच्चारितवानन्यो द्रुतमितिवदिह[6] व्यक्तिप्रत्यभिज्ञानाभावादिति भावः ॥ एवं च परिदृश्यमानकालभेदे उपलब्धिगत एवेति तात्पर्यम् ॥ अत्रेदं[7] बोध्यम्— एक एव स्फोटस्तत्तद्वर्णैस्तत्तद्रूपेणाभिव्यज्यते ॥ **ध्वनिः शब्दगुण** इति भाष्ये ध्वनिशब्देन वर्णा वैकृतध्वनिश्च ॥ तत्र[8] वैकृतध्वनेः स्फोटस्य तद्रूपेण पुनः पुनरभिव्यक्तिः कार्यमिति तदभिव्यक्तस्फोटस्य तत्कालत्वमेव । ह्रस्वदीर्घप्लुतरूपस्फोटस्तु भिन्नकालावच्छिन्नैर्विजातीयैर्ध्वनिभिरभिव्यक्तो[9] भिन्न इव[10], लौकिकैर्ध्वनिगतभेदेन तद्भेदस्यापि संप्रत्ययात् ॥ कैयटे[11] **ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना** इत्यस्य व्यञ्जकभेदेनारोपितभेदा एव भिन्नैर्ध्वनिभिर्वर्णैर्व्यज्यन्त इत्यर्थः । विलम्बितादिवृत्तौ तु स्फोट एकजातीय एव । **ध्वनिकृता वृद्धिरि**[12]त्यस्य वैकृतध्वनिकृतोपलब्धिकालवृद्धिरित्यर्थः । वर्णो[13]परागाभिव्यक्तिजनकयत्नीयकालोपरागेणैव स्फोटस्य भानम् । अत[14] एवास्य प्राकृतत्वेन व्यवहारः । अयं[15] तु वैकृतः । तत्त्वं चाल्पत्वादिकृतत्वात् । वर्णाभिव्यक्त्युत्तरकालि[16]श्रायम् । अयं[17] तूपलब्धेरेव पौनःपुन्ये कारणम् । पौनःपुन्यं[18] चाविच्छेदेनोपलब्धिधारामात्रेण, न तु विच्छिद्य विच्छिद्योपलब्ध्या । एत[19]दवच्छिन्नत्वेन तु न स्फोटोपलब्धिः, ह्रस्वाकार एवायमिति प्रत्यभिज्ञानात् । **आरोपे[20] सति**

१ 'शब्दगुणस्योपकारकः' इति क. पाठः, 'शब्दस्य गुण उपकारकः' इति ग. पाठः ॥

२ योगिप्रत्यक्षात्मकप्रमाणेनेत्यर्थः । ( र. ना. )

३ **असिद्ध इति** । मानाभावात् ॥ छाया ॥

४ ननु प्रत्यभिज्ञाप्रत्यययोरन्यथाऽप्युपपत्तिरत आह—**अन्यत्रेति** । मञ्जूषायामित्यर्थः ॥ छाया ॥

५ **विशेष एव**-अव्यक्तकरवादिमान् ॥ छाया ॥

६ **इह**-ह्रस्वादौ ॥ छाया ॥

७ वैषम्यबीजं प्रतिपादयति—**अत्रेदमिति** ॥ **एक एव**-तथा प्रतीत्यादेः ॥ छाया ॥

८ **तत्र**-तयोर्मध्ये ॥ ध्वनेरित्यस्य कार्यमित्यत्रान्वयः ॥

९ **ध्वनिभिः**-वर्णरूपैः ॥ छाया ॥

१० वस्तुतो भेदाभावादाह—**इवेति** ॥ अत एवाह—**ध्वनिगतभेदेनेति** ॥ छाया ॥

११ ननु कैयटे वास्तवभेदस्योक्तत्वेन तद्विरोधोऽत आह—**कैयट इति** ॥ **ध्वनिभिरि**त्यस्य व्याख्या-**वर्णैरिति** ॥ छाया ॥

१२ नन्वेवमपि वक्ष्यमाणभाष्यविरोधोऽत आह—**ध्वनीति** ॥

१३ ननु प्राग्वद्यथाश्रुत एवार्थः कुतो नात आह—**वर्णोपेति** । यत इत्यादिः ॥ छाया ॥

१४ **अत एव**-तथैव लाभादेव ॥ **अस्य**-तज्जनकयत्नस्य ॥ छाया ॥

१५ **अयं तु**-तथा तस्य लाभोत्तरं जायमानस्तु ॥ **तत्त्वं च**-वैकृतत्वं च ॥ **वर्णेति** । वर्णैरभिव्यक्तीत्यर्थः ॥ छाया ॥

१६ स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते । शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः । इति हरिकारिका पूर्वत्रात्र च प्रमाणम् । ( र. ना. )

१७ नन्वेवं निष्फलोऽयमत आह—**अयं त्विति** । स्फोटस्येति भावः ॥ छाया ॥

१८ ननु सकृदुपलम्भेन तस्य नष्टत्वात्कथं पुनः पुनरुपलब्धिरत आह—**पौनःपुन्यमिति** ॥ छाया ॥

१९ नन्वस्त्वेवं तथापि तद्बद्धाने भेद एवात आह—**एतदिति** । वैकृतध्वनीत्यर्थः ॥ छाया ॥

२० ननु तत्राप्येवमेव स्यादत आह—**आरोपे सतीति** ॥ छाया ॥

**निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोप** इति न्यायात् । उत्पत्तिवादिना त्वेवं वक्तुमशक्यमिति स्पष्टमेवेति ॥

ननु भेर्याघातो भेरीदण्डादिसंयोगविशेषः, स कथं गच्छेदत आह—**भेरीमिति** । कर्मण्यणिति भावः ॥ भाष्ये—**आहत्य** । [1]तं शब्दमुपलभमान इति शेषः ॥ ननु दृष्टान्ते ध्वनेरुपलभ्यमानस्य भेदो न, तथेह वर्णस्य [2]द्रुतादिष्विति वैषम्यमत आह—**उपलब्धिसामान्ये इति** । यथा तत्र तस्य ध्वनेस्तावत्तावत्कालमुपलम्भस्तथेहापि तत्तद्वृत्तौ तावत्तावत्कालं तत्तदभिव्यञ्जकरूपरूषितत्वेन परिच्छिन्नस्यैव स्फोटस्योपलम्भमानमित्येतावत्येव दृष्टान्तः । न चैतावता स्फोटभेद इति तात्पर्यम् ॥ ननु भेर्याघातस्थले स्फोटाभावात् **स्फोटस्तावानेवे**त्यनुपपन्नमत आह—**दार्ष्टान्तिकेति** ॥ भाष्ये—**ध्वनिः स्फोटश्च** । स्त इति शेषः ॥ किं तत इत्यत आह—**शब्दानामिति** । **व्यञ्जकत्वेन**—उपलब्धिजनकत्वेन । [3]वैकृतध्वनेरप्युपलब्धिपौनःपुन्यकारणत्वाद्व्यञ्जकत्वमिति भावः ॥ तदुपक्रमेणैव भाष्यप्रवृत्तेः । **तदु[4]भयं स्वभावतः**—सिद्धमिति शेषः ॥ न तु तत्र प्रमाणान्तरापेक्षेति भावः ॥ योगिप्रत्यक्षसिद्धं चैतदुभयमिति तात्पर्यम् ॥ इद[5]मेव कैयटेन **प्रमाणेने**त्यनेनोक्तम् ॥ वस्तु[6]तस्तु भेर्याघातस्थलेऽपि स्फोट एव भेरीताडनाभिव्यक्तः श्रोत्रग्राह्यः । शब्दा[7]नां चिराचिरोपलब्धिकराल्पत्वमहत्त्ववान् वैकृतिध्वनिरेवाल्पत्वादिना लक्ष्यते ॥ [8]**महत्त्वं**—चिरकालत्वम् ॥ [9]वैकृतध्वनिस्फोटयोः प्रमाणमाह—**उभयं तदिति** । तदु[10]क्तं हरिणा—

**वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।**

**ग्रहणे**—तत्तत्कालकत्वेन ग्रहणे ।

**[11]वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥**

इति,

**[12]शब्दस्योर्ध्वमभिव्य[13]क्तेर्वृत्तिभेदाय वैकृतः ॥**

इति च । उ[14]भयमित्यावृत्त्या योजनीयम् । **उभयं गृह्यत इति** शेषः । तेन व्यक्तवाचामुभयम्, अव्यक्तवाचां वर्णधर्मानाक्रान्तध्वनिरेवेत्यर्थः । [15]ध्वनिपदेन प्राकृतवैकृतावुभावपि उच्येते । ग्र[16]हणकर्मीभूतमुभयं तु प्राकृतध्वनिस्फोटरूपम् । वैकृ[17]तं स्याल्पत्वादि चिराचिरोपलब्ध्यनुमेयमिति बोध्यम् ॥ ७० ॥

(६५ प्रत्याहारसंज्ञासूत्रम् ॥ १ । १ । ९ आ. ११ सू. ॥)

## आदिरन्त्येन सहेता ॥ १ । १ । ७१ ॥

( संज्ञिनिरूपणम् )

( ४०५ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आदिरन्त्येन सहेतेत्यसंप्रत्ययः संज्ञिनोऽनिर्देशात् ॥ * ॥**

( भाष्यम् )

**आदिरन्त्येन सहेतेति असंप्रत्ययः ॥**

**किं कारणम् ?**

**'संज्ञिनोऽनिर्देशात्' । न हि संज्ञिनो निर्दिश्यन्ते ॥**

( प्रदीपः ) **आदिरन्त्येन०** ॥ ७१ ॥ **असम्प्रत्यय इति** । अ[18]प्रतिपत्तिरित्यर्थः ॥

( ४०६ न्यासान्तरेण समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं त्वादिरिता सह तन्मध्यस्येति वचनात् ॥ * ॥**

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

---

१ यथाश्रुतासंगतेराह—**तमिति** ॥ छाया ॥

२ द्रुतेत्यस्य व्याख्या—**द्रुतेति** ॥ **तत्र**–दृष्टान्ते ॥ छाया ॥

३ नन्वेवं प्राकृतस्यैव ग्रहणमित्यनिष्टमेवात आह—**वैकृतेति** ॥ छाया ॥

४ तदिति भिन्नं पूर्वान्वयीत्याह—**तदुभयमिति** ॥ छाया ॥

५ **इदमेव**–योगिप्रत्यक्षमेव ॥ छाया ॥

६ स्फोटस्तावानेवेति दार्ष्टान्तिकं वार्तिकाभिप्रायमिति कैयटासङ्गत्यायाह—**वस्तुतस्त्विति** ॥ छाया ॥

७ शब्दानामित्यस्य शब्देऽन्वयः प्रागुक्तो न, अफलत्वादित्याह—**शब्दानामिति** ॥ शब्द इत्यस्यार्थमाह—**वैकृतेति** ॥ त्वर्थमाह—**एवेति** ॥ **लक्ष्यते इति** । केषांचिदल्प इति केषांचिन्महानिति लक्ष्यत इत्यर्थः ॥ छाया ॥

८ स्वरूपतोऽल्पत्वादेरभावादाह—**महत्त्वमिति** ॥ एवमल्पत्वमचिरकालत्वं बोध्यम् ॥ छाया ॥

९ कैयटेन प्राकृतपरतयोक्तत्वादाह—**वैकृतेति** ॥ छाया ॥

१० एवं भाष्यव्याख्याने मानमाह—**तदुक्तमिति** । स्फोटस्येति पाठः ॥ **वर्णस्ये**ति पाठेऽपि तत्तद्रूपरूषितस्य स्फोटस्येति वाऽर्थः ॥

**प्राकृतः**–स्फोटव्यञ्जकः ॥ **ग्रहणे**–अभिव्यक्तौ ॥ छाया ॥

११ **वृत्तिभेद इति** ॥ **स्थितिभेद** इति पाठान्तरम् । चिराचिरोपलब्धिविशेषे इति तदर्थः ॥ छाया ॥

१२ तदेवाह—**शब्दस्येति** । शब्दस्याभिव्यक्तेरूर्ध्वमित्यन्वयः ॥ छाया ॥

१३ 'व्यक्ते वृत्ति' इति ज. पाठः ॥

१४ अग्रिमकैयटाद्युक्तिसंग्रहाय केषांचिदिति सूचितमाह—**उभयमिति** ॥ अत्र पक्षे न प्रागुक्तः शेष इत्याह—**गृह्यत इति** ॥ केषांचिच्छब्दानामेवोभयं गृह्यत इति तदर्थः ॥ तदाह—**तेनेति** । आवर्तनेनेत्यर्थः ॥ **उभयं**–व्यङ्ग्यव्यञ्जकरूपम् ॥ एवलभ्यमाह—**अव्यक्तेति** । छाया ॥

१५ विनिगमनाविरहादाह—**ध्वनीति** ॥ छाया ॥

१६ नेदं द्वयमत्रोभयशब्दार्थ इत्याह—**ग्रहणेति** ॥ छाया ॥

१७ ननु तस्य तादृशाल्पत्वादौ किं मानमत आह—**वैकृतस्येति** । स्पष्टं चेदमन्यत्र ॥ छाया ॥

१८ **अप्रतीति** । सूत्रार्थस्येति भावः ॥ छाया ॥

आदिरन्त्येनेता सह गृह्यमाणः स्वस्य च रूपस्य ग्राहकः, तन्मध्यानां चेति वक्तव्यम् ॥

( ४०७ यथान्यासेनैव समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ संबन्धिशब्दैर्वा तुल्यम् ॥ * ॥

( भाष्यम् )

संबन्धिशब्दैर्वा तुल्यमेतत् ॥

कथम् ?

तद्यथा—संबन्धिशब्दाः—मातरि वर्तितव्यम्, पितरि शुश्रूषितव्यमिति । न चोच्यते—स्वस्यां मातरि, स्वस्मिन् पितरीति । संबन्धाच्च गम्यते—या यस्य माता, यो यस्य पितेति । एवमिहापि 'आदिः' 'अन्त्यः' इति संबन्धिशब्दावेतौ । तत्र संबन्धादेतद्गन्तव्यम्—यं प्रति य आदिःअन्त्य इति च भवति तस्य ग्रहणं भवति, स्वस्य च रूपस्येति ॥ आदिरन्त्येन सहेता ॥ ७१ ॥

( प्रदीपः ) सम्बन्धिशब्दैर्वेति । संज्ञयैवाक्षिप्तः संज्ञीत्यर्थः । आद्यन्तौ च मध्यापेक्षाविति मध्यमानामेव संज्ञित्वम् ॥ स्वंरूपमित्यनुवर्तनात्स्वरूपस्य च । सहग्रहणाच्चाद्यन्तौ समुदितौ संज्ञेतीको यणचीति समुदायादेव विभक्त्युत्पत्तिः, नादिमात्रात् । स्वंरूपं त्वादेरेव गृह्यते नान्त्यस्य, तस्याप्राधान्यादिति 'दध्यत्र' इति केवल एव यकार आदेशः प्रवर्तते, न तु णकारसहितः ॥७१॥

( उद्द्योतः ) आदिरन्त्ये० ॥ ७१ ॥ संज्ञयैवेति । संज्ञा-बोधकेनान्त्यसमभिव्याहृतेच्छब्दसहितादिशब्देनेत्यर्थः ॥ आक्षेपप्रकारमाह—आद्यन्तौ चेति । यद्यप्यादिशब्दः परमात्रमपेक्षते, अन्तश्च पूर्वमात्रम्, तथापि सह प्रयुज्यमानौ मध्यापेक्षाविति भावः ॥ मध्यमानामेवेत्येवकारः सौलभ्यद्योतकः ॥ स्वंरूपमित्यनुवर्तनादिति । अन्ये तु—आद्यन्तशब्दाभ्यामवयववाचकाभ्यामवयवी समुदाय आक्षिप्त इति संबन्धित्वेनाविशेषादादेरपि ग्रहणम् । अन्त्यस्य तु न, 'आचारादप्रधानत्वाल्लोपश्च बलवत्तरः' इत्युक्तेरन्यानुबन्धानामिवास्यापि संज्ञाकार्याभावात् । स्वंशब्देन विशेषणीभूतान्त्यमात्रपरामर्शासम्भवेऽपि विशिष्टपरामर्शे बाधकाभावेन तया युक्त्या न निर्वाहः । एतत्फलितार्थकथनमेव भाष्ये—स्वस्य च रूपस्येति । तेन चाद्यन्तशब्दौ पूर्वपरशब्दवन्नावधिमच्छब्दौ, किंत्ववयवशब्दाविति सूचयतीत्याहुः ॥ समुदायादेवेति । तस्यैव संज्ञिनाऽर्थेनार्थवत्तया प्रातिपदिकत्वादिति भावः ॥ ननु स्वंरूपमित्यस्यानुवृत्तावन्त्यसहितादेर्विशिष्टस्य यणिति रूपस्य संज्ञित्वे दध्यत्रेत्यादौ णकारसहितः स्यादत आह—स्वंरूपं त्विति ॥ अत्र वदन्ति—समुदितस्य संज्ञात्वे "प्रत्याहारेष्वाद्या वाचकास्तत्र ग्रहणकशास्त्रं सावकाशं" इति ग्रहणकसूत्रस्थभाष्यविरोधः । टिघुभाद्येकदेशवदस्यापि ग्राहकत्वप्रसक्त्यभावात् । तस्मादाद्यवर्ण एव वाचकता, अन्त्यस्तु तात्पर्यग्राहकः । सहग्रहणात्तु विशिष्टे तदारोपाद्विशिष्टाद्विभक्त्युत्पत्तिरिति द्योतकान्तरवैषम्यमिति ॥ ७१ ॥

---

(६६ तदन्तसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १२ सू०)

# येन विधिस्तदन्तस्य ॥ १ । १ । ७२ ॥

( तदन्तविधिविषयनिर्णयः )

( आक्षेपभाष्यम् )

इह कस्मान्न भवति—"इको यणचि" । दध्यत्र, मध्वत्र ?

(प्रदीपः) येन० ॥७२॥ इह कस्मादिति । शब्दानुशासनप्रस्तावाच्छब्दस्वदरूपमिका विशेष्यत इत्यस्ति तदन्तस्य प्रसङ्गः ॥

( उद्द्योतः ) येन विधिः० ॥ ७२ ॥ ननु येनेति करणे तृतीया, न कर्तरि, पष्ठ्यापत्तेः । शास्त्रे करणं च विशेषणमेवेत्यग्रे भाष्यकृद्वक्ष्यति । तदन्तस्य-इति बहुव्रीहिः । एवं चेको यणित्यादौ विशेष्याभावात् कथमतिव्याप्तिरत आह—शब्दानुशासनेति । वस्तुतोऽस्यार्थस्य भाष्येऽग्रे वक्ष्यमाणत्वान्नैतं पूर्वपक्षी जानातीति विशेष्यप्रदर्शनं व्यर्थम् ॥ यत्संबन्धी विधिः स तदन्तस्य संज्ञेति सूत्रार्थं मत्वा शङ्का । अत एवाग्रे विधेयेनापि तदन्तविधिं वक्ष्यति । विधिः-इति च भावे किः । सौत्रत्वाच्च तृतीयेत्याहुः ॥

( समाधानभाष्यम् )

अस्तु । अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति ॥

---

१ 'आदिरन्त्येन सहेता' इति ग. च. पाठः ॥

२ उच्चार्यमाण इत्यर्थः । ( र. ना. )

३ संज्ञयाऽऽक्षेपासंभवादाह—संज्ञेति ॥ छाया ॥

४ द्विवचनान्तोक्तिफलमाह—यद्यपीति ॥ छाया ॥

५ सहेति । अत एव न्यासान्तरेऽपि तदुक्तिः ॥ छाया ॥

६ व्यावर्त्यासंभवादाह—मध्येति ॥ छाया ॥

७ कैयटादिकं दूषयन् सिद्धान्तमाह—अन्ये त्विति ॥ अवयवी—आद्यन्त्यघटितः । अत एवावयवत्वं तयोः ॥ छाया ॥

८ अतिप्रसङ्गं निराचष्टे—अन्त्यस्य त्विति ॥ वार्तिकमाह—आचारादिति ॥ छाया ॥

९ तस्यावश्यकत्वमाह—अन्येति । मध्येत्यर्थः ॥ अस्यापि—अन्त्यस्यापि । एवं चाफलत्वं गौरवं च ॥ छाया ॥

१० विपक्षे बाधकमप्याह—स्वशब्देनेति ॥ छाया ॥

११ 'भावेन अप्रधानतृतीयानिर्देशादित्यनया युक्त्या' इति घ. प. पाठः ॥

१२ नन्वेवं भाष्यविरोधोऽत आह—एतदिति ॥ एवेनानुवृत्तिनिरासः ॥ अत एव न्यासान्तरव्याख्याने एकेन विधौ संधिक्रमत्यागो निर्बीज इत्याशयेन स्वस्य चेत्यादावुक्तम् ॥ छाया ॥

१३ ननु स्पष्टं तथैव कुतो नोक्तमत आह—तेन चेति ॥ तेन तत्र संबन्धित्वप्रतिपादनादिति भावः ॥ भाष्यकृदिति शेषः ॥ छाया ॥

१४ सिद्धान्ते दोष इत्याह—अनुवृत्ताविति ॥ छाया ॥

१५ कृष्णाद्युक्तिमाह—अत्रेति ॥ अत्रत्यं तत्त्वं प्रभायां स्पष्टम् ॥ छाया ॥

१६ कैयटादिकं दूषयति—वस्तुत इति ॥ छाया ॥

( अनिष्टापत्तिभाष्यम् )

**नैवं शक्यम् । ये अनेकाल आदेशास्तेषु दोषः स्यात्—"एचोऽयवायावः" इति ॥**

( प्रदीपः ) **येऽनेकाल इति** । ततश्च चयनजयनादिष्वयनमिति प्राप्नोति । प्रकरणादिवशाच्चाक्षादिष्विवार्थविशेषावगतिः स्यात् । **निर्दिश्यमानस्यादेशा** इति अत्र नाश्रितं परिहारान्तरविवक्षया ॥

( उद्योतः ) नन्वयनमित्यादितश्चयनमित्याद्यर्थाबोधात्, अर्थाभिधानयोग्यस्यैवादेशत्वात्कथमत्रादेशोऽत आह—**प्रकरणेति** ॥

( अनिष्टापत्तिनिराकरणभाष्यम् )

**नैष दोषः । यथैव प्रकृतितस्तदन्तविधिर्भवति, एवमादेशतोऽपि भविष्यति । तत्रैजन्तस्यायाद्यन्ता आदेशा भविष्यन्ति ॥**

( उद्योतः ) भाष्ये—**यथैवेति** । ऐचा तदन्तविधावयादेः कार्यित्वम्, अयादेस्तु तदन्तविधौ साधुत्वस्यायादिना बोध्यमानतया कार्यित्वमिति विवेकः ॥

( आक्षेपभाष्यम् )

**यदि चैव क्वचिद्वैरूप्यं तत्र दोषः स्यात् ॥**[3]

( प्रदीपः ) **यदि चैवेति** । 'आद्गुणः' इत्यादौ । अत्र हि 'आत्' इत्यकारान्तो गृह्यते । 'अचि' इति चाजादिः । तेन खट्वेन्द्र इत्यादाववर्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गाद्वैरूप्यप्रसङ्गः । षष्ठ्यनिर्देशाच्च **निर्दिश्यमानस्येत्यपि** नास्ति ॥

( उद्योतः ) **अजादिरिति** । **यस्मिन्विधिरिति** परिभाषणादिति भावः ॥ **षष्ठ्यनिर्देशादिति** । **पूर्वपरयोरिति** षष्ठी तु साधारणीति भावः ॥ तदादितदन्तविध्युपस्थितिसामर्थ्याच्च तदप्रवृत्तिर्बोध्या ॥ अत एवालोऽन्त्यस्येत्यादेरप्यप्रवृत्तिरित्याहुः ॥

( आक्षेपान्तरभाष्यम् )

**अपि चान्तरङ्गबहिरङ्गे न प्रकल्पेयाताम् ॥**

**तत्र को दोषः ?**

**स्योनः, स्योना । अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत । ऊनशब्दमाश्रित्य यणादेशः, नशब्दमाश्रित्य गुणः ॥**

( प्रदीपः ) **स्योन इति** । सिवेर्बाहुलकादौणादिके नप्रत्यये गुणो वलोप ऊठ्-इति कार्यत्रयस्य प्रसङ्गः । तत्रापवादत्वादूठा वलोपो बाध्यते, गुणस्त्वन्तरङ्गत्वाद्बाध्यते । गुणो ह्यङ्गसंबन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति, ऊठ् तु वकारान्तमङ्गमननुनासिकादिकं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते गुणश्च प्राप्नोति यणादेशश्च । तत्र वर्णमात्रापेक्षत्वाद्यणादेशोऽन्तरङ्गः प्रवर्तते । नानाश्रयत्वाद्वार्णादाङ्गं **बलीय** इत्येतन्नास्ति । यत्रैकाश्रये आङ्गवार्णे यथा कार इति घञाश्रये यण्वृद्धी तत्रैवास्य प्रवृत्तिः । यदि च **इको यणची**त्यत्र तदन्ततदादिविधी स्यातां तदा यणादेशस्यान्तरङ्गत्वाभावात् परत्वाद्गुणः स्यात् ॥ **अन्तरङ्गलक्षणस्येति** । असति तदन्ततदादिविधित्वे योऽन्तरङ्गस्तस्येत्यर्थः ॥ एवं बहिरङ्गलक्षणो गुण इति व्याख्येयम् ॥

( उद्योतः ) भाष्ये—**अन्तरङ्गबहिरङ्गे इति** । वर्णमात्राश्रयत्वेन वार्णस्यान्तरङ्गत्वमिष्यते, तदपि चेत्समुदायस्य, न कोऽपि विशेषः स्यादिति भावः ॥ **अन्तरङ्गलक्षणस्येत्यस्य** तत्त्वाभिमतस्येत्यर्थः ॥ **बाधक** इत्यस्य-तव मते उभयोः समत्वेन परत्वादिति शेषः ॥ **गुणः—पुगन्तेत्यनेन** ॥ **गुणो हीति** । इकारस्येति शेषः ॥ गुणः पञ्चकाश्रयः, ऊठ् तु चतुष्काश्रय इति विवेकः ॥ **नानेति** । अचि-यण्, प्रत्यये-गुण इति भावः । इदं **चिन्त्यम्, इयायेत्याद्यसिद्धेः**, ज्ञापकासंभवाच्च ॥ **केचित्त्वत्रापि** तदादितदन्तविधावस्य वार्णत्वाभावात्तदप्रवृत्तिः, सा वक्तुं चाशक्या वार्णप्रसिद्धेरिति भाष्याशयः ॥ **यद्वा** तदप्रवृत्तिरनित्यत्वादुभयसंमतेति भाष्याशय **इत्याहुः ॥** व्याहतिं निराकरोति—**असतीति** । सति तु तस्मिन्नान्तरङ्गत्वमिति भावः ॥ [11] इदं तु बोध्यम्—एवमपीगन्तशब्दाजादिशब्दमात्रापेक्षत्वं यणः, गुणस्य तूक्तरीत्या पदार्थपञ्चकापेक्षत्वमिति कथं न बहिरङ्गत्वम् । तस्मात्संज्ञापेक्षं न बहिरङ्गम् । [12] गुणादूठ् तु नित्यः । सिद्धान्ते ऊठि कृते यणा बाधाद्गुणो न नित्यः । इदानीं तदसिद्धिरपि दोष इति भाष्याशय इति ॥ **एवमिति** । सति तदादितदन्तविधित्वे यणा तुल्यनिमित्त इति न स बहिरङ्ग इति भावः ॥ भाष्ये-**ऊनशब्दमाश्रित्येत्यादिना** यणो बहिरङ्गत्वं गुणस्यान्तरङ्गत्वं दर्श्यते । एवं च **परत्वाद् गुणः स्यादिति** कैयटश्चिन्त्यः । अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो, न तु स्थान्यादिपरोऽपीति सूचयति [13] । यण्निमित्तोनशब्दावयवत्वेन नशब्दस्य ततो बहिष्ट्वाभावः । गुणनिमित्तनशब्दादूनशब्दस्य बहिर्भूतोकारघटितत्वाद्यणो बहिरङ्गत्वमिति भावः ॥

---

१ ननु एच्संबन्धिविधानसत्त्वेऽपि नायादिसंबन्धिविधानम् । तेषामेव तत्त्वादिति भाष्यासंगतिरत आह—**एचेति** ॥ छाया ॥

२ साधुत्वस्य कार्यित्वमिति योजना । ( र. ना. )

३ 'स्यात् । खट्वेन्द्रः, खट्वौदनः ।' इति क. पाठः । 'यदि चैवं' इति मुद्रितपाठः ॥

४ युक्त्यन्तरमप्याह—**तदादीति** ॥ छाया ॥

५ **वार्णस्य**-यणः ॥ छाया ॥

६ अत्र पक्षे तदभावादाह—**तत्त्वेति** ॥ एवमग्रेऽपि ॥ छाया ॥

७ कैयटरीत्याह—**परत्वादिति** ॥ छाया ॥

८ **ज्ञापकेति** । **अभ्यासस्यासवर्णे**तीत्यर्थः । तस्मात्समानस्थानिकत्वमेव समानाश्रयत्वं तत्र ॥ छाया ॥

९ नन्वेवं भाष्यासंगतिरत आह—**केचित्त्विति** ॥ छाया ॥

१० सिद्धान्तरीत्याह—**यद्वेति** ॥ छाया ॥

११ कैयटादिकं दूषयन्नन्यथा भाष्याशयमाह—**इदं त्विति ॥** छाया ॥

१२ नन्वेवं कथमादावूठ्? अत आह—**गुणादिति** ॥ इदमपि सिद्धान्ते, नेदानीमित्याह—**सिद्धान्त इति** ॥ छाया ॥

१३ **स्थान्यादीति** । स्थानिविशेषणपरत्वस्येष्टत्वेऽपि **नहीति** न्यायेन स्थानिपरत्वस्यानिष्टत्वादिति भावः ॥ **आदिना**ऽङ्गम्यवयव्यादिपरिग्रहः ॥ छाया ॥

( आक्षेपान्तरभाष्यम् )

**अल्विधिश्च न प्रकल्पेत—द्यौः, पन्थाः, स इति ॥**

( प्रदीपः ) **अल्विधिरिति** । अलोऽन्त्यस्येत्यत्रापि तदन्तविधिसद्भावादन्त्यालन्तस्य समुदायस्य कार्येण भाव्यमिति द्यौः पन्था इत्यत्रालोऽन्त्यस्यादेशो न प्राप्नोतीत्यर्थः ॥ तत्र कदाचित्पथिन्नित्यस्याकारः स्यात्, कदाचित् थिन्नित्यस्य । **अनेकाल् शित्सर्वस्ये**त्येतत्तु सर्वस्यैवेति नियमार्थं स्यात् ॥

( उद्योतः ) भाष्ये—**अल्विधिश्चेति** । स्थानिवदित्यत्र अलो जायमानो विधिरल्विधिरित्यर्थः ॥ **अलोऽन्त्यस्यादेशो नेति** । नियमेनेति शेषः ॥ **थिन्नित्यस्येति** । कदाचित् 'इन्नित्यस्य' इत्यपि बोध्यम् ॥ सर्वथाऽऽदेशस्य स्थानिवत्त्वात्सुलोपः स्यादिति भावः ॥ नन्वेवमनेकाल्शिदिति व्यर्थं कदाचिदेकाल्त्वत् तस्यापि सर्वादेशत्वसिद्धेरत आह—**अनेकालिति** ॥ **सर्वस्यैवेति** । षष्ठीनिर्दिष्टसर्वस्यैवेत्यर्थः ॥

( न्यासान्तरोपसंहारभाष्यम् )

**तस्मात्—**

## "प्रकृते तदन्तविधिः"

**इति वक्तव्यम् ॥**

( प्रदीपः ) **प्रकृत इति** । प्रस्तुते । प्रस्तावश्च क्वचित्साक्षात् तदन्तविधिभाजो निर्देशात् यथा—**ईदूदेद्द्विवचनं प्रगृह्य**मित्यत्र द्विवचनस्य । क्वचिदधिकारात् यथा—**एर्-**जित्यत्र धातोः । क्वचिदाक्षेपात् यथा—**इको झ**लित्यत्र सना धातोः ॥

( उद्योतः ) **प्रकृतं** नाम पूर्वत्र निर्दिष्टमनुवर्तमानं चेत् **ईदूदेद्द्विवचन**मित्यत्र तदन्तविधिर्न स्यादत आह—**प्रस्तुत इति** । प्रस्तावश्च बुद्धिसंनिधिः ॥ भाष्ये—**प्रस्तुत** इत्यर्थक**प्रकृते** इत्यस्य विशेष्ये इति शेषः ॥ **तदन्तविधिभाज इति** । तदन्तश्चासौ विधिभाक्चेति कर्मधारयः । तदन्तशब्दे च बहुव्रीहिरिति बोध्यम् ॥ शब्दरूपविशेष्यमादाय तु अस्य सर्वत्र न प्रवृत्तिरव्यावर्तकत्वादिति भावः ॥

( न्यासान्तरनिराकरणभाष्यम् )

**न वक्तव्यम् । 'येन' इति करण एषा तृतीया । अन्येन चान्यस्य विधिर्भवति । तद्यथा—देवदत्तस्य समाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते । तथा—संग्रामं हस्त्यश्वरथपदातिभिः । एवमिहाप्यचा धातोर्यतं विधत्ते । अकारेण प्रातिपदिकस्य इञं विधत्ते ॥**

( प्रदीपः ) **करण एषेति** । विधिशब्दः कर्मसाधनः । येन करणेन कार्यं विधीयते स शब्दस्तदन्तस्य संज्ञेत्यर्थः । तेन विशेषणेन विशेष्यस्य तदन्तविधिः, नान्यथा । **इको यणची**त्यादौ च विशेष्यस्यासन्निधानात्तदन्तविधेरभावः ॥ **हस्त्यश्वरथपदातिभिरिति** । बहुप्रकृतित्वाभावादेकवद्भावाभावः ॥

( उद्योतः ) **कर्मसाधन इति** । भावसाधनत्वेऽपि न बाधकं, प्रसिद्धत्वादेव विधेयं कर्म लभ्यते ॥ **स शब्द इति** । इह शास्त्रे प्रायः शब्दस्यैव कार्यकरणत्वादिति भावः ॥ **तेन विशेषणेनेति** । कार्यविधाविति शेषः ॥ विशेषणत्वलाभोऽत्रैवम्—करणस्य व्यापारवत्त्वनियमादन्येषां च व्यापाराभावाद्विशेषणमेवात्र करणशब्देनोच्यते । तस्य चेतरव्यावृत्तिकरणमेव व्यापार इति भावः ॥ तत्र प्रत्यासत्त्या शब्दप्रयोज्योपस्थितिविषयं विशेषणमेव प्रायेण तदन्तग्राहकमिती**को यणची**त्यादौ न दोषः ॥ केचित्तु सति गमकेऽतादृशं शब्दरूपविशेष्यमादायापि तदन्तविधिरिति भावः ॥ तदप्यन्तरङ्गत्वात्समानाधिकरणविशेषणमेवेति बोध्यम् ॥ भाष्ये—**अन्येन चान्यस्येति** । अनेन यस्य कार्यं यस्मिन्परतः, तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । **समाशो** भोजनम् ॥ सेनाङ्गत्वादेकवत्त्वं प्राप्नोतीत्यत आह—**बह्विति** । बह्वर्थवाचिपूर्वोत्तरपदकत्वाभावाद्द्वन्द्वस्येत्यर्थः ॥

---

( विशेषणविशेष्यभावयोर्यथेष्टत्वम् )

( ४०८ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः ॥ * ॥

( भाष्यम् )

**येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः । ये ग्रहणोपाधयस्तेऽपि तदन्तोपाधयः स्युः ॥**

**तत्र को दोषः?**

**"उतश्च प्रत्ययादसंयोगपूर्वाद्" इति असंयोगपूर्वग्रहणमुकारान्तविशेषणं स्यात् ॥**

---

१ पाक्षिकत्वादाह—**नियमेनेतीति** ॥ छाया ॥

२ न्यूनतां निराचष्टे—**कदाचिदिति** ॥ छाया ॥

३ कदाचिदेकाल्त्वस्यापि सर्वादेशत्वसिद्धेरिति पाठः क्वचिद्दृश्यते । स एव शोभनो भाति । (रघुनाथः) ॥ अत्र रघुनाथपण्डितैः 'कदाचिदेकाल्त्वात्तस्यापि सर्वादेशत्वासिद्धेः' इति पाठो मुद्रित आसीत् । एतादृशपाठः प्रामाणिकपुस्तकेष्वदृष्टचरः, असङ्गतश्च । यश्चेदानीं 'शोभनो भाति' इत्युपस्थाप्यते, सोऽप्यशुद्धः । एकाल्त्वस्य सर्वादेशत्वसिद्ध्या 'अनेकाल्शित्' इति सूत्रं व्यर्थमित्युक्तिरसङ्गता । 'एकाल्त्वस्य' इत्यत्र त्वप्रत्ययश्च निरर्थकः स्यात् । तदनुकारिभिर्गुरुप्रसादैरपि अयमेव पाठ आश्रितः ॥ वस्तुतः कदाचिदेकाल् यथा सर्वादेशो भवति तथा एकाल्त्वत् **तस्यापि**—अनेकालादेशस्यापि सर्वादेशत्वं सेत्स्यतीत्यर्थकः पाठ एव सर्वत्र विद्यमान उचितः ॥

४ **तत्र**—विशेषणानां मध्ये ॥ छाया ॥

५ प्रायेणेत्यस्य फलमाह—**क्वचिदिति** ॥ **अतादृशं**—शब्दप्रयोज्योपस्थितिविषयभिन्नम् ॥ छाया ॥

६ तदर्थमेवाह—**अन्यस्येत्येति** ॥ छाया ॥

७ ग्रहणोपाधीनामिति । येनविधिरित्यनेनोकारान्तादङ्गादिति तदन्तविधौ उकारविशेषणानि उकारान्तस्य विशेषणानि स्युः । **ग्रहणोपाधीनां**—उच्चार्यमाणस्योकारस्य विशेषणानां **तदन्तोपाधित्वं**—तदन्तविशेषणत्वप्रसङ्ग इत्यर्थः ॥

**तत्र को दोषः ?**

**असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात्—अक्ष्णुहि, तक्ष्णुहीति । इह न स्यात्—आप्नुहि, शक्नुहीति ॥**

**तथा "उदोष्ठ्यपूर्वस्य" इति ओष्ठ्यपूर्वग्रहणमृकारान्तविशेषणं स्यात् ॥**

**तत्र को दोषः ?**

**ओष्ठ्यपूर्वग्रहणेन इह च प्रसज्येत—संकीर्णम्—इति । इह च न स्यात्—निपूर्ताः पिण्डा इति ॥**

( प्रदीपः ) **ग्रहणोपाधीनामिति** । गृह्यते=उच्चार्यत इति ग्रहणं, तस्य ये उपाधय इष्यन्ते ते तदन्तस्य संज्ञिनः प्राप्नुवन्ति । संज्ञा हि संज्ञिप्रत्यायने विशेषणभावमापन्ना कथमात्मनो विशेषणसंबन्धमनुभवेत् ॥ **सङ्कीर्णमिति** । ओष्ठ्यः पूर्वो यस्मादृकारान्ताद्धातोः, तस्योत्त्वमित्येव सूत्रार्थः स्यात् । अत्र च सूत्रार्थे धात्ववयवत्वमोष्ठ्यस्याश्रयितुं न युज्यते, अवधित्वावयवित्वयोरेकस्य विरोधात् ॥

( उद्द्योतः ) **तस्य**–गृह्यमाणस्य ॥ **उपाधय इति** । विशेषणानीत्यर्थः ॥ **प्राप्नुवन्ति**–उपाधय इत्यनुकर्षः ॥ वार्तिके–**तदन्तोपाधी**ति भावप्रधानो निर्देश इति बोध्यम् ॥ तदन्तसंज्ञायामप्युकारस्यास्तु विशेषणेन संबन्धो विरोधाभावादत आह—**संज्ञा हीति** ॥ **विशेषणभावम्**–गुणभावम् ॥ यद्वा—संज्ञिप्रत्यायने - तद्बोधे सति विशेषणत्वमापन्नेत्यर्थः ॥ **आत्मने**ति पाठे स्वयमित्यर्थः । आत्मनीत्यर्थो वा ॥ **आत्मन** इति पाठे तु सम्यगेव । **गुणानां च परार्थत्वात्पदार्थैकदेशत्वाच्चे**ति न्यायादिति[1] भावः ॥

**अवधित्वेति** । अवधित्वं च तदनारम्भकत्वे सति पञ्चम्यन्तपदवाच्यत्वरूपं पूर्वादियोगे । अवयवत्वं च तदारम्भकत्वमिति ते एकं प्रत्येकस्य न संभवत इत्यर्थः । ओष्ठ्यः पूर्वो यस्मादिति विग्रहे एष दोषः । षष्ठ्यर्थे बहुव्रीहौ तु यद्यपि पूर्वशब्दस्य प्रथमावयववाचित्वाद्धात्ववयवत्वमोष्ठ्यस्य लभ्यत इति नायं दोषस्तथापि सुस्वूर्षतीत्यादौ दोषो बोध्यः ॥ एव**मुतश्चेति** सूत्रे पूर्वशब्दस्यावयववाचित्वे प्रत्ययविशेषणत्वासंभवः, संयोगपूर्वकोकारान्तप्रत्ययाभावेनाव्यावर्तकतयाऽसंयोगपूर्वादिति निषेधवैयर्थ्यापत्तेः । न चाङ्गविशेषणत्वम्, क्षेणु[2] इत्याद्यसिद्धेः ॥ अतो व्यवस्थावाची पूर्वशब्दः श्रूयमाणप्रत्ययविशेषणम् । तदुक्तं भाष्ये—**पूर्वग्रहणमुकारान्तविशेषण**मिति । न चासंयोगादिति वक्तव्ये पूर्वग्रहणाद्विशेषणस्याप्युकारस्य विशेषणमिति न दोष इति वाच्यम् । वाच्यवृत्त्याऽलाभात् । किं च व्यवहिते क्षिणु[3] इत्यादावपि निषेधार्थं पूर्वग्रहणं स्यादिति भावः ॥ भाष्ये—**निपूर्ता इत्यत्र न व्याख्ये**ति नत्वनिषेधः ॥

( ४०९ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**यथेष्टं विशेषणविशेष्ययोर्योगो भवति ।**

**यावता यथेष्टम् । इह तावत्—"उतश्च प्रत्ययादसंयोगपूर्वात्" इति नासंयोगपूर्वग्रहणेन उकारान्तं विशेष्यते ॥**

**किं तर्हि ?**

**उकार एव विशेष्यते—उकारो योऽसंयोगपूर्वः, तदन्तात्प्रत्ययादिति ॥**

**तथा—"उदोष्ठ्यपूर्वस्य" इति नौष्ठ्यपूर्वग्रहणेन ऋकारान्तं विशेष्यते ॥**

**किं तर्हि ?**

**ऋकार एव विशेष्यते—ऋकारो य ओष्ठ्यपूर्वः, तदन्तस्य धातोरिति ॥**

( प्रदीपः ) **सिद्धं त्विति** । वृध्यादिसंज्ञा गुणप्रधानभावानपेक्षा एव प्रदेशेषु संज्ञिनः प्रत्याययन्ति । इयं तु संज्ञा गुणप्रधानभावापेक्षत्वात्कार्यकाला । तत्रो**तश्च प्रत्यया**दित्यादौ विशेषणसंबन्धमनुभूय विशेष्येण संबन्धमुकारादिरनुभवतीति यथोक्तदोषाभावः ॥

( उद्द्योतः ) विशेषणविशेष्यभावे कामचारेऽपि संज्ञासूत्रस्य प्रबलत्वात्पूर्वं तदन्तविधिरेव स्यादत आह—**वृद्ध्यादीति** । एवं च विशेषणत्वज्ञानसापेक्षतयाऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्त्या बहिरङ्गत्वादस्य पूर्वमुकारादीनामेव तद्विशेषणमिति भावः ॥ **गुणप्रधानभावानपेक्षा इति** । एवं च तत्र वाक्यभेद एवेति भावः ॥ **इयं त्विति** । तदपेक्षत्वाद् विधिवाक्यैकवाक्यतापन्नैवेत्यर्थः ॥ यदुक्तम्—**संज्ञा ही**ति, तत्राह—तत्रेति[4] । **गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते–प्रभवती**ति न्यायादिति भावः ॥ भाष्ये—**यथेष्टमिति**[5] । विशिष्टे वैशिष्ट्यम्, विशिष्टस्य वैशिष्ट्यम्, विशेष्ये विशेषणं तत्र च विशेषणान्तरम्, एकत्र द्वयमिति योगेषु यथेष्टमित्यर्थः ॥ एवं च व्याख्यानात्प्रकृते विशिष्टस्य[6] वैशिष्ट्यमिति रीत्यैव बोधो न तु विशेष्ये विशेषणमित्यादिरीत्येति तात्पर्यम् ॥

—o◇o—

१ **न्यायात्**–जातावेकवचनम् ॥ छाया ॥

२ तनादेः 'क्षणु हिंसायां' इत्यस्य रूपम् ॥

३ स्वादेः 'रि क्षि चिरि जिरि दाशृ दृ हिंसायां' इत्यस्य रूपम् । उतश्च प्रत्ययादसंयोगादित्येव सूत्रे असंयोगात्परस्योकारान्तादित्यर्थः स्यात्ततश्च क्षिणु इत्यत्र संयोगात्परमुकारान्तं न, मध्ये इकारेण व्यवधानात् । व्यवहिताव्यवहितसाधारणपूर्वग्रहणे तु संयोगपूर्वमेवोकारान्तमिति भावः ॥

४ **तत्रेतीति** । तस्मिन्सतीत्यर्थः ॥ छाया ॥

५ विशिष्टवैशिष्ट्यबुद्धेश्चातुर्विध्यमाह—**विशिष्टे इति** ॥ **योगेषु**–संबन्धेषु ॥ छाया ॥

६ असंयोगपूर्वत्वादिविशेषणविशिष्टस्योकारादेर्वैशिष्ट्यमित्यर्थः । (र. ना.)

( तदन्तसंज्ञाप्रतिषेधः )

( ४१० आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ समासप्रत्ययविधौ प्रतिषेधः ॥ * ॥**

( भाष्यम् )

**समासविधौ प्रत्ययविधौ च प्रतिषेधो वक्तव्यः ॥ समासविधौ तावत्—द्वितीया श्रितादिभिः समस्यते—कष्टश्रितः, नरकश्रितः । कष्टं परमश्रित इत्यत्र मा भूत् ॥**

**प्रत्ययविधौ—"नडादिभ्यः फक्", नडस्यापत्यं नाडायनः । इह न भवति—सूत्रनडस्यापत्यं सौत्रनाडिः ॥**

( प्रदीपः ) **समासेति** । श्रितादिभिः सुबन्तस्य विशेषणे सति प्राप्तस्तदन्तविधिः प्रतिषिध्यते । प्रतिषेधद्वारेण चैतत् प्रदर्श्यते-श्रितादयः प्राधान्येनाश्रयितव्याः, तद्विशेषणत्वेन च सुपा-इति ॥ **कष्टं परमश्रित इति** । श्रितान्तमेतत् सुबन्तं न भवतीति संबुध्यन्तमुदाहर्तव्यम्—परमश्रितेति । एतत् प्रत्ययलक्षणेन सुबन्तं भवति, श्रितान्तं च श्रूयते ॥ **सौत्रनाडिरिति** । अनुशतिकादित्वादुभयपदवृद्धिः । नडादीनि प्रातिपदिकेन विशेष्यन्त इति तदन्तविध्यभावः ॥

( उद्योतः ) **सुबन्तस्येति** । सुपेत्युपस्थितस्येति शेषः ॥ **तद्विशेषणत्वेनेति** । सुबन्तैः श्रितादिभिरित्यर्थ इति भावः ॥ **श्रितान्तमिति** । विसर्गान्तस्य [१]तदन्तत्वाभावादिति भावः ॥ **संबुध्यन्तमिति** । [२]इदमुपलक्षणम्—कष्टं परमश्रिता-इत्यादेः ॥ **तदन्तविध्यभाव इति** । नडादीनां विशेष्यत्वात्प्रातिपदिकस्य विशेषणत्वेऽपि तदन्तस्य नडादेरसंभवादिति भावः ॥ [३]अत्र वदन्ति—एवं हि कृष्णश्रितमित्यादेरप्यसिद्धिरिति भाष्यस्य निर्दलत्वापत्तिः ॥ यत्तु सुप्सहितैः श्रितादिभिरिति वि[४]वरणकृतसिद्धान्ताशयवर्णनम् । तन्न, [५]पूर्वकालैकेत्यादौ सुप इति [६]प्रथमान्ततयाऽर्थासंभवात् । [७]तस्मात् **समर्थ**परिभाषोपस्थितसमर्थपदार्थे प्रति विशेषणतया प्राप्ततदन्तविधेर्निषेधार्थमिदमिति भाष्याशयः ॥ [८]उपस्थितसमर्थपदं च सूत्रीयतत्तत्पदोत्तरविभक्तिसमानविभक्त्यन्तम् । [९]तस्य च तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः । [१०]न हि सामर्थ्यं सुबन्तैनैवेति नियमः, कुम्भकार इत्यादौ सुपः प्राग्भागेऽपि तदङ्गीकारात् । [११]परिपूर्णं पदमिति न्यायस्तु यस्येतरत्राकाङ्क्षयाऽन्वयस्तद्विषयः, न तु यत्रान्वयस्तद्विषय इति **कुत्सित** इति सूत्रभाष्यात् स्पष्टमेवोपलभ्यते इति दिक् ॥

( प्रत्याक्षेपभाष्यम् )

**किमविशेषेण ?**

( समाधानभाष्यम् )

**नेत्याह ॥**

( ४११ आक्षेपपरिशेषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उगिद्वर्णग्रहणवर्जम् ॥ * ॥**

( भाष्यम् )

**उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा ॥**

**उगिद्ग्रहणम्—"उगितश्च" । भवती, महती, [१२]अतिभवती, अतिमहती ॥**

**वर्णग्रहणम्—"अत इञ्" । दाक्षिः, प्लाक्षिः ॥**

( प्रदीपः ) **अतिमहतीति** । महान्तमतिक्रान्तेति प्रादिसमासः । तत्र यद्यपि गौरादिषु बृहत् महदिति पठ्यते, तथापि **अनुपसर्जना**धिकारात् तत्र ङीष् न भवतीति उगिल्लक्षणो ङीप् प्रार्थ्यते ॥ अन्ये तु गौरादिष्वनयोः प्रमादपाठ**माहुः** । तथा चोक्तम्—***नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यान**मिति । ङीषि हि सति उदात्तस्य सिद्धत्वात् किं नद्या उदात्तविधानेन ॥ **अत इति** । तदन्तविधावसति ञित्करणमुत्तरार्थं स्यात् ॥

( उद्योतः ) **तत्र यद्यपीति** । एवं च ङीबभावेऽपि ङीषा सिद्धिरिति भावः ॥ **किं नद्या इति** । सत्यपि पाठे उपसर्जने ङीषप्राप्तौ ङीपि तस्योदात्तत्वाय [१३]तच्चारितार्थ्या**च्चिन्त्य**मिदम् ॥ एवं च तस्यावश्यकत्वे पाठो निष्फल इत्यन्यदिति कश्चित् ॥ ननु इञो ञित्त्वाद्वृद्धिस्वरार्थत्वात् तदन्तविधिस्तत्र, न हि अशब्दस्य **यस्येति** चेति लोपे तेषां संभवोऽस्तीत्यत आह—**उत्तरार्थमिति** । बाहविरित्यादौ स्वरादिसिद्धये इति भावः ॥

( आक्षेपभाष्यम् )

**अस्ति[१४] चेदानीं कश्चित्केवलोऽकारः प्रातिपदिकं, यदर्थो विधिः स्यात् ॥**

१ **तदन्तेति** । श्रितान्तेत्यर्थः ॥ छाया ॥

२ न्यूनतां परिहरति—**इदमिति** ॥ छाया ॥

३ **अत्र वदेति** । नारायणादयः ॥ **असिद्धिरिति** । तस्यातस्त्वात् ॥ छाया ॥

४ 'विवरणकृतः सिद्धान्ता' इति च. ग. पाठः ॥

५ अत्र कथंचित्संभवेऽप्यन्यत्र तदभावमाह—**पूर्वेति** । तत्र हि सुबित्यस्य सुबन्त इत्यर्थ एव संभवति, साहित्यबोधकशब्दाभावाच्च । अत्र तु सुपेति तृतीययाऽपि तल्लाभ इति भावः ॥ छाया ॥

६ 'प्रथमान्ते तथाऽर्थासं' इति घ. प. पाठः ॥

७ तदनुक्तं सिद्धान्तमेतद्भाष्यलभ्यमाह—**तस्मादिति** । तदन्तविधौ हि श्रिताद्यन्तसमर्थप्रकृतिकैरित्यर्थे भाष्योक्तदोष इति भावः ॥ छाया ॥

८ नन्वेवमसामानाधिकरण्यात्कथं तदन्तविधिरत आह—**उपस्थितेति** ॥ छाया ॥

९ तदुक्तमेवाह—**तस्य चेति** ॥ एवं च संबुद्धिस्त्रीलिङ्गप्रथमान्तभिन्नेऽपि प्रवृत्तिः ॥ छाया ॥

१० ननु सुपः प्रागसामर्थ्यात्कथमिदमत आह—**नहीति** ॥ छाया ॥

११ नन्वेवमपि **स्वार्थे** इति न्यायविरोधोऽत आह—**परीति** ॥ अत एव **नदीभिश्च** **खट्वा क्षेपे** इत्यादौ न दोषः, समासतद्धितप्रकरणे ऐकरूप्याय सर्वत्रैवमेवावश्यकम् ॥ छाया ॥

१२ बहुषु पुस्तकेषु 'अतिभवती' इत्येतन्न दृश्यते ॥

१३ **तत्**—वार्तिकम् ॥ एवमग्रेऽपि ॥ छाया ॥

१४ ननु केवलाकार प्रतिपदिकासम्भवादेव 'अत इञ्' इत्यादौ तदन्तविधिः स्यादत आह—**अस्तिचेदानीमिति** ॥

( समाधानभाष्यम् )

अस्तीत्याह । अततेर्डः—अः, तस्यापत्यम् "अत इञ्"—इः ॥

( तन्मध्यपतितन्यायः )

( आक्षेपे भाष्यवार्तिकम् )

## *॥ [1]अकच्श्नम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानं कर्तव्यम् ॥*

( भाष्यम् )

[2]अकेज्वतः—सर्वके, स्वके । अव्ययविधौ—उच्चकैः, नीचकैः ॥

श्नम्वतः—भिनत्ति, छिनत्ति ॥

किं पुनः कारणं न सिध्यति ?

इह—तस्य वा ग्रहणं भवति, तदन्तस्य वा । न चेदं तत्, नापि तदन्तम् ॥

( प्रदीपः ) [3]सर्वक इति । अकचि कृते शीभावो न स्यात् ॥ उच्चकैरिति । तथैवाकचि कृते लुम्न स्यात् । उच्चकैरधीयानेति अव्ययानां प्रतिषेध इति पराङ्गवद्भावनिषेधो न स्यात् ॥ उच्चकैर्मुखमिति नाव्ययदिक्शब्देति मुखस्वरनिषेधो न स्यात् ॥ भिनत्तीति । धातोरन्त उदात्तो भवतीति उदात्तत्वं न स्यात् । प्रत्ययस्वरेण तु तत्सिध्यतीत्यभिनोत्रेऽति दश्चेति धातोर्विधीयमानं रुत्वं न स्यादिति वक्तव्यम् ॥

अन्ये त्वाहुः—भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् सतिशिष्टः स्वरो धातुस्वर एष्टव्यः ॥

( उद्द्योतः ) अकचीति । 'सर्व जस्' इति स्थितेऽन्तरङ्गानपीति न्यायेन शीभावादि बाधित्वाऽकचि [4]यस्मात्प्रत्ययविधिरित्युक्तेरप्रत्यय इति निषेधाभावे प्रातिपदिकत्वेन सुपो लुकि पुनर्जसि शी न स्यादित्यर्थः ॥ लुगिति । यद्यपि हल्ङ्यादिसूत्रेणापि सोर्लोपः सिध्यति, तथापि सर्वविभक्त्युत्पत्तिपक्षे-इदम् ॥ पराङ्गेति । तथा चामन्त्रिताद्युदात्तत्वं स्यात्, चितः सप्रकृतेरित्यन्तोदात्तश्चेष्यत इति भावः ॥

अन्ये त्वाहुरिति । श्नमो मित्त्वेन परश्चेत्यस्य तत्राप्रवृत्तौ तत्संनियोगशिष्टाद्युदात्तत्वाप्रवृत्त्या [5]शेषनिघातेन तस्यानुदात्तत्वप्राप्तिरिति भावः ॥ ननु भिनत्तीत्यादौ यदागमा इति न्यायेन न दोष इति चेन्न । अवयवानामवयविग्रहणेन ग्रहणं हि तद्बीजम् । [6]न चात्र तदस्ति, अन्तावयव इत्यंशस्याप्रवृत्त्याऽवयवत्वे मानाभावात् । [7]यस्य विहितस्तदन्तावयव इति तदर्थात् । [8]एवं च 'नन्दति' इत्यपि तदुदाहरणं बोध्यम् ॥ [9]भाष्ये च श्नम्वत इत्युपलक्षणं बोध्यमिति कश्चित् ॥

( ४१२ समाधानबाधकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सिद्धं तु तदन्तान्तवचनात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ?

'तदन्तान्तवचनात्' । तदन्तान्तस्येति वक्तव्यम् ॥

किमिदं तदन्तान्तस्येति ?

तस्यान्तस्तदन्तः, तदन्तोऽन्तो यस्य तदिदं-तदन्तान्तं, तदन्तान्तस्येति ॥

( प्रदीपः ) सिद्धं त्विति । सर्वशब्दस्य योऽन्तोऽकारः सोऽन्तः सर्वकशब्दस्य ॥ एवमन्यत्रापि योज्यम् ॥ तत्र सर्वनामानीत्यन्वर्थसंज्ञाऽऽक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते, अव्ययसंज्ञाऽऽक्षिप्तः स्वरादिभिः, धातुसंज्ञाभाजो वाप्रकारा भूवादिभिरिति भावः ॥

( उद्द्योतः ) ननु तदन्तान्तस्येति पाठेऽपि विशेष्यासंनिधानात् कथं सर्वादीनीत्यादावस्य प्रवृत्तिरत आह—[10]तत्रेति । अव्ययेत्यस्यान्वर्थेत्यादिः ॥ [11]वस्तुतः शब्दरूपं विशेष्यमादाय वाचनिक एवोभयत्रापि तदन्तविधिरिति वक्ष्यते ॥ इदं तु चिन्त्यं-[12]शाब्दसंज्ञिनोऽसत्त्वे हि स्यादप्याक्षेपः, [13]सत्त्वे त्वाक्षेपे आक्षिप्तस्य वा विशेष्यत्वे मानाभावात् । किंचान्वर्थत्वं-योगरूढत्वम्, योगरूढस्थले हि योगान्वितरूढ्यर्थस्यैव प्रतीतिर्दृष्टा, न तु तयोः परस्परमुद्देश्यविधेयभाव

१ क. ग. च. पुस्तकेषु 'अकच्श्नम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् * अकच्श्नम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानं कर्तव्यम् । अकज्वतः' इति पाठो दृश्यते । तादृशपाठस्वीकारे कात्यायनवार्तिकमेतदिति सिद्धम् । प्रामाणिकेषु कतिपयपुस्तकेषु तादृशपाठाभावाद्भाष्यवार्तिकमिति निश्चीयते ॥

२ 'अकज्वतः सर्वनामविधौ—सर्वके, स्वके' इति मुद्रितपाठः ॥

३ सर्वक जस् इत्यस्य प्रातिपदिकत्वसंपादनद्वारा लुक्प्रयोजकस्याकचः प्राबल्यादिति भावः । ( र. ना. )

४ यस्मात्प्रत्ययविधिस्तदादितदन्तभिन्नमित्यप्रत्यय इत्यस्यार्थ इति भावः । प्रातिपदिकत्वेनेत्यस्य सर्वकजसित्यस्येति शेषः । ( र. ना. )

५ पूर्वं भिदिधातोरन्तोदात्तत्वप्रवृत्त्येति शेषः । ( र. ना. )

६ न चात्रेति । भिनत्तीत्यत्रावयवावयविभाव एव नास्ति । यद्यपि मिदचोऽन्त्यात्सूत्रे पूर्वतोऽनुवर्तमानमप्यन्तपदमस्ति तेन तस्मात्परस्तस्यैवान्तावयव इति तदर्थः, तथापि अत्र 'अन्तावयवः' इत्यंशो न प्रवर्तते, यस्य विहितस्तदन्तावयवत्वस्यायोग्यत्वात् ॥

७ ननु कुतस्तदंशाप्रवृत्तिरत आह—यस्येति ॥ तत्-उपसंख्यानम् ॥ छाया ॥

८ एवञ्च—मिद्विषये श्नमोऽवयवत्वाभावाद्यदागमन्यायाप्रवृत्तौ च । नन्दतीत्यत्रापि नुमोऽवयवत्वाभावेन यदागमन्यायाप्रवृत्तौ धातोरन्त उदात्तो न स्यात् । वार्तिके श्नम्वत इत्येतत्तु मध्यपतितानवयवकवत उपलक्षणमिति भावः ॥

९ अत एवाह—भाष्ये चेति । छाया ॥

१० तत्रेतीति । तथापाठे सतीत्यर्थः ॥ छाया ॥

११ कैयटादिकं दूषयितुमाह—वस्तुत इति ॥ छाया ॥

१२ कश्चित्तु शब्दसंज्ञिन इति पाठः । ( र. ना. )

१३ सर्वादिशब्दरूढसंज्ञिनः शाब्दस्येत्यादिः । ( र. ना. )

इति कस्य विशेष्यतया तदन्तविधिः स्यादिति बोध्यम् ॥ **वाप्रकारा इति ।** 'वा' सदृशा इत्यर्थः । **भूवादय** इति सूत्रे द्वन्द्वैकशेषगर्भो बहुव्रीहिरिति भावः ॥ एवं हि प्रभू पराभू इत्यादीनामपि धातुसंज्ञा स्यादिति अडाद्यव्यवस्थापत्तिरिति चिन्त्यमिदम् ॥ तस्मादयं समाधिरकज्विषय एवेति बोध्यम् ॥ **एरजित्यादौ** तु व्यपदेशिवद्भावेनैतन्न्यासे सिद्धिर्बोध्या ॥

( तटस्थाक्षेपभाष्यम् )

**स तर्हि तथा निर्देशः कर्तव्यः ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः ॥**

**तद्यथा—उष्ट्रमुखमिव मुखमस्य—उष्ट्रमुखः, खरमुखः । एवमिहापि तदन्तः अन्तो यस्य—तदन्तः, तदन्तस्येति ॥**

( प्रदीपः ) **उत्तरपदलोप इति ।** वाचनिकोऽत्र लोपः, न तु सामर्थ्याद्गम्यमानार्थस्य निवृत्तिरित्याहुः ॥ अन्ये तु वर्णयन्ति—यथाऽवयवदर्शनाद् गौरित्यवयविविषया बुद्धिरुदेति तथेहापि सर्वशब्दस्य योऽवयवोऽन्त्यस्तत्रैव सर्वशब्दविषयबुद्ध्युत्पादात् तदवयवान्तः सर्वशब्दान्त इति व्यपदिश्यते ॥ अथवा—अवयवे समुदायरूपारोपात् तदन्तता भविष्यति । गौणेनापि ह्यर्थेन शास्त्रे व्यवहारो दृश्यते—छत्रपार्श्वायःशूलदण्डाजिनशीतोष्णार्द्धह्रस्वादिषु ॥

( उद्द्योतः ) **न तु सामर्थ्यादिति ।** उष्ट्रमुखवत् तदभावादित्यर्थः ॥ **यथाऽवयवेति ।** अवयवी प्रत्यवयवमवयवान्तरसंनिधौ समवेत इति भावः ॥ नन्वेवमपि भूयोऽवयवसंनिकर्षस्यैवावयविप्रत्यक्षे हेतुत्वादेकावयवदर्शने तद्बुद्ध्यभाव इत्यरुचेराह—**अथवेति** ॥ ननु मुख्यविशेषणे चरितार्थं सूत्रं कथमारोपिते स्यादत आह—**गौणेनापीति ।** स्वरितत्वगुणयोगाद् यथाऽन्यत्रारोपितार्थकस्य ग्रहणं तथेहापीत्यर्थः ॥ तदेवाह—**छत्रेत्यादि ।** छत्रं—गुरुच्छिद्रावरणं गौण्योच्यते । तत्रैव हि छात्र इष्यते । एवं **पार्श्व**शब्दोऽनृजूपाये, **अयःशूल**शब्दस्तीक्ष्णोपाये, **दण्डाजिनो** दम्भे, **शीतो**ऽलसे, **उष्णः** शैघ्र्ये गौणः । तत्रैव पार्श्वकायःशूलिकदाण्डाजिनिकशीतकोष्णकादिप्रयोगेष्टेः । **तस्मादित** इत्यत्र चार्धह्रस्वशब्दोऽर्धमात्रालाक्षणिक इत्याद्यूह्यम् ॥ आदिनाऽऽधारोऽधिकरणमित्यादिसंग्रहः ॥

( यथान्यासेऽपि समाधानभाष्यवार्तिकम् ॥ )

## * ॥ तदेकदेशविज्ञानाद्वा सिद्धम् ॥ *

( भाष्यम् )

**तदेकदेशविज्ञानाद्वा पुनः सिद्धमेतत् । तदेकदेशभूतस्तद्ग्रहणेन गृह्यते ॥ तद्यथा—गङ्गा, यमुना, देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते । तथा—देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते ॥**

( प्रदीपः ) **तदेकदेशविज्ञानादिति ।** मध्यपातिनोऽकजादयस्तदेकदेशा इति तत्त्वबुद्धिं न विघ्नन्ति ॥

( उद्द्योतः ) **मध्यपातिन इति ।** यस्याकजादिस्तदेकदेशत्वेनाकजादेर्विज्ञानादिति वार्तिकार्थः ॥

( समाधानबाधकभाष्यम् )

**विषम उपन्यासः । इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति—य एते संख्याशब्दाः परिमाणशब्दाश्च । पञ्च, सप्तेति एकेनाप्यपाये न भवन्ति । द्रोणः, खारी, आढकमिति नैवाधिके भवन्ति, न न्यूने ॥**

**केचिद् यावदेव तद्भवति तावदेवाहुः—य एते जातिशब्दा गुणशब्दाश्च । तैलं घृतमिति खार्यामपि भवन्ति, द्रोणेऽपि ॥ शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति, वटकणिकामात्रेऽपि द्रव्ये ॥**

**इमाश्चापि संज्ञा अक्तपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः ?**

( प्रदीपः ) **अक्तपरिमाणानामिति ।** परिच्छिन्नपरिमाणानामित्यर्थः ॥ **यावदिति ।** अल्पमधिकं वेत्यर्थः ॥ **इमाश्चापीति ।** सर्वाद्युपादानेन संज्ञाः क्रियमाणाः कथं सर्वकादीनां भवन्ति । नित्या हि शब्दा विकारोपजनरहिता इति सर्वशब्दः सर्वकशब्द इति न वक्तुं शक्यत इत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**अक्तपरिमाणानामिति ।** अक्तपरिमाणं—आनुपूर्वीविशेषोऽपि ॥ **परिमाणे**त्युपलक्षणं परिच्छिन्नार्थानाम् । तदाह—**सङ्ख्येति** ॥ भाष्ये—**अर्थानामिति ।** संज्ञिभूतानां शब्दानामित्यर्थः ॥ नन्वधिकगङ्गादिजननेऽपि शुनः श्वत्ववद् अकस्याधिकस्योपजनेऽपि सर्वकस्य सर्वशब्दत्वमक्षतमेवेत्यत आह—**नित्या इति ।** वस्तुतः परिच्छिन्नपरिमाणकग्रहणे **एकदेशविकृत**न्यायस्याप्यप्रवृत्तिरिति भाष्याशयः ॥

( समाधानसाधकभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—**

**'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति ॥**

**यदयं "नेदमदसोरकोः" इति सककारयोरिदमदसोः प्रतिषेधं शास्ति ॥**

**कथं कृत्वा ज्ञापकम् ?**

---

१ इदमपि दूषयति—एवं हीति ॥ छाया ॥

२ 'अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् ।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥'
इति सिद्धान्तमनाश्रित्येदम् ॥ दाधिमथाः ॥

३ वैधर्म्ये दृष्टान्तः । ( र. ना. )

४ गौणाधारस्यापि गङ्गादेस्तत्र ग्रहणमिति भावः । ( र. ना. )

५ 'अत्र परि' इति घ. प. पाठः ॥

इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यः—'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति । ततः सककारयोः प्रतिषेधं शास्ति ॥

( प्रदीपः ) एवं तर्हीति । यद्यपि नित्याः शब्दास्तथापि प्रक्रियायामकजादयो विधीयमाना ज्ञापकादव्यतिरेककृत इत्यर्थः ॥

( उद्द्योतः ) ननु नित्यशब्दवादेऽकज्वतः शब्दान्तरत्वादकजादेः सर्वाद्येकदेशत्वमसिद्धमित्यत आह—यद्यपीति ॥ अव्यतिरेककृत इति । अनवयवत्वेऽपि ज्ञापकात् भेदबुद्धिं न कुर्वन्ति इत्यर्थः ॥ एकदेशसादृश्यं च मध्यपातित्वेन बोध्यम् ॥

---

( तदन्तसंज्ञोदाहरणम् )

( आक्षेपभाष्यम् )

कानि पुनरस्य योगस्य प्रयोजनानि ?

( प्रयोजने भाष्यवार्तिकम् )

***॥ प्रयोजनं सर्वनामाव्ययसंज्ञायाम्[1] ॥***

( भाष्यम् )

सर्वे, परमसर्वे, विश्वे, परमविश्वे । उच्चैः, परमोच्चैः, नीचैः, परमनीचैरिति ॥

( प्रदीपः ) प्रयोजनमिति । अन्वर्थसंज्ञाऽऽक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते । अपूर्वो वा तदन्तविधिरुपसंख्यायते । एवमुत्तरत्र विज्ञेयम् ॥

( उद्द्योतः ) ननु सर्वनामत्वे संज्ञोपसर्जनप्रतिषेधवार्तिकारम्भेण वार्तिककृतोऽन्वर्थत्वं नेष्टम् । किंच संज्ञिनामुपात्तत्वेनाक्षेपे मानाभावः, इत्यत आह—अपूर्वो वेति । एतद्वार्तिकमूलाद् व्याख्यानाद्व्यावर्तकमपि शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ [2]उपपदविधौ भयाढ्यादिग्रहणं प्रयोजनम् ॥***

( भाष्यम् )

भयंकरः, अभयंकरः । आढ्यंकरणं, स्वाढ्यंकरणम् ॥

( प्रदीपः ) उपपदविधाविति । भयाढ्यादिभिः कर्म विशेष्यते । क्षेमप्रियमद्रेऽण् चेत्यत्र तु कर्मणा क्षेमादय इति तदन्तविध्यभावः ॥

( उद्द्योतः ) भयं चाढ्यादि चेति द्वन्द्वमभिप्रेत्याह—क्षेमेति ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ [3]ङीञ्विधावुगिद्ग्रहणं प्रयोजनम् ॥***

( भाष्यम् )

भवती, अतिभवती । महती, अतिमहती ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ [4]प्रतिषेधे स्वस्रादिग्रहणं प्रयोजनम् ॥***

( भाष्यम् )

स्वसा, परमस्वसा । दुहिता, परमदुहिता ॥

( प्रदीपः ) प्रतिषेध इति । विधीयत इति-विधिः सामान्येन गृह्यत इति प्रतिषेधेऽपि तदन्तविधिर्भवति, स्वस्रादिभिः प्रातिपदिकस्य विशेषणात् ॥

( उद्द्योतः ) विधीयते इति । सूत्रे विधिशब्देन प्रतिषेधविरोधी न विवक्षित इति भावः ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ [5]अपरिमाणबिस्तादिग्रहणं च प्रतिषेधे प्रयोजनम् ॥***

( भाष्यम् )

"अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि" द्विबिस्ता, द्विपरमबिस्ता । त्रिबिस्ता, त्रिपरमबिस्ता ॥

( प्रदीपः ) द्विपरमबिस्तेति । द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यत इति तदन्तविधिः ॥

( ४१३ प्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ दिति ॥ * ॥**

( भाष्यम् )

दितिग्रहणं च प्रयोजनम् ॥ दितेरपत्यं दैत्यः, अदितेरपत्यमादित्यः[6]-इति । अदितिग्रहणं न कर्तव्यं भवति ॥

( प्रदीपः ) दितिग्रहणं चेति । परमदित्यादिभ्यस्त्वनभिधानात् ण्यो न भवति ॥

( ४१४ प्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ रोण्या अण् ॥ * ॥**

( भाष्यम् )

रोण्या अण्ग्रहणं च प्रयोजनम् । आजकरोणः[7] । सैंहिकरोणः ॥

---

१ इत उत्तरं 'सर्वनामाव्ययसंज्ञायाम्प्रयोजनम् ॥ सर्वे' इति मुद्रितपुस्तकेष्वधिकः पाठः ॥

२ '* उपपदविधौ भयाढ्यादिग्रहणम् * उपपदविधौ भयाढ्यादिग्रहणं प्रयोजनम् । भयंकरः' इति मुद्रितपाठः ॥

३ '* ङीब्विधावुगिद् ग्रहणम् * ङीब्विधावुगिद्ग्रहणं प्रयोजनम् । भवती' इति मुद्रितपाठः

४ '* प्रतिषेधे स्वस्रादिग्रहणम् * प्रतिषेधे स्वस्रादिग्रहणम्प्रयोजनम् । स्वसा' इति मुद्रितपाठः ॥

५ '* अपरिमाणबिस्तादिग्रहणञ्च * अपरिमाणबिस्तादिग्रहणञ्च ङीप्प्रतिषेधे प्रयोजनम् । अपरि—' इति मुद्रितपाठः ॥

६ 'दित्यः । दित्यदित्यादित्य-इत्यदिति' इति क. ग. पाठः ॥

७ ङ्यापोः संज्ञाछन्दसोरिति ह्रस्वः । एवमुत्तरत्रापि । (रु. ना.)

( ४१५ आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तस्य च ॥ * ॥

( भाष्यम् )

तस्य चेति वक्तव्यम् । रौणः ॥

( प्रदीपः ) तस्य चेति । स्वं रूपमित्यस्यानुवृत्तिं वार्तिककारो नेच्छति । तथा चाद्यन्तवदित्यत्र येन विधिस्तदन्तस्य इति प्रयोजनमवोचत् ॥

( उद्योतः ) ननु स्वंरूपमित्यनुवृत्त्या स्वस्यापि संज्ञासिद्धौ किं तस्य चेत्यनेन? अत आह—स्वमिति । तेन[1] सूत्रप्रत्याख्यानादिति तात्पर्यम् ॥

( प्रत्याक्षेपभाष्यम् )

किं पुनः कारणं न सिध्यति । न तदन्ताच्च[2] तदन्तविधिना सिद्धम्, केवलाच्च व्यपदेशिवद्भावेन ?

( समाधानभाष्यम् )

"व्यपदेशिवद्भावोऽप्रातिपदिकेन" ॥

( प्रदीपः ) व्यपदेशिवद्भावोऽप्रातिपदिकेनेति । ननु रोणीशब्दो न प्रातिपदिकं, प्रत्ययान्तत्वात् ॥ नैष दोषः । 'अप्रातिपदिकेन' इत्यत्र वाक्ये प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति वचनात् स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो न भवति । न च[3] लिङ्गविशिष्टपरिभाषा स्वरूपविधिविषयैवेति प्रातिपदिकसूत्रे वक्ष्यते ॥

( उद्योतः ) प्रत्ययान्तत्वादिति । स्त्रीप्रत्ययान्तत्वादित्यर्थः ॥ स्वरूपविधिविषयैवेति । प्रातिपदिकविशेषोपादानविहितकार्यविषयैवेत्यर्थः ॥

( आक्षेपभाष्यम् )

किं पुनः कारणं "व्यपदेशिवद्भावोऽप्रातिपदिकेन" ॥

( उद्योतः ) किं पुनः कारणमिति । भाष्ये कारणशब्दः प्रयोजनवाची ॥

( समाधानभाष्यम् )

इह सूत्रान्ताट्ठग्भवति दशान्ताड्डो भवतीति केवलादुत्पत्तिर्मा भूदिति ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति प्रयोजनम्[4] ॥ सिद्धमत्र तदन्ताच्च तदन्तविधिना, केवलाच्च व्यपदेशिवद्भावेन । सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तज्ज्ञापयत्याचार्यः—सूत्रान्तादेव, दशान्तादेवेति ॥

( उद्योतः ) तज्ज्ञापयतीति । बोधयतीत्यर्थः । अन्तग्रहणं नियमार्थमिति तात्पर्यम् ॥

( समाधानसाधकभाष्यम् )

नात्र तदन्तादुत्पत्तिः प्राप्नोति । इदानीमेव ह्युक्तम्—*समासप्रत्ययविधौ प्रतिषेधः* इति ॥

( उद्योतः ) नात्र तदन्तादिति । ननु समासप्रत्ययविधाविल्यस्य विशेषणविशेष्यभावव्यत्यासमात्रतात्पर्यग्राहकतया दित्यादाविवात्रापि तदन्तविधिसंभवेनान्तग्रहणसामर्थ्यादेव केवलेऽप्रवृत्तौ 'अप्रातिपदिकेन' इति व्यर्थम् ॥ एतेन[5] ग्रहणवतेति निषेधात्तदन्तविधिर्दुर्लभ इत्यपास्तम् ॥ किंच परमदित्यादिभ्य इवानभिधानेन केवलेऽप्रवृत्तिरिति व्यर्थैव सेति चेन्न । विशेषणविशेष्यभावव्यत्यासतात्पर्यग्राहकतया समासेत्यादिप्रतिषेधवचनवदस्याप्यावश्यकत्वात्सूत्रभाष्यवार्तिकारूढतात्पर्यग्राहकाभावेऽपि तदन्तविधिकल्पनेऽतिप्रसङ्गापत्तेः । अत एवोगिद्वर्णग्रहणवर्जमित्यादेश्चारितार्थ्यम् । अनभिधानेन प्रत्याख्यानं तु न चमत्कारकारि ॥

( गौरवाक्षेपभाष्यम् )

सा तर्ह्येषा परिभाषा कर्तव्या ॥

( उद्योतः ) सा तर्ह्येषेति । व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येषा ॥

( गौरवनिराकरणभाष्यम् )

न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषा—'व्यपदेशिवद्भावोऽप्रातिपदिकेन'–इति । यदयम्—"पूर्वादिनिः" "सपूर्वाच्च" इत्याह ॥

( उद्योतः ) यदयमिति । पूर्वादिल्यंशो ज्ञापक इत्यर्थः ॥

( ज्ञापकनिराकरणभाष्यम् )

नैतदस्ति ज्ञापकम् ॥ अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥

किम् ?

सपूर्वात् पूर्वादिनिं वक्ष्यामीति ॥

( प्रदीपः ) सपूर्वादिति । पूर्वग्रहणे त्यक्ते सपूर्वादिनिरित्युच्यमाने सर्वस्मात् सपूर्वात्प्राप्नोतीति कथं ज्ञापकमित्यर्थः ॥

( उद्योतः ) सर्वस्मादिति । पूर्वशब्दव्यतिरिक्तादपीत्यर्थः ॥

( ज्ञापकान्तरभाष्यम् )

यत्तर्हि योगविभागं करोति ॥ इतरथा "पूर्वात्सपूर्वादिनिः" इत्येव ब्रूयात् ॥

( उद्योतः ) भाष्ये–यत्तर्हि योगविभागमिति । न चेष्टादिभ्यश्चेत्यत्रानुवृत्त्यर्थं तथा पाठः, अत एत्रानिष्टीति प्रयोगसिद्धिरिति भाष्यसंगतिः ॥ छाया ॥

---

१ तेन–वार्तिककृता ॥ छाया ॥

२ काका प्रश्नः । ( र. ना. )

३ नहीत्यर्थः । ( र. ना. )

४ प्रयोजनेति । अत एव 'नैतदस्ति प्रयोजनम्' इत्यग्रिम-

५ तदन्तविधिनिषेधकानां विशेषणविशेष्यभावव्यत्यासमात्रतात्पर्यग्राहकत्वस्वीकारेणेत्यर्थः । ( र. ना. )

६ 'यति–व्यपदे' इति क. ग. च. पाठः ॥

वाच्यम् । एतद्भाष्यप्रामाण्येन तत्प्रयोगाभावानुमानात् । प्रकारान्तरेण सिद्धौ तु नास्माकं क्षतिः । एकयोगेऽपि तावति स्वरितत्वप्रतिज्ञासामर्थ्येन तावत उत्तरत्रानुवृत्तिसिद्धेश्चेति दिक् ॥ एवं च रोणीत्यादौ केवलस्याप्राप्तेस्तस्य चेति वक्तव्यमिति सिद्धम् ॥

( आक्षेपभाष्यम् )

**किं पुनरयमस्यैव शेषः—*तस्य च* इति ?**

( समाधानभाष्यम् )

**नेत्याह । यच्चानुक्रान्तं, यच्चानुक्रंस्यते, तस्य सर्वस्यैव शेषः—*तस्य च* इति ॥**

( प्रदीपः ) **यच्चानुक्रान्तमिति** । अप्रातिपदिकेनेति तु निषेधो यत्रान्तग्रहणं सूत्र एवोपात्तं तत्र । यथा—**दशान्ताड्ड** इति 'दश अधिका अस्मिन् शते' इत्यत्र न भवति ॥

( उद्योतः ) ननु तदन्तविधिविषये **तस्य चे**त्यनेन केवलादपि चेत्, व्यपदेशिवद्भावोऽप्रातिपदिकेनेति व्यर्थमत आह—**अप्रातिपदिकेनेति** । ज्ञापकस्य सजातीयापेक्षत्वादिति भावः ॥ अत एव **पूर्वादिनि**रित्येव तदन्तविधिना सिद्धे **सपूर्वाच्चे**त्यस्य **ग्रहणवते**ति परिभाषाज्ञापकत्वं कैयटोक्तं सङ्गच्छते ॥ **यत्रान्ते**त्यन्तग्रहणमुपलक्षणम् । अत एव **एकगोपूर्वा**दित्यस्य केवलैकशब्दे न प्रवृत्तिः । **ग्रहणवते**त्यपि प्रत्ययविधौ निषेधस्यैवानुवादकं, लाघवात् । स्पष्टं चेदं **असमासे निष्कादिभ्य** इति सूत्रे भाष्यकैयटयोः ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ रथसीताहलेभ्यो यद्विधौ प्रयोजनम् ॥***

( भाष्यम् )

**रथ्यः, परमरथ्यः । सीत्यं, परमसीत्यम् । हल्या, परमहल्या ॥**

( प्रदीपः ) **यद्विधाविति** । ठग्विधौ तु तदन्तविधेरभावात् 'पारमहलिकः' इति ठक् न भवति ॥

( उद्योतः ) रथ्ये - 'तद्वहति रथ-' इति यत् । सीत्ये—**नौवयोधर्म**ेति । हल्ये—**मतजनहलात्करणजल्पकर्षेष्वि**ति ॥ भाष्ये—**परमरथ्य इति** । **रथाद्यथाङ्गवोढूरि**त्येवं शैषिकप्रकरणे पाठेन सिद्धे **तद्वहती**त्यत्र रथग्रहणं रथांशे तदन्तविधौ ज्ञापकम् । शैषिके यति हि द्विरथ इत्यादौ **द्विगोर्लुगि**ति लुक् । तत्र सूत्रेऽचीति न संबध्यते । अनभिधानाच्च नातिप्रसङ्गः । वहत्यर्थे तु द्विरथ्य इत्येव, तस्याप्राग्दीव्यतीयत्वात् । इतरयोस्तु वाचनिक एव ॥ यत्तु हलसीरात् ठगित्यपि **'तस्येदं' 'तद्वहति-'** इत्यधिकारे च द्विः पठ्यते, तत्तु इदंशब्देन वोढृरूपार्थग्रहणज्ञापकम् । तदाह—ठक् न भवतीति ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ सुसर्वार्धदिक्छब्देभ्यो जनपदस्य प्रयोजनम् ॥***

( भाष्यम् )

**सुपाञ्चालकः, सुमागधकः । सु ॥**
**सर्वपाञ्चालकः, सर्वमागधकः । सर्व ॥**
**अर्धपाञ्चालकः, अर्धमागधकः । अर्ध ॥**
**दिक्छब्द—पूर्वपाञ्चालकः, पूर्वमागधकः ॥**

( उद्योतः ) भाष्ये-सुपाञ्चालक इत्यादि । **जनपदे**त्यधिकारे **अवृद्धादपि बहुवि**ति वुञ् । तद्विधौ चायं तदन्तविधिः । **सुसर्वार्धाज्जनपदस्य-दिशोऽमद्राणा**मिति उत्तरपदवृद्धिः ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ ऋतोर्वृद्धिमद्विधाववयवानां प्रयोजनम् ॥***

( भाष्यम् )

**पूर्वशारदम् । अपरशारदम् । पूर्वनैदाघम् । अपरनैदाघम् ॥**

( प्रदीपः ) **ऋतोरिति** । ऋतुवाचिनः शब्दाद्यो वृद्धिमान् प्रत्ययस्तद्विधानेऽवयवानां तदन्तविधिः । शरदः पूर्वो भागः—पूर्वशरत्, तत्र भवमिति ऋतुलक्षणोऽण् । तत्र **वृद्धिमदि**ति वचनात् **प्रावृष एण्य** इत्यत्र तदन्तविधिर्न भवति । **तेन** ऋत्वणेव भवति—**पूर्वप्रावृषमिति** । प्रावृट्शब्दो वर्षापर्यायः ॥ अवयवानामिति किम् ? पूर्वस्यां शरदि-पौर्वशरदिकमित्यण् न भवति, **कालाट्ठञि**त्येव भवति । तत्र हि यथाकथञ्चित्कालवाचिनो गृह्यन्ते ॥

१ **प्रकारान्तरेण**-तद्धितान्तेन नञः समासेन ॥ प्रयोगसत्त्वेऽप्याह—**एकेति** ॥ इदमन्यत्रावश्यकम्, चकाराकरणेनात्र न्यासे लाघवं बोध्यमित्याह—**दिगिति** ॥ छाया ॥

२ उपसंहरति—**एवं चेति** । उक्तपरिभाषासत्त्वे चेत्यर्थः ॥ छाया ॥

३ न्यूनतां परिहरति—**यत्रान्तेत्येति** ॥ छाया ॥

४ नन्वेवमुपसंख्यानमध्ये तद्गणनमप्युचितमत आह—**ग्रहणेति** ॥ एतेन—अप्राति—इति कैयटोक्तं चिन्त्यम्, ङ्याबन्तास्वय्युच्याचारक्विपि कर्तरि क्विप्यनेकोदाहरणसत्त्वेन तथाऽवधारणासंभवात्—इति रत्नोक्तमपास्तम् ॥ छाया ॥

५ '* रथसीताहलेभ्यो यद्विधौ * रथसीताहलेभ्यो यद्विधौ प्रयोजनम् । रथ्यः' इति मुद्रितपाठः ॥

६ सीताहलयोरित्यर्थः । ( र. ना. )

७ न तु तदन्तविधिज्ञापकमिति भावः । ( र. ना. )

८ '* सुसर्वार्धदिक्शब्देभ्यो जनपदस्य * सुसर्वार्धदिक्शब्देभ्यो जनपदस्य प्रयोजनम् । सुपा' इति मुद्रितपाठः ॥

९ 'आर्धमागधकः' इति अ. पाठः ॥

१० न तु उत्तरपदवृद्धिविधायकसूत्रयोरिति भावः । ( र. ना. )

११ '* ऋतोर्वृद्धिमद्विधाववयवानाम् * ऋतोर्वृद्धिमद्विधाववयवानाम्प्रयोजनम् । पूर्व' इति मुद्रितपाठः ॥

( उद्योतः ) **वृद्धिमानिति** । वृद्धिनिमित्तमित्यर्थः ॥ **अवयवानामिति** । पूर्वपदत्वे इति शेषः ॥ **शरद इति** । **पूर्वापराधरे**- त्येकदेशिसमासः । **सन्धिवेलाद्यृत्विति** अण् । **अवयवाद्दतोरित्यु**- त्तरपदवृद्धिः ॥ ननु शरच्छब्द एव कालवाची न पूर्वशरच्छब्द इति कथं ठञित्यत आह—**तत्र हीति** । अत एव **सन्धिवेलादिसूत्रे** नक्षत्राणां कालेन विशेषणं सङ्गच्छते ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ ठञ्विधौ संख्यायाः प्रयोजनम् ॥***

( भाष्यम् )

**द्विषाष्टिकं, पञ्चषाष्टिकम् ॥**

( प्रदीपः ) **द्विषाष्टिकमिति** । द्वे षष्टी परिमाणमस्येति समासे कृते **आर्हादिति** ठक् न भवति, संख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात् । तेन **प्राग्वतेरिति** ठञ् भवति । **अध्यर्धपूर्वेति** लुम् भवति, **सोऽस्यांशवस्नभृतय** इत्यतः 'सोऽस्य' इत्यनुवर्तमाने **तदस्य परिमाणमि**त्यत्र पुनः प्रत्ययार्थसमर्थविभक्तिनिर्देशात् । कृते वा लुकि पुनस्तन्निर्देश- सामर्थ्यात् पुनः प्रत्ययः । तद्विधानसामर्थ्याच्च पुनर्लुगभावः ॥

( उद्योतः ) भाष्ये—**ठञ्विधौ सङ्ख्याया इति** । **तदस्य परिमाणं-सङ्ख्यायाः संज्ञेति** सूत्रे इति भावः ॥ **द्वे षष्टीपरिमाण- मस्येति** । सङ्ख्यादिरस्य विशेष्यः ॥ **प्रतिषेधादिति** । **आर्हादगोपु- च्छेत्य**नेन । तस्य प्रत्ययप्रतिषेधत्वात्तत्र तदन्तविधिर्भवत्येव ॥ **तेन प्राग्वतेरिति** । ठञ्विधायके **सङ्ख्यायाः संज्ञेति** सूत्रे तदन्तविधि- सत्त्वेन **प्राग्वते**रित्यधिकारप्राप्तष्ठञ् भवतीत्यर्थः ॥ **पुनः प्रत्ययार्थ- समर्थेति** । **अस्येति** प्रत्ययार्थः, **तदिति** समर्थविभक्तिः, अनुवर्त- मानस्य लुक्संबद्धतया पुनरुपादानेन तद्धितलक्षणत्वसूचनादनेन विहितस्य लुगभाव इत्यर्थः ॥ **कृते वेति** । अनुवर्तमान**सोऽस्ये**ति- सहित**परिमाण**मित्यनेन विहितस्य लुकि पुन**स्तदस्य परिमाण**मिति- वचनसामर्थ्यात्स्वार्थे तज्जातीयप्रत्यये तस्य विधानसामर्थ्याद् द्विगुनि- मित्तत्वाभावाद्वा लुगभाव इत्यर्थः ॥ इदं वृत्तिकारमतेनोक्तम् । वस्तु- तस्तु **तदस्ये**ति पुनरुपादानमात्रेणार्हीयत्वापगमे तत्त्वेऽपि लुगभावे वा द्वे षष्टी जीवितपरिमाणमस्येत्यर्थेऽनेन ठञि लुकमाशङ्क्य कालादित्य- धिकारस्थेन **तमधीष्ट** इति सूत्रेण ठञा द्विषाष्टिकः साधितो भाष्ये । कालग्रहणेन यथाकथंचित् कालवाचिनो ग्रहणमिति चोक्तं, तद्विरुध्येत । स्वद्रीत्याऽनेनापि ठञि लुगभावात् । तस्माद्द्वे षष्टी परिमाणमस्य सङ्घस्य स परिमाणमस्येति भाष्योदाहरणार्थः । तत्र द्विगुनिमित्तत्वाभावान्न

लुक् । सङ्घे द्विषष्ट्यनतिरेकस्यापि सत्त्वात्तस्यापि सङ्ख्याशब्दत्वमि- त्यपरे ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ धर्मान्नञः प्रयोजनम् ॥***

( भाष्यम् )

**धर्मं चरति—धार्मिकः । अधर्मं चरति-अधार्मिकः ॥ *अधर्माच्च*इति न वक्तव्यं भवति ॥**

---

( पदाङ्गाधिकारपरिभाषासाधनम् )

( ४१६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ पदाङ्गाधिकारे तस्य च तदुत्तर- पदस्य च ॥ * ॥**

( भाष्यम् )

**पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वक्तव्यम् ॥**

( प्रदीपः ) **पदाङ्गाधिकार इति** । पदशब्देनोत्तरपदं गृह्यते, पदैकदेशलोपात् ॥

( उद्योतः ) भाष्ये—**पदाङ्गेति** । तदन्तविधेरपवादोऽयम् । अत एव **तस्य चेति** पुनरभिहितम् । तदन्तविधौ हि बहुच्पूर्वेऽपि स्यात्तच्च नेष्टमिति वार्तिकाशयः ॥ **पदशब्देनेति** । अत एव भाष्ये उत्तरपदाधिकारे प्रयोजनदानम् ॥

( भाष्यम् )

**पदाधिकारे किं प्रयोजनम् ?**

( प्रयोजने भाष्यवार्तिकम् )

**॥ * ॥ प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु ॥ * ॥**

( भाष्यम् )

**इष्टकचितं चिन्वीत । पक्केष्टकचितं चिन्वीत । इषीकतूलेन, मुञ्जेषीकतूलेन । मालभारिणी कन्या, उत्पलमालभारिणी कन्या ॥**

( प्रदीपः ) उत्तरपदेन सामर्थ्यादाक्षिप्तं पूर्वपदमिष्टकादिभि- र्विशेष्यते ॥

( उद्योतः ) तदन्तविध्यपवादत्वादस्यापि विशेषण एव प्रवृत्ति- रित्याशयेनाह—**उत्तरपदेनेति** । शब्दरूपं विशेष्यमादायेत्यन्ये ॥

---

१ वृद्धिः कार्यत्वेनास्मिन्नस्तीति विग्रहः । ( र. ना. )

२ '*ठञ्विधौ संख्यायाः* ठञ्विधौ संख्यायाः प्रयोजनम् । द्विषा' इति मुद्रितपाठः ॥

३ प्रथमतद्धितार्थे एव द्विगुसमासविधानात्तस्यैव द्विगुनिमित्तत्व- मित्याशयः । ( र. ना. )

४ कैयटादिकं दूषयन्नन्यथा भाष्याशयमाह—**वस्तुतस्त्वित्या- दिना** ॥ छाया ॥

५ पुनरुपादानमात्रेणेति हेतुरिहापि संबध्यते । ( र. ना. )

६ स्वीक्रियमाणे इति शेषः । ( र. ना. )

७ द्वितीयप्रत्ययस्येति शेषः । ( र. ना. )

८ '*धर्मान्नञः* धर्मान्नञः प्रयोजनम् । धर्मं–' इति मुद्रित- पाठः ॥

९ 'भारिषु* इष्टकेषीकामालानां चिततूलभारिषु प्रयोजनम् । इष्ट- कचितं' इति मुद्रितपाठः ॥

१० प्राग्वदाह—शब्देति ॥ छाया ॥

( भाष्यम् )

अङ्गाधिकारे किं प्रयोजनम् ?

( प्रयोजने भाष्यवार्तिकम् )

**॥ * ॥ प्रयोजनं महदप्स्वसृनप्तृणां दीर्घविधौ ॥ * ॥**

( भाष्यम् )

महान्, परममहान् । महत् ॥

अप्—आपस्तिष्ठन्ति, स्वापस्तिष्ठन्ति । अप् ॥

स्वसृ—स्वसारौ, स्वसारः । एवं परमस्वसा, परमस्वसारौ, परमस्वसारः ॥

नप्तृ—नप्ता, नप्तारौ, नप्तारः । एवं परमनप्ता, परमनप्तारौ, परमनप्तारः ॥

( प्रदीपः ) **महदिति** । महदादिभिरङ्गं विशेष्यते ॥ **स्वाप इति । न पूजनादि**ति समासान्तनिषेधः । **अपो भी**ति तत्वमपि स्वद्भिरिति भवति ॥

( उद्द्योतः ) **समासान्तनिषेध इति** । ऋक्पूरबिति प्राप्ते ॥ अत एव व्यन्तरुपसर्गेतीत्त्वं न । तत्र ह्यप इति कृतसमासान्तानुकरणम्, व्यत्ययेन षष्ठ्यर्थे प्रथमा । अत्र चेदमेव भाष्यं मानमित्याहुः ॥ **तत्वमपीति** । वार्तिकस्थेन दीर्घविधाविति विषयनिर्देशेनेदं विरुध्यते ॥

( ४१७ प्रयोजनवार्तिकम् ॥ २ ॥ )

**॥*॥ पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् ॥*॥**

( उद्द्योतः ) भाष्ये—**पद्युष्मदस्मदस्थ्यादि** इति समस्तं पृथक्पदम् । **अनडुह** इति त्वसमस्तम् । अन्यथा नुमोऽनडुच्छब्दमात्रान्वयित्वेनासामर्थ्यात्समासो न स्यात् । पदादयोऽनडुहो नुम् च तदन्तविधिं प्रयोजयन्तीत्यर्थः ॥

( व्याख्याभाष्यम् )

**पद्भावः प्रयोजनम् । द्विपदः पश्य ॥**

( प्रदीपः ) **द्विपद इति । पादः पदि**त्यत्र पाच्छब्देनाङ्गं विशेष्यते ॥

( आक्षेपभाष्यम् )

**अस्ति चेदानीं कश्चित्केवलः पाच्छब्दो यदर्थो विधिः स्यात् ?**

( उद्द्योतः ) समासे एव **पादस्य लोप** इत्यन्तलोपविधानात्सामर्थ्यादेव तदन्तविधिर्भविष्यतीत्याशयेन काका पृच्छति – भाष्ये—**अस्ति चेति** ॥

( समाधानभाष्यम् )

**नास्तीत्याह ॥**

( प्रयोजनदर्शकभाष्यम् )

**एवं तर्हि अङ्गाधिकारे प्रयोजनं नास्तीति कृत्वा पदाधिकारस्येदं प्रयोजनमुक्तम्—"हिमकाषिहतिषु च"। यथा—पत्काषिणौ, पत्काषिणः । एवं परमपत्काषिणौ, परमपत्काषिणः ॥**

( उद्द्योतः ) आचार्यदेशीय आह—**एवं तर्हीति** । संनिधेर्लिङ्गं बलीय इति भावः ॥

( आक्षेपभाष्यम् )

**यदि तर्हि पदाधिकारे पादस्य तदन्तविधिर्भवति । "पादस्य पदाज्यातिगोपहतेषु" । यथेह भवति—पादेनोपहतं—पदोपहतम् । एवमत्रापि स्यात्—दिग्धपादेनोपहतं-दिग्धपादोपहतमिति ॥**

( प्रदीपः ) **पादस्य पदेति** । ननु पद्भावे तदन्तविधिरुक्तः । अयं तु पदभावविधिः । नैष दोषः । पादशब्देन पूर्वपदस्य विशेषणात्पद्भावे तदन्तविधिः । अनेनैव न्यायेन पदभावेऽपि तदन्तविधिप्रसङ्गः, यथाभूतः पूर्वसूत्रे पादशब्दो निर्दिश्यते तथाभूतस्योत्तरसूत्रेऽनुवर्तनात् ॥

( उद्द्योतः ) **तदन्तविधिरिति** । तदपवाद उत्तरपदविधिरित्यर्थः ॥ अर्थाधिकाराश्रयेण परिहरति—**नैषेति** ॥

( समाधानभाष्यम् )

**एवं तर्ह्यङ्गाधिकार एव प्रयोजनम् ॥**

( प्रदीपः ) **एवं तर्हीति** । एवं च परमपादेन कषतीति विवक्षायां परमपादकाषीति भवति । यदा तु परमः पत्काषीति विवक्षा तदा परमपत्काषीति भवति ॥

( उद्द्योतः ) नन्वेवं पादशब्देन तदन्तविध्यभावे परमपत्काषिणाविति पूर्वोदाहृतासङ्गतिरत आह—**एवं चेति** । अर्थभेदेन तत्साधित्विति भावः ॥

( आक्षेपभाष्यम् )

**ननु चोक्तम्—नास्ति केवलः पाच्छब्द इति ॥**

( समाधानभाष्यम् )

**अयमस्ति—पादयतेरप्रत्ययः-पात्, पदः[३], पदे । पत् ॥**

( प्रदीपः ) **पादयतेरिति** । पदेर्ण्यन्तादित्यर्थः ॥

( उद्द्योतः ) पादशब्दादाख्यानणिचि णिनिमित्तकटिलोपस्य स्थानिवत्त्वात्पदादेशाप्राप्तेराह—**पदेरिति** । क्वौ लुप्तमिति निषेधान्न स्थानिवत्त्वात्पदादेशाप्राप्तेराह—**पदेरिति** । अत एव **पादस्य पादहस्त्यादिभ्य** णिलोपस्य स्थानिवत्त्वमित्यर्थः ॥ इति नास्तूत्रि । तथा सति तस्यैव प्रतिपदोक्तत्वात्पद्भावः स्यान्नास्येति तात्पर्यम् ॥

( व्याख्याभाष्यम् )

**युष्मत्[४] अस्मत्—यूयं, वयम् । अतियूयं, अतिवयम् ॥**

---

१ इत उत्तरं 'महदप्स्वसृनप्तृणां दीर्घविधौ प्रयोजनम्' इति मुद्रितपाठोऽधिकः ॥ 'महत्—महान् । एवं' इति क. च. पाठः ॥

२ 'स्वसृ–स्वसा-स्वसारौ' इति क. पाठः ॥

३ 'पदः-पदा-पदे' इति ग. पाठः ॥

४ युष्मदस्मदोरादेशविधौ तदन्तविधेः प्रयोजनमिति पूर्ववदत्रापि बोध्यम् ॥

अस्थ्यादि—अस्था, दध्ना, सक्थ्ना । परमास्थ्ना, परमदध्ना, परमसक्थ्ना ॥

अनडुहो नुम्—अनड्वान्, परमानड्वान् ॥

( प्रयोजने भाष्यवार्तिकम् )

***॥ द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणं प्रयोजनम् ॥***

( भाष्यम् )

**द्यौः, सुद्यौः । पन्थाः, सुपन्थाः । मन्थाः, परममन्थाः । पुमान्, परमपुमान् । गौः, सुगौः । सखा, सखायौ, सखायः, परमसखा, परमसखायौ, परमसखायः । चत्वारः, परमचत्वारः । अनड्वाहः, परमानड्वाहः । त्रयाणां, परमत्रयाणाम् ॥**

( प्रदीपः ) 'परमपन्थाः' इति क्वचित्पाठः स त्वयुक्तः, समासान्तविधानात् ॥ **न पूजनादि**त्यत्र **पूजायां स्वतिग्रहण**मिति वचनान्नास्ति निषेधः । तस्मात्सुपन्था इति पाठः ॥ **परमगौ**रित्ययमप्यपपाठः, **गोरतद्धितलुकी**ति टज्विधानात् । तस्मात् सुगौरिति पाठः । **परमसखायावि**ति बहुव्रीहिः । तत्पुरुषे तु टचा भाव्यम् ॥ अनडुच्छब्दस्येह प्रपञ्चार्थः पाठः । **अनडुहो नुम्** इत्यत एव वचनादादित्यधिकारादमामोः कृतयोर्नुम्विधानात् नुम्विधौ तदन्तविधिना अमामोरपि तदन्तविधेराक्षेपात् ॥ अन्ये त्वाहुः—असतीह पुनर्ग्रहणे यत्रैव नुम् क्रियते तत्रैवामामौ तदन्तस्य स्याताम् । परमानड्वाह इत्यत्र त्वाम् न स्यादिति पुनः पाठः कर्तव्यः । पूर्वत्रापि पाठो नुमर्थः कर्तव्यः । अन्यथा—अमामोरेव तदन्तविधिः स्यात्, न नुम्विधौ ॥

( उद्द्योतः ) **इह**-द्युपथीति प्रयोजनवार्तिके ॥ **इत्यत एवेति** । पद्युष्मदिति वार्तिकस्यादित्यर्थः ॥ **आदित्यधिकारादिति** । आच्छीत्यतः । अन्यथा नुम् बाधकः स्यात्, अम्च नुमो बाधकः स्यादिति भावः ॥ **अन्यथाऽमामोरेवेति** । चतुःसाहचर्यादिति भावः ॥

( प्रयोजनभाष्यवार्तिकम् )

***॥ त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च प्रयोजनम् ॥***

( भाष्यम् )

**सः, अतिसः । भस्त्रका, भस्त्रिका, निर्भस्त्रका, निर्भस्त्रिका, बहुभस्त्रका, बहुभस्त्रिका ॥**

**स्त्रीग्रहणं च प्रयोजनम् । स्त्रियौ, स्त्रियः । राजस्त्रियौ, राजस्त्रियः ॥**

( प्रदीपः ) **अतिस इति** । शोभनः स इत्यर्थः । उपसर्जने तु तच्छब्दार्थेऽतितदिति भवति ॥ **बहुभस्त्रिकेति** । नञ्पूर्वाणामपीति न वक्तव्यं भवति ॥

( ४१८ प्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ वर्णग्रहणं च सर्वत्र ॥ * ॥**

( भाष्यम् )

**वर्णग्रहणं च सर्वत्र प्रयोजनम् ॥**

**क्व सर्वत्र ?**

**अङ्गाधिकारे चान्यत्र च । अन्यत्रोदाहृतम् ॥ अङ्गाधिकारे—"अतो दीर्घो यञि, सुपि च" इहैव स्यात्—आभ्याम् । घटाभ्यामित्यत्र न स्यात् ॥**

( प्रदीपः ) **वर्णग्रहणं चेति** । यद्येवमुगिद्वर्णग्रहणवर्जमित्यत्र किमर्थं वर्णग्रहणम् ? उच्यते—प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्वर्णग्रहणे प्रत्ययविधौ प्रतिषेधाशङ्कानिवारणार्थम् ॥

( उद्द्योतः ) **अन्यत्र चेति** भाष्यादङ्गाधिकारादन्यत्र प्रत्ययविधानेऽपि वर्णग्रहणे तदन्तविधिरिति मत्वा नोदयति—**यद्येवमिति** । अन्यत्रेत्यनेन भाष्येणेकोझलीत्यादौ निषेधाभावात्तदन्तविधिरनुज्ञायते । एवं च प्रत्ययविधौ वर्णग्रहणे स प्रतिषेध एव स्यादतस्तत्र वर्णग्रहणमिति परिहरति—**उच्यत इति** ॥

( ४१९ प्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ प्रत्ययग्रहणं चापञ्चम्याः ॥ * ॥**

( भाष्यम् )

**प्रत्ययग्रहणं च अपञ्चम्याः प्रयोजनम् ॥ यञिञोः फग्भवति—गार्ग्यायणः, वात्स्यायनः, परमगार्ग्यायणः, परमवात्स्यायनः ॥**

**अपञ्चम्या इति किमर्थम् ?**

**दृषत्तीर्णा, परिषत्तीर्णा ॥**

( प्रदीपः ) **प्रत्ययग्रहणं चापञ्चम्या इति** । **प्रत्ययग्रहणे यस्मात् स विहित** इति सिद्धे तदन्तविधावपञ्चम्या इति प्रतिषेधार्थं वचनम् ॥ यत्र पञ्चम्यन्तात् परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्माभूत् । यथा—**रदाभ्या**मित्यत्र । तत्र हि तदन्तविधौ रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य यस्तकारस्तस्य नत्वं स्यात् ।

---

१ अत्र 'अस्थ्यादीनामादेशविधौ प्रयोजनम्' इत्यर्थः ॥

२ अनडुहो नुम्विधौ तदन्तविधेः प्रयोजनमित्यर्थः ॥

३ '*द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् * द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम्प्रयोजनम् ।' इति मुद्रितपाठः ॥

४ 'सुपन्थाः-परमपन्थाः' इति अ. पाठः ॥

५ 'सुगौः-परमगौः' इति अ. पाठः ॥

६ 'सखायः । सुसखा-सुसखायौ-सुसखायः' इति क. ग. च. पाठः ॥

७ अस्य 'नुम्विधौ' तदन्तविधिनेत्यनेन संबन्धः । ( र. ना. )

८ अस्य 'तदन्तविधे'राक्षेपादित्यनेन संबन्धः । ( र. ना. )

९ आदित्यधिकारमनाश्रित्योपजीव्यत्वानङ्गीकारे इत्यर्थः । ( र.ना. )

१० आम इति शेषः । बाधकत्वे हेतुर्विशेषविहितत्वम् । ( र. ना. )

११ *त्यदादिविधिभस्त्रादिस्त्रीग्रहणञ्च* त्यदादिविधिभस्त्रादिस्त्रीग्रहणञ्च प्रयोजनम्' इति मुद्रितपाठः ॥

न च **संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीति** निषेधावतारः । यत्र हि संज्ञाविधानं तत्रायं निषेधः । इह तु निष्ठानुवादेन नत्वविधिः । संज्ञाविधौ तर्हि तदन्तविधिनिषेधस्य किं फलम् ? उच्यते—यदि संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य संज्ञा स्यात् प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तान्तं गृह्येत तस्मात्संज्ञाविधावपि तदन्तविधेर्निषेधो **रदाभ्या**मित्यत्र च ॥ **अपञ्चम्या** इत्यस्य नायमर्थः—यत्र पञ्चम्यन्तात्प्रत्ययो विधीयते तत्र तदन्तविधिर्न भवतीति । एवं हि व्याख्यायमाने **ञितश्च तत्प्रत्यया**दित्यत्र तत्प्रत्ययादेवाञि विधीयमाने तस्यैवाङ्गसंज्ञायां वृद्धिस्वरौ स्यातां, न तु तदन्तस्य ॥ **परमगार्ग्यायण इति** । गार्ग्यायण इत्येवोदाहरणम् । गार्ग्यशब्दाद्यञन्तात् फग्विधानात् । न त्वत्र परमगार्ग्यशब्दात्प्रत्ययः, तस्य यञन्तत्वाभावात् । तस्माच्च फकि विधीयमाने पारमगार्ग्यायण इत्यनिष्टरूपप्रसङ्गः । तस्मादेतन्न्यायव्युत्पादनार्थं परमगार्ग्यायण इत्युपन्यस्तम् । उत्तरपदाधिकारे प्रत्ययग्रहणेन तदन्तविध्यभावो लेखग्रहणेन ज्ञापितः । तत्र **रदाभ्या**मित्यत्र निष्ठायाः प्राधान्येनाश्रयणात्तदन्तविध्यभावः । **स्यतासी लृलुटो**रित्यत्र धातोरित्यधिकारादपञ्चम्या इति निषेधात्, लृलुटोर्वा प्राधान्येनाश्रयणात्तदन्तविध्यभावः ॥

( **उद्योतः** ) **सिद्धे तदन्तविधाविति** । उक्तवचनेन वाचनिक इत्यर्थः । ये[1]तु प्रत्ययाक्षिप्तप्रकृतिप्रत्ययावयवकसमुदायस्य विशेषणादेतत्सूत्रसिद्ध एव स इति ॥ तन्न । ता[3]दृशार्थस्य नियताक्षेपे आक्षिप्तस्य वा शाब्देऽन्वये मानाभावात् । किं[4] च **वनो र चे**त्यादौ **समासप्रत्ययविधा**वित्यनेनास्यापि निषेधापत्तिः, मम तु सौत्रस्यैव स निषेध इति न दोषः ॥ पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधानायानूद्यते तद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजनमिति वार्तिकार्थस्तदाह—**यत्रेत्यादि** । **परिगृह्यते**-अनूद्यते ॥ **नत्वं स्यादिति** । द्रुघ्नणीर्णेत्यादौ धातोस्तकारस्य तत्पूर्वदस्य च तत्स्यादित्यर्थः ॥ **न च संज्ञाविधाविति** । संज्ञा[5]या विधावित्यर्थ इत्यभिमानः ॥ **यत्र हीति** । संज्ञाया विधौ स निषेधो न तु संज्ञया विधौ ॥ **तर्हीति** । प्रदेशेषु तदन्तग्रहणं यदि, तर्हि · इत्यर्थः ॥ **पुनस्तदन्तेति** । घादिभिरुत्तरपदस्य विशेषणादिति भावः ॥ **तस्मादिति** । **संज्ञाविधौ प्रत्ययग्रहण** इति **प्रत्ययग्रहणे चापञ्चम्या** इति व[6]चनाभ्यामिति भावः ॥ **नायमर्थ इति** । प्रत्यासत्त्या चास्यार्थस्य प्रसक्तिः ॥ **पञ्चम्यन्तादिति** । पञ्चम्यन्तनिर्दिष्टप्रत्ययादित्यर्थः ॥ **समासप्रत्ययविधा**विति तु सौत्रस्य निषेध इति न तेनास्य गतार्थतेति भावः ॥

तत्प्रत्ययादेव-विकारावयवविहितप्रत्ययादेव ॥ एवञ्चौष्ट्रविकाराद-औष्ट्रकादञि वुञ एव वृद्धिस्वरौ स्यातामित्यर्थः ॥

भाष्ये—**यञिञोः फगिति** । यद्यपि ङ्याप्प्रातिपदिकादित्यधिकारादपञ्चम्या इति निषेधस्तत्र प्राप्नोति तथापि न तत् व्यधिकरणं विशेषणम्, किंतु यञिञोरिति पञ्चम्यर्थे षष्ठीसत्त्वात् तस्य समानाधिकरणं विशेष्यमिति अपञ्चम्या इत्यस्याविषयोऽयमिति भावः ॥

**तस्मादिति** । **प्रत्ययग्रहणे यस्मात्स विहित** इति नियमोऽत्रापि तदन्तविधावपेक्ष्य एव । एतत्सिद्ध एव च तदन्तविधिस्तत्रानूद्यते उक्तनियमबोधनाय । अन्यथा परमगार्ग्यशब्दात् फकि पारमगार्ग्यायण इति स्यादिति न्यायव्युत्पादनार्थमित्यर्थः ॥ नन्वेतद्रीत्या परमश्चासौ गार्ग्यायण इति भाष्योदाहरणार्थः, न हीदृशेऽर्थे परमगार्ग्यशब्दस्य प्रकृतित्वसंभावनाऽपीति कथमेतन्न्यायप्रदर्शनमनेन भाष्येणेति **चेन्न** । परमगार्ग्यैकदेशगार्ग्यशब्दादेव प्रत्ययः परमगार्ग्यस्यापत्यमित्यर्थेऽपि उक्तन्यायात् - इत्यदोषात् । विशिष्टैकार्थीभावेऽवयवेनापि तस्य सत्त्वमस्त्येव ॥ निष्कृष्यैकार्थीभाव **एव** वृत्तौ निमित्तमित्यत्र **न मानम्** । अत **एवानुपसर्जना**दिति सूत्रे कुम्भकारीशब्दैकदेशात्कारीशब्दादव्युत्पत्तिः शङ्किता भाष्ये ॥ अस्य कैयटस्याप्यत्रैव तात्पर्यम् ॥ **एतन्न्यायेनै**त्यस्यापि **यस्माद्विहित** इत्यादिन्यायेन समस्तैकदेशात्प्रत्यय इत्येतन्न्यायेनेत्यर्थः । न चैवं **सुपि च** - **रोः सुपी**त्यादौ सुबन्ते इत्यर्थापत्तिः, न हि तत्र पञ्चम्यन्तात्परत्वेन प्रत्ययो विशेष्यत इति **वाच्यम्** । **तस्मिन्निति** परिभाषया सुपि परे इत्यर्थे नियमेन कस्मादित्यवधिसाकाङ्क्षत्वेनोपस्थिताङ्गादेरेवावधित्वेनान्वयेन पञ्चम्यन्तस्य विशेषणत्वेन निषेधप्रवृत्तेरित्याहुः ॥ ननु **येन नाप्राप्ति**न्यायेनायं निषेधो वाचनिकतदन्तविधेरेवेति **घरूपे**त्यादौ उत्तरपदस्य विशेष्यतया प्राप्ततदन्तविधिः स्यादेवेत्यत आह—**उत्तरपदेति** । अन्यथा **हृदयस्य हृल्लेखयदण्**इत्यत्राण्ग्रहणेनैव सिद्धे लेखग्रहणं व्यर्थं स्यात् ॥ लेखं इत्यणन्तमेव तत्र गृह्यते । घञन्तस्य त्वनभिधानात्तत्राग्रहणमेवेति भावः ॥ अयमपि निषेधो विशेषणविशेष्यभावव्यत्याससूचक एवेत्याह—**तत्रेति** ॥ **प्राधान्येनेति** । शब्दरूपापेक्षयेत्यर्थः ॥ **धातोरिति** । इदं स्यतासिविशेषणमिति चिन्त्य[7]मिदम् । **सुपि** चे[8]त्यादावस्मदुक्तरीत्यैवात्रापि समाधानं बोध्यम् ॥

( ४२० आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अलैवानर्थकेन ॥ * ॥

( भाष्यम् )

**नान्येनानर्थकेनेति वक्तव्यम् ॥**

---

१ विशेषणत्वेनाश्रयणे हि तदन्तविधिरिति भावः । ( र. ना. )

२ दीक्षिताद्युक्तिं खण्डयति—**यत्त्विति** ॥ छाया ॥

३ सिद्धान्तरीत्या खण्डयति—**तादृशेति** ॥ छाया ॥

४ प्राचामनुरोधेनाह—**किं चेति** ॥ अन्यथा तस्य गृह्यमाणप्रातिपदिकविषयत्वादेतदसंगतिः स्पष्टैव ॥ एतेन—प्रत्ययेत्यादि चिन्त्यम्, प्रत्ययेति परिभाषायाः प्रकृतसूत्रेण सिद्धे तदन्तविधौ तदादिनियमे परत्वस्यैव सत्त्वात् । अन्यथा स्त्रीप्रत्यये चेति तदन्तविधिनिषेधापत्तेः—इति रत्नोक्तमपास्तम् ॥ छाया ॥

५ अत्र मुद्रितपुस्तकेषु 'संज्ञया विधौ' इति पाठः, स चाशुद्धः ॥

६ **वचनाभ्यामिति** । एतेन—संज्ञाविधौ तर्हीत्यादि चिन्त्यम्, प्रत्ययान्तोदाहरणासंभवात्, निष्ठासंज्ञाविधौ तदन्तविधेरप्रसङ्गाच्च—इति रत्नोक्तमपास्तम् ॥ छाया ॥

७ इत एवारुचेराह—**लृलुटोर्वेति** ॥

८ 'वस्मदुक्तरीत्यैवात्रापि' इति मुद्रितपाठः, स भ्रममूलकः । 'रीत्यैवात्रापि' इत्येव पाठः । यथा सुपि चेत्यत्र कस्मादित्यवधिसाकाङ्क्षत्वेनाङ्गादिति तथाऽत्रापि लृलुटोः परयोरित्यर्थात् स्यतासिविशेषणस्यापि धातोरित्यस्यान्वयादित्याशयः ॥

किं प्रयोजनम् ?

**हन्ग्रहणे प्लीहन्ग्रहणं मा भूत् । उद्ग्रहणे गर्मुद्ग्रहणम् । स्त्रीग्रहणे शस्त्रीग्रहणम् । संग्रहणे पायसंग्रहणम् ॥**

( प्रदीपः ) **अलैवानर्थकेनेति । अर्थवद्ग्रहणे नानर्थकस्येति** वर्णनिर्देशेषु नाश्रीयत इति स्थितम् । वर्णरूपतया यस्य शब्दस्याश्रयणं नार्थवत्तारूपमाश्रीयते तत्र **वर्णग्रहणं च सर्वत्रे**त्यत्र वर्णग्रहणे जातिग्रहणाद्वर्णसमुदायग्रहणेऽनर्थकस्य ग्रहणं प्राप्तमनेन नियमेन निवार्यते । अलैवेति चैकत्वसंख्या गुणत्वाद्विवक्ष्यते । नियमविधानसामर्थ्याद्वा ॥

**हन्ग्रहण इति** । तेन प्लीहानाविति दीर्घो भवति ॥ **उद्ग्रहण इति । उदः स्थास्तम्भो**रित्यनेन गर्मुत्-स्थास्यतीति पूर्वसवर्णाभावः ॥ **शस्त्रीग्रहणमिति** । तेन शस्त्र्याविति **स्त्रिया** इतीयङ् न भवति ॥ **पायसंग्रहणमिति** । पायसं करोतीति-**संपर्युपेभ्य** इति सुण् न भवति ॥

तत्र हन्ग्रहणे स्त्रीग्रहणे चाङ्गस्य विशेष्यत्वात् स्यात्तदन्तविधिः । **उदः स्थे**त्यत्र **तो**रित्यधिकारात् तवर्गान्तस्योच्छब्देन विशेषणात् स्यात्तदन्तविधिः । प्रतिषेधविज्ञाने तु न भवति, उदश्च तवर्गेण विशेष्यत्वात् तोरित्यस्य वा निवृत्तत्वात् । संग्रहणे पदप्रकरणात्तदन्तविधिः स्यादिति निवार्यते । पदेन समादयो विशेष्यन्ते इति तदन्तविध्यभावः । पायसं करोतीति करोतेर्भूषणार्थवृत्तिता संभवतीति सुट् स्यात् ॥

( उद्द्योतः ) नन्वलाऽनर्थकेनेत्ययुक्तं, अर्थवत्परिभाषाविरोधादत आह—**अर्थवदिति** ॥ **स्थितमिति** । स्वं रूपमित्यत्रेति शेषः ॥ कुतो हेतोरित्यत आह—**वर्णरूपतया तस्येति** । वर्णरूपतया **यस्ये**ति पाठे **नार्थवत्तारूप**मित्यतः प्राक् **तस्य** हीति शेषो बोध्यः ॥ **अर्थवत्तेति** । तत्त्वसमानाधिकरणं रूपमित्यर्थः ॥ **वर्णसमुदायग्रहणं प्राप्त**मिति पाठेऽनर्थकेत्यादिः । तदपि प्राप्तमिति शेषः ॥ **गुणत्वादिति** । तदन्तविधिनियमशेषत्वादित्यर्थः ॥ वर्णसमुदायेन चेत्तदन्तविधिस्तर्हि अर्थवतैवेति फलितम् ॥

अन्ये[3] तु—अङ्गाधिकारे तदन्तविधेरतिप्रसङ्गस्य निवारणायेदम् । **वर्णग्रहणं चे**त्यन्वाख्यानवार्तिके ज्ञापकसिद्धजातिग्रहणे न मानम् । एवमलैवेत्यत्रापि । **एकत्वसङ्ख्या गुणत्वा**दित्यपि चिन्त्यम्, जातिपरत्वे तद्गतसङ्ख्याया एव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयाऽपि दोषानुद्धारादित्याहुः ॥

**दीर्घो भवतीति** । **इन्हन्नि**ति नियमेनानिवर्तितत्वादिति भावः । अर्थवत्परिभाषासिद्धार्थानुवादोऽयम् ॥ **संपर्युपेभ्य इति** । वृत्तिपाठ[4]मनुसृत्येदम् ॥ **तस्योच्छब्देनेति** । **वा** पदान्तस्येत्यतः पदग्रहणमनुवर्त्य तस्योता विशेषणात्-उदन्तस्य पदस्येत्यर्थ उचितः ॥ नन्वव्यभिचारात्तवर्गेणोदो विशेषणं व्यर्थमत आह—**वा**[5] **निवृत्तत्वादिति** । पदग्रहणमपि फलाभावान्निवृत्तम्, विशेषणं चेत्यपि बोध्यम् ॥ **पदप्रकरणात्**—एङः पदान्तादतीत्यतः ॥ नन्वत्र करोतिर्न भूषणार्थोऽत आह—**भूषणेति** । पायसं भूषयतीत्यर्थसंभवादिति भावः ॥

( वार्तिकवैयर्थ्याक्षेपभाष्यम् )

**किमर्थमिदमुच्यते, न 'पदाङ्गाधिकारे तस्य तदुत्तरपदस्य च' इत्येव सिद्धम् ॥ न चेदं तत्, नापि तदुत्तरपदम् ॥**

( प्रदीपः ) **किमर्थमिति । अलैवानर्थकेने**त्येतदाक्षिप्यते । अस्य हि नियमस्य प्लीहानावित्यादिप्रयोजनम्, तच्चान्यथा सिध्यति । अङ्गाधिकारे हन्ग्रहणं स्त्रीग्रहणं चास्ति । **एङः पदान्तादि**ति पदाधिकारे संग्रहणम् । **वा पदान्तस्ये**त्यतः पदग्रहणानुवर्तनात्—**उदः स्थास्तम्भो**रिति पूर्वसवर्णः पदाधिकारे विधीयते । **पदाङ्गाधिकार** इत्यत्र च केवलपदाधिकारोऽपि ग्रहीष्यते, उत्तरपदाधिकारोऽपि । ततश्च प्लीहानावित्यादिषु दोषो न भविष्यति । न हि प्लीहानावित्यत्र हनित्यङ्गं नापि तदुत्तरपदमिति **प्रश्नः** ॥

( उद्द्योतः ) केवलपदाधिकारोऽपीति । अन्यथाऽसन्देहायोत्तरपदेत्येव वदेदिति भावः ॥

भाष्ये—**नापीति** । समासचरमावयवे तस्य रूढत्वादिति भावः ॥

( परिभाषानावश्यकत्वलाघवभाष्यम् )

**तन्न वक्तव्यं भवति ॥**

( प्रदीपः ) **तन्न वक्तव्यमिति । पदाङ्गाधिकार** इत्येतदित्यर्थः । **अलैवानर्थकेने**ति वचनादर्थवता तदन्तविधिसद्भावादिति भावः ॥

( उद्द्योतः ) नन्वेवं तदन्तविध्यभावे वृत्रहणावित्याद्यसिद्धिः । तदन्तविधौ तु प्लीहानावित्यत्र दोषोऽत आह—**अलैवेति** ॥

( आक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ?**

( समाधानभाष्यम् )

**तदन्तविधिरेव ज्यायान् । इदमपि सिद्धं भवति—परमातिमहान् । एतद्धि नैव तत्, नापि तदुत्तरपदम् ॥**

( प्रदीपः ) **तदन्तविधिरेवेति** । प्राथमकल्पिकः सूत्रे-

---

१ गर्मुत्—तृणजातिविशेषः । प्लीहन्—वामकुक्षिस्थमांसखण्डः ॥

२ 'पायसं ग्रहणं मा भूत्' इति मुद्रितपाठः । वस्तुत उद्ग्रहणे इत्यादौ ग्रहणं मा भूदित्यस्य पूर्वतः सम्बन्धस्तथाऽत्रापि स्यादिति भाष्ये न तादृशः पाठः । 'पायसं कुर्वन्ति' इत्यत्र सम्परिभ्यां करोताविलस्य प्राप्तिः ॥

३ कैयटादिकं दूषयति—**अन्ये त्विति** ॥ छाया ॥

४ वृत्तौ 'सम्पर्युपेभ्यः' इति पठ्यते । 'सम्परिभ्यां करोतौ भूषणे' इति भाष्यागृहीतः पाठः ॥

५ कैयटाद्यसंगतिमाह—**वापेति** ॥ छाया ॥

६ सिद्धान्तेऽप्याह—**पदेति** ॥ छाया ॥

७ **दुत्तरपदमिति** । पदाङ्गाधिकारे तस्येत्यस्य हन्ग्रहणादिषु अप्राप्तेः पूर्वोक्तेषु दोषाभाव इत्याशयः ॥

णैव तदन्तविधिः । स एव त्वलैवानर्थकेनेति नियम्यते ॥ **परमातिमहानिति** । परमश्चासावतिमहानिति समासः । तत्र परमादिर्महच्छब्दो न भवति, नापि महच्छब्दोत्तरपदः, अतिमहच्छब्दोत्तरपदत्वादिति **सान्तमहत** इति दीर्घो न स्यात् । अनेनैव न्यायेनोगिल्लक्षणो नुमागमोऽपि न स्यात् । तदन्तविधिना तु भवति ॥

( उद्योतः ) ननु वार्तिकोक्तोऽपि फलतस्तदन्तविधिरेवेत्यत आह—**प्राथमेति** । सौत्रतदन्तविधिरेव ज्यायान्, न तु वार्तिकोक्तोत्तरपदस्येत्यंश इति नियम आवश्यक इति भावः ॥ **परमादिरिति** । परमादिः समास उद्देश्यः, महच्छब्दो न भवतीति विधेयं बोध्यम् ॥

( ४२१ प्रयोजनभाष्यवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अनिनस्मन्ग्रहणानि च ॥ * ॥

( भाष्यम् )

**अनिनस्मन्ग्रहणानि चार्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥**

**अन्—राज्ञेत्यर्थवता । साम्नेत्यनर्थकेन ॥**

**इन्—दण्डीत्यर्थवता । वाग्मीत्यनर्थकेन ॥**

**अस्—सुपयां इत्यर्थवता । सुस्रोता इत्यनर्थकेन । अस् ॥**

**मन्—सुशर्मा - इत्यर्थवता । सुप्रथिमा - इत्यनर्थकेन ॥**

( प्रदीपः ) **सुस्रोता इति** । **अनागमकानां सागमका आदेशा** इत्याश्रयणादस आनर्थक्यम् । **अर्थवतो ह्यागम** इति न्यायाश्रये त्वर्थवानेव अस् ॥

( उद्योतः ) भाष्ये—**अनिनिति** । अल्लोपोऽनः, इन्हन्पूषेति, अत्वसन्तस्य, मन इत्यादिषु वर्तमानानीत्यर्थः ॥ **अर्थवानेवासिति** । इदं चिन्त्यम्, कृते आगमे तद्विशिष्टस्यैवार्थवत्ताया न्याय्यत्वात्, अन्यत्र भाष्ये स्पष्टमुक्तत्वाच्च ॥

---

( तदन्तसंज्ञापवादनिरूपणम् )

( ४२२ अपवादवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ यस्मिन्विधिस्तदादावल्ग्रहणे ॥ * ॥

( भाष्यम् )

**यस्मिन्विधिस्तदादाविति वक्तव्यम् ॥**

**किं प्रयोजनम् ?**

**"अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इति इहैव स्यात्—श्रियौ, भ्रुवा । श्रियः, भ्रुव इत्यत्र न स्यात् ॥ येन विधिस्तदन्तस्य ॥ ७२ ॥**

( प्रदीपः ) **यस्मिन्विधिरिति** । तदन्तविध्यपवादस्तदादिविधिः । अत एव विशेषणेन भवति, नान्येन ॥ ७२ ॥

( उद्योतः ) **नान्येनेति** । अत **एवेको यणचीत्यादौ** न दोषः ॥ **यस्मिन्विधिरिति** वाचनिकमेव । **यस्मिन्निति** सप्तम्यन्तोपलक्षणम् । सप्तम्यन्तं यत्र विशेषणं तत्रेति यावत् ॥ ७२ ॥

( इति तदन्तविधिः )

---

( अथ वृद्धसंज्ञाप्रकरणम् )

( ६७ वृद्धसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १३ सू. )

## वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ १।१।७३ ॥

( पदकृत्यनिर्वचनम् )

( आक्षेपभाष्यम् )

**वृद्धिग्रहणं किमर्थम् ?**

( प्रदीपः ) **वृद्धिर्यस्या० ॥७३॥ वृद्धिग्रहणमिति** । असति वृद्धिग्रहणे कथं सर्वस्य वृद्धसंज्ञा न भवतीति चेत् । यस्याचामादिर्भिन्नजातीयो हल् तद्वृद्धमित्यैजादि व्यावर्तितं स्यात् ॥

( उद्योतः ) **वृद्धिर्यस्या०** ॥ ७३ ॥ ननु वृद्धिग्रहणाभावे सर्वत्र वृद्धसंज्ञायां विशेषणान्तराणां वैयर्थ्यमेव स्यादिति तन्मात्राक्षेपोऽनुपपन्न इति शङ्कते—**असतीति** । सङ्कोचे प्रमाणाभावदच्शब्देन सर्वेष्वक्षु गृहीतेषु तदादिः समीपो हलेव भवतीति परिहरति—यस्येति ॥

( समाधानभाष्यम् )

**'यस्याचामादिस्तद्वृद्धम्' इतीयत्युच्यमाने 'दात्ताः, राक्षिताः' अत्रापि प्रसज्येत ।**

**वृद्धिग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **दात्ता इति** । असति वृद्धिग्रहणे निर्धारणहेतोर्धर्मस्यानुपादानादादिशब्दः समीपार्थो विज्ञायेत । दत्तशब्दश्चात्र क्रियाशब्दो द्रष्टव्यः । नामधेयस्य तु पक्षे भवत्येव वृद्धसंज्ञा । **प्रस्थेऽवृद्धमि**त्यत्र यदा नामधेयत्वादवृद्धाः पक्षे कर्क्यादयस्तदर्थः प्रतिषेधः स्यात् ॥

( उद्योतः ) नन्वचामिति निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्येति यस्यादिरचां मध्ये कश्चिदिति विज्ञायमाने दत्तादौ नातिप्रसक्तिरत आह—**असतीति** ॥ **समीपार्थ इति** । पूर्वसमीपार्थ इत्यर्थः । एवं च तन्निरूपितसंबन्धे षष्ठी, न तु निर्धारण इति भावः ॥ यस्याचामादिर्हलित्यर्थः स्यादिति तात्पर्यम् ॥ **नामधेयस्य** द्वितीयत्येति समासः । अत **एवानो बहुव्रीहेरित्यस्य** नेदमुदाहरणमिति भावः ॥ दाधिमथाः ॥

---

१ पय गतावित्यतः पीङ् पाने इत्यस्माद्वाऽसुनि **सुपयाः** । स्रु गतावित्यस्मात् 'स्रुरीभ्यां तुट्च' इत्युणादिसूत्रेणासुन् तुडागमश्चेति सिद्धं—सुस्रोताः । आगमसमभिव्याहारे सागमस्यैवार्थवत्त्वादसोऽनर्थकत्वम् ॥

२ 'सुगता प्रथिमान'मिति विग्रहः ॥ **अत्यादयः क्रान्ताद्यर्थे**

३ 'मिति हलादि' इति अ. पाठः ॥

४ **तदादिः**—तेषामचामादिः ॥ छाया ॥

त्विति । वा नामधेयस्येति वचनादिति भावः ॥ भाष्ये—अन्त्रापीति । अण्प्रकृताविलर्थः ॥ नन्वेवं हलादेः सर्वस्य वृद्धत्वे प्रस्थेऽवृद्धमिति सूत्रे कर्क्यादिप्रतिषेधोऽनर्थकोऽत आह—प्रस्थ इति ॥

( आक्षेपभाष्यम् )

**अथ यस्यग्रहणं किमर्थम् ?**

( समाधानभाष्यम् )

**यस्येति व्यपदेशाय ॥**

( प्रदीपः ) **यस्येति व्यपदेशायेति** । संज्ञिनं इति शेषः । अन्यथा तच्छब्देन किं प्रत्यवमृश्येत । तदित्यस्यानुपादाने च वृद्धेरेव वृद्धसंज्ञाप्रसङ्गः ॥

( उद्योतः ) **तदित्यस्यानुपादान इति** । तदित्यस्याप्यनुपादाने इत्यर्थः ॥ **वृद्धेरेवेति** । तथा[२] च प्रदेशेषु त्यदादिविषये मुख्यो वृद्धशब्दः, अन्यत्र वृद्धघटिते लाक्षणिक इति वैरूप्यप्रसङ्ग इति भावः ॥

( आक्षेपभाष्यम् )

**अथाज्ग्रहणं किमर्थम् ?**

( समाधानभाष्यम् )

**'वृद्धिर्यस्यादिस्तद्वृद्धम्' इतीयत्युच्यमाने इहैव स्यात्—औपगवीयाः, ऐतिकायनीयाः । इह न स्यात्—गार्गीयाः, वात्सीया इति ।**

**अज्ग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **गार्गीया इति** । न हि गार्ग्यशब्दस्य वृद्धिरादिः । किं तर्हि हल् । **मालादीनां**[३] **चेत्येतत्तु** नामधेयार्थं स्यात् ॥

( उद्योतः ) ननु **मालादीना**मिति लिङ्गात् आदिसहचरिता यस्य वृद्धिस्तस्यापि संज्ञा स्यादत आह—**मालादीति** ॥

( आक्षेपभाष्यम् )

**अथादिग्रहणं किमर्थम् ?**

( उद्योतः ) भाष्ये—**अथादीति** । अचामिति षष्ठ्युपादानसामर्थ्यादादिशब्दोऽध्याहरिष्यत इति प्रश्नः ॥

( समाधानभाष्यम् )

**'वृद्धिर्यस्याचां तद्वृद्धम्' इतीयत्युच्यमाने सभासंनयने भवः-साभासंनयन इत्यत्रापि प्रसज्येत ।**

**आदिग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

( प्रदीपः ) **सभासंनयन इति** । सति चेहादिग्रहणे **आद्यन्तव**त्सूत्र एकग्रहणस्य सभासंनयनशब्दः प्रत्युदाहरणम् । असति लिहादिशब्दे दरिद्रातेरिवर्णान्तलक्षणस्याचोऽभाव एकग्रहणस्य प्रयोजनम् ॥ **अचा**[४]**मिति तु** बहुत्वसंख्याविवक्षार्थं स्यात् ॥

( उद्योतः ) यस्यावयविनोऽवयवानामचां मध्ये वृद्धिरप्यवयव इत्यध्याहारं विनैवार्थसंभवेऽध्याहारे मानाभाव इत्युत्तराशयः ॥ तत्र प्रसङ्गादादिग्रहणसत्त्वासत्त्वयोराद्यन्तवत्सूत्रस्यैकग्रहणप्रयोजनं दर्शयति—**सति चेति** । असत्येकग्रहणे पूर्वसहितेऽपि 'भा'शब्दाकारे आदिवत्त्वात् सभासंनयनस्यापि वृद्धत्वं स्यादिति भावः ॥ **अच इति** । एरच इत्यर्थः । तत्र हि **धातो**रित्यधिकार इति भावः ॥ घञचोः स्वरे विशेषः ॥ नन्वेवं 'यस्य वृद्धिरवयवः' इत्येव सिद्धे 'अचां' इति व्यर्थमत आह—**अचामितीति** । तथा च राट्शब्दादेर्वृद्धत्वं नेति भावः ॥ कृते त्वादिग्रहणे यत्र वृद्धेरादित्वमेवाजपेक्षया न तु अनादित्वं तस्यैव तेन ग्रहणान्न सभासंनयने दोषः ॥ **अचामिति** बहुत्वमविवक्षितं, तेन मालीयादिसिद्धिः ॥

( सूत्रोपपादनम् )

( ४२३ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ वृद्धसंज्ञायामजसंनिवेशादनादित्वम् ॥ * ॥

( भाष्यम् )

**वृद्धसंज्ञायामजसंनिवेशादादिरित्येतन्नोपपद्यते । न ह्यचां संनिवेशोऽस्ति ॥**

( प्रदीपः ) **न ह्यचामिति** । सर्वस्य प्रातिपदिकस्या[५]ज्झल्समुदायरूपत्वात् । **अचा**मित्यनेन केवलानामचां समुदायः संनिवेशरूपो निर्दिष्टः । पौर्वापर्येणावस्थानं—संनिवेशः । स च केवलानामचां नास्ति ॥

( उद्योतः ) ननु यत्र हलघटिता अच एव संनिविष्टास्तत्रास्य प्रवृत्तिरुचिता, न तु हलन्तरितेष्वक्षु इति मन्यमानः शङ्कते—भाष्ये—**वृद्धसंज्ञाया**मिति ॥ नन्वस्त्येव मातृकापाठे सन्निवेशोऽत आह—**सर्वस्येति** । वृद्धत्वप्रयुक्तकार्यभाज इत्यर्थः । वृद्धत्वनिबन्धनकार्यस्य प्रातिपदिके सत्त्वादिति भावः ॥ **अचामित्यनेन केवलानामिति** । सर्वपदानां सावधारणत्वेन प्रथमतस्तथैव प्रतीतेरिति भावः । अज्मात्रसंबन्धिनो यस्य समुदायस्यादिर्वृद्धिरित्यर्थः स्यादिति तात्पर्यम् ॥

( आक्षेपबाधकभाष्यम् )

**ननु चैवं विज्ञायते—अजेवादिरिति ॥**

( प्रदीपः ) **ननु चैवमिति** । अच्संनिवेशस्यासंभवादचां मध्येऽजपेक्षया यस्य वृद्धिरादिरिति विज्ञास्यत इत्यर्थः ॥

( उद्योतः ) ननु प्रथमान्ताच्पदाभावादजेवादिरित्ययुक्तमत आह—**अजिति** । निर्धारणषष्ठ्याश्रयणात् निर्धारणस्य समानजातीयविषयत्वाच्च तल्लाभ इति भावः ॥ अज्झलसमुदायेऽप्यजपेक्ष एवादिर्ग्रहीष्यते—इति भाष्याक्षरार्थः ॥

---

१ 'संज्ञितः' इति ञ. पाठः, 'संज्ञातः' इति ग. पाठः ॥

२ ननु वृद्धेरेव वृद्धसंज्ञायां को दोषस्तदाह—**तथा चेति** । त्यदादीनि चेति सूत्रेण त्यदादीनां वृद्धसंज्ञा विधीयते, अनेन च वृद्धेरेवेति प्रदेशेषु मुख्यलाक्षणिकत्वमेकस्य नोपपद्येतेति भावः ॥

३ ननु अक्रियमाणेऽज्ग्रहणे मालादिशब्दानां वृद्धसंज्ञा न प्राप्नोति । अवृद्धत्वाच्च प्रस्थेऽवृद्धमित्यनेनैवाद्युदात्तसिद्धेरत आह—**मालादीनामिति** ॥

४ ननु द्व्यच्कत्वात् शालामालादीनां वृद्धसंज्ञा न स्यादत आह—**अचामितीति** ॥

५ 'प्रातिपदिकस्याकेवलसमु' इति पाठः ॥

( आक्षेपसाधकभाष्यम् )

**नैवं शक्यम् । इहैव प्रसज्येत—औपगवीयाः, ऐतिकायनीयाः । इह न स्यात्—गार्गीयाः, वात्सीयाः—इति ॥**

( प्रदीपः ) **नैवं शक्यमिति** । वृद्धिविशेषणार्था निर्धारणे षष्ठी स्यात् । अचां मध्ये अज्रूपा या वृद्धिरित्याकारस्य निवृत्तिप्रसङ्गः । आकारो ह्यनजेव सन् केवलैमच्कार्याणि ग्रहणकशास्त्रेण लभते । ततश्चाश्वलायन इत्यत्र न स्यात् । गार्ग्य इत्यत्र चाकारस्यानच्त्वात् समुदायानादित्वाच्च न स्यात् ॥

( उद्योतः ) **वृद्धिविशेषणार्थेति** । तस्याः प्रधानत्वात् 'अचां' इति तस्या एव विशेषणं स्यादित्यर्थः ॥ यदीयाऽऽदिवृद्धिरज्मध्यवर्तिनीत्यर्थः । निर्धार्यमाणनिर्धारणावध्योः सजातीयत्वाच्च वृद्धेरच्त्वलाभः । तत्र वृद्धेरच्त्वाव्यभिचारात् विशेषणसामर्थ्येन आक्षरसमाम्नायिकाज्रूपलक्षणवृद्धिपरिग्रह इति भावः ॥ **आकारस्य निवृत्तिप्रसङ्ग इति** । वृद्धसंज्ञानिमित्तत्वनिवृत्तिराकारस्य स्यादित्यर्थः ॥ तत्रासाधारणं प्रत्युदाहरणमाह—**ततश्चेति** ॥ भाष्योक्तस्य साधारणत्वं ध्वनयन्नाह—**समुदायेति** । 'यस्य' इति आद्यपेक्षया षष्ठीति भावः ॥

( आक्षेपबाधकभाष्यम् )

**एकान्तादित्वं तर्हि विज्ञायते ॥**

( उद्योतः ) एवं 'यस्य' इति आद्युपजनितव्यतिरेके षष्ठीमङ्गीकृत्य 'अचां' इति निर्धारणषष्ठ्यां दोषोऽभिहितः, अजुपजनितव्यतिरेके 'यस्य' इति षष्ठ्यामपि तं वक्तुं भाष्ये—**एकान्तादित्वमित्युक्तम्** ॥

( आक्षेपसाधकभाष्यवार्तिकम् ॥ )

## *॥ एकान्तादित्वे च सर्वप्रसङ्गः ॥*

( भाष्यम् )

**इहापि प्रसज्येत—सभासन्नयने भवः—साभासन्नयन इति ॥**

( प्रदीपः ) **एकान्तादित्वे चेति** । एकान्ता अवयवा अचः प्रातिपदिकस्य, तेषामचाम् आदिर्वृद्धिर्यस्य तद्वृद्धमित्यर्थः ॥ **सर्वप्रसङ्ग इति** । न ह्यत्र विशेष उपादीयते—सर्वेषामचामादिर्वृद्धिरिति । ततश्च मध्येऽपि वर्तमान आकारोऽन्याजपेक्षया—आदिरिति सभासन्नयने संज्ञाप्रसङ्गः । आदिग्रहणञ्चान्त्यनिवृत्त्यर्थं स्यात्—खट्वेति ॥

( उद्योतः ) तद्व्याचष्टे—**एकान्ता इति** । यस्य प्रातिपदिकस्येति संबन्धः । एवं च यत्प्रातिपदिकावयवभूतानामचामादिर्वृद्धिस्तत्प्रातिपदिकं वृद्धमिति सूत्रार्थः ॥ नन्वादिशब्दोपादानादेव 'सर्वेषामचां' इति लप्स्यतेऽत आह—**आदिग्रहणमिति** ॥

( ४२४ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धमजाकृतिनिर्देशात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**अजाकृतिर्निर्दिश्यते ॥**

( प्रदीपः ) **सिद्धमिति** । उभयरूपत्वेऽपि प्रातिपदिकस्याजाकृतिः 'अचाम्' इति वचनादाश्रीयते । विद्यमानाऽपि हलाकृतिर्न विवक्ष्यते । तेनायमर्थः—यस्य शब्दस्य सकलाजपेक्षया वृद्धिरादिस्तद्वृद्धमिति । यथा—पङ्क्तौ ब्राह्मणानामादिमानयेत्युक्ते सतोऽपि शूद्रादीननादृत्य ब्राह्मणजातीयापेक्षया यो ब्राह्मण आदिः स आनीयते ॥

( उद्योतः ) **उभयरूपत्वेऽपीति** । अज्झलरूपत्वेऽपीत्यर्थः । **यस्य**-इति नाचां विशेषणम्, तेषामन्यविशेषणत्वात् । नाप्यादेः, व्यवहितत्वात् । किंतु वृद्धेः । अचामिति चादेर्विशेषणं, संनिधानात् । न वृद्धेः, व्यवहितत्वात् । एवं च यस्य वृद्धिरचामादिरित्युक्ते लब्धस्याजपेक्षादित्वस्योपपत्तये मध्ये वर्तमानाऽपि हलाकृतिर्न विवक्ष्यत इति भावः ॥ **सकलाजिति** । सङ्कोचे मानाभावादिति भावः ॥ **सतोऽपीति** । आदौ मध्ये वेति शेषः ॥

( आक्षेपभाष्यम् )

**एवमपि व्यञ्जनैर्व्यवहितत्वान्न प्राप्नोति ॥**

( ४२५ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ व्यञ्जनस्याविद्यमानत्वं यथाऽन्यत्र ॥ * ॥

( भाष्यम् )

**व्यञ्जनस्याविद्यमानवद्भावो वक्तव्यः । 'यथाऽन्यत्र' । अन्यत्रापि व्यञ्जनस्याविद्यमानवद्भावो भवति ॥**

---

१ 'केवलमकार्याणि' इति ग. पाठः ॥

२ लक्षणपदमधिकं भाति । (र. ना.) सुधीभिरेतद्विचारणीयम् ॥

३ अजेवादिरिति पक्षे सूत्रार्थं प्रदर्शयन्नाह—**यस्येतीति** । अचां मध्येऽच्रूपा वृद्धिर्यस्यादिः=प्रातिपदिकावयवाचां मध्ये आक्षरसमाम्नायिकाजरूपा वृद्धिर्यस्यादिरिति तदर्थः । अत एवाश्वलायन इत्यत्राकारस्याक्षरसमाम्नायिकत्वाभावान्न वृद्धत्वम् । औपगव इत्यस्य च वृद्धत्वम् । यस्येति षष्ठ्यर्थसम्बन्धस्याद्यनुयोगिकत्वमिति भावः ॥

४ **एकान्तेति** । सर्वापेक्षयाऽऽदित्वं वृद्धेर्नोच्यते, किन्तु अवयवापेक्षयाऽऽदित्वं वृद्धेर्विज्ञायते । तेन सभासन्नयने मध्यस्याप्याकारस्य यत्किञ्चिदवयवापेक्षयाऽऽदित्वाद्वृद्धत्वमुपपद्यते ॥

५ व्यतिरेकः संबन्धः । उपजनितत्वं निरूपितत्वम् । (र. ना.)

६ अचां मध्ये यस्य अच्वृद्धिरादिः=अच्समुदायमध्ये यस्य प्रातिपदिकस्यावयवाजरूपा वृद्धिर्यत्किञ्चिदपेक्षयाऽऽदिरिति सूत्रार्थं प्रतिपादयन्नाह—**अजुपजनितेति** । यस्येति षष्ठ्यर्थसम्बन्धोऽजनुयोगिक इत्यर्थः ॥

७ **'एकान्तादित्वे चेति'** इत्येवं पाठं परिकल्प्यायं प्रदीपोद्द्योतसंदर्भोऽग्रिमवार्तिकव्याख्यायामेव योजितो बहुषु पुस्तकेषूपलभ्यते ॥ दाधिमथाः ॥

**क्वान्यत्र ?**

**स्वरे ॥**

( प्रदीपः ) **व्यञ्जनस्येति** । **अचामिति** वचनाद्विद्यमानान्यपि व्यञ्जनानि न विवक्षितानीत्यर्थः ॥ **यथाऽन्यत्रेति** । यथा—स्वरविधावयोग्यत्वाद्व्यञ्जनमविद्यमानवत्, एवमिहाप्य**चा**मिति वचनादित्यर्थः ॥ **ह्रस्वनुड्भ्यामिति** स्वरविधौ नुड्ग्रहणाल्लिङ्गाद्व्यञ्जनं व्यवधायकमेवेत्युदश्वित्वानिति मतुप उदात्तत्त्वं न प्रवर्तते ॥

( उद्द्योतः ) **अचामितीति** । केवलाच्सन्निवेशासंभवादिति भावः ॥ **स्वरविधाविति** । स्वरे विधेये-इत्यर्थः ॥ **अयोग्यत्वादिति** । स्वराणामज्धर्मत्वादिति भावः ॥ अत एव **यतोऽनाव** इति प्रतिषेधः सार्थकः ॥ **नुड्ग्रहणादिति** । हलस्वरप्राप्तिविषयकमेवा**नाव** इति ज्ञापकमिति भावः ॥ अन्यथा नुटोऽविद्यमानवत्त्वादक्षण्वान्नित्यादौ **ह्रस्वादित्ये**न मतुप उदात्तत्वं सिद्धमिति तद्वैयर्थ्यं स्यादिति तात्पर्यम् ॥

—०:०:०—

( न्यूनतापूर्तिः )

( ५२६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वा नामधेयस्य ॥ * ॥**

( भाष्यम् )

**वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ॥ देवदत्तीयाः । दैवदत्ताः । यज्ञदत्तीयाः । याज्ञदत्ताः ॥**

( प्रदीपः ) **वा नामधेयस्येति** । पौरुषेयं नाम गृह्यते ॥

( उद्द्योतः ) **पौरुषेयमिति** । आधुनिकमित्यर्थः ॥ **गृह्यते इति** । अत्र वार्तिके-इत्यादिः । अत एवैङ्**प्राचां देशे** इति चरितार्थम्, रूढमात्रस्य नामत्वेन ग्रहणे तद्वैयर्थ्यं स्पष्टमेव । घटीय इति तु गहादित्वात्साधु । घाट इति त्वसाधु । अत एव भाष्ये देवदत्तशब्द उदाहृत इति भावः ॥

( ४२७ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ गोत्रोत्तरपदस्य च ॥ * ॥**

( भाष्यम् )

**गोत्रोत्तरपदस्य वृद्धसंज्ञा वक्तव्या ॥ कम्बलचारायणीयाः । ओदनपाणिनीयाः । घृतरौढीयाः ॥**

( प्रदीपः ) **कम्बलचारायणीया इति** । कम्बलप्रियस्य चारायणस्य शिष्या इत्यर्थः ॥ **ओदनपाणिनीया इति** । पणिनोऽपत्यमित्यण् । **गाथिविदथी**ति प्रकृतिभावाट्टिलोपाभावः । पाणिनस्यापत्यं युवेतीञ्, तस्य छात्रा इति विवक्षिते **यूनि लुगि**तीञो लुक्, **तेनेञश्चे**त्यण् न भवतीति छो भवति ॥

( उद्द्योतः ) [ **युवेतीञिति**[1] । प्रकृते च गोत्रशब्देनापत्यमात्रम्, अपत्याधिकारादन्यत्वादिति भावः ॥ नन्वोदनपाणिनीया इत्यत्र वृद्धत्वे छः, असमस्तवदतिदेशे इञन्तत्वा**दिञश्चे**त्यणिति भेदः स्यादत आह—**तेनेञश्चेति** । येन यूनि विहितो न गोत्रे, तेनेत्यर्थः । **इञश्चे**त्यत्र गोत्र इति वर्तते । पारिभाषिकं च तत्र गोत्रं गृह्यते इति भावः ॥ यत्तु तेन लुकेति, तन्न । प्रत्ययलक्षणस्य दुर्वारत्वात् ॥ ]

( ४२८ न्यासान्तरेण वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ गोत्रान्ताद्वाऽसमस्तवत् ॥ * ॥**

( भाष्यम् )

**गोत्रान्ताद्वा असमस्तवत्प्रत्ययो भवतीति वक्तव्यम् ॥ एतान्येवोदाहरणानि ॥**

( उद्द्योतः ) भाष्ये-**गोत्रान्ताद्वेति** । गोत्रप्रत्ययान्तोत्तरपदादित्यर्थः ॥ चारायणो गोत्रान्तो यथाऽसमासे वृद्धत्वाच्छं लभते तथा समासे वृद्धत्वाभावेऽपीत्यर्थः ॥ 'वा' इत्यनेन वृद्धसंज्ञा वा कर्तव्या, इदमुपसङ्ख्यानं वेत्युक्तं भवति ॥

( आक्षेपभाष्यम् )

**किमविशेषेण ?**

( समाधानभाष्यम् )

**नेत्याह ॥**

( ४२९ शेषवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ जिह्वाकात्यहरितकात्यवर्ज्जम् ॥ * ॥**

( भाष्यम् )

**जिह्वाकात्यं हरितकात्यं वर्ज्जयित्वा । जैह्वाकाताः । हारितकाताः ।**

( उद्द्योतः ) भाष्ये—जिह्वाकात्यादिवर्जनं वृद्धसंज्ञापक्षेऽपि द्रष्टव्यम् ॥

( आक्षेपभाष्यम् )

**किं**[6] **पुनरत्र ज्यायः ?**

---

१ 'इति अनाव इति' इति घ. प. पाठः ॥

२ अयं कोष्ठकान्तर्गतः पाठो यद्यपि सर्वेष्वपि पुस्तकेषु * **गोत्रान्ताद्वाऽसमस्तवत्** * इति वार्तिकव्याख्योत्तरमुपलभ्यते तथापि तथापाठस्य क्रमविरुद्धत्वाद्यथाक्रममस्माभिः स्थापित इति बोध्यम् ॥ दाधिमथाः ॥

३ शैषिकाधिकारे **प्राग्दीव्यतोऽणि**त्यत्र वा इत्थमतिदेशः कर्तव्यः । न तु **गोत्रोत्तरपदस्य चे**ति वार्तिकं वृद्धसंज्ञाविधायकमिति भावः ॥

४ जिह्वाचपलः कात्यो जिह्वाकात्यः । हरितवर्णः कात्यो हरितकात्यः ॥ श० कौ० ॥

५ अपिनाऽसमस्तवत्त्वातिदेशपक्षस्य संग्रह इति भावः ॥

६ **'गोत्रोत्तरपदस्य च'** इति वार्तिकं रचनीयम्, आहोस्वित् **'गोत्रान्ताद्वाऽसमस्तवत्'** इति सामान्यवार्तिकं रचनीयम् । केन सर्वेष्टसिद्धिरिति प्रश्ने जिह्वाकात्यहरितकात्ययोरेव वर्जनेऽपि पैङ्गलकाण्वा इत्यत्र **गोत्रोत्तरपदस्य चे**ति वृद्धसंज्ञायां छो दुर्वार एव स्यात् । तस्माद् गोत्रप्रत्ययान्तोत्तरपदसमास उत्तरपदस्यासमस्तवत्त्वातिदेशे विकल्पिते यत्र वृद्धत्वप्रयुक्तं कार्यमिष्टं तत्र तूत्तरपदस्य पृथक्त्वातिदेशे तस्य वृद्धसंज्ञकत्वे तत्प्रयुक्तकार्यम् । यथा-कम्बलचारायणीया इत्यादिषु । यत्र नेष्टं पैङ्गलकाण्वा इत्यत्र, तत्र नासमस्तवत्त्वमिति समस्तस्य वृद्धत्वाभावेन न तत्कार्यापत्तिरिति भावः ॥ दा० ॥

( समाधानभाष्यम् )

*गोत्रान्ताद्वाऽसमस्तवत्*इत्येव ज्यायः । इदमपि सिद्धं भवति—पिङ्गलकाण्वस्य छात्राः—पैङ्गलकाण्वाः ॥ वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७३ ॥

( प्रदीपः ) पैङ्गलकाण्वा इति । कण्वादिभ्यो गोत्र इत्यण् । वृद्धसंज्ञायां तु छः स्यात् ॥ ७३ ॥

( उद्द्योतः ) अणिति । स च केवलेभ्यः काण्व्यादिभ्यश्छस्यापवादः । वृद्धसंज्ञापक्षे तु समुदायस्य कण्वादिषु पाठाभावात् प्रत्ययविधौ तदन्तविधिप्रतिषेधाच्च न तत्प्राप्तिरिति भावः ॥ ७३ ॥



( ६८ वृद्धसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १४ सू० ॥ )

## त्यदादीनि च ॥ १ । १ । ७४ ॥

( अनुवृत्तिनिर्णयः )

( आक्षेपभाष्यम् )

यस्याचामादिग्रहणमनुवर्तते, उताहो न ॥

( उद्द्योतः ) त्यदादीनि च ॥ ७४ ॥ भाष्ये—अनुवर्तेत इति । पूर्वसूत्रात्परतो गच्छति न वा - इति विचारः ॥

( भाष्यम् )

किं चातः ?

( अनुवृत्तिपक्षे दूषणभाष्यम् )

यद्यनुवर्तते, इह च प्रसज्येत—त्वत्पुत्रस्य छात्राः-त्वात्पुत्राः, मात्पुत्राः । इह च न स्यात्—त्वदीयः, मदीय इति ॥

( प्रदीपः ) त्यदादीनि च ॥ ७४ ॥ त्वात्पुत्रा इति । आदिग्रहणानुवृत्त्यन्यथानुपपत्त्योपसर्जनानामपि त्यदादित्वं स्यादिति भावः ॥ अचामित्यस्य तूत्तरार्थैवानुवृत्तिः स्यात्, तत्संबन्धस्येहायोग्यत्वात् । निर्धारणस्य समानजातीयविषयत्वात् ॥ त्वदीय इति । व्यपदेशिवद्भावोऽत्र नास्ति, अप्रातिपदिकेनेति निषेधात् ॥

( उद्द्योतः ) ननूपसर्जनानां गणबहिर्भावेन कथं त्यदादित्वमत आह—आदीति । सामर्थ्याद्भूतपूर्वगतिराश्रयिष्यत इति भावः ॥ अचामित्यस्य त्विति । इहादिग्रहणसंबन्ध एव भाष्यतात्पर्यमिति भावः ॥ व्यपदेशिवद्भावेन केवलेऽपि सिद्धमिति इह च नेति भाष्यमयुक्तमत आह—व्यपदेशिवदिति । स निषेधः प्रत्ययविधौ तन्मात्रोपयोगिसंज्ञाविधौ चेति भावः । [२]तदनाश्रित्य वेदम् ॥

( निवृत्तिपक्षे दूषणभाष्यम् )

अथ निवृत्तम्, "एङ् प्राचां देशे" यस्याचामादिग्रहणं कर्तव्यम् ॥

( अनुवृत्तिपक्षाभ्युपगमभाष्यम् )

तर्ह्यनुवर्तते ॥

( आक्षेपभाष्यम् )

कथं त्वात्पुत्रा मात्पुत्रा इति ?

( समाधानभाष्यम् )

संबन्धमनुवर्तिष्यते—"वृद्धिर्यस्याचामादिस्तद् वृद्धम्" । "त्यदादीनि च" वृद्धसंज्ञानि भवन्ति, वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ "एङ् प्राचां देशे" यस्याचामादिग्रहणमनुवर्तते, वृद्धिग्रहणं निवृत्तम् । तद्यथा—कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते स यदा निष्कान्तारीभूतो भवति तदा सार्थं जहाति ॥ त्यदादीनि च ॥ ७४ ॥

( प्रदीपः ) संबन्धमिति । द्वितीयान्तमेतत् । संबन्धमनुरोत्स्यते-न हास्यतीत्यर्थः । अथवा—संबध्यत इति संबन्धम्, कर्मणि घञ् नपुंसकेऽपि बाधकाभावाद्भवति । वृद्धिग्रहणसंबद्धमादिग्रहणमिहानुवर्तेत इति नास्ति तस्य त्यदादिभिः संबन्धः ॥ तद्यथेति । एतद्दर्शयति—स्वरितत्वप्रतिज्ञानादुत्तरसूत्र एव योग्यत्वात् 'यस्याचामादिः' इति संबध्यते 'एङ् यस्याचामादिस्तद् वृद्धम्' इति वाक्यार्थसंपादनाय । इह त्वयोग्यत्वात् संबन्धानुपपत्तिः, तुल्यजातीयस्य निर्धारणात् । त्यदादीनां चाज्रूपत्वाभावाद्यस्याचामादयस्त्यदादय इति संबन्धाभावात्॥७४॥

( उद्द्योतः ) ननु नपुंसके भावे क्तल्युटौ [३]घञपवादौ । स्वधिकारात्परतो वाऽसरूपविधिश्च नेति 'संबन्धं' इति नपुंसकप्रथमैकवचनमनुपपन्नमत आह—द्वितीयान्तमिति ॥ नपुंसकेपीति । घञ्जपाः पुंसीति भावघञ्विषयकं, काचित्कं वेति भावः ॥ चेतनावतस्त्यागोपादाने संभवतः, यस्यादिरित्यस्य तु कथं ते स्यातामत आह—एतदिति । योग्यत्वात्...आदिरित्यस्यैङित्येकवचनान्तेन संबन्ध इति शेषः ॥ तुल्यजातीयस्येत्युपलक्षणम् । त्यदादीनीत्यनेनादिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् ॥ ७४ ॥



१ गर्गाद्यन्तर्गणः कण्वादिरिति बोध्यम् ॥ दाधि. ॥

२ व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषा प्रत्ययविधिविषयैवेति असमासे निष्कादिभ्य इत्यत्र भाष्यकैयटयोरुक्तत्वान्नायं प्रत्ययविधिरिति नात्रास्याः परिभाषाया उपस्थितिरत आह—तदनाश्रित्यैवेदमिति । एतादृशः पाठो घ. आदिषूपलभ्यते । वस्तुतस्तु 'तदनाश्रित्य वेदं' इति ज. पुस्तकादौ युक्ततरः पाठः, स एवात्र गृहीतः ॥

३ मुद्रितपुस्तकेषु 'घञजपवादौ' इति पाठो दृश्यते, स चाप्रामाणिकः । प्रस्तुतेऽज्ग्रहणानर्थक्यं च ॥

( ६९ वृद्धसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १५ सू. ॥ )

## एङ् प्राचां देशे ॥ १ । १ । ७५ ॥

( विषयनिर्णयः )

( आक्षेपभाष्यवार्तिकम् )

***॥ एङ् प्राचां देशे शैषिकेष्विति वक्तव्यम् ॥***

( भाष्यम् )

**सैपुरिकी, सैपुरिका । स्कौनगरिकी, स्कौनगरिकेति ॥ एङ् प्राचां देशे ॥ ७५ ॥**

**इति श्रीमद्भगवत्पञ्जलिविरचिते व्याकरण-महाभाष्ये प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥**

**पादश्च समाप्तः ॥**

**( प्रदीपः ) एङ् प्राचां० ॥ ७५ ॥** कुणिना 'प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषा च' इति व्याख्यातम् । तेन[2] कोडो नामोदग्ग्रामः, तत्र भवः—कौड इत्यणेव भवति ॥ अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातम् । तेन देवदत्तो नाम वाहीकेषु ग्रामः, तत्र भवो दैवदत्त इत्यवृद्धत्वात् ठञ्ञिठौ न भवतः ॥ भाष्यकारस्तु कुणिदर्शनमशिश्रियत् । सेपुरं स्कोनगरं च वाहीकग्रामौ । तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ठञ्ञिठौ भवतः । **शैषिकेष्विति** वचनादपत्यविकारयोर्वृद्धलक्षणप्रत्ययाभावः । कोडदेवदत्तयोश्चाप्राग्देशवाचिनोर्व्यवस्थितविभाषया न भवतीति । प्राग्देशवाचिनस्तु देवदत्तस्य वृद्धसंज्ञकत्वात् काश्यादित्वात् वृद्धलक्षणौ ठञ्ञिठौ भवतः ॥ ७५ ॥

इत्युपाध्याय**जैयट**पुत्र**कैयट**कृते भाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥

पादश्च समाप्तः ॥

**( उद्द्योतः ) एङ् प्राचां० ॥ ७५ ॥ कुणिनेति ।** विधेयसंबन्धलाभात्प्राग्ग्रहणमाचार्यनिर्देशार्थम् । अन्यथा 'प्राग्देशे' इत्येव वदेदिति भावः ॥ लक्ष्यावैषम्याय च व्यवस्थितविभाषाश्रयणम्, तत्फलमाह—**तेनेति** ॥ **अन्येन त्विति** । श्रुतान्वये संभवत्यन्येनान्वयोऽनुचित इति तद्भावः ॥ **वाहीकश्च** देशविशेषः । तत्र स ग्रामः प्राग्देशबहिर्भूतः । वाहीकदेशश्चोभयसंबद्धः प्राग्देशबहिर्भूतो वा । अत **एवाव्ययात्त्यबिति** सूत्रे शाकलनाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता ॥ **एतेनोभयबहिर्भूता वाहीका** इत्यपास्तम् ॥ **वाहीकग्रामाविति** । आद्ये[3]—अस्य 'अप्राग्देशीयौ' इति शेषः पूरणीय इति बोध्यम् ॥ अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्येत ॥ **ठञ्ञिठाविति । वाहीकग्रामेभ्यश्चेत्यत्र वृद्धादित्यनुवृत्तेः** ॥ प्रागुदग्विभागस्तु—

"शरावत्यास्तु योऽवधेः ।
देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः"

इत्यमरेण दर्शितः ॥ **शरावती** चोत्तरतः पूर्वाभिमुखीत्येके । ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी सेत्यन्ये ॥ उभयथाऽपि प्रागुदक्स्वरूपे न विवादः ॥ वाहीकलक्षणं च—

"पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः ।
वाहीका नाम ते देशा न तत्र दिवसं वसेत्" ॥

इति कर्णपर्वणि । **एवं च** धर्मबहिर्भूतत्वाद्वाहीकत्वम् । शतद्रू-विपाशा-इरावती-वितस्ता-चन्द्रभागेति पञ्च **नद्यः**, सिन्धुः **षष्ठः** । तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः ॥ कुणिमताश्रयणे **शैषिकेष्वित्य**स्य वैयर्थ्यम्, व्यवस्थितविभाषयैव सिद्धेः । अतोऽन्यमताश्रयेणैव भाष्यम् । भाष्यप्रामाण्याच्चैतावद्वाहीकग्रामावपीत्यन्ये ॥ भाष्योक्तव्यवस्थितविभाषाऽतिरिक्ता न व्यवस्थिता-इत्यस्यार्थस्य **शैषिकेष्विति** ज्ञापकमित्यपरे ॥ **अपत्येत्यादि । उदीचां वृद्धादिति नित्यं वृद्धे**ति चेति सर्वेष्टसिद्धिः ॥ ७५ ॥

**हरिदीक्षितपादाब्जसेवनावाप्तबुद्धिना ।
भट्टनागेशविदुषा कृतोऽयं संग्रहो मुदा ॥**

इति श्री**शिवभट्ट**सुत**सतीगर्भज****नागोजी**भट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य प्रथमे पादे नवममाह्निकम् ॥

**पादश्च प्रथमः समाप्तः ॥**

उद्द्योतग्रन्थसंख्या ७५६० ॥

**श्रीशिवो जयति ॥**

---

१ एतच्च वक्तव्यमित्युपादानाद्वार्तिकम् । सम्पुटीकरणाभावाच्च न कात्यायनस्येति भाष्यवार्तिकमिति सिद्धम् ॥

२ **तेन**—व्यवस्थितविभाषाश्रयणेन ॥

३ **आद्ये**—कुणिमते । सेपुरं स्कोनगरमित्येतौ वाहीकग्रामावप्राग्देशीयौ, सैपुरिकीत्याद्युदाहरणदर्शनादेव भाष्यकृता कुणिमताश्रयणं क्रियत इति ज्ञायते, तच्च तयोः प्राग्देशीयत्वेऽन्यमतेनापि निर्वाहात् भाष्ये कुणिमतमेवाश्रितमित्यर्थो न स्यात् ॥

**नवाह्निकं सम्पूर्णम् ॥**

**नवाह्निके व्याख्याताव्याख्यातसमुदितसूत्रसंख्या ।**

| आह्निकाङ्कः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | सर्वयोगः |
|---|---|---|---|---|---|---|---|---|---|---|
| व्याख्यातसूत्राणि | | ८ | २ | ७ | १५ | १५ | ११ | ४ | १५ | ६९ |
| अव्याख्यातानि | | ६ | १ | ० | १ | ३ | ० | ० | १ | ६ |
| समुदितसूत्राणि | | १४ | ३ | ७ | १६ | १८ | ११ | ४ | १६ | ७५ |
| | शिवसूत्राणि | पाणिनेः सूत्राणि | | | | | | | | |

॥ श्रीः ॥

अस्मिन् नवाह्निके भागे येषां सूत्राणां विषयः स प्रथमाध्याय-प्रथमपादसूत्रपाठः, वार्तिकपाठः, भाष्यवार्तिकपाठः, भाष्येष्ट्यादिपाठश्च क्रमेण प्रदर्श्यते । तत्र वचनसंग्रहाङ्कः प्रथमः, वचननिर्देशो द्वितीयः, तृतीयश्च पृष्ठाङ्क उल्लिख्यते । येन सूत्रवार्तिकसूचिः, विषयसूचिरपि प्रायेण गतार्था भवति । अव्याख्यातसूत्राणि तत्र तत्र प्रदर्शितानि । आह्निकनिर्देशश्च क्रियते ॥

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः । तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम् । पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम् ॥

# अथ सूत्रपाठः ।

वृद्धिराद्यन्तवदव्ययीभावः प्रत्ययस्य लुक् पञ्चदश ॥

# अथ ससूत्रवार्तिकपाठः ।

## अचः परस्मिन् पूर्वविधौ ॥

इति नवाह्निके ससूत्रवार्तिकपाठः ॥

## आह्निकानुसारेण वार्तिकविभागः।

| आह्निकाङ्कः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | सर्वयोगः। |
|---|---|---|---|---|---|---|---|---|---|---|
| वार्तिकानि | २१ | ३९ | २८ | २७ | ४४ | ६६ | ४८ | ६७ | ८९ | ४२९ |
| भाष्यवार्तिकाङ्कः | १ | १२ | ७ | ११ | १८ | २८ | ७ | १८ | ५० | १५२ |
| श्लोकवार्तिकाङ्कः | ० | १४ | ० | ० | ३ | ४ | ० | २ | १ | २४ |



॥ श्रीः ॥

नवाह्निके सङ्गताः केचन शब्दा विद्यार्थिनामुपयोगायात्र संगृह्यन्ते । तेषामर्थप्रदर्शनमपि यत्र ते शब्दा उपयुज्यन्ते तदनुकूलमेव, प्रायः शब्दानामर्थाः प्रदीपोद्द्योतादौ प्रदर्शिता एवात्र निर्दिष्टाः । अपूर्णोऽप्ययं सङ्ग्रहो विचक्षणानामनुपयुक्तोऽपि नूत्नाभ्यासशालिनामुपयुज्येतेति प्रदर्श्यते । यस्मिन् पृष्ठे शब्दः समायातः स पृष्ठाङ्कोऽपि दत्तो येनाभ्यासे सौलभ्यं स्यात् ।

# शब्दसंग्रहः ।

**समाप्तः शब्दसंग्रहः ॥**